हरिदाससंस्कृतग्रन्थमालासमाख्य-
काशीसंस्कृतसीरीज़पञ्चमपुस्तकमालायाः।

५

व्याकरणविभागे (१) प्रथमपुष्पम्।

महामहोपाध्यायभट्टनागेशकृतो

# लघुशब्देन्दुशेखरः

श्रीमद्भैरवमिश्रविरचित'चन्द्रकला'ख्यटीकया सहितः।

समासादिस्वरान्तो भागः २

लिङ्गानुशासनचन्द्रकलामात्रसहितः।

व्याकरणोपाध्याय पं० गोपालशास्त्री नेने महोदयेन
संशोधितः परिष्कृतश्च।

वाराणस्याम्

सेठ-श्रीहरिदासगुप्तपुत्रेण चौखम्बासंस्कृतसीरीज-काशीसंस्कृत-
सीरीजाद्यनेकपुस्तकप्रकाशकेन सेठ-श्रीजयकृष्णदासेन
विद्याविलासयन्त्रालये मुद्रितः।



संवत् १९७९

# लघुशब्देन्दुशेखरः।

## तत्पुरुषः समासः।

चकारबलेनेति । "संख्यापूर्वः" "द्विगुः" इति योगं विभज्य पूर्वेण संख्यापूर्वस्य "तद्धितार्थे"इत्यत्रोक्तस्य तत्पुरुषसञ्ज्ञाविधानसामर्थ्यादेव पर्याये सिद्धे चकारः समावेशार्थ इति भावः ।

श्रितेति।श्रितादीनां सुबन्तत्वासम्भवात् *श्रितादिप्रकृतिकैरित्यर्थलाभः। "येनविधिः"[पा०सू० १-१-७२]इतिसूत्रस्थ*भाष्यप्रामाण्येन संबुद्धिस्त्रीलिङ्गप्रथमान्तभिन्नेऽपि प्रवृत्तेरावश्यकत्वादिति भावः। समर्थविशेषणत्वाच्छ्रितादीनां प्राप्तोऽपि तदन्तविधिः "समासप्रत्ययविधौ"इति निषेधान्न भवति। तदन्तविधौ हि श्रिताद्यन्तसमर्थप्रकृतिकैरित्यर्थे 'कष्टं परमश्रितः' इत्यादावपि समासापत्तिः। कष्टं श्रित इति। "न लोक"[पा०सू० २-३-६९]इति षष्ठीनिषेधः। पतितशब्दे तनिपतिदरिद्रातिभ्यः सनो वेट्कत्वेन "यस्य विभाषा"इतीण्निषेधप्राप्तावपि अत एव निर्देशादिट् बोध्यः।

अयोग्यत्वादिनि। 'स्वयम्' इत्यात्मनेत्यर्थकं कर्तृशक्तिप्रधानमित्यर्थः। स्वायंकृतिरिति। असमासे 'कार्त्तिः'इति स्यादिति भावः। *ऐकस्वर्यमपि समासफलम्।

---

गणेशगुरुपादाब्जसेवनाल्लब्धबुद्धिना।
क्रियते टिप्पणीसारो लघुशब्देन्दुशेखरे ॥ १ ॥

*श्रितादिप्रकृतिकैरिति। अस्य सुबन्तैकदेशसुप्पदार्थेऽन्वयः। अन्यथा सुबन्तानां श्रितादिप्रकृतिकत्वासम्भवस्य तादवस्थ्यात् । एवं च श्रितादिप्रकृतिको यः सुप् तदन्तैरिति समुदायार्थः । *भाष्यप्रामाण्येनेति । "कष्टं परमश्रितः इत्यत्र माभूत्"इति भाष्यम् । अत्र कैयटः-"श्रितान्तमेतत् (प्रथमान्तघटकं) सुबन्तं न भवति, इति सम्बुद्ध्यन्तमुदाहर्तव्यम्—'परमश्रित' इति। एतत् प्रत्ययलक्षणेन सुबन्तं भवति श्रितान्तं च श्रूयते"इत्याह। सम्बुद्ध्यन्तमित्युपलक्षणं-'कष्टं परमश्रिता'इत्यस्येति विवरणे स्पष्टम्। एवं च सुबुद्धिस्त्रीलिङ्गप्रथमान्तमात्रे प्रवृत्त्यभावबोधनेन ततोऽन्यत्रैव तत्प्रवृत्तिरिति भावः।

*ऐकस्वर्यमिति। एकपदत्वे "अनुदात्तं पदम्" [पा० सू० ६-१-१५८] इति सूत्रेण स्वरान्तरस्यानुदात्तत्वात्

खट्वा ॥ अस्य तत्प्रकृतिके लक्षणया 'द्वितीया'इत्यनेन सामानाधिकरण्यम् । *जाल्म इति । तेन केवलरूढत्वं तस्य सूचयति । एतेन प्रकरणादिसहकृतवाक्येन निन्दाप्रतीतिसम्भवात् 'न हि निन्दा'इत्ययुक्तमित्यपास्तम् । योगरूढे तत्सम्भवेऽपि केवलरूढे तदभावात् । न हि निन्देत्यस्य च विवक्षिता निन्देत्यर्थः । सामि इत्यर्धे ।

काला इति । कालवाचिन इत्यर्थः । बहुवचनात् । ननु क्तेनेत्यस्य निवृत्त्या क्तान्ताक्तान्तसाधारणोत्तरसूत्रेण सिद्धे योगविभागो व्यर्थोऽत आह—अनत्यन्तेति । *परिच्छेत्तुमिति । रभेर्योगे "शशधृष"इति तुमुन् ।

अत्यन्त ॥ अत्यन्तसंयोगानत्यन्तसंयोगसाधारणेन पूर्वेण सिद्धे इदं किमर्थमत आह—अक्तान्तार्थमिति । 'क्तेन'इति अत्र नानुवर्त्तत इति भावः ॥

तृतीया ॥ इदं सूत्रं *कृतद्वारक एव सामर्थ्ये प्रवर्त्तते, न सा-

---

*जाल्म इतीति । "जाल्मोऽसमीक्ष्यकारी स्यात्"इत्यमरः । समावर्तनोत्तरं खट्वारोहणं विहितं तत्पूर्वमेव तदाचरणमित्याक्षिप्तं निषिद्धाचरणमस्य प्रवृत्तिनिमित्तम् । अवयवार्थस्त्वविवक्षितः ।

येन स्यात् कर्मणाऽऽरूढः खट्वामनुशयी नरः ।
आदितस्तन्न कर्तव्यमिच्छता भावमात्मनः ॥

इत्यादौ वाक्ये निन्दानवगमाद्विभाषाऽधिकारेऽपि समासस्य नित्यत्वं, तदाह-*नित्यसमास इति ।

*परिच्छेतुमितीति । मासपरिच्छेदारम्भकर्तेति बोधः । चन्द्रदर्शनान्मासारम्भो यवनानां भवति इति प्रसिद्धमेव ।

*कृतद्वारक एवेति । ""तत्कृतार्थेनेति किमर्थम् ?, दध्ना पटुः घृतेन पटुः । नैतदस्ति । असामर्थ्यादत्र न भविष्यति । कथमसामर्थ्यम् ? । सापेक्षमसमर्थं भवतीति । न हि दध्नः पटुना सामर्थ्यम् । केन तर्हि ?, भुजिना, दध्ना भुङ्क्ते पटुरिति । इहापि तर्हि न प्राप्नोति—शङ्कुलाखण्डः, किरिकाण इति । (रोगविशेषः किरिः ।) अत्रापि न शङ्कुलायाः खण्डेन सामर्थ्यम् । केन तर्हि ?, करोतिना । कृतः खण्ड इति । वचनाद्भविष्यति"इति भाष्ये यतो दध्ना भुङ्क्ते, अतः पटुरिति भोजनक्रियाद्वारकसामर्थ्ये समासाभावबोधनेन कृतद्वारकसामर्थ्ये समासप्रवृत्तिबोधनात् । *परम्परान्वये इति । तत्र साक्षादन्वये ज्ञापकादप्रवृत्तौ अन्यद्वारके चोक्तभाष्यप्रामाण्येनाप्रवृत्तौ कृतद्वारकसामर्थ्ये एव प्रवर्तते । न चैवं "तत्कृतेति किम् ?,अक्ष्णा काणः"इति मूलमसङ्गतं कृतद्वारक एव

क्षात्परस्परान्वये* । उत्तरसूत्रेण निपुणश्लक्ष्णाभ्यां समासविधानात् । तद्योगे हि *हेतौ तृतीया । तत्कृतेत्युक्तेश्च । स्पष्टश्चैतद्भाष्ये । गुणेत्यस्य 'तत्कृत'इत्यतत्सापेक्षत्वेऽपि सौत्रत्वात्समासः । खण्डशब्दश्च खण्डगुणवत्त्वेन शकलबोधक इति शङ्कुलाखण्ड इत्यत्र कृतद्वारकमेव सामर्थ्यम् । शङ्कुलाकृतखण्डगुणवानित्यर्थः । वचनग्रहणन्तु गुणोपसर्जनद्रव्यवचनेनैव समासार्थम् । तेन 'कुसुम्भेन कृतं रूपम्'इत्यादौ न, 'घृतेन पाटवम्'इत्यादौ च न । स्पष्टश्चेदं भाष्ये । यद्यपि जातिसञ्ज्ञाकृदन्ततद्धितान्तसमस्तसर्वनामसंख्याशब्दभिन्नशब्दानामेव *गुणवचनसञ्ज्ञा, तथाऽपि प्रकृते *व्याख्यानात् शुद्धयौगिक एव गुणवचनशब्द इति बोद्धव्यम् । तृतीयान्तार्थेन कृतो यो गुणस्तद्वचनेन समास इत्यर्थात्, 'तत्कृत'इत्यस्य गुणपदेनैवान्वयेन सञ्ज्ञाऽनुपादानाच्च । 'गुणेन'इतीयता सिद्धे वचनग्रहणाद् गुणयुक्तवतेत्यर्थ इति भाष्याच्च गुणपदेन धर्ममात्रमत्र । तेन खण्डशब्दस्य क्रियावचनत्वेऽपि न दोषः । धान्येनेति । अर्थशब्दो धनपरो, हेतुतृतीयेति बोद्धव्यम् ॥

*पूर्वसदृश ॥ यद्यपि सदृशशब्देन षष्ठीसमासः सिद्धः "तुल्यार्थैः" इत्यनेन तद्योगे षष्ठ्या अपि विधानात् । एतस्याश्च न प्रतिपदविधानत्वमिति

---

प्रवृत्त्यर्थं तदावश्यकत्वादिति वाच्यम् । अन्यार्थे कृतेन तेन तद्वारणेऽप्यक्षतेः ।

*हेतौ तृतीयेति । एवं च तृतीयान्तगुणवचनयोः साक्षात्सामर्थ्यासम्भवेन गुणस्य जन्यत्वनियमात् तृतीयान्तार्थस्य तदुत्पत्तिप्रयोजकत्वेन करोतिक्रियापेक्षत्वात् तद्द्वारकमेव सामर्थ्यमिति 'दध्ना पटुः' 'अक्ष्णा काणः' इत्यत्र विपर्ययादसामर्थ्येनैव समासाभावसिद्धेस्तत्कृतग्रहणं न कर्तव्यमिति । तदुक्तं भाष्ये "यद्येवं नार्थस्तत्कृतार्थग्रहणेन । भवति हि शङ्कुलायाः खण्डेन सामर्थ्यम् । असामर्थ्याच्चात्र न भविष्यति 'दध्ना पटुः' घृतेन पटुः' इति तस्मान्नार्थस्तत्कृतार्थग्रहणेन"इति ।

*गुणवचनसंज्ञेति । "आकडारादेका संज्ञा" [पा० सू० १-४-१] इति सूत्रे भाष्ये उक्तेत्यर्थः । *व्याख्यानादिति । "गुणवचनेनेति किमर्थम् ? गोभिर्वपावान्, धान्येन धनवान् । किं पुनरिहोदाहरणम् ? शङ्कुलाखण्डो देवदत्त इति । कथं पुनर्गुणवचनेन समास उच्यमानो द्रव्यवचनेन स्यात् ? । इह "तृतीया तत्कृतार्थेन गुणेन" इतीयता सिद्धम् । सोऽयमेवं सिद्धे सति यद्वचनग्रहणं करोति तस्यैतत् प्रयोजनम्—एवं यथा विज्ञायेत—'गुणयुक्तवता गुणवचनेन'इति भाष्यकारीयव्याख्यानादित्यर्थः ।

*पूर्वसदृश । अत्र निपुण-लक्षण-योगे हेतौ तृतीया । पूर्व-ऊनार्थ-कलह-मिश्र-योगे अत एव ज्ञापकात्तृतीया । यदाऽर्थशब्दो धनवाची तदा हेतौ

वक्ष्यते। अतः "प्रतिपदविधाना षष्ठी न समस्यते" इति निषेधोऽत्र न। पूर्वपदप्रकृतिस्वरोऽपि "सदृशप्रतिरूपयोः" [पा० सू० ६-२-११] इति सिद्धः। तत्र हि 'दास्याः सदृशः' इत्यादौ षष्ठ्या अलुकि पूर्वपदप्रकृतिस्वरार्थं सदृशग्रहणमावश्यकं, 'मनसा सदृशः' इति सञ्ज्ञा नास्त्येवेति न तदर्थमिदमावश्यकं, तथापि भोजनहेतुकसादृश्यवानित्यर्थे 'भोजनसदृशः' इत्यत्र समासार्थमिदमावश्यकम्। हेतोः शेषत्वविवक्षया षष्ठीसमासे तु पूर्वपदप्रकृतिस्वरासिद्धिः। सादृश्यग्रहणेन "सदृशप्रतिरूपयोः" इत्यस्योपमानबोधकपूर्वपदे एव* प्रवृत्तेरिति स्पष्टं "सदृशप्रतिरूपयोः" (पा० सू० ६-२-११) इत्यत्र भाष्ये। यदि तु भोजनेन कृतः सदृश इत्यर्थे पूर्वसूत्रेण समासे "तत्पुरुषे तुल्यार्थ" (पा० सू० ६-२-२) इत्यनेन स्वरोऽपि सिद्ध इत्युच्यते, तदा सदृशग्रहणं व्यर्थमेवेति प्रकृतसूत्रे *कैयटेन ध्वनितम्। "सदृश"

---

तृतीया। अर्थनं याचनमिति क्रियाशब्दयोगे तु "कर्तृकरणयोः" (पा० सू० २-३-१८) इति सूत्रेण करणे तृतीया। पूर्वशब्दार्थश्चावध्युत्पत्तिकाल-तदुध्वंसानधिकरणकालोत्पत्तिकत्वम्। तदेकदेशे काले मासस्याभेदेनाऽन्वयः। मिश्रशब्दार्थः संयोगवान्। तत्र संयोगे गुडस्य प्रतियोगितयाऽन्वयः। कलहश्च क्रोधपूर्वकः प्रयोगः। तत्र प्रयोगे वाचः सम्बन्धित्वेनान्वय इति बोध्यम्।

*उपमानबोधकपूर्वपदे एवेति। "सदृशप्रतिरूपयोः" (पा० सू० ६-२-११) इति सूत्रे भाष्ये सादृश्यग्रहणस्य 'परमसदृशः' इति प्रत्युदाहरणदानादिति भावः। *कैयटेन ध्वनितमिति। "सदृशग्रहणे उक्तम्। किमुक्तम्?, सदृशग्रहणमनर्थकं तृतीयासमासवचनात्। षष्ठ्यर्थमिति चेत् तृतीयासमासवचनानर्थक्यम्" इति भाष्यस्थं 'सदृशग्रहणे उक्तम्' इति प्रतीकमादाय "वक्ष्यमाणस्यापि बुद्ध्या निरूपितत्वाद् हेतुकालसंप्रेक्षितत्वाद्वा भूतनिर्देशः। सदृशप्रतिरूपयोः सादृश्ये" (पा० सू० ६-२-११) इत्यत्र वक्ष्यते-'पूर्वपदप्रकृतिस्वरविधानार्थं सदृशग्रहणमनर्थकं, मात्रा सदृशो 'मातृसदृशः' इति "पूर्वसदृश" (पा० सू० २-१-३१) इति समासे कृते "तत्पुरुषे तुल्यार्थ" (पा० सू० ६-२-२) इति प्रकृतिस्वरो भविष्यति। अथोच्यते-तुल्यार्थयोगे षष्ठ्यपि पक्षे विधीयते ततश्च मातुः सदृशो मातृसदृश इति यदा षष्ठीसमासः क्रियते तदा पूर्वपदप्रकृतिस्वरार्थं सदृशग्रहणम्, तथा च 'दास्याः सदृशः' इत्याक्रोशे षष्ठ्या अलुकि स्वरः सिध्यति, तदा तृतीयासमासे सदृशग्रहणं न कर्तव्यम्। षष्ठीसमासेनैव स्वररूपयोः सिद्धत्वात्।

अथोच्यते हेतुतृतीयार्थमिह सदृशग्रहणं विद्यया सदृशो विद्यासदृश इति, तदपि न। सम्बन्धमात्रविवक्षायां षष्ठीसमासेनैव स्वररूपयोः पूर्वसूत्रेण वा तत्कृतत्वात् सिद्धत्वात्" इति कैयटेनोक्तम्। तत्र विद्यासदृश

(पा०सू० ६-२-११) इति स्वरविधायकसूत्रशेषस्थं* भाष्यन्तु एकदेश्युक्तिरिति *तदाशयः ।

मिश्रश्चेति । पणवन्धेनैकार्थ्यं सन्धिस्तत्रागम्यमाने 'मिश्र'- इत्युत्तरपदमनुपसर्गं तृतीयान्तात्परमन्तोदात्तमित्यर्थः अवरस्येति । यद्यप्ययमूनार्थोऽपि*, तथापि व्यवस्थाविषयावरार्थमिदम् । भाष्ये ऊनार्थेत्यर्थग्रहणस्य "तृतीया" (पा० सू० २-१-३०) इति सूत्रे *प्रत्याख्यानात्, *"समर्थ" (पा० सू० २-१-१) सूत्रे "तृतीया तत्कृत"इत्युपन्यस्य 'उपादानविकलः'इत्युदाहरणाच्च अत्रोनार्थग्रहणं नेति वादिनां मते सर्वथाऽस्यावश्यकत्वाच्चेति दिक् ॥

कर्त्तरि करणे चेति । सूत्रे समाहारद्वन्द्वात्सप्तम्येकवचनमिति भावः । तृतीयेति । तृतीयान्तमित्यर्थः । कृद्ग्रहणे इति । यत्र गतिकारकसमभिव्याहृतं कृदन्तं तत्र तद्विशिष्टस्यैव ग्रहणम्, अपिशब्दात्तदसमभिव्याहृते केवलस्यापीत्यर्थ इत्यन्यत्र विस्तरः । कृतेति किमिति । सुपेत्यधिकारेण तिङन्तेनाप्रसङ्गात् कर्त्राद्याक्षिप्तधात्वर्थक्रियाबोधककृदन्तेनैव भविष्यतीति प्रश्नः । काष्ठैरिति । अन्ये तु कृदन्तेनैव समासो यथा स्यान्न सुबन्तेनेत्यर्थं तत् । उक्तोदाहरणे तु शानजन्तादिभिरिव बहुलग्रहणेन वारयितुं शक्य इति प्राहुः ।

---

इतिवत् 'भोजनसदृशः''इत्यत्रापि कृतद्वारकसामर्थ्याश्रयणेन समासस्वरयोः सिद्धिरिति तस्यानर्थक्यं स्पष्टमेव ध्वनितम् ।

*शेषस्थभाष्यमिति । तत्र सूत्रे सदृशग्रहणप्रयोजनं 'पितृसदृश'इति दत्त्वा "पितुः सदृशः इति विगृह्य 'पितृसदृशः'इति भविष्यति । पित्रा सदृश इति विगृह्य वाक्यमेव । तस्मान्नैतत् प्रयोजनम्"इत्युक्तम् । तत उक्तम् "अवश्यं तृतीयासमासो वक्तव्यो यत्र षष्ठ्यर्थो नास्ति तदर्थं भोजनसदृश इति" इति । *तदाशय इति । भोजनसदृशः' इति फलस्यापि कृतद्वारकसामर्थ्येन पूर्वसूत्रेण सिद्धत्वादित्यर्थः । *ऊनार्थोऽपीति । पूर्णत्वसम्पादकवस्त्वभाववान् ऊनपदार्थः । *प्रत्याख्यानादिति । "तृतीयासमासेऽर्थग्रहणमनर्थकम् । अन्तरेणापि वचनमर्थगतिर्भविष्यति । नायमर्थनिर्देशः । किं तर्हि ? योगाङ्गमिदं निर्दिश्यते । सति च योगाङ्गे योगविभागः करिष्यते तृतीया तत्कृतेन गुणवचनेन समस्यते । ततः "अर्थेन" अर्थशब्देन च तृतीया समस्यते-धान्यार्थः, वसनार्थः, हिरण्यार्थः । "पूर्वसदृशसमोनार्थ"इत्यर्थग्रहणं न कर्तव्यं भवति"इति भाष्येणेत्यर्थः । *समर्थसूत्रे इति । "तृतीया तत्कृतार्थेन गुणवचनेन-उपादान-

अर्थवादः—आरोपितोऽर्थः। काकपेयेति। शक्यार्थे कृत्यः। पूर्णाम्भस्त्वेन कोमलत्वेन च स्तुतिः, अल्पाम्भस्त्वेन दुर्बलत्वेन च निन्दा वा।

इष्टान्तर्भूतेति। तां विना दध्नः संस्कार्यत्वेन प्रतीताऽन्नसंस्कारकत्वानुपपत्तेरिति भावः। तदुक्तं भाष्ये—"युक्तार्थसम्प्रत्ययाच्च सामर्थ्यम्"इति। दध्ना युक्तो योऽर्थ उपसेकादिस्तत्संप्रत्ययादित्यर्थः। सर्वलोकव्यवहारप्रसिद्ध्या च तदर्थान्तर्भावनिश्चय इति च। अन्नशब्देनात्रौदनः। "भिस्सा स्त्री भक्तमन्धोऽन्नम्"इति कोशेन तत्र तस्य रूढेः, योगाच्च रूढिर्बलीयसीति बोध्यम्।

मिश्रणेति। तां विना मिश्रीकरणत्वायोगादिति भावः।

तच्छब्देन चतुर्थ्यन्तार्थ इत्याशयेनाह—चतुर्थ्यन्तार्थायेति। तादर्थ्ये चतुर्थी। बलिरक्षितग्रहणादिति। तद्योगे हि तादर्थ्ये चतुर्थी। हितयोगे त्वस्मादेव ज्ञापकाच्चतुर्थी। हितसुखाभ्यामन्योपकाराजननेन तद्योगे तादर्थ्यचतुर्थ्या असम्भवात्। एतत्सर्वं भाष्ये स्पष्टम्। षष्ठीसमासा इति। 'रन्धनाय स्थाली'इत्यादावभिधानस्वाभाव्यात्तादर्थ्येनैव तस्य भानं न संबन्धत्वेनेति षष्ठ्यभावान्न तत्र षष्ठीसमासः। चतुर्थीसमासवारणाय तु 'प्रकृतिविकृतिभावे एव'इत्युक्तम्। अश्वघासादावुपकारकत्वेन बोधे वाक्यमेव। संबन्धत्वेन बोधे षष्ठ्यन्तेन समासोऽपीति व्यवस्था। 'रन्धनार्था स्थाली'इति मध्यमपदलोपिसमासोऽपि तत्र नानभिधानादिति भावः। एतेन षष्ठीसमासेन रन्धनस्थाल्या अपीष्टत्वात्प्रकृतिविकृतिभाव एवेति व्यर्थम्। चतुर्थीसमासेऽपि "चतुर्थी तदर्थे" (पा० सू० ६-२-४३) इति पूर्वपदप्रकृतिस्वरो न। तस्य प्रकृतिविकृतिभाव एव प्रवृत्तेः। अन्यथा 'गोरक्षितम्'इत्यत्राप्यनेनैव स्वरसिद्धौ "क्ते च" (पा० सू० ६-२-४५) इति व्यर्थं स्यात्। न च हितार्थम्। क्ते चेत्यत्रापि तदर्थ इत्यनुवृत्तेः।

*अत एवास्यो*क्तार्थज्ञापकतापरं भाष्यं सङ्गच्छत इत्यपास्तम्।

---

विकलः, शङ्कुलाखण्डः, किरिकाणः। समर्थग्रहणं किमर्थम्?, "त्वं तिष्ठ शङ्कुलया; खण्डो भवति मुसलेन" "किं त्वं करिष्यसि शङ्कुलया, खण्डो विष्णुमित्र-उपलेन" इति"इति भाष्यम्।

*अत एव—तदर्थ इत्यनुवृत्तेरेव। *उक्तार्थेति। "क्ते च" [पा० सू०

अर्थशब्दस्य नित्यपुंस्त्वेन "परवल्लिङ्गम्"(पा० सू० २-४-२६) इत्यस्य बाधायाह—विशेष्यलिङ्गता चेति । एतदेवात्र विधेयम् । नित्यत्वन्तु चतुर्थ्या तादर्थ्यस्योक्तत्वादर्थशब्देन विग्रहाप्रसक्तेर्न्यायसिद्धम् । गुरोरिदं गुर्वर्थमित्यादाविव यदि लिङ्गमपि लोकतः सिद्धं, तदेदं स्पष्टार्थम् ।

भयभीतेति । *निर्गतजुगुप्स्वोरप्युपलक्षणमिदम् । भोगोपरतवन्येतरादिषु "सुप्सुपा"इति समासो, मयूरव्यंसकादित्वाद्वा ।

अल्पं पञ्चम्यन्तमिति । कानि चिदेव पञ्चम्यन्तानि समस्यन्ते इत्यर्थः । अमङ्गलसम्बन्धाभावेऽपि 'अल्पशः'इत्यस्मादेव निपातनाच्छम् ॥

स्तोकान्तिक ॥ स्तोकार्थोऽल्पशब्द एव, न लेशादयो व्याख्यानात् । स्तोकाल्पाभ्यां कृच्छ्राच्च "करणे च स्तोक" (पा० सू० २-३-३३) इति पञ्चमी, "दूरान्तिकार्थेभ्यो द्वितीया च" (पा० सू० २-३-३५) इत्यनेन *तेभ्य इति बोध्यम् । प्रतिपदोक्तपरिभाषयैतद्विहितपञ्चम्यन्तेनैवायं समास इत्याहुः ।

राजपुरुष इति । अन्तर्वर्तिविभक्त्या पदत्वान्नलोपः ।

गुणात्तरेण ॥ इदञ्च "पूरणगुण"(पा० सू० २-२-११) इत्यस्यापवाद इति "सर्वे गुण" (पा० सू० ६-२-९३) इति सूत्रे भाष्ये । *ततः सर्वपदानुवृत्तेः सर्वशब्द एवेदम् । गुणबोधकाद्विहितो यस्तरप् तदन्तेन सर्वशब्दस्य समास इति वाच्योऽर्थः । गुणाद्विहिततरबन्तश्च गुणवाच्येवेत्याशयेनाह—तरबन्तं यद् गुणेत्यादि । ननु यतो निर्द्धार्यते, यश्च निर्धार्यते, यश्च निर्द्धारणहेतुस्तत्रितयसन्निधान एवायं निषेधो युक्तो निर्द्धारणषष्ठी च युक्ता, स्पष्टं चेदं तरब्विधायके कैयटे । अतो नात्रास्य प्राप्तिः, 'सर्वेषां श्वेततरः' इत्यादौ तमवापत्तिश्चेत्यरुचेराह—पूरणेत्यादि । द्रव्यान्तराधेयश्वेतापेक्षया सर्वेषां पटानामधिकोऽयं श्वेतो गुण इत्युदाहरणार्थः । एवञ्च तरबप्युपपन्नः । कृद्योगा चेति । "प्रतिपदविधाना न समस्यते"इत्यस्यापवादः ।

---

६-२-४५] इति सूत्रस्थ'प्रकृतिविकृतिभाव एव प्रवृत्तिः'इत्यर्थज्ञापकतापरेत्यर्थः ।

*निर्गतेति । "भयनिर्गतजुगुप्सुभिरिति वक्तव्यम् । वृकभयं, ग्रामनिर्गतः, अधर्मजुगुप्सुः" इति भाष्योक्तेः । *तेभ्यः—दूरार्थेभ्यः । *ततः—"सर्वे गुणकार्त्स्न्ये"[पा० सू० ६-२-९३] इति सूत्रात् ।

न निर्द्धारणे ॥ द्विजादिशब्दैः मासस्य निषेधोऽयम् । 'पुरुषोत्तमः' इत्यत्र त्रितयसन्निधानाभावान्न निर्द्धारणविभक्तिः, किन्तु संबन्धसामान्ये षष्ठीति तया समासः । अत एव "हलादिः शेषः"[पा० सू० ७-४-६०]इति सूत्रे "किमयं हलामादिरिति षष्ठीसमासः"इति भाष्ये उक्तम् गुणवचनेन निषेधस्त्वनित्य इति तत्सूत्रे कैयटः ।

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।

इत्यादि गीतावाक्यादत्र कर्मधारय इति लभ्यते । राजदन्तादित्वात्परनिपातः । प्रतिपदेति । "ज्ञोऽविदर्थस्य"[पा० सू० २-३-५१]इत्यादि"कृत्वोर्थ"[पा० सू० २-३-६४]इत्येतत्सूत्रविहिता प्रतिपदविधाना । यत्तु तेषु शेषपदसंबन्धेन शेषे एव तैः षष्ठीविधानेन तत्र च "षष्ठी शेष" [पा० सू० २-३-५०]इत्येनेनैव सिद्धौ तत्तत्सामर्थ्यात्समासाभावः कल्प्यते, तेन प्रतिपदविधानेति नापूर्वमिति; तन्न । तत्तद्धातुयोगे उपात्तकारकातिरिक्तकारकाणां शेषत्वविवक्षाभावज्ञापनेनापि चारितार्थ्यसम्भवात् । किं च "कृत्वोर्थप्रयोगे"[पा० सू० २-३-६४] "ज्ञोऽविदर्थस्य" [पा० सू० २-३-५१]"दिवस्तदर्थस्य" [पा० सू० २-३-५८]इत्यादिविषये समासनिषेधानापत्तिः । तत्र शेषग्रहणनिवृत्तेः सर्वसम्मतत्वात् "कृत्वोर्थ" इत्यत्र तत्सम्बन्धे भाष्यानुग्रहाभावात् । एवं "ज्ञोऽविदर्थस्य" [पा० सू० २-३-५१] इति सूत्रेऽपि तत्सम्बन्धेनात्यन्तभाष्यानुग्रहः । "अधीगर्थ"[पा० सू० २-३-५२] इत्यादौ मण्डूकानुवृत्तिः । एतच्च "दिव"[पा० सू० २-३-५८]इति सूत्रे विस्तरेणोपपादितम् । "शतस्य देविता"इत्यादौ तृन्योगे "कर्त्तृकर्मणो"इत्यस्य निषेधेनानेनैव षष्ठ्या समासनिषेधस्य भगवत इष्टत्वात् । अत एव भाष्ये नेदं प्रत्याख्यातम् । अत एव प्रतिपदाविधाना केति प्रश्ने "सर्वा प्रतिपदविधाना शेषलक्षणां वर्जयित्वा, कर्त्तृकर्मणोः कृतीति च कृद्योगा"इति भाष्ये उक्तम् । तत्र शेषलक्षणामित्यस्य शेषमात्रलक्षणामित्यर्थः, प्रतिपदविधानेत्यस्य कारकविशेषोपादानेन विहितेत्यर्थः । तेन "तुल्यार्थैः"इत्यादेर्न तत्त्वमित्यलम् ।

पूरणाद्यर्थैरिति । आदिना गुणसुहितौ । अत्र पूरणार्थत्वेन "पूरणात्स्वार्थे तीयादन्"इति अन्नन्तस्यापि ग्रहणं, व्याख्यानात् । गुणार्थशब्देन केवलगुणवाची सन् गुणोपसर्जनद्रव्यवाची गुणिबोधक-

"द्विगुश्च" इति पाठेऽपि द्वयोः संज्ञयोः पर्यायेण प्रवृत्तिस्वीकारेऽपि चकारश्चरितार्थ इत्यत आह—*संख्यापूर्वं इति* । १-१

*इत्यर्थलाभ इति* । तत्प्रकृतिके लक्षणया तल्लाभ इत्यर्थः । *भाष्य-प्रामाण्येनेति* । "समासप्रत्ययविधौ" इत्यस्योदाहरणसमये "कष्टं श्रितः='कष्टश्रितः' इत्यत्र यथा स्यात्, कष्टम्परमश्रितः' इत्यत्र माभूत्" इत्युक्तं तत्प्रामाण्येनेत्यर्थः । *अत एव निर्देशात्='पतित' इति निर्देशात् । यद्वा "सेऽसिचि" [पा० सू० ७-२-५७] इति वेदकत्वात्कृन्ततेरिडभावे सिद्धेऽस्येदित्वमिड-भावार्थम् । तेन "यस्य विभाषा" [पा० सू० ७-२-१५] इत्यस्यानित्यत्वज्ञापनादिटः सिद्धिः । १-५ १-११

*कर्तृशक्तिप्रधानम्=कर्तृत्वविशेष्यबोधजनकम् । समाससंज्ञायाः प्रवृत्तेः फलस्य स्पष्टप्रतिपत्तये आह—*असमास इति । १-१२ १-१३

*जाल्म इतीति । असमीक्ष्यकारीत्यर्थः । *तेन=जाल्म इति कथनेन । केवलरूढत्वादेव "न हि वाक्येन निन्दा गम्यते" इत्यस्योपपत्तिरित्याह—*एतेनेति । खट्वामारोहतु मा वा, यो योऽसमीक्ष्यकारी स एवमभिधीयते । वाक्येन तु योगार्थस्यैव प्रतीतिः । २-२ २-३

काला इत्यनेन स्वरूपस्य ग्रहणं निरस्यति—*कालवाचिन इति । अत्र मानमाह—*बहुवचनादिति । *उत्तरसूत्रेण सिद्धे इति* । कालवाचकं द्वितीयान्तं समर्थप्रकृतिकसुबन्तेन सहितं समाससंज्ञकमिति तदर्थात् । *तुमुन्निति* । भावे इति शेषः । आरब्धवानित्याङः प्रयोगात् प्रमितेत्यत्र माङ्धातोरादिकर्मणि कर्त्तरि क्त इति सूचयति । तुमुन्नन्तस्याव्ययत्वात्ततो जातायाः शेषषष्ठ्या लुक् । मासपरिच्छेदारम्भकर्त्तेति बोधः । प्रतिपच्चन्द्रेण हि मास-परिच्छेदः क्रियते । २-६ २-७ २-९

प्रतिपन्नाम विज्ञेया चन्द्रस्य प्रथमा कला ।

इत्यभियुक्तोक्तेः ।

*कृतद्वारके एव सामर्थ्ये इति* । तदुक्तम्भाष्ये—"तत्कृतार्थेनेति किमर्थम् । दध्ना पटुः, घृतेन पटुः । नैतदस्ति । असामर्थ्यादत्र न भविष्यति । कथमसामर्थ्यम् ? । सापेक्षमसमर्थं भवतीति । न हि दध्नः पटुना सामर्थ्यम् । केन तर्हि ?, भुजिना—दध्ना भुङ्क्ते पटुरिति । इहापि तर्हि न प्राप्नोति—शङ्कुला-खण्डः, किरिकाण इति । अत्रापि न शङ्कुलायाः खण्डेन सामर्थ्यम् । केन तर्हि ? । करोतिना—शङ्कुलया कृतः खण्ड इति । (खण्डशब्दस्य गुणोपसर्जनद्रव्यवचनत्वात्साक्षात्सम्बन्धाभावादवश्यं क्रियाऽपेक्षिता । व्यापारमन्तरा कारकत्वायोगात् ।) वचनाद्भविष्यति । (करोतिद्वारकसम्बन्धाश्रयेणेति भावः ।) इहापि तर्हि वचनात्प्राप्नोति—दध्ना पटुः, घृतेन पटुरिति । तस्मात् तत्कृतार्थ-ग्रहणङ्कर्त्तव्यम्" इति । *निपुणश्लक्ष्णाभ्यां समासविधानादिति । न च सहशा- २-१३ ३-१

---

(१) 'कृती वेष्टने' इत्यस्य । (२) किरिः=रोगविशेषः ।

शब्दस्यापि ज्ञापकत्वसम्भवादुभयोरेवोपादानमफलमिति वाच्यम् । परतः स-दृशग्रहणस्यानावश्यकत्वस्य वक्ष्यमाणत्वात् । गुणवचनेत्यत्र समासानुपपत्तिं वारयति—*गुणेत्यस्येति । ननु गुणेनेत्येव सिद्धे वचनग्रहणं किमर्थम् ?, अत आह-*वचनग्रहणं त्विति । *घृतेन पाटवमित्यादाविति । एतेषां केवलगुणवाचकत्वं न तु गुणोपसर्जनद्रव्यवचनत्वमिति भावः । *व्याख्यानादिति* । "गुणेनेतीयता सिद्धम् । सोऽयमेवं सिद्धे सति यद्वचनग्रहणं करोति तस्यैतत्प्रयोजनम्-एवं यथा विज्ञायेत-गुणमुक्तवता गुणवचनेन" इति भाष्याच्छङ्कुलाखण्ड इत्युदाहरणदर्शनमूलकादित्यर्थः । अन्यथा 'खडि भेदने' इतिधातोर्घञि निष्पन्नखण्डशब्देन न स्यात्कृदन्तत्वादिति भावः ।

३-२
३-५,६
३-८

*पूर्वसदृश । नन्वनेन सदृशशब्देन समासे तृतीयान्तं पूर्वपदं प्रकृतिस्वरमिति पूर्वपदप्रकृतिस्वरस्य सिद्धौ सदृशशब्दो नोपादेय इत्यत आह-*तत्रहीति । *षष्ठ्या अलुकि="षष्ठ्या आक्रोशे" [पा० सू० ६-३-२१] इत्यनेन । ननु 'मनसा सदृशः' इत्यर्थमिदमप्यावश्यकमित्यत आह—*मनसा सदृश इति । पूर्वपदप्रकृतिस्वरासिद्धिरिति* । विधायकाभावादिति शेषः । *उपमानबोधकपूर्वपदक एवेति* । अत एव तत्सूत्रस्थसादृश्यग्रहणस्य तत्सूत्रभाष्ये 'परमसदृशः' इति प्रत्युदाहरणमुक्तम् । *कैयटेन ध्वनितमिति* । "सम्बन्धमात्रविवक्षायां षष्ठीसमासेन पूर्वसूत्रेण वा तत्कृतत्वात्सिद्धत्वात्' इति ग्रन्थेन । *एकदेश्युक्तिरिति* । तत्र हि "सदृशवचनमनर्थकन्तृतीयासमासवचनात् । सदृशशब्देन तृतीयासमास उच्यते । तत्र तृतीयापूर्वपदं प्रकृतिस्वरं भवतीत्येव सिद्धम् । षष्ठ्यर्थं तर्हीदं वक्तव्यम्-पितुः सदृशः=पितृसदृश इति । षष्ठ्यर्थमिति चेत्तृतीयासमासवचनानर्थक्यम् । इहास्माभिस्त्रैशब्द्यं साध्यम् । पित्रा सदृशः, पितुः सदृशः, पितृसदृश इति । तत्र पितुः सदृश इति विग्रहे पितृसदृश इति भविष्यति । पित्रा सदृश इति विग्रहे वाक्यमेव अविरविकन्यायेन । अवश्यं तृतीयासमासो वक्तव्यः । यत्र षष्ठ्यर्थो नास्ति—भोजनसदृश इति । यदि तस्य निबन्धनमस्ति तदेव वक्तव्यम्, इदं न वक्तव्यम् । इदमप्यवश्यं वक्तव्यम् । यत्र षष्ठी श्रूयते तदर्थम्—दास्याः सदृशः, वृषल्याः सदृशः" इति । एतेन प्रघट्टकेन "पूर्वसदृश"(पा० सू० २-१-३१) इतिसूत्रस्थसदृशग्रहणस्य "सदृशप्रतिरूपयोः"(पा०सू० ६-२-११)इति सूत्रस्थसदृशग्रहणस्य चावश्यं कर्त्तव्यता लभ्यते । सा चोक्तरीत्या न सम्भवतीति ।

३-१४
४-३
४-३
४-४
४-६
४-७
४-११
५-१

*ऐकार्थ्यमिति* । एकः समानोऽर्थो यस्य तस्य भाव इत्यर्थः । अर्थशब्दः सम्पादनीयवाची । *ऊनार्थोऽपीति* । तथा च पूर्वसदृशेत्येव सिद्धे इदं न कर्त्तव्यमिति भावः । *व्यवस्थाविषयेति । सर्वनामसंज्ञकार्थमित्यर्थः ॥ *प्रत्याख्यानादिति* । "तृतीयासमासेऽर्थग्रहणमनर्थकम् । अर्थगतिर्ह्यवचनात्=अन्तरेणापि वचनमर्थगतिर्भविष्यति । (तत्कृतस्यार्थत्वाव्यभिचा·

५-५
५-६

(१) न स्यात्=समसो न स्यात् ।

र्थादित्यर्थः । ) नायमर्थनिर्देशः । किन्तर्हि ?, योगाङ्गमिदं निर्दिश्यते । सति च योगाङ्गे योगविभागः करिष्यते—तृतीया . तत्कृतेन गुणवचनेन समस्यते । ततः-अर्थेन=अर्थशब्देन च तृतीया समस्यते—धान्यार्थः, वसनार्थः, हिरण्यार्थः । 'पूर्वसदृशसमोनार्थ' इत्यर्थग्रहणन्न कर्त्तव्यम्" । अत्र भाष्ये योगविभागशब्दो योगविभागसमासफलकवाक्यभेदपरः । अर्थशब्दोऽत्र धनपर्यायः । *इत्युदाहरणाच्चेति* । तत्र हि पूर्वसदृशेतिसूत्रमनुपन्यस्य "तृतीया तत्कृत"इतिसूत्रोपन्यासेन ध्वनितमित्यर्थः । *अस्य=अवरशब्दस्य । ५-८ ५-९

परिभाषाऽर्थमाह—*यत्र गतिकारकेति । *केवलस्यापीति । तेन नखभिन्न इत्युदाहरणमपि युक्तमेव । कर्तृत्वकर्मत्वयोः क्रियानिरूपितत्वेन तद्वाचकं सुबन्तं तद्धितान्तघटितमपीत्यभिप्रायेण मूलेऽतिप्रसङ्ग उक्त इत्याह—*काष्ठैरितीति । मतान्तरमाह—*अन्ये त्विति । इत्यर्थे तदिति* । एतेनैतत्सूत्रे सुपेति न सम्बध्यते इत्यत्र तात्पर्यग्राहकं कृद्ग्रहणम् । ननु 'काष्ठैः पचतितराम्'इत्येतद्वारकतया कृद्ग्रहणस्य चारितार्थ्यात् कथं कृदन्तेनैवेत्यर्थस्य लाभ इत्यत आह—*उक्त इति । शानजन्तादिभिरिति* । आदिना शतृ-क्तवतुप्रभृतिपरिग्रहः । हस्तेन भुञ्जानः, हस्तेन कुर्वन्, दात्रेण लूनवान्, परशुना छिन्नवान् । *बहुलग्रहणे नेति* । इदमुपलक्षणम् । बहुलग्रहणेन क्वचित्तृतीयातिरिक्तकारकविभक्त्यन्तस्यापि समासः । पादाभ्यां ह्रियते=पादहारकः । गले चोप्यते=गलेचोपक इति । उभयत्रापि बाहुलकात् कर्मणि ण्वुल् । उत्तरत्र "अमूर्धमस्तकात्"(पा०सू० ६-३-१२) इत्यलुक् । शानजन्तादिभिः समासाभावे किं प्रमाणमिति चेत्—"कर्तृकरणे कृता केन । कर्तृकरणे कृता केनेति वक्तव्यम । अहिहतः, नखनिर्भिन्नः, दात्रलूनः, परशुच्छिन्नः । कृता केनेति किमर्थम् ? । इह मा भूत्—दात्रेण लूनवान्, परशुना छिन्नवान् । तत्तर्हि वक्तव्यम् ? । न वक्तव्यम् । बहुलवचनात्सिद्धम्"-इति भाष्यमेव । पादहारकादिषु तु "साधनं कृतेति वा पादहारकाद्यर्थम्"-इति भाष्यमेव समासप्रवृत्तौ मानम् ॥ ५-११,१३ ५-१५ ५-१६ ५-१६

अधिकार्थवचन इत्यस्य-अधिकस्य=स्वाभाविकापेक्षया अधिकस्य वचनं=प्रतिपादनम्-इत्यर्थः । तच्च स्तुत्यर्थे निन्दार्थे वा, तदाह-(मूले)-स्तुतिनिन्दाफलकमित्यादि । *पूर्णाम्भस्त्वेनेत्यादौ यथायोगमन्वयः । उत्तरसूत्रेऽपि बहुलग्रहणमनुवर्त्तते । तेन यत्ण्यत्प्रत्ययान्तयोगे समासो भवति । 'काकैः पातव्यः' इत्यादौ न । क्वचित्तु साधनवैकल्यप्रतिपादनाय यत्र वाक्यप्रयोगस्तत्रापि भवति । यथा बुसोपेन्ध्यम्, तृणोपेन्ध्यम्, घनघात्यमिति । अग्नेरल्पत्वात् कष्टमेतत्—बुसेन वा तृणेन वा प्रज्वालनीयम् । यत्र वा शर्करानिर्मितमोदके दन्तैर्हस्ताभ्यां वा क्षोदस्यासम्भवप्रतिपादनाय घनेन=अयःप्रभृतिनेदं घात्यमित्यु- ६-२

---

(१) "कृत्यैरधिकार्थवचने"(पा० सू० २—१—३३)इति सूत्रभाष्यस्थं द्वितीयं वार्तिकमिदम् ।

(२) "कर्तृकरणे कृता बहुलम्"(२—१—३२)इति सूत्रादुत्तरस्मिन् "कृत्यैरधिकार्थवचने"(पा० सू० २—१—३३)इति सूत्रे इत्यर्थः ।

ध्यते तत्रापि भवति । अत एव भाष्यकृतोक्तम्-"साधनं कृतेति वा पादहा-
रकाद्यर्थम्"इति ।

६-७ *तदर्थान्तर्भाव इति* । उपसेकाद्यर्थान्तर्भाव इत्यर्थः । तृतीयान्तस्य
क्रियावाचकेनैव सामर्थ्यं न त्वन्येनेति सामर्थ्याभावात्समासाप्राप्तिपरिहारायेदं
वाक्यं प्रयुज्यते । तत्रोपसेकादिक्रियाया एवान्तर्भावो न तु युक्तक्रियाया इत्यत्र
मानमाह-*सर्वलोकव्यवहारप्रसिद्धेति । प्रविश पिण्डीमित्यत्रेवात्रापि वाक्यै-
६-८ कदेशप्रयोगेण दध्नेत्यादेरोदनादिना सामर्थ्यम् । *योगाच्च रूढिर्बलीयसीति* ।
योगमर्यादया यत्रार्थप्रतीतिस्तत्रावयवशक्तिज्ञानस्याप्यपेक्षा, यत्र तु रूढ्या, तत्र
न तस्यापेक्षा; अत एव रूढेर्बलीयस्त्वम् ।

"तदर्थेन प्रकृतिविकृतिभाव एव गृह्यते इत्यत्र बलिरक्षितग्रहणस्य ज्ञा-
६-१२,१४ पकत्वमुक्तं तदुपपादयति-*तद्योगे हीति । *एतत्सर्वमिति* । "चतुर्थी तदर्था-
र्थ"(पा० सू० २-१-३६) इतिसूत्रविषयता-यत्र प्रकृतिविकृतिभावस्तत्रैवेत्यत्र ब-
लिरक्षितग्रहणस्य ज्ञापकत्वम्, अश्वघासादौ षष्ठीसमास इत्यादि चेत्यर्थः । ननु
बलिरक्षितग्रहणस्यैव ज्ञापकत्वमुक्तं न तु हितसुखग्रहणस्येत्यत्र किं बीजमत
६-१३ आह-*हितसुखयोग इति* । हितसुखयोगे तादर्थ्यचतुर्थ्यसम्भव उपपादितः,
हितसुखाभ्यामित्यादिना ॥ ननु रन्धनाय स्थालीत्यत्रापि षष्ठी कृत्वाऽश्वघासा-
६-१५ दिवत् समासः कुतो नेत्याकाङ्क्षायामाह-*रन्धनायेत्यादि । *अभिधानस्वाभा-
६-१६ व्यात्=शब्दशक्तिस्वभावात् । *न तत्र षष्ठीसमास इति* । तदुक्तं कैयटेन-"र-
न्धनस्थाल्यादयस्त्वनभिधानात् षष्ठीसमासा न भवन्ति"इति । किमत्र प्रमाण-
मिति चेदुपक्रमस्थभाष्यमेवेति गृहाण । तथा हि-"चतुर्थी तदर्थमात्रेण चेत्स-
र्वप्रसङ्गोऽविशेषात् । सर्वस्य चतुर्थ्यन्तस्य तदर्थमात्रेण सह प्रसङ्गो भवति ।
अनेनापि प्राप्नोति-रन्धनाय स्थाली, अवहननायोलूखलमिति"इति । अत्राने-
६-२० नापि प्राप्नोतीत्युक्त्या समासः कथमप्येषु न भवति । *एतेन=पूर्वोक्तिव्याख्या-
नेन । ननु यदि प्रकृतिविकृतिभाव एवेति नियमाभावस्तदा चतुर्थीसमासे "च
तुर्थी तदर्थ" (पा० सू० २-१-३६) इतिसूत्रेण पूर्वपदप्रकृतिस्वरापत्तिरत आह-
*चतुर्थीसमासेऽपीति । *अनेन="चतुर्थी तदर्थ"इत्यनेन । *अत एव="के च"
६-२१,२३,२६ (पा० सू० ६-२-४५) इति सूत्रेऽपि तदर्थ इत्यनुवृत्तेरेव । *उक्तार्थेति* । "चतुर्थी
६-२६ तदर्थ" इतिसूत्रस्य प्रकृतिविकृतिभाव एव प्रवृत्तिरित्यनेनाभिहितो योऽर्थस्त-
ज्ज्ञापकतेत्यर्थः ।

"पञ्चमी भयेन" (पा० सू० २-१-३७) इतिसूत्रे भयशब्दस्यैवोपादानाद्
भीति-भीशब्दाभ्यां समाससंज्ञासिद्ध्यर्थमेकेन वार्तिककृतोक्तम्-"भयभीतिभी-
७-५ भिः"इति । अपर आह-"भयनिर्गतजुगुप्सुभिः"इति । तदनुसारेणाह-*निर्गते-
७-५ ति* । नन्वेवमपि उपरतादिशब्दैः समासो न प्राप्नोतीत्यत आह-*भोगोपर-
तेत्यादि* । न च भयार्थैरित्येव सिद्धे भीत्यादीनां पृथगुपादानं व्यर्थमिति
वाच्यम् 'वृकात् त्रासः'इत्यत्रापि समासापत्तेः ।

७-७ *कानि चिदेवेति* । एवञ्चाभिधानस्वाभाव्यात् समाससंज्ञाप्रवृत्ति-

रिति 'प्रासादात्पतितः'इत्यत्र न भवतीत्युक्तम् । तेन 'स्वर्गपतितः,' 'प्रासादात्पतितः'इत्येव भवति न तु 'स्वर्गात्पतितः''प्रासादपतितः'इति कुतः?,इति नाशङ्कनीयम् । अमङ्गलसम्बन्धाभाव इति मङ्गलसम्बन्धाभावस्याप्युपलक्षणम् । "बहुल्पार्थान्मङ्गलामङ्गलवचनम्"इति हि वार्तिककृता शस्विधायकसूत्रे उक्तम् ।

*लेशादयं इति* । अत्रादिशब्देन लवादयो गृह्यन्ते । *व्याख्यानादिति* । व्याख्यानमेव स्पष्टयति-*स्तोकाल्पाभ्यामित्यादिना । 7-9 7-10

"गुणात्तरेण"इति वचनस्याप्रसिद्धत्वशङ्कां वारयति-*इदं चेति* । यद्यपीदं वचनं "सर्वङ्गुणकात्स्न्यें(पा०सू० ६-२-७३)इति सूत्रे भाष्ये पठितं तथापि समाससंज्ञासम्बन्धादत्रोक्तं मूलकृता । तत्र हि—"कात्स्न्यग्रहणाङ्किमर्थम् ? । सर्वङ्गुण इतीयत्युच्यमाने इहापि प्रसज्येत-सर्वेषां श्वेतः=सर्वश्वेतः । कथश्चात्र समासः ? । षष्ठी सुबन्तेन समस्यत इति । गुणेन नेति प्रतिषेधः प्राप्नोति । एवं तर्हि गुणात्तरेण समासस्तरलोपश्च । सर्वेषां श्वेततरः=सर्वश्वेतः"इति । अत्र भाष्ये गुणेन नेति प्रतिषेधः प्राप्नोतीत्युक्त्या षष्ठीसमास एवानेन, न कर्मधारयादिः । तरलोपोऽपि समाससन्नियोगात् षष्ठीसमास एव न तु कर्मधारयादौ । स च षष्ठीसमासः सर्वशब्दस्य । अस्मिन् वचने "सर्वं गुण"(पा० सू० ६—२—७३)इतिसूत्रात्सर्वमित्यनुवृत्तेः । एतदर्थमेवं "सर्वङ्गुण'('पा० सू० ६—२—७३ )इतिसूत्रे पठितं न तु समासप्रकरणे । एवं सति यादृशो वाक्यार्थः सम्पन्नस्तमाह—*गुणबोधकादिति* । एवञ्चानेन षष्ठीसमासे तरप्प्रत्ययस्य लोपे सर्वश्वेत इत्यत्र समासान्तोदात्तत्वं बाधित्वा पूर्वपदस्य सर्वशब्दस्यान्तोदात्तत्वं भवति । सर्वेषां पटानामयं श्वेतो गुणोऽधिक इत्यर्थः । 7-15 7 17

"न निर्द्धारणे" (पा० सू० २ । २ । १० ।) इत्यस्यापवाद इत्युक्तं तच्चासङ्गतं निर्द्धारणषष्ठ्या एवाप्राप्तेरित्याशङ्कते-*नन्विति* । त्रितयसन्निधाने निर्द्धारणस्य स्पष्टं प्रतीतेः । 7-19

*तमबापत्तिश्चेति* । बहूनां मध्ये प्रकर्षसत्त्वात् । एवञ्च तरबप्युपपन्न इति द्रव्यान्तराधेयापेक्षया पटेषु श्वेताधिक्यप्रतिपादनेऽस्य वाक्यस्य तात्पर्यान्न तमपः प्राप्तिः । 7-22

*इत्यस्यापवाद इति* एतेन शेषलक्षणषष्ठीभिन्ना सर्वाऽपि प्रतिपदविधानेति सूचितम् ॥ *द्विजादिशब्दैरिति* ॥ नृणामित्यस्य द्विजशब्देन समभिव्याहारे एव निर्द्धारणषष्ठीत्वमिति भावः । *अत एवः त्रितयसन्निधान इति नियमस्वीकारादेव । 7-25 8-1 8-3

*भाष्ये उक्तमिति* । तत्र त्रितयसन्निधानाभावान्न निर्धारणे षष्ठी । एतेन त्रितयसन्निधान इत्यस्यां कल्पनायां भाष्यमपि प्रमाणम् । ननु "पूरणगुणेतिसूत्रेण निषेधात्कथं षष्ठीसमास इत्युक्तं तत्राह—*गुणवचनेनेति । 8-5 8-5 8-5 8-6

(१) "बह्वल्पार्थाच्छस् कारकादन्यतरस्याम्"(पा० सू० ५-४-४२) इति सूत्रे ।
(२) अत्र 'इदम्'इति पदस्य शेषः ।

*अनित्य इति* । "संज्ञाप्रमाणत्वात्"इतिनिर्देशात्"इति मूले एवो-
क्तम् । वस्तुतः पुरुषोत्तम इत्यत्र कर्मधारय इत्याह—*उत्तम इति* ॥

प्रतिपदविधानेत्यस्य धातुकारकविशेषोपादानेन विहिता षष्ठीत्यर्थ-
८-८ स्तदाह—*ज्ञोऽविदर्थस्येति । प्रतिपदविधानेत्यस्य युक्तिसिद्धत्ववादिमतं नि-
८-११०,१३ रस्यति—*यत्त्विति । *शेषत्वाविवक्षाभाव इति । एवञ्चौषधं शरीरे तैलेनो-
पायेन प्रवर्तते इत्यर्थे तैलस्य प्रतिजानीते शरीरे औषधम्'इत्यादौ शरीरौ-
षधशब्दाच्छेषत्वविवक्षया षष्ठी न ।

८-१७ *तवेति* । कर्माश्रयषष्ठीविषये "सूत्रोपात्तसकर्मकाणामकर्मकव-
द्वचनम्"इतिवार्त्तिकप्रत्याख्यानाय "शेष इति वर्तते"इति भाष्यकृतोक्ते परेण
"शेषश्च क"इति पृष्टे "षष्ठी शेषे"(पा० सू० २ । ३ । ५) इतिसूत्रोक्तं "कर्मादी-
नामविवक्षा शेष" इति सिद्धान्तिना स्मारितं "नैतावता कृत्वोर्थे इत्यत्र
तत्सम्बन्ध" इति भाष्यव्याख्यायाः प्रामाण्यस्वीकर्तुस्तवेत्यर्थः ।

ननु न मम कृत्वोर्थे इत्यत्र शेषपदासम्बन्धोऽनुमतः, किन्तु शेष
इत्यस्यात्रापि सम्बन्धः । अत एव द्विरह्न्यध्ययनमिति प्राक् प्रत्युदाहृतम् । अत
८-१७ एव च "कर्मादीनामविवक्षा शेष"इत्यत्रादिपदोपादानमित्यत आह—*कृत्वो-
ऽर्थे इति ।

८-१७ भाष्यानुग्रहाभावादिति* । दृढतरभाष्यानुग्रहाभावादित्यर्थः । बहु-
वचनदर्शनमात्रेण तत्र तत्सम्बन्धकल्पनं तस्य तु "षष्ठी शेषे" (पा० सू० २ ।
३ । ५ ।) इतिसूत्रोक्तानुवादकतयाऽपि चारितार्थ्यमिति भावः ।

८-१८ *नात्यन्तमिति । यदा कर्म विवक्षितं भवति तदा षष्ठी न भवति । "स्मराम्यहं
मातरम्"इतिभाष्यीयव्याख्यानवाक्ये आदिपदानुच्चारणात्, कर्मपदोच्चारणाच्च ।
अन्यथा कर्मपदघटित "अधीगर्थ(पा०सू० २ । ३ । ५२)इतिसूत्रापेक्षया "ज्ञोऽविद-
र्थस्य"(पा०सू० २ । ३ । ५१)इत्यस्य पुरःस्फूर्तिकतया करणादीनामविवक्षेत्येवोक्तं
स्यादिति भावः । नन्वेवं "ज्ञोऽविदर्थस्य" (पा० सू० २ । ३ । ५ ।) इत्यनेन वि-
च्छेदात् "अधीगर्थ" (पा० सू० २ । ३ । ५२ ।) इतिसूत्रे कथं शेषपदसम्बन्ध
८-१९ इत्यत आह--*अधीगर्थेत्यादाविति ।

*"दिव" इति सूत्र इति* । "दिवस्तदर्थस्य"(पा० सू० २ । ३ । ५८)
इतिसूत्रेऽपि शेष इति वर्त्तते । अन्यथा "कर्माश्रयषष्ठीविषय"इति वार्तिक-
बलाच्छतस्य दीव्यत इति भावः । इष्टस्यासिद्धिरित्युक्त्वा "कृत्वोर्थ"(पा०
सू० २ । ३ । ६)इतिसूत्रव्याख्यानसमये विस्तरेणोपपादितमित्यर्थः ।

"दिवस्तदर्थस्य"(पा० सू० २ । ३ । ५२ ।)इतिसूत्रेऽपि शेषपदसम्बन्धा-
८-२१ देवाह— *शतस्य देवितेत्यादाविति* । *अनेनैव=दिव इति सूत्रेणैव ।
८-२२ *अत एव="ज्ञोऽविदर्थस्य करणे"(पा० सु० २ । ३ । ५१) "कृत्वोर्थप्रयोगे"(पा०
सू० २ । ३ । ६४ ।) इति सूत्रविहितषष्ठी यत्र तत्र समासनिषेधस्येष्टत्वादेव ।
८-२२ *इदम्-प्रतिपदविधानामितिवचनम् ।

*अत एव=अस्यापूर्वत्वादेव । *सर्वा प्रतिपदविधानेति* । पदम्प-

प्रकृतिकभावप्रत्ययान्तश्च गृह्यते । व्याख्यानात्* । तदाह-काकस्येति । "आकडार"[पा० सू० २-४-१]सूत्रोक्त(१)गुणवचनानान्तु नेह ग्रहणं, (२)वचनपदानुपादानात् । तदेदामिति । (३)अन्यथा ब्राह्मणस्य ये दन्ता इत्यर्थे *शुक्लपदेनासामर्थ्यात्समासप्राप्तिरेव नेति भावः* । इदानीं तु शुक्लशब्द एव विशेष्यसमर्पक इति तात्पर्यम् ।

*परे तु एवमपि *सामर्थ्यं दुरुपपादम् । षष्ठ्यन्तं समर्थप्रकृतिकेन सुबन्तेन समस्यते इत्यर्थेना*दोषात् । *अत्र हि सुबन्तेन 'शुक्ला'इति पदेन वाक्यैकदेशन्यायेन शुक्ला दन्ता इत्यर्थबोधः । एवञ्च सुबुत्पत्तिः शुक्लशब्दात्तरार्थे एवेति न समर्थप्रकृतिकता *सुबन्तस्य । *अत एव ब्राह्मणस्य ग्रामं गत इत्यर्थके 'ब्राह्मणस्य गतः'इति वाक्ये प्रकरणादिना ग्राममित्यथस्योक्त-

दम्-प्रतिपदं प्रतिपदं विधानं यस्याः सा प्रतिपदविधानेत्यर्थः । एवञ्च कारक- ८-२३
विशेषोपादानेन विहिता इति फलितं, तदाह—*शेषलक्षणां वर्जयित्वेति । २-२५
एवं सति "कर्तृकर्मणोः (पा० सू० । ३ । ६) इति सूत्रविहितषष्ठ्यन्तस्य समासाभावः स्यादत आह—*कृद्योगेतीति । तथा च कृद्योगेतिवचनन्तस्य बाधकमिति ८-२४,२५
भावः । *तत्र=शेषलक्षणां वर्जयित्वेति वाक्ये । *शेषमात्रेति । अत्र मात्रपदेन- ८-२५
कर्मपदोपादानेऽपि शेषपदानुवृत्त्या या विहिता तद्व्यावृत्तिः । *तेन=कारक- ८-२६
विशेषोपादानेनेतिव्याख्यानेनैव । *न तत्त्वम्=न प्रतिपदविधानत्वम् । ८-२६

*अन्नन्तस्यापीति । तस्यापि पूरणार्थत्वात्, न तु पूरणार्थकप्रत्ययान्तत्वादित्यर्थः । ८-२८
*व्याख्यानादिति* । द्वन्द्वान्ते श्रूयमाणस्यार्थशब्दस्य त्रिषु स- ८-२८
म्बन्धमूलकव्याख्यानादित्यर्थः । *व्याख्यानात्=गुणार्थैरित्यस्य गुणनिष्ठा या विषयता तच्छालिशाब्दबोधजनकैरित्यर्थमूलकव्याख्यानादित्यर्थः । *शुक्लपदेनासामर्थ्यादिति* । ब्राह्मणपदार्थस्य दन्तपदार्थेनैवान्वयादिति भावः । स्वसिद्धान्तमाह—*परे त्विति । सामर्थ्यम्=शुक्लपदेन सामर्थ्यम् । *अदोषादिति । समासप्राप्तिरूपदोषाभावादित्यर्थः । तदेवोपपादयति—*अत्र हीति । सुबन्तस्येति* । किन्तु समर्थत्वमेवेति शेषः । समर्थप्रकृतिकेति व्याख्यानञ्चावश्यकम् । अन्यथा 'राजपुरुषस्य धनम्'इत्यत्र परिनिष्ठितविभक्त्या समासपक्षे षष्ठीश्रवणमुक्तार्थत्वान्न स्यात् । *अत एव=समर्थप्रकृतिक-

(१) गुणवचनानामिति । जाति-संख्या-ऽव्यय-कृदन्त-तद्धितान्त-समास-सर्वनामसंख्याशब्दातिरिक्तानामित्यर्थः । तत्र भाष्ये "गुणवचनञ्च"इति गुणवचनसंज्ञामु कृत्वा "समासकृत्तद्धिताव्ययसर्वनामासर्वलिङ्गाजातिः"इति "संख्या" इति च वार्तिकद्वयेन तदपवादभूतसमासादिसंज्ञाविधानात् ।

(२) वचनपदेति । गुणवचनेति विशिष्टस्यैव संज्ञात्वमित्याशयः ।

(३) अन्यथा—गुणिबोधकत्वस्य स्वीकारे ।

न्यायेन 'गत'इत्यनेनोक्तौ समासो न। नेष्यते च तत्र समास इति "कर्मणि च"[पा० सू० २-२-१४]इति सूत्रे *भाष्यकैयटयोः। तस्मात् *कार्ष्ण्यादय एवात्रोदाहरणम्। *गुणिपरताऽपि शुक्लादीनां विशेष्यद्रव्योपादाने-प्रकरणादिना तदवगतौ वा, नान्यत्र; अभिधानस्वाभाव्यादित्याहुः(१)।

सुबन्तत्वाभावादेव। *भाष्यकैयटयोरिति*। तत्र हि कर्मणि या षष्ठी सा न समस्यते इति वा, कर्मणि यः क्त इति वा सूत्रार्थ इति सन्दिह्य कर्मणि या षष्ठीतिव्याख्याने इध्मप्रव्रश्चनः पलाशशातन इत्यत्र समासनिषेधप्राप्तिमभिधाय "कर्मणि यः क्त इतिव्याख्याने किमुदाहरणम्?। ब्राह्मणस्य भुक्तः। वृषलस्य पीतः। क्तनिर्देशोऽसमर्थत्वादप्रतिषेधः। समासः कस्मान्न भवति?। असामर्थ्यात्। कथमसामर्थ्यम्?। सापेक्षमसमर्थम्भवतीति। इध्यमत्रापेक्षते" इत्युक्तम्। तत्र कैयटेन-"ब्राह्मणस्येति षष्ठी न भुक्तापेक्षया। "न लोक" (पा० सू० २।३।६९।) इतिनिषेधात्, किन्तु ब्राह्मणस्य य ओदनादिः सोऽन्येन भुक्त इति प्रतीयते" इत्युक्तम् तेन न्यायेन ब्राह्मणस्य गत इत्यत्रापि समासाप्राप्तिरुक्तैवेत्यर्थः। *कार्ष्ण्यादय एवात्रेति*। केवलगुणवाचका एवेत्यर्थः। ननु शुक्लादीनां केवलगुणपरतायां तेषामप्युदाहरणत्वसम्भव इत्यत आह—*गुणिपरताऽपीति*। एवञ्च विशेष्यबोधकशब्दयिशेषोपादाने। प्रकरणादिना तत्रोक्तरीत्याऽसामर्थ्ये नान्यत्र विशेष्याज्ञाने। एवञ्च यदा शुक्ला इत्यादीनाम्प्रयोगस्तदापि विशेष्ये दन्ते वृत्तिरस्त्येव। "गुणे शुक्लादयः पुंसि" इतिकोशस्य गुणात्मकविशेष्ये वृत्तावित्यर्थः। शुक्लो वर्ण इति यथा। एवञ्च ब्राह्मणस्य शुक्लो वर्ण इति यत्र प्रयोगस्तत्राप्युक्तरीत्या शुक्ला इत्यनेनासामर्थ्यमस्त्येव। अत

---

(१) इदमत्रावधेयम्। गुणेति पदं गुणे गुणविशिष्टद्रव्ये च ये शुक्लादिशब्दास्तेषां बाधकम्। न तेन 'चन्दनगन्धः' 'पटरूपम्' इत्यादौ निषेध इति। रूपत्वादिव्याप्यधर्माणामेवाभेदप्रतियोगितावच्छेदकत्वमिति स्वीकारात्। तस्मादेकानुपूर्व्यवच्छिन्नस्य यस्य शब्दस्य गुणतद्विशिष्टद्रव्योभयबोधकत्वं, तेषामेवायं निषेधः। न च 'पटस्य शौक्ल्यम्' इत्यत्र निषेधो न स्यात्, सर्वदा व्यधिकरणत्वादिति वाच्यम्। यत्प्रतिपाद्यगुणप्रतिपादकशब्दस्य सामानाधिकरण्यवैयधिकरण्याभ्यामन्वयबोधकत्वं तेनापि सह समासनिषेधात्। अस्ति च शुक्लगुणस्य प्रकृत्यर्थतावच्छेदकधर्मवाचिभावप्रत्ययान्तगुणविशिष्टद्रव्यवाचिप्रकृतिकशौक्ल्यपदप्रतिपाद्यत्वम्। तत्प्रतिपादकशुक्लपदस्य चोभयथाऽपि बोधकत्वात्। न च रूपपदप्रतिपाद्यगुणप्रतिपादकशुक्लपदमादाय तस्यापि निषेध इति वाच्यम्। समानप्रकारत्वेन प्रतिपादकत्वस्योक्तत्वात्। न चैतावान् विशेषः कुतो लभ्यते इति वाच्यम्। "तत्स्थैश्च गुणैः समासः" इति वार्तिकस्य मानत्वात्। गुणिना सह भेदेनान्वयबोधकत्वस्य तदर्थत्वात्। तस्य च गुणमात्रसाधारण्येन भेदमात्रेणान्वयबोधकत्वलाभादिति।

(शे०)अनित्योऽयं गुणेनेति । *पूरणार्थेनेति च बोद्ध्यम् । इत्यादीति *'लोपे चेत्पादपूरणम्'इति आदिशब्दार्थः । तेन 'कुम्भपूरणभवः' 'उञ्छषष्ठः' इत्यादि सिद्धम् । परे तु एषु कुम्भसम्बन्धिपूरणमुञ्छसम्बन्धी षष्ठ इति मध्यमपदलोपी समासः । अत एव भाष्येऽनित्यत्वं नोक्तम् । *अन्यत्रास्यानभिधानम् । *अत एव 'सर्वश्वेतः'इत्यादौ गुणेन नेति निषेधात् कथं समासः ? इत्याशङ्क्य "गुणात्तरेण समासस्तरलोपश्च"इति वचनमारब्धं "सर्वं गुण" [पा० सू० ६-२-९३] इति सूत्रे भाष्ये । *संख्याशब्दास्तु *भावशब्दा इति योजनशतं गोविंशतिरित्यादौ च नायं निषेधः । तथा च *"पङ्क्तिविंशति" [पा० सू० ५-१-५९]इति सूत्रे भाष्यं-"ते एते विंशत्यादयः समुदाये सन्तो भाववचना भवन्ति"इति, "विंशत्यादिषु भाववचनेषु"इति च ।

---

(चं०)एवोक्तं-"कार्ष्ण्यादय एवात्रोदाहरणम्"इति । तदुक्तम्—प्रकृतसूत्रे भाष्ये "षष्ठी"(पा० सू० २ । २ । ८) इति—सूत्रे "किम्पुनः कारणं गुणेन नेत्युच्यते, न पुनर्गुणवचनेन नेत्युच्यते ? । नैवं शक्यम् । इह न स्यात्—काकस्य कार्ष्ण्यम्, बलाकायाः शौक्ल्यमिति । एतदेव खल्वपि तस्मिन् योगे उदाहरणम् । यच्चेदं ब्राह्मणशुक्ला वृषलस्य कृष्णा इति । असामर्थ्यादत्र न भविष्यति । कथमसामर्थ्यम् ? । सापेक्षमसमर्थम्भवतीति । द्रव्यमत्रापेक्ष्यते दन्तौ इति । तस्माद् गुणेन नेति वक्तव्यम्"इति । एतेन ब्राह्मणस्य शुक्ला इत्यत्र शुक्ला इत्यस्य वाक्यैकदेशन्यायेन शुक्ला दन्ता इत्यर्थे प्रयोगात्समर्थप्रकृतिकत्वाभावः स्फुट एव । *पूरणार्थेनेति चेति* । अनित्य इति शेषः । तत्र प्रमाणप्रदर्शनायाह—*लोपे चेत्पादपूरणमित्यादीति* । मध्यमपदलोपी समासः कर्मधारयः । नन्वेवं काककार्ष्ण्यमित्याद्यपि स्यादत आह—*अन्यत्रेति । *अत एव=अस्य निषेधस्यानित्यत्वाभावादेव । नन्वस्यानित्यत्वाभावे गोविंशतिरित्यादिसिद्धिः कथमत आह-*सङ्ख्याशब्दा इति* । *भावशब्दा इतीति । भावप्रवृत्तिनिमित्तका इत्यर्थः । अत्र भावशब्दो धर्ममात्रपरः-तस्य भाव इत्यत्र यथा । *"पङ्क्तिविंशति"(पा० सू० ५ । १ । ५९ । )इति सूत्रे भाष्यमिति* । तत्र कैयटोऽपि-भाव इव भावः । यथा शुक्लादिभावः पराश्रय एवमन्योऽपि धर्म इति ।

---

(१) लोपे चेदिति । एतन्निर्देशः पूरणार्थेन सह समासनिषेधस्यानित्यत्वं बोधयितुम् । (२)भावशब्दा इति । भावशब्दश्च धर्ममात्रबोधकः । भाव इव भावः । यथा पाकादिभावः पराश्रयः, एवमन्योऽपि धर्मः पराश्रयत्वाद्भाव इति संख्यानामपि पराश्रयत्वात्तत्त्वमिति भावः ।

(शे०)यस्तु *तत्रैषां गुणवचनत्वव्यवहारोऽपि, स तु *तत्सादृश्यात् । *अन्यथा धनमित्युपक्रम्य "धनमेको गुणः, अपत्यमेको गुणः" इत्यपि भाष्योक्तेः 'चैत्रधनम्' 'चैत्रापत्यम्'*इत्यादि न स्यादिति वदन्ति ।

सूत्रे सुहितेति *भावे क्तः । तेन फलानां तृप्तिरित्यादावपि निषेधस्तदाह—तृप्त्यर्था इति । तृतीयेति । *तत्र करणत्वेन भानं,षष्ठीसमासे *संबन्धत्वेनेति भावः । श्रौतविशेषमप्याह—स्वरे विशेष इति । तृतीयासमासे "तृतीया कर्मणि"[पा० सू०६-२-४८]इति पूर्वपदप्रकृतिस्वरः थाथादिस्वरापवादः। षष्ठीसमासे त्वन्तोदात्तः।तृप्त्यर्थानां सकर्मकत्वात्*कर्मणि क्तः । द्विजस्येति । कुर्वन्नित्यपेक्षया न कर्मणि षष्ठी "न लोक"[पा०

---

(चं०)*तत्रैषामिति* । विंशत्यादीनामित्यर्थः । *तत्सादृश्यात्*=गुणसादृश्यात् । *अन्यथा=गुणबोधकत्वस्यैव स्वीकारे ।

न चैवंरीत्या कार्ष्ण्यस्यापि भावत्वात्तद्वाचकेन कथं निषेध इति वाच्यम् । यं धर्मं बुद्धिस्थीकृत्य यादृशानुपूर्व्यवच्छिन्नस्य शब्दस्य गुणे प्रवृत्तिस्तस्य धर्मस्य गुणिसमानाधिकरणतादृशानुपूर्व्यवच्छिन्नशब्दप्रवृत्तिनिमित्तत्वे भावशब्दत्वेन प्रकृते व्यवहारः ।

"विंशत्याद्याः सदैकत्वे सर्वाः सङ्ख्येयसङ्ख्ययोः" ।

इति कोशेन विंशतिरित्यानुपूर्व्यवच्छिन्नस्यैवोभयत्र प्रवृत्तिबोधनेन गवां विंशतिरित्यादौ विंशतिशब्दस्य यं धर्मं बुद्धिस्थीकृत्य प्रवृत्तिस्तस्य धर्मस्य विंशतिर्गाव इत्यत्र यो विंशतिशब्दस्तत्प्रवृत्तिनिमित्तत्वमस्त्येव । कार्ष्ण्यशब्दस्य तु यद्धर्मप्रवृत्तिस्तस्य कार्ष्ण्यत्वस्य न कदापि गुणिसमानाधिकरणशब्दप्रवृत्तिनिमित्तत्वमिति भावः ।

*इत्यादि न स्यादिति* । अत्र हि यथा गुणत्वं पराश्रितत्वं प्रति सम्बन्ध्यंशे नित्यसाकाङ्क्षत्वरूपं तथा धनापत्यशब्दयोरप्यस्त्येवेति । समासनिषेधादिति शेषः । "गुणवचनानाम्"इतिवार्त्तिके तु गुणवचनशब्देन गुणिसामानाधिकरण्येन गुणप्रतिपादकानामेव ग्रहणम् । ननु सुहितेत्यत्र कर्त्तरि क्तस्य सत्त्वेन फलानां तृप्तिरित्यत्र कथं निषेध इत्यत आह—*भावे क्त इति* । फलानामिति करणस्य शेषत्वविवक्षया षष्ठी *तत्र=फलसुहित इत्यत्र । *सम्बन्धत्वेनेति* । अवयवशक्तिज्ञानसहकारेण समुदायस्य बोधकतया वाक्यार्थबोधकत्वस्य सत्त्वात् । *कर्मणि क्त इति* । यत्तु भावे क्त इत्युक्तं पू-

---

(१)द्विजस्येतीति । तथा च भाष्यम्—"कथमसामर्थ्यम् ?, द्रव्यमत्रापेक्ष्यते—'आसनम्'इति"इति ।

(२)तदपेक्षामेव षष्ठ्यनुपपत्तिदर्शनेन दर्शयति—कुर्वन्नित्यपेक्षयेत्यादिना ।

(शे०)सू० २-३४-९]इति निषेधात्; नापि घटापेक्षया, असामर्थ्यात्समासानापत्तेः, किं तु शेषे इत्याह–किंकर इत्यर्थ इति । रक्षित इति ।
*अत एव "सर्वपश्चात्"इति भाष्यप्रयोगः सङ्गच्छते । प्रकृतसूत्रभाष्येऽपि अक्षद्व्यैरुच्चैरादिभिरसामर्थ्येन* समासाभावमुक्त्वा कृदव्ययमेवोदाहृतम् । तेनान्याव्ययैः सति सामर्थ्ये समास इष्ट इति गम्यते ।

*परे तु द्विजस्य कुर्वन्कृत्वेत्यादौ कारकषष्ठ्या निषेधात् कटाद्यपेक्षया शेषषष्ठ्यां स्वसामर्थ्यात्समासप्राप्तिरेव नेत्याशङ्क्य द्विजस्य द्विषन् पुरा सूर्यस्योदेतोरित्यादौ द्विषः शतुर्वावचनं तोसुन्कसुनोरप्रतिषेध इति कारकषष्ठीसत्त्वात्तन्नोदाहृतं भाष्ये । तस्मादीदृशे विषये कर्मणः शेषत्वविवक्षायाः* तादर्थ्यस्य संबन्धत्वविवक्षायाश्चाभाव एव । पाणिनितात्पर्यनिर्णयायैव भाष्यकृतः प्रवृत्तेरित्याहुः ॥

इध्मकर्तव्यमिति । कर्तृषष्ठ्या समासः । तक्षकस्येति ।
*परिनिष्ठितविभक्त्या समासः । अत्र परत्वात्समानाधिकरणसमासं बाधित्वा षष्ठीसमासः प्राप्तः । "कटोऽपि कर्म, भीष्मादयोऽपि"इति
*पक्षेऽपि परस्परान्वय एवेति नासामर्थ्यम् । *क्रियान्वयनियमश्च न

---

(चं०)र्वत्र, तत्तु सुहितार्थेत्यत्र सूत्रे प्रष्टव्यम् । सकर्मकत्वादेव "पितॄनताप्सीत्" इति भट्टिप्रयोगः सङ्गच्छते । तत्र भावे क्तस्तु "क्तोऽधिकरणे च"(पा०सू० ३ । ४ । ७६ ।)इति सूत्रेण बोध्यः । *अत एव=कृदव्ययस्यैव ग्रहणादेव । *असामर्थ्येनेति* । सुबन्तार्थविशेष्यानन्वयित्वात् । प्राचीनोक्तं कटाक्षयन्नाह–*परे-त्विति । *तादर्थ्यस्येति* । तेनाश्वाय घास इत्येव । तथा च ब्राह्मणस्य कृत्वेति मूलोक्तमसङ्गतमिति भावः ।

*परिनिष्ठितविभक्त्या समास इति* । प्राप्त इति शेषः । न च षष्ठ्यन्तयोः समासेऽर्थाभेदात्प्रधानस्य पूर्वनिपात इत्येतन्निरूपणावसरे येन सुबन्तेन समासस्तन्निरूपितसम्बन्धार्थकमेव षष्ठ्यन्तं गृह्यत इत्युक्तमिति अत्र तादृशषष्ठ्यभावात्कथं समासप्राप्तिरिति निषेधो व्यर्थ इति वाच्यम् । यत्र व्यधिकरणषष्ठ्यन्तयोः समासस्तत्र तादृश्येव षष्ठी गृह्यते पूर्वोक्तभाष्यप्रामाण्यात् । यत्र तु सामानाधिकरण्यं तत्र नायं नियमः । अत्र प्रकृतसूत्रस्थसमानाधिकरणग्रहणमेव मानमिति सूत्रकाराभिप्रायः ।

*पक्षेऽपीति । पार्ष्णिकसामानाधिकरण्येन तत्पक्षेऽपि समासनि-

---

(१)इत्याहुरिति । तोसुन्कसुनोश्छान्दसत्वात् शानचो योगे कारकषष्ठ्या असम्भवेन तद्ग्रहणवैयर्थ्यापत्तेश्चेदं चिन्त्यम् ।

(शे०)साक्षादेव, किं तु यद्द्वारा कारकत्वं तद्द्वारकोऽपीत्युक्तम् । अत एवैतन्निषेधसार्थक्यं तत्पक्षे । न च—'समानाधिकरणमसमर्थवत्'इत्यसामर्थ्यम्, समानाधिकरणाधिकारे 'समानमध्यमध्यमवीराश्च' *इति पाठेन तस्य समानाधिकरणाधिकारस्थसमासाविषयत्वेऽप्यन्यत्राप्रवृत्तौ मानाभावात्—इति वाच्यम् । अधात्वभिहितमित्युक्त्या धातूत्तरप्रत्ययेन कर्माभिधाने यजुषः पीयमानस्येत्याद्यर्थ*मावश्यकत्वात् । स्पष्टश्चेदं भाष्ये । *समर्थसूत्रभाष्योक्तेः प्रकरणान्तरस्थे "इसुसोः"[पा० सू० ८-३-४४] इति षत्वेऽपि तत्प्रवृत्तिरित्यन्यत् । ननु षष्ठीसमासस्य निषेधेऽपि विशेषणसमासोऽत्र दुर्वार इति निषेधे फलाभावोऽत आह—विशेषणसमासस्त्विधाति । *"विशेषणं विशेष्येण"[पा०सू० २-१-५७]इत्युभयोपादानेन तत्त्वावच्छेदकधर्मयोः परस्परं व्यभिचार एव विशेषणसमासप्रवृत्ति-

---

(चं०)षेध इति प्राचीनाः । वस्तुतस्त्वनेन सूत्रेण निषेधकरणसामर्थ्यात्तत्पक्षेऽपि परस्परान्वय एव । तदेवोपपादयति—*क्रियान्वयेति* । *आवश्यकत्वात् = समानाधिकरणग्रहणस्येत्यर्थः ।

नन्दु समानाधिकरणमसमर्थवदित्यस्य तक्षकस्य सर्पस्येत्यत्र चारितार्थ्यात्प्रकरणान्तरस्थे "इसुसोः सामर्थ्ये" (पा० सू० ८ । ३ । ४४)इति सूत्रे कथं प्रवृत्तिरत आह—*समर्थसूत्रेति* । तक्षकस्य सर्पस्येत्यत्र विशेषणतावच्छेदकस्य तक्षकत्वस्य सर्पत्वात्मकविशेष्यतावच्छेदकव्यभिचारित्वाभावेन विशेषणसमासप्राप्तिरितिवादिमतं निरस्यति—*विशेषणमित्यादिना ।

---

(१)इति पाठेनेति । समानाधिकरणस्य सुबन्तद्वयस्य परस्परमसामर्थ्ये "पूर्वापरप्रथमजघन्यसमानमध्यमध्यमवीराश्च"[पा० सू० २—१—५८] इति सूत्रस्य वैयर्थ्यात्तत्सामर्थ्येन "समानाधिकरणमसमर्थवत्" इत्यस्य समानाधिकरणाधिकारेऽप्रवृत्तिरिति ज्ञाप्यते । न च धातुसहचरितेन प्रत्ययेन यत्र "वीरः पचन्" "वीरः पचमानः" इत्यादौ कर्त्राद्यभिधीयते तत्र सामर्थ्यस्य सत्त्वात्तत्सूत्रं चरितार्थमिति वाच्यम् । बहुलग्रहणानुवृत्त्याऽनभिधानाद्वा तत्र पूर्वापरेति सूत्रस्याऽप्रवृत्तिस्वीकारात् । "विशेषणं विशेष्येण बहुलम्"[पा० सू० २—१—५७]इति समासस्तु भवत्येव । "भृत्यभरणीयः" इति भाष्यप्रयोगात् । अत एव न तस्य ज्ञापकत्वमुक्तं भाष्ये । (२)इत्याद्यर्थमिति । तक्षकस्य सर्पस्य इति आदिपदग्राह्यम् । (३)आवश्यकत्वादिति । समानाधिकरणनिषेधस्य इत्यादि । (४)तत्त्वावच्छेदकधर्मयोः—विशेषणत्वविशेष्यत्वावच्छेदकीभूतधर्मयोः । (५)विशेषणसमासप्रवृत्तिरिति । भावपदार्थः, तर्कविद्या, इत्यादावित्यर्थः । तथा च प्रकृते तक्षकत्वसर्पत्वयोः परस्परं व्यभिचाराभावान्न समास इति भावः ।

(शे०)रिति तु न युक्तम् । कैलासाद्रिरित्यादौ समासानापत्तेः । अत एवो-भयोपादानं स्पष्टार्थमिति कैयटः । इह=तक्षकस्य सर्पस्येत्यादौ । तयोः समासयोरत्र फले *विशेषाभावादिति भावः । *एवं प्रथमान्तेन समास इति पक्षेऽपि षष्ठ्यन्ततत्प्रयोगाभाव एवानभिधानादिति बोध्यम् । *एतच्च भाष्यवृत्त्युदाहृतप्रयोगविषयम् । अत एवान्यस्य पदस्यार्थे इत्यर्थकः 'अन्य-पदार्थे' इति सूत्रप्रयोगः सङ्गच्छते । *एवञ्च 'नीलोत्पलस्य गन्धः'इत्यादि साध्वेव । *निषेधसामर्थ्यादिति तु नोक्तम् । 'गमनस्य श्रेयसः'इ-त्यादौ कर्मधारये "क्त्यावसकन्यायवत्सुभावे कर्मधारये" इत्यनेन पूर्व-पदप्रकृतिस्वरः, षष्ठीसमासे त्वन्तोदात्तत्वमिति भेदेन *तत्सार्थक्यात् । फलान्तरमप्याह—गोर्धेनोरिति । तत्र हि षष्ठीसमासे *गुणप्रवृत्तिनिमित्त-कत्वेनाप्रधानत्वात्प्रथमानिर्दिष्टत्वाच्च धेनोः पूर्वनिपातो, विशेषणसमासे तु *गोः; इति भेद इति भावः । आदिना भोज्यस्योष्णस्येत्यादिसङ्ग्रहः ।

---

(चं०)*विशेषाभावादिति । उभयथाऽप्यन्तोदात्तत्वात् ।

नन्वेवमपि प्रथमान्तयोः समासं कृत्वा ततः षष्ठ्यां तक्षकसर्पस्येति स्यादेवेत्यत आह—*एवमिति* । अन्यत्राप्यनभिधानशङ्कानिरासायाह—*एत-च्चेति* । *एवं च=भाष्यवृत्त्याद्युदाहृतेति स्वीकारे च ।

ननु प्रकृतसूत्रे समानाधिकरणग्रहणसामर्थ्यादित्येव वक्तव्ये बहुलग्रह-णपर्यन्तानुधावनमफलमत आह—*निषेधसामर्थ्येति* ।

*तत्सार्थक्यादिति* । समानाधिकरणग्रहणसार्थक्यादित्यर्थः । तथा चान्तोदात्तस्य 'गमनश्रेयसः'इत्यस्य वारणाय समानाधिकरणग्रहणमिति भावः । *गुणप्रवृत्तिनिमित्तकत्वेनेति । एतेन प्राचीनसम्मतमुपसर्जनसंज्ञाबोध्यमुपसर्ज-नत्वमप्यस्त्येवेति सूचितम् ।

*गोरितीति । "पोटायुवति"(पा० सू० २ । १ । ६५ ।)इति सूत्रेण समासविधानादिति भावः ।

---

(१)समासानापत्तेरिति । अद्रित्वाभाववति कैलासत्वस्यासम्भवेन व्यभिचाराभावादित्यर्थः । (२)तयोः=परिनिष्ठितविभक्त्या षष्ठीसमासविशे-षणसमासयोः । (३)भाष्येति । शुकस्य माराविकस्य, राज्ञः पाटलिपुत्र-कस्य, पाणिनेः सूत्रकारस्य इति भाष्योदाहरणानि । मूलोक्तं तु वृत्त्युक्त-मिति बोध्यम् । माराविकस्य इत्यत्र मा क्रियतामित्याहेत्यर्थे "तदाहेति मा-शब्दादिभ्यः" इति ठक् ।

(शे०)*ये तूपसर्जनसञ्ज्ञामन्वर्थां नाश्रयन्ते,तेषां षष्ठीसमासे पूर्वनिपाता-नियम इति तद्वारणाय निषेधो, विशेषणसमासस्तु स्यादेवेति कैयटः।

*परे तु "प्रथमानिर्दिष्टम्"[पा०सू०१-२-४३]इत्यादिसूत्रभाष्योक्तरीत्या "षष्ठी"[पा०सू०२-२-८] इति सूत्रे प्रत्यासत्त्या येन सुबन्तेन समासस्तदर्थ-निरूपितसम्बन्धाद्यर्थकषष्ठ्या ग्रहणम्। एवञ्च प्रकृते न समासप्राप्तिरिति समानाधिकरणग्रहणं व्यर्थमेव। ध्वनितञ्चे*दमत्र भाष्ये। तथा च भाष्यम्-"समानाधिकरणे किमुदाहरणम्। (एकदेश्याह) राज्ञः पाटलिपुत्रकस्य। (प्रष्टाऽऽह) नैतदस्ति। असामर्थ्यादत्र न भविष्यति। (*उक्त आशयः। उदाहरणवाद्येकदेश्याह) *कथमसामर्थ्यम् ? । (प्रष्ट्रेकदेश्याह) समाना-धिकरणमसमर्थवदिति। (उदाहरणवाद्येकदेश्याह) अथात्वभिहितमिति। तच्छेषात्सर्पिषः पीयमानस्येत्युदाहरणम्" इति। उपसर्जनसञ्ज्ञासूत्रस्थ-भाष्यैकवाक्यतयाऽस्यैवं *व्याख्यानस्यैवौचित्यादित्याहुः।

*व्याख्यानात् 'पूजायाम्'इति सूत्रोपलक्षणमित्याह-मतिबुद्धीति। राज्ञां मत इति। "क्तस्य च वर्त्तमाने"[पा० सू० २-३-६७]इति षष्ठी। अ-यञ्च कारकषष्ठीशेषषष्ठ्योरुभयोरपि समासस्य निषेधः।तयोः समासयोःथाथा-दिस्वरसमासस्वराभ्यामन्तोदात्तस्यैव प्राप्त्या फले विशेषाभावात्; *तन्नु-

---

(चं०)कस्यचिन्मतं स्वरूपव्याक्रियैव पराक्रियेति रीत्याऽसङ्गतमिति सूच-यन्नाह-*ये त्विति*। षष्ठ्यन्तयोरितिप्रागुक्तभाष्याभिप्रायेणाह-ये त्विति। *इदम=समानाधिकरणग्रहणाकरणम्। *उक्त आशयः=येन सुबन्तेन समा-सस्तदर्थनिरूपितषष्ठ्यन्तेनासामर्थ्यसद्भावरूपः। *कथमिति*। परस्परान्व-यात्कर्मधारयस्थल इवास्त्येव सामर्थ्यमिति भावः। *व्याख्यानात्="कर्मणि च" (पा० सू० २।२।१४।) इति सूत्रभाष्ये "कर्मणि यः क्त इत्यर्थे पूजायां प्र-तिषेधोऽनर्थकः राज्ञां पूजितः। राज्ञामर्चितः। कर्मणीत्येव सिद्धम्"इति प्रति-पादितं तद्दर्शनमूलकात्। यदि सूत्रोपलक्षणं पूजाग्रहणं स्यात्तदा प्रकृतोदाह-रणस्य "तेन च पूजायाम्" (पा० सू० २।२।१२।) इत्येतदुदाहरणत्वसम्भव इति भावः। न च पूजारूपेऽर्थे क्तस्य विधानाभावेन पूजायां यो धातुरित्यर्थकल्प-नयाऽप्येतद्भाष्यं योजयितुं शक्यमिति वाच्यम्। तथा सति पूजार्थेभ्य इत्येव सिद्धे पूजायामित्युपादानानर्थक्यापत्तेः।

*तच्चिन्त्यमिति*। भूते यः क्तस्तदन्तेन योगे कारकषष्ठ्या असम्भवेन

---

(१)पूर्वनिपातानियम इति। उभयोरपि षष्ठ्यन्तयोः प्रथमानिर्दि-ष्टत्वाविशेषादनियमो, विशेषणसमासे तु नियम इति भावः।

(शे०)ध्वनयन्नाह-मूले क्तान्तेनेत्यादि । न च वर्त्तमाने क्तो भूते क्तस्य बाधकः*तक्रकौण्डिन्यन्यायादिति वाच्यम् । भूते क्तेऽवश्यं प्राप्ते वर्त्तमाने क्तस्यानारम्भात् । भूतत्ववर्तमानत्वयोर्युगपद्विवक्षाया *असम्भवात् । दधिदानेऽवश्यं प्राप्ते तक्रदानारम्भाद्युक्तेस्तेन दधिदानबाध इति बोद्धयम् ।

कर्मणि च ॥ अस्य क्तेन न सम्बन्धः । पूजायां प्रतिषेधानर्थक्यात्; तदाह-*कर्मणीति या षष्ठीति । चशब्द इतीत्यस्यार्थे इतिभावः । *एवञ्च क्तस्याननुवृत्तिरेव । इक्षुभक्षिकेति । धात्वर्थनिर्देशे ण्वुल् । कर्मणि षष्ठ्या समासः । कर्त्तुः प्रयोगाभावेनोभयप्राप्तावित्यस्याप्राप्तेः "कर्मणि च"इति निषेधो न शङ्क्यः । "पर्यायार्हर्णोत्पत्तिषु"[पा०सू० ३-३-१११] इति भावे ण्वुजित्यन्ये । पत्यर्थेति । प्रसिद्धत्वेन तस्यैव *तत्र ग्रहणादिति भावः । कैयट इति । *प्रत्यासत्त्या कारकषष्ठ्या एव *तन्निषेध इति भावः ।

(चं०)शेषषष्ठ्येव स्यात् । यद्ययं शेषषष्ठ्यन्तस्य समासनिषेधो न स्यात्तदा षष्ठ्यन्तेनैव समासे सिद्धे तृतीयान्तेन समासकथनमफलं स्यादित्येवं कथयता ध्वनितमित्यर्थः।एतेन कारकषष्ठ्या एव समासनिषेधोऽयम् । तेन "कलहंसमाममहितः कृतवान्"इतिभट्टिप्रयोगोपपत्तिरिति वदन्तः प्रत्युक्ताः । भट्टिप्रयोगस्य तु राजपूजितवदुपपत्तिः सम्भवति । *तक्रकौण्डिन्यन्यायादितीति* । "मतिबुद्धिपूजार्थेभ्यश्च"(पा० सू० ३ । २ । २८८ ।) इति विशिष्य विधानादस्य शङ्कासम्भवः । *असम्भवादिति* । एवञ्च विषयभेदान्न बाध्यबाधकभावसम्भव इति भावः ।

एतेन वर्त्तमानकाले प्रत्ययविधानेन वर्त्तमानकालो भूतकालतां बाधेतेत्याशङ्क्य "तेनैकदिक्"[पा० सू० ४-३ -११२]इत्यतस्तेनेत्यनुवर्त्तमाने उपज्ञात इत्यर्थे प्रत्ययविधानेनाबाधः कल्प्यत इति मनोरमायामुक्तम् । दण्डिनाऽपि तथैवानुगदितं तन्निष्फलमिति ध्वनितम् । *कर्मणीति येति* । कर्मणीत्यानुपूर्वीकशब्दघटितसूत्रेणेत्यर्थः । *एवञ्च=उक्तव्याख्याने च । नियमशास्त्राणां विधिरूपेण प्रवृत्तिरितिसिद्धान्तानुरोधेन तादृशसूत्रेणेति व्याख्यातम् ।

*तृजका । न च तृच्साहचर्यात्कर्त्रर्थकस्यैवाकस्य ग्रहणं भविष्यति किङ्कतृग्रहणेनेति वाच्यम् । उत्तरसूत्रे भावार्थकस्यैवाकः सम्भवेनार्थाधिकारानुरोधात्प्रकृसूत्रेऽपि भावार्थकस्य ग्रहणमितिशङ्कावारणाय तत् ॥

ननु "वज्रस्य भर्ता"इतिमूलोक्तोदाहरणासङ्गतिः । भर्तृशब्दस्य याजकादिगणे पाठेन समासस्येष्टत्वादत आह-मूले पत्यर्थभर्तृशब्दस्येति । *तत्र= याजकादिगणे । त्रिभुवनविधातुरित्यसङ्गतं "तृजकाभ्याम्"(पा० सू० २ । २ । ५) इत्यस्य जागरूकत्वादित्याशङ्कानिवारणाय शेषषष्ठ्येत्युक्तं मूले । तत्रापि तृजकाभ्यामित्यस्य कुतो न प्राप्तिरिति चेत्तत्राह-*प्रत्यासत्त्येति* । सूत्रे कर्तरीत्य-

(शे०)*गुणविशेषक इति भाष्यप्रतीकमुपादाय"बहुषु"इति सूत्रे कैयटे एतत्॥

कर्त्तरि च ॥ अत्र *सामर्थ्यात् 'कर्त्तरि'इति षष्ठ्या एव विशेषणम्। भवतः शायिकेति। "पर्याय"[पा० सू० ३–३–१११] इति ण्वुच्। धात्वर्थनिर्देशे ण्वुल् वा।

नित्यं क्री ॥ जाविकायां *नि¹षेधस्य सिद्धे*र्नित्यग्रहणाच्च वि²धिरयम्। दन्तानां लेखितेत्यादौ जीविकायां *तृचोऽनभिधानात्,*क्रीडायां तृचोऽसम्भवाद्वि*च्छिन्नत्वाच्च तस्यात्रासंबन्ध इत्याह–अकेनेति। *"अके जीविकार्थे"[पा०सू० ३–३–१००]इत्यत्राकग्रहणं त्वर्थग्रहणत्रत्स्पष्टार्थम् ॥ प्रतिपदोक्तत्वेनैतद्विहितसमास एव तत्प्रवृत्तिसिद्धेः । सञ्ज्ञायामितीति। यद्यप्यत्र धात्वर्थनिर्देश इत्येव सिद्धं "सञ्ज्ञायाम्"[पा०सू० ३–३–१०९]इति *त्वधिकरणार्थमिति कृदन्ते वक्ष्यते, तथापि तदर्थस्य भावेऽपि

(चं०)स्योपादानेन कर्तृकर्मणोरित्यस्योपस्थित्या कारकषष्ठ्या उपस्थितत्वात्।

*तन्निषेधः=समासनिषेधः । कैयटोक्तेरप्रसिद्धत्वशङ्कावारणायाह–*गुणविशेषक इतीति* । वस्तुतस्तु "अनिकर्त्तुः प्रकृतिः"(पा० सू० १ । ४ । ३० ।) "तत्प्रयोजक"(पा० सू० १ । ४ । ५५ ।) इतिनिर्देशात्तृजकाभ्यामित्यस्यानित्यत्वकल्पनेन सर्वेष्टसिद्धिः । *सामर्थ्यादिति* । कर्त्तरीति न पूर्वोपस्थितयोस्तृजकयोर्विशेषणं तृजकाभ्यामित्येव सिद्धेरतस्तदुपादानसामर्थ्याद्वित्यर्थः । *निषेधस्य सिद्धेरिति* । यदीदं निषेधसूत्रं स्यात्तदा जीविकायां 'दन्तानां लेखकः' इत्येवोदाहरणं स्यात्तत्र तु तृजकाभ्यामित्येव सिद्धमिति भावः ।

*नित्यग्रहणाच्चेति* । यदीदन्निषेधसूत्रं स्यात्तदा विकल्पेन निषेधाप्राप्तेर्नित्यग्रहणं व्यर्थं स्यादिति भावः ।

*तृचोऽनभिधानादिति* । अकान्तान्तशब्दे एव वाक्यरूपे उच्चारिते जीविकाप्रतीतेरनभिधानादित्युक्तम्। *क्रीडायां तृचोऽसम्भवादिति। संज्ञाशब्दानान्नियतानुपूर्वीकत्वात् । "ण्वुल्तृचौ"(पा० सू० ३ । १ । १३३।) इतिसामान्यसूत्रस्य तत्रापि प्राप्तिसम्भावनायामाह–*विच्छिन्नत्वादिति* । "कर्त्तरि च" (पा० सू० २ । २ । १६।) इतिसूत्रस्य कर्तृषष्ठ्यन्तस्थल एव प्रवृत्तेः । सा च तृजन्तेन योगे न सम्भवति कर्तुरभिहितत्वादिति भावः ॥

नन्वेवं पूर्वपदाद्युदात्तत्वविधायके "अके जीविकार्थे"(पा० सू० ६ । २ । ७३ ।) इति सूत्रेऽकशब्दोपादानवैयर्थ्यम्पूर्वोक्तरीत्या तस्यैव सम्भवादत आह–*अके जीविकार्थे इतीति । *अधिकरणार्थमिति* । अधिकरणस्य प्राधान्यवि-

(१)निषेधस्य="तृजकाभ्यां कर्तरि"[पा० सू० २—२—१५]इत्यस्य ।
(२)विधिरयमिति । न निषेध इत्यर्थः ।

(शे०)प्रवृत्तिर्न्याय्या । सञ्ज्ञायां विशेषविहितत्वात् । अचारितार्थ्याभावेऽपि तस्य प्रथमं बुद्ध्यारोहेण प्रथमं प्रवृत्तौ नियामकत्वमस्तीत्यन्यत्र प्रपञ्चितम् । 'सञ्ज्ञायामिति ण्वुल्'इत्येव पाठः । उदाहरणेऽधिकरणे स इति तत्त्वम् ।

षष्ठीसमासप्रसङ्गेन तदपवादमेकदेशिसमासमाह–पूर्वापरेति । अवयवित्वञ्चावयवापेक्षम् । तद्वाचकाश्चोपस्थितत्वात्पूर्वादय एवेत्याह–पूर्वादय इति । अधिकरणं द्रव्यम् । एकत्वविशिष्टद्रव्ये वर्तमानेना*वयविवाचकेनेति वाच्योऽर्थः । फलितमाह—एकत्वेति । मध्याह्न इति । "राजाह"[पा० सू० ५ । ४ । ९१] इति टच् । "अन्होऽन्ह"[पा० सू० ५ । ४ । ८८]इत्यन्हादेशः ।

अर्धं न ॥ निर्देशादेव नपुंसकत्वे लब्धे नपुंसकग्रहणं सूत्रनिर्देशे *लिङ्गाविवक्षाज्ञापनार्थम् । न च समांशवाचिनित्यनपुंसकग्रहणार्थं तत् । "एओङ्" "एच इक्"[पा० सू० १-१-४८]इति सूत्रे एचो ह्रस्वशासने अर्धैकारौकारयोर्विधानमाशङ्क्य "न वेदे नैव लोकेऽर्ध एकारोऽर्द्ध-ओकारो वाऽस्ति"इति भाष्यप्रयोगात्समांशवाचिनोऽपि *नित्यनपुंसकत्वाभावात् । *अवयववाची तु पुँल्लिङ्ग एव । *अपूपार्धं

---

(चं०)वक्षायां धात्वर्थस्य विशेषणत्वाद्धात्वर्थनिर्देश इत्यस्याप्राप्तेरिति भावः । (मूले)उद्दालकः=श्लेष्मातकः ॥

*अवयविवाचकेनेतीति* । अत्र सूत्रे एकदेशिनेत्यत्र कर्मधारयादपि मत्वर्थीयः । बहुव्रीहिसमासस्य रूढ्यर्थानभिधायकत्वात् । कृष्णसर्पवान् वल्मीक इति यथा । न च "एकगोपूर्वात्"(पा० सू० ५ । २ । ११८ ।) इति ठञ्प्रत्यय एवोचित इति वाच्यम् । 'एकदेशिना'निर्देशस्यैवेनप्रत्ययप्रवृत्तौ मानत्वात् ।

*लिङ्गाविवक्षेति* । तेन "तस्येदम्"(पा० सू० ४ । ३ । १२० ।) इतिसूत्रस्येदमर्थस्य पुंस्त्वादिविशिष्टत्वेऽपि प्रवृत्तिः । *नित्यनपुंसकत्वाभावादिति* । एवञ्च—

"भित्तं शकलखण्डे वा पुंस्यर्द्धोऽर्द्धं समेंऽशके" ।

इत्यस्य प्रायेणेति शेषो बोध्यः । एवं सति प्रकृतसूत्रे नपुंसकशब्दो नपुंसके यो वर्तते तस्य ग्रहणार्थं न तु पुंवाचक एव यस्तस्य ग्रहणार्थमित्याशयेनाह–*अवयववाची त्विति* । तदुक्तं भाष्ये—"इह कस्मान्न भवति—ग्रामार्द्धो नगरार्द्ध इति । अर्द्धशब्दस्येदं नपुंसकस्य ग्रहणं, पुंल्लिङ्गश्चात्रार्द्धशब्दः । क पुनरयं नपुंसकलिङ्गः, क पुल्लिङ्गः ? । समप्रविभागे नपुंसकलिङ्गः, अवयववाची पुंल्लिङ्गः"इति । ननु ग्रामार्द्धं नगरार्द्धमित्यत्रावयववाचिनो नपुंसकत्वं दृश्यत एवेत्यत आह–*अपूपार्द्धमित्यादि । भाष्यतत्त्वमत्रैव ।

(शे०)ग्रामार्धमित्याद्यपि *समप्रविभाग एवेत्याहुः* । *पिप्पल्या "एक-विभक्ति"(पा० सू० १—२—४४)इत्युपसर्जनत्वाद् ह्रस्वत्वं स्यात्, अत आह—एकविभक्ताविति । *नन्वेवं पञ्चानां खट्वानां समाहार इति विग्रहे "पञ्चखट्वी"इति न सिध्येत्, अत आह—एकदेशीति । *इदञ्च "अपथं नपुंसकम्"(पा० सू० २-४-३०)इति सूत्रे 'पञ्चखट्वी'इति भाष्योदाहरणाज्ज्ञायते ।

निषेधं बाधित्वेति । *भागार्थकाऽन्प्रत्ययान्तोऽपि स्वार्थिकत्वात्पूरणार्थ इति *भाष्ये स्पष्टम् । *"पूर्व"[पा० सू० २ । १ । ४९।]

---

(चं०)यत्त्वत्र कैयटः—अवयववाची पुंल्लिङ्ग इति । नियमेन नपुंसकलिङ्गो न भवतीत्येवम्परमेतत्, अवयववाची त्वभिधेयवशात्सर्वलिङ्गः । तथा च प्रयोगो दृश्यते-अपूपार्द्धो मया भक्षितं, दन्तार्द्धमास्यात्पतितमिति, तन्न । "एओङ्" "एच इक्"(पा० सू० १ । १ । ४८ ।)इतिसूत्रस्थभाष्यप्रामाण्येन समप्रविभागेऽपि पुंस्त्वदर्शनात् । "समप्रविभागे नपुंसकलिङ्गः" इति भाष्ये नपुंसकलिङ्गोऽपीति शेषो बोध्यः । तदुक्तं-*समप्रविभाग एवेति* । अत्राप्यवयवमात्रविवक्षायान्तु ग्रामार्द्धः, पिप्पल्यर्द्ध इत्येव । *आहुरिति* । भाष्यतत्त्वविदः । अर्द्धाहारः, अर्द्धजरतीयमित्यादिप्रयोगे तु कर्मधारय एव । *पिप्पल्या एकविभक्तीति* । नियमेन षष्ठ्यन्तत्वादित्यर्थः । "एकविभक्तावषष्ठ्यन्तवचनम्"इत्यस्य 'एकविभक्ति'इति-पदघटितसूत्रे यदेकविभक्तिपदं तदषष्ठ्यन्तस्य बोधकमित्यर्थः । तथा च पञ्चानां खट्वानामित्यत्र खट्वाशब्दात्षष्ठीदर्शनेनोपसर्जनत्वस्य प्रतिषेधः प्राप्नोतीत्याशयेन शङ्कते—*नन्वेवमिति* । अस्य निषेधस्यैकदेशिसमासविषयकत्वे मानमाह-*इदञ्चेति* ।

ननु "पूरणगुण"(पा० सू० २ । २ । ११ ।) इति निषेधं बाधित्वेतिमूले उक्तं, तन्नोपपद्यते; द्वितीयशब्दस्य भागार्थकान्प्रत्ययान्ततया पूरणार्थकप्रत्ययान्तभिन्नत्वादत आह-*भागार्थकेति* । *भाष्ये स्पष्टमिति* । तत्र हि—अन्यतरस्याङ्ग्रहणस्य पक्षे षष्ठीसमासफलकत्वमभिधाय "क्रियमाणेऽपि वै अन्यतरस्याङ्ग्रहणे षष्ठीसमासो न प्राप्नोति । किं कारणम् ? "पूरणं न"इति प्रतिषेधात् । नैतत्पूरणान्तम् । अना एतत्पर्यवपन्नम् । (व्यवहितं, स्वरभेदं प्राप्त इति यावत्) । एतदपि पूरणान्तमेव । पूरणं नामार्थः तमाह तीयशब्दः, अतः पूरणम् । योऽसौ पूरणान्तात्स्वार्थे भागे अन् सोऽपि पूरणमेव"इति । पूरणं नामार्थ इत्यस्य पूरणाभिन्नो योऽर्थस्तस्य प्रतिपादनम् अनः स्वार्थिकत्वात्तदन्तेनाप्यस्त्येवेत्यर्थः । पूरणशब्दे बाहुलकात्कर्त्तरि ल्युट् । पूरयति स्वघटितसमुदायविशेषे विवक्षितसङ्ख्याप्रकारकप्रतीतिं जनयतीति व्युत्पत्तेः ।

भाष्योक्तैकदेशिसमासप्रत्याख्यानप्रकारमाह—*पूर्वेत्यादीति* ।

(शे०)इत्यादिविहित एकदेशिसमासः "परवल्लिङ्गम्"[पा० सू० २।४।२६] इति सूत्रस्थमेकदेशिसमासपरं तत्पुरुषग्रहणञ्च "परवल्लिङ्गम्"[पा० सू० २। ४ । २६]इति सूत्रे भाष्ये प्रत्याख्यातम् । "द्वन्द्वैकदेशिनोरिति वक्ष्यामि । प्राप्तादिषु चाप्राप्तिरेव । तद् एकदेशिग्रहणमपि न कार्यम् ।कथम् ?, एकदेशिसमासो नारप्स्यते । अर्द्धपिप्पलीत्यादिः *समानाधिकरणसमासोऽवयवे समुदायरूपारोपात्—अर्धं च सा पिप्पलीति । न च भेदविवक्षायां षष्ठीसमासबाधार्थम् । इष्यत एव षष्ठीसमासो ग्रामार्धमित्यादिवदर्द्धपिप्पलीत्यादि भवितव्यमेव" इति भाष्यात् ।

द्वितीयया अ इति । न चात्र प्रश्लेषे द्वितीयान्तस्यैवाकारः स्यात्, न प्राप्तापन्नयोरिति वाच्यम् । प्राधान्येन तयोरेवादेशात्, चकारश्च भिन्नक्रम इति भावः । प्राप्तापन्ने इत्युत्तरमकारप्रश्लेषः । प्रगृह्यत्वं सौत्रत्वान्नेति *भाष्यस्वरसः । एकादेशस्य पूर्वान्तत्वेन ग्रहणात्प्राप्तशब्देन समासः। जीविकाशब्दस्य "एकविभक्ति"[पा०सू०१ । २ । ४४ ।] इत्युपसर्जनत्वात् "गोस्त्रियोः"[पा० सू० १ । २ । ४८ ।] इति ह्रस्वे तदन्ताट्टाबिति बोद्ध्यम् । बहुव्रीहिणा तु न गतार्थता । स्वरे विशेषात् ॥

कालाः च ॥ मासस्य जात इति षष्ठीसमासेन सिद्धे जातमास इत्य*निष्टनिवृत्तये इदम् । यद्यपि बहुव्रीहिणेदं* सिद्धम् । "जातिकाल-

---

(चं०)*समानाधिकरणसमासः=अर्द्धा चासौ पिप्पली चेत्यादिविग्रहः ।

*भाष्यस्वरस इति* । तत्र हि "किमर्थश्चकारः ?, अनुकर्षणार्थः । अन्यतरस्यामित्येतदनुकृष्यते । किं प्रयोजनम् ? अन्यतरस्यां समासो यथा स्यात्, समासेन मुक्ते वाक्यमपि यथा स्यात्—जीविकां प्राप्त इति । नैतदस्ति प्रयोजनम् । प्रकृता महाविभाषा । तया वाक्यमपि भविष्यति । इदं तर्हि प्रयोजनम्—द्वितीयासमासोऽपि यथा स्यात् । अयमप्युच्यते—द्वितीयासमासोऽपि । तदुभयं वचनाद्भविष्यति । एवं तर्हि नायमनुकर्षणार्थश्चकारः । किं तर्हि ?, अत्वमनेन विधीयते । प्राप्तापन्ने द्वितीयान्तेन सह समस्येते, अत्वञ्च भवति प्राप्तापन्नयोरिति—प्राप्ता जीविकाम्प्राप्तजीविका, आपन्ना जीविकामापन्नजीविका" इत्युक्तम् । अत्र कैयटः । चकारेण समुच्चयार्थेनाकारप्रश्लेषोऽनुमीयते सौत्रत्वाच्च निर्देशस्य प्रकृतिभावः प्रगृह्याश्रयो न भवति । एवं भाष्यकाराभिधानेन प्राप्तापन्नयोरुद्देश्यत्वात्सन्निधानेन च प्राप्तापन्ने इत्यत्रैवाकारप्रश्लेषोऽनुमीयते ।

*अनिष्टनिवृत्तय इति* । यदा जातशब्दात् षष्ठीं कृत्वा समाससंज्ञा क्रियते तदाऽनिष्टं प्राप्नोति । *इदं सिद्धमिति* । 'मासजातः' इति रूपमित्यर्थः ।

(शे०)सुखादिभ्योऽनाच्छादनात् क्तो"[पा०सू० ६।२।१७०।]"वा जाते" [पा० सू० ६।२।१७१।]इत्यनेनान्तोदात्तत्वेन स्वरे विशेषाभावात्। "जातिकालसुखादिभ्यः परा निष्ठा"इति वचनाच्च जातस्य पूर्वनिपातः, तथाऽपि *जातवच्छब्देन समासे 'मासजातवान्'इत्यादावन्तोदात्तार्थमावश्यकमिदमिति केचित्।

*परे तु *परिच्छेद्यपरिच्छेदकसमभिव्याहारे परिच्छेद्यादेव षष्ठीस्वीकारेण 'मासस्य जात'इति विग्रहस्य तत्र षष्ठीसमासस्य च खपुष्पायमाणता। *अत एव भाष्ये उत्तरपदार्थप्रधानत्वे समासात्षष्ठीमाशङ्क्य सम्बन्धस्य प्रातिपदिकार्थत्वेनाशेषत्वात्परिहृता। *अन्यथा 'मासस्य जात'इति विग्रहेण *तत्प्राधान्यं दर्शितं स्यात्, यत्र षष्ठीप्रसक्तिरेव न। "षष्ठी"[पा० सू०२।२।८।]इति सूत्रेण सिद्धे इदं सूत्रं जातमास इत्येतन्निवृत्त्यर्थं *तवेव ममापि। कालाः परिमाणिना समस्यन्ते न तु परिमाणी कालेनेत्यर्थात्। *किं च मासो जातो यस्येति बहुव्रीहिणाऽतीतमाससम्बन्धिजननक्रियाकर्तुरिव तत्सम्बन्धि*गमनादिकर्तुरपि मासजातशब्दात् प्रतीत्यापत्तिरित्यनयोर्बहुव्रीहेरनभिधानमेव। *अत्र विग्रहे वृत्तौ चोभयत्राप्युत्तरपदार्थप्रधानत्वम्। न च विग्रहेऽपि तत्त्वे जातात्षष्ठ्यनुपपत्तिर्विशेषणादेव षष्ठीविधानादिति वाच्यम्। वाक्यस्य वृत्त्यर्थबोधकत्वविवक्षायां विशेष्यविशेषणभाववैपरीत्येऽपि *पूर्वजातसंस्काराऽनिवृत्तेः।

---

(चं०)*जातवच्छब्देन=क्तवतुप्रत्ययान्तेन। एतन तत्र पूर्वोक्तस्वरविधायकस्याप्राप्तिर्लभ्यते।

केचिदित्यनेन सूचितामरुचिं प्रकटयति-*परे त्विति*। यदुक्तमुपक्रमे षष्ठीसमासेन सिद्धे वृत्ति, तदसङ्गतमित्याशयेनाह-*परिच्छेद्येत्यादि। *अत एव=एतादृशनियमस्वीकारादेव। *अन्यथा=परिच्छेदकादपि षष्ठीस्वीकारे। *तत्प्राधान्यम्=जातशब्दार्थप्राधान्यम्। *तवेव ममापीति। त्वयाऽपि जातशब्दाद्यदा षष्ठी, तदैव वैपरीत्यापत्तिः स्वीकृता।

यद्यपीत्यादिनोक्तमप्यसङ्गतमित्याशयेनाह-*किञ्चेति*। *गमनादिकर्तुरपीति*। भवदुक्तविग्रहवाक्याज्जननकर्तृत्वं मासस्यैव प्रतीयते। मासस्य अन्यपदार्थे सम्बन्धश्च बहुव्रीहिणा "चित्रगुः"इत्यत्र स्वस्वामिभाव इव प्रकृतेऽपि कश्चन कल्पनीयः। स च स्वपरिच्छेद्यजननाश्रयत्ववत्स्वपरिच्छेद्यगमन-शयन-कर्तृत्वमपि सम्भवतीति भावः। वृत्तिविग्रहयोः समानार्थत्वनियमाभिप्रायेणाह-*अत्रेति*। *पूर्वजातसंस्कारेति*। पूर्वोक्तनियमेन प-

(शे०)अन्यथा समासे जातप्राधान्येन विशेषणविभक्तिषष्ठ्यापादनस्य भाष्ये-ऽसङ्गत्यापत्तेः । मम तु न दोषः । विग्रहे तस्यैव प्राधान्येऽपि तत्स्थिति-वत्समासादपि तदापादनसम्भवात् । तदुत्तरषष्ठ्यैव तत्र मासविशेषणक-सम्बन्धप्रतीतिवत् समासेऽपि विशिष्टोत्तरषष्ठ्या तत्सम्भव इत्याशयात् । *शब्दस्वभाव एव च तद्व्यत्यासे बीजम् ।

*यत्तु एकार्थीभाववशाद्वृत्तौ विशेष्यविशेषणभावव्यत्यास इति, तन्न । एकार्थीभावफलेषु भाष्येऽस्यागणनात्, वृत्तिविग्रहयोः *समानार्थ-त्वभङ्गापत्तेश्च । *"किंप्रधानोऽयं समासः ? उत्तरपदार्थप्रधानः"इति भाष्यं वृत्तिविग्रहोभयपरम् । समासपदेन तस्याप्युपलक्षणात् । *अन्यथा 'मासजातो दृश्यताम्"इत्यादौ जातस्यैव कार्यसम्बन्धदर्शनेनौत्सर्गिक-त्वाच्च तत्पुरुषत्वेनोत्तरपदार्थप्रधानत्वनिर्णयेन 'किंप्रधानोऽयं समासः' इति प्रश्नस्य निर्दलत्वापत्तेः । तस्माद्वृत्तिविग्रहयोः समानार्थत्वनिर्वाहमपश्यत उभयविषयोऽयं प्रश्न उत्तरञ्चेत्युचितम् । अन्यथोत्तरपदार्थप्रधानोऽयं तत्पुरुषः, तेनान्यैरुत्तरपदार्थप्रधानैः सधर्मणा भवितव्यम् । *अन्यत्र चो-त्तरपदे याऽन्तवर्त्तिनी विभक्तिः; सैव समासेऽपि भवति, इह तु वाक्ये षष्ठी, समासे प्रथमा केनैतत् ?, इत्येवाशङ्क्येत । प्रातिपदिकेनोक्तत्वेन प्राति-पदिकार्थतयाऽशेषत्वान्न षष्ठीत्युत्तरं तुल्यमेवेत्याहुः । मासजात इत्यादौ

---

(चं०)रिच्छेदवाचकात्षष्ठी जाताऽपि वृत्त्यर्थबोधकतायास्तदन्तघटिते विवक्षायां न निवर्तेत इत्यर्थः । *अन्यथा=वृत्त्यर्थबोधकविग्रहवाक्ये मासशब्दात्षष्ठीस्वी-कारे । प्रत्ययानाम्प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमस्य प्रकृते त्यागे बीजमाह-*शब्द स्वभाव एवेति* । अस्यैव हेतुत्वमाह कैयटोऽपि "वृत्तिवाक्ययोः परि-माणिनः प्राधान्याप्राधान्ये शब्दशक्तिस्वभावाद्भवतः"इति ।

अन्यमतं खण्डयति-*यत्त्विति । समानार्थत्वेति* । समानविशे-ष्यकप्रतीतिजनकत्वं हि समानार्थत्वमिति भावः ॥

ननु किम्प्रधानोऽयमित्यादिभाष्येण समासस्यैव प्राधान्यं दर्शितं न तु विग्रहस्येति कथमेतदित्यत आह-*किम्प्रधानोऽयमित्यादि । *अन्यथा=उभ-यपरत्वाभावे । एतद्विषये विशेषमाह-*अन्यत्रेति* ।

---

(१) *इत्याहुरिति* । अयं भावः—"किं प्रधानोऽयं समासः ? । उत्तर-पदार्थप्रधानः । यद्युत्तरपदार्थप्रधानः सधर्मणाऽनेनान्यैरुत्तरपदार्थप्रधानैर्भवि-तव्यम् । अन्येषु चोत्तरपदार्थप्रधानेषु यैवासावन्तवर्तिनी विभक्तिस्तस्याः स-मासेऽपि श्रवणं भवति । तद् यथा—राज्ञः पुरुषो राजपुरुष इति । इह पुन-

(शे०)मासत्वेनैकमासव्यक्तिरेव बुध्यते । अन्यथा परिच्छेदकत्वं न स्यात् । मासौ जातस्येत्याद्यर्थे तु न समासो*ऽनभिधानात् । उत्तरपदेनेति । इदं वार्त्तिकमे*तत्सूत्रविषयमेव "तद्धितार्थ"[पा० सू० २ । १ । ५१]इति सूत्रे पाठेऽप्येतद्विषयस्यैव भाष्यकृतोदाहरणात् । पूर्वत्र त्विति । द्व्यहजात इत्यत्रेत्यर्थः ।

अक्षशौण्ड इति । *अधिकरणकारकस्य कर्तृकर्मद्वारा क्रियान्वयाच्छौण्डादिभिः सामर्थ्यम् । *आसक्त्यादिक्रियाऽन्तर्भावेण सामर्थ्यमिति तु न युक्तम् । *तदप्रतीतेः । साङ्काश्ये सिद्ध इति । सङ्काशेन

---

(चं०)*अनभिधानादिति* । गमकाभावेन द्वित्वाद्यप्रतीतेरिति भावः । *एतत्सूत्रविषयमेव=तत्रत्यतत्पुरुषपदस्यैतद्विहिततत्पुरुषपरत्वादेव ॥

सप्तम्यन्तस्य शौण्डादिभिः सामर्थ्यमुपपादयति-*अधिकरणेति* ॥ मनोरमोक्तं दण्ड्युक्तञ्च दूषयति—*आसक्त्यादीति । *तदप्रतीतेः=आसक्त्या-

---

वाक्ये षष्ठी, समासे प्रथमा । केनैतदेवं भवति ? । योऽसौ मासजातयोरभिसम्बन्धः समासे स निवर्तते । अभिहितः सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थः संपन्नः । तत्र "प्रातिपदिकार्थे प्रथमा"इति प्रथमा भविष्यति । न तर्हीदानीमिदं भवति—मासजातस्य इति । भवति बाह्यमर्थमभिसमीक्ष्य षष्ठी"इति भाष्ये अभिहित इति प्रतीकमादाय कैयटेन "इह परिमाणं जातस्य प्रतिपादयितुं वाक्ये परिमाणिन एव षष्ठी कर्तव्या मासो जातस्येति, मासस्य जात इति ह्यभिधीयमाने विवक्षितोऽर्थो न प्रतीयेत"इत्युक्तम् । तत्र कियान् कालो जातस्य इति प्रश्ने जातस्य मास इत्युत्तरणैवाकाङ्क्षाशान्तिः, न तु मासस्य जात इत्युत्तरेण इति स एव विवक्षितः, स एव च ततः प्रतीयते इति भावः । मासजात इति समासस्य त्वार्थमुत्तरत्वम् । नन्वेवं विग्रहे षष्ठीसमासेनैव सिद्धौ सूत्रं व्यर्थम्, उत्तरं तु तवेव ममाप्यार्थमेवेति चेत् । न, एतद्भाष्यप्रामाण्येन परिच्छेद्यपरिच्छेदकसमभिव्याहारे परिच्छेद्यबोधकादेव षष्ठीस्वीकारात् । अवयवावयविनोः समभिव्याहारे यथाऽवयाविवाचकादेवेति विवरणे स्पष्टम् । तथा च मासशब्दात्षष्ठ्या असम्भवेन 'मासस्य जात इति षष्ठीसमासेन सिद्धौ'इत्याद्युक्तिरसङ्गता । भाष्ये अभिसम्बन्धः-परिच्छेद्यपरिच्छेदकत्वरूपः । स समासे निवर्तते-षष्ठीप्रयोजको न भवतीत्यर्थः । षष्ठीविभक्तेरप्रवृत्तौ बीजमाह—अभिहित इति ।

(२)*अनभिधानादिति । तथा च भाष्यम्-"एकवचनान्तानामिति वक्तव्यम् । इह मा भूत्-मासौ जातस्य, मासा जातस्येति । एकवचने तावदुक्तम्-अनभिधानादिति ।

(शे०)निर्वर्त्तिते वने *तपसा सिद्ध इत्यर्थः । साङ्काश्ये नगरे सिद्धो *जात इत्यर्थो वा ॥

ध्वाङ्क्षेण [पा० सू० २ । १ । ४२ ।] *व्याख्यानादर्थग्रहणम् । इवेति । तत्र स इव यो गुरुकुलादौ न चिरं तिष्ठति स एवमुच्यते *एवं हि निन्दा भवति ।

ऋणग्रहणमावश्यको*पलक्षणमित्याह—आवश्यके इति । तत्फलमाह—पूर्वाह्णेगेयं सामेति । "तत्पुरुषे कृति"[पा० सू० ६ । ३ । १४]इत्यलुक् । अयं समासो यत्प्रत्ययान्तेनैवाभिधानस्वाभाव्यात्* ।

तत्रेत्येतत्सप्तम्यन्तमिति । *'अधिकाराबाधायाधिकरणशक्तिप्रधानादपि सप्तमी'इति वृत्तिकृत् । *तेन पूर्वपदप्रकृतिस्वरसिद्धिः । *अव्ययत्वेन तु न सः "अव्यये नञ्कुनिपातानाम्"इति परिगणनात् ।

अवतप्तेनकुलेति । चापलादिति भावः । *कृद्ग्रहणपरिभाषया नकुलस्थितशब्देन समासः । "तत्पुरुषे कृति"[पा० सू० ६ ।

---

(चं०)दिक्रियाया अप्रतीतेः । अत एव भाष्यकृता एवं नाभिहितम् । *तपसा सिद्ध इति* । प्रधानस्य सापेक्षत्वेऽपि समासः । *जात इत्यर्थ इति* । अस्मिन्नर्थे न सापेक्षत्वमपीति भावः ।

*व्याख्यानादिति । "ध्वाङ्क्षेण क्षेपेऽर्थग्रहणम् । इहापि यथा स्यात्-तीर्थकाक इति" इतिभाष्यमूलकादित्यर्थः । *एवं हि निन्देति* । तदुक्तं भाष्ये "यथा तीर्थे काकाश्चिरं स्थातारो न भवन्ति, एवं यो गुरुकुलानि गत्वा न चिरं तिष्ठति स उच्यते तीर्थकाक इति ।

*उपलक्षणमिति* । तदुक्तं भाष्ये-"कृत्यैर्नियोगे यत्प्रत्ययेनेति वक्तव्यम् । पूर्वाह्णेगेयं साम, प्रातरध्येयोऽनुवाक इति । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । ऋण इत्येव सिद्धम् । इह यद् यस्य नियोगतः कार्यम्, ऋणं तस्य तद्भवति । तत्र ऋण इत्येव सिद्धम्" । यद्यस्येति । अवश्यकर्त्तव्यतासामान्यादुपचारादन्यत्रापि ऋणशब्दस्य प्रयोगदर्शनाद् गौणस्याप्यर्थस्य शास्त्रे लक्ष्यवशेन क्वचिद्ग्रहणमित्यर्थ इति कैयटः । *अभिधानस्वाभाव्यादिति । तदुक्तम्भाष्ये-"यद्ग्रहणङ्कर्त्तव्यम् । इह मा भूत्-पूर्वाह्णे दातव्या भिक्षेति ।

नन्वभिहितत्वात्तत्रेतिशब्दात्सप्तमी दुर्लभेत्यत आह—*अधिकारेति । *तेन=सप्तमीग्रहणानुवर्त्तनेन । तृतीयापदेन परमेण कारकेण परमकारकेत्यत्र पूर्वपदप्रकृतिस्वरवारणाय प्रतिपदोक्तस्य तृतीयासमासस्य ग्रहणात्तत्साहचर्यात्सप्तमीपदेन प्रतिपदोक्तस्य सप्तमीसमासस्य ग्रहणादिति भावः । ननु पूर्वपदप्रकृतिस्वरोऽव्ययत्वेन सिद्ध इत्यत आह-*अव्ययत्वेनेति ।

नकुलस्थितशब्दस्य कान्तरत्वमुपपादयति-*कृद्ग्रहणेति* ।

(शे०) ३ । १४ ]इत्यलुक् ।) अव्यवस्थितत्वप्रतिपत्त्याऽत्र निन्दा ।

गेहे नर्दीति । 'नर्द शब्दे' अस्माण्णिनिः । "तत्पुरुषे कृति" [पा० सू० ६ । ३ १४]इत्यलुक् सर्वत्र ।

समासान्तरे इति । *समासप्रकरणादिति भावः । तेन 'पात्रेसमितिः'इत्यादि भवत्येव । समासश्चानन्तरत्वात्कर्मधारय एवेत्याहुः । प्रवेशो नेति । तेन 'परमाः पात्रेसमिताः'इत्येव । समितेति निरनुस्वारम् ॥

पूर्वकालैक[पा० सू० २ । १ । ४९ ।] । *अत्र पूर्वकालशब्दोऽर्थपरोऽन्ये षट् स्वरूपपराः । पूर्वः कालो यस्य तद्वाचकः शब्दः प्रत्यासत्त्या परकालवाचकेन समस्यते इत्यर्थः । सिद्धे पूर्वनिपातेति । एषां विशेषणत्वस्या*नैयत्येऽपि एषामेव तत्त्वार्थमिति भावः । नियमबाधनार्थश्चेति । मुख्याद्यर्थकैकशब्दस्य तु *अप्रसिद्धत्वान्नात्र ग्रहणमिति भावः । नवशब्दः पुराणसाहचर्यात् नूतनार्थः । जरन्=वृद्धः । समानाधिकरणेनेति किम् ?, एकस्याः शाक्ल्यम् ।

नियमार्थमिति । "विशेषणम्"[पा०सू० २ । १ । ५७]इत्येव सिद्धे नियमोऽयमिति भावः । "*विशेषणम्[पा० सू० २ । १ । ५७]इत्यस्यैवायं नियमः । *तेन 'पञ्चगुः' 'पञ्चगवम्'इति च सिद्ध्यति । 'पूर्वसूत्रम्'इत्यादौ सञ्ज्ञात्वाभावेऽपि *कालवाचकत्वात्समासः, एवं *देशवाचकेनापीति बोद्धव्यम् ॥

---

(चं०) चकारबलाद् वृत्त्यन्तर इति नोक्तम् । तत्र बीजमाह—*समासेति* । तदुक्तं भाष्ये—"किमर्थश्चकारः ? । एवकारार्थः । पात्रेसमितादय एव । परमं पात्रे समिताः इति । अत्र कैयटः-"वैयधिकरण्येऽपि विस्पष्टपटुवत्समासः प्राप्नोति । परममिति क्रियाविशेषणम्"इति । परमाः पात्रे समिता इति पाठो ज्यायान् ॥

पूर्वकालेतिशब्दस्य समासादर्शनादाह—*अत्र पूर्वकालशब्द इति* । स्नातानुलिप्तादिलक्ष्यदर्शनमत्र व्याख्याने शरणम् । *अनैयत्येऽपीति* । गुणक्रियाशब्दत्वात् । *अप्रसिद्धत्वादिति* । तेन शीघ्रोपस्थितिकत्वात्संख्यावाचकस्यैव ग्रहणम् ।

*विशेषणमित्यस्यैवेति* । तस्य स्वविषयताव्यापकविषयताकत्वात् । तत्फलमाह-*तेनेति । *कालवाचकत्वादिति* । दिग्ग्रहणेन दिग्वाचकस्य ग्रहणमिति भावः । अत एव पूर्वपदार्थप्रधान इत्यादिप्रयोगोपपत्तिः । *देशवाचकेनापीति । समासो भवतीति शेषः ।

(शे०) तद्धितार्थो (पा० सू० २ । १ । ५१ ।) । वैषयिक आधारे सप्तमी । विषयत्वञ्चानेकप्रकारैरित्याह—विषये इत्यादि । *तद्धितार्थे वाच्ये इति तु नोक्तम् । "पाञ्चनापितिः"इत्यादौ समासेनोक्तत्वात्तद्धिता-नापत्तेः । *अत एव द्विगोस्तद्धितस्य लुग्वचनं चरितार्थम् । तद्धितवि-षये इत्येव सिद्धेऽर्थग्रहणं स्पष्टार्थम् । मत्वर्थे नायम् । *अनाभिधानात्, *तदर्थे परेण बहुव्रीहिणाऽस्य बाधाच्च । समाहारः=समूहः । भाव-घञन्तत्वात् । *अत एव पञ्चानां खट्वानामिति नियमेन षष्ठ्यामेक-विभक्त्यन्तत्वेनोपसर्जनत्वाद् ह्रस्वेऽदन्ताद्विगुत्वात् पञ्चखट्वी इत्यत्र ङीप् । स चात्रयत्राभिन्नो *बुद्धिपरिकल्पितभेदवानपि । *समूहस्य तद्धितार्थत्वे-ऽपि सामूहिकस्य लुकि पञ्चगवमित्यत्र "गोरतद्धितलुकि"[पा० सू० ५ । ४ । ९२]इति टच् न स्यात्, 'पञ्चकुमारिः'इत्यादौ "लुक् तद्धितलुकि" [पा० सू० १ । २ । ४९] इति स्त्रीप्रत्ययलुक् स्यादिति पृथ-ग्ग्रहणम् । *तत्सामर्थ्यादेवात्र 'वाच्ये'इति व्याख्यातम् । उदात्त इति ।

---

(चं०) *तद्धितार्थे वाच्ये इति* । यस्मिन्नर्थे तद्धितो विधीयते तस्मिन्वाच्ये इत्यर्थः । *अत एव=पूर्वोक्तकल्पनया तद्धितोत्पत्तिस्वीकारादेव ।

*अनभिधानादिति* । अत्र प्रमाणन्तु "मत्वर्थे प्रतिषेधः"इति वार्त्ति-कमेव । युक्त्यन्तरमाह-*तदर्थे इति* । तेन पञ्चखट्वा, दशखट्वा । अत्र द्विगु-समासो न भवति । सति च तस्मिन् "द्विगोः"[४-१-२१]इति ङीप् स्यात् । तथा च बहुव्रीहेष्टाप् । तथा पञ्चगुः, दशगुः । अत्र द्विगौ "गोरतद्धितलुकि" [पा० सू० ५ । ४ । ९२ । इति टच् मा भूदिति ।

*अत एव=भावघञन्तत्वादेव । यदि समाहारपदे कर्मणि घञ् स्या-त्तदा पञ्चखट्वाः समाहृता इत्येवार्थः स्यात्तदा नियतविभक्तिकत्वं न स्यात् । एवञ्च समाहरणमेकस्यां क्रियायां गुणे वा समीपीकरणमिहार्थो विवक्षितः । *बुद्धिपरिकल्पितभेदवानिति* । अत एव पञ्चानामिति षष्ठी । समूह-समाहारशब्दयोः पर्यायत्वाभिप्रायेण शङ्कते-*समूहस्येति । *तत्साम-

---

(१) न च समाहारशब्दस्य भावघञन्तत्वेऽपि समाहारसमाह्रियमा-योरभेदाद्भेदनिबन्धना षष्ठी न सम्भवत्येवेत्याशङ्क्य समाधत्ते—स चेति । तथा च कल्पितभेदमादाय षष्ठीति भावः ।

(२) नियतविभक्तिकत्वाभावेन 'एकविभक्ति"इत्यस्य, खट्वार्थस्य प्रा-धान्यात् समासशास्त्रे प्रथमानिर्दिष्टत्वाभावाच्च "प्रथमानिर्दिष्टम्"इत्यस्य चाप्रवृत्तावुपसर्जनत्वाप्राप्त्या ह्रस्वाप्रवृत्तौ "पञ्चखट्वी"इत्यादौ ङीप् न स्या-दिति भावः ।

(शे०)*सतिशिष्टत्वात् तत्पुरुषप्रयुक्तसमासान्तोदात्तत्वेनेति भावः। विकल्पे प्राप्ते इति। महाविभाषयेति भावः । *ततश्च पक्षे टजभावे पञ्चगोधन इत्याद्यपि स्यादिति भावः। *स्पष्टञ्चेदं भाष्ये । एवञ्चोभयत्रापि नित्यत्वमात्रबोधकं वार्त्तिकमिति बोध्यम्। *अत एवैतद्वार्त्तिकमुक्त्वा किं प्रयोजनं समुदायवृत्तावयवानां कदाचिद्वृत्तिर्मा भूदित्येव प्रयोजनमुक्तं भाष्ये। *तत्र तत्पुरुषो बहुव्रीह्यवयवोत्तरपदे इव तत्पुरुषावयवोत्तरपदेऽपि। *अत एव उत्तरपदेन परिमाणिना द्विगोः सिद्धये"इत्युक्तम् । *द्वन्द्वस्तु बहुव्रीह्यवयवोत्तरपदे एव। *वाग्दृषदप्रिय इत्यादौ प्रियशब्देनोभयोः सामानाधिकरण्यं *न द्वन्द्वावयवोत्तरपदे। चतुर्णां द्वन्द्वे 'होतृपोतृनेष्टोद्गातारः' इति *भाष्यप्रयोगेण तदनभिधानात्। *पदयोर्निष्कृष्यैकार्थीभावाभावेऽपि

---

(चं०)र्थ्यात्=समाहारग्रहणसामर्थ्यात् । एवञ्च समाहारे यत्र समासस्तत्रोक्तार्थत्वात्तद्धितस्योत्पत्तिरेव नेति न तद्धितलुग्विषयनिषेधस्य प्रवृत्तिः। *सति शिष्टत्वात्=तत्पुरुषसंज्ञाया उत्तरकालिकत्वात् । 'षाण्मातुरेऽनपत्ये' इत्युक्तेर्न लुक्। *ततश्च=विकल्पे सति च । एतेन कर्मधारयपूर्वपदकबहुव्रीह्याश्रयणेन पूर्वशालाप्रियशब्दे पूर्वशालाशब्दान्त्यस्योदात्तत्वे सिद्धे प्रकृतसूत्रे उत्तरपदग्रहणं व्यर्थमित्यपास्तम् । कर्मधारयसंज्ञाया वैकल्पिकत्वात्पक्षे पञ्चगोधनस्यापत्तेः। *स्पष्टञ्चेदमिति*। तत्पुरुषसंज्ञाया अवयवसम्बन्धिन्या नित्यत्वं स्पष्टमित्यर्थः । *अत एव=वार्त्तिकस्य नित्यत्वमात्रफलकत्वादेव । तत्र विशेषमाह—*तत्र तत्पुरुष इति। *अत एव=तत्पुरुषसंज्ञाया उ[illegible] प्रवृत्तेरिष्टत्वादेव। द्वन्द्वविषये विशेषमाह-*द्वन्द्वस्त्विति ।

नन्वु पदार्थभेदे द्वन्द्वस्य प्रवृत्तिदर्शनाद् बहुव्रीह्यवयवस्य चैकार्थत्वात् कथं बहुव्रीह्यवयवानां द्वन्द्वः ?, वार्त्तिकबलादभेदेऽपि द्वन्द्व इति चेदुभयत्रापि नित्यत्वमात्रबोधकं वार्त्तिकमिति पूर्वग्रन्थविरोध इत्यत आह—*वाग्दृषदप्रिय इत्यादाविति*। यदुक्तम्बहुव्रीह्यवयवोत्तरपद एवेति,तत्फलमाह-*न द्वन्द्वावयव इति। *भाष्यप्रयोगेणेति। एतेन चतुर्णां द्वन्द्वे एकार्थीभावबलाद् 'वाग्दृषच्छत्रोपानहम्'इत्यत्रापि द्वन्द्वसंज्ञाऽवयवयोः स्यादित्यपास्तम् । ननु बहूनामेकार्थीभावेऽपि पृथग् द्वयोरेकार्थीभावाभावात्कथं संज्ञान्तरमत आह-*पदयोरिति*।

---

(१) उद्गातृरूपे द्वन्द्वावयवे उत्तरपदे पूर्वत्र द्वन्द्वे नेष्टृरूपे उत्तरपदे पोतृशब्दस्यानङापत्तिरिति भावः।

(२) ननु उत्तरपदे तत्पुरुषविधानं तु 'तद्धितार्थ"इत्यनेनापि भविष्यति द्वन्द्वः कथमुत्तरपदे ?, वार्तिकं तु नित्यतामात्रविधायकमित्युक्तम् । 'चार्थे'इति सूत्रं तु इतरार्थानुपसंक्रमे केवलचार्थवृत्तित्वे चरितार्थम् । त्रयाणां बहुव्रीहौ-

(शे०)समासादिप्रवृत्तिरस्तीति निरूपितम्। *एवं तयोर्निष्कृष्य सामानाधिकरण्याभावेऽपि यथाकथञ्चित्सामानाधिकरण्यमादायैव तत्प्रवृत्तिः । *अत एव पश्चिमशालाप्रिय इत्यादौ पुंवत्त्वसिद्धिः। पुंवत्त्वे यथाकथञ्चित्सामानाधिकरण्यं नियामकं, समासे तु निष्कृष्यैवेत्यत्र *न विनिगमकम् । *अस्य प्रत्याख्यानपक्षे एकविंशतिर्भरद्वाजा वंश्याः प्रिया यस्येत्यादिबहुव्रीहौ *अव्ययीभावादि तु नानभिधानात् । वस्तुतो नित्यत्वांशोऽपि न्यायसिद्धः। त्रयाणामेकार्थीभावे द्वयोर्व्यपेक्षाया दुरुपपादत्वादित्यन्यत्र विस्तरः ।

गोरत (पा०सू० । ४ । ४ । ९२ ।) तत्पुरुषस्येति । "राजाहः" [पा० सू० ५-४-९१] इत्यतष्टच्चानुवर्त्तते। गोन्तस्य तत्पुरुषस्य समास-

---

(चं०)निष्कृष्यैकार्थीभावाभावेऽपि वृत्तिः 'परमगार्ग्यायणः'इति भाष्यप्रामाण्याद्स्तु, निष्कृष्य सामानाधिकरण्याभावेऽपि बहुव्रीहिरित्यत्र तु न मानमत आह- *एवं तयोरिति । *अत एव=निष्कृष्य सामानाधिकरण्याभावेऽपि बहुव्रीहिस्वीकारादेव । अत्र त्रयाणां बहुव्रीहिसंज्ञायामपि द्वयोः "तद्धितार्थे"(पा० सू० २-१-२९) इति सूत्रेण द्विगुसंज्ञायां पश्चिमशालाशब्दान्त्यस्योदात्तत्वं पश्चिमाशब्दस्य पुंवद्भावश्च सिध्यति । *न विनिगमकमिति* "समुदायवृत्तावयवानां मा कदा चिदव्यवृत्तिर्भूत्"इतिवार्तिकाशयवर्णनपरभाष्यप्रामाण्येन निष्कृष्य सामानाधिकरण्याभावेऽपि बहुव्रीहिसंज्ञा भवति । वागृषदप्रियः छत्रोपानह्प्रिय इति भाष्यप्रामाण्यादिति भावः ।

*अस्य प्रत्याख्यानपक्ष इति* । वार्त्तिकप्रत्याख्यानपक्ष इत्यर्थः । एवं हि भाष्ये वार्त्तिकाशयवर्णनोत्तरमुक्तम्-"तत्तर्हि वक्तव्यम् ?, न वक्तव्यम् । इह द्वौ पक्षौ=वृत्तिपक्षश्चावृत्तिपक्षश्च । यदा वृत्तिपक्षस्तदा सर्वेषामेव वृत्तिः । यदा अवृत्तिपक्षस्तदा सर्वेषामवृत्तिः"इति । समुदायस्यैकार्थीभावे तदभावोऽवयवयोर्न युक्तः। विरोधात् । तेन नित्यत्वमपि सिद्धमिति भावः। इत्यादिबहुव्रीहावित्यत्रादिना द्वौ मुनी वंश्यौ प्रियौ यस्येति बहुव्रीहेर्द्विस्त्रिशत्प्रिया अस्येति बहुव्रीहेश्च सङ्ग्रहः । आद्ये स्वरे दोषः। अन्त्ये "बहुव्रीहौ संख्येये" [पा० सू० ५-४-७३]इति समासान्तापत्तिश्च । *अव्ययीभावादि त्विति* । आदिना तत्पुरुषसंग्रहः । अत एव "चित्राजरद्गुः"इति प्रयोगसङ्गतिः । अन्यथा पूर्वकालैकेत्यवयवयोस्तत्पुरुषे जरतीशब्दस्य पूर्वनिपातापत्तिः ।

---

परस्परान्वितार्थानां पदानामन्यपदार्थोपसंक्रमेण निष्कृष्य पदद्वयस्य चार्थवृत्तिताया दुरुपपादत्वात "चार्थे"इत्यस्याप्राप्तेरित्याशङ्क्याह—पदयोरिति ।

(१) विशेष्यभूतोत्तरपदार्थेन सह यत्सामानाधिकरण्यं तत् पदयोरध्यारोप्येत्यर्थः ।

(२) पदयोः पृथक्कृत्य । स्वातन्त्र्येणेत्यर्थः ।

(शे०)स्यान्तष्टजित्यर्थस्तत्फलितमाह-गोन्तादिति। न त्विति। न तु तद्धितलुग्विषये इत्यर्थः। *तेन पञ्चभिर्गोभिः क्रीतः पञ्चगुरित्यत्र न। *एकापूपीत्यत्रापि समाहारे द्विगुः। एकमप्यपूपं कश्चित्कृपणो ददद्नेकं मन्यत इति तत्रारोपितबहुत्वाश्रयसमाहारसत्त्वात्। एकभिक्षीति तु नानभिधानात्*।

द्विगुरे (पा० सू० २।४।१।)॥ वचनमिति कर्त्तरि ल्युट्। सामान्ये नपुंसकम्। इदं सूत्रं समाहारद्विगावेव। अनुवादत्वे *लाघवात्। *अत एव पञ्चपूलीनामे*कशेषे न। *अनुवादफलं तु द्विगुवाच्यस्य समाहारस्य न कदाऽप्युद्भूतावयवभेदविवक्षेति बोधनम्। तेन द्वन्द्ववाच्ये *तथा विवक्षाया अपि बोधनम्। उद्भूतावयवभेदः समाहार एवेतरेतरयो-

---

(चं०) *तेन=अतद्धितलुकीत्युपादानेन। ननु समाहारो बहूनां सम्भवति न त्वेकस्येति कथम् 'एकापूपी'इति प्रयोगोऽत आह-*एकापूपीति। *अनभिधानादिति*। अस्य'इति कैयटः' इति शेषः। तथा हि-"संख्यापूर्वः"(पा० सू० २।१।५२।) इतिसूत्रे "किमनन्तरे योगे यः संख्यापूर्वः, स द्विगुसंज्ञ आहो स्वित्पूर्वमात्रे। किञ्चातः?। यद्यनन्तरयोगे-एकशाटी "द्विगोः"(पा० सू० ४-१-२१-) इतीकारो न प्राप्नोति। अस्तु पूर्वमात्रे। 'एकभिक्षा'-अत्रापि प्राप्नोति। अस्त्वनन्तरे। कथमेकशाटीति?। ईकारान्तेन समासो भविष्यति—एका शाटी=एकशाटी। इह तर्ह्येकापूपी। "द्विगोः"[पा०सू०४।१।२१]इतीकारो न प्राप्नोति। अस्तु तर्हि पूर्वमात्रे। कथमेकभिक्षा?। टाबन्तेन सह समासो भविष्यति। (एतेन यदा भिक्षशब्देन "गुरोश्च हलः"(पा० सू० ३-३-१०३) इत्यकारान्तेन समासस्तदा 'एकभिक्षी'इतीष्यत एवेत्यस्मिन् प्रकरणे नोक्तमित्यनभिधानाद्भिक्षशब्देन समासोऽनभिधानान्न भवतीति सूचितम्।) इदं तर्हि सप्तर्षयः। "इगन्ते द्विगौ" इत्येष स्वरः प्राप्नोति। अस्तु तर्हि पूर्वमात्रे। कथमेकापूपी?। समाहार इत्येव सिद्धम्"इति भाष्ये उक्तम्। अस्मिन् प्रकरणे एकभिक्षी इति भाष्यं नाभिहितमित्यनभिधानङ्कैयटेनोक्तम्। परन्तु प्रयोगाप्रदर्शनमात्रेणानभिधानं न युक्तमित्यनभिधाने मानान्तरमन्वेषणीयम्।

*लाघवादिति*। अन्यद्विगावपि प्रवृत्तिस्वीकारे विधायकत्वापत्त्या गौरवापत्तेः। *अत एव=अनुवादकत्वादेव। *एकशेषे नेति*। तत्रैकस्य पञ्चपूलीशब्दस्य बह्वर्थाभिधायकतया बहुवचनमेव भवति। न केवलमनुवादत्वे एकशेषेऽप्रवृत्तिरेव फलं किन्तु फलान्तरमप्यस्तीत्याह-*अनुवादफलन्त्विति। *तथा विवक्षायाः=उद्भूतावयवभेदत्वविवक्षायाः। अनुवादत्वकल्पनायां प्रकृतसूत्रस्थं "समाहारग्रहणञ्च तद्धितार्थप्रतिषेधार्थम्"इतिवार्त्तिकमपि साधकमिति बोध्यम्। "स नपुंसकम्"(पा० सू० २।४।१७।) इति सूत्रघटकस्य तच्छब्दस्य द्विगुरेकवचनमित्यारभ्य यस्तिरोहितावयवभेदः समूहः प्रतिपादि-

(श०)गपदेनोच्यते । *"स नपुंसकम्"[पा० सू० २ । ४ । १७]इत्यत्र तच्छब्देन समाहारद्विगोर्द्वन्द्वस्य च परामर्शस्तदाह—स नपुंसकमितीति ।

कुत्सितानि (पा० सू० २ । १ । ९२ ।)। वर्त्तमाने क्तो *व्याख्यानात् । कुत्सनैरिति । करणे ल्युट्, दुर्दुरूढो दुष्टकर्मकर्त्तरि रूढः । लाक्षणिकामिति । *अत एव समानाधिकरणाधिकारस्याबाधः । येन वस्त्वन्तरं स्ववृत्तिधर्मवत्त्वेन परिच्छिद्यते तदुपमानम् । *सामान्यवचनत्वं चोपमानोपमेयसाधारणधर्मविशिष्टोपमेयवचनत्वम् ।

*परे तु स्वसमभिव्याहृतानिष्ठमुपमानत्वमिवादिद्योत्यम् । साधारणधर्मसम्बन्धस्यो*भयत्र बोधे तात्पर्यग्राहकता च । एवञ्चोपमानश्यामघनाभिन्नः श्याम उपमेय इति बोधः । *अत एवोपमानोपमेययोः समानविभक्तिकत्वनियमः । समासे त्वस्यार्थस्य समासशक्तिबलाद् बोधः । उपमानानीत्यस्योपमानत्वेन बोधकानीत्यर्थः । *अन्यथा ससम्बन्धिकत्वात् सामान्यवचनैरित्येव *तेन समासलाभे तद्वैयर्थ्यं स्पष्टमेव । एवमुत्तरसूत्रे उपमितमित्यप्युपमेयत्वेन बोधकमित्यर्थकम् । एवमेव *भाष्यस्वरस इत्याहुः ।

---

(चं०)स्तत्प्रतिपादकतया यल्लब्धं तदाह—*स नपुंसकमित्येत्रत्यादिना ।

*व्याख्यानादिति* । प्रकृतसूत्रभाष्ये "किमुदाहरणम् ?, वैयाकरणखसूचिः । किं व्याकरणं कुत्सितमाहोस्विद्वैयाकरणः ?। वैयाकरणः कुत्सितस्तस्मिन् कुत्सिते तत्स्थमपि कुत्सितं भवति" इति भाष्ये उक्तम् । एतेन प्रवृत्तिनिमित्तस्याश्रयकुत्सया यत्र कुत्सा गम्यते तत्रैवैतत्सूत्रप्रवृत्तिरिति लभ्यते । आश्रयकुत्सा च शब्दप्रयोगसमानकालिकी तत्र प्रयोजिकेतिव्याख्यानमूलकादित्यर्थः । *अत एव=पूर्वपदस्य लाक्षणिकत्वादेव । उपमानानीत्युपादानात्तत्प्रतिसम्बन्धिवाचकोऽत्र सामान्यवचनशब्द इत्याशयेन सामान्यवचनशब्दार्थं निर्वक्ति—*सामान्येति* ।

स्वसिद्धान्तमाह—*परे त्विति* । *उभयत्र=उपमानोपमेययोः । *अत एव=उपमानोपमेययोरभेदान्वयादेव । *अन्यथा=उपमानत्वेनोपमानबोधकेत्यर्थास्वीकारे ।

*तेन समासलाभ इति* । उपमानेन समासलाभ इत्यर्थः । न चैतदनुपादाने पूर्वनिपातव्यवस्था कथमिति वाच्यम् । प्रथमान्तसुबग्रहणानुवृत्त्या तस्या लाभात् ।

*भाष्यस्वरस इति* । तत्र हि "यत्र किञ्चित्समानङ्किञ्च विशेषस्त-

(शे०) उपमितम् (पा० सू० २। १। ९२।) उपमेयत्वमुपमानपरिच्छेद्यत्वम्। उपमानोपमेययोः समभिव्याहारे *उपमानस्य विशेषणतैव, तदाह—विशेष्यस्येति। एतच्चोपमितमित्येतत्स्वारस्या* त्तस्योपमानेन नित्यसाकाङ्क्षत्वाच्च व्याघ्रादीनामुपमानत्वे एव उभयोः समानलिङ्गत्वं एव च प्रवर्त्तते। *अत एव "परवल्लिङ्गम्"(पा० सू० २। ४। २२।) इति सूत्रे द्वन्द्वैकदेशिनोरिति न्यासं कृत्वा तत्पुरुषग्रहणं प्रत्याख्यातम्। *अन्यथाऽस्य पूर्वपदार्थप्रधानस्य *भाष्याब्धिरित्यादौ दृश्यमानपरवल्लिङ्गस्य सिद्ध्यर्थं तत्पुरुषग्रहणावश्यकत्वेन तदसङ्गतिः स्पष्टैव। "भाष्याब्धिः कातिगम्भीरः"इत्यादौ सामान्यधर्मप्रयोगेऽपि *लिङ्गभेदेऽपि मयूरव्यंसकादि-

---

(चं०)श्चोपमानोपमेये भवत"इत्युक्त्वा उपमानं हि नामानिर्ज्ञातज्ञानार्थमुपादीयते तत्समीपेऽयन्त्वात्यन्ताय मिमीते तदुपमानमेवमुक्त्वा 'शस्त्रीश्यामा'इति सूत्रोदाहरणमित्युक्तम्। समानाधिकरणेनेति वर्त्तत इति चोक्तम्। तेनोपमानोपमेययोरभेदान्वय इति स्पष्टमेव लभ्यते।

यद्यपि वैयधिकरण्येऽप्युपमानोपमेयभावो गौरिव गवय इत्यत्र दृश्यते। प्रस्थादिमानं यथा धान्यपरिच्छेदं करोति, यद्यपि धान्यं स्वरूपतो निर्ज्ञातमेव तथापि विशेषधर्मवत्त्वेन न निर्ज्ञातं, प्रस्थादिसम्बन्धेन तु विशिष्य ज्ञायते एतावतैव तस्य परिच्छेदकता।

गवयस्यापि गवयशब्दवाच्यत्वेन रूपेण ज्ञानेऽपि ईदृशाकारो गवय इति ज्ञानं ग्रामीणस्य पूर्वं नास्ति। गौरिव गवयः, इत्यारण्यकवाक्यात्तु तादृशशाब्दबोधो भवतीति तस्यापि परिच्छेदकत्वम्। परिच्छेदकत्वसाधर्म्यादुपमाने मानसामीप्यव्यवहारः।

न चैवं व्याख्यानेऽव्ययीभावसमासे उपमानानीति न स्यादिति वाच्यम्। उपमानानीत्यनेन निर्देशेन तत्पुरुषस्य निपातनात्। किञ्च प्रस्थादिमानस्थलेऽन्येनापरिच्छिन्नं धान्यं नानिर्ज्ञातस्य प्रस्थस्य परिच्छेदकमिह तु कदाचिद्गवय इव गौरित्यपि भवतीति मानसामीप्यव्यवहारः। तथापि प्रकृते सामान्यवचनैरित्यस्योपादानात्समानाधिकरणाधिकाराच्च तादृशे विषये समासाभावः।

*उपमानस्य विशेषणतैवेति*। विशेषणस्य विशेष्यपरिच्छेदकताया लोकप्रसिद्धत्वात्। *उपमितमित्येतत्स्वारस्यादिति*। उपमेयत्वेनोपमेयबोधकमित्येतदर्थबोधकत्वात्तस्येति भावः। *अत एव=समानलिङ्गकस्थल एव तस्य प्रवृत्तिस्वीकारादेव *अन्यथा=असमानलिङ्गकस्थलेऽप्यस्य सूत्रस्य प्रवृत्तिस्वीकारे। भाष्याब्धिरित्यादि सिद्ध्युपायमाह-*भाष्याब्धिरिति*। *लिङ्गभेदेऽपीति*। एतेन यत्र सामान्याप्रयोगस्तत्राप्युपमितामितिसूत्राप्रवृत्तिरिति

(शे०)त्वात्सिद्धम् । *स च राजान्तरमित्यादौ पूर्वपदार्थप्रधानोऽपि दृष्टः । परवल्लिङ्गताऽपि तत्पाठेनैव । विशेषणसमासेन तु न सिद्धिः । उपमानस्य विशेषणतया पूर्वनिपातापत्तेः । एवञ्च *भाष्याब्धिरित्यादौ *रूपकमेव । *यत्तु अनुपात्तधर्मेण साम्यविवक्षणादनेन समास इति, तन्न । एतदुपादानवैयर्थ्यापत्तेः, उपात्तधर्मसत्त्वे तेनैव साम्यप्रतीतेरनुभवात्, *'सकलकलः पुरचन्द्रो राजते' इत्यादावुपात्तधर्मातिरिक्तधर्मस्य साम्यप्रयोजकस्याभावाच्चेति* दिक् ।

पुरुषव्याघ्र इति । *उपमानशूरव्याघ्राभिन्नः शूरः पुरुष उपमेय इति बोधः । व्याघ्र इव शूर इति । न च शूरसापेक्षत्वेनासामर्थ्यादत्र समासाप्राप्तिः । प्रधानस्य सापेक्षत्वेऽप्यसामर्थ्याभावात् । विशेषणमुपमानन्तु नित्यसापेक्षमिति तत्सापेक्षत्वं न दोषः । साधारणधर्मवत्त्वेन परिच्छेदकत्वं हि *तत्त्वं, तच्च तत्त्वेन ज्ञातस्यैव । *यद्यप्युपमेयत्वं *तद्वत्त्वेन परिच्छेद्यत्वमेव तथापि तस्य *तत्त्वं विधेयमेवेति तन्न नित्यसापेक्षमिति दिक् ।

विशेषणम्[पा० सू० १ । १ । ५७] ॥ अत्र विषयताविशेषरूपं विशेषणत्वादि गृह्यते *व्याख्यानात् । वृत्तौ भेदकभेद्यशब्दाभ्यामपि (चं०)ध्वनितम् ।

---

मयूरव्यंसकादिसमासस्य पूर्वपदार्थप्राधान्यं दर्शयति—*स चेति* । *भाष्याब्धिरित्यादाविति* । प्रसभेन दृगब्जेनेत्यादीनामादिपदेन सङ्ग्रहः । *रूपकमेव=अभेदरूपकमेव । भाष्याब्धिरित्यत्र पूर्वपदार्थप्रधानसमासनिर्देशः पूर्वपदार्थेऽतिगम्भीरत्वादिविशेषणान्वयाय स्वीक्रियते । दृगब्जेनेत्यत्र वीक्षणान्वयाय यथा ।

प्राचीनोक्तं निरस्यति—*यत्त्विति* । क्वचिदनुपात्तधर्मेण सादृश्याभावविवक्षायाः स्थलमाह—*सकलकल इति । *दिगिति* । रूपकस्य स्वीकारेणैवोपपत्तौ परिणामस्य पृथगलङ्कारता न स्वीकार्या । एवं समान्यधर्मप्रयोगे मयूरव्यंसकादिसमासे रूपकमेव । विभिन्नलिङ्गकस्थलेऽप्येवमेवेत्यादि द्रष्टव्यम् ।

स्वमतसिद्धप्रक्रियया शाब्दबोधाकारमाह—*उपमानशूरेत्यादि* । *तत्त्वमिति* । उपमानत्वमित्यर्थः । ननु विशेषणस्योपमानस्य नित्यसापेक्षत्ववदुपमेयस्यापि नित्यसापेक्षत्वेनैव समाससंज्ञा सिद्धावत्र चेदमेव ज्ञापकमिति वर्णनमयुक्तमत आह—*यद्यप्युपमेयत्वमिति । *तद्वत्त्वेन=साधारणधर्मवत्त्वेन । *तत्त्वम्=साधारणधर्मवत्त्वम् ।

(शे०)तदेव। *व्यावर्त्तकत्वरूपं तत्तु नील इति सामान्योपक्रमे उत्पलस्या-प्यस्तीत्यव्यावर्त्तकम् । *अत्र जातिसञ्ज्ञयोर्गुणक्रियाभ्यां समभिव्याहारे विशेष्यतैव। गुणयोः क्रिययोर्गुणक्रिययोश्चानियम एव*। *व्याप्यव्यापक-भावानापन्नजात्योरप्येवम्। यथा *भूतमूर्त्तयोः। *तद्भावापन्नयोस्तु व्या-पकस्य विशेष्यतैव। यथा शिंशपावृक्ष इति । यत्रैकोऽवयवशब्दः* परः समुदायशब्दस्तत्रावयवस्य विशेषणत्वमेव । *अत एव "वर्णो वर्णेन" (पा० सू० १ । १ । ६९ । ११) इति सूत्रे भाष्ये कृष्णसारङ्ग इत्युदाहृत्य तृतीयासमासेनेदं सिद्धमित्युक्तम्। *अन्यथा *कर्मधारये पूर्वनिपाता-नियमेन तृतीयासमासे च तन्नियमेन तदसङ्गतिः स्पष्टैव । *द्वयो-रप्यवयवशब्दत्वे त्वनियमः । *एवञ्च सोमयाजिडित्थ इत्येवो-चितम्। डित्थसोमयाजीत्याद्यसाध्वेव । कुब्जखञ्जः खञ्जकुब्ज इत्यादौ वि-

---

(चं०) *व्याख्यानात्=वक्ष्यमाणयुक्तिमूलकात् । तामेवाह—*व्यावर्त्त-कत्वरूपमिति*। विशेषणविशेष्ययोः ससम्बन्धिकत्वादन्यतरोपादानेनैव सिद्धे उभयोपादानेन यत्सिद्धं तदाह—*अत्रेति* । जातिशब्दस्य गुणक्रियासमभि-व्याहारे विशेष्यबोधकता–नीलोत्पलम्, विकसितमालतीत्यादौ। संज्ञाशब्दस्य तत्त्वं–पण्डितचैत्रः, पाचकचैत्र इत्यादौ। *अनियम एव । कुब्जखञ्जः, खञ्ज-कुब्जः, पाचकपाठकः, पाठकपाचकः इत्यादौ यथा।

*व्याप्यव्यापकेति*। परस्परव्याप्यव्यापकभावानापन्नयोरित्यर्थः । अत्र च तयोः साङ्कर्येऽपि साङ्कर्यस्य दूषकताबीजानिरुक्तेस्तादृशधर्मयोर्जाति-त्वे न किञ्चिद्बाधकमिति बोध्यम्। *भूतमूर्तयोरिति*। भूतत्वञ्जन्यविशेषगुण-त्वावच्छिन्नसमवायिकारणतावच्छेदकतया, मूर्तत्वञ्च क्रियासमवायिकारणता-वच्छेदकतया सिद्धम्। *तद्भावापन्नयोः=व्याप्यव्यापकभावापन्नयोः।

*अवयवशब्द इति*। व्याप्यधर्मविशिष्टवाचकः शब्द इत्यर्थः । न त्वत्र मुख्योऽवयवावयविभावः । *अत एव=अवयवशब्दस्य विशेषणत्वा-देव । *अन्यथा=पूर्वोक्तनियमास्वीकारे । *कर्मधारये="वर्णो वर्णेन" (पा० सू० २ । १ । ६९ । ) इतिसूत्रसाध्य इत्यादिः। तादृशनियमस्वीकारे तु प्र-कृते कृष्णशब्दस्य कृष्णयत्किञ्चिदवयवकपरतया सारङ्गशब्दस्य च नानाजाती-यरूपवद्भिरवयवैरारब्धपरतया च कृष्णशब्दस्यावयवशब्दत्वेन कर्मधारयेऽपि पूर्वनिपातनियमः स्पष्ट इति तद्भाष्यसङ्गतिरिति भावः।

*द्वयोरवयवशब्दत्व इति*। कृष्णपीतः, पीतकृष्ण इति यथा। न च विषयतासम्बन्धेन द्रव्यचाक्षुषत्वावच्छिन्नं प्रति समवायसम्बन्धेन रूपस्य का-रणत्वमिति कार्यकारणभावानुरोधेन चित्राख्यरूपान्तरस्वीकारात्कथं कृष्ण-सारङ्ग इत्यादाववयवशब्दत्वमिति वाच्यम्। समवायानङ्गीकारेणावयवावयवि-

(शे०) षष्ठताया अपि *शाब्दबोधे भानाद् बोधे विशेष इति दिक् ॥

पूर्वापर [पा० सू० २ । १ । ५८] ॥ बहुलग्रहणानुवृत्त्या क्रियाशब्दैः पाचकादिभिरेषां न समास इति *समर्थसूत्रे भाष्ये । एवञ्च 'अपराध्यापकः' इत्युदाहरणं चिन्त्यम् । 'अपरमीमांसकः' इत्याद्युचितमुदाहरणम् । *भृत्यभरणीयादौ विशेषणमिति प्रवर्त्तत एवेत्यपि *तत्रैव भाष्ये स्पष्टम् । च्व्यर्थेति । *तेन श्रेणीस्थानामेव दण्डनादिरूपकरणेन समासः ।

---

(चं०) नोर्गुणगुणिनोस्तादात्म्याङ्गीकारादवयवरूपेणैव प्रत्यक्षस्वीकारादिति सङ्क्षेपः । *एवञ्च=पूर्वोक्तनियमसिद्धौ च । *असाध्वेवेति* । डित्थशब्दस्य संज्ञाशब्दत्वादिति भावः । *शाब्दबोधे भानादिति* । वाक्यार्थत्वादित्यादिः । एतेन विशेषणविशेष्यभावव्यवहारस्योपपत्तिः सूचिता ।

*समर्थसूत्रे भाष्य इति* । तत्र हि सर्पिःकालकम्, यजुःपीतकमित्यादौ "इसुसोः सामर्थ्ये"(पा० सू० ८ । ३ । १४१ ।) इतिसूत्रप्राप्तषत्वनिवारणाय "समानाधिकरणमसमर्थवत्" इति वचनारम्भे सर्पिष्पीयते यजुष्क्रियत इति प्रयोगे षत्वाभावशङ्कायां अधात्वभिहितमिति समानाधिकरणांशे विशेषणदानेन वारणं कृतेऽपि वीरः पुरुषो वीरपुरुष इत्यत्र सामर्थ्यात्समासाभावशङ्कायामुक्तं "समानाधिकरणेषूपसङ्ख्यानम्" इति । ततो "न वा वचनप्रामाण्यात्=न वा कर्त्तव्यं, किं कारणं ?, वचनप्रामाण्यात्=वचनप्रामाण्यादत्र समासो भविष्यति समानमध्यमध्यमवीराश्च" इति । अत्र वचनारम्भसामर्थ्यादत्र समासो भविष्यति इति भाष्यकृतोक्तम् ।

अत्र कैयटः—वचनप्रामाण्याद्वाचनिकसामर्थ्यं बाध्यते । वीरः पचन्नित्यादौ तु धात्वभिहिते अनभिधानाद्बहुलग्रहणाद्वा समासाभावं मन्यते इति । यदि क्रियाशब्दैः पाचकादिभिः समासः स्यात्तदा वचनप्रामाण्याभिधानमसङ्गतमेव स्यादित्याशयः ।

यत्तु भृत्यभरणीय इत्यादौ विशेषणमिति समासोऽनुपपन्नः समानार्थत्वाद्यत्र किञ्चित्समानं कश्चिच्च विशेषस्तत्रैव विशेषणसमास इति कश्चिदाह, तन्नेत्याशयेनाह—*भृत्यभरणीयादाविति* । तत्रैवेति । समर्थसूत्र इत्यर्थः । भृत्यभरणीय इत्यत्र नैतौ समानार्थौ । अत्र ह्यकृत्र शक्यार्थे अपरत्राहार्थे कृत्यः । *तेन=श्रेण्यादिषु च्व्यर्थवचनमित्यस्य कथनेन । अत्र वार्तिके च्व्यर्थेत्युपादानाद्यत्र च्विप्रत्ययो वैकल्पिकत्वान्नोत्पन्नस्तदर्थस्याभूततद्भावस्य च विवक्षा तत्रानेन सूत्रेण समासः, यत्र तु च्विप्रत्यय एव तत्र तु परत्वादुत्तरसूत्रप्रवृत्तिरि-

---

(१) एकशिल्पजीविसङ्घस्य तद्दत्करणे-च्व्यर्थो जायते ।
(२) दण्डनयोग्यरूपकरणमवरोधादीति यावत् ।

(शे०)*च्व्यन्तानां तु परत्वात् "कुगति"[पा० सू० २ । २ । १८।] इति नित्यसमासः । *कृतादिराकृतिगणः ॥

क्तेन नञ्[पा० सू० २ । १ । ६० । ] ॥ क्तेनेति विभक्तिविपरिणामेनानञित्यत्रापि सम्बध्यते । तेनोभयोः क्तान्तत्वे *एकप्रकृतिकत्वे एव चायं समासः । *नञ्ग्रहणञ्च क्रियागतासमाप्तिद्योतकाव्ययोपलक्षणम् । तेन कृतापकृतादिसङ्ग्रहः । पूर्वनिपातनियमार्थञ्चेदम् । देवब्राह्मण इति । देवपूजको ब्राह्मण इत्यर्थः । *यद्यपि पूर्वपदस्य तत्तद्र्थे लक्षणायां विशेषणसमासेन सिद्धं, तथापि मुख्यार्थे शाकप्रियपार्थिव इत्यादिनिवृत्त्यर्थमिदम् ॥

सन्महत्[पा० सू० २ । १ । ६१ । ] *महापापमित्यादौ पूजाभावेऽपि विशेषणसमासो बोध्यः । अत्रापि महत्त्वेन पापस्य *स्वगुणां-

---

(चं०) त्याशयेनाह—*च्व्यन्तानान्त्विति । *कृतादिराकृतिगण इति* । एतेन श्रेण्यादिपदेन तु पठितानामेव ग्रहणम् । "श्रेण्यादयः पठ्यन्ते, कृतादिराकृतिगणः" इति भाष्यात् ।

*एकप्रकृतिकत्व एवेति* । प्रत्यासत्तेर्बलीयस्त्वात् । तेन सिद्धश्च तद्भुक्तश्च, कर्तव्यश्च तदकृतश्चेत्यत्र न समासः । नञ्वैशिष्ट्यञ्च स्वाव्यवहितोत्तरत्वसम्बन्धेन । एवञ्च विशिष्टपदोपादानमत्र स्पष्टार्थम् । सनञा इत्येव सिद्धेः । एकप्रकृतिकत्व इत्यत्र प्रमाणन्तु प्रकृतसूत्रस्थं "नञ्विशिष्टे समानप्रकृतिग्रहणङ्कर्तव्यम्"इतिवार्त्तिकमेव । यत्तु सनञेत्येव सिद्धे विशिष्टपदोपादानेन विशिष्टपदस्य विलक्षणार्थकत्वकल्पनयाऽवधारणार्थस्यान्तर्भावञ्च कृत्वा नञ्मात्रकृतवैलक्षण्यविशिष्टेनेत्यर्थकत्वमञ्विशिष्टपदस्य कल्पनीयमिति समानप्रकृतिकत्वलाभ इति, तन्न । तथार्थकल्पने नुडिडधिकेनाशितानशितेन जीवति, क्लिष्टाक्लिशितेन जीवतीत्यस्यासिद्ध्यापत्तेः । अपादिशब्दसङ्ग्रहायाह-*नञ्ग्रहणञ्चेति* । कृतापकृतादीत्यत्रादिना भुक्तविभुक्तं पीतविपीतमित्यनयोः सङ्ग्रहः । अत्र प्रमाणन्तु "कृतापकृतादीनाञ्चोपसङ्ख्यानम्"इति वार्त्तिकमेव । वार्त्तिकारम्भफलं वक्तुमाह-*यद्यपीति* ।

ननु महापापं भवति ब्राह्मणहननादित्यत्र पूजाभावात्कथं समाससिद्धिरत आह-*महापापमित्यादाविति । *स्वगुणांश=अधिकदुःखजनकत्वरूपे[1] ।

---

(१) उत्तरपदवाच्यतावच्छेदकसमानाधिकरणोत्कर्षस्य प्रशंसापदार्थत्वात् पापान्तरापेक्षया सोऽधिकदुःखजनकत्वमेवेति भावः ।

(शे०) शे पुजाऽस्त्येवेत्यन्ये ॥

वृन्दारकना[पा० सू० २ । १ । ६२ । ] ॥ वृन्दारकशब्दो देवजातिवाची । द्वितीयो गजसर्पवाची । अन्त्यो गजवाची । तेषामुपमानत्वेनैव पूजावाचित्वादाह–व्याघ्रादेरिति । सामान्येति । गोकुञ्जरः स्थूल इत्यादौ ॥

कतरकतमौ[पा० सू० २ । ३ । ९३ ।] ॥ *"द्वयोरेकस्य" [पा० सू० ५ । ३ । ९२] "वा बहूनाम्"[पा० सू० ५ । ३ । ९३] इति सूत्रयोरुपाधिप्रत्याख्यानात् कतमो भवतां पण्डित इत्यादौ-समासाभावाय जातिपरिप्रश्ने इति । यथान्यासेऽपि कतरार्थं तत् ॥ किंराजेति । "किमः क्षेपे"[पा० सू० ५ । ४ । ७०] इति समासान्तनिषेधः । क्षेपे किम् । को राजा पाटलिपुत्रे ॥

तत्पुरुषः[पा० सू० २ । १ । ४२ । ] ॥ तत्पुरुषाधिकार एतत्करणे त्वेकसञ्ज्ञाधिकारात्तस्या अनया बाधः स्यादिति बोद्धव्यम् । समानाधिकरणपदावयवक इत्यर्थोऽत्र *व्याख्यानात् ॥

पुंवत्कर्मधा(पा० सू० ६ । ३ । ४२ । ) ॥ स्त्रियाः पुंवद्भाषित-

---

(चं०) ननु डतमच्प्रत्ययस्य जातिपरिप्रश्न एव विधानेन सिद्धे "कतरकतमौ"[पा० सू० २ । १ । ६३] इति सूत्रे जातिपरिप्रश्नग्रहणं व्यर्थमत आह–*द्वयोरेकस्येति* ।

*व्याख्यानादिति* । 'कतरकतमौ कर्मधारये" इति सूत्रे विकल्पेन पूर्वपदप्रकृतिस्वरविधायके कर्मधारयग्रहणकरणसामर्थ्यमूलकादित्यर्थः । तद्धि तत्सूत्रे यद्यपि प्रतिपदोक्तपरिभाषया निष्फलं तथापि "आर्यो ब्राह्मणकुमारयोः"(पा० सू० ६ । २ । ५८)इत्युत्तरसूत्रस्य कुमारस्य ब्राह्मणः=कुमारब्राह्मण इत्यत्र षष्ठीतत्पुरुषेऽप्रवृत्त्यर्थं क्रियते । यदि प्रकृतसूत्रे समानाधिकरणपदावयवक इत्यर्थो न स्यात्तदा षष्ठीतत्पुरुषस्यापि शोभनादिपदसमानाधिकरणत्वात्तस्य तत्रानुवृत्तिर्व्यर्था स्यादिति भावः । एवं सति प्रकृते समानाधिकरणपदमर्शआद्यजन्तं द्रष्टव्यम् । "पुंवत्कर्मधारय"(पा० सू० । ६ । ३ । ४२ ) इति सूत्रे "स्त्रियाः पुंवत्"[पा० सू० ६ । ३ । ३४] सूत्रघटकपदेषु केषाञ्चिदनुवृत्तिर्भवति

---

(१) "किमादीनां द्विबह्वर्थे प्रत्ययविधानादुपाध्यानर्थक्यम्"इति भाष्येण तत्प्रत्याख्यानादित्यर्थः । द्वयोरित्यनर्थकं बहूनामपि निर्द्धारणे डतरच दृष्टत्वात्, अजातिपरिप्रश्नेऽपि कतमशब्दस्य दर्शनात् "वा बहूनाम्"इत्यत्र जातिपरिप्रश्नग्रहणं न कर्तव्यमित्यर्थं कैयट आह ।

(शे०)पुंस्कादनूङ् इत्यनुवर्त्तते। अपूरणीप्रियादिष्विति तु नानुवर्त्तते *व्याख्यानात्। तदाह-पूरणीत्यादि। *एतेन स्त्रियाः पुंवत्तसिलादिष्विति सिद्धे इदं व्यर्थमित्यपास्तम्। महानवमीति। पुंवत्त्वे "आन्महतः"[पा०सू० ६। ३। ४६]इत्यात्वम्। तथा कोपधादेरिति। *एतेन निषेधप्रकरणात्पूर्वमेतत्पाठ्यं, पुंवदिति च न कार्यमित्यपास्तम्। 'मध्येऽपवादा'इति न्यायेन परनिषेधबाधानापत्तेः। "*न कोपधायाः"[पा० सू० ६। ३। ३७]"सञ्ज्ञापूरण्योश्च" [पा०सू० ६। ३। ३८]"वृद्धिनिमित्तस्य च त" [पा० सू० ६। ३। ३९]"स्वाङ्गाच्चेतः"[पा०सू० ६। ३। ४०]"जातेश्च"[पा०सू० ६। ३। ४१]इति पञ्चसूत्र्येत्यर्थः। *विध्युन्मूलकत्वरूपयुक्तिमूलकस्य "निषेधाश्च बलीयांसः"इत्यस्य तु न विषयः। तद्बाधं विना कर्मधारयांशेऽस्य *विधेरचारितार्थ्यात्। *बाध्यसामान्यचिन्तया च सर्वबाधः। इभी पोटेत्यादिविग्रहः। *जातेः पूर्वनिपातार्थं "पोटायुवति"[पा० सू० २। १। ६५] इति सूत्रम्।

---

(चं०) केषाञ्चिन्नेत्यत्र निमित्तमाह-*व्याख्यानादिति*। पृथक्सर्वनिषेधप्रकरणं समाप्येदं सूत्रं कृतम्। यद्यपि पूरणीप्रियादिष्वित्यस्याप्यनुवृत्तिः स्यात्तदा कर्मधारयांशे स्त्रिया इतिसूत्रस्य प्रकृतसूत्रस्य च समानविषयत्वमेव स्यात्तथा सति प्रकृतसूत्रं निषेधप्रकरणस्य"न कोपधायाः"[पा०सू० ६। ३। ३७]इत्यारभ्य कृतस्य बाधकमेवेति मध्येऽपवादन्यायविषयतया स्त्रियाः पुंवदितिसूत्रानन्तरमेवेदं सूत्रं पठितं स्यात्, पुंवदिति च न कृतं स्यादिति पुनः पुंवद्ग्रहणकरणमूलकव्याख्यानादित्यर्थः। *एतेन=पूरणीप्रियादिष्वप्यस्य प्रवृत्तिस्वीकारेण।

*एतेनेति*। कोपधादिविषयेऽपि पुंवद्भावस्येष्टत्वेनेत्यर्थः। कोपधादेरित्यत्रादिपदमुपात्तं तद्ग्राह्याणि सूत्राणि स्पष्टप्रतिपत्तये प्रदर्शयति—*न कोपधाया इत्यादि*। एतेन पुंवत्पदघटितस्य प्रकृतसूत्रस्य निषेधप्रकरणानन्तरं पाठेन सर्वनिषेधबाध इति सूचितम्। यत्तु प्रकृतसूत्रव्याख्यानोपक्रमे स्त्रियाः पुंवद्भाषितपुंस्कादनूङित्यनुवर्त्तते इत्यत्र पुंवद्ग्रहणं तदनुवर्त्तमानपदद्वयं सन्दंशपतितमिति सह पाठादुक्तं, न तु सम्प्रति तस्य प्रयोजनमस्तीति बोध्यम्।

ननु "निषेधाश्च बलीयांसः" इतिन्यायेन निषेधप्रकरणस्यैतद्बाधकतोचितेत्यत आह-*विध्युन्मूलकत्वेति। *विधेरचारितार्थ्यादिति*। पुंवत्पदघटितविधेरचारितार्थ्यादित्यर्थः। पुरस्तादपवादन्यायस्य लक्ष्यानुरोधेन प्रकृतेऽनाश्रयणादाह-*बाध्यसामान्यचिन्तेति*। इभपोटेत्यत्रेभशब्दस्य जातिवाचकत्वप्रदर्शनादाह—*जातेः पूर्वनिपातार्थमिति*।

(शे०) प्रशंसा॰(पा० सू० २ । १ । ६६ ।) ॥ जातिरिति वर्त्तते । ननु मतल्लिकादेः स्त्रीत्वात् *प्रशस्त इत्यर्थो न युक्तः । प्रशस्ता गौरित्यर्थ इति पाठ उद्घादेः पुंस्त्वात्प्रकाण्डस्य क्लीबत्वादयुक्तोऽत आह—न तु विशेष्यनिघ्ना इति । युवत्यामेवेति । जरत्यां युवतीधर्मारोपे तु युवतीशब्दस्य विशेषणत्वेन "विशेषणम्"[पा० सू० २ । १ । ५७]इति समासेऽपि पूर्वनिपातनियमसिद्ध्या *जरतीग्रहणस्य वैयर्थ्यमेव स्यादिति भावः ॥

कृत्यतु[पा० सू० २ । १ । ६७ ।] ॥ कृत्यप्रत्ययान्तास्तुल्यवाचकाश्च जातिभिन्नवाचकेन समस्यन्त इत्यर्थः । *तुल्यमहानित्यादौ परत्वादनेनैव समासः । पूर्वनिपातनियमार्थमिदम् । *सत्कृत्यं, परमपूज्य इत्यादौ षष्ठीसमासो बोध्यः । यद्वा बाहुलकादेतद्विषये "सन्महत्"[पा० सू० २ । १ । ६१] इत्यस्यैव प्रवृत्तिः । *सामर्थ्यादिति । *पूर्वनिपातस्योभयत्रापि* समत्वादिति भावः । *जातिभिन्नवाचकेन समासे हि *पूर्वनिपातानियमे प्राप्ते तन्नियमार्थमिदं सार्थकमिति अजात्येत्ये-

---

(चं०) *प्रशस्त इत्यर्थ इति* । एतेन मूले एवमेव पाठ इति सूचयति । प्रशस्तशब्दस्य विशेष्यनिघ्नत्वात्सर्वत्र लिङ्गविपरिणामेनान्वयः । *जरतीग्रहणेति* । इदं हि जरतीशब्दस्य परप्रयोगार्थमत्र सूत्रे पठितम् । यदि जरत्यां युवतीधर्मारोपेणारोपितप्रवृत्तिनिमित्तकोऽत्र युवतीशब्दः स्यात्तदा युवतीशब्दस्यैव विशेषणबोधकतया विशेषणसमासेनैव सिद्धमिति भावः ।

तुल्यमहानित्यत्र "सन्महत्"[पा० सू० २ । १ ६१ ।]इति सूत्रेण समासे महच्छब्दस्य पूर्वनिपातः स्यादत आह—*तुल्येति* । ननु परत्वेन सन्महदितिसूत्रस्य यदीदं बाधकं तदा सत्कृत्यमित्यादिप्रयोगाणां का गतिरत आह—*सत्कृत्यमित्यादि* । ननु भोज्य ओदन इत्यादावस्य सूत्रस्याजात्येत्येतदुपादानादप्रवृत्तावपि विशेषणसमासः स्यादेवेत्यत आह—*सामर्थ्यादितीति । *पूर्वनीति* । अस्य जातिवाचकेन समास इत्यादिः । *उभयत्रापीति* । सूत्रद्वयप्रवृत्तावपीत्यर्थः ।

सामर्थ्याद्विशेषणसमासप्रवृत्तिकल्पनमुपपादयति—*जातीति* । *पूर्वनिपातानियम इति* । गुणक्रियाशब्दयोर्विशेष्यभावस्यानियतत्वादिति भावः ।

---

(१) प्रशंसयेति वक्तव्ये वचनग्रहणाद् रूढिशब्दग्रहणम् । तेन यौगिकाः प्रशस्तशोभनरमणीयादयो, ये च विशेषवचनाः शुचिमृद्वादयो, ये च जातिशब्दाः सन्तः परत्र प्रयोगात् प्रशंसां गमयन्ति सिंहो माणवक इति, ते सर्वे व्युदस्ता भवन्ति इति भावः ।

(शे०) तद्व्यर्थं स्यादिति तत्सामर्थ्याद्विशेषणसमासबाध इति तात्पर्यम् । *इदं प्राचामनुरोधेन । *परे तु अजात्येति *उक्तार्थस्य स्पष्टतया लाभायैव । अत एव "कुरुगार्हपत"[पा० सू० ६ । २ । ४२]इति सूत्रभाष्योदाहृते पण्यकम्बलः पण्यहस्ती इत्यत्र विशेषणमिति समाससिद्धिः । भोज्य ओदन इत्यत्रासमासस्येष्टत्वे स बाहुलकात् बोध्य इत्याहुः ॥

समानाधिकरणेनेति । वर्णवाचिना *तादृशेन वर्णवाचि समस्यत इत्यर्थः । सारङ्गश्चित्रः । कृष्णशब्दस्तदवयवके लाक्षणिक इति सामानाधिकरण्यम् । विशेषणमित्येव सिद्धे* इदं व्यर्थम् । न च "वर्णो वर्णेष्वनेते"(पा० सू० ६ । २ । ३ ) *इति स्वरविधायके *प्रतिपदोक्तस्यास्यैव ग्रहणार्थमिदम् । *अत एव सारङ्गस्यावयवः कृष्णः सारङ्गकृष्ण इत्यत्र तेन पूर्वपदप्रकृतिस्वरो नेति वाच्यम् । *कर्मधारयस्वरप्रकरणे तत्पाठेन सिद्धेरिति दिक् ॥

बहुवचननिर्देशादाद्यर्थावगतिरित्याह—कडारादय इति । कर्मधारये किम् । कडारपुरुषको ग्रामः । एतदेवेति । एतदपीत्यर्थः । "युवा खलति"[पा० सू० २ । १ । ६७]इति सूत्रे जरतीग्रहणस्यापि ज्ञापकत्वात् ॥

चतुष्पादो[पा० सू० २ । १ । ७१] ॥ जातिग्रहणं कर्त्तव्यमिति *वार्त्तिकलब्धमर्थमाह—जातिवाचिन इति ॥ मयूरो व्यंसक इति ।

---

(चं०) *इदम=प्रकृतसूत्रम् । अत्राजात्येत्येतदभावेऽपि जातिवाचकेनानेन सूत्रेण समासे फलतो न विशेष इति जातिभिन्नवाचकेन शब्देन सह समासविधायकमिदं सूत्रं भविष्यतीति प्राचीनोक्तन्न युक्तमित्याह-*परे त्विति । *उक्तार्थस्य= कृत्यतुल्याख्याः जातिभिन्नवाचकेनैव प्रायेण समस्यन्ते क्वचित्तु कृत्येतिसूत्रस्य बहुलग्रहणानुवृत्त्याऽप्रवृत्तिरित्यस्य स्पष्टप्रतिपत्तेर्लाभायेत्यर्थः ।

*तादृशेनेति । समानाधिकरणेनेत्यर्थः । *इत्येव सिद्ध इति । यत्रैकोऽवयवशब्द इत्यादिना तस्य विशेषणताया बोधनादिति भावः । *इतिस्वरविधायक इति* । एतभिन्नवर्णवाचके उत्तरपदे पूर्वपदप्रकृतिस्वरविधायक इत्यर्थः ।

*अत एव=प्रतिपदोक्तस्यैतत्सूत्रविहितसमासस्य ग्रहणादेव । *कर्मधारयस्वरप्रकरण इति* । इदं स्वरविधायकं सूत्रं "अज्यावम"[पा० सू० २ । १ । ६१ ।]इति सूत्रानन्तरं पठनीयमिति भावः ।

*वार्त्तिकलब्धमिति* । "पोटायुवति" (पा० सू० २ १ । ६५)इति

(शे०)केचित्तु मयूर इव व्यंसक इत्यर्थे उपमानसमासापवादोऽयं प्रतिपदोक्तो-पमानसमासविषयक*पूर्वपदप्रकृतिस्वराभावायेत्याहुः । उच्चावचमिति । उच्चावचादेशोऽत्र । उच्चनीचमित्यर्थे इदमित्यन्ये । निश्चितप्रचितयोर्निश्चप-चादेशः । *एतदन्तर्गणसूत्राण्याह—आख्यातमिति । *क्रियाप्रधानमि-त्यर्थः । अत्र "एहीडादयः" [ग० सू०] इत्यतोऽन्यपदार्थे इत्यनुवर्त्तते । गणे तस्य पूर्वं पाठात् । इह तत्सातत्यत्वार्थतां तस्य ध्वनयितुं व्युत्क्रमेण पाठस्तदाह—यत्राभिधीयत इति । अश्नीतपिबतेति । अन्यपदार्थ-स्य क्रीडादिरूपत्वेन स्त्रीत्वात्समासत्वेन प्रातिपदिकत्वाच्च टाप् । खादत-मोदतेति । मोदन्तामित्यस्य स्थाने मोदतेत्यादेशः । एहीडादय इति । लडुत्तमपुरुषैकवचनस्य ईडे इत्यस्य ईडादेशः । एहियवमित्यत्र यौमीत्यस्य यवादेशः । उद्धरकोष्ठादिति । उद्धरोत्सृजेति विग्रहः । उत्सृजेत्यस्य विवरणं देहीति । कोष्ठादितितूद्धरेत्यस्याकाङ्क्षापूरणाय । इह पाठ इति। एहीडादिषु तिङन्तपूर्वपदोत्तरपदकसमुदायानामित्यर्थः । कर्त्तेति । * उ-क्तेरित्यादिः । * जहि जोडमित्याभीक्ष्ण्येन य आह, स जहिजोडः । चिन्मात्रमिति । *अत्रानुनासिकनित्यता निपातनात् । एवार्थमात्रशब्दे-नात्र समासः। मयूरव्यंसकादयश्चेति चकार एवकारार्थः । तेनैषां समासा-न्तर घटकता नेति परमो मयूरव्यंसक इत्याद्येव ॥ ईषद्गुणवचनेति । *अकृतेत्यस्य स्थाने इदं, तदाह—ईषद्रक्तमिति ॥

नञ्(पा० सू० २ । २ । ६ ।) ॥ नकारो निषेधार्थकनशब्देन

---

(चं०)सूत्रस्थं जातिग्रहणन्तु "कृत्यतुल्याख्या"(पा०सू० २ । १ । ६८) इति सूत्रेण विच्छिन्नस्मण्डूकप्लुतौ च न मानमिति भावः । *पूर्वपदप्रकृतिस्वरेति* । अस्य "तत्पुरुषे तुल्यार्थ"(पा० सू० ६ । २ । २ ।) इति सूत्रविहित इत्यादिः । *एतदन्तर्गण इति* । मयूरव्यंसकाद्यन्तर्गण इत्यर्थः ।

*क्रियाप्रधानमिति* । अत्र तिङन्तमिति पाठः । कर्त्तारमित्यत्र कर्तृ-ग्रहणस्य नित्यसाकाङ्क्षत्वादाकाङ्क्षापूरणायाह—*उक्तेरित्यादिरिति* । तदे-तदुपपादयति—*जहीत्यादि । प्रत्यये भाषायामित्यस्याप्राप्तेराह—*अत्रेति । अयं मयूरव्यंसकादिराकृतिगणः । तेन कां दिशं गच्छामीत्यर्थे कान्दिशीकस्य, अहोपुरुषोऽहमिति यो मन्यते सः अहोपुरुषस्तस्य, अहं शक्तोऽहं शक्त इति यस्यामित्यर्थेऽहमहमिकेत्यस्य, या इच्छा इत्यर्थे यदृच्छा इत्यस्य साधुत्वं बो-ध्यम् । *अकृतेत्यस्य स्थान इति* । अत एवेषद्गार्ग्य इत्यत्र नातिप्रसङ्गः ॥

(शे०)समासे तत्पुरुषत्वाभावाय। तेन नैकधेत्यादौ *पूर्वपदप्रकृतिस्वरो न। *अत्रैव नलोपं वारयितुं लोपविधायके अकारोच्चारणम्। प्रसिद्धतरत्वान्नञव्ययं, न तु स्त्रीपुंसाभ्यां नञ्। ये तु नेत्यव्ययं नेच्छन्ति, *अत एव "नलोपो। नञः"] पा०सू० ६। ३। ९३]इति सूत्रे नञः सानुबन्धकस्य ग्रहणं व्यर्थं, नस्येत्येव सिद्धम्। न च प्रश्नपुत्रे दोषः। सानुबन्धकत्वात्। अव्ययेष्वपि नेत्येव पाठ्यमित्याशयः*। *वामनपुत्र इत्येतद्वारणार्थं तु सानुबन्धकः पठित इति *भाष्योक्तं सङ्गच्छत इति वदन्ति, वदन्ति च तेषामु*भयत्रापि अकारः स्पष्टार्थः। *नैकधेत्यादि नान्तरीयकमिति च पृषोदरादित्वात्साधु*।

न लोपो (पा०सू० ६। १। ७३।)॥ नञोऽशिति सिद्धे लोपवचनं साकच्कार्थम्। तेनाकब्रह्मण इत्यादि सिद्धमित्येके। ननेत्यादौ द्वित्वे बहुव्रीहिवद्भावेऽपि नानेन लोपः। उत्तरपदशब्दस्य मुख्यसमासचरमावयव एव *रूढेरित्याहुः॥

---

(चं०) *पूर्वपदप्रकृतिस्वरो नेति*। इदं च-अत्र सुप्सुपेति समासो भवति। अकारानुच्चारणे त्वनेन समासे पूर्वपदप्रकृतिस्वरप्राप्तिः। "अव्यये नञ्कुनिपातानाम्"इति परिगणनसूचकवाक्ये अकाररहितनकुनिपातानामिति पाठाभिप्रायेण। अव्यये परिगणने च अकारसहितपाठे तु नराजेत्यादौ टजभावः फलं बोध्यम्। *अत्रैव=नैकधेत्यादावेव। *अत एव=अकाररहितस्याभावादेवं। अस्य इतिभाष्योक्तमित्यनेनान्वयः। *इत्याशय इति*। पूर्वपक्षिण इति शेषः। अव्ययेषु पठितस्यैवेहानुकरणादिति भावः। *वामनपुत्र इति*। अत्र अकारोच्चारणेऽसति नलोपापत्तिः।

*भाष्योक्तं सङ्गच्छत इति*। यद्यव्ययेषु अकाररहितमप्यव्ययं स्यात्तदा नैकधेत्यादावेव नलोपं व्यावर्त्तयितुं अकारोच्चारणस्यावश्यकत्वेन वामनपुत्र इत्येतत्पर्यन्तानुधावनं व्यर्थं स्यादिति भावः। *उभयत्र=नञ इति सूत्रे नलोपो नञ इति सूत्रे चेत्यर्थः। न च वामनपुत्रे दोषाभावाय अकारस्यावश्यकत्वेन स्पष्टार्थं इत्यसङ्गतमिति वाच्यम्। नलोपविधायकसूत्रस्योत्तरपदाधिकारस्थत्वेन तेन पूर्वपदाक्षेपेण पूर्वपदभूतस्य नस्य नलोप इत्यर्थेनादोष इत्याशयात्। नन्वेवमैकधेत्यत्र नलोपापत्तिरत आह-*नैकधेत्यादीति।

*साध्विति*। नलोपाभावकल्पनयेत्यादिः।

*रूढेरिति*। अत्र मानन्तु तदधिकारीयकार्याणां मुख्यसमासा-

---

(१) "सानुबन्धकस्य ग्रहणं किमर्थम्"इति भाष्यस्येत्यर्थः।

(२) अन्यथा स एव प्रत्युदाह्रियेत इति भावः।

(शे०) तस्मान्नुट् (पा० सू० ६ । ३ । ७४) ॥ नञो *नुडभावाय नाकना-सत्ययोर्नलोपाभावे तद्वारणाय च तस्मादिति । ततो *व्याख्यानाचाचीति सप्तमी षष्ठ्यर्थे, सप्तमीनिर्देशस्तु "यस्मिन्विधिः" इति परिभाषाप्रवृत्तये,तदाह—अजादेरिति । नुक् तु न कृतः* । ङमुट्प्रसङ्गात्* । अनश्व इति । *आरोपितोऽश्व इति बोधः । नञ् तु द्योतकः । तत्र *तादात्म्यारोपस्य भेदसादृश्ययोः सतोरेव सत्त्वेन संसर्गारोपस्य तदभाव एव सत्त्वेनारोपितत्वबोधे सादृश्याभावादीनामर्थतो बोध इति नाब्राह्मणपदाल्लोष्ठादिप्रतीतीति*रि-त्यन्यत्र विस्तरः । अर्थाभाव इति । तत्राप्यारोपितो घट इत्येव बोधः ।

---

(चं०) वचव एव प्रदर्शनम् । "पञ्चम्याः स्तोकादिभ्यः"(पा० सू० ६ । ३ । २ ।) इतिसूत्रे तादृशस्य कृतत्वेनार्थाधिकारात्प्रकृतेऽपि तादृशस्यैव ग्रहणाच्चेत्यपि बोध्यम् । *नुडभावायेति* । नलोपविधानन्तु हलादौ चरितार्थम् । *व्याख्यानादिति* । अनचीत्यादिनिर्देशमूलकव्याख्यानादित्यर्थः । *नुक् तु न कृत इति* । "तस्य नुक्" इति न्यासेनेत्यादिः । *ङमुट्प्रसङ्गादिति* । न च "सम्बुद्धौ"[पा० सू० १ । १ । १६]इति सूत्रेऽनार्ष इत्यत्र ङमुटोऽकरणेन लुप्तनकारान्नञः परस्य ङमुण् नेति कल्पनान्नायं दोष इति वाच्यम् । अचीति-सप्तम्याः षष्ठ्यर्थकत्वकल्पनभिया न्यासभेदेन नुक्करणे ङमुट्व्यावृत्तये ज्ञापक-स्याश्रयणे गौरवात् । न च न मया तादृशनिर्देशानां ङमुडभावे ज्ञापकत्वमा-श्रीयते,किन्तु नुगागमस्याजादिपदसन्निपातनिमित्तकत्वेन तद्विघातकङमुडागमं प्रत्यनिमित्तत्वमिति सन्निपातपरिभाषया ङमुड्वार्यत इति वाच्यम् । न अः अनः अनश्चासावजश्चानाज इत्यत्र पदस्य विभज्यान्वाख्यानपक्षेऽन् अ अज इत्यव-स्थायां वर्णमात्रापेक्षत्वेनान्तरङ्गत्वाद् द्वयोरकारयोरेकादेशे नुगागमनिमित्त-सन्निपातस्य सवर्णदीर्घेण विनाशात्परादिवद्भावेनाजादिपदत्वात् ङमुडापत्ते-र्दुर्वारत्वात् । नञोऽकचि कृते चित्त्वादन्तोदात्तत्वे च कृते नकशब्दाऽमेशब्द-योस्तत्पुरुषे नकारलोपेऽकनर्ममित्यत्र नुडागमपक्षे जायमानस्य "अर्मे चावर्णं द्व्यच् त्र्यच्"(पा० सू० ६ । २ । ९०)इतिपूर्वपदाद्युदात्तत्वस्य नुगागमपक्षेऽवर्णा-न्तत्वाभावेनाभावापत्तेश्चेति दिक् ।

नञ्समासस्थले बोधप्रक्रियां दर्शयति—*आरोपित इत्यादिना । *तादात्म्यारोपस्य=तादात्म्येनारोपस्य । एवं संसर्गारोपस्येत्यत्रापि बोध्यम् । *लोष्ठादिप्रतीतिरिति* । एतेषां विजातीयतया सादृश्याप्रतीतेरिति भावः ।

---

(१) अत्र नञ् स्वसमभिव्याहृतघटादिपदानामारोपितप्रवृत्तिनिमित्तबो-धकत्वे तात्पर्यग्राहकः । यथा-'सिंहो माणवकः'इत्यादौ माणवकादिपदानि सिंहादिपदानामारोपितसिंहत्वादिबोधकत्वे । 'अनुदरा कन्या'इत्यादावल्पत्वा-

(शे०)*भेदेन तदारोपबोधेऽत्यन्ताभावबोधस्तादात्म्येन तदारोपबोधे भेदबोधः। अत्र च प्रकरणादिकं नियामकमिति बोध्यम्। विकल्प्यत इति। पूर्वपदार्थप्राधान्येऽव्ययीभाव उत्तरपदार्थप्राधान्येऽयमित्यादिरीत्येति भावः। न्यायसिद्धेऽर्थे लिङ्गमप्याह-रक्षोहेति। असन्देहा इत्यस्य आरोपितः सन्देह इत्यर्थः। सन्देहाभावः प्रयोजनमिति यावत्। अव्ययीभावेन द्वन्द्वे हि परवल्लिङ्गेनासन्देहा इत्यनुपपन्नमिति भावः। इदं पस्पशायां *भाष्ये। *असंहितमिति संहितासञ्ज्ञासूत्रे भाष्ये वार्त्तिकम्। *द्रुतभिन्नायां मध्याविलम्बितवृत्तौ संहिताभाव इति तदर्थः।

*परे तु—भाष्ये नञ्तत्पुरुषो*ऽन्यपदार्थप्रधानः उत्तरपदस्य धर्मपरतया न विद्यते ब्राह्मण्यं यस्मिन्सोऽब्राह्मणः। बहुव्रीहिस्तु तस्य* धर्मिपरत्वे चरितार्थः। *अत एव "नञोऽस्त्यर्थानामुत्तरपदलोपश्च" इति "अनेकम्"(पा० सू० २। २। २४) इति सूत्रस्थं वार्त्तिकं सङ्गच्छते। एतेन तत्त्वेऽपवादत्वादयं बहुव्रीहेर्बा-

(चं०)*भेदेन तदारोपबोधे इति*। भेदसम्बन्धेनोत्तरपदार्थारोपबोधे इत्यर्थः। *इदं पस्पशायामिति*। रक्षोहागमेतिवाक्यस्थमित्यर्थः। *असंहितमिति*। अस्य 'अद्रुतायाम्'इत्यादिः। वार्त्तिकार्थमाह-*द्रुतभिन्नायामित्यादिना।

स्वसिद्धान्तमाह-*परे त्विति*। तत्रादौ जघन्यम्पक्षमाह-*अन्यपदार्थप्रधान इति*। *तस्य=उत्तरपदस्य। *अत एव=धर्मिपरत्वे बहुव्रीहिसमा-

दिनोदराभावमारोप्य नञ्समभिव्याहारे आरोपितोदरबुद्ध्या [illegible]मूलाल्पत्वादौ विश्रामः। 'अद्विजः' इत्यादौ तद्भेदमूलकमारोपितप्रवृत्तिनिमित्तकत्वमिति भेदे विश्रान्तिः। 'अधर्मः' इत्यादौ च विरोधिनि सा। यत्र नञ्समभिव्याहारे यदर्थस्याभेदेनान्वये आकाङ्क्षा तत्रैव नञ्समभिव्याहारे भेदप्रतीतिर्नान्यत्र। अत एव 'न पचति तिष्ठति' इत्यादौ न भेदबोधः। अत एव तिङन्तसमभिव्याहृतनञोऽत्यन्ताभावार्थकत्वमेव आरोपस्यैव शब्दप्रयोगकारणत्वाद्बोद्धुरपि तदारोपविषयस्यैव प्रतीतेरारोपितत्वं नञर्थः। 'द्विजो नास्ति' इत्यादावपि आरोपिता सत्तेति बोधः, तदभावबोधस्त्वार्थः। एवं च यत्र तादात्म्यारोपस्तत्रारोपितत्वं नामार्थगतं, यत्र संसर्गारोपस्तत्र गुणक्रियागतं तदिति व्यवस्थेति मञ्जूषायां स्पष्टम्।

(१) अत्र पक्षे भेद एव नञर्थः। तस्य चाश्रयेण गुणस्येव तादात्म्यं सम्बन्धः। 'अब्राह्मणः क्षत्रियः', 'ब्राह्मणभेदः क्षत्रिये' इत्युभयविधव्यवहारदर्शनादिति बोध्यम्।

(२) अन्यपदार्थप्रधानत्वे।

(शे०)धकः स्यादिति कैयटोक्तमपास्तम् । *'असः'इत्यादौ सर्वादिकार्यं तु "एतत्तदोः सुलोपोऽकोरनञ्समासे"[पा० सू० ६ । १ । १३२]इति *ज्ञापकात्सिद्धम् । *अत्र पक्षे 'अवर्षा हेमन्तः'इत्यादौ विशेष्यगतलिङ्गवचनापत्तिर्दोष उक्तः । तत्र यद्यपि लिङ्गदोषो "लिङ्गमशिष्यं लोकाश्रयत्वात्"इति परिहर्तुं शक्यते तथापि वचनदोषः स्थितः । ततः पूर्वपदार्थप्रधानस्तर्हि भविष्यति । अत्रापि पक्षे 'असः' इत्यादिसिद्धिः *प्राग्वदेव । न च पूर्वपदस्याऽव्ययत्वेन तदर्थप्रधानस्यास्य लिङ्गसंख्याभ्यां कथं योग इति वाच्यम् । शब्दशक्तिस्वभावाद्वाक्ये नञोऽसत्त्वभूतार्थाभिधायित्वेऽपि समासे *सत्त्वरूपार्थाभिधायित्वेन तद्योगसम्भवात् । *यद्वा गुणवचनानामाश्रयतो लिङ्गादिवत् समासाऽर्थः प्रतियोगितया यद् द्रव्यं श्रितस्तत्स्थालिङ्गादि समासस्य भविष्यति । तेनोत्र पक्षे 'अवर्षा हेमन्तः' इत्यादौ हेमन्ताद्याश्रयगतलिङ्गसंख्याप्रसङ्ग इति कैयटोक्तमपास्तम् । *अभावेन प्रतियोगिनोऽपि स्वज्ञानाद्याश्रयणेन तस्याप्याश्रयत्वात् । स्वघटितसमासघटकेनोपस्थितत्या च तस्यैवाश्रयस्य ग्रहणौचित्यम् । *अन्यथा

---

(चं०) साश्रयणादेव । नन्वस्यान्यपदार्थप्रधानत्वेऽस इत्यादौ सर्वनामकार्यानुपपत्तिरतआह—*अस इत्यादाविति* । *ज्ञापकादिति* । यद्यत्र सर्वनामकार्यं न स्यात्तदा अस-इत्यत्र हल्ङ्यादिलोपेन सुलोपस्य दुर्वारतयाऽनञ्समासग्रहणं व्यर्थमिति भावः । *अत्र पक्षे=अन्यपदार्थप्रधानत्वपक्षे । *प्राग्वदेव=अनञ्समासग्रहणस्य ज्ञापकत्वादेव । *सत्त्वरूपार्थाभिधायित्वेन=पूर्वपदस्य सत्त्वभूतार्थाभिधायित्वेनेत्यर्थः । स्थलान्तरदृष्टप्रकारेण समाधानमाह—*यद्वेति* । गुणवचनानामितिवचनप्रवृत्तिप्रकारं दर्शयति—*अभावेनेति* । *अन्यथा=प्रतियोगिन आश्रयत्वाकल्पने । गुणवचनानामित्यत्र गुणपदमन्याश्रितपरमिति

---

(१) "नञ् समासस्यान्यपदार्थप्रधानत्वे आश्रीयमाणे 'अब्राह्मणको देशः' इति न सिध्यति" इति कैयटोक्तमित्यर्थः । न हि प्रवृत्तिनिमित्तमात्रनिष्ठेषु ब्राह्मणादिशब्देष्वेवायं समासो न तद्विशिष्टेष्वित्यत्र नियामकमस्तीति तदाशयः ।

(२) "नञोऽस्त्यर्थानाम्"इति वार्तिकप्रामाण्याद्विषयविभागस्तत्पुरुषबहुव्रीहिसमासयोरभ्युपगन्तव्य इति न दोष इति तदर्थः ।

(३) यद्यपीहार्थो न निर्दिष्टस्तथापि अभिधानशक्तिस्वाभाव्याल्लभ्यते इति कैयटे स्पष्टम् ।

(४) गुणवचनानामिति न्यायेन समासे आश्रयलिङ्गादिसाधनेनेत्यर्थः ।

(शे०)*तद्दोषदूषितपक्षोऽर्ध्वमाश्रितेऽपि पक्षे तद्दोषानुवृत्तौ भाष्यस्य निर्दलता-पत्तिः। *एतत्समकक्षतया 'अथ वा पुनरस्तूत्तरपदार्थप्रधानः' इत्युक्तेर-सङ्गतिश्च। त्वद्रीत्या हि "अस्तु तर्ह्युत्तरपदार्थ"इति वक्तुमुचितम्। एतत्प-क्षद्वयेऽप्यनेकमित्यादावेकवचनासिद्धिं वक्ष्यमाणां मनसि निधायोत्तरपदा-र्थप्रधानत्वं सिद्धान्तितम्। तत्पुरुषस्योत्सर्गतस्तत्प्रधानत्वाच्च।

अत्र पूर्वपदार्थप्रधानत्वपक्षेऽपवादत्वेनाव्ययीभावस्य बाधना-त् नञाऽव्ययीभावाभावोऽवश्यं स्वीकार्यः। अन्यथा*ऽव्ययीभावासि-द्धि*रूपदूषणानुपन्यासेन भाष्यस्य न्यूनतापत्तिः। तस्मादत्यन्ताभावा-र्थकनञः *क्रियादिप्रतियोगिकाभावबोधकत्वेनोत्तरपदार्थेनानन्वयादसा-मर्थ्येन नाव्ययीभावः-'अमक्षिकम्'इत्यादौ। न सन्देह इत्यादौ सन्देहस्य गुणत्वेन भवत्येव तदभावबोधो नञा। एतदेवाभिप्रेत्य भाष्ये उक्तम्— "प्रसज्यायं क्रियागुणौ ततः प्रतिषेधति"इति। असन्देह इत्यादौ चारो-पितः सन्देह इति भेदेनारोपज्ञानात् तदत्यन्ताभावप्रतीतिः।

*किञ्चार्थाभावशब्दे नञो घटकतयाऽस्य सूत्रगृहीताव्ययतयाऽनेन नाव्ययीभावः। सूत्रगृहीताव्ययेन "अव्ययम्"[पा०सू० २।१।६] इति

---

(चं०)भावः। *तद्दोषेति*। अवर्षा हेमन्त इत्यादौ लिङ्गवचनासिद्धिरूपदोषेत्यर्थः। *एतत्समकक्षतया=निर्दोषत्वेन समकक्षतया। *तत्प्रधानत्वात्=उत्तरपदार्थ-प्रधानत्वात्। *अन्यथा=नञाऽव्ययीभावस्वीकारे। *अव्ययीभावासिद्धी-ति*। पूर्वपदार्थप्रधानत्वपक्ष इत्यादिः। *क्रियादिप्रतियोगिकेति*। अत्राऽऽ-दिना गुणस्य सङ्ग्रहः।

नञाऽव्ययीभावाभावे पूर्वोक्तां युक्तिं स्मारयति—*किञ्चेति*।

---

(१) पूर्वपदार्थप्रधानगुणवचनानामिति पक्षापेक्षया एतस्य पक्षस्य भिन्नफलकत्वेऽथवेत्यादिसामान्योक्तिर्नोचिता, किं तु पक्षविशेषत्वसूचनाय 'तर्ह्युत्तर' इत्यादिकथनमेवोचितमित्यर्थः।

(२) "इदं खल्वपि भूय उत्तरपदार्थप्राधान्ये सति संगृहीतं भवति 'अनेकम्' इति। किमत्र संगृहीतम्?। एकवचनम्। कथं पुनरेकप्रतिषेधे बहूनां संप्रत्ययः स्यात्?। प्रसज्यायं क्रियागुणौ प्रतिषेधति। तद्यथा—आनय, आसय, भोजय—अनेकम्"इति, "प्रसज्येति विधायेत्यर्थः। निराश्रययोश्च तयो-रसम्भवादनियतसंख्यद्रव्याक्षेपे सत्येकप्रतिषेधाद् बहूनां प्रतीतिरित्यर्थः। एतच्च प्रसज्यप्रतिषेधे उच्यते। पर्युदासे तु द्व्यादिसंख्या युक्त एवानेकश-ब्दस्यार्थः"इति भाष्यकैयटयोः स्पष्टम्।

(शे०)समासाभावस्य तत्र सूत्रे उपपादितत्वात् । अत्र चेदं *भाष्यमपि मानम् ।
असंहितमित्यत्र सन्धानं संहितमिति भावे क्तः । आरोपितं सन्धानम् । आरोपितः परः सन्निकर्ष इत्यर्थे तदभावात्संहितासञ्ज्ञा न प्राप्नोतीत्यर्थ इति न तदसङ्गतिः* । संहितशब्दः "परः सन्निकर्षः"[पा० सू० १ । ४ । १०९]इति सूत्रबलात्स्त्रीलिङ्गो, वार्त्तिकप्रामाण्यात् क्लीबोऽपि । *अत एव संहितवदित्यादिप्रातिशाख्यतद्भाष्ययोः प्रयुक्तम् । *अत एव "परः सन्निकर्षः संहिता चेदद्रुतायामसंहितम्"इति वार्त्तिकं परः सन्निकर्षः संहिता चेदद्रुतायां वृत्तौ संहितासञ्ज्ञा न प्राप्नोतीति शेषपूरणेन व्याख्याय द्रुतायामेव हि परः सन्निकर्षो नाद्रुतायामित्यनेनासंहितमित्यंशोऽर्थतो हेतुत्वेन व्याख्यातो भाष्ये । न प्राप्नोतीत्यंशस्य तद्व्याख्यानत्वे हि असामर्थ्यात्समास नापत्तिः । त्वद्रीत्या संहितासञ्ज्ञाभावः प्राप्नोतीत्येवं वदेत्, वार्त्तिककृतो हेत्वकथनेन न्यूनता चेत्याहुः ॥

*प्रसङ्गादाह—नञो नलोप इति । तिङन्तेन समासाभावादप्राप्तौ वचनम् । अपचसीत्यस्य कुत्सितं पचसीत्यर्थः । *अत एव नञ्समानार्थः'अ'शब्दोऽव्ययेष्वप्रामाणिक इति बोद्धव्यम् । *नञा समासेऽनेकधेत्येव स्यादत आह—नञ्शब्देनेति । एकशब्दस्येति भावः । ततो धा प्रकारे । प्रकारेऽनेकसंख्यत्वप्रतीतेः । *एवमेव नमेरुनाराचनान्तरीयकादयः साधवः ।

---

(चं०)*इदं भाष्यमिति* । पूर्वपदार्थप्रधानत्वपक्षेऽव्ययीभावासिद्धिरूपदूषणानभिधानपरम्भाष्यमित्यर्थः । *न तदसङ्गतिः=न असंहितमितिशब्दानुपपत्तिः । *अत एव=संहितापरपर्यायसंहितशब्दस्वीकारादेव ।

पद्यार्धेस्तु वृत्त्युदात्तानामसंहितवदुत्तरान् ।

इति प्रातिशाख्ये । तद्भाष्ये च—

जात्यवद्वा तथा वान्तौ तनूशचीतिपूर्वयोः ।

इत्यस्य व्याख्यावसरे "तथा वा=संहितवद्वा असंहितवद्वा"इत्युक्तमित्यर्थः । "परः सन्निकर्षः"[पा० सू० १ । ४ १०९] इतिसूत्रस्थभाष्यीयव्याख्यानेनार्थाभावेऽव्ययीभाव इति भ्रमः स्यादतस्तद्भाष्यविरोधमपि परिहरति—*अत एवेति* । नञाऽव्ययीभावाभावादेव ।

*प्रसङ्गादिति* । नलोपप्रसङ्गादित्यर्थः । अप्राशस्त्येऽत्र नञ् । *अत एव=नञो नलोप इतिवचनारम्भादेव । मूलोक्तरीत्याऽऽह—*नञा समास इति* । *एवमेव=नञ्शब्देन सह समासादेव । येतुमतरीत्या त्वेतेषु पृषोदरादित्वमेव

(शे०) शत्रन्त इति । *"पातेः क्विपि निपातनाल्लुक्"इति "उभे-वनस्पत्यादिषु"(पा० सू० ६ । २ । १४०)इति सूत्रे वृत्तिः । नासत्या इत्यन्तानि चत्वारि पृथक्पदानि । एते निपात्यन्त इत्यर्थः । समासे हि 'नवेदोनासत्या' इति स्यात् । नासत्या इति बहुवचनं वैचित्र्यार्थम्*, न तु बहुवचनान्तस्यैव साधुत्वार्थम् । "नासत्यावश्विनौ दस्रौ"इत्यमरविरोधात् । *अश्विनोरेवायं *साधुः । तेनान्यत्र 'अनसत्यः'इत्येवेति हरदत्तः* । नमुचिशब्दे औणादिकः क्विप्रत्ययः । क्षीयतेरिति पाठे क्षीष् हिंसायामिति दिवादिः, तस्याऽऽकृतिगणत्वात् । क्षियतेरिति ह्रस्वपाठे क्षि निवासगत्योः, तुदादिः । एषु नञैव समासः पूर्वपदप्रकृतिस्वरार्थः, निषेधार्थकनशब्दान्तराभावाच्च ॥

कुगति[पा० सू० २ । २ । १८ ।] ॥ कुशब्दः पापार्थोऽव्ययमेवात्र । गत्यादिसाहचर्यात् । *तेनाव्ययपूर्वपदप्रकृतिस्वरः । समर्थेनेति । समर्थपदं तृतीयया विपरिणम्यत इति भावः ॥

ऊर्यादि(पा० सू० १ । ६ । ६१ । )॥ क्रियायोग इति । "उपसर्गाः"(पा० सू० १ । ४ । ५९)इत्यतस्तदनुवर्त्तते* । *अत एव सञ्ज्ञाविधावपि च्विडाजंशे तदन्तविधिः । *ऊर्यादयो निपाता भवन्ति, *निपाताः सन्तः क्रियायोगे गतिसञ्ज्ञा इत्यर्थः । कारिका क्रियेति ।

---

(चं०)कल्प्यम् ।

पादित्यस्य शत्रन्तत्वेन व्याख्याने प्रमाणमाह—*पातेः क्विपीति* । *वैचित्र्यार्थमिति* । सूत्रे उपात्तस्यापि वचनस्याविवक्षारूपवैचित्र्यस्य बोधनायेत्यर्थः । न विद्यते सत्यं येषां तेऽसत्याः । न असत्याः नासत्या इत्यर्थः । अयञ्च रूढ इत्याह-*अश्विनोरेवायमिति* । *हरदत्त इति* । परेण नमुचिशब्देन रूढेन साहचर्याद्रूढस्यैवेदन्निपातनमिति तद्भावः ।

*तेन=अव्ययसंज्ञकस्यैव कुशब्दस्य ग्रहणेन ।

*तदनुवर्त्तत इति* । क्रियायोगग्रहणमनुवर्त्तते इत्यर्थः । *अत एव=एतदनुवर्त्तनादेव । च्विडाच्प्रत्ययमात्रस्य क्रियायोगाभावादिति भावः । प्राङ्निपाता इत्यधिकारादाह—*ऊर्यादय इति* । *निपाताः सन्त इति* । एवं व्याख्यानेन गतिनिपातसंज्ञयोः समावेशसिद्धिः । यत्र तु व्यवधानेन प्रयोगस्तत्र "ते प्राग्धातोः"[पा० सू० १ । ४ । ८०]इति सूत्रस्य संज्ञानियमत्वपक्षे गतिसंज्ञाऽभावेऽपि निपातसंज्ञा भवत्येव । तेनाव्ययसंज्ञायां सुपो लुक्-

(शे०)*मर्यादास्थितियत्नरूपेत्यर्थः । धात्वर्थनिर्देशे ण्वुल्* । *दासीश्लो-कवाचिनस्तु न ग्रहणं *व्याख्यानादिति भावः ।

अनितिपरं किमिति । "ते प्राग्धातोः"[पा० सू० १ । ४ । ८०]इत्यस्य *सञ्ज्ञानियमार्थत्वे व्यर्थमिति प्रश्नः । *प्रयोगनि-यमार्थत्वाभिप्रायेणोत्तरम् । भाष्यकृता तु सञ्ज्ञानियमार्थत्वमाश्रित्येदं* *"छन्दसि परेऽपि"[पा० सू० १ । ४ । ८१]"व्यवहिताश्च"[पा०सू० १ । ४ । ८२]इति सूत्रद्वयञ्च प्रत्याख्यातम् । *अत एव 'सुकटङ्कराणि'"स्वाढ्यं-भवम्'इत्यादिभाष्यप्रयोगाः सङ्गच्छन्ते । *कटं सुकराणीत्यादि त्वनभि-धानेन वारणीयमत्र पक्षे* । खाडित्तीति । *एतद्विशेषणाभावे प्रयोग-नियमशास्त्रादेवंप्रयोगोच्छेद एव स्यादिति भावः । अनितिपरमिति चात्र

---

(चं०)सिद्धिः । क्रियाशब्दार्थं व्याचष्टे-*मर्यादेति* । *ण्वुलिति* । भाव इति शेषः । यस्तु कर्तृल्युडन्तो दासीवाची, यश्च कर्मल्युडन्तः श्लोकवाचकस्तं व्युदस्यति-*दासीत्यादि । *व्याख्यानादिति* । "गतिश्च"(पा०सू० १ । ४ । ६०)इतिसूत्रभाष्ये "कारिकाशब्दस्योपसंख्यानम्"इतिवार्त्तिकव्याख्यानावसरे कारिकाकृत्येत्युदा-हृतम् । तत्र कैयटेनोक्तं-"क्रियायोगग्रहणेन कारिकाशब्दस्य विशेषणात् क्रिया-वृत्तेर्ग्रहणात्"इति, तन्मूलकादित्यर्थः । अयम्भावः-क्रियायोगश्च नान्वयरूप एव विवक्षितः, किन्तु वाच्यवाचकभावोऽपि गृह्यते । विनिगमनाविरहात् । एवञ्च प्रकृते तु द्वितीय एव प्रयोगदर्शनादवसीयत इति ।

*संज्ञानियमार्थत्व इति* । धातोः प्राक् प्रयुज्यमानानामेव गत्युपस-र्गसंज्ञा इत्येवंरूप इत्यर्थः ।

*प्रयोगनियमार्थ इति* । अयमेव पक्षः सूत्रकारसम्मतः । अत एव "छन्दसि परेऽपि"(पा० सू० १ । ४ । ८१) "व्यवहिताश्च"(पा० सू० १ । ४ । ८२) इति सूत्रे प्रणीतवान् । *इदमिति* । अनितिपरग्रहणमित्यर्थः । *अत एव=संज्ञानियमस्याभिप्रेतत्वादेव । ननु संज्ञानियमपक्षेऽपि कटं सुकराणीति प्राप्नोत्यत आह-*कटं सुकराणीति* । अनभिधाने मानन्तु सूत्रद्वया-रम्भपक्षे सुकटंकराणि वीराणीत्यत्र गतेः प्राक् प्रयोगः प्राप्नोतीत्यु-क्तम् । तत इष्टापत्तिनिवारणार्थम्मुमर्थं कृतस्य "कर्तृकर्मणोश्च भूकृञोः"(पा० सू० ३ । ३ । १२७)इति सूत्रविहितखलः खित्त्वस्य ज्ञापकत्वोपपादनसमये "यदि चात्र गतेः प्रयोगः स्यात् खित्करणमनर्थकं स्याद्गतेरव्ययत्वात्"इत्युक्तम् । अत्र प्राप्नोतिस्यादितिशब्दोच्चारणेनानभिधानमेव । *अत्र पक्षे=खलः खित्त्वेन ज्ञापकेन संज्ञानियमार्थत्वसमर्थनपक्षे । *एतद्विशेषणाभाव इति* । अनि-

---

(१) मर्यादा=स्थितिरित्यर्थः । यत्न इत्यपरे इति बृहच्छब्देन्दुशेखरे ।
(२) प्रयोगनियमपक्षे तु 'कटं सुकराणि'इत्यनिष्टमेव स्यादिति भावः ।

(शे०)बहुव्रीहिः। अनितावितिं वक्तव्ये परग्रहणन्तु अनुकरणाकृतावनिति-परत्वाविवक्षार्थम्। तेन 'श्रौषड्वौषडिति कृत्वा'इत्यादौ व्यवहितेऽपि निषेधसिद्धिरेतद्बलादेव*। ते प्रागित्यादावपि गत्याकृतिनिर्देशः। एतत्प्रकरणे आकृतिपरतायां *तस्य तात्पर्यग्राहकत्वात् । अत एव 'अभ्युद्धरति'इत्यादावुभयोः पूर्वप्रयोग इति दिक् ॥

आदरानादरयोः सदसती [पा० सू० १।४।६३।] ॥ *अनादर इति बहुव्रीहिः । अतः पाखण्डिनमसत्कृत्येत्यादि सिद्धम् । तत्पुरुषे हि यत्रादरप्रसक्तिस्तदीयानादर एव स्याद् गुरुमसत्कृत्येत्यादौ ॥

कणेमनसी(पा०सू० १।४।६६।)। शब्दस्वरूपे इति विशेष्यम्। कणेहत्येति। *"परावरयोगे च"[पा०सू०३।४।२०]इति क्त्वा ॥

पुरोऽव्ययम् (पा० सू० १।४।६७।)॥ *'पुरोभूय' 'पुरोगत्य' इत्यप्युदाहरणम्। कृञ्योगे एवेति नियमे मानाभावात् ।

*अव्ययपदमनुवर्त्तते इत्याशयेनाह—मान्तमव्ययमिति ।

---

(चं०)तिपरमिति विशेषणाभाव इत्यर्थः। *एतद्बलादेव=परग्रहणबलादेवेत्यर्थः। *तस्य=परग्रहणस्य ।

अनादरपदे तत्पुरुषभ्रमन्निरस्यति—*अनादर इतीति* । अस्मिन्सूत्रेऽसद्ग्रहणन्तु भाष्ये प्रत्याख्यातम्। "गोष्पदं सेवितासेवित"(पा० सू० ६।१।१४५)इति सूत्रेऽसेवितपदे नञुपादानाद्गोष्पदस्येवासत्कृत्येत्यस्यापि प्रकृतेऽनादरग्रहणेन सिद्धेः ॥

नपुंसकत्वोपपत्तये आह—*शब्दस्वरूपे इतीति*। ननु पयःपानक्रियाया एव पूर्वकालिकत्वेन हन्धातोः क्त्वाप्रत्ययोऽनुपपन्न इत्यत आह—*परावरयोगे चेतीति*। तथा च 'अप्राप्य नदीं पर्वतः'इत्यत्र यथा पर्वतप्राप्तिक्रियायां नदीकर्मकप्राप्तिक्रियाप्रागभावसमानकालिकत्वलाभेऽपि क्त्वा भवति तथाऽत्रापि पयःपानक्रियायाः श्रद्धातिशयहननप्रागभावसमानकालिकत्वे विवक्षितेऽपि क्त्वा भवतीति भावः ।

मूले "पुरोऽव्ययम्"( पा० सू० १।४।६० इतिसूत्रे पुरस्कृत्येत्येवोपात्तं तद्दर्शनेनास्यापि कृञ्योग एव प्रवृत्तिरिति भ्रमः स्यात्तन्निवारणायाह—*पुरोभूयेत्यादि* । अत एव पुरोहितमित्यत्र "गतिरनन्तरः"(पा० सू० ६।२।४९)इतिसूत्रेण पूर्वपदप्रकृतिस्वरः सिद्धः । न चैवम् "अमुं पुरः पश्यसि देवदारुम्"इत्यत्र "नमस्पुरसोः"(पा० सू० ८।३।४०)इति सत्वापत्तिरिति वाच्यम्। स्थित्वेत्यस्याध्याहारेण दृशिम्प्रत्यगतित्वात् ।

*अव्ययपदमनुवर्तत इति । उत्तरसूत्रे इव तस्यावश्यकतया प्रकृ-

(शे०) तेन काण्डमस्तं कृत्वेत्यत्र न । अस्तं=क्षिप्तम् ।

जलमच्छङ्गच्छतीति । "प्राग्रीश्वरात्"[पा०सू० १।४।५६] इत्यधिकारान्निपातत्वेऽव्ययत्वे च विभक्तिलुक् स्यादिति भावः । सप्तमी-निर्देशेऽपि "तस्मिन्"[पा० सू० १।१।६६]इति परिभाषा न प्रवर्त्त-ते । *क्रियायोग इत्यनुवृत्तेः । एतेना*नुस्वारव्यवधानात्कथमत्र प्राप्ति-रित्यपास्तम् ।

उपाजेऽन्वाजेशब्दौ एदन्तौ विभक्तिप्रतिरूपकौ निपातौ दुर्बलस्य बलाधाने वर्तेते ।

च्व्यर्थे इति । च्व्यन्ते तु पूर्वविप्रतिषेधेन नित्यैव स-ञ्ज्ञेति भाष्ये स्पष्टम् । *इदं प्रायिकम् । अत एव 'नमस्करोति'इत्यादौ च्व्यर्थाभावेऽप्यनेन गतित्वमाहुः । अन्ये तु स *ऊर्यादौ स्वरादौ चेति विकल्प*फलसिद्धिमाहुः । प्रान्तत्वमिति । गतिसञ्ज्ञासन्नियोगेन 'लव-णम्-उष्णं-शीतम्-उदकम्-आर्द्रम्'इति पञ्चानामित्यर्थः ।

उरसि मनसि इति विभक्तिप्रतिरूपकौ निपातौ ।

मध्ये पदे(पा०सू० १।४।७६) "विभाषा कृञि"(पा० सू० १।४।७२)इति, अनत्याधान इति चानुवर्त्तते । तत्रैषामेदन्तत्वं निपात्यते । *सप्तमी तु न । *मध्यं पदं कृत्वा, वाचं नियम्येति च *प्रत्ययेन तस्या अनन्वितत्वात् । अनत्येति किम् । हस्तिनः पदे कृत्वा शिरः शेते ॥

नित्यं हस्ते[पा० सू० १।४।७७।]॥ उदाहरणे "तत्पुरुषे कृ-ति"(पा० सू० ६।३।१४) इत्यलुक् । उपयमने किम् । हस्ते कृत्वा कार्षापणं गतः ॥

---

(चं०) तेऽपि सम्बन्धो भवति ।

*क्रियायोग इत्यनुवृत्तेरिति* । तथा च गत्यर्थ-वदधात्वर्थ-क्रियायो-गेऽच्छेत्यव्ययं गतिसंज्ञमिति सूत्रार्थः । *अनुस्वारव्यवधानादिति* । अच्छे-तिशब्दस्येत्यादिः ।

*इदम्प्रायिकमिति* । च्व्यर्थवृत्तित्वम्प्रायिकमित्यर्थः । *ऊर्यादौ स्वरादौ चेति* । पठनीय इति शेषः । *फलसिद्धिमिति* । ऊर्यादिपठितस्य गतित्वं, स्वरादिपठितस्य तदभाव इति विकल्पफलसिद्धिमित्यर्थः ॥

ननु मध्यादीनां सप्तम्यन्तानां गतिसंज्ञासन्नियोगेन सप्तम्यलुङ्-निपातनेन सिद्धे एदन्तत्वनिपातनं व्यर्थमत आह-*सप्तमी त्विति । *मध्यं पदमिति* । व्यधिकरणे एते पदे । *प्रत्ययेन=ज्ञानेन ।

(शे०) प्राध्वम्[पा० सू० १।४।७८।]॥ इदं मान्तमव्ययं बन्धनेनाऽऽनुकूल्ये वर्त्तते। कृञीत्येव।

जीविका=जीवनोपायः। सुपुरुष इति। क्रियायोगाभावादगतित्वम्। अत्रेति। अव्यवस्थया समासप्राप्तौ *व्यवस्थार्थानीति भावः। कर्मप्रवचनीयानामिति। *सा सञ्ज्ञा तु प्रतिस्तवनमित्यादौ षत्वाभावाद्यर्थेति बोध्यम्। *भाष्ये तु "कर्मप्रवचनीयानां प्रतिषेधः-वृक्षं प्रति विद्योतते। व्यवहितानाञ्च प्रतिषेधो वक्तव्यः। आमन्द्रैरिन्द्र हरिभिर्याहि" इत्युक्त्वा "सिद्धन्तु काङ्स्वदुर्गतयः प्रादयः क्तार्थे" इत्यनेनेदं वचनद्वयमपि प्रत्याख्यातम्। *एतदेव सौनागैर्विस्तरतरकेण पठितम्। स्वती पूजायां, दुर्निन्दायाम्, आङीषदर्थे, कुः पापार्थे, प्रादयो गताद्यर्थे, इत्युक्तम्। एवञ्चैषामावश्यकत्वेन* कर्मप्रवचनीये प्राप्तिरेव नेति तदाशयः॥

तत्रोप [पा० सू० २।१।९२।]॥ अयमधिकारः। *अत एवामैव तुल्यविधानमित्यादि सङ्गच्छते*। *येनाऽमैव विधीयते तेन

---

(चं०) *व्यवस्थार्थानीति*। एतेनैतेषां यत्र विषयता तत्र समासः "कुगति" (पा०सू०२।२।१८)इतिसूत्रेणैव। वार्त्तिकानान्त्वर्थव्यवस्थार्थकत्वमिति सूचितम्।

ननु द्वितीयायाः श्रवणसिद्धिफलककर्मप्रवचनीयसंज्ञाविधानसामर्थ्यादेव समासाभावे सिद्धे "कर्मप्रवचनीयानाम्"इति व्यर्थमत आह-*सा संज्ञा त्विति*। अयञ्च निषेधोऽनित्यः। सुराजा, अतिखट्वः अतिराज इत्यादिभाष्यप्रयोगात्। "कर्मप्रवचनीयानाम्"इतिवचनस्यानावश्यकत्वमाह-*भाष्ये त्विति*। *एतदेवेति*। काङ्स्वितिवचनमित्यर्थः। *एषामावश्यकत्वेनेति*। अर्थव्यवस्थार्थमावश्यकत्वेनेत्यर्थः।

*अत एव=अधिकारत्वादेव। *इत्यादि सङ्गच्छते=इत्यादि प्राचां व्यवहारः सङ्गच्छते इत्यर्थः। *येन। सूत्रेणेति शेषः। नन्वेकस्य सूत्रस्योभय-

---

(१) स्वान्वययोग्यार्थकवाचकपदापेक्षया पदान्तरेण व्यवहितपदैः सह समासस्य प्रतिषेधो वक्तव्य इत्यर्थः। याहीत्यस्यां क्रियायां द्वयोरुपनिपातात्तद्द्वारको दध्योदनादाविव परस्परसम्बन्धोऽस्तीति समासप्राप्तिः। तथा चाव्ययपूर्वपदप्रकृतिस्वरे सति मन्द्रस्य पृथगुदात्तत्वं न स्यादिति भावः।

(२) आमन्द्रैरित्यत्र सामर्थ्यमेव नास्ति आङ ईषदर्थावृत्तित्वं च। न चैकक्रियाऽन्वयित्वसामर्थ्यमस्तीति वाच्यम्। तथा सति 'कृतः सर्वो मृत्तिकया' इत्यादौ समासापत्तेः। दध्योदनादौ तु क्रियान्तर्भावेण सामर्थ्यमिति तदाशय इति बोध्यम्।

(शे०) यस्योपपदसञ्ज्ञा विधीयत इति तदर्थात् । *"कर्मण्यण्" [पा० सू० ३ । २ । १] इत्यादौ कर्मणीत्यादिः सौत्री प्रथमार्थे सप्तमी । धातोरण् भवति कर्म चोपपदसञ्ज्ञमिति तदर्थः । अत्र सूत्रे सप्तमीपदं तदन्तपरम् । *तत्स्थं=*तद्वाचकम्, तदाह—सप्तम्यन्ते पदे इति । *महासञ्ज्ञया प्रथमार्थे सप्तमीबलेन च लब्धमर्थमाह—तद्वाचकं पदमिति । पदमत्र विभक्त्यन्तम्—"स्तम्बकर्णयोः"[पा० सू० ३ । २ । १३] इत्यादौ सुपीत्यधिकारात् *तत्प्रकृतिके सुबन्ते लक्षणा । *अन्यथोपपदमितिमहासञ्ज्ञालब्धोपपदसञ्ज्ञकसुबन्ताभावात् "स्तम्बेरमः" इत्यादौ समासानापत्तिः । समासविधायके उपपदप्रकृतिकसुबन्तग्रहणे "सुप्यजातौ (पा० सू० ३ । २ । ७८]इति णिनौ राजदर्शीत्यादौ समासानापत्तिः* । तत्र हि *सुबन्तमेवोपपदं न तु तत्प्रकृतिकम् । *आवृत्त्याऽर्थद्वयपरत्वे गौरवं, महासञ्ज्ञाविरोधश्च* । *सुप्यजातावित्यादिविषये सुबन्तस्य सप्तम्यन्तपदवाच्यत्वरूपन्तत्स्थत्वमादायोपपदत्वं बोध्यम् । "विभा-

---

(चं०) विधायकत्वं कथमत आह-*कर्मण्यणित्यादाविति* । *तत्स्थम्=स्वनिष्ठवाच्यतानिरूपितवाचकतासम्बन्धेन तस्मिन्पदे विद्यमानम् । एवं सति यत्फलितन्तदाह-*तद्वाच्यमिति* ।

*महासंज्ञयेति* । सा चान्वर्थत्वाय कृता-समीप उच्चारितम्पदमिति । एतेन तद्वाचकपदलाभः । *तत्प्रकृतिके=स्तम्बकर्णप्रकृतिके । *अन्यथा=लक्षणाया अनाश्रयणे । स्तम्बकर्णयोरिति सप्तम्याः प्रथमार्थत्वेन रमिजपोरनन्तरमच्प्रत्ययो भवति स्तम्बकर्णौ चोपपदसंज्ञकौ भवत इत्यर्थापत्त्या यच्च सुबन्तं तन्न सप्तम्यन्तपदस्थं, यच्च सप्तम्यन्तपदस्थं तन्न सुबन्तमिति सूत्रार्थानुपपत्तिः ।

ननु स्तम्बकर्णयोरित्युपादानसामर्थ्यात्तयोः सुबन्तत्वाभावेऽप्युपपदसंज्ञा भविष्यतीति चेदेवमपि समाससंज्ञाविधायके "उपपदम्"(पा०सू० २ । २ । १९)इति सूत्रे प्रथमान्तसुब्ग्रहणानुवृत्त्योपपदसंज्ञकसुबन्तस्य तेन समासविधानादनुपपत्तिरेव, तदाह-*समासानापत्तिरिति* । *सुबन्तमेवोपपदमिति* । सुपीति सप्तम्याः प्रथमार्थत्वादिति भावः । समाससंज्ञाविधायकसूत्रस्यावृत्त्याऽर्थद्वयपरत्वं भविष्यतीति चेत्तत्राह-*आवृत्त्येति* । *महासंज्ञाविरोधश्चेति* । स्तम्बकर्णेतिप्रातिपदिकयोरुपपदसंज्ञास्वीकारे महासंज्ञाविरोधस्तयोः पदत्वाभावात् । एतेन प्रघट्टकेन पदस्यैवोपपदसंज्ञेत्युक्तम्भवति । स्तम्बकर्णयोरित्यत्र लक्षणेत्युक्तमेव ।

सुप्यजातावित्यादावाह-*सुप्यजातावित्यादीति* । अत्रादिना "सुपि

(शे०) घाऽग्रे प्रथम"[पा० सू० ३ । ४ । २४ ।] इत्यादौ सुपीत्यधिकारा-भावेऽपि महासंज्ञाबलात्तेषां* तत्प्रकृतिकसुबन्ते लक्षणा बोध्या । *अत एव "उपपदम्"[पा० सू० २ । २ । १९]इति सूत्रे "अतिङ्ग्रहणादनयो-र्योगयोः सुप् सुपा इति निवृत्तम्"इति भाष्ये उक्तम् । उप=समीपे उच्चारितं पदमुपपदम् । सामीप्यञ्च सप्तम्यन्तपदघटितसूत्रविधेयप्रत्य-यप्रकृत्यर्थेऽन्वयित्वमेव न त्वानुपूर्व्यव्यवधानम् । कर्मण्यणसूत्रे उष्ट्रप्रणाय इति भाष्योदाहरणात्, "आतोऽनुपसर्गे"[पा० सू० ३।२।३०]इत्यत्रानु-पसर्गग्रहणाच्च । *गुरुं नमस्करोति कन्यामलंकरोतीत्यादौ हि भवन्तं शृणोतीत्यादाविवानभिधानान्नाण् । अभिधानलक्षणाः कृत्तद्धितसमासा इति "अकर्त्तरि च"[पा० सू० ३ । ३ । १९]इति सूत्रे भाष्योक्तेः ।

*नन्वेवं 'तत्र'ग्रहणं व्यर्थं प्रकृतधात्वधिकारविषयता त्वधिकारेणैव सिद्धेत्यत आह—तस्मिंश्चेति । अनेनोपपदसञ्ज्ञासन्नियोगशिष्टत्वं* प्रत्यय-विधेर्बोधयति । *अन्यथा*ऽन्वाचयशिष्टत्वं सम्भाव्येत । प्रातिपदिकार्थे सप्त-म्यामेवास्य प्रवृत्त्या "भुवो भावे"[पा०सू० ३ । १ । १०७]इत्यादौ *न प्रवृ-

---

(चं०) स्थः" (पा०सू० ३ । ४ । २) इत्यादिसंग्रहः । *तेषाम्=अग्रशब्दादीनाम् । *अत एव=महासंज्ञाकरणेन विभक्त्यन्तस्यैवोपपदसंज्ञास्वीकारादेव ।

यदि "उपपदम्"(पा०सू० २ । २ । १९)इति सूत्रे सुप्सुपेत्यस्य सम्बन्धः स्यात्तदा सुप्यजातावित्यादिना सुबन्तस्यैवोपपदसंज्ञाविधानेनोपपदप्रकृतिकसु-बन्ताभावात्तत्रानुपपत्तिः स्यात् । नन्वानुपूर्व्यव्यवधानानाश्रयणे गुरुन्नमस्करोती-त्यादावण् स्यादत आह—*गुरुमित्यादि* ।

*नन्वेवमिति* । अस्याधिकारत्व इत्यर्थः । *सन्नियोगशिष्टत्व-मिति* । यस्य प्रत्ययविधायकसूत्रस्य सप्तम्यन्तपदघटितत्वमनुषङ्गेण सप्त-म्यन्तपदैकवाक्यता वा भवति तेन सूत्रेण प्रत्ययविशेषस्य सप्तम्य-न्तपदस्थस्योपपदसंज्ञायाश्च विधानं युगपद्भवति । यस्य तु प्रत्यय-विधायकस्य न तथात्वं तस्य केवलप्रत्ययविधायकत्वम् । यथा "तव्य-त्तव्यानीयरः" इत्यादीनाम् । *अन्यथा=उपपदसंज्ञासन्नियोगशिष्टत्वानङ्गी-कारे । *अन्वाचयशिष्टत्वं सम्भाव्येतेति* । तथाहि—कर्मण्यणित्यादौ कर्मणो यस्मिन् प्रयोगे विधीयमानाण्प्रत्ययप्रकृत्यर्थान्वयित्वं तत्र तस्योपपदसंज्ञा-ऽपि भवति । धातोरण्प्रत्ययस्तु तदभावेऽपि भवतीति सम्भाव्येत । कर्म-णीतिसप्तम्यन्तपदोच्चारणन्तु यत्र तादृशस्य समीपोच्चारितत्वं तत्रोपपदसंज्ञा-विधायकत्वेन चरितार्थम् ।

*न प्रवृत्तिरिति* । तत्र हि भावे इति सप्तमी अधिकरणे एव, भावेऽर्थे

(शे०)त्तिः। *तदुव्यवस्था त्व* नुनासिकत्वादिवल्लक्ष्यानुरोधेनैवेति बोद्धयम्॥

उपपद(पा०सू० २ । २ । १९)॥ सुबन्तमिति महासञ्ज्ञाबलल-भ्यम् । *अत एव राजयुध्वेत्यादौ *नलोपः। *एधानाहारको व्रजतीत्यत्र तु अतिङिति बहुव्रीहिणा *तिङन्ताघटितः समास इत्यर्थेन तदप्रवृत्तेः, त-दाह—अतिङन्तश्च समास इति । कथमपि तिङन्ताघटित इत्यर्थः। स-मास इति । तत्सञ्ज्ञकः समुदाय इत्यर्थः। कुम्भअसिनि । ननु "अ-न्तरङ्गानपि"इति न्यायेनेत्सञ्ज्ञालोपयोर्लुका बाधादि*दमयुक्तमिति चेन्न । इत्त्वलोपबाधाबाधयोः फले विशेषाभावेन"अन्तरङ्गानपि'इत्यस्याप्रवृत्तेः* । अलौकिकं प्रक्रियावाक्यमित्यस्य समासप्रवृत्तियोग्यं लोके प्रयोगानर्ह-

---

(चं०) क्यब् भवतीति तदर्थात् । तस्मिन् सूत्रेऽनुवर्त्तमानं यत्सुपीति तत्र या सुपीति सप्तमी सा प्रथमार्थे सौत्री । एवं तद्विशेषणबोधकेऽनुपसर्ग इतिपदेऽपि प्रथमार्थ एव । *तद्व्यवस्थेति* । काचित्सप्तमी प्रथमार्थे काचित् स्वार्थेऽधिकरण एवेति व्यवस्थेत्यर्थः । *अनुनासिकत्वादिवदिति* । "उपदेशेऽजनुनासिक इत्"(पा० सू० १।३।२)इतिसूत्रप्रवृत्त्युपयोग्यनुनासिकत्वादिवदित्यर्थः। लक्ष्यानु-रोधात् । ब्रह्मभूयमितिशब्दजन्यशाब्दबोधे धात्वर्थस्य भवनस्यैव विशेष्यतया भानमनुभवसिद्धमिति भावे इति सप्तम्याः प्रथमार्थत्वन्न । भव्यस्प्रभव्यमित्यादौ क्यपोऽदर्शनेनानुपसर्गे सुपीत्यनयोस्तु प्रथमार्थत्वमेवेति कल्पनम्, एवं लक्ष्या-नुरोधात्कल्पनीयमिति भावः ।

*अत एव=सुबन्तस्योपपदसंज्ञास्वीकारादेव । *नलोप इति । "राजनि युधि कृञः"(पा० सू० ३ । २ । ९५) इति सूत्रे राजनीति सप्तम्याः प्रथमार्थत्वकल्पनया सुबन्तस्यैव क्वनिप्प्रत्ययविधानसमकालिको-पपदसंज्ञास्वीकारादिति भावः । प्रकृतसूत्रघटकस्यातिङितिपदस्य प्रयोजन-माह—*एधानाहारक इति* । अत्र हि ण्वुल्विधायकसूत्रस्थायाः क्रियायां क्रियार्थायामिति सप्तम्याः प्रथमार्थत्वेन व्रजतीत्यस्य विभक्त्यन्तस्योपपदत्वे-ऽपि समाससंज्ञाविधायकसूत्रेऽतिङित्यस्योपादानान्न समासः। उपपदसंज्ञाफलं तु तदुच्चारणे एव प्रत्ययस्य भवनमिति । *तिङन्ताघटित इति* । समासस्य तिङन्तत्वं प्रत्ययग्रहणपरिभाषया न सम्भवतीत्यतिङ्पदं तत्र तिङन्ताघ-टिते लाक्षणिकमिति भावः ।

इदमत्र बोध्यम् । "उपपदमतिङ्" ( पा० सू० २ । २ । १९ ) इतिसू-त्रेणोपपदेन नित्यैकार्थीभावो बोध्यते समर्थपरिभाषाया उपस्थापनात् । अत एव महान्तं कुम्भङ्करोतीति वाक्यमेव, न तु तत्राण्प्रत्ययः । एधानाहारको व्रजतीत्यत्र ण्वुल् तु भवत्येव । क्रियापदस्य कारकपदेन नित्यसाकाङ्क्षत्वात् ।

*इदमिति* । कुम्भ असित्यत्र ङकारानुच्चारणमित्यर्थः । *अप्रवृत्तेरिति* ।

(शे०) मित्यर्थः। हरि ङीत्यत्रापीत्सञ्ज्ञाद्युत्तरमेव समासः, लोके प्रयोगानर्हत्वस्योभयत्रापि सत्त्वेनाविशेषादकृतेत्सञ्ज्ञालोपमेवोच्चारितमित्यलम्।

कृद्योगलक्षणा चात्र षष्ठी। न चान्तरङ्गा द्वितीया। प्रकल्प्यापवादविषयमुत्सर्गप्रवृत्तेः। अत्र षष्ठीसमासो न। उत्तरपदे विभक्त्युत्पत्तेः पूर्वमेवास्य* प्रवृत्त्याऽन्तरङ्गत्वात्। *कारकषष्ठीत्वेन षष्ठीसमासस्यापि ततः पूर्वं प्रवृत्तौ तु अस्तु सः। अस्य नित्यत्वेन तत्कृततत्पुरुषसञ्ज्ञाप्रयुक्तैकार्थीभावाभावेऽप्येतत्कृततत्सञ्ज्ञाप्रयुक्तस्य तस्यानपगमेनादोषात्। एकस्या एव सञ्ज्ञाया उभाभ्यामपि प्रवृत्त्याऽविरोधेन युगपदेवोभाभ्यां सा। स्पष्टञ्चेदमत्र भाष्ये*। *एवञ्च "द्वितीया श्रित"(पा० सू० २।१।२४) इत्यादिसमासोऽप्युत्तरपदे सुबुत्पत्तेः प्रागेव। *अत एव कारकेति सामान्यत एवोक्तम्। भाष्यकृता च *तदंशे *प्रमाणं नोपन्यस्तम्। *परिभाषा न कर्त्तव्येति प्रकृतसूत्रभाष्यं तु विशिष्टाया*अकर्त्तव्यत्वपरम्। *अत एव भाष्ये प्रत्याख्यानोत्तरमपि "गतिकारकेति समासवचनात्" इत्युक्तम्। तेन कारकांशे वचनत्वमेव बोधितमिति दिक्*।

---

(चं०)शास्त्रप्रवृत्तेः सफलकत्वस्वभावादिति शेषः। *अस्य=उपपदसमासस्य। सिद्धान्तरीत्याऽऽह-*कारकषष्ठीत्वेनेति*। *अत्र भाष्य इति*। तत्र ह्यन्तरङ्गत्वाभिप्रायेण वार्तिककारोक्तषष्ठीसमासादुपपदसमासो विप्रतिषेधेनेत्यनेन विप्रतिषेधस्य खण्डनं कृत्वा षष्ठीसमासस्यापि कारकषष्ठीविषये सुबुत्पत्तेः प्राक् प्रवृत्त्यभिप्रायेण 'अथ वा विभाषा षष्ठीसमासः। यदा न षष्ठीसमासस्तदोपपदसमासः' इत्यनेन तत्र नित्यैकार्थीभावस्यैव बोधनादिति। *एवञ्च=गतिकारकेतिपरिभाषायाङ्कारकशब्दमात्रस्योपादानेन कारकविभक्त्यन्तस्य कृद्भिः समासविधायकं यद्यच्छास्त्रन्तेषां कृदन्तात्सुबुत्पत्तेः प्राक्प्रवृत्तिरित्यस्य सिद्धौ चेत्यर्थः। *अत एव=कारकसामान्यविषयकत्वादेव। *तदंशे=कारकांशे। *प्रमाणन्नोपन्यस्तमिति*। एवं चायमंशो वाचनिक इति लब्धम्। ननु भाष्योक्तपरिभाषाप्रत्याख्यानविरोध इत्यत आह—*परिभाषा नेत्यादि*। *विशिष्टायाः=गतिकारकोपपदोतिङ्यंशविशिष्टायाः। *अकर्त्तव्यत्वपरमिति*। अंशत्रयोपेताऽपूर्वा न कर्त्तव्या किं तु कारकेत्यंशविशिष्टा अपूर्वा कर्त्तव्या इति भावः। तदंशकल्पनायां मानमाह—*अत एवेति*। तदंशोऽपूर्वत्वादेव।

*दिगिति*। अयम्भावः—अत्र भाष्येऽतिङिति किमर्थम्—कारको व्रजति, हारको व्रजति। अतिङिति शक्यमवक्तुम्। इह कस्मान्न भवति–कारको व्रजति ?। सुप्सुपेति वर्तते। अत उत्तरं पठति अतिङिति तदर्थस्यायम्प्रतिषेधः।

(शे०) मा भवानिति । समासे सति व्यवहितप्रयोगो न स्यादिति सूचयितुं भवानिति । इदमुपलक्षणम्—कारको व्रजतीत्यादेर्भाष्यो-

---

(चं०) कस्य ? । तिङर्थस्य । कः पुनास्तिङर्थः ? । क्रिया । (अत्र क्रियायास्तिङर्थत्वकथनं तस्याः प्राधान्याभिप्रायेण) । यदि क्रियावाचकस्य प्रतिषेधस्तर्हि-लाघवादक्रियेत्येवास्तु इत्याशयेन तदुक्तं क्रियाप्रतिषेधो वा । अथ वा व्यक्तमवेदम्पठितव्यमुपपदमक्रियेति । अथाक्रियेति किम्प्रत्युदाह्रियते—कारको गतः ।

अत्र कैयटः—गतशब्दः क्रियावाच्युपपदं तत्र तुमुन्ण्वुलाविति ण्वुल् । कर्तुं गत इत्यर्थः । अत्र प्रकृतिवाच्यक्रियाश्रयो यदि ण्वुल् तदा तदाश्रयः समासनिषेधोऽपि स्यात् । ततो भाष्यकृतोक्तं नैतत् क्रियावाचीति । प्रत्ययार्थस्य कर्तुः प्राधान्याच्च प्राधान्येन क्रियावाचीत्यर्थः । अत एव भाष्ये किं तर्हि द्रव्यवाचीति ।

नन्वेवमत्र समासः स्यादिति चेन्न । तस्यानुपपदत्वात् । यद्यपि धातोः क्रियावाचकत्वन्तदाश्रयो ण्वुल् स्वीक्रियते तथापि तस्योपपदसंज्ञाऽन्वर्थाभावान्न प्राप्नोतीति भावः । वस्तुतो नैतत्क्रियावाचीति भाष्यस्वारस्यादत्र ण्वुलपि न । प्रधान्येन क्रियावाचकस्यैव प्रत्ययोत्पत्तिनिमित्तत्वादिति भावः । इदं तर्हि कारकस्य गतिः । कारकस्य व्रज्येति । भावेऽत्र प्रत्ययसद्भावेन क्रियावाचित्वमस्तीति पूर्वपक्ष्याशयः । एतदपि द्रव्यवाचि । कथम् । कृदभिहितो भावो द्रव्यवद्भवतीति । लिङ्गसङ्ख्यासम्बन्धाद् द्रव्यवाचित्वमिति भावः ।

अत्र कैयटः । धातुरत्र साध्यभूतां क्रियाम्प्रतिपादयति, प्रत्ययस्तु तस्या एव क्रियाया उपसंहृतक्रमभूतां सत्त्वरूपतामाह । प्रत्ययार्थश्च प्रधानमिति यत्सुबन्तन्न तत्क्रियावाचि, यत् क्रियावाचि तन्न सुबन्तम् । एतेनात्रापि ण्वुल् न सम्भवति । "तुमुन्ण्वुलौ" ( पा० सू० ३ । ३ । १० ) इति सूत्रे क्रियार्थायामिति स्त्रीलिङ्गनिर्देशेन क्रियार्थायाः क्रियाया एव लाभे पुनः क्रियाग्रहणेन साध्यमात्रावस्थक्रियाप्रतिपादकस्यैव ग्रहणात् । न च कारको व्रजतितरामित्यत्र समासाभावार्थं तदर्थंप्रतिषेध आवश्यक इति वाच्यम् । तादृशप्रयोगाणामभिधानाभाव इत्याशयात् । कैयटोक्तोपसंहृतक्रमभूतामित्यस्योपसंहृतक्रमत्वसमानाधिकरणवैजात्यरूपामित्यर्थः । ततः सिद्धान्तिना एवन्तर्हि सिद्धे सति यदतिङिति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यः अनयोर्योगयोर्निवृत्तं सुप्सुपेति । किमेतस्य ज्ञापने प्रयोजनम् । "गतिकारकोपपदानां कृद्भिः सह समासो भवति प्राक् सुबुत्पत्तेः" इति परिभाषा न कर्त्तव्या भवति । अत्रानयोर्योगयोरित्युपादानेनातिङ्ग्रहणस्यैव पूर्वयोगनियामकत्वमपि कल्प्यते । अतिङन्तः समास इतिसूत्रद्वयविहितः समासो विशेष्यत इति भावः । एतदर्थस्तूक्त एव ।

न च प्रपचतितराम्, प्रजल्पतितरामितिप्रयोगः "तिङि चोदात्तवति" (पा० सू० ८ । १ । ७१) इतिसूत्रे भाष्ये दृश्यते । तत्र हि तिङ्ग्रहणस्य 'आमन्द्रैरिन्द्र हरिभिर्याहि' इत्यत्र प्रयोजनमाभिधाय "यत्क्रियायुक्ताः" इतिन्यायेन मन्द्रश-

(शे०) कस्य । *किञ्च माङ उपपदत्वे महासञ्ज्ञाकरणबलात् 'मा कदाचिदवर्ण भूत्'इति "एच"(पा० सू० १ । १ । ४८) इति सूत्रस्थे भाष्यप्रयोगे "मा कदाचिदप्यवृत्तिर्भूत्"इति "तद्धितार्थ"(पा० सू० २ । १ । ५१)इति सूत्रस्थभाष्यप्रयोगे च द्वित्रिपदव्यवधाने प्रयोगो न स्यात्, यथा कर्त्तुं देवदत्तो घटं ग्रामं व्रजतीति न प्रयोगः । *किञ्च माङो नोपपदत्वम् । लुङ्विधौ माङीति सप्तम्याः प्रथमार्थत्वे मानाभावात् । *तस्योपपदसञ्ज्ञायां फलाभावाच्च । *तुमुन्विधौ तु "क्रियार्थोपपदस्य"इत्यर्थमुपपदसञ्ज्ञावश्यकेति दिक् ।

---

(चं०) व्यस्प्रत्ययगतित्वात्तन्निवर्त्यं यदि यन्निरूपितङ्गतित्वन्तस्यैवोदात्तवतो ग्रहणं तदा यत्प्रकरोति इत्यत्र प्रत्ययोदात्तत्वेनोदात्तवति गतिनिघातो न स्यात्सप्रत्ययगतित्वादिति तिङ्ग्रहणङ्कर्त्तव्यमिति रीत्या तत्प्रयोजनमभिधाय यदि तिङ्ग्रहणं क्रियते, आमन्ते न प्राप्नोति—प्रपचतितरां प्रजल्पतितरामित्युक्तं, तत्र नित्यसमासवारणायातिङ्ग्रहणमस्त्विति वाच्यम् । तिङि चोदात्तवतीतिसूत्रस्थभाष्यप्रामाण्येन तत्र नित्यसमासस्येष्टत्वादिति केचित् । वस्तुतोऽत्रातिङ्ग्रहणेन गतिसमासनिषेधात्सुप्सुपेत्यस्य वैकल्पिकत्वात्समासाभावेऽपि "तिङि चोदात्तवति"(पा० सू० ८ । १ । ७१)इति सूत्रस्थभाष्यं सुयोजमिति प्रकृतसूत्रस्थमतिङ्ग्रहणस्य सुप्सुपेत्येतन्निवृत्तिज्ञापकतापरम्भाष्यं सत्यमेव ।

माङ उपपदत्वमङ्गीकृत्य मूले मा भवान्भूदिति प्रत्युदाहृतम् । वस्तुतस्तु तस्योपपदत्वमेव नेत्याशयेनाह—*किञ्चेत्यादि* । समीपोच्चारितत्वं यस्य तस्यैवोपपदत्वमिति भावः । ननु पूर्वोक्तमत्र सप्तम्यन्तपदघटितसूत्रविधेयप्रत्ययप्रकृत्यर्थान्वयित्वरूपम्पारिभाषिकमुपपदत्वमुष्ट्रप्रणाय इत्यत्रेवास्त्येवेत्यत आह—*किञ्च माङो नोपपदत्वमिति* । *मानाभावादिति[2]* ।

नन्वस्योपपदसंज्ञासिद्ध्यर्थमेव प्रथमार्थत्वमस्त्वित्यत आह—*तस्योपपदसंज्ञेति* । उपपदसंज्ञां स्वीकृत्य प्रकृतसूत्रेण समासं वारयितुमतिङ्ग्रहणं कर्त्तव्यमिति तदपेक्षया माङीति सप्तम्याः प्रथमार्थत्वाभावकल्पनमेव वरमिति भावः ।

ननु "तुमुन्ण्वुलौ क्रियायाम्" ( पा० सू० ३ । ३ । १० ) इति सूत्रे क्रियायामित्यस्याः सप्तम्या अधिकरणार्थत्वाभावकल्पने किम्मानमत आह—*तुमुन्विधाविति* ।

---

(१) प्रथमार्थे सौत्री सप्तमी हि उपपदसंज्ञालिङ्गम् । अत एव पशौ इत्यादौ नोपपदत्वमिति भावः ।

(२) अस्य प्रतीकस्याशय आदर्शपुस्तके नास्ति, किं तु केवलं प्रतीकमेव । अतोऽत्र ग्रन्थत्रुटिः प्रतिभाति ।

(शे०) अतिङ्ग्रहणामिति । न च कारको गत इत्यत्र सुबन्तोपपदस्य समासव्यावृत्तये *तिङन्तार्थ*क्रियाबोधकाघटित इत्यर्थकं तदिति वाच्यम् । तस्य द्रव्यवाचितया *तिङन्तार्थत्वाभावेन तेन तद्वारणस्याशक्यत्वात् । *किञ्च गतादेर्द्रव्यवाचितया क्रियावाचकोपपदत्वाभावेन ण्वुल् एव तत्राप्राप्तेः । क्रियावाचकशब्दग्रहणे क्रियायाः साध्यमात्रावस्थाया एव ग्रहणस्य "गतिकारकोपपदात्"(पा० सू० ६।२।१३९)इति सूत्रे प्रकृतसूत्रे च भाष्ये ध्वनितत्वात्* । प्रकृतसूत्रे 'उपपदमक्रिया'इति न्यासेऽक्रियेत्यस्येदं प्रत्युदाहरणमाशङ्क्यास्य क्रियावाचित्वाभावाद् दूषितम् । तत्र क्रियावाचित्वाभावादत्र प्रत्युदाहरणत्वं न । तुमुन् भवतीत्यस्यान्याय्यत्वात् ।

न च धातोः क्रियावाचित्वेन तन्निबन्धनस्तुमुन् स्यादेवेति वाच्यम् । उपपदमिति महासञ्ज्ञया तुमुन्विधावपि *पदत्वपर्यन्तं निवेशात् । तस्मात्तत्र तुमुन्ण्वुलोरसाधुत्वे एव भाष्यतात्पर्यम् । अर्थमात्रग्रहणे तु गुणीभूतादेरपि ग्रहणमिति गतपाकादियोगेऽपि कारकविभक्तिकृत्वसुच्क्त्वादीनां साधुत्वं भवत्येवेति भाष्यप्रदीपोद्द्योते विस्तरः । कारको व्रजतितरामित्यादेस्त्वनभिधानमेवेति भावः ।

सुपेत्येतदिति । *सुबित्यस्याप्युपलक्षणमिदम् । *किञ्च

---

(चं०) *तिङन्तार्थेति* । तिङन्तशब्दजन्यशाब्दबोधविषयेत्यर्थः । अस्ति च कारको गत इत्यत्र गतशब्दस्य तथात्वम्, गच्छतीतिशब्दजन्यशाब्दबोधविषयभूता या गगनानुकूलव्यापाररूपा क्रिया सा गतशब्दजन्यशाब्दबोधेऽपि प्रकारतया भासते इति भावः । *तिङन्तार्थत्वाभावेनेति* । तिङन्तशब्दजन्यबोधे या प्राधान्येन भासमाना क्रिया साऽत्र नास्ति कर्तुः प्राधान्यादिति भावः । गत इत्यस्योपपदत्वमेव नास्ति इत्याशयेनाह—*किञ्चेति* । यदि गतशब्दे सति ण्वुल् स्यात्तदा गतशब्दस्योपपदत्वं स्यात् तदेव तु नात्र, ण्वुलस्तत्राप्राप्तेरिति भावः ।

*भाष्ये ध्वनितत्वादिति* । "नैतत् क्रियावाचि"इति भाष्येण ध्वनितत्वादित्यर्थः । *पदत्वपर्यन्तमिति* । क्रियाफलकक्रियावाचकप्रकृतिके पदे सति तुमुन्ण्वुलोर्विधानादिति मूले सुपेत्येवोक्तम् । तेन प्रथमान्तसुब्ग्रहणस्यावश्यकत्वमिति प्रतीयते । तत्सम्बन्धाद्राजदर्शीत्यत्र पूर्वपदस्य पदत्वान्नलोपासिद्धिरिति फलमप्युपलभ्यते,परन्त्वेतन्न युक्तम् "अनयोर्योगयोर्निवृत्तं सुप्सुपा"इति भाष्यविरोधादित्याशयेनाह—*सुबित्यस्येति* । राजदर्शीत्यस्य सिद्धिस्तु महासञ्ज्ञायास्तत्र सुबन्तसम्बन्धितया सुबन्तस्यैव तत्रोपपदत्वमिति नलोपसि-

(शे०) कारको व्रजतीत्यस्यैव भाष्ये प्रत्युदाहृतत्वेन तद्व्यावृत्तेः सुबिति प्रथमान्तानुवृत्त्यैव सिद्ध्या तद्वैयर्थ्यमिति प्रथमान्तनिवृत्तिरेव तेन बोधयितुं युक्ता । परिभाषा*ऽकरणलाघवानुरोधेन तु भाष्ये सामान्यापेक्षज्ञापकमाश्रित्योभयोर्निवृत्तिरुक्ता । पूर्वसूत्रेऽपीति । तत्र गत्यंशेऽतिङित्यस्य सम्बन्धे *फलाभावेन तिङन्ताघटितः समास इत्येवं समासविशेषणतैव । *अत एव प्रपचतितरामित्यादौ *न गतिसमासः । *किं तु "उदात्तवता गतिमता च तिङा"इति वार्त्तिकेन समासः। तत्र *तिङेत्यस्य तिङ्घटितेनेत्यर्थः।सहेति योगविभागेन वा । तत्रार्थाधिकारानुरोधेनात्रापि* अतिङन्तः समास इति व्याख्यातम् ।

अत एव "अनवक्लृप्त्यमर्षयोः"[पा० सू० २ । ३ । १४५]इति सूत्रे किंवृत्तस्यानाधिकारादकिंवृत्तग्रहणानर्थक्यमित्युक्त्वा सामर्थ्यादुपपदसञ्ज्ञार्थं तर्हीत्याशङ्क्यातिङितिप्रतिषेधात्सञ्ज्ञाऽऽनर्थक्यमित्युक्तं सङ्गच्छते* । अतिङित्यस्योपपदविशेषणत्वे तदसङ्गतिः स्पष्टैव* । उपपदमतिङन्तेनेति तु नार्थः* । "अतिङिति ज्ञापयति-अनयोर्योगयोर्निवृत्तं सुप्सुपेति । केनेदानीं समासः ? समर्थेन"इति भाष्यासङ्गतेः*, लुप्ततृतीयान्तत्वकल्पने

---

(चं०) ख्या भविष्यति । यद्यन्यतरानुवृत्तिखण्डनपरं तद्भाष्यमितिकल्पनया तृतीयान्तनिवृत्तिरेवोक्तेति सुपेत्येतावन्मात्राभिधानस्य भावकल्पना तदा तथाभावकल्पनाऽप्ययुक्तेत्याशयेनाह—*किञ्चेति* । स्वमते उभयनिवृत्त्युपपादनभावमाह-*परिभाषेति* । तृतीयान्तस्यापि निवृत्त्या सुबुत्पत्तेः प्राक् समासप्रवृत्तिलाभादिति भावः ।

*फलाभावेनेति* । गतेस्तिङन्ताभिन्नत्वस्य स्वत एव सत्त्वादिति भावः । *अत एव=समासविशेषणत्वादेव । *न गतिसमास इति* । न गतेर्नित्यसमास इत्यर्थः, तदाह—*किन्त्विति* । इदं प्रपचतितरामित्यस्य समस्तत्वमभ्युपेत्य । वस्तुतोऽत्र समाससंज्ञाया अभावेऽपि क्षत्यभाव इति प्रागुक्तम् । *तत्रेति* । पूर्वसूत्रे तादृशव्यवस्थासिद्धौ । *अत्रापि=प्रकृतसूत्रेऽपि । *सङ्गच्छत इति* । समासस्य तिङघटितत्वं शास्त्रेण निषिद्धमित्यकिंवृत्तस्योपपदत्वे फलाभाव इति भावः । *स्पष्टैवेति* । सूत्रेऽकिंवृत्तस्येत्यस्याभावेऽकिंवृत्तस्योपपदत्वलाभो न स्यादित्यन्यथानुपपत्त्याऽकिंवृत्तग्रहणस्यावश्यकत्वादिति भावः । अतिङिति सौत्रत्वात् लुप्ततृतीयान्तमित्याशयेन यत्केनचिद् व्याख्यातं, तद् दूषयति-*उपपदमतिङन्तेनेति नार्थ इति* ।

*भाष्यासङ्गतेरिति* । शब्देनोत्तरपदस्यानुपादानाभिप्रायेण केने-

(शे०) मानाभावाच्च, भाष्यरीत्या प्रत्युदाहरणाभावाच्च ।

न चैवं तरबन्ते तद्वारणाय तत्र तस्य चारितार्थ्ये कथं तत्र* सुपेत्यस्यासम्बन्धे तस्य ज्ञापकत्वमिति वाच्यम् । उपपदमिति सूत्रसम्बद्धेनैवानेन* तिङन्तव्यावर्त्तकेन प्राचीनपठितपरिभाषानुरोधेन सूत्रद्वयेऽपि सुप्सुपेत्येतदसम्बन्धज्ञापनात् । तदुक्तं भाष्ये अतिङ्ग्रहणं ज्ञापयति अनयोर्योगयोर्निवृत्तं सुप्सुपेति । तत्र पूर्वसूत्रे गत्यंशे एव तदसम्बन्धः परिभाषानुरोधादेव; तदाह—तथा चेति । कारकांशेऽप्येकदेशानुमत्येष्ट इति गम्यते । *भाष्याच्च "कर्त्तृकरणे"(पा०सू०२।१।३२)इति सूत्रविहितसमासो

---

(चं०) दानीमिति तत्र प्रश्नः । समर्थपरिभाषोपस्थित्यभिप्रायेण च समर्थेनेत्युत्तरम् । तच्चातिङन्तेनेति व्याख्याने विरुध्यतेऽतिङन्तरूपोत्तरपदस्य तेन बोधनादसङ्गतं स्यादिति भावः । *तत्र=पूर्वसूत्रे । प्रपचतितरामित्यत्र नित्यसमासव्यावृत्तेस्तत्फलत्वसम्भवादिति भावः । *अनेन=अतिङ्ग्रहणेन । यदि सुप्सुपेत्यस्य सम्बन्धः प्रकृतसूत्रे स्यात्तदा कारको व्रजति हारको व्रजतीत्यत्र समासव्यावृत्तिः सिद्धैवेति तिङन्तव्यावर्त्तकमतिङ्ग्रहणं व्यर्थमेव स्यात् । * भाष्याच्चेति * । परिभाषास्वरूपप्रदर्शनपरगतिकारकोपपदानामिति भाष्याच्चेत्यर्थः ।

ननु कारकस्यापि सुबुत्पत्तेः प्राक् समासस्वीकारे धनक्रीतेत्यादौ क्रीतशब्दादुत्तरपदात्सुबुत्पत्तेः प्राक्समासे "क्रीतात्करणपूर्वात्" ( पा० सू० ४। १। ५० ) इतिसूत्रेणादन्ताद्विधीयमानो ङीप् स्यादत आह-*कर्तृकरणे इति* । अत्रेदमवधेयम् । प्रकृतसूत्रभाष्येऽनयोर्योगयोर्निवृत्तं सुप्सुपेत्युक्तम् त्वत्र निवृत्तमित्युक्तं तत्रोपाध्यायैरतिङित्यस्योभययोगशेषत्वं योगविभागेन प्रदर्शितम्, अतिङन्तश्च समास इति च व्याख्यातम् । तत्र समासस्य तिङन्तत्वं कथमपि न सम्भवतीति तिङन्तशब्दस्य तिङन्तघटिते लक्षणोपाध्यायाभिप्रैतैव । कारकांशे चोपायाप्रदर्शनपरभाष्याच्च तदंशे प्राचीनपठितपरिभाषाघटकत्वमाश्रितम् तु बहुलग्रहणस्य तदंशसाधकत्वमभिहितम् ।

यदि तु बहुलग्रहणेनैव तदंशसाधकं, बहुलग्रहणमेव तदंशस्याप्रवृत्तिसाधकञ्चेति व्याख्यायते तदेकस्य भावाभावसाधकत्वं विरुद्धमिवाभातीत्येवमेवोक्तम् । तत्र योगविभागेनोभयशेषत्वं स्वरितत्वं विना न सम्भवति शेषत्वस्य तदेकवाक्यतारूपत्वादित्यत्रोपपदमितिसूत्रसम्बद्धेनैवानेनेत्युक्तं, न तु योगविभागः स्वरितश्चोक्तं गौरवप्रसङ्गात् । तत्र गतिकारकोपपदानां समासस्तु सिद्ध एवेति तदंशस्यान्यत्र कल्पतरीत्या सुबुत्पत्तिरुत्तरपदाद्यदा स्यात्तदैव स्यादिति तत्सङ्कोचकवैलक्षण्यसूचकं प्राक्सुबुत्पत्तेरितीति गतिकारकोपपदानां कृद्भिर्यः समासः स प्राक् सुबुत्पत्तेरेवेत्येव वचनव्यक्तिरभिप्रेता । यत्तु गत्या-

(पं०)दीनां यः समासः स कृद्भिरेव भवति,स च सुबुत्पत्तेः प्रागेवेति नार्थः। तथा सति प्रपचतितरामित्यादावामन्तेन समासः "कुगति"(पा० सू० २। २। १८) इत्यनेन न प्राप्नोति तत्राऽव्ययपूर्वपदप्रकृतिस्वरबाधेनोत्तरपदप्रकृतिस्वर इष्यमाणो "गतिकारकोपपदात् कृत्"(पा० सू० ६। २ १३९)इति सूत्रे कृद्ग्रहणादप्रसक्तस्तत्प्रत्याख्यानेन भाष्यकैयटयोः सङ्गृहीतो विरुध्येत । यच्च "तिङि चोदात्तवति"(पा० सू० ८। १। ७१)इति सूत्रे यदि तिङ्ग्रहणं क्रियते तदा प्रपचतितरामित्यामन्तेन समासे निघातो न प्राप्नोतीत्यतिङ्ग्रहणस्याऽव्याप्तिमुपन्यस्य तत्प्रत्याख्यानाद् गतिनिघातेनाव्ययपूर्वपदप्रकृतिस्वरबाधनादिष्टसिद्धिरिति भाष्यकृतोक्तं तच्च यदोत्तरपदप्रकृतिस्वरविधायके कृद्ग्रहणञ्च प्रत्याख्यातन्तदेति वेदितव्यम् । असति त्विह कृद्ग्रहणे तावतैव शेषनिघातेनेष्टासिद्धेस्तिङ्ग्रहणे सत्यपि नास्ति दोष इति "तिङि चोदात्तवति'('पा० सू० ८। १। ७१) इति सूत्रे कैयटोपाध्यायैरुक्तत्वादिति । तन्न । सुप्सुपेत्यस्यानुवृत्तौ प्रकृतसूत्रस्थातिङ्ग्रहणवैयर्थ्यप्रदर्शनपरभाष्येण सुप्सुपेत्यस्य निवृत्तौ बोधितायां गतिकारकोपपदानां यः समासः प्राप्तः स सुबुत्पत्तेः प्रागिति विज्ञाते सति कारको व्रजतीत्यत्र पुनः समासे प्राप्ते सत्यतिङ्ग्रहणेन समाससंज्ञायास्तिङन्ताविषयकत्वे लब्धे सति गत्यादीनां कृद्भिर्यः समास इत्येवमुद्देश्यपर्यवसाने तत्रैव सुबुत्पत्तिप्राक्कालिकत्वं विधातुमुचितमिति गत्यादीनां य कृद्भिः सह समासः स प्राक् सुबुत्पत्तेरेवेत्येव वचनव्यक्तिर्भविष्यतीति गत्यादीनां यः समासः स कृद्भिरेवेति नियमसम्भावनाकरणस्यानौचित्यात् । किञ्च प्रपचतितरामित्यत्र चेत्समास इष्टः स्यात्तर्ह्युपपदस्य गतेश्च यः समासः स तिङन्ताघटित इत्यर्थेऽतिङ्ग्रहणस्योभयशेषत्वलाभे सति स सुप्सुपेत्यनेनोपपाद्यो न तु तत्र गतिसमासः स्वीकार्यः।

यच्च प्रपचतितरामित्यत्र गतिसमासमभ्युपेत्य "गतिकारकोपपदात्" इतिसूत्रस्थभाष्यकैयटविरोधोद्भावनं तन्न युक्तम् । वैकल्पिकसुप्सुपेति समाससत्त्वेऽपि तस्य भाष्यस्य सुयोजत्वात् । तस्मिन्प्रयोगे गतिसमासे कृद्ग्रहणसत्त्वे उत्तरपदप्रकृतिस्वरो न प्राप्नोतीत्येवन्तु नोक्तम् । यच्च "तिङि चोदात्तवति"इतिसूत्रस्थभाष्यविरोधोद्भावनन्तस्य त्ववसर एव नास्ति । न हि तत्र प्रपचतितरामित्यामन्तेन समासे निघातो न प्राप्नोतीत्येवम्पाठो भाष्येऽस्ति किं तु यदि तिङ्ग्रहणं क्रियते आमन्ते न प्राप्नोति; प्रपचतितरांप्रजल्पतितरामित्येव पाठस्तस्य तु वैकल्पिकसमासस्य प्रवृत्तावप्रवृत्तौ चोपपत्तिर्भवति। वैकल्पिकसमासप्रवृत्तिपक्षेऽप्येवं क्रमः । भिन्नपदसापेक्षत्वात्समासो बहिरङ्गः। आम् तु स्वार्थिकत्वेनान्तरङ्गः समासात्प्राक् प्रवर्त्तते । आम्सहितस्य तरबन्तस्य च कःप्यप्रयोगेण तन्मात्रेणैकार्थीभावासम्भवादामन्तेनैव समास इति।

यच्च वैकल्पिकसमासस्य नित्येन गतिसमासेन बाध इति । तदपि न । नित्यसमासविधायकस्य तिङन्ताघटित इत्यर्थः कैयटादिसम्मत इत्यतो नित्यसमासप्राप्तेरेवाभावात् । यद्यप्यतिङिति न बहुव्रीहिः किन्तु तत्पुरुषो ला-

(शे०) बहुलग्रहणात् क्वचित्सुबुत्पत्त्यनन्तरमपि। यथा-सा हि तस्य धनक्रीते स्यादौ। प्राक्सुबुत्पत्तेरिति। *स्त्रीप्रत्ययोत्पत्तेः प्रागित्यपि बोद्धयम्। अश्वक्रीतीभि। अश्वेन क्रीतेति करणस्य कृता समासः। "क्रीतात्करणपूर्वात्"(पा० सू० ४-१-५०)इति ङीष्। सुबन्तेन समासे पूर्वं टाष्यदन्तत्वाभावात्स न स्यादिति भावः। व्याघ्र्यामपि आङो घ्राशब्देन वेराघ्राशब्देन गतिसमासः। कच्छपीत्यत्रापि सुपीति योगविभागात्के कच्छे पिबतीत्यर्थे उपपदसमासः॥

अमैवेति। तुल्यविधानमित्यध्याहारलब्धम्। *सञ्ज्ञाया स्तुल्यविधानत्वमाश्रित्य तत्सञ्ज्ञकस्य तुल्यविधानत्वमुक्तम्। येनामेव विधीयते तेन यस्योपपदसञ्ज्ञा विधीयते तदुपपदममव्ययेन समस्यते नान्येन तुल्यविधानमित्यर्थस्तत्फलितमनुवदति—तदेवेति। कालादेरग्रेप्रभृतेश्चामैव तुल्यविधानत्वाभावान्न दोषः। अमिति णमुल्खमुञोः सामान्यग्रहणम्। तेन चोरंकारमित्यप्युदाहरणम्।

तृतीया प्र॰ (पा० सू० २।२।२१।)॥ वा समस्यन्ते इति। यद्यपि उपपदनिमित्तकृद्विधौ समर्थपरिभाषोपस्थितेरुपपदसञ्ज्ञासूत्रे भाष्ये उक्तत्वेनोपपदकृदन्तयोर्व्यपेक्षा दुरुपपादा। कृतोऽसाधुत्वापत्तेः। *अत एव महान्तं कुम्भं करोतीत्यत्र सविशेषणत्वेनासामर्थ्यान्नाणिति "तत्रोपपदम्"(पा० सू० ३-१-९२)इत्यत्र भाष्ये स्पष्टम्।

---

(चं०) घवादिति, तन्न। "अनवक्लृप्त्यमर्षयोः"[पा० सू० २। ३। १४]इति सूत्रेऽतिङिति प्रतिषेध इति प्रतीकमुपादाय न विद्यते तिङ् यस्मिन्समासे सोऽतिङिति बहुव्रीहिसमासाश्रयणादिति व्याख्यानपरकैयटग्रन्थविरोधात्।

यदपि माभूत्तरामित्यत्रोपपदमितिसूत्रेण समासवारणायातिङ्ग्रहणस्य चारितार्थ्यसम्भवेनातिङ्ग्रहणस्य ज्ञापकत्वासम्भव इति दूषणाभिधानं तत्तु माङ उपपदत्वाभावेनैवालब्धावसरम्। माङीतिसप्तम्याः प्रथमार्थकत्वङ्कल्पयित्वा माङ उपपदत्वं स्वीकृत्य प्रकृतसूत्रस्थपरिभाषाज्ञापकपरभाष्यासङ्गतिकल्पनापेक्षया सप्तम्याः प्रथमार्थत्वाभावकल्पनमेव वरमिति दिक्।

ननु सुबुत्पत्तेः प्राक्समासस्वीकारेऽपि लिङ्गापेक्षस्य प्रत्ययस्य समासात्प्राक् प्रवृत्तौ व्याघ्री इत्यादिप्रयोगाणामगतिरेवेत्यत आह-*स्त्रीप्रत्ययेति*।

ननूपपदसंज्ञाया अमा तुल्यविधानत्वेऽपि संज्ञिनः कथन्तुल्यविधानत्वमत आह—*संज्ञाया इति।

(शे०) विशिष्टस्य तु नोपपदसञ्ज्ञाऽपदत्वात्* । तथाप्येकार्थीभाव एव *वाग्रहणात्सञ्ज्ञाऽभावोऽत्र यथा गङ्गापारमित्यत्राव्ययीभावत्वाभावः ।

*न च सञ्ज्ञाया भावाभावाविष्येते इति भाष्ये महाविभाषेति शेषः । एवञ्च महता मूलकेनोपदंशं भुङ्क्ते इत्यसाधुरित्याहुः* । *उपदंशे मूलकादेरार्थकर्मत्वस्यापि सत्त्वात् सामर्थ्यम् । विभक्तिस्तु *प्रधानक्रियानुरोधित्वात्परत्वाच्च तृतीयैवेति निरूपितमन्यत्र ॥

क्त्वा च (पा०सू० २ । ३ । २२ ।) ॥ क्त्वेति तृतीयान्तम्* । अलंकृत्वेति । *"अलंखल्वोः"(पा० सू० ३ । ४ । १८)इति सूत्रम् "उपदंशस्तृतीयायाम्"(पा० सू० ३–४–४७) इत्यतः पूर्वमिति भावः ।

अथ तत्पुरुषासाधारणसमासान्तानाह—तत्पुरुषस्य [पा० सू० ६ । ४ । ८४ ।] ॥ द्व्यङ्गुलमिति । तद्धितार्थेति समासः* ।

---

(चं०) *अत एव=समर्थपरिभाषाया उपस्थितेरेव । *अपवादत्वादिति* । महासंज्ञाबोध्यार्थाभावेन नोपपदशब्देन समुदायग्रहणमिति भावः । *वाग्रहणादिति । वार्थस्य शब्दस्य ग्रहणादित्यर्थः । एकार्थीभाव एव संज्ञाभावकल्पने भाष्यविरोधशङ्कां वारयति—*न चेति* ।

*आहुः—सिद्धान्तानुसारिणः । उभयत्र विभाषेयम् । अमैव तुल्यविधानस्य प्राप्ते यथा मूलकेनोपदंशमित्यपि भवति । अन्येनापि तुल्यविधानस्याप्राप्ते यथा उच्चैःकारमाचष्ट इति । अत्र "अव्ययेऽयथाभिप्रेताख्याने"(पा०सू० ३ । ४ । ५९ । )इति सूत्रेण क्त्वाणमुलौ भवतः । समासपक्षे कृदुत्तरपदप्रकृतिस्वरेणोत्तरपदाद्युदात्तत्वम्भवति । लितीतिसूत्रविषयतायास्तत्र सत्त्वात् । एवञ्चोच्चैरित्यनुदात्तम । असमासे तु प्रातिपदिकस्वरेणान्तोदात्तमुच्चैरिति भवतीति विशेषः । अमूग्रहणं तु पूर्वसूत्रादनुवृत्त्या भवति । तेन पर्याप्तो भोक्तुमित्यत्र न ।

ननु मूलकेनोपदंशमित्यत्र मूलकेनेति तृतीयान्तस्य भुजिक्रियाम्प्रति करणत्वेनान्वयादुपदंशमित्यनेनानन्वयादसामर्थ्येन कथं समासप्राप्तिरत आह—*उपदंश इति । *प्रधानक्रियानुरोधित्वादिति* ।

प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक् ।
शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते ॥

इत्युक्तेः ।

"क्त्वा च"(पा० सू० २ । २ । २२ । इत्यत्र क्त्वेत्यस्य प्रथमान्तत्वेऽर्थासङ्गतिरत आह—*तृतीयान्तमिति । "तृतीयाप्रभृतीनि"(पा० सू० २ । २ । २१ । ) इत्यनेनान्यथासिद्धिं परिहरति-*अलंखल्वोरितीति । *तद्धितार्थेति समास इति* । द्वे अङ्गुली प्रमाणमस्येत्यर्थः ।

(शे०) द्वन्द्वार्थमिति* । अह्नोऽह्नोऽवयवीभूता मानुषी रात्रिरित्याद्यर्थे षष्ठीतत्पुरुषाद्यनभिधानमिति* भावः । सर्वरात्र इति । "पूर्वकालैक"(पा०सू० २ । १ । ४९)इति समासः । "पुंवत्कर्मधारय"(पा०सू० ६ । ३ । ४२)इति पुंवत् । "सर्वनाम्नो वृत्तिमात्रे" (का० वा०)इति वा* ।

अतिराजीति । *उत्तरपदावयवत्वस्य भाष्यासंमतत्वेन टितोऽनुपसर्जनत्वान्ङीप् ।

द्व्यहीन इति । *समासान्तविधेरनित्यत्वान्न टच् । *अत एव द्विगोर्वेत्यनुवर्त्तमाने "रात्र्यहःसम्वत्सराच्च"(पा० सू० ५ । १ । ८१) इति चारितार्थ्यम् । समासान्ते हि रात्र्यहरन्तद्विगोरप्रसिद्धेरिति बोद्ध्यम् । अनित्यत्वादिति । *अत एव समासान्तप्रकरणे सा नेति ङ्याप्सूत्रे भाष्ये उक्तम् । मद्रराज्ञीति । टचि "भस्याढे"इति पुंवत्त्वे टिलोपे मद्रराजीति स्यादिति भावः ॥

अन्होऽह्न(पा० सू० ८ । ४ । ७ । )॥ अत इत्येव पूर्वपदविशेषणतया सामानाधिकरण्येनान्वयेऽदन्तपूर्वपदेत्यर्थलाभेऽन्तग्रहणं स्पष्टार्थम्* । अन्ह इति नान्तानुकरणात्षष्ठी । द्व्यन्हेति । द्वयोरह्नोर्भवेत्यर्थः । इदं तद्धितार्थद्विगोर्विशेष्यनिघ्नत्ववादिनां मते* । *वस्तुतोऽस्य स्त्रीत्वमेव नास्ति । "रात्रान्हाहाः"(पा० सू० २ । ४ । २९) इति पुंस्त्वेन बाधात् । *न चेदं सूत्रं रात्राह्नादिशब्दघटितसमासमात्रनिमित्तलिङ्गस्यान्त-

---

(चं०) *द्वन्द्वार्थमितीति* । अत एव "हेमन्तशिशिरावहोरात्रे च छन्दसि" इति निर्देशसङ्गतिः । *अनभिधानमिति* । द्वन्द्वार्थत्ववर्णनपरभाष्यप्रामाण्यात् । *इति वेति* । इष्टेः प्राबल्यात् ।

समासान्तस्य समुदायावयवत्वं सिद्धान्ते, तस्य फलमाह—*उत्तरपदेत्यादि । ननु द्व्यहीन इत्यत्र तद्धितार्थे द्विगौ टचि सति टग्रहणादेव टिलोपे सिद्धे खग्रहणवैयर्थ्यमत आह—*समासान्तविधेरिति । *अत एवेति । समासान्तास्वीकारादेव । न च खे टिलोपवचनसामर्थ्यादेव समासान्ताभावे सिद्धेऽनित्यत्वपर्यन्तानुधावनमफलमिति वाच्यम् । अहीन इत्यत्र तस्य सावकाशत्वात् । *अत एव=लिङ्गविशिष्टपरिभाषाया अनित्यत्वादेव ।

*स्पष्टार्थमिति* । वर्णग्रहणञ्च सर्वत्रेति तदन्तविधिरत्र प्रकरणे नेत्यर्थस्य प्रतिपत्त्यर्थः । अत एव रषाभ्यामित्यत्र न तदन्तविधिः । वस्तुतोऽत्र तदन्तविध्यभावः सरूपाणामितिनिर्देशेनैव सिद्ध इति बोध्यम् । *वादिनांमत इति* । यथाश्रुतकोशार्थग्राहिणाम् । तदेतत्स्पष्टयति—*वस्तुत इति* । प्रत्यासत्त्याश्रयणेन शङ्कते—*न चेति ।

(शे०) रङ्गस्यैव बाधकं न तु बहिर्भूततद्धितार्थनिमित्तलिङ्गस्यापीति वाच्यम्। *सूत्रोपस्थितरात्राह्नादिशब्दार्थविशेष्यत्वप्राप्तस्यैव बाधापत्त्या बहिर्भूतसमाहारविशेष्यत्वप्राप्तस्य बाधानापत्तेः ।

न च पुंस्त्वाधिकारे

'अह्नाहान्ताः क्ष्वेडभेदा रात्रान्ताः प्रागसंख्यकाः' ।

इत्यनन्तरम्

'अर्थान्ताः प्राद्यलंप्राप्तापन्नपूर्वाः परोपगाः ।
तद्धितार्थे द्विगुः संख्या सर्वनामतदन्तकाः' ॥

इत्यमरोक्तेन

परं विरोधे शेषं तु ज्ञेयं शिष्टप्रयोगतः ।

इत्युक्तेरन्ह्राहान्ता इत्यनेन प्राप्तस्य पुंस्त्वस्य तद्धितार्थे द्विगुरिति परोपगत्वेन परत्वाद् बाध इति वाच्यम् । कोशस्य लोकव्याकरणसिद्धलिङ्गानुवादकत्वात् व्याकरणैकवाक्यतया तद्धितार्थे द्विगुरित्यत्र रात्रान्हाहान्तातिरिक्तस्यैव ग्रहणात् । *अन्यथा प्राद्यलंप्राप्तेत्यनेनापि परत्वाद् बाधे प्राह्णः, परागतमहः पराह्ण इत्याद्यसिद्ध्यापत्तेरिति दिक् ॥

क्षुभ्नादिषु च(पा० सू० ८ । ४ । ८) ॥ *तत्पुरुषातिरिक्तोऽह्नन्शब्दान्तः समासः सर्वोऽपि क्षुभ्नादौ । *युवादिरपि क्षुभ्नाद्यन्तर्गण एवेति युवादिषु पाठ इति भाष्येणाविरोधस्तद् ध्वनयन्नाह-अदन्तानुकरणेति । *तत्पक्षे षष्ठ्याः स्थाने व्यत्ययेन प्रथमा ।

स्पष्टार्थमिति । समाहारेऽन्यस्य* वृत्त्यभावात् ।

पुण्याहमिति । पुण्यसुदिनाभ्यामिति क्लीबत्वम् ॥

अग्राख्या (पा० सू० ९ । ४ । २३) । अग्रे भवोऽग्र्यो मुख्यः । अग्र्येत्यादि किम् । देवदत्तस्योरो देवदत्तोरः ।

---

(चं०) तथैव समाधत्ते—*सूत्रोपस्थितेति । *अन्यथेति* । व्याकरणैकवाक्यताया अनङ्गीकार इत्यर्थः ।

*तत्पुरुषातिरिक्त इति* । अत एव पूर्वोक्तस्य पराह्णस्योपपत्तिः ।

ननु दीर्घाह्नीशब्दे क्षुभ्नादित्वात् णत्वाभावकल्पने क्षुभ्नादिषु पाठमनुक्त्वा युवादिषु पाठः करिष्यते इत्युक्तम्भाष्ये तद्विरोध इत्यत आह—*युवादिरपीति । *तत्पक्षे=अदन्तानुकरणपक्षे । *अन्यस्य=संख्यादिभिन्नस्य ।

(शे०) *उपानसमिति । प्रादिमासः ।

अतिश्व इति ॥ *ततोऽधिकवेगवानित्यर्थः । सेवेति । नीचेत्यर्थः ।

आकर्षश्व इति । पञ्चाङ्गुलो धान्यादिकर्षकः काष्ठविशेष आकर्षः । उपमानात्किम् । शुनो निष्क्रान्तो निःश्वा ।

फलकसक्थमिति । *मयूरव्यंसकादित्वात्समासः ॥

नावो(पा० सू० ५ । ४ । ९९) मण्डूकप्लुत्याऽतद्धितलुकीत्यनुवर्त्तते ।

परवल्लिङ्गतया स्त्रीत्वं प्राप्नोतीत्यत आह—क्लीबत्वमिति ।

द्विगोरिति । *खारीशब्दान्ताद् द्विगोरित्यर्थः । अत्राप्यतद्धितलुकीत्येव । तेन द्वाभ्यां खारीभ्यां क्रीतो द्विखारिरित्येव । उदाहरणेऽर्धखारमित्यादौ क्लीबत्वं प्राग्वत्* । अर्द्धखारी इति । "एकविभक्तावषष्ठ्यन्त" इति वचनादुपसर्जनत्वाभावेन न ह्रस्वः । ह्रस्वपाठे तु लोकतो नपुंसकत्वे नपुंसकह्रस्वत्वम् ।

अञ्जलिभ्यामिति । तत्परिमितधान्यादिनेत्यर्थः । अस्य *परिमाणत्वाट्ठञः "अध्यर्ध"(पा० सू० ५-१-२८)इति लुक् ।

जनपदे भवो जानपदः । भावप्रधाननिर्देशस्तदाह—समानेनेति । प्रत्यासत्तिलभ्यमेतत्* । कस्येत्याकाङ्क्षायां सन्निधानाद्ब्रह्मण इति लभ्यते । सुराष्ट्रे इति । *अधिकरणस्य शेषत्वविवक्षया षष्ठीसमासोऽत्र बोद्ध्यः । सप्तमीति योगविभागस्तु न भाष्यारूढः । जानपदेति

---

(चं०)*उपानसमिति* । उपगतमनः उपानसम् । रूढानां शब्दानां यथाकथञ्चिद् व्युत्पादनं कर्त्तव्यमित्ययमेवार्थः स्वीकार्यः ।

*ततः=शुनः ।

ननु फलकमिव सक्थि इति विग्रहेऽप्युपमानसमासो न प्राप्नोति । सक्थिशब्दस्योपमानोपमेयसाधारणधर्मविशिष्टोपमेयवचनत्वाभावादत आह—*मयूरेति ।

द्विगोरर्द्धाच्च खार्या इत्यर्थे द्विगोः परो यः खारिशब्द इति भ्रमः स्यात्तन्निवारणायाह-*खारीशब्दान्तादिति* । *प्राग्वत्=लोकात् ।

*परिमाणत्वाट्ठञ इति* । "अगोपुच्छसंख्यापरिमाणात्"इति पर्युदासाट्ठकोऽप्राप्तिरिति भावः ।

*एतदिति* । समासेनेत्येतदित्यर्थः । मूलोक्तविग्रहे सुराष्ट्रब्रह्मा इत्यत्र समासानुपपत्तिपरिहारायाह-*अधिकरणस्येति* ।

(शे०)किम् । देवब्रह्मा नारदः ।

कुब्रह्म इति । ब्राह्मणपर्यायो ब्रह्मन्शब्दः, श्मशानाद्यधिकृतो ब्रह्मेति वाऽर्थः । तत्रापि मूर्त्तित्रयसत्तायास्तन्त्रेषु प्रसिद्धत्वात् ॥

आन्महतः (पा० सू० । ६ । ३ । ४६) ॥ प्रहीण्यत इति । एवञ्च समानाधिकरणग्रहणं व्यर्थमिति भावः । महाबाहुरिति बहुव्रीहिः । *ननु-स्वरसूत्रे ष्टनोरेव ग्रहणादेकादशेत्यत्राऽऽत्वं न स्यादत आह—आदिनीति । योगविभागस्य भाष्यानारूढत्वादाह—निर्देशादेति । "अन्येषामपि दृश्यते"(पा० सू० ६-३-१३७)इति दीर्घत्वमिति परे । कृते आत्वमिति । "आन्महत"इत्यत्र लिङ्गविशिष्टपरिभाषाऽभावस्य ङ्याप्सूत्रे भाष्ये उक्ततया परत्वात्पुंवत्त्वं बाधित्वाऽऽत्वं स्यादिति न शङ्क्यमिति भावः । महद्भूतश्चन्द्रमा इत्यादौ च्व्यन्ते गौणत्वान्नात्वमिति भाष्ये स्पष्टम् । महत्तो महत्या वेति । पुंवद्भावश्चेति चोऽन्वाचये* इति भावः । समुच्चये चशब्दः, पुंवत्त्वसंनियोगेनैव चाऽऽत्वम् । अत एव भाष्ये स्त्रियामेवोदाहृतमिति *मतान्तरं कैयटे स्पष्टम्

अष्टनः क (का० वा० ) ॥ हविषि किम् । अष्टानां कपालानि= अष्टकपालानि । बहुव्रीहावपीति । *तत्पुरुषे एव समासान्तः सुलभ इति न, यतो बहुव्रीहावप्यच् समासान्तः सुलभ इत्यर्थः । एतेनास्य साधारणत्वात् बहुव्रीहावपीति चिन्त्यमित्यपास्तम् । योगविभागस्य भाष्येऽदर्शनादाह—समाहार इति । एवञ्च "गोरतद्धित"(पा० सू० ५-४-९२) इति टजिति भावः ।

एकादिनवान्तानां द्वन्द्वतत्पुरुषयोः "चार्थे द्वन्द्वः"(पा० सू० २ । २ । २९ । ) इतिसूत्रस्थभाष्य*ध्वनितानभिधानादाह——

(चं०) नन्वेकादशेत्यत्र संख्यावाचके उत्तरपदे आत्वमनुपपन्नं विधायकाभावादित्याशङ्कते-*नन्विति* । *अन्वाचय इति* । महच्छब्दस्य घासादिष्वात्वम्, यत्र तु स्त्रीत्वं तत्र पुंवद्भावोऽपीत्यर्थात् । *मतान्तरमिति* । पूर्वमते तु भाष्योक्तमुदाहरणमुपलक्षणम् ।

नन्वच्प्रत्ययस्तत्पुरुषे एवेत्यत्र नियामकाभावाद्बहुव्रीहावपीत्यनुपपन्नमत आह-*तत्पुरुष एवेति* । *ध्वनितानभिधानादिति* । तत्र हि "एकादश द्वादशेति कोऽयं समासः । एकादीनां दशादिभिर्द्वन्द्वसमासः । एकादीनां दशादिभिर्द्वन्द्व इति चेद्विंशत्यादिषु वचनं प्राप्नोति । (वचनम्=द्विवचनम्, बहुवचनञ्चेत्यर्थः ।) एकविंशतिर्द्वाविंशतिः-"एवम्पूर्वपक्षिणोक्ते सिद्धान्तिनोक्तम्-"सिद्धं तु अधिकान्ता सङ्ख्यया सङ्ख्यया समानाधिकरणाधिकारेऽधि-

(शे०)द्वादशेति । द्वाविंशतिरिति । समाहारद्वन्द्वे स्त्रीत्वं लोकात्* । इतरेतरयोगस्तु न । तत्सूत्रभाष्ये एव ध्वनितानभिधानात्, द्व्यधिका विंशतिरिति तत्पुरुषो वा । द्व्यधिकेत्यत्र संख्या संख्येयं वाऽन्यपदार्थः । एकादीनां *वृत्तिविषये *विंशत्यादीनां च सर्वत्र संख्यापरत्वस्यापि सत्त्वात् । तेन 'द्वाविंशतिर्गवाम्' 'द्वाविंशतिर्गावः' इत्युभयं सिद्धम् । तत्र द्वन्द्वे संख्येत्यनेन पूर्वपदप्रकृतिस्वरत्वं तत्पुरुषे समासान्तोदात्तत्वमिति बोध्यम् । भाष्ये* द्व्यधिका विंशतिर्द्वाविंशतिरिति समानाधिकरणसमासे स्वरो न सिद्ध्यति । संख्येत्यस्य द्वन्द्वविषयत्वात् । 'अस्तु तर्हि द्वन्द्वः'इत्यस्य द्वन्द्वोऽपीत्यर्थः । 'स्वरो न सिद्ध्यति'इत्यस्य सोऽपीष्टः स्वरो न सिद्ध्यतीत्यर्थ इति केचित् ॥

परे तु भाष्ये समानाधिकरणसमासोक्तिरेकदेशिनः* । *सा च स्वरासिद्ध्या दूषिता । ततोऽस्तु तर्हि द्वन्द्व इति सिद्धान्त्युक्तिः । तस्मादितरेतरयोगद्वन्द्ववत् समानाधिकरणतत्पुरुषस्याप्यनभिधाने एव भाष्यस्वरसः । *इदमप्यत्रान्वाख्यानोपायमात्रम् । वस्तुतः संख्यान्तराणि

---

(चं०)कलोपश्चेति वक्तव्यम् । एकाऽधिका विंशतिः=एकविंशतिः । द्व्यधिका विंशतिः=द्वाविंशतिरिति । यदि समानाधिकरणः स्वरो न सिध्यति । यदि तत्संख्यापूर्वपदं प्रकृतिस्वरं भवतीति द्वन्द्व इत्येवं तत् । किं पुनः कारणं द्वन्द्व इत्येवं तत् । इह मा भूत्—शतसहस्रमिति । षष्ठीतत्पुरुषोऽयम् । अस्तु तर्हि द्वन्द्वः । ननु विंशत्यादिषु वचनं न सिध्यति । नैष दोषः । सर्वो द्वन्द्वो विभाषैकवद्भवति"इत्युक्तम् । अत्रैकादशद्वादशविषय एव शङ्कासमाधानयोः करणादेकादिनवान्तानां द्वन्द्वतत्पुरुषयोरनभिधानमिति सूचितम् । सर्वो द्वन्द्वो विभाषैकवदित्यनेन समाहारद्वन्द्वाभिधानेनैकवचनस्योपपत्तिकरणे-नैकवचनमेवेष्यत इति कल्प्यते । यदीतरेतरयोगोऽपि भवेत्तर्हि तत्पक्षेऽन्यवचनापत्तेर्दुर्वारतया न्यायसिद्धेन वचनेन समाधानस्य निष्फलतापत्तिस्तदेतद्ध्वनयति—इतरेतरयोगस्त्विति ।

समाहारद्वन्द्वपक्षे लिङ्गदोषं परिहरति—*स्त्रीत्वं लोकादिति* । *वृत्तिविषय इति* । "द्व्येकयोः"इत्यादौ यथा । *विंशत्यादीनाञ्च सर्वत्र=वृत्तिविषये वाक्ये च ।

विंशत्याद्याः सदैकत्वे सर्वाः सङ्ख्येयसंख्ययोः ।

इति कोशात् । भाष्यविरोधशङ्कां वारयति—*भाष्य इत्यादि ।

एकदेशिन इति* । एकदेशित्वं स्पष्टयति—*सा चेति । *इदमपीति=अस्तु तर्हि इत्येतत्कथनमपि ।

(शे०)निरस्तावयवान्येवैकाविंशत्यादीनि । अत एव तेभ्यः (संख्याकार्य)-कृत्वसुजादिसिद्धिः । अन्यथा स्वाङ्गसमुदाये स्वाङ्गकार्याभाववदिहापि संख्याकार्यं न स्यादिसाहुः ।

त्रयासिति सान्त आदेशो *व्याख्यानादित्याह—त्रयम् स्यादिति । सुजर्थे इति* । "संख्ययाऽव्यय"(पा० सू० २-२-२५)इति समासः । सुजर्थेनेति पाठे तदर्थेन त्रिशब्देनेत्यर्थः । व्यवहितद्वयष्टन्सम्बन्धाय सर्वेषामिति ॥

एकादिश्चै(पा० सू० ६ । ३ । ७६ । ) ॥ अत्रैकशब्दः संख्यावाच्येव प्रसिद्धत्वात्* । तृतीयेनेति । सहेति योगविभागात् । *मयूरव्यंसकादित्वाद्वेति तु न्याय्यम् । धास्विति । धाप्रत्यय एव व्याख्यानात्* । तेन षट् दधातीति षड्धेत्यत्र न । "आतोऽनुपसर्गे"(पा० सू० ३ । २ । ३)इति कः । स्त्रियां टाप् । धासु वेत्यनेनोत्वस्यैव* विकल्पः । तेन ष्टुत्वं नित्यमेव* । तेनोत्वाभावेऽपि षड्ढेत्येवेति कैयटः । *उत्वपक्षे

---

(चं०) *व्याख्यानादिति* । सन्धिवेलादिगणे त्रयोदशीशब्दस्य पाठदर्शनमूलकाद्व्याख्यानादित्यर्थः । *सुजर्थ इति* । त्रिरावृत्ता दश त्रिदशाः । एकादिश्चैकस्य चादुक् । अत्रादुगागमेऽकारोच्चारणसामर्थ्यान्न पररूपम् ।

*प्रसिद्धत्वादिति* । प्रकृतसूत्रे "ष्टनः"(पा० सू० । ६ । ३ । ४७)इति सूत्रात्सङ्ख्यायामित्यस्यानुवृत्त्या संख्यायामेवास्य प्रवृत्त्या तद्घटितसमासघटकतया शीघ्रोपस्थितिकत्वादित्यपि बोध्यम् । योगविभागस्यादर्शनादाह—*मयूरेति । *व्याख्यानादिति* । धे चेत्येव वक्तव्ये धास्विति बहुवचनोपादानेन नानाधिकरणवाचिनः संख्याशब्दाद्बहुत्ववदर्थे वर्त्तमानाद् यो धाप्रत्ययो विधीयते तस्येदं ग्रहणम् । अत एवोत्तरपदाधिकारबाधस्तदंशे कल्प्यते इत्येवं प्राचां व्याख्यानादित्यर्थः । धास्वितिसप्तमीनिर्देशात्तन्निमित्तककार्यस्यैव विकल्पस्तदाह—*उत्वस्यैवेति* । उत्तरपदादेरित्यत्रोत्तरपदशब्दः प्रत्यासत्त्या प्रकृतवाक्यघटकानिमित्तपरः । तेन धाप्रत्ययस्योत्तरपदत्वाभावेऽपि न क्षतिः । वाक्यभेदेन च ष्टुत्वविधानम् । विधेयभेदे वाक्यभेदस्य न्याय्यत्वात् । विभिन्नवाक्ये च वाशब्दो न सम्बध्यते । तेन तस्योत्वाभावेऽपि प्रवृत्तिस्तदाह—*नित्यमेवेति* । अत एव भाष्ये "षष उत्वं दतृदशधासूत्तरपदादेः ष्टुत्वं च वक्तव्यम्" "धासु वेति वक्तव्यम्" "उत्तरपदादेः ष्टुत्वं वक्तव्यम्" इति पृथग्वचनानि पठितानि । हरदत्तमतमाह—*उत्वपक्षे नित्यमिति* । तेनोत्वाभावे ष्टुत्वस्याप्यभाव इति ।

---

(१) इदं कंसान्तर्गतं क्वचित् पुस्तकेऽधिकं दृश्यते ।

(शे०)नित्यं ष्टुत्वमिति हरदत्तः, तदनुसारेणाह–षड्ढोति । *अत्र कैयटोक्तं युक्तम् । भाष्येऽपि षड्ढेत्येव पाठस्य-प्रायेणोपलम्भात् । षोडन्निति । बहुव्रीहौ "वयसि दन्तस्य"(पा० सू० ५ । ४ । १४१)इति दत्रादेशः ।

परवल्लिङ्ग(पा० सू० २ । ४ । २६ ।) । *समाहारे "स नपुंसकम्"(पा० सू० २ । ४ । १७)इत्यस्य बाधकत्वाद् द्वन्द्वपदमितरेतरयोगविषयम् । *तत्रोद्भूतावयवभेदस्य समुदायस्य तद्द्वन्द्वार्थतयाऽवयवलिङ्गेनानियमे प्राप्ते नियमार्थमिदम् । तत्पुरुषे त्वेकदेशिसमासे पूर्वपदार्थप्रधाने परलिङ्गाप्राप्त्या विध्यर्थम् । द्वन्द्वतत्पुरुषयोरिति षष्ठ्यन्तमर्थपरम् । *तेनानुप्रयोगेऽपि तल्लिङ्गम् । शब्दार्थयोरभेदाच्च सूत्रे तथा निर्देशस्तदाह—परपदस्येवेति । परपदार्थस्येव समासार्थस्य लिङ्गमित्यर्थः । द्विगुप्राप्तेति । *द्विगुग्रहणम् "एकविभक्ति"(पा० सू० १ । २ । ४४)इतिसूत्रस्थकैयटानुरोधेन* । *वस्तुतस्तद्व्यर्थम् । परवल्लिङ्गमित्यस्य परपदाक्षिप्तोपस्थितपूर्वपदप्रयुक्तालिङ्गमात्रबाधकत्वेन तद्धितार्थद्विगावेतदप्राप्तेः । समाहारद्विगौ नपुंसकत्वमेव प्रायेणेष्यते ।

*अत एव भाष्ये निषेधवार्तिके द्विगुग्रहणं नोक्तम् ।

---

(चं०)*अत्र=मतद्वयमध्ये ।

"परवल्लिङ्गम"(पा० सू० २ । ४ । २६ ।)इतिसूत्रे द्वन्द्वपदमितरेतरयोगपरमित्याशयेनाह–*समाहार इति ।

*तत्र=इतरेतरयोगद्वन्द्वे । *तेन=अर्थपरत्वेन । प्रकृतसूत्रे द्वन्द्वतत्पुरुषयोरिति षष्ठी, न तु सप्तमी । तेन द्वन्द्वे तत्पुरुषे च परपदस्येव लिङ्गं पूर्वपदस्येति नार्थः । न चेष्टापत्तिः । मयूरीकुक्कुटाविति वाक्ये पूर्वपदे स्त्रीप्रत्ययनिवृत्त्यापत्तेः । परवदित्यत्र षष्ठ्यन्ताद्वतिः । "द्विगुप्राप्त"इति समुदितं वार्त्तिकमिति भ्रमनिवारणायाह—*द्विगुग्रहणमिति* ।

*कैयटानुरोधेनेति* । "द्विगुरेकवचनम"(पा० सू० २ । ४ । १)इतिसूत्रे समाहाराविवक्षायां पञ्चकपालौ पञ्चकपाला इतिभाष्यप्रयोगात् "एकविभक्ति"(पा० सू० १ । २ । ४४ ।) इतिसूत्रभाष्यव्याख्यावसरे तेन परवल्लिङ्गत्वबाधप्रदर्शनाच्चेति भावः । द्विगुग्रहणाभावेऽपि न क्षतिरित्याशयेनाह—*वस्तुत इति* । द्विगुपदसत्त्वे द्विगुपदं समाहारद्विगुपरम्‌ भवति किं तु तद्धितार्थे यो द्विगुस्तत्परं वाच्यम् । तत्र च तद्धितार्थस्य प्राधान्यात् "परवल्लिङ्गम्"इति सूत्रे परपदोपादानेन यत्र पूर्वपदप्रयुक्तलिङ्गप्राप्तिस्तत्रैव तस्य सूत्रस्य प्राप्त्या तद्धितार्थद्विगौ तस्याप्राप्तेरिति भावः । *अत एव=

(शे०) यत्तु अलंशब्देन "पर्यादयो ग्लानाद्यर्थे" इति समास इति,तन्न। तस्य नित्यसमासत्वेनालं कुमार्यै इति भाष्योक्तविग्रहानुपपत्तेरत आह–अत एव ज्ञापकादिति। *अत एवालंशब्दयोगे चतुर्थीविधानं सार्थकम्। गतिसमासपदं गतेः समासो येनेति बहुव्रीहिणा "कुगति(पा०सू० २।२।१८)इति सूत्रपरम्। तच्चान्यत्र फलाभावात्प्रादिपरमेवेत्याह–निष्कौशाम्बिरिति। *द्वन्द्वैकदेशिनोरिति *न्यासेनायं प्रतिषेधो भाष्ये प्रत्याख्यातः। अतन्त्रमिति। *अत एव पूर्ववदिति चरितार्थम्। अन्यथा निपातनादेव सिद्धे किं तेन। समुदायस्य पूर्ववल्लिङ्गत्वेऽपि उत्तरपदेऽश्ववडवपूर्वापराधरोत्तराणामिति निर्देशाट्टापो निवृत्तिः। अश्ववडवाविति* तु *समुदायस्याबन्तत्वाभावाच्छीभावाप्राप्त्या वृद्ध्या सिद्धम्। *अतिदेशस्त्वनुप्रयोगे चरितार्थः स्यात्। *अश्ववडवशब्दार्थः पूर्ववल्लिङ्गं लभत इत्यर्थात् ॥

रात्राह्नाहाः (पा० सू० २-४-२९) ॥ द्वन्द्वतत्पुरुषपदमनुवर्त्तते। इदं प्राप्तापन्नालंप्रादिसमासेष्वपि। अत एव* परवदिति सूत्रे एकदेशिग्रहणं

---

(चं०)द्विगुग्रहणस्य व्यर्थत्वादेव। *अत एव=अलंशब्देन नित्यसमासाभावादेव। इदञ्च प्रतिप्रसववचनमनावश्यकमित्याशयेनाह–*द्वन्द्वैकेति। *इति न्यासेनेति*। यदा तादृशन्यासेन "परवल्लिङ्गम्" (पा० सू० २।४।२६।) इति सूत्रस्थं तत्पुरुषग्रहणमेकदेशिसमासप्रत्याख्यानेन प्रत्याख्यातं तदाऽस्य प्रतिषेधवचनस्य प्रयोजनमास्तीति भावः। *अत एव=अतन्त्रत्वादेव।

ननु समुदायस्य पूर्ववल्लिङ्गत्वेऽपि वडवाशब्दे टापः सत्त्वात्स्त्रीप्रत्यये तदादिनियमाभावादश्ववडवे इति स्यात्। सूत्रे टापो निवृत्तावपि लौकिके प्रयोगे टापः सत्त्वादत आह–*अश्ववडवावितीति। *समुदायस्याबन्तत्वाभावादिति*। उद्भूतावयवभेदसमाहारस्य विशेष्यत्वेनोपसर्जनत्वात्। वस्तुतस्तु गोवडवे इतिप्रयोगसिद्धये आबन्तान्तं यदङ्गमिति रीत्या तदन्तविधिद्वयमवश्यं स्वीकार्यम्। तथा चाश्ववडवावित्यस्यासिद्धिर्दुर्वारैवेति पूर्ववदश्ववडवेतिसूत्रनिर्देश एव टाम्निवृत्तिसाधक इति बोध्यम्। नन्वेवमतिदेशवैयर्थ्यमत आह–*अतिदेशेति*। शोभनावश्ववडवाविति; यथा। ननु "पूर्ववदश्ववडवौ" इत्यानुपूर्वीकसूत्रेण कथमनुप्रयोगे पूर्ववल्लिङ्गत्वप्रतिपादनमत आह–*अश्ववडवशब्दार्थ इति।

*अत एव="रात्राह्नाहाः"(पा० सू० २।४।२९) इतिसूत्रस्य द्विगुप्राप्तेत्यादिनिषेधविषयेऽपि प्रवृत्तिस्वीकारादेव। *प्रत्याख्यातमिति*। यदि रात्राह्नाहाः" इति सूत्रस्य द्विग्वादिविषयेऽप्रवृत्तिः स्यात्तदा परवदिति सूत्रे तत्पुरुषपदसत्त्वे

(शे०)कृत्वा प्राप्तेत्यादि भाष्ये प्रत्याख्यातम्* । *अत्रैव तत्पुरुषग्रहणं कार्यमिति तद्भावः । *अत एव प्राह्णः सर्वाह्ण इत्यादिसिद्धिः, पुण्यसुदिनाभ्यामिति च चरितार्थम्* । अस्यैकदेशिसमासाविषयत्वे तु तद्वैयर्थ्यं स्पष्टमेव । द्व्यह इति । अकारान्तोत्तरपदत्वाभावा*न्न स्त्रीत्वम् । गणरात्रमिति समाहारे द्विगुः । इदं तत्पुरुषाधिकारे लिङ्गानुशासने पाठात् *प्रतिप्रसवविधिलाघवानुरोधाच्च समाहारद्विगावेव प्रवर्त्तते इति भावः । तत्पुरुषइत्येवेति । तादृशद्वन्द्वासंभवादिति भावः । अपन्था इति । "पथो विभाषा"(पा० सू० ५ । ४ । ७२)इति समासान्तनिषेधः । "*भविष्यति मर्यादा"( पा० सू० ३ । ३ । १३६ ) इति सूत्रस्थस्त्रिशद्रात्रः पञ्चदशरात्र इति भाष्यप्रयोगो लोकाश्रयत्वाल्लिङ्गस्य सिद्धः ॥

अर्धर्चाः (पा० सू० २ । ४ । ३१) ॥ बहुवचनादाद्यर्थावगतिः । ननु लिङ्गप्रकरणं व्यर्थमर्धनावमित्याद्यर्थं लोकाश्रयत्वात् लिङ्गस्येत्यस्याव-

---

(चं०) तन्निषेधार्थमारब्धेन प्राप्तेत्यादिवार्त्तिकेन रात्रेत्यादिसूत्रस्यापि बाधः स्यात् । यदि तु तस्मिन् सूत्रे तत्पुरुषग्रहणन्न क्रियते एकदेशिग्रहणं कृत्वा वार्तिकं प्रत्याख्यायते तदा रात्राह्नेति सूत्रस्य वार्त्तिकविषये प्रवृत्तिरिति फलभेदस्य स्पष्टतया वार्त्तिकप्रत्याख्यानविरोधः स्पष्ट एव । ननु परवदितिसूत्रस्थतत्पुरुषग्रहणप्रत्याख्याने प्रकृतसूत्रे तत्पुरुष इत्यस्य कथं लाभ इत्यत आह- *अत्रैवेति* । तत्पुरुषे चेतिप्रकृतसूत्रे पठनीयमिति भावः । *अत एव= वार्त्तिकविषयेऽपि रात्रेतिसूत्रस्य तत्पुरुषग्रहणकरणेन प्रवृत्तेरेव । प्राह्णः, पराह्णः, सर्वाह्ण इति च प्रादिसमासः । *चरितार्थमिति* । पुण्याहं सुदिनाहमित्यत्र रात्रेत्यनेन पुंस्त्वे प्राप्ते पुण्येत्यनेन नपुंसकत्वं विधेयम् । यदि तु अस्य वचनस्याप्येकदेशिसमासविषयकत्वमेकदेशिग्रहणानुवृत्त्या सम्पाद्यते तदाऽस्य सूत्रस्य पूर्वाह्णः पूर्वरात्र इत्यादिरेवोदाहरणं भविष्यतीति प्राह्णः सर्वाह्णः इत्याद्यसिद्धिः, पुण्येति च व्यर्थम् । पुण्याहमित्यादावुत्तरपदार्थस्य प्राधान्यात्तल्लिङ्गत्वमनायासेनैव सिद्धमिति भावः । *अभावादिति* । टचः समुदायावयवत्वात् । *प्रतिप्रसवेति* । तत्पुरुषसमासे प्राप्तस्य रात्राह्नाहा इत्यस्य संख्यापूर्वमितिवचनेन नपुंसकत्वस्वीकारे प्राप्तस्यैव परवल्लिङ्गत्वस्यार्थाद्विधानं सम्भवतीति लाघवम्भवतीति भावः ।

ननु संख्यापूर्वमितिवचनस्वीकारे त्रिंशद्रात्रः पञ्चदशरात्र इति प्रयोगविरोध इत्यत आह-*भविष्यतीति* । यदि त्वेतयोर्बहुव्रीहित्वम् "अच् प्रत्यन्वव"(पा०सू० ५ । ४ । ७५)इत्यत्राजितियोगविभागेनाच्प्रत्ययश्च स्वीक्रियते तदा पुंस्त्वमनायासेन सिध्यत्येव परन्त्वर्थभेदः स्पष्टः । ननु समासनिरूपण-

(शे०) श्यकत्वादिति चेत्सत्यम्। जात्याख्यायामित्यादिसूत्रसमूहवदिष्टापत्ते-स्तद् ध्वनयन्प्रकृतानुपयुक्तान्यपि तानि व्याचष्टे—जात्याख्यायामित्यादि। जातेः प्राधान्येनाख्यायामित्यर्थः। भावप्रत्ययं विना प्राधान्येन जातिबोधे यवादिशब्दानां* साधुत्वे इदमेव सूत्रं मानम्। तस्या विशेष्यत्वे च बाह्यन्वयो व्यक्तिघटितपरम्परया बोध्यः। *तत्र जातेरेकत्वेनैकवचनमेव प्राप्नोतीत्ययमारम्भः। *एकत्वश्चात्र बहुवचनार्थः। एकस्मिन्नर्थे वर्त्तमानः शब्दो बहूनामर्थानां वचनं बोधको भवतीत्यर्थादर्थातिदेशोऽयमित्याह—एकोऽप्यर्थ इत्यादि। तदुक्तं भाष्ये—"यावद् ब्रूयादेकोऽर्थो बहुवद्भवतीति तावदेकस्मिन्बहुवचनमिति" इति। एकत्वेऽर्थे बहुत्वप्रयुक्तं कार्यमातिदिश्यते इति। अयमपि कार्यातिदेश एवेत्यन्यत्र विस्तरः। *एतच्च भाष्ये प्रत्याख्यातम्। जातौ संख्यान्वये एकवचनस्य व्यक्तौ संख्यान्वये बहुवचनस्य सिद्धत्वात्। एवञ्च यथोत्तरं मुनीनां प्रामाण्यात्सूत्रोक्तार्थे* प्रयोगाणामसाधुत्वमेव।

*एतेन यत्र वने एक एवाऽऽम्रवृक्षस्तत्र जातिपरत्वे आम्राः सन्तीति प्रयोगसाधुत्वार्थमिदमित्यपास्तम्। सविशेषणस्येति। इदं *मुख्यार्थे बहुवचननिषेधाय। यदा त्वस्मच्छब्दस्य स्वघटिते उद्भूतावयवभेदे समुदाये लक्षणा तदा बहुवचनं भवत्येव। तेन "त्वं राजा वयमप्युपासित*गुरुप्रज्ञाभिमानोन्नता" इत्यादि सिद्धम्। गार्ग्योऽहं*ब्रवीमीत्यादावप्ययं निषेधः। उत्तमपुरुषानुरोधेनात्राहमित्यस्यैव विशेष्यत्वात्॥

---

(चं०) प्रस्तावे जात्याख्यायामित्यादिसूत्रविवरणमप्रस्तुतमत आह—*नन्विति*। एवं चानावश्यकत्वसाजात्यात् लिङ्गानुशासनप्रस्तावे जात्याख्यायामित्यादिनिरूपणं सङ्गतमेवेति भावः। *यवादिशब्दानामिति। सम्पन्नो यव इत्यादौ। बहुवचनविधानस्य फलमाह—*तत्रेति*। *एकत्वमिति*। जातिगतमेकत्वमित्यर्थः। *एतच्चेति। जात्याख्यायामिति सूत्रमित्यर्थः। *सूत्रोक्तार्थ इति। सूत्रारम्भे जातावेव बहुवचनार्थैकत्वस्यान्वयस्वीकारः सम्प्रति तु बहुवचनार्थस्य बहुत्वस्य व्यक्तावन्वय इति मतभेदः स्पष्ट एवेति भावः। *एतेन=पूर्वोक्तव्याख्यानेन। *मुख्यार्थ इति। स्वतन्त्रोच्चारयितृमात्रबोधकत्वं यदाऽस्मच्छब्दस्य तदेत्यर्थः।

*उपासितेति*। उपासिताद् गुरोर्या प्रज्ञा तस्य योऽभिमानस्तेनोन्नता इत्यर्थः।

ननु गार्ग्योऽहमित्यादौ गार्ग्यशब्दस्य प्राथम्येनोद्देश्यबोधकत्वमह-

( शे० ) फल्गुनी(पा० सू० १ । २ । ६० ॥) नक्षत्रे इति प्रथमाद्विवचनम् । नक्षत्रे यद्यभिधीयेते इत्यर्थः । चेन *द्वयोरित्यनुकर्षः । फल्गुन्यौ माणविके इति । फल्गुन्योर्जाते इत्यर्थे "फल्गुन्यषाढाभ्यां टानौ" इति टः । टित्वान्ङीप् । एकस्यां तु तारायां नैतयोः प्रयोगः । उद्भूतावयवभेदे समुदाय एव रूढत्वात् ॥

तिष्यपुनर्वस्वोः (पा०सू० १ । २ । ६३ ॥) नक्षत्र इत्यनुवर्त्तते । तिष्यपुनर्वसुशब्दयोरभिधेये नक्षत्रे वर्त्तमानो यो नक्षत्रवाचिनां द्वन्द्व इत्यर्थः । तेन पर्यायाणामपि सिद्ध्यति । पुनर्वसू इति । तिष्य एका तारा । पुनर्वसू द्वे तारे । "छन्दसि पुनर्वस्वोः"(पा० सू० १ । २ । ६१ ।) इति निर्देशात् । तदाह–तिष्यश्च पुनर्वसू चेति । विशाखेति । विशाखे चानुराधाश्चेति द्वन्द्वः । माणवका इति । "नक्षत्रेण युक्तः"(पा०सू० ४ । २ । ३ ।) इत्यणो "लुबविशेषे" (पा० सू० ४ । २ । ४ ।) इति लुपि जातार्थे "सन्धिवेला"(पा० सू० ४ । ३ । १६)इत्यणि तस्य "श्रविष्ठाफल्गुनी" (पा० सू० ४ । ३ । ३४ ।) इत्यादिना लुक् । बहुवचनस्य किम् ? । इदन्तिष्यपुनर्वसु । समाहारद्वन्द्वः । *अत एव समाहारद्वन्द्वः । प्राण्यङ्गादीनामेवेति "द्वन्द्वश्च"(पा० सू० २ । ४२)इत्यादीनां नार्थः ।

न चैवमप्यत्र "जातिरप्राणिनाम्"(पा० सू० २ । ४ । ६ ।)इति नित्यैकवद्भावे बहुवचनाभावात्सूत्रं व्यर्थमिति वाच्यम् । तद्वैकल्पिकत्वस्याप्यनेन ज्ञापनात् । न चैते प्राणिनः, "आपोमयः प्राणः" इति श्रुतेरद्भिर्विना ग्लायमानप्राणानामेव प्राणित्वात् । *स्पष्टं चेदं* भाष्ये ।

---

(चं०) मित्येतदर्थस्य तु विधेयत्वमिति नास्मदर्थस्य सविशेषणत्वमत आह— *गार्ग्योऽहमित्यादि । *द्वयोरित्यनुकर्ष इति* । तत्र द्विपदं भावप्रधाननिर्देशेन द्वित्वपरम् ।

*अत एव=प्रकृतसूत्रे बहुवचनग्रहणादेव । *तद्वैकल्पिकत्वस्य="जातिरप्राणिनाम्" (पा० सू० २ । ४ । ६)इतिसूत्रवैकल्पिकत्वस्य ।

*स्पष्टञ्चेदमिति* । तत्र हि "बहुवचनस्येति किमर्थम् ? । उदितन्तिष्यपुनर्वसु । कथञ्चात्रैकवचनम् ? । जातिद्वन्द्व एकवद्भवतीति । अप्राणिनामिति प्रतिषेधः प्राप्नोति । एवन्तर्हि सिद्धे सति यद्बहुवचनग्रहणङ्करोति तज्ज्ञापयत्याचार्यः–'सर्वो द्वन्द्वो विभाषैकवद्भवति'इति । किमेतस्य ज्ञापने प्रयोजनम् ? । बाभ्रवशालङ्कायनम्, बाभ्रवशालङ्कायना इत्येतत्सिद्धम्भवति । अथ वा नात्र

(शे०)*नक्षत्रसमासे इति तु नोक्तम् । यस्तिष्यस्तौ पुनर्वसू येषां ते तिष्य-पुनर्वसव उन्मुग्धाः । अवयवभूतास्तिष्यादयो वर्तिपदार्थस्तेषामेव विपर्यासबुद्धिविषयाणामुद्भूतावयवभेदः समुदायः समासार्थः । उन्मुग्धा इत्यस्य

---

(चं०)भवन्तः प्राणिनः, प्राणा एवात्र भवन्तः" इत्युक्तम् । कथं चात्रैकवचनमिति-पूर्वपक्षिणो द्वन्द्वश्चेत्यादिप्रकरणस्य प्राण्यङ्गादीनामेव समाहार इत्यर्थकत्वमनुमतम् ।] जातिद्वन्द्वेत्युत्तरवादिनस्तु प्राण्यङ्गादीनां समाहार एवेत्यर्थोऽत्रेति निश्चयः । नक्षत्रवाचकानाञ्जातिवाचकत्वं तु प्रतिमन्वन्तरेऽन्यानि नक्षत्राणि भवन्तीतिदर्शनेन कैयटेनोपपादितम् । एवञ्च प्राण्यङ्गादीनां समाहार एवेतिनियमे कृते तद्व्यतिरिक्तद्वन्द्वस्योभयरूपत्वस्बोध्यत इति फलितम् । नक्षत्रवाचकानां जातिवाचकत्वेऽपि प्राणित्वमेषामितिन्यायप्राप्तस्योभयरूपद्वन्द्वस्य नक्षत्रवाचकशब्दावयवकस्यैव सम्भव इति "तिष्यपुनर्वस्वोः"(पा० सू० १ । २ । ६३) इति सूत्रे बहुवचनग्रहणं सार्थकमिति भावः । सर्वो द्वन्द्व इत्यस्य द्वन्द्वश्चेत्यादिप्रकरणाविषयः सर्व इत्यर्थः । स च न्यायसिद्ध एव ।

अथ वेति । नह्येतेषु प्राणित्वेन व्यवहारो लोके किं तु प्राणिना तदधीनस्थितिकत्वात्प्राणिनामेते प्राणा एव । अद्भिर्विना येषाम्प्राणा ग्लायमाना भवन्ति ते प्राणिन इत्युच्यन्ते । नक्षत्रत्वेन ये प्रसिद्धास्तेषाम्प्राणा अद्भिर्विना न ग्लायमाना इत्येते न प्राणिनः । इदमेव पूज्यतवम्भाष्ये भवच्छब्देनोच्यते । एवं सति यदि "जाति"(पा० सू० २ । ४ । ६) इति सूत्रस्य नित्यैकवद्भावविधायकत्वमेव स्यात्तदा नक्षत्रवाचकानान्द्वन्द्वस्य नित्यैकवचनान्ततया बहुवचनाभावात् "तिष्यपुनर्वस्वोः"(पा० सू० १ । २ । ६३)इति सूत्रमसङ्गतार्थकं स्यादतस्तद्वैकल्पिकत्वमप्यनेन बोध्यते इति भाष्यकृता ध्वनितम् ।

नन्वेवं सर्वो द्वन्द्व इत्यनेनैतत्प्रकरणाविषयस्यैव ग्रहणे जातिद्वन्द्वस्यैतत्प्रकरणस्थत्वात्तस्यापि नित्यत्वमेवायातमिति कथम्बहुवचनग्रहणचारितार्थ्यमिति वाच्यम् । यावता विनाऽनुपपत्तिस्तस्य सर्वस्य ज्ञाप्यत्वादिति न्यायेन सर्वो द्वन्द्व इत्यस्यैकवद्भावविषयो जातिद्वन्द्वः सर्व इत्यर्थात् । अत एव "विभाषा वृक्ष"(पा०सू० २ । ४ । १२) इतिसूत्रेऽपि समाहारस्यैकत्वादेकत्वे सिद्धे एकवद्भावविधानमनर्थकमित्याशङ्क्य "पूर्वत्र नित्यार्थमुत्तरत्र व्यभिचारार्थम्" इति भाष्यकृतोक्तम् । तत्र कैयटः–पूर्वत्रेति । प्राण्यङ्गादीनां समाहार एवेत्येवमर्थमित्यर्थः । उत्तरत्रेति । क्व चिज्जातिरप्राणिनामितिनित्ये प्राप्ते विभाषा इत्याह । क्व चिदित्यनेन भाष्योक्तव्यभिचारो दर्शितः । व्यभिचारार्थमिति । नित्यैकवद्भावस्य व्यभिचारार्थमित्यर्थः । स च क्वचिदेकवद्भावाभावात्क्वचिन्नित्यत्वाभावाद्बोध्यः । न केवलम्प्रकृतसूत्रस्यबहुवचनस्य स्थाने द्विवचनादेशविधायकत्वोपपत्तिरेवैतादृशकल्पनायाः प्रयोजनम्, किं तु 'मृदङ्गशङ्खतूणवाः पृथङ्नदन्ति संसदि' इति भाष्योक्तप्रयोगस्याप्युपपत्तिरिति । प्रकृतसूत्रे समासग्रहणमकृत्वा द्वन्द्वग्रहणमेव कृतं तत्प्रयोजनमाह—*नक्षत्रेति । विपर्यासबुद्धिविषया इत्यस्य वि-

(शे०)विपर्यासबुद्धिविषया इत्यर्थः । *अस्मद इत्यादीन्यपि व्यर्थानि आ-चार्याः कथयन्तीत्यादौ शक्तिगतस्यावयवगतस्य वा बहुत्वस्यारोपेणेवेहापि तदारोपेणैव सिद्धेरिति । स्पष्टप्रतिपत्त्यर्थमिति चेल्लिङ्गानुशासनमपि *तथेति भावः* । *उच्छृङ्खलास्तु "कालोपसर्जने"(पा० सू० १ । २ । ५७) इत्यत एकशेषप्रकरणान्तं तुल्यपदानुवृत्त्या प्रधानप्रत्ययार्थवचनेन तुल्यमि-त्यर्थात्सर्वमिदं सूत्रकृतैव प्रत्याख्यातमित्याहुः ।

स नपुंस(पा० सू० २ । ४ । १७ । ) ॥ तच्छब्देन समाहारद्वि-गुद्वन्द्वौ परामृश्येते व्याख्यानात्* । आकारान्तोति । अत्र द्विगुः समा-हारद्विगुरेव "स नपुंसकम्"इत्यपवादत्वात् । पात्रादीति । स्त्रीत्वं नेत्य-र्थः । त्रिसूत्रीत्यादिप्रयोगदर्शनात्सूत्रशब्दस्यात्र पाठ इति कैयटश्चिन्त्यः ।

---

( चं० ) शेष्याप्तिधर्मप्रकारकबुद्धिविषया इत्यर्थः । सा च तिष्यविशेष्यिका पुनर्वसुत्वप्रकारिका, पुनर्वसुविशेष्यिका तिष्यत्वप्रकारिका ज्ञेया ।

पूर्वं यद्यपि "जात्याख्यायाम्"(पा० सू० १ । २ । ५८ ।) इतिसूत्रसमूहव-दित्यनेन "अस्मदो द्वयोश्च"(पा०सू० १ । २ । ५९)इत्यस्यानावश्यकत्वं सूचितमेव तथापि तत्र युक्त्यनभिधानात्तां वक्तुम्पुनराह-*अस्मद इत्यादीति । *तथेति* । अनावश्यकमित्यर्थः । *इति भाव इति* । लिङ्गविशेषबोधकसूत्रव्याख्यानान-न्तरञ्जात्याख्यायामित्यादिसूत्रव्याख्यानकर्तुर्भाव इत्यर्थः । *उच्छृङ्खलास्त्विति* । एवमभिधानं भाष्यकृता तुल्यपदानुवृत्त्याऽनावश्यकत्वं नाभिहितमिति सूचनाय। अत एव भाष्यकृता जात्याख्यायामितिसूत्रव्याख्यावसरे आदौ सूत्रस्य प्रयोजन-मुक्त्वा "अशिष्यं वा बहुवत्पृथक्त्वाभिधानात्"इतिवार्त्तिकं व्याख्यातम्-"अ-शिष्यो वा बहुवद्भावः"इत्यादिना । "अस्मदो द्वयोश्च"(पा०सू० १ । २ । ५९)इति सूत्रे "फल्गुनी"(पा० सू० १ । २ । ६०) इतिसूत्रे च "अयमपि योगः शक्यो-ऽवक्तुम्"इत्यभिहितम् । तेन तुल्यपदे स्वरितत्वमस्तीति गम्यते इति ।

*व्याख्यानादिति* । "द्विगुरेकवचनम्"(पा० सू० २ । ४ । १)इति सूत्रस्य समाहारस्यैकत्वेनैव द्विगोरेकवचनम्भविष्यतीत्यभिप्रायेण "न वा समाहारस्यैकत्वादेकवचनम्भविष्यति"इत्यनेन प्रत्याख्यानं कृतमिति तत्सूत्र-स्थद्विगुपदं समाहारद्विगुपरमेव । तथा "विभाषा समीपे" (पा० सू० २ । ४ । १६ । ) इति सूत्रे उपदशं पाणिपादमिति समाहारद्वन्द्वस्य नपुंसक-त्वाभिधानं कृतमित्यत्रत्यतच्छब्दस्य पूर्वोक्तोभयपरत्वमित्यभिप्रायकव्याख्या-नादित्यर्थः । यदि द्वन्द्वग्रहणमात्रानुवृत्तिरभिप्रेता स्यात्तदा द्वन्द्वग्रहणा-नुवृत्त्यैव सिद्धे तच्छब्दोपादानं व्यर्थं स्यादिति भावः । सूत्रशब्दस्य पात्राद्यन्ते

(शे०)*बहुसूत्रमिति भाष्यप्रयोगस्तु प्रकरणेऽन्यपदार्थे बहुव्रीहिणा साध्यः। पुण्येत्यादि रात्राह्नेत्यस्यापवादः ॥

पथः सं (का० वा०) ॥ कृतसमासान्त इति । पथ इति कृतसमासान्तैकदेशानुकरणं *प्रथमान्तमिति भावः । *प्रतिपदोक्तपरिभाषा न प्रवर्त्तते *व्याख्यानात्, तदाह-त्रयाणां पन्था इति । "ऋक्पू:" (पा० सू० ५ । ४ । ७४)इति समासान्तः । *विपथा नगरी अतिपथेत्यादौ च नेदम् । अनेनावमितिवल्लोकाश्रयत्वात् लिङ्गस्य । एतेन कापथविपथौ व्याख्यातौ । आवश्यकत्वादनेनैव* सिद्धे "अपथं नपुंसकम्"(पा० सू० २ । ४ । ३०) इति सूत्रं न कार्यम् । "सामान्ये नपुंसकम्"इति *अनियतलिङ्गविषयम् । तेनादिं पचतीत्याद्येव । आदिशब्दो नित्यं पुमान्। आद्यपाकानुकूलक्रियेत्यर्थः।न्यायसिद्धमेतत्। विशेष्यविशेषासन्निधाने *लिङ्गसर्वनाम्नो नपुंसकस्य न्याय्यत्वात् । लिङ्गसर्वनामनपुंसकमिति "दाण्डिनायन"(पा० सू० ६ । ४ । १७४)इति सूत्रे भाष्ये स्पष्टम् । *अनेनैव क्रियाविशेषणानां नपुंसकत्वे सिद्धे क्रियाविशेषणानां क्लीबत्वं द्वितीयान्तत्वं चेति नापूर्वम् । धातूपात्तभावनां प्रति *फलांशस्य कर्मतया तत्समानाधिकरणे क्रियाविशेषणे द्वितीयान्तत्वस्यापि सिद्धेः । *तस्य क्रियाजनकत्वमपि स्वज्ञानद्वारा बोध्यम् । तदु-

---

(चं०)पाठाभावेऽपि बहुसूत्रमितिभाष्यीयप्रयोगस्योपपत्तिमाह-*बहुसूत्रमितीति।

*प्रथमान्तमिति* । एतेन षष्ठ्यन्तत्वशङ्कां वारयति । "रात्राह्नाहा"(पा० २ । ४ । २९ ।) इतिसूत्रे "अर्द्धर्चाः"(पा० सू० २ । ४ । ३१ ।) इतिसूत्रे च प्रथमान्तयोरेव सत्त्वेन प्रकृतेऽपि तथैव कल्पनादिति भावः । ननु "पथः संख्या"(का० वा०) इति वार्तिके संख्याशब्दोपादानेन संख्याशब्दोच्चारणेन यः समासः "तद्धितार्थ"(पा० सू० २ । १ । ५७)इत्यनेन विधीयते तस्यैव प्रतिपदोक्तत्वाद्ग्रहणं स्यादत आह—*प्रतिपदोक्तेति* । *व्याख्यानादिति* । अव्ययसाहचर्यमूलकव्याख्यानादित्यर्थः ।

ननु विपथेत्यत्रापि कृतसमासान्तपथशब्दसत्त्वान्नपुंसकत्वापत्तिरत आह—*विपथेति । *अनेनैव=पथ इति वार्त्तिकेनैव ।

*अनियतलिङ्गेति* । सामान्ये इत्युपादानाद्यत्र नियतलिङ्गत्वन्तत्र तु तच्छब्दस्वभावात्तल्लिङ्गत्वमेव । *लिङ्गसर्वनामेति । सर्वनामशब्दोऽत्र सर्वनामसदृशपरः । लिङ्गानां सर्वनामेति समासः । यथा सर्वनाम्नः सर्वद्रव्यपरामर्शकत्वं तथा नपुंसकत्वमनियतलिङ्गेषु सर्वत्र प्रवर्त्तत इति भावः । *अनेनैव=सामान्ये नपुंसकमित्यनेनैव । *फलांशस्येति । व्यपदेशि-

( शे० ) बुद्ध्या पूर्वमुद्दिश्य क्रियायां प्रवृत्तेः, सम्प्रदानादेरिव । ज्ञानगतजनकत्वस्य च तद्विषये आरोपः । वाचनिकत्वे तु यत्र धात्वर्थस्य *करणत्वेनान्वयस्तत्रापि स्यात्, यथा—तृप्तिकामः स्तोकेनौदनं पचतीत्यादौ । तृप्तिविषयकामनावत्कर्तृकः स्तोकविक्लित्तिकरणक* ओदनकर्मकः पाक इति बोधः । तद्विषयकामनावत्कर्तृकत्वेन *तस्या उद्देश्यत्वमर्थसिद्धम् । *केषाञ्चित्तृप्त्यादिषु कर्मत्वव्यवहारस्तूद्देश्यत्वसामान्यादिति दिक् ॥

तत्पुरुषोऽनञ्(पा० सू० २ । ४ । १९ ।) ॥ "परवल्लिङ्गम्" (पा० सू० २ । ४ । २६) इति यावदधिकारोऽयम्* । *अनञ्कर्मधारय इत्युक्तेर्नञ्तत्पुरुषस्य न कर्मधारयत्वम् । आरोपमात्रस्य नञ्द्योत्यत्वेन सामानाधिकरण्याभावात् । यद्वा पृथगुपस्थितयोः सामानाधिकरण्यव्यवहारः । नञ्समासे हि आरोपितोत्तरपदार्थे आरोपितधर्मकेऽर्थे वोत्तरपदस्य वृत्तिर्नञ् तु द्योतक इति तदभावः ॥

सञ्ज्ञायां कं (पा०सू० २ । ४ । २० ।) ॥ अनादिरिह सञ्ज्ञा ।

---

( चं० ) वद्भावेनेति शेषः । फलस्य कारकत्वमुपपादयति—*तस्येति* । न च फलस्य कर्मत्वास्वीकारे का क्षतिरिति वाच्यम् । एवं सति तद्विशेषणशोभनादेर्द्वितीयान्तत्वन्न स्यात् । इष्टापत्तिरिति चेत् । निपुणस्त्वं पचसि, मृदु त्वा राजा द्रविणेन योजयतीत्यत्र "सपूर्वायाः प्रथमाया विभाषा"(पा० सू० ८ । १ । २६ । ) इति विकल्पापत्तेः । *करणत्वेनान्वय इति* । तत्र फलांशस्य करणत्वविवक्षास्वीकारात् । *विक्लित्तिकरण इति* । अत्र करणत्वनिष्ठा विषयता संसर्गरूपा, न तु प्रकारतारूपा । अपदार्थत्वात् । *तस्याः = विक्लित्तेः । *केषाञ्चिदिति* । एतेन तादृशव्यवहारो न युक्तः, फलानाश्रयत्वादिति सूचयति ।

"ज्योतिष्टोमेन भक्तिपूर्वं यजेत" इत्यत्रापि ज्योतिष्टोमेनेतितृतीयोपपत्तये फलांशस्य करणत्वेनान्वयाद्भक्तिपूर्वमिति द्वितीया कथमिति न शङ्क्यम् । तत्र भक्तिपूर्वमित्यस्य भावनाविशेषणत्वेन प्रथमान्तत्वान्नपुंसकत्वाच्च । स्वर्गकाम इत्यादिपदसमभिव्याहारे तु स्वर्गकामनावत्कर्तृकत्वमाख्यातार्थभावनायां भासते । एवञ्च तादृशपुरुषवृत्तीच्छायामर्थात्तद्धात्वर्थप्रयोज्यत्वलाभ इति दिक् ।

*अधिकारोऽयमिति* । तेन वक्ष्यमाणसूत्राणान्नञ्समासकर्मधारयभिन्नसमासे प्रवृत्तिः । आरोपितस्य नञर्थत्वेन नञ्समासस्यापि कर्मधारयत्वात् नञ्ग्रहणवैयर्थ्यशङ्कायामाह—*अनञिति* ।

( शे० ) सा चोशीनरेषु तत्पुरुषभिन्ना नञ्समासकर्मधारयरूपा च नास्तीति* नात्राधिकारप्रयोजनम् । इदं प्रकरणं परवल्लिङ्गत्वस्य विशेष्यनिघ्नत्वस्य चापवादः ॥

उपज्ञोप (पा० सू० २ । ४ । २१ ।) ॥ *इह सना शास्त्रे विवक्षैव नियामिका न वस्तुस्थितिरिति सूच्यते । तेन त्वदुपक्रमं सौजन्यव्यवहार इत्यपि । तत्र यद्यपि विवक्षा द्विविधा—प्रायोक्त्री लौकिकी च । प्रयोक्तृशब्देन व्यवहारार्थं प्रयोगकर्त्तारोऽस्मदादयः । लोकशब्देन विदितवेद्यः परावरज्ञः शिष्टः । लोके एतदेव शिष्टत्वं पृषोदरादिसूत्रभाष्योक्तम् । तथाप्यत्र *नाद्या विवक्षिता । तेषामपभ्रंशप्रयोगे बाहुल्येन प्रवृत्तेः । तस्माद्न्त्यैव । ते हि यत्रार्थे यं शब्दं धर्मबुद्ध्या प्रयुञ्जते तेषां शास्त्रविषयतेति "तदस्य तदस्मिन् स्यादिति"(पा० सू० ५ । १ । १६) इति सूत्रे भाष्ये स्पष्टम् । तेषामेवाभिधानानभिधाने अपि बोध्ये । *इह षष्ठीतत्पुरुषं विना तदादित्वासम्प्रत्ययान्नाधिकारफलम् । उपज्ञायत इत्युपज्ञा । कर्मण्यङ् । पाणिनेरुपज्ञेति कर्तृषष्ठ्या समासः । उपक्रमे कर्मणि घञ् । पाणिनिसम्बन्ध्याद्यज्ञानविषय इत्यर्थः ।

छाया बा (पा० सू० २ । ४ । २२ । ) ॥ बाहुल्ये सति या छाया तद्वाची यश्छायान्तस्तत्पुरुष इत्यर्थः । तत्र कस्य बाहुल्ये इत्याकाङ्क्षायामावरकद्रव्यनिमित्तत्वाच्छायायास्तद्बाहुल्य*इति गम्यते । तच्च पूर्वपदार्थभूतमेवेत्याशयेनाह— पूर्वपदार्थेति । पूर्वपदार्थबाहुल्यस्य षष्ठीतत्पुरुष एव सम्भवात् नात्राप्यधिकारफलम्* । *पर्यायस्येति । पर्यायवचनस्येति वाच्ये पर्यायस्येत्युक्तिः सत्या सभामेतिवत् । एव-

---

(चं०) *नास्तीतीति* । तदुक्तम्भाष्ये—"न हि संज्ञायां कन्थान्त उशीनरेष्वतत्पुरुषो नञ्समासः कर्मधारयो वाऽस्ति"इति ।

त्वदुपक्रमं सौजन्यमित्यादिष्वादित्वाभावात्कथम् "उपज्ञ" (पा० सू० २ । ४ । २१) इतिसूत्रप्रवृत्तिरत आह—*इह सनेति । *नाद्या=प्रायोक्त्री । *इह षष्ठीतत्पुरुषं विनेति* । तदुक्तं भाष्ये—"न हि तदाद्याचिख्यासायामुपज्ञोपक्रमान्तोऽतत्पुरुषो नञ्समासः कर्मधारयो वाऽस्ति"इति ।

*तद्बाहुल्य इति* । आवरकबाहुल्य इत्यर्थः । *नात्राप्यधिकारेति । "न हि छायान्तो बाहुल्येऽतत्पुरुषो नञ्समासः कर्मधारयो वाऽस्ति"इति भाष्यकारोक्तेः । *पर्यायस्येतीति* । जित्पर्यायवचनस्यैव राजाद्यर्थम् । ञिसिद्ध्य

(शे०)कारेण स्वरूपस्य विशेषाणां च व्यावृत्तिः। रूढ्येति। पर्युदासवृत्त्येत्यपि कश्चित्। नेह—काष्ठसभा। अत्रापि नाधिकारोपयोगोऽन्यासम्भवात्। सभाशब्दः शालायां सङ्घाते च। तत्राद्यंप्रतिषेधादाह—सङ्घातेति। अशालेत्यस्याशालार्थेत्यर्थः। अत्राप्यन्यासम्भवान्नाधिकारोपयोगः*। प्रथमार्थे षष्ठीत्याशयेनाह—एतदन्त इति। द्वन्द्वे समाहारेतरेतरयोगाभ्यां रूपद्वयस्य दुर्वारत्वेन बहुव्रीहौ प्रत्युदाहरति—हृदसेन इति॥

इति तत्पुरुषः॥

द्वितीयाश्रितेत्यादिनेति। *व्याख्यानात् शेष इत्यस्य *प्रथमान्तत्वाच्च* प्रथमान्तपदोपात्तापेक्षशेषस्यैव ग्रहणमिति भावः। अन्यस्येति। अन्यत्वं चोपस्थितसमस्यमानप्रथमान्तापेक्षम्। तच्च यस्य यस्मिन्नित्यादि, तदाह—अप्रथमेति। तदन्तार्थे इत्यर्थः। यद्यपि पदेन प्रकृत्यर्थोपसर्जनः क्रियाकारकभावादिसम्बन्धरूपो विभक्त्यर्थः प्राधा-

---

(चं०)कर्त्तव्यः। ततो वक्तव्यम्पर्यायवचनस्यैव ग्रहणम्भवति। किम्प्रयोजनम्?। राजाद्यर्थम्—सभाराजाऽमनुष्यपूर्वा। इनसभम्, ईश्वरसभम्। तस्यैव न भवति राजसभा। तद्विशेषाणाञ्च न भवति—पुष्यमित्रसभा, चन्द्रगुप्तसभेतिभाष्यकारोक्तिरिह प्रमाणम्। *नाधिकारोपयोग इति। एतदपि भाष्ये स्पष्टम्। "विभाषा सेना"(पा० २।४।२५) इतिसूत्र एवाधिकारस्य प्रयोजनम्भाष्ये दर्शितमन्यत्र तु स्पष्टार्थमेव तत्सम्बन्धः॥

इति तत्पुरुषविवरणम्॥

*व्याख्यानादिति। "शेषो बहुव्रीहिः"(पा० सू० २-२-२३) इतिसूत्रघटकशेषपदस्योपयुक्तादन्यपरतया यस्य पदस्यार्थस्य वा पूर्वमुपयोगस्ततः स्यादावप्रसिद्धिमुक्त्वा त्रिकः शेष इति भाष्यकृता सिद्धान्तितम्, तन्मूलकव्याख्यानादित्यर्थः। अयं भावः—पदतः शेषस्य ग्रहणे यस्य पदस्य सामान्यतो विशेषतो वा उपयोगस्तदन्याप्रसिद्धिः, सामान्यतः "सुप्सुपा"इत्यत्रोपयोगः, विशेषतो "द्वितीयाश्रित"(पा० सू० २-१-२४) इत्यादौ सः। अर्थोऽपि—पूर्वपदार्थप्रधानत्वेऽन्यपदार्थप्रधानत्वेऽव्ययीभावः। उत्तरपदार्थप्रधानत्वे तत्पुरुषः प्रसिद्ध एव। अतो यस्य त्रिकस्य विशिष्य समासो नोक्तः स शेष इति विवक्षितम्। युक्त्यन्तरमाह—*प्रथमान्तत्वादिति*। शेष इत्यस्य प्रथमान्तत्वादित्यर्थः। अन्यपदार्थे इत्यत्रान्यपदस्य भेदविशिष्टार्थकतया भेदस्य प्रतियोग्याकाङ्क्षायां शेषपदोपस्थितस्य प्रतियोगित्वेनान्वयाद् द्वितीतान्ताद्यर्थ इत्यस्य लाभः। *व्याख्यानादिति*। प्रकृतसूत्रभाष्ये "पदार्थाभिधानेऽनुप्रयोगानुपपत्तिरभिहितत्वात्, चित्रगुर्देवदत्त इति।

(शे०)न्येनाभिधीयते,प्रकारतानिरूपितत्वाच्च संबन्धस्यापि प्राधान्यव्यवहारः। एवञ्च देवदत्तादिपदैः सामानाधिकरण्यानुपपत्तिः, तथापि *व्याख्यानात् विभक्त्यर्थाक्षिप्तसंबन्ध्यन्तर्भावेणापि शक्तिकल्पनयाऽदोषात् । *तत्रैकस्य संबान्धिनः समस्यमानपदैरुक्तत्वेन द्वितीयः संबन्धी यस्येत्यादिप्रकृत्यर्थभूतो गृह्यते इति स्पष्टं भाष्ये । चित्रा गावो यस्येत्यादौ लौकिके वाक्ये चित्राणां गवां प्राधान्येऽपि वृत्तौ तदर्थबोधकविग्रहवाक्ये च विशेषणविशेष्यभावव्यत्यासः, ततः शिष्टानां तथैव बोधात् । तत्र षष्ठीसप्तमीविभक्त्यन्तातिरिक्तार्थे *कर्तृकर्मवचनसुबन्तानामेव समासः । "मत्वर्थे बहुव्रीहिः कर्मकर्तृवचनेनाप्रथमाया" इति वार्त्तिकात् । *तः परो यस्मादिति विग्रहो मत्वर्थे एव । तत्र पञ्चम्याः षष्ठ्यपवादत्वेन षष्ठ्यर्थकत्वात् । एवं वन्या इतरे येभ्य इत्यत्रापि मत्वन्तस्यैव बहुव्रीहेरप्यस्त्यर्थान्तर्भावे शक्तिरिति मतुप्सूत्रे भाष्ये स्पष्टम् । * ग्राहवती नदीत्यादेः पदसमुदायस्य मा स्नाहीति वाक्यार्थे वर्त्तमानस्य*बहुव्रीहिव्यावृत्त्यर्थं पदग्रहणम् ।

अन्येत्यादि किम् । *बहुपदो बहुव्रीहिः स्वपदार्थे मा भूदिति* । *द्वयोः पदयोः समानाधिकरणत्वे स्वपदार्थे वृत्तौ तत्पुरुषेणाबाधात् ।

---

(चं०)चित्रगुशब्देनाभिहितः सोऽर्थ इतिकृत्वाऽनुप्रयोगानुपपत्तिः" इत्येवं शङ्कां कृत्वा "सामान्याभिधाने विशेषानभिधानम् । सामान्ये ह्यभिधीयमाने विशेषोऽनभिहितो भवति । तत्रावश्यं विशेषार्थिना विशेषोऽनुप्रयोक्तव्यः । चित्रगुः कः ?, देवदत्तः" इति । एवं रीत्या प्रथमान्तपदार्थेन सामानाधिकरण्यप्रदर्शनपरतया समाधानकृत्तन्मूलकादित्यर्थः । तत्रान्यसंबन्धिकल्पनापेक्षया यद्विभक्त्यर्थे समासविधानं तद्विभक्तिप्रकृत्यर्थ एव संबन्धित्वेन कल्प्यते । *तत्र=अप्रथमाविभक्त्यर्थे समासाश्रयणे । *कर्त्तृकर्मवचनेति* । कर्तृवचनस्य यथा प्राप्तोदको ग्राम इति । यथा चात्र वृत्तिविग्रहवाक्यार्थयोः कल्पना तथाऽन्यत्र प्रपञ्चितम् । कर्मवचनस्य यथा उद्धृतौदना स्थालीत्यादौ ।

ननु तः परो यस्मादित्यादौ मत्वर्थाभावेऽपि बहुव्रीहिदर्शनान्मत्वर्थे बहुव्रीहिरित्याद्यनुपपन्नमत आह—*तः पर इति* । अन्यार्थ इत्येव सिद्धे पदग्रहणाङ्किमर्थमित्याकाङ्क्षायामाह—*ग्राहवती नदीति* । *बहुव्रीहिव्यावृत्त्यर्थम्=बहुव्रीहिसंज्ञाव्यावृत्त्यर्थमित्यर्थः । *बहुपदो बहुव्रीहिरिति* । तथा च जरती चित्रा गौरित्यर्थेऽपि बहुव्रीहेः साधुत्वापत्तिः । अत्र बहुपद इत्यभिधानेन राजपुरुष इत्यादौ यद्यप्येकसंज्ञाधिकारात्तत्पुरुषो बहुव्रीहिं बाधते तथापि तस्य नावसर इति सूचयति । तदेवोपपादयति—*द्वयोरिति ।

(शे०) किंच बहुषु सावकाशं बहुव्रीहिमन्यपदार्थेऽपि समानाधिकरणतत्पुरुषो बाधेत। सति त्वस्मिन् द्वयपदार्थे सावकाशं तत्पुरुषमन्यपदार्थे बहुव्रीहिर्बाधत इति न दोषः । *अनेकं किम्?। *बहूनामपि यथा स्यात्। तेन चित्राजरद्गुरित्यत्र चित्रापदे *पुंवत्वं न। *कपिञ्जलाधिकरणन्यायस्यात्र शास्त्रेऽनाश्रयणात् *चतुरादिपदानामप्ययम् । यदि तु "तद्धितार्थ"(पा० सू० २।१।५१) इत्यनेनो*त्तरपदे समासविधानात् ज्ञापकाद् बहूनां समासो यथाभिधानं सिद्धः । *चित्रगुरित्यादौ गोशब्दादेरुपसर्जनत्वमपि "एकविभक्ति"(सू० पा० १।२।४४।) इति सिद्धं, तच्च तत्रैवोपपादितम् । स्पष्टं चेदं प्रकृतसूत्रे भाष्ये इत्युच्यते, तदा *स्पष्टार्थमनेकग्रहणम् । सुपेति *तृतीयान्तं तु नेह संबध्यते। द्वयोः समासानापत्तेः । प्राप्तमुदकमित्यादि। अत्र यद्वक्तव्यं तत्कारके उक्तम्। तत्रान्यपदार्थः समासघटकसर्वपदशक्यः । परस्परसमभिव्याहार एव च तच्छक्त्युद्बोधकः। *अत एवान्यपदार्थे वर्त्तमानमनेकं सुबन्तमिति सङ्गच्छते । नञोऽस्त्यर्थानामिति। नञः परं यदस्त्यर्थवाचि पदं तदन्तस्य पदान्तरेण बहुव्रीहिरस्त्यर्थवाचिनान्तु *वा लोप इत्यर्थः। एवं प्रादिभ्य इ-

---

(चं०) *अनेकं किमिति*। सुप्सुपेत्यस्य सम्बन्धादेकस्य पदस्य 'सर्पिषोऽपि स्यात्' 'गोमूत्रस्यापि स्यात्'इत्यत्राप्रयुज्यमानबिन्द्वर्थे विद्यमानस्यापि बहुव्रीहिसंज्ञा न भविष्यतीति प्रश्नः। *बहूनामपीति*। अन्यथा तत्पुरुषवद् द्वयोरेव सा स्यादिति भावः। *पुंवत्वन्नेति*। उत्तरपदपरत्वाभावात्। *कपिञ्जलाधिकरणेति। तत्र यथा "कपिञ्जलानालभेत"इत्यत्र प्रथमोपस्थितत्वात् त्रयाणामेव ग्रहणं तथा प्रकृते न, "निर्जां त्रयाणाम्"(पा० सू० ७-४-७५) इति सूत्रे त्रयाणां ग्रहणात् 'सुसूक्ष्मजटकेशेन सुनताजिनवाससा' इति बहूनामपि बहुव्रीहिप्रदर्शनपरभाष्यप्रामाण्याच्च, तदाह—*चतुरादीति। *उत्तरपदे परतः समासविधानाज्ज्ञापकादिति*। यद्यपि "तद्धितार्थ"(पा०सू० २-१-५१) इति सूत्रेण विधीयमानद्विगोर्व्यहजातादौ चारितार्थ्यन्तथापि दिग्वाचकस्योत्तरपदे समासविधानं ज्ञापकमिति भावः। उपसर्जनसंज्ञासिद्धिरपि न प्रयोजनमित्याह—*चित्रगुरित्यादाविति । *स्पष्टार्थमिति । "चार्थे द्वन्द्वः"(पा० सू० २-२-२९) इत्युत्तरसूत्रेऽनुवृत्त्यर्थत्वमपि न । पूर्वोक्तज्ञापकस्य वृत्तिघटकपदान्यपदार्थे विद्यमानानां बहूनामपि समास इत्यर्थे सामान्यापेक्षज्ञापकाश्रयणेन द्वन्द्वस्य बहुपदसम्बन्धिनः सम्भवात्। एवं ज्ञापकेन बहूनां समासकल्पनापेक्षया स्पष्टप्रतिपत्त्यर्थमत्रानेकग्रहणमिति भावः। *तृतीयान्तन्त्विति । यदाऽनेकग्रहणं स्पष्टार्थे कृतं तदाऽनेकं सुबन्तं सुपा समस्यत इत्युक्ते त्रिप्रभृतीनामेव स्यादिति भावः। *अत

(शे०) त्यपि व्याख्येयम् । उच्चैर्मुख इत्यादौ उच्चैरित्यस्या *धिकरणशक्तिप्रधानत्वेऽपि वृत्तावा*धेयप्रधानत्वात्सामानाधिकरण्यम् । अस्तीत्यस्य तिङन्तत्वेन सुबित्यनुवृत्तेः समासो न स्यादत आह-विभक्तीति । विद्यमानक्षीरेत्युदाहरणार्थः ।

निपातनादिति । अन्यथा प्राप्तस्यान्यथोच्चारणं निपातनम् । प्रसज्यप्रतिषेधार्थकनञा समासोऽपि तत एव । भाषितः पुमान् यस्मिन्नर्थे तद्भाषितपुंस्कम् । प्रवृत्तिनिमित्तस्या*ऽऽधारत्वविवक्षया सप्तमी । ततः तदस्यास्तीत्यर्शआद्यच् । अतद्गुणसंविज्ञानश्चायं बहुव्रीहिः । पुंस्त्वविशिष्टस्य स्त्रीलिङ्गशब्दवाच्यत्वाभावात् । शब्दश्च स्त्र्यर्थकृतवैलक्षण्यातिरेकेण स्त्रीवाचकसमानानुपूर्वीकः समानार्थश्च गृह्यते प्रत्यासत्तेः । तुल्ये प्रवृत्तिनिमित्ते इति । यदर्थज्ञानेन तद्विशिष्टे शब्दस्य प्रवृत्तिस्तत्प्रवृत्तिनिमित्तम् । भाषितः पुमान् *येनेति तु *नोक्तम् । *कुटीजीविक इत्यादावतिप्रसङ्गात् । कुटशब्दो घटपुमान्, गेहे स्त्री । गर्भिभार्यः *प्रसूतभार्य इत्यत्र तु 'गर्भी व्रीहिः

---

(चं०) एव=सर्वपदशक्यत्वादेव । *वा लोप इति* । अस्यैवापूर्वविधेयत्वम् । समासस्तु "अनेकम्"(पा० सू० २-२-२४) इति सूत्रेणापि सिद्धः । *अधिकरणशक्तिप्रधानत्वेऽपीति* । ऊर्ध्वदेशनिष्ठाधिकरणतेत्यर्थात् । *आधेयप्रधानत्वादिति* । शब्दशक्तिस्वभावादूर्ध्वदेशवृत्तित्वबोधकत्वात् ।

*आधारत्वविवक्षयेति* । भाषितः पुमान् पुंस्त्वविशिष्टोऽर्थो यस्येति आधेयस्य प्रवृत्तिनिमित्तस्याधारत्वविवक्षया सप्तम्यर्थे बहुव्रीहिप्रदर्शनं स्त्र्यर्थकृतवैलक्षण्यभिन्नवैलक्षण्याभाववतः समानानुपूर्वीकस्य यदा स्त्रियां प्रवृत्तिस्तदापि तदेव प्रवृत्तिनिमित्तं वाच्यमिति बोधयितुम् । *येनेति । शब्देनेत्यर्थः । *नोक्तमिति* । पुंवद्भावयोग्येन स्त्रियां वर्त्तमानेन शब्देन कदाऽपि पुंसः प्रतिपादनस्याभावादिति शेषः ।

ननु भाषितः पुमान् येनेत्यत्रान्यपदार्थः प्रवृत्तिनिमित्तमेव विवक्षितः । ततोऽर्शआद्यचा सङ्ग्रहं कृत्वा स्त्र्यर्थकृतवैलक्षण्यभिन्नवैलक्षण्याभाववतस्तादृशस्य स्त्रियां वर्त्तमानस्य पुंवद्भाव इत्यर्थोऽस्त्वित्यत आह—*कुटीजीविक इति* । आदिना पात्रीभार्यो, द्रोणीभार्य इत्यस्य सङ्ग्रहः । कुटशब्दस्य येन प्रवृत्तिनिमित्तेन पुमान् भाषितो भवति तत्प्रवृत्तिनिमित्तकत्वमस्तीति सूचयति—*कुटशब्द इति । एवं परिमाणवाची पात्रशब्दोऽर्द्धर्चादिः । भाजने तु स्त्रीलिङ्गः । द्रोणशब्दोऽपि परिमाणेऽर्द्धर्चादिः । सदृशपरत्वे तु भार्यासामानाधिकरण्यम् । प्रवृत्तिनिमित्तैक्ये विवक्षितेऽव्याप्तिशङ्कां वारयति—*प्रसूतभार्य इति । कैयटादय इत्यनेन सूचितामरुचिम्प्रकटयति-*अन्ये त्वि-

(शे०)प्रसूतोऽगम्'इत्यादिप्रयोगात्पुंस्त्वविशिष्टस्यापि बोधनाद्भाषितपुंस्कत्वमस्ति उभयत्रापि गर्भसम्बन्धोत्पत्त्याऽपत्यसम्बन्धः प्रवृत्तिनिमित्तमिति समानायामाकृतौ तत्त्वमस्तीति कैयटादयः। *अन्ये तु पुंसि गर्भी व्रीहिरित्यत्रावयवभूतगर्भसम्बन्धः स्त्रियान्त्वनवयवभूतगर्भसम्बन्धः, *तथा प्रसूतादिशब्दानामपि,स्त्रियां गर्भविमोचनं पुंसि गर्भाधानमिति समानाकृतित्वा*भाव एव। *पुंवद्भावार्थन्तु "स्त्रियाः पुंवत्"(पा० सू० ६ । ३ । ३४)इतियोगविभागरूपो यत्नः कार्यः। अग्रिमेण च तस्य क्वाचित्कत्वं बोध्यते। एतदेव ध्वनयितुं पुंवदिति *आदौ मध्ये पठितम्। *अत एव भाष्ये कर्त्तव्योऽत्र यत्न इत्युक्तम्। *न हि शब्दस्य प्रवृत्तिनिमित्तं यत्नसाध्यम्। शब्दार्थसम्बन्धनित्यताहानेः। *एवञ्च प्रवृत्तिनिमित्तविशेषे गर्भिणीशब्दो नित्यस्त्रीलिङ्ग इति गर्भिण्यो दारा इत्येव।

*स्त्रीदाराद्यैर्यद्विशेष्यं यादृशैः प्रस्तुतं पदैः।
गुणद्रव्यक्रियाशब्दास्तथा स्युस्तस्य भेदकाः॥

इत्यमरोऽनियतलिङ्गविषय एव। यादृशैः=यल्लिङ्गसंख्याबोधकैः। तथा=तल्लिङ्गसंख्याबोधकाः। भेदकाः=विशेषणभूतार्थप्रतिपादकाः। शुक्लत्यादयो गुणशब्दाः, दण्ड्यादयो द्रव्यशब्दाः, पाचकादयः क्रियाशब्दाः।

नमयति धनुरैशं यस्तदारोपणेन
त्रिभुवनजयलक्ष्मीर्मैथिली तस्य दाराः॥

इत्यादौ दारा इत्यादेरेव विशेषणत्वेन न दोष इति वदन्ति। अनूङिति

---

(चं०) ति*। *तथेति*। प्रवृत्तिनिमित्तमित्यर्थः। *अभाव एवेति। नन्वेवम्पुंवद्भावः प्रसूतभार्य इत्यत्र न स्यादत आह—*पुंवद्भावार्थन्त्विति। *आदौ=भाषितपुंस्कादित्यस्यादौ। *अत एव=योगविभागस्येष्टत्वादेव। ननु कर्त्तव्य इत्यनेन प्रसूतशब्दे समानप्रवृत्तिनिमित्तकत्वसाधनाय यत्नः कार्य इत्येव बोध्यते इत्यत आह—*न हीति। *एवञ्च=गर्भिणीशब्दस्यानवयवगर्भसम्बन्धप्रवृत्तिनिमित्तकत्वसिद्धौ च।

ननु दारशब्दस्य पुंलिङ्गतया तत्समानाधिकरणगुणवाचकस्यापि पुंस्त्वमेव युक्तमिति गर्भिण्यो दारा इत्यनुपपन्नमत आह—*स्त्रीदाराद्यैरिति*। अस्यार्थः-स्त्रीदाराद्यैर्यादृशैर्यल्लिङ्गसंख्याप्रतिपादकैः पदैर्यद्विशेष्यं प्रस्तुतं=प्रकान्तन्तद्गुणद्रव्यक्रियाशब्दास्तथा स्युः=तल्लिङ्गसङ्ख्यास्स्युः। तस्य भेदकाः=विशेषणभूतार्थप्रतिपादका इत्यर्थः। गुणशब्दाः=गुणप्रवृत्तिनिमित्तकाः। एवं द्रव्यशब्दा इत्यस्य द्रव्यप्रवृत्तिनिमित्तकाः, द्रव्यप्रकारप्रतीतिजनका इति पाठस्तु।

(शे०) *च प्रसज्यप्रतिषेधः। *तेनै*डविडभार्ये न दोषः। पुंवाचकस्येति। *प्रत्यासत्त्या पुंवद्भावभाजः शब्दस्य प्रयोगान्तरे पुमांसमाचक्षाणस्य यद्रूपं तदेवातिदिश्यते। तेन जरतीशब्देन विग्रहे *वृद्धगुरिति न। *वरटाभार्ये इत्यत्र हंसभार्ये इति न। *अत्र च रूपातिदेशो *न तु स्त्रीरूपार्थे पुमर्थातिदेशः। अर्थस्योत्तरपदपरत्वाभावात्, भाषितपुंस्कात् परत्वस्य चासंभवेन वरटाभार्यस्य स्थाने हंसभार्यस्यापत्तेश्च, भाषितपुंस्कादित्यस्यासङ्गतेश्च। स्त्र्यर्थस्य पुमर्थो भवतीत्यर्थेऽतिदिष्टे तद्वाचिशब्दप्रवृत्तिरत्र पक्ष इति बोध्यम्। *यद्यपि रूपातिदेशेऽर्थानिवृत्तिरवश्च वातण्ड्ययुवतिरित्यादौ "वतण्डाच्च"(पा० सू० ४-१-१०८) "लुक् स्त्रियाम्" (पा० सू० ४-१-१०९) इति यञो लुगापत्तिस्तथाप्यतिदिश्यमानरूपाविरुद्धस्य स्वाश्रयस्यातिदेशाविषयेऽप्रवृत्तेर्न दोषः। स्पष्टश्चेदमसिद्धवत्सूत्रे कैयटे। किं च स्त्रीत्वविशिष्टार्थवाचकस्य शब्दस्य स्थाने पुंस्त्वविशिष्टार्थवाचकरूपातिदेशे तदर्थविशिष्टस्य निवृत्त्या*ऽर्थस्यापि निवृत्तिरिति न कश्चिद्दोषः। *ध्वनितश्चेदं "तृतीयादिषु"(पा० सू० ७। १। ७४)इति सूत्रे भाष्ये।

समानाधिकरणे इति। सामानाधिकरण्यञ्चैकार्थविशेष्यकप्रती-

---

(चं०) *तेनेति*। प्रसज्यप्रतिषेधाश्रयणेनेत्यर्थः। *ऐडविडभार्य इति*। इडविड भार्या यस्येत्यर्थः। अत्रेडविडशब्दात् "जनपदशब्दात् क्षत्रियादञ्"(पा०सू० ४-१-१६८) इति सूत्रेण अञि कृते तस्य "अतश्च" (पा० सू० ४-१-१७७) इति लुकि इडविडशब्दादूङोऽभावसत्त्वात् पुंवत्त्वं भवतीति भावः। ननु पुंवद्भावस्य सूत्रेण विधाने वरटा भार्या यस्येत्यर्थविवक्षायां हंसभार्य इति स्यादत आह— *प्रत्यासत्त्येति*। *वृद्धगुरिति नेति। ननु वृद्धगुरितिरूपे इष्टापत्तिः। वृद्धा गौरिति विग्रहे तस्येष्टत्वात्समानार्थत्वाच्चेत्यत आह—*वरटेति। अस्य नित्यस्त्रीलिङ्गस्य पुमांसमित्यंशाभावेन न पुंवत्त्वम्। एवमेव लक्ष्मणाभार्य इत्यत्रापि बोध्यम्। *अत्र च=एतत्सूत्रोदाहरणे। अर्थातिदेशे दोषमाह-*न त्विति*। अर्थातिदेशे तद्वाची शब्दः प्रवर्त्तेत इत्यर्थे दोषः स्यादिति भावः। रूपातिदेशे प्रसक्तं दोषं वारयितुमाह-*यद्यपीति*। *अर्थस्यापि निवृत्तिरिति। एवञ्च न "वतण्डाच्च"(पा० सू० ४-१-१०८) इत्यस्य प्राप्तिः। *ध्वनितश्चेदमिति। अर्थातिदेशे एवंविधे प्रवेशे फलतो रूपातिदेशे पर्यवसानं सम्भवतीत्येतद् ध्वनितमित्यर्थः। तत्र हि तृतीयादिषु पुंवत् इत्यनेन भवतीति वाक्यशेषेण पुंसि यथा नुम्न भवति तथा भाषितपुंस्केगन्तस्यापि तृतीयादिषु न भवतीत्यर्थे ग्रामणीशब्दस्य नपुंसकह्रस्वत्वे कृते "गुणनाभावनुडौत्वानां प्रतिषेधो ग्रामण्ये ब्राह्मणकुलायेत्यादौ वक्तव्यः"इ-

(शे०)तिजनकत्वमात्रं न तु भिन्नप्रवृत्तिनिमित्तत्वगर्भम् । *अत एव युगपदधिकरणवचनतापक्षे पट्वीमृद्व्यावित्यत्र पुंवत्त्वमाशङ्क्य वृत्तौ वृत्तेः प्राक्च यत्र सामानाधिकरण्यं तत्रैव तत्प्रवृत्तिः । प्रकृते च न ततः प्राक् सामानाधिकरण्यमित्युक्तरितं* द्वन्द्वसूत्रे भाष्ये । "नामन्त्रिते समानाधिकरणे" (पा० सू० ८ । १ । ७३) इति सूत्रे च भाष्ये सामान्यवचनमित्यस्य 'अघ्न्ये देवि सरस्वति' इति पर्यायेषु प्रत्युदाहरणं दत्तमिति दिक् ।

चित्रा असितेति । *वृत्तौ संख्याविशेषाभानेऽपि गोत्वेनानेकव्यक्तिभानात् भूमरूपमत्वर्थेऽत्र बहुव्रीहिरिति भावः ।

नेष्टेति । *अत एवात्र सूत्रे "पट्वीमृद्व्यौ भार्ये यस्येति द्वन्द्वगर्भबहुव्रीहौ "पट्वीमृदुभार्य" इति भाष्ये उदाहृतम् । तत्र हि यत् पूर्वपदं द्वन्द्वो न स भाषितपुंस्कः । *अत एव पट्वीशब्दोत्तरङीपो न निवृत्तिः । मृद्वीशब्दस्य केवलस्य भाषितपुंस्कत्वेऽपि न पूर्वपदत्वमिति तदाक्षेपे नैतत्सिद्ध्येदिति भावः ।

*परे त्वाक्षेपेऽपि न दोषः । धर्मादनिच्सूत्रे केवलादित्युक्त्या तस्य यौगिकत्वबोधनात् । तद्धि मध्यमपदव्यावृत्तये समासाक्षिप्त*पूर्वपदस्य विशेषणमित्याकर इत्याहुः ।

---

(चं०) त्युक्त्वा अर्थातिदेशात्सिद्धम् । भाषितः पुमान् यस्मिन्नर्थे प्रवृत्तिनिमित्तरूपे तद्युक्तस्यार्थस्य पुमर्थो भवतीत्युक्त्वा पीलुने इत्यत्र फलत्वव्याप्यपीलुत्वरूपे पुमर्थातिदेशमाशङ्क्य समानायामाकृतौ यद्भाषितपुंस्कं तस्य पुमर्थो भवतीति समाहितम् । अत्र च यथा "स्त्रियाः पुंवत्"(पा० सू० ६-३-३४) इति सूत्रे भाष्ये न ह्यर्थेन पौर्वापर्यमस्तीत्यभिहितं, तथा नाभिहितम् । तेनैतद् ध्वनितमर्थातिदेशोऽर्थविशिष्टशब्दरूपस्यातिदेश इति । तेन क्लीबत्वविशिष्टार्थवाचकस्य शब्दस्य पुंस्त्वविशिष्टार्थवाचकत्वरूपातिदेशात्क्लीबत्वस्य निवृत्त्या तत्प्रयुक्तकार्याणामप्रवृत्तिरिति ।

*अत एव=भिन्नप्रवृत्तिनिमित्तत्वस्यानिवेशादेव । *इत्युक्तरितमिति । वृत्तौ यद्यपि युगपदधिकरणवचनत्वेनैकविशेष्यकप्रतीतिजनकत्वं तथापि वृत्तेः प्राक् तथा नेति भावः । ननु वृत्तौ सङ्ख्याविशेषानवगमेन चित्रा गावोऽस्येतिविग्रहे संख्याविशेषभानेन वृत्तिसमानार्थकत्वं नैतादृशविग्रहस्येत्यत आह—*वृत्ताविति ।

*अत एव=पूर्वपदाक्षेपाभावादेव । *अत एव=समुदायस्य भाषितपुंस्कत्वाभावादेव । परमतङ्कटाक्षयन्नाह—*परे त्विति* । *पूर्वपदस्य विशेषणमिति* । अत्र केवलम्=स्वाव्यवहितोत्तरत्वसम्बन्धावच्छिन्नत्वघटितसमास-

(शे०) *चित्राजरगुद्गुरितीत्यस्य 'प्रयोग' इति शेषः। भाष्यमित्यस्य सूचयतीति शेषः। *पट्वीमृदुभार्य इति भाष्येणेदं ध्वनितमिति भावः। जरद्गवीके "गोरद्धित" (पा० सू० ५।४।९५) इति टचि ङीप्। ततश्चित्राशब्देन बहुव्रीहौ "नद्यृतश्च" (पा० सू० ५।४।१५३) इति कप्। वामोरुभार्ये "संहितशफ"(पा० सू०।४।१७०) इत्यूङ्। प्रधानमिति। भावल्युडन्तं नित्यनपुंसकम्॥

अप्पूरणी (पा० सू० ५।४।११६)॥ पूर्वपदप्रकृतिस्वरेण प्रत्ययस्यानुदात्तत्वे सिद्धेऽप्यपः पित्त्वं सुपञ्चमा इत्यादौ "नञ्सुभ्याम्" (पा०सू० ६।२।१७२) इत्यन्तोदात्तबाधनार्थम्। स्त्रीलिङ्गनिर्देशात्पञ्चमशब्देन समासे सुपञ्चमा इत्यादावप्न। तेन तत्रान्तोदात्तमेव। रात्रय इति। *उद्भूतावयवभेदो रात्रिसमुदायोऽन्यपदार्थः। प्रमाणीति। करणे ल्युट्, तदन्तस्य *विशेष्यनिघ्नतया ङीप्। प्रधानपूरण्यामेवेति। पुंवद्भावविधौ *वार्त्तिकात् "कल्याणपञ्चमीकः पक्षः" इति भाष्योदाहरणात्समासान्तश्च तत्रैवेति भावः।

वाच्या चेति। अन्यपदार्थघटकतया समासवाच्या चेत्यर्थः। उद्भूतावयवभेदस्य रात्रिसमूहस्य प्रधानत्वेन यथा प्रथमाद्या रात्रयः समासाभिधेयाः, एवं पञ्चम्यपीति वर्त्तिपदार्थस्यान्यपदार्थेऽनुप्रवेशात्प्राधान्यमिति भावः।

---

(चं०) घटकनिष्ठप्रतियोगिताकाभाववत्त्वं, तच्च विशेषणम्। यदि पूर्वपदशब्दस्य समासप्रथमावयवे रूढिः स्यात्तदाऽव्यावर्त्तकत्वेन व्यर्थं स्यादिति भावः।

ननु "चित्राजरद्गुरितिभाष्यम्"इतिमूलोक्तमसङ्गतम्। संप्रत्युपलभ्यमानभाष्यग्रन्थे तादृशप्रयोगानुपलम्भादतो व्याचष्टे-*चित्राजरद्गुरितीत्यस्येति। *पट्वीमृदुभार्य इति। द्वन्द्वपूर्वपदकोऽत्र बहुव्रीहिः।

यदुक्तं रात्रिः पूरणीवाच्या चेति तदुपपादयति-*उद्भूतावयवेति*। *निघ्नतयेति। अत्र हनधातुर्गत्यर्थः।

*वार्त्तिकादिति। "अप्पूरणी" (पा० सू० ५।४।११६) इतिसूत्रे एवं हि वार्त्तिककृतोक्तम्-"अपि प्रधानपूरणीग्रहणम्"इति। "अपि प्रधानपूरणीग्रहणङ्कर्त्तव्यम्-कल्याणी पञ्चमी यस्य पक्षस्य स कल्याणपञ्चमीकः पक्ष इत्यत्र माभूत्" इति भाष्यकृतोक्तम्। "स्त्रियाः पुंवत्" (पा० सू० ६।३।३४) इतिसूत्रे च "पूरण्यामप्रधानपूरणीग्रहणम्। पूरण्यां प्रधानपूरणीग्रहणङ्कर्त्तव्यमि-

(शे०) नद्युत्तरपदादिति । *नद्यन्तादिति नोक्तम् । बहुधीवरीति । नद्यन्तबहुव्रीह्यर्थे बहु असु धीवन् अम् इति वाक्ये कबापत्तेः । न च बहु-धीवरीति नद्यन्तस्य न बहुव्रीहित्वम् । लिङ्गविशिष्टपरिभाषया सत्त्वात् । तथा हि–प्रातिपदिकत्वतद्वाच्यधर्माणां लिङ्गप्रत्ययरहिते दृष्टानां तद्विशिष्टेऽतिदेशः क्रियते । *ध्वनितश्चेदं "बहुव्रीहेरूधसः"(पा० सू० ४-१-२५) इत्यत्र भाष्ये ।

पुंवद्भाव इति । पूरण्या अप्रधानत्वाभिषेधाप्राप्तेरिति भावः ॥

केऽणः (७।९।१३) अत्र कस्तद्धित एव *व्याख्यानात् । तेन 'राका'इत्यादौ न ह्रस्वः । दृढमिति । *अदार्ढ्यनिवृत्तिमात्रपरत्वेन लिङ्गविशेषविवक्षा नेति भावः । तद्विवक्षायां दृढा भक्तिरित्यादिसिद्ध्यर्थं प्रियादिषु तत्पाठः । अव्याप्त्यतिव्याप्तीति । तिलूथ्यनूशसां तसिलादिषु पाठाभावात्तदन्तेऽव्याप्तिर्देश्यादेः पाठात्तदन्तेऽतिव्याप्तिरिति भावः । तिलूथ्यनोः परिगणनसामर्थ्यात्तदुदाहरणे वृकतिः, अजथ्येत्यत्र "जातेश्च"(पा० सू० ६-३-४१)इति निषेधो न । जातीयरावेिति । नन्वत्र जातीयदेशीयग्रहणं व्यर्थम् । "पुंवत्कर्मधारय"(पा० सू० ६-३-४२) इत्यनेन तत्र सिद्धेः । पाचकजातीयादौ च "न कोपधायाः"(पा० सू० ६-३-३७)इत्यादिनिषेधं बाधित्वा तेनैव परत्वात्पुंवत्त्वसिद्धेः । *कर्मधारयांशे निषेधापवादत्वेऽपि जातीयाद्यंशे तदपवादत्वे मानाभावादिति चेन्न । "कर्मणिङ्"(पा०सू० ३।

---

(चं०) ति । प्रधानं या पूरणी तत्रेति वक्तव्यम् । इह मा भूत् । कल्याणी पञ्चमी-यस्य स कल्याणपञ्चमीकः पक्षः"इति । अत्राप्प्रत्ययस्य पुंवद्भावनिषेधस्य चाक-रणाद्यत्र पूरण्याः प्राधान्यं तत्रोभयोः प्रवृत्तिः । पक्षस्य प्राधान्ये च पूरण्या न प्राधान्यं, तिरोहितावयवभेदसमुदायस्य पक्षत्वादिति भावः ।

*नद्यन्तादिति नोक्तमिति* । नद्यन्तो यो बहुव्रीहिर्लोके प्रयुज्यते तदीयालौकिकविग्रहवाक्य इति तु नोक्तमित्यर्थः । *ध्वनितमिति* । तत्र हि कुण्डोध्नीत्यत्र कबापादनपरभाष्येणेदं ध्वनितमित्यर्थः । तत्राप्येता-दृशार्थ एव कबापत्तिः कृता । नद्यन्तानां यो बहुव्रीहिरितिसूत्रार्थमाश्रित्य परिहारः कृत इति त्वन्यत् । *व्याख्यानात्=केतिस्वरूपग्रहणे शुतम्पाक इति निर्देशासङ्गतिः । प्रत्ययमात्रग्रहणे तु राका धाकेत्यत्रातिव्याप्तिरिति लक्ष्यदर्शनमूलकव्याख्यानादित्यर्थः । सामान्यविवक्षामुपपादयति–*अदार्ढ्येति* ननु "पुंवत्कर्मधारय"(पा० सू० ६।३।४२) इत्यस्य निषेधापवादत्वेन परत्वा-दित्यसङ्गतमित्यत आह–*कर्मधारयांशेति* । दर्शनीयजातीया दर्शनीयदेशीये-

(शे०)१।३०)इति सूत्रभाष्योक्तेन विध्युन्मूलकत्वमूलकेन 'निषेधाश्च बलीयांसः'इति न्यायेन परत्वाप्रवृत्तेः। पुनर्ग्रहणे तु कर्मधारय इवात्राप्यपवादत्वेन निषेधं बाधित्वा प्रवृत्तिः। *अस्याश्चेदमेव ज्ञापकम्। *अत्र कप्रत्ययोऽपि बोध्यः। *पुंवत्त्वाद्धस्वत्वं विप्रतिषेधेनेति "पुंवत्कर्मधारय"(पा० सू० ६।३।४२)इति सूत्रस्थविप्रतिषेधनिरूपणे-"पुंवद्भावावकाशो-*दारदिका। इहोभयं प्राप्नोति-पटुविका" इति भाष्योक्तेः। दारदिकेत्यत्र "जातेश्च" (पा०सू० ६।३।४१)इति निषेधो न। *दरदो*ऽगोत्रत्वेनाजातित्वात्। *किं च "स्वाङ्गाच्चेतः" (पा० सू ६।३।४०) इति साहचर्येण *व्याख्यानेन च जातेरित्यस्य पञ्चम्यन्ततया जातेः परो यः प्रत्ययस्तदन्ता स्त्री न पुंवदित्यर्थेनादोषात्। अन्यथा जातिरित्येव वदेत्। *तस्यां वेलायां तदेत्यादौ 'सर्वनाम्नो वृत्तिमात्रे'इत्येव सिद्धम्। *अतसुचोऽकाराभावे दक्षिणाशब्दात्तसि दक्षिणत इत्यसिद्धिमाशङ्क्य 'सर्वनाम्नो वृत्तिमात्रे'इत्येव सिद्धमिति भाष्योक्त्या तस्य तद्धितेऽपि प्रवृत्तेः।

त्वतलोः॥ *अत्र सञ्ज्ञाजातिकृदन्ततद्धितान्तसमस्तसर्वनामसंख्याशब्दातिरिक्तः शब्दो गुणवचन इत्युच्यते। आकडारसूत्रभाष्यतस्तथैव लाभात्। *अत एव"एकतद्धिते च" (पा० सू० ६।३।१) इति सूत्रे भाष्ये 'एकत्वमिति पुंवत्त्वात्सिद्धम्' इत्याशङ्क्य 'न सिध्यति। उक्तमेतत्त्वतलोर्गुणवचनस्य' इत्युक्तम् एकशब्दे सर्वनामसञ्ज्ञया गुणवचनसञ्ज्ञाया

---

(चं०) त्यत्र चारितार्थ्यादिति भावः। *अस्या इति। "निषेधाश्च"इतिपरिभाषाया इत्यर्थः। *अत्र=तसिलादिषु। तसिलादिषु कप्रत्ययपाठे प्रमाणमुपन्यस्यति-*पुंवत्त्वाद् ह्रस्वत्वमिति*। *दारदिकेति*। दरदोऽपत्यं स्त्री दरत् द्व्यञ्लक्षणस्याणः "अतश्च"(पा० सू० ४।१।१७७) इति लुकि ततः कप्रत्यये पुंवद्भावे सति दारदिकेत्यस्य सिद्धिस्तसिलादिषु कप्रत्ययपाठे भवतीति भावः। ननु दारदिकेत्यत्र "जातेश्च"(पा० सू० ६।३।४१) इतिनिषेधः कुतो नेत्यत आह-*दरद इति*। *अगोत्रत्वेनेति*। अनन्तरापत्ये प्रत्यये सतीत्यर्थः। जातिवाचकं यत् स्त्रीप्रत्ययान्तमित्यर्थेऽत्र निषेधप्राप्तिः। गोत्रापत्ये प्रत्ययसत्त्वे त्वाह-*किञ्चेति*। *व्याख्यानेनेति*। जातेरितिपञ्चमीनिर्देशमूलकव्याख्यानादित्यर्थः। परिगणने सत्यव्याप्तिशङ्कायामाह-*तस्यामिति। सर्वनाम्न इत्यस्य समास एव प्रवृत्तिभ्रमं निराकरोति-*अतसुच इति*।

"त्वतलोः इतिसूत्रे गुणवचनेति संज्ञास्वरूपोच्चारणादाह-*अत्रेति। *अत एव=गुणवचनसंज्ञकस्य ग्रहणादेव। हास्तिकामित्यस्य प्रकारान्तरे-

बाध इति तदाशयः। 'सखीत्वं सखि रक्षणीयम्'इति त्वसाध्वेव। हास्तिकमिति। "अचित्तहस्ति"(पा० सू० ४। २। ४०)इति ठक्। *यस्येति लोपेन तु न निर्वाहः। *तस्याऽऽभीयत्वेनासिद्धत्वात्स्थानिवत्त्वाच्च "नस्तद्धिते"(पा० सू० ६। ४। ४१)इति टिलोपानापत्तेः। "ठक्छसोः" (का.वा.)इत्यनेनापि न सिद्धिः। छसा सहचरितस्य भवतष्ठक एव तत्र ग्रहणात्। रौहिणेय इति। रोहितशब्दात् "वर्णादनुदात्तात्"(पा०सू० ४। १। ३९) इति ङीब्नकारौ, सति पुंवत्त्वे* "सिद्धश्च प्रत्ययविधौ"इत्युक्त्या प्रत्ययोत्पत्तेः पूर्वमेव तयोर्निवृत्तावपि 'रौहितिः'इति स्यादिति भावः। स्त्रीभ्य इति। *व्याख्यानमत्र मूलम्। आग्नायीति। नन्वस्य पुंसि प्रवृत्तावग्नित्वं प्रवृत्तिनिमित्तं, स्त्रियां त्वग्निसंबन्ध इति प्रवृत्तिनिमित्तैक्ये भाषितपुंस्कत्वाभावात्कथं पुंवत्त्वम्?, "न कोपधायाः"(पा० सू० ६। ३। ३७) इति सूत्रभाष्येऽत्रापि *तत्संबन्धस्योक्तत्वादिति चेन्न। *आरोपितशक्यतावच्छेदकस्यैव स्त्रियां लक्ष्यतावच्छेदकत्वेनादोषात्। गङ्गादिशब्दास्तु लक्ष्यं *तटमपि शास्त्रीयस्त्रीत्वविशिष्टमेव प्रत्याययन्तीति न कदापि भाषितपुंस्का इति न गङ्गाभार्यमित्यादौ पुंवत्त्वमिति दिक्।

शत्रुपर्यायादिति। अयं *भाषितपुंस्कः। विवाहेति। *अयं 'पा रक्षणे'इतिधातुस्थमाधवानुरोधेनोक्तः। तत्र हि-"भावकर्मणोः "पत्यन्त"(पा० सू० ५। १। १२८) इति यकि सापत्न्यम्, भाषितपुंस्कत्वात्पुंवत्त्वं न "नित्यं सपत्न्यादिषु"(पा० सू० ४। १३५) इत्यनेन साधुत्वम्"इति तेनोक्तम्। *परे त्वयं* नास्त्येव। "भस्याढे

---

ण सिद्धिमाशङ्क्याह-*यस्येतीति*। *तस्य=यस्येतिलोपस्य। *सिद्धश्चेति*। दरदि भवो=दारदीय इत्यादिसिद्ध्यर्थमुक्त्या इत्यादिः। *व्याख्यानमिति। आग्नेय इत्यत्र पुंवद्भावस्य भाष्ये करणदर्शनमूलव्याख्यानमित्यर्थः। *तत्सम्बन्धस्य=भाषितपुंस्कादित्येतत्सम्बन्धस्य। एतत्फलन्तु लक्ष्मी च युवतिश्च लक्ष्मीयुवती तयोः साधुर्लक्ष्मीयुवत्य इत्यत्र पुंवत्त्वाभाव इति। समाधत्ते—*आरोपितेति*। एवञ्च प्रवृत्तिनिमित्तैक्यमस्त्येवेति भावः। *तटमपीति*। आरोपितगङ्गात्वेन प्रतीतिकाल इत्यादिः। 'गङ्गाभार्यम्' इत्यत्र भार्याशब्दो भर्तृव्यपरः।

*भाषितपुंस्क इति*। शत्रुत्वस्योभयत्र समानत्वादिति भावः। *अयमिति*। विवाहनिबन्धनपतिशब्दमाश्रित्य साधित इत्यर्थः। स्वमतमाह-*परे त्विति। *अयम्=द्वितीयः। *सापत्ने पुंवत्त्वम्प्राप्नोतीति। इयं शङ्का तृतीयादपि

इत्यत्र 'अढे'इत्युच्यते तत्र *सापत्ने पुंवत्त्वं प्राप्नोति''इत्याशङ्क्य "सापत्नः *प्रकृत्यन्तरत्वात् । सपत्नशब्दः प्रकृत्यन्तरमस्ति''इति भाष्येण सपत्नी-शब्दद्वयस्य लाभेऽप्यस्यालाभात् । *किं च स्वामित्वेनैव बोधकः पतिशब्दः, यदा तु स्वामित्वं प्रकरणादिना यज्ञफलनिरूपितं बुद्ध्यते तदा पुमानेव पतिशब्दः, स्त्रियां 'पत्नी'इति रूपात् । तथा च "पतिर्ना धवे त्रिष्वीशे''इति कोशः । विवाहजन्यसंस्कारविशिष्टे रूढौ तु न मानमित्याहुः । स्वामि-पर्यायेति । अस्य च योगार्थप्रवृत्तिनिमित्तकस्य ङ्यन्तस्य "नित्यं सप-त्न्यादिषु''(पा० सू० ५ । १ । १२०)इति समुदायोच्चारणेन लोकव्यव-वहारेण च स्त्रीविशेषे रूढिः । समानस्वामिकदास्योस्तथा व्यवहाराभावात् । क्वचित्तथा व्यवहारस्तु गौणः । योगार्थमादाय च भाषितपुंस्कत्वम् । पुंसि तु सपतिरित्येव । आद्यस्यापि शत्रुत्वेन स्त्रीविशेष एव रूढिः । अत्रा-प्युक्तभाष्यमेव मानम् । *तच्च भाष्यं कैयटेनैवं व्याख्यातम्-"सपत्नप्रकृ-तिक*सपत्नीशब्दाभावं मन्यमानस्य सपत्नीशब्दादणि सापत इति प्राप्नोतीति पूर्वपक्षः । प्रकृत्यन्तरात्सपत्नशब्दाच्छार्ङ्गरवादिङीनि निष्पन्नसपत्नीशब्दाद-णि पुंवत्त्वेन सापत्नसिद्धिरित्युत्तरम्'' इति ।

*परे तु एवं सति तृतीयादप्यणो दुर्वारत्वेन सापतो दुर्वा-रः* । न च शिवादौ रूढस्यैव ग्रहणम् । तृतीयस्यापि स्त्रीवि-शेषे रूढिसत्त्वात् । न च सापते इष्टापत्तिरिति *कैयटाशयः । शार्ङ्ग-रवादिगणपाठाद्य*ज्ञानकल्पनमपेक्ष्य सापत *इत्यस्यापि प्राप्तिरित्येवं श-

---

तादृशरूपप्राप्तिरित्यभिप्रायेण । *प्रकृत्यन्तरत्वादिति* । एतेन शत्रुपर्यायसपत्नी-शब्दात्तस्य सिद्धिः सूचिता । द्वितीयस्य सिद्धिमाह-*किञ्चेत्यादिना । *तच्च भाष्यमिति । "सापत्नः प्रकृत्यन्तरत्वात्''इति भाष्यमित्यर्थः । *सपत्नीशब्दा-भावम्मन्यमानस्य=प्रथमत उक्तस्य सपत्नीशब्दस्याभावम्मन्यमानस्येत्यर्थः । उत्तराशयस्तु सोऽपि वर्त्तत एवेति ।

कैयटोक्तं कटाक्षयन्नाह-*परे त्विति* । *दुर्वार इति । यदि प्रथमस्याभाव एव पूर्वपक्षिणोऽभिप्रेतस्तदाऽर्थात्तृतीयसत्ता तन्मनसि वर्त्त-ते इति कल्पनीयमेव । तथा सति तृतीयादणि सापतो दुर्वार इत्यर्थः । *कैयटाशय इति । सापत इतीष्यते-तच्च न सिध्यति शिवादिगणे प्रथ-मस्यैव पाठेन सापत्न इति स्यादित्याशयकल्पनेनोपपादनीयः सः । *अज्ञा-नेति । तच्च शिवादौ तृतीयस्यापि पाठ इति यदि न कल्प्यते किं तु प्रथमस्यैव पाठ इति कल्प्यते तदोपपन्नम्भवतीति भावः । *इत्यस्यापीति । उभयोरपि

ङ्काभाष्यव्याख्याया औचित्येन *तस्या अयुक्तत्वात् । सपत्नशब्दस्य भाष्यतोऽण्निरूपित*प्रकृत्यन्तरत्वमेव लभ्यते इति तस्यान्यथाव्याख्याने मानाभाव एव । *तस्माच्छिवादौ सपत्नीति पाठः । तत्र सपत्नप्रकृतिकसपत्नीशब्दादणि सापत्नसिद्धावपि तृतीयादणि सापतोऽपि प्राप्नोतीति पूर्वपक्षः । उत्तरं सापत्न इत्यादि । अन्या प्रकृतिर्यस्य स प्रकृत्यन्तरस्तत्त्वात्सापत्नः सिद्धः, प्रकृत्यन्तरं सपत्न इति । एवञ्च त्वदुक्ता सपत्नीति प्रकृतिः शिवादिगणे न पठ्यते, किं तु सपत्नेति । *एवञ्च *ततोऽणः प्राप्तिरेव नेति न सापत्नप्राप्तिः । सपत्नेति पाठेऽपि लिङ्गविशिष्टपरिभाषया ङीनन्ताद्प्यण् । बाध्यसामान्यचिन्तया चायमण् स्त्रीभ्योढकोऽप्यपवाद* इति तद्भाव इत्याहुः । *तद् ध्वनयन्नाह–आद्ययोरिति । *सपत्नशब्दतत्प्रकृतिकसपत्नीशब्दयोरित्यर्थः । लिङ्गविशिष्टेति । *एवञ्च ण्यादयोऽर्थविशेषलक्षणादणपवादात्पूर्वविप्रतिषेधेनेति ण्य इति भावः । यदि तु 'दित्यदित्या' (पा० सू० ४ । १ । ८५)इति सूत्रे *दैतेयाऽऽदितेययोः सिद्धये लिङ्गविशिष्टपरिभाषाभावस्याऽऽकरे* उक्तत्वेन, तत्साहचर्यात्पत्युत्तरपदांशेऽपि तदप्रवृत्तिस्तदा*सापत्नेयो*ऽन्यथा मूलोक्तम् ।

रूढयोरिति । *सपत्नशब्दतत्प्रकृतिकङीनन्तयोरित्यर्थः । यत्तु

---

शिवादौ पाठः । एवं सति सापत्न इति यथा भवति, तथा सापत इत्यपि प्राप्नोतीति तदाशयकल्पनयोपपाद्यः । *तस्याः=इष्टापत्तेः । *प्रकृत्यन्तरत्वमेवेति । सापत्ने पुंवत्त्वं प्राप्नोतीत्युक्तयाऽण्निरूपितप्रकृत्यन्तरत्वं स्पष्टमेव लभ्यते इत्यर्थः । उपसंहरति–*तस्मादिति । *एवञ्च–सपत्नशब्दस्यैव तत्र पाठ इति व्यवस्थासिद्धौ च । *ततः=तृतीयात् । *ढकोऽप्यपवाद इति । यथा शैवः इत्यत्र "अत इञ्" (पा० सू० ४ । १ ९५)इति सूत्रेण प्राप्तस्येञोऽपवादत्वाद् बाधकस्तथा ढकोऽपीति भावः । *तद् ध्वनयन्=सपत्नशब्दस्य पाठं ध्वनयन् । नन्वेवं द्वितीयस्य पाठाभावेनाद्ययोरित्यसङ्गतमत आह–*सपत्नशब्देत्यादि* । ननु तृतीयाल्लिङ्गविशिष्टपरिभाषया ण्य एवेत्यसङ्गतम् । परत्वाड् ढकः प्राप्तेरत आह–*एवञ्च ण्यादय इति । *दैतेयादितेययोः सिद्धये इति । क्विजन्तदित्यदितिशब्दाभ्यां "कृदिकारात्"(का० वा०)इति ङीषि निष्पन्नदित्यदितीतिशब्दप्रकृतिकढगन्तयोरित्यर्थः । *आकरे=कैयटे । *तदा सापत्नेय इति । सपत्नीशब्दस्य शिवादौ पाठाभावेन तत्तड्ढगेवेति भावः । *अन्यथेति । भाष्यकृत्कृताऽनित्यत्वपरिगणनेष्वेतयोरगणनादप्रवृत्त्यनङ्गीकारे ।

रूढयोरित्येतत्स्वोकरीत्या व्याचष्टे–*सपत्नशब्देति । *उक्तत्वादिति ।

मूलोक्तत्रयाणां मध्ये आद्ययोरित्युभयत्राप्यर्थ इति । तन्न । तृतीयस्यापि रूढेर्मनोरमायामुक्तत्वात्* द्वितीयस्यानतिप्रसक्ततया रूढौ मानाभावाच्च । सापत्न्यमित्यपि सपत्नप्रकृतिकाद् ब्राह्मणादित्वात्ष्यञि बोध्यम् । अस्मात्तु पत्यन्तलक्षणे यकि पुंवत्त्वे यस्येतिलोपे सापत्यमेवेति दिक् ।

ठक्छसोश्चेति । अभत्वार्थ आरम्भः । भावत्का इति । *ठावस्थायामेव पुंवत्त्वे इकादेशं बाधित्वा तान्तलक्षणः कः, *इकादेशे तु कादेशः *संनिपातपरिभाषया*ठादिष्वकारस्यो*च्चारणार्थत्वेनाल्विधित्वेन स्थानिवत्त्वाभावाच्च दुर्लभ इति भावः । भाष्यकारेष्ट्येति । अष्टाध्याय्यामपाठात् अन्यवार्तिकानामिवात्र प्रकरणेऽपाठात् अन्यकर्तृकत्वानुक्तेश्च भाष्यकारीयत्वमेव कल्प्यत इति भावः । *इदञ्च "दक्षिणोत्तराभ्याम्"(पा० सू० ५ । ३ । २८)इति सूत्रे भाष्ये स्पष्टम् । गतार्थत्वादिति । न चैकशब्दादकचि स्वादौ एकिकत्वमित्यादौ पुंवत्त्वे इकारो न श्रूयेत पाचकजातीयेतिवत् । ह्रस्वे तु प्राप्तजीविकवत्तच्छ्रवणमित्येकतद्धिते चेति न गतार्थम् । एकेत्यविभक्तिकनिर्देशो न लोपः प्रातिपदिकान्तस्येतिवन्न स्वरूपविवक्षार्थ इति वाच्यम् । तादृशप्रयोगाणामनभिधानमित्यभिमानात् । सर्वमये तत आगत इत्यर्थे मयट्,

---

एवञ्च रूढयोरित्युक्तसङ्गतिरिति भावः। रूढिः=समुदायशक्तिः, सा यद्यप्येकार्थीभावस्वीकर्तृमते सर्वत्राऽस्ति, तथाऽपि यत्रावयवार्थाभिन्नसमुदायार्थोपस्थितौ समुदायशक्तिग्रहस्यावयवशक्तिग्रहसहकारेणैव जनकत्वन्तत्र रूढिरिति व्यवहारस्तथात्वञ्च यत्रातिप्रसङ्गसम्भवस्तत्र स्वीकर्तुमुचितमिति भावः।

ठक्छसोरित्यत्र ठग्रहणस्य प्रयोजनमाह-*ठावस्थायामिति । ननु ठस्येकादेशे भत्वेन "भस्याढ" इति पुंवत्त्वं सिद्धमेवेत्यत आह-*इकादेशे त्विति । *सन्निपातपरिभाषयेति । अजादिप्रत्ययसन्निपातेन पुंवत्त्वे सति प्रकृते तान्तत्वं, तदनन्तरं यदि तान्तात्परत्वमाश्रित्य कादेशः स्यात्तदोपजीव्यविरोधः स्पष्ट एव । नन्वत्र सन्निपातलक्षणविधेः पुंवद्भावस्य न हि तत्सन्निपातविघातककादेशम्प्रति साक्षान्निमित्तत्वम्, पुंवद्भावे सति कादेशो भवतीत्येवंरीत्या शास्त्रेणाबोधनात्; किन्तु तान्तत्वसम्पादनद्वारैवेति साक्षात्सन्निपातविघातकत्वन्न पुंवद्भावस्येति यदि ब्रूयात्तदाऽप्याह-*ठादीति । *उच्चारणार्थत्वेनेति । अत एव माथितिकस्य सिद्धिः । भाष्यकारेष्ट्यैतत्साधयति-*अन्यवार्त्तिकानामिवेति । *इदञ्च ॥

*अत्यन्तस्वार्थिको वा । इष्टौ मात्रग्रहणाद्यस्य क्वचित्सर्वनामत्वं दृष्टं तस्य वृत्तौ पुंवत्त्वमित्यर्थः । *अत एव 'उत्तरपूर्वायै' 'प्रथमद्वितीयकक्ष्ययोः' इत्यादि सिद्धम् । *तृतीयासप्तम्योरित्यादावतिसर्वापुत्र इत्यादौ च न । सञ्ज्ञोपसर्जनयोः कदाऽपि तत्त्वादर्शनात् । तेनाकचीति । उपलक्षणमेतत्- *तदितरादेः कुक्कुट्यादीनाम् । *जातिमात्रपरायां *नोदनायां जात्यन्तरनिवृत्तिपरत्वात् कुक्कुटादिशब्दैरेव समासेन सिद्धेरिदं प्रत्याख्यातं भाष्ये । कुक्कुट्यादिशब्दैस्तु न समासोऽनभिधानात् । एतावत इति । कर्त्तुः क्यङि पुंवत्त्वे "अकृत्सार्व"(पा० सू० ७ । ४ । २५)इति दीर्घः । अत्र क्यङः प्रत्ययस्य निमित्तत्वात् *पूर्वः कार्यी यस्मात्स विहितः *स गृह्यते । तेन पट्वीमृद्वीशब्दात्क्यङि न पुंवत्त्वम् । प्रकृतिभूतस्य (समुदायस्य) भाषितपुंस्कत्वाभावात् । मृद्वीशब्दस्य तत्प्रकृतित्वाभावात् । "प्रत्ययस्य निमित्तत्वे पूर्वो यस्मात्स विहितस्तदादिर्गृह्यते"इति "अङ्गस्य"(पा०सू० ६ । ४ । १) इति सूत्रे भाष्ये स्पष्टम् । मानिन्ग्रहणमसमानाधिकरणार्थमस्त्यर्थोऽश्चेत्युदाहरति—स्वभिन्नामित्यादि । मन इति णिनिर्णान्तत्वान्ङीप् ।

न कोपधा (पा० सू० ६ । ३ । ३७) ॥ सौत्रौपसंख्यानिकपुंवत्त्वमात्रस्य निषेधोऽयम् । तेन विलेपिकाया धर्म्यं *वैलेपिकमित्यादौ "भस्याढे"(का.वा.)इति पुंवत्त्वं न । इष्टेस्तु न निषेधः । *उत्तरनिषेधास्तु सौत्रविषयका इति बोध्यम् । *तदुक्तं भाष्ये "न कोपधाया इत्ययं योगः पुंवद्भावमात्रविषये तत उत्तर*मेवमाद्यनुक्रमणमाद्यस्य योगस्य विषय"इति । आद्यस्येति पाणिनीयस्येत्य-

---

भाष्यकारीयत्वञ्च । *अत्यन्तस्वार्थिको वेति । मयडित्यर्थः । *अत एव= मात्रग्रहणकल्प्यस्य तादृशार्थस्य स्वीकारादेव । अतिप्रसङ्गन्निराचष्टे-*तृतीयेत्यादि । *तदितरेति । तस्या इतरा इत्यर्थः । अत्र यथा पूर्वपदे भवति तथोत्तरपदे नोपलभ्यत इति भावः । प्रत्याख्यानप्रकारमाह-*जातिमात्रेति । *नोदनायामिति । कुक्कुटाण्डम्पश्येत्यादौ । इदमुपलक्षणम् । कुक्कुटाण्डमस्तीत्यत्रापि तथाभावात् । कुक्कुटस्याण्डमित्येव विग्रहः । *पूर्वः=क्यङपेक्षया पूर्वः । *सः=क्यङ् । तादृशसमुदाय एवेति भावः ।

*वैलेपिकमिति* । "अण् महिष्यादिभ्यः"(पा० सू० ४ । ४ । ४८) इत्यण् । *उत्तरनिषेधाः=संज्ञापूरण्योश्चेत्यादयः । तादृशार्थे मानमाह- *तदुक्तमिति । *एवमाद्येति । संज्ञापूरण्योश्चेत्येवमादीत्यर्थः । *एतद्भा-

र्थः । *एतद्भाष्यप्रामाण्याद्वार्तिकानामपि *सूत्रसंमतत्वमाहुः । तदुक्तमभियुक्तैः—

सूत्रेष्वेव हि तत्सर्वं यद् वृत्तौ यच्च वार्त्तिके । इति ।

यत्तु "तृतीया च होः"(पा० सू० २ । ३ । ३)इति सूत्रे "किमर्थमिदं कर्मणि द्वितीयासिद्धेः, सुपां सुपो भवन्ति इति तृतीयायाश्च सिद्धेः" इत्याशङ्क्य "असत्येतस्मिन्सुपां सुपो भवन्तीति तृतीयार्थोऽयमारम्भः" इति भाष्ये उक्तम् । तस्यैतस्मिन् बुद्धावसतीत्यर्थः । न हि पाणिनेः सूत्रकरणकाले कात्यायन-

---

ष्येति* । तत्र "हि किमिदमेवमाद्यनुक्रमणमाद्यस्य योगस्य विषये आहोस्वित्पुंवद्भावमात्रस्य ? । किञ्चातः ? । यद्याद्यस्य योगस्य विषये, माध्यमिकीयः शालिककीयः अत्र न प्राप्नोति" । माध्यमिकायां भवः "वेणुकादिभ्यश्छण् वक्तव्यः" इतिच्छण्, शालूकिकायाम्भव इत्यर्थे "वृद्धादकेकान्त"(पा० सू० ४ । २ । १४)इति छः । उभयत्र नगरीवाचकाद्भवार्थे तद्धिते "भस्याढे" इति वार्त्तिकेन पुंवद्भावे "न कोपधायाः"( पा० सू० ६ । ३ । ३७)इति निषेध इष्यते, स न प्राप्नोतीत्यर्थः । वार्त्तिकेनापि भाषितपुंस्कस्यैव पुंवद्भावो विधीयते । नगरीवाचकस्य तु न भाषितपुंस्कत्वमित्यभिप्रायेण तदनन्तरं "विधिरप्यत्र न सिध्यति । किं कारणम् ?, भाषितपुंस्कादनूङित्युच्यते, न ह्यत्र भाषितपुंस्कादनूङ् । इह तर्हि विलेपिकाया धर्म्यं वैलेपिकम् । अत्र विलेपिकाशब्दो ण्वुलन्तस्तस्मादणमहिष्यादिभ्य इत्यण् । विधिश्च सिद्धो भवति । प्रतिषेधश्च न प्राप्नोति । अथ पुंवद्भावमात्रस्य विषये । हास्तिनीनां समूहो हास्तिकम् । जातिलक्षणः पुंवद्भावप्रतिषेधः प्राप्नोति । एवन्तर्हि "न कोपधायाः" इत्ययं योगः पुंवद्भावमात्रस्य विषये" । तत उत्तरम् "एवमाद्यनुक्रमणमाद्यस्य योगस्य विषये" इत्युक्तम् । *सूत्रसम्मतत्वं=सूत्रकारसम्मतत्वम् । न च सूत्रकारसम्मतत्वे "स्त्रियाः पुंवत्"(पा० सू० ६ । ३ । ३४)इतिसूत्रस्थसमानाधिकरणपदस्य ढभिन्नतद्धितबोधकताऽपि लक्षणया स्वीकार्या । एवं सति विलेपिकायां भव इत्यर्थे यो वैलेपिकशब्दस्तत्र "स्त्रियाः पुंवत्" इति सूत्रस्यैव प्राप्तिरिति आद्यस्य योगस्य विषये इतिपक्षे प्रतिषेधो न प्राप्नोतीति भाष्यासङ्गतिरिति वाच्यम् । सूत्रकारसम्मतत्वमित्यनेन सूत्रघटकपदस्य लक्षणया वार्त्तिकोक्तार्थसङ्ग्राहकत्वमिति नोच्यते, किं तु सूत्रप्रणयनानन्तरं वार्त्तिकोक्तार्थस्य स्फूर्त्तावपि तदंशस्य वार्त्तिककारेण पूरयिष्यमाणत्वज्ञानेऽप्युपेक्षया तदकरणेन सूत्रशेषत्वं वार्त्तिकस्येति बोधनेन सूत्रकाराभिप्रायविषयत्वमित्येवोच्यते इति न विरोध इत्याशयात् ।

एवं "तृतीया च होः"(पा० सू० २ । ३ । ३)इतिसूत्रस्थभाष्यविरोधे प्राप्ते तत्परिहरति-*यत्त्विति । पाचिकाभार्य इत्यत्र ककारो ण्वुल्सम्बन्धीत्ये-

वचसो भावः" इति। एकैकस्यापि तद्वचसो नियमेन बुद्धौ भाव इत्यर्थः । एवञ्चोपायान्तरपरमिदं सूत्रमिति तद्भावः । पाणिनिश्च तज्ज्ञानेऽप्यन्याभ्यां तस्य वाच्यत्वात्स्वयं वार्तिकभाष्योक्तार्थान्नोक्तवानिति सांप्रदायिकाः । पाचिकेति । *ण्वुलकादेशटाबित्वानि । रसिकेति । "अत इनि"(पा० सू० ५ । २ । ११५)इति *ठन् । तद्धितवु इति । तद्धितग्रहणं वुग्रहणञ्चेत्यर्थः । *पाका, बाला । पञ्चमीपाशेति । याप्ये पाशप् । तसिलादिष्विति प्राप्तिः । वृद्धिशब्देनेति । वृद्धिशब्द *आवर्त्तते इति भावः । स्त्रौघ्नीति । भवार्थेऽणि ङीप् । मध्यमेति । भवार्थे मध्यान्मः । काण्डलावेति । कर्मण्यण् । कुद्रयम् । तावद्भार्य इति । तत्परिमाणमस्या इत्यर्थे तच्छब्दाद्वतुपि "आ सर्वनाम्नः"(पा० सू० २ । ३ । ९१)इत्याकारो न वृद्धिशब्दविहित इति भावः । काषायीति । कषायेण रक्तेत्यर्थेऽण् । हैम्नो विकारे"अनुदात्तादेश्च"(पा० सू० २ । १४८)इत्यञ् । फलोपत्नेति । *व्याख्यानादेतल्लाभ इति भावः । *अत एव प्रवाहणस्य परस्य वृद्धिर्न, पूर्वस्य तु वेत्यर्थके "प्रवाहणस्य" (पा० सू० ७ । ३ । ६८) इति सूत्रे प्रवाहणेयीभार्य इत्यत्र "वृद्धिनिमित्तस्य" (पा० सू० । ६ । ३ । ३९) इति पुंवत्त्वनिषेधो न प्राप्नोतीति मा भूदेवं जातेरिति भविष्यति"*इति भाष्ये उक्तम् । तेन अर्धप्रस्थिकीभार्य इत्यत्रायं निषेधो न । अत्र हि "नातः

---

तद्दर्शयति-*ण्वुलकादेशेति । *ठनिति । रसशब्दादिति शेषः । *पाका बालेति । अत्र हि "इणभीकापाशल्यतिमर्चिभ्यः कन्"इति सूत्रेण पाधातोः कन् । *आवर्त्तत इति । अत्र वृद्धिरादैच्सूत्रस्थं भाष्यमेव मानम् । तत्र हि आदैज्मात्रस्य वृद्धिसंज्ञेति सिद्धान्ते तावद्भार्यो यावद्भार्य इत्यत्र पुंवद्भावः स्वीकृत इति । *व्याख्यानादिति । "प्रवाहणस्य ढे"(पा०सू०७ । ३ । ६८)इति सूत्रस्थभाष्यदर्शनमूलकव्याख्यानादित्यर्थः । तदेवाह-*अत एवेति । अत एव=वृद्धिशब्दावृत्तिसत्त्वादेव । *इति भाष्ये उक्तमिति । यद्यत्र वृद्धिशब्दावृत्तिर्न स्यात्तदोत्तरपदस्यादेर्वृद्धिनिषेधे पूर्वपदस्य वैकल्पिकत्वाद्वृद्ध्यभावेऽपि तद्धितस्य स्वरूपयोग्यतालक्षणं वृद्धिनिमित्तत्वमस्त्येवेति पुंवत्त्वनिषेधस्य प्राप्तिरस्त्येवेति निषेधो न प्राप्नोतीति ग्रन्थासङ्गतिः स्यादिति "वृद्धिनिमित्तस्य"इति सूत्रे वृद्धिशब्दावृत्तिर्ध्वनितेति भावः । तत्फलमाह-*अर्धप्रस्थिकभार्य इति । प्रस्थस्यार्द्धमर्द्धप्रस्थः सोऽस्मिन्नस्तीत्यर्द्धप्रस्थी=अर्द्धप्रस्थपरिमितधान्यघटितः समुदायः, तं कायति=अभिधत्ते इत्यर्द्धप्रस्थिकस्तद्वाचकोऽत्रार्द्धप्रस्थिकशब्दस्तमधीतेऽर्द्धप्रस्थिकी सा भार्या यस्येत्यर्थः । अत्रार्द्धप्रस्थिकशब्दादध्येतर्यर्थेऽणि "अर्द्धात्परिमाणस्य"इति प्राप्तवृद्धेः

परस्य" इत्युत्तरपदवृद्धिनिषेधात् पूर्वस्य वैकल्पिकत्वेनाभावाच्च । फलोपधानञ्च यां काञ्चित् वृद्धिं प्रति बोध्यम् । तेन पारिषद्याभार्येऽयं निषेधः । अन्यथा परिषदोऽणस्य यावद् वृद्धिं प्रति फलोपधानाभावेन दोषः स्यात् । वैयाकरणभार्ये इति । ऐचोस्तु न वृद्धिशब्देन विधानं, नाप्यैचौ प्रति तद्धितो निमित्तम् । निषेधसंनियोगशिष्टत्वैवातिप्रसङ्गभङ्गादिति भावः । स्पष्टश्चायं प्रयोगो "न य्वाभ्याम्"(पा० सू० ७ । ३ अ० २) इत्यत्र कैयटे । *परे तु *भाष्ये तावद्भार्ये दोषवारणाय वृद्धेर्निमित्तं यस्मिन्नित्यर्थाश्रयणं कृतम् । *निमित्तग्रहणसामर्थ्यादेव व्यपदेशिवद्भावानाश्रयणमिति शब्दव्यापाराश्रयणे न मानम् । ऐचौ प्रति च तद्धितस्य *निमित्तत्वमस्त्येव । अधिकारप्राप्तत्यागे मानाभावात् । *किञ्चैतत्सूत्रे वृद्धिपदानुवृत्त्या ऐचोरपि वृद्धिशब्देन विधानमस्ति । *अत एव दाविकीभार्ये 'देविकाशिंशपा"(पा० सू० ७ । ३ । ३) इत्यात्वे पुंवत्त्वनिषेधः । भाष्ये देविकेत्यस्य प्रथमाध्याये करणेनैषामाकारस्य वृद्धिसञ्ज्ञां विधाय "तद्धितेष्वचामादेः" इत्यनेन तद्विधानमिति पक्षान्तरस्योक्ततया तदेकफलत्वाय तत्र वृद्धिपदसम्बन्धसत्त्वात्सूत्रभेददूषणमात्रेण च तद्दूषितमित्यन्यत् । एवञ्चैज्विधायके ऐजंशेऽपि तत्संबन्ध इत्यर्थापातम् । मण्डूकानुवृत्तौ मानाभावात् । एवञ्च वैयाकरणीभार्य इत्येव सत्यभिधाने । अत एव "न य्वाभ्याम्"[पा०सू० ७ । ३ । ३] इति सूत्रे यद्यपि नित्यत्वादैचि वृद्धिस्तयोरेव स्यादिति निषेधवैयर्थ्यमाशङ्क्य विषयार्थं दाध्यश्विरिति

---

"नातः" इतिनिषेधे पूर्वपदस्य वैकल्पिकत्वात्तदभावो बोध्यः । एतेन "न कोपधायाः" इतिनिषेधोऽत्र दुर्वार इत्यपास्तम् । फलोपधानेऽपि विशेषमाह-*फलोपधानञ्चेति । *सिद्धान्तार्थमाह-*परे त्विति । *भाष्ये इति । वृद्धेर्निमित्तं=कारणा यस्मिन्नित्यर्थः । नन्वेवमपि "चतुष्पात् सर्वनाम्नः" इत्यनेन वृद्धिविधानात्तस्य वृद्धिनिमित्तत्वेन व्यपदेशिवद्भावेन तस्य तस्मिन् स्थितत्या दोषस्तदवस्थ एवेत्यत आह—*निमित्तग्रहणेति* । यदि वृद्धेर्निमित्तमिति व्याख्यायते तदा व्याकरणशब्दाद्विहितेऽणि णकारसद्भावात्तस्मिन्नपि निषेधप्राप्त्या वैयाकरणभार्य इति प्राप्नोतीति चेदिष्टापत्तिरित्याशयेनाह—*ऐचौ प्रति चेति । निमित्तत्वमस्त्येवेति* । अत्र निमित्तशब्दोऽर्शआद्यचा निमित्तवत्परः । निमित्तवत्त्वमस्त्येवेत्यर्थः । वृद्धिशब्देन विहिता या वृद्धिरितिव्याख्यानेऽपि वैयाकरणीभार्य इत्येव प्राप्नोतीत्याह-*किं चैतदिति* । वृद्ध्यभिन्न ऐजिति सूत्रार्थाश्रयणादिति भावः । *अत एव=तत्रापि वृद्धिपदसम्बन्धादेव । *अत एव=वृद्धिशब्दाभेदे

समाहितम्। तत्पक्षे पुंवत्त्वनिषेधालाभात्। *यद्यप्यपवादो वृद्धेरयमिति वृद्ध्यप्राप्त्यैव निषेधवैयर्थ्यं वक्तुं युक्तं, तथापि विषयभेदान्नापवादत्वम् "असम्भवे एवापवादत्वम्" इति वार्तिकमते* एवमुक्तम्। किंच वृद्धिरादैच्सूत्रे आदैज्मात्रग्रहणपक्षे वैयाकरणभार्ये तावद्भार्ये इत्र निषेधानापादनेन तत्र तत्प्रवृत्तेरिष्टत्वमनुमीयते। *किंचात्र पुंवत्त्वे इष्टे निषेधवारणाय शब्दव्यापाराश्रयणस्यावश्यकत्वेन वृद्धिरादैच्सूत्रे तावद्भार्ये दोषवारणाय व्यधिकरणबहुव्रीहिपर्यन्तं भाष्यकृतोऽनुधावनं विफलं स्यात्। *एतेन तद्भावितानामेव संज्ञेति पक्षेऽत्र पुंवत्त्वप्रतिषेधाप्राप्तिरूपदोषानुद्भावनेनात्र तन्निषेधोऽनिष्ट इत्यपास्तम्। मदुक्तरीत्याऽस्यापि तद्भावितत्वेनैतद्दोषानुपन्यास इत्यस्य वक्तुं शक्यत्वादित्याहुः।

तदन्ता स्त्रीति। *तदन्तस्य स्त्रीवाचकस्य शब्दस्येत्यर्थः। स्त्रिया इति षष्ठ्यन्तानुवृत्ते *रेवमेवौचित्यात्। सुकेशीति। "स्वाङ्गाच्च"(पा० सू० ४। १। ५४) इति ङीष्। अमानिनीति निषेधो 'दीर्घमुखमानिनी' इत्यादावपि। *लिङ्गविशिष्टपरिभाषया मानिन्ग्रहणेन मानिनीशब्दस्यापि ग्रहणात्। *यतो यो विहितस्तद्विशिष्टस्यैव तेन ग्रहणमिति नियमे मानाभावादिति ध्वनितं भाष्ये। तद् ध्वनयन्नाह-सुकेशमानिनीति।

---

"न य्वाभ्याम्"(पा०सू० ७-३-३)इतिसूत्रेणैचो विधानस्येष्टत्वादेव। न य्वाभ्यामितिसूत्रस्य निषेधविधायकत्वपक्षे शङ्कते-*यद्यप्यपवाद इति। *एवमुक्तमिति। दाध्यश्विरित्यादौ विषयार्थमित्युक्तमित्यर्थः। सिंहावलोकनन्यायेनाह-*किञ्चात्रेति। वैयाकरणभार्ये इत्यत्रेत्यर्थः। *एतेन=उक्तव्याख्यानेन।

अर्थस्य तदन्तत्वासम्भवादाह—*तदन्तस्येति। *एवमेव=तदन्तस्येतिव्याख्यानमेव।

ननु मानिन्शब्दे यो निषेधः स मानिनीशब्दे न स्यादत आह-*लिङ्गविशिष्टपरिभाषयेति। एवञ्च स्त्रीप्रत्ययरहिते दृष्टस्योत्तरपदत्वस्य मानिनीशब्दे पर्याप्तिसम्बन्धेनातिदेशान्मानिनीशब्दस्योत्तरपदत्वम्। यद्यप्ययं स्त्रीप्रत्ययो दीर्घमुखमानिन्शब्दाद्विहितस्तथाप्यनुपसर्जनत्वान्मानिनीशब्दस्य स्त्रीप्रत्ययान्तत्वम्। ननु स्त्रीप्रत्ययस्ततो न विहित इत्यत आह—*यत इति*।

ननु सूत्रे जातेरित्युपादानात्प्रतिपदोक्तपरिभाषया "जातेरस्त्री"(पा० सू० ४-१-६३)इतिसूत्रविहितस्त्रीप्रत्ययान्तस्यैव ग्रहणं युक्तमिति शूद्राभार्य इति मूलो-

जातेः पर इति । *स्वाङ्गादित्येतत्साहचर्यात् *व्याख्यानाच्च जातेरित्येषा पञ्चमीति भावः । *अत एव *दारदिकेत्यत्रायं निषेधो न । *"स्त्रियाः पुंवत्"(पा० सू० ६ । ३ । ३४)इति सूत्रेऽनूङ् इत्यस्य पर्युदासत्वे 'ऐडविडभार्यः' इत्यादौ दोषानुद्भावनम् । ऐडबिडवृन्दारिकेत्यादावेतदुद्भावनन्तु पुंवदिति सूत्रेऽप्येतदनुवृत्तिं तत्रापीदृशार्थकत्वमेवेति ध्वनयितुं न तु पुंवत्त्वाप्राप्त्या । *यत्तु तत्र "जातेश्च"(पा० सू० ६ । ३ । ४१)इति निषेधः, "पुंवत्कर्मधारय"(पा० सू० ६ । ३ । ४२)इति तु निषेधविषये एवेति तदाशय इति, तन्न । ऐडबिडादीनामनन्तरापत्यपरत्वे भाष्यमते जातित्वाभावादिति दिक् । यत्त्वत्रापि अमानिनीत्येव कठमानिनीति वृत्तावुक्तं, तत्तु भाष्येऽनुपलम्भान्मूलकृतोपेक्षितम् । सौत्रस्यैवायमिति । "न कोपधायाः"(पा० सू० ६ । ३ । ३७)इति सूत्रव्यतिरिक्तः *सर्वोऽपि निषेध इत्यर्थः ।

---

कोदाहरणासङ्गतिरत आह-*स्वाङ्गादित्येतदिति । *व्याख्यानादिति* । "न कोपधायाः"(पा०सू० ६-३-३७)इतिसूत्रे भाष्ये हास्तिकमित्युदाहरणेऽनेन सूत्रेण निषेधमाशङ्क्यौपसङ्ख्यानिकस्य नायन्निषेध इति प्रतिपादितन्तन्मूलकव्याख्यानादित्यर्थः । तत्फलमाह—*अत एवेति । अत एव=जातेः पर इति व्याख्यानादेव । *दारदिकेति । दरदोऽपत्यं स्त्री दरत् । "द्व्यञ्मगध"(पा० सू० ४ । १ १७०) इत्यण् । "अतश्च"(पा० सू० ४ । १ । १७७) इति लुक् । तत अज्ञाताद्यर्थे "प्रागिवात्कः"(पा०सू० ५ । ३ । ७०) इति कः । तसिलादिषु कप्रत्ययस्यापि पाठानुमानात्पुंवद्भावः । स च सौत्र इति जातेः स्त्रिया इति व्याख्याने निषेधः स्यादिति भावः । यदि तु पूर्वोक्तभाष्यसम्मतं यदेवमाद्यनुक्रमणमाद्यस्य विषय इति तदाद्रियते तदा दारदभार्य इत्यस्योपलक्षणमिदम् । इदं यथाश्रुतभाष्यरीत्या । यदि तु आद्यस्येत्यस्य पाणिनीयस्येत्यर्थः क्रियते तदा "तसिलादिषु"(पा० सू० ६-३-३५) इत्येतस्यापि विषये "जातेश्च"(पा० सू० ६-३-४१) इत्यस्य प्रवृत्तिः स्यादेवेति दारदिकेत्यप्युदाहरणम् । ननु "स्त्रियाः पुंवत् (पा० सू० ६-३-३४) इतिसूत्रेऽनूङित्यस्य पर्युदासत्वपक्षे ऐडबिडभार्य इत्यत्र पुंवत्त्वञ्च प्राप्नोतीति नोक्तम्, तेनात्र जातेरिति निषेध इष्ट इत्यनुमीयते । स च भवदुक्तार्थे न प्राप्नोतीत्यत आह—*स्त्रियाः पुंवदिति सूत्र इति* । एतच्चानन्तरापत्यप्रत्ययान्तस्यापि जातित्वमतेन । वस्तुतस्तु तन्न युक्तमित्याह—*यत्त्वित्यादिना । *सर्वोऽपि निषेध इति* । न च "न कोपधायाः"(पा० सू० ६-३-३७) इत्ययन्निषेधः पुंवद्भावमात्रस्य विषये तत उत्तरमेवमाद्यनुक्रमणमाद्यस्य योगस्य विषय इति प्रागभिहितमिह तु सर्वोऽपि निषेधः सौ-

उपदशा इति । दशसमीपवर्त्तिन इति बोधः । दशसमीपार्था*भिधानस्वाभाव्यात् स्ववृत्तिदशत्वसमीपसंख्यावन्त एव, तदाह — नवैकादश वेत्यर्थ इति । *अत एव नित्यबहुवचनान्तोऽयम् ।

आसन्नविंशा इति । तिलोपे पररूपम् । समुदायस्य *पदभिन्नस्यान्तेऽकारसत्त्वात् । यस्येति लोपस्तु न । आभीयतया तिलोपस्यासिद्धत्वात् । द्वौ वेति । संशयविषयो हि नियमेन *परस्परप्रतिक्षेपकः । अत एव संशये परस्परप्रतिक्षेपकानेकधर्मवत्त्वं धर्मिणि गृह्यते । तदेव विषयनिष्ठं वाऽर्थः । अयं स्थाणुर्न वा, व्रीहिभिर्यवैर्वेत्यादौ संशयात्मक एव बोधः । स च परस्परप्रतिक्षेपकतत्तद्वस्तुमानित्याद्याकारः । *तत्र क्वचित् *बलवत्प्रमाणेनैका कोटिर्बाध्यैव । *यत्र तु न तथा बाधकं तत्र क्वचिदैच्छिकं पाक्षिकानुष्ठानम्, क्व-

---

यस्येत्यनेनाऽऽद्यसूत्रातिरिक्तस्य "तसिलादिषु"(पा० सू० ६-३-३५) इति सूत्रस्यापि निषेध इति लभ्यते, तन्नैतद्विरुध्यते इति वाच्यम् । आद्यस्येत्यस्य पाणिनीयस्येत्यर्थप्रदर्शनेन सर्वस्य सूत्रीयपुंवद्भावनिषेधस्य प्रागप्यभिधानात् । न च केशानामपि "आकृतिग्रहणा"(श्लो.वा.)इति जातित्वसम्भव इति अनेन सूत्रेणैव सुकेशभार्यस्य सिद्धौ "स्वाङ्गात्"(पा० सू० ६-३-४०) इति व्यर्थमिति वाच्यम् । जातिवाचकान्वितं यत्स्त्रीत्वन्तदर्थको यः स्त्रीप्रत्ययस्तदन्तस्य प्रकृतसूत्रे ग्रहणात् । अत एव बहवो ब्राह्मणा यस्याः सा बहुब्राह्मणा । बहुब्राह्मणा भार्या यस्य स बहुब्राह्मणभार्य इत्यत्र निषेधो न ।

*अभिधानस्वाभाव्यात् । अभिधानं=शब्दस्तत्स्वाभाव्यात्=तच्छक्तिस्वभावादित्यर्थः । *अत एव=उत्तरपदभूतसङ्ख्येयवृत्तिसङ्ख्यानिरूपितसामीप्यवती या सङ्ख्या तत्प्रकारकोपस्थितिसत्त्वादेव ।

*पदभिन्नस्यान्त इति* । न च शकन्धुः कर्कन्धुरित्यत्रापि पदभिन्नकशब्दान्त्यावयवाकारात्परत्वेनानेनैव तत्रापि पररूपे सिद्धे शकन्ध्वादिषु तादृशानाम्पाठो व्यर्थ इति वाच्यम् । पदस्यार्थवत्तया पदभिन्नस्याप्यर्थवत एवान्त्याकारो ग्राह्य इत्यर्थेन तादृशपाठस्य तत्रावश्यकत्वात् । अत एव ब्राह्मणात्राऽऽगच्छेत्यत्र न पररूपम् । *परस्परप्रतिक्षेपकः=परस्परविरुद्धः । *तत्र=संशयविषये । *बलवत्प्रमाणेनेति* । यथा इण्प्रत्याहारः पूर्वेण णकारेण परेण वेति सन्देहे "अचि श्नु"(पा० सू० ६-४-७७) इति सूत्रे गुरुनिर्देशेनेण्प्रत्याहारः परेणैवेति निश्चयः । *यत्र तु न तथा बाधकमिति* । यथा "अचि विभाषा"(पा० सू० ८-२-२१) इति सूत्रे विभाषापदोपादानेन लत्वतदभावयोरुपस्थितौ व्यवस्थितविभाषाश्रय-

चिद्व्यवस्थितं लक्ष्यानुरोधादित्यन्यत् । *एवञ्च नियतः पञ्चा- *स्मादुपतिष्ठन्त इति बहुवचनम् । *वस्तुतो द्विश्यन्यतरा इत्यादिरीत्या बोधः । *अत एव "वार्थप्राधान्यात्पूर्वसूत्रेणैव सिद्धम् इति" भाष्योक्तं स- ङ्गच्छते । द्विरावृत्ता इति । शब्दशक्तिस्वभावात्सुजर्थान्तर्भावेण पूर्व- पदस्य (१)वृत्त्याश्रयणात्सुचोऽप्रयोगः । *द्वित्वसंख्योत्पत्तिका दशेति बोधः । न चात्र मुख्येयं वाऽर्थः सुजर्थश्चान्यपदार्थ इति पूर्वसूत्रेणैव सिद्धमिति वाच्यम् । *अधिकदशा इत्यर्थं सूत्रसत्त्वात् , *कबभावार्थमस्या- वश्यकत्वाच्च । शेषाधिकारस्थेन "अनेकम्"(पा० सू० २ । २ । २४)इति सूत्रेण समास एव कप्प्रवृत्तेः । *"शेषात्"(पा० सू० ५ । ४ । १५४) इति सूत्रे"बहुव्रीहौ सक्थ्यक्ष्णोः"इत्याद्यपेक्ष एव शेष इति *भाष्ये स्पष्टम् । *एवं च डाज्विषये पूर्वसूत्रेण समासे पाक्षिकः कबिष्ट एवेति बोध्यम् ।

णेन व्यवस्था । ऐच्छिकन्तु यथा "विभाषा दिक्समासे" (पा० सू० १-१-२८)इति सूत्रेण विकल्पेन संज्ञाविधानात्सर्वनामसंज्ञाकार्य- घटितस्य तदभावघटितस्य वा प्रयोगेऽपि नासाधुत्वम् । *एवञ्च=सं- शयविषयप्रतिक्षेपकत्वे च । *अस्मात्=द्वित्रा इति शब्दात् । तदुक्तं भाष्ये-"द्वौ वेत्युक्ते त्रयो वेति गम्यते । त्रयो वेत्युक्ते द्वौ वेति गम्यते । सैषा पञ्चाधिष्ठाना वाक्"इति । तत्र कैयटः-विरुद्धानेकविषयत्वाद्विमर्शस्य पर्यायस्थितद्वित्वत्रित्वाधारवस्तुसङ्कलनया पञ्चाधिष्ठानत्वमुच्यत इति । घटे पटे वा चैत्रस्य स्वत्वमित्यर्थे घटपटयोरन्यतरस्मिन्नस्य चैत्रस्य स्वत्वमिति प्रयोगो यथा भवति तथा प्रकृतेऽप्यन्यतररूपत्वार्थे बहुव्रीहिः स्वीक्रियते, तदा पूर्वसू- त्रेणैव प्रकृते समास इत्याशयेनाह-*वस्तुन इति । *अत एव=द्वितीयरीत्या बोधस्वीकारादेव । *द्वित्वसंख्योत्पत्तिका दशेति । द्वित्वसंख्याया उत्प- त्तिर्येषु तादृशा दशेत्यर्थः । अत्र दशशब्द उद्भूतावयवभेदसमुदायपरः । *अ- धिकदशा इत्यर्थमिति* । अधिका दश यासान्ता अधिकदशा गाव इत्यर्थे यदा सङ्ख्येये बहुव्रीहिः क्रियते तदा यद्यपि पूर्वसूत्रेण सिद्धिर्भवति तथापि यदा दशभ्योऽधिका इत्यर्थे समासः क्रियते तदा संख्येयस्य दशशब्दार्थत्वा- दन्यपदार्थाभावात् पूर्वेणाप्राप्तः समास इत्येतदर्थमिदं सूत्रमित्याशयः । फला- न्तरमप्याह-*कबभावार्थमिति* । नन्वत्रापि "बहुव्रीहौ संख्येये डजबहु" (पा० सू० ५-४-७३) इति डचो विधानान्नानुक्तसमासान्तत्वमिति कब- भावः सिद्ध एवेत्यत आह-* शेषादितीति । *भाष्ये स्पष्टमिति* । इदमग्रे स्फुटीभविष्यति । संख्येयस्यान्यपदार्थस्वमाश्रित्य यदि पूर्वसूत्रेण समासः क्रियते तदा कप् भवत्येवेति भावस्तदाह-*एवं चेति । *विंशतेर्गवां सं-

( १ ) अत्र लिखितपुस्तके 'एकार्थीभावाश्रयणात्' इति पाठः ।

संख्ययेति किम् ?, चत्वारो विप्राः । अव्ययेसादि किम् ?, विप्राः पञ्च । संख्येये इति किम्?, अधिका* विंशतेर्गवां संख्येति ।

अन्तराले इति । अन्तरालशब्देन दिगेव, प्रत्यासत्तेः । *अत एवास्य नित्यस्त्रीलिङ्गता । इदं सूत्रमसमानाधिकरणार्थं कबभावार्थञ्च । दक्षिणपूर्वेति । "सर्वनाम्नो वृत्तिमात्रे" इति पुंवत्त्वम् ।

तत्र तेनेदम् ॥ सप्तम्यन्ते इत्यादीनि प्रथमाद्विवचनान्तानि । ग्रहणविषये इत्यादेर्ग्रहणक्रियाद्यन्तर्भावेण (२)वृत्तिमापन्ने इत्यर्थः । इदं युद्धं प्रवृत्तमित्यर्थे इति । *तत्र विशेष्ये इत्यर्थः । *अत एव केशाकेशि युद्धमिति सङ्गच्छते । यत्र *न तदुपादानं तत्राध्याहारः । *इदं क्रियामात्रोपलक्षणम् । भाष्ये "क्रियाभिधानात्" इत्युक्तेः । ग्रहणप्रहरणेत्यप्येवम् । *अत एव* "कर्णाकर्णि प्रथितमयशः"* "हस्ताहस्ति मिषात्स्पृशन् कुचतटीम्" इत्यादि सङ्गच्छते । अयं विषयविशेष इति । ग्रहणादिरूपोऽन्यपदार्थक्रियारूपः कर्मव्यतिहाररूपश्चेत्यर्थः । *इतिशब्दश्चात्र प्रकारे । *तत्त्वं च लोकप्रसिद्धत्वम् । तदुच्यते—"इति शब्दो लौकिकीं विवक्षामनुसारयति" इति । कर्मव्यतिहारः=परस्परग्रहणादि । "इच् कर्मव्यतिहारे"(पा० सू० ५ । ४ । १२७)इति समासान्तस्यैतद्विषयतैव । इतिशब्दबलेन *तत्रास्य प्रतिपदोक्तत्वात् ।

इतीति । *तुराषाडित्याद्यर्थमावश्यकेनानेन सूत्रेणेसर्थः । तिष्ठद्-

---

ख्येति* । अत्र विंशतिशब्दः सङ्ख्याने वर्त्तते ।

विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोः ॥

इति कोशात् ।

*अत एव=दिग्रूपस्यान्तरालस्य ग्रहणादेव ।

*तत्र=युद्धे । *अत एव=युद्धस्य विशेष्यत्वादेव । *न तदुपादानमिति* । युद्धमित्यादेरनुपादानमित्यर्थः । *इदम्=युद्धमित्येतत् *अत एव=उपलक्षणत्वादेव । *कर्णाकर्णीति* । कर्णेषु कर्णेष्वित्यर्थः । *हस्ताहस्तीति* । हस्तेन हस्तेनेत्यर्थः । इतिशब्दाद्विषयविशेषस्य यथा लाभस्तत्प्रकारमाह—*इति शब्दश्चात्रेति* । *तत्त्वञ्च=प्रकारत्वञ्च । * तत्रास्येति * । कर्मव्यतिहारेऽस्य समासस्येत्यर्थः । इति कर्मव्यतिहार इतिमूलोक्तस्यास्मिन्कर्मव्यतिहारेऽनेन दीर्घ इत्यर्थः । अन्यार्थमपीदं वचनमित्याह—*तुराषाडिति* । एवञ्च कर्मव्यतिहारे बहुव्रीहावित्यपि प्रस्तुताभिप्रायमेव, न त्वन्येषामपीतिवचना-

---

(२) 'एकार्थीभावमापन्न'इति लिखितपुस्तके पाठः ।

ग्विति । *अत्र च वृत्त्यादि प्रमाणम् । द्विदण्ड्यादिपठिते उभाभ्यां हस्ताभ्यामित्यर्थके उभयाहस्तीत्यादौ विभक्त्यश्रवणायाव्ययत्वं केशाकेशि कुर्वन्नित्यादौ *पराङ्गवत्त्वायाऽव्ययीभावत्वम्. "अव्ययानां न" इति निषेधस्या*व्ययीभावेऽभावादिति बोध्यम् । *केचित्तु इच्प्रत्ययस्य स्वरादिषु पाठादव्ययत्वम्, अव्ययीभावत्वफलांशे न दृढतरं मानं नापि *तत्प्रयोगः प्रतीत इत्याहुः । गृहीत्वेति । क्त्वाप्रत्ययोऽध्याहृत-*स्थित्यादिक्रियामादाय बोध्यः । केशेषु केशेषु गृहीत्वा स्थितयोरिदं युद्धं प्रवृत्तमित्यर्थात् । ग्रहणकर्मत्वं प्रत्यासत्त्या केशादिविशिष्ट-*पुरुषाणां बोध्यम् । युद्धस्यानेककर्तृकत्वात् । *इदं सूत्रं वैयाधिकरण्यार्थम् । सरूपत्वात्प्राप्त एकशेषश्चानवकाशेनानेन बाध्यते ।

ओरोदितीति । *ओरवित्यस्याप्युपलक्षणमिदम् । संज्ञापूर्वेति । इदं कैयटहरदत्ताद्यनुरोधेनोक्तम् । भाष्ये तु न दृश्यते । स्वयंभुव इदमित्यर्थेऽणि स्वायंभुवो लोकेऽसाधुरेव । भाष्यानुक्तज्ञापितार्थस्य साधुतानियामकत्वे मानाभावात् । भाष्याविचारितप्रयोजनकानां सौत्राक्षराणां पारायणादावदृष्टमात्रार्थकत्वकल्पनाया एवौचित्यात् ।

---

र्थे प्रवेशः । *अत्र च वृत्त्यादीति* । इच्प्रत्ययस्य तिष्ठद्गुप्रभृतिपाठ इत्यर्थे । *पराङ्गवत्त्वायाव्ययत्वमिति* । तत्र हि "षष्ठ्यामन्त्रितकारकवचनम्" इत्युक्तत्वादस्य कारकविभक्त्यन्तत्वे सति पराङ्गवद्भावः स्यात्, एवञ्चेदं कुर्वन्नित्येतदपेक्षया द्वितीयान्तं,द्वितीयायाश्चाव्ययत्वात् लुगिति भावः । *अव्ययीभावेऽभावादि-ति* । लुङ्मुखस्वरोपचारा इति परिगणनादिति भावः । वृत्त्यादीत्यनेन सूचितामरुचिम्प्रकाशयति-*केचित्त्विति* । *तत्प्रयोग इति* । केशाकेशि कुर्वन्निति प्रयोग इत्यर्थः । इच्प्रत्ययस्य यदि स्वरादौ पाठस्तदाऽव्ययत्वात् "अव्ययानां न" इति निषेधात्पराङ्गवद्भावो न स्यादितिशङ्कानुत्थानायेत्थमभिहितम् । *स्थित्यादिक्रियेति* । केशेषु केशेषु गृहीत्वा स्थितयोरित्यर्थ इति । अनेन ग्रहणस्थितिक्रिययोः समानकर्तृकत्वं दर्शितम् तु युद्धकर्तृकप्रवृत्तिक्रियामादाय क्त्वाप्रत्ययस्योपपत्तिरसमानकर्तृकत्वात् । *पुरुषाणामिति* । एवञ्च स्थितयोरितिद्विवचनमविवक्षितमिति भावः । "अनेकम्" (पा० सू० २-२-२४) इतिसूत्रेणास्य समासस्यागतार्थतामाह-*इदं सूत्रमिति* ।

प्रक्रियालाघवार्थमप्याह-*ओरविति* ननु, संज्ञापूर्वकेतिपरिभाषाभावे वृद्धिसंज्ञापूर्वत्वेन "न य्वाभ्याम्" (पा० सू० ७-३-३) इतिनिषेधस्यानित्यत्वादप्रवृत्तौ वृद्धिप्रवृत्तौ द्वारादित्वादैचि शौवादंष्ट्रो मणि-

*शौवादंष्ट्रो मणिरित्यत्र "श्वादेरिञि"(पा० सू० ६-३-८)इति सूत्रस्थ* भाष्यप्रयोगादेवाण् । *एवमेव 'आगमशास्त्रमनित्यं' 'नञ्घटितमनित्यम्' 'आतिदेशिकमनित्यं' 'सर्वविधिभ्यो लोपविधिरिड्विधिश्च बलवान्' इत्यादि भाष्यानुक्तं बोद्धयम् ।

तेन सहेति ॥ तुल्ययोगः=एकेन गमनादिना योगः, *तद्द्योतकं सहेत्येतदित्यर्थः ॥

वोपस । अत्रोपर्जनस्येति मत्वर्थीयाच्प्रत्ययान्तमुत्तरपदेन सन्निधापितस्य समासस्यावयवद्वारकं विशेषणं *लक्ष्यानुसारिव्याख्यानात् । सर्वत्र च कश्चिदवयव उपसर्जनमेवेति विशेषणसामर्थ्यादुपसर्जनसर्वावयवकस्येत्यर्थस्तदाह—बहुव्रीह्यवयवस्येति । व्यधिकरणा षष्ठीति भावः । तेनेह न-*सहकृत्वा । "राजनि युधि कृञः"(पा० सू० ३-२-९५) "सहे च"(पा० सू० ३-२-९६) इति क्वनिप्, उपपदसमासः । *सहकृत्वप्रिय इत्यत्रापि न । उपसर्जनसर्वावयवके बहुव्रीहौ यदुत्तरपदं प्रियशब्दः सहशब्दस्य तत्परत्वाभावात् । सहशब्देन द्वन्द्वस्तु नास्त्येव । चार्थे वृत्तेरभावात्, अनभिधानाच्च । *व्याख्यानादेवोपसर्जनपदेन शास्त्रीयं

---

रित्यस्य सिद्धिर्भवति, परिभाषाया अभावे तु न स्यादत आह-*शौवेति* । यद्वा "संज्ञापूर्वको विधिरनित्यः" इति परिभाषासत्त्वे शौवादंष्ट्रस्य सिद्धिर्भवति परिभाषाया अभावे तु "शुनो दन्तदंष्ट्र"इत्यनेन दीर्घे श्वादंष्ट्राशब्दाद् वृद्धाच्छेऽस्य सिद्धिर्न स्यादत आह-शौवेति । *भाष्यप्रयोगादिति । एतेनात्र "अन्येषाम्" (पा०,सू० ६-३-१३) इत्येव दीर्घविधायकं शुनो दन्तेति त्वस्यैव हशिग्रहणस्य प्रपञ्च इति ध्वनितम् । स च दीर्घः प्रयोगदर्शनेन कल्प्यः । प्रकृते च ताद्धितोत्पत्तेः प्रागप्रवृत्तिः कल्पनीया । एवं सति वृद्धत्वाभावाच्छस्याप्राप्तेरण् । ततो द्वारादित्वादैच् । "अन्येषाम्" (पा० सू० ६-३-१३७) इति दीर्घः । हशिग्रहणादेवाप्रवृत्तिकल्पनायान्दृष्टान्तः श्वपुच्छवदिति । *एवमेव=यथा संज्ञापूर्वक इतिवचनमप्रामाणिकन्तद्वत् । तत्तद्वचनबलात्साधयितुमिष्टाः प्रयोगाश्छान्दसातिरिक्ता अप्रामाणिका एवेति बोध्यम् ।

*तद्द्योतकमिति* । तुल्ययोग इति सप्तम्या द्योतनासम्बन्धावच्छिन्नाधारत्वमर्थ इति भावः ।

समासविशेषणत्वमुपसर्जनशब्दस्य न तु सहशब्दविशेषणत्वमव्यभिचारात्समासविशेषणत्वेऽप्युपसर्जनशब्दस्याच्प्रत्ययान्तत्वमत्र साधकमाह-*लक्ष्यानुसारिव्याख्यानादिति* । तत्फलमाह-*सहकृत्वेति* । सहशब्दविशेषणत्वेऽत्र स्यात् । साक्षात्समासविशेषणत्वे फलमाह-*सहकृत्वप्रिय इति* । *व्याख्यानादेव=लक्ष्यानुसारिव्याख्यानादेव ।

लौकिकं च गृह्यते। तेन *सपुत्रादेरप्युपसर्जनसर्वावयवकत्वं बोध्यम्। *व्यधिकरणत्वात्पूर्वेणाप्राप्तौ वचनं कबभावार्थश्च। सपुत्र इति। "सप्तमी विशेषणे"(पा० सू० २-२-३५)इति न पुत्रस्य पूर्वनिपातः। "प्रथमानिर्दिष्टम्" इत्यनेनोपसर्जनत्वाद्यत्र पूर्वनिपातानियमप्रसक्तिस्तत्रैव *तत्प्रवृत्तेः। प्रायिकमिति। *इतिशब्दादिदं लब्धम्। सकर्मक इति। *स्वार्थे कः। *अत एवार्थेन सह निवृत्त इत्यर्थकः 'सार्थको निवृत्तः' इति द्वन्द्वसूत्रस्थभाष्यप्रयोगः सङ्गच्छते। एतच्च प्राचामनुरोधेन। परे तु सकर्मक इत्यादौ विद्यमानवाची कर्मादिसमानाधिकरणः सहशब्दस्तत्र च षष्ठ्यपवादतृतीयाया *असम्भवान्नानेन समासः। *सहैव पुत्रैरित्यादौ *विद्यमानतावाची। तेषां विद्यमानत्वेऽपीत्यर्थ इति न दोषः। प्रकृते तु न सः। कर्मणो विद्यमानत्वे इत्यर्थाननुभवात्। *एवञ्च "अनेकमन्यपदार्थे"(पा० सू० २-२-२४) इत्येव समासः। सपूर्वाया इत्यादिनिर्देशैर्वोपसर्जनस्येत्यत्र प्रतिपदोक्तपरिभाषाया अप्रवृत्त्या सादेशः सुलभः। सपूर्वैस्तत्र सर्वनामसंख्ययोरित्यस्याप्रवृत्तिरानित्यत्वात्। अत एव "संहितशफ"(पा० सू० ४-१-७०) इति सूत्रे सहोरूरित्यस्य सह=विद्यमानावूरू यस्या इति विग्रहप्रदर्शनं कैयटादिभिः कृतमित्याहुः॥

प्रकृत्याशि॥ *सपुत्रस्य यजमानस्यैश्वर्याभिवृद्धिरास्त्वित्याद्याशीर्वचनमसाध्वेवेति बोध्यम्॥

---

*सपुत्रादेरिति*। एतेषु सहशब्दस्य लौकिकोपसर्जनत्वाभावेऽपि शास्त्रीयमुपसर्जनत्वमस्त्येव "तेन सह"(पा० सू०२-२-२८) इतिसूत्रारम्भपक्षे प्रयोजनमाह-*व्यधिकरणत्वादिति। *तत्रैव तत्प्रवृत्तेरिति*। "सपूर्वायाः प्रथमाया" इति निर्देशात्। *इतिशब्दादिति*। अस्योपादानादस्य सूत्रस्य प्रयोगदर्शनात्प्रवृत्तिरिति भावः। ननु कबभावार्थमितिपूर्वत्रोक्तत्वात्सकर्मक इत्यत्र कप्रत्ययानुपपत्तिरत आह-*स्वार्थे क इति*। *अत एव=स्वार्थिकप्रत्ययस्वीकारादेव। *असम्भवादिति*। व्यधिकरणत्वादेरभावादिति भावः। नन्वेवं "सहैव दशभिः पुत्रैः" इत्यत्र तृतीया कथमत आह-*सहैवेत्यादि*। *विद्यमानतावाचीति*। एतेन व्यधिकरणत्वं स्पष्टमेव। *एवञ्च=सहशब्दस्य विद्यमानवचनत्वे च।

*प्रकृत्याऽऽशिषि*। अत्र नेति वक्तव्ये प्रकृत्या इत्युपादानमदृष्टार्थम्। नन्वेवमाशीर्वचने सपुत्रस्येत्यस्य प्रयुज्यमानस्य का गतिरत आह-*सपुत्रस्येति।

बहुव्रीहौ सं ॥ संख्येये वर्तमानसंख्याशब्दान्तो यो बहुव्रीहिरित्यर्थः । पञ्चम्यर्थे सप्तमीत्याह—तस्मादिति । उपगणा इत्यत्र डचिसत्यसति *रूपे विशेषाभावादित्याह—स्वरे विशेष इति । डचयन्तोदात्तम्, अन्यथा पूर्वपदप्रकृतिस्वर इत्यर्थः । बहुगणयोर्यदा चतुरादिबोधकता तदा तत्समीपस्थादीनां बहुत्वाद् बहुवचनम् । अत्र प्रतिपदोक्तपरिभाषा न प्रवर्त्तते । तेन नव दश येषामिति "अनेकम्" इति समासेऽपि नवदशा इति भवतीति ध्वनितं "संख्यया" इति सूत्रे "अशिष्यः संख्योत्तरपदः । संख्येयवार्थाभिधायित्वात्" इत्यनेन । तत्प्रत्याख्याने तु* संख्येये वर्त्तमानबहुव्रीहेरित्यर्थान्न दोषः । मूलेऽपि संख्येये यो बहुव्रीहिरित्यनेन *सूचितमिदम् । स्पष्टं चेदं समर्थसूत्रे "संख्ययाव्यय" (पा० सू० २-२-२५) इति सूत्रे च भाष्यकैयटयोः । *अत्र पक्षे *कबपि । *भाष्येऽनन्तरबहुव्रीह्यपेक्षया शेषस्य ग्रहणात् । अत एव बहुव्रीहौ

---

*रूपे विशेषाभावादिति* । एवञ्चाबहुगणादिति प्रतिषेधवैयर्थ्यमिति शेषः । *प्रत्याख्याने त्विति* । प्रत्याख्यानपूर्वपक्षे इत्यर्थः । *सूचितमिदमिति* । प्रत्याख्यानं सूचितम् । *अत्र पक्षे=प्रत्याख्यानपक्षे । *कबपीति* । सङ्ख्येयेऽन्यपदार्थे यदा "अनेकम्" (पा० सू० २-२-२४) इति सूत्रेण समासः क्रियते, तदा कब् भवत्येव । यदा तु विंशत्यादीनां सङ्ख्यासङ्ख्येयोभयपरतयाऽधिकविंशा इत्यादौ अधिका विंशतिर्यासामित्यर्थकल्पने किञ्चिदधिका विंशतिः सङ्ख्या यासामित्यर्थसंभवेऽपि दशादीनां सङ्ख्येयमात्रपरतयाऽधिकदशा इत्यादिसिद्ध्यर्थं सूत्रमारभ्यते तदा पूर्वोक्त एवार्थः । एतच्चारुचिबोधकेन तुना सूचितम् । तथा चोक्तं भाष्ये-"इदन्तु न सिध्यति । अधिकदशा इति" । वार्त्तिककारश्चाह-"मत्वर्थे पूर्वो योगः, अमत्वर्थोऽयमारम्भः" । अनेन सूत्रस्यावश्यकत्वं वार्त्तिककारसम्मतमिति स्पष्टमेव । द्वित्रा इत्याद्यर्थमत्वर्थग्रहणकर्त्तव्यत्वेऽपि स एवाह-कबभावार्थं चेति । एतत्सूत्रविहितसमासस्य शेषाधिकारस्थत्वाभावेन कपोऽप्राप्तेरिति भावः । न च द्व्येकयोरित्यादिसिद्ध्यर्थमेकादिनवान्तानां सङ्ख्यापरत्वस्यापि स्वीकारादिदन्त्वित्याद्युक्तमसङ्गतमिति वाच्यम् । सौत्रप्रयोगविषय एव तथा स्वीकारेऽप्यन्यत्र नेत्याशयात् । *भाष्येऽनन्तरबहुव्रीह्यपेक्षयेति* । "शेषाद्विभाषा" (पा० सू० ५-४-१५४) इति सूत्रे भाष्ये उक्तम्-"कः शेषः ?, याभ्यः प्रकृतिभ्यः समासान्तो न विधीयते स शेषः" इति सामान्येनोक्ते "ये प्रतिपदं विधीयन्ते ते बाधका भविष्यन्ति" इति पूर्वपक्षिणोक्ते कपो वैकल्पिकत्वात्तदभावे सावकाशत्वेनापवादत्वाभावात् परत्वात्प्रतिपदविहितसमासान्तविषये कप् प्राप्नोति, तस्माच्छेषग्रहणङ्कर्तव्यम् । ततः किमपेक्ष्य

सक्थ्यक्ष्णोरिति प्रकरणे एवेदं न कृतम्* ।

*संख्याया इति । *अव्ययादेरिति बोध्यम् । तेन गोविंशति-रित्यादौ न । स्पष्टं चेदमत्रैव भाष्ये । *अन्यत्राधिकलोपादित्यपि भाष्ये उक्तं, द्व्यधिका विंशतिरिति चोदाहृतम्, तत्तु वार्त्तिककृता *स्वरीत्योक्तम् । *भाष्यकृता तु तत्र द्वन्द्वस्यैवाङ्गीकारात्तद्रीत्या तदनावश्यकम् । तत्पुरुषे हि पूर्वपदप्रकृतिस्वरासिद्ध्या *द्वन्द्व एवात्रेति भाष्यकृतोक्तम् । द्वन्द्वसूत्रे द्व्यधिकेत्यादावव्ययादित्वाभावाच्च अव्ययादेरित्याश्रित्यान्यत्राधिकलोपादिति न वक्तव्यमिति चात्र भाष्ये उक्तमित्याहुः ।

व्यत्ययेन षष्ठीति । सप्तम्यप्येवम्*, तदाह—बहुव्रीहेरिति । स्वाङ्गपद्वं मूर्त्तिमदित्यादि । षचः षो ङीषर्थस्तदुदाहरति—जलजाक्षीति । चिरवमन्तोदात्तत्वाय । तेन पूर्वपदप्रकृतिस्वरो न । स्थूलाच्चेति । अक्षपत्र पर्वग्रन्थिः । षचि हि ङीष् स्यात् ।

अङ्गुलिसदृशोत्ति । दारुणोऽप्राणितया मुख्याङ्गुलयसंभवादिति भावः । द्व्यङ्गुलेति । मात्रचो *द्वयसचो वा "द्विगोर्नित्यम्" इति

---

शेषत्वमिति प्रश्ने यस्माद्विशिष्य समासान्तो न विहितस्तदपेक्षं शेषत्वमित्यर्थे कथिते'अनूकम्'इति न सिध्यतीति परेणोक्ते अनन्तरो यो बहुव्रीह्यधिकारस्तदपेक्षं शेषत्वमित्युक्तम् । स चाधिकारो "बहुव्रीहौ सक्थ्यक्ष्णोः"(पा० सू० ५-४-११३) इति । स च बहुव्रीहिः प्राथमकल्पिकः । एवञ्चैतदधिकारीयसमासान्तस्यात्राविधानेन कबपि भवतीति भावः । *इदन्न कृतमिति । "बहुव्रीहौ सङ्ख्येये डजबहुगणात्"(पा० सू० ५-४-७३) इदं सूत्रन्न कृतमित्यर्थः ।

*सङ्ख्याया इतीति । सङ्ख्यान्तस्य तत्पुरुषस्य समासान्तो डजित्यर्थः । *अव्ययादेरितीति । "अव्ययादेरिति च वक्तव्यम्" इति पूर्ववार्त्तिकशेषात् । ननु यद्यव्ययादेरित्युच्यते तदाऽन्यत्राधिकलोपादित्यपि वार्त्तिककृतोक्तम्, द्व्यधिका विंशतिर्द्वाविंशतिः, एकाधिका विंशतिरेकविंशतिरिति च फलमुक्तम्, तन्नोपपद्यतेऽव्ययादित्वाभावादत आह—*अन्यत्रेत्यादि । *स्वरीत्येति । तेनाव्ययादेरित्यस्यानुपादानाच्छेषपूरणस्य भाष्यकृता कृतत्वादिति भावः । किं चैकविंशतिरित्यादौ भाष्यरीत्या तत्पुरुषाभावान्न डचः प्राप्तिरित्याह—*भाष्यकृता त्विति । *द्वन्द्व एवेति । एवञ्च "संख्या" (पा० सू० ६-२-३५)इतिसूत्रेण पूर्वपदप्रकृतिस्वरो भवति ।

*एवम्=व्यत्ययेन ।

ऊर्ध्वमानविवक्षायामाह—*द्वयसचो वेति ।

लुक्। "तत्पुरुषस्याङ्गुलेः" ( पा० सू० ५-४-८६ ) इत्येतत्तु अदारुणि चरितार्थमिति भावः । द्वन्द्वाव्ययीभावव्यावृत्तिरप्येतत्फलम् ।

द्वित्रिभ्याम् । षचि प्रकृते षविधानं द्विमूर्ध इत्यादौ "द्वित्रिभ्यां पाद्न्मूर्धसु"(पा०सू० ६-२-१९७) इति पाक्षिकान्तोदात्तत्वाभावे पूर्वपदप्रकृतिस्वरार्थम्। षचि हि चित्त्वसामर्थ्यात्पूर्वपदप्रकृतिस्वरं बाधित्वा नित्यमन्तोदात्तत्वं स्यात् । विकल्पस्तु अनित्यतया समासान्ताभावे चरितार्थः । अनित्यत्वञ्च मूर्द्धस्विति निर्देशादेव ज्ञायते । अन्यथा प्रक्रमाभेदाय मूर्द्धस्विव्येव वदेदिति "द्वित्रिभ्याम्" (पा० सू० ५-४-११५) इति सूत्रे भाष्यकैयटयोः स्पष्टम् । द्वित्रिभ्यामित्यस्य ताभ्यां परो यो मूर्द्धन्शब्दस्तदुत्तरपदकबहुव्रीहेरित्यर्थात्समासान्ते कृतेऽपि तत्प्रवृत्तिरित्यलम् ।

"अह्नोऽदन्तात्"(पा० सू० ८-४-७) इत्यन्तग्रहणाज्ज्ञापकादत्र प्रकरणे वर्णग्रहणे *तदन्तग्रहणं नास्तीत्याशयेनाह-पूर्वपदस्थादिति । समानपदे इत्यस्य अखण्डपदे इत्यर्थात्समासेऽप्राप्ते विध्यर्थमिदम् । भाष्ये इति। प्रागयनम् ऋगयनमित्यादीनान्त्व*नभिधानमिति भावः। *रघुनाथादिशब्दे तु णत्वे सञ्ज्ञात्वभङ्गापत्तेर्न णत्वम् । कृतणत्वेन चेत्सञ्ज्ञारूढ्यर्थो गम्यत इति सूत्रार्थः । तदुक्तं "भृञोऽसञ्ज्ञायाम्"(पा० सू० ३-१-११२) सूत्रे भाष्ये-"य एते सञ्ज्ञायां विधीयन्ते तेषु नैवं विज्ञायते सञ्ज्ञायामभिधेयायामिति, किं तर्हि प्रत्ययान्तेन चेत्सञ्ज्ञा गम्यते"इति । "प्रत्ययान्तेन यदि रूढिर्गम्यते ततः प्रत्ययः"इति कैयटः । रूढिः=रूढ्यर्थः । भाष्ये प्रत्ययान्तेनेति तत्तच्छास्त्रविधेयकार्योपलक्षणम् । एतन्मूलकमेव पठ्यतेऽभियुक्तैः—"सञ्ज्ञा शब्दा अनादिप्रयुक्ता नियतानुपूर्वीका एव सिद्धास्तत्रेदानीं कस्तद्विपरीतं प्रयोक्तुमर्हति"इति ॥

खुरखराभ्याम् ॥ अस्यादेशस्यैव स्थानिद्वारा समासान्तत्वेनाशेषत्वात् "शेषाद्विभाषा"(पा० सू० ५-४-१५४) इति कबत्र विषये न । *पक्षेऽजपीति । *भाष्ये त्वेतन्न दृश्यते ॥

---

*तदन्तग्रहणन्नास्तीति* । एवञ्च "रषाभ्याम्"(पा० सू० ८-४-१) इत्यनेनान्वयाय पूर्वपदशब्दोऽत्र लाक्षणिको बोध्यः । *अनभिधानमिति* । संसारकाक्रान्तानामित्यादिः । रघुनाथादिशब्देऽतिप्रसङ्गं वारयति-*रघुनाथेति । *पक्षेऽजेति* । णसादेशस्य वैकल्पिकत्वेनैतदभावे पूर्वसूत्रम्प्रवर्त्तत

उपसर्गाद ॥ अनोत्किम् । प्रनो मुञ्चतमित्यत्र णत्वं मा भूदिति । तद्भङ्क्त्वेति । अनोत्पर इत्यपनीय बहुलग्रहणं कृत्वेत्यर्थः । *अन्यथा प्रणोनयेत्यादावव्याप्तिः, प्रनः पूषेत्यादावतिव्याप्तिश्च स्यादिति भावः । अत्राप्युपसर्गग्रहणं *प्राग्वदेव ।

प्रणस इति । प्रगता नासिका यस्येति विग्रहः । विगतया नासिकयेति । तत्र च "पद्दन्" (पा० सू० ६-१-६३) इति *नसादेश इति भावः ।

*सुप्रातादौ "अव्ययानां भमात्रे" इति टिलोपः । शारिकुक्षे "यस्य" (पा० सू० ६-४-१४८) इति लोपः । कुक्षीतीकारान्तपाठस्त्वपाठः । अच्प्रकरणाविरोधात् । चतुरश्रेति तालव्यमध्यः । एणीपदादिषु पद्भावो *निपातनात् ।

अहल इति । *अस्य वैकल्पिकत्वेऽप्यनुक्तसमासान्तत्वाभावादत्र न कप् ॥

---

इति भावः । *भाष्य इति* । एतद्वार्त्तिके वाग्रहणमित्यर्थः । "खुरखराभ्यां नस् वक्तव्यः" इत्येव पाठात् । एवञ्च खुरणस इत्याद्यसाध्वेव ।

उपसर्गसंज्ञायाः क्रियायोग एव प्रवृत्तेर्नासिकाशब्दार्थेन योगे उपसर्गत्वासम्भवादुपसर्गग्रहणम्प्रादुयुपलक्षणमित्याशयेन मूले व्याख्यातम्-प्रादेरिति । *अन्यथा=अनोत्पर इत्यस्यैवोपादाने । *प्राग्वदेवेति* । प्रादुयुपलक्षणमेव ।

*नसादेश इति* । एवञ्च नैतत्प्रथमान्तम् । किं तु तृतीयान्तम् ।

*सुप्रातादाविति* । अत्राधिकरणशक्तिप्रधानस्यापि प्रातःशब्दस्य स्वसम्बन्धिकर्मविशेषलक्षणया शोभनपदेन सामानाधिकरण्यम् । यद्यपि 'प्रातःकल्पम्' इत्यादाविव वृत्तिविषये शक्तिमत्परत्वेनापि निर्वाहो भवति, तथापि कालस्य स्वतः शोभनत्वन्दुष्टत्वं वा न सम्भवतीत्युपाधिसंसर्गेणैव तद्वाच्यम्, तदपेक्षया लक्षणया कर्मविशेषपरत्वमुचितमेव । *निपातनादिति* । पाच्छब्दस्य कृतसमासान्तत्वाभावेनाल्लोपस्य स्थानिवद्भावेन च "पादः पत्" (पा० सू० ६-४-१३०) इत्यस्याप्राप्तिरिति भावः ।

*अस्य=नञ्दुःसुभ्य इत्यस्य । न च प्रकृतसूत्रे हलिग्रहणं व्यर्थम् । हलशब्देन समासेऽहल इत्यस्य सिद्धिर्भविष्यति, महत्त्वप्रतीतिरपि प्रकरणादिना भविष्यतीति वाच्यम् । असिच्प्रत्यये सति दुर्हल इत्यत्र चिरत्वादन्तोदात्तत्वम्भवति । प्रकृतसूत्रे हलिग्रहणाभावे हलशब्देन समासे तु पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वापत्तिः । हलिशब्देन समासेऽनुक्तसमासान्तत्वेन कबापत्तिश्च स्या-

नित्यम ॥ (पा० सू० ५-४-१२२)सस्येत्त्ववारणाय चम् न कृतः । *अकारोच्चारणं सुप्रजसावित्यर्थम् । *नित्यग्रहणं स्पष्टार्थमिति *भाष्यस्वरसः ॥

धर्माद ॥ केवलात्किमिति । बहुव्रीहिणा पूर्वपदाक्षेपे तस्य च समासप्रथमावयवे रूढत्वेन ततः परत्वाभावेनैव त्रिपदबहुव्रीहौ न दोष इति प्रश्नः । उत्तरन्तु पूर्वपदशब्दस्य तत्प्रथमावयवे *रूढौ न मानं, तदाह-आपेक्षिकमिति । परमस्वधर्म इत्यत्र स्वशब्दस्य "सर्वनामसंख्ययोः" (का०वा०)इति पूर्वनिपातो न । आहिताग्न्यादित्वात् । एवमेव जहत्स्वार्थेत्यत्रापि । केवलत्वञ्च *सजातीयान्याभाववत्त्वम् । इदञ्च "इजादे :"(पा० सू० ३-१-३६) इति सूत्रे भाष्ये स्पष्टम् । असिचोऽकारो*ऽदृष्टार्थः ।

कृतसमासान्तमिति । अनिजन्तमित्यर्थः ॥

धनुषश्च ॥ (पा० सू० ५-४-१३२) ङु*साहचर्यात् ङित्करणाच्चास्यादेशत्वं निश्चित्याह-अनङादेश इति ।

लोपो व्यो (पा० सू० ६-१-६६) ॥ *वलादौ प्रत्यय इति त्वयुक्तम्, प्रत्ययस्याप्रकृतत्वात्, *गौधेर इत्यसिद्धेश्च ।

---

त् । हलिग्रहणसत्त्वे तु प्रकृतसूत्रेण समासान्ते कृते कब् न भवतीत्याशयात् ।

ननु प्रजामेधाशब्दान्तबहुव्रीहेः सिच्प्रत्यय एव विधातव्यो यस्येतिलोपाभावेऽपि अप्रजा इत्यादि भविष्यतीत्यत आह-*अकारोच्चारणं त्विति । अस्वरितत्वेनान्यतरस्यांग्रहणस्यासम्बन्धेन नित्यत्वे लब्धे नित्यग्रहणाङ्किमर्थमत आह-*नित्यग्रहणमिति* । *भाष्यस्वरस इति* । भाष्यकृता प्रकृतसूत्रस्थनित्यग्रहणस्य प्रयोजनान्तरन्नोक्तम् । एतेन यत् प्रकृतसूत्रस्थनित्यग्रहणम् 'अन्यतोऽप्ययम्, तेनाल्पमेधस' इति सिध्यति इति वृत्तिकृदादयुक्तं तन्निरस्तम् ।

*रुढौ न मानमिति* । रूढावेव न मानमित्यर्थः । तेन "पादस्य पदाज्या" (पा०सू० ६-३-५२) इतिसूत्रे "बहुव्रीहौ प्रकृत्या"(पा०सू० ६-२-१) इति सूत्रे च रूढिसत्त्वेऽपि न क्षतिः । *सजातीयेति* । अत्र साजात्यं स्वघटितसमासघटकत्वेन । अभावश्चाव्यवहितोत्तरत्वसम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्यः । *अदृष्टार्थ इति* । अत्रानुकरणभूतेनाकारेणादृष्टशब्दस्य समासः । अः अदृष्टो यस्य सः अदृष्टाः, अदृष्टाः प्रयोजनं यस्य सोऽदृष्टार्थः । तादृशश्च णिजन्तो धर्मशब्द इति भावः ।

*साहचर्यादिति* ॥ पूर्वोत्तरसूत्रसाहचर्यादप्रत्ययचकारसाहचर्याच्चेत्यर्थः । परमतं खण्डयति-*वलादाविति* । युवजानिरित्यत्राच्स्थानिकत्वेन दोषाभावेऽप्याह-*गौधेर इति* ।

पूर्वोत्तरसाहचर्यादिकार आदेशः । *समासान्ता इत्यधिकाराद्
"आदेः परस्य"(पा०सू०१-१-५४)इति न प्रवर्त्तते इत्याशयेनाह—अन्ता-
देश इति । एकदेश इवेति । "तदेकान्तग्रहणम्"इति वार्तिकम् । *गुण
समुदायो द्रव्यमिति पतञ्जलिपते गन्धोऽवयव इति तद्भाव इत्यन्ये *॥

अल्पाख्या (पा० सू० ५-४-१३६) ॥ अल्पशब्दोऽल्पत्वपरः ।
*तथा च लेशवाचिनो गन्धशब्दस्य ग्रहणमित्याशयेनाह—सूपस्य
गन्धो लेश इति । (१)तत्र प्रमाणं कोशमाह—गन्धो गन्धक इति ॥

नन्वभावस्य कथं समामान्तत्वमत आह—स्थानिद्वारेणेति ।
पादस्य पादिति नोक्तम् । प्रतिपदोक्ततयाऽस्यैव "पादः पत्"(पा०
सू० ६-४-१३०)इत्यत्र ग्रहणापत्तौ पादयतेः क्विपि पद इत्याद्यनापत्तेः ॥

कुम्भपदी (पा० सू० ५-४-१३९) ॥ बहुवचननिर्देशाद्गणपा-
ठसामर्थ्याच्चाद्यर्थावगतिः । *स्त्रीलिङ्गानामेव गणे पाठादाह—स्त्रिया-
मिति । *यदिहोपमानपूर्वं संख्यापूर्वञ्च तस्य सिद्धे लोपे नित्यं ङी-
बर्थं वचनम् । अष्टापदीत्यत्र निपातनाद्दीर्घत्वम् ।

द्विदन्निति । *शिशुत्वावस्थाप्रतीतिः ।

समदन्तीति । "नासिकोदर"(पा०सू०४-१-५५)इत्यादिना ङीष् ।
श्यावः=कपिशः । अरोकः=अदीप्तिराच्छिद्रो वा ।

ककुदस्या (पा०सू०४-१-१४६)॥ कालाहारादिकृता अवयवो*पच-

---

'ससुरभिभ्यः' इति पञ्चमीनिर्देशात् "तस्मात्"(पा० सू० १-१-६७)
इतिपरिभाषाप्रवृत्तावप्याह—*समासान्ता इति* । गन्धशब्दो द्रव्यवाची
गुणवाची च । "वहति जलमियं पिनष्टि गन्धान्"इत्यादौ द्रव्यवाची,
गुणवाची तु 'चन्दनस्य गन्धः' इत्यादौ दृष्टः । प्रकृतसूत्रे तु द्रव्यवाचिनो
न ग्रहणमिति बोधनाय वार्त्तिककृतोक्तम्—"गन्धस्येत्वे तदेकान्तग्रहणम्" इति ।
तत्रैकान्तशब्दस्यावयववाचकतया गुणस्यावयवत्वाभावादाह—(मूले) एकान्त
एकदेश इवेति । पातञ्जलमतेनाह—*गुणसमुदाय इति* । *अन्ये=मुख्याः ।

यद्यपि गन्धशब्दो नानार्थः तथाप्यल्पाख्यायामित्युपादानात् लेशवा-
चकस्यात्र ग्रहणमित्याह—*तथा चेति* ।

ननु मूलोक्तं स्त्रियामित्यप्रकृतमत आह—*स्त्रीलिङ्गानामेवेति* ।
"कुम्भपदीषु च"(पा०सू० ५-४-१३९)इतिसूत्रारम्भप्रयोजनमाह—*यदिहोपेति*।

*शिशुत्वावस्थेति* । पशुविषये तादृशी प्रसिद्धिर्लोकेऽस्ति ।

*उपचयादय इति* । आदिनाऽपचयग्रहणम् ।

---

(१) 'धर्मपरतायाम्' इति लिखितपुस्तके पाठः ।

यादयो वस्तुधर्मा अवस्थेत्युच्यते । अजातककुत्त्वेन बाल्यं पूर्णककुत्त्वेन तारुण्यं गम्यते । अवस्थायां किम् । श्वेतककुदः ।

सञ्ज्ञैषेति । एवञ्च पर्वत इत्यस्य तद्विशेष इत्यर्थः ।

व्यूढं=विशालम् । तद्धितत्वात्कस्य नेत्त्वम् । "सोऽपदादौ" (पा० सू० ८-३-३८) इति सः । प्रियसार्पिष्के "इणः षः" (पा० सू० ८-३-३९) । एकवचनान्ता इति । *सर्वत्र गणे निर्विभक्तिकपाठस्यैव दृष्टत्वेन केषाञ्चित्सविभक्तिकानां पाठस्ताद्विवक्षार्थस्तदाह—द्विवचनेत्यादि ।

अनुक्तसमासान्तादिति । सामान्यतः समासान्तापेक्षयैव शेष इत्यभिमानस्त *द्वक्ष्यति—प्रियपथ इति । परे तु "नैव कबपेक्षं शेषग्रहणम्, नापि समासान्तापेक्षं; किन्तर्ह्यनन्तरो यो बहुव्रीह्यधिकारः सोऽपेक्ष्यते" इति भाष्योक्तेस्तदपेक्षयैव शेषो ग्राह्यः । *"समासान्ताश्च कबभावे सावकाशाः" इति समासान्तैः स्वस्वविषये कपो बाधेनोपपत्तौ शेषग्रहणं व्यर्थमिति न वाच्यम् । *एवञ्च *प्रियपथिक इत्यपि* । *अत एव "बहुव्रीहौ संख्येये" (पा० सू० ५-४-७३) इत्यस्या* न्यत्र पाठः सार्थक इत्यन्यत्र विस्तर* इत्याहुः । शेषाधिकारेति । इदं संख्येयेत्यादौ कबभावार्थमिति भाष्योक्तेर्ज्ञायते । सकृदुच्चारितादर्थद्वयलाभोऽसम्भवीत्यत आह—तन्त्रादिनेति । उच्चारयित्रा तन्त्रेणोच्चारितं बोद्धुरावृत्त्या बोध इति बोद्ध्यम् ॥

---

एकवचनान्तपाठेन यथाऽर्थविशेषलाभस्तं प्रकारमाह-*सर्वत्र गण इति* ।

समासान्तसामान्यस्य तदभिप्रायविषयत्वमित्यत्र तदुक्तिरेव प्रमाणमित्याह-*तद्वक्ष्यतीति* । समासान्तापेक्षया शेषग्रहणे शेषग्रहणं व्यर्थं स्यादिति कस्यचिदुक्तिं खण्डयति-*समासान्ताश्चेति* । समासान्तसामान्यापेक्षया शेषाग्रहणं सति यत्सिद्धं तदाह-*एवं चेति । *प्रियपथिक इति* । अत्र परत्वात् कप् । "ऋक् पूः" ( पा० सू० ५-४-७४)इत्यकारस्तु यदा न कप् तदा भवति, प्रियपथ इति । तदाह-अपीति । *अत एव= यदा संख्येयेऽन्यपदार्थेऽनेकमितिसूत्रेण समासः क्रियते तदा डज्विषयेऽपि कप इष्टत्वादेव । *अन्यत्र पाठः=अनन्तरो यो "बहुव्रीहौ सक्थ्यक्ष्णोः" (पा० सू० ५-४-११३) इति बहुव्रीह्यधिकारस्ततोऽन्यत्र पाठः । *अन्यत्र विस्तर इति* । अनन्तरो यो बहुव्रीह्यधिकारस्तदपेक्षस्य शेषपदार्थस्य ग्रहणमुक्त्वा "कथमनृचो बह्वृच इति ? । वक्तव्यमेवैतत्-अनृचो माणवे । बह्वृचश्चरणाख्याम्" इति

आपोऽन्य (पा०सू०७-४-१६) ॥ "न कपि" (पा०सू०७-४-१४) इत्यतः कपीत्यनुवर्त्तते ।

अनन्तरस्येति न्यायात् *शेषादित्यस्यैव निषेध इत्याह--शेषादिती-

---

भाष्ये उक्तम्-। कथमिति बहुव्रीह्यधिकाराविधानाच्छेषत्वात्कप्प्रसङ्गः । वक्तव्यमेवैतदित्यनेन विशेषवचनेन कपो बाध एव । विनिगमनाविरहेणानृचो माणवे एव, माणवेऽनृच एवेत्युभयविधानियमाश्रयणात् । यत्त्वत्र कैयटेनोक्तम्—समासान्तापेक्षेऽपि शेषत्वेऽनृचबह्वृचयोर्विशेषवचनादन्यत्रानृक्कयोः पक्षे कपः सिद्धत्वात्कस्यचिद्दोषस्याप्रसङ्गात्किमर्थमनन्तरबहुव्रीह्यधिकारापेक्षः शेष आश्रीयते । किञ्चोपदशादिभ्यः पक्षे कप् प्राप्नोति । अनन्तरे बहुव्रीह्यधिकारे डचोऽविधानात्प्रियपथः प्रियधुर इत्यत्र च प्राप्नोति । तस्मात्समासान्तापेक्षमेव शेषत्वमाश्रयणीयामिति । एतदेवानुक्तसमासान्तादिति वदता मूलकृताऽपि समाश्रितमिति ।

अत्रेदश्चिन्त्यम । नैव कबपेक्षं शेषग्रहणञ्चापि समासापेक्षमित्यनेन नञ्घटितवाक्यद्वयेन पूर्वोक्तपक्षद्वयोपमर्दं कृत्वा भाष्यकृता अनन्तरो यो बहुव्रीह्यधिकारः सोऽपेक्ष्यत इत्यनेन तृतीयपक्ष एव स्वीकृतः । अतः स एवादरणीयः कपो वैकल्पिकत्वेन पक्षे प्रियपथिक इतीष्टमेव । भाष्यकृता एतादृशदोषानुद्भावनात् । 'अप्रतिषिद्धमनुमतं भवति' इतिन्यायात् । "समासान्ताः"(पा० सू० ५-४-६८) इति सूत्रस्थ 'उच्चधुर'इति प्रयोगस्तु कबभावपक्षे बोध्यः । न च 'विशेषापेक्षात्सामान्यापेक्षमन्तरङ्गम्' इति न्यायेन समाससामान्यापेक्षत्वेन "ऋक्पूः"इत्यन्तरङ्गमिति वाच्यम् । प्रकृतिविशेषापेक्षत्वेन तस्यापि समत्वात् सामान्यापेक्षत्वेनान्तरङ्गत्वस्य भाष्यकृताऽनाश्रयणाच्च । ननु यद्यनन्तरो यो बहुव्रीह्यधिकारस्तदपेक्षया शेष आश्रीयते तदा बहुव्रीहौ "उरः प्रभृतिभ्यः कप्"(पा० सू० ५-४-१५१) इनः स्त्रियाम्"(पा० सू० ५-४-१५२) "नद्यृतश्च"(पा० सू० ५-४-१५३) विभाषा"(पा० सू० ५-४-१५४) इत्येवं कप्प्रकरणं समाप्य "सक्थ्यक्ष्णोः स्वाङ्गात् षच्"(पा० सू० ५-४-११३)"अङ्गुलेर्दारुणि"(पा० सू० ५-४-११४) इत्यादिसूत्रं कर्त्तव्ये प्रकृतसूत्रस्थं शेषग्रहणञ्च कार्यम्, विशेषविहिताः षजादयो बाधका भविष्यन्तीति चेन्न । "विभाषा श्वावारोकाभ्याम्"( पा० सू० ५-४-१४४) "पूर्णाद्विभाषा"(पा० सू०५-४-१४९)इत्यनयोर्वैकल्पिकत्वेनैतयोरभावे कबापत्तेः । मम तु अनन्तरो यो बहुव्रीह्यधिकारः सोऽपेक्ष्यते । अनन्तरे बहुव्रीह्यधिकारे यस्माद्बहुव्रीहेः समासान्तो न विहित इत्यभिधानात्तद्विषये कपोऽप्राप्तेर्न दोषः । किंञ्च शेषपदाभावे शेषाधिकारस्थबहुव्रीहेरित्यर्थलाभोऽपि न स्यादिति बोध्यम ।

*शेषादित्यस्यैव निषेध इति* । तेन "उरः प्रभृति"इति कप् संज्ञायामभवत्येव । विश्वे देवा अस्येति लौकिकविग्रहार्थं व्याचष्टे—*विश्वाक्ये-

न्ति। विश्वे इति। विश्वाख्यदेवगणविशेष इत्यर्थः। *उद्भूतावयवभेदत्वाद् बहुवचनं विग्रहे। विश्वदेव इति। *विश्वेदेव इति त्वपपाठः ।

*"न सञ्ज्ञेयसोः"इत्येव वक्तव्ये योगविभागसामर्थ्याद् "ईयसश्च"(पा० सू० ५-४-१५६)इति "नद्यृतश्च"(पा० सू० ५-४-१५३)इत्यस्यापि निषेधकमित्याह–न कश्चिति। *ईयसो बहुव्रीहौ पुंवदिति वचनं, ईयसः परस्य *स्त्रीप्रत्ययस्य बहुव्रीहौ विद्यमानस्य पुंवत्, पुंवद्विषयकस्योरस्य यथा न ह्रस्वस्तथाऽस्यापीति तदर्थः, तद् अर्थतः पठति–ईयस इत्यादि। *अत्र सूत्रे "ईयस उपसर्जनस्त्रीप्रत्ययस्य *दीर्घत्वं वक्तव्यम्। न वक्तव्यम्। पुंवद्वचनात्सिद्धम्"इति भाष्योक्ते*रनेन नपुंसकह्रस्वस्यापि

---

ति । अत्र विग्रहे बहुवचनोच्चारणस्य बीजमाह–*उद्भूतेति*। विश्वाख्येत्युपादानेन तस्य गणविशेषस्य विश्व इत्यपि संज्ञा। गणश्चोद्भूतावयवभेद एव प्रतीयते शब्दशक्तिस्वभावात्।

इदमत्र बोध्यम्। "न संज्ञायाम्"इति निषेधो नावयवस्य संज्ञात्वमादाय, किंतु समुदायस्यापि संज्ञात्वादेव। कब्रहिता चेत्संज्ञा विवक्षिता तदा कप् न भवतीति सूत्रार्थात्। सा च संज्ञा लोके विभक्त्यन्तविश्वशब्दघटितैवोच्चार्य्यते। न च संज्ञाशब्दा नियतानुपूर्वीका एवान्यत्र दृश्यन्ते, इह तु विश्वान्देवान्, विश्वेभ्यो देवेभ्यो विश्वेषां देवानामित्यनियमो दृश्यत इति कथमिति वाच्यम्। देवशब्दप्रकृतिकविभक्तिसजातीयविभक्तिप्रकृतिभूतविश्वशब्दाद्यवयविकाऽत्र संज्ञेत्यर्थात्। साजात्यञ्च समानार्थकत्वविशिष्टसुब्त्वतेति। *विश्वेदेव इति त्वपपाठ इति* । परिनिष्ठिते प्रयोगे विभक्त्यलुग्विधायकसूत्राभावादिति भावः। अत एव "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा, वाजिभ्यो वाजिनम्" इति श्रूयते।

"ईयसश्च" (पा० सू० ५-४-१५६) इति सूत्रविषयेऽनन्तरस्येतिन्यायाप्रवृत्तौ बीजमाह–*न संज्ञेयसोरित्येवेति*। ईयसः प्रत्ययत्वात्प्रत्ययग्रहणपरिभाषया तत्तदन्तपरम, अतो लिङ्गविशिष्टपरिभाषाया इह प्राप्तिः। "ईयसो बहुव्रीहेः"इति निषेधवचनं यद्यपि नोपलभ्यते, तथापि तादृशानुपूर्वीकस्य यथा लाभस्तत्प्रकारमाह–*ईयसो बहुव्रीहाविति* । "गोस्त्रियोः"(पा० सू० १-२-४८) इति सूत्रात्स्त्रीग्रहणमत्र सम्बध्यत इत्याशयेनाह–*स्त्रीप्रत्ययस्येति। *अत्र सूत्रे इति*। ईयसश्चेतिसूत्र इत्यर्थः। विषयत्वं सप्तम्यन्तार्थः। ननु यदि पुंवद्भावो विधीयेत तदा कुलस्यान्यपदार्थत्वे शिखीनुमादीनामपि प्रतिनिवृत्तिः प्राप्नोतीत्यत आह–*दीर्घत्वमिति । एतद्वचनैकवाक्यतया पूर्ववचनेन पुंवद्भावविधानेऽपि ह्रस्वत्वस्यैव प्रकरणप्राप्तस्य तेन निवृत्तिर्बोध्यते इति कल्पनीयम्। *अनेन=पुंवद्वचनेन। *आवश्यकेनेति*।

निवृत्तिः। अन्यथा वचनेन वचनप्रत्याख्यानासङ्गतिः। मम तु नपुंसकह्र-स्वनिवृत्त्यर्थ*मावश्यकेन युज्यते प्रत्याख्यानमिति दिक्। बहुश्रेयसीति। लिङ्गविशिष्टपरिभाषया *निषेधः। "नद्यृतश्च" इति नित्यं कप् प्राप्तः।

अभिवादनस्तुतिरूपोभयार्थकचद्दिधातुनोभयसाधारणपूजा ल-क्ष्यत इत्याशयेनाह-पूजित इति। *एतेन स्तुत्यर्थकस्यैवात्र ग्रहणमिति वृत्त्यादिध्वनितं निर्बीजमिति सूचितम्। सुभ्रातेति। "नद्यृतश्च" इति कप् प्राप्तः।

स्त्रीप्रत्ययान्तत्वाभावादिति। "अवितृस्तृतन्त्रिभ्य ईः" इत्यौ-णादिकत्वादिति भावः।

ल्युडिति। मोयतेऽस्यामित्यधिकरणे इति भावः। समाप्तवान इति। समाप्तं वानं=वयनक्रिया यस्येत्यर्थः।

सप्तमीवि (पा० सू० २-२-३५)॥ सप्तम्यन्तस्य *कर्त्राद्यन्व-यद्वारैव क्रियान्वयाद्विशेषणत्वेन सिद्धे*ऽत्र वैयधिकरण्येऽपि समास-ज्ञापनार्थं सप्तमीग्रहणम्। विशेषणपदश्च ब्राह्मणवसिष्ठन्यायेन तदति-रिक्तविशेषणपरं, तदाह-अत एवेति। चित्रगुरिति। अन्यपदार्था-पेक्षयो*भयोरपि प्रथमानिर्दिष्टत्वेन एकविभक्तित्वेन वाऽनियमे प्राप्ते उत्तरपदार्थविशेषणस्यैव पूर्वनिपातार्थं विशेषणग्रहणमिति भावः। सर्वनामसंख्ययोरिति। *श्वेतशुक्लयोरुदाहरणे विशेषणत्वं बो-ध्यम्। *वन्येतरा हस्तदक्षिण इत्यादौ राजदन्तादित्वात्परनिपातः।

---

अन्यथा दीर्घत्वविधानस्य-पुंसि जातेऽपि "गोस्त्रियोः" इति ह्रस्वत्वे पुनरनेन दीर्घत्वविधायकतया चारितार्थ्यान्नपुंसकह्रस्वत्वनिवृत्तिर्न स्यादिति भावः। *निषेध इति*। कप इत्यादिः।

*एतेन=पूजित इति कथनेन।

*कर्त्राद्यन्वयद्वारेवेति। अत एव समासप्रयोजकं सामर्थ्यम्। *अत्र वैयधिकरण्येऽपीति। अन्यथा सामर्थ्यसद्भावेऽपि सप्तम्यन्तनै-कविशेष्यकप्रतीतिजनकत्वरूपसामानाधिकरण्याभावात्समासो न स्यादिति भावः। "सप्तमीविशेषणे" (पा० सू० २-२-३५) इति सूत्रे विशेषणपदेन सप्तमीपदसाहचर्यादुत्तरपदार्थविशेषणीभूतार्थप्रतिपादकस्य ग्रहणमित्याह— *उभयोरपीत्यादि*। सर्वनामसंख्ययोरितिवचनारम्भस्य प्रयोजनमाह-*श्वे-तेति। अन्यथा विशेषणत्वात् श्वेतशुक्लयोरेव पूर्वनिपातः स्यादिति भावः। *वन्येतरा इति*। वन्या इतरे येभ्यः, हस्तो दक्षिणो यस्येत्यर्थः। बहुव्रीहाव-

सर्वश्वेत इति । *वचनसामर्थ्याद्गतपूर्वगत्या सर्वनामत्वं बोध्यम् । त्रिशुक्ल इति पाठः । द्विशुक्ल इत्यादौ द्विशब्दस्य सर्वनामत्वादेव सिद्धेः । शब्दपरेति । *अत एव वार्त्तिकेऽल्पाचोऽपि परनिपातः । संख्याया इति । संख्यावाचकानां समासेऽल्पार्थवाचिकाया इत्यर्थः । "द्वन्द्वेऽघि"इति सूत्रे पठितमपीदं द्वन्द्वाद्वन्द्व*साधारणं,तदाह–द्वित्रा इति,द्वादशेति च । *सहस्राणां शतमित्यर्थेऽपि शतसहस्रमित्येव । स्पष्टं चेदं "तदस्मिन्नधिकम्"(पा०सू०५–२–४५)इत्यत्र भाष्ये । वा प्रियस्येति । *इदं *बहुव्रीहावेव। तेन "तेन सह" इत्युदाहरणे सहप्रिय इत्यत्र न। "सप्तमीविशेषणे" इत्यत्रोपसंख्यानात् । गड्वाद्याहिताग्नी आकृतिगणौ । अत्र वेत्यनुवर्त्य व्यवस्थितविभाषाश्रयणादाह–क्वचिन्नेति । एतद्वृत्तौ स्पष्टम्* । कृतकृत्ययोः *क्रियाशब्दत्वादनियमे प्राप्ते वचनम् । *चारुस्मितेत्यादि आहिताग्न्यादित्वात्साधु । जातिकालेति । "जातिकालसुखादिभ्योऽनाच्छादनात् क्तः"इत्यन्तोदात्तविधायकेन *ज्ञापितम् । *वाग्रहणानुवृत्तेराह–

---

न्यपदार्थप्राधान्येऽपि सर्वनामत्वमुपपादयति–*वचनेति* । *अत एव=शब्दपरविप्रतिषेधस्याभिमतत्वादेव । *साधारणमिति* । "संख्ययाऽव्यय"(पा०सू० २–२–२५)इति सूत्रभाष्ये 'द्वित्राः' 'त्रिचतुराः'इत्युदाहरणादिति भावः । मूले द्वन्द्वेऽपीत्यपिशब्दस्तत्पुरुषस्यापि समुच्चायक इत्याशयेनाह–*सहस्राणामिति । *इदम्=वाप्रियस्येति वचनम । प्रियगुड इत्यस्येत्यर्थः । *बहुव्रीहावेवेति* । तेन तत्पुरुषे न । सहप्रिय इत्यस्य बहुव्रीहित्वेऽपि तत्र नेदं वचनम्प्रवर्त्तते । यत्र पदार्थस्य विशेषणत्वेन प्रियपदस्य पूर्वनिपातप्रसङ्गस्तत्रास्य वचनस्य प्रवृत्तिस्वीकारात् । सहशब्देन समासे तूत्तरपदे सादेशविधानेन सहशब्दस्यैव पूर्वनिपातप्रसङ्ग इति तत्र वाप्रियस्येत्यस्याप्रवृत्तिरिति भावः ।*वृत्तौ स्पष्टमिति । भाष्यानुक्तत्वेन सिद्धान्ते व्यवस्थितविभाषात्वे मानाभाव इति भावः ।*क्रियाशब्दत्वादिति । एतेन तत्र विशेषणविशेष्यभावे कामचारः सूचितः । *चारुस्मितेत्यादीति । अत्रादिना चारुदती चारुनेत्रा इत्यनयोः सङ्ग्रहः । *ज्ञापितमिति । इदं वचनमिति शेषः । *वाग्रहणानुवृत्तेरिति । "निष्ठा"(पा.सू.२–२–३६)इतिसूत्रभाष्ये पठितं यद् "जाति"इतिवचनं तत्र वा प्रियस्येति पूर्वसूत्रपठितवार्त्तिकाद्वाग्रहणानुवृत्तेरित्यर्थः । वस्तुतस्तु भाष्ये जातिकालेत्यन्तोदात्तत्वविधायकवचनेऽकृतमितप्रतिपन्नाकृतिप्रतिषेधवचनस्यैतादृशविषये निष्ठान्तस्य परनिपाते ज्ञापकत्वमुक्त्वा अकृतेत्यादिप्रतिषेधविषये राजदन्तादित्वकल्पना निरस्ता । तेन "जातिकालसुखादिभ्यः परा निष्ठा" इतिवचनस्य ज्ञापकसिद्धस्यासार्वत्रिकत्वसूचनेन सर्वेष्टसिद्धिर्भवतीति बोध्यम् । यदि तु प्रतिषेधविषय एव निष्ठान्तस्यापरनिपातः

प्रायिकमिति । *कचिन्नेति । तेषामाहिताग्न्यादित्वमिति भावः ॥

इति बहुव्रीहिः ॥

चार्थे (पा० सू० २ । २ । २९) ॥ "अनेकमन्य" (पा० सू० २-२-२४) इत्यतोऽनेकमित्यनुवर्त्तते । *तत्फलं 'स्रग्वाग्दृषदं' 'होतृपोतृनेष्टोद्गातारः' इत्यादौ यथायथं समासान्तानङोर्मध्ये प्रवृत्तिर्न, अन्ते एव च प्रवृत्तिः ।

अत्र वदन्ति-द्वन्द्वः प्रथमान्तानामेव न परिनिष्ठितविभक्त्यन्तानाम्। चैत्रेण मैत्रेण च कृतमिति वाक्येऽवयवकर्त्तृत्वस्यैव प्रतीतेः चैत्रमैत्राभ्यां कृतमिति समासे समुदायकर्त्तृत्वस्यैव प्रतीतेः *तस्य वाक्यस्य समाससमानार्थत्वाभावेन *तस्य *तद्वाक्यत्वाभावात्। *अत एव "यदग्नये च प्रजापतये च" इत्यादौ व्यस्ते प्रत्येकं देवतात्वप्रतीतिः, "अग्नीषोमाभ्याम्" इत्यादौ समुदाये देवतात्वप्रतीतिरिति व्यवस्था सिद्ध्यति । तस्यापि तद्वाक्यत्वे तु समास इव तत्रापि समुदाये देवतात्वप्रतीतिरेव स्यात् । अत एव "न ङिसंबुद्ध्योः" इति सूत्रे भाष्ये-"न ङिसंबुद्ध्योरनुत्तरपदे" इति वार्त्तिके संबुद्धिग्रहणं न कार्यम्, राजवृन्दारकेत्यादौ संबुद्ध्यन्तानां न समासः । इह तावत्समाससमानार्थकेन वाक्येन भवितव्यम्, समासेन च । यश्चेहार्थो वाक्येन गम्यते नासौ जातु चित्समासेन गम्यते; अवयवसंबोधनं वाक्येन गम्यते समुदायसंबोधनं समासेन" इत्युक्तम्। (१)संबोधनविभक्त्यन्तस्याभिमुखीभावफ-

---

स्यात्तदा पीतशब्दस्य तत्र पाठाभावात्पीतोदकमितिप्रयोगासिद्धिः स्यादित्येतदुदाहरणोपन्यासेन मूलकृताऽप्ययमर्थो ध्वनितः । *कचिन्नेति । वाग्रहणानुवृत्त्याऽऽहिताग्न्यादित्वकल्पनया वा इदमपि सिद्धम् ।

॥ इति बहुव्रीहिविवरणम् ॥

*तत्फलमिति* । अनेकग्रहणानुवृत्तेः फलमित्यर्थः । *तस्य वाक्यस्येति । चैत्रेण मैत्रेण कृतमितिवाक्यस्येत्यर्थः । *तस्य=चैत्रेणमैत्रेणत्यस्य । *तद्वाक्यत्वाभावात्=चैत्रमैत्राभ्यामितिसमुदायसाधुत्वप्रयोजकवाक्यत्वाभावात् । *अत एव=वृत्तिविग्रहवाक्ययोः समानार्थकत्वनियमादेव ।

---

(१) ननु 'चैत्रमैत्राभ्याम्' इत्यादौ समुदायकर्तृत्वे समाससाधुत्वं भवत्येव न तु सर्वथा समासवारणम्। एवं च संबुद्धिग्रहणखण्डनं न संभवतीत्यत आह--*संबोधनेति । एवं च समुदायसंबोधने समासस्य साधुत्वेऽप्यवयवसंबोधनाभावेन तद्विभक्त्यभावात्तदसंभवेन सूत्रे संबुद्धिग्रहणवैयर्थ्यमिति भावः ।

लकत्वेन प्रत्येकमेवाभिमुखीभावप्रतीत्या क्रियान्वयेन परस्परमसामर्थ्यमिति तद्भावः । यदा समानाधिकरणस्थलेऽपि समासो न, तदा व्यधिकरणानां द्वन्द्वः सुतरां नेति परिनिष्ठितविभक्त्या समासेऽपि राजपुरोहितावित्ति *न तदुदाहरणम् । एवञ्च व्यधिकरणतृतीयाद्यन्तानामपि क्रियादावेवान्वयेन क्रियाजनकत्वरूपकारकत्वस्य प्रत्येकमेव बोधेन वाक्यसमासयोर्न समानार्थत्वम् । *एतेन 'कटं भीष्मम्'इत्यादौ प्रत्येकं कर्मतयोभयोः क्रियान्वयेऽपि पार्ष्णिकपरस्परान्वयेन सामर्थ्यमादाय समास इति मीमांसकनव्योक्तमपास्तम् । *राजवृन्दारकेत्यादावपि पार्ष्णिकान्वयेन सामर्थ्यमादाय समासापत्तौ भाष्यासङ्गतेः । *'तिङ्समानाधिकरणे प्रथमा' 'अभिहिते प्रथमा' इति न्यासेऽपि समुदायद्वाराऽवयवानामपि तिङ्सामानाधिकरण्येन समुदायकर्तृत्वोक्तावयवकर्तृत्वस्याप्यभिहितत्वेन (१)समुदायप्राधान्येऽप्यवयवेभ्यः प्रथमा भवत्येव(२) । *अत एव तत्र चैत्रो मैत्रश्च गच्छतः, स्तः, पचतः, इत्यादि नित्यद्विवचनाद्यन्ताख्यातप्रयोग एवेति दिक् ।

परस्परनिरपेक्षस्येति । तत्त्वं चैकस्य क्रियान्वयोत्तरमपरस्याऽऽवृत्त्या *तदन्वयात् । अनेकस्येति ॥ *तेनैकस्य *सापेक्षत्वेऽपि न दोष इति भावः । समुच्चये चशब्देन समभिव्याहृतपदार्थे इतरसापेक्षत्वं

---

*न तदुदाहरणमिति* । न द्वन्द्वोदाहरणमित्यर्थः । प्रत्येकान्वयविवक्षायामिदम् । समुदायस्यान्यत्रान्वयविवक्षायान्तु भवत्येव । 'धवखदिरौ छिन्धि, इति यथा । *एतेन=उक्तप्रकारेण । तमेवाह-*राजवृन्दारकेति । वार्त्तिकविरोधशङ्कां वारयति-*तिङिति* । *अत एव=समुदायस्य कर्तृत्वादेव ।

*आवृत्त्या क्रियावाचकपदावृत्त्या । *तदन्वयादिति । तदर्थेऽन्वयादित्यर्थः । *तेन=अनेकस्येत्युपादानेन । *सापेक्षत्वेऽपीति* । ईश्वरङ्गुरुञ्च भजस्वेतिवाक्ये चशब्दस्य द्योतकतया ईश्वरसमुच्चितगुरुमितिबोधेन गुरुपदार्थस्येश्वरसापेक्षत्वेऽपीश्वरपदार्थस्य गुरुपदार्थानपेक्षत्वेनासामर्थ्यान्न तत्र समासः । समभिव्याहारश्चात्र स्वोच्चारणकालाव्य-

---

(१) चैत्रो मैत्रश्चेत्यादौ चार्थसमुदायप्राधान्येऽपि ।

(२) ननु समुच्चये चैत्रो मैत्रश्च गच्छतः इत्यादावाख्यातोपात्तसंख्यान्वयाय चार्थसमूहस्य विशेष्यत्वाय चस्य तद्वाचकत्वं वक्तव्यम् । एवं च चैत्रस्य मैत्रस्य च समूह इत्यत्रेव षष्ठ्यापत्तिरिति चेन्न । तदात्मकत्वेन समूहप्रतीत्या भेदनिबन्धनषष्ठ्यप्राप्तेः ।

बुद्ध्यते, तदसमभिव्याहृते तु न । *अत एवात्रैकचशब्दप्रयोग एव । एकस्मिन्निति । *एकधर्मावच्छिन्ने इत्यर्थः । अन्वय इति । *यत्रैव-मन्वयस्तत्र समुच्चयश्चशब्दार्थ इत्यन्वयः, न त्वन्वय एव समुच्चय इति भ्रमितव्यम् । अन्वयो विशेष्यतया विशेषणतया वा । तत्रान्त्यो*व-क्ष्यमाणोदाहरणे* । *आद्यस्तु देवदत्तः पचति हसति चेत्यादौ *क्रिया-समुच्चये । *आनुषङ्गिकत्वमनुद्देश्यत्वम् । *अन्यस्य प्राधान्यञ्च तत्संबन्धि-क्रियाया अवश्यकर्त्तव्यत्वरूपम् । *अन्वाचये आनुषङ्गिकत्वं व्याप्यत्वं चसमभिव्याहृतक्रियागतश्चार्थः ।

---

वहितपूर्वकालोच्चरितत्वम् । *अत एव=एतादृशे विषये एकस्यैवेतरसा-पेक्षत्वादेव । ईश्वरकर्मकभजनक्रियाया गुरुकर्मकभजनक्रियाभिन्नत्वादेकस्मि-न्नित्यसङ्गतमत आह-*एकधर्मावच्छिन्न इति* । अवच्छेदकधर्मस्या-त्रैकत्वं विवक्षितमिति भावः । अन्वयपदस्य सम्बन्धप्रतिपादकतयाऽन्वयः समुच्चय इत्यसङ्गतमत आह-*यत्रैवमिति* । *अन्त्यः=विशेषणतया । *व-क्ष्यमाणोदाहरणे=ईश्वरङ्गुरुञ्चेत्यादौ । अत्र प्रातिपदिकार्थसमुच्चयसत्त्वादेते-षां च यद्धर्मावच्छिन्नक्रियानिष्ठविशेष्यतानिरूपितविशेषणतापन्नविभक्त्यर्थ-विशेषणत्वमपरस्यापि तादृशधर्मावच्छिन्न एव परम्परयाऽन्वयादिति भावः । *आद्यः=विशेष्यतया । *क्रियासमुच्चय इति । अत्र चशब्देन क्रियागतं स-मुच्चितत्वन्द्योत्यते । क्रियायाश्च विशेष्यतयाभावस्यानुभवसिद्धत्वादिति भावः । साधारणानुषङ्गिकपदार्थतावच्छेदकमाह—*आनुषङ्गिकत्वमिति* । एकस्य प्राधान्ये तदितरस्यानुषङ्गिकत्वव्यवहार इत्यानुषङ्गिकपदप्रतिसम्बन्धि-तया प्राधान्यपदव्यवहर्त्तव्यतावच्छेदकमाह-*अन्यस्येति* । अन्वाचयस्थले चशब्दे तद्द्योत्यमर्थद्वयमाह-*अन्वाचय इति* । एवं च भिक्षामट गाञ्चा-नयेत्येवंविधेऽन्वाचयाभिप्रायेण वाक्ये उच्चारिते सति चशब्दसमभिव्या-हृतपदप्रतिपाद्या या क्रिया तस्याश्चशब्दद्योत्यार्थस्य विशेषणतया भानं जा-यते । अनुद्देश्यम्भिक्षाटनव्याप्यं गवानयनमिति बोधः । अत्र परस्परमनन्व-यात्सामर्थ्याभावः स्पष्ट एव ।

*परस्परापेक्षाणामिति* । इतरेतरयोगनिरूपणावसरे "प्लक्षश्च न्यग्रोधश्चेत्युक्ते गम्यते एतत्प्लक्षोऽपि न्यग्रोधसहायो, न्यग्रोधोऽपि प्लक्ष-सहायः" इति भाष्यकृतोक्तम् । अत एव परस्परापेक्षासूचनायेदृशे विषयेऽनेक-चकारप्रयोगः । यद्यपि मिलितानामन्वय इत्येवम्मूलकृताऽभिहितं तेन साहि-त्यरूपम्मेलनं वृत्तिपदार्थे विशेषणमिति प्रतीयते; तथापि द्वन्द्वे साहित्यस्य वि-शेष्यतया भानन्न्याय्यम् । अत एव "गोस्त्रियोरुपसर्जनस्य" (पा० सू० १-२-४८) इतिसूत्रे कुक्कुटमयूर्यावित्यत्र कुक्कुटमयूरीशब्दार्थस्य साहित्यम्प्रति विशेषण-

मिलितानामिति । *परस्परापेक्षाणाम्*उद्भूतावयवभेद*स-मूहरूपाणामित्यर्थः अन्वय इति । एकधर्मावच्छिन्नेनान्वय इ-त्यर्थः । *तेन नीधातोः संयोगजनकव्यापारानुकूलव्यापारवाचकतया द्विकर्मत्वेऽपि 'अजां ग्रामं नयति' इत्यादौ न चकारप्रयोगो नापि समासः, एकधर्मावच्छिन्नेऽन्वयाभावात् । *अत एवात्रानेकचकार-प्रयोगः । *यत्रैवमन्वयस्तत्रेतरेतरयोगस्तादृशसमूहश्चार्थ इत्यन्वयः । स-मूहे उद्भूतावयवभेदत्वञ्चावयवगतसंख्यारोपवत्त्वं, *प्रत्यवयवं समूहरूप-त्वारोपो वा । समूह इति । अनुद्भूतावयवभेदः समूह इत्यर्थः । तत्रेतरे-तरयोगे उद्भूतावयवभेदसमूहस्य प्रतीत्या प्रत्येकवृत्तिधर्मरूपमेव प्रवृत्ति-निमित्तम् । समाहारे त्वतिरिक्तत्वेनैव समूहस्य भानात्समूहत्वं प्रवृत्तिनि-मित्तमिति विशेषः* ।

असामर्थ्यादिति । अनेकसुबन्तानां *चार्थे वृत्त्यभावे-नैकार्थीभावरूपसामर्थ्याभावात् । *किं च *तत्र चार्थश्च समभिव्याहृते

---

तयोपसर्जनत्वादुपसर्जनत्वमाशङ्क्य द्वन्द्वे नेति वचनमारब्धम् । मिलितानामि-त्यस्य परस्परापेक्षाणामित्येवार्थः । परस्परापेक्षपदार्थं निर्वक्ति-*उद्भूतावयव-भेदेति* । *समूहरूपाणामिति* । समूहेन ये रूप्यन्ते तेषामित्यर्थः । उद्भूतः= प्रकटः अवयवानाम्भेदो यस्य तादृशसमूहनिष्ठविशेष्यतानिरूपकतावच्छेद-कधर्मावच्छिन्नानामिति यावत् । एकधर्मावच्छिन्नेऽन्वय इत्यस्य फलमाह- *तेन नीधातोरिति* । *अत एव=परस्परापेक्षासत्त्वादेव । मिलितानाम-न्वय इत्येतद्यत्र तत्रेत्यध्याहारेण व्याचष्टे-*यत्रैवमिति* । *प्रत्यवयवं समूहे-ति* । एकैकपदार्थे समूहरूपत्वारोपेऽपि 'धवखदिरौ' इत्यत्र न बहुवचनापत्तिः । अतिरिक्तस्य पदार्थस्य तत्र भानाभावादिति प्रत्येकवृत्तिधर्मद्वयम्प्रवृत्तिनिमि-त्तमित्युक्तम् । अत एवैतादृशविषये द्वन्द्वोत्तरोत्पन्नद्विवचनबहुवचनार्थसंख्या-याः शुद्धपर्याप्तिसम्बन्धेन प्रकृत्यर्थेऽन्वयः । यत्रानेकधर्मस्य प्रवृत्तिनिमित्त-त्वन्तत्रैवोद्देश्यतावच्छेदकव्याप्तिविशिष्टपर्याप्तेः सम्बन्धत्वस्वीकारात् । *इति विशेष इति* । अत्र ह्येकवचनमेवोत्पद्यते, तदर्थस्य शुद्धपर्याप्तिसम्बन्धेन प्रकृत्यर्थेऽन्वयः ।

*चार्थे वृत्त्यभावेनेति* । समुच्चयस्थले चसमभिव्याहृ-तस्यैकस्य चार्थे वृत्तावप्यपरस्य चार्थे वृत्त्यभावेनानेकस्य चार्थे वृत्त्यभावोऽन्वाचये तूभयोरपि तत्त्वाभाव इत्यर्थः । एतच्चोपपादितमाक् । प्रकारान्तरेण समुच्चयस्थले समासाभावं दर्शयति-*किंचेति* । *तत्र=

विशेषणम् । समासस्त्वन्यपदार्थप्राधान्ये इव चार्थप्राधान्ये एव। *स्पष्टञ्चेदं सर्वमत्र सूत्रे भाष्ये । तत्र हि-"चार्थस्या*सत्त्वभूतत्वात्तदर्थसमासस्याप्य-लिङ्गासंख्यता प्राप्नोति"इत्याशङ्क्य स्वभावेन(१) परिहृतम् । गुणवचनवद्द् *यद्द्रव्याश्रितः समासार्थस्तद्द्रव्यलिङ्गसंख्याग्राहक इति च समाहितम् । *अतो नेदं भाष्यं समाहारविषयम् । तस्य समूहद्रव्यलिङ्गादिग्राहित्वाभावात् ।

*नन्वेवं "परवत्" (पा०सू०२-४-२६)इति सूत्रस्थस्य "अवयवा-वेवापेक्षितपरस्परौ द्वन्द्वार्थो न तु *तद्व्यतिरिक्तः समुदायोऽस्ति"इति(२) कैयटग्रन्थस्यासङ्गतिरिति चेत् । न, तस्यात्यन्तव्यतिरिक्तो नेत्यर्थात् । अपे-क्षितपरस्परावित्यनेन च समूहरूपता उद्भूतावयवभेदता च दर्शिता । *अत एव यद्वाऽवयवव्यतिरिक्तः समुदायोऽर्थः, स चावयवलिङ्गेन लि-ङ्गवान्"इति तदुक्त*पक्षान्तराद् बोधाविशेष इत्यन्यत्र निरूपितम् । 'अहर-हर्नयमानो गामश्वं पुरुषः पशुः' इत्यादौ न समासः । अहरहःपदेन विनिगम-नाविरहात् । परस्परसाहित्यावगतावपि तस्य चकारावाच्यत्वात् । यत्र विग्रहे चैतदेव द्योत्यं साहित्यं तत्रैव समासो नान्यत्रेति स्पष्टं भाष्ये । चार्थबला-देव सति तात्पर्ये समभिव्याहृतक्रियायामेककालिकत्वादि गम्यते इति दिक् । 'प्राच्यभरतेषु' इति निर्देशात्सामान्यशब्दस्योपात्तविशेषातिरिक्तपरत्वे सह-विवक्षासंभवेन द्वन्द्वो भवत्येव । तेन गोबलीवर्दमित्यादिसिद्धिः ॥

समुच्चयस्थले । *स्पष्टञ्चेदमिति* । चार्थस्य प्राधान्ये समासप्रवृत्तिरित्ये-तत्स्पष्टमित्यर्थः । *असत्त्वभूतत्वादिति* । "चादयोऽसत्त्वे" (पा० सू०-१ ४-५७) इत्युक्तेः । *यद्द्रव्याश्रितः=यद्द्रव्याभिन्न इत्यर्थः । एतेनैवंविधलेखेन समासार्थस्य साहित्यस्य तत्र विशेषणत्वमितिकल्पना निरस्ता । *अतः= लिङ्गादोपादानेन । *नन्वेवमिति* । इतरेतरयोगेऽपि समूहस्य प्राधान्य-स्वीकारे इत्यर्थः । *तद्व्यतिरिक्तः= अवयवातिरिक्तः । *अत एव=समूहस्य विशेष्यत्वादेव । *पक्षान्तरादिति* । न च प्रथमद्वितीयपक्षयोरैक्येन पक्षा-न्तरादित्यनुपपन्नमिति वाच्यम् । यद्वेति द्वितीयपक्षे उद्भूतावयवभेदस्य प्रथ-मोक्तः प्रकारः, प्रथमपक्षे तूद्भूतावयवभेदस्य द्वितीयरीत्योक्तः प्रकारो दर्शि-त इत्यभिप्रायेणान्तरपदोपादानात् । गम्यमानसाहित्यमादाय समासप-

(१) "प्राक् समासात् चार्थस्य लिङ्गसंख्याभ्यां योगो नास्ति, समासे च भवति । स्वाभाविकमेतत् । अथवाऽऽश्रयतो लिङ्गवचनानि भविष्यन्ति" इति भाष्येणेत्यर्थः ।

(२)"किमर्थमिदमुच्यते द्वन्द्वोऽयमुभयपदार्थप्रधानः । तत्रोभयलिङ्गत्वस्या-

राजदन्तादिषु(पा०सू० २।२।३१)॥ *इदं सर्वसमासविषयम्। षष्ठीसमासकर्मधारयद्वन्द्वानां तत्र पाठात् । धर्मादिष्विति । *द्वन्द्व एवेदम् । राजदन्ताद्यन्तर्गणसूत्रमेतत् । जम्पतीति । अभ्यर्हितत्वात्पत्यु पूर्वनिपातः प्राप्तः । निपात्यत इति । राजदन्तादिगणे पाठेनेति भावः । अयं राजदन्तादिरित्यर्थः ॥

अल्पाच्तरम् ॥(पा०सू० २।२।३४)। *यथाकथंचिदतिशयमारोप्य "गरीयांसम्"इत्यादिभाष्यप्रयोगे ईयसुनिव इह तरप्। *अत एव "अतन्त्रं तरनिर्देशः" इति भाष्यं सङ्गच्छते । "उच्चैस्तराम्"(पा०सू०१-२-३५)इति सूत्रे च भाष्ये स्पष्टमिदम् । तत्प्रयोगश्चादृष्टार्थः। *अत एव "स्वरितात्संहितायामनुदात्तानाम्" ( पा० सू० १-२-३९ ) इति सूत्रेऽनुदात्तानामित्यत्र शब्दसंस्कारार्थमेव बहुत्वं विवक्ष्यते न तु तत्कार्यान्वयीति कैयटः । *मृदङ्गशङ्खतूणवाः इत्यादौ *द्वन्द्वोत्तरपदो द्वन्द्व इति बोद्धयम् । "तन्त्रं तरनिर्देशः" इति *भाष्योक्तपक्षान्तरे मुख्योऽतिशयोऽर्थ इत्यर्थः, तदाऽपि

---

त्विन्निरस्यति-*अहरहरिति* । उक्तोऽर्थः समूहरूपः । *इदम्=राजदन्तादिष्विति सूत्रम् । *द्वन्द्व एवेदमिति* । "अल्पाच्तरम्" (पा० सू० २-२-३४) इतिसूत्रभाष्ये पाठादिति शेषः ।

अल्पाच्तरमित्यत्र तरपः सत्तामुपपादयति-*यथाकथञ्चिदिति* । *अत एव=तरप्सूचितविशेषाभावादेव *अत एव=अदृष्टार्थस्यापि शब्दविशेष्यस्य सत्त्वादेव । अनुदात्तानामितिबहुवचनार्थस्य विवक्षितत्वे यत्र बहूनामनुदात्तानां सत्ताऽस्ति तत्रैवैतत्सूत्रप्रवृत्तिः स्याद्द्वयोर्यत्र स्थितिस्तत्र न स्यादितिहेतोर्यथा तत्र बहुवचनमुपात्तमप्यविवक्षितन्तथेहापि तरप् नविवक्षित इति भावः। ननु यदि तरन्निर्देशोऽविवक्षितः स्यात्तदा द्वयोर्मध्ये एकस्य प्रकर्षे तरप उत्पत्तेर्बहुषु सन्निहितेषु द्विवचनोपपदे विधीयमानतरबन्तशब्दघटितस्यैतस्य सूत्रस्याप्रवृत्तेर्मृदङ्गशङ्खतूणवा इत्यादि सिध्येन्न त्वविवक्षितत्वपक्षेऽत आह-*मृदङ्गेत्यादि* । इत्यादावित्यादिना पृथङ् नदन्ति संसदि, प्रासादे धनपतिरामकेशवानामित्यस्य सङ्ग्रहः । *द्वन्द्वोत्तरपदो द्वन्द्व इति* शङ्खश्च तूणवश्च=शङ्खतूणवौ । शङ्खतूणवौ च मृदङ्गश्चेत्येवं सहविवक्षया द्वन्द्वः कार्य इत्यर्थः । *भाष्योक्तपक्षान्तर इति* । तत्र हि-"किमयं तन्त्रं तरनिर्देशः, आहो स्विदतन्त्रम् ? । किं चातः ! । यदि-तन्त्रं द्वयोर्नियमः, बहुष्वनियमः। तत्र को दोषः ? । शङ्खदुन्दुभिवीणानामिति न सिध्यति । दुन्दुभिशब्दस्यापि पूर्वनिपातः प्राप्नोति । अथातन्त्रम् 'मृदङ्गशङ्खतूणवाः पृथङ् नदन्ति संसदि, 'प्रासादे धनपतिरामकेशवानाम्' इत्येतन्न सिध्यति ( एवम्पक्षद्वयेऽपि दोषमभि-

प्रकृतसूत्रेऽतिशय एव विवक्षितो न तु द्वयोरिसंज्ञः । तेन "शङ्खदुन्दुभिवीणानाम्" इति बहुष्वपि सिद्ध्यति । "यदेतदल्पाच्तरमिति, तदल्पाजिति वक्ष्यामि" इति भाष्यस्य यतः कुतश्चित्सर्वस्याप्यल्पाच्त्वात्सामर्थ्यादतिशयार्थे भविष्यतीत्यर्थः । अत्र पक्षेऽल्पाच्त्वं यत्किंचिदपेक्षया, अतिशयस्तूपात्तापेक्षया । अतन्त्रपक्षे तु अतिशयः सर्वथाऽविवक्षित एव, अल्पाच्त्वञ्चोपात्तापेक्षयैवेति स्पष्टं भाष्ये ॥ *तन्त्रपक्षेऽपि द्वयोरिसंज्ञाविवक्षणादतन्त्रपक्षस्यैव ज्यायस्त्वमत्र । *अस्यात्यन्तस्वार्थिकतरप्ज्ञापकत्वमिति तु न युक्तम् । तन्त्रातन्त्रविचारस्य भाष्येऽसङ्गत्यापत्तेः । न हि *सर्वथाऽर्थाभावे एवं विचारः संभवति । मम तु आरोपितत्वेऽतन्त्रत्वं, मुख्यत्वे तन्त्रत्वमिति तत्सङ्गतिः । कुत्वचुत्वयोरभावश्च निपातनात् । *अत्रापि बहुष्वनियमः ।

आनुपूर्व्येणेति । ऋतूनामानुपूर्व्यं प्रादुर्भावकृतम्, नक्षत्राणान्तूदयकृतं बोद्धयम्* । अनित्यमिदं प्रकरणम् । *"लक्षणहेत्वोः"(पा० सू० ३-२-१२६) इति निर्देशात् । द्व्यन्तादिति । *अजाद्यदन्ताच्चाल्पाच्तरं लघ्वक्षरम् ऋतुनक्षत्राणामिति अभ्यर्हितञ्चेति भ्रातुर्ज्यायस इति च विप्रतिषेधेन । सर्वतोऽप्यभ्यर्हितं पूर्वम् । "वासुदेवार्जुनाभ्याम्" (पा० सू० ४-३-९८) इति निर्देशात् ॥

---

धाय ) यथेच्छसि तथाऽस्तु"इत्युक्तम् । तदुत्तरन्तरस्मिन्निर्देशस्य तन्त्रत्वपक्षे पूर्वोक्तदोषानुवादं कृत्वा यदेतदल्पाच्तरमिति तदल्पाजिति वक्ष्यामि । पुनरतन्त्रत्वं स्वीकृत्य मृदङ्गेत्यादिदोषमुपन्यस्य द्वन्द्वघटितद्वन्द्वेन समाहितम् । तेन प्रकृते तस्मिन्निर्देशस्य सत्त्वेऽपि यथा फलैक्यं भवति तथैव यत्नः कार्य इति सूचितमिति भावः । यद्यप्यत्रोपपादितरीत्या फलाविशेषः पक्षयोर्भवति तथाप्यनयोः कः पक्षो युक्त इत्याकाङ्क्षायामाह-*तन्त्रपक्षेऽपीति* । दण्डयुक्तान्निरस्यति-*अस्येति* । * सर्वथाऽर्थाभाव इति* । स्वार्थिकत्वेऽर्थाभाव एव स्यादिति भावः । *अत्रापि बहुष्वनियम इति* । यथा धर्मादिष्वनियमस्तथाऽल्पाच्तरामित्यत्रापीत्यर्थः ।

*इदम्प्रकरणम्=पूर्वनिपातप्रकरणम् । अन्यत्रापि विप्रतिषेधं दर्शयति-*अजाद्यदन्ताच्चेति ।

द्वन्द्वश्च (पा० सू० ३।४।२) ॥ *अत्र तूर्याङ्गशब्देन*वादका एवेति "अल्पाच्तरम्" ( पा० सू० २-२-३४ ) इत्यत्र*भाष्ये ध्वनितम् । अङ्गशब्द आद्यन्तयोरवयवपरः*मध्ये तूपकारकपरः । *अङ्गशब्दस्य प्रत्येकमन्वयः । तत्रैकप्राण्याद्यङ्गकद्वन्द्वासंभवेनान्याग्रहणस्यावश्यकत्वे प्रत्यासत्त्या तत्तद्वाक्योपस्थितप्राण्यङ्गाद्येव द्वितीयं गृह्यते । *तेन "मार्दङ्गिकपाणविकम्" "रथिकाश्वारोहौ"- इति सिद्धम् । *एवमेव "अध्वर्युक्रतुः" (पा० सू० २-४-४) इत्यादौ बोद्धयम् । *एकवचनशब्दश्च (१)योगेनैकत्वविशिष्टबोधकपरः, तदाह- एकवदिति ॥ *एकार्थबोधकपदवदित्यर्थः । पाणिपादमिति । प्राण्यङ्गत्वेन प्राणित्वात् "जातिरप्राणिनाम्" ( पा० सू० २-४-६ ) इत्यनेन न सिद्धिः । नियमार्थमिति । एतच्च "विभाषा वृक्ष" ( पा० सू० २-४-१२ ) इति सूत्रे*भाष्यकैयटयोः स्पष्टम् । *न चैतानि इतरेतरयोग एकवद्भावविधानार्थानि कुतो न भवन्ति, 'पाणिपादः' इति च तत्फलमिति वाच्यम् । "द्विगुरेकवचनम्"(पा०सू० २-४-१)इति साहचर्येण*व्याख्या-

---

*अत्रेति* । "द्वन्द्वश्च प्राणितूर्य (पा० सू० २-४-२) इति सूत्रे इत्यर्थः । तूर्यशब्दो नृत्यपरस्तदङ्गत्वञ्च वाद्यवादकयोर्भवतीत्युभयोरपि ग्रहणशङ्कावारणायाह-*वादका एवेति* । भाष्ये ध्वनितमिति* । "मृदङ्गशङ्खतूणवाः" इति बहुवचनान्तपदोच्चारणाद् ध्वनितमित्यर्थः । मूलेऽपि मार्दङ्गिकपाणविकमित्युपात्तन्तेन वादकस्यात्र ग्रहणमित्येव लभ्यते । वादकस्य च नाङ्गत्वंस्प्राण्यवयवत्वेनैव सम्भवतीत्याशयेनाह *मध्ये तूपकारकेति* । सेनाशब्दान्तद्वन्द्वं कृत्वाऽङ्गशब्देन षष्ठीतत्पुरुषोऽत्र कार्यस्तदभिप्रायेणाह-*अङ्गशब्दस्येति* । तेन=प्रत्यासत्तिस्वीकारेण । *एवमेव=यथा"द्वन्द्वश्च" (पा० सू० २-४-२) इतिसूत्रे प्रत्यासत्याश्रयणेन दोषो वार्यते, एवमेवाध्वर्युक्रतुवाचिनोऽध्वर्युक्रतुवाचिना सहैव यो द्वन्द्वस्तस्यैव ग्रहणमित्थमेव । तेन "अर्कवज्रौ" इत्यत्र न । एकवचनशब्दादेकवदित्यस्य यथा लाभस्तथाऽऽह-*एकवचनेति* । *एकार्थबोधकपदवदिति* । एकत्वविशिष्टबोधकं यदेकपदं तद्यथा नित्यैकवचनान्तं, तथा एषां द्वन्द्वोऽपि भवतीत्यर्थः । *भाष्यकैयटयोरिति* । तत्र हि "पूर्वत्र नित्यार्थम्"इति भाष्यकृतोक्तम् । तत्र च कैयटेनोक्तम् "पूर्वत्रेति प्राण्यङ्गादीनां समाहार एवेत्येवमर्थम्" इति । अयञ्च नियमः समाहारद्वन्द्वपक्ष एव भाष्यकृता तत्रोपपादित इति मूलकृताऽपि तथैवोपपादितम् । द्वन्द्वश्चेत्यादीनां विध्यर्थत्ववादिमतन्निरसितुं शङ्कते-*न चेति* । *व्याख्यानेन = "विभाषा वृक्ष"(पा०सू० २-४-१२)

---

( १ ) एकं वक्तीति एकवचनमिति योगनेत्यर्थः ।

नेन चानुवादत्वस्यैवौचित्येनात्रत्यद्वन्द्वपदस्य समाहारद्वन्द्वपरत्वात् । *तत्र *तदनुवादेनैकत्वविधाने*फलाभावात् । प्राण्यङ्गाद्यनुवादेन एकवचनद्वन्द्वविधयो नियमार्थाः-एतेषां समाहार एवेति; तदाह-समाहार एवेति । *ध्वनितं चेदं "विशिष्टलिङ्ग"(पा० सू० २-४-७)इत्यादौ समाहारे द्वन्द्वः स्यादिति व्याख्यानेन । "द्विगुरेक"(पा० सू० २-४-१)इति सूत्रेऽनुवाद फलन्तु *तत्रैवोक्तम् । *विपरीतनियमाभावबीजं "तिष्यपुनर्वस्वोः" (पा० सू०१-२-६३) इति सूत्रे उक्तम् ।

अनुवादे यदा *प्रतिपत्त्रा प्रमाणान्तरावगतमप्यर्थं कार्यान्तरार्थं प्रयोक्त्रा प्रतिपाद्यते तदाऽनुवादस्तदाह—सिद्धस्येति । *प्रकृते चोदयप्रतिष्ठयोरनुवादः । *असिद्धज्ञापने तूद्गुः कठकालापा इत्यपि । चरणशब्दोऽत्र शाखाध्येतृपरः । स्थेणोरिति । लुङन्तस्थेणोः प्रयोगे सतीत्यर्थः ॥

अध्वर्युक्रतुरिति ॥ *षष्ठ्यर्थे इयं प्रथमा ।

अविप्रकृष्टेति च्छेदस्तदाह—प्रत्यासन्ना इति । *अध्ययनगता प्रत्यासत्तिरध्येये तद्द्वारा तदध्येतरि चारोप्यत इति भावः । *पदक्रमशब्दयोस्तु *जातित्वादेव सिद्धमिति तदध्येतृपुरुषवाचकेऽस्य प्रवृत्तिः ॥

---

इति सूत्रीयभाष्यकृत्कृतनियमप्रदर्शनमूलकव्याख्यानेनेत्यर्थः । *तत्र=समाहारद्वन्द्वे । *तदनुवादेन=समाहारद्वन्द्वानुवादेन । *फलाभावात्=समाहारद्वन्द्वस्य तिरोहितावयवभेदसमूहाभिधायकतया फलाभावात् । *ध्वनितञ्चेदमिति* । मूलकृतेति शेषः । *तत्रैवोक्तमिति* । एतद्वाच्यसमाहारस्य कदाऽप्युद्भूतावयवभेदविवक्षा नेति, तेन द्वन्द्वे उभयविवक्षा भवतीति । नन्वेषामेव समाहार इत्येव नियमः किन्न स्यादत आह-*विपरीतेति* ।

प्रतिपत्त्रेति । अस्य प्रतिपाद्यत इत्यत्रान्वयः । सिद्धस्येोपन्यासमुपपादयति-*प्रकृत इति* । यदा तु न सिद्धानुवादस्तदाह-*असिद्धेति* ।

*षष्ठ्यर्थ इति* । अत एव द्वन्द्वपदेनान्वयः ।

पदकक्रमकयोरध्ययनेन या प्रत्यासत्तिस्तामुपपादयति *अध्ययनगतेति* । पदान्यधीते=पदकः । क्रमादिभ्यो वुन् । एवंक्रमकेऽपि । ननु पदक्रमयोरपि प्रत्यासत्तिरध्ययनेनसम्भवति । पदाध्ययनानन्तरं क्रमाध्ययनादतस्तदेवतत्सूत्रोदाहरणत्वेन प्राथम्याद्वक्तुमुचितमित्याशयेनाह *पदक्रमशब्दयोरिति* । *जातित्वादिति* । शब्दत्वव्याप्यजातिविशिष्टवाचकत्वादित्यर्थः । अस्मिन् सूत्रे लाघवादध्ययनतः

जातिर ॥ षष्ठ्यर्थे प्रथमा, तदाह—जातिवाचिनामिति । *यद्यपि—क्षतप्ररोहणादिना वृक्षादीनामपि प्राणित्वं तथापीह लोकप्रसिद्धमनुष्यादय एव प्राणिशब्देन गृह्यन्ते इति "विभाषा वृक्ष" (पा० सू० २-४-१२) इति सूत्रस्थभाष्यस्वरसः* । जातिः किम् ?, नन्दकपाञ्चजन्यौ । हरेः खड्गो नन्दकः, शङ्खश्च पाञ्चजन्यः । एकव्यक्तिवृत्तित्वान्न जातिः । द्रव्येति अप्राणिनामिति *पर्युदासादेतल्लभ्यते । *जातिप्राधान्येति । *प्राधान्यञ्च तज्जात्याश्रयसकलव्यक्तिबोधनरूपम् । द्रव्यविशेषेत्यस्य नियतद्रव्यविशेषेत्यर्थः । इदञ्च "तस्यादित"(पा० सू० १-२-३२)इत्यत्र कैयटे । *यद्वा प्राधान्यं नाम विशेष्यत्वम् । तदा *द्रव्यं विशेषणं, वाद्याद्यन्वयः* परम्परया जातौ । तत्र

---

सन्निकृष्टाख्यायामिति वक्तव्येऽविप्रकृष्टाख्यायामित्युपादानम्परम्परया सन्निकर्षग्रहणार्थम् । अध्ययनत इत्यस्यानुपादाने पितापुत्रावित्यत्रातिप्रसङ्गः स्यात् । अस्ति चैतयोर्जन्यजनकभावद्वारकः सन्निकर्षः । अविप्रकृष्टेति किम्? । वैदिकयाज्ञिकौ ।

अप्राणिपदस्य प्राणसम्बन्धवद्भिन्नपरत्वे "विभाषा वृक्ष"( पा० सू० २-४-१२ ) इतिसूत्रस्थभाष्यविरोध इत्यतो विशेषपरत्वमित्येतद्व्युत्पादयति-*यद्यपीत्यादि । *भाष्यस्वरस इति । तत्र हि बहुप्रकृतिः फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानामिति वक्तव्यमितिवार्त्तिकोक्तनियमविषये शङ्कितम्—किम्पुनरनेन या प्राप्तिः सा नियम्यते, आहो स्विदविशेषेण ? । किञ्चातः? । यद्यनेन या प्राप्तिः सा नियम्यते, प्लक्षन्यग्रोधौ, "जातिरप्राणिनाम्" ( पा० सू० २-४-६ ) इति नित्यो द्वन्द्वैकवद्भावः प्राप्नोति । अथाविशेषेण, न दोषो भवति । यथा न दोषस्तथाऽस्तु" इत्युक्तम् । यदि प्राणिपदं प्राणसम्बन्धवन्मात्रपरं स्यात्तदा प्लक्षन्यग्रोधयोरपि प्राणसम्बन्धवत्त्वादप्राणित्वाभावेन "जातिरप्राणिनामिति नित्यो द्वन्द्वैकवद्भावः प्राप्नोति" इति भाष्यमसङ्गतं स्यादिति तद्भाष्याल्लोकप्रसिद्धानामिह ग्रहणमित्यर्थः । *पर्युदासादिति* । प्राणिनाम्मनुष्यादीनान्द्रव्यत्वान्नञियुक्तन्यायेन द्रव्यत्वव्याप्यजातिविशिष्टवाचकानामिह ग्रहणमिति भावः । *जातिप्राधान्येतीति* । जातिग्रहणोपादानादयं विषयविशेषो लभ्यते । अन्यथाऽप्राणिनामिति पर्युदासादेव जात्युपसर्जनद्रव्यवाचिनां ग्रहणोपपत्तौ तद्व्यर्थं स्यादिति भावः । धानाशष्कुलिशब्दस्यापि जातिविशिष्टद्रव्यवाचित्वाज्जातेः प्राधान्याभावेन सूत्रोदाहरणासम्भव इति शङ्कापरिहाराय प्राधान्यपदार्थन्निर्वक्ति-*प्राधान्यञ्चेति* । पक्षान्तरमाह-*यद्वेति । *द्रव्यंविशेषणमिति* । धानात्वशष्कुली-

तात्पर्यग्राहकमेकवचनम् । द्रव्यप्राधान्ये त्वितरेतरयोगोऽपीति बोध्यम् । इति *क्षीरोदके सम्पृक्ते "अन्तादिवच्च"(पा० सू० ६-१-८५)इति सूत्रभाष्यप्रयोगोऽत्र मानम् । बदरामलकानीति । फलत्वव्याप्यजाति वचनावेतौ* ॥

विशिष्टलिङ्गो(पा० सू० २-४-७) ॥ अग्रामा इति *पर्युदासः । ग्रामभिन्न सर्वावयवग्रहणमत्र । इहग्रामपदेन ग्रामे नाध्येयम् "उदीच्यग्रामाच्च-(पा० सू०४-२-१०९)इत्यादाविव नगरं न गृह्यते*व्याख्यानात् । *तेन *मथुरापाटलिपुत्रमित्येव । अत्र नदीदेशविषये *द्वे वाक्ये । तत्र "द्वन्द्वश्च" (पा०सू० २-४-२)इति सूत्रोक्त*रीत्या नद्यादिसर्वावयवग्रहणम् । अतो 'गङ्गापाटलिपुत्रे'इत्यादौ न, तदाह-ग्रामवर्जेति । नदीग्रहणेन नदस्यापि ग्रहणम् । *अत एव तत्र भिन्नलिङ्गत्वसम्भवः ।

---

त्वजातेर्विशेष्यत्वे धानाशष्कुलि भक्षयतीत्यत्र जातौ भक्षणकर्मत्वान्वयानुपपत्तिरत आह-*वाह्याद्यन्वय इति* । जातिप्राधान्य इत्यत्र साधकान्तरमाह-*क्षीरोदक इत्यादि । *जातिवचनावेताविति* । जातिविशिष्टद्रव्यवचनावेतावित्यर्थः ।

*पर्युदास इति* । एतेन नञ्प्रश्लेषाभावशङ्काव्युदासः । *व्याख्यानादिति* । "अनगराणामितिवक्तव्यम्" इति वार्त्तिकमूलाद्व्याख्यानादित्यर्थः । *तेन=पर्युदासप्रतियोगित्वेन नगरस्याग्रहणेन । तत्फलमाह-*मथुरापाटलिपुत्रमिति* । अनयोर्नगरवाचकत्वेऽपि सूत्रप्रवृत्तेत इति भावः । *द्वे वाक्य इति* । नदीवाचिनान्देशवाचिनाश्चेत्यर्थः । *उक्तरीत्येति* । प्रत्यासत्त्याश्रयणरूपयुक्त्या । अग्रामा इति बहुवचनोपादानं ग्रामविशेषाणां ग्रहणाभिप्रायेण । अत एव देशपदेन मनुष्यनिवासयोग्यानां ग्रहणं, न तु पर्वतानाम् । तेन "कैलासगन्धमादने" इत्यत्र न । देशपदेनैतादृशस्य ग्रहणादेव नदीग्रहणञ्चरितार्थम् । अन्यथा तासामपि मत्स्यादिनिवासयोग्यत्वाद्देशपदेनैव ग्रहणे सिद्धे नदीपदं व्यर्थमेव स्यात् । न चाग्रामा इति पर्युदासेन देशग्रहणम्भविष्यतीति देशपदं व्यर्थमिति वाच्यम् । गृहादिविशेषसन्निविष्टप्रदेशस्यैव साहश्याद् ग्रहणमितिशङ्कावारणायैतदुपादानम । तेन कुरुकुरुक्षेत्रादीनां ग्रहणसिद्धिः । विशिष्टलिङ्गपदस्य-विशिष्टं=विलक्षणं लिङ्गं येषान्तेषामित्यर्थः । इदञ्च न द्वन्द्वविशेषणम् । सर्वस्यापि द्वन्द्वस्य किञ्चिदपेक्षया विलक्षणलिङ्गतयैतदुपादानं व्यर्थमेव स्यादतो द्वन्द्वावयवविशेषणम् । नदीपदांशे कृत्रिमाकृत्रिमन्यायस्य तु न प्रवृत्तिः । देशपदसाहचर्यात् । *अत एवेति* ।

*शश्वच्छब्दस्त्वेककाल्ये, ततो भवार्थे *निपातनाट्ठञि टिलोपकादेशयोरभावः । अस्य सन्धिवेलादिषु पाठाच्छाश्वतमपि । *स्वाभाविक इत्यर्थः । परत्वादिति । पशुशकुनिद्वन्द्वावकाशो गोमहिषहंसचक्रवाकादिः । अस्यावकाशो *अहिनकुलादिः । अत्र विरोधो=वैरं *न तु सहानवस्थितिः । तेन छायातपाविति सिद्धम् ।

पात्र्यादिति । *यैर्भुक्ते *स्मृत्युक्तसंस्कारेण पात्रं न शुद्ध्यति ते=निरवसिता इत्यर्थः ।

यथोच्चारितानीति । *गणपाठे रूपमेषां विवक्षितं, न तु पूर्वोत्तरपदनिर्देशमात्रे तात्पर्यम् । तेन पूर्वरूपपक्षे 'गोऽश्वम्' गोऽश्वाः' इति । 'दासीदासम्'इत्यत्रात एव निपातनात् "पुमान्स्त्रिया"(पा०सू०१-२-६७) इत्येकशेषो न । गवाश्वे पशुद्वन्द्वविभाषा प्राप्ता केषाञ्चिदबहुप्रकृत्यर्थः पाठः, केषांचित्सामान्यतः प्राप्ते नियमार्थः ।

वृक्षादौ विशेषाणामेवेति । "स्वं रूपम्" (पा० सू० १-१-६८)

---

त्वदस्यापि ग्रहणादेव ।

शाश्वतिकशब्दस्य साधुत्वं दर्शयति- *शश्वच्छब्द इति । *निपातनादिति* । अत एवाव्ययत्वेऽपि ट्युट्युलौ न । शाश्वतिकशब्दस्योक्तरीत्या नित्यवचनत्वेन विरोधस्य चाश्रयनाशेन कालविशेषेण वा नाशदर्शनेन विरोधः शाश्वतिक इत्यत्र सामानाधिकरण्यानुपपत्तिरत आह-स्वाभाविक इति । *अहिनकुलादिरिति* । एषाम्पशुत्वेन लोकप्रसिद्ध्यभावात् । *न तु सहानवस्थितिः-एकदेशकालावच्छेदेनैकत्रावर्त्तमानत्वम्न गृह्यते । न च "देवासुरैरमृतमम्बुनिधिर्ममन्थे" इति प्रयोगानुपपत्तिः, एतेषामपि विरोधसत्त्वादिति वाच्यम् । शाश्वतिकपदेन वारणात् । एतेषां हि कार्यविशेषसाधने विरोधो, न तु स्वाभाविक इति भावः ।

*स्मृत्युक्तप्रकारेण=

भस्मना शुध्यते कांस्यं ताम्रमम्लेन शुध्यति ।
रजसा शुध्यते नारी, नदी वेगेन शुध्यति ॥
=इत्युक्तप्रकारेण ।

*गणपाठे रूपमिति* । यादृशं रूपं गणपाठे दृश्यते तस्य ग्रहणम् । तेन कृताबङादेशस्य ग्रहणसिद्धिः । गवाश्वप्रभृतिषु मूत्रपुरीषशकृन्मेदमांसशोणितादीनां ग्रहणमबहुप्रकृत्यर्थम्, अन्येषां सामान्यतः प्राप्ते नियमार्थम् ।

इति सूत्रे *भाष्ये तथोक्तेरिति भावः। आदिना *मृगादिषट्कम् *प्रागुक्तरीत्या *मृगादिसर्वावयवकसमुदाये एवैतद्बोधिततद्वाक्यप्रवृत्तिः। व्रीहिकुशप्लक्षमित्यादौ तु जातित्वान्नित्यमेव*।

फलसेनेति। बहुप्रकृतिः=बहुवचनान्तावयवक इत्यर्थः। *अत्र वनस्पतिशब्देन वृक्षग्रहणम्! *इदं प्रकरणशेषभूतम्। एष्वेकवचनद्वन्द्वविषयं यद्यच्छास्त्रं प्राप्नोति तद् बहुवचनान्तावयवकसमुदायस्यैव। तेनाबहुप्रकृतेरितरेतरयोग एव। *एतेन 'संग्रामं हस्त्यश्वरथपदातिभिः' इति "येन विधिः"(पा० सू० १-१-७२)इतिसूत्रस्थभाष्यप्रयोगः, 'पातितै रथनागाश्वैः' इति चोपपन्नम्, तदाह-*जातिरिति। सेनाङ्गत्वान्नित्यप्राप्तेरिति विकल्पार्थमित्यनुषज्यते। *गोमहिषमित्याद्युदाहरणन्तु *प्राप्तिमात्राभिप्रायेण*। "चार्थे द्वन्द्वः"(पा० सू० २-२-२९) इत्येव सिद्धेः।

परे तु फलसेनेति वार्त्तिकव्याख्यानभाष्ये 'एषां द्वन्द्वो विभाषैकवद्भवति बहुप्रकृतिः, इति व्याख्यानाद् बहुप्रकृतिकद्वन्द्वस्य वैकल्पिकैकवत्त्वं

---

*भाष्ये तथोक्तेरिति*। "सिद्धविशेषाणां वृक्षाद्यर्थम्" इति तत्रोक्तम्। *मृगादिषट्कमिति। एतेषामपि विशेषाणां ग्रहणं प्रागुक्तरीत्या प्रत्यासत्त्याश्रयणेन। *नित्यमेवेति*। एतेषां क्षेत्रस्थितिकाले प्राणित्वेऽपि मनुष्यादिभिन्नतया "जातिरप्राणिनाम्" (पा० सू० २-४-६) इत्यस्य प्राप्तिः।

ननु वनस्पत्युदाहरणं प्लक्षन्यग्रोधमिति भाष्ये उक्तन्तेषाञ्च-
वानस्पत्यः फलैः पुष्पात्तैरपुष्पाद्वनस्पतिः॥

इतिकोशोक्तवनस्पतित्वासम्भव इत्यत आह—*अत्र वनस्पतीति। *इदम्=फलसेनेतिपरिगणनम्। *एतेन=प्रकरणशेषभूतत्वकथनेन। *जातिरितीति*। अत्र "जातिरप्राणिनाम्"(पा० सू० २-४-६) इतिसूत्रोपन्यासेन प्रकरणशेषत्वं सूचितमित्यर्थः। न च यत्र बहुवचनान्ता प्रकृतिस्तत्रैवेतिनियमस्वीकारे तत्र जातिप्राधान्याभावेन 'जातिप्राधान्य एवायमेकवद्भावः' इत्यनेन विरोध इति वाच्यम्। जात्याश्रयसकलव्यक्तिप्रतीतेर्जातेः प्राधान्यसद्भावात्। ननु "विभाषा वृक्ष" इति सूत्रस्योदाहरणनिरूपणावसरे मूले "गोमहिषम्" इत्युपात्तन्तत्र सेनाङ्गत्वाभावान्नित्यैकवद्भावस्य प्राप्त्यभावाद्विशेषेण कथनमयुक्तमत आह— *गोमहिषमिति। *प्राप्तिमात्रेति*। पशुत्वात्प्राप्तिरिति भावः। इदं च स्वस्वगृहस्थयोर्गोमहिषयोः प्रकृतगोमहिषपदार्थत्वे बोध्यम्। यदा तु भारवाहकवाचकयोरेतयोरुपादानन्तदा तु सेनाङ्गत्वमपि सम्भवति।

फलादिविषयेऽपि । *अत एव *बदरामलकं बदरामलकानीत्युदाहृतं भाष्ये । एवं चोक्तप्रयोगाः सर्वथा निर्बाधा एव । अत एवैतद्वचनं विभाषापदानुवृत्तयेऽत्र पठितं* न तु "द्वन्द्वश्च" (पा० सू० २-४-२) इति सूत्रे इत्याहुः ।

*नन्वेवं मृगशकुनिग्रहणं व्यर्थं "चार्थे" इत्यनेनैव सिद्धेरत आह—मृगाणां मृगैरेवेति । तेषान्तैरेवैकवचनो द्वन्द्वः, नान्यैः । स च विभाषेति नियम इति भावः, तद ह—*अन्यैस्त्विवति । एवमिति । पूर्वापरशब्दयोरधरोत्तरयोः परस्परमेव समाहारद्वन्द्वोऽन्यैस्त्वितरेतरयोग एवेत्यर्थः ।

विप्रतिषिद्धं च । (पा० सू० २-४-१३) । *विरोधोऽत्र *सहानवस्थानलक्षणः । अद्रव्याणामन्तस्यैव सम्भवात् । अधिकरणं=द्रव्यम् । चो विभाषानुकर्षणार्थः । अद्रव्येति । अद्रव्यवाचिनाञ्चेद्विरुद्धार्थानामेवेति विपरीतनियमस्तु न । *व्याख्यानात् । इतरेतरयोग एवेति । विरुद्धार्थानाञ्चेदेकवचनद्वन्द्वोऽद्रव्यवाचिनामेव(१) स च वेति *वचनव्यक्तेरिति भावः । भवत्येवेति । विप्रतिषिद्धग्रहणाभावे तु स न

---

*अत एव=बहुप्रकृतिकद्वन्द्वस्य वैकल्पिकैकवद्भावविधानादेव । *बदरेति* । अत्र फलत्वव्याप्यजातिप्रवृत्तिनिमित्तकयोरेतयोः "जातिरप्राणिनाम्"(पा० सू० २-४-६) इति नित्यैकवद्भावे प्राप्ते विकल्पः । *अत्र पठितमिति* । "विभाषा वृक्ष"(पा० सू० २-४-१२) इति सूत्रे पठितमित्यर्थः ।

*नन्वेवमिति* । यदि वार्त्तिकोक्तानां ग्रहणं विशेषार्थं तदेत्यर्थः । *अन्यैस्त्विवति* । मृगाणां मृगभिन्नैरित्यर्थः । "मृगवानरौ" इत्यादि यथा ।

ननु "विप्रतिषिद्धम्"(पा० सू० २-४-१३)इतिसूत्रोदाहरणनिरूपणावसरे 'शीतोष्णम्''शीतोष्णे' इत्युपात्तमेतयोस्त्वप्राणित्वाद्वैरासम्भवेन कथं विप्रतिषिद्धत्वमत आह-*विरोधोऽत्रेति । *सहानवस्थानम्=एकावच्छेदकावच्छेदेन सहानवस्थानमित्यर्थः । एतेन महत्सु सरस्सु मध्याह्ने तरणिकिरणसंयोगादुपरितनभागावच्छेदेनोष्णत्वस्याधस्तनभागावच्छेदेन शैत्यस्योपलम्भादेकस्मिंस्तादृशोदके उभयोः स्थितिसम्भवादुदाहरणासङ्गतिरिति परास्तम् । *व्याख्यानादिति* । विप्रतिषिद्धग्रहणस्य प्राथम्यात्तस्योद्देश्यत्वं न्याय्यमित्येतद्दर्शनमूलकाद्दधिपयआदिगणे ऋक्सामवाङ्मनसयोः पाठदर्शनमूलकाच्चेत्यर्थः । *वचनव्यक्तेरिति* । नियामकशास्त्रवशादेवंविधनियमकल्पनयेति भावः । मूले

---

(१) एकवाक्यत्वे तु अन्यत्रेतरेतरयोग एव नैकवत्त्वमिति व्यवस्था न स्यात् ।

स्यात् । *सामान्यतोऽद्रव्यवाचिनामेवेति नियमादिति भावः । सूत्रोदाहरणन्तु *शीतोष्णं, शीतोष्णे, सुखदुःखं, सुखदुःखे इत्यादि । विप्रतिषिद्धमेतावन्मात्रोक्तौ शीतोष्णे जले इत्यत्रोभयापत्तिः, नन्दकपाञ्चजन्यं नन्दकपाञ्चजन्यावित्यादौ समाहारद्वन्द्वानापत्तिश्चेति बोध्यम् ।

न दधिपय (पा० सू० २-४-१४) । नियमप्रक्रमेऽपि नानेन नियमस्यैव निषेधः । ब्रह्मप्रजापत्यादिषु नियमाप्राप्तेः । तत्साहचर्यात्प्रकरणाच्च "चार्थे द्वन्द्वः" ( पा० सू० २-२-२९ ) इति सूत्रविहितसमाहारद्वन्द्वस्य नियममात्रस्य च निषेधः । गणे द्विवचनान्तानामेव पाठाच्च । तदाह—नैकवादिति । *यद्यदेकवचनद्वन्द्वविषयशास्त्रं विधायकं नियामकं वा प्राप्नोति तन्नेत्यर्थः । *तेन "दधिपयसी" इत्यादौ "जातिरप्राणिनाम्" ( पा० सू० २-४-६ ) इत्यपि नेति बोध्यम् ॥

अधिकरणै ( पा० सू० २-४-१५ ) । नियमो नेति । *पूर्वसूत्रवत्सामान्यतोऽन्यनिषेधे मानाभावान्नियमप्रकरणाच्च नियमस्यैव निषेधः । *किं च वर्तिपदार्थस्य संख्याविशेषे बोधनीये सापेक्षत्वेनासामर्थ्यात्समाहारद्वन्द्वप्राप्तेरेवाभावेन तन्निषेधो व्यर्थः । प्रधानस्य सापेक्षत्वादितरेतरयोगस्तु भवत्येव । मम तु प्राण्यङ्गादिनियमादितरेतरयोगस्याप्राप्तौ तद्विधानेन चारितार्थ्यं स्पष्टमेवेति भावः । *परे तु इतरेतरयोगेऽप्युद्भूतावयवभेदसमूहस्यैव भाष्यरीत्या समासार्थत्वेन तस्यापि सापेक्षत्वादप्राप्तिः । किं च *दन्तोष्ठद्वारकसम्बन्धेन दशत्वस्य समाहारेऽन्वयविवक्षायामस्त्येव समाहारे द्वन्द्वप्राप्तिः । किं च समाहारद्वन्द्वस्याप्राप्तौ *द्वन्द्वश्चे·

---

'शीतोष्णे उदके' इत्युपादानं शीतोष्णशब्दयोर्गुणोपसर्जनद्रव्यपरत्वमिति ध्वनयितुम् । *सामान्यत इति* । सामान्यधर्मावच्छिन्नस्य । *शीतोष्णम्, शीतोष्णे इति* । अत्र शीतोष्णशब्दौ स्पर्शात्मकगुणपरौ ।

न दधीत्यस्य सर्वनिषेधकत्वे यादृशी वचनव्यक्तिस्तामाह—*यद्यदिति* । *तेन=नियामकस्यापि निषेधेन ।

*पूर्वसूत्रवदिति* । अयं वैपरीत्यांशे दृष्टान्तः । प्राचीनरीत्याऽऽह—*किञ्चेति* । तेषामितरेतरयोगे साहित्यविशेषणतया द्रव्यस्य प्राधान्येन भानात्सापेक्षत्वेऽपि वृत्तेः प्राप्तिरिति भावः । स्वमतमाह—*परे त्विति* । *दन्तोष्ठद्वारकसम्बन्धेन=स्वाश्रयघटितत्वसम्बन्धेन । *द्वन्द्वश्चेत्यस्याप्यत्राप्राप्ति·

त्यस्याप्यत्राप्राप्तिरिति कस्यानेन निषेधः ? । नियमेन *तत्प्राप्तिविषये एवेतरेतरयोगनिषेधनात् । तस्मात्पूर्वसूत्रवदयमप्युभयोर्निषेधः । *अत एवोत्तरसूत्रविषये समाहारद्वन्द्वासिद्धिः । *सामर्थ्येनासामर्थ्ये समासकल्पनापेक्षयैवमन्वयकल्पनस्यैवौचित्यात् । *मूले नियमो न स्यादित्यस्य सोऽपि नेत्यर्थः । *समाहारे साक्षाद्दशत्वान्वये तु दन्तोष्ठानीति ।

समीप इत्यस्य(१)सामीप्येन परिच्छेदे लक्षणा,*अनुवृत्तस्य च षष्ठ्या विपरिणाम इत्याह–स्वस्य सामीप्येनेति । उपदशमिति(२) । नवैकादशदन्तोष्ठसमूह इत्यर्थः । *तत्र समाहारद्वन्द्वे समानलिङ्गवचनत्वादव्ययीभावस्यैवानुप्रयोगः । *अत एव *उपदशं दन्तोष्ठस्येति सिद्धम् । *तत्र सामानाधिकरण्यन्तु समीपसमीपिनोरभेदविवक्षया

---

रिति* । समाहारद्वन्द्वस्यैव तेन नियमादिति भावः । *तत्प्राप्तिविषये=समाहारद्वन्द्वप्राप्तिविषये । *अत एव=उभयनिषेधादेव । ननु सूत्रारम्भसामर्थ्यात्समाहारांशे विशेषणीभूतो यस्तद्घटकपदार्थस्तत्रैवान्वयः कुतो न कल्प्यत इत्यत आह–*सामर्थ्येनेति* । मूलकाराविरोधं स्वमते साधयति–*मूले इति* । परम्परासम्बन्धेन यत्रान्वयविवक्षा तत्र व्यवस्थामुक्त्वा साक्षात्सम्बन्धेनान्वयविवक्षायामाह–*समाहार इति* ।

*अनुवृत्तस्य च=अधिकरणैतावत्त्व इत्यस्य । नन्वेकवदेवेतिनियमनिषेधे दन्तोष्ठपदे नित्यैकवचनान्तत्वाप्राप्त्या दन्तोष्ठं दन्तोष्ठा इति भवतु, उपदशमुपदशा इति तु कथमत आह–*तत्र समाहारद्वन्द्व इति* । *अत एव=अव्ययीभावस्यानुप्रयोगादेव । दन्तोष्ठेतिसमुदायार्थस्य संख्येयरूपतया तत्रोपदशशब्दार्थस्य दशसंख्येयसमीपसंख्येयस्य नवत्वैकादशत्वान्यतरधर्मवतोऽभेदोऽबाधित इति भावः । यदा त्वनुप्रयुज्यमानार्थे दन्तोष्ठशब्दार्थभेदविवक्षा तदा त्वाह–*उपदशं दन्तोष्ठस्येतीति* । उपदशं दन्तोष्ठमिति यदा प्रयुज्यते तदा तस्माद्दन्तोष्ठसमाहारो दशसंख्येयसमीपसङ्ख्येयनवैकादशान्यतराभिन्न इति बोधः । भेदविवक्षायां तु दन्तोष्ठसमाहारसम्बन्धिदशसमीपनवैकादशान्यतरदिति बोधः । नन्वव्ययीभावस्य पूर्वपदार्थप्रधानतयोपदशशब्दस्य दशसमीपबोधकत्वेन समीपस्य=कालस्य, देशस्य वा प्रतीतिः स्यात्तस्य चाभेदो दन्तोष्ठसमाहारे नास्तीति कथमव्ययीभावेन सामानाधिकरण्यमत आह–*तत्र

---

(१)सामीप्यवत्सङ्ख्यया परिच्छेदे इत्यर्थः।

(२) दशसमीपो दन्तोष्ठसमाहार इति बोधः। समाहारे दशसमीपत्वं च स्ववृत्तिदशत्वसङ्ख्यासमीपसङ्ख्यावदवयवकत्वेनेति बोध्यम् ।

बोध्यम् । इतरेतरयोगे तु बहुव्रीहेरेवानुप्रयोगः । *तस्य *समीपि-प्रधानत्वात्समानलिङ्गवचनत्वाच्चेति बोध्यम् ॥

आनङृतो(पा० सू० ६-३-२६)॥ "ऋतो विद्यायोनि" (पा० सू० ६-३-२३) इसतो विद्यायोनीत्याद्यनुवर्त्तते । ऋदन्तानामिति । ऋत इत्यनुवर्त्तमाने पुनर्ऋत इत्युक्तिः सर्वावयवद्वारा द्वन्द्वविशेषणार्था । तेन पितृपितामहादौ नाऽऽनङ् । *नकारोच्चारणमुरण्रपरत्वाद्व्यर्थम् । *अत्र ऋकारस्य निर्दिश्यमानत्वेऽपि ङकारो मित्रावरुणावित्यादौ देवताद्वन्द्वविषयेऽन्त्यादेशार्थः* । उत्तरपदे इति चाधिकारः । होतेति । *एषां *विद्याद्वारकैकयज्ञर्त्विक्कृतः सम्बन्धः । उत्तरपदाक्षिप्तपूर्वपदशब्दः *केवलयौगिक इति ध्वनयन्नाह-होतृपोत्रिति । मातेति । अत्र *योनिकृतः । मण्डूकेति । *अत एव मध्ये न सम्बन्धः । *वाक्यभेदेन च सम्बन्धः । ऋदन्तस्य पुत्रे आनङित्यर्थः । *तेन तात-

---

सामानाधिकरण्यमिति* । *तस्य=बहुव्रीहेः । *समीपिप्रधानत्वेति* । द्वशसमीपे ये सन्तीत्यर्थावगमादित्यर्थः ।

नन्वानङादेशसम्बन्धिनकारस्य चेल्लोपेन निवृत्तिस्तदा तदनुच्चारणमेवास्त्वित्यत आह-*नकारोच्चारणमिति* । *अत्र=पूर्वसूत्रे । *अन्त्यादेशार्थ इति* । अन्यथाऽनेकाल्त्वात्सर्वादेशः स्यात् । विद्यायोनिसम्बन्धपदमर्शआद्यचा विद्यायोनिकृतसम्बन्धवत्परम् । तत्र विद्याकृतसम्बन्धमुपपादयति-*एषामिति* । *विद्याद्वारकः=विद्याघटितः । एकयज्ञर्त्विक्कृत इत्यस्य होत्रादिकर्तृकयज्ञोपयोगिविद्यावत्त्वविशिष्टतद्यज्ञकर्तृत्वरूपः सम्बन्ध इत्यर्थः । *केवलयौगिक इति* । पूर्वस्य तत्पदस्येत्यर्थः । *योनिकृत इति* ।

ज्यानिर्हानौ स्रवन्त्याश्च योनिः स्यादाकरे भगे ॥

इतिकोशोक्तिदर्शनेन योनिशब्दस्य भगपरत्वे मातापुत्राविति यद्यपि सिध्यति, तथापि पितापुत्राविति न सिध्यति । अत्रापि संयुक्तजन्यत्वमस्तीति चेत्पितानप्ताराविति न सिध्यतीत्यतः साक्षात्परम्परया वा योनिकृतो यः सम्बन्धः स ग्राह्य इति भावः । मूले *पुत्र इत्यनुवृत्तेरिति* । एतच्च काचित्कम । भ्रातृपुत्रावितिदर्शनात् । *पितापुत्राविति* । ऋदन्तसर्वावयवकत्वाभावात्पुत्र इत्यनुवृत्त्यभावेऽत्र न स्यादिति भावः । *अत एव=मण्डूकप्लुतिस्वीकारादेव । *वाक्यभेदेनेति* । अत एव मातापितरावित्यस्य सिद्धिः । *तेन=ऋ । इत्यस्यानुवृत्तत्वेन ।

पुत्रावित्यादौ न ।

इत्यादाविति स्कन्दविशाखावित्यादि* आदिशब्दार्थः ॥

अग्नेः स्तुत् ॥ (पा० सू० ८-३-८२)सात्पदाद्योरित्यस्यापवादः ॥

इदु वृद्धौ ( पा० सू० ६-२-२८ ) ॥ *देवताद्वन्द्वे वृद्धिरू-पोत्तरपदासम्भवात् सौत्रलोपेन लुप्तमत्वन्तं वृद्धिपदमित्याह-वृद्धिमतीति । नन्व*न्तरङ्गत्वात्पूर्वमानङीत्वे स्याताम त आह-अलौकिके इति । *ताद्धितालौकिके इत्यर्थः । परिनिष्ठितात्तद्धितोत्पत्तेः *वृद्धि-मत्त्वञ्चोत्तरपदस्य *भाव्येव निमित्तमित्यर्थः । आग्नावैष्णवमिति । *इत्वाभावादानङ् ।

द्यावा क्षामेति "द्यावाक्षामा रुक्मो अन्तर्विभाति"इत्यत्रत्य-मिदम् । तत्र द्वन्द्वे द्यावादेशे षष्ठ्याः "सुपां सुलुक्"( पा० सू० ७-१-३९ )इति डादेशः । "देवताद्वन्द्वे च" ( पा० सू० ६-२-२६ )इति पू-र्वोत्तरपदयोः प्रकृतिस्वर इति वेदभाष्ये स्पष्टम् ।

"द्यावाचिदस्मै इति । द्यावाचिदस्मै पृथिवी सन्नमेते" इत्यत्रत्यमिदम् । चिदस्मै इत्यनेन व्यवधानात्समासाभावनिर्णयः । *इतरेतरापेक्षया द्विवचनम् । प्रतिमित्रयोर्वरुणयोरितिवत् । *अत एव पदकाले 'पृथिवी इति'इति प्रगृह्यं पठन्ति । "वा छन्दसि" ( पा० सू० ६-१-१०६ )इति पूर्वसवर्णः । *अन्ये त्वत्र द्योशब्दस्यैव द्विवचने णिस्वे

---

*वित्यादीति* । अत्राऽऽदिना स्कन्दवरुणावित्यस्य सङ्ग्रहः ।

"इदु वृद्धौ"(पा० सू० ६-२-२८)इति सूत्रव्याख्यानावसरे वृद्धिमदुत्तरपद इति यद्व्याख्यातं, तल्लाभप्रकारमाह-*देवताद्वन्द्व इति* । *अन्तरङ्गत्वादिति* । वृद्धेस्तद्धितनिमित्तकत्वेन बहिरङ्गत्वादिति भावः । अलौकिक इत्यनेन द्वन्द्वालौ-किकस्य भ्रमः स्यादत आह-*तद्धितालौकिक इति* । ननु तदानीं नोत्तरपदस्य वृद्धिमत्त्वमत आह-*वृद्धिमत्त्वमिति* । *भाव्येव निमित्तमिति* । तेन अग्निश्च-मारुतश्च अग्नामारुतावित्यस्य सङ्ग्रहः । *इत्वाभावादिति* । इत्वस्याऽऽनङ-पवादतयाऽपवादाभावे उत्सर्गप्रवृत्तिन्याय्यैवेति भावः ।

पृथिवी इत्यस्य द्विवचनान्तत्वोपपत्तये आह-*इतरेति* । *अत एव=द्विवचनान्तत्वादेव । 'द्यावा चिदस्मै'इत्यत्रोत्तरपदपरत्वाभावेन द्यावादेश-स्याप्राप्तिराशङ्क्य छन्दसिदृष्टानुविधानेन समाधाय प्रकारान्तरेण तदुपपत्ति-

"सुपां सुलुक्" इत्याकार इत्याहुः ॥

**मातरपितरौ** ॥ (पा० सू० ६-३-३२) एकशेषस्य वैकल्पिकत्वाद् द्वन्द्वः । अत्र पूर्वपदेऽरङादेशो निपात्यते । उत्तरपदाधिकारात् । *उत्तरत्र तु "ऋतो ङि" (पा० सू० ७-३-११०) इति सिद्धम् । *पदद्वयेऽपि तन्निपातनमित्यन्ये* ॥

इति द्वन्द्वः ॥

*अपवादसङ्गत्याऽऽह-अथेति । युवप्रत्ययमात्रेति । गोत्रयु-

---

माह-*अन्ये त्विति ।

*उत्तरत्र तु इति* । उत्तरपदे गुणस्य प्रवृत्त्योत्तरपदस्य रेफान्तत्वं सिद्धमित्यर्थः । मातरापितरावित्यत्रैकशेषस्य वैकल्पिकत्वात्तदभावे द्वन्द्वः । *पदद्वयेऽपि=पूर्वोत्तरपदयोः । *अन्ये=मुख्याः । भाष्यकारीयव्याख्यानेनैतादृशकल्पनाया एवौचित्यम् । तथाहि-अत्र हि भाष्ये "मातरपितरावुदीचाम्"(पा० सू० ६-३-३२-) "पितरामातरा च"(पा० सू० (६-३-३३)इति सूत्रद्वयस्योपादानं कृत्वा "छन्दसि किन्निपात्यते ? । पूर्वोत्तरपदयोर्ऋकारस्याराऽरौ-मातरापितरौ भोजय, मातरापितरावानय, आ मा गन्तांपितरामातरा च"इत्युक्तम् । अत्र पूर्वोत्तरपदयोरित्युक्तत्वेनोत्तरपदेऽप्यरादेशस्य निपातनमुभयोरपि सूत्रयोश्छान्दसत्वं 'छन्दसि किन्निपात्यते' इति कथनेन लभ्यते । न चोभयत्र निपातनमुत्तरसूत्रविषयमेवेति शङ्क्यम् । चकारोपादानेन व्यत्यस्तानुपूर्वीमात्रबोधने भाष्यतात्पर्यात् । द्विवचनातिरिक्तेऽपि अरादेशो दृश्यते-मातरापितरानाचिदिष्टाविति । एवं च श्यामादावप्यरादेशघटितप्रयोगसिद्धिः । न च पूर्वोत्तरपदयोरित्यस्य पूर्वोत्तरसूत्रघटकपदयोरित्यर्थः, श्यामादौ च यत्र मातरा इति दृश्यते तत्र "सुपां सुलुक्" (पा० सू० ७-१-१३९)इत्याकारादेश एवास्त्विति वाच्यम् । पूर्वोत्तरपदयोरित्यस्य पूर्वोत्तरसूत्रघटकपदपरत्वे शाकपार्थिवादित्वङ्कल्पनीयं, पूर्वोत्तरशब्दस्य पूर्वोत्तरसूत्रघटके लक्षणा वा आश्रयणीयेति गौरवस्य स्पष्टत्वात् । अरारावित्यत्रैकशेषस्तु न । उत्तरपदे अरा इत्यादेशस्य पूर्वपदेऽर इत्यादेशस्य चाभिमतत्वेन वैरूप्यसत्त्वादिति सर्वेष्टसिद्धिः ॥

इति द्वन्द्वविवरणम् ॥

*अपवादेति* । द्वन्द्वापवादसङ्गत्येत्यर्थः । न चापवादस्यापि सङ्गतित्वे

सप्रसङ्ग उपोद्घातो हेतुताऽवसरस्तथा ।
निर्वाहकैककार्यत्वे षोढा सङ्गतिरिष्यते ॥

इत्यनेन षोढात्वकथनविरोध इति वाच्यम् । अपवादेत्यनेनापवाद-

वत्व*प्रतीतिमात्रेत्यर्थः । तेन गर्गाश्च गार्ग्यायणाश्च गर्गा इति सिद्ध्यति । मात्रपदेन प्रत्ययार्थकुत्सनादेः प्रकृत्यर्थस्य च प्रतीतेर्व्यवच्छेदः । तदाह—कुत्स्नमिति । एतदेवकारलभ्यं, तत्कृत एव विशेषश्चेन्न तु तत्कृतातिरिक्त इत्यर्थात् । तल्लक्षणः किमिति । तल्लक्षण एवेति किमित्यर्थः । भागवित्तिके कुत्सने ठक् । कुत्स्नं किमिति । एवकारेण प्रकृत्यर्थस्यापि व्यावृत्तिः किमर्थेति प्रश्नः । तल्लक्षणविशेष इत्येव सामर्थ्यात्तल्लक्षण एवेति लब्धे 'चेदेव'ग्रहणं *स्पष्टार्थम् ।

स्त्रीपुम् (पा० सू० १–२–६६) । *स्त्रीत्वस्य वैरूप्यकारणस्याधिक्यात्पूर्वेणाप्राप्तौ वचनम् । तल्लक्षणश्चेदित्यादीहापि सम्बध्यते । तेन भागवित्ती च भागवित्तिकश्च, गार्गी च वात्स्यायनश्चेत्यादौ न । अर्थे पुंवत्त्वातिदेशे *फलमाह—अनुवर्त्तमाने इति । "तद्राजस्य बहुषु"(पा० सू० २–४–६२)इत्यतः ॥

पुमान् स्त्रिया (पा० सू० १–२–६७) अत्र विभक्तावित्यनुवर्त्तते । विभक्तौ तदितरकृतविशेषविरहश्चेदित्यर्थः । *अत एव जननीपरिच्छेतृवाचकमातृशब्दयोर्नैकशेषः । हंसाविति । स्त्रीव्यक्तेरपि

---

पवादकभावरूपस्य प्रसङ्गनिर्वाहकसम्बन्धस्य सूचनात् । "वृद्धो यूना"(पा० सू० १–२–६५ )इतिसूत्रे वृद्धपदम् 'अपत्यमन्तर्हितं वृद्धम्' इत्यभियुक्तोक्तेर्गोत्रपरमित्याभिप्रायेण मूले गोत्रमिति व्याख्यातम् । गोत्रयुवप्रत्ययेत्यत्र प्रत्ययपदं प्रतीतिपरमित्यभिप्रायेण व्याख्यातं—*प्रतीतिमात्रेति* । *स्पष्टार्थमिति* । एवकारेण प्रत्ययार्थकुत्सायाः प्रकृत्यर्थस्य च व्यवच्छेद इत्यर्थस्य स्पष्टप्रतीतेर्लाभायेत्यर्थः ।

सूत्रारम्भफलमाह—*स्त्रीत्वस्येति* । *फलमाहेति* । लुगात्मकफलमाहेत्यर्थः । बहुत्ववदर्थे वर्त्तमानं यद्गोत्रप्रत्ययान्तमित्यर्थे "यः शिष्यते" इतिन्यायेन शिष्यमाणगोत्रप्रत्ययान्तस्य बहुत्ववत्यर्थे वृत्तिरस्त्येवेति लुक्सिद्धिः । अस्त्रियामित्यत्र प्रसज्यप्रतिषेधपरत्वेन व्याख्यानपक्ष इदं प्रयोजनम् । यदि तु पर्युदास एव लाघवादाश्रीयते तदोक्तन्यायेन शिष्यमाणस्य स्त्रीभिन्नार्थे वृत्तेरव्याहतत्वात्पुंस्त्वातिदेशाभावेऽपि लुक् स्यादेवेति कल्प्यते, तदा गर्गान्पश्येत्यत्र नत्वसिद्धिः प्रयोजनं बोध्यम् ।

*अत एव—सरूपाणामित्यस्य विभक्तावित्यस्य चानुवृत्तेरेव । जननीवाचिमातृशब्दे " न षट् " ( पा० सू० ४–१–१० ) इति ङीन्निषेधः । प-

*हंसत्वेन स्त्रीत्वानालिङ्गिताया एव बोधेन नात्र ङीष्। ब्राह्मणीवत्सश्च ब्राह्मणवत्सा चेत्यादौ तु नेदम्। प्रधाने कार्यसम्प्रत्ययात्प्रधानस्त्रीमात्रकृतविशेष एवैतत्प्रवृत्तेः॥

नपुंसकम्॥ (पा० सू० १-२-६९) अन्यतरस्यामित्येकवच्चेत्यनेनैव सम्बध्यते आनन्तर्यात् (१)त्वर्थेचशब्दाच्चेत्याह-तच्च वेत्ति(२)। अनपुंसकेनेति किम्। शुक्लश्च शुक्लश्च शुक्ले। *अस्य ग्रहणमस्यैवैकवद्भाव इति बोधनार्थम्। तेनान्यसूत्राणां समाहारद्वन्द्वविषये न प्रवृत्तिः। *घटघटमित्यादि त्वनभिधानान्न। एवञ्चानभिधानस्यावश्यकत्वेन द्वन्द्वमात्रस्यैकशेषविषये तदाश्रित्यै*कशब्दस्यानेकार्थत्वञ्चाश्रित्यैकशेषप्रकरणं भाष्ये प्रत्याख्यातम्। *अन्यथैकशेषारम्भेऽपि गार्ग्यावित्यतो गार्ग्यगार्ग्यायणबोधो न स्यात्तस्य तदर्थकत्वाभावादिति दिक्। *गुणे शुक्लादिपदानां पुंस्त्वाद् गुणिपरत्वाप्रकटनाय पटादिपदोपादानम्। *एवञ्च गुणपरतायां नीलो रूपमित्याद्यत्र

---

रिच्छेतृवाची त्वत्र पुल्लिङ्गः। *हंसत्वेनेति*। शिष्यमाणशब्दस्य यत्प्रवृत्तिनिमित्तं तेन रूपेणैकशेषस्थले सर्वप्रतीतेरनुभवसिद्धत्वादेवमभिहितम्। अत एव भाष्ये "इह कस्मान्न भवति-हंसश्च वरटा च, कच्छपश्च डुलिश्च, ऋश्यश्च रोहिच्चेति। तल्लक्षणश्चेदेव विशेष इत्युच्यते, न चात्र तल्लक्षण एव विशेषः। तल्लक्षण एव विशेषो यत्समानायामाकृतौ शब्दभेदः" इत्युक्तम्।

ननु "नपुंसकमनपुंसकेनैकवच्चान्यतरस्याम्" इत्युच्यमानेऽपि प्रत्यासत्त्या यत्रानेनैकशेषस्तत्रैवैकवद्भावो भविष्यतीति प्रकृतसूत्रेऽस्य ग्रहणङ्किमर्थमत आह-*अस्य ग्रहणमिति*। ननु "सरूपाणाम्"( पा० सू० १-२-६४ ) इत्यस्य सूत्रस्य तर्हि समाहारविवक्षायामप्राप्त्याऽपवादाभावेन घटघटमितिसमाहारविवक्षायां द्वन्द्वः प्राप्नोतीत्यत आह-*घटघटमित्यादीति*। *एकशब्दस्यानेकार्थत्वमिति*। तदुक्तं सरूपसूत्रभाष्ये-"अर्थावर्थौ प्रति यत्तदपि प्रत्यर्थमेव"इत्यादि। *अन्यथा=एकस्यानेकार्थत्वाभावे। न ह्येकशेषमात्रेणान्यस्मिन्नसती शक्तिः प्रतिपाद्यते, किन्तु स्वभावतस्तेष्ववस्थितशक्त्या शिष्यमाणशब्देन सर्वस्य तत्तस्थलीयस्य तावदर्थविषयकबोधस्य प्रामाण्यं प्रतिपाद्यत इति भावः। नपुंसकेतिसूत्रोदाहरणविषये आह-*गुण इति*। *एव-

---

(१) 'तु'इत्येतदर्थकचशब्दादित्यर्थः। सूत्रे चशब्दस्त्वर्थ इति भावः।
(२) तेनास्य नोत्तरत्रानुवृत्तिरिति बोध्यम्।

प्रयोगः । गुणिपरतायान्तु विशेष्यनिघ्नता ।

गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति ।

इत्यमरोक्तेः । तद्वतीत्यस्य *द्रव्ये विशेषणतापन्ना इत्यर्थ इति प्रामाणिकाः । तल्लक्षण एवेति किम्, हिमहिमान्यौ । अत्र महत्त्वादिकृतोऽपि विशेषः ।

मातापितराविति ।

पितुर्दशगुणं माता गौरवेणातिरिच्यते ।

इत्युक्ते*र्मातुरभ्यर्हितत्वात्पूर्वनिपातः । "ऋत" इत्यानङ् ।

श्वश्र्वा अपि मातृतुल्यत्वोक्तेरभ्यर्हितत्वम् ।

त्यदादीनि सर्वैः(पा० सू० १-२-७२)॥ तदादिभिरन्यैश्चेत्यर्थः । सप्तरामिति । गणीयमत्र परत्वम् । अत्र द्विपर्यन्तानामिति नियमो नास्ति । *"अहञ्च भवांश्चावाम्" इति भाष्योक्तेः । पुंनपुंसकत्त इति । *स्त्रीशेषेऽपीति भावः । पुंनपुंसकयोस्त्विवाति । तयोः सहोक्तौ "पुंनपुंसकतः" इति वचने परत्वान्नपुंसकं शिष्यते इत्यर्थः । *इदं कैयटादौ स्पष्टम् । *अत एव "नपुंसकम्"( पा० सू० १-२-६९ )इति सूत्रे भाष्ये शुक्लं च वस्त्रं शुक्लश्च कम्बलः *तदिदं शुक्लं, ते इमे शुक्ले इत्युदाहृतं सङ्गच्छते ।

---

श्च=गुणे पुंस्त्वस्य व्यवस्थितौ च । *द्रव्ये विशेषणतापन्ना इति* । द्रव्यमिह द्रव्यत्वजातिमद्विवक्षितन्न तु लिङ्गसङ्ख्यान्वितमिति । अन्यथा रूपशब्दस्याप्येतादृशद्रव्यत्वान्नीलो रूपमिति प्रयोगानुपपत्तिः स्यात् ।

*मातुरभ्यर्हितत्वादिति* । अस्य पुत्रदृष्ट्येति शेषः । तेन मातृशब्दवाच्या या स्त्री तद्दृष्ट्या तद्भर्तुः पूज्यत्वेऽपि न क्षतिः ।

द्विपर्यन्तानामितिनियमत्यागे बीजमाह—*अहञ्चेति* । 'त्यदादितः शेषे' इत्यत्र "षष्ठ्या व्याश्रये" ( पा० सू० ५-४-४८ )इति तसिः, आद्यादित्वाद्वा । पुंनपुंसकत इत्यत्र त्वाद्यादित्वादेव । यत्र पुंसः शेषो नपुंसकता वा तत्र तत्तल्लिङ्गं सिद्धमेवेत्यत आह—*स्त्रीशेषेऽपीति* । अत एव भाष्ये "सा च देवदत्तश्च तौ, सा च कुण्डे च तानि"इत्युक्तम् । अत्र "स्त्रीत्वे प्राप्ते पुंस्त्वं विधीयते" इत्युक्तं कैयटेन । *इदमिति* । 'शब्दपराविप्रतिषेधेन नपुंसकस्यैव शेषः' इत्येतत् । "पुंनपुंसकयोस्त्वेकशेषे शब्दपराविप्रतिषेधान्नपुंसकत्वम्भवति" इति कैयटेनोक्तम् । *अत एव*=पुंनपुंसकयोः सहोक्तौ परत्वान्नपुंसकस्य शेषादेव । *तदिदं शुक्लमिति* । अत्रापि स च तच्च तादित्येव सन्नांविवक्षायां

*त्यदाद्यन्तर्गतयोरपि एकद्वयोर्नैकशेषोऽनभिधानात् । *ध्वनितश्चेदं सरूपसूत्रे भाष्ये । *द्वन्द्वोऽप्येतयोर्न । एकादिनवान्तानां द्वन्द्वाभावस्य "चार्थे" ( पा० सू० २-२-२९ ) इति सूत्रशेषे* भाष्ये ध्वनितत्वात् । *एवञ्च

*एकद्विकरणे हेतू महापातकपञ्चके ।
तृणवन्मन्यते कोपकामौ यः पञ्च कारयन् ॥

इति नैषधपद्ये एकद्विकरणे *इत्यसाध्वेव । अनेकपद*षष्ठीतत्पुरुषोऽप्यसाधुरेवेति दिक् । *अस्यापवादमाह—अद्वन्द्वेति । कुक्कुटमयूर्याविति । द्वन्द्वतत्पुरुषयोः परपदलिङ्गत्वेन तदधीनतैव विशेषणस्येति

---

नपुंसकस्यैव शेषो भाष्यकृता दर्शितः। अतिप्रसङ्गमाशङ्क्याह—*त्यदाद्यन्तर्गतयोरिति* । *ध्वनितमिति* । "सङ्ख्याया अर्थासम्प्रत्ययादन्यपदार्थत्वाच्च" इत्यनेन भाष्यकृता ध्वनितमित्यर्थः । सङ्ख्याया अर्थस्य असम्प्रत्ययात्=सङ्ख्यारूपस्यार्थस्यैव सम्प्रत्ययाभावात् । एकावित्युक्तेऽसहायादिरर्थो गम्यते, न तु द्वाविति । अन्यपदार्थत्वाच्चेत्यस्य=अन्यस्य पदस्याप्ययमर्थो भवति । योऽर्थ एकावित्यनेनाभिधास्यते तस्मिन्नर्थेऽसन्देहेन द्वाविति पदान्तरं द्वौ च द्वौ चेत्यर्थे चत्वार इति प्रवर्त्तेत इत्यर्थः । नन्वपवादस्यैकशेषस्याभावे द्वन्द्वस्तर्हि स्यादत आह—*द्वन्द्वोप्येतयोर्नेति* । *"चार्थे"इतिसूत्रशेष इति* । तत्र हि—"एकादश द्वादशेति कोऽयं समासः?" इत्याशङ्क्य 'द्वन्द्वः'इत्युत्तरे 'विंशत्यादिषु वचनम्' इत्यनेनैकविंशतिर्द्वाविंशतिरित्यादौ वचनम्प्राप्नोति'इत्युक्त्वा 'सिद्धन्तु' इत्यादिना शाकपार्थिवादित्वकल्पनया समासकथनेन सा शङ्का परिहृता, न त्वेकादिनवान्तविषये शङ्कासमाधाने कृते। तेनैतादृशे विषयेऽनभिधानं सूचितमिति । *एवञ्च=एकादिनवान्तानां द्वन्द्वाभावसिद्धौ च । *एकाद्विकरण इति* । लोभस्येदं वर्णनम् । महापातकानि=ब्राह्मणहननसुवर्णचौर्यगुर्वङ्गनागमनसुरापानानि एतेषां ये कर्त्तारस्तैः सह संवासश्चेति, एतेषाम्मध्ये एकस्य द्वयोर्वा करणे=उत्पादने हेतुभूतौ यौ कामकोपौ तौ पञ्च कारयन् यो लोभस्तृणवन्मन्यते, स धन्य इत्यर्थः। *इत्यसाध्वेवेति* । 'एकद्विकरणे' इतीकारान्तद्विशब्दघटितमसाध्वेवेत्यर्थः। यदि तु एको वा द्वौ वेति बहुव्रीहौ डचि 'एकद्वकरणे' इति पठ्यते, तदा तु साधुरेवायमिति बोध्यम्। *षष्ठीतत्पुरुष इति* । षष्ठ्यन्तत्वस्य सुबन्तत्वस्य प्रत्येकपर्याप्तत्वादसाधुत्वमित्यर्थः । *अस्य='त्यदादितः शेषे' इत्यस्य । अद्वन्द्वे इत्यस्य द्वन्द्वतत्पुरुषविशेषणभूतार्थप्रतिपादकानां त्यदादीनां शिष्यमाणानाम्न पुन्नपुंसकतो लिङ्गवचनानि भवन्ति, किं तु विशेष्यनिघ्नत्वमेव तेषामित्यर्थः । एतादृशे विषये विशेष्यानु-

बोद्धव्यम् । *तत्पुरुषे अर्धपिप्पल्यस्ता इत्यत्र विशेषो बोद्धव्यः । *तच्चितोर्योग इत्यादौ तादित्यव्ययम्* ॥

ग्राम्यप (पा० सू० १-२-७३) ॥ अत्रानपुंसकेनेत्यनुवर्त्तते । तदाह—पुमानिति । एतौ गावाविति । *सङ्घशब्दश्च बहूनां समुदाये *शक्त इति भावः । वत्सा इति । *अपत्यमात्रवाचिनो वत्सशब्दस्य प्रकरणादिना तरुणपरत्वे *इदं बोद्धव्यम् । *वस्तुतो 'बर्करा इमे' इति प्रत्युदाहरणम् । बर्करः=तरुणः पशुः । एकशेषे कृत इति । *अन्तरङ्गत्वाद्विभक्त्युत्पत्तेः प्रागित्यर्थः । तेनेति । *द्वन्द्वत्वसमासत्वयोरभावेनेत्यर्थः । एकवदिति । "द्वन्द्वश्च प्राणि"(पा० सू० २-४-२६)इत्येतत्कृतो नियम इत्यर्थः । पन्थानाविति ।

---

शेष्येव वचनमित्यस्य दार्ढ्यसम्पादनाय बहुवचनान्तोदाहरणमप्याह—*तत्पुरुष इति* । *तच्चितोर्योग इत्यादाविति* ।

जीव ईशो विशुद्धा चित्तथा जीवेशयोर्भिदा ।
अविद्या तच्चितोर्योगः षडस्माकमनादयः ॥

इत्यत्रत्यमंशम् । *अव्ययमिति* । विभक्तिप्रतिरूपकमव्ययमित्यर्थः । "त्यदादीनि"( पा० सू० १-२-७२ ) इतिसूत्रे परस्परसाहचर्येणानव्ययस्य ग्रहणामिति भावः ।

एतौ गावावित्यत्र सङ्घशब्दोपादाने कृते यथा "ग्राम्य"( पा० सू० १-२-७३ ) इतिसूत्रस्याप्रवृत्तिस्तथोपपादयति—*सङ्घशब्दश्चेति* । *शक्त इति* । 'अत्र तु द्वयोरेव समुदायः' इति शेषः । ननु 'वत्सा इमे' इतिप्रत्युदाहरणमसङ्गतम् । "पुत्रादौ तर्णके वत्सः" इतित्रिकाण्डशेषात् । तर्णकम्=सद्योजातापत्यम् । 'बालो युवा वृद्धो वत्सो दम्यो बलीवर्दः' इतिवृद्धिसंज्ञासूत्रस्थभाष्ये युवा इत्येतदपेक्षया वत्सेत्यस्य पृथगुपादानाच्च वत्सशब्दस्य युववाचकत्वाभावादत आह—*अपत्यमात्रेति* । अत एव "अन्तर्वत्पतिवतोः" ( पा० सू० ४-१-३२ )इतिसूत्रे 'तरुणवत्स'इति वत्सस्तरुणत्वेन विशेषितः । *इदम्=प्रत्युदाहरणम् । प्रायेणापत्येन प्रसिद्ध इत्याशयेनाह-*वस्तुत इति* । *अन्तरङ्गत्वादिति* । अत्रान्तरङ्गत्वं हेतुसद्भावनिमित्तकप्रासिकस्वरूपम् । ननु यदि विभक्त्युत्पत्तेःप्रागेवैकशेषस्तदा एकशेषस्य 'तेन'इत्यनेनोक्तं यत्प्रयोजनन्तन्निमित्तत्वं वाच्यं, तच्च न सम्भवति । शास्त्रेण तथाऽप्रतिपादनादत आह—*द्वन्द्वत्वेत्यादि* । ननु यदि समासान्तः पूर्वं स्यात्तदा "भस्य टेर्लोपः"(पा०सू०७-१-८८) इति टिलोपे सर्वनामस्थाने परे पथ्याद्यवयवेकारस्याकारविधानमनुपप-

*"इतोऽत्"(पा० सू० ७-१-८६) इति सूत्रन्तु पन्था इत्यत्र *मथिनादौ च चरितार्थम् । *कृतद्वन्द्वानामेकशेषे हि द्वन्द्वालौकिकविग्रहवाक्ये ऋक्पूरित्यनेन *तत्प्राप्तिर्दुर्वारो । एवञ्च वैरूप्यादेकशेषो न स्यात् । एकं पथीति, अपरं पथेति । न चो*त्तरमनर्थकम्* । विशिष्टरूपोपादानाभावेन सरूपसूत्रेऽर्थवत्परिभाषाया अप्रवृत्तेः । एवञ्च*तद्भाष्ययोजनार्थ*मुत्तरपदावयवत्वस्वीकारः कैयटोक्तो विफल एव । *किञ्चैवं *विरूपाणामपीत्येकशेषस्य दुर्वारत्वाद्भाष्यासङ्गतिः । मम तूत्तरखण्डस्यास्यानर्थकत्वान्न तत्प्राप्तिरिति भावः* ।

इत्येकशेषः ॥

---

अमत आह-*इतोऽदितिसूत्रमिति* । ननु पन्था इत्यस्य टेरात्वविधाने सिद्धिर्भविष्यति । पथिमथीतिसूत्रप्रभृत्येवम्पठनीयम्-'पथिमथ्यृभुक्षामात् टेः, थोन्थः सर्वनामस्थाने, भस्य लोपः' इति । टेरित्यस्यानुवृत्तिश्च भविष्यतीत्यत आह-*मथिनादाविति* । अत्र हि समासान्तविधायकाभावेन तन्निमित्तकटिलोपस्याप्यभावादिकारस्यात्वे दीर्घे च कृते नकारस्य श्रवणम्भवति टेरात्वविधाने तु नकारस्य श्रवणन्न स्यादिति भावः । अत्र मूले समासान्तो नेत्युक्तन्न तु समासान्ते कृते यस्य दोषस्य प्रसक्तिस्स उद्भावित इत्यतः स्वयं दोषमुपपादयति-*कृतद्वन्द्वानामिति* । *तत्प्राप्तिः*=समासान्तप्राप्तिः । *उत्तरम्=पथेत्यकारान्तम् । *अनर्थकमिति* । समासान्तस्य समुदायावयवत्वादनर्थकमित्यर्थः । *एतद्भाष्य इति* । "ऋक् च ऋक् च ऋचौ समासान्ते कृते असारूप्यादेकशेषो न प्राप्नोति" इति भाष्येत्यर्थः । *योजनार्थमिति* । समासे कृते एकशेष इतिपक्षे भाष्यकृता समासान्ते कृतेऽसारूप्यादेकशेषाभाव उक्तः, तद्योजनार्थङ्कैयटेनोक्तम्-अन्तर्वर्तिन्या विभक्तेर्लुका लुप्तत्वात्प्रत्ययलक्षणप्रतिषेधान्नास्त्येकविभक्तिपरतेत्येकशेषनिमित्तंसमुदायाद्विभक्तिरुत्पाद्या, तस्याश्च नास्ति सारूप्यम् । एको हि ऋक्शब्दोऽपर ऋचशब्दः । समासान्तः समासस्यैवावयवो नोत्तरपदस्येति चेत्तर्हि तेनैव व्यवधानात्समासविभक्तेरेकशेषो न स्यात् समासार्थस्योत्तरपदस्यान्ताः समासान्ता इत्यपि भाष्यकारस्य मतमिति ऋगृचशब्दयोर्वैरूप्यमाश्रित्य भाष्यकृता दोष उद्भावितः । समासान्तस्योत्तरपदावयवत्वमभ्युपेत्यापि दूषणमाह-*किं चैवमिति* । *एवम्=उत्तरपदावयवत्वस्वीकारे । *इति भाव इति* । इदं सर्वमेकविभक्तावेकशेष इति मते । वस्तुतः पन्थानावित्यादिरूपासिद्धिरेव दोष इति बोध्यम् ॥

इत्येकशेषनिरूपणम् ।

*प्रसङ्गादाह—कृदिति । परार्थाभिधाने करणे ल्युट्, सामान्ये नपुंसकम् । परशब्दः *तदर्थपरस्तेन युक्तोऽर्थः=परार्थः । *एवञ्च परस्यार्थेन संबद्धो यः स्वार्थस्तस्याभिधाभिर्योपस्थिति*स्तत्करणमित्यर्थः । इतरार्थान्वितस्वार्थस्यैवोपस्थितिर्घटकैरिति यावत् । *यद्वा परेण प्रधानशब्देन शब्दान्तरार्थस्याभिधानं=विशेषणत्वेन ग्रहणं तत्करणमित्यर्थः । यत्रत्यप्रधानपदेनेतरविशेषणकस्वार्थस्यैवोपस्थितिरिति यावत् । मञ्जूषायाञ्चेदं विस्तरेण निरूपितम् ।

यद्वा परेणाप्रधानशब्देन शब्दान्तरार्थस्य*विशेष्यत्वेन ग्रहणमित्यर्थः । *सा चावयवशक्तिसहकृतसमुदायशक्तिसाध्या । अवयव-

---

*प्रसङ्गादिति* । वृत्तिनिरूपणप्रसङ्गादित्यर्थः । *तदर्थपरः=परार्थपरः । मध्यमपदलोपिसमासोऽर्थशब्देन । तेन परार्थेन युक्तो योऽर्थस्तस्याभिधानमिति फलितम्, तदाह—*एवञ्चेति* । *तत्करणमिति* । तत्करणं शब्दस्वरूपं यस्यावयवः स समुदाय इत्यर्थः । कप्प्रत्ययो वैकल्पिकत्वान्न कृतः । व्यधिकरणपदो बहुव्रीहिः । तत्करणशब्दादर्शआद्यज्वा । समासघटकसर्वपदानामितरार्थाभिधायकत्वपक्षे इदम् । एकस्यैव तदभिधायकत्वपक्षे आह—*यद्वा परेणेति* । एतत्पक्षे प्रधानपदे स्वार्थाभिधायकत्वस्यापि सत्त्वान्न जहत्स्वार्था वृत्तिरिति भावः । राजपुरुष इत्यत्र हि प्रधानं यत्पुरुषपदं तेन राजार्थसंवलितः स्वार्थ उपस्थाप्यते एतावतैवैकार्थीभावव्यवहारः । पूर्वपक्षे द्वयोरपि पदयोरन्यार्थसम्वलितस्वार्थाभिधायकत्वेऽन्यार्थसंवलितार्थस्य वारद्वयस्भानापत्तिः, द्वितीयपक्षे तु नेति भेदः । न च यद्युत्तरपदमेव राजसम्वलितपुरुषम्प्रतिपादयति तदा राजपदस्य निरर्थकत्वमेव सम्पन्नमिति पूर्वपदार्थाभावेन पूर्वपदार्थप्रकारकोत्तरपदार्थविशेष्यकबोधजनकत्वव्यवहाराभापत्तिरिति वाच्यम् । आमोदान्वयमादाय लोके यथा चम्पकपुटः, मालतीपुट इति व्यवहारस्तथा पूर्वपदस्य सत्त्वात्तथा व्यवहारः । न च बहुव्रीहौ वृत्तिघटकयोर्द्वयोरपि प्राधान्याभावेन प्रधानपदेन परार्थाभिधानं यत्र तत्र वृत्तिव्यवहार इति पक्षे कथं तादृशव्यवहार इति वाच्यम् । तत्र समासात्मकसमुदाये प्रधानपदत्वव्यवहारो घटकयोस्त्वप्रधानत्वव्यवहार इत्यप्रधानसम्वलनमस्त्येव समुदायार्थेऽन्यपदार्थे इत्यदोषात् ।

विनिगमनाविरहेण पक्षान्तरमाह—*यद्वा परेणाप्रधानशब्देनेति* । *विशेष्यत्वेन ग्रहणमिति* । स्वार्थप्रकारकपदार्थविशेष्यकबोधजननमित्यर्थः । *सा चेति* । इतरार्थसम्वलितस्वार्थोपस्थितिरित्यर्थः । *भन्त्या*=शास्त्र-

शक्तिर्लोकसिद्धा, शास्त्रकल्पिता च* । अन्यथा तद्धितादिप्रत्यये । समुदायस्य वृत्त्याश्रयत्वेनैषा*मौपचारिको वृत्तिव्यवहारः प्राचाम् । *सा च "समर्थः पदविधिः"(पा० सू० २-१-१)इति परिभाषाबललभ्या । तत्र समासतद्धितयोः पदोद्देश्यकविधित्वस्य स्पष्टत्वेन *मानान्तरसिद्धैकार्थीभावस्य च सत्त्वेन परिभाषाप्रवृत्तिः स्पष्टैव । कृतामप्युपपदनिमित्तकानां पदविधित्वं स्पष्टमेव । *तत्साहचर्याच्चान्यत्रापि । *अत एव पाचकादीनां क्रियाकारकभावसम्बन्धप्रवृत्तिनिमित्तकत्वमूलकः । क्रियाशब्दत्वव्यवहारः ।

कृत्=कृदन्तः । तद्धितशब्दस्त*द्धटितसमुदायपरः । अत एव बहुकचोर्न दोषः । एकशेषेऽपि द्वन्द्वे इत्यनुवृत्त्या तद्विषये एतद्विधानेनैकार्थीभाव आवश्यकः* । चार्थान्तर्भावेण बोधार्थ इत्यभिमानः* । *वस्तुत एकशेष परार्थान्वितस्वार्थोपस्थापकत्वाभावाद्वृत्तित्वे न मानम् । शिष्टपदेन स्ववृत्त्यैव

---

कृतकल्पिता । *एषाम्=कृदादीनाम् । *सा च=समुदायशक्तिश्च । *मानान्तरसिद्धेति* । लाघवरूपमानेनेत्यर्थः । तदुक्तमन्यत्र—

बहूनां वृत्तिधर्माणां वचनैरेव साधने ।
स्यान्महद्गौरवं तस्मादेकार्थीभाव आश्रितः ॥ इति ॥

*तत्साहचर्यादिति* । पदविधिसहचरितोऽपि विधिः=पदविधिः । प्रातिपदिकप्रकृतिकक्विपोऽपि "कर्तुः क्यङ्" (पा० सू० ३-२-११) इति सूत्रे उपसङ्ख्यानात्तत्त्वम् । एवं णिचोऽपि धातुप्रकृतिकस्य मुण्डमिश्रेत्यतोऽनुवृत्त्या । *अत एव=पूर्वभागस्खलितोत्तरभागाभिधायकत्वसत्त्वादेव । येन सम्बन्धेन पूर्वभागार्थस्खलनमुत्तरपदार्थे स सम्बन्धः प्रवृत्तिनिमित्तम् । अत एव "कृत्तद्धितसमासेभ्यः सम्बन्धाभिधानम्भावप्रत्ययेनान्यत्र रूढ्यभिन्नरूपाव्यभिचरितसम्बन्धेभ्यः" इति सङ्गच्छते । अन्यत्रेत्यनेन जहत्स्वार्था वृत्तिः सूचिता ।

ननु कृतः प्रत्ययत्वात्प्रत्ययग्रहणपरिभाषया तदन्तपरत्ववत्तद्धितपदस्यापि तदन्तपरत्वे बहुजाद्यसङ्ग्रह इत्यत आह-*तद्घटितेति* । तद्धितशब्दान्मत्वर्थीयोऽर्शआद्यच् कर्त्तव्य इति भावः । *एकार्थीभाव आवश्यक इति* । अत्र श्रूयमाणस्यानेकार्थकत्वं "यः शिष्यते" इति न्यायेन सुप्रसिद्धमेव । एकपदार्थस्यान्यपदार्थसम्बन्धश्च चार्थमादाय द्वन्द्वस्थल इवैकपदार्थनिष्ठविषयतानिरूपितस्वार्थविषयतानिरूपितान्यपदार्थनिष्ठविषयताशालिबोधजनकत्वादुपपादनीयः । *इत्यभिमान इति* । पञ्च वृत्तय इति वदत इति

तत्तत्समूहरूपार्थोपस्थानस्य *भाष्ये स्पष्टमुक्तत्वात् । *अत एव समर्थ-सूत्रस्याधिकारत्वपक्षे एकशेषासङ्ग्रहो भाष्ये नोक्त इति बोध्यम् । सना-दिषु *क्यजादेः पदविधित्वं स्पष्टमेव । सनि *"स्वभावत एव वृत्त्यवृत्त्योः सिद्धत्वाद्वा वचनं न कार्यम्" इति तत्प्रत्याख्यानपरभाष्यप्रामाण्यात्सः* । प्रातिपदिकप्रकृतिकणिच्यपि सः। "मुण्डयति माणवकमित्यत्र सापेक्षत्वेना-सामर्थ्याद्वृत्त्या न भाव्यम्" इत्याशङ्क्य "मौण्ड्यपरमुण्डशब्दात्प्रत्ययः, तस्य च साध्यत्वेन प्रतीयमानतया *क्रियात्वात्कारकैर्नित्यसाकाङ्क्षत्वान्न दोषः" इति भाष्यात् । *एवमेव व्याकरणं सूत्रयतीत्याद्युपपद्यते । सूत्रशब्दस्य सूत्रणक्रियावचनत्वेन व्याकरणे तन्निरूपितकर्मत्वोपजननात् । *षष्ठी तु न । *सूत्रणक्रियाया ण्यन्तार्थत्वेऽपि कृत्प्रकृत्यर्थत्वाभावात् । क्रियापरत्वञ्चै-षां*वृत्तिविषयमेव* ।

---

शेषः । अभिमतोक्तिबीजन्दर्शयति-*वस्तुत इति* । *भाष्ये स्पष्टमुक्तत्वा-दिति* । "इह हि शब्दस्य स्वाभाविकी वा अनेकार्थता स्याद्वाचनिकी वा ? । तद्यदि तावत् स्वाभाविकी, अशिष्य एकशेषः" इतिग्रन्थेनोक्त-त्वादित्यर्थः । *अत एव=एकशेषस्य वृत्तित्वाभावादेव । *क्यजादेरिति* । सुबन्तादेषां विधानेन पदविधित्वं स्पष्टम् । सन्येकार्थीभावमुपपादयति— *सनि स्वभावत इति* । *सः=एकार्थीभावः । *क्रियात्वादिति* । नित्य-साकाङ्क्षत्वे हेतुकथनमेतत् । मुण्डशब्दात्करणेऽर्थे प्रत्ययो विधीयते, न हि मुण्डपदार्थस्य माणवकस्य करणत्वसम्भव इति विधानसामर्थ्याद्धर्मवचनात्प्र-त्ययः । एवञ्च मुण्डि इति णिजन्तस्य मुण्डनरूपक्रियानुकूलव्यापारवचनत-या माणवकस्य मुण्डनरूपफलाश्रयत्व द्भवति कर्मत्वमिति मुण्डयति माणव-कमितिप्रयोगोपपत्तिः । यद्यप्यत्र मुण्डनात्मिका क्रिया कर्मभूता णिजन्ता-र्थेऽन्तर्भूता तथापि माणवकादिकर्मणोऽनन्तर्भावात्सकर्मकत्वम् । *एवमेव= माणवकम्मुण्डयतीतिवदेव । अत्र हि व्याकरणमष्टाध्यायीरूपं वस्तु, तच्च सू-त्रणक्रियाश्रयः । सूत्रणं हि विजातीयरचनारूपम्पौर्वापर्येणोच्चारणात्मकमिति यावत् । तदाश्रयत्वमस्तीह व्याकरणस्येति भावः । ननु यदि व्याकरणं सूत्र-शब्दार्थाद्भिद्यते तदा व्याकरणशब्दादत्र षष्ठी स्यादिति कस्य चिच्छङ्कान्निरा-करोति-*षष्ठी तु नेति* । अयं भावः-अत्र कारकषष्ठ्यापाद्यते उत शेषलक्ष-णा ? । नाद्य इत्याह-*सूत्रणेति* । शेषे षष्ठीत्यपि न । कारकत्वस्य कर्मत्वस्य च व्याकरणे सत्त्वेन शेषत्वाभावादिति । *एषामिति* । मुण्डादीनामित्यर्थः । *वृत्तिविषयमेवेति* । णिजन्तघटकतायामेवेत्यर्थः ।

*मौण्ड्यार्थकादिच्छाक्यच् तु नानभिधानात्* । *वृत्त्यर्थावबोधकमिति ।

*आख्यातं तद्धितान्तस्य यत्किञ्चिदुपदर्शकम् ।

---

यथा क्रियावचनान्मुण्डशब्दात् णिज् भवति तथा सुबन्तात्तस्मात् क्यजपि स्यादित्याशङ्कायामाह—*मौण्ड्यार्थकादिति* । *अनभिधानादिति* । "सुप आत्मन"( पा० सू० ३-१-८) इतिसूत्रभाष्ये "क्यजन्तस्य कानि साधनानि ?" इति प्रश्ने "भावः कर्त्ता च । अथ कर्म ? । नास्ति कर्म । ननु चायमिषिः सकर्मकः । यस्यार्थे क्यज्विधीयते । अभिहितं तत्कर्मान्तर्भूतं धात्वर्थः सम्पन्नः, न चेदानीमन्यत्कर्मास्ति येन सकर्मकः स्यात् । कथन्तर्ह्ययं सकर्मको भवति-अपुत्रम्पुत्रमिवाचरति पुत्रीयति माणवकम् ? । अस्त्यत्र विशेषः, द्वे ह्यत्र कर्मणी उपमानकर्मोपमेयकर्म च । उपमानकर्मान्तर्भूतमुपमेयेन कर्मणा सकर्मको भवति । अयन्तर्हि कथं सकर्मको भवति-मुण्डयति माणवकमिति ? । अत्रापि द्वे कर्मणी सामान्यकर्म विशेषकर्म च । सामान्यं कर्मान्तर्भूतं, विशेषकर्मणा सकर्मको भवति" इत्युक्तम् । ततः 'सापेक्षत्वेनासामर्थ्यात् णिच् न स्यात्'इत्याशङ्क्य "नात्रोभौ करोतियुक्तौ-मुण्डो माणवकश्च । न हि माणवकत्वं क्रियते" । एवञ्चैकस्यान्तर्भावेऽप्यपरस्य माणवकस्यानन्तर्भावाद्भवति तेन कर्मणा सकर्मकत्वम् । ततः शङ्कितं भाष्यकृता "कामन्तर्ह्यनेनैव हेतुना क्यजपि कर्त्तव्यः-माणवकं मुण्डमिच्छतीति । न कर्त्तव्यः । उभावत्रेषियुक्तौ मुण्डो माणवकश्च । कथं तर्ह्यसौ मौण्ड्यमात्रेण सन्तोषङ्करोति ? । माणवकस्थमौण्ड्यमिच्छति । माणवकस्य मौण्ड्यकरणेन संस्कार्यत्वादेकस्मात्प्रत्ययोत्पत्तिः सापेक्षत्वान्न भवति"इति कैयटः । एवमेव सापेक्षत्वात् णिजपि न स्यादित्याशङ्क्य तत्करोतीति सिद्धे णिचि पुनः "मुण्डमिश्र"( पा० सू० ३-१-२१ )इतिसूत्रेण णिज्विधानं सापेक्षेभ्योऽपि णिजर्थमिति समाहितम् । ततः पक्षान्तरेण भाष्ये उक्तम्-"अथ वोक्तमेतत्—नात्र व्यापारोऽनुगन्तव्यः गमकत्वादिह वृत्तिर्भविष्यति मुण्डयति माणवकम्"इति । अत्र कैयटः-व्यापारो नाश्रयणीयः प्रयत्नमन्तरेणापीष्टस्य सिद्धत्वादित्यर्थः । क्यच् तु गमकत्वान्न भवति । एतेन प्रघट्टकेन ण्यन्तवृत्तौ मुण्डशब्दो भावप्रधान इति गमकत्वात्तत्र वृत्तिर्भवति । क्यजन्तवृत्तौ तु धर्मिपर एवातस्तत्र नेच्छाक्यच् असामर्थ्यादित्युक्तम्भवति । यदि कथञ्चिद्विषयेऽपि धर्मपरः स्यात्तदा तत्रापि गमकत्वमस्तीति क्यच् स्यादितिधर्मवचनात् क्यचोऽनभिधानं ध्वनितम् ।

*वृत्त्यर्थावबोधकमितीति* । वृत्तिवाक्यं यादृशविशेष्यविशेषणभावापन्नार्थबोधकं तादृशविशेष्यविशेषणभावापन्न एव वाक्यार्थबोधो

गुणप्रधानभावस्य तत्र दृष्टो विपर्ययः ॥

इति न्यायेन सर्वत्र विग्रहे वृत्तिसमान एव विशेष्यविशेषणभाव इति भावः । हरिकारिकायां तत्रेत्यस्याख्याते इत्यर्थः स्वरसतः प्रतीयते । *स्पष्टश्चायमर्थः "तद्वहति" ( पा० सू० ४-४-७६ )इति सूत्रे समर्थसूत्रे ( पा० सू० २-१-१) च भाष्ये इति निरूपितं मञ्जूषायाम् । वाक्यमिति । तत्र तत्समासघटकपदानां *तत्तत्समासप्रवृत्तियोग्यविभक्त्यन्तानां पृथक्प्रयोगरूपमित्यर्थः । *सञ्ज्ञाविषयसमासे वाक्येन सञ्ज्ञाऽनवगमेऽपि वृत्तिघटकपदज्ञापनाय समस्यमानपदार्थबोधकवाक्यप्रयोगो भवत्येव । नित्यसमासत्वव्यवहारस्तु तस्य वाक्यस्य वृत्तिसमानार्थत्वाभावेन गौणो बोद्ध्यः । लौकिक इति । शब्दतस्तत्सदृश इत्यर्थः । एतेन 'तदर्थोपदर्शकं न

---

भवतीत्यर्थः । तदुपपादयति-*आख्यातमिति* । *स्पष्टश्चायमिति* । तुल्यो यत्र वृत्तिवाक्यजन्यशाब्दबोधयोर्विशेषणविशेष्यभावस्तत्र वृत्तिर्भवतीति स्पष्टमित्यर्थः । तत्र प्रथमे "रथं वहति=रथ्य इत्यत्रेव रथस्य वोढा इत्यर्थे तस्येदमिति प्रत्ययो भविष्यति"इति वार्त्तिककृतोक्तम् । ततः "शब्दभेदादविधानम् । शब्दभेदादविधिः सम्भवति । अन्यो हि शब्दो रथं वहति, अन्यो हि शब्दो रथस्य वोढा"इति । तस्येदमिति षष्ठ्यन्ताद्विधीयमानो द्वितीयान्तादेतत्सूत्राभावे न स्यादिति भावः । षष्ठीवाच्यकर्मत्वापेक्षया द्वितीयावाच्यकर्मत्वं विलक्षणमित्यभिमानः । एतेन समानार्थत्वं यत्र तत्र वृत्त्या भवितव्यमिति सूचितम्, "शब्दभेदादविधानमिति चेदर्थाश्रयत्वात्प्रत्ययविधानस्यार्थसामान्यात्सिद्धम् । शब्दभेदादविधानमिति चेदर्थाश्रयः प्रत्ययविधिः स एवार्थो रथं वहति, स एवार्थो रथस्य वोढेति । तत्रार्थसामान्यात्सिद्धम्"इत्युक्तम् । अर्थसामान्यात्=अर्थैक्यात् । वहतीत्यस्य क्रियाप्रधानत्वेऽपि विशेष्यविशेषणभावव्यत्यासेन कर्तृरूपार्थस्यैव तद्धितार्थत्वेन विवक्षितत्वादिति भावः । कर्मत्वयोर्भेदे मानाभावः । अत एवोक्तं स एवार्थ इति । तद्धितार्थोपदर्शकवाक्यस्थतिङन्तस्य यः कृदन्तेऽर्थः प्रधानीभूतः स एवेत्यर्थः । एकत्वमेव दर्शयति-आख्यातमिति । अत्र तद्धितार्थस्येत्युपलक्षणम् । कृदर्थोपदर्शकविग्रहवाक्यस्थतिङन्तेऽप्येवमेव, तुल्यन्यायात् । अत एव तत्रापि न वृत्तिविग्रहवाक्ययोः समानार्थत्वभङ्गः । एवञ्च बहुव्रीह्यर्थप्रदर्शकविग्रहवाक्यादपि चित्रगोसम्बन्धीत्येव बोधः । यदुक्तं वार्त्तिककृता-"एकतिङ् वाक्यम्"इति, तत्प्रकृते न विवक्षितमित्याशयेन वाक्यस्वरूपमाह-*तत्तत्समासेति* । संज्ञायामिति यत्र समासस्तद्विषये विशेषमाह—*संज्ञाविषयेति* । एतावान् विशेषः-विग्रहवाक्यार्थ-

लोके प्रयुज्यते । पचतीति पाचक इत्यादेः पाककर्त्ता पाचकपदबोध्य इत्यादिक्रमेणार्थात्' इति परास्तम् ।

अविग्रह इति । लौकिकविग्रहरहित इत्यर्थः । नित्याधिकारीयसमासे समासघटकपदानां व्यपेक्षाया अभावेन लौकिकवाक्याभावादिति भावः । *एवञ्च वृत्तिवैकल्पिकत्वबोधनं वृत्तिघटकपदस्वरूपबोधनं तदर्थबोधनञ्च विग्रहप्रदर्शनफलं बोद्ध्यम् । अस्वपदेति । समस्यमानयावत्पदाघटित इत्यर्थः । दन्तोष्ठमिति । समाहारस्य प्रधानत्वात् । यद्यपि इतरेतरयोगेऽपि समूहस्यैव प्राधान्यं तथापि तत्र तस्योद्भूतावयवभेदस्यैव भानादुभयपदार्थप्रधानत्वमिति भावः । *अत एव तत्र वर्त्तिपदार्थस्य नोपसर्जनत्वं तद्रूपेणैव तस्य भानात् । अत एव "द्वन्द्वे च" (पा० सू० १-१-३१) इति सर्वनामसञ्ज्ञानिषेधः सार्थकः । समाहारद्वन्द्वे तूपसर्जनत्वादेव *तदभावः सिद्ध इति बोद्ध्यमिति *केचित् । अनुवादकमेव द्वन्द्वे चेति । अत एव 'कुक्कुटमयूर्याविमे'इति द्वन्द्वे उपसर्जनह्रस्वत्वमाशङ्क्य द्वन्द्वे नेति वचनेन परिहृतम् । एवञ्चेतरेतरयोगेऽपि बहुव्रीहिलक्षणातिव्याप्तिरित्यन्ये* ! अनेकेति । *त्र्यादीत्यर्थः । क्वचित्=व्यन्हजातादौ ।

समासविभाजकोपाधिगणना*ऽऽवश्यकी चेत्तत्राह—सुपां सुपेति । सुपामिति *सर्वत्र सम्बध्यते 'अथ तिङाम्' इति यावत् । अत्र 'सुपां तिङा' इत्यनेनैव तिङां सुबन्तेनेत्यस्य सङ्ग्रहात्पञ्चविधत्वमेव युक्तम्, उभयत्रापि *सुप्तिङ्घटितत्वस्याविशिष्टत्वादिति चिन्त्यम् । *यद्वाऽऽद्येन सुबन्तपूर्वपद-

---

घटकेन पदार्थैकदेशत्वव्यवहारो, वृत्तौ तु समर्थपरिभाषाबलादेकार्थीभावसत्त्वात्पदार्थैकदेशत्वव्यवहार इति ।

*एवञ्च=पूर्वोक्तव्यवस्थासिद्धौ च । प्राचीनरीत्या आह—*अत एवेति* । उभयपदार्थप्रधानत्वादेव । *तदभावः=सर्वनामत्वाभावः । *केचित्=प्राचीनानुयायिनः । *अन्ये=मुख्याः । अनेकपदस्यैकाभिन्नार्थकत्वे द्वन्द्वबहुव्रीह्योरेवेतिनियमानुपपत्तिः, समाससामान्यस्य तथात्वात्; अत आह—*त्र्यादीत्यर्थ इति* । *आवश्यकी चेदिति* । अबुधबोधनायेत्यादिः ।

*सर्वत्र=वाक्यचतुष्टये । *सुप्तिङ्घटितत्वस्येति* । अत्र सुप्तिङ्पदं तदन्तपरम् । तद्घटितत्वम्=तद्विषयकप्रतीत्यविषयत्वम् । *यद्वेति* । यथोभयोपादानस्य सार्थकत्वम्भवेत्तथा कल्पनोचिता इत्येतदभिसंधायेत्थमभिहितम् ।

कस्य ग्रहणमन्त्येन तिङन्तपूर्वपदस्येति भेदः । आद्यास्तिस्रो वृत्तय इमा *अभिधानलक्षणाः । "अभिधानलक्षणाः कृत्तद्धितसमासाः" इति "अकर्त्तरि च" ( पा० सू० ३-३-१९ )इति सूत्रे भाष्योक्तेः । *अभिधानञ्च शिष्टानां *ततोऽर्थबोधरूपं, तद्विपरीतमनभिधानमिति "तदस्य तदस्मिन्स्यादिति"(पा० सू० ५-१-१६) इति *सूत्रे भाष्ये स्पष्टम् ॥

इति सर्वसमासशेषः ॥

अ इति *लुप्तविभक्तिकः सौत्रो निर्देश इति भावः । अक्षे या धूरिति । अक्षसम्बन्धिनी या धूरित्यर्थः । सम्बन्धिनोऽधिकरणत्व-

---

*अभिधानलक्षणाः=अभिधानं लक्षणन्नियामकं येषामित्यर्थः । अभिधानपदार्थं निर्वक्ति-*अभिधानञ्चेति* । *ततः=तेभ्यः । *सूत्रे भाष्ये इति* । तत्र हि "स्याद्ग्रहणङ्किमर्थम् ? । इह माऽभूत्-प्रासादो देवदत्तस्य, प्राकारो नगरस्येति । (अक्रियमाणे स्याद्ग्रहणे निश्चितस्वस्वामिभावात्मकसम्बन्धप्रतिपादनाय यत्र प्रयोगस्तत्रापि स्यादिति भावः ।) अथ क्रियमाणेऽपि स्याद्ग्रहणे इह कस्मान्न भवति-प्रासादो देवदत्तस्य स्यात्, प्राकारो नगरस्य स्यादिति । (यदा देवदत्तनामकः कश्चिदाढ्यः प्रासादं महान्तं दृष्ट्वा प्रासादस्वामित्वेन सम्भाव्यते तत्रापि स्यादिति भावः । एवम्प्राकारस्य महत्त्वे नगरसम्बन्धित्वसम्भावनेति द्रष्टव्यम ।) इतिकरणः क्रियते ततश्चेद्विवक्षा भवति । विवक्षा च द्वयी । अस्त्येव प्रायोक्त्री लौकिकी च । प्रायोक्त्री विवक्षा प्रयोक्ता हि मृद्व्या स्निग्धया श्लक्ष्णया जिह्वया मृदून् स्निग्धान् श्लक्ष्णान् शब्दान् प्रयुङ्क्ते। (मृदूनिति । अपभ्रंशानित्यर्थः । एवमुत्तरोऽपि प्रकारो गाने प्रसिद्धः । एवञ्च प्रायोक्त्री विवक्षाऽव्यावर्त्तकत्वान्न शब्दसंस्कारप्रयोजिकेति भावः ।) लौकिकी विवक्षा यत्र प्रायस्यः सम्प्रत्यय । (प्रायस्य=समग्रकल्पस्य । समग्रः कल्पो निश्चयो यस्येत्यर्थः । समग्रत्वं=याथार्थ्यम् । शास्त्राधीनत्वमिति फलितम् । एवञ्च पृषोदरादीति सूत्रे ये शिष्टा उक्ता ऋषयस्ते ग्राह्याः । तदाह भाष्ये-)प्राय इति लोको व्यपदिश्यते । न च प्रासादो देवदत्तस्य स्यात्प्राकारो नगरस्य स्यादित्यत्रोत्पद्यमानेन प्रत्ययेन प्रायस्य सम्प्रत्ययः स्यान्न । यद्येवन्नार्थः स्याद्ग्रहणेन । न हि प्रासादो देवदत्तस्य प्राकारो नगरस्येत्यत्रोत्पद्यमानेम प्रत्ययेन प्रायस्य सम्प्रत्ययः स्यात्" इत्युक्तम् । एतेन शिष्टानां येभ्यः कृत्तद्धितसमासेभ्योऽर्थबोधो भवति तेषामेव साधुत्वं नान्येषामिति सूचितम ॥

॥ इति सर्वसमासस्य शेषः ॥

*लुप्तविभक्तिकः=लुप्तप्रथमान्तः । अनधीयानेऽपि तद्द्वये व्यवहारो-

विवक्षया सप्तमी सूत्रे। अर्धर्च इति। "अर्धर्चाः"(पा० सू० २-४-३१) इति पुंस्त्वम्। अध्येतर्येवेति। *अध्येतृत्वयोग्यतावतीत्यर्थः। अध्ययनश्चो-पस्थितत्वाद्वक्सम्बन्ध्येव। अनृक्‌ सामेति। पक्षे कबपि—अनृक्कमित्यादि।

द्वन्तरु। अन्तरीपमित्यादेरन्तर्गताः=प्रतिकूलाः, सङ्गताश्चापो-ऽस्मिन्निति विग्रहः। *उपसर्गग्रहणञ्च प्राद्युपलक्षणम्। समा आप इति। *एवञ्चाप्रादित्वान्नेत्त्वमिति भावः। स्वाविति। "न पूजना-त्" (पा० सू० ५-४-६९) इति समासान्तनिषेधः।

"कृष्णोदक्पाण्डु"इति "संख्यायाः"इति च "अच्प्रत्यन्वव"(पा० सू० ५-४-७५)इत्यत्राजिति योगविभागसिद्धाभियुक्तोक्तिरिति बोद्धव्यम्। संख्याया इत्येतत् "नदीभिश्च"इति विहितसमास एवेत्याहुः*। *भाष्ये योगविभागस्यादर्शनात् पृषोदरादित्वेनेदं सिद्धमिति कश्चित्*।

करणल्युडन्तदर्शनशब्दो योगरूढिभ्यां चक्षुःपरस्तत्पर्युदासेऽक्षि-पदं तत्सदृशपरमित्याशयेनाह—गवामक्षीवेति।

धेन्वनडुहाविति। *समाहारे तु "द्वन्द्वाच्चुद"इति टचैव सि-द्धमिति भावः। द्वन्द्वो निपात्यते इति। "विरूपाणामपि"(का०वा०) इत्येकशेषं बाधित्वेति भावः। सरजसमिति। *"अव्ययीभावे च"(पा० सू० ६-३-८१)इति सहस्य सः। *तत्पुरुष एवेति। उत्तरपदार्थप्र-धान इत्यादि। निःश्रेयानिति बहुव्रीहिः। "ईयसश्च"( पा० सू० ५-४-१५६ )इति निषेधान्न कप्। निष्क्रान्तः श्रेयस इति तत्पुरुषो वा। पुरुषस्येति। *षष्ठीसमास एवेदम्। शुन इति। *अव्ययीभाव एवेदम्।

---

पपत्तये आह-*अध्येतृत्वयोग्यतेति*।

क्रियायोगाभावादाह-*उपसर्गग्रहणञ्चेति*। *एवञ्च=प्रादिघटकस्यै-व ग्रहणसिद्धौ च।

*इत्याहुरिति*। तत्सूत्रविषय एवास्योदाहरणात्। प्राचीनोक्तरीत्या व्याख्याय सिद्धान्तमाह-*भाष्य इति। *कश्चित्=भाष्यतत्त्ववित्।

इतरेतरयोगद्वन्द्व एवोदाहरणदानबीजमाह-*समाहार इति*। *अ-व्ययीभाव इति*। न चायं बहुव्रीहिसमास एवास्तु। "आद्यास्त्रयो बहुव्रीहयः। ततः परे एकादश द्वन्द्वाः। ततोऽव्ययीभावः" इति भाष्यविरोधात्। *तत्पुरुष एवेतीति*। "ततस्तत्पुरुषः। निश्चितं श्रेयो निःश्रेयसम्" इतिभाष्यात्। *ष-

उत्तरपदार्थप्रशंसामिति कर्मधारयः । श्रेयःशब्दोऽपि प्रशंसार्थ एव । आशीर्विषयतामिति षष्ठीतत्पुरुषः । विषयशब्दो नित्यपुँल्लिङ्गः । एवञ्च श्वस्-शब्द उत्तरपदार्थप्रशंसाया आशीर्विषयत्वद्योतक इति फलितम् । *एतच्चै-तद्वृत्तिविषयमेव । एवञ्चाशीर्लिङन्तप्रयोग एवास्य साधुत्वमिति वृत्तिः* ।

सप्तमीस्थादिति । *सप्तम्यर्थवृत्तेरित्यर्थः ।

अनुगवमिति । गोदैर्घ्यसदृशदैर्घ्यवद्यानमिति बोधः ।

द्विस्तावा (पा० सू० ५-४-८४) ॥ द्विरावृत्ता तावतीत्यर्थे सुच् । आवृत्तिक्रियाजन्मगणने सुच् । निपातनफलमाह—यावतीति । यत्र सकलाङ्गोपदेशः सा प्रकृतिः । आवृत्तिक्रियान्तर्भावेण पूर्वपदस्य वृत्तिः । *द्विगुणेति तु फलितार्थकथनम् । प्रत्युदाहरणे द्विः तावति इति भिन्ने पदे ।

उपसर्गाद ॥ (पा० सू० ५-४-८५) इदं प्राद्युपलक्षणम् ।

किंराज इति । किमत्र प्रश्ने । षष्ठीसमासः कर्मधारयो वा ।

नञस्त ॥(पा०सू०५-४-७१)नञ इति । नञ्पूर्वपदकादित्यर्थः* ।

अपथमिति । "नस्तद्धिते"( पा० सू० ६-४-१४४)इति टिलोपः *पथःसंख्याव्ययादेः"इति नपुंसकत्वम् । अपथं वर्त्तत इति । अर्थाभावे-ऽव्ययीभावः । "ऋक्पूः"(पा० सू० ५-४-७४) इति समासान्तः । नञोऽप्यव्ययीभावं *स्वीकुर्वतां मत इदम् ॥

इति साधारणाः समासान्ताः ॥

---

ष्ठीसमास एवेदमिति* । "ततः षष्ठीसमासः" इतिभाष्यात् । *अव्ययीभाव ए-वेदमिति* । "अव्ययीभावः" इत्युक्त्वा "शुनः समीपमुपशुनम्" इतिभाष्योक्तेः । *एतच्चेति* । प्रशंसाया आशीर्विषयत्वद्योतकत्वञ्च । *वृत्तिरिति* । वृत्तिप्रा-माण्यादेवास्य लिङन्तस्य यत्र प्रयोगस्तत्र साधुत्वम् । भाष्यं त्वत्रोदासीनम् ।

सप्तमीशब्दः प्रत्ययपरो न हि तत्र प्रतिशब्दस्य वृत्तिरत आह—*सप्त-म्यर्थवृत्तेरिति* ।

ननु यद्यावृत्तिक्रियाजन्मगणने सुच् तदा द्विगुणेति व्याख्यानं विरुद्ध-मत आह—*द्विगुणेति त्विति* ।

"किमः क्षेपे"(पा० सू० ५-४-७०)इतिसूत्रोदाहरणविषये कर्मधारयः ।

नञस्तत्पुरुषादितिसूत्रे नञ्पदन्नञ्पूर्वपदके लाक्षणिकमित्याशयेना-ह—*नञ्पूर्वपदकादिति* ।

*पथः संख्येति* । एवञ्च "अपथं नपुंसकम्"(पा०सू० २-४-३०)इति

उत्तर पदे इति । उत्तरपदशब्दः समासचरमावयवे रूढः । *पदे इत्येव सिद्धे उत्तरग्रहणात् । अयं न विधिः "पञ्चम्याः स्तोकादिभ्यः"(पा० सू० ६-३-२)इत्यारम्भात्तदाह—अधिकार इति ।

स्तोकान्मुक्त इति । द्विवचनान्तादिभिर्न समासोऽनभिधानात्* । समासफलमैकपद्यादि । प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं स्तोत्रं, अप्रगीतमन्त्रसाध्यं तत्=शस्त्रम् । सुप्सुपेति समासस्तदाह–शस्त्राणीति ।

ओजसेति । "कर्तृकरणे"(पा० सू० २-१-३२) इति समासः। पुंसाऽनुज इति । यस्य पुमानग्रजः स *पुंसा हेतुनाऽनुज इत्यर्थः । जनुषा=जन्मना ।

पूरणे इति । *स्वरितत्वबलात् *तदधिकारविहितप्रत्ययग्रहणमत्र । यद्यपि "उत्तरपदाधिकारे प्रत्ययग्रहणे न तदन्तग्रहणम्" "हृदयस्य हृल्लेख" ( पा० सू० ६-३-५० ) इत्यत्र ज्ञापयिष्यते तथापीहात्मनशब्दात्पूरणे *प्रत्ययासंभवेन तदन्तग्रहणमित्याह–पूरणप्रत्ययान्त इति । उदाहरणे हेतुत्वात्प्रकृत्यादित्वाद्वा तृतीया; सुप्सुपेति समासः । *यथाश्रु-

---

न कार्यमिति भावः । *स्वीकुर्वतामिति* । वस्तुतस्तत्तदर्थबोधकपदघटकतया गृहीतेन तत्तदर्थकाव्ययेन नाव्ययीभाव इति प्रागुक्तत्वादिदमसङ्गतमतस्तत्पुरुष एव ॥

॥ इति साधारणाः समासान्ताः ॥

रूढत्वे मानमाह–*पद इत्येवेति* ।

*अनभिधानादिति* । "करणे च" ( पा० सू० २-३-३३ ) इतिसूत्रेणासत्त्ववचनेभ्यः पञ्चम्या विधानेन प्रतिपदोक्तपरिभाषया तत्सूत्रविहितैकवचनान्ते एव समासप्राप्तेर्द्विवचनस्य तेभ्योऽविधानादित्यर्थः ।

*पुंसा हेतुनेति* । अनुज इति व्यवहारेऽग्रजस्य पुंसो हेतुत्वेनानुजत्वे पुंसो हेतुत्वं द्रष्टव्यम् ।

*स्वरितत्वबलादिति* । पूरणशब्दे स्वरितत्वबलादित्यर्थः । *तदधिकारेति* । पूरणाधिकारेत्यर्थः । *प्रत्ययासम्भवेनेति* । सङ्ख्याशब्दादेव तस्य विधानादिति भावः । इह=मूले । "आत्मनश्च=आत्मनश्च तृतीयाया अलुक्स्यात् । पूरण इति वक्तव्यम्" एवं व्याख्याय "वैयाकरणाख्यायाम्"(६-३-७) इति सूत्रे 'आत्मन इत्येव'इति व्याख्यातम् । तेनात्मन इतिसूत्रमेवेत्याशयः प्रतीयते, स न युक्त इत्याशयेनाह–*यथाश्रुतेति* । "आत्मनश्च पूरणे" इति

तभाष्यस्वरसस्तु "आत्मनश्च पूरणे" इत्यस्य वार्तिकत्वे । एवं हि भाष्यम्-"आज्ञायिनि च, आत्मनश्च पूरणे=आत्मनश्च पूरणे उपसंख्यानं कर्त्तव्यम्" इति । *वैयाकरणाख्यायामित्यत्र तु *वार्त्तिकस्थस्यैवात्मन इत्यस्यानुवृत्तिर्बोध्या काम्ये रोरित्यादेरिव । *यद्वा परस्य चेत्यनेनैकं *सूत्रम्, चेन *परप्रतिद्वन्द्वितयाऽऽत्मन्शब्दस्य ग्रहणमिति तदाशयः ।

योगविभागादिति । "सहसुपा" ( पा० सू २-१-४ ) इति समास *इत्युचितम् ॥

गवियुधिस्थिरशब्द* उणादिकिरप्रत्ययान्तः । "सात्पदाद्योः" (पा०सू० ८-३-१११) इति निषेधे प्राप्ते इदम् । 'अन्तरङ्गानपि' इति न्यायेनावादितः* पूर्वं लुक्प्राप्त्या "हलदन्तात्" (पा० सू० ६-३-९) इत्यस्याप्राप्तेराह-वचनादेवेति । हृदिस्पृगिति । *"अलुग्विधेर्ज्ञापका-

---

वार्त्तिकम् । वारद्वयमस्योपादानात् । "पूरणे" इत्येतावन्मात्रस्य वार्त्तिकत्वे आत्मनश्चेत्यस्य पुनरुपादानं व्यर्थमेव स्यात् । नन्वेवमात्मन इत्यस्य वैयाकरणाख्यायामित्यत्र सम्बन्धो न स्यादत आह-*वैयाकरणेत्यादि* । *वार्तिकस्थस्यैवेति* । वार्तिकस्य सूत्रशेषत्वादिति भावः । वार्त्तिकस्थपदस्याननुवृत्तिमभिप्रेत्याह-*यद्वेति* । *एकं सूत्रमिति* । "वैयाकरणाख्यायाश्चतुर्थ्याः परस्य च" इत्येकं सूत्रङ्कर्त्तव्यमित्यर्थः । तत्र चकारेण प्रकृतिसमुच्चायकेनात्मन इत्यस्य सम्बन्धो भविष्यति । *परप्रतिद्वन्द्वितया=वैयाकरणाख्यायां यः परशब्दस्तत्प्रतिद्वन्द्वितया । यथा परशब्दस्य वैयाकरणीया आख्या परस्मैपदमिति तत्सम्पादकत्वं तथा तादृशी या आख्या आत्मनेपदमिति तत्सम्पादकत्वमात्मन्शब्दस्येत्येककार्यसम्पादकत्वेन प्रतिद्वन्द्वित्वम्पण्डितयोरिवेति भावः । "आत्मनश्च इतिसूत्रे तृतीयापदमनुवर्त्तते । सा च तृतीया प्रथमार्थे द्रष्टव्या, अन्यार्थे च । "अन्यार्थे चैषा तृतीया द्रष्टव्या आत्मा पञ्चमोऽस्य; आत्मनापञ्चम" इतिभाष्यात् । यद्यपि अनुदात्तङित आत्मनेपदम्, "शेषात्कर्त्तरि परस्मैपदम्" इतिनिपातनादेवानयोः सिद्धिस्तथापि व्याकरणान्तरीया या आख्या आत्मनेभाषापरस्मैभाषा इति तत्सङ्ग्रहार्थमिदं सूत्रम् । भाष्ये तथैवोदाहरणात् ।

*उचितमिति* । "चतुर्थी" इतियोगविभागस्य भाष्येऽदर्शनात् ।

उणादिप्रत्ययान्तानां व्युत्पन्नत्वाभिप्रायेणाह-*स्थिरशब्द इति* । *अवादितः=अवादेशात्प्राक् । *अलुग्विधेरिति* । "हृद्द्युभ्याञ्च" (का० वा०) इति वार्त्तिकमपि संज्ञायाम्प्रवर्त्तते । न चैवं "हलदन्तात्" (पा०सू० ६-३-९) इत्ये-

त्कर्मणि सप्तमी"इति भाष्यम्। *"अमूर्धमस्तकात्"(पा० सू० ६-३-१२) इत्यनेन तु न सिद्धिस्तत्र *सञ्ज्ञायामित्यनुवृत्तेः।

कारनाम्नि (पा० सू० ६-३-१०) नामग्रहणं स्पष्टार्थम्। सञ्ज्ञायामित्यनुवृत्त्यैव सिद्धेः। *कारनाम्न्येवेति। प्राग्देशनाम्नि चेत्कारनाम्न्येवेति। इदं वृत्त्यनुसारेण। भाष्ये त्वयं नियमो नोक्तः। *अभ्यर्हितपश्वादेः सञ्ज्ञात्वमेव नेति कारनाम्नीति स्पष्टार्थमिति तदाशयः। अविशब्दात्संघाते कटच्। उरणो=मेषः। नद्यामिति। नद्युत्तारणे तात्कालिको दोहः=कार इत्यर्थः। वणिक्-पशुपाल-कर्षकेभ्यो राजग्राह्यो भागः करः, स एव कारः। *हलादावित्यादिग्रहणं स्पष्टार्थम्। तत्र यूथपश्वादय उदग्देशे काराः, हले द्विपदिकादयोऽविकटोरणश्च प्राग्देशे। प्राचामेवेति नियमोऽपि *कैयटाद्यनुसारेण। *भाष्ये तु-पूर्वेण नित्ये प्राप्ते *कारनाम्नि प्राचामिति विकल्पार्थम्, तेन मुकुटेकार्षापणं मुकुटकार्षापणमित्याद्युभयम्, हलादाविति योगविभागेन नियमार्थम्, तेनाजादौ लुगेव; इति स्थितम्। "कारनाम्नि *वावचनार्थं चेदजादावतिप्रसङ्गः। नैष दोषः। योगविभागात्सिद्धम्। कारनाम्नि च प्राचाम्, ततो हलादौ। इदमिदानीं किमर्थम्?, नियमार्थम्। हलादावेव कारनाम्नीति-अविकटोरणः" इति हि भाष्यम्॥

---

य सिद्धेऽस्य वैयर्थ्यमिति शङ्क्यम्। हृदयं स्पृशतीत्यर्थे द्वितीयाया एव प्राप्त्या सप्तम्यर्थं सप्तम्यनुवादस्यावश्यकत्वात्। तथा चालुगर्थसप्तम्या उद्देश्यत्वं वक्तव्यमित्यनुवादसामर्थ्यात्सप्तमीति भावः। वस्तुतस्तु "हृद्द्युभ्याम्"(का० वा०) इति वार्त्तिके संज्ञायामिति न सम्बध्यते, सूत्रस्यालुक्प्रकरणे पाठसामर्थ्यादित्याशयेनाह-*अमूर्द्धेति*। *संज्ञायामित्यनुवृत्तेरिति*। मण्डूकप्लुत्याऽत्र संज्ञायामित्यनुवर्त्तत इति भावः।

*कारनाम्नि* (पां०सू० ६-३-१०)। अत्र सूत्रे नियमत्रयं वृत्त्यनुसारेणोक्तं, तदाह-*कारनाम्न्येवेतीति*। कर एव कारः,स्वार्थिकोऽत्राण्। तृतीयनियमाभावेऽप्यतिप्रसङ्गं वारयति-*अभ्यर्हितपश्वादेरिति*। तदादिविधिनैव सिद्धे हलादावित्यत्रादिग्रहणमदृष्टार्थमित्याह-*हलादावित्यादीति*।*कैयटाद्यनुसारेणेति*। तेन हि प्राचामेवेति नियमादुदीचां कारेऽलुङ्निवर्त्यत इत्युक्तम्। *भाष्ये त्विति*। स्थितमित्यत्रान्वयः। तदेव भाष्यमाह-*कारनाम्नीति*। *वावचनार्थमिति*। इदं प्राचामित्युपादानेनोदीचामित्यर्थकल्पनया फलितार्थकथ-

"बन्धे च" (पा० सू०६-३-१३) ॥ उत्तरसूत्रस्थतत्पुरुषपदमिहापकृष्यते, बन्ध इति घञन्तम् । *अन्यत्र "नेन्सिद्ध"(पा० सू० ६-३-१९) इति निषेधः । स्पष्टं चेदं सर्वं भाष्ये ।

बहुलग्रहणेनैव सिद्धे हलदन्तादित्यनुवृत्ति*र्व्यर्थेति ध्वनयन्नाह–क्वचिन्न–कुरुचर इति । *अत एव गोषुचरः सिद्धः ॥

"विभाषा वर्ष"( पा० सू० ६-३-१६ )॥ लिङ्गविशिष्टग्रहणाद्वर्षासुजोऽपि ॥

"घकाल" ( पा० सू० ६-३-१७ ) ॥ घशब्देन तरतमौ । कालेति *स्वरूपग्रहणम् । तनः=सतुक्ट्युट्युलौ । पूर्वाह्णेतरे इति । *प्रकृत्यर्थप्रकर्षविवक्षया द्रव्यप्रकर्षसत्त्वादाम्न कृतः । "सायंचिरम्"(पा० सू०४-३-२३)इति सूत्रभाष्ये–"प्राह्णप्रगयोरेदन्तत्वनिपातनं व्यर्थमलुका सिद्धेः" इत्याशङ्क्य "यदा सप्तम्यन्या विभक्तिः प्राह्णः सोढो यस्येत्यर्थे तद" इत्युक्तेर्विभाषेत्युक्तिर्वृत्त्यनुरोधेनेति बोध्यम् । "विभाषा पूर्वाह्णा"(पा०सू० ४-३-२४)इति सूत्रे दोषातनमित्यादौ "अव्ययात्"इति लुकोऽनेनालुक्माशङ्क्य "समानकालस्य प्रत्ययनिमित्तलुक एवायमलुक् अव्ययादिति त्वन्तरङ्ग" इति समाधानपरभाष्यादत्र *सूत्रे हलदन्तादित्यस्याननुवृत्तिः । *अतिप्रसङ्गस्त्वनभिधानान्नेति बोध्यम् ॥

अपो योनि ॥ यन्मतुर्ष्विति । अयं पाठो हरदत्तानुसारेण । मतिष्विति युक्तः पाठः* । एकत्वेत्यस्या*तिप्रसङ्गव्याजेनाप्सुचरादिवदस्य

---

नम् । *अन्यत्र=चक्रबन्ध इत्यत्र । चक्रे बन्धोऽस्येति व्यधिकरणपदोऽत्र बहुव्रीहिः ।

*अनुवृत्तिरिति* । तत्पुरुषे इतिसूत्र इत्यादिः । *अत एव=हलदन्तादित्यस्याननुवर्त्तनादेव ।

*स्वरूपग्रहणमिति* । तनशब्दसाहचर्यात् । *प्रकृत्यर्थप्रकर्षेति* ॥ सप्तमीप्रकृत्यर्थस्य प्रकर्षविवक्षयेत्यर्थः । *सूत्रे इति* । "घकाल" ( पा० सू०-६-३-१७ ) इति सूत्र इत्यर्थः । अननुवृत्तिरित्यत्रान्वयः । *अतिप्रसङ्ग इति* । परिनिष्ठितविभक्त्या समासे घटीकाले स्थितिरस्येत्यत्रातिप्रसङ्ग इत्यर्थः ।

*युक्तः पाठ इति* । आधुनिकभाष्यपुस्तके क्वचिन्मतिष्विति पाठस्याप्सुमतिरित्युदाहरणस्य च दर्शनात् । प्राचीने तु नैवंविधः पाठः । वस्तुतस्तु'अपो योनि'इति नापूर्वं वचनङ्किन्तर्हि बहुलग्रहणं "तत्पुरुषे कृति"( पा० सू० ६-३-१४)इतिसूत्रे कृतं, तद्बलादयमर्थो लभ्यते ।

भाष्ये उपन्यासात् । *न ह्यप्सुमन्तावित्यत्र *तस्य प्रसङ्गोऽस्ति । शब्दपर-

---

क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव ।
विधेर्विधानं बहुधा समीक्ष्य चतुर्विधम्बाहुलकं वदन्ति ॥

इत्यभियुक्तोक्तेः । न केवलमभियुक्तोक्तिरेवात्र प्रमाणङ्किन्तु भाष्यका-रोक्तिरप्यत्र मानम् । तथाहि-"तत्पुरुषे कृति" ( पा० सू० ६-३-१४ ) इतिसूत्र-भाष्ये "बहुलमकर्मधारये । बहुलमकर्मधारय इति वक्तव्यम् । इह मा भूत्— परमे कारके, परमकारके इति । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । बहुलवचनान्न भविष्यति । अथ किमर्थं लुगलुगनुक्रमणं क्रियते, न, तत्पुरुषे कृति बहुलमि-त्येव सिद्धम् । लुगलुगनुक्रमणम्बहुलवचनस्याकृत्स्नत्वात् । लुगलुगनुक्रमणं क्रियते अकृत्स्नम्बहुलवचनम्" इति । अकृत्स्नम्=अकृत्स्नकारि । न हि बहु-लग्रहणमात्राल्लुगलुकोः क्वचित्प्रवृत्तिरिति विषयविभागः परिज्ञातुं शक्यः । एवञ्च मन्दबुद्धीनामनुग्रहाय लुगलुगनुक्रमणमिति भावः । तत इतरेण।पूर्ण-त्वमकृत्स्नत्वमित्यभिप्रायेण शङ्कितम् "यद्यकृत्स्नं बहुलवचनं, यदनेन कृतम-कृतं तत्" । एवं शङ्कायाम् "एवं तर्हि न ब्रूमोऽकृत्स्नमिति,कृत्स्नञ्च कारकं च साधकञ्च निर्वर्तकञ्च यदनेन कृतं सुकृतन्तत्" । कृत्स्नम्=परिपूर्णम्, व्यापकमि-त्यर्थः । कृत्स्नशब्दस्यावयवकात्स्न्र्येऽपि वृत्तेस्तादृशत्वशङ्कानिवारणायाह—कार-कमिति । कृत्स्नकार्यकारि इत्यर्थः । ननु कारकमपि प्रारब्धस्यान्तागमनात् प्रति-बन्धकसद्भावादकृत्स्नं स्यादत आह—साधकं चेति । साधकमपि कदाचिदसाम-र्थ्यादकृत्स्नं स्यादत उक्तन्निर्वर्तकञ्चेति । सर्वदा सर्वं कार्यं निष्पादयतीत्यर्थः । एतेन क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषेत्येतावदुक्तम् । तत उक्तम्"उ-दाहरणभूयस्त्वात्"इति । भूयांस्युदाहरणानि प्रपञ्चेन ज्ञाप्यन्त इत्यर्थः । "ते वै खल्वपि विधयः सुपरिगृहीता भवन्ति येषां लक्षणं प्रपञ्चश्च । केवलं लक्षण-ङ्केवलः प्रपञ्चो वा न तथा कारकं भवति । अवश्यं खल्वप्यस्माभिरिदं वक्तव्यं बहुलमन्यतरस्यामुभयथा एकेषामिति । सर्ववेदपारिषदं हीदं शास्त्रम् । तत्र नैकः पन्थाः शक्य आस्थातुम्" इत्युक्तम् । सर्ववेदपारिषदं=सर्ववेदसाधारणम्, न प्रातिशाख्यवत्तत्तच्छाखामात्रसम्बन्धि । लौकिकानाञ्च शब्दानामनेन व्यु-त्पादनादिदं ततोऽप्यधिकम् । अत्र सर्ववेदशब्दस्य पारिषदशब्देनावयवद्वार-कसम्बन्धे षष्ठ्यन्तस्य समासः । पारिषच्छब्दश्च वेदाध्येतृसङ्घपरः । नैकः पन्था इत्यनेन क्वचिदन्यदेवेत्यपि सूचितमिति । *अतिप्रसङ्गव्याजेनेति* । "पञ्चम्याः स्तोकादिभ्यः"(पा० सू० ६-३-२)इति सूत्रस्यातिप्रसङ्गनिवारणाय "अलुगुत्तरपदे"(पा०सू०६-३-१)इतिसूत्रे वार्त्तिककृतोक्तम्-"एकवच्च । एकव-च्चालुग् भवतीति वक्तव्यम् । किं प्रयोजनम् ?। स्तोकाभ्यां मुक्तः स्तोकेभ्यो मुक्त इति विगृह्य स्तोकान्मुक्त इति यथा स्यात् । एकवद्भावश्चानर्थकः । द्विबह्वोरलुक-स्मान्न भवति ? । द्विबहुष्वसमासः । किं वक्तव्यमेतत् । न हि । कथमनुच्यमानं गंस्यते ? । उक्तं वा । किमुक्तम् ? । अनभिधानादिति । तच्चावश्यमनभिधानमाश्र-

तया *तस्यैकत्वगात्रार्थत्वात् । किं च मतुब्विति पाठे फलं चिन्त्यम् । अस्यवामीयमित्यादाविव*लुकोऽप्राप्तेः । चक्रबद्ध इति । सप्तम्यन्तेन निष्ठान्तस्य "साधनं कृता" इति समासः ॥

"इथे च" (पा० सू० ६-३-२०) ॥ अयं निषेधो ऽनन्तरस्येति न्यायात् "तत्पुरुषे कृति" (पा०सू०६-३-१४) इत्यस्यैव । *अत एवामूर्द्धमस्तकाद्स्वाङ्गादकामे'' (६-३-१२) इत्यलुकि कण्ठेस्थः कालो यस्येति "अनेकम्" (पा० सू० २-२-२४) इति सूत्रस्थभाष्यप्रयोगः सङ्गच्छते ।

पश्यतोहर इति । पश्यन्तमनादृत्येत्यर्थः । "षष्ठी चानादरे" (पा० सू०२-३-३८) ॥ इति षष्ठी । *देवानामिति । *मूर्खाणामित्यर्थः । मूर्खश्च मूर्खप्रिय एवेत्यजेर्वीत्यत्र कैयटः ।

निन्दायामिति ॥ आक्रोश इत्यनुवृत्त्या लब्धमिदम् । *स्पष्टश्चेदम् "आनङ् ऋत" (पा० सू० ६-३-२५) इत्यत्र भाष्ये । एवञ्चारम्भसामर्थ्यादेव विकल्पे सिद्धे ऽन्यतरस्यामिति स्पष्टार्थम् ।

---

यितव्यम् । एकवद्वचनं हि गोषुचरेऽतिप्रसङ्गः । एकवद्वचने हि गोषुचरेऽतिप्रसङ्गः स्यात् । गोषुचरः । वर्षाभ्यश्च जे । वर्षाभ्यश्च जेऽतिप्रसङ्गो भवति—वर्षासुजः । अपो योनियन्मतिषु च । अपो योनियन्मतिषु चोपसङ्ख्यानं कर्तव्यम् । जे चरे च । अप्सुयोनिः । अप्सव्यः । अप्सुमतिः । अप्सुजः । अप्सुचरः" । एष्वतिप्रसङ्गः ।जेनास्यापोयोनीत्यस्योपन्यासात् । स्तोकाभ्यां मुक्त इत्यत्रातिप्रसङ्गस्तु द्विवचनबहुवचनयोरुत्पत्तिमभ्युपेत्य । यदि तु पूर्वोक्तरीत्या तदनुत्पत्तिरेव कल्प्यते तदा नायमतिप्रसङ्गः । अत्र व्याजेनेति यत्तत्स्पष्टयति— *न ह्यप्सुमन्ताविति* । *तस्य—एकवद्भावस्य । *तस्य—अप्सुमच्छन्दस्य । * लुकोऽप्राप्तेरिति* । अनुकरणत्वेन "सुपो धातुप्रातिपदिकयोः" इत्यस्याप्राप्तेरित्यर्थः ।

*अत एव—अनन्तरस्येतिन्यायसञ्चारादेव । * देवानामितीति * । यद्यपि भाष्ये मूर्खपदन्न दृश्यते तथापि तत्रैव बहुशः प्रयोगस्य दर्शनादेवमुक्तम् । इदञ्च वचनं मनोरमायां मूर्खा हि देवानाम्प्रीतिञ्जनयन्ति देवपशुत्वादिति यद्यपि व्याख्यातम् , तथाप्यन्यादृशमप्यस्य व्याख्यानं सम्भवतीति तदभिप्रायेणाह— *मूर्खाणामिति* ।

*स्पष्टञ्चेदमिति* "आनङ् ऋतो द्वन्द्वे" (पा० सू० ६-३-२५) इति सूत्रघटक ऋत इति शब्दो द्वन्द्व इत्यस्य विशेषणमिति पक्षे "ननु चोक्तम्—ऋकारान्तानां द्वन्द्वे पुत्र उपसङ्ख्यानमिति । नैष दोषः । पुत्रग्रहणमपि प्रकृतमनुवर्त्तते । क्व प्रकृतम् । पुत्रेऽन्यतरस्यामिति । यदि तदनुवर्त्तते विभाषा स्वसृपत्योः पुत्रे चेति पुत्रेऽपि विभाषा प्राप्नोति । नैष दोषः । सम्बन्धमनुवर्त्तिष्यते । षष्ठ्या आक्रोशे । पुत्रेऽन्यतरस्याम् । षष्ठ्या आक्रोशे । आनङ् ऋतो द्वन्द्वे

पितुः पुत्र इति । *प्रख्यातात्पितुरुत्पन्न इत्यर्थः । तत्पूर्वेति । *विद्यायोनिसम्बन्धवाचकान्यतरपूर्वोत्तरपदक इत्यर्थः । तेन होतुः पुत्र इत्यादि सिद्धम् ।

मातुःपितुर्भ्यामिति *रेफान्तानुकरणम् । *विसर्गादावप्येकदेशविकृतन्यायेन तत्त्वम् ॥

इत्यलुक्समासः ॥

"घरूप" (पा० सू० ६-३-४३) ॥ घशब्देन तरतमौ । प्रत्ययेऽविति । *लेखग्रहणेनोत्तरपदाधिकारे(१)प्रत्ययग्रहणे तदन्ताग्रहणज्ञापनादिति* भावः । ननु बिम्बीबदरीआमलक्यादयो भाषितपुंस्का इति "न पदान्त"(पा० सू० १-१-५८) सूत्रस्थभाष्या*ल्लभ्यते इत्यरुचेराह—कुवलीति ॥

"नद्याः शे" (पा० सू० ६-३-४४) ॥ भाषितपुंस्कादितीह न सम्बध्यते, तदाह—स्त्रीतरेति ।

---

पुत्रग्रहणमनुवर्त्तते । षष्ठ्या आक्रोश इति निवृत्तम्" इति ।

ननु पितुः पुत्र इत्यपुष्टार्थम् । यो हि पुत्रः स पितुरेव भवतीत्यत आह—*प्रख्यातात्पितुरिति* । विशेषणसामर्थ्यात्पितृशब्दोऽत्र प्रख्यातपितरि लाक्षणिक इति भावः । * विद्यायोनीति * । विद्यासम्बन्धयोनिसम्बन्धवाचकयोरन्यतरस्य यत्र पूर्वपदत्वमुत्तरपदत्वञ्च तत्रैवास्य प्रवृत्तिरित्यर्थः । *रेफान्तानुकरणमिति । यदि सान्तस्यानुकरणं क्रियते तदा मातुःष्वसेत्यत्र विसर्गपक्षे न स्यात् । विसर्गान्तस्यापि नानुकरणम् । तथा सति वा शर्[illegible]सूत्रनिष्पन्नविसर्गस्यैव ग्रहणमिति सम्भावना स्यात् । पितुर्भ्यामितिरूपासिद्धिश्चेतिं भावः । ननु रेफान्तानुकरणे विसर्गपक्षे कथमत आह—*विसर्गादाविति* ।

इत्यलुक्समासः ।

घादीनाम्प्रत्ययत्वात्तदन्तविधिशङ्कावारणायाह— *लेखग्रहणेनेति* । "हृदयस्य हृल्लेख" ( पा० सू० ६-३-५० ) इत्यत्र यल्लेखग्रहणन्तेनेत्यर्थः । यदि प्रत्ययग्रहणे तदन्तग्रहणं स्यात्तदाऽण्ग्रहणेनैव सिद्धे लेखग्रहणं न कुर्यात् । न च घञन्तलेखेत्यस्य प्रयोगघटकत्वं यत्र तत्राप्यादेशार्थं लेखग्रहणमस्त्विति वाच्यम् । लेखग्रहणस्योक्तार्थज्ञापकत्ववर्णनपरभाष्यप्रामाण्येन घञन्तलेखशब्दोत्तरपदकहृदादेशपूर्वपदकस्य प्रयोगस्यानभिधानात् । *ज्ञापनादिति* । भाष्यकृतेतिं शेषः । *नपदान्तसूत्रस्थभाष्यादिति* । तत्र हि "लुकि किमुदाहरणम् ?, बिम्बम् , बदरम् । नैतदस्ति । पुंवद्भावेन सिद्धम् । इदं तर्हि आमलकम्" । अत्र हि "वृद्धसंज्ञावत्त्वात्तत्त्वं मयटि नास्तीति पुंवत्त्व-

---

( १ )मुद्रितपुस्तके 'क्वचित् प्रत्ययग्रहणे 'इति पाठः ।

उगितः परेति । विहितेति शेषः । *तेनेषुमतोऽपत्यं स्त्री ऐषुमती, ततस्तरे ऐषुमतितरेत्यत्र *नित्यं ह्रस्व इति "युवोरनाकौ"(पा० सू० ७-१-१)इत्यत्र भाष्ये स्पष्टम् । पञ्चमीसमासेनाचः परस्मिन्निति स्थानिवत्त्वेन व्यवधानं तु न । बहिर्भूततरनिमित्तस्य ह्रस्वस्य स्थानिवत्सूत्रदृष्ट्या*ऽसिद्धत्वेन* तत्र तदप्रवृत्तेः । निर्मूलमिति । *न हि स्वयमप्रवर्त्तमानोऽपि ह्रस्वः पुंवत्त्वं पूर्वं बाधते इति न्याय्यमिति भावः । *शमिनीतरेति घिनुण्सूत्रभाष्यप्रयोगे तु ताच्छीलिकानां रूढिशब्दतया सञ्ज्ञाशब्दतया "सञ्ज्ञापूरण्योश्च"इति निषेधान्न दोषः ।

ज्ञापकमिति । उत्तरपदं विशेष्यं कृत्वा तदन्तविधिर्नेत्यर्थः *एवञ्च तदंशे उत्तरपदे इत्यस्यासम्बन्ध इति बोद्ध्यम् । हृच्छब्देन* सिद्धे हृदयलेख इत्यादिनिवृत्त्यर्थमिदम् ।

सौहार्द्यमिति । ब्राह्मणादित्वात् ष्यञ् । "हृद्भगसिन्ध्वन्ते"(पा० सू० ७-३-१९)इत्युत्तरपदवृद्धिः । प्रपञ्चार्थमिति । *प्रयोगद्वयमेष्वेवान्यत्र हृदयशब्द एवेति व्यवस्थार्थमिति भावः ।

"पादस्य पदा"( पा० सू० ६-३-५२ ) ॥ उत्तरसूत्रे पद्ग्रहणात्पदेत्यदन्तं लुप्तविभक्तिकं; तदाह-अदन्त इति । पादशब्दस्य "स्वाङ्गशिटाम्"(शान्त० सू०) इत्याद्युदात्तत्वेऽप्यय*मन्तोदात्तो निपातनात्* ।

पद्या इति । "विध्यत्यधनुषा"(पा०सू० ४-४-८३)इति यत् । पाद्ये

---

स्याप्राप्तिः" इति कैयटेनोक्तम् । अत्र पुंवद्भावेन सिद्धमित्युपादानाद्भाषितपुंस्कत्वं स्पष्टतयैव लभ्यते इति ।

*तेन=विहितेतिव्याख्यानेन । *नित्यं ह्रस्व इति* । घरूपेति नित्यं ह्रस्व इत्यर्थः । अण्णन्तात्स्त्रीप्रत्ययविधानेन नद्या उगितोऽविधानादिति भावः । *असिद्धत्वेन=बहिरङ्गपरिभाषयाऽसिद्धत्वेन । निर्मूलत्वे हेतुमाह—*न हीति* । ननु यदि न पुंवत्त्वबाधस्तदा शमिनीतरेतिभाष्यप्रयोगस्य कथमुपपत्तिरत आह—*शमिनीतरेतीति* ।

*एवञ्च=तदंशे तदन्तविध्यभावसिद्धौ च । हृच्छब्दस्य स्वतन्त्रस्य सत्त्वेऽप्यादेशविधानस्य प्रयोजनमाह—*हृच्छब्देनेति* ।

प्रपञ्चं स्पष्टयति—*प्रयोगद्वयेति* ।

*अयम्=पूर्वसूत्रविहितः पदित्यादेशः । *निपातनादिति* । पदञ्चाजिशब्दस्येण्णन्तत्वेनान्तोदात्तत्वेन पदाजिरित्यत्र व्युत्पत्तिपक्षे कृदुत्तरपदप्रकृतिस्वरेऽपि सतिशिष्टस्य पदशब्दसम्बन्धिन उदात्तत्वस्य बलवत्त्वात्

"पादार्घाभ्यां च"(पा० सू० ५-४-२५)इति यत्। अत्र पादशब्दः प्राण्यङ्गवाच्येव व्याख्यानात्*। इके इति। पर्पादिषु पादः पच्चेत्यनार्षम्*।

पत्काषीति। "सुप्यजातौ"(पा० सू० ३-२-७८)इति णिनिः। पद्धतौ कर्मणि क्तिन्॥

"ऋचः शे"(पा० सू० ६-३-५५)॥ अत्र *चतुर्थांशवाचिपादग्रहणम्॥

"उदकस्योदः" (पा० सू० ६-३-५७)॥ *प्रसन्नोदं सर इति त्वसाध्वेव। उदकपर्यायोदशब्दाङ्गीकारे एकहलादावित्यस्य वैयर्थ्यम्।

समुद्रं त्विति। सञ्ज्ञात्वादिति भावः॥

"एकहलादौ" (पा० सू० ६-३-५९)॥ सञ्ज्ञायान्तु* पूर्वविप्रतिषेधेन नित्यमेव। *एकशब्दोऽसहायवाची। सहायश्च तुल्यजातीयो हलेव *व्यवच्छिद्यत इति बोद्ध्यम्। *प्रसिद्धत्वादेकशब्दः संख्यावाच्येव। सर्वस्यापि शब्दस्यैकहलादित्वात्सामर्थ्येनैकं हलमुच्चार्य यत्राजुच्चार्यते तत्रैवैतत्प्रवृत्तिरिति भाष्ये स्पष्टम्। असहायवाची तु आक्विन्निमात्रविषय इति तद्भावः। पूरयितव्यं=पूरणार्हम्।

शुक्लीभाव इति। "ऊर्यादिच्वि"(पा० सू० १-४-६१) इति निपातत्वेऽव्ययत्वम्। उवङ्भावितत्वान्निषेधे* प्राप्ते आह—अश्रु इति॥

---

"स्वरितो वा"(पा० सू० ८-२-४६)इति पाक्षिकं स्वरितत्वं स्पष्टम्।

*व्याख्यानादिति*। पूर्वस्मिन् "पादस्य पदाज्याति"(पा० सू० ६-३-५२)इतिसूत्रे आज्यादिषु प्राण्यङ्गस्यैव सुप्रसिद्धत्वेनार्थाधिकारानुरोधात्प्रकृते "पद्यत्यतदर्थे"(पा० सू० ६-३-५३) इत्यत्रापि प्राण्यवयवस्यैव ग्रहणमित्येतन्मूलकव्याख्यानादित्यर्थः। तेन द्वाभ्याम्पादाभ्यां क्रीतमित्यर्थे "पणपादमाष"(पा० सू० ५-१-३४)इति यति पदादेशो नेति भावः। *अनार्षमिति*। प्रकृतवार्त्तिकेन सिद्धेः।

*चतुर्थांशवाचीति*। प्राण्यवयवस्यासम्भवात्।

ननु यदि संज्ञायामेवोदादेशस्तर्हि यौगिकस्य प्रसन्नोदं सर इत्यस्य का गतिरत आह-*प्रसन्न इति*।

*पूर्वविप्रतिषेधेनेति*। यदा पूरयितव्यस्य उदपानमितिसंज्ञा तदा पूर्वविप्रतिषेधेन"उदकस्योदः"इत्येव प्रवर्त्तते। "न वेतिविभाषा" (पा०सू०१-१-४४) इतिसूत्रभाष्ये एकहलादावितिसूत्रस्याप्राप्तविभाषात्वस्वीकारादिति भावः। प्राचीनरीत्या सूत्रं व्याचष्टे-*एकशब्द इति*। *व्यवच्छिद्यत इति*। एकशब्दार्थघटकतयेति शेषः। भाष्यानुसारेणाह—*प्रसिद्धत्वादिति*।

*निषेध इति*। वार्त्तिकेनेत्यादिः।

"एकत"(पा० सू० ६-३-६२) ॥ *एकशब्दान्त्यस्य ह्रस्व इत्यर्थेन पुंनपुंसकयोर्विशेषाभावादाह—एकस्या इति ।

रेवतिपुत्र इति संज्ञा । छन्दस्याह—अजक्षीरमिति । अजक्षीरेण जुहोतीति प्रयोगः ॥

"त्वे च" (पा०सू०६-३-६४) *सञ्ज्ञाया अभावाच्छन्दस्येवेदम् । अनुत्तरपदार्थं वचनम् ॥

"ष्यङः सं" ( पा० सू० ६-१-१३ ) ॥ *अनुबन्धद्वयोच्चारणं पाशादिभ्यो यस्य, ष्यञो, वृद्धेदिति ञ्यङश्च व्यावृत्त्यर्थम् ।

"सम्प्रसारणस्य"(पा०सू०६-३-१३९) "ढ्रलोपे"(पा०सू० ६-३-१११)इत्यतो दीर्घ इत्यनुवर्त्तते । उत्तरपदे इत्यधिकारः । *हल इत्यनेन तु नात्र दीर्घः । संप्रसारणात्पूर्वस्य हलः सम्प्रसारणनिमित्तनिरूपिताङ्गावयवत्वाभावात् । प्रत्यासत्त्या तादृशाङ्गावयवस्यैव तत्र ग्रहणात् । *अत एव निरुतमित्यादौ न सः । कुमुदगन्धेरपत्यं स्त्रीत्यर्थेऽणो "अणिञोः"(पा०सू० ४-१-७८)इति ष्यङि यङश्चाप् । पूर्वान्तवत्त्वेन ष्यङन्तत्वात्संप्रसारणे पूर्वत्वे चाल्विधावपि दीर्घविधिसामर्थ्यात्स्थानिवत्त्वेन सम्प्रसारणत्वाद् दीर्घः । ह्रस्वो नेति । "इको ह्रस्वः"(पा० सू० ६-३-६१)इत्यनेन प्राप्तः । *परे तु *ग्रामणिकुलमित्यत्र "इकः"इति ह्रस्वस्यावकाशः, ह्रस्वस्य वैकल्पिकत्वेनाभावे कारीषगन्धीपुत्र इत्यादौ सम्प्रसारणस्येति सावकाशं, ह्रस्वप्रसङ्गे उभयप्राप्तौ परत्वात्संप्रसारण*दीर्घत्वमेवेत्यत्रैव भाष्ये स्पष्टमित्याहुः । अतिकारीषेति । "अत्यादयः"(का० वा०) इति समासे षष्ठीतत्पुरुषे ष्यङन्तं न पूर्वपदमिति भावः ।

---

"एकतद्धित"(पा० सू० ५-३-६२) । अत्रैक इति लुप्तषष्ठ्यन्तम् । सूत्रारम्भस्य प्रयोजनमाह—*एकशब्दान्त्यस्येति* । संज्ञाच्छन्दसोरित्यस्यानुवृत्तावपि त्वन्ता संज्ञा न प्रसिद्धेत्यत आह—*संज्ञाया इति* ।

*अनुबन्धेति* । अनुबन्धानुच्चारणे यस्य, ङकारानुच्चारणे ष्यञः, षकारानुच्चारणे ञ्यङो ग्रहणं स्यादिति बोध्यम् ।

हल इतिसूत्रेणान्यथासिद्धिम्परिहरति—*हल इत्यनेनेति* । *अत एव=प्रत्यासत्त्यांश्रयणादेव । शाच्छोरितिसूत्रभाष्यपरिगणितव्यवस्थितविभाषात्वस्यापाठात्स्वयं समाधानमाह—*परे त्विति* । *ग्रामणिकुलमिति* । ग्रामण्यः कुलमित्यर्थः । *दीर्घत्वमेवेति* । सकृद्गतिन्यायादिति शेषः ।

मातजादेश इति । स च *कबभावपक्षे एव । ननु "नद्युत" (पा० सू० ५-४-१५३)इति नित्यं कपः प्राप्तया तदभावपक्षो दुर्लभोऽत आह-कब्विकल्पश्चेति । *अयं मातजादेशो सम्बुद्धावपि कारीषगन्धी-मातरिति भाष्योदाहरणात् । बहुव्रीहावेवेति । तत्रैव* भाष्ये उदा-हरणात् । चित्त्वेति । मातच इति शेषः ॥

"इष्टकेषी"(पा० सू० ६-३-६५) ॥ *असञ्ज्ञाच्छन्दोऽर्थं वचनम् । उत्तरपदाक्षिप्तपूर्वपदं विशेष्यीकृत्य तदन्तविधिरित्याह-तद-न्तानामिति । इष्टकचिते साधनं कृतेति समासः ॥

"कारे स" (पा० सू० ६-३-७०) ॥ अरुर्द्विषदित्यतो मुमनुवर्त्त-ते । सत्यंकार इति* सत्यस्याशपथे वृत्तौ तु डाजेव । "तत्रोपपदम्" (पा० सू० ३-१-९२) । इति सूत्रेऽस्यचूव्यन्ते उपपदेऽण् भवति न वेति विचारे सापेक्षत्वान्नेति भाष्योक्त्या च्वेः प्रत्ययोत्पत्तेः पूर्व-मुत्पत्तिरित्यर्थलाभेन *तद्वदेव *ततः पूर्वं डाचः प्राप्तेः । न हि तदा मुमः प्राप्तिरुत्तरपदपरत्वाभावात् । *घञन्तेऽपि समासप्रवृत्तिकाल एव डचः प्रवृत्तिरित्याहुः । धेनुंभव्येति । मयूरव्यंसकादित्वात्समासः । *अतो भव्यस्य परनिपातः । लोकं पृणातीति विग्रहे कर्मण्यण स्यादत आह—मूलेति ॥

---

*कबभावपक्ष एवेति* । त्रयाणान्निमित्तत्वेनाश्रयणादेवेति शेषः । ननु मातुर्मातजितिवचननिष्पन्नसम्बुद्धिपरकमातजादेशानुवादेनैव सिद्धे निपातना-श्रयणमफलमत आह—*अयमिति* । * तत्रैव=बहुव्रीहावेव ।

ननु ङ्यापोरित्येव सिद्धे इष्टकेषीकामालानामिति व्यर्थमत आह—*असं-ज्ञेति* ।

*सत्यङ्कार इतीति* । शपथेऽत्र सत्यस्य वृत्तिः । तदेतदभिसन्धायाह—*सत्यस्याशपथ इति* । *तद्वदेव=च्विप्रत्ययवदेव । *ततः पूर्वम्=अणः पूर्वम् । यत्र तु कारशब्दो नाणन्तः किं तु घञन्तः, अथ च सत्यशब्दोऽशपथे वर्त्तते, तत्राप्याह—*घञन्तेऽपीति* । सत्यङ्कार इत्यस्य शपथकरणम्, शप-थकर्त्ता चार्थः । एवमगदङ्कार इत्यस्यापि विषादिप्रतिद्वन्द्विद्रव्याद्युपायकरणं वैद्यो वाऽर्थः । अस्तुंकार इत्यस्याभ्युपगमकरणं, तत्कर्त्ता वाऽर्थः । धेनुम्भव्या=भविष्यन्ती धेनुरित्यर्थः । भव्येत्यत्र "भव्यगेय" (पा० सू० ३-४-६८) इति सूत्रेण भविष्यति काले कर्त्तरि यत् । *अतः=मयूरव्यंसकादित्वादेव ।

कृतोऽसम्भवात् कृदन्त इत्यर्थ इत्यस्य सूत्रारम्भसामर्थ्याल्लेखग्रहणेन ज्ञापितं वचनमनित्यमिति कल्प्यते । आचारक्विबन्तरात्रिशब्दात्कृतः सम्भवेऽपि

"रात्रेः कृति" (पा० सू० ६-३-७२)॥ अत्र प्रकरणे(१)तदन्तविध्यभावेऽपि रात्रेः *कृतोऽसम्भवात्कृदन्त इत्यर्थः । नित्यमेवेति । स्पष्टं चेदमत्र भाष्ये* । रात्रिंमन्य इति । "आत्ममाने" इति खश्, श्यन् ॥

"सहस्य"(पा०सू०६-३-७८)॥ सादेशो निपातना*दुदात्त इति भाष्यम् । सहयुध्वेति । "सह च" इति क्वनिप्युपपदसमासः* । समुहूर्त्तमित्यन्तवचनेनाव्ययीभावः । *मुहूर्त्तादिशब्दानां कालवाचिनामेव तत्प्रतिपादके ग्रन्थे कालत्वारोपेण प्रवृत्तेः "अव्ययीभावे च" इत्यनेन न सः 'अकाल' इति निषेधात्* ।

ज्यौतिषमिति । ज्योतिष इदमित्यर्थः ॥

"द्वितीये चानु"(पा० सू० ६-३-८०) ॥ उपाख्यं=प्रत्यक्षं तद्भिन्नेऽनुमेये सहायवाचिनि उत्तरपदे इत्यर्थः । अप्रधाने सहाये द्वितीयशब्द इति हरदत्तः । सराक्षसीकेति बहुव्रीहिः । "नद्यृतश्च"(पा० सू० ५-४-१५३) इति कप् ।

---

"अभिव्यक्तपदार्था ये" इति न्यायेन तत्राप्यप्रवृत्तिरिति भावः ।

*अत्र भाष्य इति* । "रात्रेरप्राप्तविभाषाप्राप्ते नित्यो विधिः" इति । पूर्वविप्रतिषेधकल्पनयेत्यर्थः ।

*उदात्त इति भाष्यमिति* । तत्र सहशब्दस्य यः सादेशस्तस्योदात्तानुदात्तवत्सहशब्दस्य स्थाने जायमानत्वेनाऽऽन्तरतम्यात्स्वरितत्वम्प्राप्नोतीत्याशङ्क्य "सपुत्रः सभार्य इत्यत्र यः सादेशस्तस्य उदात्तनिपातनङ्करिष्यते । स निपातनस्वरः प्रकृतिस्वरस्य बाधको भविष्यति । एवमप्युपदेशिवद्भावो वक्तव्यः। स यथैव प्रकृतिस्वरम्बाधते, एवं समासस्वरमपि बाधते" इत्युक्तम् । अत्रोपदेशिवद्भावकथनेन समासस्वरप्रकृतिस्वरविषये एवं व्यवस्था । सपुत्रः सभार्य इत्यादिबहुव्रीहौ समासस्वरबाधकस्य "बहुव्रीहौ प्रकृत्या"(पा० सू० ६-२-१) इतिपूर्वपदप्रकृतिस्वरस्य प्रवृत्त्या आद्युदात्तत्वं सिध्यति । साग्नि, सेष्टि, सपशुबन्धमित्याद्यव्ययीभावे आद्युदात्तत्वस्य प्रवृत्तावपि ततः समासस्वरेऽन्तोदात्तत्वम्भवतीति बोध्यम् । *उपपदसमास इति* । कृदुत्तरपदप्रकृतिस्वरप्रवृत्त्या मध्योदात्तोऽयम् । ननु समुहूर्त्तमितिग्रन्थान्ते उदाहरणमुक्तमेव । तच्च "अव्ययीभावे चाकाले"(पा० सू० १-३-८१) इत्यनेन गतार्थम् । मुहूर्त्तशब्दस्य ग्रन्थविशेषपरतयाऽकालत्वादत आह—*मुहूर्त्तादिशब्दानामिति* । *अकाल इति निषेधादिति* । कालवृत्तिधर्महेतुकप्रवृत्तिके शब्दे नेत्यर्थादिति भावः । अत्र प्रमाणं तु "सकाष्ठम समुहूर्त्तम्" इतिभाष्यप्रयोग एव ।

---

(१) 'प्रत्ययग्रहणे तदन्तविध्यभावेऽपि' इति मुद्रितपुस्तके पाठः ।

योगो विभज्यते इति । *छान्दसमपीदमेतदर्थमेवात्रोपन्यस्तम् । विभक्ते वोपसर्जनस्येत्यतो वेत्यनुवृत्त्या व्यवस्थितविभाषाश्रयणात् समानजातीयाद्यपीत्याहुः* । योगविभागस्य *भाष्यानुक्तत्वादाह-अथ वेति । सदृशवचन इति । *अयं वृत्तिविषय एव, तदाह-तेनाय-मस्वपदेति । *तेन=सहशब्देन समासे अयं=वक्ष्यमाण इत्यर्थः । "वोपसर्जनस्य"( पा० सू० ६-३-८२ )इति सादेशः । *अत एव "विभाषोदरे" ( पा० सू० ६-३-८८ )इति चरितार्थम् । अन्यथा कर्मधारये सोदरसमानोदराभ्यां सपक्षादिवद्योगविभागेन सिद्धाभ्यां यतो रूपद्वयसिद्धौ तद्वैयर्थ्यं स्पष्टमेव । सदृशार्थकसहशब्दस्य तु*तत्र सादेशो*दुर्लभः । *अत्र पक्षे समानशब्देन समासे समानजातीयाद्येवेत्याहुः ।

ब्रह्मचारीति । "व्रते"( पा० सू० ३-२-८० )इति "सुप्यजातौ" ( पा० सू० ३-२-७८ )इति वा णिनिः । समानः स इति । तस्य*समानत्वं वेदस्य व्रतस्य वा समानत्वात् । *तस्य *तत्त्वं चाध्येतृभेदाद्व्रतभेदं *व्रतभेदं वा परिकल्प्य बोद्ध्यम् । तेन समानवेदाध्ययननिमित्तब्रह्मचारीत्यर्थः । *समानं ब्रह्म वेदाध्ययनार्थं व्रतं चरतीत्यर्थो *भाष्याल्लभ्यते ।

---

योगविभागस्य ग्रन्थकारतात्पर्यकत्वमपीत्याह—*छान्दसमपीदमिति* । *इत्याहुरिति* । काशिकाकारानुयायिनः । भाष्यसम्मतप्रकारमाह—*भाष्येति* । *अयमिति* । सदृशवचनः सहशब्दः । मूलोक्तम् "तेनायमस्वपदविग्रहः"इत्येतद्व्याचष्टे-*तेनेति* । *अत एव=योगविभागाभावादेव । *तत्र=सोदर इत्यत्र । *दुर्लभ इति* । सादृश्याप्रतीतेरिति शेषः । *अत्रपक्षे=योगविभागाभावपक्षे ।

*तस्य=ब्रह्मचारिणः । *तस्य=वेदस्य व्रतस्य वा । *तत्त्वम्=समानत्वम् । *व्रतभेदं वेति* । अत्र वाकारो व्रतस्य समानत्वात्कर्तृभेदेऽप्यभेदसम्भावनायाम् । वस्तुतस्तु वेदस्य समानत्वं विवक्षितम् । तदध्ययनार्थं यद्व्रतं तस्य समानत्वोपपादनस्य प्रकृते नोपयोग इत्याशयेनाह-*समानमिति* । *भाष्यादिति* । तत्र हि—"अत्र किं निपात्यते? । ब्रह्मण्युपपदे समानपूर्वे व्रते कर्मणि चरेर्णिनिर्व्रतलोपश्च । ब्रह्मण्युपपदे समानपूर्वे व्रते कर्मणि चरेर्णिनिः प्रत्ययो व्रतलोपश्च निपात्यते । समाने ब्रह्मणि व्रतचारी=सब्रह्मचारी" इति । "समाने ब्रह्मणि वेदे यो व्रतश्चरति स सब्रह्मचारीत्यर्थः" इति कैयटः । सूत्रे चरणशब्दः शाखावाची । चरणे समानत्वेन गम्ये इति विवक्षितम् । लोपश्चेति

"तीर्थे ये" (पा०सू०६-३-८७)॥ अकारोऽत्र विवक्षितः*। य-शब्दे विवक्षिते इत्यर्थः। निरनुबन्धकपरिभाषा तु नात्र। तीर्थान्तान्निर-नुबन्धकस्यासम्भवात्। स च प्रत्यय एव सम्भवतीति ध्वनयन्नाह—यादा-विति। समानतीर्थे इति। *सादेशेऽप्येकदेशविकृतन्यायेन* समानः तीर्थशब्दत्वम्। एवञ्च सतिशिष्टत्वाद्यत्स्वर एवोदाहरणे। *एतदर्थमेव विवक्षित इति व्याख्यातम्।

"विभाषोदरे" (पा०सू०६-३-८८)। अत्र ये इत्यनुवर्त्तते। विव-क्षितसप्तमीत्वादत्रापि सतिशिष्टतया प्रत्ययस्वर एव। अन्यथा* सादेशस्वरः स्यात्। तत्र सादेशपक्षे सोदराद्यः=समानोदरे शयित इत्यर्थे प्रथमोच्चा-रिताद्यो भवति स च सोदरात्पर इति तदर्थः। सादेशाभावे तु "समानो-दरे शयितः"( पा० सू० ४-४-१०८ )इति यत्। *सोदरोऽपीति प्रयोग-स्तु समानमुदरं यस्येत्यर्थे अथवा*युक्तरीत्या सपक्षवत्सभावे बोध्यः। "वोपसर्जनस्य"इति विकल्पात् यत्र भ्राता सहोदर इत्यपि सिद्धम्।

दृग्दृशवतुषु इति। सदृक्षास इति भाष्योदाहरणादस्य च्छान्दसत्वेऽपि स-न्दर्भशुद्ध्यर्थमिहोपन्यासः। "त्यदादिषु दृशोऽनालोचने कञ्च" "समाना-न्ययोश्च" "दृशेश्च"इति कञ्क्विन्क्सः।

दीर्घ इति। अन्त्यस्यात्वे कृते *सवर्णदीर्घ इत्यर्थः। इदं पूर्वपरान्वयि। असूर्द्दागिनि। अःसेरिति व्याख्यानेऽप्येवमेव। अकारे-णाऽऽकारस्यापि ग्रहणात्।

---

चकारेण समानशब्दस्य सभावोऽपि निपात्यत इति सूचितम्।

*विवक्षित इति*। अत एव न तदादिविधिः। ननु "समानतीर्थे वासी" ( पा० सू० ४-४-१०७ ) इतिसूत्रेण समानतीर्थशब्दात्सप्तम्यन्ताद्विधीयमानो यत्प्रत्ययः सतीर्थशब्दान्न प्राप्नोतीत्यत आह—*सादेश इति*। *एकदेशविकृ-तन्यायेन=स्थानिवद्भावेन। तेन परिच्छिन्नपरिमाणत्वेऽपि न दोषः। *एतदर्थ-मेव=सति शिष्टस्य यत्स्वरस्य प्रवृत्त्यर्थमेव।

*अन्यथा=विषयसप्तमीत्वाभावे। ननु यदि यादिप्रत्ययविवक्षायामेव सादेशस्तदा—

यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम्।
अपन्थानन्तु गच्छन्तं सोदरोऽपि विमुञ्चति॥

इति प्रयोगानुपपत्तिरत आह—*सोदरोऽपीतीति*। *उक्तरीत्या=अत्राप्य-स्वपदविग्रहेण वृत्तौ समानार्थकसहशब्दस्य प्रयोग इति भावः।

"समासेऽङ्गुलेः सङ्गः" (पा० सू० ८-३-८०)* । भीरोः स्थानं, ज्योतिषः स्तोमः, आयुषः स्तोम इत्याद्यर्थे प्रत्यासत्त्या तयोः पदयोः समासे सस्य ष इत्यर्थस्तद् ध्वनयन् प्रत्युदाहरति—ज्योतिषः स्तोम इति । *एवं हि सङ्ग इत्यादिप्रथमानिर्देश आञ्जसो भवति ।

अयम्=सुषामादिराकृतिगण इत्यर्थः । तेन*तयोर्गणसूत्रत्व-मिति सूचितम् ।

अषष्ठ्यतृतीयेति (पा० सू० ६-३-९९) । नञ्द्वयोपादानं स्पष्टार्थम् ॥

कुष्ठे बहुव्रीहिः । *इदमेव तत्पुरुषग्रहणमत्र प्रकरणेऽप्रतिपदोक्त-समासस्यापि ग्रहणं ज्ञापयति । तद्वक्ष्यति—अक्षिशब्देन बहुव्रीहिर्वेति ।

---

*सवर्णदीर्घ इति* । अस्य मुत्वस्यासिद्धत्वादित्यादि ।

*अङ्गुलेः सङ्ग इत्यादि* । आदशपूर्वोत्तरपदकसमुदाये प्रवृत्तिस्तेषाम-त्रोपादानम् । न च समासाभावे विभक्त्या व्यवधानादिणः परत्वाभावादेव षत्वाप्राप्तेः प्रत्युदाहरणासङ्गतिरिति वाच्यम् । "ज्योतिषः स्तोमः" इति न प्रत्यु-दाहरणं किन्तु ज्योतिषो=ज्योतिःशब्दात्परो यः स्तोमः=स्तोमशब्दस्तस्य व्य-पेक्षाभावेऽपि 'पश्य ज्योतिः, स्तोमस्तिष्ठति' इति समुदायघटकज्योतिः स्तोम-शब्दावयवस्य सकारस्य शर्व्यवधानेऽपि स्यादित्यत्र तात्पर्यात् । एवमेवाङ्गुलेः सङ्ग इत्यत्रापि बोध्यम् । अङ्गुलिशब्दत्वं त्वेकदेशविकृतन्यायेन । अन्ये तु "अग्नेः स्तुत्स्तोमी" "सोमः" "ज्योतिरायुषः" इत्येव सूत्रत्रयमस्तु, स्तोम इति सूत्रे अग्नेरित्यनुवर्त्तते । ज्योतिरिति सूत्रे च सोमग्रहणमनुवर्त्तते । एतेन सर्वेष्ट-सिद्धौ पुनः "ज्योतिः"इतिसूत्रे स्तोमग्रहणं यत्र स्तोमशब्दस्य ज्योतिः-शब्दात्परत्वमात्रं तत्र यथा स्यात् । निर्दिष्टपरिभाषा परत्वमात्रबोधिको-पतिष्ठते न त्वव्यवधानांशस्याप्युपस्थितिः । एवञ्चेणो व्यवधानेन परत्वेऽपि भविष्यति । अत एव ज्योतिषष्टोमोऽत्र तव न साङ्ग इत्यर्थे "षष्ठ्या आक्रो-शे"(पा० सू० ६-३-५१)इत्यलुकि समासे षत्वसिद्धिः । न च यत्र ज्योतिषां स्तोम इत्यत्रालुक् तत्रापि स्यादिति वाच्यम् । "ज्योतिरायुषः" इति सूत्रोपस्थितवि-भक्त्यतिरिक्तविभक्तिग्रहणे मानाभाव इत्याशयकल्पनात् । एवञ्च व्यपेक्षायाम-पीदम्प्रत्युदाहरणमित्याहुः । *एवं हि=अङ्गुलेः सङ्ग इत्यर्थे प्रत्यासत्त्या तयोः पदयोरिति व्याख्याने हि ।

*एतयोः=एतीत्यस्य नक्षत्रेत्यस्य चेत्यर्थः ।

ननु लक्षणप्रतिपदोक्तपरिभाषयां "कुगति"( पा० सू० २-२-१८ )इति सूत्रविहितसमासग्रहणेन इष्टस्य सिद्धिर्भविष्यतीति तत्पुरुषग्रहणं व्यर्थमत आह—*इदमेवेति* ।

कापथे "कुगति"इति समासः, "ऋक्पूः"इत्यः, "पथः संख्या" इति नपुंसकत्वम् ।

अनीषदर्थमिदम् । पूर्वविप्रतिषेधादिति । *भाष्यानुक्तमपि वृत्तिप्रामाण्यादादृतम् ।

"पृषोदरा" ( पा० सू० ६-३-१०९)। *आदिशब्दः प्रकारे। यथोपदिष्टमित्युक्तेः। उपादिष्टमिति कर्मणि क्तः। *उपदेशः=उच्चारणम्, तस्य कर्त्राकाङ्क्षायां शिष्टैरित्यध्याहारलभ्यम्। शिष्टाश्च शब्दतत्त्वसाक्षात्कारवन्तो योगिन इति *भाष्ये स्पष्टम्। *उत्तरपदाधिकारात्समासविषयमिदम्। हंस-

---

ननु पुरुषगतसामर्थ्यस्य न्यूनत्वाभिप्रायेणेषदर्थककुशब्देन समासस्तत्रापि विकल्पापत्तिवारणाय पूर्वविप्रतिषेधाश्रयणमयुक्तम् भाष्यानुक्तत्वादत आह—*भाष्यानुक्तमपीति* । वृत्तिप्रामाण्यादित्यनेन विकल्पविषये इष्टापत्तिः सूचिता ।

आदिशब्दो न व्यवस्थावाची, तथात्वे पाठादेव निपातनज्ञानसिद्धौ यथोपदिष्टमित्यस्य वैयर्थ्यापत्तिरत आह—*आदिशब्द इति* । प्रकार इत्यनेन स्वरूपतोऽस्मिन् गणेऽपठितानामपि साधुत्वसूचनाय यथोपदिष्टं शिष्टैस्तथा तेषां साधुत्वमिति सूचितम् ।प्रकृत्यर्थभूतोपदेशस्वरूपमाह—*उपदेश इति*। *भाष्ये स्पष्टमिति* । विनाऽभिनिवेशं यस्यां कस्यां चिद्विद्यायां ये पारं गतास्तेऽत्र भवन्तः शिष्टास्तादृशाश्च योगिन एवेति भावः । तादृशाश्चार्यावर्तनिवासिनः । "कः पुनरार्यावर्त्तः ? प्रागादर्शात् प्रत्यक्कालकवनात् दक्षिणेन हिमवन्तमुत्तरेण पारियात्रम्। एतस्मिन्नार्यावर्ते निवासे ये ब्राह्मणाः कुम्भीधान्या अलोलुपा अगृह्यमाणकारणाः किञ्चिदन्तरेण कस्याश्चिद्विद्यायाः पारं गतास्तत्र भवन्तः शिष्टाः"इत्युक्तम् । यथोपदिष्टमित्यत्र जातावेकवचनम् । प्रागादर्शादिति । आदर्शः=कुरुक्षेत्रे पर्वतः। कालकवनं=प्रयागः । पारियात्रो=विन्ध्यः । मनुरप्याह—

हिमवद्विन्ध्ययोर्मध्ये यत्प्राग्विनशनादपि ।
प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्त्तितः ॥ इति ।

दक्षिणेनेति । दक्षिणस्मिन्देश इत्यर्थे "एनबन्यतरस्याम्" (पा० सू० ५-३-३५) इत्येनप् । "एनपा" (पा० सू० २-३-४३) इति द्वितीया । कुम्भ्यामेव धान्यं येषाम् । ननु दम्भार्थमेव न कुम्भीधान्यत्वमित्याशयेनोक्तम्—अलोलुपा इति, लाभेच्छारहिताः। अगृह्यमाणकारणा इत्यस्य दृष्टकारणमन्तरेणैव सदाचारानुवर्त्तिनः । किञ्चिदन्तरेण=गुरूपदेशादिरूपो योऽभियोगस्तं विनापि। कस्याश्चिदित्यस्य सर्वविद्याया इत्यर्थः । अव्ययानामनेकार्थत्वात् । तयोर्बलादेव शब्दतोऽर्थतश्च प्रतिभातसर्वविद्या इत्यर्थः । उत्तरपदाधिकारात् "पृषोदरादी"(पा० सू० ६-३-१०९) इतिसूत्रं समासविषयकमिति वृद्धिमते

सिंहयोर्दृष्टान्तार्थमुपादानम्। यथा तयोरुणादित्वात्साधुत्वं तथा गूढोत्मादेः पृषोदरादित्वादित्यर्थ इत्येके। *परे तु इदन्तद्धितविषयमपि। पुराणशब्देऽनेन तलोप इति सर्वादिसूत्रे कैयटात् । एवञ्च हंसादेरुणाद्यन्तत्वेन शास्त्रान्तरोक्तस्यापि अनेन साधुत्वं, सर्पिषेत्यादौ षत्वमप्यनेनैवेत्याहुः। *दूडाशादौ रेफस्योत्वे सवर्णदीर्घः। ध्यशब्देन *प्रत्ययान्तस्य ग्रहणम्। आगन्तुनाऽकारेण *धीशब्दस्य च ग्रहणम्। तेन सर्वस्य दुर्बुद्धेरंहतिरुपद्रवो नोऽस्मान्मावधीदित्यर्थकं "मानः समस्य दूढ्यः" इति सिद्धम्। दुष्टं ध्यायतीति विग्रहे कारकपूर्वकत्वाद्यण्। *श्रुतौ तु क्प्रत्ययान्तं *ङसूस्थानिकस्वन्तन्तु न, अन्तस्वरितासङ्गतेरिति दिक्।

"संहितायाम्" (पा० सू० ६-३-११४)॥ *एतत्फलं द्व्यचास्तिङन्तस्यातो दीर्घः स्यादित्यर्थकेन "द्व्यचोऽतस्तिङः" (पा०सू०६-३-१३५) इत्यनेन "विद्मा हित्वा गोपतिं शूरगोनाम्" इत्यत्र संहितायामिव विद्महित्वेति पदकाले न दीर्घः। एतदधिकारस्थान्यशास्त्राणान्तु*त्तरपदाधिकारात्समास एव प्रवृत्त्या तत्र च संहिताया नित्यत्वान्न तेष्वस्याधिकारस्य फलमिति बोध्यम्।

"कर्णेलक्षणस्य" (पा० सू० ६-३-११५)॥ यत् पशूनां स्वामिविशेषसम्बन्धज्ञानार्थं दात्राकारादिचिन्हं क्रियते तदिह लक्षणम्। तेन लम्बकर्णसिद्धिः। अष्टकर्ण इत्यादेरष्टसंख्यलिपिचिह्नकर्ण इत्यादिरर्थः, तत्संख्यरेखाचिह्नकर्ण इति वा।

मर्माविदिति। व्यधेः "ग्रहिज्या" इति संप्रसारणम्। सा च

---

आह—*उत्तरेति*। स्वमतमाह—*परे त्विति*। "उणादयः" (पा० सू० ३-३-१) इतिसूत्रस्यैव प्रपञ्चत्वमिति भावः। मूल उक्तं स्वयमाह—*दूडाशादाविति*। दुःखेन दाश्यते=नाश्यते दभ्यते इत्यर्थे त्रिभ्यः खल् दम्भेर्नकारस्य निपातनादेव लोपः। *प्रत्ययान्तस्येति। "आतश्चोपसर्गे" (पा० सू० ३-१-१३६) इतिकान्तस्य। *धीशब्दस्य च ग्रहणम्=तन्त्रेण वार्त्तिके ग्रहणम्। प्रयोगे तु ङसन्तस्य प्रयोगः। तत्र कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तस्य दुर्धीशब्दस्य यणादेशे "उदात्तस्वरितयोः (पा. सू. ८-२-४) इतिसूत्रेण ङसोऽकारस्य स्वरितत्वेऽन्तस्वरितत्वं सिध्यति। श्रुतौ क्प्रत्ययान्तस्य ग्रहणशङ्कां वारयति-*श्रुताविति*। षष्ठ्यर्थप्रतीत्यनुरोधेनाह—*ङसूस्थानिकेति*।

व्यवस्थितेति । *एतच्च प्रचुरलक्ष्यदर्शनादास्थितम् । *केचित्तु यथोपदिष्ट-मित्यनुवृत्त्याऽन्यत्र तं वारयन्ति ।

एभ्य एवेति । *कृतदीर्घेभ्य इत्यर्थः, कृतदीर्घाणामिति वा । *व्याख्यानात् । *अत एव विपरीतनियमो न* । अन्योत्तरपदे एषां दीर्घान्तत्वासम्भवाच्च । नियमार्थ इति । "पूर्वपदात्सञ्ज्ञायाम्"इत्येव सिद्धे दीर्घस्य सञ्ज्ञायामेव विधानादस्य णत्वस्य सञ्ज्ञायां प्रवृत्तेः । विध्यर्थ इति । *अग्रेवणशब्दस्यासञ्ज्ञात्वात् इति भावः । पुरगावण-मित्यत्र 'अगः' इति प्रतिषेधस्तु न । अगकारान्तपूर्वपदादित्यर्थात् । असिपत्रवनामिति । नरकविशेषस्य सञ्ज्ञा ।

वलप्रत्यय इति । *यथोपदिष्टमित्यनुवृत्तेरिति भावः । तेनाज-न्ते वलधातौ न । *अण इत्येव । नेह—भ्रातृवलः । "रजः कृषि"(पा०सू० ५–२–११२)इत्यत्र 'अन्येभ्योऽपि दृश्यते'इत्युक्तेर्वलच्प्रत्ययः । उदाहरणे "रजः कृषि"(पा०सू०५–२–११२)इति वलच् । संज्ञायामेवेदम् । तेन पु-त्रवल इत्यादौ न । प्रत्ययनिमित्तत्वेऽपि सन्दर्भशुद्धये एषामुपन्यासः ।

---

*एतत्फलम्—संहिताधिकारफलमित्यर्थः । *उत्तरपदाधिकारादिति* । अस्य उत्तरपदनिमित्तकानामिति शेषः । तेन वले इत्यत्र "मतौ बह्वचः" ( पा० सू० ६–३–११९ ) इत्यत्र अवग्रहे दीर्घव्यावृत्तेः फलस्य वक्तुं शक्यत्वेऽपि न न्यूनता । यदि त्वेतयोर्नावग्रहो वृद्धसम्मतस्तदा यथाश्रुतं साधु ।

*एतच्च = व्यवस्थितविभाषात्वञ्च । व्यवस्थितविभाषात्वमनङ्गीकुर्वतां मतमाह—*केचित्त्विति* ।

*कृतदीर्घेभ्य इति* । एतेन नियमनिमित्तभूतं संज्ञात्वं सूचितम् । "व-नं पुरगा" ( पा. सू. ८–४–४ ) इत्यत्र षष्ठ्याः स्थाने व्यत्ययेन प्रथमा । न च पुरगा-मिश्रकेतिदीर्घानुवादसामर्थ्यादेव अद्यारभ्य औशित्यत्रेव दीर्घे सिद्धे वनगिर्योरि-त्यत्र कोटरादिग्रहणं व्यर्थमिति वाच्यम् । आनुमानिकवचनकल्पनापेक्षया वचनेन तत्सिद्धौ लाघवात् टाबन्त्यनिर्देशसम्भावनापत्तेश्च । *व्याख्यानादि-ति* । लक्ष्यदर्शनमूलकव्याख्यानादित्यर्थः । *अत एव = कृतदीर्घनिर्देशादेव । *विपरीतनियमो नेति* । एभ्यः परस्य यदि णत्वं भवति तर्हि वनशब्दस्यैवेति-विपरीतनियमो नेत्यर्थः । विपरीतनियमपक्षे सारिकाणामित्यत्र णत्वव्यावृत्तिः फलं स्यात् । विध्यर्थत्वबीजं दर्शयति—*अग्रेवणशब्दस्येति* ।

"वले"( पा. सू. ६–३–११८ ) इतिसूत्रे वलशब्दः प्रत्यय एव गृह्यत इत्यत्र मानमाह—*यथोपदिष्टमिति* । *अण इत्येवेति* । "ढ्रलोपे" इत्यतो-ऽण्ग्रहणमनुवर्तत इत्यर्थः ।

शरादिराकृतिगणः ।

इको वहे (पा० सू० ६-३-१२१) वहेः पचाद्यच् ।

उपसर्गात् *घञोऽसम्भवेन तदन्तविधिरित्याह-घञन्त इति । "इकः काशे"(पा०सू०६-३-१२३)इति पचाद्यजन्तार्थम् । *"अन्येषामपि" (पा०सू०६-३-१३७) इति सूत्रस्याभियुक्तोक्तं प्रपञ्चमाह-शुनो दन्तेति । तत्प्रपञ्चत्वादेव श्वपुच्छमित्याद्यपि । यथा दृश्यते *तथा साध्विति तदर्थात् । श्वा च वराहश्च श्वावराहं "येषाञ्च विरोधः"( पा०सू०२-४-१९ )इत्येकवत् ।

प्रनिरन्तः (पा०सू०८-४-५)॥ सञ्ज्ञायां "वनं पुरगा"इति नियमादप्राप्तेऽसञ्ज्ञायां "पूर्वपदात्सञ्ज्ञायाम्"(पा०सू०८-४-३)इत्युक्त्वा ऽप्राप्ते वचनं, शरादीनामौषधिवनस्पत्यन्यतरत्वादुत्तरेण विकल्पे प्राप्ते वचनम् । असञ्ज्ञायामपीति । *अस्येत्यतः सञ्ज्ञायामिति नानुवर्त्तते इति तात्पर्यम् ।

"विभाषौ" (पा० सू० ८-४-६) औषध्यः=फलपाकान्ताः । वनस्पतिरत्र *वृक्षमात्रम् । *व्याख्यानात् । *ध्वनितं चेदं "लुपि युक्तवत्" (पा०सू०१-२-५१) इति सूत्रे भाष्ये ।

आरोप्येति । *अनेन वाह्यस्या*चेतनत्वं तत्तुल्यत्वं वा

---

*घञोऽसम्भवेन तदन्तविधिरिति* । एतेनोत्तरपदाधिकारेऽपि तदन्तविधिप्रवृत्तिनिमित्तं दर्शितम् । *अन्येषामपीतिसूत्रस्येति* । एतच्च सूत्रं तुराषाड़ित्याद्यर्थमावश्यकं तस्येत्यर्थः । *तथा साध्वितीति* । यत्र दीर्घो न दृश्यते तत्र ह्रस्वघटितमेव साध्विति बोध्यम् ।

ननु सूत्रे यदसंज्ञायामपीति तद्व्यर्थम् । संज्ञायामित्यस्य प्रक्रान्तस्य निवृत्तिकल्पनेनोभयत्र प्रवृत्तिसम्भवादत आह—*अस्येत्यत इति* । तथा च तन्निवृत्तावेव तात्पर्यग्राहकमिदमिति भावः ।

*वृक्षमात्रमिति* । एतेन—

वानस्पत्यः फलैः पुष्पात्तैरपुष्पाद्वनस्पतिः ।

इत्यवान्तरभेदोऽत्र न विवक्षित इति सूचितवान् । *व्याख्यानादिति* । "लुपि युक्तवत्" ( पा. सू. १-२-५१ ) इतिसूत्रभाष्यसंमतव्याख्यानादित्यर्थः । तथा हि-तत्र "व्यक्तिवचने इति किमर्थम् ? शिरीषाणामदूरभवो ग्रामः=शिरीषः। तस्य वनं=शिरीषवनम् । अत्रादूरभवश्चेत्येणा वरणादित्वाल्लुपि सति प्रकृतिशब्दार्थगतवनस्पतित्वस्याप्यतिदेशः स्यात्तथा च "विभाषौषधि"(पा. सू. ८-३-६) इतिसूत्रेण णत्वापत्तिः" इत्युक्तम् । पुष्पैर्विना फलवान्हि वनस्पतिरित्यभिधीयते । न च शिरीषस्तादृशः । एवं च तत्रैव वनस्पतित्वञ्चास्तीति वनस्पतित्वमतिदि-

बोधितम् । उह्यत इति । सूत्रे भूतकालोऽविवक्षितः । तेन वाह्यपदानारोपितं सन्निहितमात्रं सदपि भवतीति भावः ।*तदुक्तं भाष्ये—"आहितोपस्थितयोरिति वक्तव्यम्"इति, तथा *"वाहनं वाह्यादिति वक्तव्यं, यदा हि* गर्गाणां वाहनम्*अपविद्धं तिष्ठति तदा मा भूत्—गर्गवाहनम्"इति । 'यदा गर्गा वाह्यत्वेन विवक्षिता भवन्ति तदा णत्वं भवत्येव'इति कैयटः ।

*कर्मणि ल्युडिति । *बाहुलकादिति भावः । देशे किम् ? । दाक्षीणां पानं=दाक्षिपानम् *देश इत्यस्य देशवासिष्वित्यर्थः ।

---

इयेतेत्यसङ्गतं स्यादिति । एतेन तत्र वनस्पतिशब्दो वृक्षत्वात्मकव्यापकजात्यवच्छिन्नलाक्षणिक इति बोध्यम् । तदेवाह—*ध्वनितमिति* । मूले—द्व्यच्त्र्यच्स्यामेवेति । अत्र मानं "द्व्यक्षरत्र्यक्षरेभ्य एव" इति भाष्यम् । तत्राक्षरशब्दो व्यञ्जनसहिताच्पर इति भावः । अत एव देवदारुवनमित्येतावत्पर्यन्तं प्रत्युदाहृतम् । 'इरिकादिभ्यः प्रतिषेधः' इत्यप्यत एव संगच्छते । अन्यथाऽस्य पूर्वोक्तनियमेनैव व्यावृत्तिसिद्धावेतस्य वैयर्थ्यापत्तिः स्यात् ! इरिकावनमित्यत्र त्वौषधिवाचकत्वात्प्राप्तिर्वाच्या ।

"वाहनमाहितात्" ( पा. सू. ८–४–८ ) इति सूत्रे यदाहितपदं तत्र भूतकालो न विवक्षितः आहितशब्दस्य स्वस्वामिभावनिवृत्तिमात्रपरत्वात् । एवञ्च वाहनं लोके यद्यपि स्वामिन एव प्रसिद्धं, तथापि यत्र स्वामित्वमारोप्य तद्वाहनत्वेन वाहनं विवक्षितं न तु तत्र वाहने वाह्यस्य स्थापनं कृतं तत्रापि भवति । वाह्यवाहकभावमात्रविवक्षायाः सन्निधानमात्रेणापि सम्भवात् । तदाह मूले—आरोप्येति । शेखरे—*अनेनेति* । आरोप्येति कथनेनेत्यर्थः । *अचेतनत्वमिति* । आरोपस्य तत्रैव सम्भवात् । पूर्वोक्तव्याख्याने भाष्यम्प्रमाणयति—*तदुक्तमिति* । "आहितोपस्थितयोः" इत्यनेन वाहने वाह्यस्य स्थापने संनिधाने वेति कथितम् । *वाहनं वाह्यादिति* । वहनीयवाचिनः परमित्यर्थः । एतेन पूर्वपदस्य वहनीयवाचकत्वविवक्षा यदा तदा भवति, स्वामिमात्रवाचकत्वविवक्षा तदा माभूदित्युक्तम्भवति । *गर्गाणां वाहनमिति* । अत्र स्वस्वामिभावसम्बन्धे षष्ठी । *अपविद्धमिति* । वहनशक्तिविकलम्, प्रनष्टमित्यर्थः । एतत्कथनं च तदा गर्गा वाह्यत्वेनाविवक्षिता इति सूचनाय ।

ननु क्षीरस्पानं येषामित्यनुपपन्नस्पानशब्दस्य क्रियावचनत्वेन क्षीरशब्देन सामानाधिकरण्यासम्भवादित्यत आह—*कर्मणीति* । *बाहुलकात्="कृत्यल्युटो बहुलम्" (पा. सू. ३–३–११३) इतिसूत्रस्थं यद्बहुलमिति पदं तेन निर्वृत्तमित्यर्थेऽरीहणादित्वाद्वुञ् बहुलशब्दो बहुलग्रहणनिर्वृत्तपरः । पुनर्भावप्रधाननिर्देशेन बाहुलकशब्दस्तद्वृत्तिधर्मपरः । बहुलग्रहणनिर्वृत्तत्वादिति प्रकृते विवक्षितम् । उशीनरशब्दश्च उशीनरदेशनिवासिपर इत्याशयेनाह—*देश इत्यस्येति* ।

क्षीरपानमिति । नपुंसके भावे *करणे वा ल्युट् । सर्पिष्पानमित्यादौ तु न । "षात्पदान्तात्"(पा०सू०८-४-३५)इति निषेधात् । तस्य हि पदे परतोऽन्तो यः षकारस्ततः परस्य नस्य णो नेत्यर्थः । अन्तग्रहण*सामर्थ्यात् । *तेन सुसर्पिष्केणेत्यादौ णत्वं भवत्येव । *सर्पिष्पानमित्यादौ सुबुत्पत्त्यनन्तरमेव समासः । अत एव निष्पानमिति तदुदाहरणं भाष्ये सङ्गच्छते । पदपदं पदत्वयोग्यपरं वा । व्रीहिवापाणीति *कर्मण्यण्, घञन्तेन *बहुव्रीहिर्वा । जसः शिः, अदन्तत्वान्नुम् ।

अत एवेति । पूर्वपदाक्षिप्तेनोत्तरपदेन प्रातिपदिकस्य विशेषणादेवेत्यर्थः । *उत्तरपदशब्दस्य समासचरमावयवे रूढत्वान्माषवापिणावित्यादावुत्तरस्य पदत्वं नेति न शङ्क्यम् । ज्ञापकं शिथिलमित्याह-किञ्चेति । *पूर्वपदाक्षिप्तसमासप्रातिपदिकान्तस्येति व्याख्याय नुमग्रहणं *भाष्ये न प्रत्याख्यातमिति तत्र णत्वस्येष्टत्वानुमानादिति भावः । भाष्ये समासरूपप्रातिपदिकान्तस्येत्यर्थकरणादङ्गस्येत्यादितदुपपादनग्रन्थोऽपि चिन्त्य एवेति परे । णत्वार्थमिति । *णत्वार्थमेवेत्यर्थः । *प्रेन्वनमित्यादौ

---

*करणे वा ल्युडिति* । यद्यपि पूर्वसूत्रे पानशब्दः कर्मल्युडन्त इति व्याख्यातं, तथाप्यस्मिन् सूत्रे तस्य भावकरणयोरित्युपादानाच्छब्दाधिकाराश्रयणेनार्थान्तरपरत्वमित्याशयात् । *सामर्थ्यादिति* । अन्यथा षात्पदादित्येव विशेषणेन तदन्तविधिलाभादन्तग्रहणं व्यर्थं स्यात् ।

*तेन=तादृशार्थकरणेन । ननु तथापि "गतिकारकोपपदानाम्"इतिपरिभाषया सुबुत्पत्तेः प्राक् पानशब्देन समासे न पदपरत्वसम्भव इत्यत आह-*सर्पिष्पानमित्यादाविति* । धनक्रीता इति यथा । *कर्मण्यणिति* । व्रीहीन्वपन्ति यानि कुलानि तानीत्यर्थः । *बहुव्रीहिर्वेति* । व्यधिकरणपदो बहुव्रीहिर्वेत्यर्थः ।

नन्वेवम्माषान्वपतस्तच्छीलौ पुरुषौ=माषवापिणावित्यादौ "उत्तरपदत्वे च"इतिनिषेधेनोत्तरपदरूपप्रातिपदिकाभावात्कथं णत्वमत आह-*उत्तरपदशब्दस्येति* । ननु प्रहिण्वन्नित्यत्र णत्वाभाव एवेष्ट इत्यत आह-*पूर्वपदाक्षिप्तेति* । मूलानुक्तमप्याह-*भाष्य इति* । एवञ्च व्रीहिवापाणीत्यादौ प्रातिपदिकान्तत्वेनैव सिद्धे तत्र नुम्ग्रहणप्रयोजनमिति । णत्वार्थमपीत्यत्रापिशब्दोपादानमनर्थकमत आह-*णत्वार्थमेवेत्यर्थ इति* । अपिरेवार्थः । नन्वेवम्प्रेन्वनमित्यत्र णत्वापत्तिरत आह-*प्रेन्वनमिति* । ननूत्तरपदं यत्प्रातिपदिकं तदन्तस्यैवेत्यर्थश्चेद्विवक्षितस्तदा प्रातिपदिकपदं व्यर्थम् । उत्तरपदान्त्यस्येत्यर्थेन माषवापिणावित्यस्य सिद्धेरिति चेन्न । प्रातिपदिकानामेव यः समासस्तत्र यथा स्यादित्य-

त्विति । प्रत्ययसंबन्धिनस्येव धातुमध्यवर्त्तिनुमोऽपि नस्येत्यर्थः । *एवं समुदाया एव तत्र पाठ्या इति द्वयोरपि नयोर्णत्वाभावसिद्धिरिति "नुम्व्यवायेऽनुस्वाराभावे णत्वप्रतिषेधो वक्तव्यः"* इति न कार्यमिति भावः । युवादेर्नेति । *समस्ताः शब्दा युवादिषु, असमस्ताः क्षुभ्नादिष्विति भावः । *अत एव युवादेर्नेति "प्रातिपदिकान्त"(पा०सू०८-४-११)इति सूत्रे भाष्ये*पठितम् । उभावप्याकृतिगणौ । वृत्रहणाविति । वृत्रं हतवन्तावित्यर्थे "ब्रह्मभ्रूण" ( पा० सू० ३-२-८७ ) इति क्विप् । *वृत्रहणावित्यप्युदाहरणम् । हरिमाणीति । मानयतेः क्विपि समासे ङीप् । क्षीरपेणेति । पिबतेः कर्मण्युपपदे "आतोऽनुपसर्गे"( पा० सू० ३-२-७४) इति कः *आतो लोपः । रम्यविणेति । रम्यश्चासौ विश्चेति विग्रहे आङो ना । *नन्वन्तर्वर्त्तिविभक्त्या *विशब्दस्य पदत्वात् "पदव्यवायेऽपि" ( पा०सू०८-४-३८ )इति निषेधः स्यादिति चेन्न । "अतद्धिते"इति वार्त्तिकैकवाक्यतया *णत्वाश्रयातिरिक्ततद्धितभिन्ने परतः

---

र्थात् । तेन नियमेन हि तिङन्तयोर्य "आख्यातमाख्यातेन"इति समासस्तत्र व्यावृत्तिः स्यात् । चकाराहश्मिति यथा । इदञ्च पदं सम्बुद्ध्यन्तम् । तेन न नलोपः । ननु प्रेन्वनमित्यत्र नुमो नकारस्य क्षुभ्नादित्वात् णत्वाभावेऽपि कृदवयवस्य स्यादत आह-*एवं समुदाया इति* । अत्रत्यबहुवचनेन परेन्वनम् निरिन्वनमित्यस्य सङ्ग्रहः । *इति न कार्यमिति* । तच्च वार्त्तिकम्भाष्ये एवम्पठितम्— "नुम्व्यवाये णत्वेऽनुस्वाराभावे प्रतिषेधः"इति । ननु क्षुभ्नादिराकृतिगणो युवादिरपि चेत्तथा तदाऽन्यतरोपादानमनर्थकमत आह-*समस्ता इति* । *अत एव =युवादेरित्यस्य समासविषयकत्वादेव । *भाष्ये पठितम्* । तत्र हि "युवादीनाम्प्रतिषेधो वक्तव्यः-आर्ययूना, क्षत्रिययूना, परिपक्वानि, दीर्घाह्नी शरत्"इति पठितम् । समस्तस्यैवोदाहरणत्वेन प्रदर्शनादप्यस्य समासविषयकत्वम् । परिपक्वानीत्यत्र "कुमति च"(पा० सू० ८-४-१३) इत्यस्य प्राप्तिः । "एकाजु"(पा० सू० ८-४-१२)इतिसूत्रस्य बहुवृत्रहाणीत्युदाहरणं क्वचिद्दृश्यते । तच्चासङ्गतम् । "हन्तेरत्पूर्वस्य" (पा० सू० ८-४-२२)इतिसूत्रेऽदिति तपरकरणादिति । तन्न । हादेशे कुव्यवाये णत्वस्य प्रतिषेधवार्त्तिकेन च तत्रत्यात्पूर्वग्रहणस्य प्रत्याख्यानादित्याशयेनाह—*वृत्रहणावित्यप्युदाहरणमिति । *आतो लोप इति* । ततः समासे तृतीयैकवचनम् । रम्यश्चासौ विश्चेति समासप्रदर्शनेन रम्यशब्दस्य गतिकारकोपपदभिन्नत्वज्ञानेन शङ्कते-*नन्वन्तरिति* । *विशब्दस्य पदत्वादिति* । "उत्तरपदत्वे च" इतिनिषेधस्यापदादिविधावित्युक्तत्वेन पदान्तत्वनिमित्तविधावेव प्रवृत्तिरिति भावः । *णत्वाश्रयातिरिक्ततद्धितभिन्न इति* । णत्वाश्रयातिरिक्तो यस्तद्धितभिन्नस्तत्परत्वं यत्रेत्यर्थः । न चैवम्प्रविनद्धमित्यत्र विशब्दव्यवधानेन प्रतिषेधो न स्या-

पदेन व्यवाये नेत्यर्थेनादोषात् । व्यवधायकपदस्य णत्वाश्रयातिरिक्तत-द्धितभिन्नपरत्वेनेति यावत् । *तत्प्रत्याख्याने तु पदे व्यवाय इति सप्तमी-समास इत्यर्थान्न दोषः । *अत एव प्रत्याख्यानारम्भयोः *समफलता ।

"कुमति च" (पा०सू०८-४-१३)॥ *कादावित्यर्थभिया काविति नोक्तम् । अनेकाजुत्तरपदार्थमिदम् । *अत्र कवर्गवदुत्तरपदाक्षिप्तसमासस्य विभक्त्याक्षिप्तप्रकृतेश्च प्रत्यासत्त्यैकत्वाश्रयणेऽपि चित्रगवीणामित्यादौ णत्वं भवत्येव । लिङ्गविशिष्टपरिभाषया विभक्तिप्रकृतौ समासत्वात् । णत्वर-हितपाठस्तु लेखकप्रमादात् ।

पदेनेति । निमित्तनिमित्तिनोर्मध्ये *पदेन व्यवधाने इत्यर्थः । पदेनेति किम् ?, चतुर्बहङ्गेण । बहुजयं प्रत्ययः । माषकुम्भवापेनेति । न च माषकुम्भस्य वापः=चत्वार्यङ्गानि, यस्य तेन योगे इति विग्रहे "उत्तरपदत्वे च"इति निषेधादङ्गकुम्भयोः पदत्वं दुर्लभमिति वाच्यम् ।

---

द्धिशब्दस्य णत्वाश्रयनद्धशब्दपरत्वादिति वाच्यम् । एकाजुत्तरपदकसमासी-यविभक्तिस्थनकारस्य णत्वविधानैकवाक्यतया णत्वाश्रयो यः प्रत्ययस्तदतिरि-क्तत्वस्य निवेशेन नद्धशब्दस्य णत्वाश्रयप्रत्ययातिरिक्तत्वस्याक्षतेः । न चैवमपि 'प्रियगोकाम्येण' इत्यादौ गोशब्दस्य णत्वाश्रयप्रत्ययातिरिक्तो यस्तद्धितभिन्नः काम्यच्प्रत्ययस्तत्परत्वान्निषेधः स्यादिति वाच्यम् । तद्धितपदस्य व्यवधायक-पदप्रकृतिकप्रत्ययपरत्वात् । अस्ति चात्र काम्यच्प्रत्ययो गोशब्दप्रकृतिकः । एतच्चातद्धित इतिपर्युदासबलात्तद्धितभिन्नस्तत्सदृशो लभ्यत इत्यनेन लब्धम् । न च रम्यंविणेत्यत्र निषेधप्रवृत्तिसमयेनेत्यस्य णत्वाश्रयत्वाभावेन णत्वाश्रयाति-रिक्तत्वमस्त्येवेति वाच्यम् । णत्वविधौ यदुद्देश्यतावच्छेदकं तद्धर्मावच्छिन्नप्र-तियोगिताकभेदस्य विवक्षितत्वादिति दिक् । *तत्प्रत्याख्याने=अतद्धितेत्यस्य प्रत्याख्याने इत्यर्थः । एवं हि भाष्ये उक्तम्-"तत्तर्हि वक्तव्यम् । न वक्तव्यम् । नैवं विज्ञायते पदेन व्यवायः= पदव्यवायः,पदव्यवाय इति । कथं तर्हि ?,पदे व्यवायः= पदव्यवाय इति" । *अत एव=पूर्वोक्तार्थकल्पनादेव । *समफलतेति* । रम्यविणेत्यत्र प्रत्याख्यानपक्षे निषेधो न प्राप्नोति । आरम्भपक्षे यद्युक्तार्थकल्प-नम स्यात्तदा प्राप्नोतीति फलभेदः स्पष्ट एवेति भावः ।

*कादावित्यर्थभियेति* । तथा सति रम्यपाकाणां तण्डुलानामित्यादौ न स्यादिति भावः । "कुमति च"(पा. सू. ८-४-१३)इतिसूत्रे प्रत्यासत्ति-माश्रित्य णत्वाभावं वदताम्मतन्निरस्यति-*अत्र कवर्गेति । चित्रगवीतिसमुदाये लिङ्गविशिष्टपरिभाषया समासत्वातिदेशे सति विभक्तौ कवर्गवदुत्तरपद-कसमासप्रकृतिकत्वमस्त्येवेति भावः ।

*पदेन=पदसंज्ञकेन । *कार्यित्व एवेति* । नपदान्तसूत्रे एतत्प्रयोजनङ्कुर्वि-

प्रत्यासत्त्योत्तरपदस्य *कार्यित्व एव तत्प्रवृत्तेः, अपदादिविधाविति पर्युदासेन *पदान्तविधावेव तत्प्रवृत्तेश्च । न चैवमपि माषकुम्भस्येत्यादेर्वापादिनिरूपितकारकत्वाद् "गतिकारकोपपदानाम्"इत्यनेन वापादिभ्यः सुबुत्पत्तेः प्राक्समासे तेषां पदत्वं दुर्लभमिति *सप्तमीसमासेन व्याख्याने णत्वनिषेधासिद्धिरिति वाच्यम् । *तस्यानित्यत्वेनात्र सुबुत्पत्त्यनन्तरमेव समासेनादोषात् । यत्तु *"कुमति च"(पा० सू० ८-४-१३)इत्यत्र भाष्ये "माषकुम्भवापेनेत्यत्र *षष्ठीतत्पुरुषोत्तरपदकषष्ठीतत्पुरुषे कुमति चेति नित्यणत्वेन भवितव्यं *षष्ठीतत्पुरुषपूर्वपदकषष्ठीतत्पुरुषे प्रातिपदिकान्तेति विभाषया"इत्युक्तं, तत्प्राप्ति*निरूपणं बोध्यम् । *यत्तु एतद्भाष्यादयं निषेध "उपसर्गादसमासेऽपि" *इत्यादेस्तेन *प्रावनद्धामित्याद्युदाहरणमिति, तन्न । पदव्यवायेऽपीत्येतच्छेषभूतस्य 'अतद्धित'इति वार्त्तिकस्यार्द्रगोमयेणेत्यादिभाष्योक्तोदाहरणा*सङ्गत्यापत्तेः । अतद्धित इति व्यवधायकस्य पदस्य णत्वाश्रयातिरिक्त*तद्धितभिन्नपरत्वे निषेध इत्यर्थः । उदाहरणे गोशब्दः पदम् ।

सूत्रे नपुंसकनिर्देशात्कुस्तुम्बुरुरित्ययुक्तमत आह—अतन्त्रमिति । *बहुत्वञ्चैवमिति बोध्यम् ।

---

तम् । *पदान्तविधावेवेति* । न च पदान्तविधावित्येव कुतो नोक्तमिति वाच्यम् । वार्त्तिकाक्षरेषु लाघवगौरवचर्चा नाद्रियते इत्यभिप्रायात् । *सप्तमीसमासेन व्याख्यान इति* । अतद्धित इत्यस्य प्रत्याख्यानाय पदे व्यवाय इति कृते व्याख्यान इत्यर्थः । *तस्य = गतिकारकेत्यस्य । *कुमति चेत्यत्र भाष्य इति* । "अथेह कथं भवितव्यं माषकुम्भवापेन । किं नित्यं णत्वमाहोस्विद्विभाषा" इति हि तत्र भाष्यम् । *षष्ठीतत्पुरुषोत्तरपदकषष्ठीतत्पुरुषे = कुम्भस्य वापः = कुम्भवापः, माषस्य कुम्भवापो = माषकुम्भवाप इत्याकारके । *षष्ठीतत्पुरुषपूर्वपदक इति । माषस्य कुम्भः = माषकुम्भः, माषकुम्भस्य वाप इत्याकारक इत्यर्थः । *प्राप्तीति* । "पदव्यवाये न" इतिनिषेधप्राप्तिपूर्वकालिकविधिशास्त्रप्राप्तीत्यर्थः । एतद्भाष्यदर्शनेन "पदव्यवाये" इतिनिषेध उपसर्गादसमासेऽपीत्यस्येति वादिमतन्निरस्यति—*यत्त्विति* । *इत्यादेरिति* । एवेति शेषः । *प्रावनद्धामित्यादीति* । आदिना पर्यवनद्धामित्यस्य सङ्ग्रहः । *असङ्गत्यापत्तेरिति* । उपसर्गादसमासेऽपीत्यस्य तत्र प्राप्तेः । *तद्धितभिन्नपरत्व इति* । एतच्च निरूपितम् । एतस्य पदविशेषणत्वे सापेक्षत्वात् समासानुपपत्तिर्न शङ्क्या । भाष्यप्रामाण्येन वृत्तेः स्वीकारात् ।

*बहुत्वञ्चैवमिति* । सूत्रे लिङ्गवचनयोरतन्त्रत्वात् ।

गोष्पदं से (पा० सू० ६-१-१४५) ॥ असेविते *सामर्थ्यान्नञ्पूर्वकमुदाहरति—अगोष्पदानीति । *असेवित इति बहुव्रीहिः । तेन गवां सञ्चारो यत्र नैव कदाचित्तत्रैव नञ्पूर्वे सुडिति भाष्ये स्पष्टम् । *गोष्पदं क्षेत्रमिति । क्षेत्रस्याल्पप्रमाणत्वमनेन बोध्यते । तेन गोष्पदात् *क्षेत्रस्याधिकत्वेऽपि न क्षतिः ।

आत्मयापनं=शरीररक्षणमित्यर्थः । तत्फलकस्थानलाभः=प्रतिष्ठा । प्रकृते *लाभविषयं स्थानं तथा, यथाऽऽस्पदमनेन लब्धम् । शरीररक्षणाय स्थानं लब्धमित्यर्थः । अद्भुते इति । अनित्यत्वेन *कादाचित्कतयाऽद्भुतत्वं लक्ष्यते इति भावः ।

विकिरग्रहणमिति । "विष्किरः शकुनौ विकिरो वा" इति *तन्मते सूत्रपाठः । तस्यापि=विकिरशब्दस्यापि । भाष्येति । तत्र हि "शकुनौ *विकिरो वेति वाच्यम् । विष्किरः शकुनौ वेत्युच्यमाने शकुनौ तत्तुल्यजातीये चान्यत्रार्थे नित्यमेव विष्किरः स्यात्, सिद्धशब्दस्य विकल्पायोगाच्छकुनौ वा *अन्यत्र वेत्य*धिकरणविकल्पस्यैव प्रतीतेः" इत्युक्त्वा "न वक्तव्यम् । न वा वचनेन शकुनिरूपमाधिकरणं सम्बध्यते, किन्तु निपातनं विष्किर इत्येतच्छकुनौ वा निपात्यते" इत्युक्तम् । एवञ्चा न्यत्र

---

*सामर्थ्यादिति* । सेविते गोष्पदशब्दस्य साधितत्वादसेवितेऽपि तथैव स्वीकारे विरुद्धकल्पना स्यादिति नञुपादानसामर्थ्यादसेवितेऽगोष्पदशब्दस्य प्रवृत्तिरिति भावः । *असेवित इति बहुव्रीहिरिति* । सेवितशब्दे भावे क्तः । न सेवितं सेवनं यस्मिन्नित्यर्थः । *गोष्पदं क्षेत्रमितीति । यत्क्षेत्रं गोः पदप्रमाणन्तदेवमुच्यते । तेनाल्पप्रमाणत्वस्फलति, तदाह—*क्षेत्रस्येति* । अल्पप्रमाणत्वेन गोपदपरिच्छेद्यत्वारोपोऽत्रेति भावः ।

आत्मयापनमित्यस्यात्मनः शरीरस्य यद्यापनं रक्षणं तत्साधनाय यत्स्थानं तस्मिन्नित्यर्थः । यत्स्थानलाभेनात्मनः शरीरस्य रक्षणं भवति तत्रेति फलितम् । प्रतिष्ठेत्यत्राऽऽतश्चोपसर्ग इत्यङ्प्रत्ययः । *लाभविषयमिति* । अत्र विषयशब्दो विषयत्वपरस्तस्माद् "अर्शआदिभ्यः" इत्यच् । लाभश्च स्वत्वोत्पत्त्यनुकूलो यः स्वीकारविशेषस्तदात्मकस्तद्विषयत्वन्तत्राक्षतमेव । *कादाचित्कतयेति* । अनेन लक्षणाप्रयोजकसम्बन्धः सूचितः ।

*तन्मत इति* । वृत्तिकारमत इत्यर्थः । *विकिरो वेति वाच्यमिति* । एतेन विकिरेत्यस्य पूरणन्न तु विकिरशब्दस्य पाणिनिकर्तृकसूत्रघटकत्वमिति स्पष्टमेव लभ्यते । *अन्यत्र वेति* । अत्र वाशब्दश्चार्थे द्रष्टव्यः । *अधिकरणविकल्पस्य=अधिकरणविशेषे प्रवृत्तिविशेषस्येत्यर्थः । *अन्यत्र=शकुनिभिन्ने । 'न

विकिरस्येष्टत्वं स्पष्टमेव लभ्यते। दृश्यते च 'विकिरं वैश्वदेविकम्' इति प्रयोग इति दिक्। *कृधातोः "इगुपधज्ञाप्रीकिरः"(पा० सू० ३-१-१३५)इति केऽनेन सुट्। "परिनिविभ्यः"इति षत्वम्।

कशेरेव कशंति। कशधातोरेव कशाशब्द इत्यर्थः। *इह च गमःप्रतिरुपसर्गो न कशेरिति भावः।

अमन्त्रार्थमिति। मन्त्रे तु "ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे"इत्येव सिद्धमिति भावः। हरिश्चन्द्रो राजर्षिः* ।

सुडिति वेणौ, इनिश्चेति परिव्राजके। चात्सुडपि। *इदं वृत्त्यनुसारेण। *अयं नाकरोदयं नाकरोदतो माकृतकर्माणि शान्त्या काम्यकर्महानिद्वारा सकलकर्मपरिहानिर्युष्माकं श्रेयसीत्युपदेष्टा=मस्करी, परिव्राजकः। माङुपपदात्कृञ इनिर्माङो ह्रस्वः सुट् च निपात्यत इति भाष्यकैयटयोः। *इदमेव युक्तम्। वृत्तिमते मस्करशब्दादिनौ योगरूढ्या परिव्राजकबोधे सिद्धे मस्करिपरिव्राजकग्रहण*वैयर्थ्यापत्तिरिति बोद्ध्यम्।

कातीरे *"ईषदर्थे च" (पा० सू० ३-२-२१)इति कोः कादेशः, कारस्करे "दिवाविभा"(पा० सू० ३-२-२१) इति टः।

केचित्त्विति। *अत्रारुचिबीजन्तु पारस्करादिषु प्रत्यक्षतो द-

---

शकुनिरूपमधिकरणं सम्बध्यते' इत्यस्य 'अन्यथा शकुनौ चेत्यस्य वैयर्थ्यापत्तेः' इति शेषः। विष्किरशब्दं साधयति—*कृधातोरिति*।

समाधानाभिप्रायमाह-*इह चेति*। *राजर्षिरिति*। एतेन ऋषौ निपातितस्य शब्दस्य राज्ञि प्रवृत्तिर्न विरुध्यत इति सूचितम्।

मस्करशब्दो वेणौ निपातनीयस्ततो मत्वर्थीये इनौ परिव्राजके मस्करिशब्दप्रवृत्तिर्यद्यपि सिध्यति, तथापि परिव्राजके एवास्य साधुत्वमिति रूढिं बोधयितुं मस्करिशब्दोपादानम्। *इदम्=मकरशब्दादिनिप्रत्ययेन साधनम्। भाष्यानुसारिमतमाह-*अयमित्यादिना* । *इदमेव=एवंरीत्यासाधनमेव । *वैयर्थ्यापत्तिरिति*। न च योगरूढिबोधनार्थमेव मस्करिशब्दपरिव्राजकशब्दयोरुपादानमस्त्विति वाच्यम्। यथा "सप्तम्यां जनेर्डः" इतिसूत्रे विशेषोपादानाभावेऽपि पङ्कजशब्दस्य साधनन्तस्य शब्दस्य योगरूढत्वञ्चाश्रीयते, एवमेव शिष्टप्रयोगादेव योगरूढत्वग्रहो भविष्यतीति तयोरुपादानं व्यर्थं स्यादित्यभिप्रायात्।

मूले "कास्तीराजस्तुन्दे नगरे" इत्यनेन नगरे वाच्ये समुदायनिपातनमिति लभ्यते। नगरभिन्ने तु कातीरमित्यमुमर्थं बोधयितुमनगरमित्युक्तम्। तत्र कुशब्दस्य कादेशं साधयति-*ईषदर्थे चेतीति*।

*अत्र=केचित्त्वितिकथने। प्रत्यक्षतो दर्शनमिति भाष्येऽस्तीति शेषः। कस्कादिषु पाठे विसर्गस्य स्थाने सत्वमिति लभ्यते,सम्प्रति तु कथन्तस्य सूत्रस्य प्रवृत्तिः सुटः परावयवत्वेन विसर्गाभावेन तस्य सूत्रस्याप्राप्तेरिति भावः। नन्व-

धीनं *प्रकरणाद्विसर्गस्थाने एव तेन सत्वविधानं चेति । न सूत्रेष्विति ।
न गणसूत्रेषु इत्यर्थः । *एवञ्च पारस्कराद्यन्तर्गणसूत्रमिदमिति बोद्ध्यम् ।
पारं करोतीति । "कृञो हेतु" इति टः, पारस्करो देशो नगरञ्च ।
तद्बृहतोरिति प्रायस्येति च गणसूत्रे । करपत्योस्तु सुडिति । * अतो न
रुत्वम् । *तद्बृहतोः सेऽन्त्यादेशे तु तद् दुर्वारम् । बृहस्पतिरिति । बृ-
हत्याः पतिरिति कुक्कुट्यादीनामण्डादिष्विति पुंवत्त्वम् । "वाग्वै बृहती,
तस्या एव पतिः" इति दर्शनात् । *तत्प्रत्याख्याने तु बृहतो वाक्समूहस्य
पतिरिति विग्रहो बोद्ध्यः । *प्रायस्येति निर्देशादकारान्तपुँल्लिङ्गस्तपो-
वाची प्रायशब्दः ।

*प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते ।

इति स्मृतेः "प्रायः पापम्" इति स्मृत्यन्तरात्पापवाच्यपीति सर्वे-
ष्टसिद्धिः* ॥ इति समासाश्रयविधयः ॥

---

स्य भवदुक्तार्थस्य कथं लाभ इत्यत आह-*प्रकरणादिति* । *एवञ्च=पूर्वो-
क्तरीत्याऽरुचिसाधनेन च ।

*अतो न रुत्वमिति* । पदान्तत्वविरहान्न रुत्वमित्यर्थः । यदि लोपमकृत्वा
तद्बृहतोरेव सकारोऽन्त्यादेशः क्रियते, तदा रुत्वं दुर्वारमित्याह-*तदिति* ।
*तत्प्रत्याख्यान इति* । कुक्कुट्यादीनामित्यस्य प्रत्याख्यान इत्यर्थः । *प्रायस्ये-
ति* । चित्तिचित्तयोः परयोः प्रायस्य प्रायशब्दस्य सुडागमो भवतीत्यर्थः । के
चित्त्वसुडादेशः प्रायशब्दस्य चित्तिचित्तयोर्भवतीत्यर्थमाहुः । प्रायशब्दार्थमाह-
*प्रायो नामेति । तद्बृहतोरिति प्रायस्येति च द्वयं गणसूत्रम् । आकृतिगणोऽयमिति
मूले उक्तम् । अत्र प्रमाणन्तु "नाज्झलौ" ( पा. सू. १-१-१० ) इतिसूत्रभाष्ये
'अज्झलोः प्रतिषेधे शकारप्रतिषेधोऽज्झल्त्वात्" इतिवार्त्तिकव्याख्यानावसरे
परश्शतानीत्यत्र सुडागमपरं भाष्यमेव । शतात्परे परःशतानीत्यत्र राजदन्तादि-
त्वाच्छतशब्दस्य परप्रयोगे परवल्लिङ्गत्वम्प्राप्तमपि लिङ्गस्य लोकाश्रयत्वान्न
भवति किं तु विशेष्यनिघ्नतैव भवति । *इति सर्वेष्टसिद्धिरिति* । सर्वेषामिष्टा-
नां सुड्घटितानामाकृतिगणत्वात्सिद्धिरित्यर्थः । सिद्धिशब्दो मङ्गलार्थः ।

## इति समासाश्रयविधीनां विवरणम् ।

इति श्रीमदनन्तकल्याणसद्गुणनिधानाखिलपण्डितसार्वभौमभूमण्डलप्र-
सारिविमलतरानवद्यसद्यशःपार्वणपीयूषभानुप्रभवागस्त्यकुल-
वंशावतंसश्रीभवदेवमिश्रात्मजभैरवमिश्रकल्पितायां
चन्द्रकलाभिधायां शब्देन्दुशेखरव्याख्यायां समास-
प्रकरणं सम्पूर्णम् ।

# अथ तद्धितप्रकरणम् ।

*अवसरसङ्गत्या तद्धितप्रकरणमारभते-"समर्थानाम्"(पा. सू. ४-१-८२) ॥ पदत्रयमिति । *तेन प्रत्येकं *पदानां स्वरितत्वाद् 'वा' इत्यस्य "प्राग्दिशः" (पा. सू. ५-३-१) इत्युत्तरमपि सम्बन्धः । अवधिप्रदर्शनन्तु *विशिष्टस्येति बोद्ध्यम् । तद्धितानामेकार्थीभाव एव प्रवृत्तिः* "समर्थः पदविधिः" (पा. सू. २-१-१) इत्युक्तेरित्युक्तम् । समर्थानामिति । *समर्थशब्दः शक्तपर्यायः । शक्तत्वं स्वार्थप्रतिपादकत्वम् । तच्च परिनिष्ठितस्यैव, तदाह-कृतसन्धीनि । *न हि 'सु उत्थित' इत्यस्य कल्पनयाऽप्यर्थवत्त्वम् । समर्थानामिति निर्धारणे षष्ठी । समर्थानां मध्ये प्रथमादित्यर्थः । तत्तत्सूत्रेषु प्रथमोच्चारितशब्दप्रतिपाद्यत्वञ्च प्रथमत्वम् । एवञ्चा*नेकसमर्थसंभवे एवास्य संबन्धः । *"शेषे"इत्यत्रापि *तत्तत्सम-

---

॥ श्रीगणेशाय नमः ॥

नत्वा सरस्वतीं देवीं श्रीरामं सीतया युतम् ।
तद्धिताख्यं प्रकरणं यथामति निरूप्यते ॥ १ ॥
यस्येषुभिर्निकृत्तानि शिरांस्यमरविद्विषः ।
सोऽस्मानव्यात्प्रभुर्द्याद्धियस्सर्वविदव्ययः ॥ २ ॥

"समर्थः पदविधिः" (पा. सू. ५-३-१) इतिसूत्रस्य प्राक् स्मृतत्वात्तद्घटकपदसम्बन्धिविधिपदार्थजिज्ञासायां समासानां साक्षात्पदसम्बन्धिविधित्वमिति तान्निरूप्य "घकालतनेषु" (पा. सू. ६-३-१७) इतिसूत्रेण तनप्रत्ययेऽलुग्विधानाज्ज्ञापकात्तद्धितानां सुबन्तात्प्रायेणोत्पत्तिस्वीकारात्तद्धितविधेरपि पदसम्बन्धिविधित्वमिति तद्विधीनान्निरूपणमावश्यकमित्याशयेनाह-*अवसरेति* । *तेन= त्रयमिति कथनेन । *पदानाम्=समर्थानां, प्रथमात्, वा इति त्रयाणाम्पदानाम् । *विशिष्टस्य=पदत्रयसमुदायस्य । *एकार्थीभाव एव प्रवृत्तिरिति* । अत एव ऋद्धस्योपगोरपत्यमित्येवं समुदायस्योपक्रमे वाक्यमेव, न त्वण्प्रत्ययोत्पत्तिः । अत्र सूत्रे यत्समर्थपदं तन्नैकार्थीभावलक्षणसामर्थ्यविशिष्टपरम् । "समर्थः पदविधिः" ( पा. सू. ५-३-१ ) इतिसूत्रेण गतार्थत्वादत आह-*समर्थशब्द इति*। परिनिष्ठितस्यैवेत्येतदुपपादयति-*न हीति*।तदुक्तम्भाष्ये-"किम्पुनः समर्थम्? अभिधाने यच्छक्तम् । किम्पुनस्तत् ? । कृतवर्णानुपूर्वीकम्" इति । *अनेकेति* । अत्रानेकपदोच्चारणेन द्वयोस्तादृशयोर्यत्रापि सत्ता तत्रापि प्रवृत्तिरिति लभ्यते । एकस्य तु यत्रोच्चारणं शेष इत्यादौ, कथं तत्रास्य प्रवृत्तिरित्याकाङ्क्षायामाह-*शेष इत्यत्रापीति* । *तत्तत्समर्थविभक्तिरिति* । सप्तम्यादिविभक्तिरित्यर्थः ।

र्थविभक्त्यन्तविशिष्टेऽर्थ एव शेष इत्यनेकसमर्थसंभवः । स्वार्थिकेऽत्र* नेकसमर्थासंभवात् "प्राग्दिशः"(पा० सू० ५-३-१)इत्युत्तरं नास्य संबन्ध इति बोध्यम् ।

प्राग्दीव्यतो ( पा. सू. ४-१-८३ ) ॥ "तेन दीव्यति" ( पा. सू. ४-४-२ ) इति सूत्रपठितदीव्यतिशब्दैकदेशदीव्यच्छब्दोऽत्र गृह्यते । *तेन च "एकदेशविकृतमनन्यवत्" इति न्यायेन दीव्यत्यर्थ उपस्थाप्यत इत्य*र्थस्यावधित्वम् । अयमेव च निर्देशस्तस्य* ज्ञापक इति बोध्यम् । *एवञ्चावधिमन्तो *ऽर्था एवेति "अत इञ्" (पा. सू. ४-१-९५) इत्यादौ नास्य सम्बन्ध इति बोध्यम् ।

आदेरच इति । *तेन *निर्दिष्टस्थानिकत्वाऽदिकपरिभाषाया अप्रवृत्तिरिति बोध्यम् । *प्रामादिकमेवेति । गणपतिक्षेत्रपत्यादीनाम-श्वपत्यादिषु पाठादिति भावः । "क्षेत्रपत्यश्चरुं निर्वपेत्" इति तु च्छा-न्दसम् ।

दित्यादि (पा. सू० ४-१-८५) ॥ पत्यन्तादिति नोक्तम् । पर-मप्रजापतिशब्दादप्यापत्तेः । उत्तरपदग्रहणे तु यत्समासरूपं *प्रातिपदिकं प्रति न पतिशब्द उत्तरपदन्तस्यैव ग्रहणान्न दोषः । प्रत्ययविधौ *तदन्ता-

---

तत्ताद्विभक्त्यन्तत्वञ्च शब्दस्य,तद्वैशिष्ट्यं त्वर्थस्य प्रतिपाद्यत[illegible]न्धेन । यथा उलू-खले क्षुण्णाः = 'औलूखला यवाः'इत्यादावुलूखलाधिकरणकक्षोदविशिष्टा इत्यर्थे प्रथमोच्चारितशब्दबोध्यादुलूखलशब्दात्प्रत्ययः । एतस्य सूत्रस्य तत्रोपस्थिति-स्वीकारात्सूलूखले क्षुण्णा इत्यर्थे कृतसन्धिकार्यात्सूलूखलशब्दात्प्रत्ययो न तु सुउलूखलशब्दात् । तेन 'साबुलूखलाः' इति न भवति, किन्तु 'सौलूखलाः' इत्येव । *अनेकसमर्थासम्भवादिति* । तेषां स्वार्थिकत्वे पृथगर्थनिरूपणस्य तत्राभावादिति भावः ।

*तेन = दीव्यच्छब्देन । एकदेशविकृतन्यायस्याश्रयणं शक्ततावच्छेदकानुपूर्वी-ज्ञानार्थम् । *अर्थस्य = दीव्यतिशब्दार्थस्य देवनस्य । *तस्य ज्ञापकः = एकदेश-विकृतन्यायस्य ज्ञापकः । *एवञ्च = अर्थस्यावधित्वसिद्धौ च । *अर्था एवेति* । अवध्यवधिमतोः साजात्यनियमात् । अत्राणशब्दमात्रस्यैवाधिकारत्वेन सिद्धौ प्राग्दीव्यत इत्यस्योपादानमप्राग्दीव्यतो येऽर्थास्तेष्वण्विधानार्थम् । तेन "अश्वप-त्यादिभ्यश्च" ( पा. सू. ४-१-८४ ) इत्यादिसूत्रेषु प्राग्दीव्यतीयेष्वर्थेष्वित्यस्य लाभः ।

*तेन = आदेरच इतिव्याख्यानेन । अचामिति निर्द्धारणे षष्ठी । निर्द्धारणञ्च

ग्रहणेन 'परमादिति'शब्दान्न । *ण्यादीनां *पूर्वविप्रतिषेधेन *पराऽणपवादबाधकत्वात् ङीषन्ताभ्यामपि लिङ्गविशिष्टपरिभाषया ण्यस्य प्राप्तेर्दैतेयादितेयावसाधू । न च लिङ्गविशिष्टपरिभाषाऽनित्या । अत्राप्रवृत्तौ मानाभावात्, *दितिवनस्पतिभ्यामपत्यसमूहयोर्ण्यस्यैवेष्टताया *भाष्याल्लाभाच, *तयोः क्तिचि तदन्तान्ङीषि च दृढतरप्रमाणाभावाच, *ङ्याप्सूत्रे भाष्ये लिङ्गविशिष्टपरिभाषादोषेष्वस्यानुक्तेश्च, "दोषाः खल्वपि साकल्येन गणिताः" इति भाष्योक्त्याऽन्यत्रानित्यत्वे मानाभावाच्च ।

अकार इति । अश्वत्थाम्नोऽपत्यादीत्यर्थेऽयम् । लुग्वक्ष्यत इति । *"अन्तःपूर्वपदात्" इत्यत्र भाष्ये इति भावः । लुग्वाच्य इति

---

साधारणतद्धर्मोक्रान्तस्यैकदेशस्य भवतीति प्रकृते आदेरच इति लब्धम् ।-*निर्दिष्टस्थानिकत्वादिति* । अजूरूपस्थानिनो निर्देशात् । *प्रामादिकमेवेतीति* । ण्यबाधकस्याणः प्रवृत्तेः । के चित्त्वेवंविधप्रयोगस्य गणपतिर्देवताऽस्येत्यर्थेऽणि ततः-"तत्र साधुः" ( पा. सू. ४-४-९८ ) इति यति साधुत्वमिच्छन्ति ।

*प्रातिपदिकस्प्रतीति* । प्रातिपदिकस्येत्यर्थः । *तदन्ताग्रहणेन="समासप्रत्ययविधौ" (का. वा.) इति निषेधात् । अत एवाऽदितिग्रहणञ्चरितार्थम् । ननु प्राग्दीव्यतीयेष्वर्थेषु ण्यप्रत्ययस्य विधानेऽपत्येऽप्ययं वाच्यः, स च न प्राप्नोति । देवताद्यर्थे सावकाशस्यास्य परत्वादण्प्रत्ययबाधको य "इतश्चानिञः" ( पा. सू. ४-१-१२२ ) इति ढक् स बाधकः स्यादत आह-*ण्यादीनामिति* । *पूर्वविप्रतिषेधेनेति* । "ण्यादयोऽर्थविशेषलक्षणादणपवादात्पूर्वविप्रतिषेधेन"इतिवार्त्तिकमत्र प्रमाणम् । *पराणपवादबाधकत्वादिति* । परो यः अणपवादस्तद्बाधकत्वादित्यर्थः । वार्त्तिके 'अर्थविशेषलक्षणात्' इत्युक्तं तेन योऽर्थसामान्यलक्षणोऽणपवादस्स परत्वात् ण्यस्य बाधको भवति । यथोष्ट्रपतिर्नाम पत्रं, तस्येदमित्यर्थे "पत्राध्वर्युपरिषदश्च"(पा० सू० ४-३-१२३)इति इदमर्थस्य सामान्यस्य निमित्तत्वात्तत्राञ्प्रत्यय एव । ननु यद्यर्थविशेषलक्षणणापवादस्य ण्यप्रत्ययः पूर्वविप्रतिषेधेन बाधकस्तर्हिदितिशब्दादपत्येऽर्थे वनस्पतिशब्दाच्च समूहरूपे "अचित्तहस्तिधेनोः" (पा०सू० ४-२-४७)इति ठकोऽपि बाधः स्यादिति चेदिष्टापत्तिरित्याह-*दितिवनस्पतिभ्यामिति* । *भाष्यात्=पूर्वविप्रातिषेधनिरूपणपरभाष्यात् । यदि दित्यदितिशब्दौ क्तिन्नन्तौ तदा न ङीषः प्राप्तिः, परन्तु क्तिजन्तान् ङीषः प्राप्तिरस्त्येवेत्यत आह-*तयोः क्तिचीति* । लिङ्गविशिष्टपरिभाषाया अनित्यत्वेन आदितेयस्य सिद्धिं दण्डिप्रयुक्तां खण्डयति-*ङ्याप्सूत्र इति* ।

*अन्तःपूर्वपदादित्यत्र भाष्य इति* । "स्थाम्नो लुगजिनात्तथा इत्यने-

क्वचित्पाठः। लोम्न इति। केवललोम्नोऽपत्येन योगाभावात्तदन्तविधिः *"अभिव्यक्तपदार्था ये" इति न्यायेन सञ्ज्ञाभूतस्य ग्रहणं न। *अपत्यार्थस्यापि "स्थाम्नोऽकारः" इत्यकारानुवृत्त्यनुरोधेन साधारणप्रत्ययेषु कथनम्॥

*इति साधारणाः प्रत्ययाः॥

---

न स्थाम्नो लुग्वक्तव्यः-अश्वत्थामा। अजिनात्तथा। आजिनान्ताच्च लुग्वक्तव्यः कृष्णाजिनः, सिंहाजिनः" इति। तत्र कैयटः-'उभाभ्यामपि तदन्तविधिरिष्यते' इति। ननु लोमसंज्ञकात्केवलादपि सम्भवोऽस्तीत्यत आह-*अभिव्यक्तेति*। *अपत्यार्थस्यापीति*। "लोम्नोऽपत्येषु बहुषु" इत्याकारकं वचनं यद्यप्यपत्ये प्रत्ययविधायकं तथाऽप्यस्मिन् "स्थाम्नोऽकारः" (का० वा०) इत्यतोऽकार इत्यनुवर्त्तते। "स्थाम्नः" इति तु साधारणार्थेषु ये प्रत्ययविधायकास्तेषु पठितमिति "लोम्नः" (का० वा०) इत्यस्याप्यत्र पाठ इति भावः।

"उत्सादिभ्योऽञ्" (पा० सू० ४-१-८६)। अस्मिन् गणे वष्कयासे इति पठ्यते। वष्कयेति लुप्तविभक्त्यन्तम्। वष्कयशब्दोऽञं लभते। असे=असमासे। वाष्कयः। असे किम्?, गौवष्कयिः॥ अत्रोपात्तम् 'असे' इत्येतत्क्वचित्तदन्तविधिं ज्ञापयति। तेन धेनुशब्देन तदन्तस्य ग्रहणं सिध्यति। अधेनूनां समूहः=आधेनवमिति यथा। धेनुशब्दस्येह पाठात्। क्वचिदित्युपादानान्नञ्पूर्वत्व एवाञ्प्रत्ययः। तेन समूहरूपेऽर्थे धैनुकम्, गौधेनुकम्। "अचित्तहस्तिधेनोष्ठक्" (पा० सू० ४-२-४७) इति ठग् भवति। "धेनुरनञिकमुत्पादयति" इति "खण्डिकादिभ्यश्च" (पा० सू० ४-२-४५) इति सूत्रे पठितमापिशलिवचनमत्र प्रमाणम्। आपिशलिवचने इकशब्दः स्वस्थानिनि ठकारे लाक्षणिकः। *साधारणाः प्रत्यया इति*। "तस्यापत्यम्" (पा० सू० ४-१-९२) इत्यारभ्य "तस्य विकारः" (पा० सू० ४-३-१३४) इत्येतत्पर्यन्तं यावन्तोऽर्था वक्ष्यन्ते, तेषु सर्वेष्वर्थेषु जायमानाः प्रत्यया इत्यर्थः।

इति साधारणाः प्रत्ययाः॥

स्त्रीपुंसाभ्याम् ( पा० सू० ४-१-८७ ) ॥ ननु-*प्रकृताञ्सं- नियोगेनाकारसहितनगागमोऽस्तु । अकारसाहित्याच्च "नस्तद्धिते" इति* टिलोपो न । *एवञ्चाऽन्तत्वादेव ङीपि सिद्धे "नञ्स्नञीकक्"इति वार्तिके नञ्स्नञ्ग्रहणं न कार्यम् । न च गोत्रस्त्रीविवक्षायां "जातेः" (पा० सू० ४-१-६३) इति ङीषिष्टोऽन्पक्षे तु ततः परत्वात् "शार्ङ्गरवाद्यञः" (पा०सू० ४-१-७३) इति *ङीन्प्रसङ्ग इति वाच्यम् । "यञञोश्च" (पा० सू० २-४-६४) "सङ्घाङ्कलक्षणेषु" इत्यत्रेव *जातिलक्षणेऽपि ऋष्यपत्यस्यैव गोत्रस्य ग्रहणेन ङीप एव तत्रापीष्टत्वात् । यत्र त्वन्यत्रापि जातिकार्यमिष्यते तत्र तदारोपेण साध्यम् । *अत एव 'स्त्रैणाः' इत्यत्र "यञञोश्च" (पा० सू० २-४-६४) इति लुक् न । स्त्रैणानां सङ्घ इत्यर्थे "सङ्घाङ्क" (पा० सू० ४-३-१२७) इत्यण् च न । *तादृशस्त्रीविवक्षाया- *मेतत्प्रकृतिकप्रयोगा*नभिधानाच्चेति चेत् । न, विवक्षितान्त्या*कारविशिष्टागमस्याप्रसिद्धेः । नञेव तु *न कृतः । पौंस्ने संयोगान्तलोपापत्तेः* । न च स्त्रिया नञ्भवनात् 'पुंसो भश्च'इति कार्यम् । लाघवाभावात् । आकडारस्थत्वाभावेना*नया भसंज्ञया पदत्वबाधस्य *न्याये-

*स्त्रीपुंसाभ्यान्नञ्स्नञौ* । *प्रकृताञ्सन्नियोगेनेति* । "उत्सादिभ्योऽञ्"(पा० सू० ४-१-८६)इति सूत्रादञ्ग्रहणं प्रकृतसूत्रे अनुवर्त्य तद्विधिसन्निधानेन नगागमविधानमस्त्वित्यर्थः । *टिलोपो नेति* । न चागमविधानवैयर्थ्यम् । टिलोपसम्पादकतयैव चारितार्थ्यात् । लाघवान्तरमपीत्याह-*एवञ्चेति* । *ङीन्प्रसङ्ग इति* । तथा च 'स्त्रैणी'इतिपदमाद्युदात्तं स्यात् । *जातिलक्षणेऽपीति* । "गोत्रञ्च चरणैः सह" इत्यत्र । "यञञोश्च" ( पा० सू० २-४-६४ ) इतिसूत्रे "यस्कादिभ्यो गोत्रे" ( पा० सू० २-४-६३ ) इति सूत्राद् गोत्रग्रहणमनुवर्त्तते । "सङ्घाङ्क" ( पा० सू० ४-३-१२७ ) इत्यत्र तु "गोत्रचरणात्" ( पा० सू० ४-३-१२६ ) इत्यतः । तत्रोभयत्र यथा ऋष्यपत्यस्यैव ग्रहणं तथाऽत्रापीति भावः । तदुक्तं कैयटेन "ऋषिप्रजनश्च लोके गोत्रमित्युच्यते"इति । *अत एव= ऋषिवाचकादुत्पन्नस्य ग्रहणादेव । *तादृशस्त्रीविवक्षायाम्=स्त्रिया गोत्रापत्यं स्त्रीत्यर्थविवक्षायाम् । *एतत्प्रकृतिकेति* । स्त्रीपुम्प्रकृतिकेत्यर्थः । *अनभिधानादिति* । अत्र मानन्तु "अञ् प्रकृतः, सोऽनुवर्त्तिष्यते" इत्याशङ्कापरम्भाष्यम् । *अकारविशिष्टस्येति* । अत्र विवक्षिताद्विशिष्टस्येति नोक्तम् । नगागमस्य 'वनीवञ्चीति' इत्यत्र प्रसिद्धत्वात् । *न कृतः=उभाभ्यान्नञ्प्रत्यय एव न कृतः । *संयोगान्त्यलोपापत्तेरिति* । अन्तर्वर्त्तिविभक्त्या स्वादिष्विति वा पदत्वसत्त्वात् । *अनया="पुंसो भश्च"इत्यनेन विहितभसंज्ञया । *न्यायेन=बाध्यबाध-

नाम्नश्चेत्यलम्* ।

*द्विगोरिति । हेतुहेतुमद्भावे षष्ठीत्याह- द्विगोर्निमित्तमिति । न चैवं पञ्चकपालीतिसमाहारद्विगोः संस्कृतमित्यर्थे पाञ्चकपाल*मिति स्यादिति वाच्यम् । *अनभिधानात्ततः प्रत्ययानुत्पत्तेः ।

---

कभावप्रयोजककल्पनान्यायेन । भसंज्ञाविधानसामर्थ्याद्बाध इति त्वन्यत् । एताव-ताऽपि लाघवाभाव इत्याशयेनाह-*अलमिति* ।

*इति स्यादिति* । तत्र तद्धितस्य द्विगुनिमित्तत्वाभावः स्पष्ट एव । *अनभिधानादिति* । अत्र मानन्तु प्रकृतसूत्रस्थम्भाष्यमेव । तथाहि "इह कस्मान्न भवति-त्रैविद्यः, पाञ्चनदः, षाट्कुल इति" एवम्पूर्वपक्षे "नैवं विज्ञायते तिस्रो विद्या अधीते त्रैविद्य इति । कथन्तर्हि ? त्र्यवयवा विद्या त्रिविद्या, त्रिविद्यामधी-ते-त्रैविद्य इति । इहापि नैवं विज्ञायते-पञ्चसु नदीषु भवः=पाञ्चनद इति । किन्त-र्हि ?,पञ्चानान्नदीनां समाहारः=पञ्चनदम्, तत्र भवः=पाञ्चनद इति । षाट्कुल इत्यस्यापि षष्ठीतत्पुरुषाद्भवार्थे प्रत्ययेनोपपत्तिः"इति । पञ्चनदमिति "नदीभिश्च" (पा० सू० २-१-२०) इति समाहारेऽव्ययीभावः" । एवं समाधाय पुनः पञ्चक-पालस्येदङ्खण्डम्पाञ्चकपालमित्यत्र पञ्चसु कपालेषु संस्कृत इत्यर्थे जातस्याणो लुकि पुनस्ततो जातस्येदमर्थकस्याणो लुगभावार्थं "द्विगोर्लुकि तन्निमित्तग्रहणं कर्त्तव्यम्" इति वार्त्तिककृतोक्तम् । ततो भाष्यकृता षष्ठीबलात्तमर्थम्प्रसाध्य "तन्निमित्तग्रहणम्" इति वार्त्तिकम्प्रत्याख्यातम् । यच्च तन्निमित्तग्रहणे क्रियमाणे पञ्चसु कपालेषु संस्कृतः=पञ्चकपालः, पञ्चकपाल्यां संस्कृत इत्यपि विगृह्य पञ्चकपाल इत्येव यथा स्यादित्येवमर्थम् 'अर्थविशेषासम्प्रत्ययेऽतन्निमित्तादपि' इति वार्त्तिककृदुक्तं वचनान्तरं, तदपि भाष्यकृतैवम्प्रत्याख्यातम्-"एतच्च न वक्तव्यम् । इहास्माभिस्त्रैशब्द्यं साध्यम् । पञ्चसु कपालेषु संस्कृतः, पञ्चकपाल्यां संस्कृतः,=पञ्चकपाल इति । तत्र द्वयोः शब्दयोः समानार्थयोरेकेन विग्रहः अप-रस्मादुत्पत्तिर्भविष्यत्यविरविकन्यायेन । अवेर्मांसमिति विगृह्याविकशब्दादुत्प-त्तिर्भवति आविकमिति । अत्राविकशब्दः स्वार्थककान्तः, एवम्पञ्चकपालेषु संस्कृत इति विगृह्य पञ्चकपाल इति भविष्यति । पञ्चकपाल्यां संस्कृत इति विगृह्य वाक्यमेव"इति । अविरविकन्यायेनेति । अविः अविकन्यायेन तद्द्वारेण यथा प्रत्ययमुत्पादयति तथाऽयमपीत्यर्थः । तत्र यथाऽवेर्मांसमिति विग्रहेऽव्य-विकशब्दादेव प्रत्ययो न त्वविशब्दात्तथा पञ्चकपाल्यां संस्कृतमित्यर्थे वाक्य-मेव न तु पञ्चकपालीशब्दात्प्रत्ययः तेनानभिधानात्तद्धितानुत्पत्तिरिति भावः । विगृह्य अविकशब्दादुत्पत्तिरित्यत्र "परावरयोगे च"(पा० सू० ३-४-२०) इति क्त्वाप्रत्ययः । अस्मिन् सूत्रे "गोत्रे ऽलुगचि" (पा० सू० ४-१-८९) इत्युत्तरसूत्रा-दचीत्यस्यापकर्षणाजादिरित्यर्थलाभः । प्रायेण तु भाष्ये अव्यविकन्यायेनेति पाठो दृश्यते । तस्यायमर्थः—अव्यविकशब्दयोर्यो न्यायः प्रकारस्तेनेत्यर्थः ।

गोत्रेऽलुक् (पा० सू० ४-१-८९)॥ अन्यस्यासंभवात् "तद्राजस्य बहुषु"(पा०सू० २-४-६२)इतिप्रकरणविहितलुकोऽयमलुक्*। असंभवश्च तत्र तत्र वक्ष्यते। अत एव "जनपदशब्दात्"(पा०सू०४-१-१६८) इति सूत्रे तद्राजलुकोऽप्ययमलुगुक्तो भाष्ये। विवक्षिते इति। *तेन गर्गाणां छात्रा इत्यर्थविवक्षायां वृद्धत्वनिमित्तप्रत्ययासिद्धिः। *अत एव भाष्येऽलुकः पूर्वमन्तरङ्गत्वाल्लुकमाशङ्क्य "यदयं भूम्नि प्राप्तस्य लुको ऽजादौ तद्धितेऽलुकं शास्ति तज्ज्ञापयति-समानकालावलुग्लुकौ" इति। विषयसप्तमीति तद्भावः। गोत्रं चात्र *पारिभाषिकमेव "यूनि लुक्" इति सूत्रस्थयुवशब्दसाहचर्यात्*। "ण्यक्षत्रिय" इतिविहितस्य तु नायमलुक् । यूनो गोत्रत्वाभावात्। यथा च "गोत्रस्त्रियाः" "वाऽन्यस्मिन्"इत्यादिसूत्रस्थभाष्यविरोधो न भवति तथाऽन्यत्र प्रपञ्चितम् । *'प्राग्दीव्यतीये'इतिविषयलाभार्थं द्वितीये नेदमकारि ।

आपत्यस्य ॥ "सूर्यतिष्य"इत्यतो य इत्यनुवर्तते "हलस्तद्धितस्य"इत्यतो हल इति च। तदाह-हल इत्यादि। *आभीयत्वाद्यस्येतिलोपासिद्धत्वं तु न। *आरम्भसामर्थ्यात्। आपत्यस्येति किम्? सांकाश्यकः। संकाशादिभ्यो भवाद्यर्थे ण्यस्ततो योपधत्वाद् वुञ् । तद्धिते इति किम्? गार्ग्यः। अनातीति किम्? गार्ग्यायणः। गर्गीयमिति। प्राक् क्रीताच्छः ।

---

तत्र यथा अविशब्देन विग्रह एव, प्रत्ययस्त्वविकशब्दादेव तथेत्यर्थः।

*अयमलुगिति* । बाधक इति शेषः । *तेन=विवक्षित इत्यर्थकरणेन। *अत एव=तादृशार्थस्याभिप्रेतत्वादेव। *अत्र=गोत्रेऽलुगचीति सूत्रे । *पारिभाषिकम्=शास्त्रकारीयसङ्केतविषयप्रतिपादकम् । *युवशब्दसाहचर्यादिति* । तत्र युवशब्दो यथा शास्त्रीयार्थस्य प्रकाशकस्तथा तत्सूत्रपूर्ववृत्तिसूत्रघटको गोत्रशब्दोऽपि तादृशार्थस्य प्रकाशकः। ननु यदि तद्राजस्येति प्रकरणविहितलुक एवायमलुग्बाधकस्तदा द्वितीयाध्याये एव तस्मिन् लुक्प्रकरणे इदं सूत्रं कर्त्तव्यमत आह—*प्राग्दीव्यत इतीति* ।

ननु गार्गीया इत्यत्र "यस्य"(पा० सू० ६-४-१४८) इति लोपस्याभीयासिद्धत्वेन न तद्धितपरत्वमिति कथं लोपप्राप्तिरत आह—*आभीयत्वादिति*। *आरम्भसामर्थ्यादिति*। यद्यत्राभीयासिद्धत्वं स्यात्तदाऽऽपत्यकारस्य तद्धितपरत्वासम्भवेन सूत्रारम्भोऽनर्थकः स्यादिति।

*ग्लौचुकायने च्छो नेति* । ग्लुचुकशब्दात् "प्राचामवृद्धात्"(पा०

युनि लुक् । विवक्षिते इति । तेन *ग्लौचुकायने च्छो न । वक्ष्यमाण इति । "प्राचामवृद्धात्"(पा० सू० ४-१-६९) इत्ययमित्यर्थः । अजादौ किम् ? *ग्लौचुकायनरूप्यम् । प्राग्दीव्यतीये इति किम् ? ग्लौचुकायनीयम् । हिते छः ।

पैलादि (पा० सू० २-४-५९) ॥ "ण्यक्षत्रिय" इत्यतो यूनि लुगित्यनुवर्त्तते ।

इञः प्रा (पा० सू० २-४-६०) ॥ *इञन्ताद्युवप्रत्ययस्य गोत्रार्थकादेव सम्भवेनाह—गोत्रे य इति । तच्चेदिति । प्राचांग्रहणं न विकल्पार्थं *व्याख्यानादिति भावः ।

न तौल्व(पा० सू० २-४-६१) ॥ एते इञन्ताः ।

---

सू० ४-१-१६०) इति गोत्रे फिनि ततो यून्याणि ततश्छात्रार्थविवक्षायां यूनि जातस्याणो लुकि वृद्धत्वाभावाच्छो नेत्यर्थः । *ग्लौचुकायनरूप्यमिति* । ग्लौचुकायनादागतमित्यर्थः । "पैलादिभ्यश्च"(पा० सू० २-४-५९) । एतस्मिन् सूत्रे यूनि लुगित्यस्यानुवृत्तावेतस्य गोत्रप्रत्ययान्तात्परस्य प्रत्ययस्य लुग्विधायकत्वमित्येष निर्णय इत्यभिप्रायेण पैलः पिता पुत्रश्चेत्युक्तम् । "यः शिष्यते" इतिन्यायेन युवप्रत्ययस्य लुक्यपि प्रकृतेरेव प्रत्ययार्थाभिधायकत्वम् । वारि पश्येत्यादौ प्रत्ययस्याऽमो लुकि कृतेऽपि यथा प्रकृतेः कर्माभिधायकत्वन्तद्वत् । न चैवम्पैलशब्दात्कदाचिद् गोत्रापत्यस्य कदा चिद् यूनो बोध इति नियमो न स्यात् । पैलशब्दस्य शक्योभयबोधकत्वादिति वाच्यम् । वारिशब्दमात्राद्यथा कर्तृकर्मान्यतराभिधानमन्यसमभिव्याहारात्तथा प्रकृतेऽपि प्रकरणादिना गोत्रयूनोरन्यतरस्याभिधानसम्भवात् । मूले–तद्राजाच्चाण इति । गणसूत्रमेतत् । अत्र 'तद्राजात्' इति 'अणः' इति च समानाधिकरणपञ्चम्यन्तम् । अस्यापि यूनि जातस्य प्रत्ययस्य लुगभिधायकतया तद्राजसंज्ञको योऽण् सोऽत्र गोत्रार्थक एव गृह्यते ।

इञः प्राचाम् । अत्र गोत्र इति यद्यपि न प्रकृतम्, तथापि सामर्थ्याल्लब्धमित्याह—*इञन्तादिति* । *व्याख्यानादिति* । पैलादिगणे शालङ्किसात्यकिप्रभृतिशब्दानामिञन्तानां पाठदर्शनमूलकादित्यर्थः । तत्र हि तेषामुपादानमप्रागर्थम् । यदि तान्यपि प्राचामेव गोत्राणि तदा "इञः प्राचाम्"(पा० सू० २-४-६०) इत्येव सिद्धे तेषामुपादानमनर्थकं स्यादिति प्राचामिति नेञ्प्रत्ययात्परस्य विकल्पेन लुग्विधायकमिति । न च "प्राचामवृद्धात्"(पा० सू० ४-१-१६०) इतिवद् "इञः प्राचाम्"(पा० सू० २-४-६०) इत्यत्रापि प्राचाङ्ग्रहणं विकल्पार्थमस्तु, पैलादिषु शालङ्किप्रभृतिग्रहणान्नित्यार्थमस्त्विति वा-

*अनन्तरस्येति न्यायात्पैलादिलुको नायं बाधक इत्याशयेनाह—यूनि लुगिति । *वेत्यधिकारेऽप्यन्यतरस्याङ्ग्रहणं* "द्विगोर्लुक्"(पा० सू० ४-१-८८) इत्यादौ तदसम्बन्धज्ञापनार्थम् । कात्यायने *गर्गादियञन्तकतशब्दाद् "यञिञोश्च"(पा० सू० ४-१-१०१) इति फक् । कातीये "आपत्यस्य" इति यलोपः ।

तस्यापत्यम् (पा० सू० ४-१-९२) ॥ तत्सम्बन्ध्यपत्यमित्यर्थे *सूत्रे समर्थानां मध्ये प्रथमोच्चारितात्प्रातिपदिकादणादय इत्यर्थः । *"घकालतनेषु"(पा०सू०६-३-१७)इति ज्ञापकात् *स्वार्थे परिसमाप्तस्यैवार्थान्तरान्वयेन सुबन्तात्तद्धितोत्पत्त्या व्यवहितं ततः परत्वम् । *यत्तु प्रातिपदिकादिपदं तत्प्रकृतिके लाक्षणिकमिति । तन्न । *जघन्यवृत्तिकल्पनाया अन्याय्यत्वात् । सुप् च तस्यपदेन *उपस्थितषष्ठ्येव । तत्फलितमाह—

---

च्यम् । एवं सति "इञः" इत्येव सूत्रमस्तु । नित्यार्थं शालङ्किप्रभृत्युपादानेन ज्ञापकेनेञ इत्यस्य वैकल्पिकत्वसिद्धेः प्राचामित्यस्य वैयर्थ्यापत्तेरिति ।

"फक्फिञोः"(पा० सू० ४-१-९१) इति सूत्रविषये आह—*अनन्तरस्येति* । *वेत्यधिकार इति* । "समर्थानाम्प्रथमाद्वा"( पा० सू० ४-१-८२ ) इत्यधिकारेऽस्य पाठात् । *द्विगोर्लुगित्यादाविति* । तेषामतदधिकारे पाठाद्वाग्रहणसम्बन्धोऽन्यथा स्यादिति भावः । *गर्गादियञन्तकतशब्दादिति* । कतशब्दप्रकृतिकयञन्तकात्यशब्दादित्यर्थः ।

*सूत्र इति* । अस्य प्रथमादित्यत्रान्वयः । प्रथमशब्दश्च प्रथमोच्चारितशब्दबोध्यपरः । अन्यथा सूत्रे प्रथमोच्चारितः 'तस्य' इति, न ह्यस्मात्प्रत्यय इष्यते इत्यनुपपत्तिः स्यात् । न च यः प्रथमोच्चारितशब्दबोध्यो नासौ सूत्रे स्थित इति पुनरप्यनुपपत्तिरिति वाच्यम् । प्रथमशब्दस्य सूत्रोच्चारितप्रथमशब्दबोध्ये लाक्षणिकत्वादिति । सुबन्तात्तद्धितोत्पत्तिरिति यथा लभ्यते तत्प्रकारमाह—*घकालतनेष्वितीति* । नन्विदं ज्ञापकं ट्युप्रत्ययविषय एवास्त्वित्यत आह—*स्वार्थे इति* । *स्वार्थे परिसमाप्तस्य=सङ्ख्याकारकादिप्रयुक्तकार्येण संस्कृतस्य । न ह्युपगुशब्दमात्रस्यापत्यरूपार्थेन योगो भवति किन्तूपगोरित्यस्येति भावः । प्रकारान्तरेण सुबन्तात्तद्धितोत्पत्तिवादिमतं निरस्यति—*यत्त्विति । *जघन्यवृत्तिः=लक्षणावृत्तिः । आदौ शक्यार्थोपस्थितिस्ततोऽनुपपत्तिग्रहस्ततो लक्षणा ततो लक्ष्यार्थोपस्थितिरिति लक्षणाया विलम्बितोत्पत्तिकफलप्रयोजकतया जघन्यत्वम् । जघनस्याशुद्धत्वात्तत्र स्थितस्य कुत्सितत्वमिति 'जघनमर्हति' इति व्युत्पत्त्या जघन्यशब्देन कुत्सित उच्यते । *उपस्थितषष्ठ्येवेति* । उपस्थितम्परित्यज्यानुपस्थितकल्पने मानाभावादिति भावः । ननु सूत्रे प्रथमोच्चारितः 'तस्य' इतिशब्दस्तद्बोध्यत्वञ्च सर्वस्य शब्दस्य, सर्व-

षष्ठ्यन्तादिति । *तस्येति सामान्यशब्दोऽपि बुद्धिस्थत्वेन सर्वविशेष-प्रकृतिबोधक इति उपगवादिभ्य उत्पत्तिर्न विरुद्धा* । आदिवृद्धि-रिति । *स्वविषये इति शेषः । तेन व्यसोर्भावो *वैयसवं, व्यापदि-भवं वैयापदमित्यादौ न दोषः । तत्रापि वृद्धिप्राप्त्या विषयसत्त्वात् । ऐज्विधायकेन निषेध इत्यन्यत् । बाधत इति । अनुशतिकादिषु पुष्करस-च्छब्दपाठात् । स हि पौष्करसादावुभयपद*वृद्ध्यर्थम्, *ठगादिस्तु ततो ना*नभिधानादिति भावः । *परत्वाद् बाधत इति तु न युक्तम् । युगपत् *कार्यद्वयासम्भवे एव विप्रतिषेधप्रवृत्तेः । *नापि तक्रकौण्डिन्यन्यायेना-पवादत्वम् । उभयोरपि-गौः, पाचकः, सौश्रुतः, इत्यादौ *चारितार्थ्या-त् । स्पष्टं चेदं भाष्ये ।

तस्येदमिति । *सामान्ये तत्तद्रूपेणापि सर्वविशेषान्तर्भावाद-

---

नाम्नो यावत्परामर्शकत्वादत आह—*तस्येतीति* । *न विरुद्धेति* । तस्या-पि सूत्रोच्चरितप्रथमशब्दबोध्यत्वसम्भवादिति भावः । ननु प्रवर्त्तमानस्य बाध-कत्वव्यवहारो युक्त इति यत्राऽऽदिवृद्धिर्निषिध्यते तत्राऽऽदिवृद्ध्याऽन्त्योपधावृद्धेः कथम्बाध इत्यत आह—*स्वविषय इति* । स्वीयोद्देश्यतावच्छेदकाक्रान्त इत्यर्थः । *वैयसवमिति* । "इगन्ताच्च लघुपूर्वात्"(पा०सू०५-१-१३१) इत्यण् । अत्र प्राप्ताप्यादिवृद्धिः "न य्वाभ्याम्"(पा० सू० ७-३-३) इति निषिध्यते । *वृद्ध्यर्थमिति* । यद्यादिवृद्धेर्बाधकता न स्यात्तदाऽत्राऽऽदिवृद्धेरुपधावृद्धेश्च प्रा-प्त्या पौष्करसादिरित्यस्य सिद्धौ स पाठो व्यर्थः स्यादिति तेन पाठेनाऽऽदिवृ-द्धिविधायकशास्त्रविषये यद् वृद्ध्यन्तरविधायकं शास्त्रं प्राप्तं तद्बाध्यत इति क-ल्प्यत इति । ननु यस्मिन्तद्धिते नोभयपदवृद्धिप्राप्तिस्तत्रोभयपदवृद्धिविधाय-कतया तत्पाठश्चरितार्थ इत्यत आह—*ठगादिरिति* । अनभिधानादिति* । पुष्करसच्छब्दस्य ज्ञापकतापरभाष्यप्रामाण्यात्तथा कल्प्यत इति भावः । परत्वाद्बाधवादिमतं निरस्यति—*परत्वादिति* । *कार्यद्वयासम्भव एवेति* । 'वृक्षेभ्यः'इत्यत्र यथा । अपवादत्वादपि न बाधकत्वमित्याह—*नापीति* । *चारितार्थ्यादिति* । एवञ्चापवादत्वबीजासत्त्वमाविष्कृतम् ।

*सामान्ये=इदम्पदार्थसामान्ये । इयञ्च शङ्का शाब्दबोधवैलक्षण्या-ऽनादरेण प्रवृत्ता । समाधानमपि तथैव । एतेन सामान्ये विशेषान्तर्भावेऽपि "तस्येदम्"(पा० सू० ४-३-१२०) इत्यनेन सिद्धिकल्पने इदन्त्वेनापत्यस्य भानं भविष्यति "तस्यापत्यम्"(पा० सू० ४-१-९२) इति सूत्रसत्त्वे त्वपत्यत्वेनाप-त्यस्य शाब्दबोधविषयत्वमिति "तस्येदमित्यपत्येऽपि"इत्यसङ्गतमित्यपास्तम् । ननु "तस्यापत्यम्"(पा० सू० ४-१-९२) इति सूत्राभावे "अत इञ्"(पा० सू०

पत्येऽपि "तस्येदम्"इत्येव सिद्धत्वात् *"तस्यापत्यमत इञ्"इत्येव कार्यं, व्यर्थो योगविभाग इति प्रश्नः । परिहरति–बाधनार्थमिति । भानवादौ *छस्येति शेषः । नन्वशैषिकेणानेन* स्वविषये *ऽप्राप्तस्य छस्य कथं बाधः ? । किं च 'तस्येदमित्यपत्येऽपि'इति पूर्वपक्षोऽप्यसङ्गतः । अशैषिकविषये *शैषिकेणासिद्धेरिति तृतीयस्याशङ्कां समाधातुमाह—*उत्सर्ग इति । *योगविभागाभावे *प्रकृतिविशेषसम्बद्धान्यापत्यार्थस्य शेषत्वमिति न दोषद्वयम् । योगविभागे त्वणादिविधावपत्यत्वेनापत्यस्योपयोगान्न शेषत्वमिति छस्याप्राप्तिरेवात्र बाधः । *इदंशब्दो हि इदन्त्वेन सर्वविशेषबोधकः । तदुक्तं "शेषे"इति सूत्रे भाष्ये "इदंविशेषा ह्येते अपत्यं निवासः समूहः" इति । इदंपदार्थप्रवृत्तिनिमित्ताश्रया व्यक्तिविशेषा इति तदर्थः । *तत्र 'शेषे' इति विशेषणादपत्यादीनामिदंत्वाश्रयतया न ग्रहणमिति बोध्यम् । शेषपदसम्बद्धेनेदंपदेन प्रागनुक्तानामेवेदंत्वेन ग्रहणमित्येतद्बोधयितुमेव 'उत्सर्गः शेष एवासौ'इत्युक्तम् । *ये त्विदन्त्वेन बोधे शैषिकमिच्छन्ति, वार्त्तिकन्तु शाब्दबोधकृतविशेषानादरेण प्रवृत्तमिति वदन्ति; तेषामेतद्विरोधः स्पष्ट एव । किं च भानोरपीदन्त्वेनापत्यबोधे छस्य तत्रेष्टत्वेनास्य तद्बाधकत्वोक्तेः स्वारस्यासङ्गतिः । *"आपत्यं वा गोत्रम्"इति वार्त्तिकप्रयोगे शिवादित्वादण् बोध्यः । *दाशरथायेत्यादित्यसाधुत्वमेवेति वार्तिकस्वरस इति विभावनीयं सद्भिः ।

---

४-१-९५) इति सूत्रमर्थान्तरेऽपि प्रवर्त्तेतेत्यत आह—*तस्यापत्यमत इञित्येवेति* । *छस्येति* । प्राप्तस्येति शेषः । *अनेन=तस्यापत्यमित्यनेन । *अप्राप्तस्येति* । शेषेऽर्थे तस्य विधानादिति भावः । *शैषिकेणासिद्धेः=शैषिकस्याप्राप्तेः । *उत्सर्ग इतीति* । असावुत्सर्गः शेष एवेति योजना । *उत्सर्गः=इदन्त्वरूपसामान्यधर्मप्रकारकप्रतीतिविशेष्यः । तदेतदुपपादयति—*योगविभागाभाव इति* । *प्रकृतिविशेष इति* । अदन्तात्मकप्रकृतिविशेषेत्यर्थः । योगविभागसत्त्वेन शेषत्वमित्येतदुपपादयति—*इदंशब्दो हीति* । एवञ्च यत्पर्यवसितं तदाह—*तत्र शेषेति* । वृत्त्युक्तानुसारिमतं खण्डयति—*ये त्विति* । ननु यदीदन्त्वेनापत्यविवक्षायाञ्चाण् तदा आपत्यं वा गोत्रमित्यत्रापत्यस्यापत्यमित्यर्थेऽत इञ् स्यादत आह—*आपत्यं वेति* । दाशरथायेति प्रयोगस्य त्वनुपपत्तिरेवेत्याह—*दाशरथायेत्यादीति* ।

*अन्तरङ्गत्वात्=वर्णमात्रापेक्षत्वेनान्तरङ्गत्वात् । इदञ्चान्तरङ्गत्वं स्वनिमित्तसद्भावात्पूर्वंप्रवृत्तौ नियामकम् । अप्राकृतव्यूहपरिभाषया यस्य शा-

कृतसन्धेः किमिति। *अन्तरङ्गत्वात्सन्धिकार्योत्तरमेव प्रत्ययो भाविष्यतीति समर्थानामिति व्यर्थमिति प्रश्नः। उत्तरयति—अकृतेति। *यद्यप्यत्रैकादेशप्रवृत्तिसमये न वृद्धेः प्राप्तिः, कृते एकादेशे जायमानया वृद्ध्या च न तन्निमित्तविनाशस्तथापि *निमित्तविनाशसंभावनैव तत्परिभाषाप्रवृत्तौ निमित्तम्। सा चात्रास्त्येव। यदि दीर्घो न स्यात्तदा वृद्ध्या निमित्तविनाशः स्यादितीति भावः। *वस्तुतोऽन्तरङ्गन्यायलब्धार्थानुवाद एव समर्थानामिति, *विषुण इत्यादावकृतसन्धेरपि प्रत्ययदर्शनेनान्यत्रापि तथाशङ्कावारणाय। *अत एव विप्रतिषेधसूत्रे भाष्ये 'अन्तरङ्गं बलीयः'इत्यस्य सौत्थितिर्वैक्षमाणिरित्युदाहरणं दत्तम्। "पदस्य विभज्यान्वाख्याने सु उत्थित इ सु इति स्थिते परत्वादादिवृद्धिः प्राप्ता"इति च कैयटः। "अकृत"इति परिभाषा तु भाष्याव्यवहृतत्वान्नास्त्येवेत्यन्यत्र विस्तरः। वभ्रुमुपगोरिति। यद्यपीदं* तत्सम्बन्ध्यपत्यमित्यर्थे प्रत्यय इत्यर्थेन प्रत्यासत्त्या वारयितुं शक्यं, *तथापि ऋद्धस्यौपगव इत्यादिवारणाय साऽऽवश्यकीति तत्त्वम्। षष्ठ्यर्थे इति। उपगुरपत्यमस्य देवदत्तस्येत्यर्थे 'औपगवो देवदत्तः' इति मा

---

त्रस्याप्रवृत्तिः सम्पादनीया तत्प्रवृत्तेः प्राक् तच्छास्त्रस्य यन्निमित्तन्तस्य शास्त्रान्तरेण यत्र विनाशः सम्भावितस्तत्र परिभाषाप्रवृत्तिरिति मत्वा शङ्कते—*यद्यप्यत्रैकेति*। *निमित्तविनाशसम्भावनैवेति*। अत्रैवकारेण स्वप्रवृत्त्युत्तरकाले यत्र स्वनिमित्तस्यान्यशास्त्रेण विनाशस्तत्र प्रवृत्तिरित्यर्थव्यवच्छेदः। समर्थग्रहणस्याकृतव्यूहपरिभाषाज्ञापकत्वं खण्डयति—*वस्तुत इति*। अन्तरङ्गन्यायलब्धार्थानुवादः। स्वनिमित्तस्यैव सद्भावात्तद्धितोत्पत्तेः प्रागेकादेशे कृतसन्धिकार्यादेव भाविष्यतीति भावः। अनुवादस्य फलमाह—*विषुण इत्यादावेति*। *अत एव=समर्थग्रहणस्य न्यायलब्धार्थानुवादत्वादेव। अत्रान्तरङ्गत्वं यद्विभक्त्यन्तादुत्पत्तिस्तद्धितस्य सम्भाविता तद्विभक्तिप्रागभावसमानकालिकप्राप्तिकर्तृत्वरूपम्। "अन्तरङ्गानपि"इतिपरिभाषैकवाक्यत्वात्। तेन "आश्विमानण्"इति निर्देशः सङ्गच्छते। तद्धितोत्पत्तिप्राप्तिकालिकत्वविवक्षायान्तु विभक्तिनिमित्तकदीर्घस्य पूर्वमापत्तिः स्यात्। *इदम्='वभ्रुमुपगोरपत्यञ्चैत्रस्य'इत्यत्र प्रत्ययप्रसक्तिरूपम्। प्रकृते तद्धितविधेः समर्थत्वञ्च तद्धितप्रकृतित्वाभिमतार्थसम्बद्धार्थाभिधायकतद्धितविधायकत्वरूपम्, तच्चात्र नास्ति, सामर्थ्यस्यैकार्थीभावरूपस्य तत्परिभाषाविषयत्वात्। अत्रापि तदाश्रयणफलम्प्रतिपादयति—*तथाऽपीति*।

भूदित्यर्थः । "तस्यापत्यम्"(पा० सू० ४-१-९२) इत्यादौ लिङ्गवचने *अविवक्षिते इति बोद्धव्यम् ॥

अपत्यं पौ (पा०सू०४-१-१६२)॥ यद्यपि(१) प्रवराध्यायप्रसिद्धं *लोके गोत्रं तथापि प्रवराध्यायाप्रसिद्धस्यापि सञ्ज्ञार्थमिदम् । पौत्रादेरपत्यत्वाव्यभिचारादपत्यपदसामर्थ्यादाह—अपत्यत्वेन विवक्षितमिति । तेन पौत्रप्रभृतेस्तत्त्वेन* विवक्षायां न गोत्रत्वम् । पौत्रापत्यशब्दयोः ससम्बन्धिकतया *यदीयं पौत्रप्रभृति अपत्यं तं प्रत्येव तस्य गोत्रत्वमित्यङ्गिरसः पौत्रे गर्गस्यानन्तरे वाच्ये न गर्गशब्दाद्यञ् । अत्र समर्थानां प्रथमादित्यनुवर्त्य विभक्तिविपरिणामेन समर्थानां प्रथमस्य प्रकरणादपत्यप्रत्ययप्रकृतेर्यत्पौत्रप्रभृति अर्थात्तत्प्रत्ययवाच्यतयाऽपत्यत्वेन विवक्षितं तत् गोत्रमित्यर्थात् *पौत्रपरगर्गापत्यादिशब्दान्न यूनि प्रत्यय इति भाष्ये स्पष्टम् । एवञ्च गोत्रप्रत्ययान्तेभ्योऽप्यपत्यत्वेनैव बोध इति सूचितम् । *अत एव गर्गस्यापत्यं गोत्रमित्यर्थं प्रदर्शयन्ति गार्ग्य इत्यादेर्वृद्धाः । *अत एव "आपत्यं वा गोत्रं, परमप्रकृतेश्चापत्यः, आपत्याज्जीवद्वंश्यात्स्वार्थे द्वितीयो युवसञ्ज्ञः

---

*अविवक्षित इति* । "अर्द्धं नपुंसकम्"(पा० सू० २-२-२) इत्यनेन ज्ञापितत्वात् । तेनौपगवी गर्गाः इति सिद्धम् ।

*लोके गोत्रमिति* । तथा चेदं सूत्रमनर्थकमिति भावः । *तत्त्वेन=पौत्रत्वेन । *यदीयम्पौत्रप्रभृत्यपत्यामिति* । अत्र यदीयमित्यस्य यत्सम्बन्धीत्यर्थः । पौत्रशब्दस्य जन्यताविशिष्टजन्यपरतया एतद्घटकजन्यतायाश्च निरूपकम्प्रति नित्यसाकाङ्क्षतया यत्पदार्थस्योपस्थितत्वात्तस्यैव निरूपकत्वपर्यवसानम्भवति । एवञ्च स्वनिरूपितजन्यताविशिष्टजन्यत्वस्यैव सम्बन्धस्य यदीयमित्यत्र सम्बन्धत्वेन भानं कल्प्यम् । अपत्यशब्दस्य च जन्यताविशिष्टपरत्वादेतद्घटकजन्यताऽपि प्रत्यासत्त्या यत्पदार्थनिरूपिता विवक्षिता । एवञ्च यदाऽङ्गिरसः पौत्रस्य विवक्षा तदाऽपत्यत्वमप्यत्राङ्गिरोनिरूपितमेव गोत्राधिकारीयप्रत्ययोत्पत्तिनियामकमित्यङ्गिरसो गोत्रङ्गर्गस्यापत्यमित्यर्थविवक्षायाञ्चोभयघटकजन्यतानिरूपकस्यैकत्वप्रतीतिरितोऽत्र नाणिति भावः । एवं युवत्वमपि तन्निरूपितमेव विवक्षितम्प्रत्यासत्तेः, तत्फलमाह—*पौत्रपरेति* । गर्गापत्यस्यापत्यमित्यर्थविवक्षायामपत्यशब्दार्थघटकजन्यतायाङ्गर्गापत्यनिरूपितत्वम्प्रतीयते न तु गर्गनिरूपितत्वमिति न यून्यण्प्रत्यय इति भावः । *अत एव=अपत्यत्वेन बोधादेव । अपत्यत्वेन बोधे भाष्यान्तरमपि साधकमित्याशयेनाह—*अत एवेति* । अपत्यत्वेन बोधस्याभिमतत्वादेव । आपत्यशब्दस्य पौत्रपरत्वमुपपाद-

---

(१) 'ऋष्यपत्यमात्रम्' इति लिखितपुस्तके पाठः ।

स चास्त्रियाम्''इत्येतद्वार्त्तिकसमुदायेन प्रत्यययोरेव गोत्रयुवसञ्ज्ञाविधानम् । *अपत्यस्यापत्यम्=आपत्यम् । शिवादेराकृतिगणत्वादण् । *तेन च तद्बोधकप्रत्ययस्वरूपं लक्ष्यते । आपत्यम् आपत्यादित्य*नयोस्तदर्थकत्वावश्यकत्वात् । गोत्रसञ्ज्ञासूत्रे क्वचित्पुस्तके 'आपत्यो वा गोत्रम्' इति पाठो दृश्यते, स च युक्ततरः । स्त्रीपुंसाधिकारे ''अपत्यान्ता'' इत्यस्मरोक्तेः । *अत एव 'आपत्यः'इति द्वितीयवार्त्तिके पुंलिङ्गप्रयोगः । न चाऽऽपत्ये भव इत्यर्थेऽण्णन्तः सः । *छप्रत्ययापत्तेः । तदुक्तं युवसञ्ज्ञासाहचर्येणा*स्या अपि प्रत्ययनिष्ठताया एवौचित्याच्च । *वार्त्तिकमतेऽप्यर्थस्य गोत्रसञ्ज्ञायां सूत्रोक्तार्थादविशेषेण वाशब्दासङ्गतिश्च न्यासलाघवमात्रेण वाशब्दे आपत्यो गोत्रमिति वेति वदेत्* । ''आपत्यो वा'' इति न्यासेन *सञ्ज्ञिविकल्पस्यैव लाभात् । *आपत्यादित्यादेरापत्यबोधकप्रत्ययान्ताज्जीवद्वंश्यबोधकात्स्वार्थे द्वितीयो युवसञ्ज्ञः प्रत्ययो भवती*त्यर्थ इति स्पष्टमेवेति दिक् । पौत्रेति । पौत्रादेरप्युपलक्षणम् ।

जीवति तु ॥ ( पा०सू० ४-१-१६३ ) *युवसञ्ज्ञमेवेति । *समावेशे त्वौपगवस्य गोत्रस्यापत्यमौपगविरित्यादौ ''एको गोत्रे'' इति

---

यति—*अपत्यस्यापत्यमिति* । नन्वेवमापत्यशब्दस्य पौत्रे यः प्रत्ययस्तत्परत्वं कथमत आह—*तेन चेति । आपत्यशब्देन चेत्यर्थः । *अनयोरिति । आपत्यादित्यत्रापत्यशब्दो यदि प्रत्ययपरो न स्यात्तदाऽर्थात्प्रत्ययविधानानुपपत्त्या वार्त्तिकासङ्गतिः स्यादिति तत्र लक्षणाया आवश्यकत्वे तदानुपूर्वीकत्वादापत्यमित्यत्रापि लक्षणेति भावः । *अत एव=अपत्यप्रत्ययान्तस्य पुंस्त्वादेव । *छप्रत्ययापत्तेरिति । वृद्धत्वादित्यादिः । *अस्या अपि=गोत्रसंज्ञाया अपि । प्रत्ययस्य संज्ञाकरणमावश्यकमित्याह—*वार्त्तिकमत इति । *इति वदेदिति । तावताऽपि न्यासलाघवस्य सम्भवात् । *संज्ञिविकल्पस्येति । सूत्रकारमतेऽर्थस्य संज्ञा, वार्त्तिकमते तु प्रत्ययस्येति संज्ञिविकल्पलाभः । द्वितीयवार्त्तिकं व्याचष्टे-*आपत्यादित्यादेरिति । *इत्यर्थ इति । एवञ्च गर्गादेर्यदा पौत्रप्रभृतेरपत्ये चतुर्थादौ जीवद्वंश्ये प्रत्ययः क्रियते तदा स्वार्थे द्वितीयो ''यञिञोश्च''(पा० सू० ४-१-१०१) इत्यादिना फगादिः क्रियते-गार्ग्यायण इति । स चास्त्रियामित्यनेन स्त्रियान्द्वितीयप्रत्ययाभावाद्गार्गीत्येव भवतीत्युक्तम्भवति ।

*युवसंज्ञमेवेतीति । ''जीवति तु वंश्ये''(पा० सू० ४-१-१६३) इत्यत्र तुशब्दो भिन्नक्रमः युवेत्यनन्तरं द्रष्टव्यः । स चैवकारार्थः, तेननियमलाभः । अन्यथाऽस्याऽऽकडारीयसंज्ञाभिन्नत्वेन गोत्रसंज्ञाबाधकत्वन्न स्यात् । इष्यते च

नियमादिञ् न स्यात्* । "गोत्राद्यूनि" ( पा० सू० ४-१-९४ ) इत्यस्याप्राप्तविधायकत्वे तु गर्गस्य चतुर्थे जीवद्वंश्ये विवक्षिते *गार्ग्य इत्यस्याप्यापत्तेः । गोत्रादेव यूनीति नियमाभावात् * । किंच समावेशे द्वितीयाध्यायस्थलुङ्मात्रस्य मध्येऽपवादन्यायेन "गोत्रेऽलुगचि" ( पा० सू० ४-१-८९ ) इत्यलुक् स्यात् । तथा च पीलाया अपत्यं पैलः तस्यापत्यं युवा-"अणो द्व्यचः" ( पा० सू० ४-१-१५६ ) इति फिञः "पैलादिभ्यश्च" ( पा० सू० २-४-५७ ) इति लुकि पैलस्य च्छात्राः पैलीया इत्यत्र "गोत्रेऽलुक्" ( पा० सू० ४-१-८९ ) इति अलुक्प्रसङ्गः । असमावेशे युवप्रत्ययविषयेऽस्याप्राप्तेस्तेन* न्यायेन भूम्नि प्राप्तस्येत्यर्थाद*स्याप्राप्तौ *अन्तरङ्गत्वात्पैलादिलुगेवेति सिद्धमिति दिक् ॥

भ्रातरि च ( पा० सू० ४-१-१६४ ) ॥ *भ्रातुरवंश्यत्वादारम्भः । बहुषु पुत्रेष्वेतदुपपन्नं भवति-अयं मे ज्येष्ठोऽयं मे मध्यमोऽयं मे कनीयान् इत्याद्यन्तवत्सूत्रभाष्यप्रयोगे बहूनां निर्धारणेऽपीयसुन्दर्शनाद्विभागमात्रमीयसुनादिनिमित्तं द्वित्वादि तु सूत्रेऽविवक्षितं, तद् ध्वनयन्नाह-ज्येष्ठे इति । *अत एव बहुष्वपि पुत्रेषु मृतेष्वपि पित्रादावग्रजे जीवति "द्वौ गार्ग्यायणौ" इति गार्ग्यस्य द्वौ पुत्रौ तयोः कनीयान्='गार्ग्यायणः' इति चोपपद्यते ।

वाऽन्यस्मिन् ( पा० सू० ४-१-१६५ ) ॥ सप्तपुरुषावधिपितृकुले *सपिण्डाः । *मातृकुले पञ्चपुरुषावधि । प्रकृते भ्रातुरन्यस्मिन्निति पर्युदा-

---

बाधकत्वम्; तदाह—*समावेश इति । *इञ् न स्यादिति । तस्यापि गोत्रत्वादिति भावः । *गार्ग्य इत्यस्याप्यापत्तेरिति । तत्र हि जीवद्वंश्ये गार्ग्यायणः इत्येवेष्यते सम्प्रति तूभयं स्यात् । *नियमाभावादिति । अस्य सम्प्रतीत्यादिः । *तेन न्यायेन=येन नाप्राप्तन्यायेन । *अस्याप्राप्तौ=गोत्रेऽलुगचीत्यस्याप्राप्तौ । *अन्तरङ्गत्वात्=अजादिप्रत्ययापेक्षयाऽन्तरङ्गत्वात् ।

*भ्रातुरवंश्यत्वादिति । पितृपितामहादिरूपोत्पादकप्रबन्धो हि वंशः । तत्र भवो वंश्यः दिगादिभ्यो यत् । एवं पितृव्यमातुलादीनामपि बोध्यम् । *अत एव=द्वित्वादेरविवक्षितत्वादेव ।

*पितृकुले सपिण्डा इति । येषां जनने मरणे वा "कुलान्न भुञ्जीत" इति निषेधादसपिण्डैस्तेषामन्नं भुज्यते ते सपिण्डाः । *मातृकुल इति । इदं सापिण्ड्यं विवाहादिप्रतिबन्धकम् । *आद्यमे-

सादा*ग्रमेव गृह्यते इति वृत्तिः। अन्त्यमपि गृह्यते इत्यन्ये*। अन्यस्मिन्नित्यस्य *ज्येष्ठभ्रातुरन्यस्मिन्नित्यर्थः। *तच्च *भ्रातृरूपसपिण्डे जीवति जीवतः परत्वाद्विकल्पव्यावृत्त्यर्थम्। जीवतीत्यनुवर्त्तमाने जीवतीति व्यर्थमत आह—एकमिति*। तिङन्तं तदिति भावः। *द्वितीयमिति। अत्रन्तात्सप्तम्यन्तमिति भावः। ननु ज्यायसीत्यनुवृत्त्यैव सिद्धे तरबन्तं व्यर्थमत आह—तरबन्तनिर्देश इति। तरबन्तनिर्देश इत्यर्थः। उभयोरिति। स्थानवयसोरित्यर्थः। स्थानं=*पदं*पितृव्यत्वादिकं, तद्रूपेणैव तेषां पूज्यत्वात्। यद्यपि भ्रातृत्वेन न पूज्यता कनिष्ठभ्रातर्यपि *तत्सत्त्वात्। एवञ्च भ्राता न स्थानत उत्कृष्ट इत्यनेनैव व्यावृत्तिसिद्धावन्यस्मिन्निति व्यर्थं, *तथापि अन्यस्मिन्नेव सपिण्डे जीवति विकल्पः भ्रातृसहितेऽन्यसपिण्डे जीवति जीवतो नित्यमेवेत्यर्थं तत्। न च ज्यायसीत्यस्यानुवृत्त्या ज्यायसि स्थविरे इत्याभ्यामुभयप्रकर्षलाभे तरब् व्यर्थ इति वाच्यम्। *स्पष्टार्थत्वात्। मातामहे भ्रातरीति। मातृसापिण्ड्यमपि गृह्यत *इति मते इदम्। क्वचित्तु पितामहे भ्रातरीति पाठः। स्थानवयोन्यूने इति। स्थानन्यूनः स्वज्येष्ठो *भ्रातृपुत्रादिः। जीवतीति किमिति। सूत्रोपात्तमनुवर्त्तमानं च किमर्थमिति प्रश्नः। मृते=सपिण्डे। मृतः=चतुर्थादिः। "वृद्धस्य च" इति "यूनश्च" इति वार्त्तिके। 'तत्र भवान्' इति पूजागमक-

---

व=पितृकुले ये सपिण्डास्तेषामेव ग्रहणमित्येतत्। *अन्ये इति आद्यमेव ग्राह्यमित्यत्र भाष्यानुग्रहाभाव इति तेषामाशयः। *ज्येष्ठभ्रातुरन्यस्मिन्निति। अन्यपदस्य प्रतियोगिसाकाङ्क्षार्थबोधकतयाऽनुपस्थितस्य प्रतियोगित्वकल्पनापेक्षया ज्येष्ठभ्रातुः पूर्वसूत्रेणोपस्थितत्वात्तस्यैवान्यपदार्थैकदेशे भेदे प्रतियोगितयाऽन्वयसम्भवादिति भावः। *तच्च=अन्यस्मिन्निति पदञ्च। *भ्रातृरूपसापिण्ड इति। अस्य ज्येष्ठेत्यादिः। नन्वेवम्पूर्वसूत्रविहितनित्यसंज्ञायाः कोऽवकाश इति चेत् संज्ञात्वेनाभिप्रेते मृते नित्यार्थन्तत्स्यात्। *एकमितीति। प्रकृतसूत्रस्थमित्यर्थः। *द्वितीयमितीति। अनुवर्त्तमानं द्वितीयमित्यर्थः। स्थानपदं व्याचष्टे—*पदमिति। अत्र पदशब्दः पूज्यतावच्छेदकत्वाभिमतधर्मविशेषपरस्तदभिप्रायेणाह—*पितृव्यत्वादिकमिति। *तत्सत्त्वात्=भ्रातृत्वसत्त्वात्। सिद्धे सतीतिन्यायेन समाधत्ते—*तथापीति। *स्पष्टार्थत्वादिति। समानार्थकपदद्वयोपादानेन प्रकर्षलाभो लक्षणया भवति। तरम्निर्देशे तु प्रकर्षलाभो वाच्यवृत्त्येति स्पष्टप्रतिपत्त्यर्थन्तरम्निर्देश इतिं भावः। *इति मत इति। द्वितीयमत इत्यर्थः। *भ्रातृपुत्रादिरिति। भ्रातुः पुत्रादिरिति समा-

म् । *युवसञ्ज्ञकानामल्पवयस्त्वेन वृद्धाधीनत्वेन सुखितया च पूजा, तांश्च गोत्रभूतस्तृतीयोऽपि मन्यते । *अत्र युवसञ्ज्ञाविधानसामर्थ्यात्स्वार्थे युवप्रत्ययो बोद्धव्यः । जाल्म इति । *जीवद्वंश्येन हि वृद्धाधीनेन भाव्यम्, यस्तु वृद्धाननादृत्य स्वातन्त्र्यं कुरुते स एवमुच्यते ॥

एको गोत्रे (पा०सू०४-१-९३) । गोत्रे इति । अभिधित्सित इत्यर्थः । एक एवेति । संख्यावाची एकशब्दोऽधिकारलब्धापत्यप्रत्ययस्य विशेषण इति भावः । *अत एवानन्तरापत्यप्रत्ययान्तान्नापत्यप्रत्ययः । *अपत्यग्रहणानुवृत्तिस्तु अनन्तरापत्यप्रत्ययान्ताद्गोत्रप्रत्ययवारणाय । अन्यथा नियमस्य तुल्यजातीयतया गोत्रप्रत्ययान्तादेव गोत्रप्रत्ययो वार्येत । उपगोरण्, गर्गादिभ्यो यञ्, नडादिभ्यः फक् । *तत्तत्पितृसंबन्ध्येवापत्यम्(१) ।

आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी ।

आहुर्दुहितरं सर्वेऽपत्यन्तोकन्तयोः समे ॥

इत्यमरात् । तयोः=पुत्रदुहित्रोः । *अत एव पितामहोत्सङ्गे आसीनं दारकं कश्चित्पृच्छति—कस्यायमिति ?। स तत्पितरमेव व्यपदिशति

---

स्तः । पूजामुपपादयति-*युवसंज्ञकानामिति । ननु गोत्राद्यूनीतिनियमात्कथमत्र यूनि प्रत्यय इष्यत आह—*अत्रेति । कुत्सामुपपादयति—*जीवद्वंश्य इति ।

ननु गोत्रेऽभिधित्सिते एक एवेति नियमेऽपि कथन्न चतुर्थे गोत्रे गोत्रप्रत्ययान्ताद्गोत्रप्रत्ययः तदभिधायकस्य प्रत्ययस्यैकत्वादत आह-*अत एवेति । सङ्ख्यावाचकस्याश्रयणादेव । गोत्रेऽभिधित्सित इत्यनेन यन्निरूपितङ्गोत्रत्वन्तत्प्रतिसम्बन्धिगोत्रप्रतिपादक एक एव प्रत्ययस्तस्य गोत्रस्याभिधायक इतीह विवक्षितोऽर्थः । यदि परमप्रकृतेर्गर्गशब्दात्प्रत्ययं कृत्वा प्रत्ययान्तरं क्रियते तदा नियमविरोधः स्पष्ट एवेति भावः । ननु तथापि गोत्रे एक एव प्रत्यय इत्येवास्तु, गर्गस्य गोत्रापत्यमितिविग्रहे द्वितीयो न भविष्यतीत्यत आह—*अपत्यग्रहणानुवृत्तिस्त्विति । अपत्यग्रहणाननुवृत्तौ यन्निरूपितगोत्रत्वविवक्षा तन्निरूपितगोत्रत्वविशिष्टाभिधायकप्रत्ययान्तात्तादृशो द्वितीयः प्रत्ययो नियमेन निवार्येत अनन्तरापत्यप्रत्ययान्तात्तन्निरूपितगोत्राभिधायकः प्रत्ययो न निवार्येत । अपत्यग्रहणानुवृत्तौ तु यन्निरूपितगोत्रत्वविवक्षा तन्निरूपितापत्यत्वविशिष्टाभिधायकस्यैकत्वलाभादनन्तरापत्यप्रत्ययान्तादपि गोत्रापत्ये प्रत्ययो न भवतीति भावः । यदुक्तं-'गोत्रे स्वैकोनसङ्ख्यानाम्'इत्यनेन पक्षद्वयं, तदुपपत्तये आह-*तत्तत्पितृसम्बन्ध्येवेति । *अत एव=पितुरेवापत्यमिति स्वीकारादेव । कश्चित् पृच्छतीत्यस्य पितामहम्प्रत्येवेति शेषः । अपत्यम्पौत्रप्रभृतीति सामानाधिकरण्यमस्मिन्पक्षे 'अपत्यमिवापत्यम्'इतिरीत्या गौणं सौत्रानुवादाद् ग्राह्यम् । गर्गादिभ्यो विहितः

---

(१) 'तत्तन्निरूपितमेवापत्यत्वम्' इति क्वचित्पुस्तके पाठः ।

नात्मानम्; तदाह—गोत्रे इति ॥ *उपगोस्तृतीये वाच्ये औपगवादिभ्य अनिष्टा प्रत्ययपरंपरैव प्राप्नोति न तु कदाचिदप्यौपगव इत्य*णन्विशिष्टमिष्टं सिध्यति। एवं गर्गस्य तृतीये वाच्ये "गर्गादिभ्यः" इत्याद्यारम्भसामर्थ्यात् *परंपरापत्यापत्यवत्संबन्धे प्रवृत्त्येष्टसिद्धावपि गर्गादिभ्यः ततः प्रत्ययान्तरे प्रत्ययद्वयपरंपराऽनिष्टापि प्राप्नोतीति भावः। *यद्यप्यनन्तरेऽणाऽऽदीष्टमेव तथाप्यनिष्टघटकत्वात् *सोऽप्यनिष्टः। परंपरेत्यस्य 'प्रसज्यते' इत्यनेनान्वयः। परम्परैवेत्यर्थः। नन्वत्र पक्षे* उपगोस्तृतीयेऽणू*विध्यर्थत्वमस्य वाच्यं, प्रत्ययमालाव्यावृत्तये नियमार्थत्वञ्चेति *गौरवम्। *न च गोत्रपदेन गोत्रागोत्रसमुदायो लक्षणीयः। एकपदञ्च सामर्थ्यात्सावधारणम्। विधिमात्रार्थत्वे हि तद्व्यर्थमेव। गोत्रे इत्युक्त्यैवोपगवादि-

प्रत्ययो गोत्राधिकारसामर्थ्याद्यद्यपि तृतीये वाच्येऽनन्तरापत्ये प्रत्ययमकृत्वापि भविष्यतीति तद्विषये वक्ष्यमाणा परम्परा न सम्भवतीति यस्मिन्स्थले वक्ष्यमाणो दोषः सम्भवति तादृशं स्थलमाह—*उपगोस्तृतीय इति। *अणूविशिष्टमिष्टमिति। एवञ्चात्रानिष्टापत्तिरिष्टासिद्धिरित्युभयं दोषः। *परम्परापत्यापत्यवत्सम्बन्ध इति। परम्परयाऽपत्यापत्यवद्भावसम्बन्ध इत्यर्थः। एवञ्चात्रैकस्येष्टस्य सिद्धावप्यनिष्टस्यापि प्राप्तिः। नन्वत्र पक्षेऽनन्तरापत्ये प्रत्यय इष्ट एवेति द्वितीयप्रत्ययमारभ्यानिष्टप्रत्ययगणना कार्या, तथा च मूलोक्तं स्वैकोनसङ्ख्यानामित्यनुपपन्नमित्याशयेन शङ्कते—*यद्यपीति। *सोऽपि=प्रथमोऽपि। एवञ्चास्य श्लोकस्यानिष्टपरम्परापत्तौ तात्पर्यमिति भावः। स्वैकोनसङ्ख्यानामित्यस्य स्वं=गोत्रं तदपेक्षया एकोनसङ्ख्यानाम्प्रत्ययानाम्परम्परा प्रसज्यत इत्यन्वयः। अयम्भावः—अत्र गोत्रशब्दो गोत्राभिधायिप्रत्ययपरः, तथा च गोत्राभिधायी प्रत्ययः प्रकृते एक इष्टः इतरेऽनिष्टाः। अतः प्रथमस्यानिष्टस्य चतुर्थस्य चानिष्टस्य सन्दंशपतितत्वात्तत्राप्यनिष्टत्वकल्पनया गोत्राभिधायिप्रत्ययगणनायान्तस्य तृतीयापत्ये जातत्वाद् द्वयोर्गणना। एवञ्चतुर्थे गोत्रे त्रयाणामनिष्टानां गणना, एवम्पञ्चमादौ चतुर्णामित्यादिक्रमेण गणनायां गोत्राभिधायकस्य वस्तुगत्यैकस्य परित्यागङ्कृत्वाऽनिष्टानाम्परम्परा प्रसज्यते। एतस्याप्यौपचारिकानिष्टत्वमादाय तु व्याख्यानसमये एकोनशतं प्रत्ययाः स्युरित्युक्तम्। तत्र प्रत्यया इत्यस्यानिष्टा इति शेषः। *अत्र पक्षे=पितुरेवापत्यमिति पक्षे। *विध्यर्थत्वमिति। तृतीयस्यापत्यत्वविरहेणोपगोर्गोत्रापत्यमित्यर्थविवक्षायामप्राप्तस्य प्रत्ययस्य विधानार्थमित्यर्थः। *गौरवमिति। न ह्येकेन "एको गोत्रे"(पा० सू० ४-१-९३) इति सूत्रेणोभयलाभ इतिसूत्रस्यावृत्तिङ्कृत्वैकस्य विध्यर्थत्वमपरस्य नियमार्थत्वमिति गौरवमित्यर्थः। एकग्रहणसामर्थ्यात्केवलमस्य सूत्रस्य नियमार्थत्वमेवेत्याशयेन शङ्कते—*न चेति।

भ्योऽणादिविधानेनेष्टसिद्धेः। एवञ्च पुत्रे एकः पौत्रे परस्तदपत्ये चापर इति गोत्रागोत्रसमुदाये बहूनां प्राप्तौ एक एवापत्यप्रत्यय इति नियमेनैकाभ्यनुज्ञाद्वारा परमप्रकृतेर्विधिरपि परंपरापत्यापत्यवत्संबन्धे प्रवर्तेत इत्यनुमीयत इति वाच्यम् । *एकग्रहणसामर्थ्येनैकाभ्यनुज्ञानादिरूपपूर्वोक्तार्थकल्पनापेक्षया पितामहादीनामप्यपत्यमित्येतत्कल्पनस्यैव युक्तत्वात् । *अत एव "अपत्यं पौत्रप्रभृति" (पा० सू० ४-१-१६२) इति सूत्रं* स्वरसतः सङ्गच्छते । *"दशसु पुरुषेषु यस्य कुले विवाहिता शूद्रा नास्ति स सोमं पिबेत्" इत्युक्त्या यथा एकस्य पाते सर्वेषां पातस्तथा तद्रहितस्यैकस्य सर्वान्प्रत्यपातहेतुत्वेनापत्यत्वमपि (१)युक्तमिति* स्पष्टं भाष्ये। *जरत्कार्वाद्युपाख्याने च स्पष्टमेवैकस्य सर्वान्प्रत्यपातहेतुत्वम् । *अपत-

---

एकग्रहणसामर्थ्यादक्लृप्तार्थस्य कल्पनां कृत्वा सूत्रसार्थक्यापेक्षया पितामहादीनामप्यपत्यम्भवतीतिपक्षस्वीकार उचितः। एवञ्च प्रसिद्धे एवार्थे नियामकमित्याशयेन समाधत्ते—*एकग्रहणेत्यादिना । पितामहादीनामप्यपत्यमिति पक्ष एव पाणिनिसम्मत इत्याह—*अत एवेति । *स्वरसतः=लक्षणां विनापि पितामहादीनामितिपक्षस्य ज्यायस्त्वे । साधकान्तरमाह—*दशस्विति । *अपत्यत्वमपीति । न पतन्त्यनेनेत्यपत्यशब्दार्थस्यापि तत्राबाधादिति भावः । *स्पष्टम्भाष्य इति । तत्र हि उत्पादयितुरपत्ययुक्त इतिपक्षस्योपपादनं कृत्वा तत्र दूषणानि चाभिधाय "सन्तु तर्हि सर्वेऽपत्ययुक्ता इति । कथम्पुनर्ज्ञायते सर्वेऽपत्ययुक्ता इति ? एवं हि याज्ञिकाः पठन्ति-दशपुरुषानूकं यस्य गृहे शूद्रा न विद्येरन्, स सोमं पिबेदिति । यदि च सर्वेऽपत्ययुक्ता भवन्ति तत एतदुपपन्नम्भवति"इत्युक्तम् । दशपुरुषानूकमिति । अनुपूर्वात्कायतेरनुकानमभिधानमित्यर्थे घञर्थे कविधानमिति भावे कः । "अन्येषामपि"(पा० सू० ६-३-१३७) इति दीर्घः। एवञ्चानूकशब्दः शब्दार्थकः सम्पन्नः। दश पुरुषा अस्मिन्नित्यर्थेऽनूकेऽन्यपदार्थे बहुव्रीहिः। सम्बन्धश्च प्रतिपाद्यप्रतिपादकभावः। दशपुरुषोऽनूको यस्मिन्निति पुरुषेऽन्यपदार्थे पुनर्बहुव्रीहिः । दशसु पुरुषेष्विति यावत् । अत्र शूद्राः विवाहिताः । "शूद्रावेदी पतत्यधः"इति वचनात् । महाभारतेऽप्ययमर्थः प्रसिद्ध इत्याह—*जरत्कार्वाद्युपाख्यान इति । तत्र हि यायावरनामका ऋषयः काञ्चिद्वृक्षशाखामवलम्बमाना गर्तान्वितेऽधोदेशे पतनभीता जरत्कारुणा दृष्टाः । ततो जरत्कारुणा तान् प्रति पृष्टा किमर्थम्भवन्तो भीताः, कुतश्चेदृश्यवस्था भवताम् ? । ततस्ते जरत्कारुम्प्रत्यूचुः—अस्माकं कुले

---

(१) 'मप्युक्तं स्मृतिषु' इति पाठान्तरम् ।

नादपत्यमिति च "पङ्क्ति" (पा० सू० ५-१-५९) इति सूत्रे भाष्ये स्पष्टम्। *'अपत्यं तोकं तयोः समे' इत्यमरस्य तु तयोस्तद्घटितसन्तान-परंपरयोरित्यर्थ इति नासङ्गतिः। *पितामहोत्सङ्गे स्थितस्य दारकस्य विषये कस्यायमिति प्रश्नो जनकविषय एवेति तत्र पितृव्यपदेशेनोत्तरस्य नासङ्गतिरित्यरुचेराह—यद्वेति। *स्वद्व्यूनेनेति। स्वङ्गोत्रं तदपेक्षया द्व्यूनसंख्येभ्यः प्रकृतिभूतेभ्योऽनिष्टा प्रत्ययोत्पत्तिरित्यर्थः। उपगोस्तृतीये एकस्मादौपगवादिञनिष्टः प्राप्नोति, चतुर्थे द्वाभ्यामित्यादीति भावः। अ-निष्टोत्पत्तिस्तन्मात्रं *न त्विष्टासिद्धिरित्यर्थः। अत्र पक्षे उपगोर-णेष्टसिद्धावप्यौपगवादिञो निवृत्तये नियमार्थमेवेदम् (१)। *नन्वे-वमप्यनन्तरापत्यप्रत्ययान्ताद्गोत्रे प्रत्ययो दुर्वारः। गोत्रे एकस्यैव कृतत्वेन नियमाबाधात्। न च गोत्रपदेनापत्यसमुदायलक्षणया स *परमप्रकृतेरेवेति वाच्यम्। अपत्यमित्यनुवृत्त्यैव सिद्धौ गोत्रग्रहण-वैयर्थ्यापत्तेरिति चेन्न। *भाष्ये प्रत्याख्यातत्वेनेष्टापत्तेः। *यद्वा गोत्रे बो-धनीये एक एव शब्दः प्रत्ययप्रकृतिर्नानेक इत्यर्थः। यदि च प्रत्ययान्तात्प्र-त्ययः स्यात् नैकः प्रत्ययप्रकृतिः स्यादिति। *यद्वा एकशब्दः प्रथमवाची।

---

जरत्कारुनामक एकः पुरुषोऽस्ति, स दारपरिग्रहञ्च करोति। स यावज्जीवति ता-वदस्माकमेवमेवावस्थानं, तन्मरणानन्तरञ्चास्माकम्पतनम्भविष्यतीति निश्चयेन वयम्भीताः स्मेति। एतेन पितामहादीनामपत्यमिति स्पष्टमेव लभ्यते। भाष्यान्त-रसम्मतिमप्याह—*अपतनादिति। अमरग्रन्थासङ्गतिमप्यस्मिन् पक्षे परिहरति—*अपत्यन्तोकमिति। पूर्वोक्तभाष्यविरोधमपि परिहरति—*पितामहोत्सङ्ग इति। "एको गोत्रे" (पा० सू० ४-१-९३) इतिसूत्राभावेऽस्मिन् पक्षे दोषोपपादनं क-रोति—*स्वद्व्यूनेतीति। *न त्विष्टासिद्धिरिति। एवञ्च विधायकत्वशङ्काया नावकाशः। *नन्वेवमपि=नियमार्थकस्य सूत्रस्यारम्भेऽपि। *परमप्रकृतेरिति। य-न्निरूपितापत्यत्वविशिष्टानां समुदायस्तद्वाचकादित्यर्थः। *भाष्ये प्रत्याख्यातत्वे नेति। गोत्रग्रहणस्येत्यादिः। तदुक्तम्भाष्ये—"गोत्रग्रहणञ्च करिष्यते। एकोऽपत्ये प्रत्ययो भवतीत्येव। यदि चेदानीम्प्रत्ययान्तादपि प्रत्ययः स्यात्, नैकोऽपत्ये कृतः स्यात्। यदि गोत्रग्रहणन्न क्रियते। कथं गार्ग्यायणः वात्स्यायन इति?। वक्तव्य-मेवैतत् गोत्राद्यून्यस्त्रियाम्" इति। अस्मिन् पक्षेऽनुवर्त्तमानापत्यशब्दस्योक्ता-र्थसिद्धये आवृत्तिः कार्येति गौरवमतो भाष्योक्तपक्षान्तरमाह—*यद्वेति। प्रत्यय-प्रकृतिरित्यस्याध्याहारः। सौत्रमेकग्रहणमेवास्मिन् पक्षे साधकम्। पक्षान्तरन्तत

---

(१) गोत्रशब्दश्च गोत्रजातिपर इति तत्तात्पर्यम्ः

प्रथमः शब्दो गोत्रे प्रत्ययमुत्पादयतीत्यर्थः । प्रथमत्वञ्च *सर्वमूलत्वम् । सर्वं चैतद्भाष्ये स्पष्टम्* । *तद्धान्यै=आद्ये इष्टासिद्धेः प्रत्ययमालायाश्च निवृत्तये, अन्त्ये ऽनिष्टमात्रनिवृत्तये । तत्राऽऽद्योऽयुक्त इत्युक्तम् । तृतीये इति । *तृतीयत्वं मूलपुरुषापेक्षया । "यजमानपञ्चमाः" इत्यादौ विजातीयेनापि संख्यापूरणदर्शनात् । औपगवादिति । *तस्मादेवेत्यर्थः । *न तूपगोरण् तृतीयस्य तं प्रत्यपत्यत्वाभावादिति भावः । एवमिति ।*पितामहादीनामपीति सिद्धान्तपक्षे पञ्चमादौ यूनि तृतीयादुत्पत्तौ गार्ग्यायण इतीष्टे सिद्धेऽपि मूलप्रकृतेर*नन्तरापत्ययुवप्रत्ययान्तादनिष्टमपि प्राप्नोतीति *यूनि गोत्रादेव न तृक्तेभ्य इति नियमार्थम् । गोत्राद्यूनीति । *आद्ये तु पक्षे पञ्चमे यूनि *चतुर्थात्प्रत्ययान्तादेव प्रत्ययः स्यात्.* न तु तृतीयवाचिगोत्रप्रत्ययान्तादिति विध्यर्थमेवेदं स्यान्न तु नियमार्थमिति पितामहादीनामपीति पक्ष एव व्याख्यानमिति बोद्धव्यम् । स्त्रियान्तु नेति । *अस्त्रियामिति योगं विभज्य तत्र यूनीत्यनुवर्त्य द्वे अपि प्रथमया विपरिणमय्य

---

एवाह—*यद्धेति । *सर्वमूलत्वमिति । सर्वेषाङ्गोत्रापत्यत्वेन विवक्षितानां यो मूलपुरुषस्तत्प्रतिपादकत्वमित्यर्थः । *भाष्ये स्पष्टमिति । तत्र हि अथापि गोत्रग्रहणङ् क्रियते एवमपि न दोषः । न एकग्रहणेन प्रत्ययोऽभिसम्बध्यते एको गोत्रे प्रत्ययो भवतीति, किन्तर्हि ?, प्रकृतिरभिसम्बध्यते । एका प्रकृतिर्गोत्रप्रत्ययमुत्पादयतीति, यदि चेदानीम्प्रत्ययान्तादपि प्रत्ययः स्यान्नैका प्रकृतिर्गोत्रे प्रत्ययमुत्पादयेत् । अथ वा अस्थानेऽयं यत्नः क्रियते, न हीदं लोकाद्भिद्यते । लोके हि संख्याम्प्रवर्त्तमानामुपचरन्ति एक इति वा प्रथम इति वा । यावद् ब्रूयात्प्रथमो गोत्रे प्रत्ययमुत्पादयति तावदेको गोत्र इति" इति । न हीदमिति । लोके योऽर्थः प्रथमशब्दस्य दृश्यते स एव इहाप्याश्रीयत इत्यर्थः । शास्त्रेऽपि प्रथमार्थक एकशब्दो दृष्टः । एकेऽल्पप्राणाः, प्रथमेऽल्पप्राणा इत्यर्थः । उपचरन्ति=व्यवहरन्ति । *तद्धान्यै इति । पूर्वोक्तदोषाणामनुत्पादायेत्यर्थः ।*आद्यः=इष्टासिद्धिरूपो दोषः । नन्वपत्यपरम्परायां स द्वितीय एवेति तृतीय इत्यनुपपन्नमत आह-*तृतीयत्वमिति । *तस्मादेवेति । अनन्तरापत्यप्रत्ययान्तादेवेत्यर्थः । एवकारव्यवच्छेद्यमाह-*न त्विति । उत्तरसूत्रस्य मुख्यपक्षे प्रयोजनमाद्यावाह-*पितामहेति । *अनन्तरापत्ययुवप्रत्ययान्तादिति । अनन्तरापत्यप्रत्ययान्ताद् युवापत्यप्रत्ययान्ताच्चेत्यर्थः । सूत्रारम्भे सति यो नियमः फलितस्तमाह-*यूनीति । *आद्ये=पितुरेवापत्यमिति पक्षे । *चतुर्थात्प्रत्ययान्तादिति । चतुर्थवाचिप्रत्ययान्तादित्यर्थः । *न तु तृतीयवाचीति । पञ्चमस्य तृतीयाऽपत्यत्वाभावादिति शेषः । संज्ञासंज्ञिनिर्देशस्थले उभयोरपि प्रथमान्तत्वं सर्वत्र दृष्टमिति स्त्रियान्न युवसंज्ञेत्यनुपपन्नमत

स्त्री युवा नेत्यर्थ इति भावः ॥

अत इत्यनेनाधिकृतप्रातिपदिकस्य विशेषणात्तदन्तविधिरित्याह-अदन्तामिति ॥ अस्यापत्यमिरित्यादौ व्यपदेशिवद्भावादिञ् बोध्यः ।

व्यासव (का० वा०) ॥ व्यासोऽत्र वेदव्यास एव प्रसिद्धत्वात् ।

न य्वाभ्याम् (पा०सू०७-३-३) ॥ ननु वृद्धेरपवादावेताविति नैतद्विषये वृद्धेः प्रसक्तिः । न च विषयभेदे कथमपवादत्वं विषयभेदेऽप्यचिरादेशेन नुटो बाधस्य भाष्ये शङ्कितत्वात् । "न तिसृ" (पा० सू० ६-४-४) इति निषेधेन नुटो न रादेशेन बाध इति समाहितमित्यन्यत् । एवञ्च नेति व्यर्थमिति चेन्न । यत्र य्वाभ्यां परस्य प्रसक्ताया वृद्धेर्निषेधस्तत्रैवैचावित्यैचो विषयनिर्देशार्थत्वात् । तेन 'दाध्यश्विः' इत्यादौ न । अयञ्च निषेधो येननाप्राप्तिन्यायेन "तद्धितेष्वचामादेः" (पा० सू० ७-२-११७) इति वृद्धेरेव । तेन द्व्याशीतिके "संख्यायाः संवत्सर" (पा० सू० ७-३-१५) इति वृद्धिर्भवत्येव । पदान्ताभ्यां किम्? । एतीति यन्, तस्य छात्रा याता इत्यादौ माभूत् । पूर्वौ=पूर्वावयवौ । अभक्तत्वे हि इश्वाजश्च यजन्तस्मात्तत्र भव इत्यणन्ताच्छो न स्यात्, प्रातिपदिकस्यावृद्धत्वादिति हरदत्तः ।

गोत्रेकुं (पा० सू० ४-१-९८) ॥ गोत्रे बोधनीये तत्सम्बन्ध्यपत्यसमिसर्थे कुञ्जादिभ्यः परः प्रत्यय इत्यर्थः । च्फञि ञकारः कौञ्जायनीत्यादौ वृद्ध्यर्थः । चकारो व्रातच्फञोरित्यत्र विशेषणार्थः ।

---

आह-अस्त्रियामितीति । तदन्तविधिरिति । वर्णग्रहणञ्च सर्वत्रेत्युक्तत्वात् ।

"न य्वाभ्याम्" (पा० सू० ७-३-३) इतिसूत्रेण वृद्धेर्निषेधो व्यर्थ इत्याशङ्कते-नन्विति । ऐचो विषयनिर्देशार्थमिति । ऐजागमस्य प्रवृत्तियोग्यं यत्स्थलन्तन्निर्देशार्थमित्यर्थः । द्व्याशीतिक इति । द्वाभ्यामशीतिभ्यां क्रीत इत्यर्थः । पूर्वावित्यनेन यदि पूर्वावयवत्वमैचो न बोध्यते किन्तु पदान्तयकारवकारोच्चारणकालपूर्वकालिकोच्चारणविषयत्वमात्रम्बोध्यत इति कल्प्यते, तदाह— अभक्तत्वे हीति । अणन्तादिति । ऐयजशब्दादित्यर्थः ।

"गोत्रे"(पा० सू० ४-१-९८) इति सूत्रे तस्यापत्यमित्यनुवृत्तेराह— तत्सम्बन्ध्यपत्यमित्यर्थ इति । ननु कौञ्जायन्य इत्यत्र ञ्यस्य ञित्वाद् वृद्धेः सिद्धौ च्फञो ञित्त्वं व्यर्थमत आह—च्फञीति ।

व्रातच्फञो ( पा० सू० ५-३-११३ )। "पूगाञ्ञ्योऽग्रामणीपूर्वात्" ( पा० सू० ५-३-११२ ) इत्यतो ञ्योऽनुवर्त्तते । तद्राजत्वादिति । "ञ्यादयस्तद्राजाः" ( पा० सू० ५-३-११९ ) इत्यनेन । लुगिनि । "तद्राजस्य बहुषु" ( पा० सू० २-४-६२ ) इत्यनेन ञ्यस्येति भावः । स्त्रियामिति । ञ्यप्रत्यये हि योपधत्वान्ङीष्न स्यात, टाप् च स्यादित्यस्त्रियामित्युक्तमिति भावः ।

यञिञोः ( पा० सू० ४-१-१०१ )॥ *अधिकृतं गोत्रे इति यञिञोर्विशेषणं फक्तु यूनि । गोत्रे किम्! । सुतङ्गमादिभ्यश्चातुरर्थिके इञि सौतङ्गमेरपत्ये माभूत् ।

शरद्वच्छु ( पा० सू० ४-१-१०२ )॥ भृगुवत्सपदे *तदपत्येषु भृगुत्वाद्यारोपेण प्रयुक्ते । *अन्यथा भृगुवत्सयोः शरद्वच्छुनकपूर्वभावित्वादसङ्गतिः स्पष्टैवेति केचित्* । अन्यः=कृत्रिमपुत्रादिः । आग्रायणो नडादिफगन्तः । दार्भिरिति । अस्य *ऋषित्वे तु वाह्वादित्वादिञ् । शरद्वच्छुनकौ बिदादी, ताभ्यां फकोऽभावेऽञ् ।

अनादिरिति । *भारतप्रसिद्धोऽस्मदाद्यज्ञेयादिकाल इत्यर्थः ।

*'अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः ।
शास्त्रार्थस्तेषु कर्त्तव्यः शब्देषु न तदुक्तिषु ॥'

इति हर्युक्तेः । *अभिव्यक्तेत्यनेना*नाद्यर्थाभिधायित्वम् । तेन

---

*अधिकृतङ्गोत्रे इति । गोत्रे कुञ्जादिभ्य इत्येतत् ।

*तदपत्येषु=भृगुवत्सापत्येषु । *अन्यथा=आरोपाभावे । *इति केचिदिति । लाघवानुसारिणः । एतेन यद्दण्डिना भार्गवश्च वात्स्यश्च आग्रायणश्चेति द्वन्द्वं स्वीकृत्य बहुत्वाभावेऽपि सौत्रत्वाद्यञोर्लुका निर्देशोऽयं-'भृगुवत्साग्रायण' इतीत्युक्तन्तदपास्तम् । *ऋषित्वे त्विति । तदा तु "ऋष्यन्धक" (पा०सू० ४-१-११४) इत्यण् स्यात् ।

द्रोणस्य मनुष्यत्वादनादिरित्यनुपपन्नम् । अतो व्याचष्टे—*भारतेति द्रोणसंज्ञकस्याधुनिकस्य ग्रहणशङ्कां वारयति—*अभिव्यक्तेति । *अनाद्यर्थाभिधायित्वमिति। अभिव्यक्तो लोकप्रसिद्धोऽर्थो येषान्तादृशाना लाभः । तेन संज्ञाशब्दानां निरासः । एते हि यद्यद्व्यक्तेः संज्ञाः क्रियन्ते तत्तद्व्यक्तिमात्रमभिदधति । तथा चाद्यर्थाभिधयकत्वलाभेन नैतेऽनाद्यर्थाभिधायका इति भावः । एतादृशाश्च लोकप्रसिद्धार्थशक्ततावच्छेदकानुपूर्व्यवच्छिन्ना इति विशिष्टरूपोपादान एतत्प्रवृत्तिरत्यर्थादुक्ता भवति । विशिष्टरूपोपादानेन विधीयमानकार्येऽश्च प्रायेण पद-

विशिष्टरूपोपादाने पदकार्ये एव चायम् । स्वतन्त्रा इत्यनेन *गौणनिरासः। लोकविश्रुता इत्यनेनाप्रयुक्तं निरस्तम्* । तदुक्तिषु=तत्सदृशेषु । "बाह्वादिभ्यश्च" ( पा०सू०४-१-४५ ) इति सूत्रे *भाष्येऽपि *"बाह्वादिप्रभृतिषु येषां दर्शनं* लोकविदितादिपुरुषत्वरूपे *लौकिके गोत्रभावे ततोऽन्यत्र प्रतिषेधः । बाहुनाम्न आधुनिकस्यापत्यं बाहव एव । *सम्बन्धिशब्दानां कार्ये तत्सदृशात्प्रतिषेधः" इति चोक्तम् । तत्र गोत्रभावे इति प्रकृताभिप्रायेण, तदेव ध्वनयताऽव्युत्पत्त्यानुवादेन संबन्धिशब्दानामित्याद्युक्तम् । *एवञ्चायं न्यायः सर्वविषय इति बोध्यम् । बाह्वादिसूत्रे पाठात्तद्धितविषय एवेति कश्चित्* ।

अनृष्या ( पा० सू० ४-१-१०४ ) ॥ अनृषीति लुप्तपञ्चम्यन्तम् । आनन्तर्ये=अनन्तरापत्ये । इदं वृत्त्यनुसारेण । भाष्ये तु ऋ-

---

कार्यस्थल इति पदकार्य इत्यस्य लाभः। *गौणनिरास इति । एते च गुणारोपप्रकरणादिसहकारेणैवार्थबोधकाः, अतो न स्वतन्त्राः। *अप्रयुक्तान्निरस्तमिति । लोके विशेषेणार्थबोधकत्वेन श्रुता इति व्युत्पत्तेः । एते च जगबडदमितिसमुदायरूपा अनर्थकाः । अनुकरणानामर्थसद्भावेऽपि ते न विशेषेणार्थबोधकत्वेन श्रुताः । क्वचित्त्वनुकरणे "अव्यक्तानुकरणस्य"(पा० सू० ६-१-९८) इति ज्ञापकाद्भवति शास्त्रीयं कार्यम्। ये च शास्त्रीयप्रक्रियया साधुत्वेन व्युत्पादयितुं शक्यन्ते-बचन्ति, आवम्, कमन्नित्यादयस्तेषामपि भाष्यकारीयवचनप्रामाण्याच्च शास्त्रविषयत्वमित्यर्थादुक्तम्भवति । ये च प्रातिपदिकप्रकृतिकाणिजन्तादयस्ते यद्यपि लोकेऽर्थबोधकत्वेन विशेषेण न श्रुतास्तथाप्येषां "तत्करोति"इत्यादिशास्त्रेण साधुत्वान्वाख्यानाच्छास्त्रविषयत्वमस्त्येव । एतेन यत्सिद्धं तदाह-*तदुक्तिष्विति। तद्वदुक्तिर्येषान्ते तथाभूतास्तत्सदृशाः गौणादय एवेत्यर्थः। *भाष्येऽपीति। उक्तश्लोकार्थ उपनिबद्ध इति शेषः। *बाह्वादिप्रभृतिष्विति। अत्र प्रभृतिग्रहणेन कुञ्जादीनां ग्रहणम् । *लोकविदितादिपुरुषत्वरूप इति । लोकविदिते आदिपुरुषत्ववति येषां दर्शनमित्यर्थः। *लौकिके गोत्रभाव इति। लोकविदिते गोत्रत्व इत्यर्थः। प्रकृताभिप्रायमेतत् । न त्वेतावद्दर्शनेन तद्धितमात्रविषयकत्वम् "अभिव्यक्त"इतिन्यायस्येति भ्रमितव्यम । *सम्बन्धिशब्दानाङ्कार्य इति । यथा "राजश्वशुराद्यत्"(पा० सू० ४-१-१३७) इतिसूत्रविहितो यत्प्रत्ययः श्वशुरसदृशे प्रयुज्यते यदा, तदा 'श्वशुरस्यापत्यं=श्वाशुरिः'इत्येव भवति। एतच्च पूर्ववार्त्तिकेनापि लभ्यते इत्यभिप्रायेणाव्युत्पत्त्यानुवादेनेति विशेषणं दत्तम् । *एवञ्चेति । गोत्रभाव इत्यस्य प्रकृताभिप्रायकत्वकथनं च। *कश्चिदिति । यथाश्रुतार्थग्राही ।

भिभ्योऽनन्तरे नेत्यर्थोऽसमर्थसमासेन दर्शितः । ये त्वत्रानृषयः पठ्यन्ते ते-भ्यो*ऽनन्तरेऽपीति चोक्तम् । निषेधसामर्थ्यादेवात्र गोत्रे इत्यस्यासंबन्ध इति तद्भावः । *यूनि तु गोत्राद्यूनीति नियमान्न दोषः ।

गर्गादि(पा० सू० ४-१-१०५) ॥ *रामो जामदग्न्यः, पाराशर्यो व्यास इत्यनन्तरे गोत्रत्वारोपाद् बोध्यम् ।

यञञोः(पा० सू० २-४-६४) । "ण्यक्षत्रिय"(पा० सू० २-४-५८) इत्यतो लुगिति, "तद्राजस्य" (पा० सू० २-४-६२) इति सूत्राद् बहुषु तेनैवास्त्रियामिति, "यस्कादिभ्यः"(पा० सू० २-४-६३) इत्यतो गोत्र इति चानुवर्त्तते । प्रवराध्यायप्रसिद्धगोत्रवाचित्वं यञ-ञोर्नास्तीत्यत आह—यञन्तमिति । निर्दिश्यमानपरिभाषालुक्स-ञ्ज्ञाभ्यां लब्धमर्थमाह—तदवयवयोरिति । प्रवरेति । तादृशमपत्य-प्रत्ययान्तमित्यर्थः । एतदेव च लौकिकं गोत्रम् । *एतत्सर्वं "यूनि लुक्" "गोत्राद्यूनि"(पा० सू० ४-१-९४) "स्त्रीपुंसाभ्याम्"(पा० सू० ४-१-८७) इत्यादौ भाष्ये स्पष्टम् ॥

---

*अनन्तरेऽपीतीति । अपिना व्यवहित इत्यस्य संग्रहः । अत एव पौत्रो दौहित्र इत्यत्र गोत्रेऽञः सत्त्वेन प्राप्तस्य लुकः प्रवराध्यायप्रसिद्धत्वाभावाद्वार-णसङ्गतिः । ननु गोत्र इत्यस्यासम्बन्धे यून्यपि प्राप्नोतीत्यत आह—*यूनि त्विति ।

नन्वस्य गोत्राधिकारीयत्वात्कथञ्जामदग्न्यादीनां सिद्धिरत आह—*रामो जामदग्न्य इति । लुक्संज्ञाविधानात् ।

*एतत्सर्वमिति । प्रवराध्यायप्रसिद्धस्य लौकिकगोत्रस्य ग्रहणमित्येतत् । 'यूनि लुक्'( पा० सू० ४-१-९० ) इतिसूत्रे राजन्याद्वुञ् मनुष्याच्च ज्ञापकस्परङ्गोत्रम् । यदयं वुञ्विधौ राजन्यमनुष्ययोर्ग्रहणङ्करोति तज् ज्ञापयत्याचार्यः लौकिकस्परङ्गोत्रग्रहणमिति । "गोत्रोक्षोष्ट्र" ( पा० सू० ४ २-३९) इतिसूत्रे राजमनुष्यशब्दावुपात्तौ । तौ च "गोत्रे कुञ्जादिभ्यः" ( पा० सू० ४-१-९८) इत्यतो गोत्रग्रहणानुवर्त्तनाच्छास्त्रीयगोत्राभिधायिनौ । ततश्च गोत्रग्रहणेनैव सिद्धे तयोर्ग्रहणमपत्याधिकारादन्यत्र लौकिकं गोत्रमित्यस्य ज्ञापकम् । तथा च राजन्यमनुष्ययोः प्रवराध्यायप्रसिद्धत्वाभावेन गोत्रग्रहणेनतयोरग्रहणं स्यादिति तयोरुपादानं सफलमिति । द्वितीये "अष्टाशीतिसहस्राण्यूर्ध्वरेतसामृषीणां बभूवुस्तत्रागस्त्याष्टमैर्ऋषिभिः प्रजनोऽभ्युपगतस्तत्र भवतां यदपत्यन्तानि गोत्राणि" इत्युक्तम् । तत्र भवतामिति । अगस्त्याष्टमानामित्यर्थः ।

लोहितादिकार्यमिति । स्त्रियां ष्फ इत्यर्थः ।

आङ्गिरस इत्येवेति । *तत्र यञेवेत्यर्थस्तदाह—अनाङ्गि-रसे शिवाति । *आङ्गिरस एवेति नियमस्तु न । गर्गादिपाठस्य वैय-र्थ्यापत्तेः । स्त्रियां लुक्सत्त्वेन यञोऽकार इति व्याख्यानेन चास्य लो-हितादिकार्यार्थं पाठ इति न वाच्यम् । शिवादिगणे पाठे मानन्तु "लुक् स्त्रियाम्"(पा० सू० ४-१-१०९) इत्यनेन "वतण्डाच्च"(पा० सू० ४-१-१०८) इत्यस्य *विभाग एवेति बोद्ध्यम् । विहितस्येति । *'अनन्तरस्य'इति न्यायलब्धमिदम् । वक्ष्यमाण इति । "अणिञोः" (पा० सू० ४-१-७८)इति सूत्रेणेत्यर्थः । *तत्र प्रतिपदोक्तपरिभाषया ऋष्यण एव ग्रहणमिति न युक्तम् । इञंशे तदसम्भवेन तत्साहचर्या-दणंशेऽपि तदप्रवृत्तेः* ।

*परे तु "वतण्डाच्च"इति सूत्रं माऽस्त्वित्याशयेन "किमर्थमि-

---

तृतीये "उभयत्र लौकिकस्य गोत्रस्य ग्रहणम्" इत्युक्तम् । तत्र कैयटः । "यञ-ञोश्च" (पा० सू० ४-१-११) इत्यत्र "यस्कादिभ्यो गोत्रे" ( पा० सू० २-४-६३) इत्यतो गोत्र इत्यनुवर्त्तते । "संघाङ्क" (पा० सू० ४-३-१२७) इत्यत्रापि "गो-त्रचरणाद् वुञ्" इत्यतः । ऋषिप्रजनश्च लोके गोत्रमित्युच्यते" इति ।

आङ्गिरस इत्येवेतिलिखनेन "वतण्डाच्च" (पा० सू० ४-१-१०८) इतिसूत्रे "कपिबोधात्"( पा० सू० ४-१-१०७) इतिसूत्रादाङ्गिरस इत्यनुवर्त्त-ते । तस्मिन्वाच्ये च गर्गादित्वाद्यञि सिद्धे इदन्नियमार्थम्—आङ्गिरसे यदि वतण्डशब्दात्प्रत्ययो भवति तदा यञेव इत्येवंविधो नियम इष्टस्तदभिप्राये-णाह—*तत्र यञेवेति । विपरीतनियमं वारयति—*आङ्गिरस एवेतीति । *विभाग एवेति । अयम्भावः—आङ्गिरसे वाच्ये शिवादित्वात्प्राप्तस्याणो बाध-नार्थमिदं सूत्रम् । गर्गादिपाठादादौ यञ् प्राप्तस्तम्बाधित्वा शिवादिपाठादण् प्राप्तस्तम्बाधित्वा आङ्गिरसेऽनेन यञ् भवति । न च गर्गादित्वात्प्राप्तस्य यञो बाधक ऋषित्वादण् तद्बाधनार्थमेवेदमस्त्विति वाच्यम् । एवन्तर्हि सर्वत्र ऋष्यणा यञो बाधापत्त्या गर्गादिपाठवैयर्थ्यं स्यादिति तत्र पाठ ऋष्यण् बाधकःस्या-दित्यणा समावेशो न स्यादतः शिवादौ पाठादेवाणा समावेशो भवति । स च पाठोऽनाङ्गिरसे चरितार्थ इत्याङ्गिरसेऽनेन यञेव यथा स्यादित्येवमर्थो योग-विभाग इत्याशयात् । *अनन्तरस्येतिन्यायेति । तेन वातण्डीत्यत्राणो लुङ् न भवति । *तत्र=ष्यङ्विधायकसूत्रे । इह तु शिवाद्यण् भवतीति कथमत्र ष्यङः प्राप्तिरिति भावः । *तदप्रवृत्तेः=प्रतिपदोक्तपरिभाषाया अप्रवृत्तेः ।

*परे त्विति ।भाष्यानुसारिणः। *तत्रैव=गर्गादिगणे एव वतण्डाल्लु-

दमुच्यते न गर्गादिभ्य इत्येव सिद्धं लुक् स्त्रियामित्यपि *तत्रैवोच्येत" इत्याशङ्क्य "आङ्गिरस इति विच्छिद्येत"इत्युक्तं भाष्ये । तदाशयस्तु पूर्वपक्षे सम्यगेव *तत्र पूर्वसूत्रे आङ्गिरस इत्युक्त्वा*ऽनाङ्गिरसे यञभाववद *त्रापि *तदभाव एवोचितः निमित्तस्यैवोचित्यात् । *योगविभागसामर्थ्येन कपिबोधयोरिवास्यापि गणे पाठाभाव एवानुमीयते । गणे पाठे तु आङ्गिरस इत्येतद्विच्छेदेन।*नाङ्गिरसेऽपि यञ् स्यादिति । शिवादिगणपाठोऽपि *यदि प्रामाणिकस्तदा*ऽनाङ्गिरसे चरितार्थस्य तस्याङ्गिरसे यञा बाधः । एवञ्चानाङ्गिरसे वातण्ड्यायनीति चिन्त्यमेवेत्याहुः ।

निर्धूत्तमिति ॥ इदं वृत्त्यनुसारेण* । यूनिलुक्सूत्रभाष्ये गोत्रसञ्ज्ञासूत्रपर्यन्तं गोत्राधिकार इति ध्वनितत्वात् । *तत्र भाष्येऽपत्याधिकारात्परं शास्त्रीयगोत्रग्रहणे गार्ग्यायणादिभ्यो युवप्रत्ययान्तेभ्यः समूहादौ *गोत्रत्वप्रयुक्तो वुञ् न स्यादित्याशङ्क्यापत्याधिकारात्परं प्रवराध्यायप्रसिद्धरूपलौकिकगोत्रग्रहणे "गोत्रोक्षोष्ट्र"(पा० सू० ४-२-

---

क् स्त्रियामिति पठनीयमित्यर्थः । अत्र भाष्ये 'तत्रैवोच्येत' इत्युक्तम् । तेन गर्गादौ पाठस्यापूर्वत्वाभिप्रायेण प्रकृतसूत्रस्य विध्यर्थत्वाभिप्रायेण च शङ्केयम् । गर्गादावस्य पाठो नास्तीत्याशयः । एवं हि भाष्ये उक्तम्—"किमर्थमिदमुच्यते ? न गर्गादिभ्य इत्येव सिद्धम् । लुक् स्त्रियामिति वक्ष्यामीति । यदि पुनस्तत्रैवोच्येत । नैवं शक्यम् । आङ्गिरसग्रहणं हि विच्छिद्येत"इति । इदञ्च सूत्रम्पृथक् कृतम तु कपीति सूत्र एव वतण्डशब्दः पठितः । तेनाङ्गिरस इत्यस्य प्रकृतसूत्रे सम्बन्धो नास्तीति च पूर्वपक्ष्याशयः । अत एवाह—*अनाङ्गिरस इति । एवं हि आङ्गिरसग्रहणं विच्छिद्येतेत्याशयः । *अत्रापि=वातण्ड्य इत्यत्रापि । *तत्र= अनाङ्गिरसे । *तदभावः=यञोऽभावः । *योगविभागसामर्थ्येन=गर्गादौ पाठे कर्त्तव्ये तत्र पाठमकृत्वा "कपिबोधात्" (पा० सू० ४-१-१०७) इतिसूत्रानन्तरम्पृथक् "वतण्डाच्च" (पा० सू० ४-१-१०८) इतिसूत्रपाठेन । *अनाङ्गिरसेऽपीति । अपिना आङ्गिरसे । यदि गर्गादिपाठमकृत्वाऽत्र सूत्रम्पठ्यते तदा अनाङ्गिरसे न भवति । आङ्गिरस इत्यस्य संबन्धादिति भावः । *यदि प्रामाणिक इति । यदि गर्गादावस्य पाठाभावस्तदा पूर्वोक्तरीत्या ज्ञापनासम्भवाच्छिवादावस्य पाठो न प्रामाणिक इति भावः । शिवादौ पाठकल्पनपक्षे आह—*तदेति ।

*वृत्त्यनुरोधेनेति । एवं हि तत्रोक्तम्—"अतः प्रभृति सामान्येन प्रत्यया विज्ञायन्ते । शिवादिभ्योऽपत्येऽण् प्रत्ययो भवति । यथायथमिञादीनामपवादः । शैवः, प्रौष्ठः" इति । *तत्र भाष्य इति । यूनिलुक्सूत्रभाष्य इत्यर्थः । *गोत्रत्वप्रयुक्त इति । "गोत्रोक्षोष्ट्र" (पा० सू० ४-२-३९) इतिसूत्रविहित

३९) इति सूत्रे राजन्यमनुष्यग्रहणं ज्ञापकमित्युक्तम्* । अनन्तरापत्ये *गाङ्गेयादि तु जामदग्न्यादिवदारोपेण* साधु । *न चैवं गार्गीप्रभृतिभ्यो *यूनि ढक् न स्यात् । यूनो गोत्रत्वाभावात्, सूत्रन्तु *दात्तेयीत्यादौ चरितार्थमिति वाच्यम् । "उदीचां वृद्धात्"(पा० सू० ४-१-१६७) इति सूत्रे*ऽगोत्रादित्युक्तिसामर्थ्येन "इतश्च"(पा० सू० ३-४-१००) इति सूत्रेऽनिञ इत्युक्तिसामर्थ्येन च गोत्रप्रत्ययान्तप्रकृतिभ्योऽप्येषां विशिष्य विधानेन तत्सामर्थ्याद्य*ञिञोश्चेतिवद्यून्युत्पत्तिसिद्धेः । शास्त्रीयगोत्रञ्च युवत्वानाक्रान्तपौत्रप्रभृत्यपत्यरूपम् । तदर्थकत्वञ्च *वास्तवं, *शास्त्रप्रक्रियानिर्वाहाय शास्त्रकल्पितं वा । परत्र लौकिकग्रहणमपि यत्र शास्त्रीयग्रहणे गमकाभावस्तत्रैव । *अत एव *"कण्वादिभ्यो गोत्रे"(पा० सू० ४-२-११७) इत्यत्र "अणिञोः"(पा० सू० ४-१-७८) इत्यादौ* च शास्त्रीयस्यैव ग्रहणम् । *राज-

---

इत्यादिः । *इत्युक्तमिति । एवञ्च "गोत्रोक्षोष्ट्र" इतिसूत्रस्य परत्र पाठात्तत्र प्रवराध्यायप्रसिद्धगोत्रग्रहणेन गार्ग्यायणस्य तथात्वात्तस्माद् वुञ् सिध्यतीति भावः । *गाङ्गेयादि त्विति । "स्त्रीभ्यो ढक्" ( पा० सू० ४-१-१२) इति सूत्रस्यापि गोत्राधिकारीयत्वाद्गोत्र एव प्रत्ययो न्याय्य इति भा[illegible] । *आरोपेण=गोत्रत्वारोपेण । *न चैवमिति । गोत्रसंज्ञासूत्रपर्यन्तं गोत्राधिकाराश्रयणे । *यूनि ढक् न स्यादिति । यूनीष्टो ढक् स इदानीम्भवन्मते न स्यात् । "स्त्रीभ्यो ढक्" ( पा० सू० ४-१-१२०) इतिसूत्रेऽपि गोत्र इत्यस्य सम्बन्धादिति भावः । *दात्तेयीति । दत्ताया गोत्रापत्यं स्त्री दात्तेयीत्यर्थः । *अगोत्रादित्युक्तिसामर्थ्येनेति । अगोत्रादिति हि गोत्रप्रत्ययान्तादौपगवशब्दान्मा भूदित्येवमर्थम् । गोत्रसंज्ञासूत्रपर्यन्तं गोत्राधिकारेऽस्य गोत्रापत्ये प्रत्ययविधायकतया "एको गोत्रे" ( पा० सू० ४-१-९३) इतिनियमाद्गोत्रप्रत्ययान्तेभ्यः फिञ् नैव प्राप्नोतीति प्रकृतसूत्रेऽगोत्रादिति एवमेवानिञ इति च व्यर्थमिति भावः । *यञिञोश्चेतिवदिति । यथा भवद्भिर्गोत्राधिकारेऽपि सामर्थ्याद्यूनि तस्य प्रवृत्तिः स्वीक्रियते तद्वत् । *वास्तवमिति । यस्य गोत्रे विधानं तदन्तस्य वास्तवं तत्त्वम् । नन्वेकार्थीभावाभ्युपगमान्न प्रत्ययमात्रस्य वास्तवं तत्त्वमत आह—*शास्त्रप्रक्रियेति । *अत एव=गमकाभाव एव लौकिकग्रहणादेव । *कण्वादिभ्यो गोत्र इति । कण्वशब्दस्य गर्गादौ पाठात्तेभ्यश्च शास्त्रीयगोत्र एव प्रत्ययविधानादिति भावः । *अणिञोरित्यादौ चेति । तत्र ह्यनार्षयोरिति वासिष्ठी, वैश्वामित्रीत्यत्र ष्यङादेशवारणाय कृतं, तयोश्च "ऋष्यन्धक" ( पा० सू० ४-१-११४) इतिसूत्रेण शास्त्रीयगोत्रेऽणिवधानात्पर्युदासन्यायेन शास्त्रीयगोत्रग्रहणम्भविष्यतीति भावः । यच्चोक्तम्पूर्वं शास्त्रप्रक्रियेति तस्य फलान्तरमप्याह—*राजन्येति । *अत एव=

न्यमनुष्यशब्दयोर्लोके जातिप्रकारकबोधजनकत्वेऽपि प्रक्रियादशायां "राजश्वशुरात्"(पा० सू० ४-१-१३७) इत्यादेर्गोत्राधिकारे पाठात् कल्पितं शास्त्रीयगोत्रार्थकत्वम् । *अत एव राजन्यादिभ्य "उदीचां वृद्धात्"(पा० सू० ४-१-१६७) इति फिञ् न । *अत एव ग्लुचुकस्य युवापत्यं ग्लौचुकायन इत्यत्र फिञन्ताद्यूनि *फिञ् न । वृत्तिमते तु स दुर्वारः । लौकिकञ्च प्रवराध्यायप्रसिद्धम् । लोके तत्रैव गोत्रव्यवहारात् "अणिञोः"(पा०सू०४-१-७८) "स्त्रीपुंसाभ्याम्"(पा०सू०४-१-८७) इति सूत्रस्थ*भाष्यस्वरसाच्च । *न च "शिवादिभ्यः" इत्यत्राणुग्रहणं व्यर्थम् । न च बाधकबाधनार्थमिव एव विधिरयं स्यादतोऽणुग्रहणम् । तद्बाधकस्यैवाभावात् । तत्त्वञ्बाधनार्थं शिवादिभ्यो यथा विहितमित्येवाण्सिद्धेरिति प्रकृतसूत्र*भाष्योक्तमसङ्गतं स्यात् । शिवादिभ्यो गोत्र एवेञ् नान्यत्रेति नियमेन चारितार्थ्येनाणुग्रहणं विना तदसिद्धेरिति वाच्यम् । विधिनियमसम्भवे विधेरेव ज्यायस्त्वेन विधित्वानुरोधेना*ण एव विधिरिति भाष्याशयात्* । *अणुग्रहणं तत्र पठितादृष्टिषेणशब्दादिञ्बाधकस्य सेनान्तलक्षणण्यस्य सत्त्वेन*अ एव विधानं स्यान्न त्वण इतीति भाष्ये एव स्पष्टम् । तत्र शास्त्रीयस्य प्रत्ययान्तवाच्यत्वाल्लौकिकमपत्यप्रत्ययान्तं प्रवराध्यायप्रसिद्धमेव । *यत्तु खण्डिकादिसूत्रे "जनपदशब्दात् क्षत्रियात्"(पा० सू० ४-१-१६८) इत्यधिकारस्थप्रत्ययान्तद्वन्द्वरूपात् क्षुद्रकमालवाद् "गोत्रोक्ष"(पा० सू० ४-२-३९)इति-

---

कल्पितगोत्रार्थकत्वादेव । *अत एव=गोत्रसंज्ञासूत्रपर्यन्तं गोत्राधिकारादेव । *फिञ् नेति । "एको गोत्रे" ( पा० सू० ४-१-९३) इतिनियमात् । *भाष्यस्वरसादिति । उपपादितमेतत् । गोत्रसंज्ञासूत्रपर्यन्तं गोत्राधिकार इतिमते शङ्कते-*न चेत्यादिना । *भाष्योक्तमिति । तत्र हि-"किमर्थं शिवादिभ्योऽण् विधीयते न यथाविहितमित्येवोच्येत शिवादिभ्यो यथाविहितमितीयत्युच्यमाने इञ् प्रसज्येत । इञतो यथा विहितः । पुनर्वचनमिदानीङ्किमर्थं स्यात् । ये तस्य बाधकास्तद्बाधनार्थम् । स वै नास्ति यस्तम्बाधेत । तत्रारम्भसामर्थ्याद्यो विहितो न च प्राप्नोति स भविष्यति कश्चासावणेव" इत्युक्तम् । *अण एव विधिरिति । भविष्यतीति शेषः । *भाष्याशयात्=प्रश्नभाष्याशयात् । "शिवादिभ्यः" ( पा० सू० ४-१-११२) इतिसूत्रस्थाण्ग्रहणस्य प्रयोजनमाह—*अण्ग्रहणमिति । *इञ एव विधानं स्यादिति । शिवादिभ्यो यथा विहितमिति व्याख्यान इति शेषः । अपत्याधिकारादन्यत्र प्रवराध्यायप्रसिद्धगोत्रग्रहणमिति सिद्धान्ते

लुगिति क्षौद्रकमालवकमित्युक्तं*, *तत्तत्र लौकिकगोत्रत्वारोपेण निर्वाह्यम् । अतिप्रसङ्गस्तु "आरोपे सति निमित्तानुसरणम्"इति न्यायेन परिहार्यः । अपत्याधिकारात्परमिति भाष्ये परशब्दोऽन्यपर्यायः । ततः पूर्वस्मिन् "यञञोश्च"(पा० सू० २-४-६७) इति लुग्विधायके "स्त्रीपुंसाभ्याम्"(पा० सू० ४-१-८७) इति सूत्रभाष्येण लौकिकगोत्रग्रहणस्योक्तत्वादित्यन्यत्र विस्तरः ।

अवृद्धाभ्य इत्यादे*र्विशेष्यं प्रकृतिभ्य इति । नदीमानुषीभ्य इत्यस्य*र्थद्वारकं तद्विशेषणं तदाह—अवृद्धेभ्य इत्यादि ॥

ऋष्यन्धक(पा० सू० ४-१-११४) ॥ अन्धकादयस्त्रयो वंशाः । ऋषयो=मन्त्रद्रष्टारः । ऋषिर्वेदस्तद्द्रष्टृत्वाच्च तेषां तत्त्वम् ॥

मातुरुत् (पा० सू० ४-१-११५) ॥ अर्थगतं स्त्रीत्वं शब्दे *आरोप्य पूर्वाया इति निर्देशः । मातृशब्दस्य जननीवाचिन एव ग्रहणमभिव्यक्तपदार्थकत्वात् । द्वैमातुरे द्वयोर्मात्रोरपत्यमिति "तद्धितार्थ"(पा० सू० २-१-५१) इति समासः । तेन धान्येति । *इदं चित्यं, तादृशस्त्रीवारणायाभिव्यक्तेत्यस्यावश्यकत्वात् *लिङ्गविशिष्टपरिभाषया प्राप्तिः । वैमात्रेय इति । एतच्च विमातृशब्दो न प्रत्युदाहार्य इति भावः ।

अनूढाया एवेति । *न त्वक्षतयोनित्वं कन्यात्वमिति भावः ।

वत्सादीनां मूलपुरुषत्वाद्विकर्णादीन्प्रत्यपत्यत्वासम्भवाद्वत्सादयस्तदपत्ये आरोपितप्रवृत्तिनिमित्तका इत्याशयेनाह—वात्स्यश्चेति ।

पक्षे इति । पूर्वसूत्राद्वाग्रहणानुवृत्तेरिति भावः ।

---

प्रसक्तामनुपपत्तिम्परिहर्त्तुं भाष्याशयमाह—*यत्त्विति । *इत्युक्तमिति । स तु न प्राप्नोतीति शेषः । प्रवराध्यायप्रसिद्धत्वाभावादिति भावः । स्वयन्तदुपपत्तिमाह—*तदिति ।

*विशेष्यम्प्रकृतिभ्य इतीति । स्त्रीलिङ्गनिर्देशात् । प्रकृतिः=शब्दरूपा, सा न नदी, मानुष्यत आह—*अर्थद्वारकमिति । वाचकतासम्बन्धेनेत्यर्थः ।

*आरोप्येति । भेदप्रधानतादात्म्यस्वीकारे । *इदञ्चिन्त्यमिति । स्त्रीलिङ्गनिर्देशमात्रेण धान्यमातुर्नेति यदुक्तन्तच्चिन्त्यमित्यर्थः । ननु धान्यमातृप्रतिपादको मात्रीशब्द इति कथम्प्राप्तिरत आह—*लिङ्गविशिष्टेति ।

*न त्वक्षतयोनित्वमिति । तथात्वे कानीनशब्दस्य व्यासकर्णयोः प्रवृत्तिर्न स्यात् । एतयोः पुम्सम्बन्धजन्योत्पत्तिकत्वादिति भावः ।

स्त्रीभ्यो (पा० सू० ४-१-१२०) ॥ स्त्रीशब्दः स्वर्यते तेना* धिकार्थावगतिरित्याशयेनाह—स्त्रीप्रत्ययेति । तदन्तप्रातिपदिकादित्यर्थः । तदन्तस्य प्रातिपदिकत्वञ्च लिङ्गविशिष्टपरिभाषया प्रातिपदिकत्वादीनां तद्विशिष्टे बोधनादक्षतम्* । ते च टाबादय एव । व्याख्यानात् । *एतेन दरदोऽपत्यं दारद इत्यत्र न ढक् । तत्र दरदोऽपत्यं स्त्रीत्यर्थे* ऽणि स्त्रीप्रत्ययोत्पत्तेः प्रागेवाणः "अतश्च"(पा० सू० ४-१-१७७) इति लुक् । परे त्वत्र स्त्रीभ्य इत्यर्थग्रहणमेव । *अत एव पितृष्वसृमातृष्वसृभ्यां *ढकि लोपविधानं सङ्गच्छते । *दरत्-इडविड-पृथग्-उशिग्भ्योऽनभिधानात् ढगभावः, शिवादिपाठाद्वा । ध्वनितश्चेदं "ऋष्यन्धक"(पा० सू० ४-१-११४) इति सूत्रे भाष्ये* इत्याहुः । निरूपितश्चेदं भाष्य-

*अधिकार्थावगतिरिति । अधिकः कारोऽधिकार इत्यर्थावगमात् । *अक्षतमिति । स्त्रीप्रत्ययरहिते दृष्टानाम्प्रातिपदिकत्वतद्व्याप्यधर्माणान्तद्विशिष्टेऽतिदेश इतिपरिभाषार्थाविति भावः । *एतेन=स्त्रीप्रत्ययान्तस्य ग्रहणेन । *अणीति । "वृद्ध्यङ्मगध" ( पा० सू० ४-१-१७०) इत्यणित्यर्थः । *अत एवेति । अर्थग्रहणादेव । *ढकि लोपविधानमिति । लोपविधानसामर्थ्याद्ढकः कल्पना. स्त्रीशब्दांशे स्वरितत्वस्य च कल्पनापेक्षया ढगनुवादेन स्त्रीभ्य इत्यर्थग्रहणमिति स्वीकारे लाघवमिति भावः । *दरदित्यादि । अत्र दरच्छब्दो द्व्यज्मगधेत्यणणन्तः । इडबिड् जनपदेत्यञन्तः । ततो द्वौ द्व्यज्मगधेत्यणणन्तौ । *ऋष्यन्धकेतिसूत्रे भाष्य इति । तत्र हि द्व्यचो ढको ढूक्ढञौ । द्व्यचो ढग्भवतीत्येतस्मात् ढूक्ढञौ भवतो विप्रतिषेधेन । दृव्यचो ढग् भवतीत्यस्यावकाशः—दात्तेयः गौप्तेयः । ढूकः—काणिकेरः, गाणिकेरः । इहोभयम्प्राप्नोति—नटी नाटेरः, दासी दासेरः । ढञोऽवकाशः—कामण्डलेयः, माद्रबाहेयः । ढकः स एव । इहोभयम्प्राप्नोति—जम्बू जाम्बेयः । ढूक्ढञौ भवतो विप्रतिषेधेन" इत्युक्तम् । काणिकेर इति । काणैव काणिका । कामण्डलेय इति । चतुष्पाज्जातिवचनः । चतुष्पादृभ्यो ढञ् । जाम्बेयः, इहापि "चतुष्पादृभ्यो ढञ्" ( पा० सू० ४-१-१७) इति ढञि "ढेलोपोऽकद्र्वाः"(पा० सू० ६-४-१४७) इति ऊकारलोपः । अत्र कैयटः—"जम्बूशब्दस्यास्त्रीप्रत्ययान्तत्वात् ढक प्राप्तिश्चिन्त्या"इति । अत्र भाष्यप्रदीपोद्द्योतेऽभिहितम्—जम्बूशब्दस्य दीर्घोकारान्तत्वादूङभावः । द्व्यच इत्यत्रापि स्त्रीभ्य इति वर्त्तते । तच्च स्वर्यते । तेन तदधिकारविहितप्रत्ययग्रहणम् । तत्राप्राणिजातेश्चेतिवार्त्तिके उत इत्यस्यासम्बन्धेऽपि प्राणिजातित्वात्तदभावः । अन्ये तु तस्या जम्बोः फलरसो नदीभूय प्रवर्त्तत इतिप्रयोगाज्जम्बुर्ह्रस्वान्तोऽपि । स च वृक्षशृगालोभयवचनः । एतद्भाष्यप्रामाण्यात् । तस्मादूङि दीर्घान्तोऽप्युभयवचनः । यद्वा स्त्रीभ्य इत्यर्थग्रहणमेव । इडबिडादयः

प्रदीपोद्योते। *वाग्रहणनिवृत्तये पुनर्ढग्ग्रहणम्। शिवादिष्वादिति। *तत्र सपत्नेति पाठेऽपि लिङ्गविशिष्टपरिभाषया सपत्नीशब्ददपि बाध्यसामान्यचिन्तया ढकं बाधित्वाऽणिति बोध्यम्।

तस्येदमितीति। शिवादिपाठादित्युचितं तस्याकृतिगणत्वात्॥

इतश्च (पा० सू० ४-१-१२२)॥ अनिञः किम्? *दाक्षायणः। इतः किम्? दाक्षिः॥

प्रवाहणस्य(पा० सू० ७-३-२८)॥ उत्तरपदस्येत्यधिकारः। 'अर्द्धात्परिमाणस्य'(पा० सू० ७-३-२६) इत्यतः पूर्वस्य तु वेति चानुवर्तते; तदाह-शब्दस्योत्तरपदेति। शब्दस्येत्यवयवषष्ठी। प्रवाहणः=शुभ्रादिः। *उत्तरपदस्य वृद्धिपरत्वेऽपि तद्विधानं पूर्वपदस्य वृद्ध्यभावेऽपि "वृद्धिनिमित्तस्य"(पा० सू० ६-३-३९) इति पुंवत्त्वप्रतिषेधार्थं "जातेश्च"(पा० सू० ६-३-४१) इति निषेधस्तु *अस्मादेव ज्ञापकादनित्य इति बोद्ध्यम्॥

तत्प्रत्य(पा० सू० ७-३-२९)॥ तच्छब्देन *ढः परामृश्यते, प्रवाहणस्येति च वर्तते। बाह्येति। स चेत्। इत उत्तरं विकर्णेत्यादिश्चौवेयइत्यन्तो ग्रन्थः। विपरीतलेखस्तु *लेखकप्रमादात्॥

---

शिवादिषु पाठ्या इति। अथ वाऽनभिधानात्तेभ्यो ढगभाव इति भाष्याशय इत्याहुः। अत्र जाम्बेय इत्यत्र विप्रतिषेधेन ढञ् भवतीत्येतद्भाष्ये उक्तम्। तेन शौभ्र्य इत्यत्रार्थग्रहणमिति ध्वनितमित्यर्थः। *वाग्रहणनिवृत्तय इति। "ढक् च मण्डूकात्"(पा० सू० ४-१-११९) इति सूत्रे"पीलायावा"(पा० सू० ४-१-११८) इतिसूत्राद्वाग्रहणानुवृत्तेः। *तत्र=शिवादिगणे। पृथाशब्दाड्ढकि पार्थ इत्यस्यासिद्धिपरिहाराय मूले "तस्येदम्" पा० सू० ४-३-१२०) इत्याणित्यभिहितम्। परन्त्वेतदसङ्गतम्। तस्येत्यस्य शेषाधिकारीयत्वादत आह—*शिवादिपाठादिति।

*दाक्षायण इति। दक्षस्य गोत्रापत्यं=दाक्षिः। दक्षस्य युवा-दाक्षेरपत्यमित्यर्थेऽत्र दाक्षायणशब्दः। अत्र सामर्थ्याद्यूनि ढकः प्राप्तिर्बोध्या।

उत्तरपदस्य वृद्धिविधानप्रयोजनमाह—*उत्तरपदस्येति। ननु गोत्रसंज्ञासूत्रपर्यन्तङ्गेत्राधिकारात् "जातेश्च"(पा० सू० ६-३-४१) इत्येव सिद्धे उत्तरपदस्य वृद्धिविधानं व्यर्थमेवेत्यत आह—*अस्मादेवेति।

*ढः परामृश्यत इति। ततो बहुव्रीहिः-सः प्रत्ययो यस्येति। अनुवर्त्तमानप्रवाहणशब्दश्च स्वप्रकृतिकसमुदायलक्षणिकः। *लेखकप्रमादादिति।

कल्याण्यादि (पा० सू० ४-१-१२६) ॥ *ढकि सिद्धेऽपी-नङर्थमिदम् ।

ढक्तु नित्य इति । *वृत्त्यादिव्याख्यानादिति भावः । पूर्वे-ण=स्त्रीभ्य इत्यनेन । अत्र=इनङ्विधौ । पक्षे इति । *तदभावे ढगित्यर्थः ॥

हृद्भग (पा० सू० ७-३-१९) ॥ चादुत्तरपदस्य । महते सौ-भगायेत्यादौ तुन्दुगात्रादित्वादञि छान्दसत्वान्नोत्तरपदवृद्धिः ।

स्त्रीलिङ्गनिर्देशात्पुंसि न स्यादत आह—चटकस्येति । एवञ्च सूत्रे चटकाया इति व्यर्थमित्साह—लिङ्गविशिष्टेति । अजादित्वा-दिति । अत्र सामान्येन *द्वयोरनुकरणमिति भावः ।

क्षुद्राभ्यो (पा० सू० ४-१-१३१) ॥ *अर्थनिर्देशोऽयम् । *तदभिधायिप्रकृतिभ्यश्चायं प्रत्ययः । शीलहीनाः=अनियतपुंस्का दास्या- .

---

"प्रवाहणस्य ढे"(पा० सू० ७-३-२८) इतिसूत्रस्य "शुभ्रादिभ्यश्च"(पा० सू० ४-१-१२३) इतिसूत्रविहितढकि प्रवृत्तिसत्त्वादेतत्सूत्रानन्तरमेव "प्रवाहणस्य ढे" (पा० सू० ७-३-२८) "तत्प्रत्ययस्य"(पा० सू० ७-३-२९) इतिसूत्रद्वयस्य ले-खनमुचितमिति भावः ।

*ढकि सिद्धेऽपीति । "स्त्रीभ्यो ढक्"(पा० सू० ४-१-१२०) इत्यनेन ।

ननु "भ्रुवो वुक् च"(पा० सू० ४-१-१२५) इति वत् "कुलटाया वा" (पा० सू० ४-१-१२७) इतिसूत्रस्यापि प्रत्ययादेशोभयविधायकतया इन-ङ्मात्रं विकल्प्यते, ढक्तु नित्यम्पूर्वेणैवेत्युपादानं मूलकारीयं प्रमाणशून्यमत आह—*वृत्त्यादीति । "कल्याण्यादीनामिनङ्"(पा० सू० ४-१-१२६) इतिसूत्रे ऽनुवर्त्तमानस्य ढग्ग्रहणस्य यथा नित्यमेव प्रकृतिसम्बद्धप्रत्ययाभिधायकता तथाऽत्रापि । वाशब्दस्तु षष्ठीनिर्दिष्टस्य विधीयमानकार्येण सम्बध्यत इति भावः । *तदभाव इति । परत्वाद् ढ्रकि कृते तदभावे ढगित्यर्थः ।

*इत्याह=इत्याशयेनाह ।

*द्वयोरनुकरणमिति । चटकत्वजातिविशिष्टवाचकचटकाशब्दात्स्त्र्य-पत्ये जातस्य प्रत्ययस्य लुकि कृते "लुक् तद्धितलुकि" (पा० सू० १-२-४९) इति टापो लुकि यत्स्त्र्यपत्यवाचकश्चटकेति तस्य च जातिलक्षणङीष्बाधनार्थ-मनुकरणमित्यर्थः ।

*अर्थनिर्देशोऽयमिति । न तु "सप्तमी शौण्डैः" (पा० सू० २-१-४०) इतिवदाद्यर्थावगतिः । "क्षुद्राभ्य इत्युच्यते । क्षुद्रा नाम—अनियतपुंस्का, अङ्ग-हीना वा" इतिभाष्यात् । भाष्ये वाशब्दश्चार्थे । तदाह—*तदभिधायीत्यादि ।

दयः, अङ्गहीनाः=काणादयः ।

अत एवेति । शुभ्रादिपाठ*कल्पनद्वारेति भावः । प्रकारान्तरमपि प्रागुक्तम्* ॥

मातृष्व ( पा० सू० ४-१-१३४ ) चात्पितृष्वसुरित्यनुकृष्यते, *षष्ठ्या च विपरिणम्यते इत्याशयेनाह—पितृष्वसुरिति ।

ढकोरिति । *इदन्तेभ्यो हृष्टिहल्यादिभ्य इतश्चेति ढक् प्राप्तः । ढाञिति । शुभ्रादित्वात् ।

इति युलोप इति । *"ढे लोपः" ( पा० सू० ६-४-१४७ ) इत्यस्य तु न प्राप्तिः । परेणेयादेशेन बाधात्* ।

---

*कल्पनद्वारेति । "स्त्रीभ्यो ढक्" ( पा० सू० ४-१-१२० ) इतिसूत्रे स्त्रीग्रहणेन प्रत्ययग्रहणमिति पक्षे इदम् । *प्रागुक्तमिति । स्त्र्यर्थग्रहणन्तत्रेति-प्रागुक्तमित्यर्थः ।

*षष्ठ्या विपरिणम्यत इति । अन्यथाऽप्राप्तो ढगिति ।

तत्प्राप्तियोग्यानि प्रातिपदिकान्याह—*इदन्तेभ्य इति ।

*ढे लोप इत्यस्येति । परेयादेशप्राक्काले प्राप्तस्येति शेषः । *बाधादिति । अत्र बाधो न तम्बधित्वा प्रवृत्तिरेव, किन्तु तम्बाधित्वा प्रसक्तिमात्रम् । केकयशब्दात् "जनपदशब्दात्" ( पा० सू० ४-१-१६८ ) इत्यञि यशब्दस्येयादेशे कैकेयीत्यस्य मित्रयूनाम्भाव इत्यर्थे "गोत्रचरणात्" ( पा० सू० ४-३-१२६ )इति वुञि मैत्रेयिकेत्यस्य प्रलयादागतस्प्रालेयमित्यस्य च सिद्धिः । आदिवृद्ध्या त्वियादेशस्य समावेश एव भिन्नविषयकत्वात् ।

*दाण्डिनायन । दण्डिन् हस्तिन् आभ्यामपत्यमित्यर्थे नडादित्वात्फक् । अथर्वन्शब्दात्प्रोक्तार्थे वर्तमानाद्वसन्तादित्वादधीत इत्यर्थे ठक् । जिह्माशिन्शब्दाच्छुभ्रादित्वाड्ढक् । वाशिन्शब्दात् "उदीचाम्" ( पा०सू० ४-१-१५७ ) इति फिञ् । भ्रूणहन्धीवन्शब्दाभ्यां ब्राह्मणादित्वाद्भावकर्मणोः ष्यञि तत्वन्निपातनात् । इदमेव च भ्रूणहन्शब्दस्य तत्वनिपातनं "धातोः कार्यमुच्यमानन्तत्प्रत्यये भवति" इति परिभाषां ज्ञापयति । एतेन भ्रौणहत्यशब्दे कुत्वाभावोऽपि सिद्धः । न च कुत्वाभावनिपातनमेव तत्परिभाषायां ज्ञापकमस्त्विति वाच्यम् । "मृजेर्वृद्धिः" ( पा० सू० ७-२-११४ ) इतिसूत्रभाष्येऽपि तत्वनिपातनस्यैव ज्ञापकतोक्तेति भाष्यद्वयप्रामाण्येन तत्वनिपातनस्यैव ज्ञापकत्वाभिधानात् । सरयूशब्दादणि यूइत्यस्य वेत्यादेशः । इक्ष्वाकुशब्दो जनपदवाची क्षत्रियवाची च । तत्र जनपदवाचकाच्छैषिकार्थे "कोपधादण्" ( पा० सू० ४-२-१३२ ) इतिसूत्रेणाणि निपातनादुकारलोपः । अयमन्तोदात्तः । क्षत्रियवाचकात्तु "जनपदशब्दात्क्षत्रियादञ्"

अपत्यप्रत्ययस्येति । *प्रवराध्यायप्रसिद्धघटकस्येत्यर्थः । अपत्याधिकारादन्यत्र लौकिकं गोत्रमिति भावः । *यस्कस्यापत्यं यास्कः, शिवाद्यण्, तदन्ताद्यूनि "अणो द्व्यचः" इति फिञि यास्कायनय इत्यत्र युवप्रत्ययस्य तु न लुक् । विहितविशेषणाश्रयणात् । *वस्तुतोऽत्र शास्त्रीयं गोत्रम् । भाष्यरीत्या यस्कादिभ्यः शास्त्रीयगोत्र एव प्रत्ययविधानात् । *अत एव "वाऽन्यस्मिन्" ( पा० सू० ४-१-१६५ ) इति सूत्रे गोत्रयूनोः समावेशे यास्कायनय इत्यत्र दोषः शङ्कितो भाष्ये । अन्यथा *सिद्धान्तेऽप्यस्य समाधेयत्वेन तत्रैवाशङ्कापरभाष्यासङ्गतेरित्यलम् । "तद्राजस्य" ( पा० सू० २-४-६२ ) इति सूत्राद्बहुष्वित्यादि वर्तते । *तत्कृतेतिकिम् ?, प्रिययास्काः । बहुत्वे किम् ?, यास्कः ।

अत्रि । ( पा० सू० २-४-६५ ) ॥ अत्रिशब्दात् "इतश्च" ( पा० सू० ४-१-१२२ ) इति ढक् अन्येभ्य ऋष्यणिति बोद्ध्यम् । बहुत्वे इति । तत्कृते न तु स्त्रियामित्यपि बोद्ध्यम् ॥

युधिष्ठिरा इति । बाह्वादित्वादिञ् । भरतानां प्राच्यत्वादेव सिद्धे पुनरुपादानमन्यत्र प्राच्यग्रहणे भरतानामग्रहणार्थम् । तेन "इञः प्राचाम्" ( पा० सू० २-४-६७ ) इति लुक् भरतयूनोर्न, *यौधिष्ठिरिः

---

( पा० सू० ४-१-१६८ ) इतिसूत्रेणाञि निपातनादुकारलोपः । अयमाद्युदात्तः । प्रकृतसूत्रे तन्त्रेणोभयोरपि ग्रहणम् । द्वितीयस्य बहुत्वेऽञो लुकि इक्ष्वाकूणां दुरापे इति सिध्यति । न च सूत्रे यत्स्वरकस्योच्चारणं तत्स्वरकस्यैवानुकरणमिति कथं द्वयोरनुकरणमिति वाच्यम् । एकश्रुत्या द्वयोरप्यनुकरणसम्भवादिति भाष्ये स्पष्टम् । हिरण्मयशब्दे हिरण्यशब्दान्मयटि यशब्दलोपो निपात्यते ।

"यस्कादिभ्यः" ( पा० सू० २-४-६३ ) इतिसूत्रे यो गोत्रशब्दस्तदर्थं सिद्धान्तरीत्या व्याचष्टे—*प्रवराध्यायेति । नन्वेवं यास्कायन इत्यत्र युवप्रत्ययस्यापि प्रवराध्यायप्रसिद्धघटकत्वाल्लोपापत्तिरत आह—*यस्कस्यापत्यमित्यादि । एतच्चविहितविशेषणाश्रयणं "शिवादिभ्योऽण्" ( पा० सू० ४-१-११२ ) इत्यत्र गोत्र इति निवृत्तमिति वृत्तिकृन्मतेन । भाष्यरीत्या तु न युवप्रत्ययस्य लुक्प्राप्तिरित्याह—*वस्तुत इति । *अत एव=शास्त्रीयगोत्रे प्रत्ययविधानादेव । *सिद्धान्ते=असमावेशपक्षे । *प्रिययास्का इति । प्रकृतेऽन्यपदार्थकृतम्बहुत्वम् । *तत्कृतेतीति । अत्र मूले बहुत्व इत्येव पाठ इत्यभिप्रायेणेदम् । "ऋष्यन्धकवृष्णिकुरुभ्यश्च" ( पा० सू० ४-१-११४ ) इत्यणबाधनायाह—*बाह्वादित्वादिति । *यौधिष्ठिरिः पितेति । युधिष्ठिरशब्दाद्बाह्वादित्वादिञ् । ततो "यञि-

पिता, यौधिष्ठिरायणः पुत्र इति।

अन्तर्गण इति। गोपवनादयश्च बिदादौ प्राक् हरितात् बोद्ध्याः, इदमत्रैव* भाष्ये स्पष्टम्*। गर्गभार्गविकेति समुदायोऽत्र पठ्यते इति *"तद्राजस्य" (पा० सू० २-४-६२) इति सूत्रभाष्ये "गोत्रेऽलुग-

---

चोश्च" (पा० सू० ४-१-१०१) इति फक्।

*अत्रैव भाष्ये स्पष्टमिति। तत्र हि गोपवनादिप्रतिषेधः प्राग्घरितादिभ्यः। गोपवनादिप्रतिषेधः प्राग्घरितादिभ्यो द्रष्टव्यः–हारितः, हारितौ। बहुषु हरिताः" इत्युक्तम्। एतेन गोपवनादीनां बिदाद्यन्तर्गणत्वं स्पष्टमेव लभ्यते। अन्यथा गोपवनादिषु "गोपवन शिग्रु बिन्दु भाजन अश्वावतान श्यामाक श्यापर्ण वृत्" इति पाठेन प्राग्घरितादिभ्य इत्यसङ्गतं स्यात्। बिदादिषु च "गोपवन शिग्रु बिन्दु भाजन अश्वावतान श्यामाक श्यापर्ण हरित किंदास" इति पाठेन भाष्यं सङ्गच्छते। *तद्राजस्येति सूत्रे भाष्य इति। तत्र हि—"यञञोश्चेतिसूत्रविषये गोत्रस्य बहुषु लोपिनो बहुवचनान्तस्य प्रवृत्तौ द्व्येकयोरलुक्। गोत्रस्य बहुषु लोपिनो बहुवचनान्तस्य प्रवृत्तौ द्व्येकयोरलुग्वक्तव्यः" (इतिवार्त्तिककृतोक्तम्।) बिदानामपत्यं माणवकः बैदः, बैदौ। (अत्र बिदशब्दाद्बहुषु गोत्रापत्येष्वञि तदन्ताद्यूनि "अत इञ्" (पा० सू० ४-१-९५) इतीञ्। तस्य "ण्यक्षत्रिय" (पा० सू० २-४-५८) इति लुक्) किमर्थमिदं न अचीत्येवालुक् सिद्धः। अचीत्युच्यते, न चात्राजादिम्पश्यामः। प्रत्ययलक्षणेन। वर्णाश्रये नास्ति प्रत्ययलक्षणम्"। अजादौ प्राग्दीव्यतीये प्रत्यये परे गोत्रप्रत्ययस्यालुगितिसूत्रार्थाश्रयणं प्रकृतवार्त्तिकस्प्रवृत्तम्। ततो भाष्यकृतोक्तम्—"यदि वा कानि चिद्वर्णाश्रयाण्यपि प्रत्ययलक्षणेन भवन्ति, तथेदमपि भविष्यति। (वर्णाश्रये नास्ति प्रत्ययलक्षणमिति तु वर्णप्राधान्यविषयकमिति भावः)। अथ वा अविशेषेण लुकमुक्त्वा हलि नेति वक्ष्यामि। यद्येवमविशेषेण लुकमुक्त्वा हलि नेत्युच्यते, बिदानामपत्यं बहवो माणवकाः बिदाः, अत्रापि प्राप्नोति। (अलुगिति शेषः।)अस्तु पुनरस्य युवबहुत्वे वर्त्तमानस्य लुग्भविष्यति। (अपत्याधिकारादन्यत्र लौकिकं गोत्रमिति भावः।) पुनरलुक्कस्मान्न भवति। (लुक्शास्त्रवदलुक्शास्त्रस्यापि प्रवृत्तेरव्याघातादिति भावः।) समर्थानाम्प्रथमस्य गोत्रप्रत्ययान्तस्यालुगुच्यते, न चैतत्समर्थानाम्प्रथमं गोत्रप्रत्ययान्तम्। किन्तर्हि द्वितीयमर्थमुपसंक्रान्तम्। प्राथमकल्पिके प्रत्ययार्थे वर्त्तमानस्य तस्य प्राथम्यम्। यथा गार्गीया इति। (अत्र युवप्रत्ययस्य लुकि कृते युवलक्षणन्द्वितीयमर्थमुपसंक्रान्तोऽअन्तः शब्द इति प्राथम्याभाव इति भावः।) अवश्यञ्चैतदेवं विज्ञेयम्। त्रिभरद्वाजिका, वसिष्ठकश्यपिका, भृग्वङ्गिरसिका कुत्सकुशिकिका, इत्येवमर्थम्। (अत्रिशब्दादपत्यबहुत्वे "इतश्चानिञः" (पा०सू०४-१-१२२) इति ढक्। भरद्वाजाद्बिदादित्वादञ्। त-

चि" ( पा० सू० ४-१-८९ ) इति सूत्रभाष्ये च ध्वनितम् * । तत्फलं "तद्राजस्य" इति सूत्रे निरूपयिष्यामः ॥

तिककित । ( पा० सू० २-४-६८ ) ॥ अत्र पूर्वोत्तरपदयोरुभयोरपि लुगविशेषात् ।

उपकादिभ्यो ( पा० सू० २-४-६९ ) ॥ *अद्वन्द्वे इत्यस्य द्वन्द्व इति नानुवर्त्तते इत्यर्थस्तदाह—द्वन्द्वे चाद्वन्द्वे चेति । भ्राष्ट्रकिकापिष्ठलय इति । *इदं भाष्ये स्पष्टम् । एतेन भ्राष्ट्रककपिष्ठलोऽपि (क) तिककितवादिषु पठ्यते इति वृत्त्युक्तमपास्तम् ॥

आगस्त्य ( पा० सू० २-४-७० ) अगस्त्यशब्दादृष्यण् इति "सूर्यतिष्य" ( पा० सू० ६-४-१४९ ) इति सूत्रे कैयटे स्पष्टम् । अगस्तिप्रकृतिकगर्गादियञन्ते तु "यञञोश्च" ( पा० सू० २-४-६४ ) इति लुका सिद्धम् । कुण्डिनपर्यायनान्तकुण्डिनशब्दात्तस्य *भार्येत्यर्थे *ङीपि नि-

---

तो युवबहुत्वेऽत इञ् । तस्य "ण्यक्षत्रिय" ( पा० सू० २-४-५८ ) इति लुकि । ढकः "अत्रिभृगु" ( पा० सू० २-४-६५ ) इतिलुक् "यञञोश्च" ( पा० सू० ४-१-११) इतिभरद्वाजशब्दादञः । ततोऽत्रिभरद्वाजानां मैथुनिकेत्यर्थे "द्वन्द्वाद्वुन्" ( पा० सू० ४-३-१२५) इति वुन् । यदि द्वितीयमर्थमुपसंक्रान्तस्याप्यलुक्स्यात्तदा "गोत्रेऽलुगचि" ( पा० सू० ४-१८७ ) इत्यलुक्प्रसङ्गः स्यात् । वासिष्ठशब्दादृष्यण् । कश्यपादञ् । एवम्भृगु-अङ्गिरस्-कुत्सशब्देभ्य ऋष्यण् । कुशिकादञ् । अन्यत्सर्वम्पूर्ववत् ।) गर्गभार्गविकाग्रहणं वा नियमार्थम् । गर्गभार्गविकाग्रहणं वा क्रियते तन्नियमार्थम्भविष्यति । एतस्यैव द्वितीयमर्थमुपसंक्रान्तस्यालुग्भवति नान्यस्येति ।) गर्गाद्यञ् । भृगुशब्दादृष्यण् । यूनीञ् । तस्य लुक् । गर्गभृगूणाम्मैथुनिकेति वुन् । "अत्रिभृगु" ( पा० सू० २-४-६५ ) इतिलुक् प्राप्तो गोपवनादिपाठेन प्रतिषिध्यते ।) यदि च द्वितीयमर्थमुपसक्रान्तस्याप्यलुक् स्याद् गोपवनादिषु न पठ्यते । (पठितस्तु ज्ञापयतीत्यर्थः । *भाष्ये च ध्वनितमिति । तत्रापि पूर्ववदुक्त्वा गर्गभार्ग विकाग्रहणं वा नियमार्थम् । गर्गभार्गविकाग्रहणं क्रियते तन्नियमार्थं भविष्यति।एतस्यैव गोत्रप्रत्ययान्तस्य द्वितीयमर्थमुपसंक्रान्तस्यालुग् भवति नान्यस्येति"इत्युक्तम् । एवमुपपादनेन ध्वनितमित्यर्थः । अद्वन्द्व इत्यस्य यथाश्रुतार्थकत्वे द्वन्द्वे विकल्पो न स्यादत आह—*अद्वन्द्व इत्यस्येति । *इदम्=द्वन्द्वस्य विकल्पस्योदाहरणत्वेन प्रदर्शनम् ।

*तस्य भार्येत्यर्थे इति । एतेन पुंयोगान्नान्तस्य स्त्रियां वृत्तिर्दर्शिता । *ङीपि="ऋन्नेभ्य" इतिसूत्रविहिते ङीपि । *अत एव निपातनात्=कौण्डिन्ये-

---

( क ) अत्र क्वचित् पुस्तके 'तत्र' इत्यधिकं दृश्यते ।

ष्पन्नकुण्डिनीशब्दाद् गर्गादियञि "भस्याढे" इति पुंवत्त्वे प्राप्ते*ऽत एव निपातनात्पुंवत्त्वाभाव इति "भस्याढे" इत्यत्र भाष्ये स्पष्टम् । *एतेन कुण्डिनूप्रकृतिकगर्गादियञन्तस्याप्यत्र ग्रहणमित्यपास्तम् । *कुण्डिनीत्येव गर्गादिषु पाठात्ततो यञभावाच्च । लुगिति । *तेनागस्तीनां छात्रा इत्यर्थविवक्षायां "गोत्रेऽलुगचि" (पा० सू० ४-१-८९) इति लुकि प्रतिषिद्धे तत्सन्नियोगशिष्टादेशनिवृत्तौ वृद्धत्वाच्छे आगस्तीया इति सादिवृद्धिकसिद्धिरिति बोद्ध्यम् । एतेन स्थानिवद्भावेन वृद्धत्वं सुलभमित्यपास्तम् ।

ये चा (पा० सू० ६-४-१६८) ॥ "प्रकृत्यैकाच्" (पा० सू० ६-४-१६३) इत्यतः प्रकृत्येत्यनुवर्त्तते । *तत्र नेति वाच्ये प्रकृत्येत्युक्त्या 'अनन्तरस्य' इति न्यायं बाधित्वाऽल्लोपो न इति लोपोऽपि निवार्यते इति "षपूर्व" (पा० सू० ६-४-१३५) इति सूत्रे भाष्ये स्पष्टं, तदाह-राजन्य इति । शूद्रादाविति । *तज्जातीयस्त्रियामित्यर्थः । टिलोपो "नस्ताद्धिते" (पा० सू० ६-४-१४४) इति प्राप्तः । अल्लोपस्याप्युपलक्षणमिदम् । राज्ये पुरोहितादित्वाद्यक् ।

संयोगादिश्च (पा० सू० ६-४-१६६) ॥ "इनण्यनपत्ये" (पा० सू० ६-४-१६४) इत्यत इनणीति वर्त्ततेऽनपत्य इति च निवृत्तम्* ॥

ब्राह्मो (पा०सू०६-४-१७१) । *एकयोगत्वे अजातौ ब्राह्म इति

---

तिनिपातनात् । यद्यत्र पुंवद्भावः स्यात्तदा यञि "नस्तद्धिते" (पा० सू० ६-४-१४४) इति टिलोपः स्यात् । *एतेन = भाष्योक्तपुंवत्त्वाभावकथनेन । कुण्डिनूशब्दाद्यञः प्राप्तिरपि नेत्याह—*कुण्डिनीत्येवमिति । *तेन = लुग्विधानेन । एतेन बहुषु प्रत्ययान्तसमुदायस्यागस्तिकुण्डिनजादेशविधानेन सिद्धे लुग्विधानं व्यर्थमित्यपास्तम् ।

*तत्र = "ये च" (पा० सू० ६-४-१६८) इतिसूत्रे । "राजश्वशुराद्यत्" (पा० सू० ४-१-१३७) इतिसूत्रे "राज्ञोऽपत्ये जातिग्रहणम्" इति वार्त्तिकमूलव्याख्यानाद्यदुक्तं राज्ञो जातावेवेति तत्फलमुक्तं शूद्रादाविति,तत्र शूद्राच्छूद्रायामुत्पन्नस्यैवंविधव्यवहारो नैव प्राप्नोतीति शूद्रादावित्यनुपपन्नमत आह—*तज्जातीयेति ।

*निवृत्तमिति । एतदभिप्रायेणापत्ये उदाहरणमुक्तमिति शेषः ।

"ब्राह्मोऽजातौ (पा० सू० ६-४-१७१)इति सूत्रं योगविभागेन मूले व्याख्यातन्तत्फलमाह-*एकयोगत्व इति । ब्राह्मं हविरित्यत्र "साऽस्य देवता"

निपात्यते इत्यर्थे ऽपि ब्राह्मणो न सिद्ध्येत्, "अन्" ( पा० सू० ६-४-१६७) इति तु "न मपूर्व" ( पा० सू० ६-४-१७० ) इति निषिद्धमत आह-योगविभाग इति । निपातनस्यासाधारणं प्रयोजनं कथयत आह— अनपत्ये इति । ब्राह्मो नारद इत्यादावपत्ये "न मपूर्वः" ( पा० सू० ६-४-१७० ) इति प्रकृतिभावनिषेधाट्टिलोपः सिद्धः । एवाश्चात्र* निपातनसामर्थ्यादपत्य इति न सम्बद्ध्यते । अजाताविति असमर्थसमासः। अत्र मण्डूकप्लुत्याऽपत्य इति सम्बद्ध्यते । तदाह—अपत्ये जाताविति । जातौ किम्? । ब्राह्मणो नारदः ।

औक्ष्ण इति । ननु प्रकृतिभावादल्लोपोऽपि न स्यादत आह—षपूर्वेति । ताक्ष्णे "तक्ष्णोऽण उपसंख्यानम्" ( का० वा० ) इत्यण् । ताक्ष्ण्ये कारिलक्षणो ण्यः ।

क्षत्राद् घ इति *स्वरूपग्रहणं *व्याख्यानात् ।

लिङ्गादिति । *अन्यथा प्रत्ययविधौ तदन्तविधिनिषेधात्तदर्थं स्यादिति भावः । आढ्यकुलीन इति । *एवञ्च *ईकार उदात्तः । कुले चाढ्यत्वप्रतीतिः कुलीनशब्देन, समासे तु तदप्रतीतिरिति भावः ।

---

( पा० सू० ४-२-२४ ) इत्यर्थेऽणि "अन्" ( पा० सू० ६-४-१६७ )इति प्रकृतिभावे प्राप्ते टिलोपोऽनेन सूत्रेण यद्यपि कृतस्तथापि ब्रह्मणोऽपत्यमित्यर्थेऽणि "न मपूर्वोऽपत्ये" ( पा० सू० ६-४-१७० ) इतिसूत्रेण प्रकृतिभावनिषेधं ब्राह्मणो न सिद्ध्येदित्यभिप्रायेण योगविभागफलमुक्तम् । *अत्र = ब्राह्मइतिसूत्रे । जाताविन्यस्य यत्र जातिः प्रकृतिप्रत्ययसमुदायस्य प्रवृत्तिनिमित्तभूता तत्रेत्यर्थः । ब्राह्मो नारद इत्यत्र तु न तथेति भावः ।

*षपूर्वेतीति । वृत्तिस्थं यद्वाक्यं षपूर्व इति तत्रत्यवान्तानुकरणमिदमुच्चारणार्थोऽकारः । न तु सूत्रस्य प्रतीकधारणमितिशब्दात् ।

घपदेन कृत्रिमत्वात्तरप्तमपोर्ग्रहणं स्यादत आह-*स्वरूपेति । *व्याख्यानादिति । "जनपदशब्दात्क्षत्रियात्" इत्यादिनिर्देशदर्शनमूलकाद्व्याख्यानादित्यर्थः ।

*अन्यथा="कुलात्खः" ( पा० सू० ४-१-१३९ ) इतिसूत्रे तदन्ताग्रहणे । ननु प्रकृतसूत्रे तदन्ताग्रहणेऽपि कुलीनशब्दाऽऽढ्यशब्दयोः समासेनाढ्यकुलीनस्य सिद्धिः स्यादेवेत्यत आह-*एवञ्चेति । *ईकार उदात्त इति । प्रत्ययस्वरेणेकार उदात्त इत्यर्थः ।

पूर्ववदित्यस्य "महाकुलात्" ( पा० सू० ४-१-१४१ ) इतिसूत्रोदाह-

बहुकुल्य इति । बहुच्प्रत्ययः ।

पक्षे ख इति । तेनाऽऽदिवृद्धिरहितमपि ।

पूर्ववदिति । *अन्यतरस्यामित्यनुवृत्त्येति शेषः ।

शत्रुरिति । *अपत्ये इति कल्पितार्थेनान्वाख्यानमात्रमिति भावः । सपत्नशब्दे सह युद्धाय पततीति विग्रहे पतेर्नप्रत्ययः, सहस्य सादेश इत्याहुः* ।

अङ्गस्येत्यनुवृत्तं पञ्चम्या विपरिणम्यते, तदाह-अङ्गादिति । *तेना*ठचष्ठस्य न । *अत्र ठस्येत्यागन्तुनाकारेणोच्चारणार्थेन निर्देशः वर्णमात्रं स्थानि । ठगादिप्रत्ययेष्वपि वर्णमात्रं प्रत्ययः, उच्चारणार्थोऽकारः; आदेशस्त्वकारान्तः । *अत एव वर्णग्रहणपक्षे कर्मठ इत्यत्र दोषवारणायाङ्गस्य निमित्तं यष्ठकार इति भाष्ये व्याख्यातम् । यद्यपि सङ्घातग्रहणपक्षोऽपि भाष्ये उक्तः अव्युत्पत्तिपक्षाश्रयणेन कण्ठादिषूणादिषु न दोषः, *माथितिकेऽपि, पञ्चमीसमासेनाल्लोपस्य* स्थानिवद्भावान्न दोषः सन्निपातपरिभाषया वा, कर्मठ इत्यत्रार्थवत्परिभाषया न दोषः; तथापि *लघुत्वाद्वर्णग्रहणपक्ष एव युक्त इति बोद्ध्यम् ।

पुंवद्भावादिति । *"वृद्धिनिमित्तस्य" ( पा० सू० ६-३-३९ ) इत्यादिनिषेधः सौत्रस्यैव न "भस्याढे" इत्यस्येति भावः । स च

---

रण एवेत्यर्थ इत्यभिप्रायेणाह-*अन्यतरस्यामिति ।

ननु शत्रुरितिव्याख्यानमपत्याधिकारविरुद्धमत आह-*अपत्य इतीति । *इत्याहुरिति । वस्तुतस्तु सपत्नशब्दोऽव्युत्पन्नप्रातिपदिकं शत्रुवाची । तदुक्तं सपत्नीशब्दव्याख्यानावसरे "सपत्नः प्रकृत्यन्तरत्वात्" इति ।

*तेन=अङ्गादितिव्याख्यानेन । *अठच इति । "कर्मणि घटोऽठच्" ( पा० सू० ५-२-३५ ) इतिसूत्रविहितस्याठचष्ठस्येत्यर्थः । एतच्च विभक्तिव्यत्यासेन यदङ्गादिति व्याख्यातन्तदभिप्रायवर्णनम् । वस्तुतोऽङ्गस्येतिषष्ठ्यन्तमेवास्त्वित्याशयेनाह=*अत्र ठस्य इति । *अत एव=वर्णमात्रस्य प्रत्ययत्वादेव । सङ्घातग्रहणपक्षे माथितिकेऽतिप्रसङ्गन्निरस्यति-*माथितिकेऽपीति । *अल्लोपस्य=माथितशब्दावयवाकारलोपस्य । *लघुत्वादिति । वर्णग्रहणपक्षे माथितिके मथितम्पण्यमस्येत्यर्थे ठक्प्रत्यये इकादेशे यस्येतिलोपेऽपीकादेशे न स्थानिवद्भावेन ठत्वमलिविधित्वादिति, पञ्चमीसमासः सन्निपातपरिभाषा वा नाश्रयणीया । कर्मठेऽतिप्रसङ्गनिवारणायार्थवत्परिभाषा च नाश्रयणीयेति लाघवमित्यर्थः ।

"वृद्धिनिमित्तस्य" (पा० सू० ६-३-३९ ) इति पुंवद्भावनिषेधमाश-

प्रत्ययोत्पत्तेः प्रागेवेत्याह—गार्ग्यशब्दादिति । *पुंवत्त्वेनार्थस्य निवृत्तावपि भूतपूर्वगोत्रस्त्रीवाचकत्वं गृहीत्वाऽत्र णढकौ, तद्विवक्षामुपजीव्यैव पुंवत्त्वप्रवृत्तेः । स्त्रियाः किम् ? औपगवस्यापत्यं युवौपगविः। प्रकरणादिगम्याऽत्र कुत्सा । गोत्रेति किम् ? । कारिकेयः । णस्य णित्त्वं ग्लुचुकायन्या अपत्यं='ग्लौचुकायनः' इत्यादौ वृद्ध्यर्थम् । *वतण्ड्या अपत्यं=वातण्डो जाल्म इत्यत्र तु पुंवद्भावेन ङीब्लुको निवृत्तौ सा सिद्धेति बोद्धव्यम् ।

वृद्धाट्ठक् ( पा० सू० ४-१-१४८ ) ॥ गोत्रेत्येकदेशोऽत्रानुवर्त्तते । सौवीरेष्विति *प्रकृतिविशेषणम् । भागवित्तितार्णबिन्दवाकशायेभ्य एवायमिति वृत्तिः । फिञन्तस्यासौवीरत्वाद्वृद्धादिति चिन्त्यप्रयोजनम् । एतदेव ध्वनयितुं वृद्धसञ्ज्ञासूत्रं नेहोपन्यस्तम् ।

*फिञन्तस्य सौवीरगोत्रस्याभावादाह-फिञन्तादिति । तैकायनिः सौवीरोऽसौवीरश्च । तेनात्र प्रत्युदाहरणत्वं तैकायनीय इति भाष्योदाहृतश्च सङ्गच्छते ।

फाण्टाहृ ( पा० सू० ४-१-१५० ) ॥ *अत्रापि सौवीरगोत्र इति सम्बध्यते, मिमतेन तु तस्य न संबन्धो व्याख्यानात् गोत्रत्वाभावाच्च । वृत्त्युक्तमसङ्गतमित्याह—भाष्ये त्विति । *पूर्वनिपातव्यवस्था तु नावश्यं सर्वत्र शास्त्रे आश्रीयते इति तदनाश्रयणं न यथासंख्याभावसूचकमिति कैयटः । *णस्य णित्त्वन्तु भाष्ये प्रत्याख्यातमेव ।

पक्षे इति । प्राचां मते इत्यर्थः ।

तिकादिभ्यः (पा० सू० ४-१-१५४) ॥ तिकादिगणे कौरव्यः पठ्यते, स च "कुरुनादिभ्य" ( पा० सू० ४-१-१७२ ) इति व्युत्पन्नः

---

कुत्राह-*वृद्धिनीति । ननु पुंवद्भावेन गार्ग्यशब्दादित्युक्तिरसङ्गता तस्य स्त्रीवाचकत्वाभावादत आह-*पुंवत्त्वेनेति । वातण्डीत्यत्रापि णित्त्वस्य प्रयोजनमिति कस्य चिदुक्तिं खण्डयति—*वतण्ड्या अपत्यमिति ।

*प्रकृतिविशेषणमिति । सौवीरवाचकाद् वृद्धादित्येवमन्वयकल्पनया विशेषणमित्यर्थः ।

प्रकृतसूत्रे वृद्धादिति चिन्त्यप्रयोजनमित्याशयेनाह-*फिञन्तस्येति ।

फाण्टाहृतस्य द्वैविध्याभिप्रायेणाह-*अत्रापीति । वृत्त्युक्तमसङ्गतमित्यत्र कैयटस्यापि सम्मतिमाह-*पूर्वनिपातेति । यथासङ्ख्याश्रयणे णस्य णित्त्वं व्यर्थमत आह-*णस्येति । तदुक्तं भाष्ये—"फाण्टाहृतेः प्रत्ययस्य णित्करणान-

क्षत्रियगोत्रवाच्येव तत्र गृह्यते। ननु "कुर्वादिभ्यः" इति व्युत्पन्नो ब्राह्मणगोत्रवाचीति "ण्यक्षत्रिय" (पा० सू० २-४-५८) इति सूत्रस्थवृत्तिस्वरसः।

परमप्रकृतेरिति। कोशलशब्दात्कर्मारशब्दाच्चेत्यर्थः। विकृतनिर्देशस्तर्हि व्यर्थः स्यादत आह—प्रत्ययेति। सूत्रे च कौशल्यायन्यादिप्रयोगे श्रूयमाणप्रकृतिभागानुकरणम्। *आभ्यां परः फिञ् साधुरित्यर्थः। *अन्ये तु आदेना*देशोत्तरं प्रत्ययस्य युडागमो निपात्यते। अन्यथा प्रत्ययादित्वाभावात्स न स्यादित्याहुः। कोशलस्यापत्यमिति सूत्रे *दन्त्यपाठ इति *अन्ये। छागेति। अपिना दगोरपि।

कार्त्रायणिरिति। *कर्तुश्छात्रः कार्त्रस्तस्यापत्यमिति विग्रहः। "अट्कुप्वाङ्"(पा० सू० ८-४-२) इति णत्वम्। *कर्तुरपत्ये तु कुर्वादिगणे कर्तृ हर्त्रिति पाठात् ण्य एव। एतदुत्तरं "सदादीनां वा फिञ् वाच्यस्त्यादायनिस्त्यादः" इति क्वचिद् दृश्यते सोऽग्रन्थः। "त्यदादीनि च"(पा० सू० १-१-७४) इत्यनेन तेषां वृद्धत्वात् "उदीचां वृद्धात्"(पा० सू० ४-१-१५७) इत्यनेन सिद्धेः, भाष्ये तस्याभावाच्च। औपगविरिति। यूनीञेवेति भावः॥

वाकिनादीनां (पा० सू० ४-१-१५८)॥ *यदिह वृद्धमगोत्रं ततः फिञि सिद्धे आगमार्थमिदम्, *अन्येषामुभयार्थम्। उदीचामित्यनुवर्त्तते इत्याशयेनाह—वेति।

---

र्थक्यम्" इति। न च फाण्टाहृताभार्य इत्यत्र "वृद्धिनिमित्तस्य" ( पा० सू० ६-३-३९ ) इत्यस्य प्रवृत्त्यर्थमस्त्विति वाच्यम्। गोत्राद्यून्यस्त्रियामित्युक्तेः स्त्रियाम्प्रत्ययस्यैवानुत्पत्तेः।

ननु कौशल्यकार्मार्याभ्यामितिपञ्चमीनिर्देशः परमप्रकृतेः प्रत्ययस्वाकारे विरुध्यत इत्यत आह-*आभ्याम्पर इति। वार्त्तिकानुसारिमतमाह-*अन्ये त्विति। एवं हि वार्त्तिककृतोक्तम्—"फिञ्प्रकरणे दगुकोशलकर्मारच्छागवृषाणां युट्चादिष्टस्य" इति। *आदेशोत्तरमिति। आदिष्टस्येत्युक्तेः। *दन्त्यपाठ इति। कोसलेति। *अन्ये = भाष्यानुसारिणः। तत्र कोसलेत्यस्य दर्शनात्।

*कर्त्तुश्छात्र इति। न त्वपत्येऽत्राण्। कर्त्तृहर्त्रितिकुर्वादिगणे पाठात्। तदेतद्वक्ष्यति—*कर्त्तुरपत्ये त्विति।

*यदिहेति। वाकिन, गोधर, कार्कष्य, काक, लङ्का, चर्मिवर्मिणोर्नलोपश्च, वंवोश्च, चोल, केरल, शक, यवन, भर्ग, करूश, केकय, कश्मीर, साल्व, सुस्थल, उरश, कौरव्येति तत्र पठ्यते। *अन्येषाम् = अवृद्धानाम्।

*वृद्धादित्यनुवर्तत इत्याशयेनाह—वा फिञ् सिद्ध इति ।

प्राचाम् (पा० सू० ४-१-१६०) ॥ *प्राचामिति पूजार्थम् । अवृद्धात्किम् ? । 'राजदन्तिः' । बहुलग्रहणान्नेह-*दाक्षिः ।

मनोर्जा (पा०सू० ४-१-१६१) ॥ जातौ किम् ? । मानवी प्रजा ।

जनपद (पा० सू० ४-१-१६८) ॥ जनपदवाचकः सन् यः क्षत्रियवाचक इत्यर्थः । जनपदेति किम् ?, * द्रुह्योर्द्रौह्यवाः, अत्राणेव । क्षत्रियसमानेति । क्षत्रियवाचकशब्देन समानो यः शब्दो जनपदवाचकस्ततः षष्ठ्यन्ताद्राजन्यर्थेऽपत्यवत्प्रत्यय इत्यर्थः । इदञ्चात्रैव सूत्रे वार्तिकम् । तत्र प्राचामनुसारेणाह—अन्वर्थसञ्ज्ञेति । भाष्ये त्वस्यास्तत्त्वं नोक्तम् । किंच तत्त्वेऽपत्यवाचकत्वे *सा न स्यात्, *ञ्यादीनाञ्च सा न स्यादित्यन्ये ॥

साल्वेय(पा० सू० ४-१-१६९) ॥ साल्वेयसाल्वावव्युत्पन्नौ देशक्षत्रियोभयवचनौ । अत्र प्रकरणे सूत्रपाठात् ।

वृद्धेत् (पा० सू० ४-१-१७१) इदिति तपरकरणात्कुमार्याः कौमारः जनपदक्षत्रियोभयवाच्ययम् ।

उदुम्बराद्य इति । उदुम्बरास्तिलखलामद्रकारयुगन्धराः । भूलिङ्गाः शरदण्डाश्च साल्वावयवसञ्ज्ञिता इति *"व्यङ्मगध" ( पा० सू० ४-१-१७० ) इतिसूत्रभाष्याद् बुधाजमीढाजक्रन्दा अपि बोद्ध्याः ।

---

ननु ग्लुचुकायनिपुत्रशब्दात्फिञ् न प्राप्त इति वा फिञ् सिद्ध इत्यसङ्गतमत आह—*वृद्धादित्यनुवर्त्तत इति ।

अन्यतरस्यामित्यनुवृत्त्यैव सिद्धे प्राचामिति व्यर्थमत आह—*प्राचामिति पूजार्थमिति । *दाक्षिरिति । दक्षस्यापत्यमित्यर्थेऽत्र प्राप्तिः ।

*द्रुह्योरिति । अयं केवलक्षत्रियवाची । *सा न स्यादिति । तद्राजसञ्ज्ञा न स्यादित्यर्थः । *ञ्यादीनाञ्चेति । "वृद्धेत्" ( पा० सू० ४-१-१७१ ) इत्यादिसूत्रविहितानाञ्ञ्यादीनामित्यर्थः । इदञ्च दूषणं केवलक्षत्रियवाचकपूरुशब्दविषये स्पष्टमेव । एवमन्येषामपि तथात्वे द्रष्टव्यम् । *व्यङ्मगधेतिसूत्रभाष्यादिति । तत्र ह्येवमुक्तम्-"अणो ञ्यङ्ण्येञो विप्रतिषेधेन । अणो ञ्यङ् ण्य इञ् इत्येते भवन्ति विप्रतिषेधेन । अणोऽवकाशः—आङ्गः, वाङ्गः । ञ्यङोऽवकाशः—आम्बष्ठ्यः, सौवीर्यः । इहोभयम्प्राप्नोति—दार्व्य इति । ( "दार्व्यस्यापत्यमिति ञ्यङ्" इति कैयटः । ) ण्यस्यावकाशः—निचक—नैचक्यः । अणः स एव । इहोभयम्प्राप्नोति—नीप—नैप्यः । इञोऽवकाशः—आजमीढिः, आजक्रन्दिः । अणः स

बहुष्वर्थेष्विति। बहुत्ववदर्थेषु विद्यमानं यत्तद्राजान्तं तद्वयव-प्रत्ययस्य लुगित्यर्थः। *तेनाङ्गश्च वङ्गश्च कालिङ्गश्चेति विग्रहे ऽङ्गवङ्गक-लिङ्गा इत्यादौ लुक्सिद्धिः। *द्वन्द्वे प्रत्येकमन्यसंख्याप्रतिपादकविभक्त्यभा-वेन *बहुत्वेनैव सर्वेषां प्रतीतेः। यद्वा *तद्राजार्थसमूहगते बहुत्वे तद्रा-जस्य लुगिति न दोषः। तदर्थेति। तद्राजान्तमात्रार्था(१)श्रितमिति यावत्। तेनाङ्गचैत्रमैत्रा इत्यादौ न। तत्र चैत्रादावन्वयेन बहुत्वस्य तद-र्थमात्रा(१)श्रितत्वाभावात्। *अत एव गार्ग्यकाश्यपगालवानाम् *इति निर्देशः*। तत्र गालव ऋष्यणन्तः। *अन्यथा "यञञोश्च" (पा० सू० २-४-६४) इति लुक् स्यात्। *भृगुवत्साग्रायणेष्विति निर्देशात्क्वचिल्लो-प्यलोपिद्वन्द्वविषये तेनैवेत्यङ्गवैकल्येऽपि प्रवृत्तिः। आग्रायणोऽत्रालोपी। भृगौ "अत्रिभृगु" (पा० सू० २-४-६५) इति ऋष्यणो लुक्, वत्से "यञञोश्च"(पा० सू० २-४-६४) इति यञो लुक्। तद्राजान्तेति व्या-ख्यानात् पाण्ड्यस्य पाञ्चालस्यापत्यं माणवकाः पाण्डवः पञ्चाला इत्यादौ युवप्रत्ययस्य "ण्यक्षत्रिय" (पा० सू० २-४-५८) इति लुकि युवबहुत्वे वर्तमानतद्राजप्रत्ययस्य *लुक्सिद्धिः। *वक्ष्यमाणरीत्या युवप्रत्ययस्यै-

एव। इहोभयम्प्राप्नोति—बुध, बौधिः। ञ्यङ्ण्येञो भवन्ति विप्रतिषेधेन" इति।

*तेन = बहुत्ववदर्थ इतिव्याख्यानेन। बहुष्वर्थेषु यस्तद्राज इत्यर्थे द्वन्द्वावयवावयवस्य तद्राजस्य बह्वर्थप्रतिपादकत्वाभावान्न स्यादिति भावः। ननु तद्राजान्तत्वञ्च प्रत्येकमस्ति, तेषाञ्च न बहुत्ववदर्थे वृत्तिः; किन्तु समुदायस्यैवे-त्यत आह—*द्वन्द्वे प्रत्येकमिति। *बहुत्वेनैवेति। उद्भूतावयवभेदरूपस्येत-रेतरयोगद्वन्द्वस्य प्रकृते सत्त्वादिति भावः। *तद्राजार्थसमूहगत इति। यत्र तद्राजार्थेष्वनेकेषु बहुत्वान्वयस्तत्र लुगिति सूत्रार्थ इति भावः। *अत एव=तद्रा-जान्तमात्रार्थाश्रितमिति व्याख्यानादेव। *इतिनिर्देश इति। "नोदात्तस्वरितो-दयमगार्ग्यकाश्यपगालवानाम्" (पा० सू० ८-४-६७) इति सूत्रनिर्देश इत्यर्थः। यथा "तद्राजस्य" (पा० सू० २-४-६२) इतिसूत्रे व्याख्यातन्तथा "यञञोश्च" (पा० सू० २-४-६४) इति सूत्रेऽप्यर्थः स्यादिति भावः। *अन्यथा = अणन्त-त्वाभावे। बिदाद्यन्तत्वस्वीकार इति शेषः। विशेषार्थमाह—*भृगुवत्सेति। तदुक्तमत्रैव सूत्रे भाष्ये—"अथ यो लोप्यलोपिनां समासस्तत्र कथम्भवितव्य-म्। उभयं हि दृश्यते-शरद्वच्छुनकदर्भाद्भृगुवत्साग्रायणेषु। नोदात्तस्वरितोदय-मगार्ग्यकाश्यपगालवानामिति" इति। अत्र कैयटः-"ज्ञापकद्वयसद्भावादुभयम्भ-वतीति भावः" इति। *लुक्सिद्धिरिति। 'यः शिष्यते' इतिन्यायेन तद्राजान्त-

(१) 'त्वयि' इति क्वचित् पुस्तके पाठः।

वाजादिप्राग्दीव्यतीयस्य विषयसत्त्वात् प्राप्तो "गोत्रेऽलुगचि" ( पा० सू० ४-१-८९ ) इत्यलुक्तु न । गोपवनादिषु गर्गभार्गविकाशब्दपाठेन यून्युपसङ्क्रान्तस्य तेनालुगभावज्ञापनात् । तस्य हि ऋष्यणन्तभार्गवाद्युवबहुत्वे इञो "ण्यक्षत्रिय" ( पा० सू० २-४-५८ ) इति लुकि युवबहुत्वे भार्गवस्य वृत्तेः "अत्रिभृगु" ( पा० सू० २-४-६५ ) इति प्राप्तलुको निषेधाय गोपवनादिषु पाठः । अन्यथा "गोत्रेऽलुगचि" ( पा० सू० ४-१-८९ ) इत्येव सिद्धे तद्वैयर्थ्यं स्पष्टमेव । गर्गभृगूणां मैथुनिकेत्यर्थः । *विशिष्टस्यैव गणे पाठाद् गर्गादियञो लुको न निषेधः । अस्य विशिष्टस्य पाठेऽत्र च*भाष्यकैयटौ मानम् । *न चैवमाङ्गप्रतिकृतय आङ्गा इत्यत्र लुगापत्तिः । "यञञोश्च" ( पा० सू० २-४-६४ ) इत्यत्र लौकिकगोत्रग्रहणात्प्रत्यासत्त्याऽपत्यबहुत्वे वर्त्तमानस्यैव तेन लुगङ्गीकारेण* तत्साहचर्येणास्यापि अपत्यतद्राजार्थान्यतरगतबहुत्वे एव प्रवृत्तेरदोषात् । *पाञ्चालापत्ययौगिकपाञ्चालशब्दाद् बहुवचनान्ताद्युवप्रत्यये एकत्वद्वित्वयोः पाञ्चालः पाञ्चालावित्यत्र "गोत्रेऽलुगचि" ( पा० सू० ४-१-८९ ) इत्यलुक् युवप्रत्ययस्य "ण्यक्षत्रिय" ( पा० सू० २-४-५८ ) इति लुक्यपि प्रत्ययलक्षणेनाजादिप्राग्दीव्यतीयविषयसत्त्वात् । "न लुमता" ( पा० सू० १-१-६३ ) इति निषेधस्तु नाऽस्य प्रत्ययोद्देश्यकत्वेऽप्यङ्गोद्देश्यकत्वाभावात् । प्रत्ययलक्षणसूत्रस्य नियमार्थत्वे तु गोत्रेऽलुगचीत्यत्राच्पदस्य हलादिभिन्नलाक्षणिकत्वं बोध्यम् । एतेनात्राल्विधित्वात्तत्पक्षे स्थानिवत्त्वस्याप्राप्तिरित्यपास्तम् । लक्षणायां स्थानिभूताऽलाश्रयविधि-

---

स्य बहुत्ववदर्थे वृत्तेः । *वक्ष्यमाणरीत्या=प्रत्ययलक्षणेन । ननु गोपवनादित्वाद्गर्गशब्देऽपि निषेधः स्यादत आह—*विशिष्टस्येति । *भाष्यकैयटाविति । एतच्चोपपादितम्प्राक् । *न चैवमिति । बहुत्ववदर्थे विद्यमानं यत्तद्राजान्तमिति व्याख्याने इत्यर्थः । अङ्गानामपत्यम्=आङ्गः । आङ्गप्रतिकृतयः=आङ्गाः । इवे प्रतिकृताविव्यर्थे कनि तस्य लुपि तद्राजान्तस्य पूर्ववद्बहुत्ववदर्थे वृत्तेः सत्त्वात् । *तत्साहचर्येण="यञञोश्च" ( पा० सू० २-४-६४ ) इति सूत्रसाहचर्येणेत्यर्थः । यदुक्तम्प्राक् वक्ष्यमाणरीत्येति तद्वक्तुमुपक्रमते—*पञ्चालापत्येति । पञ्चालापत्ये यौगिको यः पञ्चालशब्दो बहुवचनान्तस्तस्मादित्यर्थः । *ध्वनितञ्चेदमिति । तत्र हि—"क्षत्रियादेकराजात्सङ्घातप्रतिषेधार्थम् । क्षत्रियादेकराजादिति वक्तव्यम् । किम्प्रयोजनम् ? । सङ्घातप्रतिषेधार्थम् । सङ्घातान्मा भूत् । पञ्चालानाम-

ताया अस्याभावेन तत्प्राप्तेः । *ध्वनितं चेदं "जनपदशब्दात्"( पा० सू० ४-१-१६८ ) इति सूत्रे भाष्ये प्रकृतसूत्रे च । आङ्ग्यां किम् ?, *आङ्ग्यः स्त्रियः । स्त्रीत्वं* प्रधानमेवात्र गृह्यते । तेन पञ्चभिर्राङ्गीभिः क्रीतः पञ्चवङ्ग इत्येव । बहुत्वन्त्वप्रधानमपि *व्याख्यानात् । *तेनाङ्गान-तिक्रान्तोऽत्यङ्ग इत्येवेति स्पष्टमत्रैव भाष्यकैयटयोः । कथमिति । बहुत्वे लुकः प्राप्तेरिति भावः । अतद्राजत्वान्न लुगित्युत्तरम् । रघूणामिति । रघुयदुशब्दयोर्जनपदसमानशब्दत्वाभावादिति प्रश्नः । लक्षणयेति । यद्यपि व्याकरणशास्त्रस्य साधुत्वनियामकतया तत्संबन्ध्यपत्यमित्यर्थे प्रत्ययान्तस्यापत्यादिपदघटितसमासस्य च साधुत्वबोधनेन केवलप्रकृतेस्तदर्थे लक्षणयाऽप्यसाधुत्वमेवोचितं, तथापि लक्षणयेत्यस्य रघुत्वाद्यारोपेणेत्यर्थः । एवञ्च *रघुत्वेनैव ततो बोध इति नासाधुता तत्संबन्ध्यपत्यमित्यर्थे त्वसाधुतैवेति स्पष्टं "परश्च" ( पा० सू० ३-१-२ ) "पुंयोगात्" ( पा० सू० ४-१-४ ) इति सूत्रे भाष्ये ॥

कम्बोजा ( पा० सू० ४-१-१७५ ) ॥ अबह्वर्थमिदम् ।

अवन्ती कुरूरिति । *अत्र ङीष् ॥ ङेः "लुक् तद्धितलुकि" इति लुक् न अनुपसर्जनत्वात् ॥

---

पत्यम्, विदेहानामपत्यमिति । तत्तर्हि वक्तव्यन्न वक्तव्यम् । न ह्यन्तरेण बहुषु लुकम्पञ्चालानामित्येतद्भवति । यस्तस्मादुत्पद्यते युवप्रत्ययः स स्यात् । युवप्रत्ययश्चेत्तस्य लुक् । तस्मिंश्चालुग्भविष्यति"इत्येवमभिधानेन प्रकृतसूत्रे च "गोत्रस्य बहुषु लोपिनो बहुवचनान्तस्य प्रवृत्तौ द्व्येकयोरलुक् । गोत्रस्य बहुषु लोपिनो बहुवचनान्तस्य प्रवृत्तौ द्व्येकयोरलुग्वक्तव्यः । बिदानामपत्यम्माणवकः = बैदः, बैदौ । किमर्थमिदन्न अचीत्येवालुक् सिद्धः । अचीत्युच्यते न चात्राजादिम्पश्यामः । प्रत्ययलक्षणेन । वर्णाश्रये नास्ति प्रत्ययलक्षणम् । यदि वा कानि चिद्वर्णाश्रयाणि प्रत्ययलक्षणेन भवन्ति तथेदमपि भविष्यति" इति प्रतिपादनेन च ध्वनितमित्यर्थः । *प्रधानमेवेति । प्रधानीभूतार्थविशेषणतापन्नमेवेत्यर्थः । *आङ्ग्यः स्त्रिय इति । अङ्गानामपत्यानि स्त्रियः आङ्ग्य इत्यर्थः । *व्याख्यानादिति । अङ्गानतिक्रान्त इति विग्रहेऽपि अत्यङ्ग इत्यत्र लुग्दर्शनमूलकादित्यर्थः । तदेवाह-*तेनेति । *रघुत्वेनैव ततो बोध इति । रघुत्वारोपे चापत्यापत्यवद्भावसम्बन्धः प्रयोजक इति शेषः ।

पश्चादुत्पन्नस्यापि "इतो मनुष्यजातेः" ( पा० सू० ४-१-६५ ) इति-ङीषो लुक् कुतो नेत्यत आह—*अत्रेति ।

अतश्च ( पा० सू० ४-१-१७७ ) ॥ *तपरकरणं स्पष्टार्थम् । स्त्रियामित्यस्य स्त्र्यपत्यार्थकस्येत्यर्थः । शूरसेनीति । अञो लुकि "जातेः" ( पा० सू० ४-१-६३ ) इति ङीष् । *नियतङ्गोत्रत्वारोपात् ।

एते प्राच्या इति । *क्षत्रिया इत्यर्थः । जन्यजनकभावेति । दाम्पत्यलक्षण एव पुंयोगस्तत्र गृह्यते *इति मते गौरादित्वात् ङीषिति बोद्ध्यम् । लुकि त्विति । *"ञ्यादयः" (पा० सू० ५-३-११९) इत्यत्रस्तद्राजत्वं, यौधेयादिग्रहणादेव पार्श्वमिकानामपि "अतश्च" ( पा० सू० ४-१-१७७ ) इति लुक् । तेन क्षत्रियजनपदोभयवाचिपर्शुशब्दाद् द्व्यचोऽणि तस्यातश्चेति लुकि अनेन स्वार्थिकेऽणि तस्याप्यनेन लुक्यूङि पर्शूरित्यादिसिद्धिः । *एतेनानन्तरत्वाच्चातुरर्थिकानामेव लुगित्यपास्तम् । *ङीपीति । योपधत्वान्न ङीप् । अञ्योऽकार इति व्याख्यानाच्च न ङीनिति भावः । उदात्तनिवृत्तीति । "अनुदात्तस्य च यत्र" ( पा० सू० ६-१-१६१ ) इत्यनेन *ङीबुदात्तः स्यात् । सिद्धान्ते त्वनन्तत्वान्ङीन्या*द्युदात्तत्वमिति भावः ॥

अणिञोः (पा० सू० ४-१-७८) । *अत्र पारिभाषिकं गोत्रं "गो-

---

अतश्च"(पा० सू० ४-१-१७७) इति सूत्रे तद्राजस्येत्यनुवर्त्तते, तच्चात इत्यस्य विशेषणन्न तु विशेष्यम् । तथा सत्यदन्तस्य तद्राजस्येत्यर्थापत्तौ ञ्यङादीनामप्यनेन सूत्रेणैव लुक्सिद्धौ "स्त्रियामवन्ति"(पा० सू० ४-१-१७६) इत्यस्य वैयर्थ्यापत्तेः । एवञ्च तद्राजशब्दाभिन्नस्यात इत्यर्थः सम्पन्नस्तादृशश्च ह्रस्व एवाकारः सम्भवतीति तपरकरणं व्यर्थमत आह—*तपरकरणमिति । *नियतमिति । गम्यमानभवतिक्रियाविशेषणमेतत् । एतेनानन्तरापत्येऽप्येवमेवेति सूचितम् ।

*क्षत्रिया इति । एतेन यत्प्राच्यग्रहणस्योदाहरणन्तत्र जनपदक्षत्रियोभयवाचकत्वेन प्रकृतप्रकरणीयप्रत्ययोत्पत्तियोग्यताऽस्तीति ध्वनितम् । *इतिमते इति । भाष्यसम्मते मत इत्यर्थः । यौधेयीत्यत्र यौधेयशब्दादुत्पन्नस्याञोऽपि प्राप्तस्य लुकोऽनेन निषेध इत्यस्य फलमुपपादयति-*ञ्यादय इति । *एतेन=यौधेयादिग्रहणेन ज्ञापकेन । *ङीपीतीति । अञो लुकि कृतेऽपि जातिलक्षणङीषः प्राप्त्यभाव उक्तः । *ङीबुदात्तः स्यादिति । "कितः"(पा० सू० ६-१-१६५) इत्यनेन ढगन्तस्यान्तोदात्तत्वात् । *आद्युदात्तत्वमिति । समुदायस्येति शेषः ।

"अणिञोः"(पा० सू० ४-१-७८) इतिसूत्रस्यापत्याधिकारबहिर्भूतत्वाल्लौकिकगोत्रग्रहणशङ्कानिवारणायाह—*अत्रेति । *तद्धीति । "गोत्रावयवात्"

त्रावयवात"(पा० सू० ४-१-७९) इति सूत्रारम्भसामर्थ्यात्। *तद्ध्यनन्तरापत्यार्थकगोत्रादव्युतोनन्तरो दैवदत्त्या याज्ञदत्त्येति भारद्वाजीयोक्तिपरभाष्यात् शास्त्रीयगोत्रपृथक्भूते तत्सदृशे ऽनन्तरापत्यप्रत्ययान्ते विध्यर्थम्। *तेन युवापत्ये न। अतिप्रसङ्गस्त्वनभिधानान्नेति कैयटः। यदि तु अनन्तरापत्यप्रत्ययान्तदैवदत्त्यायाज्ञदत्त्ययोः क्रौड्यादिपाठं कृत्वा गोत्रावयवादिति प्रत्याख्यायते, तदा *लौकिकगोत्रग्रहणेऽपि न दोष इत्यन्ये। ङकारो "यङश्चाप्" (पा० सू० ४-१-७४) इत्यत्रास्यापि ग्रहणार्थः। षकारः सामान्यग्रहणाविघातार्थो ऽन्यथैकानुबन्धत्वादस्यैव ग्रहणं स्यात्, न तु ष्यङः। न च टापा सिद्धिः। *अन्तोदात्तत्वानापत्तेः। *अयश्चादेश एव, न तु प्रत्ययः। औदमेध्याया अपत्ये "स्त्रीभ्यो ढक्" *औदमेधेयासिद्धेरिति भाष्ये स्पष्टम्। *अढ इत्युक्त्या पुंवत्त्वाप्राप्तेः अस्यापत्यार्थकत्वाभावेन "आपत्यस्य" (पा० सू० ६-४-१५१) इति यलोपाप्राप्तेश्च *स्त्रियामिति विशिष्योक्त्या स्वार्थिकत्वेऽपि स्त्रीत्वरूपस्वार्थार्थिकतैवास्य *गोत्राणन्ताभिजित्शब्दादत्यन्तस्वार्थिकयञस्तु विशेषानुक्तेः सकलस्वार्थ-

---

(पा० सू० ४-१-७९) इति सूत्रं हीत्यर्थः। *तेन=अनन्तर इति भाष्येण। *लौकिकगोत्रेति। प्रवराध्यायप्रसिद्धस्य गोत्रस्येत्यर्थः। पूर्वोक्तभाष्ये गोत्रादव्युत इत्यस्य पारिभाषिकगोत्रात्पृथग्भूत इत्यर्थः। तेन तत्सदृशे प्रत्यये विध्यर्थमित्यर्थः। *अन्तोदात्तत्वानापत्तेरिति। यद्यपि कुमुदगन्धिशब्दादणि तस्य प्रत्ययसंज्ञासन्नियोगशिष्टाद्युदात्तत्वे तदादेशस्य ष्यङोऽप्युदात्तत्वात्तत्टापि कृते "एकादेश उदात्तेन"(पा०सू० ८-२-५)इत्युदात्तत्वं सिध्यति, तथापीञन्ते वाराह्येत्यादावन्तोदात्तत्वानापत्तेरित्यर्थः। प्रत्ययः परश्चेतिसूत्रद्वयप्रकरणेऽस्य पाठेन प्रत्ययविधायकत्वमस्य सूत्रस्येतिशङ्कानिवारणायाह—*अयश्चादेश एवेति। *औदमेधेयासिद्धेरिति। "आपत्यस्य च तद्धिते"(पा० सू० ६-४-१५७) इतिसूत्रविहितो यलोपः प्रकृते न स्यात् स्वतन्त्रप्रत्ययपक्षे तस्यापत्यत्वाभावादिति भावः। ननु पुंवद्भावेन यकारनिवृत्तिर्भविष्यतीत्यत आह—*अढ इति। नन्वस्य स्वतन्त्रप्रत्ययत्वेऽपि स्वार्थिकत्वेनापत्यार्थकत्वादापत्यस्येति यलोपः स्यादेवेत्यत आह—*स्त्रियामिति विशिष्य इति। अत्र विशिष्योक्त्या इति कथनेन प्रकृतिवाच्यस्त्रीत्वद्योतकत्वमेव टाबादीनामिति सूचितम्। "अनिर्दिष्टार्थाः"इतिन्यायेनात्यन्तस्वार्थिकानान्तु सकलस्वप्रकृत्यर्थकता। अत एव यौधेयी इत्यत्रापत्यार्थकढगन्तयौधेयशब्दात् "पर्श्वादि"(पा० सू० ५-३-११७) इतिसूत्रेणाञि तदन्तस्य गोत्रत्वमस्त्येव। अत एवाह—*गोत्राणन्तेति।

बोधकतेति अपत्यार्थकञ्वान्ततो "गोत्रचरणात्"(पा० सू० ४-३-१२६) इति वुञि "आपत्यस्य"(पा० सू० ६-४-१५१) इति यलोपे आभिजितकसिद्धिरिति तदाशयः । *नन्वादेशत्वे हास्तिशिरसोऽपत्यं हास्तिशीर्षिर्बाह्वादित्वादिञ् "अचि शीर्षः"(पा० सू० ६-१-६२) इति शीर्षादेशः । तत इञः ष्यङ् हास्तिशीर्ष्या । अत्र शीर्षस्य स्थानिवत्त्वेन शिरस्शब्दत्वाद् "ये च तद्धिते"(पा० सू० ६-१-६१) इति शीर्षन्नादेशः प्राप्नोति *टिलोपस्तु न "ये चाभावकर्मणोः"(पा० सू० ६-४-१६८) इति प्रकृतिभावात् स्पष्टश्चेदं "ये च तद्धिते"(पा० सू० ६-१-६१) इत्यत्र भाष्ये इति चेन्न, "ये च तद्धिते"इति सूत्रस्थभाष्यस्यैकदेश्युक्तित्वात्* । *अत एव प्रकृतसूत्रे भाष्ये आदेशपक्षमुपक्रम्यैष पक्षो निर्दोष इत्युक्तम् । एवञ्च "ये च तद्धिते" इति सूत्रे पूर्वपक्ष्युक्तप्रयोगयोः *अनभिधानमेवेति तद्भावः । *यद्वा कौड्यादिगणे तयोः पाठादत्र ष्यङः प्रत्ययत्वमेवेत्यणिञ्भ्यां व्यवधानादत्र शीर्षन्नादेशाभाव इत्याशयः ।

गोत्रावयवात् (पा० सू ४-१-७९) ॥ *अवयवशब्दो*बन्तो *ऽप्रधानवाची । तेनाप्रधानं गोत्रं यत्कुलप्रतिष्ठाकरं तत् गृह्यते; तदा-

---

*यञ इति । अभिजिद्विदभृदितिसूत्रविहितस्येत्यादिः । आदेशत्वपक्षे "ये च तद्धितइतिसूत्रस्थभाष्याविरोधशङ्कानिवारणाय शङ्कते-*नन्वादेशत्व इति । नन्वस्तु शीर्षन्नादेशस्तथापि "नस्तद्धिते"(पा० सू० ६-४-१४४)इति टिलोपो भविष्यतीत्यत आह-*टिलोप इति । *एकदेश्युक्तित्वादिति । अभावकर्मणोरिति पर्युदासेनादेशत्वानाक्रान्तस्य यादितद्धितस्य ग्रहणेन टिलोपापवादप्रकृतिभावाप्राप्त्यां इष्टरूपसिद्धौ पर्युदासानाश्रयणेनादेशपक्षे दूषणाभिधानमनुचितमित्येकदेश्युक्तित्वमिति भावः । किञ्च प्रकृतसूत्रस्थसिद्धान्तभाष्यविरोधादप्येकदेश्युक्तित्वमित्याह— *अत एवेति । एकदेश्युक्तित्वादेव । *उक्तप्रयोगयोः=हास्तिशीर्ष्या पैलुशीर्ष्या इतिप्रयोगयोः । *अनभिधानमेवेति । एतदनभिधानाभिधानं पर्युदासानाश्रयणेन । तयोः प्रयोगयोः प्रामाणिकत्वे उपायान्तरमाह—*यद्वेति ।

"गोत्रावयवात्"(पा० सू० ४-१-७९) इतिसूत्रघटकोऽवयवशब्दो लोकप्रसिद्धावयवार्थापेक्षया विलक्षण इत्याशयेनाह-*अवयवशब्द इति । *अबन्त इति । अवेत्युपसर्गपूर्वकयुधातोरप्प्रत्ययान्तः । *अप्रधानवाचीति । अप्रधानस्य लक्षणया प्रकृते बोधकः । तेन न नीलघटादिशब्दजन्यशाब्दबोधे नीलपदार्थेऽवयवत्वव्यवहारापत्तिः । गोत्रावयवादित्यत्र कर्मधारयात्पञ्चमी । सौत्रत्वा-

ह—गोत्राभिमता इति । पुणिकभुणिकमुखरादि हि देशविशेषप्रसिद्धं कुलनाम । पुणिकादयोऽतइञन्ताः । *किञ्च गोत्राद्व्ययुतं=पृथग्भूतमनन्तरापत्यन्तदर्थश्चेदम् । भाष्यप्रामाण्यादर्थद्वयेऽपि सूत्रतात्पर्यम् । *अनयोरुभयोरपि क्रौड्यादित्वकल्पने तु व्यर्थमेव सूत्रमिति बोद्ध्यम् ।

क्रौड्यादिभ्य इति । पञ्चमीनिर्देशादत्र प्रत्ययत्वमेवेत्याह—प्रत्यय इति । सूतेत्यादि गण*सूत्रे । *सूतशब्दाद्भोजशब्दाच्च प्रत्ययः । सूत्या=प्राप्तयौवना । *जातौ सूतीत्येव । एवमक्षत्रिया भोजैव । क्रौड्यादिपठितगौकक्षाशब्दस्य ष्यङन्तत्वेऽपि "गौकक्ष्यायाः प्रतिषेधः"इति वचनात् न सम्प्रसारणम् । तेन गौकक्ष्यापुत्र इत्येव ।

दैवयाज्ञि(पा० सू० ४-१-८१) ॥ देवा यज्ञा यष्टव्या यस्य तदपत्यमित्यर्थः । कण्ठे विद्धमस्य । काण्डेविद्धीति पाठे काण्डेन विद्ध इति समासेऽत एव निपातनात्काण्डस्यैकारः । सत्यमुग्रमस्येत्यर्थे निपातनान्मुक् । अगोत्रार्थमिति । *अनन्तरापत्यार्थमित्यर्थः । गोत्रे=शास्त्रीये । एवञ्चोभयत्रविभाषेयमिति भावः । *इदञ्च "गोत्रावयवात्"(पा० सू० ४-१-७९) इत्यस्य पुणिकादिमात्रविषयत्वमिति त्रादिनां मते बोद्ध्यम् । *अन्यथा तु प्राप्तविभाषैवेति दिक् ॥

इत्यपत्याधिकारः ॥

---

दवयवशब्दस्य परनिपातः । सूत्रस्य प्रयोजनान्तरमाह—*किञ्चेति । अवयुतमित्यस्य व्याख्या=पृथग्भूतमिति । *अनयोरुभयोरपीति । भारद्वाजीयभाष्ये उदाहरणत्वेन प्रदर्शितयोर्दैवदत्त्यायाश्चदत्त्येत्यनयोः । अपिना पूर्वोक्तानाम्पुणिकादीनां ग्रहणम् । न च "अणिञोः"(पा० सू० ४-१-७८) इतिसूत्रव्याख्यानावसरे गोत्रशब्देन पारिभाषिकस्य गोत्रस्य ग्रहणमित्यर्थे "गोत्रावयवात्" (पा० सू० ४-१-७९) इति सूत्रारम्भस्य साधकत्वमुक्तं, तत्कथमुपपद्यते ?, अगुरूपोत्तमार्थत्वादस्येति वाच्यम् । भारद्वाजीयभाष्यसम्मतप्रयोगसाधकस्य तस्यारम्भादित्यर्थात् । *सूत्रे इति । सूतशब्दो भोजशब्दश्च ष्यङ्प्रत्ययम्प्राप्नोतीत्यनयोरर्थः । युवत्यामिति क्षत्रिय इति चोपाधिः पशाविति वत्तदाह—*सूतशब्दादिति । स्त्रियामस्य विधानात् क्षत्रियशब्दः क्षत्रियापरः । *जातौ सूतीति । युवत्वजातिविशिष्टे रूढस्य सूतीतिरूपमित्यर्थः । क्रियाशब्दस्य तु सूता इत्येव भवतीति बोध्यम् ।

दैवयज्ञीत्यादिनिर्देशादपत्यार्थकप्रत्ययान्तानामेतस्मिन् सूत्रे ग्रहणमित्याशयेनाह—*अनन्तरापत्यार्थमित्यर्थ इति । उभयत्र विभाषेयम् । गोत्रे प्राप्ते अनन्तराऽपत्ये आरम्भात् । *इदम्=उभयत्र विभाषात्वकथनम् । *अन्य-

तेन रक्तम् (पा० सू० ४-२-१) ॥ रागशब्दे *करणे घञ् ॥ रागवचाकात्तत्करणक*रञ्जनकर्मेत्यर्थे प्रत्यय इत्यर्थः । "कौमरा"(पा० सू० ४-२-१३) इति पर्यन्तं तेनेति वर्तते । देवदत्तेनेति । रागादित्यस्याभावे कर्तृतृतीयान्तस्यापि ग्रहणं स्यादिति भावः ।

लाक्षारोचनाशब्देन समाहारद्वन्द्वः । शकलं=रागद्रव्यविशेषः । वृत्तिकार इति । भाष्ये तु नैतद् दृष्टम् ।

नक्षत्रेण युक्तः (पा० सू० ४-२-३) । अश्विन्यादयः केवलनक्षत्रवाचकास्तद्युक्तचन्द्रवाचकाश्च । तत्राद्येऽप्राप्तिपूर्वकप्राप्तिरूपयोगस्यासम्भवादत्रान्त्यग्रहणम्* । *स च संकल्पवाक्ये प्रसिद्धः । नक्षत्रशब्दोऽप्येवम्* । अद्य किं नक्षत्रमित्यादिव्यवहारात् । नक्षत्रयुक्तचन्द्रमसा युक्त इत्यर्थे प्रथमात्प्रत्ययो भवति यो युक्तः स चेत्काल इति सूत्रार्थः । *स च नक्षत्रवाचकादेवाभिधानस्वाभाव्यात् । नक्षत्रेणेति किम् ?, चन्द्रेण युक्ता रात्रिः । कालः किं ? पुष्येण युक्तं गगनम् ।

अद्येति । *अद्यतनमहोरात्रमित्यादाविव राहोः शिर इत्यादा-

---

था=तस्यान्यविषयकत्वस्यापि स्वीकारे ॥

## इत्यपत्याधिकारविवरणम् ॥

*करणे घञिति । रञ्जधातोरिति शेषः । "घञि च भावकरणयोः" (पा० सू० ६-४-२७) इति नकारलोपः । *रञ्जनकर्मेति । रञ्जनमत्रान्यदीयवर्णप्रकारकप्रतीतिविषयत्वम् । एवञ्च तेन रक्तत्वञ्च तत्सम्बन्धप्रयोज्यतदीयवर्णप्रकारकप्रतीतिविशेष्यत्वमिति बोध्यम् । तत्सम्बन्धश्च पृथगग्रहणप्रयोजकः सम्बन्धविशेषः । तेन जपाकुसुमसम्बन्धाद्रक्तः स्फटिक इति प्रतीतावपि न जापाकुसुममिति प्रयोगापत्तिः । *अन्त्यग्रहणमिति । अश्विन्यादिशब्देन तत्तन्नक्षत्रयुक्तचन्द्रवाचकस्य ग्रहणमित्यर्थः । *स च=केवलनक्षत्रवाचकश्च । *एवमिति । उभयवाचक इत्यर्थः । ननु यदि सूत्रघटको नक्षत्रशब्दस्तत्तन्नक्षत्रयुक्तचन्द्रलाक्षणिकस्तदा तत्तन्नक्षत्रयुक्तचन्द्रबोधकादश्विनीयुक्तचन्द्रशब्दादपि प्रत्ययः प्राप्नोतीत्यत आह—*स च नक्षत्रवाचकादेवेति । अश्विन्यादिशब्देभ्य एवेत्यर्थः । न तु नक्षत्रवाचकनक्षत्रशब्दादपि । अत्राप्युक्त एव हेतुर्बोध्यः ।

ननु प्रकृते पुष्यशब्दः पुष्यनक्षत्रयुक्तशशियुक्तषष्ट्यादिघटीपरिच्छिन्नकालपरस्तस्य चाद्यभवत्वन्न सम्भवत्यभेदे आधाराधेयभावाभावादत आह—*अद्यतनामित्यादि । ननु "लुबविशेषे"(पा० सू० ४-२-४) इतिसूत्रस्य

विव कल्पितभेदमादायाधारत्वोपपत्तिर्बोध्या । पौर्णमास्यामिति । अन्यत्र तु पुष्यः पञ्चमीत्येव । अत एवेति । तत्र श्रवणेत्युक्तेरेव । अनेन च पौर्णमास्यां लुब्न्तस्यानित्यत्वं ज्ञाप्यते । तेन श्रावणी । अबाधकान्यपीति वृत्तिमतं तु न युक्तं बाधकान्येव निपातनानीति सर्वादिसूत्रे भाष्योक्तेः ।

संज्ञायां श्रव(पा० सू० ४-२-५) ॥ "विभाषा"(पा० सू० ४-२-२३) इति सूत्रे श्रवणेत्युच्चारणात् ज्ञापकादेवैतद्विषयेऽपि* श्रवणशब्दे युक्तवद्भावो न । तेन श्रवणा रात्रिरिति सिद्धम् ।

द्वन्द्वाच्छः(पा० सू० ४-२-६) ॥ अत्राविशेष इति नानुवर्त्ततेऽस्वरितत्वात् । कलेर्ढगिति*वार्त्तिकम् ।

परिवृतो (पा० सू० ४-२-१०) ॥ तेनेति वर्त्तते* । *समन्ताद्वेष्टितः । परिवृत इत्युच्यत इत्यपाठः । *मनोरमाविरोधात्,'पुत्रैः परिवृतः' इति प्रयोगात् "तदेकान्तग्रहणं कर्त्तव्यम्"इति वार्त्तिकाच्च ।

---

व्याख्यावसरे षष्टिदण्डात्मकेति यद्व्याख्यातन्तस्य कथं लाभ इति चेदित्थम् । पूर्वसूत्रमनुवर्त्तते । नक्षत्रशब्दश्च तत्तन्नक्षत्रयुक्तशशिबोधक इति तत्तन्नक्षत्रयुक्तशशियुक्तकाल इत्यर्थे यः प्रत्ययस्तस्य लुप् स्यादविशेष इत्यस्य प्रत्यासत्त्या तत्तन्नक्षत्रेण शशिनो यावत्कालावच्छेदेन सम्बन्धस्तद्व्याप्यस्य विशेषस्य विवक्षा न चेदितिसूत्रार्थात् । एतेनाद्य पुष्य इत्युक्ते ह्यः श्वो वा नेति विशेषो गम्यत एवेत्यविशेष इत्यनुपपन्नमित्यपास्तम् । तद्व्याप्यत्वञ्च तत्परिच्छेदकसूर्यवृत्तिसङ्ख्यान्यूनवृत्तिसङ्ख्यावत्क्रियापरिच्छिन्नत्वमेव ।

*एतद्विषयेऽपीति । संज्ञाविषयेऽपीत्यर्थः ।

*द्वन्द्वाच्छः । अत्र नक्षत्रेणेत्यनुवर्त्तते, तच्च षष्ठ्या विपरिणम्यते । एवञ्च नक्षत्राणां यो द्वन्द्वस्तस्माद् युक्त इत्यर्थे प्रत्ययो भवति यो युक्तः स कालश्चेदिति सूत्रार्थः । *वार्त्तिकमिति । "दृष्टं साम कलेर्ढक् । दृष्टं सामेत्यत्र कलेर्ढग्वक्तव्यः"इति वार्तिकात् । ननु क्रमविषयसाम्नो नित्यत्वात्कलिना दृष्टमित्यनुपपन्नमिति चेन्न । यस्य साम्नो विशिष्टकार्यविषयो विनियोगो ज्ञानातिशयसम्पत्त्या कलिनाऽज्ञायि तत्तेन दृष्टमित्युच्यते ।

परिवृतो रथः । *तेनेति वर्त्तत इति । तृतीयान्तात्परिवृत इत्यर्थेऽण् प्रत्ययो भवति, यः परिवृतः स रथश्चेत् । परिवृत इत्यस्य समन्ताद्युक्त इत्यर्थो न तु मूलोक्त इत्याह—*समन्तादिति । *अपाठ इति । अप्रशस्तः पाठ इत्यर्थः । *मनोरमाविरोधादिति । तत्र तदेकान्तग्रहणं कर्त्तव्यमित्यस्य पुत्रैः पौत्रैः परिवृत इत्यत्र प्रत्ययाप्रवृत्तिः प्रयोजनत्वेनोक्ता ।

द्वैपमिति । प्राणिरजतादिभ्योऽञ्, ततोऽणपवादोऽञ् । स्वरे विशेषः* ।

अपूर्वत्वे इति । अपूर्वं उच्यते येन प्रवृत्तिनिमित्तेन तद्-पूर्ववचनं *तत्रेत्यक्षरार्थ इति भावः । अपूर्वशब्दो भावप्रधानः । *तच्च *प्रकृत्यर्थगतम् । अपूर्वश्च पतिरेव । रूढेः* । योग्यतावशाद् द्वितीयान्तात्प्रथमान्ताद्वा प्रत्ययः । *आद्ये *उपयन्तरि, *द्वितीये तूपयमनविशिष्टे स्वार्थे* इति बोद्धव्यम् । *द्वितीयं "तस्येदम्"(पा० सू० ४-३-१२०) इत्यणाऽपि सिद्धम् । अपूर्वपतिमित्यादिर्बहुव्रीहिः ।

तत्रोद्धृ (पा० सू० ४-२-१४) ॥ तत्रेति "सोऽस्मिन्"(पा० सू० ४-२-२१) इमतः प्रागनुवर्त्तते । तेन=निधाननिरूपिताधिकरणत्वेन । उद्धरणे तु स्थाल्यवधिः* ।

---

न हि पुत्रपौत्रैः समन्ताद्वेष्टन सम्भवति । तदेकान्तेत्यत्र तच्छब्देन परिवृतशब्दार्थघटको विशेष्यभूतोऽर्थः परामृश्यते तस्यैकान्तस्तदेकान्तः । येन परिवृतः स तदेकान्तोऽवयवश्चेद्भवतीति विवक्षितम् । अवयवत्वं च अवयववत्तदभेदेन प्रतीयमानत्वम् । *स्वरे विशेष इति । द्वैपवैयाघ्रेति द्वावप्यजन्तत्वादाद्युदात्तौ ताभ्यामञि द्वैपः वैयाघ्रः एतावाद्युदात्तावेव । सूत्राभावे त्वणन्तत्वादन्तोदात्तत्वं स्यात् ।

*तत्रेति । तस्मिन् प्रवृत्तिनिमित्ते बोधनीय इति शेषः । *तच्च=अपूर्वत्ववचनकरणीभूतम्प्रवृत्तिनिमित्तञ्च । *प्रकृत्यर्थगतम्=कुमारशब्दार्थगतम् । *रूढेरिति । अत एवापूर्वः पतिर्यस्या इतिसमानाधिकरणपदको बहुव्रीहिसमासः । *आद्ये=द्वितीयान्तात्प्रत्यय इतिपक्षे । *उपयन्तरि=एवञ्चापूर्वः पतिर्यस्यास्तादृशी या कुमारी तामुपपन्नः कौमारः पतिः । *द्वितीये=प्रथमान्तात्प्रत्ययस्वीकारे । *उपयमनविशिष्टे स्वार्थे । एतच्च निपातनसामर्थ्याल्लब्धम् । उपयमनविशिष्ट इतिकथनेन विवाहात्प्राङ् न तथा प्रत्ययः । एवञ्चापूर्वपतिसम्बन्धः स्त्रीनिष्ठः प्रकृते कुमारशब्दस्य प्रवृत्तिनिमित्तमित्यर्थादुक्तम्भवति । अपूर्वत्वस्य पतिनिष्ठस्य च प्रतीतिरनेन प्रवृत्तिनिमित्तेन स्वघटकतया कारिता भवति । न च कौमारापूर्ववचन इत्युभयतः स्त्रिया अपूर्वत्व इति वक्तव्यमिति वार्त्तिककृतोक्तम् । एतेन स्त्रीनिष्ठापूर्वत्वे निपातनमिति लभ्यते । एवञ्चापूर्वः पतिर्यस्या इत्यर्थे समासानुपपत्तिरिति वाच्यम् । एतद्वार्त्तिकव्याख्यानावसरेऽपूर्वपतिं कुमारीमुपपन्नः कौमारो भर्त्ता । कुमारी अपूर्वपतिः पतिमुपपन्ना कौमारी भार्येति भाष्यकृता प्रदर्शनेन वार्त्तिकस्य स्त्रिया इत्यनन्तरम्पाणिग्रहणस्येति शेषपूरणेन व्याख्यानस्योचितत्वात् । *द्वितीयमिति । कौमारी भार्येति रूपम् ।

अष्टाकपाल इति । "द्विगोर्लुक्"(पा० सू० ४-१-८८) इत्यणो लुक् ।

संस्कृतमिति । भोजनादिरूपोपयोगफला*क्रिया संस्कारो न तु गुणाधानमेव ।

उषेनि । *वसेः क्विपि सम्प्रसारणे तृतीयान्तमेतत् । दोष इति । भाष्यकारीयमेतत् ।

न त्विति । अत्र *वृत्तिः शरणम् ।

सञ्ज्ञायामितीति । तेन *सावनातिरिक्तमासार्द्धमासयोरेवानेन प्रत्यय इति बोद्धव्यम् ।

---

*स्थाल्यवधिरिति । एतच्चार्थादुपपन्नम्भवति । शरावस्याधिकरणत्वात् । एवञ्च शाराव ओदन इति शब्दात्किञ्चिदपादानकोद्धरणोत्तरकालिकशरावाधिकरणकनिधानकर्म ओदन इत्याकारकः शाब्दबोधः ।

*उपयोगफला क्रियेति । उपयोगः फलं यस्या इत्यर्थः ।

उसो लाक्षणिकत्वमुपपादयति—*वसेः क्विपीति । *वृत्तिः शरणमिति । भाष्ये ऽदर्शनात् ।

*सावनातिरिक्तेति । सावने तथा व्यवहाराभावात् । एतेन प्रकृतसूत्रविहितप्रत्ययान्तस्य समुदायस्य रूढिरपीति लब्धम् । रूढ्यर्थतावच्छेदकञ्च मासनिष्ठं शुक्लप्रतिपदादिदर्शान्ततिथिसमुदायत्वं, कृष्णप्रतिपदादिपौर्णमास्यन्ततिथिसमुदायत्वं वा । एवञ्च पौषादिपदं योगरूढम् । न च सौरेऽपि पौषव्यवहारात्पौषपदङ्केवलरूढमेवास्तु तस्मिन् रूढ्यर्थतावच्छेदकञ्च धनुस्थरविविशिष्टत्वमेवास्त्विति वाच्यम् । तथा सति "साऽस्मिन् पौर्णमासी"(पा० सू० ४-२-२१) इतिसूत्रेण योगप्रदर्शनवैयर्थ्यापत्तेः । न च सौरेऽपि धनुस्थरविविशिष्टपौर्णमासीघटिते एव तथा व्यवहार इति वाच्यम् । यस्मिन्वर्षे पौषशुक्लपक्षीयपौर्णमासीप्राक्तिथावेव मकरसंक्रान्तिस्तस्मिन् सौरे पौषव्यवहाराभावप्रसङ्गात् । एकयोगार्थाभिन्न एव शक्तिः सौरे तु धनुस्थरव्यारब्धे तथा व्यवहारः स्थलपद्मे पद्मव्यवहारवद्गौणः । पुष्यपदञ्च न केवलम्पुष्यनक्षत्रमात्रबोधकमण्प्रत्ययप्रकृतिबोधकम् । पौषी या पौर्णमासी तस्यान्नियमेन पुष्यनक्षत्रयुक्तचन्द्रमसा योगस्य नियमाभावात् किन्तु पुनर्वसुपुष्यान्यतरबोधकम् ।

'अन्त्योपान्त्यौ त्रिभौ ज्ञेयौ फाल्गुनश्च त्रिभो मतः ।
शेषा मासा द्विभा ज्ञेयाः कार्तिकादिव्यवस्थया ॥'

इति वचनात् । न च पौषादिपदं धनुस्थरव्यारब्धे शक्रम्पौषीपौर्णमासीघटिते गौणमित्येवास्त्विति वाच्यम् । "सा वैशाखस्यामावास्या या रोहि-

प्रज्ञादेरिति । *सान्नाय्यानुजावरेत्यादिपाञ्चमिकवार्तिकं नापूर्वमिति भावः ।

साऽस्य देवता (पा० सू० ४-२-२४) ॥ *सम्बन्धित्वेन प्रदेयं मन्त्रश्च प्रत्ययार्थः, प्रकृत्यर्थस्य देवतात्वं *वृत्तिस्वभावबललभ्यम् । तत्र

ण्या सम्पद्यते" इति श्रुत्या चान्द्र एव शक्तिकल्पनात् । फल्गुनीनक्षत्रेण युक्ता फाल्गुनीत्यत्र फल्गुनीपदस्य पूर्वफाल्गुनी उत्तरफाल्गुनी हस्त इत्येतत्त्रितयपरतया यस्मिन्वर्षे हस्तनक्षत्रयुक्तचन्द्रमसा युक्ता फाल्गुनस्य पौर्णमासी तस्मिन्वर्षे चैत्र्याश्चित्रास्वात्यन्यतरयोगसम्भवेन तदुत्तरं वैशाखामावास्यायां रोहिणीयोगस्य सम्भवात् । यदि मेषस्थरविविशिष्टमासत्वं वैशाखत्वन्तदा वैशाखामावास्यायां सूर्यस्य मेषस्थत्वे चन्द्रमसश्च रोहिणीयोगेऽमावास्यैव न स्यात् । अमा सह वसतोऽस्याश्चन्द्रार्काविति व्युत्पत्तेः प्रसिद्धत्वात् । "सूर्याचन्द्रमसोर्यः परः सन्निकर्षः साऽमावास्या" इति गोभिलवचनाच्चामावास्यान्ते चन्द्रस्य सूर्यराशाववस्थाननियमात्सूर्यस्यापि वृषस्थत्वमुपपादनीयम्, अतश्चान्द्रे वैशाखे वैशाखपदस्य शक्तिरिति ।

'मेषादिस्थे सवितरि यो मासः प्रपूर्यते चान्द्रः ।
चैत्राद्यः स विज्ञेयः पूर्त्तिद्वित्वेऽधिमासोऽन्त्यः ॥'

इतिवचनाच्छुक्लप्रतिपदादिचान्द्रामावास्यायां वृषराशौ सूर्यावस्थानस्य तस्याश्च वैशाखस्य समाप्तेश्च सम्भव इति द्रष्टव्यम् । केचित्तु पुष्येण युक्ता पौर्णमासी पौषीत्यत्र पुष्यनक्षत्रस्य योग एव न विवक्षितः । किन्तु पुष्ययोगयोग्यतैव । तद्योगयोग्यत्वञ्च तद्योगयोग्यतावच्छेदकधर्मवत्त्वम् । योग्यतावच्छेदको धर्मश्च धनुस्थरव्यारब्धपक्षीयत्वम् । एवञ्च पौषीपदस्य धनुस्थरव्यारब्धपौर्णमास्यां शक्तौ पौषपदमपि धनुस्थरव्यारब्धपौर्णमासीघटितत्वावच्छिन्ने शक्तमिति पौषपदस्य योगरूढत्वमव्याहतम् । एवमेव सर्वत्र बोध्यमिति वदन्ति ।

*सान्नायानुजावरेत्यादीति । सान्नायानुजावरानुषूकचातुष्प्राकाश्यराक्षोघ्नवैयातवैकृतवारिवस्कृताग्रायणाग्रहायणसान्तनानि इति ।

साऽस्य देवता । प्रथमान्ताद्देवतोपाधिकात् षष्ठ्यर्थेऽणादयः स्युः ।

*सम्बन्धित्वेनेत्यादि । एतेन सम्बन्धित्वमेव प्रत्ययार्थतावच्छेदकम् । प्रत्ययार्थश्च क्वचित्प्रदेयम्, क्वचिन्मन्त्र इत्युक्तम्भवति । *वृत्तिस्वभावबललभ्यमिति । तादृशेऽर्थे एव प्रकृतसूत्रे देवतापदोपादानेन प्रत्ययविधानाद्देवतात्वेन देवताऽपि प्रतीयते । तथा च ऐन्द्रन्दधीत्यादौ प्रकृत्यर्थाभिन्नदेवतासम्बन्धित्वावच्छिन्ने प्रकृतिप्रत्ययसमुदायस्य शक्तिरिति भावः । ऐन्द्रन्दधीत्यादौ हविषि देवतासम्बन्धित्वञ्च देवतोद्देश्यकत्यागकर्मत्वम् । मन्त्रे तद्देवताकत्वरूपसम्बन्धित्वञ्च तदुद्देश्यकत्यागकरणत्वेन श्रुतिबोधितत्वम् । न च मन्त्रं विनापि हविःप्रक्षेपादिरूपक्रियाजननात्कथम्मन्त्रस्य करणत्वमिति वाच्यम् । करणत्वस्य त्यागाङ्गव्यापारक-

सम्बन्धित्वेन बोधेऽपि विशेषरूपेण बोधाय दध्यादिपदप्रयोगोऽपि। "ऐन्द्रं दधि" इत्यादेरिन्द्रदेवतासम्बन्धीति बोधः। *मन्त्रस्तुत्या चेति। अन्नार्थे देवताशब्दस्य रूढिः। दिवेरैश्वर्यकर्मणो* देवता, तेन पितरो देवतेति सिद्धमिति देवात्तलूसूत्रे भाष्यात्। आग्नेय इति। *अग्न्युद्देशेन ब्राह्मणत्यागाभाव इति शङ्का। ढगिति। अग्नेरयं भक्त इत्यर्थ इति भावः। "विश्वेभ्यो देवेभ्यः स्वाहा" इति लिङ्गा*द्व्यस्तस्यैव देवतात्वेऽपि *वैश्वदेव्यामिक्षेत्यादौ तद्धितवृत्तिविषये समासो विश्वदेव इति बहुव्रीहिश्च साधुरिति बोद्ध्यम्।

कशब्दस्येति। *ब्रह्मणि रूढस्यैवात्र ग्रहणम्। एवञ्च काया-नुब्रूहीत्येव प्रैषः। *कस्मा अनुब्रूहीति कल्पसूत्रोक्तमार्षमित्याहुः। परे तु किमोऽप्यत्र* तन्त्रेण निर्देशः। *शब्दपरत्वेऽपि किमः कादेशः 'क्षियः' इत्यादावियङ्वत्। किंशब्दोऽपि प्रजापतिवाची। *अत एव "कस्मै देवाय हविषा विधेम" इति श्रुतौ प्रजापतये इत्यर्थकं कस्मा इति सङ्गच्छते। एवञ्च कस्माइत्यपि प्रैष उक्तश्रुतिमूलकः शाखाभेदेन व्यवस्थितः। *विष्णु-

---

त्वरूपत्वात्। व्यापारश्चोच्चारणरूपः। मूले द्रव्ये उद्देश्यविशेष इति। अत्र द्रव्यपदोत्तरसप्तम्यर्थो विषयिता। उद्देश्यविशेष इत्यस्य स्वत्वप्रकारकेच्छोद्देश्य इत्यर्थः। एवञ्च त्यज्यमानद्रव्यविषयित्वावच्छिन्नस्वत्वप्रकारितावदिच्छोद्देश्यो देवतेत्यर्थः। लाघवादाह-*मन्त्रस्तुत्येति। मन्त्रेण स्तुत्येत्यर्थः। *ऐश्वर्यकर्मण इति। ऐश्वर्यार्थकस्येत्यर्थः। ऐश्वर्यञ्च त्यज्यमानद्रव्यनिरूपितम्। आग्नेयशब्दस्य ब्राह्मणपरत्वमनुपपन्नमित्याशङ्कते-*अग्न्युद्देशेनेति। *व्यस्तस्यैव देवतात्वे ऽपीति। प्रत्येकञ्चतुर्थीश्रवणेन विशेष्यवाचकदेवशब्दप्रकृतिकविभक्तिसजातीयविभक्तिकविश्वशब्दघटितस्य देवतावाचकत्वेऽपीत्यर्थः। *वैश्वदेव्यामिक्षेति। "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्" इत्यत्रेत्यर्थः।

*ब्रह्मणि रूढस्येति।

'को ब्रह्मात्मानिलार्केषु शमने सर्वनाम्नि च।

पावके च मयूरे च सुखशीर्षजलेषु कम्॥'

इतिकोशाद्ब्रह्मण्ययं रूढः। ननु केवलः कशब्दो यदि ब्रह्मणि वर्त्तते तदा कस्मा अनुब्रूहीति प्रैषविरोध इत्यत आह-*कस्मा इति। *अत्र=कस्येदितिसूत्रे। *तन्त्रेण=विभक्त्यन्ततन्त्रेण। *शब्दपरत्वेऽपि=किम्शब्दानुकरणत्वेऽपीत्यर्थः। किंशब्दस्य प्रजापतिवाचकत्वे साधकमाह-*अत एव=किंशब्दस्य प्रजापतिवाचकत्वादेव। अत्रैव साधकान्तरमाह-*विष्णुसहस्रनामसु

सहस्रनामसु च एको नैकः सवः कः किं यत्तत्पदमनुत्तममित्युक्तम् । न च *सञ्ज्ञात्वादस्य सर्वनामत्वाभावे कथं स्मायादिः सर्वनामसञ्ज्ञाप्रतिषेधे आधुनिकसञ्ज्ञाया एव ग्रहणात् । *अत एव "विश्वेषां देवानाम्" इति सिद्धम् । *तदुक्तं भाष्ये- "अथ यत्कायं हविः कथं तत्पैषः कर्त्तव्यः" इति । कल्पसूत्रकारविप्रतिपत्त्या संशय इति कैयटः । श्रुतिविप्रतिपत्त्या संशय इत्यन्ये । "यदि तावत्सूत्रे किमः कादेशः कस्मा अनुब्रूहीति भवितव्यमथ न किमः कायानुब्रूहीति भवितव्यम्" इति । अत्राथ न किम इत्युक्त्या तन्त्रेणोभयनिर्देशे सन्देह एव नेति पूर्वपक्षिणैव सूचितमिति सिद्धान्तिना न किमप्युक्तम् । *तदुत्तरमुभयथाऽपि कस्मा इति *कशब्दस्यापि सर्वात्मकप्रजापतिवाचकत्वेन सर्वनामत्वात् । गणपाठस्तु प्रपञ्चार्थः । सकलकृत्स्नादीनां त्वनभिधानान्न सर्वनामकार्यम् । अपर आह-किमोऽपि कायेत्येवसञ्ज्ञात्वेनासर्वनामत्वादिति भाष्ये उक्तं, *तद्द्वयमप्येकदेश्युक्तिः । सर्वादिप्रकरणस्थ-*भाष्याद्यसंमतत्वादन्त्ये* स्मैभावात्कादेशस्यापि कायेत्यादावभावापत्तिरित्याहुः । परत्वादिति । *उत्कृष्टत्वादित्यर्थः । *तत्त्वञ्चेकारविधानसामर्थ्येन बलवत्त्वं,*श्रायमित्यत्र तु परत्वाद् बाध* इति बोध्यम् । *केचित्तु "णौ चङि" ( पा०सू० ७-४-१ ) इति सूत्रे नाग्लोपिग्रह-

---

चेति । *संज्ञात्वादिति । ब्रह्मसंज्ञात्वादित्यर्थः । *अत एव=आधुनिकसंज्ञाया एव प्रतिषेधादेव । कस्येदितिसूत्रे तन्त्रेणोभयोर्निर्देशे भाष्यं साधकमाह—*तदुक्तमिति । *तदुत्तरमिति । अथ किमः=अथापि न किमः । उभयथापि कस्मा अनुब्रूहीति भवितव्यम् । सर्वस्य हि सर्वनामसंज्ञा क्रियते सर्वश्च प्रजापतिः । प्रजापतिश्च क इति । तदेतद्व्याचष्टे-*कशब्दस्येति । अपर आह-यद्येव किमः । अथापि न किमः । उभयथा कायानुब्रूहीति भवितव्यमिति । अत्र भवितव्यमित्यनेन स्वस्य तद्विषयें सम्मत्यभावः सूचितः । तथा चोभयथेत्युक्तिरेकदेशिनः । *तद्द्वयेति । प्रथमोक्तोभयथेत्यादिद्वयमित्यर्थः । *भाष्याद्यसम्मतत्वात्=पाठेन सर्वनामसंज्ञा क्रियते इत्यादिविरोधात् । अत एव विश्वेषान्देवानामिति प्रयोगाविरोधो नेति बोध्यम् । *अन्त्य इति । त्यदादेरेव किमः कादेशविधानादिति भावः । ननु परत्वादादिवृद्धिरित्यसङ्गतम् । इकारविधानसामर्थ्येनैव लोपो न भविष्यतीत्यत आह-*उत्कृष्टत्वादिति । *तत्त्वञ्च=उत्कृष्टत्वञ्च । *श्रायमिति । श्रीर्देवताऽस्य श्रायम् । *बाधः=आदिवृद्ध्या लोपबाधः । पारिम्बाडुं वा आख्यत् अववारत् अबबाहदित्यादौ निषेधार्थमग्लोपीत्यत्र प्रत्याहारग्रहणम् । तच्च वृद्ध्यपेक्षया लोपस्य बलवत्त्व एव सङ्गच्छत इत्याशयेनाह-*के-

णाद् वृद्धेर्लोपो बलीयानित्युक्तं भाष्ये । तच्च सामान्यापेक्षमित्यत्रापि वृद्धेर्लोपो बलीयान् । *अत एव"स्त्रीपुंसाभ्याम्" (पा० सू० ४-१-९) इति सूत्रे 'अञ्प्रत्ययो विधेयो, नुगागमश्च कार्यो, नञ्स्नञ्ग्रहणञ्च व्यर्थम्' इत्याशङ्क्य टिलोपः स्यात् । न च नुग्विधानसामर्थ्यं स्त्रैणे यं विधिं प्रतीति न्यायेन तद्विधानसामर्थ्यात्तदभावेऽपि पौंस्ने दोष इत्युक्तम् । त्वद्रीत्या स्त्रैणे नुक्येव टिलोपप्राप्तिः । अन्यथा वृद्ध्या बाधा *तदप्राप्तिरिति भाष्यासङ्गतिः स्पष्टैव । मम तु न सा* । वृद्धेर्लोपस्य बलवत्त्वात् । *आयमिति तु यद्यार्षं प्रमाणसिद्धं तदा वर्णव्यत्ययेन साध्यम् । लोके त्वसाध्वेव । *अत एव किमः कायमिति भाष्योक्तं सङ्गच्छते । *अन्यथा *तत्पक्षे मस्येत्त्वे* परत्वाद्वार्णादाङ्गस्य बलवत्त्वाच्च *लोपसवर्णदीर्घौ बाधित्वा त्वद्रीत्या वृद्धौ पूर्वस्य यणादेशे *तदसिद्धिः स्पष्टैव । *मम तु वृद्धिं बाधित्वा यस्येति लोपे पूर्वेकारस्य वृद्धौ तत्सिद्धिः । कादेशस्तत्र दुर्लभः । विभक्तिपरत्वाभावात् । *एतेन"द्वारादीनाञ्च"(पा० सू-७-३-४)इति सूत्रे परस्य वृद्धिर्नेत्यनुवृत्तौ*शौनं मांसमित्यत्र टिलोपे ऐजागमो* न प्राप्नोति । आनुपूर्व्यात्सिद्धमेतत् । नात्र कृते ऐजागमे टिलोपः प्राप्नोति । प्रकृत्यैकाजिति प्रकृतिभावेन भवितव्यमिति भाष्यमुपादाय यत् कैयटेनोक्तम् 'इष्ठेमेयःसु प्रकृतिभावः । तथा च *ज्ञो देवताऽस्य ज्ञः स्थालीपाक इत्यत्र न भवति तस्मात्परिहारदिगेषा*परत्वाट्टिलोपं बाधित्वा वृद्धिः प्राप्ता प्रतिषिध्यते

---

चिन्त्यमिति । *अत एव=सामान्यापेक्षनियमस्वीकारादेव । *तदप्राप्तिः=वृद्ध्या बाधाल्लोपाप्राप्तिः । *न सा=न पूर्वमत्र वृद्धेः प्राप्तिः । ननु लोपस्य बलवत्त्वे आयमितिरूपासिद्धिरत आह-*आयमितीति । *अत एव=लोपस्य बलवत्त्वादेव । *अन्यथा=लोपस्य बलवत्त्वाभावे । *तत्पक्षे=वृद्धेर्बलवत्त्वपक्षे । *मस्येत्त्वे="कस्येत्"(पा० सू० ४-२-२५)इति सूत्रेणालोन्त्यपरिभाषया मस्येत्त्वे । *लोपसवर्णदीर्घौ बाधित्वा=परत्वाल्लोपं "वार्णादाङ्गं बलीयः"इति सवर्णदीर्घम्बाधित्वेत्यर्थः । *तदसिद्धिः=कायमितिरूपासिद्धिः । *मम तु=वृद्धेर्लोपस्य बलवत्त्ववादिनो मम त्वित्यर्थः । *एतेन=सामान्यापेक्षज्ञापकेन वृद्धेर्लोपस्य बलवत्त्वस्वीकारेण । *शौनं मांसम् । शुनो विकारः अवयवो वा । "प्राणिरजतादिभ्योऽञ्"(पा० सू० ४-३-१५४)इत्यञ् । *न प्राप्नोतीति । वृद्धियोग्यद्व्याभावेन निषेधाप्राप्त्या तत्सन्नियोगशिष्ट ऐजागमो न प्राप्नोतीत्यर्थः । *ज्ञ इति । जानातीति ज्ञः । "इगुपधज्ञाप्रीकिरः"(पा०सू० ३-१-१३५)इति कः । *परिहारदिगेषेति । परिहारप्रदर्शनमार्गसूचनन्न त्वत्र निर्भर इति भावः । अत्र टिलोपं बाधित्वा

इति भवत्यैजागम इत्यत्र परिहारः' इति,तदपास्तम्* । भाष्यकारेण तु दुष्टपरिहारोक्त्याऽनुवृत्तिपक्षो दुष्ट इत्येव बोध्यते । तेन "स्त्रीपुंसाभ्याम्" इति सूत्रस्थं स्त्रैणे *दोषाभावपरं भाष्यं, "कस्येत्"(पा० सू० ४-२-९) इति सूत्रे लोपस्येकारविधानसामर्थ्येन वारणपरं भाष्यञ्च चिन्त्यमेवेति यत्कैयटेनोक्तं*तदेव चिन्त्यमिति दिक् ।

सन्नियोगेनेति । *'अपोनप्त्रे स्वाहा' इत्यादि तु छान्दसम् ।

रीङ् (पा० सू० ७-४-२७) ॥ *अङ्गवृत्तपरिभाषया "अकृत्सार्व" (पा० सू० ७-४-२५) इति "च्वौ च" (पा० सू० ७-४-२६) इति च दीर्घप्राप्तेर्दीर्घोच्चारणम् । वस्तुतस्तत्परिभाषायाः फलाभावात्स्पष्टार्थमेव तत् । ईगागमेन यणा सिद्धौ रीविधानं प्रक्रियालाघवार्थम् । *अनिर्दिश्यमान*सर्वादेशत्व*भ्रमवारणार्थं च ङित्त्वमिति* संप्रदायः ।

---

वृद्धिः प्राप्तेत्युपादानाद् वृद्धेर्बलवत्त्वन्तेन नाश्रितम । *तदपास्तम् । पूर्वोक्तज्ञापकेन वृद्ध्यपेक्षया लोपस्यैव बलवत्त्वात् । *दोषाभावपरम्भाष्यमिति । अत्र नुगागमात् पूर्वमपि यस्येति लोपस्य वृद्धिबाधकस्य प्राप्तेरिति यं विधिम्प्रतीतिन्यायसञ्चारो नास्तीति भावः । एतस्यैकदेशयुक्तित्वञ्च वृद्धेर्लोपबाधकत्वाभिप्रायेण तेनोक्तम् । *तदेव चिन्त्यमिति । पूर्वोक्तरीत्या लोपस्य बलवत्त्वादिति भावः । अत्र कैयटानुयायिनः-श्रायमिति पूर्वोक्तरीत्या वृद्धेर्लोपबाधकत्वेनोचितमेव । न च "स्त्रीपुंसाभ्याम्"(पा० सू० ४-२-८) इतिसूत्रस्थभाष्यविरोधः । तस्य दोषान्तरोपलक्षणत्वात् । किमो मस्येस्त्वेऽन्त्यस्य वृद्धिम्बाधित्वा आदिवृद्ध्या भवितव्यम् । तस्या अन्त्योपधावृद्धिबाधकत्वात् । अन्यथा गार्ग्य इत्यत्रापि यस्येतिलोपम्बाधित्वाऽजन्तलक्षणवृद्ध्यापत्तेः । किमः कादेशो निपात्यत इतिकैयटोक्तत्वाच्च । "वार्णादाङ्गं बलीयः" इतिवचनन्तु समाननिमित्तकत्वाभावेन व्याश्रयत्वान्न प्रवर्त्तते इति ।

ननु यदि प्रत्ययसन्नियोगेनोक्तरूपनिपातनन्तदाऽपोनप्त्रे स्वाहेत्यत्र प्रत्ययसन्नियोगाभावादुक्तरूपासिद्धिरत आह-*अपोनप्त्र इति ।

ननु पित्रीयतीत्यादौ रिङादेशविधानेऽपि "अकृत्सार्वधातुकयोः"इति दीर्घे सिद्धे रीङि दीर्घोच्चारणं व्यर्थमत आह-*अङ्गवृत्तेति । *अनिर्दिश्यमानेति । अङ्गेत्यर्थः । *सर्वादेशत्वेति । अनेकाल्त्वात् । *भ्रमेति । एतेन ऋदन्तस्याङ्गस्येत्यर्थेऽपि निर्दिश्यमानपरिभाषाऽनेकालपरिभाषयोरेकवाक्यतया निर्दिश्यमानस्य सर्वस्येत्यर्थात्प्रकृते च ऋत इत्यनेन ऋवर्णस्यैव निर्दिश्यमानतया तस्यैवादेशो सिद्धे ङित्त्वं स्पष्टार्थमेवेति सूचितम् । *सम्प्रदाय इति । अत्रारुचिः पूर्वोक्तैव ।

श्याचा (पा० सू० ४-२-३२)॥ अण्-पत्युत्तरपदण्ययोरपवादः। मरुत्वानिन्द्र अग्नीषोमे "ईदग्नेः सोम"(पा०सू० ६-३-२७)इतीत्वम्। वास्तोष्पतौ वाचस्पतिदिवस्पतिवत् "तत्पुरुषे कृति"(पा० सू० ६-३-१)इत्यत्र बहुलग्रहणादलुक्। कस्कादित्वात्षत्वम्।

*महाराजो वैश्रवणः। प्रोष्ठपदात्पूर्वेण नक्षत्राऽणि प्राप्ते वचनम्।

सौमेन्द्र इति। नन्वन्तरङ्गत्वादाद्गुणे उभयत आश्रयणे ऽन्तादिवत्त्वाभावेन पूर्वपदात्परेन्द्रशब्दाभावेन निषेधो व्यर्थः। किं च वृद्धिरप्यत्र न प्राप्नोति पूर्वान्तत्वेनैकादेशविशिष्टे पूर्वपदत्वेन इन्द्रशब्दस्यैकदेशविकृतन्यायेनोत्तरपदत्वेऽपि तस्यानच्कत्वात्। एकस्यैकादेशेन परस्य नित्येन यस्येतिलोपेनापहारात्। न च परादिवद्भावेनैकादेशविशिष्टस्योत्तरपदत्वमेवास्त्विति तत्सम्भव इति वाच्यम्। उत्तरपदाद्यज्निमित्तकत्वाद्वृद्धेरप्राप्तेस्ताद्रूप्यानतिदेशात्*। *एतेन सामर्थ्यादन्त्यवृद्धेरेव निषेध इत्यपास्तम्। *मरुदादिभिरिन्द्रस्य द्वन्द्वे इन्द्रस्यैव पूर्वनिपात इति चेन्न। *अनेनैव निषेधेन पूर्वोत्तरपदनिमित्तकार्यात्पूर्वमेकादेशाभावज्ञापनादित्यन्तादिवत्सूत्रे विप्रतिषेधसूत्रे च भाष्ये स्पष्टम्।

पूर्णमासादिति। यद्यपि पूर्णो मासो येनेति पूर्णमासश्चन्द्रस्तस्येयमिति पौर्णमासी सिद्धा, तथापी*दृशे एवार्थे साधुत्वमेवं व्युत्पत्तिज्ञानपूर्वकप्रयोगे एव चाभ्युदय इति भावः।

---

"महाराजप्रोष्ठपदात्"(पा० सू० ४-२-३५) इत्यत्र निर्दिष्टम्महाराजेतिपदं व्याचष्टे—*महाराज इति। *ताद्रूप्यानतिदेशादिति। ताद्रूप्यस्य वर्णमात्रवृत्तिधर्मस्यातिदेशाभावात्। उत्तरपदादित्वविशिष्टाच्त्वस्य वर्णमात्रवृत्तित्वादिति भावः। *एतेन=पूर्वोक्तरीत्या इन्द्रशब्दस्यानच्कत्वेन। ननु मरुच्छब्देन्द्रशब्दयोः समस्त एव सूत्रसार्थक्यम्भविष्यतीत्यत आह-*मरुदादिभिरिति। न च सौमेन्द्र इत्यत्राप्यजाद्यदन्तत्वादिन्द्रशब्दस्यैव पूर्वनिपातः स्यादिति वाच्यम्। अत्र सोमशब्दस्य महेश्वरवाचकतयाऽभ्यर्हितत्वेति पूर्वनिपातसम्भवात्। *अनेनैव="नेन्द्रस्य" (पा० सू० ७-३-२२) इत्यनेनैव। "अन्तादिवच्च" (पा० सू० ६-१-८५) इति सूत्रे एवमुक्त्वा गुडोदकमित्यत्र "उदके केवले" (पा० सू० ६-२-९६) इतिपूर्वपदान्तोदात्तत्वस्य पूर्वम्प्रवृत्तौ तत एकादेश इति हि फलं स्पष्टम्।

*ईदृशे एवार्थे इति। पूर्णो मासोऽस्यामित्यर्थे एवास्य पौर्णमासीशब्दस्य साधुत्वमित्यर्थः।

पितृव्येति । नित्प्रत्ययस्तिद्वेति बहुश्रुतैर्विचार्यम् । मातुरिति । भ्रातरीति वर्त्तते । मातरि षिच्चेति । गौरादिषु मातामहादिशब्दपाठो ऽसांप्रदायिक इति भावः । सकारपाठेति । प्रत्ययेष्विति शेषः । उदाहरणेषु भाष्ये षत्वाकरणात्सकार*प्रयोजनान्तरानभिधानमिति भावः । *दुग्धे इति सप्तमी स्थानिनोऽधिकरणत्वविवक्षयेति दुग्धस्य स्थाने एते आदेशा इति तु चिन्त्यम् । प्रत्यया भवन्तीति भाष्ये वाक्यशेषात् । तिलान्निष्फलादिति । निष्फलबोधकात्तिलशब्दादित्यर्थः । प्रत्ययस्तु स्वार्थे ।

*यौवनमिति । "अन्"(पा०सू०६–४–१६७)इति प्रकृतिभावः । शत्रन्तादिति । प्रत्ययस्वरेण मध्योदात्तत्वाद*नुदात्तादिरयम् ।

ऊर्णायुरित्यादिव्यावृत्तये आह–अनुनासिकयोरिति । ल्युप्रभृतिषु*सोऽनुनासिको नान्यत्र । युवोरितीतरेतरयोगद्वन्द्वः । उत्तरपदे सौत्रत्वाद्वलोपः ल्युण्वुलादिषु उकारोऽननुनासिक एवादर्शनैव तदपहारसिद्धेरिति प्रकृतसूत्रे भाष्ये स्पष्टम् ।

"अह्नः खः"इति वार्त्तिकम् । *क्रतौ वर्त्तमानादहन्शब्दात्समूहे ख इत्यर्थः । एवञ्च सुत्यासमूहे रूढोऽहीनशब्दस्तत्फलितमाह–अह र्गणेत्यादि ।

यञ्छाविति । यथासंख्यमत्र । ठगणाविति । केशादचित्तत्वेन ठक्, अश्वादणित्यर्थः ।

वात्येति । दिग्भेदेन* बुद्धिकल्पितवातभेदाश्रयः सामूहिकः ।

---

मातरि षिच्चेति वार्त्तिकम् । *प्रयोजनान्तरेति । यथाऽविदूसशब्दादाख्यानार्थे णिचि टिलोपे क्विपि पदान्ते विसर्गसिद्धिः । अन्यथा षकारस्य स्थाने रुत्वन्न स्यादिति यत्केन चिदुक्तम् तन्निरस्तम् । यत्तु सोढादीनामादेशत्वान्न षत्वप्राप्तिरिति तन्नेत्याह–*दुग्धे इतीत्यादि । *यौवनमितीति । युवतीनां समूह इत्यर्थे युवतिशब्दादणि "भस्याढे" इति पुंवद्भावे टिलोपे प्राप्ते प्रकृतिभावः । *अनुदात्तादिरयमिति । तथा च यौवतमित्यत्र "अनुदात्तादेरञ्" (पा० सू० ४–२–४४) इत्यञ् ।

*सोऽनुनासिक इति । यणनुनासिक इत्यर्थः ।

वार्त्तिकस्थाहन्शब्दस्य कालवाचकत्वभ्रमवारणायाह–*क्रताविति ।

ननु महावाते वात्येतिप्रयोग दृश्यते स च समूहासम्भवान्नोपपद्यते इत्यत आह–*दिग्भेदेनेति ।

इनित्र(पा० सू०४-२-५१) ॥ योगविभागो *यथासंख्यार्थः ।

विषयो(पा०सू०४-२-५२)देशग्रहणाद्विषयशब्दोऽत्र ग्रामसमुदायवाचीति वृत्तिः । *विषयः स्वत्ववान्,निवासस्तु न नियमेन तथेति तयोर्भेदः । देशोऽत्र प्रकृतिप्रत्ययसमुदायशक्यतया प्रत्ययोपाधिः* । *क्वचिद्देशप्रयोगस्तु नानार्थत्वात्सन्देहवारणाय । देवदत्तस्य विषय इति । तेनाऽनन्तपरिशीलित इत्यर्थः ।

भौरिक्याद्यै( पा० सू० ४-२-५४ ) ॥ यथासंख्यमत्र ॥

सङ्ग्रामे प्र( पा०सू०४-२-५६ ) ॥ सोऽस्येति । *एवञ्च प्रथमैवात्र समर्थविभक्तिः । प्रयोजनयोद्धृभ्य इति पञ्चमीनिर्देशात्तद्वाचकस्यैव प्रकृतित्वं, सङ्ग्रामे इति सप्तमी षष्ठ्यर्थ इति, तदस्येति प्रत्ययार्थविशेषणम् । सङ्ग्रामे इति किम् ? । सन्तोषः प्रयोजनमस्य भोजनस्य । प्रयोजनेत्यादि किम् ? । सुभद्रा प्रेक्षिकाऽस्य सङ्ग्रामस्य ।

तदस्याम् ( पा०सू०४-२-५७ ) ॥ प्रथमान्तात्प्रहरणोपाधिकात् क्रीडारूपसप्तम्यन्तार्थे ण इत्यर्थः ।

घञः ( पा०सू० ४-२-५८ ) ॥ *सेति स्त्रीलिङ्गं क्रियापेक्षम् । गतिकारकेति । *तत्फलं श्यैनंपातादावादिवृद्धिः ।

---

*यथासंख्यार्थ इति । योगविभागाभावे यप्रत्ययस्य समुच्चयार्थश्चकारस्याप्युपादेयतया प्रत्ययानाञ्चतुर्णाञ्चयथासंख्यन्न स्यात् ।

"तस्य निवासः" ( पा० सू० ४-२-६९ ) इति सूत्रेण "विषयो देशे" ( पा०. सू० ४-२-५२ )इत्यस्य गतार्थतान्निराचष्टे-*विषयः स्वत्ववानिति । *प्रत्ययोपाधिरिति प्रत्ययार्थविशेषणम् । नन्वयं विषयार्थकप्रत्ययान्त एव देशाभिधायको भविष्यतीति देशपदमनर्थकमत आह-*क्वचिद्देशेति ।

*एवञ्च = सोऽस्येत्यनुवृत्तौ च । प्रथमान्तेभ्यः प्रयोजनयोद्धृवाचकेभ्योऽस्य सङ्ग्रामस्येत्यर्थेऽण्प्रत्ययो भवतीत्यर्थः ।

ननु घञन्तस्य पुंल्लिङ्गत्वात्सा इति स्त्रीलिङ्गनिर्देशोऽनुपपन्न इत्यत आह-*सेति स्त्रीलिङ्गमिति । *तत्फलमिति । कृद्ग्रहणपरिभाषाप्रवृत्तिफलमित्यर्थः । ननु गतिकारकसमभिव्याहृतकृदन्तं यत्र तत्र तद्विशिष्टस्यैव कृद्ग्रहणेन ग्रहणमितिपरिभाषार्थाद् घञन्ताद्विधीयमानः प्रत्ययोऽत्र श्येनपातशब्दाद्भविष्यतीति पाते श्ये इत्यनुपपन्नमत आह मूले-अप्रत्ययपरे पातशब्द इति । एवञ्च पातशब्दस्य अप्रत्ययपरत्वमात्रमपेक्षितन्न तु अप्रत्ययविधानावधित्वमिति

अप्रत्ययेति । अस्य पातशब्देन व्यवधानं तु येननाव्यवधानन्यायेन सह्यते । *इतिः सर्वत्र लौकिकार्थविवक्षानुसरणाय । तेन यथाभिधानमेव साधुत्वम् ।

तदधी ( पा०सू०४–२–५९ ) ॥ शब्दपाठोऽध्ययनं, तदर्थज्ञानं वेदनम् । द्विस्तच्छब्दोपादानं स्पष्टार्थम् । *"कर्तृकर्मणोः" (पा०सू० २–३–६५ ) इति सूत्रस्थभाष्यपर्यालोचनया ताद्धितार्थस्य क्रियात्वाभावेऽप्यलौकिके द्वितीयान्तात्प्रत्ययविधानसामर्थ्यादेव द्वितीया । एवं "तत्र भवः" ( पा० सू० ४–३–५३ ) इत्यादिविषये सप्तम्याद्यपि । *अधीते इत्यादीनां लौकिकप्रयोगे क्रियाप्रधानत्वेऽप्यत्र कारकप्रधानतेत्यन्यत्र प्रपञ्चितम् ॥

---

भावः । घञन्तसामान्यात्प्रत्ययमाशङ्क्याह–*इतिरिति ।

*कर्तृकर्मणोरितिसूत्रस्थभाष्येति । तत्र हि "कर्तृकर्मणोः षष्ठीविधाने कृद्ग्रहणमनर्थकम् ! किङ्कारणम् । लप्रतिषेधात् । प्रतिषिध्यतेऽत्र षष्ठी लप्रयोगे नेति तस्य कर्मकर्त्रर्थन्तर्हि कृद्ग्रहणं कर्त्तव्यम् । कृतो ये कर्त्तृकर्मणी तत्र यथा स्यात् । अन्यस्य ये कर्तृकर्मणी तत्र मा भूत् । नैतदस्ति प्रयोजनम् । धातोर्हि द्वये प्रत्यया विधीयन्ते तिङः कृतश्च । तत्र कृत्प्रयोगे इष्यते, तिङ्प्रयोगे प्रतिषिध्यते" इत्युक्तम् । अत्र भाष्ये नैतदस्तीत्यादिना यथोक्तप्रयोजनन्न कृद्ग्रहणस्येति दर्शयति । प्रकृतसूत्रे कर्तृकर्मपदोपादानेन स्ववाच्यतावच्छेदककर्तृत्वकर्मत्वे उपस्थिते । तयोश्च ससम्बन्धिकत्वान्निरूपकाकाङ्क्षत्वात्ताभ्यां क्रिया आक्षिप्यते । सा चार्थरूपा न प्रयुज्यत इति तद्वाचकशब्दाक्षेपे सति क्रियावाचकशब्दप्रयोगे सति ये तद्वाच्यक्रियानिरूपितकर्तृत्वकर्मत्वे तद्विशिष्टवाचकात् षष्ठीति सूत्रार्थः कृद्ग्रहणाभावेऽपि भविष्यतीति दर्शयति–धातोर्हि द्वय इत्यादिना । एवञ्च क्रियावाचकत्वमुक्तद्वयप्रत्ययान्तयोरिति तयोरेवाक्षेपो भविष्यतीति भावः । न च क्रियावाचकाक्षेपेऽपि धातोरेवाक्षेप इत्यत्र किम्प्रमाणम् ? । "तेन दीव्यति खनति जयति" ( पा० सू० ४–४–२ ) इतिसूत्रविहिततद्धितानामपि क्रियोपसर्जनद्रव्यवाचकत्वेन क्रियावाचकत्वादिति वाच्यम् । एतद्भाष्यप्रामाण्येन कारकान्वययोग्यक्रिया धातुवाच्यैव न तद्धितादिवाच्येति निर्णयेनादोषात् । अत एव देवदत्तेन शत्योऽश्वः । आश्रिको भूमिमित्यादयो न प्रयोगाः । अत एव हिरुगादियोगे न द्वितीया इति । न च विग्रहघटकादधीत इत्यादिशब्दादेककर्तृकमध्ययनमिति बोधः । व्याकरणशब्दात्तु व्याकरणकर्मकाध्ययनकर्त्तेति बोध इति वृत्तिविग्रहयोः समानार्थत्वनियमानुपपत्तिरिति वाच्यम् । आख्यातन्ताद्धितकृतोरितिसमानार्थत्वाव्याघातात्, तदेतदाह–*अधीत इत्यादि ।

तत्प्रतिपादकेति । *उभयोः सहाधिकारेणोत्तरसूत्राणामर्थद्वयेऽपि प्रवृत्तिरिति भावः । अध्येतरीति । तत्रापीत्यर्थः । ग्रन्थविशेषः= औक्थिकयाख्यप्रातिशाख्यम् । लक्षणया उक्थत्वारोपेण औक्थिकयशब्दात्तु *नानयोः प्रत्ययोऽनभिधानात् । *नेष्येत इति । ठकोऽनभिधानमात्रे भाष्यस्वरसः । वृत्तिम्=संहिताम् । इत्यादीति । अनुसूग्रन्थविशेषः आनुसुकः "इसुसू" ( पा० सू० ७-३-५१ ) इति के "केऽणः" (पा०सू० ७-४-१३ ) इति ह्रस्वः । सूत्रान्तादित्यादि । *एतच्च कैयटे स्पष्टम् । साङ्ग्रहसूत्रिके समाहारद्वन्द्व इति कश्चित् । *द्विगौ तु तद्धितलुक् स्यादत आह-त्रिविधेति । पदेति । पदशब्दोत्तरपदकादित्यर्थः ।

---

*उभयोः=अधीतेवेदेत्यनयोः । प्रकृतसूत्रभाष्ये "उक्थादीत्युच्यते कान्युक्थानि ? । सामानि । यद्येवं सामगमात्रे औक्थिक इति प्राप्नोति । नैष दोषः । तादर्थ्यात्ताच्छब्द्यम्भविष्यति" इति । "उक्थार्थमुक्थम् । इह उक्थान्यधीते औक्थिकः । एतेन उक्थशब्दो येषु सामसु रूढस्तान्यधीयाने प्रत्ययो नेष्यते इत्यर्थादुक्तम्भवति । यदधीयाने प्रत्यय इष्यते तत्रोक्थशब्दो न रूढः" इति कैयटः । यदधीयाने=प्रातिशाख्यमधीयाने । असामगेऽपीति शेषः । प्रश्नाशयोऽयम् । ततोऽग्रे तादर्थ्यादित्यनेन लक्षणया उक्थलक्षणम्प्रातिशाख्यशास्त्रम् । मुख्यार्थाभिधायिनस्तूक्थशब्दात्प्रत्ययो नेष्यते । तत्र वाक्यमेव भवति । उक्थान्यधीते वेद वेति । उक्थान्यधीते इत्यत्रोक्थशब्दः प्रातिशाख्यपर एव । तस्मात्प्रत्यये कृते औक्थिकशब्दः प्रातिशाख्यमधीयाने वर्त्तते । तदग्रे भाष्ये-"य इदानीमौक्थिक्यमधीते कथन्तत्र भवितव्यम् । कथम् ? । तस्येदम्प्रत्ययाल्लुक् । तस्येदम्प्रत्ययाल्लुग्वक्तव्यः । तस्येदम्प्रत्ययस्य च । स तर्हि वक्तव्यो न वक्तव्यः । इहास्माभिस्त्रैशब्द्यं साध्यम् । औक्थिक्यमधीते । उक्थान्यधीते औक्थिक इति । तत्र द्वयोः समानार्थयोरेकेन विग्रहः अपरस्मादुत्पत्तिर्भविष्यति अविरविकन्यायेन" इति । औक्थिकशब्दात्प्रातिशाख्याध्येतृवाचकादौक्थिकानामाम्नाय इत्यर्थे "छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः" ( पा० सू० ४-३-१२९ ) इति ञ्यः । स चाम्नायः प्रातिशाख्यमेव । तस्येदम्प्रत्ययादिति वार्त्तिके षष्ठ्यर्थे पञ्चमी । अध्येतृवेदित्रोरुत्पन्नस्याणो लुगाम्नाये विहितस्य ञ्यस्य च लुगित्यर्थः । *नानयोः=अध्येतृवेदित्रोः । *अनभिधानादिति । अत्र मानन्तु भाष्यकारोक्तिरेव । *एतच्च कैयट इति । एवं हि भाष्ये उक्तम्-"विद्यालक्षणकल्पसूत्रान्तादकल्पादेरिकक् स्मृतः" इति । इकक्=ठक् । अत्र कैयटः-अकल्पादेरित्येतदानन्तर्यात्सूत्रान्तस्यैव कल्पादेर्निषेधङ्करोति । अत एव भाष्ये 'अकल्पादेरिति किमर्थम् ? । काल्पसूत्रः' इति प्रत्युदाहृतम् । *द्विगा-

शतषष्टेरिति। *ताभ्यां परो यः पथिन्शब्दस्तदन्तादित्यर्थः।

प्रोक्तादिति। *स्वरितत्वबलात्तदधिकारस्थप्रत्ययपरम्। प्रौक्तादिति वक्तव्येऽयं सौत्रो निर्देश इति भाष्ये स्पष्टम्॥ "इनण्यनपत्ये" (पा० सू० ६-४-१६४) इत्युक्ते*रापत्यार्थं वचनं "गाथिविदथि" (पा० सू० ६-४-१६५) इति।

ण्यक्षत्रिय॥ (पा० सू० २-४-५८) ण्यादयः सर्वे गोत्रप्रत्यया एव गृह्यन्ते गोत्राद्युनीत्युक्तेः। क्षत्रियगोत्रेति। क्षत्रियवाचिनो गोत्रप्रत्ययान्तादित्यर्थः। आर्षेति। *ऋषिप्रकृतिकप्रत्ययान्तादित्यर्थः। कौरव्य इति ब्राह्मणगोत्रमेतत्। वामरथ्यस्येति। वामरथः *कुर्वादिस्ततो* "वामरथ्यस्य कण्वादिवत्स्वरवर्जम्" इत्युक्तेर्जातस्य "कण्वादिभ्यो गोत्रे" (पा० सू० ४-२-१११) इत्यणो *न लुगिति भावः। ऋष्यण एवेति। ऋष्यण्प्रकृतिकाणिञोरित्यर्थः। पणिन्शब्दात्तु न ऋष्यण्, किन्त्वौत्सर्गिक एव। यत्र ह्यौत्सर्गिकस्येञा बाधः प्राप्तस्तत्रैव तद्बाधनार्थं ऋष्यण्प्रवृत्तेरिति भावः। इदं प्राचामनुरोधेन। परे तु "वाऽन्यस्मिन्" (पा० सू० ४-१-१६५) इति सूत्रेऽत्रिशब्दाद् "इतश्चानिञः" (पा० सू० ४-१-१२२) इति ढकि तत इञि "ण्यक्षत्रिय" (पा० सू० २-४-५८) इति लुको *भाष्ये उक्तत्वेनेदं चिन्त्यम्। तस्मादत्र प्रतिपदोक्तपरिभाषाऽप्रवृत्तिरेव। पणिन्शब्दो यौगिको न तु रूढः लुग्विधौ ऋषिवाचकस्य रूढस्यैव ग्रहणमित्याहुः। वृद्धाच्छ इति। तत्र विवक्षिते इञो "यूनि लुक्" (पा० सू० ४-१-९०) इति लुक्। इञश्चेति। प्रत्ययलक्षणेनेञन्तत्वादिति भावः। गोत्रे इति। यथा तत्र पारिभाषिकगोत्रस्यैव

---

विति। तिस्रो विद्या अधीते इत्यर्थे द्विगावित्यर्थः। *ताभ्याम् = शतषष्टिशब्दाभ्याम्।

प्रोक्तशब्दस्यार्थपरत्वन्न्याय्यमिति प्रोक्तार्थकप्रत्ययपरत्वोपपत्तये आह-*स्वरितत्वबलादिति। *आपत्यार्थं वचनमिति। अपत्ये भवो यः प्रत्ययस्तदर्थमित्यर्थः।

सौत्रमार्षपदं व्याचष्टे-*ऋषिप्रकृतिकेति। अत एव मूले उक्तम्-आर्षग्रहणेनेति। *कुर्वादिरिति। अतोऽत्र ण्यः। *ततः = ण्यान्तात्। वृद्धत्वाच्छे प्राप्तेऽण्बाधनार्थमाह-*वामरथ्यस्येत्यादि। *न लुगिति। ऋषिशब्दोच्चारणेन विहितस्याणोऽभावात्। *भाष्ये उक्तत्वेनेति। ऋष्यभिधायकत्वेनैव लुकः प्राप्तेरिति भावः।

ग्रहणं तथा वक्ष्यते । स्वरे इति । असत्यणो लुकि प्रत्ययस्वरेणान्तोदात्तत्वं स्त्रियां ङीप् च स्यादिति भावः ।

छन्दोब्राह्मणानि च ( पा० सू० ४-२-६६ ) छन्दःपदेन गायत्र्यादिछन्दोयुतमन्त्राणामेव ग्रहणमिति ब्राह्मणग्रहणम् । "जुष्टार्पिते च छन्दसि" ( पा० सू० ६-१-२०९ ) इत्यत्र छन्दःपदस्य ब्राह्मणे लक्षणा । "नित्यं मन्त्रे" ( पा० सू० ६-१-२१० ) इत्युत्तरसूत्रे मन्त्रग्रहणात्* । *चेन "पुराणप्रोक्तेषु"(पा० सू० ४-३-१०५) इति सूत्रविषयभिन्ने कल्पे सूत्रे च तद्विषयतेष्यते इति भाष्ये स्पष्टम् । अनन्यभात्रे विषयशब्दस्तेन प्रोक्तप्रत्ययान्तेभ्यः सुबुत्पत्तेः पूर्वमेवाध्येतृप्रत्ययः । अतः *काश्यपिन इत्यादौ "उत्तरपदत्वे च"इति *वार्त्तिकारम्भेऽप्यवान्तरसुपा पदत्वमाश्रित्य नलोपो न । *प्रोक्तादित्यनुवृत्तं प्रथमाबहुवचनेन विपरिणम्यते । तद्विषयाणीति तच्छब्दोऽध्येतृवेदित्रर्थकप्रत्ययपरामर्शी । अर्थमात्रपरामर्शे *कठं महदितिवत्कठमधीते इत्यस्यासाधुतानापत्तिरिति दिक् ॥

तदस्मिन् ॥ ( पा० सू० ४-२-६७ ) मत्वर्थापवादः । इति-

---

*मन्त्रग्रहणादिति । जुष्टेतिसूत्रपठितस्य छन्दःशब्दस्य शक्यार्थपरत्वे तदनुवृत्त्यैव सिद्धे मन्त्रग्रहणं व्यर्थमेव स्यादिति भावः । *चेनेति । अनुक्तसमुच्चयार्थकेन चेनेत्यर्थः । *काश्यपिन इति । कश्यपशब्दात्प्रोक्तार्थे "काश्यपकौशिक" ( पा० सू०-४-३-१०३ ) इति णिनिश्छन्दसि, ततोऽध्येतरि जातस्याणो लुक् । *वार्त्तिकारम्भेऽपीति । अपिना प्रत्याख्यानपक्षे तु भसंज्ञया बाधस्य परिग्रहः । अयम्भावः—यदि सुबन्तादध्येतरि प्रत्ययः स्यात्तदाऽन्तर्वर्त्तिसुपः "प्रत्ययलोपे प्रत्ययलक्षणम्" ( पा० सू० १-१-६२ ) इतिसूत्रेण सुबन्तत्वात्पदत्वे सति नलोपः स्यात् । न च भसंज्ञया बाधः । "स्वादिष्वसर्वनामस्थाने" ( पा० सू० १-४-१७ ) इतिसूत्रप्राप्तपदत्वस्य तया बाधेऽपि साऽत्र न प्रवर्त्तते "प्रोक्तात्" ( पा० सू० ४-२-६४ ) इतिसूत्रेणाध्येत्रर्थकस्य लुकाऽपहारात् । न च 'असर्वनामस्थाने यचि' इतिसूत्रस्य यकारादावजादौ सर्वनामस्थाने पूर्वं पदन्न, मध्ये चेत्सुबन्तमस्ति तदपि पदन्नेति व्याख्यानेन पदत्वनिषेधो भाविष्यतीति वाच्यम् । "उत्तरपदत्वे च"इतिवार्त्तिकप्रत्याख्यानाय तथा तस्यार्थस्य योगविभागेन स्वीकारेऽपि वार्त्तिकारम्भपक्षे तादृशार्थकल्पने मानाभावात् । यदि णिनिप्रत्ययान्तात्सुबुत्पत्तेः प्रागेवाध्येत्रर्थकः प्रत्ययस्तदा तु न पदत्वप्राप्तिरिति भावः । प्रोक्तप्रत्ययान्तानीति यदुक्तन्तल्लाभायाह—*प्रोक्तादित्यनुवृत्तमिति । *कठम्महदितिवदिति । यथेदमसाधु तद्वदित्यर्थः ।

शब्दः प्रत्ययान्तं चेत्प्रसिद्धदेशनाम तदैव यथा स्यादित्यर्थम् । *जनपदे लुबिति तु न्यायसिद्धानुत्पत्त्यन्वाख्यानमेव । तत्र प्रत्ययान्तस्य देशनामत्वाभावेन प्रत्ययानुत्पत्तेः ।

तेन नि (पा० सू० ४-२-६८) । 'इति देशे'इति एष्वपि सम्बध्यते । तेनेति *कर्त्तरि तृतीया ।

अदूरं=निकटं, तत्र भवमिति समासः । त्रयोऽर्था इति । *व्याख्यानादिति भावः । चातुरर्थिकत्वमिति । चतुर्णां सूत्राणामर्थाश्चतुरर्थास्तत्र भवश्चातुरर्थिकः ।

ओरञ्(पा०सू०४-२-७१)। सूत्रास्त्वादिभ्यः प्रागनधिक्रियते ।

मत्वन्तेति । सामानाधिकरण्यस्य *न्याय्यत्वाद् व्यावर्त्यन्तु स्वत्रानिति स्यात्, तथा चाहिमतमित्यादावतिप्रसङ्ग इति भावः ।

रोणी (पा०सू०४-२-७२)॥ लुप्तपञ्चम्यन्तमेतत् । "येन विधिः" (पा० सू०१-१-७२) इति *सूत्रस्थभाष्यात्प्रत्ययविधावपि तदन्तविधिः ।

वुञ्छ ( पा० सू० ४-२-८० ) । यथासंख्यानुरोधात्कुमुदशब्दयोरेकशेषो न कृतः । पथ इति । पक्षाद्यन्तर्गणसूत्रम् ।

*विशेष्यानुरोधिलिङ्गवचने प्राप्ते आह-लुपीनि । प्रत्ययार्थेन

---

प्रत्ययान्तश्चेदिति यद्व्याख्यातन्तत्फलमाह-*जनपद इति ।

*कर्तरि तृतीयेति । एवञ्चैतदन्वयाय निर्वृत्तमित्यत्रान्तर्भावितण्यर्थाद्वृतुधातोः कर्मणि क्तः ।

*व्याख्यानादिति । भाष्ये "अदूरभवश्च"इतिसूत्रानन्तरं "किम्पुनरयमेकयोग आहो स्विन्नाना योगाः"इति वितर्क्य नाना योगा इतिपक्षे "ओरञित्येवमाद्यनुक्रमणं यदेव सर्वान्त्यमर्थादेशनन्तस्यैव विषये स्यात्"इति शङ्कायामुक्तम्-"नैष दोषः । गोयूथवदधिकाराः । तद्यथा-गोयूथमेकदण्डप्रघट्टितं समं घोषं गच्छति तद्वदधिकाराः"इत्युक्तम् । एतेन सर्वेषामुत्तरत्र सम्बन्धाय चकारस्य पूर्वोक्तार्थत्रयसमुच्चायकत्वं स्पष्टमेव लभ्यते तन्मूलकादित्यर्थः ।

*न्याय्यत्वादिति । 'मतोर्बह्वचः'इति न्यासे उभयोः पञ्चम्यन्तत्वात्सामानाधिकरण्यं न्याय्यमित्यर्थः ।

*सूत्रस्थभाष्यादिति । तत्र हि "रोण्या अण्प्रयोजनम्"इत्युक्तम् । अनुशतिकादित्वादेतत्सूत्रोदाहरणे भाष्योक्ते उभयपदवृद्धिः ।

*विशेष्यानुरोधीति । 'नीलो घटः' इत्यादौ नीलादिपदस्येव । *कटुबदरीति । अदूरभवार्थे जातस्याणो "वरणादिभ्यश्च" ( पा० सू० ४-२-८२ ) इति लुप् ।

नित्यसम्बद्धार्थत्वाद् युक्तं=प्रकृतिः। लुपि लुबन्तार्थे प्रकृत्यर्थे इव व्यक्तिवच-ने=लिङ्गसंख्ये भवत इत्यर्थः। लिङ्गातिदेशफलं कटुबदर्या अदूरभवो ग्रामः *कटुबदरीति। व्यक्तीत्यादि किम्?। शिरीषाणामदूरभवो ग्रामः= शिरीषाः। "वरणादिभ्यश्च" (पा० सू० ४-२-८२) इति लुप्, तस्य वनं शिरीषवनम्। अत्र वनस्पतित्वातिदेशे "विभाषौषधि" (पा० सू० ८-४-६) इति णत्वापत्तिः।

*तदेतत्पाणिनिः प्रत्याचष्टे-तदशिष्यमिति। सञ्ज्ञानां=लोकव्यवहाराणामेव तत्र प्रमाणत्वं न तु तदंशे शास्त्रव्यापार इत्यर्थः। यथा दारादिभिः शास्त्रीयपुंस्त्वविशिष्टस्यैव स्त्रीरूपार्थस्य भानं तथा लुबन्तैरपि शास्त्रीयप्रकृत्यर्थगतलिङ्गसंख्याविशिष्टस्यैव स्वार्थस्य भानमिति भावः।

एवञ्च लुबपि व्यर्थ इत्याह-लुब्योगेति। योगोऽवयवार्थस्तस्याप्रख्यानादप्रतीतेरित्यर्थः। न ह्यङ्गसम्बन्धिनिवासत्वेन 'अङ्गाः' *इत्यादितो बोधं इति भावः।

प्रत्ययस्वीकारे बाधकमप्याह-योगप्रमाणे चेति। पञ्चालादौ योगस्यावयवशक्तेः प्रमाजनकत्वे इत्यर्थः। तदभावे=क्षत्रियसम्बन्धाभावे पञ्चालादीनां जनपदे प्रयोगो न स्यादित्यर्थः।

*प्रसङ्गादन्यदपि पूर्वाचार्यपरिभाषितं प्रत्याचष्टे-प्रधानेति। यत्पूर्वाचार्यैः "प्रधानोपसर्जने प्रत्ययप्रकृत्यर्थौ" इत्येवं वचनं कृतं तच्च न कार्यमिति सूत्रार्थः।

अतीतायाः रात्रेरिति। *अतीतरात्रेरन्त्ययामेनागामिरात्रेराद्ययामेन च सहितो दिवसोऽद्यतन इति लुङ्सूत्रे भाष्यकैयटयोः॥

विशेषणानाञ्चा (पा० सू० १-२-५२) *अत्र लुपीत्यनुवर्तते, तदाह-लुबर्थस्येति। लुबन्तार्थस्येत्यर्थः। *यद्यपि लुबन्तार्थस्य

---

*तदेतदिति। अभावज्ञाने प्रतियोगिज्ञानस्य कारणतया लोकसिद्धत्वात्प्रत्याख्येयप्रदर्शनं विना प्रत्याख्यानासम्भवादादौ प्रदर्श्य तत्पूर्वोक्तमित्यर्थः।

*इत्यादितो बोध इति। किन्तु जनपदत्वव्याप्याङ्गदेशत्वादिनैवेतिशेषः।

*प्रसङ्गादिति। खण्डनीयप्रसङ्गादित्यर्थः।

भाष्यरीत्या मूलोक्ताद्विशेषमाह-*अतीतरात्रेरिति।

अन्यरीत्याऽपि कृतं सूत्रं व्याख्यातुमुचितमित्याशयेन व्याचष्टे-*अत्र लुपीत्यनुवर्त्तत इति। सूत्राभावेऽपि सिद्धिर्भविष्यतीत्याशयेन शङ्कते-

तत्त्वातिदेशात् तद्विशेषणानामपि सिद्धम्, बदरी वृक्ष इत्यादाविवात्रापि जातिरूपविशेषणे तदभावः सिद्धस्तथाऽपि* जातिभिन्नविशेषणानां युक्तवद्विशेष्यवल्लिङ्गादीत्यर्थेन 'गुणवचनानामाश्रयतो लिङ्गवचनानि' इत्येतत्सिद्ध्यर्थमिदमिति भाष्यकृतः । आश्रयतः=विशेष्यतः । *इदमपि वाक्यसंस्कारपक्षे आश्रयविशेषस्य पूर्वं प्रक्रमेण विशेषणानामपि तल्लिङ्गसंख्यत्वं न्याय्यमिति न्यायसिद्धार्थानुवादः । आश्रयत इत्युक्तेर्वाक्यसंस्कारे एवास्य प्रवृत्तेः । अत एव विभक्त्यर्थसम्बन्धस्य बहुव्रीह्यर्थत्वे लिङ्गाद्यनुपपत्तिमाशङ्क्यानेन न्यायेन परिहृतम् "अनेकमन्यपदार्थे" ( पा० सू० २-२-२४ ) इत्यत्र भाष्ये । स्पष्टञ्च तत्रैव कैयटे । "संस्कृतं भक्षाः" (पा०सू० ४-२-१६)इत्यादि तु पदसंस्कारपक्षे एव साधु । *तत्पक्षेऽस्य वाचनिकस्याङ्गीकारे तु समासस्याकडारोक्तभाष्यरीत्या* तद्वचनत्वाभावादेतद्वचनाप्रवृत्तौ भाष्यासङ्गतिः स्पष्टैव । *अत एव भाष्ये गुणवचनवल्लिङ्गवचनानीत्युक्तम् । गुणवचनत्वे हि वतिनिर्देशासङ्गतिरिति दिक् ।-लुपीति सूत्रस्य विषयविवेकमाह-हरितकीति । व्यक्तिः *सैवेत्यर्थः । "हरीतक्यादिभ्यश्च" ( पा० सू० ४-३-१६७ ) इति लुप् । वचनमिति । *तदेवेत्यर्थः । खलतिको वरणादिः । विशेषणानां चेत्यस्य प्रतिषेधमाह-मनुष्येति । चञ्चाऽभिरूप इति । "सञ्ज्ञायाम्" ( पा० सू० ४-३-८७ ) इति कनो "लुम्मनुष्ये" ( पा० सू० ५-३-७८ ) इति लुप् । न चैवं विशेष्यगतलिङ्गादिनिषेधे सामान्ये नपुंसकं युक्तमभिरूपपदे*इति वाच्यम् । लुबन्तार्थेऽतिदिष्टलिङ्गस्य तद्विशेषणे विशेषणानामिति प्राप्तस्य निषेधेऽपि वस्तुतो विशेष्यस्य पुंस्त्वात्तदक्षतेः । प्रत्याख्याने तु लोकत एवात्र पुंस्त्वं बोध्यम् ।

कुमुदादाविति । ऋश्याद्यनन्तरे इत्यर्थः । वाग्रहणेति ।

---

*यद्यपीति । अन्यार्थं सूत्रमित्याशयेन समाधत्ते-*तथापीति । *इदमपीति । गुणवचनानामितिवचनमपि । *तत्पक्ष इति । पदसंस्कारपक्ष इत्यर्थः । *भाष्यरीत्येति । तत्र हि समाससंज्ञाया गुणवचनसंज्ञाबाधकत्वोक्तेः । *अत एव=समासस्य गुणवचनत्वाभावादेव । न चानेन न्यायेन परिहृतमिति पूर्वोक्तं विरुध्यते अस्मिन्न्यासे गुणवचनानामित्युक्तेरिति वाच्यम् । तत्रत्यगुणवचनशब्दस्य किञ्चिद्व्यक्तिविशेषणीभूतार्थतात्पर्यकपरत्वात् । सिद्धे सतीति न्यायेनाह—*सैवेति । तत एवाह-*तदेवेति । *अभिरूपपद इति । प्राप्नोतीति शेषः ।

*अन्यथा तत्र पाठसामर्थ्यादेव ठच्कृकोर्विकल्पेन लोपे सिद्धे तद्वैयर्थ्यं स्पष्टमेव । षडिति । ऋश्यादावपि पठतां मते सप्तेति बोद्धव्यम् ।

नद्यां मतुप् ॥ ( पा० सू० ४-२-८५) सामान्येन मतुपि सिद्धे- *ऽर्थान्तरे विधानार्थम् । नद्या अपि *देशत्वेन "तदस्मिन्" [पा० सू० ४-२-६७ ] इति प्राप्ताणो बाधनार्थं चेदम् । *मध्वादिष्विक्षुशब्दपाठ- स्तु "ओरञ्" ( पा० सू० ४-२-७१ ) इति सूत्रस्थभाष्यविरुद्धः । तत्र हि ओरञ्विधेर्नद्यां मतुप् विप्रतिषेधेनत्यस्येक्षुमतीत्युदाहरणं दत्तम् ।

कुमुदन ( पा० सू० ४-२-८७ ) अयं *मत्वर्थ एवेति नपदा- न्तसूत्रे भाष्यकैयटयोः* । वेतस्वानित्यादौ रुस्तु न । *अल्लोपस्य स्थानिवत्त्वात् । "नपदान्त"(पा० सू० १-१-५८) इति निषेधस्तु न । पदे परतश्चरमावयवे कर्त्तव्ये परपदस्थाजादेशस्यैव तन्निषेधप्रवृत्तेः । न च "पूर्वत्रासिद्धीये न स्थानिवत्" इति निषेधः । नपदान्तसूत्रे दत्तोत्तर- त्वात्* । अन्तरङ्गासिद्धत्वन्तु नात्र कार्यकालपक्षेऽपि त्रिपाद्यान्तदप्रवृत्तेः । झय इति । नडे प्राप्तियोग्यतामात्रेणैवमुक्तम्* । वस्तुतो "झयः" (पा० सू० ८-२-१०) इत्यस्यासिद्धत्वान्नडेऽपि "मादुपधायाः"(पा० सू० ८ २- ९ ) इत्येवोचितम् । प्रकरणे प्रकरणमसिद्धमिति पक्षस्तु भाष्ये एव दूषित इति दिक् । डित्त्वन्तु टिलोपार्थं, पित्त्वन्तु नाविषयत्वेनाद्युदात्तकुमुदशब्दे-

---

*अन्यथा—अणोऽस्वीकारे ।

*अर्थान्तर इति । तेन निर्वृत्तमित्याद्यर्थे । *देशत्वेनेति । नद्यामपि मत्स्यादिस्थितेस्तत्सम्बन्धिदेशत्वेनेत्यर्थः । "मध्वादिभ्यश्च" ( पा० सू० ४-२- ८६ ) इति सूत्रे विशेषं वक्तुम्प्रतीकमधृत्वैव व्याचष्टे-*मध्वादीति । यदि मध्वादिष्विक्षुशब्दपाठः स्यात्तदा प्राप्तस्यौरञस्तेषु पाठाद्बाधेन मतुपि सती- क्षुमतीत्यस्य सिद्धौ विप्रतिषेधविचारासङ्गतिः स्पष्टैव ।

*मत्वर्थ एवेति । एवकारेण निर्वृत्ताद्यर्थव्यवच्छेदः । *भाष्यकैयट- योरिति । तत्र हि पदसंज्ञायाः "तसौ मत्वर्थे" ( पा० सू० १—४—१९ ) इति भसंज्ञा बाधिका भविष्यतीत्युक्तम् । यदि निर्वृत्तादिष्वप्यर्थेषु स्यात्तदा तत्र पदत्वप्राप्तिर्न निवारितेति भाष्यकारस्य न्यूनतापत्तिः । *अल्लोपस्य=टि- लोपस्य । *दत्तोत्तरत्वात् । "पदेऽन्त इत्यर्थेन तत्र स्थानिवद्भावनिषेधव्यावृत्ति- परभाष्यप्रामाण्येन "पूर्वत्रासिद्धे" इत्यत्र पदचरमावयवविधायकातिरिक्तस्य त्रैपादिकस्य ग्रहणम्"इति हि तत्रोक्तम् । *एवमुक्तमिति । आद्ययोर्झय इत्येवमु-

ऽनुदात्तनिवृत्तिस्वराप्राप्त्या मतोरनुदात्तत्वार्थम्* । महिष्मानिति । अत्र "प्रत्यये भाषायाम्" ( का० वा० ) इत्यनुनासिको न । षकारसवर्णानुनासिकाभावात् । अनुनासिकविधौ सवर्णग्रहणापकर्षेण सवर्णोऽनुनासिक इत्यर्थात् ।

शादो दोपधः ।

नडाद्यन्तरिति । नडाद्यन्तर्गता बिल्वादयः कृतकुगागमाः *उच्चारणार्थाकारसहिताः सूत्रे निर्दिष्टाः, *व्याख्यानात्कान्तगणपाठाभावाचेतिभावः । छस्य किमिति । तेभ्यः परस्य छस्यैव संभव इति प्रश्नः । सन्नियोगेति । तेषाम् "अन्यतरापाये उभयोरप्यपायः" इति न्यायेनेत्यर्थः । अस्य चेदमेव* ज्ञापकम् । *अत एव पञ्चेन्द्राण्यो देवताऽस्य पञ्चेन्द्र इत्यादौ ङीपो लुक्यानुको निवृत्तिः । लुग्ग्रहणमिति । ढलो । इत्यनुवर्तमाने इत्यर्थः । लोपग्रहणानुवृत्तावु*पधाया इति वर्त्तते न वा ? तत्र आद्ये आह— यस्मान्नस्येति । अन्त्ये तु "आदेः परस्य" (पा० सू० १-१-५४) इतीकारलोपापत्तिरिति बोद्धव्यम् ।

इति चातुरर्थिकाः ॥

अन्योऽर्थ इति । विशेष्यतया भासमान इत्यर्थः । *एवञ्चेदंत्वेन भासमानमपत्याद्यपि न शेषः । *ध्वनितं चेदं 'तस्येदमित्यपत्येऽपि' इति वार्त्तिकेन । लक्षणं चेत्यादि । 'शैषिकान्मतुबर्थीयात्' इत्यस्य *विषयलाभार्थमावश्यकमिदम् । *तस्येदमित्यादावपत्याद्यर्थस्याग्रहणाया-

---

सम् । *अनुदात्तत्वार्थमिति । अन्यत्र तूदात्तनिवृत्तिस्वरेणैव सिद्धम् ।

*उच्चारणार्थाकारसहिता इति । ननु बिल्वशब्दप्रकृतिकस्वार्थकान्तनिर्देश एव किन्न स्यादत आह-*व्याख्यानादिति । सन्नियोगशिष्टपरिभाषाज्ञापनपराऽऽकरमूलकाद्व्याख्यानादित्यर्थः । *इदमेव=छग्रहणमेव । *अत एव=सन्नियोगशिष्टानामिति परिभाषास्वीकारादेव । *उपधाया इति वर्त्तते न वेति । "सूर्यतिष्यागस्त्यमत्स्यानाम्" ( पा० सू० ६-४-१४९ ) इत्यतः ।

## ॥ इति चातुरर्थिकाः ॥

विशेष्यतयेति विवक्षायाः फलमाह-*एवञ्चेति । *ध्वनितश्चेदमिति । 'उत्सर्गः शेष एवासौ' इति विशिष्य समाधानेन । *विषयलाभार्थमिति । यदि केवलाधिकार एव स्यात्तदा वक्ष्यमाणा घादयः प्रकृतिविशेषाद्विधीयन्ते तेषां शैषिकाञ्च प्राप्तिरिति तादृशविषयलाभो न स्यात् । लक्षणत्वे तु अशक्यैरुच्यते

धिकारोऽप्यावश्यकः(१) ॥

आजत्तमिति । *अव्ययसाहचर्यात्, न तु टाबन्तो दक्षिणाशब्द इति भावः । अत एव दाक्षिणात्य इत्यत्र न पुंवत्त्वम्* । *केचित्तु "ठकूछसोश्च" इति वार्त्तिकारम्भेण भाष्यकृता सर्वनाम्न इतीष्ट्या तदप्रत्याख्यानेन चेष्टे*रनित्यत्वाद्*नव्ययग्रहणेऽपि न दोषः । अत एवानव्ययात्प्रत्ययान्तरेण रूपान्तरं नेत्याहुः ॥

*राङ्कवको मनुष्य इति । "मनुष्यतत्स्थयोः" (पा० सू० ४-२-१३४) इति वुञ् । "रङ्कुः कच्छादिः । *राङ्कवो मनुष्य इति क्वाचित्कोऽपपाठः । "रङ्कोरमनुष्यग्रहणानर्थक्यं मनुष्यतत्स्थयोर्वुञ्विधानात्परेण च तेन मनुष्ये ष्फगणोर्बाधसिद्धेः । *तत्स्थे ष्फगणोर्ज्ञापकमिति चेन्नानिष्टत्वात् । अणूग्रहणानर्थक्यञ्च *कच्छादिभ्योऽणिवधानाद्" इति वार्त्तिकात् अतस्तत्पाठसमर्थने नाभिनिवेष्टव्यमित्यलम् ।

वर्णुरिति । अदूरभवश्चेत्यर्थे सुवास्त्वादित्वादणो जनपदे लुप् । वर्णुः=सिन्धुनदः ।

*पदान्तत्वात्षत्वाप्राप्तेराह —ह्रस्वात्तादौ (पा० सू० ८-३-१०१) । अरण्याण्णः । अणि हि ङीप्स्यादिति भावः ।

वक्ष्यमाणाविति । "सायंचिरम्" (पा० सू० ४-३-१२१) इत्यादिना ।

काकतीरमिति । ककतीरः प्रकृतिः । काखतीरमिति पाठान्तरम् ।

---

आश्वो रथः । आश्वेन प्राप्यते मनुष्य इत्यत्र तु वाक्यमेव, न तु प्रत्ययः । अधिकारस्य फलमाह-*तस्येदमिति ।

टापः शीघ्रोपस्थितिकत्वादाह-*अव्ययसाहचर्यादिति । एवञ्चाऽऽचोऽपि शीघ्रमेवोपस्थितिः । *न पुंवत्त्वमिति । न पुंवद्भावेनाऽऽकारनिवृत्तिः । *केचिदिति । भाष्यानुसारिणः । *इष्टेः=सर्वनाम्न इतीष्टेः । *अनव्ययग्रहणेऽपीति । अपिना अव्ययस्य सङ्ग्रहः । साहचर्यपरिभाषा तु "द्विस्त्रिस्" (पा० सू० ८-३-४३) इति सूत्रे कृत्वोऽर्थग्रहणादनित्येति भावः ।

*राङ्कवक इति । रङ्कुषु जातो मनुष्य इत्यर्थः । क्वाचित्कम्पाठं खण्डयति-*राङ्कव इति । *तत्स्थ इति । मनुष्यस्थ इत्यर्थः । *कच्छादिभ्य इति । रङ्कुः कच्छादिरिति प्रागेवोक्तम् ।

*पदान्तत्वादिति । प्रत्ययलक्षणेन पदान्तत्वात् ।

---

(१) अग्रहणायाप्यधिकार आवश्यक इति योजना ।

सञ्ज्ञाभूताया इति । *सूत्रे पञ्चम्यर्थे सप्तमीति भावः ।

उदीच्यग्रा (पा० सू० ४-२-१०९) उदीच्यग्रामात्किम्? *माथुरः । मध्यदेशग्रामोऽयम् । बह्वचः किम्? ध्वजी *ङीषन्तः, तस्य ध्वाजः । अन्तोदात्तात्किम्?, शार्करीधानम् । अयं कृदुत्तरपदप्रकृतिस्वरेण मध्योदात्तः* प्रत्युदाहरणेष्वण् प्रत्ययः, स्वरे विशेषः * ।

प्रस्थोत्तरप (पा० सू० ४-२-११०) । उदीच्यग्रामलक्षणाञोऽपवादः । *तस्यात्रानुवृत्तेः ।

—शाखीयमिति । *सूत्रद्वयेऽपीत्यर्थः । "यूनि लुक्" (पा० सू० ४-१-९०) इतिसूत्रभाष्ये तथोक्तत्वात् । कण्वादीनां गर्गाद्यन्तर्गणत्वेन तत्र शास्त्रीयगोत्रे एव प्रत्ययसत्त्वात् । अर्थाधिकारादत्रापि तदेवेति भावः ।

अपवाद इति । *प्रतिषेध इत्यर्थः । लिङ्गमिति । *तेनौद्दालकिः पिता, औद्दालकायनः पुत्र इत्यत्र "इञः प्राचाम्" (पा० सू० २-४-६०) इति भरतेभ्यो न लुक् ।

वृद्धिर्य (पा० सू० १-१-७३) । अचामिति जातौ सौत्रं बहुवचनम् । तेन शालीयसिद्धिः । व्यपदेशिवद्भावात् *ज्ञीयसिद्धिः । आदिरिति किम्?, सभासंनयने भवः=साभासंनयनः । वृद्धिरिति किम्?, तदभावे यस्याचामादिर्हलित्यर्थः *सामर्थ्यात्स्यात् । एवञ्च रक्षितस्यायं=राक्षित

---

असंज्ञायामिति सप्तमीनिर्देशात्प्रकृतिप्रत्ययसमुदायस्य संज्ञात्वे व्यावृत्तिरिति भ्रमनिवारणायाह—*सूत्र इति ।

*माथुर इति । मथुरायाम्भव इत्यर्थः । *ङीषन्त इति । गौरादिङीषन्तः । *मध्योदात्त इति । आधानमित्यत्राङ्पूर्वाद्धाञो ल्युटि आङा समासेऽव्ययपूर्वपदप्रकृतिस्वरेणाधानशब्द आद्युदात्त इति भावः । *स्वरे विशेष इति । यद्यत्राञ् स्यात्तदा शार्करीधानशब्द आद्युदात्तः स्यात् । सम्प्रति त्वणन्तत्वादन्तोदात्तो भवतीति विशेष इत्यर्थः ।

अञ्निरूपितापवादत्वोपपत्तये आह=*तस्येति ।

"इञश्च" (पा. सू. ४-२-१२२) इतिसूत्रानन्तरङ्गोत्रमिहेत्युपादानेन इञश्चेतिसूत्र एवेति भ्रान्तिवारणायाह—*सूत्रद्वयेऽपीति । तत्फलं मूले—पाणिनीयमिति । अत्रेञ्प्रत्ययो यूनि, न तु गोत्रे ।

मूलेऽणोऽपवाद इत्युक्तन्त्रापवादशब्दो बाधकपरस्तेन यत्फलितन्तदाह—*प्रतिषेध इति । *तेन=पूर्वोक्तज्ञापकेन ।

*ज्ञीयसिद्धिरिति । जानातीति ज्ञा । ज्ञाया अयं=ज्ञीयः । *सामर्थ्या-

इत्यादावेव स्यान्न त्वौपगवीत्यादौ। यस्येति सञ्ज्ञिनो व्यपदेशाय। अचामिति किम्?, तदभावे यस्याऽऽदिर्वृद्धिरित्यर्थे औपगवीत्यादावेव स्यान्न गार्गीयादौ।

एङ् प्रा (पा० सू० १-१-७५)। प्राचामिति *विकल्पार्थम्। *व्यवस्थितविभाषा चेयम्। तेन शैषिकेष्वेवेदम्। अप्राग्देशवाचिक्रोडदेवदत्तयोश्च शैषिकेऽपि न। देवदत्तीय इति। *अत्र देवदत्तो मनुष्यनाम। काश्यादिगणे च प्राग्देशवाचिदेवदत्तस्यैव ग्रहणमिति नातष्ठञ्ञिठौ। अत एवात्र 'देवदत्तीया' इति भाष्ये उदाहृतम्।

वा नामधेयस्य। अत्र नामशब्देनाधुनिकसङ्केतितमेव। *अत एव "एङ् प्राचां देशे" (पा० सू० १-१-७५) इति *सार्थकम्। घटींयादि तु गहादित्वात्साध्विति केचित्*। *अन्ये तु रूढ्या बोधकशब्दत्वमेव नामत्वं पशुनामभ्यः कारनाम्नीतिवत्। "एङ् प्राचाम्" इति तु देशवृत्तेश्चेदेङादेरेवेति नियमार्थं, घटीयाद्यनेनैव साध्वित्याहुः। उच्चारणार्थ इति। *विधेयघटकस्येत्त्वेऽपि *तदतिरिक्तफलाभाव इत्यर्थः।

वृद्धात्प्रा (पा० सू० ४-२-१२०)। अत्रोदेश इति संबध्यते इत्याह—वृद्धादेवेति। *विपरीतनियमस्तु न। व्याख्यानात्*।

घन्व (पा० सू० ४-२-१२१)। धन्व=मरुदेशः। धन्वविदिति। वृद्धिग्रहणाभावेऽचामिति सम्बन्धसामान्ये षष्ठी स्यात्।

---

*विकल्पार्थमिति। 'प्राचान्देशे' इतिनिर्देशात्। अन्यथा प्राग्देश इत्येव वदेदिति भावः। *व्यवस्थितविभाषेति। अत्र मानमेतत्सूत्रस्थम् "एङ् प्राचान्देशे शैषिकेष्विति वक्तव्यम्। सैपुरिकी सैपुरिका। स्कौनगरिकी, स्कौनगरिका" इति भाष्यमेव। *अत्र=मनुष्यनाम्नि। *अत एव=आधुनिकसंकेतितस्य ग्रहणादेव। *सार्थकमिति। अन्यथा देशवाचकस्यापि नामधेयत्वात्तेनैव सिद्धे किमनेन। *केचिदिति। मुख्याः। *अन्ये त्विति। अत्रारुचिबीजन्तु "एङ् प्राचाम्" (पा. सू. १-१-७५) इतिसूत्रस्य विध्यर्थत्वकल्पनमेव युक्तम्। "विधिनियमसंभवे विधिरेव ज्यायान्" इतिन्यायादिति। ननु उच्चारणार्थकस्यापीत्संज्ञां विना निवृत्त्यभावाद्विशेषोपादानमफलमत आह—*विधेयघटकेति। *तदतिरिक्तेति। उच्चारणातिरिक्तेत्यर्थः। अनुबन्धस्य व्यत्यासेनोच्चारणन्तु स्त्रीप्रत्यये विशेषार्थम्।

*विपरीतनियम इति। उवर्णान्ताद्देशवाचिनो वृद्धाच्चेत्प्राचामेवेति नियम इत्यर्थः। *व्याख्यानादिति। अप्राग्देशवाचिनो वृद्धस्योवर्णान्तस्याप्रसिद्धत्वमूल-

ञ्छोषेति* । *व्याख्यानात्स्वरूपपर्यायाणामग्रहणम*वृद्धत्वाच्चेति भावः । देशवाचिन इति । *अत एव धनुर्वाचकधन्वशब्दस्य न ग्रहणम् । उत्तरेणेति । रोपधत्वादिति भावः । ईकारेति । *व्याख्यानाद् दीर्घग्रहणमिति भावः ।

जनपदत ( पा० सू० ४-२-१२४ ) । तदवधिरिति कर्मधारयः । *तेन स जनपद एव । अवधित्वञ्च सन्निधानात् जनपदम्प्रत्येव । *जनपदत्वेन सिद्धावपि उत्तरसूत्रेण त्रिगर्त्तशब्दे परमपि गर्त्तोत्तरपदच्छं बाधित्वा वुञर्थं तदुत्तरार्थम्, तदाह—त्रैगर्त्तक इति । दार्वक इति । *दार्वा इति बहुवचनान्तोऽयं जनपदे । कालञ्जरका इति । कलञ्जरेषु भवा इत्यर्थः ।

कच्छाग्निश्च ॥ ( पा० सू० ४-२-१२६ ) । जनपदेत्यादि निवृत्तं, देशइत्येव । केवलस्यापि कच्छस्य देशे वृत्त्या तदर्थमुत्तरपदग्रहणम् । अन्यत्र*सामर्थ्यादेव तदन्तविधिः सिद्ध्यति । दारुकच्छकुण्डाग्निसिन्धुवक्त्रबहुवर्त्ताः प्रकृतयः । गर्त्तेति पाठो* "जनपदतदवध्योश्च" (पा० सू० ४-

---

कहरदत्तीयव्याख्यानादित्यर्थः । *धन्व मरुदेश इति । "समानौ मरुधन्वानौ" इति कोशे पाठाद् यद्यप्ययम्पुल्लिङ्ग इति ततो भाति, तथापि भाष्ये आष्टकग्राम धन्वेतिपाठान्नपुंसकलिङ्गोऽपीत्याशयेनेह धन्वेत्युक्तम् । *व्याख्यानादिति । योपधशब्दसाहचर्यमूलाद्व्याख्यानात् । साधकान्तरमप्याह—*अवृद्धत्वाच्चेति । *अत एव = देशग्रहणस्यानुवृत्तिसत्त्वादेव । *व्याख्यानाद्दीर्घग्रहणमिति । प्राग्देशवाचिनो वृद्धस्य दीर्घकारान्तस्य दर्शनमूलकाद्व्याख्यानादित्यर्थः ।

*तेन = सजनपद एव कर्मधारयाश्रयणेन [। जनपदावधिरपि जनपद एवेत्यर्थः । नन्वेवं तदवधिग्रहणं व्यर्थमत आह—*जनपदत्वेनेति । तथा च बाधकबाधनार्थन्तदवधिग्रहणमिति भावः ।

अवृद्धादपि बहुवचनविषयात् । "वृद्धात्प्राचाम्" (पा. सू. ४-२-१२०) इत्यतो वृद्धादिति प्रक्रान्तमतोऽवृद्धादिति । तावन्मात्रोक्तौ विशेषविधिनिषेधयोः शेषनिषेधाभ्यनुज्ञाफलकत्वमितिन्यायेन देवदत्तो वामेनाऽक्ष्णा पश्यतीत्यत्र यथा दक्षिणेन न पश्यतीति गम्यते, तथाऽवृद्धादित्युक्ते वृद्धान्नेति गम्येतेति प्रकृतसूत्रेऽपीति । प्रकृतसूत्रोदाहरणेषु अङ्गा इत्यादयो बहुवचनान्ता एव । दार्वक इत्युदाहरणे प्रकृतसूत्रस्य प्रवृत्त्यर्थमाह—*दार्वा इतीति ।

कच्छाग्नि ( पा. सू. ४-२-१२६ ) "ओर्देशे" ( पा. सू. ४-२-११९ ) इत्यतो देश इत्यनुवर्त्तते । *सामर्थ्यादेवेति । तावन्मात्रस्य देशवचनत्वाभावात् । *जनपदतदवध्योश्चेतिसूत्रस्थभाष्यविरुद्ध इति । तत्र हि तदवधिग्रहणस्य प्रयोजनमुक्तम् ? "जनपदाज्जनपदावधेर्वुञेव यथा स्यात् । यदन्यत्प्राप्नोति तन्मा

२-१२४) इति सूत्रस्थभाष्यविरुद्धः। नागरा ब्राह्मणा इति। *क-त्र्यादिषु माहिष्मतीसाहचर्यात्सञ्ज्ञाशब्दस्यैव नगरस्य ग्रहणम्, अतोऽत्र न ढकञ्। "प्राचां ग्रामनगराणाम्" (पा०सू०७-३-१४) इति सूत्रे नागरा इति भाष्योदाहरणादिति भावः।

विभाषा कुरु (पा० सू० ४-२-१३० ) कुरोः कच्छादिपाठसामर्थ्यात्पक्षेऽणि सिद्धे युगन्धरार्था विभाषा कुरुयुगन्धरौ जनपदौ ताभ्याम् "अवृद्धादपि" (पा० सू० ४-२-१२५ ) इति नित्यं प्राप्ते विकल्पः।

कोपधाद (पा० सू० ४-२-१३२ )। "प्रस्थोत्तर" (पा०सू० ४-२-११० ) इत्यनेन सिद्धे *जनपदवुञ्बाधनार्थमिदम्। *तत्तु उदीच्यग्रामलक्षणाञ्बाधनार्थम्*। महिषिका महिषका वा जनपदः। वुञादेरिति। *सिन्धोरोर्देशे ठञः। नियमार्थमिति। साल्वादेवेति विपरीतानियमस्तु न। *व्याख्यानात्। मुखेसादि चत्वारि गहाद्यन्तर्गणसूत्राणि। देवकीयमिति। "नूनमत्र दैवानुग्रह" इति भाष्यात्। देव-

---

भूदिति। किञ्चान्यत्प्राप्नोति। छः। गर्तोत्तरपदाच्छविधेर्जनपदाद् वुञ् पूर्वविप्रतिषिद्धमिति वक्ष्यति स पूर्वविप्रतिषेधो न पठितव्यो भवति" इत्युक्तम्। यदि प्रकृतसूत्रेऽपि कच्छाग्निवक्त्रगर्तोत्तरपदादिति पाठः प्रामाणिकः स्यात्तदा त्रैगर्तक इत्यस्यानेन सूत्रेण सिद्धौ पूर्वविप्रतिषेधारम्भो व्यर्थः स्यादिति भावः। गर्तोत्तरपदाच्छविधेः कोऽवकाश इति चेत्, पर्यायः स्यात्। स च नेष्टः। अतो वर्त्तोत्तरपदादित्येव पाठो युक्त इति। ननु कत्र्यादिषु नगरशब्दस्य पाठान्नागरा इत्यनुपपन्नमत आह—*कत्र्यादिष्विति।

*जनपदवुञ्बाधनार्थम् "प्रस्थोत्तरपद" (पा. सू. ४-२-११०) इति-प्राप्त्याऽणबाधकस्य "जनपद" (पा. सू. ४-२-१२४) इतिसूत्रविहितस्य वुञो बाधनार्थमित्यर्थः।

नन्वेवन्नैलीनक इत्यत्रापि "कोपधात्" (पा. सू. ४-२-१३२) इत्येवाणि सिद्धे "प्रस्थोत्तरपद" (पा. सू. ४-२-१२४) इतिसूत्रे कोपधग्रहणं व्यर्थमत आह-*तत्त्विति। *अञ्बाधनार्थमिति। वुञ्बाधकाञ्बाधनार्थमित्यर्थः। आदिपदसंग्राह्यमाह-*सिन्धोरिति। *व्याख्यानादिति। अपदातौ वाच्ये यदि भवति तदा साल्वादेवेतिनियमो ग्रन्थाभिप्रेतः स्यात्तदाऽनेन नियमेन गोयवाग्वोर्वाच्यत्वेन विवक्षायाङ् कच्छादित्वादेव वुञि सिद्धे "गोयवाग्वोश्च" (पा० सू० ४-२-१३६) इत्युत्तरसूत्रारम्भो व्यर्थः स्यादिति तदारम्भमूलकव्याख्यानादित्यर्थः।

स्येदमित्यर्थे "देवाद्यञञौ" इत्यपीति *कश्चित् । स्वकीयमिति ।
*स्वार्थिककप्रत्ययान्ताच्छ इत्येके ।

राज्ञः कच (पा० सू० ४-२-१४०)॥ देशे इति न सम्बध्यते । असम्भवात् । ब्राह्मणकीय इति । कोपधत्वादण् प्राप्तः । अयोमुखीयमिति । "वाहीकग्रामेभ्यश्च" (पा० सू० ४-२-११७) इति ठञ्ञिठौ प्राप्तौ । ठञ्ञिठादेरिति । नगरान्ते "रोपधेतोः" (पा०सू० ४-२-१२३) इति वुञादिशब्दार्थः ।

विभाषा ऽमनुष्ये (पा० सू० ४-२-१४४)। अमनुष्यशब्दोऽत्र* यौगिको* व्याख्यानात् ।

कृकणपर्णाद्भारद्वाजे (पा० सू० ४-२-१४५) । देशवाची भारद्वाजशब्दः* प्रकृतिविशेषणं* व्याख्यानात् ।

युष्मदस्म (पा० सू० ४-३-१) । अत्र सूत्रत्रयेऽपि *न यथासंख्यमस्वरितत्वात् । न चैक एव खोऽनेन विधीयते चेन तस्य ससहायता द्योत्यते । सा च प्रकरणाच्छेनेति यथासंख्यप्राप्तिरेवेति वाच्यम् । ससहायताद्योतनेऽपि तस्याः सम्बन्ध्यन्तरसाकाङ्क्षतया द्वितीयोपस्थितिं विनाऽर्थापर्यवसानेन तत्प्राप्तेः । न चैवमपि प्रत्ययत्रयविधानान्न तत्प्राप्तिरिति वाच्यम् । विकल्पार्थानां पक्षेऽभावमात्रार्थत्वेऽप्य*न्यभावार्थकत्वाऽभावात् । प्रकृते च महाविभाषया वाक्यस्य सिद्धत्वादन्यतरस्याङ्ग्रहणबोधिततदभावेऽणेवास्य लक्ष्यसंस्कारवेलायां ज्ञानेऽपि विध्यर्थप्रमितिका-

---

*कश्चित् = माधवः । *स्वार्थिककेति । गहादेराकृतिगणत्वात् । केवलस्वशब्दात् "तस्येदम्" (पा० सू० ४-३-१२०) इत्यणि द्वारादीनाञ्चेत्यैजागमे सौवमित्यपीति प्रामाणिकाः । *यौगिक इति । न मनुष्योऽमनुष्यः । न तु "सभाराजामनुष्यपूर्वा" (पा० सू० २-४-२३) इतिसूत्रस्थामनुष्यशब्दवद्रूढ्याऽर्थबोधकः । *व्याख्यानात् = फलेष्वपि पार्वतीयानीतिप्रयोगदर्शनमूलकाद्व्याख्यानात् । *प्रकृतविशेषणमिति । देश इति वर्त्तते । भारद्वाजशब्दश्च न गोत्राभिधायकः किन्तु सूत्रोपात्तयोः कृकणपर्णयोर्विशेषणमिति । एवञ्च देशाभिन्ने भारद्वाजे यौ कृकणपर्णशब्दौ ताभ्यां च्छः स्यादिति वाक्यार्थः । *व्याख्यानात् = प्रकृतिविशेषणत्वेन वृत्तिकारादिसम्मतव्याख्यानात् । *न यथासङ्ख्यमिति । न निमित्तकार्यिणोर्यथासङ्ख्यमित्यर्थः । *अन्यभावेति । प्रकृतसूत्रघटको योऽन्यतरस्यामितिशब्दस्तस्य विधेयत्वाभिमतखञ्छयोर्योऽभावस्तन्मात्रबोधकत्वेऽपि सूत्रविधेयादन्यो योऽण्

ले त्र्याणामनुपस्थित्या *तत्प्राप्तेरिति दिक्। चाच्छ इति। विधेयसन्नि-हितचस्य विधेयसमुच्चायकत्वमिति भावः।

तस्मिन्न (पा० सू० ४-३-२)। पूर्वसूत्रे साक्षान्निर्दिष्टत्वेन प्राधान्यात् खञ एव तच्छब्देन परामर्श इत्याह-खञीति। एकवचने इति यौगिकं,षष्ठ्यर्थे च प्रथमाद्विवचनमत आह-एकार्थवाचिनोरिति।

प्रत्ययोत्तर॥ (पा० सू० ७-२-९८)। उत्तरपदे 'त्वत्पुत्रः' इत्याद्युदाहरणम्।

कालाट्ठञ्॥ (पा० सू० ४-३-११)। कालग्रहणे यथाकथंचिदपि कालबोधकानां ग्रहणम्। "तदस्य परिमाणम्" (पा०सू०५-१-५७) "संख्यायाः" (पा० सू० ५-१-५८) इति सूत्रे "यो यः काले वर्त्तते स स कालशब्दः" इति भाष्योक्तेः। *रमणीयादिष्वतिप्रसङ्गस्त्वनभिधानान्नेत्यपि तत्रैवोक्तम्। *अत एव *सायंप्रातिक इत्यत्र ठञ् सिद्धः। अन्यथा स्वाङ्गसमुदायस्य स्वाङ्गवाचकत्वाभाववत्कालसमुदायस्य कालवाचकत्वाभावाट्ठञ् न स्यात्। मम तु यथाकथंचित्कालबोधकत्वमस्त्येव। सायंप्रातिकः पौनःपुनिक इत्यत्र तदन्तत्वेन स्थानिवत्त्वेन चाव्ययत्वेऽप्यनभिधानाट्ट्युट्युलौ न भवतः, "नस्तद्धिते" (पा० सू० ६-४-१४४) इति सूत्रे भाष्ये तथा प्रयोगात्। इति यावदिति। न च* छ-नक्षत्राणोः-छ-ट्युट्युलोश्च* विप्रतिषेधपरस्य सप्तसूत्रस्थभाष्यस्यासङ्गतिः। तावत्पर्यन्तं कालाधिकारे हि परत्वेन छबाधकठञपवादतयोत्कृष्टबलानामणा-

---

तस्य भावार्थकत्वाभावादित्यर्थः। *तत्प्राप्तेः=यथासङ्ख्यप्राप्तेः। ननु यथाकथञ्चिद्यः कालबोधकस्तस्य ग्रहणे रमणीयशब्दस्यापि रमणीयः काल इत्यत्र कालबोधकतया रमणीये जात इत्यर्थविवक्षायां ठञ् प्राप्नोतीत्यत आह-*रमणीयादीति। *अत एव=यथाकथञ्चित्कालबोधकस्य ग्रहणादेव। *सायम्प्रातिक इत्यादि। सायम्प्रातिक इत्यत्र तदन्तत्वात्प्राप्तिः पौनःपुनिक इत्यत्र तु स्थानिवत्त्वेनेति विवेकः। अयञ्च स्थानिवद्भावो द्विर्वचनस्यादेशत्वपक्षे। *छनक्षत्राणोरिति। छः=वृद्धाच्छ इति। सन्धिवेलेतिविहितोऽण्। *विप्रतिषेधपरस्येति। तत्र हि "छादोर्देशे कालाट्ठञ्। छादोर्देशे ठञ् कालाट्ठञ् इत्येतद्भवति विप्रतिषेधेन। छस्यावकाशः। शालीयो मालीयः। ओर्देशे ठञ् भवतीत्यस्यावकाशः निषादकर्षूर्नाम देशः=नैषादकर्षुकः। इहोभयं प्राप्नोति कालाट्ठञ् भवतीत्यस्यावकाशः-आर्द्धमासिकम्, सांवत्सरिकम्। छस्य स एव। मासादुभयम्प्राप्नोति मासिकम्। नक्षत्रादण् नक्षत्रादण् भवति छाद्विप्रतिषेधेन। अणोऽवकाशः-तैषः,

दीनां *दुर्बलेन छेन संप्रसारणायोगः तदधिकाराभावे हि तदपवादत्वमेव नेति न दोष इति वाच्यम् । तेषां छवाधकठञादित्वेऽपि परस्परपरिहारेण चारितार्थ्यपूर्वकयुगपदसंभवस्यैव संप्रसारणबीजत्वेनादोषात् ।

श्राद्धे शः ( पा० सू० ४-३-१२ ) श्रद्धाशब्दात् "प्रज्ञाश्रद्धा" (पा० सू० ५-२-१०१) इति सप्तम्यर्थे णे पितृयकर्मविशेषे रूढोऽयम* ।

द्वारादीनाञ्च ( पा० सू० ७-३-४ )। अत्र परस्य वृद्धिरितिनानुवर्त्तते इति कस्येत्सूत्रे निरूपितम् । इह तदादिग्रहणमपि । *एवञ्च स्वग्रामस्वाध्याययोः पाठो* नियमार्थः—स्वशब्दादेतयोरेवेति । तेन स्वार्थिकाः, स्वाभाविकं, स्वाराज्यमिति सिद्धमिति "द्वारादीनाञ्च" ( पा० सू० ७-३-४ ) इति सूत्रे भाष्ये ध्वनितम् । तत्र स्वाध्याये सर्वेभ्यो यण्भ्यः पूर्वं नैच् । अचामादेरित्यनुवर्त्त्य तदनन्तरयोर्यवोः पुर्वौवैचाविति व्याख्यानात् ।

सन्धिवेला ॥ (पा० सू० ४-३-१६) अणुग्रहणं* पौर्णमास्याश्छं वाधितुम् । वचनन्तु यथाप्राप्तठञ्वाधनेन चरितार्थम् । सन्धिवेलादिग्रहणे शश्वतो वेति पाठाच्छाश्वतिकशाश्वतौ सिद्धाविति "नस्तद्धिते" ( पा० सू० ६-४-१४४ ) इति सूत्रस्थभाष्यस्वरसः । तत्राद्ये कादेशाभावटिलोपाभावौ "येषाञ्च विरोधः शाश्वतिकः" इति निपातनात् । शाश्वते चास्मादेव निपातनादव्ययानां भमात्रे इत्यस्यानित्यत्वाट्टिलोपाभावः । *अत एव 'आरातीयः' सिद्धः । तैषामिति । तिष्ययुक्ते काले भवमित्यर्थः ।

प्रावृष ( पा० सू० ४-३-२६) । "नहिवृति" । ( पा० सू० ६-३-११६ ) इति प्रशब्दस्य दीर्घः । ऋत्वणोऽपवादः । सर्वत्राण् च । छन्दसीत्यस्य निवृत्त्यैव सिद्धे सर्वत्रग्रहणं *स्पष्टार्थम् । तुटः

---

पौषः । छस्य स एव । स्वातेरुभयम्प्राप्नोति—सौवातः । अव्ययात्ट्युट्युलौ छाद्बतो विप्रतिषेधेन । ट्युट्युलोरवकाशः—दोषातनम्, दिवातनम् । छस्य स एव । प्रातःशब्दादुभयम्प्राप्नोति—प्रातस्तनम्" इतिभाष्यासङ्गतिरित्यर्थः । *दुर्बलच्छेनेति । तद्बाध्यबाध्यत्वेन दुर्बलत्वमिति भावः । *अयम् = श्राद्धशब्दः । *एवञ्च = तदादिग्रहणे च । *नियमार्थ इति । स्वशब्दस्य द्वारादित्वात्तेनैव सिद्ध इत्यर्थः । *पौर्णमास्याश्छमिति । पौर्णमासीशब्दस्य सन्धिवेलादिगणे पाठात् ।
*अत एव = अव्ययानाम्भमात्र इत्यस्यानित्यत्वादेव ।
*स्पष्टार्थमिति । छन्दसीत्येतन्निवृत्तेः स्पष्टतया प्रतिपत्त्यर्थमि-

प्रागिति । अन्यथाऽन्तरङ्गत्वात्तुटि अङ्गात्परस्येत्यर्थे निर्दिश्यमानयुश-ब्दस्य ततः परत्वाभावाद् "यदागमाः" इति न्यायेन तद्विशिष्टस्य ग्रहणेऽपि तस्यानिर्दिश्यमानत्वान्नादेशप्राप्तिरिति भावः । वस्तुतोऽङ्गसञ्ज्ञानिमित्तयोरित्यर्थः । "यदागमाः" इति न्यायेन तद्विशिष्टस्य ग्रहणेऽपि निर्दिश्यमानपरिभाषया तयोरेवादेश इति न दोषः । अत्रार्थे एव *स निर्देशो लिङ्गमिति बोद्धयम् । *एवं शौवस्तिकेऽप्यङ्गसञ्ज्ञानिमित्तठस्येति व्याख्यानात् पूर्वन्तुट्यपि न दोषः । सायन्तनमित्यादि । सायञ्चिरयोर्मान्तत्वं निपातनादिति *भाष्ये स्पष्टम् । सायमित्यव्ययेषु पठितादव्ययत्वेनैव प्रत्ययसिद्धौ सायंग्रहणं *भाष्ये प्रत्याख्यातं, *घञन्तसायशब्दस्तु सायाह्नसायतरशब्दयोः साये इति सप्तम्यन्ते च कालपरः साधुर्नान्यत्रेत्यनभिधानान्न ततष्ठ्ञिति *तद्भावः । *सायमण्डनमित्यादि त्वसाध्वेव । *अत एव यथान्यासे कालाधिकाराबाधः । *ननु चिरमित्यस्याप्यव्ययेषु पाठात्तद्ग्रहणमपि व्यर्थं चिरशब्दाट्ठञ *स्त्नप्रत्ययेनैव बाधसिद्धेः । न चाव्ययत्वप्रयुक्तट्युट्युलोरनित्यत्वज्ञापनार्थन्तत् *, तेन सायंप्रातिकादिसिद्धिरिति वाच्यम् । सायंग्रहणस्यापि *तत्त्वसम्भवादिति चेत्सत्यम् । अव्ययेषु *तस्याप्रामाणिकत्वात् ॥ परुत्=पूर्ववत्सरे । परारि=पूर्वतरे ।

---

त्यर्थः । *स निर्देशः=अद्यतन इति निर्देशः । *एवम्=युवोरनाकावितिसूत्र इव । *भाष्ये प्रत्याख्यातमिति । सायमितिमान्ताव्ययस्य च स्वीकारादेव

"प्रातः सन्ध्या सनक्षत्रा सायंसन्ध्या सभास्करा" ।

इत्युपपद्यते । यत्तु स्यतेर्घञि दिवावसानवचनः सायंशब्दस्तस्याप्येतन्निपातनमिति वृत्तिकृत्, तन्न युक्तमिति ध्वनयन्नाह-*घञन्तसायेति । *तद्भाव इति । प्रत्याख्यानभाष्यस्य भावः । नन्वन्यत्रापि प्रयोगो दृश्यत इत्यत आह—*सायमण्डनमित्यादि । *अत एव=अव्ययसंज्ञकस्यैव सायंशब्दस्य प्रकृतसूत्रे ग्रहणादेव । यस्तु सायशब्दो घञन्तः स न कालवाची किन्तु दिननाशे वर्त्तते इति भावः । चिरमित्यस्याप्युपादानं व्यर्थमित्याशङ्कते—*नन्विति । *त्नप्रत्ययेन="चिरपरुत्परारिभ्यस्त्नो वक्तव्यः" इतिवार्त्तिकविधेयेन । *तत्=चिरङ्ग्रहणम् । *तत्त्वसम्भवात् अनित्यत्वज्ञापकत्वसम्भवात् । न चेष्टापत्तिः । प्रत्याख्यानपरभाष्यविरोधात् । *तस्याप्रामाणिकत्वात्=चिरंशब्दस्याप्रामाणिकत्वात् । अत एव भाष्ये प्रत्ययसन्नियोगेन मान्तत्वञ्चिरशब्दस्य निपात्यत इत्युक्तन्न तु प्रत्याख्यानन्तस्य कृतम् । तेन शारदं सस्यमिति । न चेह समुदायः संज्ञा किन्तु यौगिकोऽयम् ।

सञ्ज्ञायां श ( पा० सू० ४-३-२७ ) ॥ प्रकृतिप्रत्ययसमुदायेन चेत्सञ्ज्ञा गम्यत इत्यर्थः । नेह-शारदं सस्यम् ।

उत्तरपदस्य (पा० सू० ७-३-१०) । अधिकारोऽयमिति । *अत एव "उत्तरपदवृद्धौ सर्वं, च" (पा० सू० ६-२-१०५) इतिस्वरविधायके उत्तरपदाधिकारविहितवृद्धिपरिग्रहः सिद्ध्यति । पूर्ववार्षिके वर्षाणां पूर्वं इत्येकदेशिसमासः । आदिवृद्धिस्तु न । उत्तरपदवृद्धेस्तदपवादत्वात्* । *अत एव "हृद्भग" (पा० सू० ७-३-१९) इति सूत्रे 'पूर्वपदस्य च'इति चरितार्थं, सत्यपि सम्भवे बाधात् । पूर्वास्विति । "तद्धितार्थ" ( पा० सू० २-१-५१ ) इति समासः । ऋतोरिति । ऋतुवाचकाद् वृद्धिनिमित्तप्रत्ययविधौ तदन्तविधिर्वक्तव्योऽवयववाचकानां पूर्वपदत्वे इत्यर्थः । पूर्वत्र=उदाहरणे । तेन तत्र "वर्षाभ्यष्ठक्" ( पा०सू० ४-३-१८ ) "सर्वत्राण् च" ( पा० सू० ४-३-२२ ) इति ठगणौ सिद्धौ । इह तु=प्रत्युदाहरणे । तेन तत्र कालाठ्ठञेव । वृद्धिमद्विधौ किम् ? । *पौर्वप्रावृषम् । इह प्रावृष एण्यो न । *वाचनिक एवायं तदन्तविधिः ।

जनपदेति । तदधिकारे "अवृद्धादपि" ( पा० सू० ४-२-१२५ ) इत्यनेनेत्यर्थः। सुसर्वार्धेति। जनपदवाचिनः शब्दस्यानन्तरे प्रत्यये विधीयमाने तदन्तविधिर्यदि सुप्रभृतिभ्यः परः सम्भवतीत्यर्थः । अयमपि वाचनिक एव ।

पौर्वपञ्चाल इति । अत्र पूर्वशब्दो देशवाची । कालवाचीत्यपि कश्चित् । दिक्शब्दपदेन च *दिग्वाचकशब्दस्यैव ग्रहणम् । अतोऽत्र तदन्तविधिविषयाभावान्न वुञ् । शब्दग्रहणन्तु स्पष्टार्थमेव । *पौर्वमद्रे "मद्रेभ्योऽञ्" ( पा० सू० ४-२-१०८ ) इत्यञ् । *वृद्धिविधायके प्रतिपदोक्तत्वात् "जनपदतदवध्योश्च" ( पा० सू० ४-२-१२४ ) इति प्रत्ययस्यैव ग्रहणेन त-

---

*अतएव=अधिकारत्वादेव । *तदपवादत्वात्=आदिवृद्ध्यपवादत्वात् । *अत एव=उत्तरपदवृद्धेस्तदपवादत्वादेव । *पौर्वप्रावृषमिति । पूर्वा चासौ प्रावृट् च तस्याम्भवमित्यर्थः । *वाचनिक एवेति । अन्यथा प्रत्ययविधित्वान्न स्यात् ।

*दिग्वाचकशब्दस्य=अत्र दिक्शब्दो दिगवच्छिन्नस्यापि बोधकः । *पौर्वमद्र इति । पूर्वस्मिन्मद्रे जातः । अन्योक्तिं खण्डयति—*वृद्धिविधायक इति ।

त्रैव तज्ज्ञापितोऽयं तदन्तविधिरित्ययुक्तम्। अमद्राणामित्यस्य वैयर्थ्यापत्तेः। उत्तरार्थं इति। "प्राचां ग्राम" (पा० सू० ७-३-१४) इत्युत्तरसूत्रे दिश एव सम्बन्धो यथा स्यादित्यर्थमित्यर्थः।

सुसर्वार्द्धा (पा० सू० ७-३-१२)। दिशो जनपदस्यामद्राणामित्युक्ते स्वादिभ्यः परस्यापि मद्रस्य पर्युदासः सम्भाव्येतेतीहार्थोऽपि स इत्यन्ये* ॥

प्राचां ग्रा (पा०सू०७-३-१४)प्राचामिति देशनिर्देशः* । *यद्यपि नगरस्यापि ग्रामत्वमस्ति तथापि नगराणामित्युत्तरपदविशेषणं*, ग्रामाणामित्यङ्गविशेषणमित्यर्थमुभयम्। पूर्वेषुकामशम्यादिः समुदायो ग्रामनामधेयं, पूर्वपाटलिपुत्रादावुत्तरपदमेव नगरमाहेति वृत्तिः। *भाष्ये तु ग्रामत्वादेव सिद्धे नगरग्रहणं प्रत्याख्यातम्। पूर्वेषुकामशम्यादौ पदैकदेशन्यायेनोत्तरपदस्यापि ग्रामनामधेयत्वमस्त्येवेति तदाशयः। तदत्र *मूलेऽपि ध्वनितं, तदाह—दिश इत्यादिना। पूर्वेषुकामशमेरण्। प्रकृतेः सञ्ज्ञात्वाद् "दिक्पूर्वपदात्" (पा० सू० ४-२-१०७) इति ञो न। पूर्वपाटलीति। पाटलिपुत्रशब्दस्तदवयवे वर्त्तत इति समानाधिकरणसमासः *।

अमावास्याया वा (पा० सू० ४-३-३०)। *पक्षे सन्धिवेलाद्यण्। सूत्रे दीर्घपाठ इति अत्र सूत्रे "अमावस्यदन्यतरस्याम्" (पा० सू० ३-१-१२२) इति सूत्रे च भाष्ये स्पष्टम्।

नक्षत्रवाचिभ्य इति। *नक्षत्रयुक्तचन्द्रवाचिभ्य इत्यर्थः।

---

उत्तरार्थ इत्युक्तिङ्कटाक्षयन्नाह—*सुसर्वेति। *अन्ये=विवेचकाः।

*देशनिर्देश इति। न त्वाचार्यनिर्देशः। वृत्तिकारमतमाह—*यद्यपीत्यादिना। *उत्तरपदविशेषणम्। दिश इत्यपि तस्य विशेषणमिति। दिशः परेषान्नगरवाच्युत्तरपदानान्दिशः परेषामुत्तरपदानां ग्रामवाच्यङ्गावयवानामचामादेरचो वृद्धिरितिसूत्रार्थस्तन्मते द्रष्टव्यः। परन्त्वेषा कल्पना भाष्यविरुद्धेति सूचयन्नाह—*भाष्ये त्विति। *मूलेऽपि ध्वनितमिति। दिशः परेषान्नगरवाचिनामिति कथनेन ध्वनितमित्यर्थः। *समानाधिकरणसमास इति। ततो "रोपधेतोः प्राचाम्" (पा० सू० ४-२-१२३) इति वुञ्।

*पक्षे इति। वुन्प्रत्ययाभावपक्षे इत्यर्थः।

*नक्षत्रयुक्तचन्द्रवाचिभ्य इति। तत्तन्नक्षत्रयुक्तचन्द्रमसा युक्तकाल-

लुक्त (पा० सू० ४-२-४९) । अप्रधानमिहोपसर्जनं न शास्त्रीयमसम्भवात्* । चित्रेति । लुक्तद्धितेति लुकि जाताद्यर्थस्त्रीत्वप्रतिपादनाय पुनष्टाप् * । पिप्पल्यादेरिति । अन्यथा 'रेवतीरोहिणीनक्षत्रे' इति गौरादिषु पाठान्नक्षत्रवाचित्वाभावेन* स न स्यादिति भावः । टानाविति । विधानसामर्थ्यान्नानयोर्लुक् । स्त्रियामित्येवेति । *फल्गुनी अषाढेति भाष्योदाहरणात् । अस्त्रियामपीति । *'श्राविष्ठीयः' इत्यादिभाष्योदाहरणात् । अत्र चित्रारेवतीत्यादि लुग्वचनं भाष्ये 'नक्षत्रेभ्यो बहुलम्' इत्याश्रित्य प्रत्याख्यातम् * ।

स्थानान्तगो (पा० सू० ४-३-३५) ॥ *सूत्रे समाहारद्वन्द्वपूर्वपदकसमाहारद्वन्द्वः । तेन स्त्रीलिङ्गयोर्गोशालाखरशालाशब्दयोर्ग्रहणम् । विभाषेति । अस्य यद्यपीत्यादिः । तथाऽप्येकदेशविकृतन्यायेन *तत्रापि लुगिति शेषः । *एतेन कृतनपुंसकह्रस्वानामेव द्वन्द्वः, गोशालाखरशालयोस्तु लिङ्गविशिष्टपरिभाषया सिद्धमिति हरदत्तोक्तमपास्तम् । *कृतह्रस्वस्य लिङ्गप्रत्ययवैशिष्ट्यासम्भवात् ।

प्रतिप्रसूत इति । *कालाट्ठञा निवर्तित औत्सर्गिकोऽण् पुनः सन्धिवेलादिसूत्रेणाभ्यनुज्ञात इत्यर्थः ॥

---

वाचिभ्य इत्यर्थः ।

*असम्भवादिति । तस्य समास एव सम्भव इति भावः । *पुनष्टाविति । अत एव यत्र न स्त्रीत्वन्तत्र चित्र इत्येव भवति । *नक्षत्रवाचित्वाभावेन । जातार्थकप्रत्ययान्तस्य नक्षत्रवाचित्वाभावेनेत्यर्थः । स्त्रियामित्येवेत्यस्यैतौ प्रत्ययौ स्त्रियाम्भवत इत्यर्थः । तत्र मानमाह—*फल्गुनी इत्यादि । अस्त्रियामपीत्यस्य लाभप्रकारमाह—*श्राविष्ठीय इत्यादीति । *प्रत्याख्यातमिति । लुगर्थं वचनम्प्रत्याख्यातम् । पूर्वोक्ताः प्रत्ययास्तूपसंख्येया एव ।

*सूत्रे समाहारद्वन्द्वपूर्वपदकेति । स्थानान्तञ्च गोशाला च स्थानान्तगोशालम् । स्थानान्तगोशालञ्च खरशाला चेति समाहारद्वन्द्वः । *तत्रापीति । अपिना नपुंसकत्वाभावपक्षीयशब्दसङ्ग्रहः । *एतेन=पूर्वोक्तरीत्या सौत्रप्रयोगसाधनेन । *कृतह्रस्वस्येत्यादि । ह्रस्वत्वं हि नपुंसकत्वे विधीयते, न च स्त्रीप्रत्ययस्तत्प्रकृतिकः । एवञ्च भवदुक्तं व्याख्यानमसङ्गतमेवेति भावः । प्रतिप्रसूतपदं व्याचष्टे—*कालाट्ठञेति । मूले नक्षत्रेभ्यो बहुलमिति । भाष्यकारीयं वचनमेतत् । तत्र जातः इत्यस्य तदधिकरणकजननकर्त्ता इत्यर्थः ।

कृतलब्धक्रीतकुशलाः (पा० सू० ४-३-३८) । तत्रेति वर्त्तते । तदर्थस्य

च कृतादिशब्दैकदेशक्रियायामन्वयः । तत्र कुशल इत्यस्य तस्मिन् स्थित्यादिरूपा या क्रिया तस्याङ्कुशल इत्यर्थः ।

प्रायभवः (पा० सू० ४-३-३९.) । तत्रेति वर्त्तते । ननु वक्ष्यमाणेन "तत्र भवः" (पा० सू० ४-३-५३) इत्यनेनास्याभिन्नार्थबोधकत्वमिति अन्यतरोपादानवैयर्थ्यमिति चेन्न । अनित्यभवः प्रायभवः, नित्यभवस्तत्र भव इति भेदात् । भवशब्दोऽत्र सत्ताकर्तृवाची । स्रुघ्ने प्रायभव इत्यस्य स्रुघ्नावयवसकलग्रामानवच्छिन्ना या स्रुघ्नावयवकतिपयग्रामाद्यवच्छिन्ना सत्ता तत्कर्त्तेत्यर्थः । भवनेऽनित्यत्वञ्च कतिपयतदवच्छिन्नत्वम् । नित्यभव इत्यस्य तद्देशावयवसकलग्रामाद्यवच्छिन्ना या तद्देशाधिकरणिका सत्ता तत्कर्त्तेति वाच्योऽर्थ इति सूत्रकाराशयः । भाष्यकृता तु प्रकृतसूत्रस्प्रत्याख्यातम् "प्रायभवग्रहणमनर्थम् । तत्र भवेन कृतत्वात् । प्रायभवग्रहणमनर्थकम् । किङ्कारणम् ? । तत्र भवेन कृतत्वात् । यो हि स्रुघ्ने प्रायेण भवति तत्र भवोऽसौ भवति तत्र 'तत्र भवः' इत्येव सिद्धम् । (अत्र कैयटः–भवे सामान्ये प्रायभवस्यापि विशेषस्यान्तर्भावादिति भावः । ततः आरम्भवाद्याह-) न सिद्ध्यति । अनित्यभवः प्रायभवः । नित्यभवस्तत्र भवः" इति । अर्थभेदमनेनाचष्टे । यस्तत्र कदा चिद्भवति कदा चिन्न भवति स प्रायभवः । यस्य तु नियत आधाराधेयभावः स तत्र भव इति कैयटः । अत्र कदा चिदिति न कालिकाव्याप्यवृत्तिमात्रपरङ्किन्तु यदीयसत्त्वमव्याप्यवृत्ति तत्सामान्योपलक्षणम् । तच्च कालिकं दैशिकं वेत्यन्यदेतत् । प्रत्याख्यानवाद्याह—"अनित्यभवः प्रायभव इति चेन्मुक्तसंशयेन तुल्यम् । यद्भवान्मुक्तसंशयं तत्र भव उदाहरणन्न्याय्यम्मन्यते स्रौघ्नो देवदत्त इति तेनैतत्तुल्यम् । सोऽपि ह्यवश्यमुदकदेशादोन्यभिनिष्क्रामति ( एतेन तदीयसत्त्वस्य दैशिकाव्याप्यवृत्तित्वन्निदर्शितम् । ) अथैतत्प्रायभव उदाहरणन्न्याय्यम्मन्यते । तत्र भवे किमुदाहरणम् ? । यस्तत्र नित्यम्भवति–स्रौघ्नाः प्राकाराः । एवन्तर्हि तत्र भव इति प्रकृत्य जिह्वामूलाङ्गुलेश्छो विधीयते स तस्मिन् दृष्टापचारे अङ्गुलीयमिति भवति एवम्प्रायभवेऽपि भविष्यति ।" एतेन प्रघट्टकेन नीलघटस्य घटत्वेन बोधवत्प्रायभवस्यापि भवत्वेन बोधमाश्रित्य प्रायभव इति प्रत्याख्यातमिति भावः ।

उपजानूप ( पा० सू० ४-३-४० ) उपजान्वादयः सामीप्येऽव्ययीभावाः ।

सम्भूते ( पा० सू० ४-३-४१ ) तत्रेति वर्त्तते । सप्तमीसमर्थात्प्रातिपदिकात्सम्भूत इत्यस्मिन्नर्थे यथाविहितस्प्रत्ययो भवति । अत्र सम्भूतिर्नोत्पत्तिः सत्ता वा । जातभवाभ्याङ्गतार्थत्वात् । किन्त्ववक्लृप्तिः प्रमाणानतिरेकश्च यथायथं सम्भूतिपदार्थः ।

कोशाड्ढञ् ( पा० सू० ४-३-४२ ) कौशेयं वस्त्रम् । अत्र कोशे सम्भूतिर्वस्त्रस्य सत्कार्यवादसिद्धान्तरीत्या । वार्त्तिककृता तु लोकप्रसिद्धरीत्या विकार एव प्रत्ययं स्वीकृत्येदं सूत्रम्प्रत्याख्यातम् "विकारे कोशाड्ढञ् वक्तव्यः । कोशस्य विकारः=कौशेयम् । सम्भूते ह्यर्थानुपपत्तिः । सम्भूत इत्युच्यमानेऽर्थ-

कालात्साधुपुष्प्यदिति ॥ पुष्प्यदिति 'पुष्प विकसने' इति दैवादिकाच्छतरि रूपम् । "तत्र भवः" ( पा० सू० ४-३ ५३ ) इति यावद् कालादिति वर्तते ।

उप्यन्त इति । *सूत्रे भूतकालोऽविवक्षित इति भावः ।

आश्वयुजी=अश्विनीयुक्ता पौर्णमासी ।

कलाप्य( पा०सू०४-३-४८ ) ॥ तत्रेत्येतत्सहितदेयमृणे इत्यर्थान्वयाय कालादित्यनुवृत्तस्य सम्बन्धाय च कलाप्यादयः काले *लाक्षणिका इत्याह—यस्मिन्काले इति । फलमिति । अश्वत्थस्य प्लक्षादित्वेन तेन फले विहितस्य विधानसामर्थ्याल्लुगभावेऽप्युपचारादिति भावः । *एतद्वृत्तिविषयश्चायमुपचारः ।

ग्रीष्मावरसमादिति समाहारद्वन्द्वः । आवरसमकमिति । आगामिवर्षाणामाद्ये वर्षे देयमित्यर्थः । *अवरशब्दस्यादिक्शब्दत्वादसञ्ज्ञायामप्यत्र कर्मधारयः ।

तदस्य ( पा० सू० ४-३-५२ ) । प्रथमान्तात्सोढोपाधिकात्ष-

---

स्यानुपपत्तिः स्यात् । न ह्यदः कोशे सम्भवति । तदानीं वस्त्रानुत्पत्तेः । किन्तर्हि कोशस्यादौ विकारः । यदि विकार इत्युच्यते भस्मन्यपि प्राप्नोति । भस्माऽपि कोशस्य विकारः । अथ सम्भूत इत्युच्यमाने कृमौ कस्मान्न भवति ?। अनभिधानात् । यथैव तर्हि कृमावनभिधानान्न भवति एवम्भस्मन्यपि न भविष्यतीति च भाष्ये उक्तम् ।

कालात्साधुपुष्प्यत् ( पा० सू० ४ -३-४३ ) तत्रेत्येव । तत्र साधुत्वञ्च तदधिकरणकयोग्योत्पत्तिकत्वम् । यथा हेमन्ते कृतः प्राकारो योग्यो भवति तथा नान्यकाले निर्मित इति विवक्षितम् । ननूप्त इत्यत्र भूते प्रत्ययविधानादुप्यत इतिव्याख्यानमनुपपन्नमत आह—*सूत्रे भूतकाल इति ।

देयमृणे ( पा० सू० ४-३-४७ ) अत्रावश्यके कृत्यः ।

कलाप्यश्वत्थ ( पा० सू० ४-३-४८ ) । *लाक्षणिका इति । साहचर्यसम्बन्धस्यात्र लक्षणाबीजस्य सर्वत्र सत्त्वन्द्रष्टव्यम् । *एतद्वृत्तिविषयश्चेति । वुन्प्रत्ययविषय इत्यर्थः ।

ननु "दिक्सङ्ख्ये संज्ञायाम्" ( पा० सू० २-१-५० ) इति नियमादवरसमेत्यत्र कथं कर्मधारय इत्यत आह—*अवरशब्दस्येति ।

तदस्य सोढम् । ( पा० सू० ४-३-५२ ) सोढमित्यत्र सहधातोः कर्मणि क्तः । सहनकर्मेत्यर्थः । "न लोक" ( पा० सू० २-३-६९ ) इतिनिषेधाद-

ष्ठ्यर्थेऽणादयः । *क्रियाकारकभावमूलकसम्बन्धस्यैव विवक्षणादस्येति षष्ठी । *सोढमभ्यस्तम् । कालस्य स्वरूपेण सहनायोगात्तत्सहचरिताक्रियायां लक्षणेत्याह—निशासहचरितामिति ।

तत्र भवः ( पा० सू० ४-३-५३ ) । भवनमत्र सत्ता ।

प्राचाम् ( पा० सू० ७-३-२४ ) । प्राग्देशीयनगरवाचि यन्नगरान्तमङ्गं तत्रेत्यर्थः ॥

जङ्गलधेनु ( पा० सू० ७-३-२५ ) ॥ उत्तरम्=उत्तरपदं, विभाषितं=विभाषितवृद्धिकमित्यर्थः ।

परिमुखमिति । वर्जनार्थे "अपपरी" (पा० सू० १-४-८८) इति समासः ।

एषां *पञ्चानामिति । आदेरचो विशेषणं, तत्फलमाह—देविका-कूले इति । *सौदेविके तु नात्वन्देविकादेर्वृद्ध्यप्राप्तेः । अत्र वृद्धिपदानुवृत्त्या वृद्धिसञ्ज्ञकाकारविधानाद्दाविकीभार्य इत्यादौ पुंस्त्वनिषेधसिद्धिरित्युक्तम् ।

क्रतुय ( पा० सू० ४-३-६८ ) ॥ पाकयज्ञोऽल्पयज्ञः वैश्वदेवहोमो वा । नवयज्ञः=आग्रयणम् । अन्तोदात्तार्थ इति । कृदुत्तरपदप्रकृतिस्वरेण *मध्योदात्तवाजपेयाद्यर्थ इत्यर्थः । तदर्थमावश्यकमिदमन्तो-

---

स्येति न कर्त्तरिषष्ठीसम्भव इत्याशयेनाह—*क्रियाकारकभावेति । सहनमत्र परोक्तं दुर्वचनं सहते इत्यत्रेव न क्षमारूपङ्किन्तु पुनःपुनःपरिशीलितमित्यत्र या क्रिया तत्परमित्याशयेनाह—*सोढमभ्यस्तमिति ।

*पञ्चानामिति । षष्ठ्यर्थोऽवयवावयविभावस्तस्यादिपदार्थेऽन्वयस्तत्फलमाह*—सौदेविक इति । सुदेविकाशब्दादत्र प्रत्ययः ।

तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः ( पा० सू० ४-३-६६ ) । व्याख्यायतेऽनेनेति व्याख्यानः । व्याख्यातव्यं=व्याख्येयम् । तस्येतिषष्ठीसमर्थाद् व्याख्येयवाचकात्प्रातिपदिकाद् व्याख्यानेऽभिधेयेऽणादयः स्युरित्यर्थः । चकारात्सप्तम्यन्ताद्भवार्थे ।

बह्वचोऽन्तोदात्ताट्ठञ् ( पा० सू० ४-३-६७ ) । पूर्वसूत्रमनुवर्त्तते । बह्वचो व्याख्यातव्यनाम्नोऽन्तोदात्तात्प्रातिपदिकाद्व्याख्यानेऽर्थे ठञ् भवतीत्यर्थः । षत्वणत्वेतिसमुदायः समासस्वरेणान्तोदात्तः ।

*मध्योदात्तवाजपेयाद्यर्थ इति । वाजपेयशब्दो यद्यपि यागविशेषे रूढस्तथापि शास्त्रेण व्युत्पाद्यते इति वाजैः=यवागूभिः सम्पादनीय इत्यर्थे-

दात्तपाकयज्ञादावपि परत्वात् प्रवर्तते इत्यभिमानः । *यज्ञार्थमन्त्रब्राह्मणकल्पेषु लाक्षणिकत्वेन व्याख्यातव्यनामत्वं बोद्धव्यम् ।

अध्यायेष्वेवेति ॥ एवकारः स्पष्टार्थः ।

ततः छनिति । *पौरोडाशिकं काण्डमिति तु पुरोडाशमधिकृत्य कृतं पौरोडाशन्तदेव पौरोडाशिकमिति विनयादित्वाद् ठकि साधु ।

*कार्कणे कृकणपर्णादिति छः प्राप्तः । तैर्थ इति । धूमादित्वाद् वुञ् प्राप्तः । अदेशवाचित्वे त्वायस्थानठक् प्राप्तः । *अणुग्रहणं तूदपानादुत्सादेर्यथाविहिताञं बाधित्वाऽणर्थम् । अन्यथाऽऽयस्थानठकं बाधित्वा स एव स्यात् ।

गोत्रादङ्ग ( पा० सू० ४-३-८० ) । तत आगत इत्यर्थे ।

आशौचमिति । अशुचेरागतमित्यर्थ इत्यभिमानः* । *अशुचौ भवमिति वा । आक्षैत्रज्ञादयोऽप्येवम् । अनैश्वर्ये ब्राह्मणादित्वात्ष्यञ् । एते सर्वे भावार्थकप्रत्ययान्ता एवेति तन्मतेऽत्रैतत्सूत्रलेखो लेखकप्रमादात् ।

प्रभवति (पा० सू० ४-३-८३) *प्रभवः=प्रथमप्रकाशो नो-

---

ऽस्य साधुत्वान्वाख्यानेऽयं कृदुत्तरपदप्रकृतिस्वरेण मध्योदात्तः । पेयशब्दस्य "यतोऽनावः" ( पा० सू० ६-१-२१३ ) इत्याद्युदात्तत्वात् । पाकयज्ञादिशब्दानां व्याख्यातव्यनामत्वमुपपादयति-*यज्ञार्थेत्यादि ।

व्याख्यानरूपेऽर्थे प्रत्ययविधानेऽपि पौरोडाशिकं काण्डमित्यस्य कथं साधुत्वमत आह-*पौरोडाशिकमिति । *कार्कण इति । कृकणादागत इत्यर्थके ।

ननु "शुण्डिकादिभ्यः" ( पा० सू० ४-३-७६ ) इतिपृथक्सूत्रारम्भसामर्थ्यादेवाणि सिद्धेऽणुग्रहणङ्किमर्थमत आह-*अणुग्रहणमिति ।

गोत्रादङ्कवत् ( पा० सू० ४-३-८० ) । गोत्रप्रत्ययान्तात्पञ्चम्यन्तादागत इत्यर्थेऽङ्कवत्प्रत्ययो भवति । बैदमित्यत्र बैदशब्दादञन्तादङ्कवद्विधीयमानः प्रत्ययो यथा "सङ्घाङ्कलक्षणेष्वञ्यञिञामण्" [पा० सू० ४-३-१२७] इतिसूत्रेणाङ्केऽण् भवति तथा आगतमित्यर्थेऽपि स एव भवति । *इत्यभिमान इति । तत आगत इत्यर्थस्य प्रक्रमे "नञः शुचीश्वर" ( पा० सू० ७-३-३० ] इतिसूत्रलेखनकर्तुरिति शेषः । अर्थान्तरेऽपि प्रत्ययप्रवृत्तौ सूत्रस्य चारितार्थ्यमाह-*अशुचौ भवमिति वेति ।

हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः ( पा० सू० ४-३-८१ ) । हेतुमनुष्यवाचकेभ्यः पञ्चम्यन्तेभ्य आगत इत्यर्थेऽन्यतरस्यां रूप्यप्रत्यय इत्यर्थो न तु हेतुमनुष्यशब्दादिति । बहुवचननिर्देशात् । मनुष्यग्रहणमहेत्वर्थम् ।

प्रभवति ( पा० सू० ४-३-८३ ) । अस्य सूत्रस्यागतार्थतामाह-*प्रभवः

त्पत्तिः। जाताद्भेदेन निर्देशात्।

विदूरा (पा० सू० ४-३-८४)। बालवायपर्यायो विदूरशब्द

*द्वृत्तिविषयः।

शारीरकमिति। जीवमित्यर्थः। शरीरशब्दात् "तस्येदम्" (पा० सू०४-३-१२०)इत्यणि स्वार्थे कः। *सौभद्रो यायात इत्यस्योदाहरणम्।

निपातनादिति। "सभाराजा" (पा० सू० २-४-२३) इति सूत्रेऽमनुष्यशब्दो रूढ्या रक्षःपिशाचादीनाहेत्युक्तेरिति भावः।

सोऽस्य नि (पा० सू० ४-३-८९)। निवास इत्यधिकरणे घञ्। अस्येति कर्त्तुः शेषत्वविवक्षायां षष्ठी। स्रुघ्नाभिन्ननिवाससंबन्धीत्यर्थः। *स्रुघ्नाधिकरणकवासकर्त्तेति फलति।

आयुधजी (पा० सू० ४-३-९१)। "क्रियार्थोपपदस्य" (पा० सू०२-३-१४)इति चतुर्थी, आयुधजीविनोऽभिधातुमित्यर्थः। पर्वते

---

प्रथमप्रकाश इति। *एतद्वृत्तीति। ञ्यप्रत्ययोत्पत्तिविषय इत्यर्थः।

तद्गच्छति पथिदूतयोः (पा० सू० ४-३-८५)। द्वितीयान्ताद्गच्छतीत्यर्थे प्रत्ययः स्यात् यो गच्छति स पन्था दूतश्चेद्भवति।

अभिनिष्क्रामति द्वारम् (पा० सू० ४-३-८६)। तदित्येव। द्वितीयान्तादभिनिष्क्रामतीत्यर्थे प्रत्ययो भवति योऽभिनिष्क्रामति तद् द्वारश्चेत्। अत्राभिराभिमुख्ये। स्रुघ्नमभिनिष्क्रामतीत्यस्य स्रुघ्नदेशाभिमुख्येन कान्यकुब्जद्वारमभिनिष्क्रामतीत्यर्थः। यद्यपि स्रुघ्नदेशाभिमुख्येन निष्क्रामन्ति ये जनास्तेषामभिनिष्क्रमणक्रियायान्द्वारस्य करणत्वन्तथापि साध्वसिश्छिनत्तीत्यत्र यथा करणस्य स्वातन्त्र्यविवक्षा तथाऽत्रापि बोध्यम्।

अधिकृत्य कृते ग्रन्थे (पा० सू० ४-३-८७)। तदित्येव। द्वितीयान्तादधिकृत्य कृत इत्यर्थे प्रत्ययो भवति, यः कृतः ग्रन्थश्चेत्स भवति। अधिकृत्य= प्रस्तुत्य। ननु सौभद्रो यायात इतिवृत्तिकारोक्तोदाहरणस्यापि सम्भवात्तत्यागे किम्बीजमत आह-*सौभद्र इत्यादि। मूले उपचारादिति। यथा वासवदत्तामधिकृत्य कृता या आख्यायिका सोपचाराद्वासवदत्तेत्युच्यते न तु प्रत्ययः क्रियते तथाऽत्रापि छप्रत्ययाभावेऽपि प्रयोग इति भावः।

सोऽस्य निवासः (पा० सू० ४—३—८९)। प्रथमान्तान्निवासोपाधिकादस्येति षष्ठ्यर्थे प्रत्यय इत्यर्थः। स्रुघ्नाभिन्ननिवाससम्बन्धीत्याकारको बोधः। फलितार्थमाह-*स्रुघ्नाधिकरणकेति।

अभिजनश्च (पा० सू० ४-३-९०)। सोऽस्येति वर्त्तते। आभिजायते येभ्य इति व्युत्पत्त्याऽभिजनशब्दः पूर्वबान्धववाची स लक्षणयाऽत्र देशे वर्त्तते।

इति *प्रकृतेर्विशेषणम्। 'पर्वतात्' इति सूत्रे पाठान्तरम्। पर्वते इति किम्? *सांकाश्यका आयुधजीविनः। *योपधत्वाद् वुञ्।

तूदीशला (पा० सू० ४-३-९४) शलेति तालव्यपाठो वृत्तौ।

अचित्ताद (पा० सू० ४-३-९६)। अत्र स्वरूपग्रहणं न। अदेशकालादित्यस्य वैयर्थ्यापत्तेः।

गोत्रक्ष (पा० सू० ४-३-९९)। *लौकिकमिह गोत्रम्। वृद्धाच्छमिनि। *औपगवक इत्यादौ। आख्याग्रहणात् क्षत्रियः शूर इत्यादौ *शूरशब्दान्न। पाणिन इति। अस्य प्रवराध्यायप्रसिद्धत्वरूपलौकिकगोत्रत्वाभावादेव सिद्धेर्बहुलग्रहणस्य प्रयोजनान्तरं मृग्यं, क्षत्रियांशे पौरवीय इति वा तत्।

जनपदिनाञ्जन (पा० सू० ४-३-१००)। स्वस्वामिसंबन्धे मत्वर्थीयं दर्शयति-स्वामिवाचिनामिति। सर्वशब्दार्थमाह-प्रकृतिश्चेति। तत्फलन्तु मद्राणां राजा=माद्रः, "द्व्यञ्मगध" (पा० सू० ४-१-१७०) इत्यण् स भक्तिरस्येत्यर्थे मद्रकसिद्धिः। अतिदेशा*न्मद्रशब्दत्वेन मद्रवृज्योः कन्। अङ्गा जनपद इति *दृष्टान्तार्थम् "अवृद्धादपि"(पा० सू० ४-२-१२५) इति वुञ्। पञ्चाला ब्राह्मणा इति। *अभेदोपचारोऽत्र बोध्यः। पौरव इति। पुरुः पुरुर्वा न जनपदः। बहुवचने इति किम्? एकवचनद्विवचनयोः सत्यपि शब्दभेदेऽतिदेशार्थं वत्करणम्। यो यज्जनपदवाची ततस्तज्जनपदप्रत्ययो यथा स्याज्जनपदान्तरप्रत्ययो माभूदिति हरदत्तः।

---

*प्रकृतेर्विशेषणमिति। पर्वते वर्त्तमानात्प्रातिपदिकादभिजनोपाधिकादस्येत्यर्थे प्रत्ययः स्यात्। *साङ्काश्यका इति। सङ्काशेन राज्ञा निर्वृत्तं सांकाश्यम्। सांकाश्ये जातः साङ्काश्यकः। *योपधत्वादिति। धन्वयोपधाद् वुञ्। *लौकिकमिति। अपत्याधिकारादन्यत्वात्। *औपगवक इति। औपगवो भक्तिरस्येत्यर्थः। *शूरशब्दादिति। एतस्य क्षत्रियवाचकत्वेन प्रसिद्धत्वाभावात्। न चैवं "वासुदेवार्जुनाभ्याम्" (पा० सू० ४-३-९८) इति पूर्वसूत्रवैयर्थ्यम्, क्षत्रियाख्यत्वादेव सिद्धेरिति वाच्यम्। अस्य संज्ञाशब्दत्वात्। अत एवोक्तस्माध्ये-"संज्ञैषा तत्र भवतः" इति। *मद्रशब्दत्वेनेति। माद्र इत्यत्र योऽण् तन्निवृत्तिरत्र। *दृष्टान्तार्थमिति। बहुवचने जनपदेन समानश्रुतित्वप्रदर्शनार्थम्। ननु पञ्चाला ब्राह्मणा इत्यसङ्गतम्, पञ्चालशब्दस्य देशक्षत्रियान्यतरस्मिन्व्युत्पादनादत आह-*अभेदोपचार इति। ननु तित्तिरिणा प्रोक्तः श्लोक इत्यर्थे

तित्तिरिव ( पा० सू० ४-३-१०२ )। इत आरभ्य वक्ष्यमाणाः प्रत्ययाः "तेनैकदिक" (पा० सू० ४-३-११२)इत्येतत्पर्यन्तं छन्दसि वाच्ये इष्यन्ते। "शौनकादिभ्यश्छन्दसि"(पा० सू० ४--३-१०६) इत्यतश्छन्दोग्रहणस्य पूर्वमपकर्षादुत्तरत्रानुवृत्तेश्च; तदाह—छन्दोब्राह्मेति। तेन तित्तिरिप्रोक्तः श्लोक इत्यत्र न। *तित्तिर्यादिभ्यश्छणेव स च छन्दस्येवेति नियमद्वयाश्रयणमत्र। *छन्दःशब्देन कल्पसूत्राण्यपि। तत्र स्वरितत्वप्रतिज्ञयाऽधिकारार्थावगतेः।

काश्यपकौ ( पा० सू० ४-३-१०३ )। आभ्यां कल्पेऽपि तद्विषयतेष्यते*।

कलापिवै ( पा० सू० ४-३-१०४ )। हरिद्रुश्छगलीतुम्बुरुरुलपाश्चत्वारः कलाप्यन्तेवासिनः। द्वितीया नव आलम्बि-कलिङ्ग-कमल-ऋचा-आरुणि-ताण्ड्य-श्यामायन-कठ-कलापिनः। कलाप्यन्तेवासिनां *वैशम्पायनशिष्यत्वादेव सिद्धे *तद्ग्रहणाच्छिष्यशिष्याणां न ग्रहणम्।

---

छणोऽभावेऽप्यण् कुतो नेत्यत आह-*तित्तिर्यादिभ्य इति। "छन्दोब्राह्मणानि" ( पा० सू० ४-२-६६ ) इति सूत्रे ब्राह्मणपदसन्निधानाच्छन्दःशब्दो मन्त्रमात्रपर एव स्यादत आह-*छन्दःशब्देनेति।

काश्यपकौशिकाभ्याम् ।( पा० सू० ४-३-१०३ ) ऋषिवाचिभ्याङ्काश्यपकौशिकाभ्यान्तेन प्रोक्तमित्यर्थे णिनिः प्रत्ययो भवति। कल्पे आभ्यां प्रोक्त इति स्मर्यते। आभ्याम्=काश्यपकौशिकाभ्याम्। *इष्यत इति। वृत्त्यादिसम्मतात्काश्यपकौशिकग्रहणञ्च कल्पे नियमार्थम्। काश्यपकौशिकाभ्यामेव णिनिः कल्पे तद्विषयो भवतीति छन्दोब्राह्मणानीति सूत्रसम्मतव्याख्यानादिति शेषः। *वैशम्पायनशिष्यत्वादेवेति। शिष्यशिष्याणामपि शिष्यव्यवहारदर्शनादिति भावः। *तद्ग्रहणम्=कलापिग्रहणम्। तदुक्तम्भाष्ये-"प्रत्यक्षकारिग्रहणम्। प्रत्यक्षकारिग्रहणङ्कर्तव्यम्। अन्तेवास्यन्तेवासिभ्यो मा भूदिति। (प्रत्यक्षकारीत्यस्य प्रत्यक्षमध्ययनकारीत्यर्थः।) तत्तर्हि वक्तव्यन्न वक्तव्यम्। कलापिखाडायनग्रहणं ज्ञापकं वैशम्पायनान्तेवासिषु प्रत्यक्षकारिग्रहणस्य। यदयं कलापिखाडायनग्रहणङ्करोति तज्ज्ञापयत्याचार्यो नान्तेवास्यन्तेवासिभ्यो भवतीति। कथङ्कृत्वा ज्ञापकम्। वैशम्पायनान्तेवासी कठः। कठान्तेवासी खाडायनः। वैशम्पायनान्तेवासी कलापी। यदि चान्तेवास्यन्तेवासिभ्योऽपि स्यात् कलापिखाडायनग्रहणमनर्थकं स्यात्। पश्यति त्वाचार्यो नान्तेवास्यन्तेवासिभ्यो भवतीति। ततः कलापिखाडायनग्रहणङ्करोति" इति। तत्र कलापिग्रहणम्प्रकृतसूत्र एव स्फुटम्। खाडायनग्रहणन्तु शौनकादिगणे णिन्यर्थं कृतमिति

*याज्ञवल्कानीति । "कण्वादिभ्यः" ( पा०सू०४-२-१११ ) इत्यण् । ते हि पाणिन्यपेक्षया आधुनिका इत्यभिमानः । *भाष्ये तु शाट्यायनादितुल्यकालत्वाद्याज्ञवल्क्यादिभ्यः प्रतिषेधस्तद्विषयता च नेति वचनमेवारब्धम् ।

शौनकादिभ्यश्छन्दसि (पा०सू०४-३-१०६) । *छन्दस्यभिधेये एभ्यो णिनिः । छन्दसि किम् ? शौनकीया शिक्षा । अस्य वेदमात्रविषयत्वमित्युक्तिर्भ्रान्त्या "कलापि" ( पा० सू० ४-३-१०४ ) इति सूत्रस्थ-*भाष्यविरोधात् । कलापिनो वचनसामर्थ्यादण्सिद्धौ पुनरण्ग्रहणमन्यतो (ऽपि) विधानार्थम् । तेन माथुरेण प्रोक्ता माथुरी वृत्तिरित्यादौ छादिकं न ।

*भिक्षुसूत्रं=भिक्षुत्वसम्पादकं सूत्रम् । *यथा नटसूत्रम् । नटसूत्रज्ञाने हि नटत्वसंपत्तिः, एवं तज्ज्ञाने ब्रह्मरूपत्वेन सर्वज्ञानात्कर्मस्वनादरेण भिक्षुत्वसंपत्तेः ।

वेदान्तान् विधिवत् श्रुत्वा संन्यसेदनृणो द्विजः ।

इति मनूक्तेः ।

स ह्याश्रमैर्विजिज्ञास्यः समस्तैरेवमेव तु ।
द्रष्टव्यस्त्वथ मन्तव्यः श्रोतव्यश्च द्विजातिभिः ॥

इति याज्ञवल्क्यो *विविदिषावाक्ये ( ऽपि ) तपआदीनां कर-

---

बोध्यम् । *याज्ञवल्कानीतीति । याज्ञवल्क्येन प्रोक्तानित्यर्थः । अभिमानोक्तिबीजमाह-*भाष्ये त्विति ।

*छन्दस्यभिधेय इति । अत्र छन्द शब्दो मन्त्रब्राह्मणान्यतरपरः । *भाष्यविरोधादिति । तत्र हि शौनकादिपठितस्य खाडायनग्रहणस्य "कलापि" ( पा० सू० ४-३-१०४ ) इतिसूत्रेऽन्तेवासिग्रहणेऽन्तेवास्यन्तेवासिग्रहणन्नेत्यर्थे ज्ञापकत्वमुक्तम् । यदि "शौनकादि" ( पा० सू० ४-३-१०६ ) इतिसूत्रस्य वेदमात्रविषयकत्वन्तदा शौनकादिषु खाडायनशब्दपाठे सति वेदमात्रेऽभिधेये णिनिः "कलापि" (पा० सू० ४-३-१०४) इतिसूत्रेण णिनौ तु मन्त्रब्राह्मणयोर्णिनिरिति फलभेदस्य स्पष्टतयोक्तार्थज्ञापकत्वपरभाष्यमसङ्गतं स्यादिति भावः । "पाराशर्य" ( पा० सू० ४-३-११० ) इतिसूत्रघटकं भिक्षुसूत्रपदं व्याचष्टे-*भिक्षुसूत्रमिति । सूत्रस्य भिक्षुत्वसम्पादकत्वमुपपादयति-*यथा नटेति । ननु वेदान्तश्रवणस्य ब्रह्मज्ञानाङ्गत्वमनुवचनाल्लभ्यते "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इत्यनेन तु वेदनेच्छायामुपयोगः प्रतीयत इति विरोध इत्यत आह—*विविदिषावाक्येऽपीति ।

णानां शब्दतो गुणभूतेऽपि अर्थतः प्रधानभूते वेदने एवान्वयः । कारकाणां तण्डुलानां काष्ठैः पाचक इत्यादौ गुणभूतक्रियायामप्यन्वयदर्शनात् । यद्वा ग्रामं ग्रामाय वा जिगमिषतीत्यादौ गमेर्ग्रामः कर्म इषेस्तु उभयमिति महाभाष्योक्तरीत्या वेदने इच्छायां चोभयत्रापि* करणत्वमिति न तद्विरोधः।*वस्तुत इच्छाया वस्तुसौन्दर्यबलेनैव सिद्ध्या तत्र करणापेक्षा नास्त्येव। *ऐतरेयब्राह्मणेऽपि-यस्य गार्हपत्याहवनीयावन्तेरणानोरथोवाश्वावा प्रतिपद्येत का तत्र प्रायश्चित्तिरिति नैतन्मनसि कुर्यादित्याहुरात्मन्यस्य हित वै भवन्तीति तच्चेन्मनसि कुर्वीत गार्हपत्यादविच्छिन्नामुदकधारां हरेत्तन्तुं तन्वन्" इति। आत्मन्यस्य हिते इत्यस्य मध्येव ते कल्पिता इति पश्येदित्यर्थः। "संन्यस्य श्रवणं कुर्यात्"इत्यस्य *संन्यस्य श्रवणमेव कुर्यादित्यर्थः। एतेन भिक्षुमात्राध्येयत्वाद्भिक्षुसूत्रत्वमस्येत्यपास्तम्। भिक्षव इति। *भिक्षुत्वयोग्या इत्यर्थः । णिनिर्मण्डूकप्लुत्याऽनुवर्त्तते। पाराशर्यो=व्यासः। *अनयोरपि तद्विषयतेष्यते* ।

तेनैक ( पा० सू० ४-३-११२ ) ॥ तेनेति सहयोगे तृतीया। तेन सह*कदिग्रूपाधिकरणस्थमित्यर्थः । सौदामनीति। "अन्" ( पा० सू० ६-४-१६७) इति प्रकृतिभावः।

तसन्तं तु स्वभावादधिकरणशक्तिप्रधानं तृतीयार्थप्रधानमिति कृन्मेजन्तसूत्रे कैयटः। स्वरादीनि। तत्प्रकरणपठिततद्धितपरिगणने पाठादित्यर्थः।

---

*उभयत्रापीति। उभयत्र करणत्वेऽपि वेदने करणत्वाक्षतेरिति भावः । विविदिषावाक्यस्यापि वेदन एव करणत्वे तात्पर्यमित्याशयेनाह-*वस्तुत इति। एतेन प्रघट्टकेनात्मदर्शनोपयोगिनः सूत्रस्य भिक्षुत्वसम्पत्तिः फलमुक्तञ्च तु भिक्षुभिरेवाध्येतव्यमिति । तमेवार्थन्द्रढयति-*ऐतरेयब्राह्मणेऽपीति। एतेन गृहस्थस्याप्यात्मदर्शनेऽधिकारित्वमुक्तम्। ननु सन्न्यस्य श्रवणमित्यनेन सन्न्यासोत्तरं श्रवणमुक्तन्तेन विरोध इत्यत आह-*सन्न्यस्येति। मूलोक्तम्भिक्षव इतिपदं व्याचष्टे-*भिक्षुत्वयोग्या इति। *अनयोः=पाराशर्येतिसूत्रविषययोः। *इष्यते। तदुक्तं "छन्दोब्राह्मणानि" (पा० सू० ४-२-६६) इति सूत्रभाष्ये-"कथम्पाराशरिणो भिक्षवः, शैलालिनो नटाः। अत्रापि तद्विषयता च" इति। एकदिक् पदे बहुव्रीहिरित्याभिप्रायेण व्याचष्टे-*एकदिग्रूपाधिकरणस्थमिति।

उपज्ञाते ( पा० ४-३-११५ )। तेनेति वर्त्तते। तृतीयासमर्थादुपज्ञात इत्यर्थे प्रत्ययो भवति। विनोपदेशं स्वयमेव यदभिसम्बुद्धन्तदुपज्ञातम्।

कुलालादिभ्यो (पा० सू० ४-३-११८)। इदङ्ग्रन्थेऽपि ॥

क्षुद्राभ्र (पा० सू० ४-३-११९)। पादपाच्छापवादः* । केचित्तु पदपंक्त्यवद्धं पठन्ति ।

तस्येदम् (पा० सू० ४-३-१२०)। अत्रेदमित्यनेन शेषभूतसर्वविशेषाणां *सामान्यविशेषरूपेण प्रत्ययार्थत्वं बोधयति। अत्र परोक्षत्वप्रत्यक्षत्वे न विवक्षिते। तेन प्रकृत्यर्थसम्बन्धिमात्ररूपेऽर्थेऽनेन प्रत्ययविधानम्। *अपत्यादीनान्तु न केनापि रूपेणेदमर्थता, शेषत्वाभावात्। भश्चेति। "यचि भम्"इति सूत्रानन्तरं रणीति वक्तव्यमित्यर्थः। तेनाकडारस्थत्वात्पदत्वबाधसिद्धिः। अग्निमिन्धे इति। *अन्तर्भावितण्यर्थोऽत्रेन्धिः। *सोऽप्याग्नीध्र इति। *अस्माच्छरणेऽर्थे च्छ एव। एतेनोत्तरेणाग्नीध्रीयं धिष्ण्यमिति व्याख्यातम्।

पत्त्रपूर्वा (पा० सू० ४-३-१२२ ( पत्त्रेत्यर्थग्रहणम्। एवमु*त्तरत्रापि, तदाह–अश्वरथस्येति। इदमपि रथाङ्ग एव।

---

कृते ग्रन्थे (पा० सू० ४-३-११६)। तेनेत्येव। तृतीयान्तात्कृत इत्यर्थे प्रत्ययो भवति, यः कृतः स ग्रन्थश्चेद्भवति। कृतम्=उत्पादितम्, यत्तु सिद्धम्=उपदेशं विनाऽपि ज्ञातं, तदुपज्ञातमित्यनयोर्भेदः। *छापवाद इति। "वृद्धाच्छः" (पा० सू० ४-२-११४) इति प्राप्तस्यापवादः।

तस्येदम् (पा० सू० ४-३-१२०)। *सामान्यविशेषरूपेणेति। विशेषरूपेण येषां शेषभूतानाम्प्रत्ययार्थत्वमुक्तन्तेषां प्रकृत्यर्थसम्बन्धित्वात्मकसामान्यरूपेणापि प्रत्ययार्थत्वमित्यर्थः। शेषभूतानामेव तेन प्रत्ययार्थत्वन्तेन यत्सिद्धन्तदाह–*अपत्यादीनामिति 'वहस्तुरणिट्च। सूत्रेण प्रत्यये सिद्धे इडर्थमुपसङ्ख्यानम्। वहधातोर्यस्तुस्तदन्तप्रकृतिकषष्ठ्यन्तादिदमर्थेऽण् प्रत्ययो भवति, तुस्तु इट् च भवति। तुरिति तृन्तृचोः सामान्यग्रहणम्। अयमिडलौकिके प्रक्रियावाक्ये ढत्वादीनामसिद्धत्वात्तेभ्यः पूर्वम्प्रवर्त्तते। अत एवाह–सांवहित्रमिति। अग्नीधः शरणे रण् भश्च। अग्नीच्छब्दाच्छरणेऽर्थे रण् प्रत्ययो भवति तस्मिन् पूर्वस्य भसंज्ञा भवति। अग्निमिन्धे इन्धयतीत्यर्थे क्विप्, तदाह–*अन्तरिति। अग्नीत्=होता। तस्य शरणं=गृहम्। गृहस्य स्थानत्वात्तत्साधारण्येनोक्तम्मूले स्थानमिति। *सोऽपीति। होताऽपीत्यर्थः। तात्स्थ्यमत्र लक्षणायां बीजम्। *अस्मात्=होतृपरादाग्नीध्रशब्दात्। समिधामाधाने षेण्यण्। आधानपदे करणे ल्युट्। समिधामिति कर्मणि षष्ठी।

पत्त्रपूर्वात् (पा० सू० ४-३-१२२)। रथादित्यनुवर्त्तते। एवञ्च पत्त्रपूर्वाद्रथादित्यर्थः। पत्त्रशब्दोऽत्र स्वरितत्वादर्थपरः। *उत्तरत्रापीति। "पत्त्राध्वर्यु-

वाह्य इति । अर्थनिर्देशोऽयमत्रैव* ।

द्वन्द्वाद्वुन् (पा० सू० ४-३-१२५) । *वैरे देवासुरेति वार्त्तिकपाठः । द्वन्द्वे इति तु लेखकप्रमादः । तथा पाठे मैथुनिकायामतिव्याप्तिः । भाष्येऽत्र सूत्रे वैर इत्येव पाठाच्च । द्वन्द्व इत्येतद्विशिष्टन्तु "शिशुक्रन्द" (पा० सू० ४-३-८८)इति सूत्रे भाष्ये पठ्यते । दैवासुरं राक्षोसुरमित्युदाह्रियते च । देवासुराद्यधिकृत्य कृतमाख्यानमित्यर्थः ॥

गोत्रच्च (पा० सू० ४-३-१२६) गोत्रमिह *लौकिकम् । क्षौद्रकमालवकमिति *गोत्रत्वारोपात्साधु । इदं खण्डिकादिसूत्रे भाष्ये स्पष्टम् । धर्माम्नायेति । आम्नायः=संप्रदायः, शास्त्रमित्यन्ये ।

सङ्घाङ्क ( पा० सू० ४ ३ -१२७ ) । सङ्घादय *इदमर्थविशेषणानि । गोत्रग्रहणानुवृत्तेरञादीनामत्र गोत्रप्रत्ययानां ग्रहणम् । अञंशे च लौकिकमेव गोत्रमृष्यपत्यरूपम् । *वुञोऽपवादोऽयम् । परम्परेति । यथा गवादिनिष्ठं चिह्नं गोद्वारा स्वामिना सम्बद्धम्* । साक्षादिति । यथा बिदानां स्थूणा ।

अण्वोक्ते इति । अण्संबद्धसङ्घादीनामनुवृत्तेरिति भावः । पक्षे इति । *"गोत्रचरणाद् वुञ्" (पा० सू० ४-३-१२६) इत्यस्योत्तरत्रानुवृत्त्या वाक्यभेदेन व्याख्यानसामर्थ्यात् "चरणात् धर्माम्नाययोः" इत्युक्तावपि सङ्घादिषु तत्प्राप्तिरिति भावः । अन्ये तु पक्षे छमिच्छन्ति । लक्षणे क्लीबतेति । *उत्सर्गोऽयं लक्षणे बैदी स्थूणेति भाष्यप्रयोगात् ।

न दण्डमा ( पा० सू० ४-३-१३० ) दण्डमाणवेसादि प्रसया-

---

परिषदश्च" ( पा० सू० ४-३-१२३ ) इति सूत्रेऽपि । अध्वर्युशब्दे च स्वरूपग्रहणं "स्वं रूपम्" (पा० सू० १-१-६८) इति शास्त्रात् । एवं परिषच्छब्देऽपि । *अत्रैव=पत्राध्वर्युपरिषदितिसूत्रे ।

द्वन्द्वाद् वुन् (पा० सू० ४-३-१२५) । काचित्कपाठं खण्डयति-*वैरे देवासुरेति । *लौकिकम्=प्रवराध्यायप्रसिद्धम् । नन्वेवं क्षौद्रकमालवकमित्यस्यासिद्धिरत आह—*गोत्रत्वारोपादिति । *इदमर्थविशेषणानीति । विशेषार्थत्वाद्विशेषणत्वन्याय्यमेव । *वुञोऽपवाद इति । "गोत्रचरणात्" ( पा० सू० ४-३-१२६ ) इति प्राप्तस्येति शेषः । *सम्बद्धमिति । स्वाश्रयस्वामित्वसम्बन्धेन । साक्षात्सम्बन्धः=स्वस्वामिभाव एव । ननु चरणाद्धर्माम्नाययोरित्युक्तत्वेन प्रोक्तार्थे कथम्प्रत्यय इत्यत आह-*गोत्रचरणेति । *उत्सर्गोऽयमिति ।

र्थविशेषणम् । दाक्षा इति । *दाक्षीणामिमे इत्यर्थः ।

गोत्रेति । तेनायं वुञो निषेधः । रैवतिकादयः *सर्वे गोत्रप्रत्ययान्ता इत्याशयेनाह—वुञोऽपवाद इति । निपातनादिति । अन्यथेञ् स्यात्* । हास्तिपदे हस्तिन इव पादौ यस्येत्यर्थक*हस्तिपादशब्दादपत्येऽणूपद्भावौ निपातनात् । यस्येति लोपस्यासिद्धत्वेन "पादः पत्" ( पा० सू० ६–४–१३० ) इत्यस्याप्राप्तेः ।

अथर्वणा प्रोक्तमधीयान आथर्वणिकः* । ततोऽणि इकस्य लोपे "अन्" (पा० सू० ६–४–१६७) इति प्रकृतिभावे आथर्वणः ॥

इति शैषिकाः

आश्म इति । एवं चर्मणो विकारः कोशश्चार्मः । "चर्मणः कोशे" इत्युपसंख्यानाट्टिलोपः ।

अवयवे च ( पा० सू० ४–३–१३५ ) ॥ प्राण्यादिषु स्वरूपविशेषपर्यायाणां ग्रहणं, व्याख्यानात् । अयमधिकारः । चार्द्धिकारे इति । तेन वक्ष्यमाणाः प्रत्ययाः प्राण्यादिभ्यस्त्रिभ्योऽर्थद्वये ऽन्येभ्यस्तु विकार एवेति बोद्धव्यम् । मयूरो लघावन्त इति मध्योदात्तः* ।

बिल्वादिभ्यो ( पा० सू० ४–३–१३६ ) ॥ अत्र गणे कोपधपाठो मयड्बाधनार्थः । *अण्ग्रहणं तु ङीषन्तपाटलीशब्दादनुदात्तादिलक्षणाञो-बाधकमयड्बाधेनाणर्थम् । एभ्यो यथाविहितमित्युच्यमानेऽञेव स्यात् ।

---

लक्षणशब्दबोध्यार्थस्य क्लीवत्वात्तदर्थकप्रत्ययान्तस्यापि क्लीबत्वमित्युत्सर्ग इत्यर्थः । *दाक्षीणामिम इति । सङ्घादय इत्यर्थः । इञश्चेत्यण् । *सर्वे गोत्रप्रत्ययान्ताः=रेवत्यादिभ्यष्ठगिति ठगन्ताः । *इञ् स्यादिति । कुपिञ्जलशब्दादपत्येऽर्थे इञ् स्यादित्यर्थः । *हस्तिपादशब्दादिति । अहस्त्यादिभ्य इतिनिषेधात् "पादस्य लोपः ( पा० सू० ५–४–१३८ ) इति लोपो न । *आथर्वणिक इति अथर्वणा प्रोक्तो वेदोऽभेदोपचारादथर्वा । वसन्तादित्वाट्ठक् । "दाण्डिनायन" ( पा० सू० ६–४–१७४ ) इतिनिपातनाट्टिलोपाभावः । ततोऽणि प्रकृतसूत्रेणैवेकशब्दलोपे प्रकृतिभाव इत्यर्थः ॥

॥ इति शैषिकाः ॥

तस्य विकारः ( पा० सू० ४–३–१३४ ) । षष्ठीसमर्थाद्विकाररूपेऽर्थे प्रत्ययो भवति । अन्निति प्रकृतिभावबाधनायाह मूले–अश्मनो विकार इति । *मध्योदात्त इति । एवञ्च शेषनिघातेनानुदात्तादिरयमित्यर्थः । नन्वारम्भसामर्थ्या-

अत्रोऽपवाद इति । *उवर्णान्तत्वादिप्रयुक्तस्ये

दैवदारवमिति । *देवदारुः पीतद्र्वर्थत्वादाद्युदात्तः ।

दाधित्थमिति । दधिन तिष्ठतीति "सुपिस्थः"(पा० सू० ३-२-४) इति के उपपदसमासे पृषोदरादित्वात्सस्य तः । कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तोऽयम्* ।

पलाशादि (पा० सू० ४-३-१४१) ॥ *खदिरशब्दोऽत्र पठ्यते ।

शम्याः (पा० सू० ४-३-१४२) । *ष्लञत्र टित्प्रत्ययः "ञितश्च तत्प्रत्ययात्" (पा० सू० ४-३-१५५) इति सूत्रभाष्ये विकारविकारेऽपि *तद्विकारत्वमारोप्य तत्सूत्रं प्रत्याख्यातम् । *अस्य षित्त्वे हि तत्प्रत्याख्याने षित्त्वान्ङीष्* । आरम्भे त्वञन्तत्वान्ङीबिति *फलभेदः स्यात् ।

---

देवाणि सिद्धेऽण्ग्रहणं व्यर्थमत आह-*अण्ग्रहणन्त्विति । *उवर्णान्तत्वादीति । अत्रादिना तित्तिडीकशब्दात् "अनुदात्तादेश्च"(पा० सू० ४-३-१४०) इतिप्राप्त इत्यर्थः । ननु दैवदारवमिति "ओरञ्" ( पा० सू० ४-३-१३९ ) इत्यस्योदाहरणत्वेनोपात्तन्तत्रापि "अनुदात्तादेश्च" ( पा० सू० ४-३-१४० ) इत्येव कुतो नोक्तमत आह-*देवदारुरिति । "पीतद्र्वर्थानाम्" इतिफिट्सूत्रेणाद्युदात्तः । *अन्तोदात्तोऽयमिति । तथा च तत्सन्नियोगशिष्टशेषनिघातेनानुदात्तत्वेऽञ् ।

पलाशादिभ्यो वा (पा० सू० ४-३-१४१ ) । पलाशादिभ्यः प्रातिपदिकेभ्यः षष्ठ्यन्तेभ्यः विकारावयवयोरर्थयोर्वाऽञ् भवति । उभयत्र विभाषेयम् । पलाशशब्दस्य घृतादित्वादन्तोदात्तत्वेनानुदात्तादेश्चेतिप्राप्ते खदिरशब्दस्य किरच्प्रत्ययान्तत्वेनाप्राप्तेऽस्यारम्भादित्याशयेनाह-*खदिरशब्दोऽत्र पठ्यत इति ।

शम्याः ष्लञ् ( पा० सू० ४-३-१४२ ) । शमीशब्दात् ष्लञ्प्रत्ययो भवति । षित्त्वफलम्मूले शामीली स्रुगिति । माधवसम्मत्याऽऽह-*ष्लञत्रेति । *तद्विकारत्वमारोप्येति । तन्नाशोत्तरकालोत्पत्तिको हि तद्विकारः । शमीनाशेन यदुत्पद्यते तद्धि शामीलम् । एतत्सत्तायां शमी नास्ति । शामीलनाशेन च यदुत्पद्यते भस्मादि तदुत्पत्तौ शमीनाशस्य न कारणत्वमन्यथा सिद्धत्वादिति "ञितश्च तत्प्रत्ययात्" ( पा० सू० ४-३-१५५ ) इति सूत्रारम्भवादिनो भावः । भाष्यरीत्या तु शामीलविकारोत्पत्तावपि शमीनाशस्य प्रयोजकत्वात्तन्नाशप्रयोज्योत्पत्तिकत्वमस्त्येवेति "ञितश्च" ( पा० सू० ४-३-१५५ ) इतिसूत्रम्प्रत्याख्यातम् । *अस्य=ष्लञः । *ङीषिति । तथा चान्तोदात्तः शामीलीशब्दः । *फलभेदः स्यादिति । प्रत्ययस्य टित्त्वे तु टित्त्वान्ङीप्यनुदात्तान्तत्वमेवेति न फलभेद इति भावः । नन्वौष्ट्रिका उपानत्, कांस्या स्थालीत्यत्र "ञितश्च" ( पा० सू० ४-३-१५५ ) इतिसूत्रारम्भे वुञन्तात्यञन्ताच्चाञि ङीप्स्या-

*उष्ट्रस्यावयव औष्ट्रकं चर्म । उष्ट्राद् वुञ् । कंसीयस्य विकारः कांस्यं "कंसीयपरशव्ययोः" ( पा० सू० ४-३-१६८ ) इति वुञ्, तयोर्विकारे औष्ट्रिकोपानत् कांस्या स्थालीत्यादौ सूत्रारम्भेऽप्यजादिपाठाद्वद्धिरेवेति न फलभेदः ।

आश्मनमिति । अश्मनोऽवयवरूपमित्यर्थः । विकारे तु टिलोपः स्यात् । अधिकारादेवार्थलाभे सिद्धे एतयोरिति वचनं पुनर्विधानबोधनद्वारा प्राणीत्यपवादविषयेऽपि पक्षे मयडर्थम् । तेन *बैल्वं बैल्वमयमिति सिद्धम् । मुद्गो घृतादित्वादन्तोदात्तः* कार्पासो ङीषन्तत्वात् ।

नित्यं वृद्ध ( पा० सू० ४-३-१४४ ) ॥ इह मयडिति भाषाया-मित्यादि चानुवर्तते । आरम्भसामर्थ्यादेवास्य नित्यत्वे सिद्धे नित्यग्रहणं क्वचिदन्यत्रापि नित्यमयड्विधानार्थमित्याशयेनाह—एकाच इति । शरादिषु मृच्छब्दपाठस्त्वस्या*नित्यत्वबोधनार्थः । वेदे "मोषुवरुणमृन्मयं गृहम्" इत्यादिषु प्राचुर्ये एव मयट् ।

गोश्च ( पा० सू० ४-३-१४५ ) । गोभुक्ताहारविकारे गोविकारत्वमारोप्य *प्रकरणाबाधोऽत्रेऽति बोद्धव्यम् ।

पुरोडाशे=पुरोडाशरूपे विकारे इत्यर्थः । *यावके विकाराऽणन्तात् "यावादिभ्यः" ( पा० सू० ५-४-२९ ) इति स्वार्थे कन् ।

तालादिभ्यो (पा०सू० ४-३-१५२) ॥ अणुग्रहणं बाधकबाधनार्थम् । तेन विकाराद्यर्थाञन्ते तालादिगणपठिते *बार्हिणशब्दे "नित्यं वृद्ध" ( पा० सू० ४-३-१४४ )इति मयट् न । वचनं तु "ञितश्च तत्प्रत्ययात्" (पा०सू० ४-३-१५५)इत्यञो बाधेन चरितार्थम् । तपनीयशब्दोऽनुदात्तादिः, शुकवकौ "प्राणिनाङ्कुपूर्वम्" (फि० सू० पा० २) इत्याद्युदात्तौ* ।

---

दिति फलभेदस्य स्पष्टतया कथम्प्रत्याख्यानमत आह—*उष्ट्रस्येत्यादि । *बैल्वं बैल्वमयमिति । अत्र बैल्वस्य विकार इत्यर्थविवक्षायां वृद्धत्वेऽपि विकल्पेन मयट् । एतच्च "ञितश्च" (पा० सू० ४-३-१५५) इतिसूत्रारम्भवादिमते । *अन्तोदात्त इति । तथा चानुदात्तादित्वादञ् । *अस्य=एकाच इत्यस्य । *प्रकरणाबाधं इति । विकारप्रकरणस्याबाध इत्यर्थः । यावकमित्यस्य संज्ञाशब्दःवादवयवार्थाभावेऽपि कथञ्चित्तदुपपत्तिरित्याशयेनाह—*यावक इति । *बार्हिणशब्द इति । मयूरवाचकाद्बर्हिशब्दात् "प्राणिरजतादिभ्योऽञ्" (पा० सू० ४-३-१५४) इत्यञ् । *आद्युदात्ताविति । एतेन "अनुदात्तादेश्च" ( पा० सू० ४-३-१४० )

*बैल्वमयमिति । *तस्यावयव इत्यर्थः । विकारे त्वस्मादनभिधानान्मयट् नेति भाष्यम्* ।

क्रीतवत्प (पा० सू० ४-३-१५६) ॥ *अत्र परिमाणशब्देन परिच्छेदकमात्रं व्याख्यानात्* । तेन संख्याया अपि ग्रहणम् । *अत "आर्हात्" (पा० सू० ६-१-१९) इति सूत्रे "अत्र सूत्रे संख्याया इति वक्तव्यम्" इत्युक्तम् । नैष्किके "असमासे निष्कादिभ्यः" इति ठक् । शतिके शताच्च ठन्यतौ ।

अणञाविति । *उमेति तृणधान्यानामित्याद्युदात्तम्, ऊर्णेत्यन्तोदात्तमिति भावः ।

ऐणे प्राण्यञ् ।

गोपय ( पा० सू० ४-३-१६० ) ॥ गोग्रहणमेकाचो नित्यमि-

---

इत्यनेन गतार्थता नेति सूचितम् । *बैल्वमयमितीति । "बिल्वादिभ्योऽण् ( पा० सू० ४-३-१३६ ) इत्यणन्तान्मयट् । भाष्यरीत्याह—*तस्यावयव इत्यर्थ इति । ननु बैल्वस्य विकार इत्यर्थोऽपि कुतो नेत्यत आह-*विकार इति । *भाष्यमिति । प्रकृतसूत्रभाष्ये विकारावयवार्थकप्रत्ययान्ताद्विकारावयवार्थे मयड्व्यावृत्त्यर्थं "ञितश्च तत्"(पा०सू० ४-३-१५५) इति सूत्रस्य प्रयोजनमभिधाय विकारावयवयोः प्रकृतिशब्दस्य कपोतादेरारोपेण 'समुदाये दृष्टाः शब्दा अवयवेष्वपि वर्त्तन्ते' इतिन्यायेन वा प्रवृत्तिं स्वीकृत्य प्रकृतिशब्दस्यावृद्धत्वात्तस्मान्मयड्भावस्य सिद्धिमाश्रित्य सूत्रम्प्रत्याख्यायोक्तं "नैतद्विवदामहेऽवयवे समुदायशब्दो नास्तीति विकारे वा प्रकृतिशब्द इति । किन्तर्हि विकारावयवशब्दोऽपि त्वस्ति तत उत्पत्तिः प्राप्नोति" इत्येवमाशङ्क्य "विकारावयवशब्दात्प्रसङ्ग इति चेत् न तेनानभिधानात् । विकारावयवशब्दात्प्रसङ्ग इति चेत् । तन्न । किङ्कारणम् । तेनानभिधानात" इत्युक्तम् । अत्र कैयटः-कापोतमयमिति विकारावयवयोः प्रयोगाभावादित्यर्थः । प्रयोगाभावादित्यस्य मयटः प्रयोगेण तदर्थानवगमादित्यर्थः । अयम्भावः—प्रकृतिविकारविकारस्य प्रकृतिविकारत्वात्प्रकृतिवाचकादेव विकारार्थकप्रत्ययेन तस्यार्थस्य बोधसम्भवेन न बैल्वमयमित्यनेन विकारविकारप्रत्ययः, किन्तु विकारावयवस्येति । परिमाणशब्देन 'परिमाणन्तु सर्वतः' इत्यनेनारोहपरिणाहाभ्यां येन मीयते तस्यार्थस्य प्रतिपादनाद्वक्ष्यमाणस्य शत्यः शतिक इतिप्रयोगस्यानुपपत्तिरत आह-*अत्र परिमाणशब्देनेति । *व्याख्यानादिति । "आर्हात्" ( पा० सू० ६-१-१९ ) इतिसूत्रस्थभाष्यसम्मतव्याख्यानादित्यर्थः । व्याख्यानमेव स्पष्टयति-*अत एवेति । मूले वुञभावे यथाक्रममणञावित्युक्तन्तदुपपादयति-*उमेतीति ।

गोपयसोः ( पा० सू० ४-३-१६० ) । अत्र गोशब्दस्तद्भक्षिततृणादि-

ति मयड्बाधनार्थम् । *द्रव्यशब्दो गुणैर्द्रूयते इत्यर्थे "अचो यत्" (पा० सू० ३-१-९७) इति यत्प्रत्ययान्तो गुणाश्रये भव्ये वस्तुनि च ।

माने (पा० सू० ४-३-१६२) । मानं=प्रस्थादि ।

आमलकमिति । मयटो लुकि "लुक्तद्धित" (पा० सू० १-२-४९) इति ङीपो लुक् । *लुका लुप्तत्वात्स्थानिवत्त्वाभावेन न "यस्य" (पा० सू० ६-४-१४८) इति लोपः ।

न्यग्रोधस्य च (पा० सू० ७-३-५) । केवलस्येति किम् । न्यग्रोधमूलाः शालयः । फलपाकेति । फलपाकेन ये शुष्यन्ति व्रीह्याद्यस्तद्वाचिनामित्यर्थः । लुप इति शेषः । व्रीहिमुद्गौ बिल्वादी । पाटलिशब्दश्च तत्र* । पुष्पाणीति । *भाष्ये मूलानीति पाठः । साल्वस्य वृद्धत्वेऽपि*वृत्तिप्रामाण्यात्प्लक्षादित्वं बिल्वादित्वं वा बोद्धव्यम् ॥

कंसीयप (पा० सू० ४-३-१६८) । अत्र यथासंख्यम् । लुक्शब्देन विधानान्न प्रकृतेर्लोपः । प्रातिपदिकादित्यधिकाराच्च नौणादिकयोः । प्रातिपदिकात्परयोर्लुगित्यर्थात् *तेषामव्युत्पन्नत्वाच्च । यञञोस्तु न लुक् । विधानसामर्थ्यात् । *एककालप्रतीतानामुद्देश्यविधेयभावासंभवाच्च । वाक्यभेदे मानाभावात् (च) । कंसीयपरशव्ययोरिति षष्ठीनि-

---

परः । द्रव्यशब्दस्य व्युत्पत्तिर्यद्यपि मूलोक्तैव तथाप्ययं रूढ इत्याशयेनाह-*द्रव्यशब्द इति । स्त्रीप्रत्ययलुकस्तद्धितलुङ्निमित्तकत्वेन] तद्धितलुको- बोद्धपरत्वात् "अचः परस्मिन्" (पा० सू० १-१-५७) इति स्थानिवत्त्वमाशङ्क्याह-*लुका लुप्तत्वादिति ।

न्यग्रोधस्य च (पा० सू० ७-३-५) । न्यग्रोधशब्दो "लघावन्ते" (फि० सू० पा० २) इति मध्योदात्तः । इदमव्युत्पन्नप्रातिपदिकमिति अस्य यकारो न-पदान्ते इति सूत्रारम्भः । यदि तु न्यक् रोहतीतिव्युत्पत्तिमात्रमत्रापीत्युच्यते तदा न्यग्रोधस्य चेत्केवलस्यैवेति नियमार्थम् । *तत्र=बिल्वादिगणे । एवञ्च पाटलानि पुष्पाणीत्यत्र प्राप्तोऽपि लुप् । *भाष्ये मूलानीति पाठ इति । एवञ्च पुष्पेषु मल्लिका करवीरमित्युदाहरणं युक्तम् । मूले तु पाटलानीति *वृत्तिप्रामाण्यादिति । तत्र हि बहुलग्रहणस्य प्रयोजननिरूपणावसरे "न च भवति पाटलानि पुष्पाणि, साल्वानि मूलानि" इत्युक्तम् । *तेषाम्-उणादीनाम् । यञञोर्लुगभावे हेत्वन्तरमाह-*एककाल इति । उद्देश्यविधेयभावावगाहिशाब्दबोधे उद्देश्यतावच्छेदकप्रकारकज्ञानस्य पूर्वकालिकत्वनियमात् । *वैयर्थ्यापत्तेरिति ।

देशस्य वैयर्थ्यापत्तेश्च । तदाह-छयतोरिति ।

इति प्राग्दीव्यतीयः ॥

तदाहेतीति । "आहौ प्रभृतादिभ्यः" इति वार्तिकारम्भसामर्थ्यान्माशब्देति समुदायादयं प्रत्ययः । *तस्य च द्वितीयान्तत्वासंभवात्कर्ममात्रं परामृश्यते । तत्र पदसमुदायार्थ इतिना परामृश्यमानः स्फुटतया वचनक्रियायां कर्म भवतीत्याशयेनाह-माशब्दं कार्षीरिति य आहेति । *वृत्तौ धात्वर्थोऽन्तर्भूत इति बोद्धव्यम् । माशब्देति निर्विभक्तिकादयं प्रत्ययः । माशब्दः कारीति पाठे न क्रियतामित्यर्थः ।

स्वागता ( पा० सू० ७-४-७ )॥ "न कर्म" ( पा० सू० ७-४-६ ) इत्यतो नञनुवर्त्तते । स्वपताविति । स्वशब्दस्य द्वारादित्वादैचः प्राप्तिः । वस्तुतो*ऽत्रास्य पाठो व्यर्थः । स्वशब्दादेश्चेत्स्वग्रामस्वाध्याययोरेवेति नियमेन स्वाराज्यादाविवात्राप्यैचोऽप्राप्तेः । आहौ पृच्छतावित्यादौ धात्वर्थनिर्देशे इक्श्तिपौ ॥

तेन दीव्यति ( पा० सू० ४-४-२ ) ॥ तेनेति करणे तृतीया । दीव्यत्यादौ कर्तुरुक्तेस्तत्साहचर्याज्जितयोगेऽपि सैव* । *अत्र तिङन्ते लौकिकप्रयोगे क्रियायाः प्राधान्येऽपि वृत्तौ तद्विग्रहे सूत्रे च कर्तृप्राधान्यमित्युक्तम्* ॥

संस्कृतम् ( पा० सू० ४-४-३ )॥ सत उत्कर्षाधानं संस्कारः । पर्पिकीति । षित्वान् ङीष् । *इह "पादः पच्च" इति गणसूत्रमनार्षम् । इके चरतौ पद्भावोपसंख्यानात् । इत्वादेरिति । इति परतो *यत्किंचिन्नि-

---

प्रातिपदिकादित्यनेनान्वयाय पञ्चमीनिर्देशस्य कर्तुमुचितत्वादिति भावः ।

## ॥ इति विकारार्थकाः ॥

## ॥ प्राग्दीव्यतीयाः समाप्ताः ॥

*तस्य चेति । समुदायस्य चेत्यर्थः । *वृत्ताविति । माशब्दिक इत्यादिवृत्तावित्यर्थः ।

*अत्रास्येति । स्वागतादिगणे ।

*सैवेति । करणतृतीयैवेत्यर्थः । *अत्र=दीव्यतीत्यादौ । *इत्युक्तमिति । आख्यातन्तद्धितार्थस्येतिन्यायात् ।

*इह=पर्पादिगणे । सूत्रोपात्तत्वादिकूनिमित्तकेतिभ्रमवारणायाह-*य-

मित्तक ऐच् न । तेन श्वाभस्त्रेरिदं श्वाभस्त्रमित्येव । ननु द्वारादौ श्वन्-शब्दपाठेऽपि तदादौ कथं प्राप्तिरत आह–तदादीति । तत्फलं *शौवहानं नगरमिति । निषेधविकल्पे विधिविकल्पस्य फलितत्वादाह–ऐज्वेति । श्वापदस्येति । *"अभिधानलक्षणाः कृत्ताद्धितसमासाः" इत्युक्तेरनभिधानाच्छाभावेऽण् । एवं शौवादंष्ट्रेऽपीत्येके । अन्ये तु श्वपुच्छवत् दीर्घाभावेऽणमाहुः । श्वापदिके पूर्वविप्रतिषेधेन नित्य एव निषेधः* ॥

त्रेर्मप् ( पा० सू० ४–४–२० ) ॥ *ड्वितः क्त्रिरेव गृह्यते न तु संख्यावाची त्रिशब्दो व्याख्यानात* । अत्र *त्रेरिति भिन्नं वाक्यं त्रिप्रत्ययान्तान्नित्यं निर्वृत्ते मबित्यर्थः । ततो नित्यं योऽयं निर्वृत्ते मप् स *त्र्यन्ताद्भवत्येवेत्यर्थः । तेन निर्वृत्ते वाक्यं न, अन्यत्र च* त्र्यन्तस्य प्रयोगो न । तदुक्तं भाष्ये–"त्र्यन्तं मब्विषयमेव यथा स्यात् केवलस्य प्रयोगो मा-भूत्" इति । *एवञ्चाद्यवाक्येऽपि वेत्यस्यासंबन्ध एव । तृतीयान्तादिति ।

---

त्किञ्चिन्निमित्तक इति । एतदेवेति मूलस्य "श्वादेः" (पा० सू० ७–३–८) इतिसूत्रमेवेत्यर्थः । *शौवहानमिति । श्वहानेरिदमित्यर्थः । ननु श्वापदशब्दाद्वृद्धाच्छः स्यादत आह–*अभिधानेति । *निषेध इति । इकारादावितिवचनेन ।

त्रेर्मन्नित्यम् ( पा० सू० ४–४–२० ) । "तेन दीव्यति" ( पा० सू० ४–४–२० ) इत्यतस्तेनेति वर्त्तते । त्रिप्रत्ययान्तात्तृतीयान्तान्नित्यम्माबितिवाक्यार्थः । अत्र वाक्यनिवृत्त्यर्थन्नित्यग्रहणम् । अत एव पाकेन निर्वृत्तमिति घञन्तेन क्रिप्रत्ययान्तसमानार्थकेन विग्रहं कुर्वन्ति । ननु त्रिशब्देन सङ्ख्यावाचकस्य त्रिशब्दस्य क्त्रिप्रत्ययस्य च ग्रहणम्प्राप्नोति । न च त्रयाणामित्यत्र मप्प्रत्ययादर्शनेन सङ्ख्याया न ग्रहणमिति वाच्यम् । तृतीयान्तत्वे एव मब्विषयत्वप्रतिपादनादत आह—*ड्वितः क्त्रिरेवेति । *व्याख्यानादिति । वक्ष्यमाणभाष्यसम्मतव्याख्यानादित्यर्थः । *त्रेरिति भिन्नमिति । त्रेर्मबिति भिन्नमित्यर्थः । त्रिप्रत्ययान्तप्रकृतिकतृतीयान्तस्य वाक्ये प्रयोगोऽनेनावारितोऽत आह—*ततो नित्यमिति । *त्र्यन्ताद्भवत्येवेति । अत्र तेनेत्यस्यासम्बन्धस्तेनेत्येतत्सम्बन्धेनेदन्नित्यं मब्विधायकमिति तु न । नित्यविकल्पयोर्विषयव्यवस्थानापत्तेः । अयं यो मप् स त्र्यन्ताद्भवत्येवेति वाक्येन त्रिशब्देन सङ्ख्याया न ग्रहणम् । "णिजान्त्रयाणाम्" ( पा० सू० ७–४–७५ ) इति निर्देशात् । न च निर्वृत्तार्थे एव नित्यत्वबोधनेन त्रयाणामितिनिर्देशस्योपपत्तिरिति वाच्यम् । योगविभागस्यैवं सति वैयर्थ्यापत्तेरिति भावः । अत एवाह—*अन्यत्र चेति । *एवञ्च=नित्यमिति वाक्येन त्र्यन्तस्य मब्विषयत्वबोधने च । अत एव पूर्वन्त्रेरित्यस्य व्याख्यानावसरे त्रिप्रत्ययान्तान्नित्यमिति व्याख्यातम् । केचित्तु भावार्थादिमप् ।

वृत्तिस्त्वलौकिकाभिप्राया तदर्थकादित्यर्थका वेति दिक् । पाकिममिति ।
*कुट्टिमाद्यप्येवम् ।

व्यञ्जनैरु ( पा० सू० ४-४-२६ ) ॥ सेचनेन मृदूकरणमुप-
सेकः । *अन्नादिरसव्यञ्जकवाचकात्तृतीयान्तादुपसिक्तेऽर्थे प्रत्ययः ।

क्रियाविशेषणत्वादिति । *अकर्मकधातुस्थलेऽपि फलव्या-
पारयोर्धात्वर्थत्वेन *फलसामानाधिकरण्याद् द्वितीयेति भावः । *क्रिया-
विशेषणत्वान्नपुंसकत्वं प्रथमान्तत्वञ्च युक्तम् ।

*द्विगुणार्थमिति । औपचारिकादेवायं प्रत्ययोऽभिधानस्वाभा-

---

निर्वृत्त इत्यनुवर्त्तते । निर्वृत्त इत्यर्थे भावार्थकप्रत्ययान्तादिमप् । ततस्त्रेः । भावा-
र्थादित्येव । नियमार्थमिदम् । भावार्थे यत् त्रिशब्दान्तं तत इमप्प्रत्ययो भवत्ये-
वेति । तेन वाक्यस्य व्यावृत्तिः सिद्धैव । ततो नित्यमिति । अत्र निर्वृत्तमित्य-
स्यासम्बन्धः । त्रिप्रत्ययान्तान्नित्यमिमप् । तेनान्यत्रापि त्रिप्रत्ययान्तस्य स्वात-
न्त्र्येण प्रयोगो नेत्यनेन बोध्यते । एवञ्च मप्प्रत्ययो न विधेय इत्याहुः । *कुट्टि-
माद्यप्येवमिति । इमबन्तम् । "कुट्टिमोऽस्त्री निबद्धा भूः" इति यद्यपि कोशे उक्त-
न्तथापि कुट्टिमा भूमिः सेकिमोऽसिरितिभाष्यप्रामाण्यात्कुट्टिमशब्दः स्त्रीलि-
ङ्गोऽपि ।

व्यञ्जनैरुपसिक्ते ( पा० सू० ४-४-२६ ) । व्यज्यतेऽनेनेति व्युत्पत्त्या
करणल्युडन्तो व्यञ्जनशब्द इत्यभिप्रायेणाह—*अन्नादिरसेति । उपसिक्तम्=ए-
कीभूतम् । न च यदुपसिक्तन्तत्संसृष्टमिति संसृष्टमित्येव सिद्धे उपसिक्त इत्य-
स्य वैयर्थ्यमिति वाच्यम् । स्थाल्यामपि सूपादिना संसृष्टेयमितिव्यवहारादुप-
सिक्तस्य ततो भेदात् ।

ननु "तत्प्रत्यनु" ( पा० सू० ४-४—२८ ) इतिसूत्रे वर्त्तत इत्यस्यानु-
वृत्तेर्वर्त्तनरूपेऽर्थे एव प्रत्ययो वाच्यः । वृत्धातुस्त्वकर्मक इति कथमत्र कर्म-
सामानाधिकरण्यमत आह—*अकर्मकेति । *फलसामानाधिकरण्यादिति ।
अभेदेन फलविशेषणत्वादित्यर्थः । फलस्य व्यपदेशिवद्भावेन फलाश्रयत्वात्क-
र्मत्वम् । अकर्मकत्वव्यवहारस्तु बहिर्भूतकर्मान्वयायोग्यत्वात् । अस्य कर्मत्वे च
तदिति निर्देश एव प्रमाणम् । वस्तुतोऽस्य प्रथमान्तत्वेऽप्युपपत्तिरित्याशयेना-
ह—*क्रियेत्यादि ।

परिमुखञ्च ( पा० सू० ४—४-२९ ) । "अपपरी वर्जने" ( पा० सू०
१-४-८८ ) इति कर्मप्रवचनीयत्वम् । "पञ्चम्यपाङ्परिभिः" इति समासः । मुखं
वर्जयित्वेत्यर्थः ।

प्रयच्छति गर्ह्यम् ( पा० सू० ४—४—३० ) । द्वितीयान्तात्प्रयच्छती-
त्यस्मिन्नर्थे प्रत्ययो भवति यद् द्वितीयान्तपदबोध्यन्तद्गर्ह्यञ्चेत् । *द्विगुणार्थमि-

व्यात्* । वृद्धेरिति । वृद्ध्यर्थे द्रव्ये वृद्धिशब्द औपचारिकः ।

निपात्यत इति । "संख्यायास्तत्पुरुषस्य" इति वार्त्तिकं त्व*-व्ययादावेवेति भावः ।

दर्दुरो वाद्य*भाण्डविशेषः ।

परिपन्थम् ( पा० सू० ४-४-३६ ) ॥ *अव्ययीभावो मयूर-व्यंसकादित्वात्तत्पुरुषो वा । अत एव निपातनात्पन्थादेशः । तिष्ठति-क्रियाविशेषणत्वाद् द्वितीया । चो भिन्नक्रमस्तदाह*—हन्ति चेत्यर्थे इति । माथः=पन्थाः* ।

आक्रन्दिकः=आर्त्तत्राता ।

प्रतिकण्ठमिति । *अव्ययीभावादेवेष्यते ।

अधर्मो=धर्मविरोधि*गुणविशेषजनकं कर्म । प्रतिपथम् इत्य-व्ययीभावः* । "ऋक्पूः" ( पा० सू० ५-४-७४ ) इति समासान्तः । वृत्तौ त्वेतद्विहितप्रत्ययो निदुक्तः* ॥

---

तीति । अनेनोपचारे बीजनिरूपणं कृतम् । *अभिधानस्वाभाव्यादिति । यद्यौ-पचारिकात्प्रत्ययस्तदा गर्ह्यत्वप्रतीतिरन्यथा द्विगुणम्प्रयच्छतीत्युक्ते यत्र क्रमेण न्याय्यवृद्ध्योत्तमर्णेनाधमर्णाय तत्तद्द्रव्यं द्विगुणताम्प्राप्तन्तत्रापि द्विगुणं प्रयच्छ-तीति व्यवहारो भवति । न च तत्र गर्ह्यत्वमस्ति हिरण्यवृद्धेर्द्वैगुण्येऽपि दीय-मानत्वस्य शास्त्रसिद्धत्वादिति भावः ।

*अव्ययादावेवेति । अव्ययपूर्वपदकत्व एवेत्यर्थः ।

उञ्छति ( पा० सू० ४-४—३२ ) । तदित्येव । द्वितीयासमर्थादुञ्छ-तीत्यर्थे प्रत्ययो भवति । उञ्छनमत्र भूपतितस्यैकैकस्य ग्रहणम् ।

*भाण्डविशेष इति । एवञ्च दार्दुरिकः कुलाल एव । प्रसिद्धत्वात् ।

*अव्ययीभाव इति । पन्थानं वर्जयित्वेत्यर्थकम् । *तदाहेति । चकार-स्य भिन्नक्रमत्वे तिष्ठतीत्येतदनन्तरन्तद्योजनया "पक्षिमत्स्य" ( पा० सू० ४-४-३५ ) इतिपूर्वसूत्रस्थस्य हन्तीत्यस्यार्थस्य समुच्चय इति भावः । माथपदार्थमा-ह—*पन्था इति । 'मन्थ विलोडने' इति धातोः कर्मणि घञ् । मथ्यते गन्तृभिर्य इति विग्रहः ।

*अव्ययीभावेति । स च प्रकृते कण्ठङ्कण्ठमित्यर्थे । *गुणविशेषः=दुः-खम् । चरणमत्रासेवा, न तु करणमात्रम् । तेन य आधर्मिकस्तस्य कदाचि-द्धर्मफलकप्रवृत्तौ धार्मिक इति न प्रयोगः । *अव्ययीभाव इति । वीप्सायामि-त्यादिः । *निदुक्त इति । तेनादिवृद्धिरहितमुदाहरणं युक्तम् । समथायशब्द-

समवायान्सम (पा० सू० ४-४-४३) ॥ *बहुवचनादर्थनिर्देशोऽयं, तदाह-सामूहिक इति ॥

तस्य धर्म्यम् (पा० सू० ४-४-४७) ॥ *धर्मः=अनुवृत्त आचारस्ततोऽनपेतमित्यर्थः

पण्यम्=हट्टे विक्रयाय प्रसारितम्* ।

किसरादि तालव्यमध्यपाठो वृत्तौ* ।

शलालुके इसुसुक्तान्तात्कः ।

शिल्पम् ( पा० सू० ४-४-५५ ) ॥ अभ्यासपूर्वं क्रियासु कौशलं=शिल्पम् ।

प्रहरणम्=आयुधम्* । धानुष्के "इसुस्" ( पा० सू० ७-३-५१ ) इति कादेशे "इणः षः" ( पा० सू० ८-३-३९ ) इति षः ॥

शक्तिय ( पा० सू० ४-४-५९ ) ॥ ईककि दीर्घोच्चारणं

---

स्य स्वरूपपरत्वे बहुवचनासङ्गतिरत आह-*बहुवचनादिति । समवैतीत्यस्य प्रविशतीत्यर्थः । स्वयमपि समूहम्प्रविश्य तदवयवो भवतीति यावत् । अत्र समवैतिशब्दार्थघटकीभूता या विशेषणीभूता प्रवेशक्रिया तन्निरूपितकर्मत्वविवक्षया समवायानिति द्वितीया । यदा त्वधिकरणत्वविवक्षा तदा सप्तमी भवति ।

'धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः' ।

इति यथा ।

संज्ञायां ललाट ( पा० सू० ४—४-४६ ) अत्र संज्ञाशब्देन सम्यक् ज्ञायतेऽनयेति व्युत्पत्त्या प्रसिद्धिविषयः शब्द उच्यते । सेवके एव च लालाटिकशब्दः प्रसिद्धः । यो हि प्रभोर्भालम्पश्यति तदाज्ञापालनाय, स एवमुच्यते । भिक्षुर्हि पादविक्षेपमात्रयोग्यन्देशम्पश्यति न त्वन्यदेशन्तस्य प्रदेशान्तरदर्शने ब्रह्मदर्शनतत्परत्वविघातः स्यात् ।

धर्म्यशब्दं व्याचष्टे-*धर्मोऽनुवृत्त इति । अनुवृत्तः बहुकालमारभ्य सुजनैराचरितः । सौजन्यं योग्यता । तेन महिष्या धर्म्यमित्यत्राप्युपपत्तिः ।

अवक्रयः ( पा० सू० ४-४-५० ) । अवक्रीयते अनेन=अवक्रयः । करणे क्रीञ एरच् । राज्ञा करत्वेन ग्राह्यं यद् द्रव्यं तदुच्यते । एतच्च कदाचित्प्रजाभ्योऽधिकजिघृक्षयाऽपि भवतीति धर्म्याद्भेदः ।

तदस्य पण्यम् (पा० सू० ४-४-५१) । प्रथमासमर्थादस्येतिषष्ठ्यर्थे ठक् । यत्प्रथमासमर्थम्पण्यञ्चेद्भवति । अत्र पण्यशब्दार्थस्य वृत्तावन्तर्भावात्पण्यशब्दस्य प्रयोगो न । *प्रसारितं=स्थापितम् । *वृत्ताविति । वस्तुतो दन्त्यमध्यपाठो युक्तः । गणे तथा दर्शनात् ।

*आयुधमिति । प्रहरणशब्दः करणल्युडन्तः ।

स्पष्टार्थम्* ।

अस्तिनास्ति(पा० सू० ४-४-६०) ॥ *वृत्तिविषये स्वविषयमिति लाक्षणिकेभ्योऽस्त्यादिभ्यः प्रथमा सप्तम्यर्थेभ्यः प्रत्यय इत्यर्थः । परलोक इत्यभिधानस्वभावलभ्यम् । दिष्टशब्दोऽत्र *दैवपर्यायो *व्याख्यानात्, न तु कालवाची पुल्लिङ्गः ।

शीलं=स्वभावः । तदस्येत्येव । अपूपादिशब्दाः स्वभक्षणे लाक्षणिकाः । *क्रियानन्तर्भावे तु न वृत्तिरनभिधानात्* ।

ऐकान्यिक इति । *एकमन्यदिति विग्रहे "तद्धितार्थ" (पा० सू० २-१-५१) इति समासः ।

नियुक्तम्=नियतम्* ।

सङ्घातेति । *अत्र एव टिठन्करणं चरितार्थम् । अन्यथा ठन्मेव विदध्यात्, तर्हि *ओदने वृद्धिवारणाय। सङ्घातग्रहणे तु *व्याख्यानमेव शरणम् ।

---

*स्पष्टार्थमिति । ह्रस्वोच्चारणेऽपि सवर्णदीर्घेण सिद्धेः । न च "यस्य" ( पा० सू० ६-४-१४८ ) इतिलोपापत्तिः । इकारोच्चारणसामर्थ्यात् ॥

यदुक्तं मूले-अस्ति परलोक इत्येवम्मतिर्यस्येति तल्लाभोपायमाह-*वृत्तिविषय इति। अस्तिनास्तिशब्दौ निपातौ आख्यानाद्वा विधानसामर्थ्यात् प्रत्ययः । *दैवपर्याय इति । "दैवं दिष्टम्" इतिकोशात् । *व्याख्यानादिति । दिष्टमितिनिर्देशमूलकव्याख्यानादित्यर्थः ।

*क्रियानन्तर्भाव इति । अपूपादिशब्दानां लक्षणाया अनङ्गीकारे । *अनभिधानादिति । अपूपादिशब्दानां शीलशब्दसामानाधिकरण्येनार्थानभिधायकत्वादित्यपि बोध्यम् । एवं क्रियान्तरान्तर्भावेऽपि न वृत्तिरभिधानस्वाभाव्यात् ।

*एकमन्यदिति । प्रकृतसूत्रेण प्रत्ययो-यत्र परीक्षाकाले विपरीतोच्चारणन्तद्विषये एव । न तु अध्ययने जयो वृत्तोऽस्येत्यादौ । "अभिधानलक्षणाः कृत्तद्धितसमासाः" इत्यभियुक्तोक्तेः ।

*नियुक्तं नियतमिति । स्वानुष्ठेयक्रियाव्यापकदानक्रियाकर्म ।

श्राणामांसौदनाट्टिठन् ( पा० सू० ४-४-६७ ) । अत्र टो ङीबर्थः । इकार उच्चारणार्थः । नकार आद्युदात्तार्थः ।

*अत एव=विगृहीतस्यापि ग्रहणादेव । *ओदन इति । अन्यत्र वृद्धेः सिद्धत्वात् । "वृद्धिनिमित्त" (पा० सू० ६-३-३९) इतिसूत्रस्य ठञि प्रवृत्तिरिति तु न वाच्यम् । कोपधत्वेन प्रतिषेधस्य सिद्धेः । *व्याख्यानमेव=वृत्त्यादिसम्मतव्याख्यानमेव ।

नियुक्तः=अधिकृतः। आकरः=खनिः।

अध्यायिन्य (पा० सू० ४-४-७१)॥ अदेशेत्यादि किम्? काश्यामधीते, पूर्वाह्णेऽधीते।

प्रस्तारसंस्थानौ=सन्निवेशपर्यायौ*।

नैकटिक इति। भिक्षुणा ग्रामात्क्रोशे वस्तव्यमिति शास्त्रं तद-नादृत्य निकटे वसति। *अत्रैवायं साधुः।

इति ठकोऽवधिः समासः।

तद्वहति (पा० सू० ४-४-७६)॥ रथशब्दसाहचर्याद् युगश-ब्दो रथाङ्गवाच्येव। *प्रासङ्गे प्राङावुपसर्गौ 'प्रासङ्गो ना युगाद्युगे' इत्य-मरस्यायमर्थः-युगाद्रथाङ्गादन्यस्मिन्युगे स्कन्धवाह्ये काष्ठे इति। रूढत्वा-दस्यैवात्र ग्रहणमिति भावः।

भस्येति। "र्वोरुपधायाः" (पा० सू० ८-४-१२९) इत्यत्र *उपधाया इति वर्त्तते। धुर्वीधातोः "भ्राजभास"(पा० सू० ३-२-१७७) इति क्विपि राल्लोपे धूः सिद्धः। धौरेयक इति ढकञ् प्रत्यय इत्यन्ये*।

---

"अध्यायिनि" (पा० सू० ४-४-७१) इतिसूत्रे नञ् प्राशस्त्यबोधक इत्याशयेन मूले निषिद्धेति।

*सन्निवेशपर्यायाविति। प्रस्तारशब्दे "प्रेस्त्रोऽयज्ञे" (पा० सू० ३-३-३२) इति घञ्। सन्निवेशश्च विलक्षणावयवसम्बन्धस्तत्र व्यवहारासंभवात्त-द्विशिष्टपराविमौ। अधिकरणार्थकप्रत्ययान्तौ वा।

*अत्रैवायमिति। आरण्यकेन भिक्षुणा ग्रामात् क्रोशे वस्तव्यमिति-शास्त्रं तदनादृत्य निकटे योऽशास्त्रीयो वासस्तत्रैवायं साधुरितिवृत्तिग्रन्थो-ऽत्र प्रमाणम्॥

## ॥ इति ठगधिकारः॥

तद्वहति रथयुगप्रासङ्गम् (पा० सू० ४-४-७६)। द्वितीयान्तेभ्य एभ्यो वहतीत्यर्थे यत्प्रत्ययो भवति। यदुक्तम्मूले वत्सानामित्यादि, तल्लाभप्रकारमाह-*प्रासङ्ग इत्यादि। अयञ्च रथाङ्गे, किन्तु तत्सदृशे काष्ठविशेषे रूढः।

*उपधाया इति वर्त्तत इति। तेन भसंज्ञकस्य समुदायस्य या उपधा तस्या दीर्घनिषेधोऽयमिति प्रतिदीव्न इत्यत्र निषेधो न। *अन्ये इति। अयञ्च कित्, किन्तु "धुरो यड्ढकञौ" इतिसूत्रपाठ इति तेषामाशयः। एवञ्च धौरेयक इत्येव

*मूलपाठे तु धौरेयक इति स्वार्थकन्नन्तम् । *सर्वधुरैकधुरौ नपुंसकौ सूत्रनिर्देशाल्लोकाच्चेत्याहुः ।

एकधुर इति । "अन्तरङ्गानपि" इति न्यायेन सवर्णदीर्घात्प्रागेव टापो लुक् ।

सञ्ज्ञायां जन्या ( पा० सू० ४-४-८२ ) । *जनीशब्दादित्यर्थः । *जन्या मातुर्वयस्या, नववधूयानवाहाश्च जन्याः ।

'जन्यो वरवधूज्ञातिप्रियभृत्यहितेषु च ।'

इति तु विश्वः । "जन्याः स्निग्धावरस्य ये" इति त्वमरः ।

'जन्यामातृवयस्या स्याज्जन्या जनिवरप्रिया ।
जननीजनयित्रोश्च जन्यं निर्वादयुद्धयोः ॥'

इति तु धरणिः ।

*भाष्ये तु "जन्या इति किं निपात्यते जनन्या जनीभावो यत्र । जन्या इति पञ्चमीनिर्देशान्निपातनानर्थक्यम्" इति । "तद्वहति" ( पा० सू० ४-४-७६ ) इत्यनेनैव *जनीशब्दात्प्रत्ययसिद्धेः । *रूढिरपि पङ्कजमि-

---

रूपम् । किरत्वपक्षे आह-*मूलपाठे त्विति । "खः सर्वधुरात्" ( पा० सू० ४-४-७८ ) "एकधुरात्" ( पा० सू० ४-४-७९ ) इतिसूत्रनिर्दिष्टयोः सर्वधुरैकधुरशब्दयोः "पूर्वकालैकसर्वजरत्" (पा० सू० २-१-४९) इतिसूत्रनिष्पन्नसमासरूपत्वेनालौकिकप्रक्रियावाक्ये "ऋक्पूः" ( पा० सू० ५-४-७४ ) इतिसूत्रेणाप्रत्ययेऽपि "परवल्लिङ्गम्" (पा० सू० २-४-२६) इति स्त्रीत्वे प्राप्त आह-*सर्वधुरैकधुराविति । सूत्र इति शेषः । तेन प्रत्ययः सर्वधुराशब्दादेकधुराशब्दाच्च ।

सर्वधुरां वहतीत्येव विग्रहः । तत्र सर्वधुरीणशब्दे "यस्य" ( पा० सू० ६-४-१४८ ) इतिलोपेन टापो निवृत्तावप्येकधुर इत्यस्य कथं सिद्धिरत आह-*अन्तरङ्गानपीत्यादि । *टापो लुगिति । "लुक् तद्धितलुकि" ( पा० सू० १-२-४९ ) इत्यनेनेति शेषः ।

संज्ञायां जन्या ( पा० सू० ४-४-८२ ) । अत्र जन्या इति निपातनेऽपि प्रक्रियामाह-*जनीशब्दादिति । अत्र संज्ञायामित्युपात्तं तत्र कस्य संज्ञेत्याकाङ्क्षायामाह-*जन्या मातुर्वयस्या इत्यादि । एतेन समुदायेन चेत्संज्ञा गम्यत इत्यर्थे इदन्निपातनमित्यर्थादुक्तम्भवति । एतच्च वृत्तिरीत्या मूले व्याख्यातम् ।

भाष्यसम्मतपक्षमाह-*भाष्ये त्विति । *जनीशब्दादिति । जायतेऽस्यां गर्भ इत्यर्थे जनधातोः "जनिघसिभ्यामिण्" ( उ० सू० ) इत्यनेनेण्प्रत्यये "जनिवध्योः" ( पा० सू० ७-३-३५ ) इतिवृद्धेः प्रतिषेधे "कृदिकारात्" ( का० वा० ) इति ङीषि व्युत्पन्नोऽयम् । एतस्माद् वहतीत्यर्थे यत् । ननु नि-

त्यादिवत्सिद्धेति तदाशयः। ततः-"इदन्तर्हि प्रयोजनं *सर्वकालप्रत्यय-विध्यर्थं कर्त्तव्यं सूत्रम्" इत्युक्तम्। *एवं चैतद्योगार्थानालिङ्गितेऽर्थेऽस्य साधुत्वञ्चिन्त्यमिति भाति। *जनवादे तु जन्यशब्दो "मतजनहलात्"(पा० सू० ४-४-९९) इत्यनेन साधुः। युद्धे कृदन्तः।

न चेत्तत्र धनुरिति। *करणमात्रोपलक्षणं धनुरिति। तेन चोरो विद्ध्यति खड्गेनेत्यादावपि न। न च तत्रासामर्थ्यं, प्रधानस्य सापेक्षत्वेनादोषात् प्रत्ययार्थैकदेशव्यधनस्य *तदंशे नित्यसापेक्षत्वाच्च। *चोरं विध्यतीत्यादौ त्वनभिधानाद्वारणीयः सम्रनिष्ठत्वे।

तदित्यनुवर्तमानद्वितीयान्ताबाधायाह-तृन्नन्तमिति। तद्योगे हि "न लोक" (पा० सू० २-३-६९) इति षष्ठीनिषेधाद् द्वितीया। तृजन्तत्वे हि षष्ठी स्यादिति भावः।

*सर्वस्यापि स्वेच्छानुसारित्वेन सामर्थ्यलभ्यमर्थमाह-परेच्छानुसारीति।

पदमस्मिन् [पा० सू० ४-४-८७]। *निर्देशादेवात्र प्रथमा समर्थविभक्तिः।

*आवर्हि=उत्पाटनयोग्यम्।

---

पातनपक्षे समुदायेन चेत्संज्ञा गम्यत इत्यर्थो भवति, सम्प्रति त्वन्यत्रापि प्रयोगः स्यादत आह-*रूढिरपीति। योगरूढिरित्यर्थः। सा च रूढिः कोशे प्रतिपादितैव। *सर्वकालप्रत्ययविध्यर्थमिति। जनीं वहन्ति जन्याः, जनीं वोढारो जन्याः। लुटि रूपम्। जनीमवाप्सुर्जन्या इति। लुङन्तमेतत्। तथा च योगार्थालिङ्गिते रूढिः स्वीकर्त्तव्या न तु केवलरूढिरेवेत्याशयेनाह-*एवञ्चैतदिति। यदुक्तन्धरणिकोशे जन्यं निर्वादेति, तदुपपत्तिमाह-*जनवादे त्विति।

*करणमात्रोपलक्षणमिति। तदुक्तम्भाष्ये-"विध्यत्यकरणेन। विध्यत्यकरणेनेति वक्तव्यम्। अधनुषेति ह्युच्यमानेऽतिप्रसङ्गो भवति। इहापि प्रसज्येत-शर्कराभिर्विध्यति। तत्तर्हि वक्तव्यन्न वक्तव्यम्। कस्मान्न भवति शर्कराभिर्विध्यति, कण्टकैर्विध्यति। अनभिधानात्" इति। *तदंशे=करणांशे। ननु यत्र करणाप्रयोगस्तत्रातिप्रसङ्ग इत्यत आह *चोरमिति।

वशङ्गतः ( पा० सू० ४-४-८६ )। वशनं वशः=इच्छा। एवञ्चेच्छाम्प्राप्त इत्यर्थेऽतिप्रसङ्गनिवारणायाह-*सर्वस्यापीति।

*निर्देशादेवेति। पदमितिनिर्देशादित्यर्थः।

*आवर्हीति। 'वृह उद्यमेन'इतिधातोरिन्। दन्त्योष्ठ्यादिः। उत्पाटनयो-

गृहपतिना सम् (पा० सू० ४-४-९०) ॥ निर्देशादेव तृतीया समर्थविभक्तिः । सञ्ज्ञायामित्यनुवृत्तेर्दक्षिणाग्न्यादौ न ।

नौवयो (पा० सू० ४-४-९१) ॥ मूलशब्दयोर्नैकशेषो "यत्तदेतेभ्यः" इतिवत्* । मूलान्तमूलादिद्वन्द्वयोः पुनर्द्वन्द्व इत्यन्ये* । नावा तार्य्यमिति । शक्यार्थे ऋहलोर्ण्यत् । करणे तृतीया, तस्य स्वातन्त्र्यविवक्षायां कर्तरि वा । वयसा तुल्ये *मित्रे एव वयस्यः । *धर्म्यम्=धर्मफलम् । वध्यो=वधार्हः* "दण्डादिभ्यः" (पा० सू० ५-१-६६) इत्यर्हार्थे यत् । मूलेनेति *कर्तरि तृतीया । *सीता=कृष्टक्षेत्रसमीकरणार्थः काष्ठविशेषो 'मई' इति मध्यप्रदेशप्रसिद्धः । समितामिति । सम्पूर्वादिणः क्तः ।

धर्मादनपेतम् । यदनुष्ठानं धर्ममनुवर्त्तते एव तदित्यर्थः । पथ्यमित्यत्र निर्देशादेव पञ्चमी समर्थविभक्तिः ॥

छन्दसो (पा० सू० ४-९३) । निर्माणे इच्छायाः करणत्वेन तृतीयान्तात्प्रत्ययः ।

पुत्र इति । सञ्ज्ञाधिकारबललब्धम् ।

*प्रीणातीति प्रियः ।

---

ग्याः=क्षेत्रे एव शुष्काः । ते हि लवनेन सङ्ग्रहीतुमशक्याः । मूले'यप्रत्ययश्चेति । तेन धेनुष्याशब्दोऽन्तोदात्तः ।

*इतिवदिति । स्वरूपबोधनतात्पर्यकत्वात् । *अन्ये=मुख्याः । "नौवय" (पा० सू० ४-४-९१) इतिसूत्रे संज्ञायामित्यनुवृत्तेराह-*मित्र एवेति । अत एव तुल्यशब्दः सदृशमात्रे रूढः । *धर्म्यं धर्मफलमिति । सुखादिरित्यर्थः । *वधार्हः=अर्हेऽर्थे दण्डादित्वाद्यत् । *कर्त्तरि तृतीयेति । मूलेन=वाणिग्भिः पटादिविक्रयकाले दत्तं यन्मूलाख्यन्द्रव्यं तेन, आत्मानं प्रति यच्छेषी क्रियते लाभाख्यो भागः सोऽत्रानाम्यशब्देन विवक्षितः । आङ्पूर्वान्नमधातोरत एव निपातनात् ण्यत् । अन्यथा "पोरदुपधात्" (पा० सू० ३-१-९८) इति यत्स्यात् । प्रस्तुतं सीताशब्दं व्याचष्टे-*सीतेति ।

छन्दसो निर्मिते (पा० सू० ४-४-९३) । छन्दःशब्दोऽत्रेच्छापर्यायः ।

*प्रीणातीति । सुखञ्जनयतीत्यर्थः । हृदयशब्दात् षष्ठ्यन्तात्प्रिय इत्यर्थे यत्प्रत्ययः स्यादित्यर्थः ।

मतजनहलात् (पा० सू० ४-४-९७) । यथासङ्ख्यमत्र विवक्षितम् ।

भावः साधनं येनि । *ल्युट *उभयोर्विधानादिति भावः ।
प्रतिजनमिति । *जनं जनं प्रतीति विग्रहः ।
भाक्ता इति । भक्तोऽन्नं तत्र साधवस्त्रिष्पूतीकृता इत्यर्थः ।
योगविभागादिनि । *सर्ववेदपारिषदं हीदं शास्त्रमिति भाष्यप्रयोगादिति भावः । णस्यानुवृत्तेरुभयोर्विधानमित्यन्ये* ।

समानतीर्थाधिकरणकवासकर्तेत्यर्थे प्रत्यय इत्यर्थे प्रथमोच्चारितसमानतीर्थशब्दस्य प्रकृतित्वं वासीत्यस्य प्रत्ययार्थत्वम् । *यादिप्रत्ययविवक्षायां पूर्वमेव तीर्थे ये इति सादेशेऽपि एकदेशविकृतन्यायेन समानतीर्थशब्दत्वात्प्रत्ययः । "पूर्वापरप्रथम" ( पा० सू० २-१-५८ ) इति तत्पुरुषः । समानोदरेऽप्येवम् ॥

समासाः प्राग्घितीयाः ।

प्राक्क्रीता ( पा० सू० ५-१-१ ) । अर्थस्यैव *व्याख्यानतो-

---

सूत्रघटककरणशब्दं व्याचष्टे-*ल्युट इति । *उभयोः=भावकरणयोः । मतस्येति कर्मणि षष्ठी । यदा च भावे प्रत्ययस्तदा ज्ञानकर्मिका कृतिरित्यर्थः । करणे तु ज्ञानकरणमिन्द्रियं मत्यम् ।

प्रतिजनादिभ्य इति अव्ययीभावाभिप्रायेणाह-*जनञ्जनमिति ।

योगविभागे साधकमाह-*सर्ववेदेत्यादि । *अन्य इति । अत्रारुचिस्तु चकारस्य प्रत्ययद्वयसमुच्चायकस्यात्रादर्शनेन ण्यमात्रस्यैवानेन विधानं स्यादिति योगविभाग आवश्यक इति ।

समानतीर्थे वासी( पा० सू० ४-४-१०७ ) सप्तम्यत्र समर्थविभक्तिः । ननु प्रत्ययोत्पत्तिकाले समानतीर्थशब्दाभावात्कथम्प्रत्ययस्तस्मादत आह-*यादिप्रत्ययेति ।

## ॥ इति प्राग्घितीयाः ॥

## ॥ समाप्ताश्चतुर्थाध्यायप्रत्ययाः ॥

प्राक् क्रीताच्छः (पा० सू० ५-१-१) *व्याख्यानत इति । अत्र भाष्ये-प्राक्क्रीतादिति न वाच्यम् । छाधिकार एव कर्त्तव्य इत्यभिप्रायेण 'प्रागवचनकिमर्थमिति शङ्कां कृत्वा "प्राग्वचने उत्कङ्किमुक्तम् ?। सकृद्विधानार्थम्'। अधिकारात्सिद्धमिति चेदपवादविषयेऽणप्रसङ्गः" इत्युक्तम् । सकृद्विधानार्थमित्यस्य प्राक् क्रीताद् येऽर्थास्तेषु सकृदेवानेन छविधानार्थमित्यर्थः । अपवादविषय इत्यस्य "उगवादिभ्यो यत्" ( पा० सू० ५-१-२ ) इति यद्विषयेऽपि छः प्राप्नोतीत्यर्थः । ततः पुनः-"अथ क्रियमाणेऽपि प्राग्वचने कथमिदं विज्ञायते प्राक् क्रीताद्याः प्रकृतय आहो स्वित् प्राक् क्रीताद्येऽर्था इति । किञ्चातः । यदि विज्ञायते

ऽवधित्वमिति *अर्थबोधकेष्वेवास्योपस्थितिः । *एतेन "प्राग्वतेष्ठञ्" ( पा० सू० ५-१-१८ ) इत्यतः प्राक् छयतोः पूर्णोऽवधिरि*त्ययुक्तमित्यपास्तम्* । तदग्रिमाणां शास्त्राणामर्थबोधकत्वाभावेन तेष्वनुपस्थितेः ।

नभ्योऽक्ष इत्यादि । अत्र हितार्थे यत् । *नभ्यं चक्रमिति तु नाभिरिवेत्यर्थे शाखादित्वात् ये साधु । *सच्छिद्रश्चक्रावयवो नाभिः । स यथाऽक्षाख्यं काष्ठविशेषं धारयति परिवर्त्तते चाञ्जनाद्यपेक्षते च, तथा चक्रमपीति सादृश्यम् । एवं नाभ्यार्थो वृक्षोऽपि नभ्य एव । तादर्थ्याच्चाच्छन्दयन्यायेनेति *स्पष्टं भाष्ये । वा च दीर्घत्वमिति । *चेन प्रकृतिभावः समुच्चीयते । तेन दीर्घतदभावयोष्टिलोपो न ॥

---

प्राक् क्रीताद्याः प्रकृतय इति, स एव दोषः—अपवादविषये छप्रसङ्ग इति । अथ विज्ञायते प्राक् क्रीताद्येऽर्था इति न दोषो भवति । समानेऽर्थे प्रकृतिविशेषादुत्पद्यमानो यच्छं बाधिष्यते । यथा न दोषस्तथाऽस्तु प्राक् क्रीताद्येऽर्था इति विज्ञायते" इत्युक्तन्तन्मूलकव्याख्यानत इत्यर्थः । *अर्थबोधकेष्वेवेति । अर्थबोधनतात्पर्यकेषु "तस्मै हितम्" ( पा० सू० ५-१-५ ) इत्यादिषु । अवध्यवधिमतोः साजात्यात् । "अलोऽन्त्यात्पूर्व उपधा" (पा० सू० १-१-६५) इत्यत्र यथा। लोकेऽपि फाल्गुनात् प्राक् वनात्प्राक् देवदत्तो गत इत्युक्ते माघमासान्तकालस्य वनपूर्वदेशस्यैव च प्रतीतिर्न तु वैपरीत्येनेति सुप्रसिद्धम् । *एतेन=अर्थस्यावधित्वस्वीकारेण । *इत्ययुक्तमिति । विशिष्य यदाद्यपवादविधायकसूत्रेषु छयतोः सम्बन्धाभावादेवं कथनन्न युक्तम् । "उगवादिभ्यः" ( पा० सू० ५-१-२ ) इत्यादिसूत्रेष्वपि सम्बन्धे हि तत्र तथा लेख उचित इति तेषाम्भावः । *अपास्तमिति । अर्थस्यावधित्वस्वीकारेण भवदुक्तदूषणस्यानवसरात् ।

ननु नभ्यश्चक्रमित्ययुक्तम् । चक्रस्य नाभिहितत्वाभावादत आह—*नभ्यश्चक्रमिति । इवार्थमुपपादयति—*सच्छिद्र इति । *स्पष्टम्भाष्य इति । "अथ यो नभ्यार्थो वृक्षः कथन्तत्र भवितव्यम् । नभ्यो वृक्षः नभ्या शिंशपेति । तादर्थ्यात्ताच्छब्द्यम्भविष्यति नभ्यार्थो नभ्यः" इति । "नाभि नभञ्च" इति गवाद्यन्तर्गणसूत्रमेव भाष्ये व्याख्यातम् । भाष्यानुक्तमप्यन्तर्गणसूत्रमाह मूले शुन इति । "नस्तद्धिते" ( पा० सू०६—४—१४४ ) इति टिलोपवारणायाह—*चेनेति । यद्यपि सम्प्रसारणोत्तरं शु अन् य इति स्थिते "वार्णादाङ्गम्" इतिन्यायेन प्राप्तस्य टिलोपस्य "ये चाभावकर्मणोः" ( पा० सू० ६—४—१६८ ) इति प्रकृतिभावेन वारणे कृते ततः पूर्वरूपोत्तरम्पुनष्टिलोपो भ्रष्टावसरत्वान्न भविष्यतीति कथञ्चकारेण तद्विधानम् ?, तथापि "तौ सत्" ( पा० सू० ३—२—१२७ ) इति निर्देशेन भ्रष्टावसरन्यायोऽत्र शास्त्रे नाश्रीयत इति चकारस्य प्रकृतिभावसमुच्चायकत्वमावश्यकमिति । गणसूत्रान्तरमेवाह मूले ऊधसोऽनङ् चेति ।

हविष्यमिति । *हविःशब्दो गवादिः। *"विभाषा हविः"(पा० सू० ५-१-४)इत्यत्र तु हविर्विशेषवाचकानामेव ग्रहणम् । नस्ये "पद्दन्" (पा० सू० ६-१-६३) इति नस् । प्रभृतिग्रहणस्य प्रकारार्थत्वात् । भाष्ये तु "नासिकाया यत्तसक्षुद्रेषु नस्" इति पठितम् ॥

ये च त (पा० सू० ६-१-६१) । "शीर्षश्छन्दसि (पा० सू० ६-१-६०) इत्यतः शीर्षन् इति वर्त्तते । शीर्षण्ये "ये च" (पा० सू० ६-४-१६८) इति प्रकृतिभावः ॥

खलयव (पा० सू० ५-१-७)। वृषशब्दोऽत्राकारान्तो *व्याख्यानान्न तु नान्तः । वृषन्शब्देन वृष्णे हितमिति वाक्यमेव । एवं ब्रह्मन्पर्यायब्राह्मणशब्देन ब्राह्मणेभ्यो हितमिति वाक्यमेव, न तु प्रत्यय इति स्पष्टं भाष्ये ॥

आत्मन्विश्व (पा० सू० ५-१-९) । उत्तरपदग्रहणं भोगेनैव सम्बद्धं नान्येन व्याख्यानात्* । भोगशब्दः शरीरवाच्यत्र ।

---

विभाषा हविरपूपादिभ्यः (पा० सू० ५-१-४) अत्र सूत्रे हविःशब्देन विशेषाणां ग्रहणाद्धविष्यशब्दस्य कथं सिद्धिरत आह—*हविःशब्द इति। नन्वपूपशब्दसाहचर्याद्धविःशब्देनापि स्वरूपग्रहणमेव भविष्यति । एवं सति "स्वं रूपम्" (पा० सू० १—१—६८) इति शास्त्रस्याप्यनुग्रहो भविष्यतीत्यत आह—*विभाषा हविरित्यत्र त्विति । अयम्भावः—"उगवादिभ्यो यत्" (पा० सू० ५—१—२) इति सूत्रे "हविरपूपादिभ्यो विभाषया यत् । हविरपूपादिभ्यो विभाषया यद्भवति पूर्वविप्रतिषेधेन । हविरपूपादिभ्यो विभाषाया अवकाशः—आमिक्ष्यम्, आमिक्षीयम् । यतोऽवकाशः—शङ्कव्यन्दारु, पिचव्यः कर्पासः । इहोभयम्प्राप्नोति—चरव्यास्तण्डुलाः । यद् भवति पूर्वविप्रतिषेधेन" इति भाष्ये उक्तम् । तेन स्वरूपविधिस्तदंशे न भवतीति । चरव्या इत्यत्र चर्वधिकरणकं हविरुपचाराच्चरुशब्देनाभिधीयते ।

खलयवमाष (पा० सू० ५—१—७) *व्याख्यानादिति । भाष्यसम्मतव्याख्यानादित्यर्थः । तत्र हि समानार्थावेतौ वृषशब्दो वृषन्शब्दश्च । ब्रह्मन्शब्दो ब्राह्मणशब्दश्च । तत्र द्वयोः शब्दयोः समानार्थयोरेकेन विग्रहः अपरस्मादुत्पत्तिर्भविष्यति अविग्रविकन्यायेन । वृषाय हितमिति विगृह्य वृष्यमिति भविष्यति, वृष्णे हितमिति विगृह्य वाक्यमेव । ब्रह्मणे हितमिति विगृह्य ब्रह्मण्यमिति भविष्यति । ब्राह्मणेभ्यो हितमिति विगृह्य वाक्यमेव भविष्यति" इत्युक्तम् ।

आत्मन्विश्वजन (पा० सू० ५-१-९) *व्याख्यानादिति । आत्मन्-

*'अहिरिव भोगैः पर्येति" इति दर्शनादिति स्पष्टं भाष्ये । *कर्मधारयादेवेति । पञ्चजनसर्वजनेष्वप्येवमेव । *रथकारपञ्चमेषु चतुर्षु वर्णेषु प्रत्येकं पञ्चजनशब्दस्य रूढिः । मातृभोगीणे यथा णत्वं तथा "रषाभ्याम्" ( पा० सू० ८-४-१ ) इत्यत्र निरूपितम् ॥

सर्वपु (पा० सू० ५-१-१०) । यथासंख्यमत्र । पुरुषाद्वधेति । वधादिषु त्रिषु *सामर्थ्यात् षष्ठी समर्थविभक्तिः । कृते तु *तेनेति निर्दिष्टैव । अणि प्राप्ते इति । पाक्षिकमयटोऽप्युपलक्षणं, हिते तु पुरुपाच्छ एवेति बोद्धव्यम् ॥

तदर्थं वि (पा० सू० ५-१-१२) । विकृतिवाचकादिति । न चास्य *न प्रथमत्वं प्रकृतावित्य*र्थसमर्पकापेक्षया तत्त्वसम्भवात् । तस्मादित्यनुवृत्तेराह—चतुर्थ्यन्तादिति । तदर्थमिति सप्तम्याः स्थाने प्रथमा, सामान्ये नपुंसकं, तदाह-तदर्थायामिति । प्रकृतिविकृतिशब्दावुपादानकारणतत्कार्यपरौ परस्परसमभिव्याहारात् । तदर्थग्रहणं स्पष्टार्थम्* । शङ्कव्ये "उगवादि" ( पा० सू० ५-१-२ ) इति यत् ।

---

विश्वजनशब्दाभ्यां भोगोत्तरपदाच्च प्रातिपदिकात्तस्मै हितमित्यर्थे खः प्रत्ययो भवतीति वृत्तिसम्मतव्याख्यानादित्यर्थः । भोगशब्दस्य शरीरवाचकत्वे मानमाह—*अहिरिवेति । *कर्मधारयादेवेतीति । सर्वसमासेभ्योऽस्यान्तरङ्गत्वात् । *रथकारपञ्चमेष्विति । रथकारः पञ्चमो येषान्तेषु चतुर्षु ब्राह्मणादिष्वित्यर्थः । रथकारश्च--

"माहिष्येण करण्यान्तु रथकारः प्रजायते ।

इत्यत्र प्रसिद्धः । राजन्याद्वैश्यायामुत्पन्नो माहिष्यः । वैश्याच्छूद्रायामुत्पन्ना कन्या करणी ।

"पुरुषाद्वधविकारसमूहतेनकृतेषु"इतिवार्त्तिके निपातनात्तृतीयाया अलुक् । *सामर्थ्यादिति । वधादित्रितयान्वययोग्यताबलादित्यर्थः । *तेनेति निर्दिष्टैव=तृतीयानिर्दिष्टैव ।

तदर्थं विकृतेः प्रकृतौ ( पा० सू० ५-१-१२ ) । अत्र तदर्थमिति सामान्ये नपुंसकम् । "व्यत्ययो बहुलम्" ( पा० सू० ३-१-८५ ) इति सप्तम्याः प्रथमा । प्रकृतिरुपादानकारणन्तस्यैवोत्तरावस्थाविशिष्टं वस्तु विकृतिरित्युच्यते । तदिति सर्वनाम्ना विकृतिः प्रत्यवमृश्यते । प्रकृतेस्तदर्थत्वकथनेनानन्यार्थत्वं लभ्यते विशेषणसामर्थ्यात्तेन न प्रकृतेर्विकृत्यर्थत्वसम्भावना यत्र तत्र प्रत्ययः किन्तु तदर्थत्वनिश्चय एव तत्रैवानेन सूत्रेण प्रत्ययः । *अस्य=विकृतिवाचकशब्दस्य । *न प्रथमत्वम्=न सूत्रोच्चारितप्रथमशब्दबोध्यत्वम् । *[illegible]र्थकेति ।

बालेया इति। बाल्यावस्थायां यो लौहित्यादिगुणस्तद्रहिता बालेया इत्युच्यन्ते। प्रकृतिविकृतिभावोऽत्र यथाकथंचित्* । *आर्षभ्य इत्यत्राप्येवम्। यो वत्स ऋषभावस्थाप्राप्त्यर्थं पोष्यते स एवमुच्यते।

पूर्वविप्रतिषेधेनेति। *अञपेक्षयेति शेषः।

तदस्य तदस्मिन् स्यादिति (पा० सू० ५-१-१६)। तदर्थं

---

तस्यापत्यमित्यादौ तथैव दर्शनादिति भावः। *स्पष्टार्थमिति। हितशब्दस्याप्यनुवृत्त्या विकृतये हिता या प्रकृतिरित्यनेन तदर्थत्वलाभेऽपि पूर्वोक्तनिश्चयस्य स्पष्टतया लाभार्थन्तदर्थग्रहणमित्यर्थः। सक्तुभ्यो यवा इत्यत्र तु न। सक्तूनां यवविकृतित्वाभावात्। किन्तु धानाविकृतित्वमेव। सूत्रे उभयोपादानसामर्थ्याद्यत्र परस्परं प्रकृतिविकृतिभावस्तत्रैवायम्प्रत्ययः। तेन यत्रास्यर्थश्चर्मोपादीयते तत्र न, असेरयोविकारत्वान्न तु चर्मणः, चर्मणस्तु कोशप्रकृतित्वम्।

छदिरुपधिबलेः (पा० सू० ५-१-५३) सौत्रं समाहारद्वन्द्वस्य पुंस्त्वम्। बलिशब्दोऽत्रोपहारपरः।

करोपहारयोः पुंसि बलिः प्राण्यङ्गजे स्त्रियाम्।

इत्यमरः। *यथाकथञ्चिदिति। न ह्यत्र तदुत्पत्तिप्रयोजकनाशप्रतियोगित्वरूपस्य प्रकृतित्वस्य स्वरसतः प्रतीतिरिति भावः। *आर्षभ्य इत्यत्राप्येवमिति। यथाकथञ्चिदेव। यस्योत्पत्तेः प्राक्काले सत्त्वे सति तत्सम्पादकत्वन्तत्रैव प्रकृतित्वव्यवहारस्य सुप्रसिद्धत्वात्। अत एव भाष्ये प्रकृतसूत्रे "प्रकृतिविकृतिग्रहणन्निवर्त्तिष्यते, तच्चावश्यन्निवर्त्त्यम्। इहार्थमुत्तरार्थञ्च। इहार्थन्तावत् बालेयास्तण्डुलाः। उत्तरार्थम्-ऋषभोपानहोर्ञ्यः, आर्षभ्यो वत्स इति। गुणान्तरयुक्ता हि तण्डुला बालेयाः गुणान्तरयुक्तश्च वत्स आर्षभ्यः" इति प्रतिपादितम्। तत्रैव कैयटः-गुणान्तरयुक्ता हीति। बाल्यवास्थायां यो गुणः सन्निवेशलक्षणो लाक्षादिकृतलौहित्यादिलक्षणो वा तदपेक्ष्यप्राकृतगुणयुक्ता इत्यर्थः। गुणान्तरयुक्तश्च वत्स इति। सुजातावयवः संहननवान्महाप्राण ऋषभावस्थाप्राप्तये यदा परिपोष्यते न तु दाबविक्रयार्थन्तदा तादर्थ्यस्य सम्भव इति।

मूले-उपाधिशब्दात्स्वार्थे दृष्यत इति। उपपूर्वाद्धाञ उपसर्गे घोः किः। अत्र भाष्ये—"उपध्यर्थमितिप्रत्ययानुपपत्तिः उपध्यभावात्। उपध्यर्थमितिप्रत्ययस्येहानुपपत्तिः किं कारणम्। उपध्यभावात्। विकृतेः प्रकृतावभिधेयायाम्प्रत्ययेन भवितव्यम्। न चोपधिसंज्ञिकाया विकृतेः प्रकृतिरस्ति। यद्धि तद्रथाङ्गन्तदौपधेयमित्युच्यते। सिद्धन्तु कृदन्तस्य स्वार्थेऽञ्विधानात्। सिद्धमेतत्। कथम्। कृदन्तस्य स्वार्थेऽञ्वक्तव्यः उपधीयते उपधेयम्। उपधेयमेवौपधेयम्"-इत्युक्तम्।

*अञपेक्षयेति। पूर्वविप्रतिषेधे प्रमाणन्तु "उगवादिभ्यः" (पा० सू० ५-१-२) इतिसूत्रस्थं "यल्ञ्याघञः पूर्वविप्रतिषिद्धम्" इतिवार्त्तिकमेव। यतो-

विकृतेरित्यादि निवृत्तमिति कैयटः । लौकिकीमिति । लोकोऽत्र न प्रयोक्ताऽस्मदादिस्तेन मृदुश्लक्ष्णरूपापभ्रंशप्रयोगस्यैव करणात् । तस्माच्छिष्टो लोकोऽत्र लोकशब्देन "लौकिकी विवक्षा यत्र प्रायस्य संप्रत्ययः, प्राय इति लोको व्यपदिश्यते" इति भाष्यात् । लोकः=शिष्टो लोक इति तदर्थः, प्रायस्य समग्रकल्पस्येति कैयटस्यापि समग्रशब्दार्थविषये समर्थस्येत्यर्थः । तादृशश्च शिष्टलोक एवेति बोद्धव्यम् । प्रासादो देवदत्तस्येति । ईदृशेऽर्थे प्रासादीयो देवदत्त इति प्रयोगो लोके न दृश्यते इति भावः ।

इति छयतोः पूर्णोऽवधिः ॥

प्राग्वतः ( पा० सू० ५-१-१७ ) अत्र वतिशब्देन तदर्थो लक्ष्यते तेनार्थबोधकेष्वेवास्योपस्थानं तेनापवादविषये न ।

आर्हाद ( पा० सू० ५-१-१८ ) । *अत्रार्हतीति तिङन्तैकदेशशवन्तानुकरणं, *व्याख्यानात् । आङभिव्याप्तौ, तदाह-तदर्हतीत्येतदभिव्याप्येति । यद्यपि—

---

ऽवकाशः शङ्कव्यन्दारु, पिचव्यः कर्पासः । अञोऽवकाशः वार्धम्, वारत्रश्चर्म । सनङ्गुर्नाम चर्मविकारस्तस्मादुभयम्प्राप्नोति । सनङ्गव्यं चर्म । ञ्यस्यावकाशः औपानह्यन्दारु, अञः स एव । उपानन्नाम चर्मविकारः तस्मादुभयम्प्राप्नोति । औपानह्यश्चर्म" इति ।

तदस्य तदस्मिन्स्यादिति (पा० सू० ५-१-१६) । अत्र वाक्यद्वयम्-तदस्य स्यादिति, तदस्मिन्स्यादिति च । आद्ये तदिति प्रथमासमर्थविभक्तिः । षष्ठ्यर्थे च प्रत्ययः । द्वितीये सप्तम्यर्थे । स्यादित्यनेन सम्भावितैककर्तृका सत्ता उच्यते । सूत्रेऽस्येत्येकवचनमविवक्षितम् । अत एवाऽऽसामिति बहुवचनोपादानं मूले सङ्गच्छते । इष्टकानामाधिक्यं दृष्ट्वा प्राकारस्य ताभिः साध्यतां ज्ञात्वा एवमुच्यते । सम्भावने लिङ् । देशस्य च दार्ढ्यसमत्वोच्चत्वादिसद्गुणवत्तां दृष्ट्वा प्रासादोऽस्मिन्स्यादिति सम्भावना भवति । नेह प्रकृतिविकृतिभावो विवक्षितः । [ मूले ] लौकिकीं विवक्षामिति । एतेनैकेनेतिकरणेन सर्वदोषपरिहारसम्भवात्स्यदितिसम्भावनाविषयसत्ताप्रत्ययार्थमत्र सूत्रे न वाच्यमिति ध्वनितम् ॥

## ॥ इति छयदधिकारः ॥

आर्हादित्यस्य साधुत्वायाह-*अत्रार्हतीति । एतेनात्राङा अर्हशब्दस्य समासः । अर्हशब्दश्च "तदर्हम्" ( पा० सू० ५-१-११७ ) इत्यत्र निर्दिष्टोऽच् प्रत्ययान्तोऽपीति तस्याप्यवधित्वमितिशङ्काया नावकाशः । *व्याख्यानादिति । वृत्त्यादिसम्मतव्याख्यानादित्यर्थः । प्रकृतसूत्रे परिमाणशब्द उपात्तस्स यदि परिच्छेदकमात्रपरस्तदा परिमाणग्रहणेन सिद्धे सङ्ख्याग्रहणवैयर्थ्यापत्तिरतो भाष्ये

*ऊर्ध्वमानं किलोन्मानं परिमाणन्तु सर्वतः ।
आयामस्तु प्रमाणं स्यात् बाह्या तु सर्वतः ॥

*ऊर्ध्वं यन्मीयते तदुन्मानं, सर्वतो मानमिति चातः परिमाणम्। आयामविवक्षायां प्रमाणमित्येतद्भवति। संख्या सर्वतो बाह्या। भेदमात्रं ब्रवीत्येषा नैषा मानं कुतश्च नेति भेदोऽत्र वैलक्षण्यमिति कैयटस्तथाप्यत्र परिमाणशब्देनोन्मानमपीति "असमासे" (पा० सू०५-१-१-१९) इति *सूत्रस्थभाष्यस्वरसः। प्रमाणन्तु न गृह्यते मानाभावात्। *सप्तदशसङ्ख्यामनुवर्त्तत इति। सम्बध्यत इत्यर्थः। *एतेन षोडशसूत्राणामेवानुवृत्ति-

---

परिमाणस्य सङ्ख्यातो भेदः प्रदर्शितः-*ऊर्ध्वमानमित्यादिना। एवञ्चोन्मानस्य परिमाणशब्देन ग्रहणन्न प्राप्नोतीत्याशङ्क्य समाधत्ते-यद्यपीत्यादिना। *ऊर्ध्वं यदिति। अत्र यदिति येनेत्यर्थकमव्ययम्। ऊर्ध्वं येन मीयत इत्यर्थः। परिच्छेदकेन पाषाणादिना तुलादौ स्थापनोत्तरं परिच्छेद्यपरिच्छेदकयोरूर्ध्वाधरभावेन यद्गमनन्तदुन्मानमुन्मितिस्तत्करणमुन्मानम्। परिमाणन्तु सर्वतः=आरोहपरिणाहाभ्यां येन मीयते तत्परिमाणम्। आरोहः=उच्छ्रायः। परिणाहो=विस्तारः। आभ्यां स्वस्मिन् वर्त्तमानाभ्यां येन काष्ठादिनिर्मितेनाढककुडवादिना प्रस्थादिना च मीयते तत्प्रस्थादि परिमाणशब्देनोच्यते। आयामस्त्विति। आयामो=दैर्घ्यम्। आयाम इत्यस्य येन मीयते इति शेषः। वस्त्रकाष्ठादिगतन्दैर्घ्यं येन मीयते हस्तादिना तत्प्रमाणमित्यर्थः। तच्च दीर्घस्य वस्त्रादेः परिच्छेदकं यद्यप्योर्ध्वाधरदिक्संबद्धं यज्जलभित्त्यादि तत्परिच्छेदकमत एव जानुदघ्नञ्जलमित्यादौ "प्रमाणे द्वयसज्दघ्नञ्" (पा० सू० ५-२-३७) इति प्रत्ययसिद्धिः। सङ्ख्या बाह्या तु सर्वतः। सङ्ख्या=एकत्वद्वित्वादि, सर्वतः=सर्वस्माद्बाह्या=विलक्षणा, पूर्वोक्तपरिच्छेदकेभ्यो विलक्षणा ऊर्ध्वमानादिकन्न करोति। उन्मानादेरपि परिच्छेदङ्करोति। द्वे तुले इत्यादिव्यवहारात्। एवञ्च सङ्ख्यायाः परिमाणापेक्षया विलक्षणत्वात्प्रकृतसूत्रे ग्रहणम्। तदुक्तम्भाष्ये-"भेदमात्रं ब्रवीत्येषा नैषा मानं कुतश्चन। एवञ्च कृत्वा सङ्ख्यायाः पृथग्ग्रहणङ्क्रियते" इति। कुतश्चनेत्यस्य न कुतश्चित्सन्निवेशादेः सङ्ख्या मानम्। सन्निवेशादिनिरपेक्षम्मानमित्यर्थः। अत एव द्वौ मेरुसर्षपाविति भवति। *सूत्रस्थभाष्यस्वरस इति। तत्र हि "असमास इति किमर्थम्। परमनिष्केण क्रीतम्परमनैष्किकम्" इति प्रत्युदाहृतम्। तत्र कैयटः "ठञेवात्र भवति। निष्कशब्दस्य परिमाणवाचित्वात् पूर्वेणाप्राप्तेऽनेन ठग्विधीयते" इति। एवञ्च निष्कस्योन्मानत्वेन तत्र पर्युदासपरभाष्यप्रामाण्येनोन्मानस्यापि तत्र ग्रहणम्। "परिमाणान्तस्य" (पा० सू० ७-३-१७) इत्युत्तरपदवृद्धिः। शाणपर्युदासात्तत्राप्युन्मानं परिमाणपदेन गृह्यते। यस्मिन्सूत्रे यस्य पदस्य स्थितिस्ततोऽग्रिमसूत्रे संबन्धे सति तत्रानुवर्त्तत इति व्यवहार इत्यतः सप्तदशेत्यनुपपन्नमत आह-*सप्तदशेति। *एतेन=उक्तार्थेन।

विषयत्वमित्यपास्तम्।

परिमाणान्त(पा०सू०७-३-१७)। इह परिमाणशब्देन परिच्छेदकमात्रं शाणपर्युदासात्। यद्यप्युत्तरपदस्येति सूत्रभाष्ये (तदधिकारस्यात्र सूत्रे प्रयोजनाभावप्रतिपादनाय) परिमाणान्तस्येत्यत्र *संख्याया इत्यनुवृत्तिरुक्ता तथापि तदनुवर्त्य *वाक्यभेदेन व्याख्येयम्। तेन परिमाणान्तस्येत्यस्यासंख्यापूर्वपदे क्वाचित्कत्वम्। *अत एवात्र परमनैष्किकमिति भाष्योदाहृतं सङ्गच्छते। *संख्याया इत्येतद्घटितवाक्य*साहचर्यात्परिमाणान्तस्येत्यस्याप्युत्तरपदे एव प्रवृत्तिरिति न तत्र तदधिकारप्रयोजनमिति तदाशयः। यद्यपि कालोऽपि परिच्छेदकस्तथापि तस्य नेह ग्रहणम्। परिमाणान्तेत्येव सिद्धे "संख्यायाः संवत्सरसंख्यस्य च" (पा० सू० ७-३-१५) इति संवत्सरग्रहणेन परिमाणग्रहणे कालाग्रहणज्ञापनात्। न च *संज्ञायां वृद्ध्यर्थं संवत्सरग्रहणम्। *ज्ञापकपरभाष्यप्रामाण्येन तादृशसञ्ज्ञाया अभावकल्पनात्। *एतेन संवत्सरस्य चेत्संख्याया एवेति नियमार्थं तदित्यपास्तम्। भाष्यप्रामाण्येन नियमं व्यावर्त्य प्रयोगानभिधानेन ज्ञापकत्वस्यैवाङ्गीकारादिति दिक्। ज्ञापकमिति। न च परमनैष्किकमित्यत्रा*परिमाणत्वात्पूर्वसूत्रप्राप्तौको निषेधार्थन्तदिति वाच्यम्। एतद्भाष्यप्रामाण्येन तत्र परिमाणशब्देनोन्मानस्यापि ग्रहणात्।

---

*सङ्ख्याया इत्यस्यानुवृत्तिरुक्तेति। तदनुवृत्तौ "तस्मादित्युत्तरस्य" (पा० सू० १-१-६७) इत्यनेनोत्तरत्वस्य लाभो भवतीत्येतदर्थमुत्तरपदस्येति प्रकृते नानुवर्त्तनीयम्। तथा कथम्परमनैष्किकमित्यत्र वृद्धिरिति भावः।

*वाक्यभेदेनेति। संङ्ख्याया इति पञ्चमीनिर्देशादुत्तरस्येत्युपस्थितम्, "आदेः परस्य" (पा० सू० १-१-५४) इतिपरिभाषा चोपस्थिता। तदपेक्षया परिमाणान्तस्येत्यवयवषष्ठी। एवञ्च परिमाणान्तावयवस्य सङ्ख्याया उत्तरस्यादेरचो वृद्धिरित्यर्थः। असङ्ख्यापूर्वपदकेऽपि वृद्धेः प्रवृत्त्यर्थं परिमाणान्तस्येतिपृथग्वृद्धिविधायकम्। तस्य च परिमाणान्तस्याचामादेरचो वृद्धिरित्यर्थः। *अत एव=वाक्यभेदस्वीकारादेव। परिमाणान्तस्येत्यनेनाप्युत्तरपदस्यैव वृद्धिविधानमित्यत्र साधक माह-*सङ्ख्याया इत्येतदिति। *साहचर्यादिति। आरम्भसामर्थ्यादित्यपि बोध्यम्। *संज्ञायामिति। असंज्ञेति तत्र पर्युदासस्य प्राप्तेरिति भावः। *ज्ञापकपरेति। संवत्सरशब्दस्य ज्ञापकपरेत्यर्थः। *एतेन=वक्ष्यमाणप्रकारेण। *अपरिमाणत्वादिति।

ध्वनितश्चेदं* निष्कस्य परिमाणवाचित्वात्पूर्वेणाप्राप्तोऽनेन ठक् विधीयत इति वदता कैयटेन । पणपादाद्यप्युन्मानरूपमेवात्र गृह्यते, *ज्ञापिते तु तत्सं-भावनामात्रेण तच्चारितार्थ्यन्तत्फलितमाह—इत्यतः प्रागिति । प्रत्यास-त्त्या पाश्चमिकेष्वेवेदन्तदाह—सुगव्यमित्यादि । अन्यथा प्रत्ययविधित्वा-त्तन्निषेधः* स्यात्, इदमुपलक्षणं व्यपदेशिवदित्यस्यापि*, तेन गव्यसिद्धिः॥ *व्यपदेशिवद्भावनिषेधस्य सूत्रगृहीतान्तादिशब्दविषयकत्वाच्च । प्रतिषेद्धव्य-समर्पकगोपुच्छादिषु "तदन्तविधिव्यपदेशिवद्भावौ स्त एव तन्निषेधस्य प्रत्ययविधिविषयत्वात् । अन्तनिषेधस्योक्तयुक्त्याऽप्यप्रवृत्तिर्बोद्धया । इत ऊर्ध्वमनुवर्तिष्यति । वाचनिकमेवेदम् । "असमासे" (पा० सू० ५-१-२) इति सूत्रादूर्ध्वमार्हीयेऽनार्हीये चेत्यर्थस्तदाह—प्राग्वतेरिति । तच्चालुकीति। लुगन्तायाः प्रकृतेर्नेत्यर्थः । क्रीतान्द्विशूर्पमिति । *न तावदेषा लुगन्ता-प्रकृतिरिति सङ्ख्यापूर्वपदाच्छूर्पादञन्यतरस्यामित्यञ्ठञौ वा "अध्यर्ध" ( पा० सू० ५-१-२८ ) इति लुक् ।

अर्धात्प ( पा० सू० ७-३-२७ ) जङ्गलधेन्विति सूत्रे विभाषि-तंग्रहणस्योत्तरपदसम्बद्धत्वात्पुनर्वाग्रहणम् । तपरः किमिति । दीर्घस्य वृद्धिनिषेधे फलाभावात् प्रश्नः । निषेधो न स्यादिति । *पूर्वपदस्य वृद्ध्यभावपक्षे वृद्धिं प्रति फलोपहितनिमित्तत्वाभावादिति भावः । तस्य वृद्धिपक्षे तु तामादायैव निषेधः सिद्ध्यतीति बोद्ध्यम् ॥

शताच्च (पा०सू० ५-१-२१)। *उत्तरसूत्रप्राप्तकनोऽपवादोऽयम् ।

---

निष्कमष्टाधिके स्वर्णशते दीनारकर्षयोः ।
वक्षोऽलंकरणे हेमपात्रे हेमपलेऽपि च ॥

इतिकोशात् । *इदम् = परिमाणशब्देनोन्मानस्यापि ग्रहणम् । *ज्ञापिते त्विति । तदन्तविधौ ज्ञापिते त्वित्यर्थः। अत्र ज्ञाप्यं वचनन्तु एतत्प्रकरणस्थसूत्री-यप्रकृतिशब्दस्तदन्तस्यापि बोधक इति । फलस्पूर्वत्रेत्याशयेन मूले पूर्वत्रेत्युक्तम् । *तन्निषेधः स्यात् = तदन्तविधिनिषेधः स्यात् । *इत्यस्यापीति । अन्यथा तदन्तविधौ गोशब्दान्ताद्विधीयमानो यत् केवलगोशब्दान्न स्यात् । प्रत्ययवि-धिविषयेण "व्यपदेशिवद्भावोऽप्रातिपदिकेन" इत्यनेन निषेधात् । सिद्धान्तरी-त्याऽऽह—*व्यपदेशिवद्भावेति । *न तावदेषेति । द्वाभ्यां शूर्पाभ्यां क्रीतेति लौकिकविग्रहसूचिता । ननु पूर्वपदवृद्धिमादाय भविष्यतीत्यत आह—*पूर्वपदस्येति । *उत्तरसूत्रेति । "सङ्ख्याया अति" ( पा० सू० ५-१-२२ )

अशत इति न प्रकृतेर्विशेषणमसम्भवात्*, किंतु प्रत्ययार्थस्य । तत्रापि यत्र प्रकृत्यर्थशतस्यैव प्रत्ययार्थत्वं तत्रैव निषेध इष्यते*, तदाह–इहेति । तेन शतेन क्रीतं शत्यं शाटकशतमित्यादौ न निषेधः । वस्तुत इति । अभेद एव पारमार्थिको भेदस्तु काल्पनिक एवेति भावः । द्विशतेनेति । द्विगुणशतेनेत्यर्थः । तेन द्विगुत्वाभावात्कनो न लुक् । द्वाभ्यां शताभ्यां क्रीतमित्यर्थक*लुगन्तद्विशतशब्दात्त्वलुकीति तदन्तविधिनिषेधात्प्राप्तिरेव नेति बोद्ध्यम् ।

संख्याया अति (पा० सू० ५-१-२२) । सूत्रे* द्वन्द्वगर्भो बहुव्रीहिगर्भो नञ्तत्पुरुषः । *अन्तग्रहणमेकसप्तत्या क्रीतमित्यत्र निषेधार्थम् । अन्यथा प्रत्ययग्रहणपरिभाषया* न स्यादिति हरदत्तः ॥

वतोरि (पा० सू० ५-१-२३) अत्रेद् न प्रत्ययो व्याख्यानात्* । योगविभाग इति । *अन्यथा त्रिंशतः शदन्तत्वात् द्विशब्दस्य विंशादेशास्तिप्रत्यय इति पक्षे विंशतेस्त्यन्तत्वान्न स्यादिति भावः । त्रिंशके "तिविंशतेर्डिति" (पा० सू० ६-४-१४२) इति लोपे पररूपम् । त्रिंशके "टेः" (पा० सू० ६-४-१४३) इति टिलोपः ।

---

इतिसूत्रेत्यर्थः । *असम्भवात् = शतस्याशते वृत्त्यसम्भवात् । किन्त्वशतेऽभिधेय इत्यर्थः प्रत्ययार्थविशेषणत्वे । निषेध इति तु फलितार्थकथनन्तदाह–*इष्यत इति । शतम्परिमाणमस्येत्यादौ सङ्ख्येयवाचकात्प्रत्ययः । यः सङ्घः प्रत्ययार्थः स वस्तुत एकस्मान्न भिद्यत इत्यर्थः । "सङ्ख्यायाः संज्ञासङ्घसूत्र" (पा० सू० ५-१-५८) इतिसूत्रेण कन् । शत्यं शाटकशतमिति । अत्र प्रकृत्यर्थत्वमन्यस्य सङ्ख्येयस्य, प्रत्ययार्थत्वमन्यस्येति स्पष्टमेव । यत्र निषेधस्तत्र तु यस्य परिमाणपदेन ग्रहणन्तन्नान्यत्प्रत्ययार्थादित्यर्थः । *लुगन्तेति । "सङ्ख्याया अति" (पा० सू० ५-१-२२) इतिसूत्रेण जातस्य कनः "अध्यर्द्धपूर्व"(पा० सू० ५-१-२८) इति लुक् तदन्तेत्यर्थः । *द्वन्द्वगर्भ इति । तिश्च शच्च=तिशतौ । तावन्तौ यस्य सा=तिशदन्ता, न तिशदन्ता=अतिशदन्ता, सा सङ्ख्या प्रकृतित्वेनाश्रीयत इत्यर्थः । प्रत्ययग्रहणपरिभाषयैव सिद्धेऽन्तग्रहणस्य प्रयोजनमाह–*अन्तग्रहणमिति । *न स्यादिति । एकसप्ततिशब्दस्य न तिप्रत्ययान्तत्वमिति भावः ।

वतोरिड्वा (पा० सू० ५-१-२३) । "बहुगण" (पा० सू० १-१-२३) इतिसूत्रेण वत्वन्तस्य सङ्ख्यासंज्ञा । *व्याख्यानादिति । वतोरिति पञ्चमीनिर्देशात्कन् इतिप्रथमायाः षष्ठ्यान्तत्वमित्यर्थप्रतिपादनपरभाष्यकारीयवचनप्रामाण्यादित्यर्थः । किञ्च चरेष्ट इतिवद्धित्प्रत्ययविधानेनैव सिद्धे प्रत्ययाधिकारापठितेद्शब्दसद्दशशब्दोच्चारणेनागमत्वमनुमीयते । *अन्यथा = योगविभागाभा-

अधिक इति । अस्य भगवदपेक्षत्वेऽपि नित्यसापेक्षत्वान्नासामर्थ्यम्* ।

अध्यर्द्धपू (पा० सू० ५-१-२८)। द्विगुसाहचर्यादध्यर्धपूर्वोऽप्यत्र समानाधिकरणसमास* एव गृह्यते, संख्यासञ्ज्ञासूत्रे भाष्येऽद्ध्यर्द्धपूर्वाद्द्विगोरिति पाठो दृश्यते । द्विगोश्च परस्येति । तन्निमित्तस्येति शेषः* । *समाहारद्विगोर्द्विशूर्प्यात्क्रीतमित्यर्थे त्वनभिधानात्* प्रत्यय एवनेति बोद्ध्यम् । असञ्ज्ञायामिति । द्विगुविशेषणं पञ्चकलापाः परिमाणमस्य पञ्चकलापं कृत्तद्धितलुगियं कस्य चित्सञ्ज्ञा, तत उत्पन्नस्य न लुक् । तस्य द्विगुनिमित्तत्वाभावाल्लुकोऽप्राप्त्या भाष्ये प्रत्याख्यातमिदम्* ।

विभाषाका (पा० सू० ५-१-२९)। कार्षापणान्ताद् द्विगोरद्ध्यर्द्धपूर्वाच्चेत्यर्थः । अद्ध्यर्द्धप्रतिकमिति । *आदेशस्य प्रत्ययसन्नियोगशिष्टत्वान्न तत्पक्षे प्रत्ययलुगिति भावः ।

द्वित्रिपू (पा० सू० ५-१-३०)। पूर्वग्रहणं स्पष्टार्थम् । *अत एव द्वित्रिभ्यामिति यदुच्यते तद्द्वैयोग्यमिति भाष्ये उक्तम्* । द्विनि-

---

वे । *नासामर्थ्यमिति । न प्रत्ययेनासामर्थ्यमित्यर्थः ।

*समानाधिकरणसमास एवेति । समानाधिकरणपदकसमास एवेत्यर्थः । तेन षष्ठीसमासेन विग्रहे ततो जातस्य प्रत्ययस्य न लुक् । *इति शेष इति । तदुक्तं भाष्ये-"द्विगोर्लुकि तन्निमित्तग्रहणङ्कर्त्तव्यम् । द्विगोर्निमित्तं यस्तद्धितस्तस्य लुग्भवतीति वक्तव्यम् इह मा भूत् द्वाभ्यां शूर्पाभ्यां क्रीतम् = द्विशूर्पं, द्विशूर्पेण क्रीतं "द्विशौर्पिकम्"इति । ननु यदि तन्निमित्तग्रहणं क्रियते समाहारद्विगोः परस्य लुग्न प्राप्नोतीत्यत आह-*समाहारद्विगोरिति । *अनभिधानादिति । तदुक्तम्भाष्ये-"इहास्माभिस्त्रैशब्द्यं साध्यम्-द्वाभ्यां शूर्पाभ्यां क्रीतं = द्विशूर्पमिति, द्विशूर्प्या क्रीतमिति । तत्र द्वयोः शब्दयोरेकेन विग्रहः अपरस्मादुत्पत्तिर्भविष्यति अविरविकन्यायेन । द्वाभ्यां शूर्पाभ्यां क्रीतमिति विगृह्य द्विशूर्पमिति भविष्यति।द्विशूर्प्या क्रीतमिति विगृह्य वाक्यमेव"इति । *इदम् = असंज्ञायामित्येतत्

*आदेशस्येति । प्रत्यादेस्येशत्यर्थः ।

द्वित्रिपूर्वान्निष्कात् (पा० सू० ५-१-३०)। *अत एव=स्पष्टप्रतिपत्त्यर्थत्वादेव । न तु पूर्वशब्दोऽत्राव्याप्त्यादिवारकः पञ्चमीनिर्देशादेव पूर्वशब्दार्थलाभात् । *भाष्येउक्तम्=तत्र हि "द्वित्रिभ्यान्द्वैयोग्यम् । द्वित्रिभ्यामिति यदुच्यते तत् द्वैयोग्यमिति द्रष्टव्यम् । किमिदं द्वैयोग्यमिति द्वयोर्योगयोर्भवम् = द्वियोगम् । द्वियोगस्य भावो-द्वैयोग्यमिति । एतेन द्वित्रिभ्यामित्यस्योभयशेषत्वम्" इत्यु-

ष्कमिति । ठञो लुक् । बहुपूर्वादिति । *इदं "विस्ताच्च" ( पा० सू० ५-१-३१) इति सूत्रेऽपि बोद्धव्यमिति भाष्ये स्पष्टम् ॥

विंशतिकात्खः ( पा० सू० ५-१-३२ ) ॥ अत्र द्वित्रिपूर्वादिति *न संबद्ध्यते ॥

खार्या ईकन् ( पा० सू० ५-१-३३ ) । दीर्घोच्चारणं स्पष्टार्थम् । *कन्प्रत्यये "केऽणः"( पा० सू० ७-४-१३ ) इति ह्रस्वेन च सिद्धे इकारोच्चारणसामर्थ्येन लोपबाधपूर्वकं सवर्णदीर्घकल्पने गौरवात् । खारीशब्दस्य स्वपर्यायपुंल्लिङ्गखारशब्दप्रकृतिकत्वे पुंवत्त्वेनेष्टासिद्धेश्च* ।

पणपादमा ( पा० सू० ५-१-३४ ) पणादिसाहचर्यात्पादशब्दः परिमाणवाच्यत्र । त्रयोदशेति । ठञ्ठकौ२ ठन्यतौ४ कन्ड्वुन्टिठनः७ अञ्शतमानादण्९ खईकनौ११ पणादियत्१२ द्वित्रीतिवार्तिकोक्ताण्१३ चेत्येवन्त्रयोदशेत्यर्थः । अनुवर्तते न तु नान्यत्वमितिभावः ।

तेन क्रीतम् । ( पा० सू० ५-१-३७ ) क्रयो नाम द्रव्यदानपूर्वकं वस्त्वन्तरग्रहणम् । तेनेत्यनेन च प्रत्यासत्त्या क्रयघटकं द्रव्यमेव गृह्यते* । *"सोऽस्यांशवस्न" ( पा० सू० ५-१-५६ ) इत्यनेन तु न सिद्धः । यस्य शतं मूल्यं न भवति, अथ च कार्यवशात्तेन क्रीतं तत्र तस्याप्राप्तेः ।

---

कम् । न च द्वित्रिभ्यामित्यस्माद्यः पूर्वयोगस्तच्छेषत्वमनेन प्रतिपाद्यत इति वाच्यम् । तदुच्छेष्यं विजानीयात् अविशेषणेत उत्तरन्द्वित्रिभ्यामिति तदाचार्यः सुहृद् भूत्वाऽन्वाचष्टे द्वित्रिभ्यान्द्वैयोग्यमिति भाष्यकृतैव "विस्तात्" ( पा० सू० ५-१-३१ ) इति सूत्रशेषत्वस्य बाधनात् । *इदम्=बहुपूर्वादिति यत् । तदुक्तं द्वित्रिभ्यामिति पूर्वसूत्रे एव —"बहुग्रहणङ्कर्त्तव्यम् । बहुनिष्कम् । बहुनैष्किकम् । बहुबिस्तम् । बहुबैस्तिकम्" इति ।

*न सम्बध्यत इति । एतद्बीजन्तूक्तमेव । स्पष्टार्थत्वमुपपादयति—*कन्प्रत्यय इति । *इष्टासिद्धेरिति । इकन्प्रत्ययपक्षे पुंवद्भावे "यस्य" ( पा० सू० ६-४-१४८ )इतिलोपे खारिक इति, कन्पक्षे तु खारीक इति भविष्यतीतीष्टासिद्धिरित्यर्थः ।

*द्रव्यमेव गृह्यते इति । एवञ्च द्रव्यत्वावच्छिन्नान्विते ऽपि दाने तत्पदसङ्ग्राह्यविशेषधर्मावच्छिन्नान्वये बाधकाभावः । द्रव्यवान् घटवानितिवत् । प्रकृतसूत्रान्यथासिद्धिम्परिहरति—*सोऽस्यांशेति ।

*धनपतिसंयोग इति । *संयुज्यते येन पुरुषः फलेन स संयोग इति भावः । अत एव संयोगो नामेदं कृत्वेदमवाप्यते इति भाष्यं, करणव्युत्पत्त्या यागादिरेव संयोग इति कैयटश्च सङ्गच्छते ॥

गोद्व्यचो ( पा० सू० ५-१-३९ ) ठकोऽपवादः ।

तस्येश्वरः ( पा० सू० ५-१-४२ ) ॥ तस्येत्यनुवर्त्तमाने तस्यग्रहणं निमित्तमित्यस्य निवृत्त्यर्थम् ।

पात्रिकीति । षित्वान्ङीष् ॥

तदस्मिन्वृ ( पा० सू० ५-१-४७ ) । प्रत्येकमिति । एकैककर्मकदानाधिकरणेऽपि प्रयोगस्येष्टत्वात् । *द्वन्द्वस्तु सौत्रत्वात्साधुरिति भावः । आयादिसाहचर्यात्सञ्ज्ञावृद्धेरग्रहणम् । उपदेति टाबन्तम् । रक्षानिर्वेश इति । *रक्षानिमित्तभृतिरूप इत्यर्थः । उत्कोच इति । उपहार इत्यन्ये ।

रूपकस्येति । रूप्यकार्षापणस्येत्यर्थः । *अत्र मानं चिन्त्यम् । *असामर्थ्यन्तु नित्यसापेक्षत्वात् [गमकत्वाद्वा] वारयितुं शक्यम्, *अर्द्धमित्युक्ते कस्येति जिज्ञासायां रूपकस्येत्युत्तरमत एव सङ्गच्छते ।

भारभूतेभ्य इति । वंशादिशब्दानां *भारभूतत्वं तथाभूतार्था-

---

*धनपतिसंयोग इतीति । धनपतेः संयोगो=धनपतिसंयोगः । संयुज्यतेऽनेनेति संयोगः । यागादिश्च संयोगपदेन विवक्षितः । संयोगपदार्थघटकयुज्धात्वर्थक्रियायान्धनपतेरिति षष्ठ्यर्थकर्त्तृत्वस्यान्वयस्तद्देतद्बोधयितुमाह-*संयुज्यत इति ।

दीयते इत्यस्य पृथगन्वये साहित्याभावाद्वृद्ध्यादीनान्द्वन्द्वो न प्राप्नोतीत्यत आह-*द्वन्द्वस्त्विति । रक्षानिर्वेश इत्यत्र रक्षाया निर्वेश इति षष्ठीसमासः । वाक्यघटकषष्ठ्या निमित्तनिमित्तिभावार्थकतया समासस्य तादृशसम्बन्धविशिष्टेऽर्थे शक्तिस्तदभिप्रायेणाह-*रक्षानिमित्तेति । "निर्वेशो भृतिभोगयोः" इत्यमरः ।

*अत्र मानमिति । रूढस्यैवात्र ग्रहणमित्यत्र मानमित्यर्थः । यत्तु प्रकृतसूत्रेऽर्द्धशब्दो भागवाचकः स्यात् तदा भागस्यावयविसापेक्षत्वादसामर्थ्येन प्रत्ययो न भविष्यतीत्यतोऽत्र सूत्रे रूढस्यैव ग्रहणमिति मतन्तद्दूषयति—*असामर्थ्यं त्विति । नित्यसापेक्षत्वन्दर्शयति—*अर्द्धमित्युक्त इति ।

*भारभूतत्वमिति । अत्र भारशब्दो भावप्रधानः । भूत इत्यत्र भूप्राप्ता-

भिप्रायित्वाद् बोध्यम् । *सौत्रमेकवचनम् । अत्राद्यं व्याख्यानमेव *युक्तम् ।

द्व्याढकिकीति । "नयवाभ्याम्"(पा० सू० ७-३-३)इत्यस्य "अनन्तरस्य"इति न्यायेन "संख्यायाः संवत्सर"(पा०सू० ७-३-१५)इति वृद्धिनिषेधकत्वाभावादत्रैज् न* ।

लुगभावे इति । *'अन्यन्तरस्यांग्रहणमनुवर्त्तते' इति वृत्त्यनुरोधेनेदम् । वस्तुतस्तु तदत्र नानुवर्त्तते, पुनः खग्रहणात्* । लुक्तु ठञ एव । खष्ठनोस्तु न लुक् । सहविधाने उद्देश्यविधेयभावासम्भवात् । द्वन्द्वेन च सहविधानस्य स्फुटत्वात् । *अत एव भाष्ये अतश्चानुकृष्टस्यापि, खोऽन्यतरस्यामित्यस्य चानुवृत्तिं स्वीकृत्य लुक्खौ चेति प्रत्याख्यातम् । तेन द्वैकुलिजिकीति चिन्त्यमेव ।

तदस्य परिमाणम् (पा० सू० ५-१-५७) । *उत्तरेण योगविभागोऽत्र भाष्ये ध्वनितः* । अत्र परिमाणशब्देन *परिच्छेदकमात्रन्ते-

---

वितिधातोः कर्त्तरि क्तः । एवञ्च भारत्वम्प्राप्त इत्यर्थः । तच्च भारभूतत्वमर्थानान्तु शब्दानामितिकथम्भारभूतेभ्यो वंशादिभ्य इतीत्यत आह-*वंशादिशब्दानामिति । एतद्व्याख्यापक्षे समानवचनकत्वन्तर्हि स्यादत आह-*सौत्रमिति । एवञ्च "व्यत्ययो बहुलम्" ( पा० सू० ३-१-८५ ) इत्यनेनास्य सिद्धिरिति भावः। हरति = देशान्तरम्प्रापयति, चोरयतीति वा। वहति = उत्क्षिप्य धारयति। आवहति = उत्पादयतीत्यर्थः । *आद्यव्याख्यानमेवेति । द्वितीयव्याख्याने भारादित्येकवचनार्थस्य सर्वथा बाध एव भवति । एवं भारभूतेभ्य इत्यस्य गुरुत्ववद्वृत्त्यर्थो वाच्यः । एवञ्च वंशादीनां भारभूतत्वाव्यभिचाराद्वंशादिभ्य इत्येतद्विशेषणतया तस्योपादानस्य व्यर्थत्वापत्तिश्चेति भावः ।

*ऐज् नेति । ऐचो निषेधसन्नियोगशिष्टत्वात् ।

लुगभावमुपपादयति—*अन्यतरस्यामित्यादि । "आढकाचित" (पा० सू० ५-१-५३ ) इत्यतः । *पुनः खग्रहणादिति । यदि ततोऽन्यतरस्यामित्यस्यानुवृत्तिः स्यात्तदा खस्यापि तत एवानुवृत्त्या विधौ सिद्धे प्रकृतसूत्रस्थं खग्रहणं व्यर्थं स्यात् । *अत एव = अन्यतरस्यांग्रहणानुवृत्तेः सूत्रकारासम्मतत्वादेव ।

*उत्तरेण = "संख्यायाः संज्ञा"(पा० सू० ५-१-५८)इत्यनेन । *ध्वनित इति । तत्र हि तदस्य परिमाणं संख्यायाः संज्ञासङ्घसूत्राध्ययनेष्विति पठित्वा संख्यावाचकेभ्यः प्रत्ययानुदाहृत्यान्येभ्योऽपि दृश्यते खारशताद्यर्थम् । खारशतिको राशिः, खारसहस्रिको राशिरित्युदाहृतन्तेन ध्वनितमित्यर्थः । वार्त्तिकवचनप्रामाण्यादकारान्तोऽपि खारशब्दोऽस्ति । *परिच्छेदकमात्रमिति । अत्र

नोत्तरत्र संख्याया अनेन विशेषणं सङ्गच्छते। तेन षष्टिर्जीवितपरिमाणमस्य षाष्टिक इति सिद्धम् । द्विषष्ट्यादिभ्यस्त्वनेना*नभिधानान्न प्रत्ययः। किन्तु द्वे षष्टी भृत इत्यर्थे "तमधीष्टो भृत" (पा० सू० ५-१-८०)इत्यनेन। तस्य च न लुक् अनार्हीयत्वात् । *कालादित्यधिकारेऽपि यथाकथंचित्कालवाचकानामपि तत्र ग्रहणान्न दोषः। *रमणीयादिभ्योऽ*नभिधानान्न प्रत्ययः । स्पष्टं चेदं सर्वमत्र भाष्ये । सोऽस्येति वर्त्तमाने पुनस्तदस्येति तु स्पष्टार्थम् । *तत्सामर्थ्यादार्हीयत्वनिवृत्त्या द्विषाष्टिक इत्यादौ लुक् नेति तूक्तभाष्यविरोधादनादेयम् । *काकवाशितेनेत्र तदस्येत्यनेनार्हीयत्वनिवृत्तेरशक्यत्वाच्चेति दिक् ।

संख्यायाः सञ्ज्ञा (पा० सू० ५-१-५८)अत्र तदन्तविधिः । "ठञ्विधौ संख्यायाः प्रयोजनम्" इति "येन विधिः" (पा०सू० १-१-७२) इति सूत्रे वार्तिकात् । ठञ्विधायके संख्यया इति पदघटिते सूत्रे तदन्त-

---

मात्रपदेन पारिभाषिकस्यैव ग्रहणमिति नियमव्यवच्छेदः। *अनभिधानादिति। अत्रैव भाष्ये "सङ्ख्यादिष्वर्थेषु यथा प्रत्यय इष्यते तथाऽन्यत्रापि प्रत्ययसिद्ध्यर्थं जीवितपरिमाणे चोपसङ्ख्यानं कर्त्तव्यम्। षष्टिर्जीवितपरिमाणमस्य षाष्टिकः। साप्ततिकः। जीवितपरिमाणे चेत्यनर्थकम्। कालादिति सिद्धत्वात्। जीवितपरिमाणे चेत्यनर्थकं वचनम्। किङ्कारणम्। कालादितिसिद्धत्वात्। कालादित्येव सिद्धम् । इह यस्य षष्टिर्जीवितपरिमाणं षष्टिमसौ भूतो भवति तत्र तमधीष्टो भृतो भूतो भावीत्येव सिद्धम्। अवश्यश्चैतदेवं विज्ञेयम्। इह वचने हि लुक्प्रसङ्गः। इह हि क्रियमाणे लुक् प्रसज्येत । द्विषाष्टिकः। त्रिषाष्टिकः। अनेन सति लुग्भवति। तेन सति कस्मान्न भवति। आर्हादित्युच्यते" इत्युक्तम्। एतेन भाष्यग्रन्थेन द्विषाष्टिक इत्यादौ लुगभाव एवेष्ट इति लभ्यते। यदि च द्विषष्टिशब्दादपि तमधीष्ट इति प्रत्ययः स्यात्तदा लुक् स्यादेवेत्यनभिधानम्भाष्यप्रामाण्यान्निर्णीयत इति । ननु समुदायस्य कथङ्कालवाचकत्वमत आह—*कालादित्यधिकारेऽपीति। रमणीयशब्दात्प्रत्ययं वारयति-*रमणीयेति। *अनभिधानादिति। प्रकृतसूत्रस्थभाष्य एव रमणीयादिभ्यस्तेन प्रत्ययातिप्रसङ्गमाशङ्क्य "अथ मतमेतत्-काले दृष्टः शब्दः=कालशब्दः, कालं यो न व्यभिचरतीति न रमणीयादिष्वतिप्रसङ्गो भवति" इत्युक्तन्तेन तेभ्यः प्राप्त्यभावो निर्णीयते। केचित्तु सोऽस्येत्यनुवृत्त्यैव सिद्धे तदस्येत्यस्योपादानमेताद्विहितस्यार्हीयत्वनिवृत्त्यर्थम् । तेन द्विषाष्टिक इत्यत्र न लुगित्याहुस्तद्दूषयति—*तत्सामर्थ्यादिति। *काकवाशितेनेवेति। यथा काकशब्देन न शास्त्रावोध्योऽर्थः प्राप्यते तथाऽत्राप्येतत्सामर्थ्यान्नाऽनार्हीयत्वप्राप्तिरिति।

विधिरिति तदर्थः । *तेन द्वे षष्ठी परिमाणमस्य सूत्रस्य सङ्घस्य वा द्विषष्टिकं(तत्परिमाणमस्याऽध्ययनस्य तद् द्विषाष्टिकम्) इति सिद्धम् । अत्र द्वितीयस्य न लुक् द्विगुनिमित्तत्वाभावात् । पूर्वसूत्रमिति । तेन पञ्च गावोऽस्य सङ्घस्य धनमित्यादौ न । ननु पञ्चादीनां संख्येयवृत्तित्वात्परिच्छेदकत्वाभावः । पञ्चसंख्याकप्रस्थादिपरिमाणकं तु नेष्यत इत्यत आह–तत्र सञ्ज्ञाया-मिति । यद्वेति । *वृत्तिविषये तन्मात्रवृत्तित्वमिति भावः । सङ्घे पञ्चक इति । पञ्च परिमाणमस्य सङ्घस्येत्यर्थः । प्राणिसमूह इति । *परे तु सङ्घः समूहः समुदाय इत्यनर्थान्तरमिति पङ्क्त्यादिसूत्रभाष्यात् समूहमात्रं सङ्घपरन्तु तस्य बहुसमुदाये शक्तेः पदद्वयात्मके केऽण इत्यादौ द्विकं सूत्र-मित्यस्य सिद्धये तदित्याहुः । पञ्चकमध्ययनमिति । *पञ्चावृत्तयः परिमाणमस्येत्यर्थः । स्तोमे ड । मन्त्रसमूहे स्तोमशब्दः शक्त इति कैयटः । समूहमात्रे *प्रयोगस्तु लक्षणयेति तदाशयः । मन्त्रसमूहः प्रत्ययार्थः । *स्तुतिः स्तोम इत्यत्र स्तुतिपदं स्तुतिकरणमन्त्रसमूहपरम् ॥

पङ्क्तिविंशति ( पा० सू० ५–१–५९ ) । अत्र विंशत्याद्याः संख्यायां संख्येये च । उभयत्राप्येकवचनान्ताः* । तेन विंशतिर्गावो विंशतिर्गवामित्यादि सिद्धम् । तत्र नवत्यन्ताः स्त्रियां सहस्रादिवदेकत्र्यादि-वद्येमान्यप्यव्युत्पन्नानि इति वार्तिककृतः* । एषां प्रदर्शनं तूदाहरणमात्रम् । सहस्रादयोऽप्येवं व्युत्पाद्या इत्यन्ये ।

पञ्चद्दशतौ ( पा० सू० ५–१–६० ) ॥ इत्यन्तौ निपात्येते तदस्य परिमाणमित्यर्थे । पञ्चानां सङ्घ एव पञ्चत्वे संख्येतीतस्तद्विशेष्यकबोध एवेति परे ।

---

*तेन=तदन्तविधिस्वीकारेण । द्व्येकयोरितिवदितिदृष्टान्तेन तत्र यथा वृत्तिविषये सङ्ख्यापरत्वन्तथात्रापीति सूचितमित्याशयेनाह–*वृत्तिविषय इति । वृत्तिकारोक्तरीत्या मूलोक्तं सूत्रशब्दस्य प्रयोजनन्न युक्तमिति सूचयन् स्वयं तत्प्रयोजनमाह––*परे त्विति । पञ्चकमध्ययनमित्यत्र पञ्चकशब्द आवृत्तिरूपसंख्येये वर्तेत इत्याशयेनाह–*पञ्चावृत्तय इति । *प्रयोग इति । स्तोमशब्दस्य प्रयोग इत्यर्थः । ननु यदि स्तोमशब्दः समूहपरस्तदा स्तुतिः स्तोम इति सामानाधिकरण्यानुपपत्तिरत आह—*स्तुतिः स्तोम इति ।

*एकवचनान्ताः । अत एव "विंशत्याद्याः सदैकत्वे" इतिकोशसङ्गतिः । *वार्तिककृत इति । अत एव वार्तिककृतोक्तम् "अनारम्भो वा प्रातिपदिकविज्ञानाद्यथा

त्रिंशच्च (पा० सू० ५-१-६२)। *आभ्यान्तदस्य परिमाणमित्यर्थे अण्प्रत्ययो भवति ब्राह्मणेऽभिधेये समुदायेन चेत्प्रत्यासत्त्या ब्राह्मणसञ्ज्ञा गम्यत इत्यर्थः।

लब्धुमिति। उपलक्षणमिदं क्रियामात्रस्य। तेनोपवासं कर्तुं योग्यो भवतीत्याद्यर्थे औपवासिकादि सिद्ध्यति।

नित्यमाभीक्ष्ण्यमिति। एतद् *वृत्त्यनुरोधेन। "वाक्यस्य दर्शनान्नित्यग्रहणमनर्थकम्" इति भाष्योक्तेस्तदर्थत्वानौचित्यम्।

दण्डादियदिति। "दण्डादिभ्यो यः" इति त्वपपाठः* ॥

पात्रात् (पा० सू० ५-१-६८)॥ अत्र नित्यसयः॥

कडङ्कर (पा० सू० ५-१-६९)॥ कडमिति मदमित्यर्थकम्। कडङ्करं=बुसम्।

---

सहस्रादिषु" इति। अत्र वार्तिककृत इत्यनेन यावतां व्युत्पादनं सूत्रकृता कृतन्तेष्वव्युत्पन्नत्वकल्पनन्न युक्तङ्किन्त्वनुक्तसाधुत्वानामेवेति सूचितम्। अत एव भाष्यकृतोक्तं-"नासूया कर्त्तव्या यत्रानुगमः क्रियते" इति। अत्र कैयटः-"अननुगमो हि दोषाय। अशक्यो वाऽऽनन्त्यात्सर्वशब्दानुगमो न त्वनुगम एव स्वप्रज्ञापराधादशक्यार्थविशेषनिश्चयत्वाद्दोषत्वेनोद्भावनीयः" इति। दोषायेति। अनुगममन्तरेण मन्दबुद्धीनामनुग्रहासम्भवात्। वस्तुतो न सोऽप्याचार्यस्य दोष इत्याह--अशक्य इति। अनुगमस्तु सर्वथा नाचार्यस्य दोषायेत्याह--न त्विति। अनुगमविषयेषु विंशत्यादिषु अर्थविशेषानिश्चयः स्वप्रज्ञापराधजो न तु तत्र सूत्रकृदपराध इति भावः।

त्रिंशच्चत्वारिंशतोः (पा. सू. ५-१-६२)। व्यत्ययेन पञ्चम्यर्थे षष्ठी, तदभिप्रायेणाह—*आभ्यामिति।

तदर्हति (पा. सू. ५-१-६३)। द्वितीयासमर्थादर्हतीत्यर्थे प्रत्ययो भवति। अर्हतीत्यस्य योग्यो भवतीत्यर्थः। योग्यता च क्रियायामेवेति क्रियावाचकपदाध्याहारेणेति श्वेतच्छत्रमित्येतल्लब्धुमितिपदाध्याहारेण व्याख्यातम्।

*वृत्त्यनुरोधेनेति। तत्र हि नित्यग्रहणं प्रत्ययार्थविशेषणमित्युक्तम्।

दण्डादिभ्यः (पा. सू. ५-१-६६)। यदिति त्वनुवृत्त्या लभ्यते। *अपपाठ इति। अत्र मानन्तु "अचो यत्" (पा. सू. ३-१-९७) इति सूत्रस्थम्भाष्यमेव। तथाहि। तत्र हि-"हनो वा यद्वधश्च वक्तव्यः" इति वार्तिकम्। वध्यः, घात्यः। तद्धितो वा। वधमर्हति वध्यः। उभयथापि वध्य इत्येतद्यतोऽनाव इत्याद्युदात्तम्। तद्धितस्यातान्तत्वे तु तदन्तस्यान्तोदात्तत्वं स्यादिति तद्धितो वेतिसमानत्वेनाभिधानमसङ्गतं स्यादिति।

तत्कर्मार्हतीति । यद्यपि यज्ञर्त्विक्शब्दयोस्तदर्थव्यापारे तत्कर्मवति लक्षणयाऽपि सिद्ध्यति तथाप्यत्र प्रकरणे *मुख्यार्थेभ्य एव प्रत्यय इति ज्ञापनार्थमिदम् ।

पारायणमिति । *यद्यपि तद्गुरुशिष्याभ्यां निर्वर्त्यते तथापि *शिष्य एवेष्यते अभिधानस्वभावात्; तदाह—छात्र इति । एवं तौरायणिकोऽपि यजमान एव न तु ऋत्विजीति बोद्ध्यम् । चान्द्रायणं=तपोविशेषः । संशयमा (पा० सू० ५-१-७३)॥ संशयशब्दस्तद्विषये* लाक्षणिकः । आपन्न इति कर्तरि क्तः । ततोऽभिगमनमिति । पञ्चम्यन्तात्तसिल् ।

पन्थो ण (पा० सू० ५-१-७६)॥ पथः पन्थादेशो णश्च प्रत्यय इत्यर्थः । अणिति पाठस्तु "छेदादिभ्यः" इति सूत्रस्थ*भाष्यासम्मतः । नित्यं गच्छतीति । वृत्त्यनुसारेण । भाष्ये नित्यग्रहणप्रत्याख्यानात् ॥

कालात् (पा० सू० ५-१-७८)॥ कालग्रहणे यथाकथञ्चिदपि कालबोधकस्य ग्रहणमिति "तदस्य परिमाणम्" (पा० सू० ५-१-५७) इति सूत्रे भाष्ये स्पष्टम् । *अतिप्रसङ्गस्त्वनभिधानान्न ।

---

लक्षणया सिद्धे वार्त्तिकवैयर्थ्यमित्यभिप्रायेणाशङ्कते—*यद्यपीति । *मुख्यार्थेभ्यः=शक्यार्थपरेभ्यः । तेन यज्ञशब्दस्य पाके लक्षणया यज्ञमर्हति सूद इत्यत्र न ॥

## ॥ इत्यार्हीयाः ॥

पारायणतुरायणचान्द्रायणं वर्त्तयति (पा. सू. ५-१-७२)। पारायणशब्द आदित आरभ्य समाप्तिपर्यन्तं यद्ग्रन्थस्याध्ययनन्तत्परः । तस्य वर्त्तनं यद्यपि गुरुशिष्योभयसाध्यन्तथापि पारायणमधीते=पारायणिक इत्युच्यते । यस्तुरायणेन यजते स तौरायणिक इत्युच्यते । "यश्चैवाधीते यश्च परस्य करोति उभौ तौ वर्त्तयतः । यश्च यजते यश्च पुरोडाशान्निर्वर्तयति उभौ तौ वर्तयतः । उभयत्र कस्मान्न भवत्यनभिधानात्" इतिभाष्ये उक्तम् । अत्र कैयटः-परस्य=शिष्यस्य । करोति=उच्चारयति, अध्यापक इत्यर्थः । उभौ ताविति । अन्यतरासन्निधौ क्रियाया अनिष्पादादुभयोः कर्तृत्वम् । अनभिधानादिति । अध्यापके याजके च प्रयोगाभावादिति । एतद्भाष्यकैयटाभ्यां शिष्य एव प्रत्यय उत्पद्यत इत्याशयेनाह-*शिष्य एवेष्यत इति । *तद्विषयत्वे=संशयविषयत्वे । *भाष्यासम्मत इति । तत्र हि "पन्थो ण नित्यम्" (पा. सू. ५-१-७६) इत्येव सूत्रपाठो दृश्यते न त्वणिति । *अतिप्रसङ्गस्त्वनभिधानान्नेति । उपपादितमेतत् ।

आन्हिकामिति । अन्हष्टखोरेवेति नियमान्न टिलोपः ।

तादृश एवेति । स्वसत्तयाऽव्याप्यमानकाल इत्यर्थः । *तमधीष्ट इति अत्यन्तसंयोगे द्वितीया । *मुहूर्तमध्येषणेऽपि तत्फलीभूता*ध्ययनक्रियाव्याप्ते *तद्व्याप्तत्वोपचारात् । *यावत्कालमध्येषणभरणं क्रियेते तावतः प्रत्ययो नेष्यते* । भूतभाविनोरुभयोरुपादानसामर्थ्यात्कालान्तर्भावो बोद्धव्यः ।

मासाद्व (पा० सू० ५-१-८१) ॥ निर्वृत्तादीनां पञ्चानामधिकारेऽपि भूत इत्येव सम्बद्ध्यते । न ह्यर्थान्तरे प्रत्यये तदन्तेन वयो गम्यते; तदाह-मासं भूत इति ॥

यद्यपीति । अव्ययसीति सूत्रभाष्यात्तु अत्रापि यपोऽनुवृत्तिरेव ल-

---

तेन निर्वृत्तम् (पा. सू. ५-१-७९) । तृतीयान्तात्कालवाचिनः प्रातिपदिकान्निर्वृत्तमित्यस्मिन्नर्थे ठञ् प्रत्ययः स्यात् ।

*तमधीष्ट इत्यत्यन्तसंयोग इति । इदमुपलक्षणमेतत्सूत्रविषये सर्वत्रात्यन्तसंयोग एव । नन्वध्येषणारूपक्रियाया न मासव्यापकत्वन्तस्या मासारम्भकप्रथमदिन एवोत्पत्तेरिति मासत्वाधिकरणदिनान्तरे प्रतियोगिव्यधिकरणतदभावसत्त्वादत आह—*मुहूर्त्तमिति । *अध्ययनव्याप्ते इति । काले इति शेषः । *तद्व्याप्तत्वोपचारादिति । अध्येषणव्याप्तत्वोपचारादित्यर्थः । एतेनाध्येषणस्य न कालिकसम्बन्धेन व्यापकत्वविवक्षा किन्तु स्वप्रयोज्याध्ययनप्रतियोगिककालिकसम्बन्धेन मासत्वाधिकरणद्वितीयादिदिने यत्किञ्चिन्मूहूर्त्तावच्छेदेन निरुक्तसम्बन्धावच्छिन्नप्रतियोगिताकस्तदभावो वर्त्तमानोऽपि न प्रतियोगिव्यधिकरण इति भावः । ननु किमुपचारेण यस्मिन्मुहूर्त्तेऽध्येषणन्तन्मुहूर्त्तव्यापकत्वसत्त्वेन तन्मुहूर्त्तवाचकात्प्रत्ययोत्पत्तिस्वीकारेण सूत्रस्य चारितार्थ्यादत आह—*यावत्कालेति । *नेष्यत इति । तदुक्तम्भाष्ये—"अधीष्टभृतयोर्द्वितीयानिर्देशोऽनर्थकस्तत्रादर्शनात् । न ह्यसौ मासमधीष्यते किन्तु मुहूर्त्तमसावधीष्टो मासन्तत्कर्म करोति । तादर्थ्यात्ताच्छब्द्यम्भविष्यति" इति । अत्र कैयटः । मासादिशब्दा अध्येषणभरणव्याप्तमूहूर्त्तादिकालवाचिन एवाश्रियन्त इति । न चैवं सति मुहूर्त्तव्यापकत्वमेव लब्धन्तच्च साक्षादेवास्ति अध्येषणादेरिति तत्फलभूताध्ययनव्याप्त इति पूर्वोक्तं विरुध्येतेति वाच्यम् । अधीष्टभृतयोरिति प्रतीकमुपादाय कैयटेनैव यावन्तं कालमध्येषणम्भरणञ्च क्रियते ततः प्रत्ययो नेष्यते अध्येषणभरणफलव्यापारव्याप्यात्तु कालादिष्यत इत्यनेन तथाभिधानात् । फलव्यापारेत्यस्याध्येषणादिफलभूतो यो व्यापारः कर्मकरणरूपस्तद्व्याप्यादित्यर्थः । मासमधीष्ट इत्यस्य मासव्यापिव्यापारार्थमधीष्ट इत्येवार्थः । अध्येषणभरणव्याप्तमुहूर्त्तादिकालवाचिन इति कैयटस्यापि मासव्यापिव्यापारफलकाध्येषणभरणव्याप्तमुहूर्त्तेत्याद्यर्थः । एतेन मासादिव्यापकत्वं स्पष्टमेव लभ्यत इति । यदुक्तं मूले

भ्यते । एवं हि तत्र भाष्यं "अवयसि ठंश्चेत्यनन्तरस्यण्यतोऽनुकर्षः, द्वेष्यं विजानीयात् यवप्यनुवर्त्तते इति" । यवप्यनुवर्त्तत इत्यस्य पूर्वसूत्रे इति शेषः । अनन्तरस्येत्युक्त्या *तस्यानन्तरत्वं सूचितं तच्च पूर्वसूत्रेऽननुवृत्तावेव भवतीति बोद्धव्यम् । 'व्यवहितस्यापि क्वचिदनुवृत्तिर्दृष्टा यथा "द्वितीयाटौस्स्वेनः" (पा० सू० २-४-३४) इत्यत्रैतद इवेदमः, एवमिहापि कश्चिद् भ्राम्येदित्यर्थः'इति वदता कैयटेन दृष्टान्तेन व्यवहितस्यापीत्युक्त्या च पूर्वसूत्रे तदसम्बन्ध एवोक्तः, मूलन्तु *वृत्त्यनुसारीति दिक् ।

चाण्ण्यदिति । *अवयसि, ठनिति सूत्रद्वयन्तु न कृतं शब्दगौरवादपि योगविभागस्य गरीयस्त्वात् ।

पञ्चस्वर्थेष्विति । *यथायोगमितिशेषः ।

द्व्यह्नीन इति । *तद्धितार्थद्विगौ रूपम् । समाहारद्विगौ तु न खः समासान्ते कृतेऽहन्शब्दान्तद्विगोरभावात् ॥

संख्यायाः (पा० सू० ७-३-१५) ॥ संख्यायाः परस्य संवत्सरसंख्याशब्दस्येत्यर्थः । द्वे षष्टीति । षष्टिशब्दोऽत्र तत्संख्याकेऽहरादिरूपे काले वर्त्तते । अतः कालादित्यधिकारस्थभूतार्थप्रत्ययः । संवत्सरग्रहण-

---

भूतः स्वसत्तया व्याप्तकाल इति, तत्र कालान्तर्भावे मानमाह-*भूतेति । एतेनाधात्वभूतयोर्दीव्यतीत्यत्र यथा वर्त्तमानकालान्तर्भावेण न शक्तिस्तथा भूतकालान्तर्भावेण न शक्तिरिति सूचितम् ।

मासाद्वयसि यत्खञौ ( पा० सू० ५-१-८१ ) मासशब्दाद्वयसि गम्यमाने उक्तार्थे यत्खञौ प्रत्ययौ स्तः ।

*अत्रापि=षण्मासाण्ण्यच्चेतिसूत्रेऽपि । चेन ठञ्मात्रस्य सम्बन्धः । *तस्य=यपः । *वृत्त्यनुसारीति । तत्र हि षण्मासेतिसूत्रव्याख्यानावसरे चकाराद्यप् चेत्युक्तम् ।

ननु चकाराकरणायावयसि ठन् इत्येवं सूत्रद्वयमेव कर्त्तव्यमत आह-*अवयसीति ।

ननु अवयसीतिसूत्रे भूतार्थ एव प्रत्ययस्वीकारात्पञ्चस्वित्यनुपपन्नमत आह-*यथायोगमिति ।

*तद्धितार्थद्विगाविति । द्वे अहनी अधीष्ट इत्यादिविग्रहः । नन्वेवं विग्रहेऽपि "राज्यहः" ( पा० सू० ५-१-८७ ) इति सूत्रम्परत्वाद्बाधित्वा टचा भाव्यमित्याशङ्कायामाह मूले समासान्तविधेरिति । *वृत्याद्येवेति । तत्र हि "अहः संवत्सर इत्येवमन्ताद् द्विगोर्निर्वृत्तादिषु वा खञ्-

मिति। संख्यायास्तु न परिमाणग्रहणेन *असति गमके ग्रहणम्। "संख्या बाह्या तु सर्वतः" इत्युक्तेरिति भावः।

वा च लुगिति। वाक्यभेदेन *तयोरेवेत्यर्थः।

द्वैवर्षिक इति। अस्य व्याधिरिति विशेष्यम्। तेन *न नित्यो लुक्। प्रतिषेधो नेति। भविष्यदर्थकप्रत्ययभिन्ने ञिदादावित्यर्थस्तदाह—गम्यते हीति। कर्म करिष्यतीत्यादिपदान्तरसमभिव्याहारेणेत्यर्थः, तदाह—अधीष्टो भृतो वेति। *भूतो वेत्यपपाठः। तत्र भविष्यत्वस्य कथमप्यनवगतेः। द्विवार्षिको मनुष्य इति। *चित्तवतीत्यस्यारम्भसामर्थ्यादेव नित्यत्वे सिद्धे पुनर्नित्यग्रहणाद् मनुष्येऽर्थे एव नित्यं लुक् तत्रैवाऽभिधानाच्चेति नात्र लुगिति हरदत्तः। *परे तु नित्यग्रहणेन वाच्यद्वयोक्तार्थालाभस्तस्मात्। अध्येषणभरणयोश्चेतनविषयकत्वेन तत्र लुको नित्यतया ञिदादिप्रत्ययपरत्वाभावेन तत्र वृद्धिप्राप्तिरेव न। *नित्यग्रहणं तु वेत्यस्य निवृत्तये स्पष्टार्थमेव, मूलन्तु वृत्त्यनुरोधेनेत्याहुः।

परिमाणान्तस्या (पा० सू० ७-३-१७)॥ व्याख्यातमिदम्। अत्रापि वृत्त्यादिलिखनं तु प्रमादात्। केचित्पठन्तीति। अत्रारुचिबीजं "कुलिजाल्लुक्खौ च" (पा० सू०-५-१-५५) इत्यत्र दर्शितम्।

षष्टिकाः (पा० सू० ५-१-९०)॥ शालिविशेष एवायं साधु-

---

त्ययो भवति, तेन मुक्ते ठञ् भवति" इत्युक्त्वा द्व्यहीनः द्वैयह्निक इति रूपमुदाहृतम्। अत्र द्व्यहीन इत्यत्राहःशब्दान्तात्खप्रत्ययदर्शनेन समासान्ताभावः कल्प्यते। यदा नानेन खस्तदा पूर्वोक्तसामान्यसूत्रेण अह्नादेशे कृतेऽपि ठञ्प्रत्यय इत्याशयः।

*असति गमक इति। साधकसत्त्वे भवत्येव। यथा तदस्य परिमाणम्। संख्यायाः संज्ञासंघेतिक्रमेण पाठात "सङ्ख्या" (पा० सू० ५-१-५८) इति सूत्रे संख्यायाः परिमाणग्रहणेन ग्रहणम्भवत्येवेति। *तयोरेव=खठञोरेव।

*न नित्य इति। "चित्तवति" (पा० सू० ५-१-८९) इति सूत्रविहितः। क्वाचित्कम्पाठं खण्डयति-*भूतो वेत्यपपाठ इति। द्विवार्षिक इत्यत्राधीष्टो भृतो वेत्यर्थविवक्षायां भविष्यत्त्वस्य बुद्धिस्थत्वे चित्तवतीति नित्यं लुक् दुर्वार इत्याशङ्कायामाह-*चित्तवतीत्यस्येति। *तत्रैवाभिधानादिति। लुक्प्रवृत्तिविषये वृद्धेरन्तरङ्गानपीतिन्यायेनाप्रवृत्तेरवृद्धिघटितप्रयोगस्य तत्रैवाभिधानादित्यर्थः। हरदत्त इत्यनेन सूचितामरुचिं दर्शयन् स्वमतमाह-*परे त्विति। नित्यग्रहणन्तर्हि तत्सूत्रस्थं व्यर्थमत आह-*नित्यग्रहणन्त्विति।

*नैमुद्रेषु । एकवचनान्तप्रयोगदर्शनादाह-बहुवचनमिति ।

परिजय्य इत्यस्य विवरणम्=जेतुं शक्य इति ।

अस्येत्यर्थे इति । *ब्रह्मचर्यश्चेत्तत्कालपरिच्छेद्यमित्यपि बोद्ध्यम् । यद्वेति । अत्र पक्षे ब्रह्मचर्यश्चेद्विशेष्यमित्यर्थः । मासोऽस्येति । अत्र मासस्य प्राधान्यात्प्रथमा । अत्यन्तसंयोगे *द्वितीया तु विशेषणादेवेति भावः । भाष्यन्तु यद्वेति पक्षपात्येव । *मासिको ब्रह्मचारीति त्वर्शआद्यजन्तं बोद्ध्यम् । महानाम्न्यो नामेति । अनेन रूढतया भाषितपुंस्कत्वाभावात्पुवत्वं नेति सूचयति । *अत एव भाष्ये महानाम्निकमित्युदाहृतम् । *भाष्ये तु "तदस्य ब्रह्मचर्यमिति *महानाम्न्यादिभ्य उपसंख्यानम् । महानाम्नीनां ब्रह्मचर्यं माहानाम्निकम्" इत्युक्तम् । माहानाम्निक इति तु महानाम्नीसहचरितव्रतपरान्महानाम्नीशब्दाच्चरतीत्युपसंख्यानमिति वचनेन साधितम् ।

तस्य च दक्षिणा ( पा० सू० ५-१-९५ ) ॥ यज्ञवाचकेभ्यः

---

*न मुद्रेष्विति । शालिविशेष एव लोकप्रसिद्धेः ।

"तदस्य" ( पा० सू० ५-१-९४ ) इति सूत्रार्थप्रदर्शनावसरे ब्रह्मचर्यमित्यस्यान्वयाप्रदर्शनात्तस्य वैयर्थ्यशङ्कावारणायाह-*ब्रह्मचर्यश्चेदिति । ननु मासोऽस्येत्यर्थे ब्रह्मचर्यस्य विशेष्यत्वेऽपि ब्रह्मचर्ये स्वपरिच्छेदकत्वसम्बन्धावच्छिन्नव्यापकता प्रतीयत इति द्वितीया कुतो नेत्याकाङ्क्षायामाह-*द्वितीया त्विति । यत्र विशेष्यतावच्छेदकरूपेण ज्ञातेऽर्थे कालाध्वनिरूपितव्यापकताबोधनाय कालाध्ववाचकः शब्दः प्रयुज्यते तत्रैव द्वितीया । प्रकृते तु मासत्वावच्छिन्ने ब्रह्मचर्यनिरूपिता व्याप्यता बोधनीया न तु मासनिरूपिता व्यापकता ब्रह्मचर्ये बोधनीयेति न द्वितीयेत्यर्थः । मासे व्याप्यताबोधे ब्रह्मचर्ये व्यापकताबोध आर्थिको यद्यप्यस्ति तथापि न स वाक्यतात्पर्यविषय इति भावः । पूर्वोक्तप्रयोगस्योपपत्तिमाह-*मासिक इति । *अत एव=पुंवद्भावाभावादेव । *भाष्ये त्विति । वार्त्तिके तदस्य ब्रह्मचर्यमित्युपादानेन सूत्रस्य द्वेधा व्याख्यानमिति सूचितम् । तदिति द्वितीयासमर्थात्कालवाचिनोऽस्येति षष्ठ्यर्थे ठञ् भवति ब्रह्मचर्यश्चेद्गम्यते । मासं ब्रह्मचर्यमस्य=मासिको ब्रह्मचारी । तथा तदिति प्रथमासमर्थात्कालवाचिनोऽस्येतिषष्ठ्यर्थे ठञ् भवति यत्तदस्येति निर्दिष्टं ब्रह्मचर्यञ्चेत्तद्भवतीति । मासो ब्रह्मचर्यमस्य=मासिकं ब्रह्मचर्यमिति वाक्ये मासस्य प्राधान्यात्प्रथमैव । *महानाम्न्यादिभ्य इति । अत्र महानाम्नीशब्दाद् ब्रह्मचर्यस्य विशेष्यतायाम्प्रत्ययविधानेन सामर्थ्यादत्र षष्ठी समर्थविभक्तिः ।

षष्ठ्यन्तेभ्यो दक्षिणेत्यर्थे ठञित्यर्थः । अकालादपीति । *परे तु यज्ञ-ग्रहणादेवात्र कालादित्यस्यासम्बन्धः । न हि द्वादशाहसाध्ययज्ञवाची का-लशब्दः । *अत एव भाष्ये आख्याग्रहणात्प्रसिद्धमग्निष्टोमाद्यप्रसिद्धं पञ्चौ-दनादिकं पाकयज्ञादि च ये आचक्षते तेभ्यः सर्वेभ्यः प्रत्यय इत्यर्थकमुक्तम् ।

तत्र च दी (पा० सू० ५-१-९६) । कालवाचिभ्यो दीयते कार्यमित्येतयोरर्थयोर्भववत्प्रत्यया इत्यर्थः । प्रावृष एण्यः । शारदे "स-न्धिवेलाद्यृतु"(पा० सू० ४-३-१६)इत्यण् । *इदं वृत्त्यनुरोधेन । भाष्ये तु चो भिन्नक्रमः दीयते इत्यनन्तरं बोद्धव्यः । चकारेण च यज्ञाख्येभ्य इत्याकृष्यते । तत्र दीयते इत्यर्थे यज्ञाख्येभ्यष्ठञ् भवतीत्यर्थः । अग्निष्टोमे दीयते भक्तमाग्निष्टोमिकम् । कार्यरूपार्थे एव भववदतिदेश इत्युक्तम् ।

व्युष्टम्=अहर्मुखम् । व्युष्टे दीयते *इत्यादिभाष्यरीत्या व्युत्तरत्रो-भयोरधिकारः ॥

संपादिनि (पा० सू० ५-१-९९) । गुणोत्कर्षः सम्पादः=सं-पत्तिस्तद्वदित्यर्थः ।

*प्रभवतीति । समर्थ इत्यर्थः ।

काल्यमिति । प्रातःकालवाची काल्यशब्दस्त[illegible]विकल्पशब्दव-दव्युत्पन्नं प्रातिपदिकं बोद्धव्यम् । ततः स्वार्थिकाणन्तं वा ।

इन्द्रमहः=इन्द्रोत्सवः ।

मन्थो=विलोडनदण्डाधारः काष्ठविशेषः । मन्थदण्डयो रूढावेतौ ।

---

"तस्य च दक्षिणा यज्ञाख्येभ्यः" ( पा० सू५ ५-१-९५ ) इति सूत्रे आ-ख्याग्रहणाभावेऽपि यज्ञेभ्य इत्युच्यमानेऽपि तद्वाचकशब्देभ्य एव भविष्यतीति-कालाधिकारस्य विधानसामर्थ्यादेव बाधे सिद्धे नेदमाख्याग्रहणस्य प्रयोजन-मित्याशयेनाह-*परे त्विति । *अत एव=आख्याशब्दाभावेऽपि कालाधिकार-बाधस्य सिद्धत्वादेव ।

तत्र च दीयते ( पा० सू० ५-१-९६ ) । *इदम्=प्रथमोक्तव्याख्यानम् । *इत्यादिभाष्यरीत्येति । इदमर्थप्रदर्शनपरं लेखनम् । भाष्ये तु प्रकृतसूत्रेऽग्निपदे दीयते कार्यमित्युक्तम् । एतेनैतादृशानुपूर्व्या भाष्येऽदर्शनेनेत्थमभिधानमसङ्गत-मित्यपास्तम् ।

तस्मै प्रभवति सन्तापादिभ्यः ( पा० सू० ५-१-१०१ ) । अत्र यत्प्रभ-वतीति तद्व्याचष्टे-*प्रभवतीतीति ।

*चूडादिभ्य इति । इदं "व्युष्टादिभ्योऽण्"(पा० सू० ५-१-९७) "ऋतोरण्"(पा० सू० ५-१-१०५)इत्यनयोश्*रपि बोद्धव्यम । *तेन यथादर्शनं व्यवस्था । अग्निपदे दीयते कार्यं वा आग्निपदं, पैलुमूलम् । उपवस्ता प्राप्तोऽस्य औपवस्त्रं, प्राशित्रम् । भाष्ये ऽग्निपदादिभ्य इति पाठः ।

ऐकागारिकट् (पा० सू० ५-१-११३) ॥ चौर इति । *तेन भिक्षौ न । टित्त्वं ङीबर्थम् । आद्युदात्तत्वमप्यत्र निपात्यते । *अत एव "ठञा सिद्धे* निपातनानर्थक्यम्" इति भाष्ये उक्तम् ।

समानकालस्येति । *एतदर्थमेव निपातनम् । अयमप्याद्युदात्तः* । आद्यन्तावुत्पत्तिनाशौ । आकालाट्ठंश्चेति वार्त्तिकान्निदयम्* । आकालिका=समानकालिकाद्यन्ता, चञ्चलेति यावत् । चांदाकालिकी ।

---

वृत्युक्तपाठरीत्याह-*चूडादिभ्य इति । *रपिबोध्यमिति । तदुक्तम्भाष्ये-अण्प्रकरणेऽग्निपदादिभ्य उपसंख्यानमिति । त्रीणीमान्यण्ग्रहणानि व्युष्टादिभ्योऽण्, समयस्तदस्य प्राप्तम् ऋतोरण्, प्रयोजनं विशाखाषाढादण् मन्थदण्डयोरिति । न चैवं पाठे चूडादिभ्यः कथम्प्रत्ययलाभ इति वाच्यम् । आदिशब्दस्य प्रकारार्थतया चूड़ादीनामादितस्तत्र पाठाभावेऽपि लाभसम्भवादिति भावः । नन्वेवमपि सर्वेभ्यः सर्वेष्वर्थेषु प्रत्ययः प्राप्नोतीत्यत आह-*तेन यथादर्शनमिति । तदुक्तम्भाष्ये-व्युष्टादिभ्योऽण् अग्निपदादिभ्यश्चेति वक्तव्यम् । अग्निपदे दीयते कार्यं वा आग्निपदम् । पैलुमूलम् । समयस्तदस्य प्राप्तम् ऋतोरण् अग्निपदादिभ्यश्च । उपवस्ता प्राप्तोऽस्य=औपवस्त्रम् । प्राशिता प्राप्तोऽस्य=प्राशित्रम् । प्रयोजनं विशाखाषाढादण् मन्थदण्डयोः अग्निपदादिभ्यश्चेति वक्तव्यम् । चूडा प्रयोजनमस्य=चौडम् । श्रद्धा प्रयोजनमस्य=श्राद्धम् ।

*तेन=चौरेतिविशिष्योपादानेन । *अत एव=आद्युदात्तत्वस्य निपातनादेव । *ठञा सिद्धे इति । "प्रयोजनम्" (पा० सू० ५-१-१०९) इति सामान्यसूत्रेण सिद्धे इत्यर्थः । एकशब्दस्यासहायपरतयाऽसहायागारलाभे तादृशस्यागारस्य मुमुषिषोः सौकर्यसम्पादकत्वेन प्रयोजनत्वलाभ इति भावः ।

आकालिकडाद्यन्तवचने । आकालिकट् इति रूपन्निपात्यते, आद्यन्तवचने=आद्यन्तयोर्वचने=विशेषणे विवक्षिते । समानकालशब्दस्य स्थानेऽयमादेशः समानकालशब्दार्थश्चाद्यन्तयोर्विशेषणञ्चेदित्यर्थः ।

*एतदर्थमेव=समानकालशब्दस्य स्थाने आदेशार्थमेव । अत्रैवकारेणेकट्प्रत्ययविधानाभावेऽपि ठञ्प्रकरणात्तदनुवृत्त्याऽप्येतत्सिद्धमिति ध्वनितम् । तदभिप्रायेणाह-*अयमप्याद्युदात्त इति । *निदयमिति । आकालाट्ठंश्चेतिवार्त्तिकविधेयो निदित्यर्थः ॥

## इत्यनार्हीयठञधिकारः—समाप्तश्च ठञोऽधिकारः ।

तेन तु (पा० सू० ५-१-११५) । सूत्रे तुल्यमिति *सामान्ये नपुंसकं प्रथमान्तञ्च। उदाहरणेऽप्येवम्* । व्यापारविशेषणत्वात् । क्रियेति च संनिहितत्वात्समानविभक्तिकत्वात्प्राधान्याच्च प्रत्ययार्थविशेषणम्* । यत्तुल्यं सा चेत्क्रियेत्यर्थः । प्रकृत्यर्थविशेषणन्तु न । ब्राह्मणादिशब्दानां लक्षणयाऽध्ययनपरत्वेन क्रियोपमानत्वयोग्यार्थकत्वेऽपि तत्र तृतीयार्थान्वयेन सत्त्वरूपतया क्रियात्वासम्भवात् । *स्थातव्येन तुल्यं गच्छतीत्यादिप्रयोगसत्त्वे तत्रापि तृतीयार्थान्वयेन सत्त्वरूपत्वमेव । पाकादीनान्तु सत्त्वरूपता स्पष्टैव । असत्त्वभूतार्थकतिङन्तार्थानामुपमानत्वमेव न । "न वै तिङन्तेनोपमानमस्ति" इति सन्सूत्रस्थभाष्यात् । उपमेयत्वन्त्वस्त्येव । *क्त्वाद्यन्तानां क्रियान्वयनियमेन तुल्यशब्दार्थेऽनन्वय एव । *अत एव प्रकृत्यर्थविशेषणत्वे कथञ्च तृतीयासमर्थं नाम क्रिया स्यादित्युक्तं भाष्ये । यस्यार्थस्य तिङन्तादिवाच्यत्वे क्रियारूपताऽभूत् स सम्प्रति सत्त्वभूतोऽपि क्रियेत्याश्रयिष्यते इति कल्पने गौरवम् । *नृत्यवद् गमनमित्यादावस्तीत्यध्याहृत्य *सत्तयोरेवोपमानोपमेयभावेनादोष इत्यन्यत्र विस्तरः ॥

---

तेन तुल्यं क्रिया चेद्वतिः ( पा० सू०-५-१-११५ ) । तेनेतितृतीयान्तात्तुल्यमित्यर्थे वतिः स्यात्, यत्तुल्यं सा क्रिया चेत् । अत्र तुल्यशब्दार्थस्य क्रियाविशेषणत्वेन स्त्रीत्वं स्यादत आह-*सामान्ये इति । *एवम्-तुल्यमिति-सामान्ये नपुंसकम् । ब्राह्मणवदधीते इत्यत्र यो धात्वर्थव्यापारस्तद्विशेषणत्वेन नपुंसकमित्यर्थः । *प्रत्ययार्थविशेषणम्-प्रत्ययार्थे तुल्येऽभेदेन विशेषणमित्यर्थः । क्वचित्क्रियात्वसम्भावनया प्रकृत्यर्थविशेषणत्वमपि सम्भाव्यते इत्याशङ्कानिवारणायाह-*स्थातव्येनेति । ननु भुक्त्वा इव गच्छतीत्यादिषु क्रियाया उपमानत्वसम्भवेन प्रकृत्यर्थविशेषणत्वमपि सम्भाव्यत इत्यत आह-*क्त्वाद्यन्तानामिति । अत्रादिना तुमुनः परिग्रहः । *अत एव-तुल्यशब्दार्थेऽनन्वयादेव । न च तैलपाक इव घृतपाक इत्यत्र क्रियायास्तृतीयासमर्थत्वं सम्भवत्येवेति वाच्यम् । अत्रापि घञ्प्रतिपाद्यक्रियायाः सत्त्वभूताया एवोपमानत्वात् । ब्राह्मणेन तुल्यमधीते इत्यादौ ब्राह्मणादिशब्दानां ब्राह्मणकर्तृकाध्ययनलक्षणया तुल्यत्वोपपत्तिः । तुल्यशब्देन सादृश्यवानुच्यते तदेकदेशसादृश्ये तृतीयार्थस्य प्रतियोगित्वस्यान्वयो व्युत्पत्तिवैचित्र्यात् । ननु नृत्यवद्गमनमित्यादौ गमनशब्दार्थस्य सत्त्वरूपतया क्रियात्वाभावात्कथं वतिरत आह-*नृत्यवदिति । *सत्तयोरिति । नृत्यशब्दस्य नृत्यकर्तृकसत्त्वे लक्षणया नृत्यकर्तृकसत्ताया उपमानत्वङ्गमनकर्तृकसत्ताया उपमेयत्वमित्यर्थः ।

तत्र तस्येव (पा० सू० ५-१-११६) ॥ यद्यपि मथुरायामिव पाटलिपुत्रेऽधीते इत्यर्थेऽपि पूर्वेणैव सिद्धं *तस्य मथुरया तुल्यमधीते पाटलिपुत्रे इत्यस्य च तुल्यत्वात्, तथाऽपि *द्रव्यगुणादितुल्यार्थ आरम्भः । क्रिया चेदिति तु नानुवर्तते । *किं चेवार्थस्योपमानविशेषणतया तुल्यपदार्थस्य विशेष्यतया ततो बोधे भेदः । एवञ्च उपमानमथुराभिन्ने पाटलिपुत्रे मे गृहमित्यर्थे मथुरावत्पाटलिपुत्रे मे गृहमिति साध्वेव । उपमेयेनाभेदान्वयात्तत्समाने* षष्ठीसप्तम्यावुपमानाद् बोध्ये । तदाह-मथुरायामिवेति । अत्र वाक्ये प्राकारादिपदाध्याहारेणैव बोधः । प्राकारयोरेव चोपमानोपमेयभावः । वृत्तौ तु मथुरादिपदानान्तत्सम्बन्धिप्राकारे वृत्तिरिति केचित् । *परे तु *षष्ठ्यर्थसप्तम्यन्तात्षष्ठ्यन्ताच्चायं साधुः । अधिकरणसप्तम्यन्तात्तु नायमसामर्थ्यात् । *अत एवैतत्सूत्रे तत्रग्रहणस्येव-

---

तत्र तस्येव (पा० सू० ५-१-११६ ) । सप्तमीसमर्थात्षष्ठीसमर्थाच्च इवार्थे वतिरित्यर्थः । *तस्य=मथुरायामिव पाटलिपुत्रेऽधीते इति वाक्यस्य । मथुरया तुल्यमित्यत्र "तुल्यार्थैः" ( पा० सू० २-३-७२ ) इति तृतीया प्रतियोगित्वरूपसम्बन्धार्थिका । मथुरायामिवेत्यत्र सप्तमी तु अस्मादेव ज्ञापकादिवार्थकशब्दयोगे सप्तमी भवतीति कल्पनया साधनीया, साऽपि सम्बन्धार्थिकैवेति द्वयोर्वाक्ययोस्तुल्यत्वमित्यर्थः । तदुक्तम्भाष्ये-इवशब्देन योगे सप्तमीसमर्थाद्वतिं शास्ति तज्ज्ञापयत्याचार्यो भवतीवशब्दयोगे सप्तमीति । किमेतस्य ज्ञापने प्रयोजनम्? । देवेष्विव नाम ब्राह्मणेषु इत्यत्रापि सिद्धं भवति" इति । *द्रव्यगुणादितुल्येति । द्रव्यगुणादीनान्तुल्यत्वे द्रव्यगुणादिकृततुल्यत्वे इति वार्थः । मूले क्रियाग्रहणव्यावर्त्यावसरे गुणग्रहणं कृतन्तदक्रियोपलक्षणम् । पूर्वसूत्रविषये गुणतुल्यतायाम्प्रत्युदाहरणं पुत्रेण तुल्यं स्थौल्यमिति । द्रव्यतुल्यतायां यथा-ब्राह्मणेन तुल्याऽस्य गौरिति । आदिनाऽभावपरिग्रहः । तदुदाहरणम्-पित्रा तुल्यः स्थौल्याऽभाव इति । प्रकृतसूत्रन्तु—पितृवत् स्थूलः पुत्रः, ब्राह्मणवदस्य क्षत्रियस्य गौः, रोगिवदस्य भोजनाभाव इत्येवमादिविषये प्रवर्त्तत एव । पूर्वसूत्रविषयादस्य सूत्रस्य भेदकान्तरन्दर्शयति—*किञ्चेति । *तत्समाने=उपमेयसमाने । पूर्वसूत्रेण मथुरायामिवेतिविग्रहे चेद्वतिस्तदा प्राकारपदावृत्त्या एकस्य प्राकारपदस्य तत्सत्तापरत्वम्मथुरापदस्य मथुराधिकरणकप्राकारे लक्षणा वा, अस्तीत्यस्य चाध्याहारः कार्य इति मथुरासम्बन्धिप्राकारसत्तासदृशी पाटलिपुत्राधिकरणकप्राकारसत्तेति बोध इति महदेव वैलक्षण्यम् । *तयोः=इवार्थोपमानस्य, तदभिन्नत्वेनाभिप्रेतस्य मथुरादिपदार्थस्य च । *तद्द्वारकः=उपमेयद्वारकः । स्वसिद्धान्तमाह-*परे त्विति । *षष्ठ्यर्थेति । एवञ्च सम्बन्धित्वेनैव प्रकृते बोधः । *अत एव=षष्ठ्यर्थसप्तम्य-

शब्दयोगे षष्ठ्यर्थे सप्तमीज्ञापकतोक्ता भाष्ये । देवेष्विव मनुष्येषु नामेत्युदाहृतम् । तत्रैव देववन्मनुष्येषु नामेति साधु । उपमानदेवसम्बन्धिनामाभिन्नं मनुष्यसम्बन्धि नामेति बोधः । मथुरावत्पाटलिपुत्रे प्राकार इत्यस्य उपमानमथुरासम्बन्धिप्राकाराभिन्नः पाटलिपुत्रसम्बन्धी प्राकार इत्येत्र बोधे एव साधुत्वम् । अस्मादेव ज्ञापकादिवयोगे *उपमानविशेषणादुपमेयविशेषणाच्च षष्ठ्यर्थे सप्तमीत्याहुः ॥

तदर्हं (पा० सू० ५-१-११७) ॥ तदिति द्वितीयान्तादर्हमित्यर्थे वतिरित्यर्थः । सूत्रे *सौत्रत्वात् द्वितीया । विधिवदिति । विधिविषययोग्यताकर्तृहरिकर्मकं देवदत्तकर्तृकं पूजनमिति बोधः । विधिशब्देन तदुक्तः प्रकारः । *सादृश्याप्रतीतेः पूर्वेणासिद्धौ वचनम् । *विनीतवदागमनं *विच्छेदकृतहस्तवदित्यादौ विनीतानामिदं योग्यमागमनं कृतहस्तानामिदं योग्यं छेदनमिति प्रतीतेरिति दिक् ।

तस्य भावः (पा० सू० ५-१-११९) । *भावे चाकर्मकेभ्य

---

न्तात् प्रत्ययस्वीकारादेव । *उपमानविशेषणादिति । उपमानस्य प्राकारविशेषणात् मथुराशब्दादुपमेयस्य प्राकारस्य विशेषणात्पाटलिपुत्रशब्दाच्चेत्यर्थः ।

तदर्हम् ( पा० सू० ५-१-११७ ) । अर्हतीत्यर्हम् । पचाद्यच् "कर्तृकर्मणोः" ( पा० सू० २-३-६९ ) इति तच्छब्दात्षष्ठीवारणायाह-*सौत्रत्वादिति । द्वितीयान्तादेवायम्प्रत्ययः । अत एव विधिमर्हतीति तिङन्तेन विग्रहप्रदर्शनम्मूले । एवञ्च विषयविषयिभावरूपः सम्बन्धो द्वितीयार्थः । तस्य चार्हशब्दार्थयोग्यताकर्तृपदार्थैकदेशयोग्यतायामन्वयः । पूर्वसूत्रेणान्यथासिद्धिम्परिहरति-*सादृश्याप्रतीतेरिति । तदुक्तम्भाष्ये-"किमर्थमिदमुच्यते । न तेन तुल्यं क्रिया चेद्वतिरित्येव सिद्धम् ? । न सिध्यति । तृतीयासमर्थात्तत्र यदाऽन्येन कर्त्तव्यां क्रियामन्यः करोति तदा प्रत्यय उत्पाद्यते । इह पुनर्द्वितीयासमर्थादात्मार्हायां क्रियायामर्हतिकर्त्तरि निश्चितबलाधाने प्रत्यय उत्पाद्यते । ब्राह्मणवद्वर्त्तते एतद्वृत्तं ब्राह्मणमर्हति" इति । आत्मार्हायामिति । द्वितीयान्तवाच्यस्यार्थस्यात्मनोऽर्हा या क्रिया तस्यामित्यर्थः । निश्चितबलाधान इति । निश्चितस्यार्थस्यान्ययोगनिवृत्त्यर्थं बलाधानम्पुनरुपादानेन निश्चयनमित्यर्थः । यथा ब्राह्मणस्य किञ्चिदाचरणम्प्रसिद्धमेवान्यसम्बन्धि नेति प्रतिपादनाय पुनरुपादीयते एतदाचरणं ब्राह्मणमर्हति न त्वन्यमिति तदेतत्सूत्रस्प्रवर्त्तत इति भावः । उपमानत्वाविवक्षायाञ्च प्रत्ययसिद्ध्यर्थमिदम्, तदाह-*विनीतवदिति । *विच्छेदकृतहस्तवदिति । अत्र विच्छेदेति क्रियापदम् । कृतः सम्पन्नो हस्तो येषान्तेषामिदं योग्यमित्यर्थः ।

तस्य भावस्त्वतलौ ( पा० सू० ५-१-११९ ) । *भावे चाकर्मकेभ्य

इत्यादौ भावपदार्थस्यान्यादृशस्य प्रसिद्धेराह—प्रकृतीति । भवन्ति= अर्थबोधाय प्रवर्त्तन्ते *अनेनेति भाव इति, करणे घञिति भावः । प्रकार इति । मुख्यविशेष्यतानिरूपितविषयताश्रय इत्यर्थः । तेन राजपुरुषादौ राजादेः प्रकारत्वेऽपि न क्षतिः* । *स च तच्छब्दप्रवृत्तिनिमित्तरूप एव । प्रवृत्तिनिमित्तत्वञ्च *यत्र बुद्धिस्थे सति विशेष्यभूतार्थबोधनार्थं शब्दस्य प्रवृत्तिः=प्रयोगस्तत्त्वम् । क्वचित्प्रकारस्य *तत्त्वं यथा घटादिपदे । क्वचित्संसर्गस्य यथौपगवराजपुरुषपाचकादौ । प्रकार इति च मूले उपलक्षणम्* । *यद्वा सम्बन्धस्यापि सम्बन्धतया प्रकारतया चेति द्वेधा भानम् । *सञ्ज्ञाशब्दे च प्रायः शब्द एव प्रवृत्तिनिमित्तमिति केचित् । *परे तु सञ्ज्ञाशब्दे प्रवृत्तिनिमित्तं नास्त्येव । डित्थत्वमित्यादौ *विशेष्यभूतोऽर्थ एव त्वार्थः । *प्रकृतिश्रे-

---

इत्यादाविति । आदिना 'षड् भावविकाराः' इत्यादिपरिग्रहः । *अनेनेति । प्रवृत्तिनिमित्तेनेत्यर्थः । *न क्षतिरिति । न राजपुरुषत्वमित्यादौ राजत्वादेस्त्वप्रत्ययवाच्यत्वापत्तिः । तत्र राजपुरुषेतिप्रकृतिजन्यबोधीयराजनिष्ठविशेष्यतानिरूपितप्रकारतासत्त्वेऽपि पुरुषनिष्ठा या प्रकारतानात्मिका मुख्यविशेष्यता तन्निरूपितप्रकारताया असत्त्वात् । शब्दस्यापि शाब्दबोधे प्रकारकतया भानमिति मते भावप्रत्ययवाच्यतापत्तिवारणायाह—*स चेति । स च=भावश्च । *यत्र बुद्धिस्थे सति=यस्मिन् बुद्धिविषयभूते सति, यद्विषयकबुद्धौ सत्यामिति यावत् । विशिष्टबुद्धिम्प्रति विशेषणज्ञानस्य कारणतया विशेषणाधिशिष्टस्य बुद्धिविषयत्वेन तज्ज्ञानं विना विशिष्टज्ञानन्न सम्भवतीति भावः । *तत्त्वम्=प्रवृत्तिनिमित्तत्वम् । *उपलक्षणमिति । प्रकारसंसर्गस्याप्युपलक्षणमित्यर्थः । एतन्मते राजपुरुषादिशब्दाद्विग्रहवाक्ये श्रूयमाणा या विभक्तिस्तदर्थसम्बन्धेन पूर्वपदार्थप्रकारकोत्तरपदार्थविशेष्यको बोधः । यथा राजविशिष्टः पुरुष इत्याकारकः । राजसम्बन्धवान्पुरुष इत्याकारकबोधाभिप्रायेणाह—*यद्वेति । डित्थोऽयमित्यादिशब्दाद्बोधो डित्थशब्दप्रकारक एवेति स शब्द एव तत्र प्रवृत्तिनिमित्तशब्देन व्यवह्रियत इत्याशयेनाह—*संज्ञाशब्दे प्राय इति । यत्र तत्तद्धर्मपुरस्कारेण संज्ञित्वेनाभिप्रेतानामुपादानङ्कृत्वा संज्ञा विधीयते तत्र संज्ञाशब्दादपि तत्तद्धर्मप्रकारिका बुद्धिरिति तेषां धर्माणान्तत्र प्रवृत्तिनिमित्तत्वात्प्राय इत्युपात्तम् । अत एव विशिष्टरूपोपादानविषया या गौणमुख्यपरिभाषा तया गोऽभवदित्यत्र "ओत्" ( पा० सू० १-१-१५ ) इतिसूत्रेण प्रगृह्यसंज्ञावारणपरम्भाष्यं सङ्गच्छते । यत्र तु न संज्ञी शास्त्रे उपात्तो विशेषरूपेण, तत्र तच्छब्दप्रकारिकैवोपस्थितिः । यथा ङ्याप्प्रातिपदिकादित्यत्र । लौकिकसंज्ञास्थलेऽपि व्यवस्थामाह—*परे त्विति । *विशेष्यभूत इति । त्वान्तशब्दजन्य-

दशेषु शब्दपरा, *डित्थशब्दवानर्थ इत्यादिक्रमेणैव बोधः । *डित्थ इत्यादितः *संख्यादिप्रकारकबोधान्न निर्विकल्पकम् । *कुत्वमित्यादेः कुशब्दार्थः कवर्गः इत्यादिरीत्या बोधः । *अन्यथा कुत्वं कस्मान्न भवतीत्यादौ कुत्वशब्दार्थकुशब्दस्य प्राप्त्यभावात्तस्य स्वार्थाश्रये लक्षणाऽऽश्रयणीया स्यादित्यादिभाष्यप्रदीपोद्द्योतादौ विस्तर इत्याहुः । *भावत्वेन च प्रवृत्तिनिमित्तं शक्यम् । प्रकृतिजन्येत्यादि तदुपलक्षकम् । घटत्वमित्यादेर्घटसम्बन्धी भाव इत्यादिक्रमेण बोधः । *भावप्रधाननिर्देशस्थले च *तादात्म्येन व्यक्तिप्रकारकः *स्वरूपेण जातिविशेष्यको बोध इति न *तत्रासाधुत्वम् । *अत एव "जात्याख्यायामेकस्मिन्" ( पा० सू० १-२-५८ ) इति चरितार्थम् ।

अपवादैरिति । अन्यथाऽपवादविषये*ऽस्यानुपस्थितिः स्यान्निराकाङ्क्षत्वादिति भावः । चकार इति । *अन्यथाऽप्रत्याद्यर्थप्रत्यया-

---

बोधीयविशेष्यताश्रय इत्यर्थः । *प्रकृतिश्चेति । यत्र त्वप्रत्ययश्चिकीर्षितस्तत्र प्रकृतिर्डित्थादिः । त्वान्तशब्दजन्यबोधस्वरूपमाह-*डित्थशब्दवानर्थ इति । नन्वेवं यतस्त्वप्रत्ययस्ततो निर्विकल्पकापत्तिरत आह-*डित्थ इत्यादित इति । *सङ्ख्यादिप्रकारक इति । सङ्ख्या तत्र विभक्त्यर्थः सा प्रकारकतया भासते । एवञ्च तज्जन्यबोधो न निष्प्रकारक इति भावः । ककारादीनाम्[illegible] वर्णानामपि कुरित्यादिशब्दजन्यबोधविशेष्यत्वात्तेषु प्रक्रियामाह-*कुत्वमित्यादेरिति । *अन्यथा = कुत्वमित्यादिशब्दाच्छब्दस्यैवोपस्थितिस्वीकारे । जात्यादिशब्दसाधारण्येनाह-*भावत्वेन चेति । तदुक्तम्भाष्ये-"यस्य गुणस्य भावाद् द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलौ" इति । अत्र गुणशब्दः पराश्रयस्य भेदकधर्मस्य बोधकः । एवञ्च प्रवृत्तिनिमित्तत्वावच्छिन्नत्वाद्यर्थः । प्रकृतिरर्थपरा । षष्ठ्यर्थश्चाधेयत्वम् । यद्वेति द्वितीयपक्षे तु सम्बन्धः षष्ठ्यर्थः । एवञ्चोभयमतेऽपि प्रवृत्तिनिमित्तस्यैव त्वाद्यर्थत्वमिति बोध्यम् । द्व्येकयोरित्यादितो द्वित्वैकत्वयोरितिबोधस्वीकारेणाह-*भावप्रधानेत्यादि । *तादात्म्येनेति । जातिव्यक्त्योर्गुणगुणिनोः क्रियाक्रियावतोश्च तादात्म्यस्यैव स्वीकारात् । तादात्म्यञ्च भेदसहिष्णुरभेदः । *स्वरूपेणेति । एतेन जात्यादीनाञ्च जातित्वादिना बुद्धिविषयत्वमित्युक्तम् । *तत्र = ब्राह्मणाः पूज्याः, ब्राह्मणः पूज्य इत्यादौ । प्रवृत्तिनिमित्तस्य प्राधान्येन भानं त्वादिप्रत्ययसाध्यमिति भावप्रत्ययं विनाऽपि चेत्प्रवृत्तिनिमित्तस्य प्राधान्यन्तदा तस्यासाधुत्वापत्तिः स्यादिति भावः । *अत एव = तादृशस्थले जातेः प्राधान्यादेव ।

*अस्य = "तस्य भावस्त्वतलौ" (पा०सू० ५-१-११९) इति सूत्रस्य ।

नागिवं*तयोरपि *तौ बाधकौ स्यातामिति भावः । पुंस्त्वमिति । "इ-स्वात्तादौ" (पा०सू०८-३-१०१)इति षत्वन्तु न सवनादिषु पाठात् ।

न नञ्पूर्वात् (पा० सू० ५-१-१२१) ॥ अधिकारसूत्रमेतत् । तत्र*गृह्यमाणप्रातिपदिकाद्विधीयमानानान्तदन्ते प्राप्त्यभावादाह-अपतित्वमिति । "पत्यन्त" (पा० सू० ५-१-१२८)इति "इगन्ताच्च" (पा०सू० ५-१-१३१ )इति च क्रमेण*यगणौ प्राप्तौ । आपटवमिति । *"उत्तरो भावप्रत्ययो नञ्पूर्वाद् बहुव्रीहेर्नेष्यते" इत्यादि भाष्यं पत्यन्तेतिप्राक्तनपृथ्वादिभ्यइत्यादिविषयमेवेति भाष्यप्रदीपोद्योते निरूपितम् । आचतुर्यमिति । नञ्पूर्वाणामेषामत एव पर्युदासाद्गणे* पाठानुमानेन ष्यञ् बोध्यः ।

र ऋतो (पा० सू० ६-४-१६१) ॥ हलादेः किम् ?, ऋजिष्ठः । लघोः किम् ?, कृष्णिष्ठः ।

मेव रत्वमिति । तेन*कृतयतीत्यादाविष्ठवद्भावाद्रभावो न ।

यथातथाय (पा० सू० ७-३-३१) ॥ "नञः शुचि" (पा० सू० ७-३-३०) इत्यतो नञ इति वर्तते । यथातथाशब्दो निपातसमुदायः । यथापुरमिति पुराशब्देन पदार्थानतिवृत्तावव्ययीभावः ।

केचिदिति । भाष्यानुक्तत्वमत्रारुचिः ।

---

*अन्यथा=चकाराभावे । *एतयोः=त्वतलोः । *ताविति । नञ्स्नञावित्यर्थः ।

*गृह्यमाणेति । "पृथ्वादिभ्यः" ( पा० सू० ५-१-१२२ ) इत्यादौ प्रत्ययविधिविषये "ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति" इति निषेधान्नैतेषां तदन्तेभ्यः प्राप्तिरिति भावः । *यगणौ प्राप्ताविति । "पत्यन्त" ( पा० सू० ५-१-१२८ ) इति सूत्रे "इगन्त" ( पा० सू० ५-१-१३१ ) इतिसूत्रे चान्तग्रहणस्य स्वत एव सत्त्वात् । *उत्तर इति । यदि पत्यन्तेतिसूत्रद्वयविषय एव प्रतिषेधस्तदा पत्यन्तेतिसूत्रानन्तरमेव नञ्पूर्वात्तत्पुरुषान्नेति ब्रूयात्तथा न कृतमिति प्रकृते तथाकरणन्तदन्तविधिम्पृथ्वादिविषये ज्ञापयति । तथा सति तत्पुरुषबहुव्रीह्योरुभयोरपि तदन्तत्वात्तत्पुरुषाच्च नञ्पूर्वादनेन निषेधे परिशेषाद्बहुव्रीहेरिमनिजादीनामुत्पत्तिः प्राप्ता, तत्रोक्तम्भाष्ये-नेष्यते, त्वतलावेवेष्येते इति । *गणे=ब्राह्मणादिगणे ।

परिगणनफलमाह-*तेनेति *कृतयतीति । कृतमाचष्ट इत्यर्थे णिचि इष्ठवद्भावाद्रभावः प्राप्तोऽपि परिगणनान्नेत्यर्थः ।

वाणिज्यमपीति । अपिना दौत्यम्, यौवनमिति* । मनोज्ञादित्वाद्यौवनकमपि । "प्रकृत्याऽके राजन्य"(का०वा०)इत्यादिना प्रकृतिभावः।

सहायाद्वेति । पक्षे ब्राह्मणादित्वात्ष्यञ् । इदं भाष्ये क्वचिन्मृग्यम्* ।

शैष्योपाध्यायिकेति । *अस्यापि प्राप्तिरस्तीति भावः । गोपालपशुपालिकेत्यादि त्वस्योदाहरणं सुगमम् ॥

गोत्रच (पा० सू० ५-१-१३४) ॥ *श्लाघादयश्च पदान्तरोपात्ता एव*प्रत्ययार्थान्वयिनो न प्रत्ययवाच्या इति बोध्यम्। गार्गिकयेति । स्वभावात् स्त्रीत्वम् ।

तलो बाधनार्थमिति । अधिकारवशाद् होत्राभ्य इति भावकर्मणोः प्राप्तस्येति भावः । *एतेन कर्मणि *त्वस्याप्राप्तेस्तदर्थं त्वग्रहणम् । किं च *पूर्वसूत्रविहितस्य त्वादेरपि निषेधः स्यादित्यपास्तम् । शब्दोपात्तछस्यैव निषेधात् ॥ इति नञ्स्नञोरधिकारः समाप्तः ॥

धान्यानाम् (पा० सू० ५-२-१) ॥ निर्देशात्षष्ठ्यत्र समर्थविभक्तिः । अलौकिके तु प्रत्ययार्थस्याक्रियात्वेऽपि क्रियायोगाभावेऽपि तद्धितविधानुवादसामर्थ्येनैव तत्कल्पना बोध्या । अलौकिके प्रथगप्रवेशेऽपि

---

*यौवनमितीति । "अन्" ( पा० सू० ६-४-१६७ ) इति प्रकृतिभावः ।

*भाष्ये क्वचिन्मृग्यमिति । वृत्तिग्रन्थे एवन्दर्शनान्मूलकृतोक्तम् ।

ननु शैष्योपाध्यायिकेति "द्वन्द्वे" (पा० सू० ५-१-१३३) इत्यादिसूत्रोदाहरणत्वेन मूले उक्तन्तदसङ्गतम् । "योपधात्" ( पा० सू० ५-१-१३२ ) इतिसूत्रेण सिद्धत्वादत आह-*अस्यापीति ।

गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु ( पा० सू० ५-१-१३४ ) । गोत्रवाचिनश्चरणवाचिनश्च प्रातिपदिकाद्भावकर्मणोरर्थयोर्वुञ् भवति श्लाघादिषु विषयभूतेषु । तत्र श्लाघादीनां विषयत्वं यथाऽस्ति तथोपपादयति-*श्लाघादयश्चेति । *प्रत्ययार्थान्वयिनः=प्रत्ययार्थविषयतानिरूपिता या विषयता तच्छालिबोधविषयाः ।

*एतेन=वक्ष्यमाणदूषणेन । *त्वस्याप्राप्तेरिति । ष्यञा बाधादिति भावः । *पूर्वसूत्रविहितेति । "होत्राभ्यः" ( पा० सू० ५-१-१३५ ) इति सूत्रे त्वतलोरपि सम्बन्धाविति भावः ॥

## समाप्तश्च नञ्स्नञोरधिकारः ।

न क्षतिरिति कश्चित् । क्षेत्रशब्दस्तृणधान्यादीनामुत्पत्त्याधारभूतवचनः । भवतिश्चोत्पत्तिवाची*परस्परमन्वययोग्यत्वात् । तेनेह न—*मुद्गानां भवनं गृहभूतोऽयं कुसूल इति ।

विभाषेति (पा० सू० ५-२-४)॥ अत्र*पूर्वत्र च पञ्चमी षष्ठ्यर्थे इति धान्यानामित्यस्य सम्बन्धात्षष्ठ्येव समर्थविभक्तिरिति केचित्* ।

असामर्थ्येऽपीति । सर्व इत्यस्य कृतेनान्वयेनोत्तरपदार्थेऽनन्वयादसामर्थ्यमित्यर्थः। सर्वेण चर्मणा कृत इत्यर्थे तु तद्धितो नेष्यत इति भावः। निपातनादिति। प्रत्ययसन्नियोगेनैवेदं निपातनं*, तदाह—सर्वश्चर्मणेति ।

सम्मं सर्वमिति । आभिमुख्यार्थकसमित्युपसर्गपूर्वात्तु प्रत्ययो नेष्यते*इति भावः। यथामुखीन इति । प्रतिबिम्बदर्शनाधिकरण इत्यर्थः ।

---

धान्यानाम्भवने ( पा० सू० ५-२-१ )। धान्यानामिति कर्त्तरि षष्ठी । भवनशब्दोऽधिकरणल्युडन्तः । भवति=जायतेऽस्मिन्निति भवनम् । *परस्परेति । भवनशब्दक्षेत्रशब्दयोः परस्परमन्वययोग्यत्वात् । क्षेत्रशब्दस्य शरीरवाचकतया यदि क्षेत्रशब्देन शरीरं गृह्यते तदा भवनशब्दसामानाधिकरण्यन्नोपपद्यत इति भावः । एतेन क्षेत्रपदस्य प्रयोजनमप्युक्तम् । अन्यथा भवनशब्दस्य सत्त्वाधारवाचकत्वमपि सम्भाव्येत, तथा सत्यतिप्रसङ्गः स्यात्तदाह—*मुद्गानामिति ।

विभाषा तिलमाषोमा ( पा० सू० ५-२-४ )। *पूर्वत्र चेति। "यवयवक"( पा० सू० ५-२-३ )इति सूत्रे इत्यर्थः । *केचित्=सिद्धान्तानुसारिणः। तस्या उपपत्तिः पूर्ववत् ।

सर्वचर्मणः ( पा० सू० ५-२-५ ) । सर्वचर्मन्शब्दात्तृतीयान्तात्कृते इत्यर्थे खखञौ प्रत्ययौ स्तः। *इदन्निपातनमिति । समासनिपातनमित्यर्थः । प्रत्ययार्थघटककृतिनिरूपितकरणत्वस्य चर्मणि न्याय्यत्वात्तृतीयान्तादिति लब्धम् ।

यथामुखसम्मुखस्य दर्शनः खः ( पा० सू० ५-२-६ ) । दर्शनशब्दोऽत्राधिकरणल्युडन्त आदर्शादिवाचकः। 'यथाऽसादृश्ये' ( पा० सू० २-१-७ ) इति नियमात्सादृश्येऽव्ययीभावाप्राप्तावाह मूले निपातनात्सादृश्येऽव्ययीभाव इति। दर्शनशब्देन कृदन्तेन योगात्कर्मणि षष्ठी, "नाव्ययीभावात्"(पा० सू० २-४-८३) इत्यम्। *प्रत्ययो नेष्यत इति। भाष्यकारीयव्याख्यानसम्वादादनिष्टिः । तथाहि-"सम्मुखेति किं निपात्यते ?, सम्मुखेति समस्यान्तलोपः=सम्मुखे समस्यान्तलोपो निपात्यते । सम्मुखस्य दर्शनः संमुखीन इति । कथन्तर्हि

संयुगे सम्मुखीनन्तम्मुहुः प्रसहते तु कः" इति ?।

सम्मुखीनादर्शस्य यथा सम्मुखावस्थानकर्तृत्वं तथा यः सम्मुखा-

तत्सर्वादेः (पा० सू० ५-२-७) ॥ पत्रपात्रमिति पञ्चम्यर्थे प्रथमा, सर्वादेरिति बहुव्रीहिस्तत्सामानाधिकरण्याय पथ्यादिभिस्तदन्तग्रहणं, तदाह—पथ्याद्यन्तादिति । व्याप्तिक्रियाकर्मत्वलभ्यमाह—द्वितीयान्तादिति ।

अनुरायामे इति । *आद्ये *पादसम्बन्धिदैर्घ्यसदृशदैर्घ्योपलक्षिते-त्यर्थः । *अन्ये पादेन सदृशीत्यर्थः । सादृश्यन्तुल्यपरिमाणतया । समर्थविभक्तिर्द्वितीया निर्देशात् *योग्यत्वाच्च । स्थलविशेष इति । *अयः=प्रदक्षिणगमनम्, अनयो=वामगमनम् । अयः सहितोऽनयोऽयानय इति । यद्यप्यसौ* गतिविशेषे शक्तस्तथापि प्रदक्षिणप्रसव्यगामिनां शाराणां यस्मिन्युग्मादिपदे स्थितानां परकीयैः शारैस्त*त्स्थानानामसम्बन्धस्तद्बाधाभावरूपः ।

'ससहायस्य शारस्य *परैर्नाक्रम्यते*पदम् ।
असहायस्तु शारेण परकीयेण बाध्यते' ॥

इति द्यूतशास्त्राच्चतत्स्थानं लक्षणयोच्यते इति भावः । स्पष्टञ्चेदं सर्वं

---

वस्थानकर्त्ता तत्र तद्धर्मकृतसादृश्यादुपचारात्तत्सुखीनशब्दप्रयोग इत्यवेहि ।

तत्सर्वादेः पत्रपात्रम् ( पा० सू० ५-२-७ ) । सर्वादेरिति बहुव्रीहिः, प्रातिपदिकमन्यपदार्थः । पत्रपात्रमिति पञ्चम्यर्थे प्रथमा । तदन्तम्प्रातिपदिकविशेषणम् । एवञ्च द्वितीयान्तात्सर्वशब्दाद्यवयवकात्पथ्याद्यन्तात्प्रातिपदिकाद्व्याप्नोतीत्यर्थे खः स्यादित्यर्थः । अत्र सर्वादेरित्यादिशब्दोपादानेन सर्वशब्दाद्यवयवकसमासलाभे सति यत्र पथिन्शब्दान्तसमासादकारः समासान्तस्तत्रापि तस्य समाससमुदायावयवत्वात्सर्वादिपथ्यन्तसमासग्रहणेन ग्रहणम्भवत्येवेति बोध्यम् ।

अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु ( पा० सू० ५-२-९ ) । अत्र बद्धाभक्षयतिनेयशब्दानां निपातनात्तिङन्तघटितो द्वन्द्वः । *आद्ये इति । यदाऽनुरायामे तदाऽनुपदं बद्धेत्यत्र "यस्य चायामः" ( पा० सू० २-१-१६ ) इति समास इत्याशयेनाह—*पादसम्बन्धिदैर्घ्यसदृशदैर्घ्योपलक्षितेति । *अन्त्ये= अनुशब्दस्य सादृश्यार्थकत्वे । यथार्थे इत्यव्ययीभावः । *निर्देशात्=अयानयान्तसमासोत्तरं द्वितीयानिर्देशात् । ननु समाहारद्वन्द्वात्प्रथमाऽपि सम्भाव्यत इत्यत आह--*योग्यत्वादिति । बद्धेत्याद्यर्थेऽन्वययोग्यत्वात् । अयानयः स्थलविशेष इति यन्मूले व्याख्यातन्तल्लाभप्रकारमाह—*अयः प्रदक्षिणेति । *असौ=अयानयशब्दः । *तत्स्थानानामिति । तत्=अयानयाख्यं, स्थानं येषामित्यर्थः । *परैः=परद्यूतकारशारैः । *नाक्रम्यते=नाध्यास्यते । *पदम्= स्थानम् । युग्मादिस्थानं हि तादृशम् । तत्र स्थितानाम्परकीयैर्बाधो नेति-द्यूते प्रसिद्धम् । शृणन्त्येभिर्द्यूतकारास्ते=शाराः इति शारशब्दः काष्ठादिम-

भाष्ये इत्यन्यत्र विस्तरः । तं नेय इति । *प्रधानकर्मणि यत् । अप्रधाने द्वितीया ।

सन्नियोगेनैवेति । *अत एव भाष्ये परांश्चावरांश्चेत्यनादेशेनैव विग्रहो दर्शितः ॥

*"राष्ट्रावार" (पा० सू० ४-२-९३) इत्यत्रावारपारा(द्गृ)हीताद-पीत्यादि पठितं तदिहापीत्याशयेनाह—अवारीण इत्यादि ।

पूर्वपदे इति । उत्तरपदे तु विभक्तिलुकैव सिद्धिरिति भावः । *पूर्वपदे यलोपनिपातनसामर्थ्यादलुगिति तु भाष्यकृतः । विजायते=गर्भं मुञ्चतीत्यर्थः* । *तेनात्यन्तसंयोगाभावान्न द्वितीया । खप्रत्ययानुत्पत्तावित्ति । पदद्वयेऽपीति शेषः । सूत्रे उभयत्रापि तथोच्चारणात्* । विकल्पस्तु वाचनिक एव । समाशब्दो बहुवचनान्त एवेत्युक्तसूत्रभाष्यादिबलादुपेक्ष्यमिति भावः ।

अद्यश्वीनेत्यविभक्तिकं*व्याख्यानात् । तेनास्त्रियामपि । अद्यश्वीनं

---

येषु देवनसाधनेषु वर्त्तते । *प्रधानकर्मणीति । "प्रधाने नीहृकृष्वहाम्" इत्युक्तेः ।

परोवरपरम्पर ( पा० सू० ५-२-१० ) । मूलेऽवरस्योत्वन्निपात्यत इति । अवरस्यादेरिति शेषः । उत्वञ्चेदम्प्रत्ययसन्नियोगेनेत्यत्र साधकमाह—*अत एवेति । प्रत्ययसन्नियोगेनेतिस्वीकारादेव । परम्परेत्यत्र तु परपरतराणाम्परम्परभावः । न चास्यापि निपातनम्प्रत्ययसन्नियोगेनेति पारम्पर्यायाता इति कथं साधुरिति वाच्यम् । अव्युत्पन्नपरम्पराशब्दात्स्वार्थे चातुर्वर्ण्यादिषु पाठेन साधुत्वात् ।

अवारपारात्यन्तानुकामं गामी ( पा० सू० ५-२-११ ) । गामीत्यत्र गमेरिनिर्बाहुलकात् केवलात् णिश्चेति णित्त्वम् । "भविष्यति गम्यादयः"(पा० सू० ३-३-३)इतिं भविष्यत्कालता । आवश्यके वा णिनिः । अवारपारशब्दाद्विधीयमानः केवलादवारशब्दात् कथमत आह—*राष्ट्रावारेति ।

समांसमां विजायते ( पा० सू० ५-२-१२ ) । विजायत इत्यर्थे पदसमुदायात्प्रत्ययः । *पूर्वपद इति । पूर्वस्मिन् पद इत्यर्थः । वीप्सायान्द्विर्वचनं वा । समासवद्भावः । विपूर्वको जनिर्गर्भविमोचने, तदाह—*गर्भं विमुञ्चतीत्यर्थ इति । *तेन=गर्भविमोचनेन । *तथोच्चारणादिति । यलोपघटितशब्दोच्चारणादित्यर्थः ।

अद्यश्वीनाऽवष्टब्धे ( पा० सू० ५-२-१३ ) । अद्यश्वीनेति निपात्यते अवष्टब्धेऽर्थे । आसन्नमवष्टब्धम्=अविदूरम् । एतादृशे पदार्थे स्तम्भधातोः सस्य "अवाच्चालम्बनाविदूर्ययोः" ( पा० सू० ८-३-६८ ) इति सूत्रेण षत्वविधानात् । *अविभक्तिकमिति । एतेन स्त्रियामिदन्निपातनमिति शङ्का निरस्ता ।

वाऽद्यमिति। अवष्टब्धम्=आसन्नम्।

आगवीने आङ् मर्यादायाम्। गोशब्दो*गोः प्रत्यर्पणे, तदाह-प्रत्यर्पणेति। अस्य*यो गवाभृत इत्यादिः।

अलङ्गामीति। "सुप्यजातौ" (पा० सू० ३-२-७८) इति णिनिस्तद् ध्वनयन्नाह-गच्छतीति। अनुग्विति पश्चादर्थेऽव्ययीभावः। स चात्राधिकरणशक्तिप्रधान इति कर्मविभक्त्यन्तात् प्रत्ययः। विभक्तेस्त्व*व्ययत्वाल्लुक्।

अध्वानमलङ्गच्छतीति। "सुप्यजातौ" (पा० सू० ३-२-७८) इति णिनिं ध्वनयितुमेवमुक्तम्। अलङ्गामिपदेन विग्रहे तु अध्वनोऽलङ्गामीत्येव*।

अभ्यमित्राच्छ च (पा० सू० ५-२-१७)॥ अलङ्गामीत्यनुवर्त्तते। "लक्षणेनाभि" (पा० सू० २-१-१४) इत्यव्ययीभावः।

गोष्ठात् (पा० सू० ५-२-१८)। अत्र केचित्—यद्यपि "भूतपूर्वे चरट्" (पा० सू० ५-३-५३) "षष्ठ्या रूप्य च" (पा०सू०५-३-५४) इत्येते अत्रैव पठित्वा गोष्ठात्खञित्येव सूत्रं युक्तम्, तथापि तयोरन्यत्र क-

---

*व्याख्यानादिति। अद्यश्वीनस्मरणमितिप्रयोगदर्शनमूलकाद्व्याख्यानादित्यर्थः। अद्य श्व इत्यत्र चार्थे समासः। अविभक्तिकत्वस्वीकारेण अद्यश्वीना इत्यस्यैव निपातने तु अद्यश्वीनो वियोगः, अद्यश्वीनङ्गमनमित्यत्र न स्यात्।

आगवीनः (पा० सू० ५-२-१४)। *गोः प्रत्यर्पण इति। लक्षणया गोशब्दस्य तत्र वृत्तिः। तदुक्तम्भाष्ये-'आगवीन इति किन्निपात्यते। गोराङ्पूर्वात्तस्य प्रतिदानात्कारिणि खो निपात्यते। आत्तस्य=गोः प्रतिदानात् कर्म करोति=आगवीनः कर्मकरः' इति। अत्र भाष्ये कर्मकर इत्युपादानाद्यस्मै वेतनत्वेन गौर्दत्तः स एवागवीन इत्युच्यते न तु गौर्बन्धकत्वेन येन गृहीतः स एव स्वीयस्य द्रव्यस्याधमर्णेन दाने कृतेऽपि गाम्प्रतिददाति सोऽप्यागवीन इत्युच्यते, तदेतदाविष्कर्त्तुमाह-*यो गवा भृत इत्यादिरिति।

अनुग्वलङ्गामी (पा० सू० ५-२-१५)। अनुगुशब्दादलङ्गामीत्यर्थे खः स्यात्। अलंशब्दः पर्याप्तौ। पर्याप्तिः=पूर्णता। सा च यद्देशाधिकरणं गोकर्तृकं गमनन्तत्तद्देशाधिकरणकगोगमनानन्तरस्पश्चाद्गमनम्। तथा यः करोति स एवमुच्यते। *अव्ययत्वादिति। अव्ययीभावस्याव्ययत्वादिति भावः।

*इत्येवेति। "कर्तृकर्मणोः" (पा० सू० २-३-६५) इति सूत्रेण षष्ठ्याः प्राप्तेः।

रणसामर्थ्येन विशेषविहितेनापि खञा चरटो* बाधा नेति ज्ञाप्यते इत्याहुस्तद्भाष्ये न दृष्टम्।

शालीनकौपीने (पा० सू० ५-२-२०)॥ शालाकूपाभ्यां तत्प्रवेशतत्पतन*लाक्षणिकाभ्यामेव प्रत्यययोऽनयो रूढिशब्दत्वात्।

व्रातेन (पा० सू० ५-२-२१)॥ नानाजातीयानामनियतवृत्तीनां शरीरायासजीविनां सङ्घो व्रातस्तत्कर्मापि शरीरायासरूपं व्रातः। *अत एव निपातनादिदमर्थेऽण्। तेषामन्यतमे एव व्रातीन इष्यते।

नवनीतमिति। भाष्ये घृतमिति पाठः*। सञ्ज्ञायामित्युक्तेरुढश्वितेति न।

तस्य पाक(पा० सू० ५-२-२४)। अर्थयोः प्रत्यययोः प्रकृत्यो-

---

गोष्ठात् खञ् भूतपूर्वे (पा० सू० ५-२-१८)। अत्र भूतपूर्वशब्दो गोष्ठशब्दस्यैव विशेषणम्। गोष्ठशब्दाद् भूतपूर्वोपाधिकात् स्वार्थे खञ् स्यात्। *चरटो बाधा नेतीति। तेन गोष्ठचर इत्यपि भवतीति तेषामाशयः।

शालीनकौपीने (पा० सू० ५-२-२०)। शालीनकौपीनशब्दौ निपात्येते अधृष्टे अकार्ये चाभिधेये। अप्रधृष्टोऽप्रगल्भः। अकार्यङ्करणानर्हम्। *लाक्षणिकाभ्यामिति। तथा च भाष्यम्—"उत्तरपदलोपोऽत्र द्रष्टव्यः। शालाप्रवेशनमर्हत्यधृष्टः शालीनः। कूपावतरणमर्हत्यकार्यन्तत्कौपीनम्"।

व्रातेन जीवति (पा० सू० ५-२-२१)। निर्देशादेव तृतीया समर्थविभक्तिः। *अत एव निपातनात्=व्रातेनेतिनिपातनादित्यर्थः। "किं व्रातन्नाम?। नानाजातीया अनियतवृत्तय उत्सेधजीविनः सङ्घाः=व्राताः। तेषाङ्कर्म=व्रातम्। व्रातकर्मणा जीवन्ति=व्रातीनाः"इति भाष्यात्। उत्सेधजीविन इत्यस्य उत्सेधेन शरीरायासेनेत्यर्थः। निपातनाश्रयणञ्च "वृद्धाच्छः" (पा० सू० ४-२-११४) इत्यस्य बाधनार्थम्।

साप्तपदीनं सख्यम् (पा० सू० ५-२-२२)। साप्तपदीनमिति निपात्यते सख्यञ्चेद्विशेष्यम्। कथं साप्तपदीनः सखेति?, अर्शआदिभ्य इत्यचा सिद्धम्।

*घृतमिति पाठ इति। तथा च तथैवोचितमिति भावः।

तस्य पाकमूले (पा० सू० ५-२-२४)। *यथासङ्ख्यमिति। पील्वादिकर्णादिभ्यः षष्ठ्यन्तेभ्यः पाकमूले वाच्ये कुणब्जाहचौ प्रत्ययौ स्तः। पाकः=परिणामः। मूलम्=उपक्रमः। जाहचो जकारस्य नेत्त्वम्। फलाभावात्। आदिशब्दद्वयोपादानं स्पष्टार्थम्।

पक्षात्तिः (पा० सू० ५-२-२५)। "तस्य पाकमूले"(पा०सू०५-२-२४) इति सूत्रान्मूलग्रहणमात्रमनुवर्त्तते। एकयोगनिर्दिष्टानां क्वचिदेकदेशोऽप्यनुव-

* यथासंख्यम्* ।

विनञ्भ्याम्(पा०सू० ५-२-२७) । नसहेति *प्रकृत्यर्थविशेषणमित्याह-असहार्थे इति । तद्व्याख्या पृथग्भावे इति । असहार्थे किम् ? । विगत इत्यादौ क्रियाविशेषकान्मा भूत् ।

गोष्ठजिति । *एतत्प्रत्याख्यानपरभाष्यबलादेवैते *चितः पठिताः। अत्रत्या*ऽऽदिशब्दार्थबोधकानि वार्त्तिकानि आह-सङ्घात इति। षट्त्वे इति । हस्तिषड्गवमिति भारतप्रयोगादिदमुक्तम् ।

अवाचीनः=प्रसिद्धः ।

नत इति । *नासिकासम्बन्धिनतत्वे वर्त्तमानाद्वात्स्वार्थे प्रत्यय

---

सेत इति वचनात् । न चैकयोगनिर्दिष्टानां सह वा प्रवृत्तिरितिपरिभाषाऽप्यस्तीति वाच्यम् । पूर्वामाश्रित्य 'मूल इति वक्तव्यम्' इतिवार्त्तिकप्रत्याख्यानपरभाष्यप्रामाण्येन पूर्वपरिभाषाया एव प्रवृत्तिस्वीकारात् । पक्षस्य मूलं=पक्षतिः । अत्र पक्षपदेन मासावयवः पक्षिणामवयवश्च गृह्यते । तयोर्मूलं=प्रतिपत्, पक्षिणः पार्श्वावयवविशेषश्च ।

तेन वित्तः ( पा० सू० ५-२-२६ ) । तृतीयान्ताद्वित्त इत्यर्थे चुञ्चुप् चणप् एतौ प्रत्ययौ स्तः । वित्तः=प्रतीतः, विख्यात इति यावत् ।

विनञ्भ्याम् ( पा० सू० ५-२-२७ ) । अत्र न सहेति व्यस्तं पदद्वयम् । *प्रकृत्यर्थविशेषणमिति । तदुक्तम्भाष्ये-"नायम्प्रत्ययार्थः किन्तर्हि प्रकृतिविशेषणमेतत् । विनञ् इत्येताभ्यामसहवाचिभ्यान्नानाञौ भवतः । कस्मिन्नर्थे ? । स्वार्थे" इति । विशब्दस्यासहार्थे वृत्तिश्च घटेन विनेतिप्रयोगे सति घटसाहित्याभावप्रतीतेरस्त्येव ।

वेः शालच् ( पा० सू० ५-२-२८ ) वेः शालच् शङ्कटच् इत्येतौ प्रत्ययौ स्तः समाधानक्रियावचनाद्विशब्दादेतावपि प्रत्ययौ स्वार्थे । वस्तुतो रूढ्याऽर्थविशेषप्रतिपादकत्वम्प्रत्ययान्तयोरिति बोध्यम् ।

*एतत्प्रत्याख्यानपरेति । उपमानाद्वा सिद्धमित्यादिना कृतम्प्रत्याख्यानन्तत्परेत्यर्थः । यथा गवां स्थानं गोष्ठम् तथोष्ट्राणाम् । गोगोष्ठशब्दस्य सादृश्यात्पश्वन्तरस्थाने वर्त्तमानस्य पश्वन्तरवाचकेन समास इति भावः । *चितः पठिता इति । मूल इति शेषः । प्रत्याख्यानपक्षे समासत्वादन्तोदात्तत्वम्भविष्यतीति भाव इति । *अत्रत्यादीति । "गोष्ठादयः स्थानादिषु पशुनामभ्यः" इति वार्त्तिकस्थादिशब्दार्थेत्यर्थः । एवञ्च वार्त्तिककारेण सामान्यशब्देनोक्तानामपि स्पष्टप्रतिपत्त्यर्थं विशेषशब्देनोपादानङ्कृतमिति भावः । आधिक्यम्भाष्यकैयटयोःस्पष्टम् ।

नते नासिकायाः ( पा० सू० ५-२-३१ ) । *नासिकासम्बन्धिनत-

इत्यर्थः ॥

नेर्बिड (पा० सू० ५-२-३२) ॥ निविडाः केशा इति प्रयोगा-न्नते नासिकाया इत्यादेरत्रासम्बन्धः* । अग्रे तु मण्डूकानुवृत्तिर्बोद्धया ।

अभिधेय इति । *तत्र वर्त्तमानान्नेरित्यर्थः । चिकादेशेऽकार उच्चारणार्थः* । क्लिन्नस्येति । चिल्पिलावादेशौ लश्च प्रत्यय इत्यर्थः ।

आसन्नं=समीपम् । आरूढम्=उच्चम् । *सञ्ज्ञाधिकार-लभ्यमाह—पर्वतस्येति ।

*समुद्रोपत्यका हैमीपर्वताधित्यकापुरी ।

इत्यादौ लक्षणया प्रयोगो बोद्धयः ।

कमठ इति । *ठस्याङ्गसञ्ज्ञानिमित्तत्वाभावादिकादेशो न ।

प्रमाणे द्वय (पा० सू० ५-२-३७) ॥ प्रमाणे इत्यर्थद्वारा*प्रकृति-विशेषणं, तत्र वर्त्तमानात्प्रथमान्तादित्यर्थः । *प्रमाणमत्र परिच्छेदकमात्रं तत्र मात्रच् । *अत एव *प्रस्थमात्रमूरुमात्रमित्यादिसिद्धिः । आद्यौ

---

त्व इति । नासिकासाधने नमनेऽवशब्दस्य वृत्तिरिति भावः । यकारादिः प्र-कृते टीटच् । तेन टस्य नेत्वम् ।

नेर्बिडज्बिरीसचौ (पा० सू० ५-२-३२)। निबिडाः=परस्परमतिशा-येन मिलिताः । *अत्रासम्बन्ध इति । एवञ्च वृत्तिकारोक्तायां नते नासिकाया इत्यस्यानुवृत्तौ प्रमाणाभाव इति भावः ।

नासिकासाधनकनतस्य प्रत्ययवाच्यताभ्रमन्निरस्यति-*तत्र वर्त्तमा-नादिति । *उच्चारणार्थ इति । न तु विवक्षितः । तथात्वे उच्चारणसामर्थ्यादि-नच्प्रत्यये परे तस्य लोपाभावे गुणे रूपासिद्धिः स्पष्टैव । क्लिन्नस्य चिल्पिल् । वा-र्त्तिकमिदम् । क्लिन्नस्येत्यादेशापेक्षणात् षष्ठी । अस्य चक्षुषी इत्यर्थे लप्रत्ययो भवति, क्लिन्नस्य चिल्पिलादेशो भवतीत्याकाङ्क्षायाम्प्रातिपदिकाधिकारात्प्राति-पदिकादिति लब्धम् । तच्च प्रातिपदिकमुपस्थितत्वात् क्लिन्नशब्दात्मकमेव गृह्यते ।

*संज्ञाधिकारलभ्येति । अत एव कोशे उक्तम्—

उपत्यकाऽद्रेरासन्ना भूमिरूर्ध्वमधित्यका । इति ।

अन्यत्र तु गौणः प्रयोग इत्याशयेनाह—*समुद्र इति । "ठस्येकः" (पा० सू० ७-३-५०) इति सूत्रस्याङ्गाधिकारपाठफलन्दर्शयति-*ठस्याङ्गेति ।

प्रमाणे द्वय (पा० सू० ५-२-३७)। *प्रकृतिविशेषणमिति । तदुक्त-म्भाष्ये—"प्रमाण इति नायम्प्रत्ययार्थः । क्व तर्हि प्रत्यया भवन्ति ?। तद्धति । कुत एतत् ?। अस्येत्यनुवर्त्तनात् । क्व प्रकृतम् ?। तदस्य सञ्जातन्तारकादिभ्य इति" इति । पारिभाषिकार्थकस्यैव ग्रहणमिति नियमनिरासायाह—*प्रमाण-मत्रेति । *अत एव=प्रमाणशब्दस्य परिच्छेदकमात्रपरत्वादेव । *प्रस्थमात्र-

तूर्ध्वमाने एव ।

प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम ।

इत्युक्तेरिति केचित् । *अन्ये तु आयामपरिच्छेदकमेवात्र प्रमाणम् । *अत एव "यत्तदेतेभ्यः" (पा० सू० ५-२-३९) इति सूत्रे प्रमाणपरिमाणशब्दयोरेकार्थत्वं मन्यमानस्य परिमाणग्रहणं किमर्थमिति शङ्कायाम् 'उक्तोऽत्र विशेषः' इति भाष्ये समाहितम् । *तेनोक्तविशेषवाचकात्वत्र प्रकरणे प्रमाणपरिमाणशब्दाविति सूचितम् । एवञ्च प्रस्थमात्रमित्याद्यसाध्वेव। मात्रचस्त्वविशेषेण परिच्छेदकमात्रवाचिनः स्मरणादिति*कैयटोऽपि चिन्त्य एवेत्याहुः। प्रमाणे लः ।। प्रमाणे वर्तमानाद्विहितस्य*लुगित्यर्थः। इह "आयामस्तु प्रमाणं स्यात्" इत्येव गृह्यते । तेनो*रुद्वयसमित्यादि सिद्धम् । शमादीनामपि*यदाऽऽयामपरिच्छेदकत्वं तदा मात्रचो लुक् । यदा तूर्ध्वाधरदिगवस्थितवस्तुपरिच्छेदकत्वे द्वयसजादि तदाऽप्रमाणत्वान्न लुक् । द्विगोर्नित्यमिति । प्रमाणान्ताद्विगोरित्यर्थः । *एतत्सामर्थ्यादेव तदन्तद्विगोरप्रमाणत्वेऽपि मात्रच्* । प्रमाणपरीति। *तेनोन्मानात्संशये मात्रज् न । शममात्रमिति । शमः स्यान्नवेत्यर्थः । वत्वन्तात्स्वार्थे इति । *बहुलग्रहणसहितोऽत्र पाठो भाष्ये ।

---

मिति । प्रस्थः परिमाणमस्येत्यर्थः । केचिदित्यनेन सूचितामरुचिं सूचयन्नाह-*अन्ये त्विति । *अत एव=आयामपरिच्छेदकस्यैव प्रमाणशब्देन ग्रहणादेव । *तेन=तादृशविशेषपदोपादानेन । विशेषस्तु परिमाणन्तु सर्वत इति । आयामस्तु प्रमाणं स्यादिति । *कैयटोऽपि चिन्त्य एवेति । उक्तभाष्यादायामवाचिभ्य एवेतिनिश्चयादिति भावः । *लुगिति । ल इति लुकः प्राचां संज्ञा । *ऊरुद्वयसमिति । ऊरुशब्दस्योर्ध्वावस्थितवस्तुपरिच्छेदकत्वनोन्मानत्वात् । दिष्ट्यादीनान्तु पारिभाषिकप्रमाणत्वं स्पष्टमेव । *यदा आयामेति । उभयथा परिच्छेदकत्वमेतेषां लोकसिद्धमेव । *एतत्सामर्थ्यादिति । प्रमाणान्तद्विगोर्लुग्विधानसामर्थ्यादित्यर्थः । *मात्रजिति । न तु द्वयसज्दघ्नचौ । तयोः 'प्रथमश्च द्वितीयश्च'इत्यनेनोन्मानवाचकादेव नियमनात् । न च प्रकृतवार्त्तिके नित्यग्रहणं व्यर्थम् । विकल्पस्याप्रकृतत्वादिति वाच्यम् । "प्रमाणे लः"इत्यस्य पूर्वसूत्रेण यत्र मात्रच् तत्रैव लुग्विधायकतया शमः स्यान्न वेत्यर्थविवक्षायां शममात्रमित्यत्र यथा नोत्तरवार्त्तिकविधेयस्य लुक् तथा द्वौ शमौ स्यातान्न वेत्यर्थविवक्षायां द्विशम इति रूपमिष्यते, न तु तत्र मात्रच श्रवणङ्कदाचिद्भवतीति नित्यो लुगेव द्विगोर्यथा स्यादित्येवमर्थं तत्सत्त्वात् । *तेन=प्रमाणेतिवचने त्रयाणामभेदेनोपादानेन । *बहुलग्रहणसहित इति । वत्वन्तात्स्वार्थे द्वयसज्मात्रचौ

हास्तिने "इनणि" (पा० सू० ६-४-१६४) इति प्रकृतिभावः ।

यत्तदे (पा० सू० ५-२-३९) ॥ इह परिमाणग्रहणं सर्वतोमानार्थकम् । ननु प्रमाणे इत्यनुवर्त्य*तत्रैवास्य विधानमस्तु, यावानध्वेत्यादिप्रयोगा एव मुख्याः सन्तु, परिमाणप्रयोगा एव सादृश्याद्भवन्तु । तदुक्तं भाष्ये—"किमर्थं परिमाण इत्युच्यते न प्रमाण इति वर्त्तते", इति चेन्न । यदादिभ्यो विशेषविहितेन वतुपा मात्रादीनां बाधप्रसङ्गात् । परिमाणग्रहणे तु *भिन्नोपाधिकत्वान्न बाध इति, प्रमाणोपाधौ तन्मात्रमूर्ध्वमानोपाधौ तद्द्घ्नमित्यादि सिद्धम् । यावानध्वा यावती रज्जुरधिकरणैतावत्त्वे चेत्यादिप्रयोगास्तु प्रमाणग्रहणानुवृत्त्या परिच्छेदकमात्रेऽपि विधानाद् सिद्धाः । तदुक्तं–"मात्राद्यप्रतीघाताय" इति ।

किमिदम् । वस्य घविधानसामर्थ्याद्*वतुपोऽप्यत्र विधिः । प्रत्ययान्तरत्वभ्रमव्यावृत्तये व इति । *एतेन–"आदेः परस्य" (पा० सू० १–१–५४) इत्येव सिद्धे व इति व्यर्थमित्यपास्तम् । *यद्वा किमिदम्भ्यामिति वाक्यभेदेन वतुपं विधत्ते ।

किमः सम्(पा० सू० ५–२–४१) । *इदमो निवृत्त्यर्थं किम इति । सङ्ख्यापरिमाणमिति कर्मधारयः । परिमाणशब्दः परिच्छेदकपरः । *पूर्वत्र परिमाणग्रहणस्य सर्वतो मानार्थत्वात्पुनस्तद्ग्रहणम् । सङ्ख्यारूपपरिच्छेदविषयके *प्रश्ने वर्त्तमानात्किमोऽस्येति षष्ठ्यर्थे डतिरित्यर्थः । सङ्ख्येति किम् ? । कियान् वृक्षः । कतीति नित्यबहुवचनान्तः । *एकयोः सन्देहाभावेन प्रश्नाभावात् । बहुत्वव्याप्यसङ्ख्यानां बहुत्वात्प्रश्नो युक्त एव* ।

सङ्ख्याया (पा० सू० ५–२–४२) ॥ अवयवे वर्तमानसङ्ख्या-

---

बहुलमिति ।

*तत्रैव=प्रमाणे एव । *भिन्नोपाधिकत्वात्=प्रकृत्यर्थविशेषणीभूतार्थस्य भिन्नत्वादित्यर्थः । *वतुपोऽप्यत्र विधिरिति । तदुक्तम्भाष्ये—"एतदेव ज्ञापयति भवति किमिदम्भ्यां वतुबिति" इति । *एतेन=प्रत्ययान्तरत्वभ्रमनिवारकत्वेन । भाष्योक्तमेव पक्षान्तरमाह–*यद्वेति ।

*इदमो निवृत्त्यर्थमिति । अन्यथैकयोगनिर्दिष्टत्वात्तस्याप्यनुवृत्तिः स्यात् । *पूर्वत्र="यत्तदेतेभ्यः" (पा० सू० ५–२–३९ ) इतिसूत्रे । *प्रश्ने इति । किंशब्दस्य प्रश्नार्थकत्वादस्य लाभः । *प्रश्नो युक्त एवेति । अत एवास्य नित्यं बहुवचनान्तत्वम् ।

वाचकादवयविरूपेऽस्येत्यर्थे तयप् इत्यर्थः । अवयवी चात्रानुद्भूताव-यवभेदोऽपि समुदायः । *तेन मुनित्रयं, बहुतयं यूथम्, उभये दे-वमनुष्या इत्यादि सिद्धम् ।

द्वित्रिभ्याम् (पा० सू० ५-२-४३) ॥ *नन्वयचश्चित्त्वं व्यर्थं चित्त्वेऽपि द्व्यादीनामन्तोदात्ततया "यस्य" (पा० सू० ६-४-१४८) इति लोपे "अनुदात्तस्य च यत्र" (पा० सू० ६-१-१६१) इत्यनेनाद्युदात्तस्यैव प्रयोगे श्रवणादिति चेन्न । प्रत्ययसम्बन्धयाद्याकारस्येव *प्रकृतेरपि शेष-निघातेनानुदात्तत्वात् ॥

उभादु (पा० सू० ५-२-४४) ॥ उदात्तग्रहणसामर्थ्यादादिरुदा-त्तः* । *अन्तोदात्तत्वस्य चित्त्वेनैव सिद्धेः। सर्वोदात्तत्वन्तु बाधितम् "अ-नुदात्तं पदमेकवर्जम्" (पा० सू० ६-१-१५८) इत्युक्तेः । न चोभयेऽत्र सम्बुद्धावामन्त्रिताद्युदात्तं *"बाधितुमुदात्तग्रहणमिति वाच्यम् । येननाप्रा-प्तिन्यायेन*चित्स्वरस्यैव बाध्यत्वात्तस्य च सतिशिष्टत्वेन बलवत्त्वाच्च । 'उभयं शृणवच्च नः' इत्यादौ मध्योदात्तप्रयोगाच्च । तयप इति । *इदं "तयादेशे*प्रतिषेध उभये"इति स्थानिवत्सूत्रस्थवार्त्तिकानुरोधेन । वस्तुतो नात्रादेशता, किं तु प्रत्ययान्तरत्वमेव उभयीत्यत्र ङीप् तु "टिड्ढा"(पा० सू० ४-१-१५) इति सूत्रे मात्रच इति मात्रशब्दात्प्रभृति अयचश्चकारेण प्रत्याहाराश्रयणादिति तत्प्रत्याख्यानभाष्यात् । अत एवोदात्तग्रहणं सार्थ-कम् । अन्यथा निरनुबन्धकादेशान्तरमेव कुर्यात् । आदेशत्वेऽपि "आद्युदा-त्तश्च"(पा०सू० ३-१-३) इत्यधिकारेण तस्याद्युदात्तताया लाभात् । *त-

---

*तेन=द्विविधस्यापि समुदायस्य ग्रहणेन ।

यस्य चित्त्वप्रयुक्तमन्तोदात्तत्वन्तदवयवस्यैवान्याचोऽनुदात्तत्वं शेष-निघातेनेत्याभिप्रायेण शङ्कते—*नन्विति । *प्रकृतेरपीति । चितः सप्रकृते-रितिवचनात् ।

*आदिरुदात्त इति । अयजादेश आद्युदात्त इत्यर्थः । ननूदात्तपद-मन्त्यस्यैवोदात्तत्वम्बोधयत्वित्यत आह-*अन्तोदात्तत्वस्येति । एवञ्च"अनुदा-त्तम्पदम्" ( पा० सू० ६-१-१५८ ) इतिपरिभाषैकवाक्यतया सर्वोदात्तत्वम-युक्तमिति भावः । *बाधितुमुदात्तग्रहणमिति । तथा चोदात्तग्रहणसामर्थ्यादा-मन्त्रिताद्युदात्तत्वं बाधित्वाऽन्तोदात्तत्वमस्त्विति भावः । *चित्स्वरस्यैवेति । स्थानिवत्त्वेनेत्यादिः । *इदम्=तयपः स्थानेऽयजादेशविधानम् । *प्रतिषेधः= स्थानिवद्भावस्य प्रतिषेधः । *तदसम्बन्धेऽपीति । आद्युदात्तश्चेत्यस्यासम्ब-

दसन्बन्धेऽपि स्थानिसादृश्येनानुदात्तत्वे उभयस्या*न्तोदात्ततया "अनुदात्तस्य च यत्र" (पा० सू० ६-१-१६१) इत्यनेनाद्युदात्तत्वसिद्धेः । अयचश्च: *समुदायानुबन्धः *स्वानुबन्धश्चेत्यन्यत्र विस्तरः ।

तदस्मिन् (पा० सू० ५-२-४५)॥ उपश्लिष्टपदाध्याहारेणौपश्लेषिकेऽधिकरणे सप्तमीति स्पष्टं भाष्ये । "ग्रहणवता" इति निषेधादन्तग्रहणम् । दशशब्दात्तु न, व्यपदेशिवद्भावस्य प्रातिपदिकग्रहणेऽभावात् । *समानजातीयत्वे इति । *इतिकरणलब्धोऽयमर्थः ॥

शदन्त (पा० सू० ५-२-४६) ॥ तदस्मिन्नधिकमिति, ड इति च वर्त्तते । "सङ्ख्याया अवयवे" (पा० सू० ५-२-४२) इत्यतः सङ्ख्याग्रहणञ्च वर्तते । *तेन *गोत्रिंशदधिका अस्मिन् शते इत्यादिषु न । *अन्तग्रहणादेकात्रिंशशतमित्यादि सिद्धम् । *विंशतावप्यन्तग्रहणं कर्तव्यम् एकविंशं शतमित्यादिसिद्धये ।

सङ्ख्याया गुणस्य निमाने (पा० सू० ५-२-४७) ॥ गुणोऽत्र समानभागः* । निमीयते=क्रीयतेऽनेनेति निमानं=मूल्यम्, तदस्येति म-

---

ध्वत्वेऽपीत्यर्थः । *अन्तोदात्ततया=घृतादिपाठादन्तोदात्ततया । *समुदायानुबन्धः=प्रत्याहारसम्पादकत्वेन समुदायानुबन्धः । *स्वानुबन्धः=द्वयम् त्रयमित्यादावन्तोदात्तत्वसम्पादकः ।

तदस्मिन्नधिकम् ( पा० सू०-५-२-४५ ) । प्रथमासमर्थादस्मिन्निति सप्तम्यर्थे दशान्तात्प्रातिपदिकाद् डः स्यात् । यत्प्रथमासमर्थमधिकवाचकं तच्चेत् । *समानजातीयत्व इतीति । प्रत्ययार्थापेक्षया समानजातीये प्रकृत्यर्थे अधिके सति प्रत्यय इत्यर्थः । *इतिकरणलब्धोऽयमर्थ इति । इतिशब्दो हि लौकिकीं विवक्षामनुसारयति । लोके च समानजातीय एव प्रयोगो दृश्यते । तदुक्तम्-"अधिके समानजातौ" इति वार्त्तिककृता ।

शदन्तविंशतेश्च ( पा० सू० ५-२-४६ ) तदस्मिन्नधिकमित्यर्थे शदन्ताद्विंशतिशब्दाच्च प्रातिपदिकाद् डः स्यात् । *तेन=संख्याग्रहणानुवर्तनेन । संख्याया एव यत्राधिक्यम्प्रतिपाद्यते तत्र प्रत्यय इष्यते, यत्र तु सङ्ख्येयस्याधिक्यन्तत्र नेत्यर्थः । तत्फलमाह—*गोत्रिंशदिति । अत्र हि सङ्ख्येयस्याधिक्यप्रतिपादनान्न प्रत्यय इति भावः । *अन्तग्रहणादिति । अन्यथा प्रत्ययग्रहणपरिभाषया त्रिंशच्चत्वारिंशच्छब्दयोरेव ग्रहणं स्यान्न तु एकत्रिंशच्छब्दस्य तस्य तत्त्वाभावादन्तग्रहणेन तु सा परिभाषा बाध्यत इति भावः । *विंशतावप्यन्तेति । तदुक्तं वार्त्तिककृता-"विंशतेश्च । विंशतेश्चान्तग्रहणं कर्त्तव्यम्" इति ।

सङ्ख्याया गुणस्य निमाने मयट् ( पा० सू० ५-२-४७ ) । *समान-

ण्डूकप्लुत्याऽनुवर्तते, तदाह—प्रथमान्तात्षष्ठ्यर्थे इति । गुणस्येति म-ध्यमणिन्यायेनोभयान्वयि । गुणकर्मकनिमाने वर्त्तमानाद् गुणगतसङ्ख्या-वाचकान्मयडित्यर्थः । निमाननिमेययोर्भागरूपत्वे निमेयसङ्ख्यापेक्षया निमानसङ्ख्याया *आधिक्ये च *निमेयस्यैकत्वे एव चायं प्रत्यय इति भाष्ये स्पष्टम् । *तेनैको यवो भागा निमानमस्योदश्विद्भागस्येत्यत्र त्रयो यवानां भागा निमानमनयोरुदश्विद्भागयोरित्यत्र च न । द्विमयमिति । *द्विशब्दस्य भागवृत्तेर्नित्यसापेक्षत्वाद्यवानामित्येतत्सापेक्षत्वेऽपि प्रत्ययः । *उदश्विद्भागस्याप्युदश्वित्त्वाद् द्विमयमुदश्विदित्युक्तम् । सङ्ख्याया इति किम् ? । यवभागो निमानमस्योदश्विद्भागस्य ॥

तस्य पू (पा० सू० ५-२-४८) ॥ सङ्ख्याया इति वर्त्तते । स-

---

भाग इति । समानावयव इत्यर्थः । द्विगुणन्त्रिगुणमित्यादिस्थले गुणशब्दस्य भागार्थकत्वस्य लोकप्रसिद्धत्वात् । *आधिक्य इति । तदुक्तम्भाष्ये—"भूयसः । भूयस इति वक्तव्यम् । किम्प्रयोजनम् ? । भूयसो वाचिकायाः सङ्ख्याया उत्पत्तिर्यथा स्यात् । अल्पीयसो वाचिकाया उत्पत्तिर्मा भूत्" इति । भूयस इति । निमेयभागसङ्ख्याया निमानभागसङ्ख्या यदाऽधिका भवति तदा प्रत्ययो यथा स्यात् । एको यवभागो निमानमस्योदश्विद्भागस्येत्यत्र मा भूदिति विवक्षितम । अधिका भवतीत्यनेनाधिक्यमात्रविवक्षा प्रत्ययोत्पत्तिनियामिका न तु बहुत्वन्नाप्यतिशय इति । *निमेयस्यैकत्वे इति । तदुक्तम्भाष्ये-"एकोऽन्यतरः । एकश्चेदन्यतरो भवतीति वक्तव्यम् । इह मा भूत् । द्वौ यवानां त्रय उदश्वित इति" इति । अत्र कैयटः । अन्यतरशब्देन निमेयमेव विवक्षितम । एक एव यदि निमेयगुणो भवति तदा प्रत्ययः द्वयोर्बहुषु च निमेयगुणेषु न भवति । निमानेऽधिकत्वस्योक्तत्वात्सामर्थ्यमवलम्ब्योक्तमन्यतरशब्देन निमेयमेवेति । द्वौ यवानामितिभाष्यस्य द्वौ भागौ यवानां निमानमुदश्वितस्त्रयो भागा निमेयमित्यर्थम्मत्वा पुनः शङ्का कैयटे-ननु भूयस्त्वस्यात्राभावान्न भविष्यति" इति । एवं शङ्काङ्कृत्वा तेनैव समाहितम् "एवं तर्ह्युदाहरणदिगियम् । इदन्त्वत्रोदाहरणन्त्रयोः यवानान्द्वावुदश्वित इति" इति । अथवा द्वौ यवानान्निमेयौ त्रय उदश्वितो भागा निमानमिति विवक्षायामुदाहरणम् । ततो भाष्ये उक्तम् "समानाम् । समानाञ्चेति वक्तव्यम् । इह माभूत् । एको यवानामध्यर्द्धमुदश्वित इति" इति । निमेयभागस्य येन केनापि निमानभागेन समानत्वे सति यदा निमेयसङ्ख्या निमानसङ्ख्यातोऽधिका भवति तदा प्रत्यय इत्यर्थः । *तेनेति । पूर्वोक्तभाष्यसम्मतव्याख्यानेनेत्यर्थः । ननु द्विमयमित्यत्र द्विशब्दस्य यवानामित्येतत्सापेक्षत्वात्कथं वृत्तिरत आह-*द्विशब्दस्येति । ननु मूले द्विमयमुदश्विद्भागेति वक्तुमुचितन्तत्कथमुदश्विदितीत्यत आह-*उदश्विद्भागस्याप्युदेति ।

ख्यावाचिनो ग्रहणम् । *प्रवृत्तिनिमित्तसङ्ख्यापूरणे चायम् । त्रासीं शाखेतिवदव्ययवः प्रत्ययार्थः ।

नान्ताद(पा० सू० ५-२-४९) ॥ *मुक् तु न कृतः "पञ्चमः" इत्यादौ नलोपानापत्तेः । डडित्यनुवृत्तस्य नान्तादितिपञ्चम्या षष्ठी कल्प्यते इत्याशयेनाह–डट इति ।

*छयताविति । विशेषविहिताभ्यामप्याभ्यां चतुरो डट् न बा-

---

तस्य पूरणे डट् ( पा० सू० ५-२-४८) तस्येतिषष्ठीसमर्थात्सङ्ख्यावाचिनः प्रातिपदिकात्पूरण इत्येतस्मिन्नर्थे डडित्यर्थः । पूर्यते अनेनेति करणे ल्युट् । पूर्यत इत्यस्य संख्याशब्दः पञ्चमादिर्यस्य सद्भावे प्रवर्तत इत्यर्थः । एतेन यत्सद्भावासद्भावाभ्याम्पूरणार्थकप्रत्ययान्तशब्दबोध्यसंख्यायाः प्रवृत्त्यप्रवृत्ती भवतस्स पूरण इत्युच्यत इत्युक्तम्भवति । अत्र भाष्ये द्वितीयेऽध्यायेऽष्टम इति प्राप्नोतीति शङ्कां कृत्वा "चरमोपजाते पूर्वस्मिंश्चानपगते । चरमोपजाते पूर्वस्मिंश्चानपगते प्रत्यय इति वक्तव्यम्" । गणनायां क्रियमाणायाम्पूर्वस्मिन्संख्येयेऽनपगते बुद्ध्या परिगृहीतत्वाद् यद्बुद्धिः पश्चादुपजायते तत्र प्रत्यय इत्यर्थः । एतेन गणनायां यस्य चरमङ्गणना भवति तस्मिन्नभिधेये प्रत्यय इत्युक्तम्भवति । अत एव भाष्यकृतोक्तम्—द्वितीयेऽध्यायेऽष्टम इति प्राप्नोति । भवत्येवेति । न च पञ्चानाम्पूरण इत्यत्र पञ्चन्शब्दस्य सङ्ख्येयपरत्वेऽपि पञ्चानाम्पूरणः पञ्चम इत्यत्र चरमगणिते यथा प्रत्ययो भवति तथा पञ्चानामुष्ट्रिकाणाम्पूरणो घट इत्यत्रापि प्राप्नोति । उष्ट्रिका च घटपरिमितेनोदकेन पञ्चतः पूर्यन्ते तादृशो मृन्मयश्चर्ममयो वा पात्रविशेष इति वाच्यम् । "सङ्ख्याया अवयवे" ( पा० सू० ५-२-४२ ) इति सूत्राद्द्वितीयसङ्ख्याग्रहणानुवृत्त्या सङ्ख्यायाः पूरणे वर्त्तमानात्सङ्ख्याशब्दात्प्रत्ययविधानेन सामञ्जस्यात् । तदेतदुक्तम्* प्रवृत्तिनिमित्तसंख्यापूरण इति ।

नान्तादसंख्यादेर्मट् ( पा० सू० ५-२-४९ ) डडित्यनुवर्त्तते । तच्च नान्तादितिपञ्चम्या षष्ठ्यन्तत्वेन विपरिणम्यते । नान्तादसंख्यादेः परस्य डटो मडागमः स्यादित्यर्थः । न च डटोऽननुवृत्तावपि मट्प्रत्यय एवास्तामिति वाच्यम् । "षट्कति" ( पा० सू० ५-२-५१ ) इति सूत्रस्यागमविधायकतया तत्र मण्डूकानुवृत्त्या डड्ग्रहणमनुवर्तनीयमिति क्लेशापत्तेः । ननु "षट्कति" (पा० सू० ५-२-५१) इति सूत्रेऽनुवर्त्तमानस्य डडित्यस्य सप्तम्यन्तत्वमवश्यं वाच्यमेव प्रकृतसूत्रेऽप्यर्थाधिकारात्तथैवास्तु आगमस्तु मुक्कर्तव्य इत्यत आह–*मुक्तु न कृत इति ।

षट्कतिकतिपयचतुराम् ( पा० सू० ५-२-५१ ) । इह षष्ठीनिर्देशात्थुक आगमत्वमेव ।

चतुरश्छयतौ विहितौ ताभ्याम्प्रत्ययाभ्यां डटो बाधाभावायाह–*छयताविति ।

ध्यते । थुग्विधानसामर्थ्यात् ।

डटोऽपवाद इति । *प्रत्ययाधिकारेण प्रत्ययत्वस्य न्याय्यत्वात् । सहायवाची द्वितीयशब्दस्त्वव्युत्पन्नं प्रातिपदिकम् । अनेन तु *नास्य साधुत्वम् । न ह्यपूरणस्तीयशब्दोऽस्तीति "पूरणाद्भागे"(पा० सू० ५-३-४८)इति सूत्रस्थभाष्यासङ्गतेः । *तत्रत्यपूरणग्रहणन्तु प्रागेकादशभ्य इत्युत्तरार्थमिति भाष्ये स्पष्टम् ।

विंशत्यादिभ्यस्त(पा० सू० ५-२-५६) ॥ *अत्र विंशत्यादयः "पङ्क्तिविंशति"(पा० सू० ५-१-५९)इति सूत्रस्थाः । *उत्तरसूत्रे सङ्ख्यादेरिति त्विह प्रकरणे तदन्तविधिज्ञापकम् । तेनैकान्नविंशतितम एकविंशतितम इत्यादि सिद्धम् । *ज्ञापकेन च प्रत्ययविधिविषयता बोध्यते ग्रहणवतेत्यादेः । अयञ्चागमविधिरिति "षष्ठ्यादेः"(पा०सू० ५-२-५८)इति सूत्रे भाष्ये स्पष्टम् ॥

---

द्वेस्तीयः ( पा० सू० ५-२-५४ ) । द्विशब्दात्संख्यावाचिनः पूरणेऽर्थे तीयप्रत्ययः स्यात् ।

अस्य प्रत्ययत्वे साधकमाह-*प्रत्ययाधिकारेति । *नास्येति । सहायवाचकस्येत्यर्थः । ननु यद्यपूरणस्तीयशब्दो नास्ति तदा "पूरणाद्भागे" ( पा० सू० ५-३-४८ ) इति सूत्रे पूरणग्रहणं व्यर्थमत आह-*तत्रत्येति ।

त्रेः सम्प्रसारणञ्च ( पा० सू० ५-२-५५ ) । त्रिशब्दात् षष्ठ्यन्तात्पूरण इत्यर्थे तीयप्रत्ययः स्यात्, तत्सन्नियोगेन त्रिशब्दस्य सम्प्रसारणम् । तृतीय इत्यत्र ऋकारस्य "हलः" ( पा० सू० ६-४-२ ) इति दीर्घो न । अनण्त्वात् । अत्र प्रक्रियालाघवाय "त्रेस्तृ च" इति तु नोक्तम् । प्रत्ययान्तरत्वभ्रमापत्तेः ।

विंशत्यादिभ्यः ( पा० सू० ५-२-५६ ) अत्र विंशत्यादयः के इत्याकाङ्क्षायामाह-*अत्र विंशत्यादय इति । प्रत्यासत्त्येति भावः । *उत्तरसूत्र इति । "षष्ठ्यादेः" ( पा० सू० ५-२-५८ ) इति सूत्रे इत्यर्थः । ननु ग्रहणवतेति निषेधस्य प्रत्ययविधावेव प्रवृत्तेस्तमड्विधायकस्य तथात्वान्न निषेधप्राप्तिरिति । डटः प्रत्ययत्वात्तेन यस्माद्विहितस्तदादेरित्यस्योपस्थितिः कल्प्यते, तच्च विशेष्यम्, विंशत्यादिकञ्च विशेषणमिति तदन्तविधिः सिद्ध एवेति न तदन्तविधौ ज्ञापकोपयोग इत्यत आह-*ज्ञापकेनेति । एवञ्च तस्य निषेधस्य प्रत्ययविधिविषयत्वमेवेत्यर्थानुवादकमेव ज्ञापकमिति भावः । अत्र विंशत्यादिभ्य इत्युपादानात्सूत्रोपात्ता एव विंशत्यादयो ग्राह्या न तु सहस्रादयः "पङ्क्तिविंशति" ( पा० सू० ५-१-५९) सूत्रानुक्ताः । न च पङ्क्तिविंशतीति सूत्रं वार्त्तिककृता "अनारम्भो वा प्रातिपदिकविज्ञानाद्यथा सहस्रादिषु" इत्यनेन प्रत्याख्यातमिति कथन्त एव विंशत्यादय इति वाच्यम् । वा-

मतौ छः (पा० सू० ५-२-५९) ॥ *अस्यवामीयमित्यादौ प्र-कृतिवदित्यस्यानित्यत्वात् *ङसादेर्न लुक् । अस्यवामस्येति वेदे पठ्यते । तत्र द्वितीयविभक्तिप्राग्भागानुकरणादनुकार्येणार्थवतः प्रत्यय इति बोद्धव्यम् ।

विधानसामर्थ्यादिति । *ज्ञापकसिद्धविधानसामर्थ्यादित्यर्थः । भाष्ये वा लुगिति वचनमेवारब्धम् । विमुक्तादयः *शब्दपरायणे नि-र्दिष्टाः । गोशब्दादयोऽप्येवम् । मतौ च्छ इत्यारभ्यैतदन्ता अनुकरणशब्दा-देव प्रत्ययाः साधवः ।

---

र्त्तिककारेण तस्य प्रत्याख्याने कृतेऽपि "नासूया कर्त्तव्या यत्रानुगमः क्रियते" इत्यनेन भाष्यकृता तस्यावश्यकत्वस्योक्तत्वात् । गणपाठ एव विंशत्यादयः पाठ्यास्त एव च ग्रहीष्यन्त इति तु वार्त्तिककाराशयः ।

नित्यं शतादिमासार्द्धमास (पा०सू० ५-२-५७) । नन्वत्र शतादिग्रहणं व्यर्थम् । "षष्ठ्यादेः" ( पा० सू० ५-२-५८ ) । इत्युत्तरसूत्रेणैव सिद्धत्वादिति चे-न्न । तत्रासंख्यादेरित्युक्तत्वेन यत्र संख्यादित्वन्तदर्थमस्यावश्यकत्वात् । अत एव मूले एकशततम इत्युदाहृतम् ।

षष्ठ्यादेश्चासंख्यादेः ( पा० सू० ५-२-५८ ) । अत्र षष्ठ्यादयः प्राक् शताद् द्रष्टव्याः । शतशब्दस्य पूर्वसूत्रे उपादानात् । अत एव तत्रासंख्यादेरिति निषेधाप्रवृत्तिः । नित्यग्रहणञ्च प्रकृतसूत्रेऽपि स्पष्टार्थं सम्बध्यते । संख्यादिभ्यः षष्ठ्यादिभ्यस्तु प्रकृतसूत्राप्राप्तेर्विकल्प एवेत्याशयेन मूले उक्तं संख्यादेस्त्विति ।

मतौ छः सूक्तसाम्नोः ( पा० सू० ५-२-५९ ) । अत्र मताविति मत्व-र्थपरं, तेन प्रथमा समर्थविभक्तिः प्रकृतेऽपि । एवमस्त्युपाधिकत्वञ्च । सूक्ते सा-मनि चाभिधेये प्रातिपदिकान्मत्वर्थे छः स्यात् । अस्यवामशब्दाद्यद्यपि प्रत्य-यो विधीयते तथापि न "सुपो धातुप्रातिपदिकयोः" ( पा० सू० २-४-७१ ) इति लुक् । अस्यवामेतिसमुदायस्यानुकरणशब्दत्वात्सुबभावादित्याह-*अस्य वामीयमित्यादाविति । *ङसादेरिति । ङसादेशत्वेन प्रतीयमानशब्दादेरित्यर्थः । न तु ङसः कथमप्यत्र सम्भवः । परिनिष्ठितानुकरणत्वात् ।

अध्यायानुवाकयोर्लुक ( पा० सू० ५-२-६० ) प्रातिपदिकान्मत्वर्थे छः स्यादध्यायानुवाकयोरभिधेययोः, लुक् च । कस्य लुगित्याकाङ्क्षायामनेन सूत्रेण विहितस्य छस्येत्यर्थाल्लभ्यते । एवञ्च विधानसामर्थ्याद्विकल्प इत्याह मूले विधा-नेत्यादि । तच्च छविधानन्न साक्षादित्याशयेनाह-*ज्ञापकसिद्धेति । *शब्दपरा इति । मत्वर्थपरा इति शेषः ।

आकर्षादिभ्यः कन् ( पा० सू० ५-२-६४ ) नन्वाकर्षादीनां गोषदादिषु पाठं कृत्वा प्रकृतसूत्रन्न कार्यमिति चेन्न । इदुदन्तादपि कन् यथा स्यात् वुनि तु "यस्येति च"( पा० सू० ६-४-१४८ ) इति सूत्रेणेदुतोर्लोपे अशनिकः शकुनिकः त्सरुक इति न सिध्येदित्याशयात् ।

*काम इच्छेति। न तु कामयिताऽनभिधानात्* तत्रेत्यनुवर्तते, तदाह-धनेकाम इति।

तद्रचनायामिति। *अत्रैवार्थे एकार्थीभावेनास्य साधुत्वं स्वभावात्।

उदरा (पा० सू० ५-२-६७)।:*तत्र प्रसित इति च वर्तते, यः प्रसितः स चेद*विजिगीषुरित्यर्थः। उदरको मल्लः* ॥

---

धनहिरण्यात् (पा० सू० ५-२-६५)। अत्र कामशब्दो भावघञन्त इत्याशयेनाह-*काम इच्छेतीति। "तत्र कुशलः" (पा० सू० ५-२-६३) इति सूत्रात्तत्रेति वर्त्तते कन्निति च। धनहिरण्यशब्दात्सप्तम्यन्तात्कामेऽर्थे कन् स्यात्। *अनभिधानादिति। तदुक्तम्भाष्ये-"धनहिरण्यात्कामाभिधान इति वक्तव्यम्। षष्ठ्यर्थे ह्यनिष्टप्रसङ्गः। षष्ठ्यर्थे ह्यनिष्टम्प्रसज्येत। धने कामोऽस्येति। तर्त्तर्हि वक्तव्यम्?। न वक्तव्यम्। कस्मान्न भवति। धने कामोऽस्येति। अनभिधानात्" इति।

स्वाङ्गेभ्यः प्रसिते (पा० सू० ५-२-६६) स्वाङ्गवाचिनः सप्तम्यन्तात्प्रसितेऽर्थे कन्। प्रसितः=तत्परः। अत्र केशानामक्रियात्वात्तेषु तत्परत्वमनुपपन्नमत आह मूले तद्रचनायामिति। एवञ्च वृत्तिविषये केशशब्दस्तद्रचनारूपेऽर्थे लाक्षणिक इत्याशयस्तदाह-*अत्रैवार्थ इति।

उदराट्ठगाद्यूने (पा० सू० ५-२-६७)। एतदर्थमाह-*तत्रेत्यादि। *अविजिगीषुरिति। "दिवोऽविजिगीषायाम्" (पा० सू० ८-२-४९) इति सूत्रेण निष्ठानत्वस्य तत्रैवार्थे विधानादाद्यूनशब्द एतदर्थकः। यो हि अग्नौ सामर्थ्याधिक्येनौदर्याग्निना पीडितःसन्नुदरभरण एव तत्परस्स एवौदरिक इत्युच्यते तादृशश्च मल्ल इत्याशयेनाह-*मल्ल इति। अमल्लो हि बहुवारं भक्षयति सर्वदोदरभरणैकव्यापारवान् भवति, तथापि बुभुक्षित एवास्ते। अत एव शारीरसामर्थ्यरहितो भवति। औदरिकशब्दबोध्यः सः। यस्तु सकृद्भक्षणेनापि सन्तुष्टो भवति स एव शारीरसामर्थ्यवान् भवति तादृशश्च मल्ल उदरक इति व्यपदिश्यते। तन्त्रशब्दादचिरापहृतेऽर्थे पञ्चम्यन्तात्कन् स्यात्। अचिरमपहृतस्तन्त्रात्सद्य एवाहृतस्तादृशश्च प्रत्यग्र एवेत्युक्तम्मूले प्रत्यग्र इति।

प्रत्यग्रोऽभिनवो नव्यो नवीनो नूतनो नवः।

इति कोशः।

ब्राह्मणकोष्णिके संज्ञायाम् (पा० सू० ५-२-७१)। ब्राह्मणकेति देशविशेषस्य संज्ञा। तादृशश्च क इत्याकाङ्क्षायामाह मूले आयुधजीविन इत्यादि।

शीतोष्णाभ्याम् (पा० सू० ५-२-७२)। शीतोष्णाभ्यां कारिण्यर्थे कन् स्यात्। शीतमिति क्रियाविशेषणम्। शीतम्=मन्दम्, तादृशश्चालस एवेति

शीतोष्णाभ्याम् (पा० सू० ५-२-७२) ॥ *सञ्ज्ञायामित्यनुवर्तते इत्याशयेनाह-अलस इत्यादि ।

अध्यारूढशब्दादिति । *व्युत्पादनमात्रं शुद्धरूढत्वमिति बोध्यम् ।

अनृजुरिति । सञ्ज्ञाधिकारादीदृशेऽर्थे एव माधुत्वं बोध्यम् ।

दम्भ इति । दम्भसाधनत्वात् । दाम्भिका हि प्रायेण दण्डाजिनं धारयन्ति ।

तावतिथम् ( पा० सू० ५-२-७७ ) ॥ ग्रहणमिति भावे ल्युट् । तच्च प्रत्ययार्थः । तावतिथमिति पूरणप्रत्ययान्तोपलक्षणम् । तृतीयार्थे प्रथमा । तृतीयान्ताद्ग्रहणमित्यर्थे प्रत्ययः । तावतिथेन गृह्णातीत्युपसङ्ख्यानमिति वार्तिके तृतीयाया एव समर्थविभक्तित्वस्य क्लृप्तत्वात् । तद्ध्वनयन् वक्ष्य-

---

लोकेऽलसो व्यपदिश्यते शीतक इति । इयमपि संज्ञैवेत्याशयेनाह-*संज्ञायामिति ।

अधिकम् (पा० सू० ५-२-७३) । अधिकमिति निपात्यते । अध्यारूढशब्दात्कन् आरूढशब्दस्य लोपोऽत्र निपात्यते यद्यपि, तथाप्यत्र शुद्धरूढत्वमेव कल्प्यते अवयवशक्तिज्ञानस्य समुदायजन्यशक्तिज्ञाने सहकारित्वाभावादित्याशयेनाह-*व्युत्पादनेति । अत्रेदं बोध्यम्-यद्यप्यध्यारूढशब्दः कर्मक्तान्तः कर्तृक्तान्तो वा गत्यर्थकाद्धातोः "गत्यर्थाकर्मक" ( पा० सू० ३-४-७२ ) इत्यनेनाभेयत्र तस्य विधानात् । आद्ये कर्मणोऽभिधानात्ततः प्रथमा कर्तुस्तु तृतीया । अध्यारूढा खारी द्रोणेन । द्वितीये कर्तुरभिधानात्ततः प्रथमैव । अध्यारूढो द्रोणो खारीमिति । अधिकशब्दप्रतिपाद्यार्थस्य त्वक्रियात्वात्तद्योगे न द्वितीयातृतीये भवतः किन्तु यस्मादधिकं यस्य चेश्वरवचनमिति निर्देशाज्ज्ञापकात्तद्योगे पञ्चमी तदस्मिन्नधिकमिति निर्देशात्सप्तमी वा । अधिका खारी द्रोणात् । अधिको द्रोणः खार्यामिति वा । अधिका खारी द्रोणेनेत्यत्र तु हेतौ तृतीया बोध्या ।

अनुकाभिकाभीकः कमिता ( पा० सू० ५-२-७४ ) । सूत्रे समाहारद्वन्द्वेऽपि सौत्रं पुंस्त्वम् । अनुक अभिक अभीक एते शब्दा निपात्यन्ते । कमिता समुदायेनाभिधेयश्चेत् । क्रियाविशिष्टसाधने वर्तमानाभ्यामन्वभिभ्यां स्वार्थे कन्नभेर्दीर्घः पाक्षिको निपात्यते ।

पार्श्वेनान्विच्छति ( पा० सू० ५-२-७५ ) । अत्र पार्श्वशब्दः पार्श्वसदृशे वर्तते पार्श्वमिव=पार्श्वमिति । उत्तरपदलोपात् । सदृशश्चानृजुरुपायः । यः पुरुषो ऋजुनोपायेनान्वेष्टव्यानर्थाननृजुनोपायेनान्विच्छति स उच्यते पार्श्वक इति । पार्श्वं तिर्यगवस्थानादनृजु यथा तथा उपायोऽपि ।

अयः शूलदण्डाजिनाभ्याम् ( पा० सू० ५-२-७६ ) । इहायःशूलदण्डाजिनशब्दौ लाक्षणिकौ । अयःशूलमिवायःशूलम्=तीक्ष्ण उपायः । दण्डाजिनश-

ति-—द्वितीयेन रूपेणेति । पूरणप्रत्ययस्येति । *षष्ठेन गृह्णाति षट्क इति भाष्योदाहरणे तल्लुक एव दर्शनादिति भावः । त्रिकं वाग्रहणमिति । *ग्रहीतर्यपि प्रत्ययविधानेनासन्देहाय ग्रहणमित्युक्तम् । द्वितीयेन रूपेणेति । द्वितीयया*गुरुकृतया शब्दावृत्त्येत्यर्थः । इतिलौकिकविवक्षार्थः । तेन*ग्रन्थविषये ग्रहणे एव । तेन द्वितीयं ग्रहणं देवदत्तेन दण्डस्येत्यादौ न । एवञ्च ग्रन्थरूपकर्मणः प्रत्ययेनोक्तत्वाद् "उभयप्राप्तौ"( पा० सू० २-३-६६ ) इत्यस्यामप्राप्तेर्ग्रहणपदघटिते उदाहरणे देवदत्तस्येति षष्ठी कर्तरि निर्बाधा । नित्यं लुगिति । "तावतिथेन गृह्णातीति उपसङ्ख्यानं कर्तव्यं लुक् च वक्तव्यः" इति वार्तिकपाठादिति भावः । षष्ठेनेति । पञ्चमी रूपैरसौ न गृह्णाति किं तु षष्ठेनेत्यर्थः ।

शृङ्खलमस्य ( पा० सू०५-२-७९ ) ॥ शृङ्खलमिति भाष्ये क्वचित्पाठः । काष्ठमयं पाशकं यत्पादे व्यतिषज्यते तच्छृङ्खलमिति कैयटः ।

कालप्रयो ( पा० सू० ५-२-८१ ) ॥ कालबोधकः *पूरणप्रत्य-

---

ब्दस्तु दम्भे दम्भसाधनत्वाद्वर्त्तते । तदुक्तम्भाष्ये—किं योऽयःशूलेनान्विच्छति स आयःशूलिकः ? । किञ्चातः ? । शिवभागवते प्राप्नोति । एवन्तर्ह्युत्तरपदलोपोऽत्र द्रष्टव्यः । अयःशूलमिवायःशूलम् । यो मृदुनोपायेनान्वेष्टव्यानर्थान् रभसेनान्विच्छति सउच्यते आयःशूलिकः । शिवभागवत इति । शिवो भगवान् भक्तिरस्येत्यर्थे गमकत्वात्साधुत्वमिति प्रागुक्तम् । इह शीतोष्णपार्श्वायःशूलदण्डाजिनशब्देभ्यो मुख्यार्थेभ्यो न प्रत्ययः किन्तूक्तार्थेभ्य एव ।

तावतिथङ्ग्रहणमिति लुग्वा ( पा० सू० ५- २-७७ ) तावतिथशब्दस्य पूरणप्रत्ययान्तत्वादयंशब्दः पूरणप्रत्ययान्तसामान्योपलक्षणम् । ननु लुग्वेत्यनेनैतत्सूत्रविधीयमानस्य प्रत्ययस्यैव वाक्यभेदेन लुक् कुतो नेत्यत आह-*षष्ठेनेत्यादि । न च पूरणप्रत्ययान्तात्प्रातिपदिकाद् गृह्णातीत्यर्थे कन्प्रत्ययो विधीयते, एवञ्च ग्रहणरूपस्यार्थस्य वृत्तावन्तर्भावाद्विकं ग्रहणन्देवदत्तस्येत्यत्र ग्रहणमित्युपादानमधिकमित्यत आह-*ग्रहीतर्यपीति । *गुरुकृतयेति । गुरुकृता या द्वितीया शब्दावृत्तिस्तया करणभूतया देवदत्तकृतं ग्रहणमित्यर्थः । *ग्रन्थविषये ग्रहणे=ग्रन्थकर्मके ग्रहणे । एवञ्च ग्रन्थकर्मकं ग्रहणम्प्रत्ययार्थ इति भावः । ग्रहणमिति भावेल्लुडिति । एवञ्च तृतीयान्ताद् ग्रहणमित्यर्थे प्रत्यय । अत एव देवदत्तस्येतिषष्ठ्यन्तार्थस्य कर्तृत्वस्य तत्रान्वयः । तावतिथेन गृह्णातीत्यनेन तु प्रत्ययो ग्रहणकर्त्तरि विधीयते । पूरणप्रत्ययस्य च नित्यो लुगिति पूर्वस्माद्विशेषः ।

शृङ्खलमस्य बन्धनम् ( पा० सू० ५-२-७९ ) । शृङ्खलशब्दात्प्रथमासमर्थाद्बन्धनोपाधिकादस्येति षष्ठ्यर्थे कन्प्रत्ययो भवति ।

कालप्रयोजनाद्रोगे ( पा० सू० ५-२-८१ ) । *पूरणप्रत्ययान्त एवेति ।

यान्त एव । *ततः सप्तम्यन्ताज्जाते प्रत्ययः । करणवाचकात्तृतीयान्ताज्जनित इत्यर्थे, फलबोधकात्प्रथमान्तादस्य कार्यमित्यर्थे अभिधानस्वाभाव्यात् ।

तदस्मिन्नन्नम् ( पा० सू० ५-२-८२ ) ॥ अन्नमत्राभ्यवहार्यम्* । वटकेभ्य इति । सञ्ज्ञायामित्येव । वेत्यनुवृत्तेरिति । "तावतिथम्" ( पा० सू० ५-२-७७ ) इति सूत्रान्मण्डूकप्लुत्येति भावः । अन्यथा घना बाधादण् न स्यात् । इदं वृत्त्यनुरोधेन । *सूत्रेऽधीत इत्यस्याध्ययन-पूर्वकन्तदनुष्ठानमर्थः । तेनाध्येतृमात्रेऽण् सिद्ध इत्यन्ये ।

श्राद्धीति । *श्राद्धशब्दात्तत्साधनद्रव्यवृत्तेः प्रत्ययः ।

पूर्वादिनिः ( पा० सू० ५-२-८६ )॥ अनेनेति कर्तृबोधकमनुवर्तते, तस्य क्रियाकाङ्क्षायाम*न्तरङ्गत्वात्करोतिक्रिया एव गृह्यते ।

सपूर्वादित्यस्य विद्यमानपूर्वात्पूर्वशब्दादित्यर्थः । कृतपूर्वयोः सुप्सुपेति समासः ।

छन्दसि परि ( पा०सू० ५-२-८९ )॥ छान्दसमपीदमनुवृत्तिसौकर्यायेह व्याख्यातम् ।

---

सन्निधानात् । यद्यप्यत्र सूत्रे समर्थविभक्तिबोधकम्प्रत्ययार्थबोधकञ्च पदन्न निर्दिष्टन्तथापि संज्ञायामित्यस्योत्तरसूत्रादपकर्षेण रोग इत्युपादानेन च रोगस्य संज्ञायां सामर्थ्याद्विभक्तः प्रत्ययार्थस्य च निर्देशः कार्यः । संज्ञाग्रहणादेव कालबोधकः पूरणार्थकप्रत्ययान्तक एवेत्यपि लभ्यते इत्यपि बोध्यम् । *ततः=पूरणप्रत्ययान्तेभ्यः ।

तदस्मिन्नन्नम्प्राये संज्ञायाम् ( पा० सू० ५-२-८२ ) । अत्र प्राय इति सप्तमी वैषयिकी । प्रायो=बाहुल्यम् । यदन्नन्तत्प्रायविषयस्बाहुल्येन प्रक्रान्तं चेत् । संज्ञायामिति प्रत्ययान्तोपाधिः । *अभ्यवहार्यमिति । न तु भिस्सा स्त्री भक्तमन्धोऽन्नमिति भक्ते रूढम् । गुडापूपिकेऽप्युदाहरणस्याकरारूढत्वात् ।

श्रोत्रियंश्छन्दोऽधीते । ( पा० सू० ५-२-८४ ) छन्दःशब्दादधीते इत्यर्थे घन्प्रत्ययो भवति, छन्दःशब्दस्य च श्रोत्रादेशो भवति । कैयटमतानुसारेणाह—*सूत्रेऽधीत इत्यस्येति ।

श्राद्धमनेन भुक्तमिनिठनौ ( पा० सू० ५-२-८५ ) । श्राद्धशब्दाद्द्वितीयान्तादनेन भुक्तमित्यर्थे इनिठनौ प्रत्ययौ स्तः । श्राद्धशब्दो यद्यपि क्रियाविशेषवचनस्तथापि प्रकृतेऽनेन भुक्तमित्युपादानसामर्थ्यात्तत्साधनद्रव्यपर इत्याशयेनाह—*श्राद्धशब्दादिति ।

पूर्वादिनिः ( पा० सू० ५-२-८६ ) । *अन्तरङ्गत्वात्=शीघ्रोपस्थितिकत्वात् ।

साक्षाद् द्रष्टरीति । *साक्षाद् द्रष्टेत्यर्थे प्रथमोच्चारितादिनिरित्यर्थः । सञ्ज्ञाग्रहणाच्च न दातृग्रहीत्रोरयं प्रयोगः । किं तु पार्श्वे स्थितः सन्नुदासीनतया यः पश्यति तत्रैव ।

इन्द्र आत्मेति । "*स एतमेव पुरुषं ब्रह्म ततमपश्यदिदमदर्श-

---

छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि ( पा० सू० ५-२-८९ ) । पर्यवस्थाता=प्रतिपक्षः, स एव सपत्न इत्युच्यते तस्मिन्वाच्ये परिपन्थिपरिपरिणौ निपात्येते छन्दसि विषये । उक्तौ शब्दौ छन्दस्येव साधू ।

अनुपद्यन्वेष्टा ( पा० सू० ५-२-९० ) । पदस्य पश्चादित्यर्थेऽव्ययीभावः । अनुपदीगवामिति षष्ठ्यर्थोऽवयवावयविभावस्तस्य नित्यसापेक्षत्वात्पदशब्दार्थेऽन्वयः । अन्वेषणञ्च प्रत्यासत्त्या गवामेव विवक्षितम । तेन पदार्थान्तरान्वेषणकर्त्तरि वाक्यमेव ।

साक्षाद्द्रष्टरि संज्ञायाम् ( पा० सू० ५-२-९१ ) । साक्षादित्यव्ययम्, तस्मादिनिः प्रत्ययो भवति द्रष्टरि समुदायेनाभिधेये । संज्ञायामित्यस्योपादानेनायमर्थो लभ्यते । संज्ञायतेऽनया सा=संज्ञा, निपातनादङ्करणे । विषयत्वं सप्तम्यर्थः । अस्मिन्सूत्रे साक्षाद्द्रष्टरिसमुदायोपादानेऽपि साक्षाच्छब्दादस्य प्रत्ययविधायकत्वं यथा भवति तल्लाभोपायमाह--*साक्षाद्द्रष्टेत्यर्थ इति ।

क्षेत्रियच्परक्षेत्रे चिकित्स्यः ( पा० सू० ५-२-९२ ) । क्षेत्रियजिति निपात्यते परक्षेत्रे चिकित्स्यश्चेदभिधातुमिष्यते । एतेन परक्षेत्रे चिकित्स्येत्येतद्वाक्यार्थ एव क्षेत्रिशब्दार्थ इत्युक्तम्भवति । निपातनञ्चात्र क्षेत्रशब्दाद् घचः परशब्दलोपस्य च । क्षेत्रशब्दोऽत्र शरीरवाची । परशरीरे जन्मान्तरीयशरीरे चिकित्स्यः प्रतीकार्यः न त्वस्मिन् देहे तेनासाध्य इति फलितम् । यद्वा परक्षेत्रे जातानि यानि तृणानि धान्यरक्षणार्थन्ततश्चिकित्स्यानि परिहर्त्तव्यानि तानि क्षेत्रियानि । यद्वा परस्य यत् क्षेत्रं दाररूपन्तेषु प्रवृत्तः सम्यक् चिकित्स्यो निग्रहीतव्यः सोऽत्राभिधीयते । एतत्सर्वमाकरादवसेयम् ।

इन्द्रियमिन्द्रलिङ्ग (पा० सू०५-२-९३) । इन्द्रआत्मेति यदुक्तन्तत्र प्रमाणमाह-*स एतमेव पुरुषमिति । इन्द्रस्यात्मनो लिङ्गमनुमापकमित्येतदुपपादयति-*कर्त्रधिष्ठितानामिति । इन्द्रेण दृष्टं ज्ञातम्मम चक्षुर्म्मम श्रोत्रमित्यादिक्रमेण । इन्द्रेणात्मनैव सृष्टं जन्मान्तरे यादृशंसदसत्कर्म कृतं तज्जन्यादृष्टवशादिह जन्मनि तदनुरूपाणीन्द्रियाणि भवन्ति । इन्द्रेण जुष्टम्=प्रीणितम् । यथा तेषु विकारो न भवति तथा यत्नेन कृतम् । इन्द्रेण दत्तम्=तत्तद्विषयग्रहणार्थन्तेषु विषयेषु योजितम् । अत्रेन्द्रियं लिङ्गदृष्टसृष्टजुष्टदत्तेष्विति वक्तव्येऽनेकेन्द्रशब्दोपादानमिन्द्रस्यात्मनः स्वस्यैव स्वेन्द्रियलिङ्गत्वादिविवक्षायां यथा स्यात्परसम्बन्धिनो यथा कथञ्चित्तादृशत्वे मा भूदित्येवमर्थम् ॥

॥ इति भावाद्यर्थकाः ॥

मिति । तस्मादिन्द्रो नाम तमिन्द्रं सन्तमिन्द्र इत्याचक्षते" इति श्रुतेः ।
*कर्त्रधिष्ठितानामेव करणत्वात्तस्य लिङ्गमनुमापकम् ।

तदस्यास्त्य ( पा० सू० ५-२-९४ ) ॥ *गोमान्देवदत्त इत्या-
दावाधाराधेयभावाभावात्षष्ठ्युपादानम् । न च तत्राप्यधिब्रह्मदत्ते पञ्चाला
इतिवत्तत्सम्भवः* । अधिशब्दयोगे तथाबुद्धिसत्त्वात्तत्र तादृशबौद्धाधि-
करणत्वसत्त्वेऽप्यत्र तत्सत्त्वे*मानाभावात् । *गोमान् देश इत्यादावधिक-
रणत्वेऽपि *सम्बन्धाभावेन षष्ठ्यप्राप्त्या सप्तम्युपादानम् । *सर्वत्र क्रि-
याकारकभावमूलकः सम्बन्धो द्रव्यान्वये षष्ठीनियामकः । *न चैवमत्र
*संयोग एवात्राधारत्वमूलम्, न तु *तन्मूलकः सः । *किं च संयोगो
न षष्ठीनिमित्तम् । कथञ्चित्संयुक्तयोर्घटयोरन्यतरबोधकात्षष्ठ्यापत्तेः* ।
*अत एव भूमादिषु संसर्गपदेन संयोगग्रहणम् । तस्मात्संयोगस्य भूमादि-
वत्सम्बन्धान्तरे सत्येव प्रतीतिर्न तु षष्ठ्यर्थता, नापि मत्वर्थता । तदुक्तं

---

तदस्यास्त्यस्मिन्निति मतुप् ( पा० सू० ५-२-९४ ) । प्रथमान्तादस्त्यु-
पाधिकादस्येति षष्ठ्यर्थेऽस्मिन्निति सप्तम्यर्थे च मतुप् प्रत्ययः स्यात् । अत्रा-
स्तीत्यत्र प्रतीयमानः प्रथमार्थो न विवक्षितः । अत एवाहमस्म्यस्य देवदत्त-
स्येत्यर्थे मद्वान्देवदत्त इत्यत्र गावः सन्त्यस्मिन्देशे स गोमान्देश इत्यत्र च मतु-
प्सिद्धिः । एवञ्च प्रथमातिक्रमे कारणाभावाच्छन्दसंस्कारार्थन्तयोरुपादानमिति
भावः । अस्येत्युपादानस्य फलमाह-*गोमानिति । *तत्सम्भव इति । तत्र यथा
ब्रह्मदत्ते पञ्चालाधिकरणत्वसम्भवस्तथा गोमानित्यत्रापि भविष्यतीति भावः ।
*मानाभावादिति । तत्रापि स्वामित्वसम्बन्धस्य वृत्त्यनियामकतयाऽधिकर-
णतावच्छेदकत्वे प्रमाणाभावात्तत्सम्बन्धावच्छिन्नाधिकरणता न प्रतीयते, कि-
न्तु तत्सम्बन्धाश्रयत्वमात्रम् । इदं सूत्रन्तु यत्र तत्तद्विशेषसम्बन्धावच्छिन्ना-
धिकरणताप्रतीतिस्तत्रैव प्रवर्त्तते । अस्मिन्नित्यस्य प्रयोजनमाह-*गोमान्देश
इति । *सम्बन्धाभावेन=षष्ठ्यर्थसम्बन्धाभावेन । सम्बन्धाभावमुपपादयति-*स
र्वत्रेति । यथा देवदत्तस्य गाव इत्यत्र क्रयविक्रयादिलक्षणः प्रतिग्रहपोषणादिल-
क्षणो वा यः क्रियाकारकभावस्तत्पूर्वकः स्वस्वामिभावः, राज्ञः पुरुष इत्यादौ
राजा तेभ्यो वेतनन्ददाति, चैत्रस्य भार्यापुत्रावित्यादौ प्रतिग्रहजननादिलक्ष-
णसम्बन्धपूर्वकः सः । *न चैवमत्रेति । गोमान्देश इत्यत्र तादृशः सम्बन्धो न-
स्तीत्यर्थः । संयोगसम्बन्धस्याधाराधेयभावनियामकत्वेऽपि संयोगसम्बन्धस्य
क्रियाकारकभावमूलकत्वाभावेन षष्ठीवाच्यत्वमत्रेत्येतदुपपादयति-*संयोग एवेति ।
*तन्मूलकः सः=क्रियाकारकभावमूलकः संयोगो नेत्यर्थः । प्रकारान्तरेण संयोग-
स्य षष्ठीनिमित्तत्वं खण्डयति-*किञ्चेति । *षष्ठ्यापत्तेरिति । न हि तत्र घटस्य
घट इति भवतीति भावः । *अत एव=संयोगस्य षष्ठीनिमित्तत्वाभावादेव । य-

भाष्ये—"पर्वते वृक्षाः सन्ति न तु*ते तस्य किञ्चित्" इति। 'लोहितोष्णीषा' इत्यादौ सप्तम्यर्थे एव बहुव्रीहिर्बोद्ध्यः। अत्र षष्ठ्यर्थमत्वर्थीयान्ताद् *षष्ठ्यर्थमत्वर्थीयो न, सप्तम्यर्थतदर्थात् *सप्तम्यर्थो न। *भिन्नवृत्तावपि सरूपः स न। *सप्तम्यर्थे च नेनिठनाविति भाष्ये स्पष्टम्। *अत्र शब्दशक्तिस्वभावादेव बहुव्रीहाविव वर्त्तमानकालास्त्यर्थान्तर्भावो बोद्ध्यः। *गोमानासीदित्यादेस्तु तथाव्यवहारविषय आसीदित्यादिरर्थः। *अस्तिग्रहणं त्वस्तिशब्दादस्तिसामानाधिकरण्याभावेनाप्राप्तमतुपो विधानार्थम्। तेनास्तिमानिति सिद्धम्। सत्ताकर्तृधनवानिति तदर्थ इति भाष्ये

---

था भूमादीनाञ्च मत्वर्थत्वङ्किन्तु प्रमाणान्तरेण प्रकरणादिना च प्रतीतिस्तथा संयोगस्यापि मत्वर्थत्वाभावात्तेषु ग्रहणमिति भावः। *ते तस्येति। ते वृक्षाः पर्वतस्य न किञ्चित्सम्बन्धिनः। *षष्ठ्यर्थमत्वर्थीयो नेति। यथा गोमच्छब्दाद्देवदत्तपराद्गोमानस्येत्यर्थे नेत्यर्थः। *सप्तम्यर्थो नेति। देशपराद्गोमच्छब्दात्सप्तम्यर्थो न। ननु दण्डिमती शालेति दृश्यत एवेत्यत आह—*भिन्नवृत्तावपीति। अत्र षष्ठ्यर्थे वृत्तिं कृत्वा सप्तम्यर्थे वृत्तिः कार्या। तदुक्तम्भाष्ये—"मत्वन्तान्मतुपा न भवितव्यम्। किं कारणम्?। यस्य गोमन्तः सन्ति गावोऽपि तस्य सन्ति"इति। एवमेव सप्तम्यर्थे द्रष्टव्यम्। एवं रीत्या तत्र तत्राप्राप्तिमुपपाद्य भाष्यकृतैवोक्तम्—

'शैषिकाम्मतुवर्थीयाच्छैषिको मतुबर्थिकः।
सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते॥' इति।

अत्र सन्नन्तादितिवाक्ये सरूप इति सम्बध्यते। तत्र शब्दतः सारूप्यमव्यभिचरितामिति प्रकृतेऽर्थत एव विवक्षितम्। अत इच्छार्थकसन्नन्तादिच्छायां सन्न। स्वार्थसन्नन्तादिच्छायाम्भवत्येव—जुगुप्सिषते, मिमांसिषते इति यथा। *सप्तम्यर्थे च नेनिठनाविति। तदुक्तम् "अत इञ्" ( पा० सू० ४-१-९५) इतिसूत्रे भाष्ये "सप्तम्याञ्च न तौ स्मृताविति। दण्डा अस्यां शालायां सन्ति" इति। ननु गोमान्देवदत्त इत्यस्माद्गोसम्बन्धः प्रतीयते न तु वर्त्तमानकालोऽस्त्यर्थश्च। गोशब्दो गोत्वविशिष्टस्य मतुप् च षष्ठ्यर्थस्य प्रतिपादक इति विशिष्टसमुदायात्तस्यैव प्रतीतिः स्यादत आह—*अत्र शब्दशक्तीति। ननु भूतत्ववर्त्तमानत्वयोर्विरोधात्कथङ्गोमानासीदित्यादिप्रयोगोऽत आह—*गोमानासीदित्यादेरिति। *अस्तिग्रहणमिति। भाष्ये "अथास्तिग्रहणं किमर्थम्। सत्तायाम्प्रत्ययो यथा स्यात्। नैतदस्ति प्रयोजनम्। न सत्ताम्पदार्थो व्यभिचरति" इत्याद्युक्त्वा "अस्तिग्रहणम्प्रत्ययविध्यर्थम्। नोपाध्यर्थम्। अस्तिमानिति मतुप् यथा स्यात्। अप्रातिपदिकत्वात्। नैष दोषः। अव्ययमेषोऽस्तिशब्दः। नैषोऽस्तेर्लट्। कथमव्ययत्वम्?। विभक्तिस्वरप्रतिरूपकाश्च निपाता भवन्तीति निपातसंज्ञा निपातोऽव्ययमित्यव्ययसंज्ञा। एवमपि न सिद्ध्यति। किं कारणम्?, अस्ति-

स्पष्टम्। *इतिशब्दलभ्यर्थमाह—भूमेत्यादि। अत्र*संसर्गः संयोगः। *स च*सम्बन्धान्तरे सत्येव*तन्नियामकः। अत एव दण्डीत्यतः *संयुक्तदण्डस्यैव तत्स्वामिनः प्रतीतिः। ये*ऽस्तिविवक्षायां मतुबादयो विधीयन्ते ते भूमादिषु विषयेषु भवन्तीति वाक्यार्थः। एवं बहुव्रीहिरपि यथायथं भूमादिषु बोध्यो 'मत्वर्थे बहुव्रीहिः' इति वार्त्तिकात्।

रसादीनां विशेषणमिति। *तेन गुणवाचकानामेवैषां ग्रहणमिति *जलादिवाचिरसादीनान्द्रव्यवचनगन्धादीनाञ्च नेति भावः। *एभ्य इनिठनावपीष्येते इतीदं व्यर्थमिति *भाष्ये स्पष्टम्।

गुणवचनेभ्य इति। *गुणगुणिबोधकेभ्यः शुक्लादिभ्य इत्यर्थः। शुक्लः पट इति। *गुणगुणिनोरभेदव्यवहारेऽपि पटस्य शुक्ल इति भे-

---

सामानाधिकरण्ये मतुब् विधीयते, न चास्तेरस्तिना सामानाधिकरण्यम्" इति। अत्र कैयटः—गवादीनां सम्बन्धव्यभिचाराभ्यामस्तीतिसामानाधिकरण्यं सम्भवत्यस्तेस्त्वव्यभिचारादस्तिसामानाधिकरण्याभाव इति। स चास्तिशब्दः सत्ताकर्तृधनप्रतिपादकः। सैवेतिशब्दस्य प्रयोजनमाह=*इतिशब्देति। "भूमनिन्दा" इति वार्तिके संसर्गेतिपाठाभिप्रायेण व्याचष्टे-*संसर्गः संयोग इति। *स च=संयोगश्च। *सम्बन्धान्तरे=स्वस्वामिभावादिसम्बन्धे। *तन्नियामकः=संसर्गित्वबुद्धिनियामकः। *संयुक्तदण्डस्यैवेति। संयुक्तो दण्डो यस्य तस्येत्यर्थः। वार्तिकं व्याचष्टे-*अस्तिविवक्षायामिति। भूम्नि यथा—यवमान्, गोमानिति। भूमा=बहुत्वम्। एतच्चापेक्षिकम्। यस्य यावद्यवमत्त्वं योग्यन्तस्य ततो बहुत्वेऽयम्प्रयोगः। अत्र भूमादिग्रहणम्प्रायेण भूमादयोऽपि प्रतीयन्ते इत्येवम्परम्। सा प्रतीतिश्च व्यञ्जनाजन्यशाब्दबोधरूपो मान+ मौवेत्यम्यदेतत्। निन्दायाम्-ककुदावर्त्तिनी कन्या। प्रशंसायाम्-रूपवानयं ब्राह्मणः। नित्ययोगे-क्षीरिणः,कण्टकिनो वृक्षा इति। अत्र क्षीरेण सह नित्यो योगः कालिकप्रत्यासत्त्या क्षीरसमनियतसत्ताकत्वरूपः प्रतीयते। अतिशायने-उदरिणी कन्या। संसर्गे-दण्डी, छत्री इति। एतद्वार्त्तिकं व्याख्याय भाष्ये उक्तम्-भूमादिग्रहणं कर्त्तव्यन्न कर्त्तव्यम्। इतिकरणः क्रियते ततश्चेद्विवक्षा। भूमादियुक्तस्यैव विवक्षा" इति।

*तेन=रसादिविशेषणत्वेन। अत्र गुणग्रहणेन शास्त्रान्तरे ये गुणत्वेन प्रसिद्धास्ते गृह्यन्ते, तत्फलमाह-*जलादिवाचीति। *एभ्यः=रसादिभ्यः। *भाष्ये स्पष्टमिति। दृश्यन्ते ह्यन्ये रसादिभ्यो मत्वर्थीयाः। रसिको नटः। उर्वशी वैरूपिण्यप्सरसाम्। स्पर्शिको वायुरिति। एतेनेदं सूत्रम्प्रत्याख्यातम्।

*गुणगुणिबोधकेभ्य इति। एतादृशो यः शब्दस्तस्माद् गुणपरतायां सत्यान्तस्माद्यदा गुणिनि सम्बन्धिनि विवक्षिते मतुप् तदा तस्य लुकि शुक्लः

द्व्यवहारस्यापि सत्त्वेन प्राप्तमतुपोऽश्रवणार्थमिदम्। *अत एव *गुणिनि *विशेष्यलिङ्गता सिद्धा। *तत्रापि रूढत्वे तु सर्वलिङ्गता नियतलिङ्गता वा प्रसज्येतेति भाष्यकैयटयोः स्पष्टम्। *अयञ्च लुक् द्रव्यवाचकसमभिव्याहारे एव। एतदेव ध्वनितं भाष्यानुक्तमपि इष्ट इति वदता। तादृशस्थले एवेष्ट इति तदर्थः। *ध्वनितञ्चेदं "पूरणगुण" (पा० सू० २-२-११) इति सूत्रे भाष्ये। गुणगुणिनोरभेदस्यापि सत्त्वादिदं वचनं भाष्ये

---

पट इति भवतीति। वार्त्तिकारम्भस्य प्रयोजनमाह-*गुणगुणिनोरभेदेति। गुणगुणिनोः सम्बन्धस्तादात्म्यमस्ति तादात्म्यञ्च भेदाभेदाविति, तयोर्मध्ये यदा भेदस्य प्राधान्यमाश्रित्य तद्यवहारस्तदा शुक्लादिशब्देभ्यो मतुपि कृते तस्याश्रवणाय वार्त्तिकारम्भः कार्यं इति भावः। न चैवं रूपवानिति न स्यात्तत्रापि लुकः प्राप्तेरिति वाच्यम्। शब्दशक्तिस्वभावाच्छुक्लादिशब्दवाच्यैर्द्विविधो व्यवहार इति त एव गुणवचनेभ्य इत्यत्र गृह्यन्ते न तु भेदव्यवहारमात्रविषया रूपादय इत्याशयात्। *अत एव=लुप्तमतुबन्तस्य प्रयोगस्वीकारादेव। *गुणिनीति। लुप्तमतुबन्तवाच्यत्वेन विवक्षिते इति शेषः। *विशेष्यलिङ्गतेति। विशेष्यवाचकपटादिशब्दानां यल्लिङ्गन्तल्लिङ्गशुक्लादिशब्दप्रयोगः सिद्धः। शुक्लः पटः, शुक्ला शाटी, शुक्लं वस्त्रमिति। न च शुक्लं रूपमिति प्रयोगो दृश्यते गुणिपरत्वन्तु नास्तीति गुणिनीत्यसङ्गतमिति वाच्यम्। गुणिपदस्य गुणनिष्ठप्रकारतानिरूपितविशेष्यत्वेन विवक्षितो योऽर्थस्तत्त्वात्।

'गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति।'

इत्यत्रापि गुणिशब्द एतत्पर एव। *तत्रापि=गुणिन्यपि। सर्वलिङ्गस्य रूढिस्वीकारे गुणिवाचकस्य स्त्रीत्वेऽपि पुंल्लिङ्गशब्दस्य रूढ्या प्रयोगः स्यात्। नियतलिङ्गस्य रूढत्वे तु शुक्लः शाटीति प्रयोगः स्यात्। गुणवचनेभ्य इत्यत्र शुक्लादिशब्दानामेव ग्रहणमित्यत्र गुणेभ्य इति वक्तव्ये गुणवचनेभ्य इत्यत्र वचनशब्दमुच्चारयतो वार्त्तिककारस्य तात्पर्यमस्तीत्यवसीयते। "आकडार" (पा० सू० १-४-१) इति सूत्रस्थभाष्यस्याप्येवं सत्यविरोधो भवति। शुक्लादीनामेव गुणवचनसंज्ञायास्तत्र विधानात्। *अयञ्चेति। यत्र पटादिशब्दसमभिव्याहारस्तत्र लुगाश्रीयते। यत्र तु न तथा, तत्र शुक्लवानिति भवत्येवेति। *ध्वनितञ्चेदमिति। तत्र हि गुणेन षष्ठी न समस्यत इत्यस्यादौ ब्राह्मणस्य कृष्णा इत्युदाहरणम्प्रदर्श्य "नैतदस्ति प्रयोजनम्। असामर्थ्यादेवात्र न भविष्यति। कथमसामर्थ्यम्?, सापेक्षमसमर्थम्भवतीति द्रव्यमत्रापेक्ष्यते दन्ताः" इत्युक्तम्। एतेन तत्र लुकः सिद्धये द्रव्यस्यापेक्षाऽवश्यं वाच्या। यदि च द्रव्यवाचकसमभिव्याहाराभावेऽपि लुक् स्यात्तदा द्रव्यमत्रापेक्ष्यते इत्यभिधानासङ्गतिः स्यात्तेनेदं ध्वनितमित्यर्थः। तत्र केवलस्य शुक्ला इत्यस्य प्रयोगस्तु प्रविश पिण्डीमितिवद्बोध्यः।

प्रत्याख्यातम्* । "गुणिलिङ्गास्तु तद्वति" इति कोशस्य मतुब्लुकाऽभेदेन वा तद्वति वर्तमाना इत्यर्थः। *भेदेऽपि मतुपोऽनभिधानम्। गुणवाचिनामेषां पुंस्त्वमेव, गुणिनि विशेष्यलिङ्गतेति त्वभिधानस्वाभाव्यात्।

मादुपधायाः (पा० सू० ८-२-९)॥ विधीयमानत्वेन सवर्णाग्राहकत्वान्मस्य नानुनासिको वकारः।

आसन्दीवदष्ठीव (पा०सू० ८-२-१२)॥ अत्र सूत्रे कक्षीवच्छब्दपाठोऽनार्ष इति "न सम्प्रसारणे" (पा० सू० ६-१-३७) इति सूत्रस्थभाष्यस्वरसः। तत्र हि "कक्ष्यायाः सञ्ज्ञायां मतौ सम्प्रसारणं वक्तव्यम्" इति *वचनमारब्धं, वत्वन्तु "सञ्ज्ञायाम्"(पा० सू०८-२-११) इति सूत्रेण सिद्धमिति दिक्।

राजन्वतीति। राजन्वान् देश इत्यपि बोद्धव्यम्।

शिखावानिति। शिखाशब्दस्य*व्रीह्यादित्वे तु चूडावती प्रतिमेति प्रत्युदाहार्यम्। मेधावानिति। *न चात्र "अस्मायामेधा" (पा० सू० ५-२-१२१) इति विनिना बाधान्न लचः प्राप्तिः, *चिकीर्षावानि-

---

*प्रत्याख्यातमिति। अव्यतिरेकात्सिद्धमित्यादिना। अत्र कैयटः-गुणगुणिनोः सोऽयमित्यभिसम्बन्धादभेदाध्यवसायादुत्पत्तिरेव मतुपो नास्तीत्यर्थः। अभेदाध्यवसाये हेतुर्भाष्यकृतैवोक्तः-न गुणो गुणिनं व्यभिचरतीति। ननु यो यदव्यभिचारी स तदभिन्न इति न नियमः। वह्निनिरूपिताव्यभिचारस्य धूमे सत्त्वेऽप्यभेदाभावादिति चेन्न। गुणगुणिनोर्जातितद्वतोरिवायुतसिद्धभावात्सोऽयमित्यभेदात्सम्बन्ध इत्यनेन कैयटेन समाधानात्। अभेदात्सम्बध इत्यस्य विशेषणविशेष्यभावरूपः सम्बन्ध इत्यर्थः। एवञ्च मतुप्प्रवृत्तियोग्यो यो भेदसम्बन्धः सोऽत्र नास्तीति विवक्षितम्। अभेदसमानाधिकरणो यो भेदः स न मतुपो नियामक इति भावः। कस्य चिन्मतमाह-*भेदेऽपीति। अन्य इत्यनेनारुचिः सूचिता, तद्बीजन्त्वव्यतिरेकादिति पूर्वभाष्यविरोधः। तेन हि मतुप्प्रवृत्तियोग्यभेदाभाव एव लभ्यते, न त्वनभिधानमन्यथाऽव्यतिरेकस्य हेतुत्वेनाभिधानं व्यर्थं स्यादिति।

*वचनमारब्धमिति। यदि सूत्रे पाठः स्यात्तदा निपातनेनैव कक्षीवच्छब्दसिद्धौ सम्प्रसारणविधानं व्यर्थं स्यादिति भावः।

*व्रीह्यादित्वे त्विति। अत्र तु शब्द एवार्थे। प्राण्यङ्गादेवेति मूले। किमत्र प्रमाणमिति चेत्?, प्राण्यङ्गादिति वक्तव्यमिति वार्त्तिकमेव। ननु प्राण्यङ्गादित्यस्य प्रत्युदाहरणं यन्मेधावानित्युक्तन्तदसङ्गतम् "अस्मायामेधा" (पा० सू० ५-२-१२१) इति सूत्रे विशिष्यमेधाशब्दपाठेन विन् प्रत्ययो लचो बाधकः स्यादित्याशङ्कते-*न चेति। समाधत्ते-*चिकीर्षेति। के चित्तु मेधावानि-

त्यस्यानेनोपलक्षणात् । चूडालोऽसीति । असीति "तिङ्ङतिङः" (पा० सू० ८-१-२८) इति निहतं, चूडालात्सो रुत्वे तस्य सुप्त्वेनानुदात्ततया तत्स्थानिकस्याद्गुणस्य "एकादेश उदात्तेन" (पा० सू० ८-२-५) इत्युदात्तत्वे तस्य परेण पूर्वरूपैकादेशे तस्य पदाद्यनुदात्तेन सहैकादेशत्वात् "स्वरितो वा" (पा० सू० ८-२-६) इत्यस्य प्राप्तिरिति बोध्यम् । *एतच्च वृत्तौ स्पष्टम् ।

समुच्चयार्थमिति । *भाष्योक्तव्याख्यानादिति भावः ।

वत्सांसाभ्याम् (पा० सू० ५-२-९८) । लच् स्यादित्येव पाठः । मतुबन्तेन स्नेहबलयोरप्रतीतेरिति वृत्त्युक्तेः ।

प्रज्ञाश्रद्धा (पा० सू० ५-२-१०१) ॥ *यद्यपि कर्तृव्युत्पन्नप्रज्ञशब्दात्प्रज्ञाद्यणि प्राज्ञः सिध्यति, तथापि स्त्रियां ङीब्भावार्थमिदम्; तदाह—प्राज्ञीति । श्रद्धासाहचर्याद्भावार्थकाङन्तस्यैवात्र ग्रहणम् ।

तपः सह (पा० सू० ५-२-१०२) ॥ अर्शाभ्यां यथासङ्ख्यं

---

त्यपि प्रत्युदाहरणं युक्तमेव । "अस्मायामेधा" (पा० सू० ५-२-१२१) इति सूत्रे धीर्धारणावती मेधेति बुद्धिविशेषे रूढस्यैवाभिव्यक्तेतिन्यायेन ग्रहणम् । इदम्प्रत्युदाहरणन्तु बुद्धिसामान्यलाक्षणिकस्य मेधाशब्दस्य । किञ्च चिकीर्षावानिति यदुक्तन्तदपि नोचितम् । अस्मिन्नेव सूत्रे-"इह कस्मान्न भवति चिकीर्षाऽस्ति, जिहीर्षाऽस्ति ? । प्राण्यङ्गादिति वक्तव्यम् । तर्हि वक्तव्यन्न वक्तव्यम् । कस्मान्न भवति चिकीर्षास्तीति ? । अनभिधानात्" इति भाष्यकृदुक्तानभिधानात् । वस्तुतो मनीषावान् धिषणावानिति प्रत्युदाहरणमित्याहुः । *एतश्चेति । लचश्चकारस्य स्वरितबाधनार्थत्वम् । चकारोच्चारणसामर्थ्याल्लचो लकारात्परः स्वर उदात्त एवेति नियमेनेति तद्भावः ।

*भाष्योक्तव्याख्यानादिति । तत्र हि "सिध्मादिषु यान्यकारान्तानि तेभ्यो लचा मुक्ते इनिठनौ प्राप्नुतः । इनिठनौ च नेष्येते । कथन्तौ न भविष्यतः ?, लजन्यतरस्यामिति समुच्चयोऽयन्न विभाषा लच्च मतुप् च" इति भाष्योक्तव्याख्यानादित्यर्थः ।

वत्सांसाभ्याङ्कामबले (पा० सू० ५-२-९८) । एतद्व्याख्यानावसरे लज्वेति व्याख्यातन्तन्न युक्तम् । वृत्तिग्रन्थविरोधात् । तत्र हि "न चायमर्थो मतुपि सम्भवतीति नित्यं लजेव भवति" इति प्रतिपादितम् । वत्सांसाभ्यां यथासङ्ख्य ङ्कामवति बलवति चार्थे लजनेन विधीयते । सूत्रे कामबलशब्दौ अर्शआद्यजन्तौ ।

प्रज्ञाश्रद्धा (पा० सू० ५-२-१०१) । सौत्रप्रज्ञाशब्दस्य प्रयोजनमाह-*यद्यपीति ।

न । अस्वरितत्वात् ।

उत्तरार्थ इति । *तपःसहस्राभ्यामण्विनीनीति न्यासेन भिन्नविभक्त्युच्चारणादण उभयसम्बन्धो विनीनोर्यथासङ्ख्यञ्च सिद्धमिति भावः।

मतुप् चेति । समुच्चयार्थान्यतरस्याङ्ग्रहणानुवृत्तेरिति भावः । सिकता इति । लुपि युक्तवद्भावः । इयवरट्सूत्रे एका सिकतेति भाष्यादेकवचनान्तोऽप्ययम् ।

दन्तुर इति । निम्नोन्नते प्रयोगस्तु लक्षणया । उन्नते किम् ?, दन्तवान् । ऊषः=क्षारमृत् । मधु माधुर्यमिति । *रसवाचिन एवात्र ग्रहणादिति भावः । *स्पष्टं चेदं भाष्ये । नगरमिति । *चातुरर्थिकरप्रत्ययान्तनगरशब्दस्तु देशविशेषनाम, अयन्तु जातिवाची । *अत एव नगरीति जातिलक्षणो ङीप् । पुनर्ग्रहणमिति । पुनर्ग्रहणस्य द्युद्रुभ्यां म इत्यस्य नित्यत्वार्थताया *भाष्ये उक्तत्वेन *व्याख्यानादेवास्य सर्वविभाषार्थत्वमिति वक्तुमुचितम् । मणिव इत्यादि । *बिम्बावङ्कुर एवमिष्टकाद्यमित्यप्यस्योदाहरणम्, अन्येषामपीति दीर्घः । अर्णसो लोपश्चेति *भाष्ये

---

ननु "अण्च" ( पा० सू० ५-२-१०३ ) इति सूत्रे योगविभाग उत्तरार्थ इति व्याख्यातन्तच्च न्यूनम् । "तपः सहस्र" ( पा० सू० ५-२-१०२ ) इति सूत्र एवाणः पाठे तपःसहस्रयोर्विनीन्योर्यथासङ्ख्यन्न स्यादितीहार्थोऽपि योगविभाग इत्यत आह-*तपः सहस्राभ्यामिति ।

दन्त उन्नत उरच् (पा०सू०५-२-१०६) । अत्र दन्तेति लुप्तविभक्तिकम् । उन्नतेति प्रकृतिविशेषणम् । दन्तशब्दादुन्नतोपाधिकादुरच्प्रत्ययो भवति मत्वर्थे ।

ऊषशुषिमुष्क (पा०सू०५-२-१०७) । द्रव्यवाचकमधुशब्दग्रहणशङ्कावारणायाह-*रसवाचिन इति । *स्पष्टश्चेदम्भाष्य इति । तत्र हि "अयम्मधुशब्दोऽस्त्येव द्रव्यपदार्थकः। अस्ति रसवाची। अपि च मधुन्येव हि माध्विदम्मधुरमिति प्रयुज्यते तद्यो रसवाची तस्येदं ग्रहणम्"इत्युक्तम्। *रप्रत्ययान्तनगरशब्दस्त्विति। अश्मादित्वात् । *अत एव=जातिवाचकत्वादेव। *भाष्ये उक्तत्वेनेति । "द्युद्रुभ्यां नित्यार्थमेके। कथम् ?। विभाषामध्येऽयं योगः क्रियते । विभाषामध्ये ये विधयस्ते नित्या भवन्ति" इति तत्रोक्तम्। *व्याख्यानादिति। तत्पूर्वभाष्ये "वस्य पुनर्वचनं सर्वविभाषार्थम् । केशाद्वोऽन्यतरस्याम् " इत्युक्तम् । तत्र कैयटः-"केशाद्व इत्येव वक्तव्यम् । तत्र प्रकृतान्यतरस्यांग्रहणानुवृत्त्या ठन्निनिमतुपो भविष्यन्तीति । किमन्यतरस्यांग्रहणेन ?, ठन्निनिप्राप्त्यर्थेन तत्पुनः क्रियमाणमपूर्वस्यान्यतरस्यांग्रहणस्य मतुप्समुच्चयार्थत्वं ज्ञापयतीत्यर्थः" इति । एतद्भाष्यसम्मतव्याख्यानादित्यर्थः। भाष्योक्तोदाहरणान्याह-*बिम्बावमिति। *भाष्ये

न दृश्यते। नेहेति। शत्रुबलः पुत्रबल इत्यादौ। भ्रातृबले ऽण इति अनुवृत्तेरपि तदभावः। अत इनि।

*एकाक्षरात्कृतो जातेः सप्तम्याश्च न तौ स्मृतौ।

इति भाष्यम्।

यवव्रीहीति व्रीह्यादिगणे पाठादिहार्थग्रहणम्। तेन शालिकः शालिक इति सिद्धमिति वृत्तिः।

एकगोपू (पा०सू०५-२-११८)। *सूत्रे बहुव्रीहिः। अधिकारप्रातिपदिकादित्यपदार्थः। ऐकशतिक इति। "पूर्वकालैक" (पा० सू० २-१-४९) *इति समासः। "तद्धितार्थोत्तरपद" (पा०सू०२-१-५१) इति समासस्य *मत्वर्थेऽनभिधानेनाप्रवृत्तेः। "संख्यायाः सम्वत्सर" (पा० सू० ७-३-१५) इत्युत्तरपदवृद्धिस्तु न। तत्र संख्यापदमुच्चार्यविहितस्य तद्धितार्थेति समासस्यैव प्रतिपदोक्ततया ग्रहणात्। अत्रात इति निवृत्तम्। अत एव गोशकटिरस्यास्तीति विग्रहे ऽपि गौशकटिक इत्येव। न तु गोश-

---

न दृश्यते इति। किन्तु वृत्तौ एवमुक्तेर्दर्शनेन मूले लिखितमिति शेषः। अर्णवशब्दस्य साधुत्वन्तु अन्येभ्य इति वप्रत्यये पृषोदरादित्वात्सलोपे सति भवतीति बोध्यम्। *एकाक्षरादित्यादि। एकाक्षरात्-स्ववान्, खवान्; कृतः-कारकवान्। जातेः-वृक्षवान्, प्लक्षवान्। सप्तम्याम्-दण्डा अस्यां शालायां सन्ति। न च तण्डुली तण्डुलिक इति न स्याज्जातिवाचकत्वादिति वाच्यम्। एवन्तर्हि नायं समुच्चयः कृतश्च जातेश्चेति। किन्तर्हि जातिविशेषणं कृद्ग्रहणम्। कृद्यो जातिरिति। कथं कारकवानिति? अनभिधानात्" इतिभाष्यकृतैव समाधानात्। एतेनैकाक्षरादिति नापूर्वम्, किन्तु इतिशब्दानुवृत्त्या सर्वं साधनीयमिति ध्वनितम्।

एकगोपूर्वात् (पा० सू० ५-२-११८)। *बहुव्रीहिरिति। एकगोशब्दौ पूर्वावयवौ यस्येत्यर्थः। *इतिसमास इति। अत एव भाष्येऽत इत्यनुवर्त्तते उताहो न?। किञ्चातः?, यद्यनुवर्त्तते ऐकगविको न सिध्यति। समासान्ते कृते भविष्यति। एवमपि गौशकटिको न सिध्यति। अथ निवृत्तम्। इहापि प्राप्नोति-गोविंशतिरस्यास्तीति। अनभिधानान्न भविष्यति" इत्युक्तम्। एतेन प्रघट्टकेन कर्मधारयसमासात्प्रत्ययविधायकमेतत्सूत्रमिति ध्वनितम्। *मत्वर्थेऽनभिधानेनेति। अत्र मानन्तु "द्विगोस्तद्धितस्य प्रतिषेधः' इति वचनस्य वा 'मत्वर्थे प्रतिषेधः' इति वचनस्य वा आवश्यकत्वमिति विचारे भाष्यकृतोक्तम्-द्विगोस्तद्धितस्य प्रतिषेधो वक्तव्यः। यद्येतन्नास्ति सर्वत्र मत्वर्थे प्रतिषेध इति। सति हि तस्मिंस्तेनैतत्सिद्धम्" इति भाष्यदर्शनमेव। पञ्चखट्वः पञ्चगुरित्यादौ द्विगो-

कृटिमानिति, *गोविंशतिरेकविंशतिरस्यास्तीत्यादौ *त्वनभिधानान्नेति स्पष्टं भाष्ये । द्वन्द्वोपतापेत्यादौ मण्डूकप्लुत्याऽत इत्यस्य सम्बन्धः। "समासान्ताः" (पा० सू० ५-४-६८) इति *सूत्रस्थभाष्यादित्यलम् ।

निष्कात्पराविति । सूत्रे *ऽसामर्थ्येऽपि सौत्रत्वात्समासः । *अन्तग्रहणं शतादिपूर्वान्निष्कादित्यर्थनिरासार्थम् । *इनजिति पाठः । हृदयी हृदयिक इत्यादि । अनेनान्यतरस्याङ्ग्रहणेनात इनीत्यस्य प्रवृत्तौ तत्र मतुप्समुच्चयबोधकान्यतरस्याङ्ग्रहणानुवृत्तेः *मत्ययत्रयसौलभ्यमिति भावः।

तप्पर्व ( का० वा० ) ॥ *पिदयमित्येके । *निदयं, मरुद्भिर्दत्तो मरुत्त इत्येवं मरुत्तं साधयित्वाऽस्य भाष्ये प्रत्याख्यानात् ।

---

स्तद्धितार्थे विधीयमानस्य बहुव्रीहेश्च प्राप्तौ द्विगौ प्रतिषिद्धे बहुव्रीहिसंज्ञायां "बहुव्रीहौ प्रकृत्या" ( पा० सू० ६-२-१ ) इति पूर्वपदप्रकृतिस्वरो भवति, द्विगौ तु समासान्तोदात्तत्वं स्यात् । एवम्पञ्चखट्वा इत्यत्र ङीबापत्तिः, पञ्चगुरित्यादौ टजापत्तिश्च स्यात् । *अत्रेति । "एकगोपूर्वा"(पा०सू० ५-२-११८) इति सूत्र इत्यर्थः । *अत एव=अत इत्यस्यासम्बन्धादेव । ननु यद्यत इत्यस्यासम्बन्धस्तदा गोविंशतिरस्यास्तीत्यर्थेऽपि ठञ् स्यादत आह-*गोविंशतीति । *अनभिधानान्नेति स्पष्टमिति । तत्र हि अत इति निवृत्तमित्यभिधाय "कस्मान्न भवति गोविंशतिरस्यास्तीति ? । अनभिधानान्न भविष्यति" इत्युक्तम् । *सूत्रस्थभाष्यादिति । तत्र हि समासान्ता इति सौत्रान्तशब्दस्य समासचरमावयवत्वम्प्रत्ययानां सिद्धान्तिनोक्तम् । ततोऽगृहीताभिप्रायेण प्रत्ययपरत्वेन सिद्धिर्भविष्यतीति पूर्वपक्षिणा वैयर्थ्यम्प्रतिपादिते प्रयोजनान्यभिहितानि अव्ययीभावद्विगुद्वन्द्वतत्पुरुषबहुव्रीहिसंज्ञा इत्यनेन वार्त्तिककृता । प्रतिराजम्, उपराजम्; पञ्चगवम्, दशगवम्; द्विपुरी, त्रिपुरी, द्विधुरी, त्रिधुरी; एतानि प्रयोजनान्यभिधाय भाष्यकृता द्वन्द्वसंज्ञा च प्रयोजनम् । वाक्त्वचम्, स्रुक्त्वचम् । द्वन्द्वश्च समासो नपुंसकलिङ्गो यथा स्यात् । नैतदस्ति प्रयोजनम् । लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य । इदन्तर्हि प्रयोजनम् । कोशश्च निषच्च=कोशनिषदम् । कोशनिषदिनी । "द्वन्द्वोपतापगर्ह्यात्प्राणिस्थादिनिः"(पा० सू० ५-२-१२८)इति इनिर्यथा स्यात्" इत्यभिहितम् । एतेन तस्मिन् सूत्रेऽत इत्यस्य सम्बन्ध इति लभ्यते । *असामर्थ्येऽपीति । निष्कादित्यस्य शतसहस्रयोरेवाभिसम्बन्धात् । सौत्रान्तशब्दस्य प्रयोजनमाह-*अन्तग्रहणमिति । क्वचिद्भाष्यपुस्तके फलबर्हाभ्यामिननिति पाठो दृश्यते, तस्यायुक्तत्वसूचनायाह-*इनजिति पाठ इति । *प्रत्ययत्रयेति । इनिठनोर्मतुपश्चेत्यर्थः । एवमरुच्छान्तो वक्तव्य इति वृत्तौ पाठः । भाष्ये तु तबिति पाठः क्वचिद् दृश्यते तेनायमपिदित्याशयेनाह-*पिदयमित्येक इति । वस्तुतस्तन्निति पाठो युक्त इत्याशयेनाह-*निदयमिति । ननु मरुच्छब्दस्यान-

*तत्र हि मरुत उपसर्गत्वे उपसंख्यानेनोपसर्गत्वसामर्थ्यादजन्तत्वाभावेऽप्यच उपसर्गादिति तत्वम्। *तत्र तत्वविधावुपसंख्यानेन सिद्धे *प्रथमे उपसर्गसञ्ज्ञायामुपसंख्यानमनेकसञ्ज्ञालाभार्थमिति निपातत्वान्मरुत आद्युदात्तत्वेन तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरेण मरुत्तस्याद्युदात्तत्वम्। *एताश्च सञ्ज्ञाः *स्तत्वविषया एवेति मरुद्भिर्दत्त इति भाष्यप्रयोगो *नानुपपन्नः। एवञ्च फलाभेदाय नित्त्वमेवोचितम्। पित्त्वे तु मध्योदात्तत्वं स्यादित्यपरे। एतद्विषये मतुब् न। अस्य रूढिशब्दत्वादवयवार्थाभावेन तदप्राप्तेरित्यन्यत्र विस्तरः।

पदत्वमिति। *तेन "यस्य" इति लोपो न। अनुवर्तयन्तीति। "बहुलं छन्दसि" (पा० सू० ५-२-१२२) इत्यतः।

वाचो ग्मिनिः। ( पा० सू० ५-२-१२४ )॥ गकारोच्चारणं प्रत्यये भाषायामित्यनुनासिकाभावाय । *उत्तरसूत्रस्थबहुभाषिणीत्यस्यात्रापि सम्बन्धात्सम्यक् बहुभाषिणि वाग्मीति बोध्यम् । ऐश्वर्येति। *तेन धनवानित्यर्थे स्वामीति न। कटकवलयिनीति। कटकवलययोः *कश्चिद्भेदं परिकल्प्य द्वन्द्व उपपाद्यः। अत इत्येवेति। *समासान्ता इति सूत्रस्थभाष्यात्। मण्डूकप्लुत्या तदनुवर्तत इति भावः। ठनादीति। आदिना मतुपो ग्रहणम्। मतुप्समुच्चयार्थान्यतरस्याङ्ग्रहणस्यैकगो इति सूत्रे नित्यग्रहणात् बलादिभ्यो मतुबिति सूत्रेऽन्यतरस्याङ्ग्रहणाच्चासम्बन्ध इति

---

जन्तत्वात्कथन्तत्वमत आह-*तत्र हीति । मरुच्छब्दे तादृशव्युत्पत्त्या साधिते इत्यर्थः। प्रत्याख्यानपक्षे यथा आद्युदात्तत्वं तत्प्रकारमाह-*तत्रेति। पर्वमरुद्भ्यान्तामितिवचने मरुच्छब्दस्य प्रत्याख्यानपक्षे इत्यर्थः । *प्रथमे=प्रथमाध्याये। *एताश्च संज्ञा इति। निपातोपसर्गाव्ययसंज्ञा इत्यर्थः। *तत्वविषया एवेति। यत्र तत्वन्तत्रैवेत्यर्थः। *नानुपपन्न इति । अन्यथाऽव्ययत्वाल्लुगापत्तौ तादृशप्रयोगानुपपत्तिः स्फुटैव। तत्वविषया इतिबहुवचनान्तोपादानस्य प्रयोजनं समुदायस्य तत्वविषयत्वमिति। अत एव मरुद्भिर्दत्तो=मरुत्त इत्येवं व्युत्पादितस्य पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वसिद्धिरन्यथा मृग्रोरुतिरिति व्युत्पन्नस्य मरुच्छब्दस्यान्तोदात्ततया पूर्वपदप्रकृतिस्वरेऽपि मध्योदात्तत्वमेव स्यात्। यदि क्वचिन्मरुत्तशब्दो मध्योदात्तः श्रूयते तदाऽऽद्युदात्तत्वेऽपि छान्दसत्वेन मध्योदात्तत्वम्। *तेन=पदत्वेन। ननु केवलमतुबर्थे एव ग्मिनिप्रत्ययविधाने किञ्चिद्वाग्वत्यपि वाग्मीति प्रयोगापत्तिरत आह-*उत्तरसूत्रेति। अत एव मूलकारोऽग्रे आह-यस्तु सम्यगित्यादि। *तेन=ऐश्वर्यवाचकादेवाऽऽमिनच्प्रत्ययस्वीकारेण। अस्यैश्वर्यवाचकत्वमेतद्वृत्तिविषय एव। *कश्चिद्भेदमिति। वर्त्तुलं कटकम्।

भावः । अस्मायेत्यत्र तु *सम्बध्यत एव तसाविति सूत्रे यशस्वानिति भाष्ये उदाहरणात्प्रकृत्यैकाजिति सूत्रे स्रग्वत्तर इति भाष्ये उदाहरणाच्चेति बोध्यम् ।

वातातीति । कुगर्थमेवेदम् । *अदन्तत्वादेवेनेः सिद्धत्वादिति वृत्तिः । ठन्बाधनार्थमिति । सामान्यसूत्रेण सिद्धेः । सूत्रस्य *फलान्तराभावाच्च ।

वर्णाद्ब्र (पा० सू० ५-२-१३४) । वर्णोऽत्र वेदाध्ययनार्थं ब्रह्मचर्यम् । अर्थाच्चेति । अर्थशब्दोऽत्र *धनवाची । कालतोऽत्रासन्निधिर्न देशतः । *तत्र *विरोधादस्तीत्यस्यासम्बन्ध इत्यप्राप्त एवेनिर्विधीयते । सत्तोपाधिकादिनिठनोरभावोऽ*नभिधानात् । *अत एव 'असन्निहित इति किमर्थमर्थवान्' इति *भाष्ये उक्तम् ।

अर्थी समर्थो विद्वान्यः शास्त्रानुपहतश्च यः ।

इति त्वार्षम् । *अर्थनमर्थ इति क्रियाशब्दात्सत्तोपाधिकादिनिठनौ भवत एव । मतुप्तु नानभिधानात्* । तेनार्थिकप्रत्यर्थिकौ धान्यार्थीत्यादि च सिद्धम् । धान्यकरणकप्रार्थनावानित्यर्थः ।

बलादिभ्यो ( पा० सू० ५-२-१३६ ) । अन्यतरस्याङ्ग्रहणं द्वन्द्वोपतापेति प्रकृतस्येनः समुच्चयार्थम् । *तेनैतस्मा*द्वन्न । प्रथीमिनीति । इमनिजन्ता प्रकृतिः । अनिनस्मन्नित्यनर्थकेनापि तदन्तविधिः । मेति ।

---

चिपिटन्तु वलयम् । *समासान्ता इतीति । उपपादितमेतत्प्राक् । *सम्बध्यत एवेति । अन्यतरस्याङ्ग्रहणमिति शेषः । *अदन्तत्वादिति । वातातीसारयोरुपतापत्वात् "द्वन्द्व"(पा० सू० ५-२-१२८)इति पूर्वसूत्रेण सिद्ध इत्यपि बोध्यम् । मूले रोगे चायमिष्यत इति । लक्ष्यदर्शनमत्र प्रमाणम् । भाष्ये तु न दृश्यते । *फलान्तराभावादिति । न च वयस्येवेति नियमार्थमस्त्विति वाच्यम् । अभिधानस्वाभाव्यात्तत्रैव भविष्यतीति भावः । *धनवाचीति । "अर्थरैविभवा अपि" इति कोशात् । *तत्र=कालतोऽसन्निधिविवक्षायाम् । *विरोधादिति । कालतोऽसन्निहितस्य तदस्यास्तीत्यनेन विरोधादित्यर्थः । एवञ्चैतद्विषयेऽर्थोऽसन्निहितोऽस्येत्येव विग्रहः । *अनभिधानादिति । येननाप्राप्तिन्यायेनासन्निहितेऽस्य सूत्रस्य बाधकत्वात् । *अत एव=इनिठनोरभावादेव । *भाष्ये उक्तम्=तत्र मतुबेवोच्चारित इति भावः । 'अर्थाच्चासन्निहिते' इत्यत्रार्थशब्दोऽत्र धनवाचीति यदुक्तन्तस्य प्रयोजनमाह-*अर्थनमिति । एवञ्च धनवाचकादेव पूर्वोक्तं सत्तोपाधिकत्वेऽनभिधानं क्रियावाचकात्तु भवत्येव । *अनभिधानादिति । 'अर्थिकप्र-

मान्तस्योदाहरणमित्यर्थः। चकारथकारपरस्येति बहुव्रीहिः। अनुस्वारो न्यपदार्थः॥

इति मत्वर्थीयाः॥

प्राग्दिशो (पा० सू० ५-३-१)। *व्याख्यानादिदं सञ्ज्ञासूत्रं, तदाह–विभक्तिसञ्ज्ञा इति। स्वार्थिका इति। प्रायेणेति शेषः। *स्वीयप्रकृतेरर्थे भवा इत्यर्थः। तसिलादावर्थनिर्देशाभावादतिशायने इत्यादीनां प्रकृत्यर्थविशेषणत्वादिति भावः। *"जात्यन्ताच्छ बन्धुनि" (पा० सू० ५-४-९) "प्रकारवचने" (पा० सू० ५-३-२३) इत्यादिविहितस्य तु वाचकत्वमेव। अत एव तदर्थस्य विशेष्यतया भानम्। अतः प्रायेणेति पुरितम्।

किंसर्वनाम (पा० सू० ५-३-२)॥ प्राग्दिश इत्येव। द्व्या-

---

त्यार्थिकावपि सिद्धौ भवतः' इति भाष्ये तदनुच्चारणमत्र प्रमाणम्। *तेन=द्वन्मात्रसमुच्चायकस्यान्यतरस्याङ्ग्रहणस्य करणेन। *एतस्मात्=बलादेः॥

॥ इति मत्वर्थीयाः॥

*प्राग्दिशो विभक्तिः (पा० सू० ५-३-१)। अस्य सूत्रस्य न विभक्तिविधायकत्वम्। तथा सति दिशः प्राग्ये वक्ष्यमाणाः शब्दास्तेभ्यो विभक्तिर्भवतीति विवक्षितोऽर्थो भवेत्, स तु न युक्तः। "ङ्याप्प्रातिपदिकात्" (पा० सू० ४-१-१) इत्येतदेकवाक्यतया "स्वौजस्" (पा० सू० ४-१-२) इत्यनेनैव सिद्धेरस्य वैयर्थ्यापत्तेः। नाप्यस्य दिशः प्राग्यः प्रत्ययः स सुप्तिङ्संज्ञक इत्यर्थो विभक्तिशब्दवाच्यार्थोपस्थितौ तद्भेदस्य प्रत्ययेषु प्रतिपादनेन विज्ञेयः। तत्रत्य इत्यत्र त्रलो लुगापत्तेः। न च तिङ्संज्ञैवास्त्विति वाच्यम्। विभक्तिपदस्यार्थद्वयोपस्थापकत्वस्य क्लृप्ततया तिङ्मात्रस्योपस्थितेः सुबुपस्थितिप्रतिबन्धककल्पनां विनाऽसम्भवात्। किन्त्वेतत्सूत्रघटकं विभक्तिपदं स्वरूपपरम्। "दिक्शब्देभ्यः" (पा० सू० ५-३-२७) इत्यतः प्राग् विभक्तिरित्येतदुपतिष्ठत इत्यर्थः। अग्रिमेषु प्रत्ययविधायकसूत्रेषु यत्प्रत्ययबोधकं पदं तदेकवाक्यतया चैतेनोपस्थापितविभक्तिशब्दस्यैकवाक्यतया इदमो विभक्तिपदाभिन्न इश्प्रत्ययो भवतीत्यादिक्रमेण वाक्यार्थनिष्पत्तिस्तथा सति भवतीत्यत एतस्य संज्ञासूत्रत्वे पर्यवसानम्भवतीत्याशयेनाह–*व्याख्यानादिति। स्वार्थिका इत्यत्रात्मीयवाचकस्वपदस्यार्थशब्देन समासस्तदाह–*स्वीयप्रकृतेरिति। यदुक्तम्प्रायेणेति तत्प्रयोजनन्निरूपयितुमाह–*जात्यन्तादिति।

दिपर्युदासात्किमः पृथग्ग्रहणम् । *द्व्यादिभ्यः प्रागेव किमृशब्दस्तु न पठितः । कश्च भवांश्च कावित्यत्र भवतः शेषापत्तेः । त्यदादीनां यत्परं तच्छिष्यते इत्युक्तेः । *विधेयानिर्देशादाह—अधिक्रियत इति । बहुशब्दश्चात्र संख्यावाच्येव व्याख्यानात्* ।

प्रकरणलभ्यमाह—*प्राग्दिशीये परे इति । *दिशः प्राक् प्राग्दिशं, तत्र भव इत्यर्थः ।

एतेतौ (पा०सू०५-३-४) । द्वितीयो व्यञ्जनान्तः । यथासंख्यं कार्यनिमित्तयोः ।

नलोप इति । *सर्वादेशत्वन्त्वानुपूर्व्यातिसिद्धम् । इत्सञ्ज्ञा तु न फलाभावात् ।*परत्वादनः पूर्वमेव सदाद्यत्वेऽनि कृते "लक्ष्येलक्षणस्य" इति न्यायेन पुनरत्वाप्रवृत्तिरिति भावः ।

कु तिहोः (पा०सू०७-२-१०४) ॥ "अष्टन आ" (पा०सू०७-२-८४) इत्यतो विभक्तावित्यनुवर्त्तते । तीत्यत्रेकार उच्चारणार्थः । तिहोरित्यस्य *फलमाह—कस्मादिति । यत इति । तसिलादीनां विभक्तित्वात्त्यदाद्यत्वम् ।

परस्य तसेरिति । "प्रतियोगे पञ्चम्यास्तसिः" (पा०सू०५-४-४४) "अपादाने चाहीयरुहोः" ( पा० सू० ५-४-४५ ) इति वक्ष्यमाणस्येत्य-

---

ननु सर्वादिषु किमृशब्दो द्विशब्दात्प्राक् पठनीयः प्रकृतसूत्रे च किमृशब्दो न पठनीय इत्याशङ्कायामाह-*द्व्यादिभ्य इत्यादि । *विधेयानिर्देशात्="किं सर्वनाम" ( पा० सू० ५-३-२ ) इतिसूत्रे विधेयानिर्देशात् । *व्याख्यानादिति । "बहुग्रहणे सङ्ख्याग्रहणङ्कर्त्तव्यम्" इति वार्त्तिकमूलाद्व्याख्यानादित्यर्थः । तेनेह न-बहोर्धनात् । बहुषु धनेषु ।

इदम इश् ( पा० सू० ५-३-३ ) । इदम इशित्यादेशः स्यात् । निमित्तस्यास्मिन्सूत्रेऽनिर्देशात्प्रकरणोपात्तम्प्राग्दिश इत्येतदुपतिष्ठते । तच्च दिक्शब्दघटितसूत्रप्राक्पठितसूत्रविधेयप्रत्यये लाक्षणिकम्, सप्तम्या च विपरिणामस्तदाह-*प्राग्दिशीय इति । *दिशः प्राक् प्राग्दिशन्तत्र भव इत्यर्थ इति । अत्र तच्छब्दो दिक्शब्देभ्य इत्यतः प्राग्यत्प्रत्ययविधायकं सूत्रन्तत्परः । सप्तम्यर्थो घटकप्रत्ययबोधकशब्दवाच्यार्थकभवशब्दान्वयी ।

नन्वनादेशावयवनकारस्य प्रागेव निवृत्तौ कथं सर्वादेशत्वमत आह-*सर्वादेशत्वमिति । यदाऽयं सर्वादेशस्तदा स्थानिवद्भावेन प्रातिपदिकत्वे सति नलोपप्राप्तिरिति क्रमेणादेशप्रवृत्तिसमयेऽनेकाल्त्वमस्त्येवेति भावः । ननु नलोपस्यासिद्धत्वात्त्यदाद्यत्वमेव वक्तुमुचितमित्यत आह-*परत्वादिति ।

*फलमाहेति । विभक्तावित्येतन्मात्रोक्तौ कस्मादित्यत्र कादेशापत्ति-

र्थः। *प्रत्ययग्रहणपरिभाषया तसन्धातोर्न ग्रहणम्। *व्याख्यानाच्च। स्वरार्थम्=लित्स्वरार्थम्। विभक्त्यर्थं=*विभक्तिनिमित्तात्वाद्यर्थम्। *स्वरार्थमिति भाष्यन्तूपलक्षणं पूर्वोक्तविभक्तिकार्यस्यापीति बोद्ध्यम्। सर्वोभयेति। *अभिधानमूलकमेतद् *भाष्ये उक्तम्। *ओदनं परिषिञ्चतीत्यादौ सर्वार्थत्वेऽपि वाग्रहणानुवृत्तेर्न तसिल्।

वाग्रहणमिति। *साहचर्याच्च 'कुत्रचित्' 'नान्यत्र कुत्रापि च साभिलाषम्' इति बहुतरप्रयोगदर्शनादिदमुक्तम्। भागवृत्तिकारादयस्तु किमो

---

रिति भावः।

तसेश्च (पा० सू० ५-३-८)। किंसर्वनामबहुभ्यः परो यस्तसिरित्युच्यमानेऽपि नपुंसकलिङ्गेभ्य एभ्यः परस्तस्धातुरपि सम्भाव्यत इत्यतस्तस्यापि प्राप्नोति। न च पञ्चम्या इत्यनुवर्त्य पञ्चम्यन्तेभ्य एभ्यः परस्य तसेरिति विज्ञायत इति वाच्यम्। एवमपि तस्मात्तस्यति यस्मात्तस्यतीत्यत्र प्राप्तेः सत्त्वात्। न च तस्यतेरादेशे फलाभावः। अस्यापि ग्रहणेऽप्रत्ययत्वेऽपि लित्स्वरः स्यादत आह-*प्रत्ययग्रहणपरिभाषयेति। प्रत्ययमात्रग्रहणसम्पादिका या "प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणम्" इत्येषा परिभाषा तयेत्यर्थः। नन्वत्र "प्रत्ययग्रहणे यस्मात्स विहितः" इति परिभाषासञ्चारावसरः। आनुपूर्वीसाम्यमादाय धातोरपि ग्रहणशङ्काकाले प्रत्ययमात्रग्रहणाभावेन तस्याः परिभाषाया अप्राप्तेः। ननु प्रत्ययाप्रत्यययोरित्येषा परिभाषा लक्ष्यसाधकत्वेन नाश्रितेत्यत आह-*व्याख्यानाच्चेति। चेन भाष्यमित्युक्तम्। स्वार्थे इत्यस्य पञ्चम्यन्तप्रकृत्यर्थ इत्यर्थः। स्वार्थिकैः साहचर्यात्प्रकृतसूत्रस्थतसिशब्दः स्वार्थिको ग्रहीष्यते इति भावः। स्वार्थिक इत्यस्य स्वीयप्रकृत्यर्थ इत्यर्थः। किञ्च प्रकृतसूत्रभाष्ये "किमर्थन्तसेस्तसिलुच्यते? । तसेस्तसिल्वचनं स्वरार्थम्। तसेस्तसिल्वचनं क्रियते स्वरार्थम्। लितिप्रत्ययात्पूर्वमुदात्तम्भवतीत्येष स्वरो यथा स्यात्। ननु चायन्तासिल् तसिम्बाधिष्यते। न सिध्यति। परत्वात्तसिः प्राप्नोति। तसिलोऽवकाशः-ततो हीयते, ततोऽवरोहति। तसेरवकाशः-ग्रामत आगच्छति-नगरत आगच्छति। इहोभयम्प्राप्नोति तत आगच्छति" इत्युक्तम्भाष्ये तन्मूलकव्याख्यानेनोपदेशे य इकारान्त इति भाष्यकारसम्मतव्याख्यानादित्यर्थः। तत्र हि 'समानशब्दानाम्प्रतिषेधो वक्तव्यः' इत्युपक्रम्यैतस्य वचनस्य प्रत्याख्यानाय "स्वार्थे विद्यमानस्य तसेस्तसिलादेशस्तस्येह ग्रहणन्तादृशश्च प्रत्यय एव" इति। विभक्त्यर्थमित्येतद्व्याचष्टे-*विभक्तिनिमित्तेति। ननु विभक्तिनिमित्तकार्यार्थत्वस्य भाष्यकृताऽनुक्तेर्न्यूनतेत्यत आह-*स्वरार्थमितीति। *अभिधानमूलकमिति। "अभिधानमूलकाः कृत्तद्धितसमासाः" इति न्यायमूलकमित्यर्थः। *भाष्ये इति। तत्र हि "पर्यभिभ्यां सर्वोभयार्थम्। पर्यभिभ्यां यदुच्यते तत्सर्वोभयार्थन्द्रष्टव्यम्" इत्युक्तम्। अतिप्रसङ्गं वारयति-*ओदनमित्यादि। "किमोऽत्"(पा०सू०५-३-१२)

भाषायामत्रलं नेच्छन्ति । *भाष्यस्वरसोऽप्येवमेव ।

एतदस्त्रत (पा० सू० २-४-३३) ॥ इदमोऽन्वादेश इत्यतोऽश्-नुवर्तते । *एतदोऽनित्येव सिद्धेऽनुदात्तार्थं* वचनम् । ननु लित्स्वरे शेषनिघातेनैव त्रतसोरनुदात्तत्वे सिद्धे *तयोस्तद्विधानं व्यर्थमिति चेन्न । लित्स्वरापवादेऽशोऽनुदात्तत्वे कृते लित्स्वराप्राप्त्या प्रत्ययस्वरेण त्रतसोरुदात्तत्वे प्राप्ते तत्सार्थक्यात्* । अतो नेति । अत एतस्माद्ग्रामादित्यर्थः । सप्तम्यन्तेभ्य इति । सप्तम्या इत्येवानुवर्तते *क्लृप्तस्वरितत्वात् । 'न इतराभ्यः' इतीति भावः । सर्वत्र देशे इति । सर्वत्र काले इत्यपि बोद्ध्यम् । काले इत्युपादानेन सर्वशब्दस्य *कालार्थत्वाभावात् । *अत एव "वर्तमाने लट्"

---

इति सूत्रे वाग्रहणापकर्षे प्रमाणमाह-*साहचर्यादिति । *भाष्यस्वरस इति । "सप्तम्यास्त्रल्"(पा०सू०५-३-१०)इतिसूत्रे तसिलादीनां विभक्त्यादेशत्वं स्वतन्त्रप्रत्ययत्वं वेति विचारे विभक्त्यादेशत्वपक्षे कस्मिन् कुत्रेत्यत्रेवुच्चामौदच्चयेरिति प्राप्नोतीत्युक्तम् । अत्र हि विशेषविहितत्वेनादादेशेन तस्मिन् पक्षे भाव्यमिति कुत्रेतिप्रयोगानुपपत्तिः प्राप्नोतीति "वाह च च्छन्दसि" (पा०सू०५-३-१३) इत्यत्र वेति योगविभागेन लोकेऽपि त्रादेश इति कल्पनया कुत्रेत्यस्योपपत्तिः कृता । न च छान्दसमेव कुत्रेत्यस्तु । छन्दस्याद्यरूपाभावात् । वस्तुतस्तच्छान्दसमेव । छन्दस्यपि न्याय्यविचारस्य बहुशो दृष्टत्वात् । वाग्रहणापकर्षेणादादेशस्य वैकल्पिकत्वकल्पनन्तु न चमत्कारकारि । तथा सति पूर्वसूत्र एव वाग्रहणस्य कर्त्तुमुचितत्वादिति भावः । *एतदोऽनित्येवेति । अनितिविभक्तसूत्रेणानादेशेनेत्यर्थः । *अनुदात्तार्थमिति । "इदमोऽन्वादेशे" ( पा० सू० २-४-३२ ) इत्यतोऽनुदात्त इत्यनुवृत्तेरिति भावः । *तयोस्तद्विधानमिति । त्रतसोः प्रकृतसूत्रेणानुदात्तविधानमित्यर्थः । *तत्सार्थक्यात्=अनुदात्तविधानसार्थक्यात् । *क्लृप्तस्वरितत्वादिति । सप्तम्या इत्यस्य "इदमो हः" (पा० सू० ५-३-११) इति सूत्रे सम्बन्धार्थन्तत्र स्वरितत्वं क्लृप्तमेवेति भावः । *कालार्थकत्वाभावादिति । कालत्वावच्छिन्नबोधकत्वाभावादित्यर्थः । यद्यपि सर्वशब्दस्य बुद्धिविषयविशेषबोधकताऽस्ति तथाऽपि यदा कालत्वस्याधिकरणतावच्छेदकत्वन्न विवक्षितङ्किन्तु कालोपाधित्वेनाभिहिता ये पदार्थास्तत्तन्निष्ठतत्तद्व्यक्तित्वस्याधिकरणतावच्छेदकत्वविवक्षा तदा न दाप्रत्यय इति भावः । अत्रार्थे भाष्यसम्मतिमाह-*अत एवेति । कालत्वेनाधिकरणत्वविवक्षायां दाप्रत्यय इत्यर्थस्याभिमतत्वादेव । एवञ्च यत्र काल इत्यादीनां यदुपाध्यभिन्नकाल इत्यर्थः । यदा काले सदा काले इत्यादिप्रयोगा न भवन्त्येव । दाप्रत्ययेन कालत्वेन कालस्योक्ततयोक्तार्थानामप्रयोग इतिन्यायात् ।

इदमोर्हिल् ( पा० सू० ५-३-१६ ) । इदमपि सूत्रं यदा न कालत्वाव-

( पा० सू० ३-२-१२३ ) इति सूत्रभाष्यस्थे 'अनागतमतिक्रान्तं वर्तमानमिति त्रयम् । सर्वत्र च गतिर्नास्ति'इति प्रयोगे कालवृत्तित्वाविवक्षायां दा न कृत इति कैयटः । विहितत्वादिति । सर्वैकान्येत्यनेन । *एतद्भाष्ये स्पष्टम् । तर्हीति । एतत्प्रतिद्वन्द्विभूतं* यदीत्येतदखण्डमव्ययम् । एतर्हीति । "एतदः" ( पा० सू० ५-३-५ ) इति योगविभागेन एतादेशः । अस्मिन्नहनीति । *पुष्येण युक्तः कालोऽयमित्यर्थके अद्य पुष्य इत्यादौ शक्तिमत्प्रधानता । इदमह इत्यर्थेप्यद्येत्यन्ये* । *व्यपदेशिवद्भावेन स प्रयोग इत्यपरे । *एद्युसिति । *निपातनादन्तोदात्तोऽयम् । भाष्ये तु *चित्पठ्यते ।

प्रकारवचने (पा० सू० ५-३-२३) ॥ *पञ्चम्यर्थे सप्तमीत्याह-प्रकारवृत्तिभ्य इति । वचनग्रहणात्प्रकारवद्वृत्तिभ्य इत्यर्थः । तेन प्रकारेणेत्यस्य विशिष्ट इति शेषः । इदं प्रकृतिविशेषणं स्वार्थिकोपक्रमात् । सामान्यस्य भेदको विशेषोऽत्र प्रकारः।*बहुभिः प्रकारैर्युक्तं इत्यतो बहुभिर्वि-

---

वच्छिन्नाधिकरणत्वविवक्षा किन्तु क्षणत्वावच्छिन्ना तदा न प्रवर्त्तते । ननु "तदो दा च" (पा० सू० ५-३-१९) इति सूत्रेण न दाप्रत्ययो विधीयते किन्त्वदाप्रत्यय इति न "सर्वैकान्य" ( पा० सू० ५-३-१५ ) इत्यनेनान्यथासिद्धिः । अदाप्रत्ययविधानफलन्तु न दाशब्दस्याद्युदात्तत्वसिद्धिरत आह-*एतद्भाष्ये स्पष्टमिति । "तदो दावचनमनर्थकं विहितत्वात् । विहितोऽत्र दाप्रत्ययः । सर्वैकान्यकियत्तदः काले दा"(पा० सू० ५-३-१५) इति"इति। अनेन दाप्रत्यय एव भाष्यसम्मत इति स्पष्टम् । तदाशब्दश्चान्तोदात्त एवेति भावः । *प्रतिद्वन्द्विभूतमिति । प्रतिद्वन्द्यर्थस्य प्रतिपादकमित्यर्थः । ननु यदा तत्तत्क्रियानिरूपितवृत्तित्वविवक्षा पुष्यनक्षत्रयुक्तचन्द्रमसस्तदा इदानींस्पुष्यनक्षत्रमिति प्रयोगोपपत्तावपि सामान्यविवक्षायामद्य पुष्य इति प्रयोग इष्यते स नोपपद्यते । भेदे ह्याधाराधेयभावः प्रसिद्धो न त्वभेदे इत्याशङ्कायामाह-*पुष्येणेति । एवञ्चाद्य पुष्य इत्यस्य पुष्यनक्षत्रयुक्तचन्द्रयुक्तकालाभिन्नमेतद्दिनमित्यर्थः । अधिकरणशक्तिप्रधानस्य वृत्तिविषय एव शक्तिमत्परत्वमिति न नियम इति भावः । *अन्य इति । अव्ययानामनेकार्थत्वादिति तेषां भावः । अन्य इत्यनेन सद्य इत्यादीनामधिकरणशक्तिप्रधानत्वमेव सुप्रसिद्धमिति कल्पशक्तिविरोध इति । स्वसम्मतप्रकारमाह-*व्यपदेशिवद्भावेनेति । वृत्तिरीत्याऽऽह-*एद्युसितीति । प्रत्ययाद्युदात्तत्वबाधनायाह-*निपातनादिति । *चित्पठ्यत इति । "पूर्वान्यान्यतरेतरापराधरोभयोत्तरेभ्य एद्युसुच्" इति । *पञ्चम्यर्थे सप्तमीति । व्यत्ययेन । किंसर्वनामबहुभ्य इति सम्बध्यते एतदन्वयाय पञ्चम्या न्याय्यत्वात् । उच्यते प्रतिपाद्यतेऽनेन तद्वचनम् । प्रकारस्य प्रवृत्तिनिमित्तस्य यद् वचनं तेभ्यः किमादिभ्य इत्यर्थः । प्रकारशब्दस्य भेदकधर्मपरत्वे मानमाह-*बहुभिरिति । यथा-

शैवैरित्यवगमात्। सादृश्यन्तु* न गृह्यते। अन्यथा सर्वथेत्यादौ तदप्रतीत्याऽ*न भिधानात्। यथा हरिस्तथा हर इत्यादौ यत्प्रकारवान् हरिस्तत्प्रकारवान् हर इति बोधे हरिसदृशो हर इति फलतीति बोद्ध्यम्। *अत्यन्तस्वार्थिकोऽयम्। प्रत्ययं विनापि यश्चैत्रः स मैत्र इत्यादौ प्रकारवचनत्वदर्शनात् *द्योतकत्वे तदर्थस्य विशेषणतापत्तिश्च। एवं जातीयर्विधावपि बोद्ध्यम्। स्थूलादिभ्यः कन्विधौ चैवमेव। स्थूलादीनामपि गौर्वाहीक इत्यादौ गवादिपदानामिवास्त्येव प्रत्ययं विनापि प्रकारवाचित्वम्। अत एवैषां नित्यत्वं नोक्तम् ॥

इति प्राग्दिशीयाः ।

दिक्शब्देभ्यः (पा० सू० ५-३-२७) ॥ नेह यथासंख्यम्। अस्वरितत्वात्। शब्दग्रहणलभ्यमर्थमाह-दिशि रूढेभ्य इति। "संख्यायाः"(पा० सू० ५-३-४२) इत्येतत्पर्यन्तमस्तातिपदरहितमिदं सूत्रमनुवर्तते।

अस्तातौ पुराद्यादेशविधानार्थम् "अस्ताति च" इतीह लेख्यम्। *तत्रानुवृत्तिप्रदर्शनाय पूर्वसादिसूत्रमपीह व्याचष्टे-पूर्वाध (पा० सू० ५-३-३९)। असीत्यविभक्तिकम्। सन्नियोगशिष्टत्वाय चकारः। अवराणामित्यनन्तरयोगे षष्ठी।

अस्ताति च (पा० सू० ५-३-४०)। लुप्तसप्तम्यन्तमिदम्। तदाह-अस्तातावििति। *शब्दभेदादर्थभेदेऽपि समानानुपूर्वीकत्वाद्दिक्शब्दो देशादिवृत्तिरिति व्यवहारो बोद्ध्यः। पूर्वादयस्तत्तद्दिक्स्थत्वं प्रवृत्तिनिमित्तीकृत्य क्वचित् वक्तृसंमुखदेशत्वं *तथा कृत्वा क्वचिद्देशे प्रवर्तन्ते। अत एव पुर इत्यस्याग्रे इत्यर्थकत्वं विश्वकोशादावुक्तम्। क्वचित्स्वसंयुक्तसंयोगित्वं यथा परादिशब्दे। प्रकृतसूत्रे च सर्वेषां ग्रहणं विनिगमनाविरहात्।

---

तथाशब्दात्सादृश्यम्प्रतीयत इति प्राचाम्मतङ्खण्डयति-*सादृश्यं त्विति। *अनभिधानात्=शक्त्या सादृश्यस्यानभिधानात्। प्रकारवचन इत्यस्य प्रकृतिविशेषणत्वेऽप्यभिधानस्वाभाव्यादाह-*अत्यन्तेति। नाप्ययन्द्योतक इत्याह-*द्योतकत्व इति ॥

॥ इति प्राग्दिशीयाः ॥

दिक्शब्देभ्यो दिशि रूढेभ्य इत्युपादानाद्यौगिकानामैन्द्र्यादिशब्दानां व्यावृत्तिः। *तत्र=पूर्वाधरेति सूत्रे। ननु यः शब्दो दिशि रूढस्तस्य देशवृत्तित्वङ्कथमत आह-*शब्दभेदादिति। *तथा कृत्वा=प्रवृत्तिनिमित्तीकृत्य। ननु

पूर्वस्मिन् गुराविति । पूर्वकालाध्यापनकर्तरीत्यर्थः ।

दक्षिणोत्त ( पा० सू० ५-३-२८ ) । ननु तसुरेव प्रत्ययोऽस्तु दक्षिणस्यां दिशि दक्षिणत इति तु 'सर्वनाम्नो वृत्तिमात्रे' इति पुंवत्त्वेन सिद्धम् । "षष्ठ्यतसर्थ" इति सूत्रे षष्ठी तस्वर्थेति पाठ्यम् । तेन ततो ग्रामादन्य इत्यादौ पञ्चमीं बाधित्वा परत्वात् षष्ठी नेति चेन्न, *स्पष्टार्थत्वात् अर्धमात्रालाघवेऽनादरेण तथोक्तेः ।

प्राच्यामिति । *लिङ्गविशिष्टपरिभाषयाऽस्तातेर्लुक् । *विभक्तित्रयार्थं प्रकटयितुमाह-वसत्यागत इत्यादि ।

एनबन्यत(पा० सू० ५-३-३५) ॥ अपञ्चम्या इति *प्रागसेरनुवर्तते । अदूरे इति । *अवधिमानवधेश्चेददूरे इत्यर्थः ।

---

पूर्वस्मिन्देश इत्यत्रातिप्रसङ्ग इति चेन्न । तत्र पूर्वशब्दस्य देशविशेषणत्वेऽपि देशवृत्तित्वाभावात् । अत्र हि पूर्वकालार्जितत्वम्प्रवृत्तिनिमित्तमिति । यदि तु पुरस्ताद्दिशः पुरस्ताद्देशादिति प्रयोगः क्वचिद् दृश्यते, तदा समुच्चयस्य द्वौ ब्राह्मणावितिवदुपपत्तिः कार्या । *स्पष्टार्थत्वादिति । के चित्तु तसुजेव कर्तव्येऽकारोच्चारणसामर्थ्यादन्यतोऽप्ययन्तस्मिन्नस्तातिचेति चकारेण पुरादेशश्च भवतीति पुरत इत्यस्य सिद्धिर्भवतीत्याहुः । भाष्ये तु नैतद् दृष्टम् । अन्ये तु "विभाषा परावराभ्याम्" ( पा० सू० ५-३-२९ ) इति सूत्रे विभाषेति योगविभागेन पूर्वशब्दादप्यतसुच् । तस्मिंश्चास्तातिचेति चकारस्यानुक्तसमुच्चयार्थत्वात्पुरादेश इत्याहुः । वस्तुतस्तु पुरतःशब्दः समानकालीनप्राक्कालीनशब्दतुल्ययोगक्षेम एव । किमर्थन्तर्हि प्रकृतसूत्रेऽकार इति चेत् । दक्षिणाशब्दाद्यदाऽयम्प्रत्ययस्तदा दक्षिणत आगतो दक्षिणतो वसतीति रूपसिद्ध्यर्थमेवेति गृहाण । "सर्वनाम्नो वृत्तिमात्रे" इति तु भाष्यकारस्येष्टिर्न तु सूत्रकारेण सा कृतेति प्रकृतेऽकार उच्चारितः । भाष्यरीत्या तु व्यर्थ एव । एवमकाराभावे चकारोऽपि न पाठ्यः । तसुप्रत्यये उदात्तत्वम्प्रत्ययाद्युदात्तत्वेन सिद्धम् । "षष्ठ्यतसर्थ" ( पा० सू० २-३-३० ) इति सूत्रे तस्वर्थेत्येव पाठ्यमिति दिक् । ननु प्राचीशब्दो नाञ्च्यन्त इत्यत आह-*लिङ्गविशिष्टेति । *विभक्तित्रयार्थमिति । सप्तमी पञ्चमी प्रथमेति विभक्तित्रयेत्यर्थः ।

एनबन्यतरस्यामदूरे ( पा० सू० ५-३-३५ ) *प्रागसेरिति । "पूर्वाधरावराणामसि" ( पा० सू० ५-३-३९ ) इति सूत्रविहितासेः प्रागित्यर्थः । मूलकृता तु पूर्वाधरेतिसूत्रविहितादेशस्यास्तातावपि प्रवृत्तिम्बोधयितुम् "एनबन्यतरस्याम्" ( पा० सू० ५-३-३५ ) इति सूत्रात्परमपि सूत्रम्प्राग्व्याख्यातम् । अदूरत्वस्यावधिसाकाङ्क्षत्वादाह-*अवधिमानिति । मूले पक्षे यथा स्वमिति । उत्तरादिभ्य एनबभावे यथास्वमित्यर्थः । के चिन्मत एवाञ्च्य-

केचिदिति । *अञ्चत्यन्तात्तु न । व्यवस्थितविभाषाविज्ञानादिति तदाशयः । *इयमेवात्रारुचिः ।

दक्षिणादाच् (पा० सू०५-३-३६) । *चकार *आजाहीत्यत्र विशेषणार्थः । तेन "वाक्यस्मरणयोरङिदाकारस्य व्यावृत्तिः" इति भाष्यम् ।

उत्तराच (पा० सू० ५-३-३८) । चेन व्यवहित आजपि समुच्चीयते *व्याख्यानात् । तदाह—उत्तरेति ।

संख्याया वि (पा० सू० ५-३-४२) । *विधस्यार्थे इत्यर्थः विधानं विध इति घञर्थे कः । विधशब्दस्यार्थश्च सामान्यस्य भेदकविशेषरूपः प्रकारः । सः चा*भिधानस्वाभाव्यात्क्रियाविषयक एव गृह्यते; तदाह—क्रियाप्रकारे इति । तदुक्तं भाष्ये "विधयुक्तगताश्च प्रकारे भवन्ति"

---

न्तात्प्राप्तम्प्रत्ययं वारयति-*अञ्चत्यन्तात्त्विति । *इयमेव=अञ्चत्यन्तात्प्राप्तिरूपैव ।

दक्षिणादाच् ( पा० सू० ५-३-३६ ) । प्रत्ययाद्युदात्तत्वेन सिद्धे चकारोच्चारणस्य फलमाह-*चकार इति । *आजाहीति । "अन्यारादितरर्ते" ( पा० सू० २-३-२९ ) इति सूत्रनिर्दिष्टो य आच् तस्यैव पञ्चमीविधाने निमित्तत्वमिति सूचनार्थः । न चाऽऽहिप्रत्ययसाहचर्यात्प्रत्ययस्यैव ग्रहणम्भविष्यतीति वाच्यम् । साहचर्यपरिभाषाया अनित्यत्वस्य ज्ञापनार्थत्वात् । पूर्वसाहचर्यादप्रत्ययस्यैव ग्रहणमिति शङ्कानिरासार्थत्वाच्च ।

आहि च दूरे (पा० सू० ५-३-३७) । अवधिमानवधेश्चेद् दूर इत्यर्थः । *व्याख्यानादिति । "दक्षिणापश्चात्" (पा० सू० ४-२-९८) इतिसूत्रे आचपश्चादिति वक्तव्ये दक्षिणेत्याजन्तसमुदायोच्चारणरूपाद्व्याख्यानादित्यर्थः ।

सङ्ख्याया विधार्थे धा (पा० सू० ५-३-४२)। इह विधायामिति वक्तव्ये ऽर्थशब्दो विधाशब्दस्य प्रसिद्धार्थपरिग्रहार्थम् । स च प्रकाररूप इत्याशयेन व्याचष्टे मूले क्रियाप्रकार इति । अत्र विधशब्दस्यापि प्रश्लेषः सम्भाव्यत इत्याशयेनाह-*विधस्येति । अत एव प्रकृतसूत्रभाष्ये-"विधार्थ इत्युच्यते, को विधार्थो नाम ? । विधाया अर्थः=विधार्थः । यद्येवमेका गोविधा, एका हस्तिविधा अत्रापि प्राप्नोति" इत्युक्तम् । अन्नं विधाशब्दार्थः । *अभिधानस्वाभाव्यादिति । अत एव भाष्ये पूर्वोक्तस्य विधाशब्दस्यार्थे धाप्रत्ययमाशङ्क्य "धात्वर्थपृथग्भावे इति वक्तव्यम्" इत्युक्तम् । धात्वर्थपृथग्भावश्च कारकाणां प्रवृत्तिविशेषः क्रिया । यद्येवं क्रियाप्रकारेऽयम्भवति । विधयुक्तगताश्च प्रकारे भवन्ति । एवं विधम् । एवं युक्तम् । एवङ्गतम् । एवम्प्रकारमिति । एतेन भाष्यग्रन्थेन विधशब्दस्यार्थे एव प्रत्यय उक्तः । "नवधा द्रव्यम्" "षड्धा रसः" इत्यादिप्रयो-

इति । *त्रेधा गुणो नवधा द्रव्यमित्यादावप्युपदिश्यते भवतीति वा क्रिया बोद्ध्या । चतुर्द्धेति । चतुर्भिः प्रकारैरित्यर्थः । *अधिकरणस्य=द्रव्यस्य विचलनम्=अन्यथाकरणं, तच्चेह संख्यासन्निधानात्त*द्विषयमेवेत्याह— द्रव्यस्य संख्यान्तरेति । तदवगमश्च पदान्तरसमभिव्याहारादिति बोद्ध्यम् । एकं राशिं पञ्चधेति । पञ्चत्वसंख्याविशिष्टमित्यर्थः ।

एकाद्धो (पा० सू० ५-३-४४) । धाग्रहणं *धामात्रस्य यथा स्याद । अन्यथाऽनन्तरत्वादधिकरणविचाले विहितस्यैव स्यात् । *अत एव प्रत्ययो नाकारि* । अधिकरणविचाले एव सन्निहितत्वादापत्तेः । यद्यप्यनेकमेकं क्रियते सोऽप्यधिकरणविचाल इति बोद्ध्यम् । एकध्यमिति । भुङ्क्ते इति, राशिं कुर्विति वा शेषः ।

द्वैधानीति । *स्वभावात् सत्त्ववाचित्वम् ।

एधाच्च(पा० सू० ५-३-४६ ) । द्वित्र्योर्धा इत्यस्यैधाजित्यर्थः ।

याप्ये पाशप् ( पा० सू० ५-३-४७ ) । *याप्यमत्र कुत्सितम् । कुत्साविशिष्टेऽर्थे वर्तमानात्पाशबित्यर्थः । अयं *प्रवृत्तिनिमित्तकुत्सायामेव "कुत्सिते" इत्यस्यां प्रवृत्तिनिमित्तकुत्सायामपि प्रवृत्तिरिति बोद्ध्यम् ।

पूरणाद्भागे (पा०सू०५-३-४८) । पूरणार्थकतीयप्रत्ययान्ताद्भागे

---

गाणामप्युपपत्तिमाह-*त्रेधा गुण इत्यादि । "अधिकरणविचाले च" ( पा० सू० ५-३-४३ ) इति सूत्रं व्याचष्टे-*अधिकरणस्येति । *तद्विषयम्=संख्याविषयमेकस्यानेकीकरणरूपमनेकस्य वा एकीकरणरूपम् । *धामात्रस्येति । तेन "संख्याया विधार्थे" ( पा० सू० ५-३-४२ ) इति सूत्रविहितस्यापि भवतीति भावः । *अत एव=धामात्रस्य स्थानेऽस्येष्टत्वादेव । *नाकारीति । स्वतन्त्रप्रत्ययत्व इति शेषः ।

द्वित्र्योश्च धमुञ् (पा० सू० ५-३-४५) । द्वित्र्योः सम्बन्धिनो धाप्रत्ययस्य विधार्थेऽधिकरणविचाले वा विहितस्य धमुञादेशः । चकारेणान्यतरस्यामित्यनुकर्षः । *स्वभावादिति । शब्दशक्तिस्वभावात् । *सत्त्ववाचित्वम्=धान्तस्य सत्त्ववाचित्वम् । अत एव द्वैधानीत्यत्र लिङ्गसङ्ख्यायोगः ।

याप्ये ( पा० सू० ५-३-४७ ) । अधमपर्यायोऽप्ययं प्रकृते कुत्सिते वर्त्तते 'कुत्सितग्रहणङ्कर्त्तव्यम्' इति वार्त्तिकमूलाद्व्याख्यानादित्याशयेनाह-*याप्यमत्रेति । *प्रवृत्तिनिमित्तकुत्सायामेवेति । "यस्य भावाद् द्रव्ये शब्दनिवेशस्तदभिधाने तद्गुणे वक्तव्ये प्रत्ययः"इति भाष्यात् । तद्गुणे वक्तव्ये=कुत्सितत्वेन प्रतिपाद्ये इत्यर्थः । अत एव शरीरेण कृशो वैयाकरण इत्यर्थे वैया-

वर्तमानादित्यर्थः। *तीयादीकक् इति वचनद्वयं "दृष्टं साम"(पा०सू०४-२-७)इत्यत्र भाष्ये स्पष्टम्। पूर्वत्र ञानौ नित्याविति। न च षष्ठाष्टमाभ्यां भागार्थप्रतिपादनार्थं लुग्विधानं प्रत्ययानां स्वार्थिकत्वेन प्रकृतेस्तदर्थत्वला-भात्। *प्रकरणादिकं तु तत्राप्यावश्यकम्। स्वरस्तु लुकि नास्त्येवेति "नलुमता"(पा० सू०१-४-२५) इसत्र भाष्ये स्पष्टम्*।

एकादा (पा० सू० ५-३-५२)। असहायवाचकादेकशब्दादि-त्यर्थः। असहाये किम्?। प्रसिद्धतरत्वात्संख्यावाचकस्यैवा*न्यत्रेवात्रापि ग्रहणापत्तौ द्विवचनाद्यसिद्धिः स्यात्। *वाक्यभेदेन कनाकिनिचोरेव लुक्। विधानसामर्थ्यात्पक्षे श्रवणमपि।

भूतपूर्वे(पा०सू०५-३-५३)। *तत्रार्थे वर्तमानात्प्रातिपदिकादित्यर्थः।

षष्ठ्यारू (पा० सू० ५-३-५४)। अत्र भूतपूर्वे इत्यनुवृत्तं श्रुत-त्वात् षष्ठ्या विशेषणं *भूतपूर्वार्थसंबन्धे या षष्ठी तदन्तात्स्वार्थे प्रत्ययः। अत एव स्वार्थिकप्रकरणविरोधो न।

अतिशायने (पा० सू० ५-३-५५)। अतिशेतेः प्रकर्षापरपर्याय इतरस्य न्यूनीकरणरूपोऽभिभवोऽर्थः। एवञ्च सकर्मकादिस्मात् बाहुलका-

---

करणक इति न। एतच्च सूत्रम्प्रवृत्तिनिमित्तगतकुत्साविवक्षायामेव प्रवर्त्तत इति बोधयितुं कुत्सित इत्यत्रैवेदन्नोक्तम्। तच्च सूत्रमप्रवृत्तिनिमित्तकुत्सायामपि। अनेन सिद्धे तत्सूत्रारम्भादिति भावस्तदाह-अयमित्यादि। किञ्च पाशप्प्रत्य-यस्तिङन्तान्न भवति विधायकाभावात्। पाशपस्तत्रैव विधाने तु तिङन्तादप्य-यं स्यादित्यपि बोध्यम्।

पूरणाद्भागे (पा० सू० ५-३-४८)। प्रकृतसूत्रस्थपूरणग्रहणम्प्रागेका-दश इत्युत्तरार्थम्। अर्थवांस्तीयशब्दो हि पूरण एव। तीयशब्दस्य पूरणार्थक-त्वेऽपि पूरणाद्भाग इति निर्देशः शब्दार्थयोस्तादात्म्यात्। नतु 'तीयादीकक्' 'न विद्यायाः' इति वचनद्वयम्प्रकृतसूत्रभाष्ये न दृश्यते इत्यत आह-*तीयादीकगि-ति। अत्र भाग इति पुंस्त्वस्य विवक्षितत्वाद्भक्तिर्यत्र विशेष्या तत्र नायम्प्रत्य-यः। तेन चतुर्थी पञ्चमी भक्तिरित्येव न त्वञन्तत्वाट्टाप्। मूले महाविभाषया सिद्ध इति। ननु प्रत्ययो यदा क्रियते तदा भागार्थप्रतीतिस्तदभावे तु नेति कथ-मेतदित्यत आह-*प्रकरणादिकमिति। *भाष्ये स्पष्टमिति। तत्र हि "लुमति प्रतिषेधे एकपदस्वरस्योपसंख्यानं कर्त्तव्यमेकपदस्वरे लुमता लुप्ते प्रत्ययलक्ष-णन्नेति वक्तव्यम्" इत्युक्तम्। *अन्यत्रेति। "सावेकाचस्तृतीयादिः" (पा० सू० ६-१-१६८) इत्यादिष्वित्यर्थः। कन्लुकावित्यत्र कस्य लुगित्याकाङ्क्षायामाह-*वाक्यभेदेनेति। स्वार्थत्वोपपत्तये आह-*तत्रार्थ इति। *भूतपूर्वार्थसम्बन्ध

त्कर्तरि* ल्युट्, इत एव निपातनाद्दीर्घः। तत्र वर्तमानात्प्रातिपदिकात् स्वार्थे प्रत्यय इत्यर्थः। यत्तु "यावद् ब्रूयात् प्रकर्षेऽतिशये इति तावदतिशायने"-इत्युक्तमुपक्रमे भाष्ये। तत्र भावार्थकस्य कर्तृपचाद्यजन्तस्य च तन्त्रेणोच्चारणं बोध्यम्। *अग्रे "गुणोऽभिधीयते" इत्युक्त्या कालोऽतिशेते इति विग्रहप्रदर्शनेन "बाहुलकाल्ल्युट्"इत्युक्त्या भाष्यार्थलाभः; तदाह—अतिशयविशिष्टे ऽर्थे इति। अतिशयकर्तृरूपेऽर्थे इत्यर्थः। भावे ल्युडिति तु न युक्तम्। तत्रार्थे प्रत्यय इत्यर्थे तस्य प्राधान्यापत्तेः। *अत एव भावल्युट्पक्षे *लिङ्गवचनासिद्धिर्भाष्ये शङ्किता। अतिशये वर्तमानात्प्रातिपदिकादित्यर्थे ऽतिशयप्रकर्षादिभ्य एव प्रत्ययः स्यात्, न पट्वादिभ्यः। न हि विशेषणीभूतमर्थमादाय तत्रायं शब्दो वर्तत इति व्यवहारः सचेतसाम्। न चातिशयशब्दस्य तद्विशिष्टे* लक्षणा। *अभिभूयमानादेव प्रत्ययापत्तेः। तत्कर्तरि लक्षणायान्तु भाष्योक्तमेव साधु। *अत एवैतेषां समानाधिकरणवृत्तितद्धितत्वेन व्यवहारो "युष्मद्युपपदे"(पा०सू०१-४-१०५)"लटः शतृशानचौ(पा०सू० ३-२-१२४)इत्यादौ भाष्ये। प्रातिपदिकार्थे तद्धितद्योत्यार्थस्य सामानाधिकरण्यमिति तदर्थः। *तत्र *प्रकृत्यर्थद्रव्यस्य स्वरूपत इतराभिभवकर्तृत्वाभावेऽपि तत्प्रवृत्तिनिमित्तगुणादिनिष्ठेन तेन तस्यापि *तत्त्वं बोध्यम्। गोतर इत्यादौ प्रवृत्तिनिमित्तभूतजातेः स्वतस्तदभावेऽपि तत्सहचरितवाहदोहनादिगतेन तस्य तत्त्वम्। *एवञ्च तरबादिसमभिव्याहारे आढ्यादिपदानामितराभिभवकर्तृत्वविशिष्ट आढ्योऽर्थः। प्रत्ययस्तु द्योतकः। *कुमारितरेत्यादौ ङीप् तु न। तरप्प्रकृतिभूतेन तदन्तघटकेन कुमारिशब्दादिना वयोविशिष्टार्थ-

---

इति। भूतपूर्वो योऽर्थस्य सम्बन्धस्तत्र या इत्यर्थः। *कर्त्तरीति। इतराभिभवकर्त्तरीत्यर्थः। उपक्रमभाष्येऽतिशय इति यदुक्तं तद्विरोधम्परिहरति-*अग्रे गुणोऽभिधीयते इति। अतिशेतेऽनेनेत्यतिशायनो गुणोऽभिधीयते करणे ल्युट्। द्रव्यवाचकाद्यदा प्रत्ययस्तदापि स्वसमवेतगुणस्यैव प्रकर्षोऽभिधीयते। *अत एव=भावल्युटोऽनभिप्रेतत्वादेव। *लिङ्गवचनासिद्धिः। शुक्लतरं शुक्लतरा इत्यत्र लिङ्गवचनासिद्धिः शङ्किता इत्यर्थः। *तद्विशिष्टे=अतिशयविशिष्टे। सा लक्षणा कर्मणि कर्त्तरि वेति विकल्प्य दूषणमाह-*अभिभूयमानादेवेति। *अत एव=भाष्योक्तस्य युक्तत्वादेव। *तत्र=पूर्वोक्तार्थस्य सिद्धौ। *प्रकृत्यर्थद्रव्यस्य=शुक्लतरः पट इत्यादौ। *तत्त्वम्=इतराभिभवकर्तृत्वम्। फलितार्थमाह-*एवञ्चेति। तरपः स्वार्थिकत्वे कुमारितरेत्यत्र समुदायाद् "वयसि प्रथमे" (पा० सू०

गतस्त्रीत्वस्योक्तत्वात्*। तरबन्तस्य तु प्रकर्षः प्रवृत्तिनिमित्तम्। अतस्तद्विशिष्टार्थगते स्त्रीत्वे टाबेव न "वयसि" इति ङीप्। *वयोमात्रविशिष्टार्थगते स्त्रीत्वे हि तत्प्रवृत्तिः। *अत एव गोतरेत्यादौ* न ङीष्*। जातिप्रवृत्तिनिमित्तकत्वाभावात्। तदुक्तं भाष्ये "यदि प्रथमाम्नातात् स्वार्थिकः कुमारितरेत्यादौ केवलवयसः प्रकृष्टं वयो ऽनतिरिक्तमिति ङीप् प्राप्नोति तरपोक्तत्वात् स्त्रीत्वस्य प्रत्ययो न भविष्यति" इति । तरपा=तत्प्रकृतिभूतेन वयोविशिष्टार्थगतस्त्रीत्वस्योक्तत्वादित्यर्थः। एतदुत्तरं "टावपि न प्राप्नोति" इत्यादि भाष्यमे*कदेशिनोरुक्तिरिति बोद्ध्यम्। आतिशायनिकप्रत्ययान्तादातिशायनिको नानाभिधानात्। 'श्रेष्ठतमाय कर्मणे' इत्यादिकं तु *छान्दसत्वात् स्वार्थे साध्विति सर्वं भाष्ये स्पष्टम्। अतिशयेनेति प्रकृत्यादित्वात्तृतीया।

तिङश्च (पा० सू० ५-३-५६)। अप्रातिपदिकत्वादप्राप्ते वचनम्।

किमेत्तिङ (पा० सू० ५-४-११)। *किमादिप्रकृतिकघादित्यर्थस्तत्फलितमाह—अव्ययाच्च यो घ इति। किंतमामिति। आमन्तस्याव्ययत्वात्ततः परस्य सोर्लुक्। *पूर्वाह्णेतरामित्यादौ *तत्तत्क्रियाविशिष्ट-

---

४-१-२०) इति सूत्रेण ङीबापत्तिरतस्तांम्परिहरति-*कुमारीत्यादि। *उक्तत्वादिति। प्रथमवयोविशिष्टार्थगतस्त्रीत्वे द्योत्ये ङीबिति तदर्थात्। ननु तरबन्तस्य यत्प्रवृत्तिनिमित्तम्प्रकर्षस्तद्विशिष्टः प्रथमवयोविशिष्टार्थ एव न त्वतिरिक्त इति तरबन्तान्ङीप् प्राप्नोतीत्यत आह-*वयोमात्रेति। *अत एव=अवधारणरूपार्थस्य तद्घटकत्वादेव। *इत्यादाविति। आदिना अश्वतरा इत्यस्य सङ्ग्रहः। प्रकृतसूत्रभाष्य एवैतौ प्रयोगौ द्रष्टव्यौ। *न ङीषिति। "जातेः" (पा०सू० ४-१-६३) इति ङीष् न। तत्राप्यवधारणस्य विवक्षितत्वात्। *एकदेशिनोरुक्तिरिति। एकदेशित्वञ्चोक्तार्थानभिज्ञत्वात्। टाबपीतिशङ्काकर्त्तुस्तस्या उक्तेऽपि भवन्त्येते टाबादयः स्वार्थिकाष्टावादय इति समाधानोत्तरन्ङीवपि तर्हि प्राप्नोतीतिशङ्कस्य चेत्यर्थः। *छान्दसत्वादिति। एवञ्च युधिष्ठिरः श्रेष्ठतमः कुरूणामित्यादिप्रयोगा लोकेऽसाधव एव। द्रव्यवयवकसमुदाये एकस्य प्रकर्षविवक्षायान्तरबीयसुनोर्वक्ष्यमाणत्वाद्बहूनामेकस्य प्रकर्षविवक्षायामस्य सूत्रस्य प्रवृत्तिरत एव मूलेऽयमेषामिति बहुवचनोपादानं कृतम्।

तिङश्च (पा० सू० ५-३-५६)। अत्र मूले तमबित्येवोक्तम्। यद्यपि पूर्वसूत्रे तमबिष्ठनावुक्तौ तथाऽप्यजादी गुणवचनादेवेतिनियमादिष्ठन्नोक्तः।

किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे (पा० सू० ५-४-११)। इहाव्ययान्तशब्दानान्द्वन्द्वसमासोत्तराङ्किमेत्तिङव्ययाद्ध इति समासस्तेन यत्सिद्धं तदाह-*किमादीति। ननु पूर्वाह्णशब्दस्य द्रव्यवाचकत्वात्कथम्पूर्वाह्णेतरामित्यत्रामुप्रत्यय इत्यत आह-*पूर्वाह्ण इति। *तत्तत्क्रियाविशिष्टस्य=घटादिजन्यद्रव्य-

स्यैव तत्तत्कालव्यवहारनियामकत्वान्न शुद्धद्रव्यप्रकर्षः। उच्चैस्तम इति। उच्चैःशब्दोऽत्रोच्चत्वगुणवत्परः*। द्रव्यस्य स्वतः प्रकर्षाभावेऽपि द्रव्यनिष्ठ-गुणादिप्रकर्ष एव द्रव्यप्रकर्ष इति बोद्ध्यम्। तदुक्तं तमप्सूत्रे कैयटेन "द्रव्यप्रकर्ष इति निषेध उपचरितगुणक्रियागतप्रकर्ष एव द्रव्यविषयो द्रष्ट-व्यः" इति। *उच्चैस्तमामित्यत्र त्वधिकरणशक्तिप्रधान उच्चैःशब्दस्तत्रो-च्चत्वप्रकर्षेण तदाश्रयस्य प्रकर्षेऽपि तस्य न द्रव्यत्वम्। क्रियाकारकभावरूप-सम्बन्धविशेषणत्वेनैव तस्य भानेनाप्रधानतया सर्वनामपरामर्शायोग्यत्वात् *शक्त्या विशिष्टस्य सर्वनाम्ना परामर्शाभावाच्च। *अत एव तदादिशब्देभ्यस्त-त्सादिभक्तयः। यत्किञ्चिदिदं*तदितिसर्वनामपरामर्शयोग्यं वस्तु तत् द्रव्यत्वेन विवक्षितमिति तमप्सूत्रे कैयटोक्तेः। इदं पूर्वाह्णतमामित्यत्राऽपि बोद्ध्यम्।

द्विवचनविभज्यो (पा० सू० ५-३-५७)। द्व्यर्थप्रतिपादके

---

स्येति शेषः। *गुणवत्पर इति। अधिकरणशक्तिप्रधानस्यापि वृत्तिविषये शक्ति-मत्परत्वात्। ननु सर्वत्र धर्मप्रकर्षमादाय द्रव्यप्रकर्षसम्भवात्सूत्रोदाहरणास-म्भव इत्यत आह-*उच्चैस्तमामित्यत्रेति। ननु यस्य क्रियाकारकभावसम्बन्धवि शेषणत्वन्तस्य चेन्न द्रव्यत्वन्तदा तं घटम्पश्येत्यत्र घटस्य परामर्शो न स्यात्। घटकर्मकन्दर्शनमिति बोधादत आह-*शक्त्या विशिष्टस्येति। घटमित्यत्र केव-लघटस्यैव तच्छब्देन परामर्शो न तु क्रियानिरूपितकर्मत्वशक्त्या विशिष्टस्य। उच्चैरादिशब्देभ्यस्तु अधिकरणत्वशक्तिसम्बद्धस्यैव प्रतीत्या न तस्य सर्वनाम-परामर्शयोग्यतेति भावः। *अत एव=क्रियाकारकभावसम्बन्धविशेषणत्वादेव। *इदम्=पूर्वाह्णशब्दस्य प्रकृते पूर्वाह्णनिष्ठाधिकरणत्वप्रतिपादकतया तादृशवि-शिष्टार्थप्रतिपादकस्याद्रव्यार्थकत्वाद्भवत्यामुप्रत्ययः। आम्वित्यत्रोकारोच्चारणं मकारस्येत्संज्ञाऽभावाय। अत एव "ह्रस्वनद्यापः"(पा० सू० ७-१-५४) इत्यत्रास्य ग्रहणाभावः। सानुबन्धकत्वात्। अन्यथा परत्वाद् "यस्य"(पा० सू० ६-४-१४८) इति लोपं बाधित्वोच्चैस्तरामित्यत्र नुट् स्यात। न चामुप्रत्ययो ह्रस्वाकारा-दिरेवास्तु यस्येति लोपस्तु न भविष्यत्यकारोच्चारणसामर्थ्यादिति वाच्यम्। अकारानुच्चारणे मकारमात्रस्य प्रत्ययतया तमपस्त्वनुदात्तत्वेनान्तानुदात्तत्वा-पत्तेः। अकारोच्चारणे तु तस्य प्रत्ययाद्युदात्तत्वेनोदात्ततया तेनैकादेशस्यो-दात्तत्वेनान्तोदात्तत्वस्य स्पष्टतया क्वाकारोच्चारणसामर्थ्यमिति यस्येति लोपाप-त्तेर्दुर्वारत्वात्।

द्विवचनविभज्योपपदे (पा० सू० ५-३-५७) अत्र द्विवचनशब्दो न पारिभाषिकार्थस्य प्रतिपादकः किन्तु द्वयोर्वचनन्द्विवचनम्, उच्यतेऽनेन तद् वचनमित्यर्थकल्पनया द्व्यर्थप्रतिपादकपरः। विभज्यशब्दः कर्मव्युत्पत्त्या वि-

विभजनीये चोपपदे *द्वयोर्मध्ये ऽन्यतरापेक्षातिशयविशिष्टस्वार्थवृत्तेर्वि*भाग-प्रयोजकीभूतधर्मवाचकाच्च स्वार्थे प्रत्यय इत्यर्थः। विभज्यांशे उपपदशब्दबोधितसुबन्तत्वं प्रतिपदोक्तत्वात् "पञ्चमी विभक्ते" (पा० सू० २-३-४२) इति विहितपञ्चम्येवेति बोद्ध्यम्। *तेन साङ्काश्यकानां पाटलिपुत्रकाणाञ्च पाटलिपुत्रका आढ्यतमा इत्यत्र न तरप्। पञ्चमी त्वत्र न, विभागस्यैवाभावात्। चेन समूहरूपतया विभागस्यापि सत्त्वात्। *"एते खल्वपि नैर्देशिकानां वार्ततरकाः" इति "तस्मिन्"(पा० सू० १-१-६६) इति सूत्रे भाष्ये प्रयोगात् "बहुषु पुत्रेष्वेतदुपपन्नं भवति अयं मे ज्येष्ठोऽयं मध्यमोऽयं कनीयान्" इत्याद्यन्तवत्सूत्रस्थभाष्यप्रयोगाच्चाऽद्व्यर्थोपपदेऽपीमौ साधू। सूत्रे द्विवचनेति तूदाहरणमात्रमिति केचित्। *परे तु नैर्देशिकानां मध्येऽन्येभ्यः शब्देभ्यः इत्यध्याहृत्य विभज्योपपदे तरप्, आभ्यामित्यध्याहृत्यान्त्ये ईयसुन्। *अत एव "न खल्वपि बहूनां प्रकर्षे तरपा भवितव्यम्। केन तर्हि ?, तमपा" इति तमप्सूत्रे भाष्ये उक्तमित्याहुः। नतरामित्यादौ प्रतियोग्यसमानाधिकरणत्वरूपात्यन्तिकत्वेऽभावगते प्रकर्षे तरप्। प्रवृत्तिनिमित्तगते प्रकर्षे तरबादिरिति तु प्रकृत्यर्थप्रकर्षासंभवविषयम्। एवं द्योत्यार्थप्रकर्षेऽपि द्योतकात्तरप्, यथा *नितराङ्गच्छतीत्यादौ।

---

भजनीयपरः। निपातनाद्यत्। एवञ्च द्व्यर्थप्रतिपादके विभज्योपपदे च ङ्याप्प्रातिपदिकान्तिङन्ताच्च तरबीयसुनौ स्त इत्यर्थः फलितः। तेन द्वयोरेकस्येति लब्धं, तदाह-*द्वयोर्मध्ये इति। विभक्तव्यवाचके चोपपदे कस्मात्प्रत्यय इत्याकाङ्क्षायाम्प्रत्यासत्त्या यल्लब्धं तदाह-* विभागप्रयोजकीभूतेति। *तेन=प्रतिपदोक्तविभक्त्या सुबन्तत्वम्प्रकृते उपपदत्वमित्यर्थाश्रयणेन। ननु यत्र बहूनाम्मध्ये एकस्य प्रकर्षस्तत्रापि तरब् दृश्यते तस्य का गतिरत आह-*एते खल्वपीति। भाष्यप्रयोगमात्रत्वात्साधुत्वकल्पनेऽपि पाणिनीयन्यासेनैतयोरनुपपादनेन न्यूनत्वं दुर्वारमेवेत्यस्वरसः केचिदित्युक्त्या सूचितः। सूत्रेणैव तयोः साधुत्वमुपपादयताम्मतमाह-*परे त्विति। स्वकल्पनाया भाष्याविरुद्धत्वमाह-*अत एवेति। *नितराङ्गच्छतीति। अत्र निशब्दः क्रियागतनिश्चितत्वद्योतकस्तद्घटकनिश्चयगतोऽप्रामाण्यज्ञानानास्कन्दितत्वरूपः प्रामाण्यनिश्चयविषयत्वरूपो वा प्रकर्षो बोध्यः। नन्वेक एव धर्मी यत्र विवक्षितस्तत्र परुद्भवान्पटुः। एषमस्तु पटुतर इत्यादि, तत्र कथन्तरप् ?, द्व्यर्थप्रतिपादकस्य विभज्यस्य चोपपदस्याभावादिति चेन्न। एकस्यापि धर्मिणो गुणभेदेन भेदकल्पनयाऽनुयोगिगतगुणे प्रतियोगिगतगुणापेक्षया प्रकर्षविवक्षया तरप्स्वीकारात्। गुणभेदेन भेदव्यवहारो लोके सुप्रसिद्ध एव। यथा पूर्वपरिणीता भार्या स्त्र्यन्तरपरिग्रहे भर्त्रा कृते पति

तुश्छन्दसि ( पा० सू० ५-३-५९ ) ॥ पूर्वनियमव्यावर्तितप्रतिप्रसवत्वं स्फुटं बोधयितुं छान्दसमप्यत्रोपन्यस्तम् ।

तुरिष्ठे ( पा० सू० ६-४-१५४ ) ॥ *इमनिज्ग्रहणमुत्तरार्थं, न चेत एव ज्ञापकादिष्ठन्नीयसुनोः सिद्धौ "तुश्छन्दसि" (पा०सू०५-३-५९) इति व्यर्थमिति वाच्यम् । इमनिचोऽपि कल्पनापत्तेः* । लोकेऽपीष्ठनादेरापत्तेश्च* । *यद्यपि निमित्तस्य छान्दसत्वादिदं छान्दसं तथापि *तस्यैवेहोपन्यासादिदमप्यत्रोक्तम् । लोप इति । *स च वचनसामर्थ्यात्सर्वादेशः । अन्त्यस्य टेरित्यनेन सिद्धेः ।

प्रशस्य ( पा० सू० ५-३-६० ) ॥ अजादीत्यनुवृत्तं सप्तम्या विपरिणम्यत इत्याह-अजाद्योरिति । *प्रशस्यत्वं गुण इत्यजादी । *तस्य क्रियात्वे ऽप्यत एव ज्ञापकात्तौ ।

प्रकृत्यैकाच् ( पा० सू० ६-४-१६३ ) ॥ इष्ठादिष्विति । *तेन *ज्ञो देवताऽस्य ज्ञः स्थालीपाक इत्यत्र नेदम् । अयञ्च प्रकृतिभावाल्लोपो "नस्तद्धिते" ( पा० सू० ६-४-१४४ ) "यस्येति च" ( पा० सू० ६-४-१४८ ) "टेः"( पा० सू० ६-४-१५५ ) इत्यादेरेतत्प्रकरणस्थलो-

---

प्रति वाक्ति अन्य एवासि त्वमिति ।

तुरिष्ठेमेयस्सु ( पा० सू० ६-४-१५४ ) । ननु तृन्तृजन्तादिमनिज्विधायकाभावादिमनिज्ग्रहणमनर्थकमत आह-*इमनिजिति । *कल्पनापत्तेरिति । एकसूत्रोपात्तत्वाविशेषादिति शेषः । *आपत्तेश्चेति । सूत्रारम्भे तु छन्दस्येव सूत्रेणेष्ठन्नीयसुनौ भवत इति भावः । ननु छन्दस्येव चेत् तृन्नन्तात् तृजन्तात्प्रत्ययस्तदा लोपविधायकस्य सूत्रस्य छान्दसप्रयोगसाधकतया वैदिकप्रकरण एव लेखनमुचितमिति शङ्कते-*यद्यपीति । *तस्यैव=निमित्तविधायकतुश्छन्दसीत्यस्यैव । णाविष्ठवदित्यतिदेशेनास्य लौकिकेऽपि प्रयोगे प्रवृत्तेश्च । ननु "टेः" ( पा० सू० ६-४-१५५ ) इति सूत्रे "ढो ढे लोपः" ( पा० सू० ८-३-१३ ) इत्यतो लोपपदानुवृत्त्याऽनेन चेल्लोपस्तदाऽलोन्त्यपरिभाषयाऽन्त्यस्यैव लोपः स्यादत आह-*स च वचनसामर्थ्यादिति । न च "बिल्वकादिभ्यः" (पा०सू०६-४-१५३) इति सूत्राल्लुक्पदानुवृत्त्या सर्वादेशत्वे सिद्धे वचनसामर्थ्यकल्पनमयुक्तमिति वाच्यम् । तत्सूत्रस्थलुक्पदस्यास्वरितत्वात् । अत एव टेरित्युत्तरसूत्रे लोपपदस्यैव सम्बन्धो दृश्यते । प्रशस्यत्वम्=प्रशंसाविषयत्वम् । प्रशंसा चोत्कृष्टगुणप्रकारको निश्चयः । एवञ्च विषयताया जातिक्रियासंज्ञाव्यतिरिक्तत्वात्प्रशस्यत्वङ्गुण इत्याशयेनाह-*प्रशस्यत्वमिति । ननु प्रशस्यशब्दस्य धातुजत्वात्प्रशस्यत्वं क्रियैवेत्यत आह-*तस्येति । *तेन=इष्ठादिसम्बन्धेन । *ज्ञ इति । जानातीति ज्ञः ।

एमात्रस्येति भाष्ये स्पष्टम्* ॥

अन्तिकबा ( पा० सू० ५-३-६३ ) ॥ अत्र नेदसाधौ हल-

---

ज्ञः स्थालीपाक इत्यत्र ज्ञशब्दात् "साऽस्य देवता" ( पा० सू० ४—२—२४ ) इत्यर्थेऽणि "यस्य" ( पा० सू० ६—४—१४८ ) इति लोपः । *भाष्ये स्पष्टमिति । तत्र हि "प्रकृत्यैकाजिति किमिष्ठेमेयस्सु प्रकृतिभाव आहोस्विदविशेषेण इति विकल्प्य द्वितीयपक्षे दूषणमुक्तम् शौवमिति । शुनो विकारेऽवयवे च प्राण्यञि कृते "नस्तद्धिते" (पा० सू० ६—४—१४४) इति टिलोपो न प्राप्नोतीति कैयटः । तथा अधुना इत्यत्रेदम्शब्दादधुना प्रत्यये इदम इशादेशस्तस्य "यस्य" ( पा० सू० ६-४-१४८ ) इति लोपो न प्राप्नोति । तथा द्रव्यमित्यत्र द्रोर्विकार इत्यर्थे "द्रोश्च"( पा० सू० ४-३-१६१ ) इति यत्प्रत्यये ओर्गुणो न प्राप्नोतीति दूषणमभिधाय यस्येत्यादौ प्रकृतिभाव इति सिद्धान्त्येकदेशिनोक्तम् । अत्रादिशब्दः प्रकारे । लोपविधायकत्वेन च सादृश्यम् । यस्य यस्येत्यादिना लोपप्राप्तिस्तत्र प्रकृतिभावः । ओर्गुणस्तु तेभ्यः पूर्व इति प्रकृतिभावाभावः । एवमपि श्रिये हितः श्रीयः, ज्ञो देवताऽस्य स्थालीपाकस्य ज्ञः स्थालीपाक इत्यत्र प्राप्नोति । तस्मादिष्ठेमेयस्सु प्रकृतिभाव इति सिद्धान्तिनोक्तम् । एतेन प्रघट्टकेन "प्रकृत्यैकाच्" ( पा० सू० ६-४-१६३ ) इति सूत्रस्य स्वविषयप्राप्तसर्वलोपबाधकत्वं स्पष्टतयैव बोध्यते । अत एव कनयति कनिष्ठ इत्यादौ "अल्लोपोऽनः" ( पा० सू० ६-४-१३४ ) इति लोपो न । न च कनादेशेऽकारोच्चारणसामर्थ्यादल्लोपाभावः । एवमप्यत्रैव नस्तद्धित इत्यस्यापत्तेः । अकारोच्चारणवट्टिसंज्ञकस्यान्शब्दस्योच्चारणसामर्थ्याट्टिलोपाभाव इति तु वक्तुमशक्यम् । सर्वादेशत्वसम्पादनेन चारितार्थ्यात् । किञ्च "इनण्यनपत्ये" ( पा० सू० ६-४-१६४ ) इत्यादिसूत्रेषु प्रकृत्या इत्यत एवानुवर्त्तते तैश्च न टेरित्यस्यैव बाधकः प्रकृतिभावो विधीयते किन्तु लोपमात्रस्य बाधक इत्यर्थाधिकारानुरोधात्प्रकृत्यैकाजिति सूत्रस्यापि लोपमात्रबाधकत्वम् । किञ्च यदि "अनन्तरस्य" इतिन्यायेन टेरित्यस्यैवायम्बाधकः स्यात्तदा नैकाजित्येव ब्रूयात्तथा तु नोक्तमतोऽपि सर्वलोपबाधकत्वम् । अस्य प्रकृतिभावस्य सर्वलोपबाधकत्वादेवोपक्रमेऽविशेषेणेति पक्षे शौवमित्यत्र नस्तद्धित इति टिलोपो नेत्युक्तम् । ननु प्रकृत्यैकाजितिसूत्रस्य श्रेष्ठः श्रेयानिति रूपन्त्वन्यथासिद्धम् । श्रादेशेऽकारोच्चारणसामर्थ्यादेव लोपाभावस्य सिद्धेः । न च स्रजीयान्, स्रुचीयानित्यत्र "विन्मतोर्लुक्" ( पा० सू० ५-३-६५) इति लुकि कृते टिलोपो मा भूदिति प्रकृतिभावविधानमावश्यकमिति वाच्यम् । येन नाप्राप्तिन्यायेन विन्मतोर्लुकष्टिलोपबाधकतया तस्मिन् कृते टिलोपाभावस्य सिद्धेरिति चेन्न । कनिष्ठः कनीयानिति रूपसिद्ध्यर्थमस्यावश्यकत्वात् । न चात्राप्युच्चारणसामर्थ्यं वक्तुं शक्यम् । सर्वादेशसम्पादकत्वेन चरितार्थत्वात् । वस्तुतस्तु नाप्राप्ते टिलोपे नेदाद्यादेशा आरभ्यमाणाः स्वविषये टिलोपस्य बाधका एवेति तेषु कृतेषु टिलोपो न भविष्यतीति नास्य सूत्रस्य

न्तावेव । *अन्यथा "प्रकृत्यैकाच्" (पा० सू० ६-४-१६३) इति सूत्रस्थ-भाष्योक्तरीत्या श्रेष्ठ इत्यादावुच्चारणसामर्थ्यादकारस्य लोपाभाववदत्रापि तदभावापत्तौ नेदिष्ठ इत्याद्यसिद्धेः, उत्तरसूत्रस्थकन्साहचर्याच्च* । कनिष्ठ इत्यादौ "टेः" ( पा० सू० ६-४-१५५ ) इति लोपस्तु न प्रकृतिभावात् कनस्त*दपवादत्वाच्च । "नस्तद्धिते" (पा० सू० ६-४-१४४) इत्यपि न । अन उच्चारणसामर्थ्यात् । सर्वादेशस्तु केत्यादेशेनापि सिद्ध इति बोध्यम् ।

स्थूलदूर (पा० सू० ६-४-१५६) ॥ यणादीति *लुप्तषष्ठीकम् । परमिति षष्ठ्यर्थे प्रथमा । *पूर्वत्वेऽवधिस्तु यणादिरेव । यणादीति बहुव्रीहिः । इक्परिभाषया क्षिप्रक्षुद्रयोः पकारदकारयोर्न गुणः । युवशब्दस्या*गुणवचनत्वादत एव ज्ञापकादजादी । *अन्ये तु गुणवचना एव । न च क्षिप्रक्षुद्रावगुणवचनौ । इमनिचि तद्ग्रहणस्य चारितार्थ्यात्तयोरिष्ठनाद्यनापत्तौ क्षेपिष्ठ इत्याद्यसिद्धेः* । वस्तुतो युवशब्दो गुणवचनोऽपीति "आकडारसूत्र" (पा० सू० १-४-१) "जातेरस्त्री" (पा० सू० ४-१-६३) इति सूत्रभाष्याभ्यां लभ्यते* ।

---

प्रयोजनम् । नस्तद्धित इत्येतद्बाधकतया कनिष्ठः कनीयानित्यर्थमपि न । अन उच्चारणसामर्थ्यात् । सर्वादेशत्वन्तु केत्यादेशेन चरितार्थमित्याहुः ।

अन्तिकबाढयोः ( पा० सू० ५-३-६३ ) । *अन्यथा=नेदसाधयोरादेशयोरदन्तत्वे । *कन्साहचर्याच्चेति । उत्तरसूत्रस्य यथा हलन्तादेशविधायकत्वन्तथा तत्साहश्यादस्यापि हलन्तादेशविधायकत्वम् । इष्ठादिनिमित्तकत्वेन च सादृश्यम् । *तदपवादत्वात्=टिलोपापवादत्वात् । *लुप्तषष्ठीकमित्यादि । तथा च यणादेः परस्य लोप इति वाक्यार्थः । पूर्वस्येत्यत्राकाङ्क्षाशान्त्यर्थमाह-*पूर्वत्व इति । *अगुणवचनत्वादिति । आकृतिग्रहणेतिलक्षणेन जातिवाचकत्वसम्भवादिति भावः । अपर आहेत्यादिनोक्तं यत्प्रादुर्भावविनाशाभ्यामित्यादिलक्षणलक्षितजातिवाचकत्वन्तन्नास्तीत्याशयेनाह-*अन्ये त्विति । *इत्याद्यसिद्धेरिति । अतो गुणवचनत्वन्तयोः स्वीकार्यमिति भावः । *लभ्यते इति । आद्ये गुणवचनश्चेत्यनेन प्रातिपदिकमात्रस्य गुणवचनसंज्ञां विधाय तदनन्तरं समासादिसंज्ञायास्तद्बाधकतयोक्तत्वेन यत्र तासाम्प्राप्तिस्तत्र न गुणवचनत्वमन्यत्र त्वस्त्येवेति सूचितम् । अन्त्ये प्रादुर्भावविनाशाभ्यामित्यनेन जातेर्लक्षणसूचनादस्यास्त्येव गुणवचनत्वम् । वस्तुतस्तज्जातिलक्षणम्भाष्यकृतो नाभिप्रेतम् । अपर आहेत्यनेनापरितोषस्य ध्वननात् । किन्त्वाकृतिग्रहणा इत्याद्येव । एवञ्च युवत्वञ्जातिरेव । अत एवोक्तं गुणवचनोऽपीति । अत एव युवतितरेत्यत्र " जातेश्च" ( पा०सू० ६-३-४१ ) इति पुंवत्त्वनिषेधसिद्धिः ।

प्रियस्थिर (पा० सू० ६-४-१५७) ॥ *बंहीत्यादाविकार उच्चारणार्थः । अन्यथाऽऽभीयासिद्धत्वादिकारोच्चारणसामर्थ्याद्वा प्रादाविव टिलोपानापत्त्या बंहिष्ठ इत्याद्यसिद्धेः । *वरादिसाहचर्याद् वृन्दो हलन्तः । तेन वृन्दिष्ठ इति, प्रस्थस्फास्तु प्रेष्ठ इत्यादेर्भाष्ये उदाहृतत्वेनादन्ता एव । प्रेष्ठ इत्यादावादेशस्यासिद्धत्वात्प्रकृतिभावाच्च *तन्निमित्तकटिलोपो न । स्थानिनिमित्तकोऽपि न । प्राद्यादेशानां टिलोपापवादत्वात् ।

बहोर्लो (पा० सू० ६-४-१५८) ॥ इष्ठेन उत्तरसूत्रेण *कार्यान्तरस्य विधानात्तस्येह न ग्रहणमित्याशयेनाह—इमे यसोरिति । लोपश्च "आदेः परस्य"(पा० सू० १-१-५४) इत्यादेः । भूभावस्यासिद्धत्वाद् भूयानित्यत्रौर्गुणो न । दीर्घोच्चारणन्तु भूमेत्यादौ सावकाशम् ।

विन्मतोर्लुक् (पा० सू० ५-३-६५) ॥ अजादी इत्यनुवृत्तेराह—इष्ठेयसोरिति । *अत एव ज्ञापकादाभ्यामजादी । न च विन्विषये मतुप्सत्त्वेन तल्लुकैव सिद्धौ *विन्ग्रहणं व्यर्थम्, विन्नन्तास्यगुणवचनत्वान्नेष्ठानिति वाच्यम् । तत्करोतीत्यादिना णिचीष्ठवद्भावेन विनो लुगर्थं तत्सत्त्वात् । "बिल्वकादिभ्यश्छस्य" ( पा० सू० ६-४-१५३ ) इत्युत्तरमेव "विन्मतोरिष्ठेमेयःसु" इति नोक्तम् । तत्रत्यलुक्पदस्यास्वरितत्वात् । अत एव तुरित्यत्र लोप इत्येव व्याख्यातम्* ॥

प्रशसायां रू (पा० सू० ५-३-६६) ॥ प्रशंसाविशिष्टेऽर्थे वर्तमानात्स्वार्थे रूपबित्यर्थः । प्रशंसा चात्र परिपूर्णत्वरूपवैस्पष्ट्यरूपा *प्रकृत्यर्थतावच्छेदकधर्मनिष्ठा *तत्समानाधिकरणधर्मनिष्ठा वा प्रकृत्यर्थे आरोप्यते । तेन चोररूपोऽयं यदक्ष्णोरञ्जनं हरेदिति सिद्धम् । तद्विशिष्टश्च प्रशस्य

---

प्रियस्थिरास्फिरोरु (पा०सू० ६-४-१५७) । *बंहीत्यादाविति । आदिना वर्षीत्यस्य द्राघीत्यस्य च परिग्रहः । वृन्दशब्दे ऽदन्तत्वभ्रमनिवारणायाह—*वरादिसाहचर्यादिति । *तन्निमित्तकः =आदेशनिमित्तकः । कार्यिणोऽपि कार्यप्राप्तिपूर्वकालिकत्वेन निमित्तत्वव्यवहारः । *कार्यान्तरस्य=लोपस्य । *अत एव ज्ञापकादिति । अन्यथा अस्य गुणवचनत्वाभावान्न स्यात् । भाष्यरीत्या गुणवचनसंज्ञाया अत्राप्राप्तेः । *विन्ग्रहणं व्यर्थमितीति । न च विन्नन्ताद्यदेष्ठन् तदा लुगर्थं विन्ग्रहणमिति वाच्यम् । विन्नन्ताद्यदाऽत्र सूत्रे विन्ग्रहणन्तदाऽजादिः प्रत्ययो ज्ञापकाज्ज्ञायते विन्ग्रहणाभावे तु स नैव स्यादिति भावः । *व्याख्यातमिति । प्रागिति शेषः । *प्रकृत्यर्थतावच्छेदकधर्मनिष्ठेति । यथा पटुरूपेत्यत्र । *तत्समानाधिकरणेति । प्रकृत्यर्थतावच्छेदकधर्मसमानाधिकरणेत्यर्थः । यथा चो-

एव । न प्रशंसितानभिधानात् । *प्राशस्त्यं प्रतियोगिनिरपेक्षमतिशायनन्तु तत्सापेक्षमिति न तदनुवृत्त्या निर्वाहः ॥

ईषदसमा (पा० सू० ५-३-६७) ॥ ईषदसमाप्तिविशिष्टेऽर्थे वर्तमानात्प्रातिपदिकादित्यर्थः । स्वार्थिकानां प्रकृतितो लिङ्गवचनाङ्गीकारात् बहुगुडो द्राक्षा वृषभकल्प इयङ्गौरित्यादि सिद्धम् । गुडकल्पा द्राक्षेति तु क्वचित्प्रकृतितो लिङ्गवचनातिक्रमात्सिद्धम् । "णचः स्त्रियाम्" (पा० सू० ५-४-१४) इति* सूत्रे स्त्रीग्रहणात्तदतिक्रमः । अन्यथा णचः स्त्रियां विधानात् अञश्च स्वार्थिकत्वात् सिद्धौ किं तेन । गुडशब्दस्य सादृश्याद् द्राक्षायां वृत्तिस्तत्र सादृश्यप्रयोजकधर्मस्य माधुर्यादेरीषदसमाप्तिः । यन्निरूपितसादृश्यप्रयोजकधर्मस्येषदसमाप्तिस्तद्वाचकाच्च कल्पादयः स्वभावात्* । एवञ्च पूर्णपटुः कश्चित्तत्सादृश्यादन्यः पटुः पटुकल्पः प्रचुरसादृश्यञ्च पटुकल्पशब्दगम्यमिति सर्वत्रोपमा गम्या द्रष्टव्या ।

विभाषासु (पा० सू० ५-३-६८) ॥ *विभाषाग्रहणं प्रत्ययेन सम्बध्यते कल्पबादिसमावेशार्थम् । कल्पादयस्तिङन्तेषु सावकाशाः । वाक्यार्थन्तु न तत्* । तस्येष्टत्वे महाविभाषयैव सिद्धेः, *अनिष्टत्वे तु न तदर्थता

---

रूप इत्यत्र । अत्र प्रकृत्यर्थतावच्छेदकश्चौरत्वन्तच्च स्थेयकर्तृत्वरूपन्तत्समानाधिकरणो धर्मस्तद्विषये कुशलता तस्याम्पूर्णता प्रतीयते । तेनान्तर्हितवस्त्वपहारेऽपि सामर्थ्यङ्गम्यते । ननु प्रशंसाया अतिशायनानातिरिक्तत्वात् "अतिशायने" ( पा०सू०५-३-५५ ) इति सूत्रानन्तरं रूपबितिसूत्रं कार्यमतिशायनपदञ्चानुवर्त्तनीयमत आह-*प्राशस्त्यमित्यादि । पचतिरूपमित्यत्र क्रियाप्रधानात्तिङन्ताद्यत्र रूपप् तत्र तु प्रधानीभूतक्रियागतमेव पूर्णत्वङ्गम्यत इति रूपबन्तात्प्रथमैकवचनमेव सामान्ये नपुंसकत्वमेव च । पचतिरूपम्पश्यतीत्यादौ तु द्वितीयादिकमपीति बोध्यम् ।

ईषदसमाप्तौ ( पा०सू०५-३-६७ ) । समाप्तिः=पदार्थानां सम्पूर्णता । ईषदसमाप्तिश्च किञ्चिन्न्यूनत्वविशिष्टा पूर्णता । स्वार्थिकानाम्प्रकृतितो लिङ्गवचनातिक्रमे ज्ञापकमाह-*स्त्रियामितीति । *स्वभावात्=शब्दशक्तिस्वभावात् । न हि द्राक्षाकल्प इत्युक्ते द्राक्षागतगुणस्येषदसमाप्तिर्गम्यते । अत एव पटुकल्पो देवदत्तो गुडकल्पा द्राक्षेत्यादावभेदान्वयात्समानविभक्तिकत्वम् । उपमानोपमेययोः सामानाधिकरण्यस्य प्रसिद्धत्वात् । तिङन्तादप्येते भवन्ति । तिङश्चेत्यस्य सम्बन्धात् ।

विभाषा सुपो बहुच् ( पा०सू० ५-३-६८ ) । सुपो विशिष्य विधानादस्य कल्पबादिबाधकत्वमितिशङ्कावारणायाह-*विभाषाग्रहणमिति । *न तत्=

तस्येति बोद्ध्यम् । सुब्ग्रहणन्तिङश्चेत्यस्यात्रासम्बन्धाय । *उत्तरत्र त्वनुवर्तत एव । पुरस्तादिति प्रत्ययपरत्वनिवृत्तये, तुग्रहणं पुरस्तादित्यस्यावृत्त्या पुरस्ताद्यादृशे लिङ्गवचने तादृशे एवेत्यर्थबोधनद्वारा स्वार्थिकानां प्रकृतितो लिङ्गाद्यतिक्रमे ज्ञापकम् । *वृत्तौ प्रागिवेत्येवकारस्तु सर्वं वाक्यं सावधारणमिति न्यायसिद्ध इति सर्वं भाष्ये स्पष्टम् ॥

प्रकारव (पा० सू० ५–३–६९) ॥ अत्र प्रकारो भेद एवेति जयादित्यः । सादृश्यं भेदश्चेत्युभयमपीति प्रकारे गुणवचनस्येत्यत्र वामनः । थाल् तु प्रकारमात्र इति । तत्रापि प्रकारवचने इत्येवोक्तेः *सोऽपि प्रकारवति न्याय्य इति चिन्त्यम् । किं च *तथा सति तथेत्यादेः स प्रकार इत्यादिरर्थः स्यात् । न च थाला जातीयरो बाधापत्तौ तज्जातीय इत्याद्यसिद्धिरिति वाच्यम् । "जात्यन्ताच्छ बन्धुनि" (पा० सू० ५–४–९) इत्यनेन सिद्ध्यष्टापत्तेः । वामनोक्तरीत्या द्वित्वेनेव थालाऽपि बाधो नेष्यते इति वक्तुं शक्यत्वाच्च । *अत एव *यथाजातीयक इत्यादिभाष्यप्रयोगाः सङ्गच्छन्ते ।

अव्ययस (पा०सू०५–३–७१) ॥ अयमप्यधिकारः । "अज्ञाते"

---

न विभाषाग्रहम । *अनिष्टत्वे त्विति । तुना अरुचिः सूचिता । वाक्यस्य प्रकृतसूत्रस्थभाष्यप्रामाण्यादिष्टत्वात् । एवं हि भाष्ये उक्तम्-"विभाषा ग्रहणाङ्किमर्थम् ? । विभाषा बहुज्यथा स्यात् । बहुचा मुक्ते वाक्यमपि यथा स्यात् । नैतदस्ति प्रयोजनम् । प्रकृता महाविभाषा, तया भविष्यति । इदन्तर्हि प्रयोजनङ्कल्पादयोऽपि यथा स्युः" इति । *उत्तरत्र त्विति । अत एव पचतकिजल्पतकीत्यादिप्रयोगसङ्गतिः । *ज्ञापकमिति । अत एव गुडकल्पा द्राक्षाः सन्तीति भवति । यत्र तु प्रकर्षस्येषदसमाप्तेश्च विवक्षा तत्र पूर्वविप्रतिषेधेन कल्पबादिषु कृतेष्वपि पुनः प्रसङ्गविज्ञानात्तरबादयो भवन्ति । पटुकल्पतरो मृदुकल्पतम इति । तमबादिभ्यः कल्पबादयो विप्रतिषेधेनेतिवार्त्तिकमत्र प्रमाणम् । *वृत्ताविति । मूले व्याख्यानवाक्ये । *सोऽपि=थालपि । *तथा सति=प्रकारमात्रे थाल्प्रत्यये सति । *अत एव=बाधाभावादेव । यथा जातयिक इति । यथाजातीयक इत्यस्य यत्सदृश इत्यर्थः । अत्र थालन्ताज्जातीयर्, ततः स्वार्थे कः ॥

## ॥ इत्यस्तात्याद्याः ॥

अव्ययसर्वनाम्नाम् ( पा० सू० ५–३–७१ ) । अत्र प्रागिवादित्यनुवर्त्तते । एवञ्चाव्ययादिभ्यः प्रागिवीयेऽर्थास्तेषु टेः प्रागकच् । कस्यायमपवादः । अज्ञाते (पा० सू० ५–३–७३) । अत्र "प्रागिवात्कः"(पा०सू० ५–३–७०) इति सूत्रात्केति "अव्ययसर्वनाम्नाम्"इति सूत्रञ्चानुवर्त्तते । बाध्यबाधकयोश्चै-

(पा०सू०५-३-७३) इत्यादौ तु *वाक्यभेदेनाकचोऽपि विधानं बोध्यम्।

कस्यायमिति। अज्ञातत्वाभिनयोऽयम्, अज्ञातोऽश्व इत्यपि विग्रहो बोध्यः। "अव्यय" (पा० सू० ५-३-७१) इति सूत्रे प्रातिपदिकादिति सुप् इति च सम्बध्यते। तेन क्वचित्सुबन्तावयवप्रातिपदिकटेर्ग्रहणं क्वचित्सुबन्तटेर्ग्रहणं; तत्र व्यवस्थामाह—ओकारेति। इदं वाक्यं युष्मदस्मच्छब्दमात्रविषयम्। भाष्ये तथैवोदाहरणात्। अन्येषान्तु सर्वनाम्नां प्रातिपदिकटेरेव प्रागकच्। *अत एव "कादेशः साकच्कार्थः—कः कौ के इत्येवमर्थम्" इति भाष्यं सङ्गच्छते। त्वयकेति। *यत्वादिषु कृतेऽकच्। पचतकीति। अकचो द्वितीयोऽकार उच्चारणार्थ इति भावः।

कुत्सिते (पा० सू० ५-३-७४)। *येन धर्मेण कुत्स्यते वस्तु तद्धर्मयुक्तार्थाभिधायिनः प्रत्ययः। अश्वक इत्यादौ धावनादेः सम्यगननुष्ठानात्कुत्सेति बोध्यम्। *कुत्सितगतकुत्सायां कुत्सितक इत्याद्यपि प्रकृष्टतम इतिवत्॥

संज्ञायाङ्कन् (पा० सू० ५-३-७५)॥ कुत्सादिहेतुकसञ्ज्ञाविषये कनित्यर्थः।

तद्युक्तादित्यस्य विवरणम्=अनुकम्पायुक्तादिति। धानका इति। धानाशब्दात्के "केऽणः" (पा० सू० ७-४-१३) इति ह्रस्वे कान्तात्टापि "अभाषितपुंस्काच्च" (पा०सू०७-३-४८) इति विकल्पात्पक्षे

---

कत्रासमावेशाद्वाक्यभेदेनोभयविधानम्। एवञ्चाज्ञातेऽर्थे वर्त्तमानात्प्रातिपदिकात्स्वार्थे को भवति अव्ययादिभ्यस्त्वज्ञातेऽर्थेऽकज् भवति स च टेः प्रागित्येवं वाक्यभेदेनोभयस्सम्भवति, तदाह—*वाक्यभेदेनेति। न च विशेषरूपेण ज्ञात एवार्थः प्रातिपदिकेन बोध्यत इति अज्ञातोऽश्व इत्यनुपपन्नमिति वाच्यम्। अश्वत्वेन ज्ञातोऽपि स्वामिविशेषसम्बन्धित्वेनाज्ञात इतिसामान्यविशेषधर्मभेदादुभयसम्भवात्। *अत एव=युष्मदस्मद्भिन्नप्रातिपदिकाविषये प्रातिपदिकस्यैव टेः प्रागकचः प्रवृत्तेरेव। *यत्वादिष्विति। अत्र सुबन्तस्य टेः प्रागकच्स्वाकारात्सुप्निमित्तककार्ये कृतेऽकच् प्रवर्त्तते। ननु कुत्सितोऽश्व इत्यनुपपन्नम्। जातेः कुत्साया असम्भवादत आह—*येन धर्मेणेति। *कुत्सितगतकुत्सायामिति। यथाऽश्वपदार्थगतधावनविवक्षायां तस्य कुत्सितत्वे विवक्षिते कुत्सितशब्दस्य प्रवृत्तिस्ततस्तस्य विपरीतपादविक्षेपादिकर्तृत्वविवक्षायाङ्कप्रत्ययः। कुत्सित इत्यस्य संज्ञायामितिसूत्रेऽनुवृत्तौ यादृशोऽर्थः सम्पद्यते तमाह—*कुत्सादिहेतुकेति।

इत्याभावः । पूर्वेणेति । अनुकम्पायास्तद्विषयत्वादिति भावः । परम्परा-सम्बन्धेऽपीति । आरम्भसामर्थ्यादिति भावः । अनुकम्प्यमोदनदानेना-राधयतीति धानादेर*नुकम्प्यमानसम्बन्धादनुकम्पायुक्तत्वमिति बोध्यम् ।

ठज्वेति । पक्षे कः । पूर्वसूत्रद्वयेन । अनुकम्पायां नीतौ चे-त्येतत् । व्याख्यानादिति भावः ॥

घनिलचौ (पा० सू० ५-३-७९) ॥ *पूर्वसूत्रेणैव ठच्कयोः सिद्धौ योगविभागादु*क्तविषयातिरिक्तेऽप्येतौ । तत्र *कठच्सिद्ध्यर्थश्च चकार इत्येके॥

ठाजादौ(पा०सू० ५-३-८३) । अस्मिन्निति । *बुद्धिसन्निधा-नादिति भावः । ननु ठग्रहणं व्यर्थम् इकादेशे अजादित्वात् सिद्धेरत आह-ठग्रहणमिति । *तस्मिन्हि वायुदत्तशब्दात् ठे निमित्वाट्ठावस्थायां लोपे कादेशे च वायुकसिद्धिः । अन्यथा मातिथिकवत्सन्निपातपरिभाषया कादे-शाभावे न सिद्ध्येदिति भावः । न च घचाश्चित्त्वेन ज्ञापकेनेकादेः सर्वतः *पूर्वं प्रवृत्तिरिति वाच्यम् । ज्ञापकसिद्धस्यासार्वत्रिकत्वात् । ठग्रहणसामर्थ्या-च्च *तस्यात्राप्रवृत्तेः । अत्रा*जिनान्तस्येत्यत्रत्योत्तरपदेति पृथक्पदं लुप्तविभ-क्तिकम् । तेन लोपपदे एकदेशे स्वरितत्वप्रतिज्ञानात् लोपपदमेवानुवर्तते । *अत एव "षषष्ठाजादिवचनात्सिद्धम्" इति सङ्गच्छते । अतिप्रसङ्गस्त्वनभिधाना-द्वारणीयः । *तेन सवित्रिय इत्यत्र "ठाजादौ" (पा० सू० ५-३-८३)इति लोपो न । उपेन्द्रदत्ते च चतुर्थादच इति लोपो न । विनापि प्रत्यय-मिति । *समुदायशक्तिग्रहकालेऽवयवानामपि शक्तिग्रहादवयवतोऽपि तद्बो-

---

*अनुकम्प्यमानसम्बन्धादात । अनुकम्पाविषयपुत्रादिसम्प्रदानकदान-कर्मत्वमिह सम्बन्धः ।

घनिलचौ च (पा० सू० ५-३-७९) । पूर्वसूत्र एवैतयोः पाठे कर्त्त-व्ये योगविभागेन कथनस्य फलमाह-*पूर्वसूत्र इति । *उक्ताविषयातिरिक्त इति । तथा चाज्ञाते कुत्सितेऽर्थे देवदत्तादीनामप्रवृत्तिस्तदापि कप्रत्ययष्ठच्प्र-त्ययो वा भवति, तदाह-*तत्र कठजिति । *बुद्धिसन्निधानादिति । "ठाजादौ" (पा० सू० ५-३-८३) इति सूत्रस्य ठच्प्रत्ययप्रकरणे पाठेनात्रैव यष्ठः पाठन-स्स एव शीघ्रमुपस्थितो भवतीति भावः । *तस्मिन्निति । ठग्रहणे कृते सती-त्यर्थः । *पूर्वमिति । तन्निमित्तककार्यात्पूर्वमित्यर्थः । *तस्य=इकादेशसम्बन्धि-पूर्वकालिकत्वस्य । ननु "अजिनान्त" (पा० सू० ५-३-८२) इतिसूत्रे लोपपद-स्य समासघटकतया कथन्तन्मात्रानुवृत्तिरत आह-*अजिनान्तेति । *अत एव=उत्तरपदरहितस्य लोपपदस्यानुवृत्तेरेव । *तेन=अनभिधानकल्पनेन । अ-नभिधाने प्रमाणन्तु विपरीतप्रयोगस्य भाष्येऽदर्शनमेव । विनापीत्यस्यान्यथा सिद्धिमाह—*समुदायेति । ननु विनाऽपीत्यस्य वचनस्यारम्भे पदस्यैव प्रयो-

धः। एवमेव प्रविश पिण्डीमित्यादौ वाक्यैकदेशाद्वाक्यार्थबोधः। अस्यैवा- नुवादकमिदम्। *वर्णमात्रप्रयोगस्तु न ततोऽबोधात्। उवर्णाल्ल। ल इति लोपस्य पूर्वाचार्यसञ्ज्ञा*। उवर्णात्परस्य लप्रत्ययस्य लोपः, स चादेः परस्य। तेन द्वितीयादच ऊर्ध्वलोपः सूत्रसिद्ध एवानूद्यते। *ऋवर्णादपीति। भाष्ये न दृष्टम्।

पूजार्थमिति। ठज्वेत्यतो वेत्यनुवृत्त्यैव सिद्धेरिति भावः। उपड इति। न च गुणे जायमानो लोपो नकारादेः स्यादिति *"नेन्द्रस्य"(पा० सू० ७-३-२२) इति ज्ञापकेन पूर्वोत्तरपदनिमित्तकार्यापेक्षयाऽन्तरङ्गस्या- प्येकादेशस्य पूर्वमप्रवृत्तेरिति भावः।

द्वितीयं सन्ध्यक्षरञ्चेदिति। *एकपदेऽपीदम्। सन्ध्यक्षराण्येचः। एकाक्षरेति। अच्सहितं व्यञ्जनमक्षरमेकाच्पूर्वपदानामित्यर्थः। द्वितीया- दच ऊर्ध्वमित्यनेन द्वितीयाज्विशिष्टस्य लोपाप्राप्तेरिदम्। वागाशीर्दत्त इति। वाच्याशीर्यस्य तेन दत्तो वाक्करणकशुभाशंसनेन दत्त इति वार्थः। *अत्रैकादेशपर्यन्ते तत्तत्सपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यतया न पूर्वं कु- त्वादिप्रवृत्तिः। *यद्यपि द्वितीयादच ऊर्ध्वभागस्य शीर्दत्तशब्दस्य लोपे यस्येति लोपे चान्ते इकूनिमित्तभसञ्ज्ञासत्त्वात्कुत्वाद्यप्रवृत्ताविदं सिद्ध्यति तथापि भत्वे आलोपस्य स्थानिवत्त्वादाकारान्तनिष्ठभत्वेन चान्तनिष्ठपद- त्वाव्याघातात्कुत्वजश्त्वयोर्वागिक इति स्यादिति भावः। न च साक्षात्पर- म्परया वा पदान्तविध्यादिप्रापकस्य प्रतिबन्धकस्य वा स्थानिवत्त्वस्य नि- षेध इति सिद्धान्ताङ्गत्वेऽपि स्थानिवत्त्वनिषेध इति वाच्यम्। षडिकेऽपि दोषापत्तेः। यदि तत्र द्वितीयादच ऊर्ध्वस्य लोपविधायकवचनप्रामाण्या-

---

गो न त्वपदस्य वर्णस्य प्रयोग इति नियमस्य सिद्धिर्वचनानारम्भे तु वर्णमा- त्रस्यापि पूर्वोत्तरपदभिन्नस्य प्रयोगः स्यादत आह-*वर्णमात्रेति। *पूर्वाचार्य- संज्ञेति। न चेत्यस्य लादेशविधानमेवास्त्विति वाच्यम्। चकारसङ्ग्राह्यस्य द्विती- यादच ऊर्ध्वस्याप्यादेशापत्तावनिष्टापत्तेः। एतदुत्तरं क्वचिद् ऋवर्णादपीति दृश्यते तस्याप्रामाणिकत्वमाह-*ऋवर्णादपीतीति। नन्वुपेन्द्रदत्तशब्दादडच्प्रत्यये द्वि- तीयादच एकारादूर्ध्वस्य लोपे एकारश्रवणापत्तिरत आह-*नेन्द्रस्येतीति। द्वितीयं सन्ध्यक्षरमित्यत्र सन्ध्यक्षरमिति सामान्यत एवोपात्तमतः सन्ध्य- क्षरसत्त्वमेव निमित्तं न तु तदादेः पदत्वमप्यपेक्षितमित्याशयेनाह-*एकपदे- ऽपीति। नन्वेवं वाक्शब्दस्य प्रत्यये ठचि परे कुत्वे कृते इकादेशे कृते- ऽपि ककारस्य श्रवणापत्तिरत आह-*अत्रैकादेशेति। कुत्वादीत्यादिना जश्त्वस्योपग्रहः। एकाक्षरेतिवार्त्तिकारम्भस्यावश्यकत्वम्बोधयितुमाह-*य-

द्भत्वे स्थानिवत्त्वं तर्हि प्रकृतेऽपि तुल्यम् । *एतेन पूर्वत्रासिद्धेति निषेधो जशिचेति निषेधश्च स्यादित्यपास्तम् । नपदान्तसूत्रोक्तरीत्या तयोः पदान्तजश्त्वेऽप्राप्तेश्च । उत्तरपदलोपे तु अज्झलादेशत्वेन स्थानिवत्त्वाभावात्तुल्यावधिकया भसञ्ज्ञया पदसञ्ज्ञा बाध्यते। *तत्र तद्धिताश्रयाया विभक्त्याश्रयायाश्च बाध्यसामान्यचिन्तयाऽपवादत्वाद् बाधः । यद्यपि विभक्त्याश्रयाऽन्तरङ्गा तथापि तद्बाध आकडारसूत्रे निरूपितः । षषष्ठेति । *स्पष्टश्चेदं "स्वादिषु" ( पा० सू० १-४-१७ ) इति सूत्रे भाष्ये ॥

शवलस्तु ( पा० सू० ५-३-८४ ) । एषामिति । शेवलादय आदिभूता येषान्तेषामित्यर्थः । एषामकृतसन्धीनां तृतीयादच इति वक्तव्यम् । *तेन सुपर्याशीर्दत्तशब्दाट्ठचि सुपरिक इति सिद्ध्यति ॥

अजिनान्त ( पा० सू० ५-३-८४ ) ॥ उत्तरपदग्रहणात्सर्वलोपोऽत्र ।

अल्पे (पा० सू० ५-३-८५) । अल्पत्वं महत्त्वप्रतिद्वन्द्वि । ह्रस्वत्वं दीर्घत्वप्रतिद्वन्द्वीति भेदः* ।

क्वचित्प्रकृतिलिङ्गातिक्रमस्यापि सत्त्वेनाह—कुटीर इति ।

कासूः शक्त्याख्यशस्त्रं, विकलवाक् च ॥

किंयत्तदो ( पा० सू० ५-३-९२ ) । द्वयोरेकस्य निर्धारणे गम्ये निर्धार्यमाणवाचिभ्यः किमादिभ्यो डतरजित्यर्थः । द्वयोरित्युपलक्षणम् । *अत एव बहुष्वासीनेषु कश्चित्कंचित्पृच्छति कतरो देवदत्त इति "प्रत्ययः"(पा० सू० ३-१-१) इति सूत्रस्थभाष्यप्रयोगः सङ्गच्छते । एतद् ध्वनयितुमेव सूत्रे एकग्रहणम् । *द्वयोरिति निर्धारणषष्ठी *व्याख्यानादेव भविष्यतीत्यलम् । अत्र निर्धारणं *न प्रत्ययार्थः । तं विनापि प्रतीयमान-

---

द्यपीत्यादि । *एतेन=पूर्वोक्तव्याख्यानेन । द्विविधस्यापि पदत्वस्य बाधमाह-*तत्रेति । *स्पष्टश्चेदमिति । "षषष्ठाजादिवचनात्सिद्धम्" इति वचनेन ठाजादाविति वचनस्यैव लक्ष्यानुरोधाद्यत्र षडङ्गुलिशब्दात्प्रत्ययस्तत्र प्रवृत्तिर्न त्वेकाक्षरेति वचनस्येति भावः । इदमशोकवनिकान्यायेन । वस्तुतः "शवल" ( पा० सू० ५-३-८४ ) इतिसूत्रभाष्येऽपि स्पष्टमित्यर्थः । *तेन=अकृतसन्धीनां लोपविधानेन । अन्यथा यकारस्य श्रवणापत्तिः । *इति भेद इति । तेनान्यतरेणान्यतरस्य गतार्थता न शङ्क्या । *अत एव=उपलक्षणत्वादेव । नन्वेकशब्दोपादानाभावे द्वयोरिति निर्द्धारणषष्ठी कथमत आह-*द्वयोरितीति । *व्याख्यानादिति । निर्द्धार्यमाणवाचिभ्यः किमादिभ्यः प्रत्ययविधानसामर्थ्यमूलकव्याख्यानादित्यर्थः । *न प्रत्ययार्थ इति । अत एव

तयाऽन्यलभ्यत्वात्किं तु विषयनिर्देश इति वृत्तौ ।

वा बहूनाम् ( पा० सू० ५-३-९३ ) ॥ प्रत्याख्यातमिति । क्षेपार्थस्य त्व*नभिधानान्न । अत एव ततो डतरच् न । आकरे इति । पूर्वसूत्रस्थद्वयोरित्यस्य प्रत्याख्यानभाष्यव्याख्यावसरे कैयटग्रन्थे इत्यर्थः । *अत एव *कतमा कतमैषामाढ्यतेति पदद्वित्वप्रकरणे भाष्यप्रयोगः सङ्गच्छते । तेन कतमो भवतामध्यापकः शूरो देवदत्तो वेति सिद्धम् । *वाग्रहणमिति । न च "अव्ययसर्वनाम्नाम्" (पा०सू० ५-३-७१) इत्यस्याधिकारत्वात्तदनुवृत्त्यैव सिद्धे वाग्रहणं व्यर्थमिति वाच्यम् । तन्निवृत्तिज्ञापनार्थत्वात् । तेन डतरज्विषये नाकच् । महाविभाषयेति । *अत एव "अवक्षेपणे" ( पा० सू० ५-३-९५ ) इति सूत्रे भाष्ये *"क एतयोरर्थयोर्विशेषः" इति प्रयोगः सङ्गच्छते । तमादयः प्रागवक्षेपणे कनो नित्याः प्रत्यया इति *प्रायिकमिति भावः । किमु इति । बहुष्वासीनेषु इत्यादिभाष्यप्रयोगादिति भावः ॥

एकाच्च ( पा० सू० ५-३-९४ ) ॥ प्राचामिति पूजार्थम् । वाक्यस्येष्टत्वे महाविभाषयैव सिद्धेः । अकजर्थमपि न तस्यानिष्टत्वादिति *स्पष्टं भाष्ये ॥

येनेतर इति । *अवक्षेपणे इति करणे ल्युडिति भावः ।

---

कतर इत्यादिशब्दघटितवाक्यजन्यशाब्दबोधेन निर्द्धारणस्य भानम् । *अनभिधानादिति । अत्र प्रमाणन्तु "बहूनाञ्जातिपरिप्रश्ने डतमजित्यत्र बहुग्रहणमनर्थकम् । किङ्कारणम् ? । किमित्येतत्परिप्रश्ने वर्त्तते परिप्रश्नश्चानिर्ज्ञाते । अनिर्ज्ञातञ्च बहुषु । द्वयेकयोः पुनर्निर्ज्ञातम्"इति भाष्यमेव । *अत एव=जातिपरिप्रश्न इत्यस्यानावश्यकत्वादेव । तत्र साधकम्भाष्यमाह-*कतमेति । अध्यापकः शूरो वेत्यनेन जातिपरिप्रश्नाभावो ध्वनितः । *वाग्रहणमितीति । समुच्चयार्थत्वकल्पनयेति भावः । *अत एव=महाविभाषया क्वचित्प्रत्ययाभावादेव । *क एतयोरर्थयोरिति । अत्र कतर इति नोच्चारितम् । *प्रायिकमितीति । अत एव "एकाच्च प्राचाम्" ( पा० सू० ५-३-९४ ) इतिसूत्रभाष्ये "प्राग्ग्रहणं किमर्थम् ? । विभाषा यथा स्यात् । प्राग्वचनानर्थक्यञ्च विभाषाप्रकरणात् । प्रकृता महाविभाषा, तयैव सिद्धम्" इत्युक्तम् । *स्पष्टम्भाष्य इति । तत्र हि प्राग्वचनानर्थक्यमित्येवोक्तम् त्वकजुत्पत्तिस्तेन साधिता । येनेतरः कुत्स्यत इति विशेषलाभप्रकारमाह-*अवक्षेपण इति ॥

॥ इति प्रागिवीयाः ॥

इवे प्र ( पा० सू० ५-३-९६ ) ॥ *इवार्थोपमानत्ववति वर्त्तमानात्प्रातिपदिकात्कन् यदुपमेयं सा प्रतिकृतिश्चेदित्यर्थः । प्रतिकृतिर्मृदादिनिर्मिता प्रतिमा । *प्रकारान्तरे स्वार्थिकप्रकरणविरोधः ॥ अश्वक इति उपमानाश्वाभिन्न इति बोधः ॥

लुम्म ( पा० सू० ५-३-९८ ) ॥ अस्य लुप्त्वं प्रकृतिवल्लिङ्गाय । *वचनन्तु विशेष्यवदेव "हरीतक्यादिषु व्यक्तिः" इत्यत्र पाठात् । तेन चञ्चे मनुष्याविस्येव ।

देवलकानामिति । प्रतिमां गृहीत्वा भिक्षार्थं प्रति गृहमटतामित्यर्थः । *तत्तदायतनेषु प्रतिष्ठाऽपि न । पूजार्थप्रतिमासु चित्रेषु नटेषु च भ्रमात्मिका शिवाभेदबुद्धिरेव न तु सादृश्यबुद्धिरिति प्रत्ययोत्पत्तेरेवाभावः । स्पष्टश्च चित्रनटविषये तादृशी बुद्धी रसप्रकरणे शङ्कुकमतनिरूपणावसरे प्रकाशकारैरुक्ता । यस्तु तत्र बुद्धेर्भ्रमत्वाभावोऽप्युक्तः स त्व*नन्तरावतीर्णबाधाया एव बुद्धेस्तत्र भ्रमत्वेन प्रकमान्न विरुद्ध इति दिक् ।

*अर्चासु पूजानार्थासु चित्रकर्मध्वजेषु च ।

इति देवपथादिषु पाठात्तत्र न दोष इति "तद्राजस्य" ( पा० सू० २-४-६२ ) इति सूत्रे कैयटः । प्रकृतसूत्रे वृत्तावप्येतत् ।

---

स्वार्थिकत्वप्रकरणाबाधायाह-*इवार्थ इति । *प्रकारान्तरे=इवार्थे प्रत्ययविधाने ।

"लुपि युक्तवत्" ( पा० सू० १-२-५१ ) इतिसूत्रप्रवृत्तावतिप्रसङ्ग इत्यत आह-*वचनं त्विति ।

ननु यदि देवलकानां या प्रतिमा तत्रैवायं लुप्तदा तत्तद्देवस्थाने पूजार्थं स्थापिता या मूर्त्तिस्तत्र विष्णुः शिव इत्यादिप्रयोगस्य कथमुपपत्तिरत आह-*तत्तदायतनेष्विति । *अनन्तरावतीर्णबाधाया इति । अनन्तरं स्वोत्पत्त्युत्तरक्षणेऽवतीर्णः सञ्जातो बाधो यस्यास्तस्यैव भ्रमत्वेन कल्प्यते । यथा शुक्तिविशेष्यकरजतत्वप्रकारकज्ञाने जाते सति तदनन्तरं शुक्तिरियमित्यधिष्ठानस्य तत्त्वनिश्चयेन पूर्वोत्पन्नं रजतत्वज्ञानम्भ्रमः शुक्तौ रजतत्वप्रकारकत्वादिति रीत्या भ्रमत्वप्रकारकानुमितिसम्भवो यत्र तस्यास्तत्र भ्रमत्वेन प्रक्रमादित्यर्थः । *अर्चास्विति । इदं देवपथादिषु पठितानां कतिपयानामुदाहरणप्रदर्शनम् । तत्र ह्येवम्पठितम्-

"अर्चासु पूजनार्थासु चित्रकर्मध्वजेषु च ।
इवे प्रतिकृतौ लोपः कनो देवपथादिषु" ॥ इति ।

अर्चासु-शिवः, विष्णुः । चित्रेषु-अर्जुनः, दुर्योधनः, रावणः । ध्वजेषु-कपिः, गरुडः, सिंहः, देवपथः हंसपथो वारिपथः । अस्मिन्गणे केषांचि-

निवृत्तमिति । *अस्वरितत्वादननुवृत्तिरेवात्र निवृत्तिः । शाखादिभ्यो यदिति पाठः । य इति त्वपपाठः । मुख्यादीनामाद्युदात्तत्वदर्शनात् । उगवादिसूत्रस्थभाष्यविरुद्धत्वाच्च* ।

भव्य=*आत्मवान्, अभिप्रेतानामर्थानां पात्रभूत इति यावत् ।

तद्विषयादिति । *इवार्थविषयसर्वावयवकादित्यर्थः । भाष्ये तथैवोदाहरणात् । इवार्थविषयसर्वावयवकादिवार्थोपमानत्ववति वर्त्तमानाच्छ इत्यर्थः । *अत एव शस्त्री श्यामेत्यादेरिवार्थे च्छो न । काकतालमित्पाठः प्रपञ्चार्थः ।

ननु यस्य स्वरितत्वात्स्वघटितसूत्रानन्तरसूत्रेऽनुवृत्तिस्तत्र निवृत्तमिति व्यवहारो युक्तः स त्वत्र न युक्तः प्रतिकृतिपदस्योत्तरसूत्रेऽनुवृत्त्यभावादत आह-*अस्वरितत्वादिति । *भाष्यविरुद्धत्वाच्चेति । तत्र ह्येवमुक्तम्-"अयन्नाभिशब्दो गवादिषु पठ्यते तत्रैवमुच्यते नाभि नभञ्चेति तत्र चोद्यते नाभेर्नभभावे प्रत्ययानुपपत्तिः प्रकृत्यभावात् । विकृतेः प्रकृतावभिधेयायाम्प्रत्ययेन भवितव्यम्, न च नाभिसंज्ञाया विकृतेः प्रकृतिरस्ति । नभ्यञ्चक्रमितीष्यते तन्न सिध्यति । विकृतेः प्रकृतिर्हि तत्त्वेन व्यपदिश्यते । न च नाभिश्चक्रस्य विकृतिः" इति । तस्मै हितमित्यर्थे प्रत्ययो न प्राप्नोतीति भावः । नापि तादर्थ्यमस्ति अवयविनोऽवयवार्थत्वाभावात् । शरीरावयवो नाभिस्तद्वाचकात्तु हितार्थे शरीरावयवाद्यदिति यता भवितव्यम् । नाभ्यन्तैलमिति । गवादियता सन्नियुक्तो नभभावोऽन्यत्र यति न भवति । गवादियच्च चक्र एव । तदुक्तम्भाष्ये-"यदेव तन्मण्डलचक्राणां मण्डलचक्रन्तन्नभ्यमित्युच्यते" इति । मण्डलाकारश्चक्रं येषान्तानि मण्डलचक्राणि शकटानि तेषाम्मण्डलाकारं यच्चक्रन्तन्नभ्यमुच्यत इत्यर्थः । एवं भाष्ये शङ्काङ्त्वोक्तम्-"सिद्धन्तु शाखादिषु वचनाद् ह्रस्वत्वञ्च । सिद्धमेतत् । कथम् ?, शाखादिषु नाभिशब्दः पठितव्यः ह्रस्वत्वञ्च वक्तव्यम्; नाभिरिव नभ्यमिति । कः पुनरिहोपमार्थः । यत्तदक्षधारणम्परिवर्त्तनम्वा । एवम्प्रकारेण चक्रे नभ्यशब्दः साधितः, स च शाखादिभ्यो यदितिन्यास एवोपपद्यते । य इति पाठे तु प्रत्ययाद्युदात्तत्वेनान्तोदात्तत्वापत्तिरिति 'शाखादित्वात् सिद्धम्'इत्यसङ्गतं स्यात् ।

द्रव्यञ्च भव्ये ( पा० सू० ५-३-१०४ ) । भव्येऽभिधेये द्रुशब्दादिवार्थे यत्प्रत्ययः स्यात् । भव्यशब्दार्थं व्याचष्टे-*आत्मवानिति ।

समासाच्च तद्विषयात् ( पा० सू० ५-३-१०६ ) ॥ तच्छब्देन इवशब्दः परामृश्यते । स इवशब्दस्तच्छब्देनोपस्थितः स्वार्थम्बोधयति । एवञ्च सः इवार्थो विषयो यस्य तादृशो यः समासस्तस्मादिवार्थे छः स्यात् । अत्र विषयपदोपादानेनानन्यभावबोधकेनेवार्थविषयत्वं समासस्यावयवद्वारकं विशेषणमिति लब्धम् । अवयवत्वञ्च पूर्वोत्तरपदयोरविशिष्टमिति इवार्थवृत्तिसर्वावयवकत्वं लब्धन्तदाह—*इवार्थविषयेत्यादि । *अत एव=इवार्थवृत्तिसर्वावयवकत्वस्याश्रयणादेव । *द्वन्द्वाच्च इवार्थे नेति । तस्य समासस्येवार्थविषयत्वाभावात् ।

ति *द्वन्द्वाच्चेवार्थे न । काकतालीय इति । *काक इव तालमिवेति इवार्थे इत एव ज्ञापकात्सुप्सुपेति समासः । *तत्र पूर्वपदमुपमानकाकागमनपरम्, उत्तरपदं चोक्तपूर्वपदार्थसमानाधिकरणोपमानतालपतनपरम् । समुदायश्चोपमेयदेवदत्तागमनसमानाधिकरणचोरपतनपरः । एवञ्चोपमानकाकागमनसमानाधिकरणोपमानतालपतनोपमेयदेवदत्तागमनसमानाधिकरणश्चोरपतनमिति समासार्थः । विशिष्टे विशिष्टनिरूपितोपमेयत्वबोधात् विशेषणे विशेषणनिरूपितं विशेष्ये च विशेष्यनिरूपितन्तत्पर्यवस्यति । तत्तदुपमेयबोधे तत्तदुपमेयवाचकसमभिव्याहारस्तन्त्रम् । तत*स्तद्धितसमभिव्याहारे *समासार्थोपमानप्रयोज्योपमानभूततालकृतः काकवधोपमेयः समासार्थोपमेयप्रयोज्यश्चोरकृतदेवदत्तवध इति बोधः । एकार्थीभावबलाच्चैतदर्थलाभः । शब्दशक्तिस्वभावात् । एतेन परस्परं सामर्थ्याभावाद् वृत्तिद्वयमपि दुर्लभमित्यपास्तम् । तत्फलितमाह—इह काकेत्यादि । अत्र सर्वत्रातर्कितोपनतत्वं साधारणो धर्म इत्याह—अतर्कितेति ।

पच्चे ठगिति । अन्यतरस्याङ्ग्रहणमनन्तरठकः समुच्चयार्थमिति भावः । एकशालाशब्दस्याङ्गुल्यादिषु पाठादिति भावः ।

पूगात् ( पा० सू० ५-३-११२ ) ॥ पूगेति न स्वरूपग्रहणं, व्याख्यानात्* । ग्रामणीवाचकपूर्वावयवकाभिन्नात्पूर्ववाचकादित्यर्थः । लौहितध्वज्य इति । *लोहिता ध्वजा यस्य पूगस्य स एव लौहितध्वज्यः ।

---

नन्विवार्थे समासविधायकशास्त्राभावादुद्देश्याप्रसिद्धिरत आह—*काक इवेति । इवार्थवृत्तित्वमुपपादयति—*तत्रेति । *तद्धितसमभिव्याहार इति, बोध इत्यत्रान्वयः । *समासार्थोपमानप्रयोज्येति । समासार्थो यदुपमानं काकागमनसमानाधिकरणोपमानतालपतनन्तद्बोधकस्य तत्प्रयोज्ये लक्षणया समासः उपमानतालकृतकाकवधे वर्त्तते, तस्य च प्रत्ययार्थोपमायामुपमानत्वेन तादृशकाकवधसदृशश्चोरपतनसमानाधिकरणदेवदत्तागमनजनितश्चोरकृतो देवदत्तस्य वध इति बोधः ।

पूगाञ्ञ्योऽग्रामणी ( पा० सू० ५-३-११२ ) । *व्याख्यानादिति । स्वरूपस्य ग्रहणञ्चेत्प्रत्ययविधित्वेन तदन्तस्याग्रहणेन केवलपूगशब्दादेव प्रत्ययविधायकमिदम्भवेत्तथा च तस्य, ग्रामणीपूर्वावयवकत्वन्न संभवतीत्यग्रामणीपूर्वादिति विशेषणं व्यर्थं स्यादिति तत्सामर्थ्यमूलकव्याख्यानादित्यर्थः । *लोहिता ध्वजा यस्येति । उद्भूतावयवभेदस्य समुदायस्य पूगवाचकत्वं ध्वनयितुम्बहुवचनोपादानम् । अग्रामणीपूर्वादित्यस्याभावे देवदत्तो ग्रामणीर्यस्य पूगस्य पूर्वावयवस्तस्मादपि स्यात् । तत्र देवदत्तका इत्येव भवति । "स एषाङ्ग्रामणीः" ( पा० सू० ५-२-७८ ) इति कन् ।

व्रातच्फ (पा० सू० ५-३-११३) ॥ *शरीरायासजीवी नानाजातीयानामनियतवृत्तीनां सङ्घो=व्रातः। च्फञ् इति "गोत्रे कुञ्जादिभ्यः" (पा० सू० ४-१-९८) इत्यनेन। अस्त्रियां किम्?। कौञ्जायनी।

टित्त्वान्ङीबिति। * टित्त्वसामर्थ्यादस्त्रियामिति तत्र न सम्बध्यत इति भावः। तद्विशेषेति। व्याख्यानादिति भावः। जालकित्रिगर्तः।

पर्श्वादियौ (पा० सू० ५-३-११७) ॥ अत्रास्त्रियामित्यनुवर्तते*। "यञश्च" (पा० सू० ४-१-१६) इति सूत्रस्थभाष्यप्रामाण्यात्*। *तेन पर्शुः स्त्री *ञ्यट्टैण्यण्विधायकयोष्टित्त्वसामर्थ्यादनम्बन्धेऽप्यन्यत्रासम्बन्धे मानाभावात्।

आभिजित्य इति। *अपत्याणन्ताद्यञ्। तस्य स्वार्थिकत्वेन

---

पूगाद् व्रातस्य यो विशेषस्तमाह-*शरीरायासेति।

*टित्त्वसामर्थ्यादिति। स्त्रियामेव ङीप् भवति। मूले ब्राह्मणे तद्विशेषग्रहणं, राजन्ये स्वरूपग्रहणम्; अत्र वृत्तिग्रन्थो मानम्। तत्र हि "वाहीकेषु ब्राह्मणशब्दवाच्यायुधजीविसङ्घाभावः" इत्युक्तम्।

दामन्यादित्रिगर्त्तषष्ठाच्छः (पा० सू० ५-३-११६)। आयुधजीविसङ्घादित्यनुवर्त्तते। दामन्यादिभ्यः प्रातिपदिकेभ्यस्त्रिगर्त्तषष्ठेभ्यश्च स्वार्थे छः स्यात्। त्रिगर्त्तः षष्ठो वर्गो येषान्ते मूले उदाहृताः।

पर्श्वादियौधेयादिभ्यो (पा० सू० ५-३-११७)। *अस्त्रियामित्यनुवर्त्तत इति। मण्डूकप्लुत्येति शेषः। *भाष्यप्रामाण्यादिति। तत्र हि-"आपत्यग्रहणङ्कर्त्तव्यन्द्वीपाद्यञः प्रतिषेधार्थम्। इह माभूत्, द्वैप्येति। तर्त्तर्हि वक्तव्यन्न वक्तव्यम्। नैवं विज्ञायते कञ्ककरपोऽयञश्चेति कथन्तर्हि कञ्ककरपोऽयञश्चेति" इत्युक्तम्। अत्र भाष्ये द्वीपाद्यञ इत्येवोक्तन्न त्वभिजिति सूत्रविहितस्य यञोऽप्युपादानं कृतम्। यदि तस्मिन् सूत्रेऽस्त्रियामित्यस्य सम्बन्धो न स्यात्तदाऽभिजितोऽपत्यं स्त्रीत्यर्थे यञ्प्रत्ययः स्यात्। ततश्च यञश्चेति न्यासे ङीप् स्यादयञश्चेति न्यासे तु नेति फलभेदः स्यादिति कथमयञितिच्छेदेन वार्त्तिकप्रत्याख्यानमिति तस्मिन् सूत्रे ऽस्त्रियामित्यस्य सम्बन्धोऽस्तीति भाष्यकाराभिप्रायः कल्प्यः। एवञ्च तत्सूत्रपूर्वपठिते "पर्श्वादि" (पा० सू० ५-३-११७) इतिसूत्रेऽस्त्रियामित्यस्यासम्बन्धे साधकाभावादत्राप्यस्त्रियामिति सम्बध्यत एवेति भावः। *तेन=अस्त्रियामित्यस्य सम्बन्धेन। मध्यपठिते त्वसम्बन्धे साधकमाह-*ञ्यट्टैण्यणिति।

*अपत्याणन्तादिति। अनन्तरापत्याणन्तादित्यर्थः। अस्मिन् सूत्रेऽणइत्युपादानाद्यदा गोत्रापत्ये ऽभिजिच्छब्दादण् तदापि यञ् भवत्येवाणन्तवाच्यार्थ एव यञन्तात्प्रतीयते न तु यञोऽस्य गोत्रवाचकत्वमिति "एको गोत्रे" (पा० सू० ४-१-९३) इतिसूत्रस्याप्रवृत्तिः। एतद्यञन्तस्य शब्दस्य तु गोत्राभिधायकत्वमस्त्येवेति "गोत्रचरणात्" (पा० सू० ४-३-१२६) इति वुञ् भवत्येवेति

गोत्रार्थकत्वादाभिजित्यस्यायमिति विग्रहे वुञ् । अत्र "आपत्य" ( पा० सू० ६-४-१५१ ) इति यलोपश्च । आभिजितकः । अयमपत्याणन्तेभ्य एव । तेनाभिजितो मुहूर्त इत्यादौ न । अस्त्रियामिति चात्र सम्बध्यते । *स्पष्टं चेदं सर्वं भाष्ये ।

अनैमित्तिकत्वार्थमिति । ननु तद्भावभावित्वरूपं निमित्तत्वं सहविधानेऽपि तद्भावोत्तरं भाव इत्यर्थवत् तद्भावसमकालं भाव इत्यपि तदर्थात् । *अत एव "धिन्विकृण्व्योः" ( पा० सू० ३-१-८० ) इत्यत्र वलोप एव कार्यो "न धातुलोप" ( पा० सू० १-१-४ ) इति गुणनिषेधसिद्धेरकारादेशविधानं व्यर्थमित्याशङ्क्य तत्प्रत्याख्याने गुणवारणाय तदिति भाष्ये उक्तमिति चेन्न । लोपवचनसामर्थ्यात् "अचः परस्मिन्" ( पा० सू० १-१-५७ ) इत्यत्र*तथा निमित्तत्वानाश्रयणात् ।

दण्डव्यव ( पा० सू० ५-४-२ ) ॥ *दण्डो=दण्डनम् । व्यवसर्गसाहचर्यात् । तयोरर्थयोर्विषये स्वार्थे वुञित्यर्थः ।

---

भावः । *स्पष्टश्चेदमिति । तत्र हि-"अणो गोत्रादिति वक्तव्यमिह मा भूत् आभिजितो मुहूर्त्तः, आभिजितः स्थालीपाक इति" इत्युक्तम् ।

पादशतस्य ( पा० सू० ५-४-१ ) । अनेन सूत्रेण वीप्सायां वुन्विधानात् "तद्धितार्थ" ( पा० सू० २-१-५१ ) इति सूत्रविहिता समाससंज्ञा ऽत्र प्रत्ययविषये भवति । *अत एव=तद्भावभावितामात्रेण निमित्तत्वादेव । अत्र ह्यकारादेशस्योप्रत्ययसन्नियोगेन विधानेऽपि तस्यार्द्धधातुकनिमित्तकत्वमस्त्येवेति लोपः प्रवर्त्तते, तस्य "अचः परस्मिन्" ( पा० सू० १-१-५७ ) इतिस्थानिवत्त्वान्न गुणः । *तथा निमित्तत्वानाश्रयणादिति । यत्र लोपस्य किञ्चित्सन्नियोगेन विधानन्तन्न यत्सन्नियोगेन विधानन्तस्य निमित्तत्वेनाग्रहणमिति भावः । किञ्च "धिन्वि" ( पा० सू० ३-१-८० ) इतिसूत्रीयदृष्टान्तेन लोपस्य परनिमित्तकत्वमित्ययुक्तम् । तत्र हि सौत्रक्रमानुरोधेनादावकारादेशस्तत उप्रत्ययस्तस्योप्रत्ययस्योपदेशकालेऽकारान्तत्वबुद्धिसत्त्वादकारलोप इत्यतोऽकारलोपकाले आर्द्धधातुकबुद्धेः सत्त्वात्परनिमित्तत्वमार्द्धधातुके इत्यस्य सप्तम्यन्तस्य लोपविधायके सम्बन्धात् । प्रकृते तु यद्यपि वुन्प्रत्ययः प्रथमम्प्रवर्त्तते ततो लोपस्तथापि वुनः सप्तम्यन्तपदेनानुपादानान्न लोपनिमित्तत्वमिति ।

दण्डव्यवसर्गयोश्च ( पा० सू० ५-४-२ ) । दण्डो=दमनम्, तच्च न शारीरदण्डेन किन्तु द्रव्यग्रहणेनेत्याशयेनाह-*दण्डो दण्डनमिति । व्यवसर्गो=दानम् । एतयोरर्थयोर्गम्यमानयोः स्वार्थे वुञित्यर्थः ।

स्थूलादिभ्यः प्रकारवचने कन् ( पा० सू० ५-४-३ ) । प्रकारस्य वच-

स्थूलादिभ्यः ( पा० सू० ५-४-३ )। प्रकारो भेदः सादृश्यञ्च व्याख्यानात्, तद्वति वर्त्तमानादित्यर्थः। जातीयरोऽपवाद इति। जातीयर्विधौ भेद एव प्रकार इति जयादित्यमते। अपवाद इत्यस्य परत्वाद् बाधक इत्यर्थः। तत्राप्युभयं गृह्यते इति वामनमते यथाश्रुतमेव॥

अनन्त्य ( पा० सू० ५-४-४ )॥ अनत्यन्तगतिर*शेषतः संबन्धाभावः।

सामिकृतमिति। समासेऽपि सामीत्यस्य क्रियाविशेषणत्वेन कारकत्वात्समुदायस्य क्तान्तत्वम्। कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात्। अनत्यन्तगतेरित्यस्य यद्यपीत्यादिः। प्रकृत्यर्थेचाति। समस्तत्वे तदेकदेशसामिशब्देनेत्यर्थः। असमस्तत्वे तत्सन्निहिते*नेत्यर्थः। इदमेवेति। अस्य तथापीत्यादिः। बहुतरकमिति। यदि तु बहुतरकं सुकरतरकमित्यादि तमाद्यन्तात् स्वार्थे कन्वक्तव्य इति वचनेन यावादित्वात् स्वार्थे कना वा सिद्धमित्युच्यते तदा नास्य प्रयोजनमतदेवाभिप्रेत्येदं भाष्ये प्रत्याख्यातम्। एतदेव भाष्यं *तस्याकृतिगणत्वे मानम्।

विभाषाग्रहणादिति। प्राक् प्राचीनमिति रूपद्वयं महाविभाषयैव सिद्धमिति *तदस्य नित्यत्वे ज्ञापकमिति भावः। तेनाशितंगवित्याद्य-

---

नन्धोतनन्तस्मिन्नित्यर्थः। स्थूलको ह्रस्व इत्यस्मात्सदृशः स्थूलाभिन्न इति बोधः।

अनत्यन्तगतौ क्तात् (पा० सू० ५-४-४)। अनत्यन्तगतौ गम्यमानायां क्तान्तात्कन् स्यात्। *अशेषतः सम्बन्धाभाव इति। यस्मिन्वस्त्रे छेदनस्य नाशेषतः सम्बन्धो=बाह्यसर्वावयवावच्छेदेन सम्बन्धरूपः, तद्वस्त्रं छिन्नकमित्युच्यते।

*तत्सन्निहितेन=क्तान्तसन्निहितेन। *तस्याकृतिगणत्वे=यावादेराकृतिगणत्वे।

*तदस्य नित्यत्व इति। तद्=विभाषाग्रहणमस्य="अषडक्ष" ( पा० सू० ५-४-७ ) इतिसूत्रविहितखस्य। अषडक्षीणो मन्त्र इत्यस्याविद्यमानानि षडक्षीणि यस्मिन्नित्यर्थः। अत्राक्षिशब्दः श्रोत्रपरः। द्वाभ्यामेव कृत इति तु फलितार्थकथनम्। आशितास्तर्पिता गावो यस्मिन्नित्यर्थे आशितङ्गवीनमिति भवति। आशितशब्दोऽत्र ण्यन्तात्कर्मणि क्तान्तः। पूर्वपदस्य मुमागमो निपातनात्। अलङ्कर्मण इत्यस्य कर्मणे समर्थ इत्यर्थः। "पर्यादयो ग्लानाद्यर्थे चतुर्थ्या" इति समासः। अलम्पुरुषायेत्यस्यापि पुरुषाय प्रति पुरुषाय=मल्लरूपाय समर्थस्ततोऽपि बलवत्तर इत्यर्थः। ईश्वराधीन इत्यस्य ईश्वरेऽधिष्ठित इत्यर्थः। अधिशब्दस्य शौण्डादिगणपाठात्सप्तमीतत्पुरुषः। अध्युत्तरपदादित्यत्रोत्तरपदग्रहणस्प्रायिकन्तेनायं राज्ञोऽधीनः, स्त्रिया अधीन इत्यपि भवति।

साध्विति बोध्यम् । आशिता गाव इत्यादि तु खप्रत्ययप्रकृतेरर्थकथनम् । *इयमभ्युच्चयमुक्तिः । *बृहतीजात्यन्ता इति बहुवचनेनास्यापि ग्रहात् । जात्यन्ताच्छस्येवास्यापि स्वभावतो नित्यत्वलाभात् । अश्वतेः खस्य नित्यत्वाभावाय विभाषाग्रहणमिति भाष्यसम्मतः पन्थाः । प्राक्कन इति । तेनावक्षेपणे कन्वैकल्पिक एवैतत्प्रायिकमित्युक्तम् । बृहतीजात्यन्ताः=कन्खच्छाः ।

*अदिक्स्त्रियामिति कर्मधारयगर्भो नञ्तत्पुरुषः । प्रागिति अस्तात्यन्तं प्राचि देशे इत्यर्थकं निर्लिङ्गम्* । *खान्तन्त्वभिधेयप्रधानतया स्वभावाल्लिङ्गयोगि, लिङ्गञ्च नपुंसकमेव लिङ्गसर्वनामत्वात् न स्त्रीत्वादि । प्रकृत्या सहात्यन्तविरोधापत्तेः* स्वार्थिकानां प्रकृतितुल्यलिङ्गत्वोक्तेः; एकवचनञ्च* । एवञ्च ग्रामावधिकप्राग्देशवृत्तय आम्रा इति बोधस्तदाह—प्राचीनमिति । *पदसंस्कारपक्षे इदम् । *यदा प्रागादिशब्दास्तद्देशकालस्थाम्रादिबोधकास्तेभ्यश्च खस्तदोपस्थितविशेष्यलिङ्गत्यागे मानाभावात्मा-

---

"अतिदिश्यतां वा सच्चासच्चापि नेह मे भारोऽस्ति ।
कल्प्यो हि वाक्यशेषो वाक्यं वक्तर्यधीनं हि" ॥

इति भाष्यप्रयोगात् । *इयमभ्युच्चययुक्तिरिति । उत्तरसूत्रे विभाषाग्रहणेन ज्ञापकेनास्य नित्यत्वकथनरूपा उक्तिरभ्युच्चयः । कथन्तर्हि नित्यत्वमित्याकाङ्क्षायामाह—*बृहती जात्यन्ता इतीति ।

विभाषाञ्चेरदिक् स्त्रियाम् ( पा० सू० ५-४-८ ) । अञ्चत्यन्तात्प्रातिपदिकाददिक् स्त्रियां वर्त्तमानात्स्वार्थे खः प्रत्ययो भवति । अदिक् स्त्रियामेतद्व्याचष्टे-*अदिगिति । दिक् चासौ स्त्री च=दिक्स्त्री, न दिक्स्त्री=अदिक्स्त्री । प्राक् प्राचीनमित्यत्र प्राक्शब्द अस्तात्यन्तः । प्राचि देशे=प्राक् । "दिक्शब्देभ्यः" ( पा० सू० ५-३-२७ ) इत्यस्तातेः "अञ्चेर्लुक्" ( पा० सू० ५-३-३० ) इति लुक् । तथा च प्राक्शब्दोऽत्राधिकरणशक्तिप्रधानम् । तस्यालिङ्गत्वमाह-*निर्लिङ्गमिति । खान्तविषये विशेषमाह-*खान्तमिति । *अत्यन्तविरोधापत्तेरिति । यद्यलिङ्गन्तदा तदर्थे किमपि लिङ्गन्न प्रतीयते लिङ्गसर्वनामनपुंसकत्वे तु सत्त्वादीनां साम्यावस्थारूपा स्थितिः प्रतीयते, सा च नात्यन्तं विरुद्धा । सर्वपदार्थानाङ्गुणत्रयपरिणामत्वात्पूर्वावस्थारूपत्वमेव । उपचयादिकन्तु गुणानां या पूर्वावस्था ततो विलक्षणमिति ततो विरोध इति भावः । *एकवचनञ्चेति । औत्सर्गिकमिति शेषः । *पदसंस्कारपक्ष इति । तस्मिन् पक्षे पदानि संस्कृत्य यथेष्टन्तेषां योजनं क्रियते । वाक्यसंस्कारपक्षे तु विपरीतमपीत्याह-*यदेति । *मानाभिन्यमिति । भाष्ये प्राक् प्राचीनम् । प्रत्यक् प्रतीचीनम् । उदक् उदीचीनमित्येव

चीना आम्राः, प्राचीना वाटी, प्राचीनं वनमित्यादीति कश्चित्। तत्र मानं चिन्त्यम्*। प्राची दिगिति। लिङ्गविशिष्टपरिभाषया प्राप्तिः*। प्राचीनं ग्रामादिति। अत्र प्राच्यान्दिशीत्यर्थेऽस्तात्यन्ता प्रागिति प्रकृतिः। सा चाव्ययत्वादस्त्री। स्थानिवत्सूत्रे *भाष्ये चायं प्रयोगः।

जात्यन्ताच्छबन्धु ( पा० सू० ५-४-९ )॥ जात्यन्तात् बन्धुनि वर्तमाना*तज्जात्याश्रयद्रव्यलक्षकादित्यर्थः। जातिव्यञ्जकमिति। बध्यते ऽस्मिन् जातिरिति व्युत्पत्तेः। *अत्र प्रकरणबाधेन वाचकत्वं

---

प्रयुक्तमत एतद्विषये पदसंस्कारपक्ष एवेति भावः। *प्राप्तिरिति। दिक्शब्दस्य स्त्रीलिङ्गत्वाददिगिति वक्तव्ये स्त्रीग्रहणं स्त्रीप्रत्ययान्तान्मा भूदित्यर्थमिति भावः। अस्त्रियामिति किमिति मूले अदिगित्युक्तावपि स्त्रीप्रत्ययान्तस्य व्यावृत्तिर्भविष्यतीत्यभिप्रायेण प्रश्नः। प्राचीनं ग्रामादाम्रा इत्युक्तन्तस्य त्वयम्भावः-यद्यप्ययं दिगवच्छिन्नवाचकः प्राक्शब्दस्तथाप्यस्त्रीलिङ्ग इत्यतो न स्त्रियामित्यधिकारीयः प्रत्यय इत्यस्माद्भवति प्रत्ययः, स्त्रीग्रहणाभावे तु न स्यादित्यव्याप्तिवारणाय स्त्रीग्रहणमिति भावः। *भाष्ये चायं प्रयोग इति। एतादृशप्रयोग एव प्रकृतसूत्रविहितखान्तस्य विशेष्यवाचकशब्दापेक्षया विभिन्नलिङ्गवचनसद्भावे मानमिति भावः।

जात्यन्ताच्छ बन्धुनि ( पा० सू० ५-४-९ )। ननु ब्राह्मणजातीय इत्यत्र ब्राह्मणस्य जातिरिति समासे जात्यन्तस्य ब्राह्मणत्वजातिपरत्वञ्च तु द्रव्यपरत्वमिति जात्यन्तस्य बन्धुनि वर्त्तमानत्वमनुपपन्नमत आह-*तज्जात्याश्रयद्रव्यलक्षकादिति। एवञ्च स्वार्थिकप्रत्ययप्रकरणाबाधाय लाक्षणिकस्यैव प्रकृतित्वम्। वस्तुतस्तु प्रकरणबाधेन जात्यन्ताच्छक्यार्थबोधकाद्बन्धुन्यर्थे छः स्यादित्येवार्थ उचित इत्याशयेनाह-*अत्रेति। द्रव्यस्य जातिव्यञ्जकत्वङ्कथमिति चेदित्थम्। जातेः प्रत्यक्षं द्रव्यघटितपरम्परासन्निकर्षेण भवति। द्रव्यबोधकब्राह्मणादिपदजन्यशाब्दबोधेऽपि जातेर्द्रव्यनिष्ठविशेष्यतानिरूपितप्रकारतया भानं न तु स्वातन्त्र्येणेति। न च ब्राह्मणत्वादिपदजन्यशाब्दबोधे स्वातन्त्र्येणैव भानमिति वाच्यम्। तत्रापि ब्राह्मणेतरावृत्तित्वे सति यावद्ब्राह्मणवृत्तित्वरूपब्राह्मणत्वत्वप्रकारक एव शाब्दबोध इति तादृशशाब्दबोधस्य या विषयिता सा द्रव्यविषयिताव्याप्यैव। जातिव्यञ्जकत्वञ्च जातिविषयिताप्रयोजिका या आश्रयविषयिता तन्निरूपकत्वमित्यस्य विवक्षितत्वात्। प्रत्युदाहरणे ब्राह्मणजातिः शोभनेत्यत्र जात्यन्तस्य न द्रव्यलक्षकत्वमतो न ततः प्रत्ययः। परीत्या त्वाश्रयस्य विवक्षा नेति न प्रत्यय इति भावः।

स्थानान्ताद्विभाषा ( पा० सू० ५-४-१० )। स्थानान्तात्प्रातिपदिकाद्विभाषा छः प्रत्ययः स्यात्। तच्चेत् स्थानान्तं सस्थानेनार्थवद्भवति। समानं स्थानमस्य सस्थानः। यो हि पितृतुल्यो भवति तस्य पितृस्थानसमानं स्थान-

वक्तुं शक्यं युक्तश्चेति परे ।

स्थानान्ता (पा० सू० ५-४-१०) । *सस्थानशब्दस्तुल्यवाची, तुल्यरूपार्थेन चेत् स्थानान्तमुपर्थवद्भवति तदा प्रत्यय इत्यर्थः । इतिशब्दादर्थवदिति लब्धम् ।

*अनुगदतीति । अत्रार्थे अनुगादिशब्द इत्यर्थः । अस्य नित्यत्वादस्वपदविग्रहं दर्शयति-स एवेति । अनुयाय्यादिवत् "सुप्यजातौ" (पा० सू० ३-२-७८) इति णिनिः ।

विसारिणो ( पा० सू० ५-४-१६ ) ॥ "अणिनुणः" ( पा० सू० ५-४-१५ ) इत्यतोऽणनुवर्तते । "इनणि" ( पा० सू० ६-४-१६४ ) इति प्रकृतिभावः । नच "अनुपसर्जनात्" ( पा० सू० ४-१-१४ ) इति सूत्रस्थभाष्यरीत्या कदाचिदप्यवयवादप्युत्पत्तौ विसारिण इत्यस्याप्यापत्तिः गतिकारकसमवधाने तद्विशिष्टस्यैव कृद्ग्रहणेन ग्रहणमिति नातदसमवधाने केवलस्यापीत्यर्थिकया कृद्ग्रहणपरिभाषयाऽदोषात् ।

क्रियाजन्मेति ॥ *अत एव "एकस्य सकृच" ( पा० सू०

---

स्भवति । सस्थानशब्दे उष्ट्रमुखवत्समासः, तेन यल्लब्धं तदाह-*सस्थानशब्द इति । "ज्योतिर्जनपद" ( पा० सू० ६-३-८५ ) इति सूत्रेण समानशब्दस्य सादेशः । सस्थानेनेति करणे तृतीया । भवनक्रियायामस्या अर्थोऽन्वेति । स्थानम्पदम् मान्यत्वादिरूपम् । अस्मिन् सूत्रे विभाषाग्रहणाद्विभाषाद्वयमध्यपठितत्वात् "जात्यन्तात्" ( पा० सू० ५-४-९ ) इति नित्यमिति लभ्यते । एतदर्थमेवात्र विभाषाग्रहणम् ।

अनुगादिनष्ठक् ( पा० सू० ५-४-१३ ) । सूत्रार्थमाह-*अन्वित्यादिना । स एवेत्यस्य अनुगदति य इत्यर्थः । णचस्त्रियामञ् ( पा० सू० ५-४-१४ ) । यद्यपि "कर्मव्यतिहारे णच् स्त्रियाम्" ( पा० सू० ३-३-४३ ) इति सूत्रेण णच् प्रत्ययः स्त्रियामेव विहित इति णजन्ताद्विहितोऽञ्प्रत्ययः स्त्रियामेव भविष्यति स्वार्थिकत्वात्तथापि स्वार्थिकाः प्रत्ययाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्त इति ज्ञापनायात्र स्त्रियामिति । तेन गुडकल्पा द्राक्षेत्यादि सिध्यति ।

विसारिणो मत्स्ये ( पा० सू० ५-४-१६ ) । विसारिन्शब्दादण् प्रत्ययो भवति समुदायेन मत्स्येऽभिधेये ।

सङ्ख्यायाः क्रिया ( पा० सू० ५-४-१७ ) । एककर्त्रीणां सजातीयक्रियाणाम्पुनःपुनर्जायमानानाङ्गणनं क्रियाभ्यावृत्तिगणनन्तत्र स्वार्थे सङ्ख्यावाचकात्प्रत्यय इत्यर्थः । यद्यप्यावृत्तिशब्दस्य द्वितीयप्रवृत्तौ रूढिस्तथापि प्रकृतसूत्रेऽभिशब्दोपादानसामर्थ्यादभ्यावृत्तिशब्दो जन्ममात्रपर इत्याशयेन मूलेऽभ्यावृत्तिर्जन्मेत्युक्तम् । *अत एव=अभ्यावृत्तिशब्दस्य जन्ममात्रपरत्वादेव । *इति नेति ।

५-४-१९ ) इत्यत्रास्य सम्बन्धः । अभ्यावृत्तिशब्दस्य जन्मार्थत्वात् । अत एव त्रिः प्रवृत्तौ द्विः पचतीति न* । वृत्तौ पञ्चादिशब्दास्त*त्संख्योत्पत्तिपरास्तस्यैव सुज् द्योतकः । *तेषाञ्च क्रियायामन्वयः, सूत्रस्वरसात् । द्विदशा इत्यादौ समास एव द्व्यादिशब्दानान्तत्परत्वद्योतक इत्युक्तार्थत्वात् सुच् । *समुदायस्यापरिसमाप्तत्वाच्च भुङ्क्ते इति वर्तमानप्रयोगः, त्रिरावृत्ता दशेत्यादावावृत्तिक्रियाजन्मगणने कृत्वसुच् । सङ्ख्यायाः किमिति । गणने वृत्तिः सङ्ख्याशब्दानामेवेति प्रश्नः । भूरिवारानिति । *नायंसङ्ख्यावाची लोके गणनायाम*प्रसिद्धेरिति भावः । *बहुशब्दस्तु सङ्ख्यासञ्ज्ञकत्वात्तत्कार्यभागित्युक्तं*, तदभावे हि क्रियाजन्मगणने गम्ये इत्यर्थः स्यादिति तात्पर्यम् । वारशब्दः कालपर* । स च *भोजनपर्या-

---

किन्तु त्रिःपचतीत्येव भवतीति शेषः । *तत्सङ्ख्योत्पत्तिपरा इति । पञ्चेति सङ्ख्या यस्यास्तादृशी योत्पत्तिस्तत्परा इत्यर्थः । *तेषाम्=पञ्चादिशब्दानाम् । एवञ्च पञ्चकृत्वो भुङ्क्ते इति शब्दात्पञ्चसङ्ख्योत्पत्तिकमेककर्तृकम्भोजनमिति बोधः । एवमन्यत्रापि । नन्वेका क्रिया न पञ्चसङ्ख्योत्पत्तिकेत्यतो वर्त्तमानार्थकलट्प्रयोगानुपपत्तिरत आह-*समुदायस्येति । एकदिवसाधिकरणैककर्तृकपञ्चसङ्ख्योत्पत्तिकभोजनक्रियासमुदायस्येत्यर्थः । पचतीत्यादौ यथोपक्रमप्रभृत्यपवर्गपर्यन्तं वस्तुतः क्रियाणाञ्जायमानानामनेकत्वेऽपि शब्दान्निवृत्तभेदा क्रिया प्रतीयते तथा पञ्चकृत्वेत्यत्रापि निवृत्तभेदभोजनक्रियायास्पञ्चसङ्ख्योत्पत्तिकत्वान्वयः । यत्र तु कर्मणि प्रत्ययस्तत्र पञ्चसङ्ख्योत्पत्तिकत्वस्य विक्लित्त्यादिफलरूपक्रियायामन्वयः । अतः पञ्चकृत्वः पच्यन्ते तेमनानीत्यादिप्रयोगा अपि भवन्ति । तिरोहितावयवभेदफलसमुदायविवक्षायामेकवचनम्पञ्चकृत्वः पच्यात इति च भवति । उद्भूतावयवभेदत्वे बहुवचनम् । एकजातीयानामेककर्मकाणामेककर्तृकाणामेव क्रियाणाञ्जन्मसङ्ख्यान एवास्य साधुत्वं शब्दशक्तिस्वभावादिति बोध्यम् । सङ्ख्याया इत्यस्योपादाने सति भूरिवारानित्यत्र यथा नातिप्रसङ्गस्तथाह-*नायमिति । अयम्=भूरिशब्दः । *अप्रसिद्धेरिति । नियतविषयपरिच्छेदको हि तत्र प्रसिद्धः । नन्वेवम्बहुशब्दादपि सङ्ख्याकार्यञ्च स्यादत आह-*बहुशब्दस्त्विति । *इत्युक्तमिति । सङ्ख्यासंज्ञासूत्रव्याख्यानावसरे । *कालपरः=काले शक्तः । *भोजनपर्याप्त इति । भोजनक्रियानिष्ठा या कालिकसम्बन्धावच्छिन्ना व्यापकता तन्निरूपिततादात्म्यसम्बन्धावच्छिन्नव्याप्यताविशिष्टः । भूरिवारशब्देन यो बुद्धिस्थानेकावयवकः परिच्छिन्नो घट्यादिसमुदायो बोध्यते तद्व्याप्यकत्वम्पूर्वोक्तन्नानुपपन्नम् । स च घट्यादिसमुदाय उद्भूतावयवभेदो विवक्षित इति प्रकृते बहुवचनम् । तिरोहितावयवभेदतादृशसमुदायविवक्षायान्तु भूरिवारम्भुङ्क्ते इत्येकवचनं भवत्येव । यत्तु भूरिशब्दो बहुत्वसङ्ख्यो-

स इति "कालाध्वनोः" ( पा० सू० २-३-५ ) इति द्वितीया । *यद्यपि द्रव्यगुणयोर्गणनयोग्यं जन्माप्रसिद्धमेकैव तेषामुत्पत्तिः । क्रियायास्त्वनेकस्या अपि निवृत्तभेदाया धातुवाच्यत्वेन तत्सम्भवात् तथापि क्रियाग्रहणं स्पष्टार्थम् । *साध्यस्वभावैव यत्र क्रिया तत्रैतत्प्रवृत्त्यर्थन्तु न तत् । द्विर्वचनेऽच्चीति द्विरावृत्तिर्द्विःप्रयोगः द्विर्बद्धं सुबद्धमित्यादिप्रयोगविरोधात् । पञ्चकृत्वः कर्त्ता कटान्, द्विः कर्त्ता इत्यादौ गुणभूतक्रियायोगे कारकविभक्तेरिव अस्यापि साधुत्वमिष्टमेवेति स्पष्टं हरिकैयटादिग्रन्थे इत्यन्यत्र निरूपितम् । *द्वौ पाकौ इत्यादौ न सुजादि । क्रियाजन्मगणनस्याभावात्* । तद्गणनार्थत्वे हि पाकावित्यादौ द्विवचनाद्यनापत्तिः* । *अत एव द्विःप्रयोगाविति न । तदुक्तं भाष्ये-"द्वौ पाकावित्यादौ कस्मान्न भवति ?, नैतत्क्रियागणनम् । अभिमुखी प्रवृत्तिरभ्यावृत्तिः"इति । सा च जन्मरूपा । एवञ्च नैतत्क्रियागणनमिति तदर्थ इति निरूपितं भाष्यप्रदीपोद्द्योते ।

---

त्पत्तिकावृत्तिकक्रियाधारकालपरस्तस्य कालबोधकवारशब्देन बहुव्रीहिः, भोजनक्रियैवान्यपदार्थः । एवञ्च भूरिशब्दस्य क्रियाविशेषणीभूतार्थप्रतिपादकतया कर्मण्येव द्वितीया । क्रियाविशेषणत्वात् । न च मृदु पचतीतिवन्नपुंसकत्वापत्तिरिति वाच्यम् । अनियतलिङ्गकस्यैव क्रियाविशेषणीभूतार्थप्रतिपादकस्य नपुंसकत्वात । वारशब्दस्य तु नित्यपुंस्त्वात्तदन्तसमासस्यापि लोकतो नित्यपुंस्त्वमिति केचित् । तन्न । शास्त्रेण पुंस्त्वस्यानुपपादनात् । अन्ये तु भूरिशब्दो बहुसङ्ख्याघृत्तिकजन्मवत्परः । कालावच्छिन्नपरश्च वारशब्दस्तयोश्च कर्मधारयः । एवञ्च समासस्य पुंस्त्वन्न्याय्यमेव । तदर्थश्चाभेदेन भुज्धात्वर्थफलेऽन्वेतीति क्रियाविशेषणत्वाद्द्वितीयेत्याहुः । क्रियाग्रहणं प्रकृतसूत्रे व्यर्थमित्यभिप्रायेणाशङ्कते-*यद्यपि द्रव्यगुणयोरिति । पञ्चकृत्वः श्वेतः पटः, पञ्चकृत्वो धनवान्देवदत्त इत्यादिप्रयोगास्तु जात इत्यादिशब्दाध्याहारेणोपपाद्याः । प्राचीनोक्तं क्रियाग्रहणप्रयोजनं खण्डयति-*साध्यस्वभावैवेति । ननु यदि साध्यस्वभावैवेति न नियमस्तदा द्वौ पाकावित्यादौ सुजापत्तिरत आह-*द्वौ पाकाविति । *अभावादिति । किन्तु सिद्धावस्थक्रियागतन्द्वित्वं विवक्षितमिति शेषः । *अनापत्तिरिति । द्विशब्देन सामानाधिकरण्याद्धि द्वित्वस्यैकस्यैव "सम्भेदेनान्यतरवैयर्थ्यम" इतिन्यायेन पाकशब्दाद् द्विवचनेन च प्रतिपादनम्भवति, तच्च क्रियाजन्मगणने न सम्भवतीति भावः । *अत एव=क्रियाजन्मगणनायामेतादृशस्थले द्विवचनासम्भवादेव । न च पञ्चवारान् भुङ्क्ते इति यत्र प्रयोगस्तत्र पञ्चन्शब्दात्कृत्वसुच् स्यादिति वाच्यम् । तत्र वारशब्देनाभ्यावृत्तेरुक्ततया सङ्ख्याशब्दस्य तद्वृत्तित्वाभावात् । न चैवम्भूरिवारानित्यत्राप्येवं वक्तुं शक्यमि-

यद्यपि संख्या गणनात्मिकैव तथापि गणन इति गणानायां ये प्रसिद्धास्तेषामेव ग्रहणार्थम् । तेन *युग्मोभादिशब्दान्नेति दिक् ॥

विभाषाब (पा० सू० ५-४-२०) ॥ *अविप्रकृष्टकालक्रियाजन्मगणनवृत्तेरित्यर्थः ।

प्राचुर्येणेति । *व्याख्यानादिति भावः । भाव इति । प्रचुरस्य वचने बोधने सति प्रातिपदिकात्प्रत्यय इत्यक्षरार्थः*, प्रचुरार्थबोधकात्तदिति प्रथमासमर्थात्स्वार्थे मयडिति यावत् । अधिकरणे इति । *प्राचुर्येण प्रस्तुतान्नादिवचनात्प्रथमासमर्थादधिकरणे प्रत्यय इत्यर्थः । प्रकृतेति लुप्तसप्तम्यन्तं, तत्र वर्तमानादित्यर्थः । अत्र पक्षे वचने इत्यत्र प्रकृत्यर्थो ऽविवक्षितः । तेन भवन्मयो ध्यायति नावनीपतिरित्यादौ प्रकृत्यर्थाधिकरणमात्रे मयडुपपन्नः । तन्त्रेणार्थद्वये सूत्रतात्पर्यम् । *व्याख्यानात् । स्वार्थिकप्रकरणे पाठस्त्वाद्यपक्षे चरितार्थः । वस्तुतोऽथ स्वार्थिका इत्यस्य प्रायेणेत्यादिः । प्रकारवचने जात्यन्ताच्छबन्धुनि देवतान्तात्तादर्थ्ये यदित्यादौ वाचकताया एव प्रतीतेरिति बोद्धव्यम् । *तद्ग्रहणं वाक्यभेदेन प्राचुर्याभावेऽप्यत्यन्तस्वार्थिकमयडर्थम् । तेन चिन्मयं ब्रह्मेत्यादि सिद्धम् । यवागूमयीति । *टित्त्वान्ङीप् । अन्नमय इति । क्वचित् प्रकृतिलिङ्गातिक्रमाद्विशेष्यनिघ्नता ।

---

ति मूलोक्तप्रत्युदाहरणविरोध इति वाच्यम् । तस्य भूरि भुङ्क्ते इत्येतदुपलक्षणत्वात् । *युग्मोभादिशब्दादिति । एतयोर्नियतविषयपरिच्छेदकत्वसम्भवेऽपि लोके एकः युग्मौ त्रय इत्येवङ्गणना न हि प्रसिद्धेति भावः ।

विभाषा बहोर्धाऽविप्रकृष्टकाले (पा० सू० ५-४-२०) । क्रियाभ्यावृत्तिगणन इत्यनुवर्त्ततेऽत आह-*अविप्रकृष्टेत्यादि । दिवसस्येति मूले शेषत्वविवक्षया षष्ठी ।

तत्प्रकृतवचने मयट् (पा० सू० ५-४-२१) । *व्याख्यानादिति । प्रकृतशब्दस्य प्रस्तुतार्थकतया प्रकृते मयडिति वक्तव्ये वचनग्रहणसामर्थ्यलब्धप्राचुर्येण प्रस्तुतम्प्रकृतमित्येवं वृत्तिकारादिभिर्व्याख्यातन्तन्मूलकादित्यर्थः । *इत्यक्षरार्थ इति । वचनशब्दस्य भावल्युडन्तत्वपक्षे इति शेषः । यदा त्वधिकरणे प्रत्ययस्तस्मिन्पक्षे सूत्रार्थमाह-*प्राचुर्येणेत्यादि । *व्याख्यानादिति । अन्नमयो यज्ञः, अपूपमयं पर्वेत्यादिवृत्त्यादिसम्मतप्रामाणिकप्रयोगदर्शनमूलकव्याख्यानादित्यर्थः । *तद्ग्रहणमिति । प्रातिपदिकादुक्तेऽर्थद्वये प्रत्ययविधानेऽपीष्टप्रयोगेऽप्राप्ते इत्यादिः । *टित्त्वान्ङीबिति । स्वार्थिकानाम्प्रकृतितो लिङ्गवचनानुवर्त्तनस्य

समूहवच्च ( पा० सू० ५-४-२२ ) ॥ *बहुत्वविशिष्टेऽर्थे प्राचुर्याद्यर्थे च वर्तमानादित्यर्थः । मौदकिकादौ "अचित्त" ( पा० सू० ४-२-४७ ) इति ठक् । स्वार्थिकत्वेऽपि लिङ्गातिक्रम उक्तन्यायेन कुटीरवत् ।

भेषजमिति । *भियः षुक् ह्रस्वश्चेति व्युत्पादिताद्भिषज्यशब्दादिदमर्थेऽण्यत एव* निपातनादेकारः ।

देवतान्तात्तादर्थ्ये ( पा० सू० ५-४-२४ ) । तदर्थे वस्तुनि वर्तमानादित्यर्थः । अग्निदेवतायै इति । तदर्थकत्वं तात्पर्यग्राहकं बोध्यम् । वैधे कर्मणि त्यज्यमानद्रव्योद्देश्यत्वं मन्त्रस्तुत्यत्वञ्च देवतात्वम् । तदुक्तं भाष्ये—"दिवेरैश्वर्यकर्मणो देवस्तस्मात्स्वार्थे तल्" इति । *तेन *देवदैवत्यमिति सिद्धम् । तत् ध्वनयन्नाह—पितृदैवत्यमिति । *एतेन पितृषु देवतात्वजात्यभावादिदमयुक्तमित्यपास्तम् ।

नवस्येत्यादिवार्त्तिकैर्विधीयमाना अत्यन्तस्वार्थिकाः । साधारणादिति । *अत एव निपातनात्सादेशस्य दीर्घः । सह=समानं धारणम् अस्येत्यर्थः । *अनेकं प्रत्यविशिष्टसम्बन्धमित्यर्थः ।

---

सत्त्वात् । अन्नमयो यज्ञ इत्येतत्तु क्वचिल्लिङ्गवचनातिक्रमस्यापि सत्त्वेन ।

समूहवच्च बहुषु ( पा० सू० ५-४-२२ ) । प्रकृतवचने इत्यनुवर्त्तते । बहुषु प्रकृतवचने चार्थ इत्यर्थः प्रातिपदिकांशे स्वातन्त्र्येण बहुष्वित्यस्यान्वयाभिप्रायेण । तथा च यत्फलितन्तदाह-*बहुत्वविशिष्ट इति । समूहवदित्यत्र सप्तम्यन्ताद्वतिः ।

अनन्तावसथेतिहभेषजा ( पा० सू० ५-४-२३ ) । इतिहेतिनिपातसमुदायादयम्प्रत्ययः । स चोपदेशपरम्परायां वर्त्तते । भेषजशब्दम्प्रकृतसूत्रघटकं साधयति-*भियः षुगित्यादि । *अत एव निपातनादिति । अन्यथा आदिवृद्ध्या भैषजमिति स्यादिति भावः ।

देवतान्तात्तादर्थ्ये यत् ( पा० सू० ५-४-२४ ) । तदर्थमेव तादर्थ्यम्, स्वार्थे ष्यञ्, तदाह-तदर्थे वस्तुनीत्यर्थ इति । *तेन=स्वार्थिकतल्प्रत्ययस्वीकारेण । *देवदैवत्यमिति सिद्धमिति । देवदैवत्यमित्यस्य देवस्य देवत्वमित्यर्थः । *एतेन=निरुक्तदेवतात्वस्य पितृष्वपि सत्त्वेन ।

पादार्घाभ्याञ्च ( पा० सू० ५-४-२५ ) । तादर्थ्ये इत्यनुवर्त्तते । अत्र चकारोऽनुक्तसमुच्चयार्थः । तेन एष वै सप्तदशाक्षरश्छन्दस्य इति सिद्धम् । *अत एव निपातनादिति । आग्नीध्रसाधारणेति वार्त्तिके निपातनात् । साधारणशब्दार्थं व्याचष्टे-*अनेकमिति । साधारणशब्दे समानशब्दस्य सादेशस्तु पृषोदरादित्वाद्बोध्यः । अत एव निपातनात्सादेशस्य दीर्घ इत्येवोक्तम् । अनेन वार्त्तिकेनोभयोरपि निपातनमिति तु युक्तम् ।

देवतेति । लिङ्गातिक्रमात्स्त्रीत्वम् ॥

वर्णे चा ( पा० सू० ५-४-३१ ) ॥ वर्णे किम् ? । लोहितं रुधिरम् । यावदाश्रयमवस्थानयोग्यत्वाभावो ऽनित्यत्वम् । लोहितादिति । *अस्मादेव ज्ञापकादत्यन्तस्वार्थिकानां सुबुत्पत्तेः प्रागेवोत्पत्त्यङ्गीकारेणान्तरङ्गत्वात्प्राप्तं लिङ्गबोधकप्रत्ययबाधनं स्वार्थिकेन वा भवतीत्यर्थः । *अत एव ङ्याप्पदस्यात्र प्रकरणेऽसम्बन्धः । तेनैतादिभ्योऽत्यन्तस्वार्थिके एतिकेत्येव, न त्वेनिकेति ।

वैलक्ष्येणेति । लज्जयेत्यर्थः । *उपाय इति । अ चेति वक्तव्ये ह्रस्वग्रहणाद्दीर्घस्य स्थानित्वम् । *एतेनान्त्यस्य* स्यात्तत्सामर्थ्याच्च लोपाभाव इत्यपास्तं *व्याख्यानाच्च ॥

वाचो ( पा० सू० ५-४-३५ ) । व्याहृतोऽन्येनोक्तोऽर्थो यस्या इत्यर्थस्तदाह—सन्दिष्टेति ॥

तद्युक्ता ( पा० सू० ५-४-३६ ) । *तच्छब्देन वाक्, *वाचा युक्ताद्व्याहृतार्थप्रतिपादककर्मशब्दादित्यर्थः । तेन स्वयं वाचाकथनपूर्वकं यत्कर्म क्रियते तत्=कार्मणम् । तदुक्तं भाष्ये—"तदित्यनेन किं प्रतिनिर्दिश्यते ?, वागेव । यदेव वाचा व्याह्रियते तदेव कर्मणा क्रियते" इति । अत्र *वागेवेत्युत्तरस्थैवकारेण व्याहृतार्थायामित्यंशासंबन्धो लभ्यते, *क्रियया-

---

लोहितान्मणौ ( पा० सू० ५-४-३० ) । मणौ वर्त्तमानाल्लोहितशब्दात्स्वार्थे कनित्यर्थः ।

वर्णे चानित्ये ( पा० सू० ५-४-३१ ) । अनित्ये वर्णे वर्त्तमानाल्लोहितशब्दात्कन् स्यात् । *अस्मादिति । "लोहिताल्लिङ्गबाधनं वा" इतिवार्त्तिकादित्यर्थः । *अत एव=अस्य कनोऽत्यन्तस्वार्थिकत्वेन स्वार्थद्रव्यमात्रापेक्षतयाऽन्तरङ्गत्वेन ङ्याबुत्पत्तेः प्रागेवोत्पत्तेः स्वीकारादेव ।

*उपाय इतीति । इदं ह्रस्वत्वम्प्रत्ययसन्नियोगेन । *एतेन=दीर्घस्य स्थानित्वकथनेन । *अन्त्यस्य स्यादिति । ह्रस्वत्वमन्त्यस्य स्यादित्यर्थः । *व्याख्यानादिति । औपायिकेति लक्ष्यदर्शनमूलकव्याख्यानादित्यर्थः ।

वाचो व्याहृतार्थायाम् ( पा० सू० ५-४-३५ ) । अन्येनोक्त इत्यस्यान्येन प्रकाशित इत्यर्थः । अनेन यद्यपि वाचिक इत्यस्य अनुवादात्मकशब्देऽपि प्रवृत्तिः प्राप्ता तथापि वाचिकपदं रूढमित्याशयेनाह-मूले सन्देशवागिति ।

तद्युक्तात्कर्मणोऽण् ( पा० सू० ५-४-३६ ) । तेन युक्तात्=तद्युक्तात् । तच्छब्दार्थमाह-*तच्छब्देनेति । प्रकृतित्वेनाभिप्रेते कर्मशब्दे वाग्युक्तत्वञ्च वाक्प्रतिपाद्यवाचकत्वरूपम्, तदाह-*वाचायुक्तादिति । *वागेवेत्युत्तरस्थै-

रुत्सर्गत एककर्तृकत्वञ्च प्रतीयते । यद्वाचा वदति तत्कर्मणा कुरुते इति श्रुत्यर्थानुवादरूपत्वाद्यदेवेत्यादिभाष्यस्य । तद्युक्तात्किम् । वाचा कथनं विनैव यत्कर्म क्रियते तत्र माभूदिति । *एवं च मन्त्रविशेषप्रयोगपूर्वं क्रियमाणकर्मविशेषे रूढोऽयमित्याहुः । *इदन्त्वया कर्तव्यमिति संदेशवाचं श्रुत्वा यत्कर्म क्रियते तत्कार्मणमिति वदतः कैयटस्याशयस्तु चिन्त्यः । वाचिकं श्रुत्वेति मूलं कैयटानुसारेण* ।

क्षेत्रे रूढा इति । तत्रोत्पन्ना इत्यर्थः ।

*प्रजानातीति प्रज्ञः ।

नित्योऽयमिति । *वृत्तौ स्पष्टम् । भाष्ये नित्येष्वस्यागणनान्नास्य नित्यत्वम् । प्रत्ययान्तरं त्वस्मादस्यापवादत्वान्न भविष्यतीति परे ।

---

वेति । भाष्ये यत् "किम्प्रतिनिर्दिश्यते" इति प्रश्नवाक्यन्तदुत्तरभूतं यद् "वागेव" इति वाक्यन्तत्र य एवकारस्तेनेत्यर्थः । *क्रिययोः=वच्धातुकृधातुभ्याम्प्रतिपाद्ये ये क्रिये तयोरित्यर्थः । कर्मणोऽणित्यत्र कर्मशब्दः क्रियापरः । न च कर्मणा क्रियत इत्यत्र पौनरुक्त्यमिति वाच्यम् । कर्मणेत्यत्र कर्मशब्दस्य वाक्प्रतिपाद्यार्थकर्मकक्रियापरत्वं, क्रियत इति कृधातोः क्रियासामान्यार्थकत्वमिति भेदात् । तद्युक्तादित्यस्य प्रत्युदाहरणप्रदर्शनपरे वाक्ये यत्कर्म क्रियत इत्यत्र कथम्भेद इति न शङ्क्यम् । अत्रापि कर्मशब्दस्य वाक्करणकार्यप्रतिपादनाभावाधिकरणकालावच्छिन्नत्वविशिष्टक्रियापरत्वं, क्रियत इत्यत्र कृधातोः क्रियासामान्यपरत्वमिति भेदात् । वाचा कथनमित्यत्र वाङ् न लौकिकी किन्तु मन्त्ररूपा विवक्षितेत्याशयेनाह—*एवञ्चेति । पूर्वोक्तभाष्यव्याख्यानावसरे इदन्त्वया कर्त्तव्यमिति सन्देशवाचं श्रुत्वा यत्कर्म क्रियत इति कैयटरीत्या भाष्यव्याख्यायामुत्तरवाक्यस्थैवकारास्वारस्यमित्याह—*इदन्त्वयेति । *कैयटानुसारेणेति । इदमुपलक्षणम् । वृत्त्यनुसारेणेत्यपि बोध्यम् ।

ओषधेरजातौ (पा० सू० ५-४-३७) । अजातौ वर्त्तमानादोषधिशब्दादित्यर्थः । औषधम्पिबतीत्यत्रौषधिशब्द ओषधिविशेषपरो लक्षणयेति न जातिपरत्वम् ।

"प्रज्ञादिभ्यश्च" ( पा० सू० ५-४-३८ ) इत्यत्र प्रज्ञशब्दस्य योऽर्थस्तमाह—*प्रजानातीति । *वृत्तौ स्पष्टमिति । "नित्यश्चायम्प्रत्ययः उत्तरसूत्रेऽन्यतरस्याङ्ग्रहणात्" इति तत्रोक्तम् ।

बह्वल्पार्थाच्छस् कारकादन्यतरस्याम् (पा० सू० ५-४-४२ ) । बह्वर्थादल्पार्थाच्च प्रातिपदिकात् कारकाभिधायिनः शस्प्रत्ययः स्यात् । अत्र कारकादितिसामान्यत एवोक्तमतः कारकसामान्यप्रतिपादकादयम्प्रत्ययो न कर्मप्रतिपादकादेव । बहुभिः कालैर्ददाति बहुशो ददाति । अल्पेन ददाति अल्पशो ददा-

मङ्गलामङ्गलवचनमिति। *"अपेतापोढ"(पा०सू० २-१-३८) इति सूत्रे 'अल्पशः'इति सौत्रप्रयोगः । *एतेनास्मात्सूत्रप्रयोगान्मङ्गले-त्यादि प्रायिकमित्यपास्तम् । भाष्यानुक्तेः । अत्राल्पार्थशब्देन स्तोकादी-नामेव ग्रहणं न तदर्थकैकशब्दस्य । *तत्सत्त्वे मानाभावात् । सत्त्वेऽपि तत्रार्थे तस्याप्रसिद्धतरत्वेनाल्पार्थशब्देन न ग्रहणम् ।

संख्यैक (पा० सू० ५-४-४३) ॥ संख्यावाचिन एकत्ववि-शिष्टाच्च प्रातिपदिकात्कारकाच्छसित्यर्थः । एकार्था एवेति । एकव-चनशब्देनात्र *त एव गृह्यन्ते इति भावः । *घटं घटमिति । *ततः शसि घटं घटमितिवत् घटौ घटौ ददातीत्यपि बोधसम्भव इत्यभिमानः* । पदशः स्वरश इति प्रयोगात्तेभ्योऽपि वृत्तावेकत्वविशिष्टस्यैव बोध इति जाति-शब्देभ्योऽपि शस् इति परे । एकवचनादिति* घटौ घटौ ददाती-त्यादिबोधे शसोऽसाधुत्वायेति केचित् ।*वस्तुत एकवचनादिति *संख्या-तिरिक्तार्थानां *परिगृहीतैकत्वानामेव वीप्सेत्यर्थानुवादकम् । अत एव माषौ

---

ति । बहुभ्यो ददाति अल्पाय ददातीत्यर्थेऽपि बहुशः अल्पश इति भवति । अर्थ-ग्रहणात्पर्यायेभ्यो विशेषेभ्यश्चायम् । विशेषोदाहरणम्-त्रिशः, पञ्चश इत्यादि । भूरिशो ददातीत्यादि । मूले मङ्गलामङ्गलवचनमिति । यथासंख्यमत्राभिप्रेतम् । यत्र मङ्गलममङ्गलञ्च गम्यते तत्रायम्प्रत्यय इत्यर्थः । वृत्त्युक्तं खण्डयति-*अपेते-ति । *एतेन=सौत्रत्वकथनेन । *तत्सत्त्वे=अल्पार्थैकशब्दसत्त्वे ।

*त एव=एकार्थका एव । ये वृत्तावेकत्वविशिष्टस्यैवार्थस्य स्वभावा-द्बोधकास्त एव गृह्यन्ते । तादृशाश्च परिमाणवाचकास्तेषामक्तपरिमाणार्थत्वेन न्यूनाधिकभावे प्रयोगाभावः। जातिशब्देभ्यस्तु न तथेति तेभ्यो न शसिति भावः। *घटं घटमितीति । यदि घटशब्दाच्छस् स्यात्तदा एकस्यैव घटस्य प्रतीतिः स्यादिति नास्ति किन्तु द्वयोर्बहूनां वा प्रतीतिरपि स्यादित्याह-*ततः शसीति । *अभिमान इति । एतेन वृत्तावभेदैकत्वसङ्ख्याया भानस्योत्सर्गतः प्रसिद्धतया पूर्वोक्तमयुक्तमिति ध्वनितम् । अन्यसम्मतन्तत्प्रयोजनमनुवदति-*एकवचनादि-तीति । अत्र हि घटौ घटावित्युच्चारणेनैकत्वविशिष्टार्थाभिधायकत्वाभावः स्फुट एव । केचिदित्यरुचिसूचनाय । तद्बीजन्तु यदि द्विवचनान्तव्यावृत्तिरेव फलन्त-दैवकवचनान्तात्प्रत्यय इत्यत्रैव पर्यवसानमिति घटंघटमित्यत्र शस् दुर्वार एवेति परिमाणशब्देभ्य एव प्रत्यय इति नियमलाभ इति सूत्रे सङ्ख्यैकाचेति वक्तव्ये वचनशब्दोपादानसामर्थ्यादेकवचनान्तादित्यर्थो नाभिप्रेतः, किन्त्वेकं वक्तीत्येक-वचनमित्यर्थ एवाभिप्रेत इत्याशयेनाह-*वस्तुत इति । *सङ्ख्यातिरिक्तार्था-नामिति । सङ्ख्याशब्देभ्यस्तु द्विवचनस्य प्रकृत्यर्थानुवादकतया परिगृहीतैकत्वा-नामेवेति नियमस्य तत्राभावादिति भावः । *परिगृहीतैकत्वानामिति । परिगृ-

माषौ ददातीति न। किं तु द्वौ द्वौ ददातीत्येव तत्रेति बोध्यम् । *अत्राहुः चकारो वीप्सायामित्यनन्तरं द्रष्टव्यः ।" संख्यैकवचनाद्वीप्सायाश्च । चास्त्वार्थेऽपि । स चाभिधानस्वाभाव्यादेकशब्दादेव । तेनैकशब्दा *द्वीप्साशसभावे द्विर्वचने ततोऽसन्तस्वार्थिकं शसि *पक्षे जाते एकैकश इत्येतत्सिद्धिः । न चैवमेकश इत्युक्ते *सन्देहः स्यात् । शास्त्रे व्याख्यानतो लोके प्रकरणादितो निर्णयात् । नचास्य शस 'एकं बहुव्रीहिवत्' (पा० सू० ८-१-९) इत्य*पवादत्वाभावादेकशब्दे परत्वाद् द्विर्वचनमेव न्याय्यमिति वाच्यम् । तत्रापि "नित्यवीप्सयोः"(पा० सू० ८-१-४)इत्येव द्वित्वसत्त्वात् *तदनुवादेन बहुव्रीहिवद्भावस्यैव तेन विधानादिति *ध्वनितश्चेदं "सर्वस्य द्वे" (पा० सू० ८-१-१) इति सूत्रे भाष्ये इति

---

हीतं वाचकतासम्बन्धेनैकत्वविशिष्टन्तेषामित्यर्थः । नन्वत्र सूत्रे चकारो व्यर्थः । एकार्थबोधकपरैकवचनशब्दोपादानेन सिद्धे सङ्ख्याशब्दोपादानेनैकत्वातिरिक्तसङ्ख्यावाचकाः सङ्ख्याशब्देन विवक्षिता इत्यर्थो भविष्यतीत्यत आह-*अत्राहुरिति । *वीप्साशसभावे इति । वीप्साबोधकशस्प्रत्ययाभाव इत्यर्थः । *पक्ष इति । एतेनैकैकमित्यपि भवतीति सूचितम् । *सन्देहः स्यादिति । अत्र शस् वीप्सायां वा स्वार्थे वेति सन्देहः स्यादित्यर्थः । *अपवादत्वाभावादिति । द्विबह्वादिशब्देभ्योऽपि दर्शनादित्यादिः । *वीप्सयोरेवेति । अत एव "तान्येक" ( पा० सू० १-४-१०२ ) इति सूत्रघटकस्यैकश इत्यस्यैकैकमित्यभियुक्तव्याख्यानसङ्गतिः । *तदनुवादेनेति । "नित्यवीप्सयोः" ( पा० सू० ८-१-४ ) इति सूत्रसिद्धद्विर्वचनानुवादेनेत्यर्थः । *ध्वनितश्चेदमिति । तत्र हि-"यत्र तद्भिन्नेनानुक्ता वीप्सा भवति तत्र द्विर्वचनम् । तद्यथा । एकैकशो ददाति" इत्युक्तम् । अत्र द्विरेकशब्दः शश्च दृश्यते तस्योपपत्त्यर्थं कैयटेनोक्तम्-"केचिदाहुः-अल्पार्थोऽप्येकशब्दोऽस्ति तस्य वीप्सायां द्विर्वचनं बह्वल्पार्थादिति शस्प्रत्ययः" इति । अत्र केचिदिति वदताऽरुचिः सूचिता । सा चाल्पार्थकैकशब्दसद्भावे दृढतरमानाभाव इति । "ष्णान्ता षट्" ( पा० सू० १-१-२४ ) "बहुषु बहुवचनम्" ( पा० सू० १-४-२१ ) "एकादाकिनिच्" ( पा० सू० ५-३-५२ ) "एको गोत्रे" ( पा० सू० ४-१-९३ ) एतेषु सूत्रेषु सङ्ख्याऽसहायान्यार्थकस्य प्रथमार्थकस्य च भाष्यकृतोक्तेस्तेषाम्प्रामाणिकत्वेऽपि समानसाधारणार्थकयोर्मानाभावः । न च चैत्रमैत्रयोरेका माता, देवदत्ताविष्णुमित्रयोरेकन्धनमित्यत्र तौ दृश्येते इति वाच्यम् । सङ्ख्यापरैकशब्दप्रयोगेणाप्येतयोरुपपत्तेः । किञ्चाल्पार्थकैकशब्दस्य तदर्थकत्वेन प्रसिद्ध्यभावाद् "बह्वल्पार्थात्" ( पा० सू० ५-४-४२ ) इति सूत्रे न तद्ग्रहणम् । किञ्च सङ्ख्याशब्दातिरिक्तशब्दानामपरिगृहीतैकत्वानामेव वीप्सासत्त्वेन ततो द्विर्वचनापवादः शसेव प्राप्नोति । न च "एकम्बहुव्रीहिवत्" ( पा० सू० ८-१-९ ) इति द्विर्वचन-

भाष्यप्रदीपोद्द्योते निरूपितम्* ।

या पञ्चमी विहितेति । "प्रतिनिधिप्रतिदाने च" ( पा० सू० २-३-११) इत्येषेत्यर्थः । आद्यादिभ्य इति । *अयमेव सार्वविभक्तिकस्तसिः ।

चारित्रेण इति । बहुष्वासीनेष्वन्यातिक्रमेण लोकैर्गृह्यते इत्यर्थः । फलितमाह-अन्यानतिक्रम्येति ।

---

न्तत्र भवत्विति वाच्यम् । तस्य सूत्रस्य सङ्ख्यावाचकप्रसिद्धतरैकशब्द एव प्रवृत्तेः । किञ्च तेन वीप्सायां कृतद्विर्वैकशब्दानुवादेन बहुव्रीहिवद्भावस्य विधिरित्येव युक्तम् । अत एव "तान्येक"(पा० सू० १-४-१०१) इति सूत्रस्थस्यैकश इत्यस्योपपत्तिः । तथा चैकश इति वदता विवक्षितमर्थजातन्ध्वानितमित्यर्थः । कथन्तर्हि भाष्यप्रयोगस्योपपत्तिरिति चेदुच्यते । "सङ्ख्यैकवचनाच्च" ( पा० सू० ५-४-४३ ) इत्यत्र चकारस्य भिन्नक्रमतया वीप्सायां स्वार्थे च शसित्यर्थः । स च स्वार्थिको न सर्वत्र किन्तु अभिधानस्वाभाव्यादेकशब्दात्कृतद्विर्वचनैकशब्दाच्चेति नातिप्रसङ्गः । एवञ्चैकशब्दप्रकृतिकशसः स्वार्थिकत्वस्यापि सत्त्वेन न ततो नियमेन वीप्सोक्तिरिति वीप्साबोधकशसभावपक्षे वीप्सायान्द्विर्वचने कृते ततः स्वार्थिकः शसिति । अत्रेदम्भाष्यमेव मानम् । एकश इति तु वीप्साशसन्तं स्वार्थिकशसन्तम्वाऽस्तु । लौकिकप्रयोगे प्रकरणादिनाऽर्थावसाय इति । तदेतदाह-*भाष्यप्रदीपोद्द्योते निरूपितमिति ।

आद्यादिभ्य उपसङ्ख्यानम् । अयं स्वार्थिकः सर्वाभ्यो विभक्तिभ्यो विशेषाभावात्तासु कृतासु तदन्तेभ्यो भवति, तदाह-*अयमेवेति । वाग्रहणसम्बन्धाच्चायन्तसिर्वैकल्पिकस्तेनैतद्रहितानामाद्यादीनाम्प्रयोगो भवति ।

अपादाने चाहीयरुहोः (पा० सू० ५-४-४५) । अपादाने या पञ्चमी विहिता तदन्ताद्वा तसिः स्यात् । तच्चापादानं हीयरुहोर्न चेत् । अत्र हीयेति निर्देशात्कर्मप्रत्ययान्तजहातियोगेऽपादानत्वम्भवति न तु जिहीतेर्योग इति निर्णेयम् । तेन भूमेरुज्जिहीते भूमित उज्जिहीत इत्यत्र तसिर्भवति । स्वर्गाद्धीयते, पर्वतादवरोहतीत्यत्रैव तसिप्रत्ययो न भवति ।

'मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह' ।

इत्यत्र तु तृतीयान्तात्तसिः ।

अतिग्रहाव्यथन ( पा० सू० ५-४-४६ ) । अतिग्रहादिविषयेऽकर्त्तरि या तृतीया तदन्ताद्वा तसिः स्यात् । चारित्रेणातिगृह्यते । चारित्रतोऽतिगृह्यते । चारित्रं=सुष्ठुवर्त्तनं, तेनान्यानतिक्रम्य गृह्यते । अत्र करणतृतीयान्तादिति वक्तव्येऽकर्त्तरि तृतीयेत्युपादानं हेतौ या तृतीया तत्सङ्ग्रहाय । तेन चारित्रेणातिगृह्यत इत्यत्र चारित्रस्य हेतुत्वविवक्षायामपि तसिद्धिर्भवति ।

हीयमानपापयोगाच्च ( पा० सू० ५-४-४७ ) । अत्र पापयोगशब्दाच्च-

हीयमान(पा० सू० ५-४-४६)। हीयमानेन पापेन च युक्तादित्यर्थः।
अर्जुनत इति । *पक्षे इति शेषः ।
प्रवाहिका=विषूचिका ।
अभूतेति । गम्यमाने इति शेषः । तद्भावेति *करणतृतीयया समासः । अभूतपदेन कर्तृषष्ठ्यन्तेन तस्य समासः । अभूतत्वं प्रत्यासत्त्या तद्भावशब्दघटकतच्छब्दार्थकरणत्वेनैव ग्राह्यम् । एवञ्च येन रूपेण प्रागभूतन्तेन रूपेण तस्य भाव इति फलितम् । एवञ्च यत्र प्रकृतिस्वरूपमेव विकाररूपतामापद्यमानं विवक्ष्यते तत्रायं-प्रत्ययः । *संपद्येत्यादेः संपद्यकर्तरि वर्तमानादित्यर्थः । अस्मादेव निपातनात्संपदेर्भावे शः*,दिवादित्वाच्छ्यन् । संपद्यस्य कर्त्तेति तत्पुरुषः । एवञ्च संपत्तिकर्तृबोधकाद्विकारवाचकात्प्रत्ययः । *तस्य *प्रकृतौ वर्त्तमानत्वञ्गौण्या वृत्त्या* । *अत एव महद्भूतेत्यादौ *नात्वं *सामानाधि-

---

शीआद्यजन्तौ । तेन युक्तेत्यर्थस्य लाभः । तद्युक्तत्वञ्च=तदन्वयित्वम् । उदाहरणे करणे हेतौ च तृतीया । युक्तत्वञ्च न साक्षादेवेत्याशयेनाह-तद्युक्तत्वमिति। वृत्ततो हीयत इत्यत्र हाधात्वर्थहाने वृत्तस्य करणत्वेनान्वयः। वृत्ततः पाप इत्यत्र तु यः पुरुषोऽतिदयालुत्वेन हेतुना पापवतोऽपि जनस्य सङ्ग्रहं कृतवान् स विवक्षित इति साक्षात्तद्युक्तत्वम् । अत एवोक्तम्मूले क्षेपस्याविवक्षायामिति ।

षष्ठ्या व्याश्रये ( पा० सू० ५-४-४८ ) । नानापक्षसमाश्रयो=व्याश्रयः । एवञ्च नानापक्षसमाश्रयणे गम्यमाने षष्ठ्यन्ताद्वा तसिः स्यादित्यर्थः । अत्र तत्समाश्रयणमेककर्तृकमनेककर्तृकम्वा । उदाहरणेऽर्जुनादिपदानां शक्यार्थपरतायामाह-*पक्षे इति शेष इति । वृत्तावर्जुनादिपदानान्तत्पक्षे लक्षणा वा बोध्या।

रोगाच्चापनयने ( पा० सू० ५-४-४९ ) । प्रवाहिकात इत्यादावुदाहरणे प्रवाहिकादिपदानान्तन्निवर्त्तकोपाये लक्षणा ।

कृभ्वस्तियोगे सम्पद्यकर्त्तरि च्विः ( पा० सू० ५-४-५० ) । *करणतृतीयेति । तेन भावस्तद्भावः । तद्भाव इत्यत्र भवनञ्च वास्तविकमेव, किन्तु वैवक्षिकम् । सम्पद्येत्यादिपदं व्याचष्टे-*सम्पद्येत्यादेरिति । कर्तृत्वस्य क्रिया सम्पत्तिरूपा विवक्षितेत्याशयेनाह-*भावे श इति । एवञ्चाभूतकर्तृकं यत्तद्रूपकरणम्भवनन्तस्मिन् गम्यमाने यस्य सम्पत्तिकर्तृत्वविवक्षा तद्वाचकादयम्प्रत्ययः । *तस्य=सम्पत्तिकर्तृवाचकशब्दस्य । *प्रकृताविति । अत्र प्रकृतित्वञ्च तदुत्पत्तिप्रयोजकनाशप्रतियोगित्वरूपं, किन्तु तद्व्यवहारपूर्वकालिकव्यवहारविषयत्वम् । एवञ्चान्यबोधकस्य शब्दस्यान्यत्र कथं वृत्तिरित्याकाङ्क्षायामाह-*गौण्या वृत्त्येति । *अत एव=गौण्या वृत्त्या वर्त्तमानत्वेन गौणत्वादेव । *नात्वमिति । महच्छब्दस्य गौण्याऽमहति वृत्तित्वाद् गौणमुख्यन्यायेन "आन्महत" ( पा०

करण्यनिबन्धनपुंवत्त्वञ्च भवति, तदाह--विकारात्मतामित्यादि । च-कारोऽन्तोदात्तत्वाय । इकारो वेरित्यत्र सामान्यग्रहणाविघातार्थः ।

चूण्यन्तत्वादिति । "ऊर्यादिच्वि" ( पा० सू० १-४-६१ ) इति निपातत्वेऽव्ययत्वमित्यर्थः । ब्रह्मीभवतीति । अत्र भवनकर्तृत्वं प्रकृतिभूतस्याब्रह्मण एव विकाराभेदेन बोद्धव्यम् । कृष्णीकरोतीत्यादौ क-र्मत्वमप्येवम् * । *अत एव सङ्घीभवन्ति ब्राह्मणास्त्वद्भवति चैत्र इत्यादौ वचनपुरुषव्यवस्था । *अन्यत्र तु प्रकृतिविकृत्योरुभयोः कर्तृत्वं* तत्र सा-क्षाद्विकारस्यैव स्वर्णपिण्डः खदिराङ्गारसदृशे कुण्डले भवत इति पस्पशास्थ-भाष्यप्रयोगो विकृतेः कर्तृत्वात् । अत्वन्त्वं सम्पद्यते इत्यादौ चूण्यन्तस्य वाक्ये लोके प्रकृतेरपि कर्तृत्वदर्शनाच्च । अयं प्रयोगो "युष्मद्युपपदे" (पा०

---

सू० ६-३-४६ ) इति नात्वमित्यर्थः । यद्यपि भवनकर्ताऽमहांस्तथापि स एव गौण्या वृत्त्या महच्छब्दबोध्य इति महद्भूता ब्राह्मणीत्यत्र पुंवद्भावो भवतीत्या-शयेनाह-*सामानाधिकरण्येति ।

*मप्येवमिति । विकाराभेदेनेत्यर्थः । एवञ्च प्रकृतेः कर्तृत्वम्फलितं तदाह-*अत एवेति । प्रकृतेः कर्तृत्वादेव । सङ्घीभवन्तीत्यत्रासङ्घानाम्बहुत्वा-द्बहुवचनन्त्वद्भवतीत्यत्रात्वम्पदार्थस्य कर्तृत्वाद् युष्मदर्थस्याकर्तृत्वान्न मध्यमः किन्तुशेषत्वात्प्रथम इत्यर्थः । *अन्यत्र=च्व्यन्तत्वाभावे । *उभयोः कर्तृत्वमिति । एतच्च लक्ष्यानुरोधेन कल्प्यते । च्व्यन्तविषये पूर्वोक्तां व्यवस्थां हरिरप्याह—

"पूर्वावस्थामविजहत्संस्पृशन्धर्ममुत्तरम् ।
सम्मूर्च्छित इवार्थात्मा जायमानोऽभिधीयते ॥"

पूर्वावस्था=कारणावस्था । उत्तरन्धर्मम्=कार्यावस्थाम् । एवञ्चाव-स्थाद्वयावच्छिन्नमेकमेव वस्तु पूर्वावस्थानुगुण्येनोत्तरावस्थाप्राप्त्युन्मुखञ्जायत इत्युच्यते । एकस्यैव वस्तुन उभयावस्थाप्राप्त्यभिधानेन प्रकृतिविकृत्योरेकार्थ-प्रतिपादकत्वरूपं सामानाधिकरण्यं स्पष्टमेवाभिहितम् । नन्वेवं च्व्यन्त एवो-भयोः कर्तृत्वापत्तिरत आह स एव-

"स व्यापारतरः कश्चित्क्वचिद्धर्मः प्रतीयते ।
संसृज्यन्ते च भावाभ्याम्भेदवत्योऽपि शक्तयः ॥" इति ।

सः व्यापारः=कर्तृत्वशक्तिरूपः । एतन्निष्ठः प्रकर्षश्च व्यवस्थया प्रकृ-तिविकृतिसम्बन्धित्वेन प्रतीतिविषयत्वरूपः । यथा सुवर्णपिण्डः खदिराङ्गारस-वर्णे कुण्डले भवत इतिभाष्यप्रयोगाद्वाक्ये विकृतेः कर्तृत्वं क्वचित् । क्वचित्तु प्रकृतेः, यथैको वृक्षः पञ्च नौका भवतीति प्रयोगात्तादृशस्थले एकवचनमेव । अत्वन्त्वं सम्पद्यते त्वद्भवतीत्यत्रात्वम्पदार्थस्य कर्तृत्वात्प्रथमः । त्वमत्वम्भवसीत्यर्थे तु अत्वद्भवसीत्येव । एवञ्च—

सू० १-४-१०५ ) इति सूत्रे भाष्ये स्पष्टः । *अनारोपितात् तथाभूते* *आरोपिततद्भावसम्पत्तावेव च्विः । *अत एवेश्वरप्रसादादिनाऽमहति मुख्यमहत्त्वोत्पत्तौ न च्विः । *अत एव च्व्यन्तार्थस्य गोभवदित्यादौ गौणत्वेन प्रयुज्यत्वाभावसिद्ध्या "ओतश्च्व्यन्तस्य प्रतिषेधः" इति वार्तिकमोत्सूत्रे भाष्ये प्रत्याख्यातम्* । करणीभूतो दण्ड इत्याद्यसाध्वेव । तत्राकारणत्वाद्यारोपपूर्वककारणत्वादिबुद्ध्या च्विरिति तु न युक्तम् । अगोत्वारोपपूर्वकगोत्वबुद्ध्या च्वौ गोभवदित्यादौ च्व्यन्तप्रतिषेधस्यावश्यकत्वेन तत्प्रत्याख्यानपरभाष्यविरोधापत्तेः । *प्रकृतसूत्रे भाष्येऽपि ध्वनितमेतत् । *सञ्ज्ञोपसर्जनीभूतानामिति वार्तिकप्रयोगे एकार्थीभाव इति भाष्य-

---

"प्रकृतेर्विकृतेश्चापि यत्रोक्तत्वमुभयोरपि ॥
गृह्णाति वाचकः सङ्ख्यां प्रकृतेर्विकृतेर्न हि ॥"

इति प्रवादश्च्व्यन्तविषय एव । यत्र च्विप्रत्ययस्तत्र सादृश्यमूलाभेदाध्यवसायेन विकाराभेदान्न प्रकृते कर्तृत्वेनोभयोरुक्तत्वम् । सादृश्यमूलाध्यवसानेनोभयोः कर्तृत्वादेव गौणत्वान्महद्भूतेन्यत्र महच्छब्दस्य नात्त्वम् । तदेतत् स्पष्टीकृतमत्र शेखरेऽन्यत्र प्रकृतिविकृत्योः कर्तृत्वेऽनियम इत्यादिना । अत्र यो विशेषस्तमाह—*अनारोपितादिति । अनारोपितवाचकादित्यर्थः । *तथाभूते=पूर्वावस्थात्यागाभावविशिष्टे वस्तुनि, वर्त्तमानादिति शेषः । *आरोपिततद्भावसम्पत्ताविति । आरोपितशुक्लत्वादिरूपभावस्य सम्पत्तौ । विवक्षितायामिति शेषः । *अत एव=आरोपिततद्भावसम्पत्तावेव च्विप्रत्ययस्य साधुत्वादेव । *अत एव=उक्तोऽर्थः । *भाष्ये प्रत्याख्यातमिति । तादृशभाष्यप्रामाण्यादारोपविषये एव च्विप्रत्ययः । *प्रकृतसूत्रे भाष्येऽपि ध्वनितमिति । तत्र हि "च्विविधावभूततद्भावग्रहणङ्कर्त्तव्यमिह मा भूत्—सम्पद्यन्ते यवाः, सम्पद्यन्ते शालयः । अथ क्रियमाणेऽपि वै अभूततद्भावग्रहणे इह कस्मान्न भवति । सम्पद्यन्तेऽस्मिन् क्षेत्रे शालय इति ? । प्रकृतिविवक्षाग्रहणञ्च कर्त्तव्यम्" इति । एतेन सम्पद्यन्ते ऽस्मिन् क्षेत्र इत्यत्र प्रकृतिविवक्षाऽभावान्न च्विप्रत्यय इत्युक्तम्भवति । प्रकृतिविवक्षेत्यस्य प्रकृतेरुपादानकारणत्वेन विवक्षिताया अन्यरूपेण विवक्षेत्यर्थः । प्रकृतिरेव सादृश्यमूलकाभेदेन विकारबोधकशब्देनाभिधीयते यत्र तत्रैव च्विप्रत्ययो भवतीति ध्वनितमित्यर्थः । नन्वतिसर्वशब्दे सर्वशब्दस्य वास्तविकमेवोपसर्जनत्वमिति कथं च्विप्रत्यय इत्यत आह—*संज्ञोपसर्जनीभूतेति । तेन वाक्येन वृत्तिघटकस्य सर्वादेरुपसर्जनत्वेनातिसर्व इत्यादौ सर्वादित्वाभावः प्रतिपाद्यते । उपसर्जनत्वञ्च सर्वमतिक्रान्त इति वाक्यप्रयोगेण प्रदर्श्यते । एवञ्च यो वाक्यघटकस्तस्मिन्ननुपसर्जने उपसर्जनत्वमारोपितमेव । वृत्तिघटकयोः पूर्वोत्तरपदयोः परस्परसमभिव्याहारेणान्यार्थसम्बद्धस्वार्थाभिधायकत्वं, वाक्यघटके

प्रयोगे च *वृत्तिवाक्ययोरत्यन्तभेदात् उपसर्जनत्वस्यैकार्थत्वस्य वाऽऽरोपितस्यैव सत्त्वात् च्विः । तत्तत्पदत्वस्यैव *तत्रारोपणैकार्थत्वस्य सुतरान्तत्त्वम* । *अमृतीभूत्वा मोक्षो भवतीत्यादि तु छान्दसम् । अभूततद्भाववसामर्थ्यात्सम्पद्यकर्तृत्वलाभे तद्ग्रहणं यत्र सम्पद्यकर्तृत्वमेव न कारकान्तरत्वं तत्र यथा स्यादित्यर्थम् । तेनादेवगृहे देवगृहे भवतीत्यत्र न । अदेवगृहे देवगृहे सम्पद्यते तत्र पूर्वं जातोऽपि वृक्षादिर्देवगृहे सम्पद्यते तथा भवतीति तदर्थः । अत्र वृक्षभवननिरूपिता*धिकरणत्वमपीति न दोष इत्याकरे स्पष्टम् । दोषाभूतमिति । *अधिकरणशक्तिप्रधानस्यापि वृत्तौ शक्तिमत्प्रधानत्वं बोध्यम् ।

गार्गीनि । *यञन्तात् च्वौ "आपत्यस्य" ( पा० सू० ६-४-१५१ ) इति लोपो न, अकारेण व्यवधानादिति भावः ॥

च्वौ च ( पा०सू० ७-४-२६ ) "अकृत्सार्व" ( पा० सू० ७-

---

तु नेति । वाक्यघटकस्य हि सर्वशब्दस्य तादृशस्थलेऽतिक्रमणक्रियानिष्ठविशेष्यतानिरूपिता या कर्मत्वसम्बन्धावच्छिन्नप्रकारता तदाश्रयप्रतिपादकत्वम् । समासघटकस्य सर्वशब्दस्य तु अतिक्रमणकर्तृरूपातिशब्दार्थसंसृष्टार्थाभिधायकत्वम्पांसूदकवदिति भावः । स्पष्टश्चेदम् "ईदूतौ च सप्तम्यर्थे" ( पा० सू० १-१-१९)इति सूत्रेऽर्थग्रहणप्रयोजननिरूपणावसरे भाष्यकैयटयोः । *वृत्तिवाक्ययोरत्यन्तभेदादिति । उपपादितरीत्या तयोः प्रायेण श्रूयमाणसुब्वतोर्वाक्यभावापन्नानेकावयवकत्वतद्भिन्नत्वाभ्याम्पदान्तरार्थसंसृष्टस्वार्थाभिधायकपदाघटितत्वतद्घटितत्वरूपविरुद्धधर्माभ्यां भेदादित्यर्थः । *तत्र=वाक्यघटके । तत्तत्पदत्वं=वृत्तिघटकतत्तत्पदत्वम् । *तत्त्वम्=आरोपितत्वम् । एवमन्यत्रापि बोध्यम् । नन्वेवमपि ब्रह्मीभवतीत्यादिप्रयोगानुपपत्तिस्तत्रारोपस्य विवक्षया च्विप्रत्ययस्योपपादयितुमशक्यत्वादत आह-*अमृतीभूत्वेत्यादि । *अधिकरणत्वमपीति । तथा च नादेवगृहपदार्थे सम्पद्यकर्तृत्वमेवेति न च्विप्रत्यय इति शेषः । अहरितिप्रथमान्तपदार्थेन सामानाधिकरण्योपपत्तये आह-*अधिकरणशक्तीति । दोषा गच्छतीत्यादौ दोषाशब्देन रात्रिनिष्ठाधिकरणत्वम्प्रतिपाद्यते । तस्य निरूपकतासम्बन्धेन गमूधात्वर्थक्रियायामन्वयेन रात्रिनिष्ठाधिकरणत्वनिरूपकमेककर्तृकं वर्त्तमानकालिकङ्गमनमिति बोधो भवति । प्रकृते तु रात्रिभिन्नमप्यहो रात्रिरूपमेव सम्पन्नमित्यर्थः प्रतीयते इति भावः ।

"आपत्यस्य च तद्धितेऽनाति" ( पा० सू० ६-४-१५१ ) इति सूत्रेण "क्यच्व्योश्च" ( पा० सू० ६-४-१५२ ) इत्यस्यान्यथासिद्धिनिरासायाह-*यञन्तादिति ।

४-२९ ) इस्तो दीर्घ इत्यनुवर्तते । यदि नेष्यते इति । *अनेनानिष्टौ दृढतरमानाभाव इति सूचितम् ।

च्विश्चेति । अनुवादोऽयम्* । *तेनो*न्मनीस्यादित्यादि सिद्धम् । *अन्यथा प्रत्ययविधौ तदन्तविध्यभावान्न स्यात् । अनेनान्त्यलोपे यथायथमीत्वादि ।

साकल्ये इति । अभूततद्भावे इत्यपि बोद्धयम् । *कृत्स्नं=सर्वावयवोपेतम् ।

वाक्यमेवेति । *न तु च्विरित्यर्थः ।

तदधीन (पा० सू० ५-४-५४) । अभूततद्भावे इति निवृत्तम्* ॥

विप्रत्रेति । स्वरादेराकृतिगणत्वात् त्रान्तस्याव्ययत्वम् ।

---

*अनेन=यदीतिशब्दोपादानेन ।

*अनुवादोऽयम्="कृभ्वस्तियोगे"इतिसूत्रसिद्धच्विप्रत्ययानुवादोऽयम् । *तेन=तत्सिद्धच्विप्रत्ययानुवादकरणेन । *उन्मनीस्यादित्यादि सिद्धमिति । अयमेव योगो यदि च्विप्रत्ययस्यापि विधायकः स्यात्तदाऽस्य सूत्रस्य प्रातिपदिकानुवादेन प्रत्ययविधायकतया ग्रहणवतेति निषेधापत्तिरित्याह-*अन्यथेति । कृभ्वस्तीतिसूत्रसिद्धप्रत्ययानुवादत्वे तु तेन सूत्रेण सिद्धप्रत्ययानुवादेन लोपमात्रमनेन बोध्यते, एवञ्च तदन्तविधिर्भवत्येव । अनुवादफलन्तु यत्र प्रत्ययस्तत्रैव लोप इति ।

विभाषा साति कार्त्स्न्ये (पा०सू० ५-४-५२) । कृभ्वस्तियोग इत्यनुवर्त्तते । कार्त्स्न्यमित्येतद्व्याचष्टे-*कृत्स्नमिति । यावत्त्वरूपं कार्त्स्न्यमत्र न विवक्षितमिति भावः । विधेयतया विवक्षितस्य सम्बन्धो यत्रोद्देश्यस्यावयवविशेषावच्छिन्नस्य प्रतीयते तत्राभिविधिः । सर्वावयवोपेते तु कार्त्स्न्यमिति भेदः ।

*न तु च्विरिति । सम्पूर्वकपदधातुयोगे च्विप्रत्ययविधायकसूत्राभावेन न च्विरित्यर्थः ।

तदधीनवचने (पा० सू० ५-४-५४) । *निवृत्तमिति । अर्थान्तरोपादानमिह हेतुः । तदधीनं=तदायत्तं, तत्स्वामिकमित्यर्थः । तच्छब्दोऽत्र स्वामिपरः । एवञ्च यत्रेशितव्यस्य स्वामिविशेषसम्बन्धोऽभिधित्सितस्तत्र स्वामिवाचकात्सातिर्भवति । राजाधीनङ्करोति, राजसात्करोति राष्ट्रमित्यादावीशितव्यराष्ट्रस्य स्वामिराजसम्बन्धः प्रतिपाद्यते स च न दानविधिना क्रियत इति भवत्ययम्प्रत्ययः । एवमन्यत्रापि बोध्यम् ।

देये त्रा च (पा०सू० ५-४-५५) । तदधीनवचन इत्यनुवर्तते । देयमित्यत्राहार्थे कृत्यः । एवञ्च तदधीनस्य देयस्य यत्र वचनन्तत्र त्राप्रत्ययः स्याच्चकारात्सातिः । तदधीनेतिलुप्तकर्मषष्ठ्यन्तम् । विप्रत्राकरोति ग्राममित्यत्र स्वामिविप्रोद्देश्यक-

देवमनुष्य ( पा० सू० ५-४-५६ ) । सातीति कृभ्वितिं च निवृत्तम्*। वन्दे रमे वेति । देवान्वन्दे तेषु रमे वेत्यर्थः । पुरुशब्दो बहुवाची । बहुत्रेति । जीवतो जन्तोर्मनो बहुषु विषयेषु गच्छतीति, बहून् विषयान्व्याप्नोतीत्यर्थः ।

अव्यक्तानु ( पा० सू० ५-४-५७ )। मण्डूकप्लुतया कृभ्वस्तीत्यनुवर्तते, सम्पदेति निवृत्तमेव । न तु ततो न्यूनमिति । अजवरेत्यस्य अजपेक्षया न्यूनमित्यर्थस्तु न पटपटाकरोतीत्यादावव्याप्तेः । चिश्चित्ते इति । अन्यथा डाचि द्वित्वं द्वित्वे चार्द्धानेकाच्त्वे डाजित्यन्योन्याश्रयः स्यादिति भावः । बहुलग्रहणाद् द्वितीयाकरोतीत्यादौ न द्वित्वम् । *डाचश्चित्त्वं लोहितादिडाज्भ्य इति विशेषणार्थम् । तेन नाभा पृथिव्या इत्यादौ ङेर्डादेशे निष्पन्नस्यानुकरणे पटपटायतीत्यादाविव नाभा इति भवति इत्यर्थे क्यष्वारणायेति भाष्यस्वरसः । अनेकाच इति । अजवरार्द्धादित्यपनीयेत्यर्थः । पटितीति । "अव्यक्तानुकरणस्य" ( पा० सू० ६-१-९८) इति पररूपम् ॥

कृञो द्वितीय (पा०सू० ५-४-५८)। कृञ इति "समासान्ताः" ( पा० सू० ५-४-६८) इत्येतत्पर्यन्तमनुवर्तते । बीजेनेति । बीजावापेन सहेत्यर्थः। कृष्धातुः *"कर्षात्वतः" (पा०सू०६-१-१५९) इति सूत्र-

---

दानकर्मणो ग्रामस्य देयस्य विप्रसम्बन्धः प्रतीयते इति भवति त्राप्रत्ययः । एवञ्च दानविधिना दानविवक्षायामयं योगः प्रवर्त्तते, यथाकथञ्चिद्दानविवक्षायान्तु पूर्वस्येति विशेषः । स्वरादेराकृतिगणत्वात्त्रान्तस्याव्ययत्वम् ।

देवमनुष्यपुरु(पा०सू० ५-४-५६) । *इति च निवृत्तमिति। पूर्वसूत्रे चकारेण सातेः सम्बन्धात् 'चानुकृष्टन्नोत्तरत्र'इति परिभाषया तस्यासम्बन्धः । एवञ्च तदेकवाक्यतापन्नकृभ्वस्तियोग इत्यपि निवर्त्तते । त्राग्रहणन्त्वनुवर्त्तते । स्वरितत्वात् । एवञ्च क्रियावाचकधातुसामान्ययोगेऽयम्प्रत्ययो भवति । देवादिभ्यः प्रातिपदिकेभ्यो द्वितीयासप्तम्यर्थे त्राप्रत्ययः स्यादिति फलितम् । जायते त्वयं द्वितीयान्तात्सप्तम्यन्तात् । त्रान्तार्थस्य निरूपकतया क्रियायामन्वयः । 'देवत्रा गच्छति नमस्कारः' 'तण्डुलत्रा पचति' 'ग्रामत्रा वसति' इत्यादौ गमनाद्यन्वयात् ।

अव्यक्तानुकरणाद् व्यजवरार्द्धादनितौ डाच् ( पा० सू० ५-४-५७ ) । पटपटाकरोति, दमदमाकरोति, खरटखरटाभवति, खरटखरटास्यादित्युदाहरणपराऽऽकरप्रामाण्यात् डाचः प्रत्ययांदुपदात्तत्वे सिद्धे चित्त्वं व्यर्थमत आह- *डाचश्चित्त्वमिति ।

– *कर्षात्वत इतिसूत्रभाष्येति। तत्र हि–"किमर्थं कृषेर्विकृतस्य ग्रहणं कि-

भाष्यप्रामाण्याच्छब्दिकरणोऽपि। कृषाविति किम्?। द्वितीयं करोति पटम्॥

संख्यायाश्च गु (पा० सू० ५-४-५९)। गुणशब्दान्तसंख्यावाचकस्येत्यर्थः। कृषौ किम्?। द्विगुणां करोति रज्जुम्।

समयाकरोतीति। करोतिर्यापनायां तदाह–यापयतीत्यर्थ इति।

निष्कुला (पा० सू० ५-४-६२)॥ अन्तरवयवानां बहिष्करणं निष्कोषणम्। तत्र किम्?, निष्कुलान्करोति शत्रूनिति।

आनुलोम्यम्=आराध्यचित्तानुवर्त्तनम्। तत्र किम्?। सुखं करोत्यौषधम्।

चित्तपीडनं=प्रातिलोम्यम्।

शूलाकरोतीति। करोतिः पचत्यर्थे।

*सत्यु साधु=सत्यम्॥

मद्रशब्दो मङ्गल्यमुण्डने। तेन करोतीत्यर्थः।

## इति तद्धितप्रक्रिया॥

---

यते न कृषात्वत इत्येवोच्येत। यस्य कृषेर्विकरणे एतद्रूपं तस्य यथा स्यात्। इह मा भूत्। हलस्य कर्षः" इति। 'यस्य कृषेर्विकरणे' इत्यनेन विकरणान्तस्येदमनुकरणन्निर्दिष्टमित्युक्तम्।

सङ्ख्यायाश्च गुणान्तायाः (पा० सू० ५-४-५९)। कृषावित्यनुवर्त्तनादनेनापि कृषावभिधेयायाम्प्रत्ययः। अत्र सङ्ख्याशब्दः सङ्ख्यावाचकशब्दपरः। गुणशब्दः स्वरूपपरः। अर्थगतस्त्रीत्वस्य शब्दे आरोपः। एवञ्च सङ्ख्याया गुणान्तत्वन्न सम्भवतीत्यतोऽत्रान्तशब्दः परसमीपवाची। एवञ्च सङ्ख्यावाचकशब्दपूर्वपदकगुणशब्दोत्तरपदकात्प्रातिपदिकादिति फलितम्।

समयाच्च यापनायाम् (पा० सू० ५-४-६०)। कर्तुं योग्यस्यार्थस्य कालप्राप्तिः=समयः। तस्यातिक्रमणं=यापना। समयशब्दाद्यापनायाङ्गम्यमानायां डाच्प्रत्ययः स्यात्। तथा च समयाकरोतीत्यनेन यस्य पाकादेर्यः कालस्तमतिक्रम्य यस्तिष्ठति स एव उच्यते।

सपत्रनिष्पत्रात् (पा० सू० ५-४-६१)। अतिव्यथने गम्यमाने सपत्रनिष्पत्रादयम्प्रत्ययः। अतिव्यथनमतिपीडनम्।

सत्यादशपथे (पा०सू०५-४-६६)। सत्यशब्दादशपथे डाच्। अनृतप्रतिपक्षवचनसत्यशब्दादयम्प्रत्ययो भवति। तथैव विवृणोति–*सत्युसाधु सत्यमिति॥

## इति प्रतिकृत्याद्यर्थकाः। इति तद्धितविवरणम्।

सर्वस्य द्वे (पा० सू० ८-१-१) ॥ *न च वाक्यादिद्वित्ववारणायावश्यकेन पदस्येत्यपकर्षेण सिद्धे सर्वस्येति व्यर्थम्। एकाज्द्विर्वचनन्यायेन च सर्वावयवकद्वित्वसिद्धेरिति वाच्यम्। *द्वितीयषष्ठ्युच्चारणेन स्थानेद्विर्वचनत्वबोधनात्। द्वे इत्यस्य संख्येयापेक्षायां शब्दानुशासनप्रस्तावाद्धे शब्दरूपे प्रत्यासत्त्या स्थानिसमानाकारे सर्वस्य पदस्य स्थाने भवत इत्यर्थः। *अन्यथा "एकाचो द्वे" (पा० सू० ६-१-१) इत्यादाविवोच्चारणक्रियापेक्षया पदस्येति कर्मषष्ठी स्यात्। *तेन पौनःपुन्यं पौनःपुनिक इत्यत्र ष्यञ्ठञौ सिद्धौ। *तत्र हि पुनः पुन*र्भवितरि वर्त्तमानात्पुनःपुनःशब्दाद्भावे भवे च प्रत्ययः। अन्यथा*ऽन्तरङ्गत्वात्सुपि *लुक्त्वाच्च। *अव्ययत्वात्सुपो लुकि वीप्सारूपेऽर्थे द्वित्वप्रवृत्तावर्थवत्त्वेऽपि समासग्रहणकृतनियमेन *स्वातन्त्र्येणापि प्रयोगार्हार्थवत्समुदायविषयकेण प्रातिपदिकत्वाभावात्स न स्यात्। स्थाने द्वित्वे तु स्थानिवद्भावात्प्रातिपदिकत्वम्। प्रत्ययलक्षणेनाप्रत्यय इति *निषेधाप्रवृत्त्या स्थानिनः प्रातिपदिकत्वेऽतिदेशेनादेशे तत्सुल-

---

सर्वस्य द्वे (पा० सू० ८-१-१)। इदं सूत्रमधिकारसूत्रन्न तु विधिसूत्रम्। विधेयाविशेषानिर्देशात्। अधिकारत्वेऽपि न शब्दस्याधिकारः। "नित्यवीप्सयोः" (पा० सू०८-१-४) इत्युत्तरसूत्रेषु प्रवृत्तेषु द्विशब्दस्य कार्यस्यादर्शनात्। किन्त्वर्थाधिकारः। एवञ्च सङ्ख्येयस्योपस्थितिर्भवति। अत एव "तस्य परमाम्रेडितम्" इति सङ्गच्छते। अधिक्रियमाणः सर्वशब्दः सर्वावयवकसमुदायपरः। स च वाक्यधातुरूपोऽपि सम्भवतीति तद्व्यावृत्त्यर्थम्पदस्येत्यस्यापकर्ष आवश्यक इति सर्वस्येति किमर्थमित्यभिप्रायेण शङ्कते-*न चेति। समाधत्ते-*द्वितीयेति। पदस्येत्यस्यैकस्य सत्त्वेऽपि सर्वस्येत्यस्य स्थानषष्ठीत्वङ्कल्प्यते इति भावः। *अन्यथा=सर्वस्येत्यस्याभावे। *तेन=सर्वस्येत्यस्य स्थानषष्ठीत्वेन। यद्वा तेन=सर्वस्य पदस्य स्थानेइत्यर्थस्वीकारेण। ननु पुनःपुनःशब्दस्य कालवाचकतया ततः ष्यञि कथम्पुनःपुनरुत्पत्तिप्रतीतिरत आह-*तत्र हीति। *भवितरि वर्त्तमानादिति। वृत्तिविषये लक्षणया तत्र वर्त्तमानादित्यर्थः। ठञ् तु कालवाचकादेव। *अन्तरङ्गत्वात्सुपीति। प्रातिपदिकार्थमात्रापेक्षत्वेनान्तरङ्गत्वात्। *लुक्त्वाच्चेति। चेनान्तरङ्गत्वादित्याकृष्यते। *अव्ययत्वात्सुपो लुकीति। अनेन समासग्रहणकृतनियमस्य प्रवृत्तियोग्यता सूचिता। स्वोक्तनियमस्यापि प्रवृत्तिन्दर्शयति-*स्वातन्त्र्येणापीति। ननु कार्यकालपक्षे स्थानिन एव कथम्प्रातिपदिकत्वमप्रत्यय इतिनिषेधस्य सत्त्वादत आह-*निषेधाप्रवृत्त्येति। "न ङिसम्बुद्ध्योः" (पा० सू० ८-२-८) इति सूत्रेण तथा ज्ञापनादिति भावः। सर्वस्येत्यस्य स्थानषष्ठीत्वेऽपि पूर्वोक्तरूपस्य कथं सिद्धिः। पुनरित्यस्य सुबन्तस्य

भम् । *न चैवमपि तत्प्रकृतिकसुबन्तत्वन्दुर्लभम् । *पुनः सुबुत्पत्त्या सुल-
भत्वात् । *यद्वा तत्संबन्धिभाव इत्याद्यर्थे प्रातिपदिकात्प्रत्यय इत्येवार्थः ।
स च "कुत्सिते" ( पा० सू० ५-३-७४ ) इति सूत्रभाष्यात् "घका
ल" ( पा० सू० ६-३-१७ ) इति ज्ञापकाच्च सति सम्भवे सुबव्यवहित
इत्यन्यत् । *तत्र द्विरावृत्तशब्दरूपमादेश इत्यर्थकं द्विरिति वक्तव्ये द्वे
इति द्विवचनबलेन । *नस्तमितावयवभेदसमुदायस्यैवादेशस्योपस्थितपदसमु-
दायात्मकस्य विधानात्प्रत्येकमप्यनयोः पदत्वमित्य *ग्रेऽग्रे इत्यादौ *पू-
र्वरूपादिसिद्धिः । *एतेनैकैकमित्यादौ बहुव्रीहिवद्भावेऽपि तदवयवयोः सु-
प्त्वे मानाभावात्सुब्लुगनापत्तिरिति परास्तम् । *अत एवैतद्विषये न संहि-
ताया नित्यत्वम् । "संहितैकपदे" इत्यस्य समासग्रहणादखण्डपद* एव
तन्नित्यताबोधकत्वात् । *समुदायस्यापि स्थानिवद्भावेन पदत्वमिति आम्प-
चसि पचसि देवदत्तेसादावाम एकान्तरतासिद्धिः । *कस्कादिषु कौतस्कु-
तपाठेन कृताष्टामिकाद्वित्वादप्रातिपदिकत्वेऽपि तद्धितोत्पत्तिज्ञापनेन द्विःप्र-

---

स्थानितया तस्य स्थाने य आदेशस्तस्मिन् सुबन्तत्वसत्त्वेऽपि प्रातिपदिकत्वस्य
दुर्लभत्वात् । पुनःशब्दप्रकृतिकत्वविशिष्टसुबन्तत्वस्याशास्त्रीयतया तस्यातिदे-
शासम्भवाच्चेत्याशयेन शङ्कते-*न चैवमिति । समाधत्ते-*पुनरिति । आदे-
शोत्तरम्पुनःपुनरितिसमुदायस्य प्रातिपदिकसंज्ञायाम्पुनः सुबुत्पत्त्या प्रातिप-
दिकप्रकृतिकसुबन्तत्वं सुलभमिति भावः, प्रत्ययग्रहणपरिभाषायां यस्मादित्य-
स्य सत्त्वेन प्रकृतेरुपादानात्प्रातिपदिकप्रकृतिकसुबन्तत्वस्यापि शास्त्रीयतया
ऽतिदेशेनैतल्लाभाच्च । ताद्धितविधौ सुबित्यस्य विशिष्यानिर्देशात्प्रातिपदिकप्रकृ-
तिकसुबन्तादित्यर्थस्य शब्दमर्यादया न लाभ इत्याशयेनाह-*यद्वेति । ननु पुन-
र्पुनरितिसमुदायस्यादेशत्वे वत्सशालादाविव प्रकृतिप्रत्ययविभागसम्मोहेन पुनर्पु-
नरित्यस्य सुबन्तत्वालाभ इति पदत्वन्न स्यादितिपदान्तकार्यालाभ इत्याशङ्कावा-
रणायाह=*तत्र द्विरावृत्तेति । *अनस्तमितेति । अनस्तमितोऽवयवभेदो यत्र
तस्येत्यर्थः । *अग्रे ऽग्रे इत्यादाविति । आदिना पुनःपुनरित्यस्योपग्रहः ।
*पूर्वरूपादीति । आदिना विसर्गसङ्ग्रहः । *एतेन=अनस्तमितावयवभेदसमुदा-
यस्यादेशत्वकल्पनेन । *अत एव=तादृशस्यादेशत्वादेव । *अखण्डपदे=अ-
स्तमितावयवभेदसमुदाये । एतादृशादेशस्य स्वीकारेऽवयवविषयकापेक्षाबुद्धि-
सम्भवेन तया द्वित्वस्य जननाद् द्वित्वस्यैकत्वबाधकतया "आम एकान्तरम्"
( पा० सू० ८-१-५५ ) इतिसूत्रस्य प्रवृत्तिर्न स्यादत आह-*समुदायस्यापीति ।
द्विःप्रयोगपक्षेऽप्युक्तदोषपरिहृति-*कस्कादिष्विति । न च द्विःप्रयोगपक्षे
वृक्षमिति मान्तस्य द्विरुच्चारणेऽपि स्थान्यादेशभावाभावात्लुप उभयत्र श्रवण-
प्रसङ्ग इति वाच्यम् । पूर्वोच्चारणसहितद्विरुच्चारणस्य विधेयत्वात् । तत्र प्रा-

योगपक्षेऽपि न दोष इत्यन्ये* । पदस्येत्यपकर्षेऽपि *प्रपचति प्रपचतीति सगतिकस्य द्वित्वं सगतिकस्येति वार्त्तिकेन सिद्धमिति दिक् ।

नित्यम्=आभीक्ष्ण्यम् *व्याख्यानात्, तच्च पौनःपुन्यम् । तदाह-आभीक्ष्ण्ये इति । *ननु यां क्रियां कर्ता प्रधान्येनानुपरमन्करोति तन्नित्यं पुनः पुनःक्रियाया विच्छेदेनोत्पत्तिराभीक्ष्ण्यमिति तयोर्भेदस्य कैयटादिभिरुक्तत्वेनेदमसङ्गतमिति चेन्न । मानाभावात्* । "तच्च आभीक्ष्ण्ये वर्तते तस्येदं ग्रहणम्" इति प्रकृतसूत्रस्थभाष्यविरोधाच्च । आभीक्ष्ण्यमिति । *शब्दशक्तिस्वभावादिति भावः । *हिरुगादीनाङ्क्रियाविशेषणत्वेन

---

प्राप्ताप्तविवेकेन समुदायोच्चारणे तात्पर्येण समुदायस्य प्रातिपदिकत्वात्तदवयवसुपो लुक्सिद्धेः । *अन्ये इति । द्वे इत्यस्यानन्तरम् 'उच्चारणे' इत्यस्य शब्दस्याध्याहारेण सर्वस्य पदस्येत्यनयोः कर्मषष्ठीत्ववादिनः । न च द्विःप्रयोगपक्षे 'आम् पचसि पचसि देवदत्ता३' इत्यत्रैकपदान्तरितत्वस्य कथं सिद्धिरिति वाच्यम् । तावेव सुप्तिङौ यौ ततः परौ सैव प्रकृतिराद्या समुदायपदत्वमेतेनेति भाष्योक्तरीत्या समाधानात् । समुदाये वाक्यसमाप्तिर्स्वीकारात् । द्विःप्रयोगादेव नृभिर्नृभिरिति समुदायस्याखण्डपदत्वाभावात् णत्वन्न भवति । स्थानेद्विर्वचनत्वपक्षे तु अनर्स्तामतादेशत्वकल्पनयैव सा वारणीयेति गौरवम् । तथा च द्विःप्रयोगपक्ष एव लघुत्वादुचितः । ननु पदस्येत्यस्यापकर्षे प्रपचतीत्यस्य द्विर्वचनं न स्यादत आह-*प्रपचतीति । "सगतिग्रहणञ्च कर्तव्यम्" इति हि प्रकृतसूत्रे वार्त्तिकम् ।

नित्यवीप्सयोः ( पा० सू ८-१-४ ) । *व्याख्यानादिति । प्रकृतसूत्रे "इह कस्मान् न भवति हिमवान्वाडवः । नैष दोषः । अयन्नित्यशब्दोऽस्त्येव कूटस्थेष्वविचालिषु वर्त्तते । तद्यथा नित्या पृथिवी, नित्यमाकाशमिति । ( नित्या पृथ्वीति तु पृथ्वीविकाराणां घटपटादीनामानित्यत्वेऽपि पृथ्वीतिव्यवहारस्य नित्यत्वात्पृथिव्या नित्यत्वेन । ) अस्त्याभीक्ष्ण्ये वर्त्तते-नित्यप्रहसितो नित्यप्रजल्पितो इति । तच्च आभीक्ष्ण्ये वर्त्तते तस्येदं ग्रहणम्" इति भाष्यमूलकव्याख्यानादित्यर्थः । ननु नित्यशब्दस्याभीक्ष्णयार्थकत्वे कैयटविरोध इत्याशङ्कते-*नन्विति । *मानाभावादिति । तादृशभेदे मानाभावादित्यर्थः । *शब्दशक्तिस्वभावादिति । तथा च येषाम्प्राधान्येन क्रियाप्रतिपादकता तेषाग्द्विर्वचनम्भवतीति सिद्धम् । तत्र शङ्कानिवारणायाह-*हिरुगादीनामिति । वीप्सापदार्थश्च द्रव्याणां गुणक्रियाद्रव्यैः सम्बन्धेच्छा, व्याप्तुमिच्छा वीप्सेति व्युत्पत्तेः । ग्रामो ग्रामो रमणीयः, वृक्षं वृक्षं सिञ्चति, वृक्षो वृक्षः पर्णवान्, जलंजलन्नीलमित्युदाहरणानि । सा च वीप्सोद्देश्यनिष्ठा विधेयव्याप्यता यथायथन्तेषु द्रष्टव्या । अत्रेदम्बोध्यम् । यत्र द्रव्यस्य व्यापकत्वविवक्षा तत्राक्तोदाहरणे भवतिक्रियावाचकशब्दाध्याहारेण तत्कर्तृकभवनक्रियायामेव

क्रियाप्रधानत्वं न तु क्रियावाचकत्वमतो न द्वित्वम्, अनभिधानाद्वा ॥

परेर्वर्जने ( पा० सू० ८-१-५ ) ॥ *वर्जनद्योतकस्य परेरित्यर्थः । उदाहरणे पञ्चम्यर्थवर्जनरूपसंबन्धस्य परिर्द्योतकः । "पञ्चम्यपाङ्परिभिः" (पा० सू० २-३-१०) इति पञ्चमी । परित्रिगर्तं वृष्टो देव इति समासे तु न द्वित्वम् । कर्मप्रवचनीयानां स्वयोगविहितविभक्त्यर्थसंबन्धपरिच्छेदकतया समासे विभक्त्यभावेन *तत्त्वासम्भव इति । परेर्नैरर्थक्यात् । किं च वाक्यदृष्टविभक्त्यर्थान्तर्भावेण तत्र समासस्यैव शक्तिकल्पनेन परेस्तद्द्योतकत्वाभावः । न हि समासस्य यदर्थान्तर्भावेण शक्तिस्तद्द्योतकापेक्षा । *अत एव घनश्यामादाविवाद्यप्रयोगः । परिशब्दस्तु साधुत्वार्थमेव वृत्तौ प्रयुज्यते । समूलकाषमित्यादौ कषेरिव । तदुक्तं भाष्ये—"नात्र परिर्वर्जने वर्तते । कस्तर्हि ?, समासे" इति ।

---

व्यापकत्वस्पर्यवस्यति । अभावस्य च व्यापकता यत्र तत्र गजत्वेन मौक्तिकमित्यादौ मौक्तिकसत्ताभावे गजव्यापकत्वम्बाधितमिति गजव्यापकाधिकरणतावन्मौक्तिकसत्ताभाव इति बोधो बौद्धप्रतियोगिप्रसिद्ध्योपपादनीयः । स चाभावोऽधिकरणतायां गजव्यापकत्वरूपविशेषणाभावकृतः । वह्नौ वह्नौ न शैत्यमित्यादौ तु विशेष्याभावकृत एव । यत्र तु ब्राह्मणो ब्राह्मणो विद्वानित्यादि प्रयुज्यते तत्र ब्राह्मणत्वव्यापकत्वम्बाधितमत एतेषु ब्राह्मणादिपदानाम्बुद्धिस्थब्राह्मणादिषु लक्षणा । यत्र यत्पदार्थवीप्सया यत्र यत्र धूमस्तत्राग्निरिति प्रयुज्यते तत्र तत्पदे वीप्सां विनाऽपि तत्पदेन तेषाम्पर्वतादीनाम्परामर्शात्तत्तद्धर्मिव्यापकतायाः पर्यवसानम् । कारकञ्चेद्विजानीयाद्यां यास्मन्येत सा भवेदिति "अकथितञ्च" ( पा० सू० १-४-५१ ) इति सूत्रभाष्यात् । क्वचित्तु स्पष्टप्रतिपत्त्यर्थन्ततत्पदेऽपि व्यापकत्वविवक्षया द्विर्वचनं क्रियत एव ।

यां याम्प्रियः प्रैक्षत कातराक्षीं, सा सा ह्रिया नम्रमुखी बभूव ।

इत्यादौ यथा ।

"परेर्वर्जने" ( पा० सू० ८-१-५ ) इति सूत्रं व्याचष्टे-*वर्जनद्योतकस्येति । *तत्त्वासम्भव इति । वर्जनद्योतकत्वस्यासम्भव इत्यर्थः । *अत एव=समासवाच्यस्यार्थस्य प्रकाशने द्योतकापेक्षाऽभावादेव । यत्तु "परेर्वर्जने" ( पा० सू० ८-१-५ ) इति सूत्रस्य वर्जनमात्रार्थकस्य परेर्द्वे भवत इत्यर्थं व्याख्याय समासे व्यर्थत्वान्न परेर्द्विर्वचनमर्थाधिक्यस्य समासे फलत्वादिति, तन्न । तादृशार्थस्य सूत्राक्षरमर्यादयाऽलाभात् ।

वाक्यादेरामन्त्रितस्या ( पा० सू० ८-१-८ ) । असूयादिविषये वाक्यादेरामन्त्रितस्य द्वे भवतः । असूयाकुत्सनयोः कोपभर्त्सनयोश्चैकार्थत्वात्तयोः सूत्रे

वाक्यादेरा ( पा० सू० ८-१-८ )। *विनापि कोपासूये भर्त्सनकुत्सनयोः शिष्यादौ सम्भवात्तद्ग्रहणम्।

द्विरुक्त इति। *वीप्साविषये इति भावः। अस्य सूत्रस्य वीप्सायामेव प्रवृत्तेर्भाष्यसंमतत्वात्। अत एवैक इत्यादौ न बहुव्रीहिवत्। तथा सति सुब्लुकि दधीत्यादौ विभक्तिरहितस्यैवात्रापि तादृशस्यैव साधुत्वापत्तिरित्यन्यत्र विस्तरः। *अनेनैव द्वित्वं विधीयते इति तु न युक्तम्। शस *एतदपवादत्वानापत्त्यैकश इत्याद्यसिद्धेः। *अत्रेदं बोध्यम्। अल्पार्थैकशब्दसत्त्वेऽपि तदर्थे वीप्सायान्द्वित्वापवादः शसेव। संख्याशब्दातिरिक्तशब्दार्थानां परिगृहीतैकत्वानामेव वीप्सासत्त्वेन तस्याप्येकवचनत्वात्। किंचाल्पत्वमपि परिमाणविशेष इति "अल्पे" ( पा० सू० ५-३-८५ ) इति सूत्रे भाष्यकैयटयोरुक्ततया प्रस्थाद्यर्थानामिवास्यापि परिगृहीतैकत्वस्यैव वीप्सा। एकैकश इति भाष्यप्रयोगस्योपपत्तिरुक्तेत्यन्यत्र विस्तरः।

तेनेति। *अत्र सुब्लोपशब्देन तन्निमित्तं प्रातिपदिकत्वं लक्ष्यते। अन्यथा

---

उपादानं व्यर्थमित्याशङ्कावारणायाह-*विनापीति। तदुक्तम्भाष्ये-

सामृतैः पाणिभिर्घ्नन्ति गुरवो न विषोक्षितैः।
लालनाश्रयिणो दोषास्ताडनाश्रयिणो गुणाः॥ इति।

एकम्बहुव्रीहिवत् ( पा० सू० ८-१-९ )। एक इत्यत्राऽपि बहुव्रीहिवद्भावः स्यादतः प्रकरणप्राप्तस्य द्वे इत्यस्य प्रकृतसूत्रेऽपि सम्बन्धः। तेन द्विरुक्त इत्यर्थलाभेऽपि कस्मिन्नर्थे द्विर्वचनमित्याकाङ्क्षायामाह-*वीप्साविषय इति। नित्यवीप्सयोरित्यस्य सम्बन्धात्। तत्राभीक्ष्ण्यस्यासम्भवाद्वीप्सायामित्यस्य परिशेषाल्लाभ इति भावः। एवञ्च द्विर्वचनं "नित्यवीप्सयोः" ( पा० सू० ८-१-४ ) इत्यनेनैव। अनेन सूत्रेण तु बहुव्रीहिवद्भावमात्रस्य विधानमिति तत्त्वम्। परोक्तङ्खण्डयति-*अनेनैवेति। *एतदपवादत्वानापत्त्येति। एतस्यैव सूत्रस्य द्विर्वचनविधायकत्वे पूर्वसूत्राप्राप्तिविषय एवानेन द्विर्वचनम्भवेत् तथा चावीप्सायां द्विर्वचनं शस्प्रत्ययविषये त्वनेनाद्विर्वचनमिति विषयभेदादेतदपवादः शस् न स्यात्। नित्यवीप्सयोरितिसूत्रसिद्धद्विर्वचनविषय एव बहुव्रीहिवद्भावेऽपि विशेषमाह-*अत्रेदमिति। वस्तुतस्तु "एकाच्च प्राचाम्" ( पा० सू० ५-३-९४ ) इतिनिर्देशेन यत्र द्विर्वचनन्तत्रैव बहुव्रीहिवद्भाव इति द्वे इत्यनुवृत्तिरुक्तार्थैव। ननु बहुव्रीहिवद्भावफलनिरूपणावसरे सुब्लोप एवोक्तस्तथा च समुदायस्य कथम्प्रातिपदिकत्वमत आह-*अत्रेति। ननु बहुव्रीहिसमासे यथा "गोस्त्रियोः" ( पा० सू० १-२-४८ ) इति ह्रस्वो भवति तथाऽत्रापि स्यादित्यके-

सुबुत्पत्तिरपि वक्तव्या स्यात् । भाष्येऽप्येवमेव । *"गोस्त्रियोः" (पा० सू० १-२-४८) इति ह्रस्वस्तु नातिदिश्यते तस्योपसर्जनार्थनिमित्तत्वात्* । बहुव्रीहिवद्भावादेव प्रातिपदिकत्वादिति मध्यमणिन्यायेनोभयान्वयि । समुदाये जातस्य प्रातिपदिकत्वस्यैकदेशविकृतन्यायेन सुब्लोपेऽपि सत्त्वम्, कार्यकालपक्षे तु तेनैव पुनः प्रातिपदिकत्वम् । सुबिति । *न चात्र द्वयोः सुपोर्लुकि तदर्थस्य प्रातिपदिकार्थेऽन्तर्भावेण द्वितीयाद्यनापत्तिः । *व्याप्तिविशिष्टस्य कर्मत्वादिबोधार्थं तदुत्पत्तेः सुलभत्वात् । एकैकस्मै इति । द्वयोरपि सुपोर्लुकि पुनः सर्वादिपठितैकशब्दान्तत्वेन सर्वनामत्वात् स्मैभावः । इह पुंवदिति । बहुव्रीहिवत्त्वातिदेशेनोत्तरपदत्वस्यैकार्थ्येन भिन्नार्थत्वाभावेन च सामानाधिकरण्यस्य सत्त्वात् । "स्त्रियाः पुंवत्" (पा० सू० ६-३-३४) इत्यनेनेति भावः ।

---

कया आहुत्या इत्यत्रापि स्यादत आह-*गोस्त्रियोरितीति । *उपसर्जनार्थनिमित्तत्वादिति । बहुव्रीहिवदित्यनेन सप्तम्यन्ताद्वतिना निष्पन्नेन कार्यस्यैवातिदेशादिति भावः । उक्तार्थानामिति न्यायमाश्रित्य शङ्कते-*न चात्रेति । कटोऽपि कर्म भीष्मादयोऽपीति पक्षे यथा कटत्वविशिष्टनिष्ठकर्मत्वस्य कटपदोत्तरद्वितीययोक्तत्वेऽपि भीष्मत्वविशिष्टनिष्ठकर्मत्वस्यानुक्तत्वाद्भीष्मपदाद् द्वितिया भवति तथात्राऽपि व्याप्तिविशिष्टनिष्ठविभक्त्यर्थस्यानुक्तेर्भवति सा विभक्तिरित्याशयेनाह-*व्याप्तीति । न चैकैकयेत्यत्रोत्तरपदेऽपि "सर्वनाम्नो वृत्तिमात्रे" इत्यनेन पुंवद्भावः स्यादिति वाच्यम् । "भस्त्रैषाजाज्ञाद्वा" (पा० सू० ७-३-४७) इति लिङ्गेन पूर्वस्यैवेदमित्युक्तत्वात् ।

आबाधे च (पा० सू० ८-१-१०) । नन्वनेन यत्र द्विर्वचनन्तत्राऽपि बहुव्रीहिवद्भावातिदेशेन न करोति, सुजागर्त्तीत्यत्र "नञ्सुभ्याम्" (पा० सू० ६-२-१-७२) इत्यन्तोदात्तत्वापत्तिः । तथा ऋक् ऋक् पूः पूरित्यत्र "ऋक्पू" (पा० सू० ५-४-७४) इतिसमासान्तस्य चापत्तिरिति चेन्न । नञ्सुभ्यामित्यत्र "वनं समासे" इत्यतः सिंहावलोकनन्यायेन समासग्रहणं सम्बध्यते । तेन बहुव्रीहेर्विशेषणात् स्वरो न भवति । समासान्तविषयेऽपि न दोषः । "समासाच्च तद्विषयात्" (पा० सू० ५-३-१०६) इत्यतः समासग्रहणं "बहुव्रीहौ संख्येये" (पा० सू० ५-४-७३) इतिसूत्राद्बहुव्रीहिग्रहणञ्च "ऋक्पूः" (पा० सू० ५-४-७४) इति सूत्रे सम्बन्ध्य तयोश्च विशेषणविशेष्यभावेन ऋगाद्यन्तबहुव्रीहेस्तु समासादकारप्रत्ययो भवतीति वाक्यभेदेन व्याख्यानात् । न च मनेत्यत्र बहुव्रीहिवद्भावान्नलोपः स्यादिति वाच्यम् । "नलोपो नञः" (पा० सू० ६-३-७३) इति सूत्रे "वनं समासे" (पा० सू० ६-१-१७८) इत्यतः समासग्रहणस्यानुवृत्त्या सम्बन्धकल्पनेनादोषात् । यदि च द्विर्वचननिष्पन्नसमुदायस्य बहु-

अन्तोदात्तत्वानीति। "अनुदात्तं च" (पा० सू० ८-१-३) इत्यस्याधिकारत्वेऽपि *भाष्यप्रामाण्यान्नेहोपस्थितिः। *अत एव बहुव्रीहिवद्भावे प्रकृतेऽपि कर्मधारयवद्भावः। किंच *प्रियादिषु प्रतिषिद्धपुंवत्त्वस्यापि विधानार्थं कर्मधारयवद्भावः। अत एव पूर्वसूत्रयोः कर्मधारयवदिति नोक्तम्। प्रियादिषु पुंवत्त्वापत्तेः। पूर्वसूत्रे तु न स्वरातिदेशो भाष्यप्रामाण्यात्*। *अत एव तत्र किं प्रयोजनं सुब्लोपपुंवद्भावावित्येव भाष्ये उक्तम्। अत्र च कानि प्रयोजनानि सुब्लोपपुंवद्भावन्तोदात्तत्वानीत्युक्तम्।

प्रकारशब्दः सादृश्यवाची *व्याख्यानादित्याह—सादृश्ये द्योत्ये इति। पुंवद्भाव इति। "पुंवत्कर्मधारय" (पा० सू० ६-३-४२) इत्यनेन। गुणवचनश्चेहाकडारसूत्रभाष्यपरिभाषित इति बोध्यम्। *प्रकारः= सादृश्यप्रतियोगित्वरूपमुपमानत्वम्। उपमानपदं।भिन्न इति बोध इति परे। आनुपूर्व्ये इति। *वार्त्तिकेषु कर्मधारयवदिति न संबध्यते। तदुदाहरणेषु

---

व्रीहिवद्भावेऽपि समासचरमावयवत्वावच्छिन्नरूढस्योत्तरपदस्य मुख्यसमासचरमावयवत्वावच्छिन्नबोधकत्वमेवेति नोत्तरपदनिमित्तककार्यप्रवृत्तिरित्युच्यते तदा न दोष इति के चित्तन्न गतगतेत्यत्र पुंवत्त्वानापत्तेः।

कर्मधारयवदुत्तरेषु (पा० सू० ८-१-११)। *भाष्यप्रामाण्यादिति। "कर्मधारयत्वे कानि प्रयोजनानि?। कर्मधारयत्वे प्रयोजनानि सुब्लोपपुंवद्भावान्तोदात्तत्वानि। पटुपटुः, पटुपट्वी, पटुपटुः" इति हि भाष्ये उक्तम्। *अत एव=अनुदात्तञ्चेत्यस्यानुपस्थितेरेव। *प्रियादिष्विति। प्रियप्रिया, मनोज्ञमनोज्ञा, चपलचपलेत्यादौ। अत्र "प्रकारे गुणवचनस्य" (पा० सू० ८-१-१२) इति द्विर्वचनम्। एवञ्च आबाधायां प्रियादीनां यत्र द्विर्वचनं तत्र पुंवद्भावस्याप्रवृत्तिरेव। *भाष्यप्रामाण्यादिति। 'नन' 'सुसु' इत्यत्र स्वरातिप्रसङ्गशङ्कासमाधानयोः करणपरभाष्यप्रामाण्यात्। *अत एव=बहुव्रीहिप्रयुक्तस्वरस्य तत्रानिष्टत्वादेव।

प्रकारे गुणवचनस्य (पा० सू० ८-१-१२)। प्रकारे वर्त्तमानस्य गुणवचनस्य द्वे भवतः। *व्याख्यानादिति। प्रकृतसूत्रभाष्ये अग्निर्माणवकः, गौर्वाहीक इत्यत्रातिप्रसङ्गमाशङ्क्य गुणवचनग्रहणस्य प्रकृत्यर्थविशेषणत्वेन समाधाय सादृश्यमूलाभेदेन वर्त्तमानानां सर्वेषामेव गुणवचनत्वमिति शङ्कायाङ्गुणवचनग्रहणसामर्थ्यादेवं विज्ञास्यामः प्राक् प्रकाराद्यो गुणवचन इत्युक्तन्तन्मूलकव्याख्यानादित्यर्थः। स्वमतमाह-*प्रकार इति। *वार्त्तिकेषु=आनुपूर्व्ये इत्यादिषु। न चैतद्वार्त्तिकोदाहरणेषु मूले मूले इत्यादिषु वीप्सायामेव द्विर्वचने सिद्धे वार्त्तिक-

भाष्ये सुब्लोपादर्शनात् । *संभ्रमः=आदरो भयं च । क्रियासमभिहारे चेति । पौनःपुन्यं भृशार्थश्च क्रियासमभिहारः । लोट्येवेदम् । *अत एव "क्रियासमभिहारे लोट्" ( पा० सू० ३-४-२ ) इति सूत्रे "क्रियासमभिहारे लोण्मध्यमैकवचनस्य द्वे भवतः" इति पठित्वा तस्य लोड्ज्ञापकत्वमुक्तम्। अष्टमे चास्य लोट्येवोदाहरणमुपन्यस्तम् । *अत एव यङन्ते न द्वित्वम् । यत्तु लोटः समुच्चयादिष्वपि विधानेन केवलस्य *तद्द्योतने सामर्थ्याभावाल्लोटि द्वित्वम् । यङस्तु तदतिरिक्तार्थाभावाद्यङ्वै तद्द्योतनसम्भवाद्यङन्ते न द्वित्वमिति तन्न। अकचादेरनेकत्र द्योत्येऽर्थे विधानेऽपि केवलस्यैव प्रकरणादिना तत्तदर्थद्योतकताया दृष्टत्वात् । *भृशार्थे यङि ततः पौनःपुन्यविवक्षायान्तु "नित्यवीप्सयोः" (पा० सू० ८-१-४) इति द्वित्वं भवत्येव । पापच्यते पापच्यते=भृशं पाकं पुनःपुनः करोतीत्यर्थः । नन्वस्य भृशार्थे द्वित्वफलकत्वे भृशार्थे इत्येव सिद्धे क्रियासमभिहारपदं व्यर्थमत आह-पौनःपुन्येऽपीति । इदमेव ज्ञापकं पौनःपुन्यस्य केनचित् द्योतने सौत्रद्वित्वाप्रवृत्तेरिति पौनःपुन्ययङन्ते न सौत्रं द्वित्वमिति भावः। भुक्त्वाभुक्त्वा भोजंभोजमित्यादौ तु "आभीक्ष्ण्ये द्वे वाच्ये" इति भाष्यपठितवचनान्तरेण द्वित्वं, मूले त्वेतत्कृदन्ते वक्ष्यते । पुनःपुनःक्रियाया विच्छेदेनोत्पत्तिः= आभीक्ष्ण्यम् । तदेव च नित्यत्वम् । भुक्त्वा भुक्त्वेत्यादौ विच्छेदिका क्रिया चोपात्ता व्रजनादिरूपैव गृह्यते । अनुपस्थितकल्पने मानाभावात् । एवञ्च क्त्वाद्यन्ते द्वित्वेनैव व्रजनाद्याभीक्ष्ण्यस्य द्योतितत्वान्न क्त्वाद्यन्तसमभिव्याहारे तिङन्तस्य द्वित्वम् । जीवत्येवायमित्यर्थे जीवति जीवतीत्यादौ कमलानि कमलानीतिवदेकं जीवतिपदं दीर्घाविच्छिन्नजीवनलक्षकमिति तत्र न *शास्त्रीयं

---

वैयर्थ्यमिति वाच्यम् । एकमेव हि मूलं भवति अन्येषान्तूपरितनभागापेक्षया गौणो मूलव्यपदेश इति तुल्यरूपाणां यत्र व्याप्यत्वविवक्षा तत्रैव तेन द्विर्वचनविधानात्। अग्रे अग्रे सूक्ष्मा इत्यत्राप्येवमेव बोध्यम्। यत्र तु तुल्यरूपाणामेव विवक्षा तत्र तेनैव द्विर्वचनम्। यथा "मूले मूले पथि विटपिनां स्वैरिणीनान्निवासः" इत्यत्र । संभ्रमेणेति वचनघटकं संभ्रमपदार्थमाह-*संभ्रम इत्यादि। अत्र भाष्ये "चापले द्वे भवत इति वक्तव्यम्, अहिरहिर्बुध्यस्व बुध्यस्व" इति प्रतिपादितम् । आशुप्रतिपादनं=चापलम् । तच्च संभ्रमस्थले भवतीत्याशयेन संभ्रमेणेत्याद्युक्तम् । *अत एव=लोट्येवेति नियमस्वीकारादेव। *अत एव=उक्तनियमादेव । *तद्द्योतने= क्रियासमभिहारद्योतने । विशेषमाह-*भृशार्थे इति । *न शास्त्रीयन्द्वित्वमि-

द्वित्वम्। कर्मव्यतिहारश्च*क्रियाविनिमयः। नित्यमेवेदं द्वित्वम्। बाहुलकन्तु *समासवद्भावस्यैव, तदाह-बहुलग्रहणादिति। *अत एवान्यशब्दस्य-समासवद्भावरहितमेवेतरशब्दस्य तत्सहितमेवोदाहरणं भाष्ये। *परस्पर-शब्दे परस्पराञ्चेति वार्तिकप्रयोगात्समासवद्भावाभावः। तत्त्वातिदेशस्य तु न कल्पकमिति भावः। अन्यपरेतरव्यतिरिक्तेषु तु नास्य प्रवृत्तिर्बाहुल-कादेव। अन्येषां कर्मव्यतिहाराबोधकत्वाच्च। अन्योन्यादौ*कर्मव्यतिहारः

---

ति। यदि तु चापलविवक्षा तदा शास्त्रीयमपि सम्भवत्येवेति बोध्यम्। "कर्म-व्यतिहारे सर्वनाम्नो द्वे वाच्ये" इति पृथग्वाक्यम्। अत्र कर्मशब्दः क्रियापरः। तेन यल्लब्धं तदाह-*क्रियाविनिमय इति। क्रियाविनिमयश्च परस्परकरणरूपः। यद्यप्यत्र सर्वनाम्न इति सामान्यत एवोक्तं, तथापि प्रकृतवार्तिकव्याख्यानप-रभाष्येऽन्येतरशब्दयोरुदाहरणत्वेन प्रदर्शनात्परस्परापेक्षेति प्रयोगदर्शना-च्चान्यपरेतरशब्दविषय एवेदं क्रियाविनिमयविवक्षायामित्यन्द्विर्वचनविधायक-म्। एतदभिप्रायेण वक्ष्यति-अन्यपर इत्यादि। *समासवद्भावस्यैवेति। "स-मासवच्च बहुलम्" इति वाक्यान्तरेण तस्यैव बहुलस्प्रवृत्तिबोधनात्। तत्रापि वेतिवक्तव्ये बहुलशब्दोपादानेन यल्लब्धं तदाह-*अत एवेति। अत-एव=बहुलग्रहणादेव। परशब्दस्य द्विर्वचने तत्र समासवद्भावाभावे च प्रमाण-माह-*परस्परशब्द इति। *कर्मव्यतिहारः स्फुट एवेति। अन्योन्यादिपदानां समभिव्याहृतपदार्थतावच्छेदकावच्छिन्नमर्थः। एवञ्चान्योन्यं विप्रा नमन्तीत्यादौ समभिव्याहृतपदार्थतावच्छेदकं विप्रत्वन्तदवच्छिन्नमन्योन्यशब्दार्थः। द्वितीया-र्थः कर्मत्वं तस्मिन् प्रकृत्यर्थस्याधेयतयाऽन्वयः। तस्य निरूपकतासम्बन्धेन धात्वर्थफलेऽन्वयः। फलञ्च प्रकृते स्वविशेष्यकापकृष्टत्वप्रकारकबोधात्मकम्। फलस्य चापरधात्वर्थव्यापारे अनुकूलत्व-स्वावच्छिन्नप्रतियोगिताकभेदसामा-नाधिकरण्योभयसम्बन्धेनान्वयस्तदन्वितस्य व्यापारस्य च विप्रान्विताख्या-तार्थकर्तृविशेष्यतया भानमिति विप्रवृत्तिकर्मत्वनिरूपकापकृष्टत्वप्रकारकबोधा-नुकूलस्तादृशबोधावच्छिन्नप्रतियोगिताकभेदसमानाधिकरणो विप्रकर्तृको व्या-पार इतिशाब्दबोधः। फलनिष्ठाऽवच्छेदकता च फलतावच्छेदकसम्बन्धाव-च्छिन्ना ग्राह्या। स च प्रकृते तत्तद्व्यापारानधिकरणवृत्तित्वविशिष्टसमवाय इति-सर्वसामञ्जस्यम्। यत्र तु समभिव्याहृतपदार्थतावच्छेदकस्य द्वित्वन्देवदत्तय-ज्ञदत्तावन्योन्यञ्घ्नतुरित्यादौ, तत्रान्योन्यपदाद्देवदत्तत्वावच्छिन्नस्य यज्ञदत्त-त्वावच्छिन्नस्योपस्थितिः। फलम्प्राणवियोगः। फलतावच्छेदकसम्बन्धश्च तत्त-द्व्यापारानधिकरणवृत्तित्वविशिष्टाश्रयत्वमिति देवदत्तवृत्तिकर्मतानिरूपकप्राण-वियोगनिष्ठफलतावच्छेदकसम्बन्धावच्छिन्नावच्छेदकताकभेदसमानाधिकरण-स्तादृशप्राणवियोगानुकूलो यज्ञदत्तवृत्तिकर्मतानिरूपकप्राणवियोगानुकूलस्ता-दृशप्राणवियोगावच्छिन्नप्रतियोगिताकभेदसमानाधिकरणो व्यापारो द्वित्ववद्दे-

स्फुट एव । अन्योन्याविति । प्रथमाद्द्विवचनम् । अन्योन्यस्मै इति ।
अन्यस्मै इत्यस्य द्वित्वे पूर्वपदस्य सुपः सौ रूपसिद्धिः । *इतरेतरेषामि-
त्यादौ तु एकैकस्मै इत्यत्रोक्तरीत्या*सर्वनामत्वम् । वार्तिकेषु कर्मधारयव-
त्पदासंबन्धबोधनाय समासवदित्युक्तिः । सुब्लुग्विधिनैव सिद्धे समास इ-
त्युक्तिराम्रेडितानुदात्तत्वबाधेनान्तोदात्तार्था* । कस्कादित्वादिति ।
"कुप्वोः$\asymp$क$\asymp$पौ च"( पा० सू० ८-३-३७ ) इति बाधित्वेति भावः ।
सिद्धान्तिमतमाह—अन्ये त्विति । तदुक्तम् वृद्धैः–"न चोदाहरणमा-
दरणीयम्" इति । तदतिरिक्तोदाहरणाभाव इत्येवं परतया नादरणीयमि-

---

वद्त्तयज्ञदत्तकर्तृको भूतानद्यतनकालिक इति शाब्दबोधः । एवमेवान्योन्या दिश-
ब्दप्रकृतिकाविभक्त्यन्तरस्थलेऽप्यूह्यम् । यत्र तु क्षत्रिया अन्योन्यस्य धनञ्जगृहुरि-
ति प्रयोगस्तत्रान्योन्यशब्दप्रकृतिकषष्ठ्यर्थस्वत्वेऽन्योन्यपदार्थस्य समभिव्या-
हृतपदोपस्थाप्यक्षत्रियत्वावच्छिन्नस्य क्षत्रियत्वन्यूनवृत्तिधर्मावच्छिन्नप्रतियो-
गिताकभेदविशिष्टनिरूपितत्वविशिष्टाधेयतासम्बन्धेनान्वयः । यत्र तु समभि-
व्याहृतपदार्थतावच्छेदकस्य नानात्वन्तत्र समभिव्याहृतपदार्थतावच्छेदकावृत्ति-
पदार्थाभावावच्छिन्नन्यूनवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदविशिष्टनिरूपितत्व-
विशिष्टाधेयतासम्बन्धेन प्रकृत्यर्थस्य स्वत्वेऽन्वयः । स्वन्यूनवृत्तित्वञ्च स्वस-
मानाधिकरणभेदप्रतियोगितावच्छेदकत्वे सति स्वसमानाधिकरणत्वमेव ताद-
शस्वत्वस्य च नामार्थ इति रीत्याग्रेऽपि । इतरेतरपरस्परशब्दस्य यत्र प्रयोगस्त-
त्राप्येतयोरन्योन्यशब्दसमानार्थत्वादेवमेव शाब्दबोध इति दिक् । नन्वितरश-
ब्दे चेत्समासवद्भावस्तदा कथं स्मैभावादिकार्यमत आह–*इतरेतरेषामित्या-
दाविति । *उक्तरीत्येति । द्वयोरपि सुपोर्लुकि चरमेतरशब्दस्य सर्वादिपठित-
त्वेन तदन्तस्य सर्वनामत्वात्सर्वनामकार्यमिति । *अन्तोदात्तार्था=समासस्येत्य-
न्तोदात्तत्वप्रवृत्त्यर्था । अन्यपरयोस्तु समासवद्भावाभावादाम्रेडितानुदात्तत्वस्भ-
वत्येव । न चेतरशब्दस्य समासवद्भावविधानाद् द्वयोरपि सुपोर्लुकि विशिष्टा-
दुत्पन्नस्य सुपः समुदायप्रकृतिकतयोत्तरपदस्थत्वाभावेन कथमितरेतरामिमे
ब्राह्मण्यौ भोजयतः । इतरेतराम्भोजयतः । इतरेतरमिमे ब्राह्मणकुले भोजयतः ।
इतरेतराम्भोजयत. इत्यस्य सिद्धिरिति वाच्यम् । उत्तरपदस्थाया इत्यस्योत्तर-
पदोत्तरं श्रूयमाणाया इत्यर्थेनादोषात् । मूले अन्योन्यमित्यत्र "अद्ड्डत-
रादिभ्यः" ( पा० सू० ७-१-२५ ) इत्यद्ड् प्राप्त इत्युक्तम् तत्रेदम्बोध्यम् । डत-
रादिभ्यः पञ्चभ्यः परयोरित्यर्थे तस्य प्राप्तिः, यदि तु डतरादिभ्यो वि-
हितयोरित्यर्थ आश्रीयते तदा तु तस्याप्राप्तिरेवेति । वार्त्तिकेषु कर्मधारयव-
दित्यस्य सम्बन्धेन सिद्धे समासवद्भावविधानं व्यर्थमिति तु न शङ्क्यम् । "चा-
पले द्वे वाच्ये" इतिवार्त्तिकेनान्यामन्याम्परस्परांमित्यादौ प्रियम्प्रति सखीनामा-
शुप्रतिपादनविवक्षायां द्वित्वे कर्मधारयवद्भावे पुंवद्भावापत्तेः । दलद्वय इत्यस्य

त्यर्थः । दलद्वये इति । समासवद्भावे*तदभावे चेत्यर्थः । इतरेतरमित्यादौ पूर्वखण्डस्य "सर्वनाम्नः" इति* पुंस्त्वेन यद्यपि सिद्धम् । तथाप्युत्तरखण्डे टाबभावार्थं बाहुलकमावश्यकम् । क्लीबे चेति । अन्योन्यमित्यत्र पूर्वपदे मामाद्विरह इत्यर्थः । उत्तरखण्डे तु अस्मद्वक्ष्यमाणान्यतमरीत्यापि तदभावः । समासे सोरिति । *कृतद्वित्वस्यान्येन समासे पूर्वखण्डस्थस्येत्यर्थः । *इदमुपलक्षणं परस्परमित्यत्र पूर्वपदे नपुंसके सोरमभावस्य परस्परस्मा इत्यादौ व्यवस्थाभावेऽपि सर्वनामत्वस्य च । इतरेतरमित्यत्र चेति । *डतरादिसूत्रे "सर्वादीनि" ( पा० सू० १-१-२७ ) इति सूत्रस्थभाष्यरीत्या विहितविशेषणादण्नेऽस्मन्ये । सोर्लुक्चेति । *स्वादेशविधानं त्वन्योन्यमिसादावसमासे चरितार्थमिति भावः । प्रकृतवार्तिकेति । "स्त्रीनपुंसकयोः" इति वार्तिके *अन्योन्यमिमे ब्राह्मण्यौ इतरेतरमिमे कुले इत्यादि तत्रोदाहृतम् । स्त्रियामितीति । अन्योन्यसहाया इति "सर्वस्य द्वे" ( पा० सू० ८-१-१ ) इति सूत्रस्थभाष्य प्रयोगोऽपि बोध्यः । अन्योन्यप्रादुर्भावादिति "अपादान" (पा० सू० २-३-२८ ) इति सूत्रस्थभाष्यप्रयोगे कर्मव्यतिहारः स्पष्ट एव* ।

अकृच्छ्र इति । तत्र वर्तमानयो*स्तदर्थकयोरित्यर्थः । पुनस्तद्वेति । अनुवादकविभक्तेर्न्याय्यत्वादिति भावः । तस्य दाने क्लेशसंभावना तत्रैव तदभावप्रतिपादनं सफलमित्याशयेनाह–अतिप्रियमिति ।

यच्चेति । स्वशब्दस्योभयार्थकत्वात् । ज्ञातिधनवाची तु न गृह्यते ऽनभिधानात् । द्वे इति वीप्सायां यथाशब्दस्य वृत्तौ द्वित्वाप्राप्त्या त-

---

समासवद्भाव एव प्रवृत्तिरिति भ्रमनिवारणायाह–*तदभावे चेति । *सर्वनाम्न इतीति । समासवद्भावविधानेन वृत्तित्वसत्त्वादिति शेषः । ननु पूर्वत्रान्यपरयोर्न समासवदित्युक्तमिति समासे सोरलुगित्यनुपपन्नमत आह–*कृतद्वित्वस्येति । तादृशान्येवोदाहरणानि मूले प्रदर्शितानि । *इदमिति । मूलोक्तम्बहुलग्रहणप्रयोजनमित्यर्थः । भाष्यकारसम्मतपक्षाभिप्रायेणाह–*डतरादिसूत्र इति । ननु स्वादेशविधानसामर्थ्यादेव लुङ् न भविष्यतीत्यत आह–*स्वादेशेति । ननु यद्यन्योन्यशब्दे पूर्वपदे सुभावस्तदाऽन्यान्यप्रादुर्भावादिति प्रयोगानुपपत्तिरत आह–*अन्यान्येति । *स्पष्ट एवेति । अन्यस्यान्यस्य प्रादुर्भावादिति तस्यार्थात् ।

अकृच्छ्रे प्रियसुखयोः ( पा० सू० ८-१-१३ ) । *तदर्थकयोरिति । अकृ-

दपि निपात्यते इति भावः । *क्लीबत्वञ्चेति । तेन ह्रस्वसिद्धिः । येन कृतद्वित्वस्या*व्ययत्वाभावसङ्ग्रहः । *ज्ञातेत्यस्य तृन्नन्तत्वात् षष्ठी न । *तृचि यथायथस्य ज्ञातेत्येव । यथास्वभावमिति । *यथास्वरूपमित्यर्थः । *ज्ञाताः सर्वे पदार्था यथायथं=यथास्वभावं सर्वे पदार्था ज्ञाता इत्यर्थ इति वृत्तिसम्मतम् ।

पूर्वपदस्याम्भाव इति । द्वौ द्वाविति कर्मधारयवद्भावात्सुब्लुकि पूर्वपदावयवस्यैकारस्यामादेश इत्यर्थः । अत्वमिति । *सञ्ज्ञात्वाद-

---

च्छ्रार्थकयोरित्यर्थः । अनयोरकृच्छ्रार्थकत्वं लक्षणया । यस्य दाने क्लेशसम्भावना तत्रैव तदभावप्रतिपादनमेवङ्कथनस्य फलम् ।

यथा स्वे यथायथमिति रूपं साधु भवति । मूलेऽव्ययीभावः । यथाशब्दो वीप्सायाम् । स्वशब्दस्तु प्रकृते आत्मीयात्मान्यतरवाची । एवञ्च देवदत्तयज्ञदत्तविष्णुमित्रेषु यथायथन्तत ये आशिषश्च सन्त्विति यत्र प्रयोगस्तत्रात्मीयवाची स्वशब्दो ग्राह्यः । यो य आत्मीयस्तत्रेत्यर्थे स्वस्मिन् स्वस्मिन्निति यथास्वमिति वीप्सायामव्ययीभावः । "नाव्ययीभावात्" ( पा० सू० २-४-८३ ) इत्यम् । यथायथं ज्ञाता इत्यत्र यथाशब्द आत्मवाची । स्वस्य स्वस्य आत्मनो ज्ञाता यथास्वं ज्ञातेत्यर्थः । अत्र यथाशब्दस्य वीप्साबोधकतयाऽनेनैव वीप्साप्रतिपादनात् "नित्यवीप्सयोः" ( पा० सू० ८-१-४ ) इति द्विर्वचनाप्राप्तेः प्रकृतसूत्रेण तन्निपात्यते । वृक्षं वृक्षं सिञ्चतीत्यत्र वीप्सायां विवक्षायां वृक्षशब्दस्य द्विर्वचनेन वीप्साप्रतीतिस्तथा प्रकृते न सम्भवति । वृक्षत्वविशिष्टो यथा वृक्षशब्दार्थस्तथाऽत्र वीप्सा यथाशब्दार्थः, वीप्सायाश्च वीप्सा न प्रतीयते । तदेतदुक्तं "वीप्सायां यथाशब्दस्यावृत्तेः" इति । *क्लीबत्वञ्चेतीति । अत्र क्लीबत्वं समुदायस्य निपात्यते न तु यथाशब्दस्यैव । तेन समुदायस्य ह्रस्वत्वम् न तु पूर्वस्य । *अव्ययत्वाभाव इति । यथायथशब्दस्येति शेषः । यथायथशब्दार्थस्य ज्ञातेत्यत्र या ज्ञानक्रिया तन्निरूपितकर्मत्वात् "कर्तृकर्मणोः" (पा० सू० २-३-६५) इति षष्ठीप्राप्तिशङ्कावारणायाह-*ज्ञातेत्यस्येति । अव्ययत्वाभावफलमाह-*तृचीति । *यथास्वरूपमिति । एतेनैतादृग्यार्थविवक्षायामात्मवाचकस्वशब्देन यथास्वशब्दे समास इति बोधितम् । वृत्तिकारोक्तमनुवदति-*ज्ञाता इति ।

द्वन्द्वं रहस्यमर्यादावचन ( पा० सू० ८-१-१५ ) । एतेष्वर्थेषु विषयभूतेषु द्वन्द्वमिति निपात्यते । एतेषामर्थानां विषयता च स्वघटितवाक्यजन्यशाब्दबोधविषयतया । तत्र रहस्यार्थस्य वाच्यत्वेन विषयत्वं स्पष्टमेव । अन्येषान्तु वाक्यप्रयोज्यज्ञानविषयत्वं ज्ञेयम् । ननु नपुंसकत्वस्य निपातनमस्तु अत्वन्तूत्तरपदे त्यदाद्यत्वेन भविष्यतीत्यत आह-*संज्ञात्वादिति । अत्वस्य प्रत्यासत्त्या त्यदादिप्रकृतिकविभक्तिनिमित्तकतया प्रकृतस्य समुदायस्य सर्वादिप-

प्राप्तिः । नपुंसकत्वं चेति । *चेन कृताद्वित्वानियतद्विवचनोत्पत्त्यभावस्य सङ्ग्रहः । कर्मधारयवद्भावादन्तोदात्तत्वम् । वाच्यमिति । इदं वृत्तौ स्पष्टम्* । *अभिव्यक्तिरप्येवमित्यन्ये । आचतुरमिति । आङभिविधौ । "आङ्मर्यादा" (पा० सू० २-१-१३ ) इत्यव्ययीभावः । *शरत्प्रभृतित्वाट्टच् । *चतुर्थान्तमिति फलितोऽर्थः । मिथुनीयन्तीत्यनेनान्वयः । मिथुनशब्देन तत्कर्म मैथुनं, तदिच्छन्तीत्यर्थे क्यच् । मिथुनं गच्छतीति । मिथुनत्वं प्राप्नोतीत्यर्थः । *फलितार्थकथनमिदम् । 'मिथुनायन्ते' इति क्यङन्तोऽपपाठः । उपमानार्थाभावात् । द्वन्द्वपदद्योत्या मर्यादा तु एतावदेव पशूनामायुरित्येवंरूपा । *स्वसाहित्येन च चतुरोऽभिव्याप्येत्यर्थः । प्रपौत्रेणापीति । चतुरोऽभिव्याप्येत्यर्थ इति वृत्तिस्वरसः । *अत्यन्तसहचरितत्वेन लोकविज्ञानमत्राभिव्यक्तिः । अत्यन्तसहचरिते लोकविज्ञाने द्वन्द्वमित्युपसंख्यानमिति वार्तिकात् । तदाह—साहचर्येणेति । *तेनेह न—द्वौ युधिष्ठिरार्जुनौ । द्वन्द्वं न्यश्चीत्यत्र वीप्सायान्द्वित्वमन्यत्र स्वार्थे । अन्यत्रापीति । *द्वन्द्वं युद्धान्यवर्तन्तेति यथा । अत्र द्वयोर्द्वयोरित्यर्थाद्वीप्सायान्द्वित्वम् । यथा च शीतोष्णसुखदुःखक्षुत्तृषां द्वन्द्वानि सहते इत्यत्र स्वार्थे द्वित्व-

---

ठितद्विशब्दान्तत्वेन सर्वनामत्वे सति तद्व्याप्यन्त्यदादित्वं वाच्यन्तच्च न सम्भवति संज्ञात्वादिति भावः । द्विशब्दस्य नित्यन्द्विवचनान्तत्वेऽपि निपातितस्यास्य तथात्वाभावमाह-*चेनेति । *वृत्तौ स्पष्टमिति । रहस्यस्य द्वन्द्वशब्दवाच्यत्वन्तत्र स्पष्टमित्यर्थः । *अभिव्यक्तिरप्येवमिति । द्वन्द्वेति समुदायस्य वाच्येत्यर्थः । *शरत्प्रभृतित्वात्=चतुर्शब्दस्य शरदादिषु पाठात् । अत्र चतुर्शब्दश्चतुर्णाम्पूरणं वर्त्तते । तेनाचतुर्थादिति सिद्धम् । अभिविध्यर्थकाङ्समभिव्याहारेण यल्लब्धंन्तदाह—*चतुर्थान्तमिति । ननु मिथुनीयन्तीत्यनेन मिथुनकर्मकेच्छाया एव प्रतीतिर्न तु मिथुनत्वप्राप्तेरिति मिथुनङ्गच्छतीति विवरणमयुक्तमत आह-*फलितार्थेति । ननु प्रपौत्रपर्यन्तं सङ्गमतेऽपि चतुर्थपर्यन्तङ्गमनन्न वृत्तमत आह--*स्वसाहित्येनेति । 'द्वन्द्वन्न्यञ्चि पात्राणि प्रयुनक्ति'इत्यस्य न्यञ्चि न्युब्लीकृतानि पात्राणि द्वन्द्वम्प्रयुनक्तीत्यर्थः । अभिव्यक्तिपदार्थं व्याचष्टे-*अत्यन्तसहचरितत्वेनेति । *तेनेति । अत्यन्तसहचरितेत्युपादानेनेत्यर्थः । युधिष्ठिरार्जुनयोर्लोकविज्ञातत्वेऽप्यत्यन्तसहचरितत्वाभाव इति भावः । सूत्रोक्तातिरिक्तविषयेऽपि द्वन्द्वमितीष्यते तत्सिद्ध्यर्थं योगविभागादित्युक्तम्मूले । योगविभागस्य चेष्टसिद्ध्यर्थत्वाददतिप्रसङ्गो नाशङ्कनीयः, किन्तु यत्र यत्रेष्यते तान्युदाहरणानि स्पष्टप्रतिपत्तये प्रदर्श्यन्ते-*द्वन्द्वं युद्धान्यवर्त्तन्तेतीति । *एकशेषा-

मेकशेषाद् बहुवचनं, *यथा 'चार्थे द्वन्द्वः' इति स्वार्थे द्वित्वं, पुंस्त्वं लोकात् । अयं योगविभागो भाष्ये न दृश्यते द्वन्द्वं युद्धानीत्यत्र मर्यादावचनेन सिद्धम् । *एषा हि युद्धमर्यादा । शीतोष्णादिष्वभिव्यक्त्या सहचरितत्वं *शब्दप्रयोगे बोद्धव्यम् । चार्थे द्वन्द्व इति तु सञ्ज्ञाशब्दोऽव्युत्पन्नः* अवयवार्थाभानादिति तदाशयः* । विस्तरस्तु बृहच्छब्देन्दुशेखरे द्रष्टव्यः ।

शब्देन्दुशेखरे स्वल्पे पूर्वमर्द्धमपूपुरम् ।
प्रीयतां तेन भगवान् शिवया सहितः शिवः ॥ १ ॥
भूषितः फणिभाष्योक्त्या लघुः शब्देन्दुशेखरः ।
सतां हृत्कमलेष्वास्तां यावत्फणिफणे धरा ॥ २ ॥

इति शिवभट्टसुतसतीगर्भजनागोजीभट्टकृते लघुशब्देन्दुशेखरे

पूर्वार्द्धं समाप्तम् ॥

---

दिति । द्वन्द्वशब्दस्यैकशेषादित्यर्थः । नपुंसकत्वन्तु विशेष्यानुरोधात् । क्वचित्तु स्वार्थे द्विर्वचनेऽपि पुंस्त्वम् । तदाह-*यथा चार्थे द्वन्द्व इति । योगविभागाभावे उक्तप्रयोगाणां कथं साधुत्वमत आह-*एषा हि युद्धमर्यादेति । द्वयोर्द्वयोरेव युद्धं धर्म्यम्भवति । * शब्दप्रयोग इति । पुरुषस्य सहनशीलता यत्र प्रतिपाद्यते तत्र शीतोष्णयोः सहप्रयोग एव दृश्यत इति । *अव्युत्पन्न इति । सौत्र इति शेषः । *तदाशयः=सूत्रकारस्याशयः । "द्वन्द्वं रहस्य" ( पा० सू० ८-१-१५ ) इति सूत्रे कतिपयानामेवार्थानामुपादानादिति भावः ।

## इति द्विरुक्तप्रक्रिया ।

शब्देन्दुशेखरव्याख्या तद्धितान्तस्य या कृता ।
सा वै शम्भुतिथौ वर्षे खाष्टभूतीन्दुसम्मिते ॥ १ ॥
आश्विनस्यासिते पक्षे भैरवेण समापिता ।
अस्ति दौलतरायाख्यो राजराजोऽपरः कृती ॥ २ ॥
तल्लब्धजीविकेनैषाऽवन्तिकायाः प्रभुर्महान् ।

यस्य प्रतापसिंहेन निरस्ताः शत्रुवारणाः ॥ ३ ॥
विदुषान्तु प्रमोदाय तेन तुष्यतु शङ्करः ॥

इति श्रीमदनन्तकल्याणसद्गुणनिधानाखिलपण्डितसार्वभौमभूमण्डल-
प्रसारिविमलतरानवद्यसद्यशः पार्वणपीयूषभान्वगस्त्यकुलवं-
शावतंसश्रीभवदेवमिश्रात्मजभैरवमिश्रकल्पितायाश्चन्द्र-
कलायाम्बिरुक्तप्रक्रियान्तशब्देन्दुशेखर-
व्याख्यानं सम्पूर्णम् ।



श्रीगणेशाय नमः।

# ॥ अथ लघुशब्देन्दुशेखरः ॥

## उत्तरार्द्धम्।

*"मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते" इति भाष्योक्तेर्विघ्नविघाताद्यर्थं ग्रन्थमध्ये कृतं मङ्गलं शिष्यशिक्षार्थं निबध्नाति—श्रौत्राहन्तीति। श्रौत्रं=श्रोत्रियत्वं, वेदाध्ययनकर्तृत्वम्; आर्हन्ती=योग्यता, तद्विहितकर्मानुष्ठातृत्वम्। ताभ्यां वित्तैः=प्रसिद्धैरित्यर्थः। गुण्यैः=प्रशस्तगुणवद्भिः। अहर्दिवम्=अहन्यहनि। विजयतेतरामिति। वीति भिन्नं पदम्। "तिङश्च" (पा० सू० ५-३-५६) इति तरप्याम्। तिङन्तोत्तरपदस्तु समासश्छन्दस्येव। *उपसर्गाणां द्योतकतया वीत्येतत्सापेक्षत्वेनासामर्थ्यात्कथन्तरविति न श-

---

श्रीगणेशाय नमः।

रघुनाथपदद्वन्द्वं सीतया चर्चितं सदा॥
स्मरास्यहं परानन्ददायिनं लोकपावनम्॥ १॥
यो विभुर्विश्वमखिलं स्वीकृत्य समवस्थिताम्॥
सदा रक्षतु रामस्स ममास्तु शरणं हरिः॥ २॥
प्रणम्य मारुतिं वीरं गुरूनथ सरस्वतीम्॥
धातुजप्रत्ययानां वै व्याख्या सन्तन्यते मया॥ ३॥

ग्रन्थमध्येऽपि मङ्गलाचरणस्यावश्यकर्तव्यतां दर्शयति—*मङ्गलादीनीति। जयत इत्यस्य विपदसापेक्षत्वेनासामर्थ्यशङ्कां वारयति—*उपसर्गाणां द्योतकतयेति। नियमेन स्वार्थसाकाङ्क्षितरार्थवाचकशब्दभिन्नार्थवाचकशब्दस्यापेक्षा हि सामर्थ्याभावप्रयोजिका, साऽत्र नास्ति, उपसर्गाणां द्योतकत्वादिति भावः। तरबन्तार्थं प्रति तिङन्तार्थस्य प्राधान्येन प्रधानस्य सापेक्षत्वेऽपि वृत्तिर्भवत्येवेत्यपि बोध्यम्। ननु पूर्वार्द्धेऽपि तृतीयाध्यायस्थस्य क्विनः "स्पृशोऽनुदके" (पा० सू० ३-२-५८) इत्यनेन व्युत्पादनात्तुर्य्यपञ्चमाध्या-

ष्टम् । पूर्वार्द्धेनास्य सङ्गतिमाह-पूर्वार्द्धे इति । कथिताः *प्राधान्येने-त्यर्थः । तृतीयाध्यायेति । *उणादीनामपि "उणादयो बहुलम्" (पा० सू० ३-३-१ ) इति सूत्रबोधितत्वात्तत्त्वम्* ।

पञ्चम इति । 'लट् लिट्' इत्याद्युक्तक्रमापेक्षयेदम् । छन्दो-मात्रेति । तेन तद्रूपाणामिहाप्रदर्शनान्न्यूनतेति परास्तम् ।

वर्तमाने ल ( पा० सू० ३-२-१२३ ) कालादेर्द्योत्यतयाऽऽह-वर्त्तमानक्रियेत्यादि । *वर्त्तमानकालक्रियेत्याद्यर्थः । वर्त्तमानत्वं=प्रारब्धापरिसमाप्तक्रियाश्रयत्वं कालगतं बोद्ध्यम् । अटाविताविति । *अकारस्य चित्सञ्ज्ञां निवृत्त्युपायाभावात् । टित्वं टेरेत्वार्थम् ।

*लः कर्माणि ( पा० सू० ३-४-६७ ) । ल इति उच्चारणार्था-कारेण जातौ प्रथमैकवचनान्तम् । लस्येत्येतत्स्वरसात् ।

---

यवर्त्तिन इत्येतावन्मात्रप्रतिपादनं विरुद्धमिव प्रतिभातीत्यत आह-*प्राधा-न्येनेति । तत्रैतेषां प्रसङ्गात्कथनेऽपि नासङ्गतिरिति भावः । ननूणादिप्रत्यया-नां तृतीयाध्यायगोचरत्वाभावात्प्रतिज्ञाविरोध इत्यत आह-*उणादीनामिति । *तत्त्वम्=तृतीयाध्यायगोचरत्वम् । उणादिपाठस्तु बहुलग्रहणसाध्यानां का-र्याणां प्रदर्शनार्थमेव । अत एवात्र गोचरपदमुपात्तं न तु पठितमित्युक्तम् ।

ननु वर्त्तमानक्रियावृत्तेरित्यसङ्गतम् । वर्त्तमानत्वस्य शब्दप्रयोगाधि-करणवृत्तित्वरूपत्वात् । क्रियायाश्च पूर्वापरीभूतावयवकसमुदायरूपतयाऽवय-वानां चाशुविनाशितया तादृशसमुदायस्य निरुक्तं वर्तमानत्वं स्थिरसम्ब-न्धि नोपपद्यत इत्यत आह-*वर्त्तमानकालेति । वर्त्तमानः कालो यस्याः सा चासौ क्रियेत्यर्थः । न च कालगतमपि वर्त्तमानत्वं यदि प्रारब्धापरिसमाप्त-त्वघटितमेव तर्हि पूर्वोक्तानुपपत्तिस्तदवस्थैवेति वाच्यम् । बौद्धतादृशसमुदा-याधिकरणस्य जन्यकालस्य सम्भवात् । न च वर्त्तमानत्वं प्रत्ययवाच्यमेवा-स्त्विति वाच्यम् । लडादीनामश्रूयमाणतया तदादेशानामेव वाचकत्वस्य वाच्यत्वात् । एवं सति तेषां बहूनां काले शक्तिकल्पनापेक्षया लाघवाद्धातो-रेव काले शक्तिः प्रत्ययो द्योतक इत्येव युक्तम् । ननु लडादीनां धातोर्विधानेन "धातोः" ( पा० सू० ३-१-९१ ) इत्यधिकारसूत्रमिहैव वक्तुमुचितमिति चेन्न । तस्याकरणेऽपि यङ्विधिस्थधातुग्रहणस्योत्तरत्र सम्बन्धेनेष्टसिद्धिर्भविष्य-तीत्यभिप्रायात् । *अकारस्येति । "लटः शतृशानचौ" ( पा० सू० ३-२-१२४ ) इत्यत्र विशेषणार्थतया चरितार्थस्येत्यादिः ।

कालस्य द्योत्यताया दर्शितत्वाद्वाच्यार्थतामाह-*लः कर्म्मणीत्या-दि । एतेषामपि द्योत्यत्वमन्यत्र स्फुटम् । सम्प्रति तु वाच्यत्वाभिप्राये-णोक्तिरियम् ।

तिसृज्झि ( पा० सू० ३-४-७८ ) ॥ सौत्रत्वान्निर्विभक्तिका-नुकरणत्वाद्वा 'थासाथां' 'तस्झि'इत्यादौ रुत्वं न* । तिवादीनां पित्त्वं गुणार्थं स्वरार्थश्च । आदेशैः साहचर्यान्नागमत्वमिटः* । एषां स्थानि-वद्भावेन प्रत्ययत्वे सिद्धेऽपि देशांशे निराकाङ्क्षत्वेऽपि चाविरोधात् "प्रत्ययः" ( पा० सू० ३-१-१ ) "परश्च" ( पा० सू० ३-१-२ ) इति "आद्युदात्तश्च"(पा० सू० ३-१-३) इति च सम्बध्यत एव । *अत एवै-तत्सूत्रविधेय-तादिविषये "प्रत्ययसञ्ज्ञासन्नियुक्तमाद्युदात्तत्वम्" इति "आ-द्युदात्तश्च" ( पा० सू० ३-१-३) इति सूत्रे भाष्ये उक्तम् ।

ल इत्या*देशापेक्षया षष्ठीत्याह-लादेशा इति । *सिजादय-स्तु च्लेर्विशिष्टस्योद्देशेन विहिता न लमात्रोद्देशेनेति न तेषामत्र ग्रहणम् । *अस्याकडारत्वेऽपि शत्रादौ ' सावकाशां परस्मैपदसञ्ज्ञां पुरुषसञ्ज्ञा न बाधते "सिचि वृद्धिः *परस्मैपदेषु" ( पा० सू० ७—२-१ ) इत्यादि-

---

*रुत्वं नेति । मिवित्यत्र जश्त्वश्चेत्यपि बोध्यम् । *नागमत्वमिट इति । टकारदर्शनेन तु आगमत्वशङ्का जन्यते । सा साहचर्य्यान्निरसनीया । टकारो-च्चारणन्तु "इटोऽत्" ( पा० सू० ३-४-१०६ ) इत्यत्रास्यैव ग्रहणं स्यादित्येवम-र्थम् । तत्र हि "लिङस्सीयुट्" ( पा० सू० ३-४-१०२ ) इति सूत्रादनुवृत्तस्य लिङ इति विशेष्यस्य सत्त्वेन टकाराभावे वर्णग्रहणे तदन्तविधेस्सत्त्वेनेवर्णान्त-स्य लिङ इत्यर्थः स्यात् । तथा च "एधेमहि" इत्यत्रापि स्यात् । महिङो ङ-कारास्तिङ्प्रत्याहारसिद्ध्यर्थः । अत एवायं समुदायानुबन्धो नावयवस्यानुबन्धः । तेन 'संपप्रच्छिमहे' इत्यत्र सम्प्रसारणं न । क्वचित्तु समुदायानुबन्धोऽप्यवय-वानुबन्धो भवति । तस्थस्थमिपामितिभेदेनोपादानेन ज्ञापितस्य "समुदायानु-बन्धस्यावयवानुबन्धत्वं नास्ति" इतिवचनस्य ज्ञापकसिद्धत्वेनानित्यत्वात् । तेनायचाश्चित्कार्य्यसिद्धिः । *अत एव=प्रत्यय इत्यादिसूत्रत्रयस्याप्युपस्थितेरेव । न च लडादिलकारस्येत्सञ्ज्ञा कुतो नेति वाच्यम् । फलाभावात् । "लिति" ( पा० सू० ६-१-१९३ ) इति स्वरस्तु न फलम् । णलो लित्त्वाद् ज्ञापकात् । ते-षामश्रवणन्तु तिबाद्यादेशेनैव सिद्ध्यति ।

*आदेशापेक्षयेति । एवं चादेशबोधकपदस्य नियताकाङ्क्षासत्त्वेनादे-शसामान्यबोधकस्य "आदेशाः" इति शब्दस्याध्याहारेण वाक्यार्थबोधः । ला-देशा इत्यस्य लकारमात्रोद्देशेन विहिता इत्यर्थः, तत्फलमाह-*सिजादय इति । *अस्येति । सूत्रस्येति शेषः । परस्मैपदेष्वित्यादिलिङ्गादित्यत्रादिना आत्मनेपद-सञ्ज्ञां पुरुषसञ्ज्ञा न बाधते इत्यत्र "लिङ्सिचावात्मनेपदेषु"(पा०सू०१-२-११) इति सूत्रस्य ज्ञापकत्वं सूचितम् । परस्मैपदात्मनेपदसंज्ञयोस्तु बाध्यबाधकभाव

लिङ्गात् । *एकसञ्ज्ञाधिकारादेवात्मनेपदपरस्मैपदसञ्ज्ञयोर्बाध्यबाधकभावः ।

*शेषपदार्थज्ञानायात्मनेपदविधायकान्याह——अनुदात्तङित इति । तदन्ताच्चेति । *तेन यङन्तादात्मनेपदसिद्धिः । यङादेर्ङित्त्वमादाय तत्सिद्धावपि यङाद्यन्तसमुदायस्य *तङ्निरूपिताङ्गत्वानापत्तावडाद्यव्यवस्थापत्तिरिति केचित्* । चङाद्यन्ते तु न । मण्डूकप्लुत्या "भूवादयः" ( पा० सू० १-३-१ ) इत्यतो धातव इत्यस्य षष्ठ्या विपरिणतस्यानुवृत्तेरिति भाष्ये स्पष्टम् ।

---

आकडारीयत्वाद्भवत्येव, तदाह-*एकसञ्ज्ञाधिकारेति ।

तङानावात्मनेपदम् ( पा० सू० १-४-१०० ) ॥ अत्र लस्येत्यनुवृत्त्या लादेशस्याऽऽनो ग्रहणम् । तेन चानश् परस्मैपदिभ्योऽपि भवति । ननु येभ्यो धातुभ्य आत्मनेपदं भवति तन्निरूपणावसरे एवात्मनेपदविधायकसूत्रोपन्यास उचित इत्यत आह-*शेषपदार्थज्ञानायेति । *तेन=तदन्तादितिव्याख्यानेन । *तङ्निरूपिताङ्गत्वानापत्ताविति । यस्मात्प्रत्ययविधिस्तदादेरेवाङ्गत्वात् । "उपदेशेऽजनुनासिकः" ( पा० सू० १-३-२ ) इति सूत्रादुपदेशपदमनुवर्त्तते । तच्चानुदात्तङित इति द्वन्द्वार्थविशेषणम् । अवयवविशेषणत्वे द्वन्द्वो न स्यात् । एवं चानुदात्तांशे तत् स्वरूपानुवादकं न तु व्यावर्त्तकं, ङिदंशे तु 'चिनुतः' 'चुकुटिषति' इत्यस्य सिद्धये तद्विशेषणमातिदेशिकङित्त्व[illegible]त्र सत्त्वात् । एवं च यदंशे व्यावर्तकं विशेषणं भवति तद्विशेषणत्वमेवोचितमित्याशयेन मूले-उपदेशे यो ङिदिति व्याख्यातम् । *केचिदिति । अत्रारुचिबीजन्तु वक्ष्यमाणरीत्या धातोरितिव्याख्यानस्यावश्यकत्वेन केवलयङ आत्मनेपदस्याप्रसक्तेरेवेति यङन्तस्याङ्गत्वम्भवत्येव । तदन्तविधौ मानन्तूपदेशपदसम्बन्धेन व्याख्यानमेवेति । न च "हलन्त्यम्"(पा० सू० १-३-३) इति सूत्रव्याख्यानावसरे उपदेशपदे स्वरितत्वाभावकथनविरोध इति वाच्यम् । इत्संज्ञाविधौ सम्बन्धप्रयोजकं तन्नास्तीत्यर्थात् । मूले-धातोरिति । "भूवादयः" ( पा० सू० १-३-१ ) इति सूत्राद्धातव इत्यस्य प्रथमान्तस्यानुवृत्तावपि तद् 'अनुदात्तङितः' इतिपञ्चम्यन्तेन सामानाधिकरण्यानुरोधात्पञ्चम्या विपरिणम्यत इत्याशयेन इति केचित् । वस्तुतस्त्वेतत्प्रकरणम् "अनुदात्तङितः"( पा० सू० १-३-१२ ) "तिप्तस्झि"( पा० सू० ३-४-७८ ) "लस्य" (पा० सू० ३-४-७७) "द्व्येकयोः"(पा० सू० १-४-२२) इतिसूत्राणामेकवाक्यतयाऽनुदात्तङितो धातोर्लस्य स्थाने एकत्वे गम्ये आत्मनेपदसंज्ञकस्त इति भवतीत्येवमेव विधायकम् । "वृद्भ्यस्स्यसनोः"(पा० सू० १-३-९२) इतिसूत्रारम्भसामर्थ्यात् । अन्यथा लावस्थायामेव स्यप्रत्ययेन व्यवधानादनुदात्तङितः परत्वाभावादस्याप्राप्त्या पदद्वयसिद्धौ "वृद्भ्यः" (पा० सू० १-३-९२) इत्यस्य वैयर्थ्यापत्तेः । एकवाक्यतायान्तु धातोरितिविहितविशेषणम् । तस्मिन्सूत्रे

स्वरितञितः (पा० सू० १-३-७२) कर्तारमभिप्रैतीति तत्=कर्त्रभिप्रायम्, कर्मण्यण् । अभिप्रैतिर्गत्यर्थः, तदाह—कर्तृगामिनीति । क्रियाफलञ्च श्रुत्या लोकतो वा यदुद्देशेन क्रियाप्रवृत्तिरवगता *तदेव, न दक्षिणादिरूपम् । तच्च पच्यादौ भोजनादि लोकतोऽवगतं, यज्यादौ स्वर्गादि श्रुत्याऽवगतम् । कर्तृगामिफलकक्रियावृत्तेर्धातोरित्यर्थः । *तदर्थत्वद्योतकश्चात्मनेपदमेव । यजमानस्य पाकयागादिसामग्रीसङ्घटनरूपं संविधानं *"यजमानो यजते" इत्यादौ धात्वर्थः । न चैवं णिजापत्तिरिति वाच्यम् । संविधानपूर्वकप्रेरणाया एव णिजर्थत्वात् । यत्र सति 'प्रयोजक' इत्युच्यते । न हि संविधानमात्रेण तथोच्यते । "संविधानं कुर्वन्नपि न यावत् प्रेरयति न तावत्प्रयोजक इत्युच्यते" इति*हेलाराजोक्तेः । *भिक्षा

---

र्थे इति तु विषयसप्तमी बोध्या । एवं च 'चिनुतः'इत्यादावनुदात्तङितो विधानाभावान्नात्मनेपदप्राप्तिः । 'चुकुटिषति' इत्यादिष्वपि "गाङ्कुटादिभ्यः"(पा० सू० १-२-१)इत्यनेन सनो ङित्त्वविधानेऽपि धातुत्वस्य सन्नन्तसमुदायवृत्तितया तस्य च समुदायस्यातिदेशिकङित्त्वाभावेन न लकारस्य ङितो विधानमिति नात्मनेपदप्राप्तिरित्युपदेश इत्यस्यैतत्सूत्रे न सम्बन्धः । न चैवं यङन्तादात्मनेपदानापत्तिः, यङन्तसमुदायस्य ङित्त्वविरहादिति वाच्यम् । अङ्गुल्यादिवदवयवावयवस्य समुदायावयवत्वेन यङन्तस्यापि ङित्त्वात् । यदि च नैवं कल्पना तदापि नानुपपत्तिः "गाङ्कुटादिभ्यः" (पा० सू० १-२-१) इति सूत्रे ङिदितिपदं ङिद्वदित्यस्यार्थे सत्या सत्यभामेतिवद्वर्त्तते । ङिद्वदित्यत्र च सप्तम्यन्तात्षष्ठ्यन्ताच्च वतिरित्याश्रीयते न तु पञ्चम्यन्तादिति सर्वेष्टसिद्धिः । अत एव भाष्ये चुकुटिषतीत्यत्रात्मनेपदमाशङ्क्य "सिद्धन्तु पूर्वस्य कार्य्यातिदेशात्" इति समाहितम् । तदुपपादनग्रन्थे च 'सप्तम्यर्थेऽपि वतिर्दृश्यते' इत्युक्तम् । एवं च ङिदन्तादात्मनेपदमित्युक्तावपि न क्षतिः । अपिशब्दात्सप्तम्यन्तात् । तेन भवतामित्यादौ "आतो ङितः" ( पा० सू० ७-२-८१ ) इत्यस्य न प्रवृत्तिः । अस्मिन्पक्षे आत्मनेपदशब्दादौ भाविसञ्ज्ञा ज्ञेया । एतेन "हलन्त्यम्" ( पा० सू० १-३-३ ) इति सूत्रे उपदेशपदे स्वरितत्वाभावप्रतिपादकेन ग्रन्थेन प्रकृतसूत्रे उपदेशपदसम्बन्धाभिप्रायेण व्याख्यानपरग्रन्थेन विरोध इत्यपास्तम् । प्रकृतग्रन्थस्य मूलकाराभिप्रायवर्णनपरत्वात् । अत एवाह—केचिदिति ।

*तदेवेति । एवकारेण धात्वर्थफलव्यवच्छेदः । तदुक्तम्—

"यस्यार्थस्य प्रसिद्ध्यर्थमारभ्यन्ते पचादयः ।
तत्प्रधानं फलं तेषां न लाभादि प्रयोजनम् ॥" इति ।

*तदर्थत्वद्योतकम्=कर्तृगामितादृशफलकत्वद्योतकम् । *यजमानो यजते इत्यादाविति । अत्रादिना 'पचते' इत्यादिसंग्रहः । *हेलाराजोक्तेरिति ।

वासयतीत्यादावपि प्रयोजकत्वारोपो बोद्ध्यः। "तूष्णीमासीनो यस्तत्समर्था-न्याचरति सोऽपि वासादिप्रयोजकः" इति भाष्यात्। *तत्समर्थाचरणमा-त्रेण तत्प्रयोजकत्वारोप इति तदर्थः। तत्समर्थाचरणपूर्वकप्रेरणा तत्र तत्र धात्वर्थः। तदुक्तं हेलाराजेन "यः स्वर्गादिफलार्थं भृत्या इतरं व्यापा-रयति स्वयञ्च प्रतिविधानमारभते तत्रैव यजमानादौ कर्तर्यात्मनेपदमि-ष्यते" इति। *"केषाञ्चित्कर्त्रभिप्राये णिचा सह विकल्प्यते आत्मनेपदम्" इति हरिकारिकाव्याख्यावसरेऽपि हेलाराज आह। णिच् प्रेरणावा-ची। "तत्प्रयोजको हेतुश्च" (पा० सू० १-४-५४) इति सूत्रात्। *अत एव तदाश्रयस्य कर्तृत्वं 'पाचयति देवदत्तो यज्ञदत्तेन' इत्यादौ। *एवञ्च भिन्नविषयत्वाद्विकल्पोक्तिरसङ्गता। किं च सामान्यविहितणिचो धातुविशे-षाद्विहितेनात्मनेपदेन बाध एवोचितः। एतच्च केषाञ्चिदित्यनेन सूचितमिति। 'क्रीणीष्व' 'वपते' इत्यादिप्रयोगाणां तेनैवं गतिरुक्ता—*"क्रीणीष्वात्मान-मिति विनतां कद्रूराह। तत्र प्रत्युपकारं विना दास्यात् मुक्त्यसम्भवात् प्रत्युपकारस्य च स्वासाध्यत्वात्पुत्रसंविधानं गम्यते, न तु स तदर्थः। एवं 'केशश्मश्रु वपते' इत्यादावपि स्वस्यासामर्थ्येन सामर्थ्यात्कर्तुः *संवि-धानं गम्यते न तु तदर्थः। एवमन्यत्राप्यूह्यम्" इति। *'स्वामिदासौ पचेते' इत्यादौ स्वामिधर्मस्य दासे आरोपादात्मनेपदं, दासधर्मस्य तु न स्वामिन्यारोपः। उत्तमे निकृष्टधर्मारोपस्य प्रयोजनं विना स्वरसतोऽप्रती-तेरिति न कदाचित्तत्र परस्मैपदम्। एतच्च मञ्जूषायां विस्तरेण निरू-

---

एवं च 'पचते' इत्यादौ नात्मनेपदविषये णिजापत्तिः। ननु प्रेरणायाश्चेतनधर्म-त्वाद्भिक्षादीनामचेतनत्वाद्भिक्षा वासयतीत्यसंगतमत आह—*भिक्षा वासयती-ति। *तत्समर्थाचरणम्=धात्वर्थफलोत्पत्तिसमर्थाचरणम्। भिक्षादिनिष्ठतत्सु-लभत्वादिरूपम्। प्रेरणाया एव णिजर्थत्वे स्थलान्तरीयहेलाराजीयसम्मतिरप्या-ह—*केषाञ्चिदिति। *अत एव=णिचः प्रेरणावाचकत्वादेव। अत्र केषांचि-दित्यनेन सूचितामरुचिं प्रकटयन्नाह—*एवं चेति। ननु यद्यात्मनेपदेन सह णि-चो विकल्प उच्यते तदा प्रेरणायास्सत्त्वेऽपि णिजभावस्य क्रीणीष्वेत्यत्रोपपत्तिर्भ-वति भवन्मते तु कथमत आह—*क्रीणीष्वेत्यादि न तु स तदर्थ इति। पुत्रस्य सं-विधानं प्रवर्तनं न धात्वर्थः, किन्तु पराधत्तत्वानिवृत्त्यादिमूलको व्यापार एव धात्वर्थः। *कर्तुः=नापितस्य। *संविधानम्=तत्पुरोऽवस्थानादिरूपम्। ननु स्वामिदासौ पचेते इत्यत्र भृत्यस्य वेतनलाभोद्देश्यकप्रवृत्तिसत्त्वान्निरुक्तफल-स्य कर्तृगामित्वाभावात्कथमात्मनेपदमत आह—*स्वामिदासावीति। एवमन्य-

पितम् । *'कमलवनोद्घाटनङ्कुर्वते' इत्यादौ तु सुगन्धाघ्राणादिरूपविकासफलारोपः किरणेष्विति न दोष इत्यन्यत्र निरूपितम् ।

युष्मद्युपपदे (पा० सू० १-४-१०५) ॥ सामानाधिकरण्यम्=एकार्थबोधकत्वम् । तच्च प्रत्यासत्त्या लकारेणैवेत्याशयेनाह–तिङ्वाच्येति । *अत्र तिङ्ग्रहणं तत्स्थानिलकारे लाक्षणिकम् । एतद्विधेयस्य तिङ एतद्वाक्ये उद्देश्यत्वासम्भवात् । उपोच्चारितं पदम्=उपपदं न तु कृत्रिमं, तस्येहानुपयोगात्* अप्राप्तेश्च । स्थानं=प्रसङ्गस्तद्वति=स्थानिनीत्यर्थः । स च तदर्थावगतौ सत्यां वक्त्राऽप्रयोग एवेत्यभिप्रेत्याह–अप्रयुज्यमाने इति । अपरर्थमाह–प्रयुज्यमाने चेति । 'त्वद्भवति' 'अत्वं त्वं सम्पद्यते' इत्यादौ तु न । त्वंशब्दस्य गौणत्वात्* । *त्वत्कल्प इत्यादौ कालान्तरदृष्टगुणस्यैवेषदसमाप्तौ प्रत्यय इति त्वत्कल्पो भवसीत्येव । *ननु तिङ्वाच्यकारकवाची त्वत्कल्पशब्दो, न स युष्मच्छब्दः । न च युष्मदीयस्य युष्मद्वतीत्यर्थे सौत्री लक्षणेति वाच्यम् । अतित्वं भवतीत्यादावपि मध्यमापत्तेः । स्पष्टश्चेदं भाष्ये, इति चेन्न । *'युष्मदि साधने इत्येवं भविष्यति' इति भाष्ये एव समाधानात् । युष्मदर्थेन यत्र लान्तस्य सामानाधिकरण्यं तत्र मध्यम इत्यर्थेन तल्लाभ इति कैयटः । *लबोध्यार्थेन स-

---

त्राप्युपपत्तिमाह–*कमलवन इत्यादि ।

तिङस्त्रीणि त्रीणि ( पा० सू० १-४-१०१ ) । मूले यथासंख्योपपत्तये षष्ठ्या विपरिणतयोः परस्मैपदात्मनेपदशब्दयोरनुवृत्तयोरुभयोः पदयोरितिव्याख्यातम् । एवं चानुवृत्तिबलादेव पुरुषसञ्ज्ञायास्समावेशे सिद्धे "सिचि वृद्धिः" ( पा० सू० ७-२-१ ) इत्यस्य ज्ञापकत्ववर्णनासंगतिरिति तु न । प्रथमादिशब्दानां कृतद्वन्द्वानामेकशेषेणैव सामञ्जस्ये तयोः पदयोः स्वरितत्वस्य विभक्तिविपरिणामस्य च कल्पने गौरवमित्यभिप्रायेण तथाभिधानात् ।

*अत्र=तिङ्वाच्येति वाक्ये । *अनुपयोगादिति । तस्यास्समाससञ्ज्ञादिप्रयोजकतया तत्सम्भवस्येहाभावादिति भावः । *गौणत्वादिति । प्रकृते सादृश्यमूलकाभेदारोपेण वर्त्तमानत्वात् । 'त्वत्कल्पः' इत्यत्र त्वास्तिसामानाधिकरण्यमित्याह–*त्वत्कल्प इत्यादि । नन्वेवं त्वत्कल्पेतिसमुदायस्य तिङ्वाच्यकारकवाचित्वं न तु युष्मच्छब्दस्येति कथमेतदिति शङ्कते–*नन्विति । *युष्मदि साधन इति । शब्दार्थयोस्तादात्म्यादेवमुक्तम् । ननु निरुक्तं सामानाधिकरण्यं तान्तस्य युष्मच्छब्दस्य सम्भवति, न तु युष्मदर्थेन सहेति युष्मदर्थेन यत्रेत्यसंगतमत आह–*लबोध्यार्थेति । तदर्थप्रवृत्तिनिमित्तयोस्सामाना-

मानाधिकरणयुष्मदर्थबोधकशब्दे उपपदे इत्यादिक्रमेणार्थः। सामानाधिकरण्यश्च तदर्थप्रवृत्तिनिमित्तयोर्बोद्ध्यम्। *सलिङ्गस्य*चेतनाचेतनसाधारणस्य भवदर्थत्वात् युष्मदश्चालिङ्ग*चेतनैकविषयत्वाद्भवच्छब्दयोगे न मध्यमः। सम्बोधनार्थो मध्यमे प्रतीयते। *युष्मदश्च सम्बोधन एव प्रथमेति तु न युक्तम्। त्वं पचसीत्यादौ तदप्रतीतेः। क्रियाविनियोगफलकाभिमुखीकरणस्यैव सम्बोधनत्वात्। *तदुक्तं हरिणा—

"प्रत्यक्त्वापरभावश्चेत्युपाधी कर्तृकर्मणोः।
तयोः श्रुतिविशेषेण द्योतकौ मध्यमोत्तमौ ॥ १ ॥
सदसद्वाऽपि चैतन्यमेताभ्यामवगम्यते।
चैतन्यभागे प्रथमः पुरुषो न तु वर्त्तते ॥ २ ॥ इति ॥

एवञ्च मध्यमोत्तमाभ्याञ्चैतन्ययुक्ते कर्तृकर्मणी बोध्येते। प्रत्यक्त्वं=प्रयोक्तुरहङ्कारानास्पदचेतनत्वम्। अपरत्वम्=तदहङ्कारास्पदचेतनत्वम्। तत्र कर्मविशेषणतया तयोः प्रतीतिस्तिङ्केति श्रुतिविशेषेणेत्युक्तम्। *शृणोत ग्रावाण इत्याद्यर्थमसदिति। अनभिव्यक्तमित्यर्थ इति मञ्जूषायां। विस्तरः। अतित्वं भवतीत्यादौ अतिक्रमितुः प्राधान्यान्न मध्यम इति बोध्यम्।

प्रहासे च ( पा० सू० १-४-१०६ )। पूर्वोत्तरसूत्रयोरपवादः। 'मन्योपपदे' इति बहुव्रीहिः। प्रकृतिभूतश्च मन्यतिकर्तृकर्तृक एव प्रत्यासत्तेः समानाधिकरणे इत्यनुवृत्तेश्च। मध्यमोत्तमयोर्व्यत्यासेन प्रयोगे प्राप्ते इदम्। अन्राद्ये वाक्ये 'अस्मद्युपपदे' इति, द्वितीये 'युष्मद्युपपदे' इति च संबद्ध्यते। उत्तमार्थस्यैकत्वविधानात्तत्समानाधिकरणयुष्मच्छब्द एकव-

---

धिकरण्यन्त्वेकाधिकरणवृत्तिरूपम्। ननु भवच्छब्दस्यापि युष्मच्छब्दसमानार्थकत्वाल्लबोध्यार्थसमानाधिकरणयुष्मदर्थबोधकशब्दे उपपदे इत्यर्थे भवच्छब्दप्रयोगेऽपि मध्यमापत्तिरत आह-*सलिङ्गस्येति। *चेतनाचेतनसाधारणस्येति। "भस्मोद्धलन भद्रमस्तु भवते रुद्राक्षमाले शिव" इत्यादावचेतनस्य 'भवति भिक्षान्देहि' इत्यादौ चेतनस्य प्रतीतिरिति भावः। *चेतनैकविषयत्वादिति। अभिमुखीकरणस्य तत्रैव सम्भवादिति भावः। नन्वेवं युष्मच्छब्दान्नियमेन सम्बोधन एव प्रथमा स्यादत आह-*युष्मदश्चेति। त्वं पचसीत्यत्र क्रियाविनियोगाभावेन विशेषणाभावाद्विशिष्टाभावः। युष्मच्छब्दस्य चेतनैकविषयत्वे हरिसम्मतिमप्याह—*तदुक्तमिति। ननु चैतन्ययुक्तस्य चेन्मध्यमपुरुषेणाभिधानं तदाऽचेतनविषये 'शृणोत ग्रावाणः' इत्यादौ कथमत आह-*शृणोतेति।

चनान्त एव ॥

अस्मदि (पा० सू० १-४-१०७) ॥ आद्यन्तपदरहितं पूर्वसूत्रमनुवर्त्तते, तदाह—तथाभूत इति । युष्मदस्मद्भ्यां सामानाधिकरण्ये तु परत्वादुत्तम एव* । 'अहञ्च त्वञ्च वृत्रहन् संयुज्यावहे' इति यथा । *देवदत्तश्च त्वञ्चेत्येकशेषे 'युवां भवथ' इति मध्यम एव युष्मदर्थसत्त्वेन शेषत्वाभावात् । एकशेषे शिष्टशब्दप्रवृत्तिनिमित्तेनैव लुप्तार्थबोधात् । *उपयुक्तासमभिव्याहृतस्योपयुक्तादन्यस्य शेषपदार्थत्वात् । स्पष्टञ्चेदं सर्वं भाष्ये । *एवञ्च तत्र *वाक्येऽपि *भवथ इत्येव । *भवच्छब्देन युष्मदस्म-

---

*परत्वादुत्तम एव । युष्मदस्मदोस्सहविवक्षायामेकशेषस्तत्रास्मदः शेषसत्त्वात्तदीयप्रवृत्तिनिमित्तेन युष्मदर्थस्याप्यभिधानादुत्तमो न्याय्य एव । यत्र त्वेकशेषेण न प्रयोगः तत्रोभयोरपि सूत्रयोः प्राप्तौ परत्वादुत्तम एवेत्यर्थः ।

शेषे प्रथमः ( पा०सू० १-४-१०८ ) ॥ मूले मध्यमोत्तमयोरविषय इति । एवमभिधानेन युष्मद्भिन्नसामानाधिकरण्ये प्रथम इति लभ्यते । ननु यत्र युष्मद्देवदत्तादिशब्दयोः सहविवक्षायामेकशेषस्तत्र शेषसामानाधिकरण्यसत्त्वात्प्रथमापत्तिरत आह—*देवदत्तश्चेति । "शेषे" इत्यस्य न पूर्वोक्तार्थः किन्तु युष्मदादिसामानाधिकरण्याभावे इत्यर्थः । एवं च नोक्तदोषः । तथाहि—यत्र देवदत्तश्च त्वं चेतिक्रमेण सहविवक्षा तत्र "त्यदादीनि सर्वैर्नित्यम्"(पा० सू० १-२-७२)इति युष्मच्छब्दस्यैकशेषेण प्रयोगाद्देवदत्तपदार्थस्यापि युष्मच्छब्दप्रवृत्तिनिमित्तप्रकारिकैवोपस्थितिरिति न प्रथमः किन्तु मध्यम एवेति । *उपयुक्तासमभिव्याहृतेति । उपयुक्तेनासमभिव्याहृतो य उपयुक्तादन्यस्स शेष इत्यर्थः । उपयुक्तः प्रकृते पुरुषनियामकत्वेन प्रक्रान्तो युष्मच्छब्दोऽस्मच्छब्दश्च तेनासमभिव्याहृतस्तत्प्रतिपाद्यतावच्छेदकप्रकारकप्रतीतिजनको यस्तदन्यः शब्दस्तस्मिन्प्रयुज्यमानेऽप्रयुज्यमाने वा प्रथमो भवति, प्रकृते तु न तथेति भावः । ननु सहविवक्षायामेकशेषे यद्यपि पूर्वोक्तरीत्या निर्वाहस्तथापि यत्र न सहविवक्षा 'त्वं च देवदत्तश्च' इति, तत्र प्रथमः प्राप्नोतीत्यत आह—*एवं चेति । निरुक्तसूत्रार्थस्याभिप्रेतत्वे चेत्यर्थः । *वाक्येऽपीति । एकशेषाभाव इत्यर्थः । युष्मच्छब्दप्रवृत्तिनिमित्तप्रतीतेस्तत्रापि सत्त्वादिति । *भवथ इत्येवेति । तत्राप्युपयुक्तस्य युष्मच्छब्दस्य समभिव्याहारसत्त्वात् । न च द्वाभ्यां युष्मद्देवदत्तशब्दाभ्यां समूहालम्बनात्मिकैका यत्र प्रतीतिस्तत्र देवदत्तशब्दस्य युष्मच्छब्दप्रतिपाद्यतावच्छेदकधर्मप्रकारकोपस्थितिजनकतया न निरुक्तं शेषत्वमिति प्रथमाप्रसङ्गेऽपि यत्र क्रमेण तत्तद्धर्मप्रकारिकोपस्थितिस्तत्र देवदत्तशब्दस्य युष्मच्छब्दार्थतावच्छेदकधर्मप्रकारकोपस्थितिजनकान्यत्वमस्त्येवेति शेषत्वात्प्रथमः प्राप्नोतीति वाच्यम् । तत्रापि शाब्दबोधस्योपस्थितिद्वयजन्यस्यैकस्य वक्तृतात्पर्यविषयत्वेन उपयुक्तपदप्रयोज्यशाब्दबोधस्य देवदत्तशब्दप्रयोज्यस्य चै-

दोः सहविवक्षायां पूर्वशेष एवेति मध्यमोत्तमावेव । परस्य भवतः शेषस्तु नानभिधानादिति कैयटः ।

भू सत्तायाम् । *सत्तेहाऽऽ*त्मधारणम् । सत्तायामित्यादेर्वर्त्तत इति शेषः । पूर्वं भूकथनं महाव्याहृतिस्मारकतया माङ्गलिकत्वात्, सत्तार्थनिर्देशोऽप्येवं*, सत्तारूपस्य परब्रह्मणः स्मरणात् । कर्मणः कर्त्रधीनत्वेन पूर्वं कर्तृप्रत्ययानाह—कर्त्रीति ॥

धातोरिति पञ्चम्यन्तस्य पृथक्सूत्रस्या*धिकारसामर्थ्यादाह—धात्वधिकारेति ।

---

कत्वाच्छाब्दबोधीयक्रियानिष्ठविषयतामादायोपयुक्तसमभिव्याहृतत्वस्य वक्तुं शक्यत्वात् । पूर्वोक्तसमभिव्याहारपदनिरुक्तावुपस्थितित्वेन निवेशमकृत्वोपयुक्तपदार्थतावच्छेदकनिष्ठविषयतानिरूपितविषयतानिरूपिता या विषयता तदवच्छिन्नविषयतानिरूपितविषयताशालिबोधाजनकस्य शेषपदेन ग्रहणात् । प्रथमा विषयता प्रवृत्तिनिमित्तनिष्ठप्रकारतारूपा, द्वितीया आश्रयनिष्ठा, तृतीया क्रियानिष्ठा बोध्या । न चोपयुक्तासमभिव्याहार उपयुक्तपदाव्यवधानेनाप्रयुज्यमानत्वरूप एवास्तु किमुक्तविषयताघटितानिर्वचनेनेति वाच्यम् । त्वञ्च धनिको महान्देवदत्तश्च ब्राह्मणगणान् भोजयथ इत्यत्र प्रथमापत्तेः । न चोपयुक्ताघटितवाक्यघटकत्वमुपयुक्तासमभिव्याहृतत्वमस्त्विति वाच्यम् । घटितत्वस्य वाक्यत्वस्य घटकत्वस्य च प्रवेशेन तदर्थस्यातिगुरुत्वात् । यदा तु देवदत्तः पचति त्वं चेतिरीत्या समुच्चयविवक्षा तत्र देवदत्तस्य शेषत्वात्प्रथमो भवति । द्वितीयस्य त्वावृत्त्या पुरुषविपरिणामेनान्वयस्तत्र वाक्यभेद एव । यत्र तु युष्मदस्मद्भ्यां भवच्छब्देन च सहविवक्षा तत्र मध्यमोत्तमावेवेत्याह—*भवच्छब्देनेति । केचित्तु "शेषे प्रथमः" ( पा० सू० १-४-१०८ ) इति सूत्रस्य युष्मदस्मदी यत्र समानाधिकरणे न स्तस्तत्र प्रथम इति विवरणमित्याहुः, तन्न । युष्मदस्मदन्येषु प्रतिषेधः शेषत्वादितिपूर्वपक्षासंगतेः । उपयुक्तादन्य इत्यस्यैव शेषपदार्थत्वेन प्रसिद्धत्वाच्च ।

भूसत्तायामित्यत्र सत्तायामित्यस्य शास्त्रान्तरप्रसिद्धसत्ताजातिपरत्वे तस्या नित्यत्वेन तदनुकूलत्वं क्रियायां न सम्भवतीति धातुसञ्ज्ञानिष्पत्तिर्न स्यादतो व्याचष्टे—*सत्तेहेति । *आत्मधारणम्=स्वस्वरूपधृत्यनुकूलो व्यापारः । अनुकूलत्वं चारोपितानारोपितसाधारणं विवक्षानिबन्धनमिति नित्यानित्यसाधारण्योपपत्तिरिति घटो भवति, आत्मास्ति, पर्वतास्तत्र देशे सन्तीति भवत्यर्थस्यास्तेः प्रयोगः सङ्गच्छते । स्वस्वरूपधृतिश्च स्वरूपनिष्ठकालसम्बन्धरूपा इति फलव्यापारयोरेकनिष्ठत्वादकर्मकत्वोपपत्तिरिति । "अस्तीत्युपपन्नस्यात्मधारणमाचष्टे" इति निरुक्तं चेह प्रमाणम् । *एवम्=मङ्गलार्थम् ।

*अधिकारसामर्थ्यादिति । तत्प्रत्याख्यानपक्षे तु "शमि धातोः" ( पा०

कर्त्रर्थे इति । विकरणास्तु सति सम्भवे *द्योतका इति भावः । अत्तीत्यादौ विकरणं विनाऽपि तत्प्रतीतेः । *वस्तुतस्तिबादयोऽपि द्योतका एव लकारार्थश्च* क्रियायामेवाभेदेनान्वेति; गुणगुणिनोरिव क्रियातद्वतोरपि तादात्म्याङ्गीकारात् । *अत एव कैयटेन "युष्मदर्थस्य यत्र *लान्तेन सामानाधिकरण्यम्" इत्युक्तम् । अन्यथा लेनेत्येव वदेत् इत्यन्यत्र निरूपितम् । ननु कर्त्तरीति व्यर्थं, भावकर्मणोस्तु यका बाधान्न दोषः, तद्विधौ हि*भावकर्मणोरिति वर्त्तते इति चेन्न । "दिवादिभ्यः" ( पा० सू० ३-१-६९ ) इत्यादावनुवृत्त्यर्थत्वात् । *अन्यथा ऽपवादविप्रतिषेधेन भावकर्मणोरपि तेभ्यः श्यन्स्यात् । *यक् तु पुरस्तादपवादन्यायेन शप एव बाधक इति दिक् ।

---

सू० ३-२-१४ ) इत्यतो धातुग्रहणसम्बन्धो बोध्यः । तत्फलन्तु हरीनित्यादौ "घेर्ङिति" ( पा० सू० ७-३-११ ) इति गुणस्य यकश्चाप्रवृत्तिः (१) ।

ननु कर्त्रर्थे शब्भवतीत्येव कुतो नोक्तमतआह-*द्योतका इति । द्योतकत्वं चैषां कर्त्राद्यर्थमात्रतात्पर्यग्राहकत्वम् । पञ्चकं धात्वर्थ इति सिद्धान्ताभिप्रायेणाह-*वस्तुतस्त्विति । *लकारार्थश्चेति । कारकरूप आख्यातार्थश्चेत्यर्थः । *अत एव=क्रियायामभेदेनान्वयादेव । *लान्तेनेति । लान्तशब्दजन्यस्य शाब्दबोधस्य क्रियामुख्यविशेष्यकतया विशेष्यक्रियायां चाभेदेन युष्मदर्थस्यान्वयादस्ति सामानाधिकरण्यमिति भावः । *भावकर्म्मणोरिति वर्त्तत इति । अन्यथा शपि परतो यक् स्यात् । *अन्यथा=कर्तरीत्यस्यानुपादाने । *अपवादविप्रतिषेधेनेति । प्रकृतसूत्रे कर्तरीत्यस्यानुपादाने शबुत्सर्गः, तस्य द्वावपवादौ=यक्श्यनौ, तयोर्मध्ये श्यनपेक्षया यकः पूर्वस्मात्परत्वाद्दिवादिभ्यो भावे कर्मणि वा श्यन् स्यादित्यर्थः । ननु यग्विधायकशास्त्रस्यापवादतया शब्बाधकत्ववत् श्यन्बाधकत्वं भविष्यतीत्यत आह-*यक् त्विति ।

सार्वधातुकार्द्धधातुकयोः ( पा० सू० ७-३-८४ ) । नन्वत्र लाघवात्पिदार्द्धधातुकयोरिति सूत्रमस्तु सप्तमीबहुवचने हरिषु भानुष्वित्यत्र नातिप्रसङ्गः आर्द्धधातुकसाहचर्येण धातोर्विहिते प्रत्यये एवैतत्प्रवृत्तेः । धातोर्विहित इत्यस्य धातुसंशब्दनेन विहित इत्यर्थः । एतत्फलं 'णूस्तुतौ' 'धूविधूनने' इत्यादिभ्यः क्विबन्तेभ्यः सप्तमीबहुवचने गुणव्यावृत्तिः । न च पिदार्धधातुकयोरिति न्या-

---

(१) 'हरीन्' इत्यत्र शसः शकारस्य "लशक्वतद्धिते" ( पा० सू० १-३-८ ) इत्यनेनेत्त्वात् "तिङ्शित्" ( पा० सू० ३-४-११३ ) इति सूत्रे धातुग्रहणासम्बन्धे सार्वधातुकत्वेन तस्मिन् परे "सार्वधातुके यक्" ( पा० सू० ३-१-६७ ) इति यगापत्तिः, तस्य च "सार्वधातुकमपित्" ( पा० सू० १-२-४ ) इति ङित्त्वेन "घेर्ङिति" ( पा० ७-३-१११ ) इति गुणापत्तिश्चेति, तत्सम्बन्धे तु नेत्यर्थः ।

प्रत्ययावयवस्येति । *तेनोज्झितेत्यादौ न दोषः । सर्वे सर्व-पदादेशा इति न्यायेन तु *अविशिष्टस्यान्तविशिष्ट आदेश इत्यर्थः । *अत एवालुवन्निसादावु*पदेशिवद्वचनेनान्तरङ्गत्वादान्तिभावे कृते स्थानिव-त्त्वेन परस्मैपदत्वादितोलोपे एकदेशविकृतन्यायेन झित्वात्प्राप्तो जुस् धा-तोरित्यधिकारान्नेति भाष्ये स्पष्टम् । "झेर्जुस्" (पा० सू० ३-४-१०८) इत्यत्र *प्रक्रियालाघवाय विशिष्ट एव स्थानित्वं बोद्धव्यम् । भवन्तीति ।

---

से तसादावपि गुणो न प्राप्नोतीति "सार्वधातुकमपित्" ( पा० सू० १-२-४ ) इति व्यर्थमिति वाच्यम् । उष्ट इत्यादौ सम्प्रसारणार्थन्तस्यावश्यकत्वादिति चे-न्न । साहचर्य्यपरिभाषाया अनित्यत्वस्य ज्ञापनार्थतया सार्वधातुकग्रहणस्याव-श्यकत्वात् । एतदभिप्रायेणैव "ह्रिस्त्रिश्चतुः" ( पा० सू० ८-३-४३ ) इतिसूत्रे सुच इति सूत्रयितुमुचितमित्युक्तम् । अन्यथा सार्वधातुकग्रहणाभावे तत्परि-भाषाया अनित्यत्वज्ञापकतया ह्रिस्त्रिश्चतुरिति न्यासस्यावश्यकत्वेन सुच इत्येव सूत्रयितुमुचितमित्यभिधानमसङ्गतं स्यात् ।

अत्र केचित्-"सङि धातोः" इत्येव सूत्रमस्तु । सङीति सनः सका-रमारभ्य महिङो ङकारेण प्रत्याहारः । धातोरिति तु शब्दव्यापारार्थम् । तेन का-म्यचि न दोषः, इत्याहुः । वस्तुतस्तु सञ्ज्ञाद्वयोपादानमुभयत्र समानम् । स-ङ्पदस्यानुपयुक्तस्योपादाने तच्छक्तिग्रहणस्यैव वाक्यार्थबोधमात्रफलक-त्वकल्पने ज्ञानगौरवमिति यथाश्रुतसूत्रस्यैव ज्यायस्त्वमिति ।

झोऽन्तः ( पा० सू० ७-१-३ ) । "आयनेयी" ( पा० सू० ७-१-२ ) इति सूत्रात्प्रत्ययग्रहणमात्रमनुवर्त्तते न त्वादिग्रहणम् । तेन 'शयान्तै' इत्यत्र शीङो झस्य "लेटोऽडाटौ" ( पा० सू० ३-४-९४ ) इत्याट्यपि झस्यान्तादेशसिद्धिः । तत्र प्रत्ययपदं षष्ठ्यन्तमनुवर्तते, षष्ठ्यर्थश्चावयवत्वन्तेन वर्णमात्रस्य स्थानित्वे-ऽपि 'शयान्तै' इत्यत्राऽटि कृतेऽपि झकारमात्रस्यान्तादेशसिद्धिः । प्रत्ययपदा-नुवृत्तेः फलमाह-*तेनेति । *अविशिष्टस्य । प्रत्ययत्वपर्य्याप्त्यधिकरणस्येति शेषः । अयं चादेशो यादृशस्वरान्तः स्थानी तादृशस्वरान्त एव । तेन भवन्ती-त्यत्रेकारान्तत्वमेवेति नियमसिद्धिः । अतश्चौतम्थान्यादेशभावकल्पनायाः पु-रः स्फूर्तिकत्वात् तस्मिन्पक्षे झोऽन्त इत्यत्र स्थान्यादेशयोरकारस्योच्चारणार्थ-कतया तान्तादेशेन झकारमात्रस्य निवृत्तावपि पूर्वकालस्थितस्य स्वरस्यैव श्रवणम्भवति । सम्प्रत्यपि तथैवेति रूपभेदो न । आनुमानिकादेशकल्पनायां भाष्यमप्युपपद्यत इत्याह-*अत एवेति । *उपदेशिवद्वचनेनेति । "आयन्नादिपू-पदेशिवद्वचनं स्वरसिद्ध्यर्थम्" इत्युक्तेः । खप्रत्ययादौ न प्रत्ययसञ्ज्ञासंनियो-गशिष्टमाद्युदात्तत्वं, किन्त्वीनादेशे कृते एवेति स्वरस्याद्युदात्तत्वेनेकारस्य त-त्सिद्धिरित्यर्थः । *प्रक्रियालाघवायेति । अन्यथा तत्रापि झकारमात्रस्य जुसा-देशे कृतेऽपीकारस्य निवृत्त्यर्थम् "इतश्च" ( पा० सू० ३-४-१०० ) इतिसूत्रस्या-

अत्र *शवकारान्त्यकारयोः पररूपे कृते "अचः परस्मिन्" ( पा० सू० १-१-५७ ) इति स्थानिवत्त्वाद् गुणः । *वार्णादाङ्गमिति तु समानस्थानिकत्वे एवेति बोद्धव्यम् ।

अतो दीर्घो (पा० सू० ७-३-१०१) ॥ यञि किम् ?। भवतः । एहि मन्ये इति ॥ ओदनं भोक्ष्य इति त्वं मन्यसे इत्यर्थः । एवमग्रेऽपि

---

पि प्रवृत्तिः कल्प्येति गौरवम् । अत एव झेरितिसमुदायबोधनमपि साधु सङ्गच्छते । भवन्तीत्यत्र "क्ङिति" (पा० सू० १-१-५)इति निषेधाभावायाह-*अत्र शवकारस्येति । ननु वार्णादाङ्गमिति न्यायादेकादेशात्पूर्वमेव गुणोऽस्त्वित्यत आह-*वार्णादाङ्गमिति ।

अतो दीर्घो (पा० सू० ७-३-१०१) । सार्वधातुके इति किम् ?। अङ्गना, केशवः इति । अङ्गशब्दात्पामादित्वान्नः, केशशब्दात् "केशाद्वः"(पा० सू० ५-२-१००)इति वप्रत्ययः । न च "शृङ्गवृन्दाभ्यामारकन्"(का०वा०)"हृदयाचालुरन्यतरस्याम्"(का०वा० इत्यनयोराकारोच्चारणन्तद्धिते दीर्घाप्रवृत्तौ ज्ञापकं भविष्यतीति वाच्यम् । आकारोच्चारणेन तद्धिते परे दीर्घाप्रवृत्तिकल्पनापेक्षया क्लृप्तस्य सार्वधातुकपदस्य सम्बन्धकल्पन एव ज्ञापकं भविष्यतीत्याशयात् । ननु "सुपि च" ( पा० सू० ७-३-१०२ ) इति सूत्रमस्मिन्सूत्रे सार्वधातुकपदानुवृत्त्यभावे नियमार्थम्भविष्यति, अधातुप्रत्यये यदि दीर्घस्तर्हि सुप्येवेति, तेनोक्तस्थले दीर्घाभावे सिद्धे "तुरुस्तुशम्यमः" ( पा० सू० ७-३-९५ ) इति सूत्रात्सार्वधातुकपदानुवृत्तिर्व्यर्थेति चेन्न । "सुपि च" ( पा० सू० ७-३-१०२ ) इतिसूत्राभावे यज्वभ्यां युवभ्यामित्यादौ "अतो दीर्घो यञि" ( पा० सू० ७-३-१०१ ) इति दीर्घापत्तेः । यञादित्वमात्रस्य निमित्ततावच्छेदकतया तस्य सुप्त्वव्याप्यत्वाभावेन सुप्त्वतद्व्याप्यधर्मावच्छिन्ननिमित्तककार्याप्राप्त्या "नलोपस्सुप्" ( पा० सू० ८-२-२ ) इति सूत्राप्रवृत्तेः । "अत आत्"इति सिद्धे दीर्घपदं दीर्घ एव यथा स्यादित्येवमर्थम् । तेन पचामीत्यादावन्त्यस्येति प्लुतो न । यत्तु आदिति कृतेऽपि तपरकरणसामर्थ्यात्प्लुताभावस्सिद्ध एवेति, तन्न । करिष्यामीत्यत्रोदात्तस्य स्यशब्दस्यान्तरतम्यात्प्राप्तस्याप्युदात्तत्वस्य बाधापत्तेः । न च तपरकरणेनातत्कालव्यावृत्तिरेव क्रियत इति वाच्यम् । "तपरस्तत्कालस्य" ( पा० सू० १-१-७० ) इति सूत्रस्य नियामकत्वन्तत्राण्ग्रहणानुवृत्त्या वाच्यम् । एवं चाऽऽकारस्यानण्त्वात्तच्छास्त्रेणातत्कालव्यावृत्तेः कर्तुमशक्यतया तपरत्वसामर्थ्यादेव सा वाच्या । एवं सति विजातीयस्यादेशस्य व्यावृत्तौ "सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्यः" इति परिभाषाबलाद्धातुस्वरस्य शेषे तदेकवाक्यतापन्नरोषनिघातो न स्यादिति । यत्तु प्रकृतसूत्रे आआइत्याकारान्तरप्रश्लेषेण प्लुतस्य वारणं स्वरस्य च सिद्धिरित्याहुस्तन्न । आकारान्तरस्य प्रश्लेषे पदे गौरवापत्तेस्तदपेक्षया दीर्घग्रहणमेव युक्तमिति । एहि मन्य इति वाक्यद्वयघटक-

बोद्धव्यम् । सत्यप्योदने *परिहासशीलश्यालकादेर्वाक्यमेतत् । अत्र मननापेक्षया भोजनस्य भविष्यत्कालतैव, मननस्य तु वर्त्तमानतैव परिहासपोषायैवेहीत्याकारणम् । श्यना निर्देशादिह न—एहि मनुषे रथेन यास्यामीति । अत्र पुरुषव्यत्ययस्य प्रहासव्यञ्जकत्वम् ।

परोक्षे लिट् ( पा० सू० ३-२-११५ ) ॥ परोक्षत्वञ्च साक्षात्कृतमि*त्येतादृशविषयताशालिज्ञानाविषयत्वम् । भूते इति "अनद्यतने लङ्" ( पा० सू० ३-२-१११ ) इत्यतोऽनद्यतने इति चानुवर्त्तते । तत्र भूतादीनां साक्षाद्धातुविशेषणत्वासम्भवाद्धात्वर्थविशेषणतेत्याह—भूतेत्यादि । भूतत्वं=*वर्तमानध्वंसप्रतियोगिसमयवृत्तित्वम् । अतीतरात्रेरन्त्ययामेनागामिन्याः पूर्वयामेन च सहितः कालः=अद्यतनः,तद्भिन्नः=अनद्यतनः ॥

लिट् च ( पा० सू० ३-४-११५ ) ॥ षष्ठ्याः सौत्रो लुक्, तदाह—लिडादेश इति । एकसञ्ज्ञाधिकारादन्यत्र सत्त्वेन सञ्ज्ञासमावेशः स्यादत आह—एवेति । "लङः शाकटायनस्यैव" ( पा० सू३-४-१११ ) इत्यतो ऽनुवृत्तेरिति भावः ।

परस्मैपदानाम् ( पा० सू० ३-४-८२ ) ॥ *णलः सर्वादेशत्वन्ततः प्राक्(१) णकारस्य लोपाभावेनानेकाल्त्वादिति केचित्, तन्न 'नानुबन्धकृतमनेकाल्त्वम्' इति निषेधात् । अनुबन्धत्वयोग्यकृतमिति तदर्थः । *ध्वनितश्चेदं डारौरस इति सूत्रे "अनेकाल्"(पा० सू० १-१-५५) इति च सूत्रे भाष्ये इति "जसः शी"(पा० सू० ७-१-१७) इत्यत्र निरू-

---

क्रियायामभिन्नकालत्वस्य प्रतीत्यर्थमेहीत्याकारणम् । तत्फलमाह-*परिहासेति । आकारणं कृत्वा एवमुक्तौ परिहासः स्फुटो भवतीति ।

*इत्येतादृशविषयताशालीति । यद्विषयताशालिज्ञानानन्तरं साक्षात्कृतमित्याकारिका ज्ञाननिष्ठविषयताशालिनी विलक्षणा प्रतीतिर्भवति तादृशविषयतानिरूपकं यद् ज्ञानं तद्विषयत्वमित्यर्थः । तच्च ज्ञानमिन्द्रियत्वावच्छिन्नकरणताकं ज्ञानम् । तच्च सन्निकृष्टविषयकमेवेति सन्निकर्षाप्रयोज्यत्वं लब्धमिति, परोक्षत्वं स्फुटमेव । *वर्त्तमानध्वंसेति । शब्दप्रयोगाधिकरणकाले वर्त्तमानध्वंसेत्यर्थः ।

परस्मैपदानाम्(पा०सू० ३-४-८२)। प्राचीनसम्मतं पक्षं दूषयति-*णल

---

(१) ततः=प्राक्=सर्वादेशात् पूर्वं, णलः प्रत्ययत्वाभावेन णकारस्य प्रत्ययावयवत्वाभावात् "चुटू"(पा०सू० १-३-७)इत्यस्याप्रवृत्त्येत्त्वाभावेन इति शेषः ।

पितम् । तस्मात् ण अलिति प्रश्लेषेणानेकाल्त्वेन सर्वादेशत्वसिद्धिः । *प्रश्लेषसामर्थ्यादादेशोत्तरमेकादेशप्रवृत्तिः । एवं डा आ इति प्रश्लेषात् डादेशः सर्वादेशो बोद्धव्यः । लित्त्वं स्वरार्थम्* । *अन्यथा द्विःप्रयोगत्वाद् द्विर्वचनस्य पर्यायेणो*भयोरन्तोदात्तत्वं* स्यादित्यत्रैव भाष्ये स्पष्टम् ।

भुवो वुक् (पा० सू० ६–४–८८) ॥ "अचिश्नु"(पा० सू० ६-४–७७) इत्यतोऽचीत्यनुवर्तते* । नित्यत्वादिति । *कृताकृतप्रसङ्गि-

---

इति । *ध्वनितश्चेदमिति । तत्र हि डा आ इत्याकारप्रश्लेषेण सर्वादेशत्वसम्पादनेन परिभाषास्थमनुबन्धपदमनुबन्धत्वयोग्यपरमित्येतद् ध्वनितमित्यर्थः । अत एव काणोर्विषये "नानुबन्धकृतमसारूप्यम्" इति प्रवर्तते । अन्यथा ककारस्य प्रत्ययत्वज्ञानोत्तरमित्संज्ञाप्रवृत्तेर्विधानकालेऽनुबन्धत्वज्ञानाभावेन विकल्पः स्यात् । ननु ण अलिति प्रश्लेषेऽपि पूर्वम् "अतो गुणे" (पा० सू० ६-१-९७) इति पररूपेऽनुपपत्तिस्तदवस्थैवेत्यत आह-*प्रश्लेषसामर्थ्यादिति । *स्वरार्थम्="लिति" (पा० सू० ६-१-१९३) इत्यनेन प्रत्ययपूर्वस्योदात्तत्वार्थम् । *अन्यथा=णलो लित्त्वाभावे । *उभयोः=द्विरुक्तधात्ववयवयोः । *उदात्तत्वं स्यादिति । णलो लित्त्वाभावे तिप्सिपोः पित्त्वेनानुदात्ततया तयोः स्थाने जायमानयोर्णलथलोरान्तरतम्येनानुदात्ततया "धातोः" (पा० सू० ३-१-१६२) इतिसूत्रेणोभयोरनुदात्तत्वं स्यादित्यर्थः । स चैकदैव लक्ष्यभेदाद्वारद्वयं "धातोः" (पा० सू० ३-१-१६२) इत्यस्य प्रवृत्तौ समावेश एवोदात्तद्वयस्य स्यादिति बोध्यम् । न चेष्टापत्तिः । "अनुदात्तं पदमेकवर्जम्" (पा० सू० ६-१-१५८) इतिपरिभाषैकवाक्यतया युगपदुदात्तद्वयस्य प्रयत्नं विनाऽनिष्टेः, अत एवाह-पर्य्यायेणेति । न च धातुत्वस्य परभागे विश्रान्तेः सिद्धान्ते स्वीकारात्कथं द्वित्वोत्तरमुभयत्र "धातोः" इत्यस्य प्रवृत्तिरिति वाच्यम् । पर्य्यायेणेतिग्रन्थस्य द्वित्वोत्तरं पर्य्यायेणोभयोः स्यादिति न, किन्तु द्वित्वात्पूर्वं परत्वाद्धातोरित्यन्तोदात्तत्वे तस्य द्विर्वचने सत्युदात्तद्वयस्य श्रवणापत्तेरित्यर्थात् । लित्त्वे तु सतिशिष्टत्वात्परस्यैवोदात्तत्वमित्याशयः । पर्य्यायेणेति तु द्वित्वेऽप्युभयोर्धातुत्वमितिवादिरीत्येति ।

भुवो वुक् (पा० सू० ६-४-८८) । *अचीत्यनुवर्तत इति । तेनाभूत् अभूरित्यत्र नातिप्रसङ्ग इति शेषः । न चात्र जातेऽपि वुगागमे वलि लोपेन निर्वाह इति वाच्यम् । अभूतामित्यादौ वुगागमस्य समुदायापेक्षत्वं वकारलोपस्य तु तकारमात्रापेक्षत्वेनान्तरङ्गत्वमिति वलि लोपे कर्त्तव्ये वुकोऽसिद्धत्वेन वलि लोपाप्राप्तेः । किं च प्राचीनोक्तरीत्याऽभूदित्यादावपि बह्वपेक्षत्वेन बहिरङ्गत्वं वुको वक्तुं शक्यमिति तत्र हल्ङ्यादिलोपाप्राप्तिः । वलि लोपे वग्रहणप्रत्याख्यानपक्षे वलि लोपाप्राप्तेश्च । ननु शब्दान्तरस्य प्राप्त्या वुगागमोऽप्यनित्य इत्यत आह-*कृताकृतेति । ननु "ओःसुपि" (पा० सू० ६-४-८३) इत्यत ओरित्यस्य

त्वमात्रेण क्वचिन्नित्यताभ्युपगमादिति भावः । *"ओः सुपि"(पा० सू० ६-४-८३) इत्यत ओरिति तु नात्रानुवर्त्तते *फलाभावाद्*स्वरितत्वाचेत्यपि बोद्धयम् ।

अधिकृतस्येति । *व्याख्यानादस्याधिकारत्वमेवेति भावः ।

---

सम्बन्धेन कृताकृतप्रसङ्गित्वमत आह-*ओः सुपीति । *फलाभावादिति । भाष्यकारादिसंप्रतिपन्नस्य लक्ष्यस्याभावादित्यर्थः । एतेन वुकोऽनित्यत्वसम्पादनेन गुणवृद्धिघटितलक्ष्यसिद्धिरेव फलमित्यपास्तम् । *अस्वरितत्वाच्चेति । नन्विदं "हुश्नुवोः" ( पा० सू० ६-४-८७ ) इतिसूत्रव्याख्यानावसरे "एरनेकाचः" ( पा० सू० ६-४-८२ ) इत्यतोऽसंयोगपूर्वस्येत्यनुवृत्तम् "ओःसुपि" ( पा० सू० ६-४-८३ ) इत्यतोऽनुवृत्तस्यौरित्यस्य विशेषणं न तु प्रत्ययस्य, तेन 'आप्नुवन्ति'इत्यत्र यण् नेति वक्ष्यमाणग्रन्थेन विरुद्धम् । तथा "हुश्नुवोः" ( पा० सू० ६-४-८७ ) इति सूत्रभाष्येऽपि हुश्नुग्रहणखण्डनावसरे धियन्ति पियन्तीत्यत्र प्राप्नोतीत्याशङ्क्य ओरिति वर्त्तत इत्युक्तम् । तेनैतद्विरुध्यत इति चेन्न । आप्नुवन्तीत्यस्य ओरित्येतद्व्यावर्त्यत्वप्रदर्शनपरवक्ष्यमाणग्रन्थस्य यथाश्रुताभिप्रायकत्वात् । यदि तु "हुश्नुवोः" ( पा० सू० ६-४-८७ ) इतिसूत्रे षष्ठीनिर्दिष्टेनोपस्थितस्यान्त्यस्येत्यस्यासंयोगपूर्वस्येति विशेषणं तदा तत्राप्योरित्यस्य न प्रयोजनम् । भाष्यग्रन्थविरोधोऽपि न । भाष्यकृता हि "एवमपि सुवन्ति रुवन्तीत्यत्र प्राप्नोति । अनेकाजिति वर्त्तते । एवमप्ययुवन्नरुवन्नित्यत्रापि प्राप्नोति । एतदप्यटोऽसिद्धत्वादेकाज् भवति । एवमप्यूर्णुवन्तीत्यत्रापि प्राप्नोति । असंयोगपूर्वस्येत्यनुवर्त्तते । यङ्लुगर्थन्तर्हि हुश्नुग्रहणं कर्त्तव्यम् । यङ्लुगन्तमनेकाजसंयोगपूर्वमुवर्णान्तमस्ति तदर्थम्"-इत्युक्तम् । ततोऽग्रे "छन्दस्युभयथा" ( पा० सू० ३-४-११७ ) इत्यनेनार्द्धधातुकत्वमुक्त्वा "एवं तर्हि सिद्धे सति यद्धुश्नुग्रहणं करोति तज्ज्ञापयत्याचार्य्यो भाषायामपि यङ्लुक् भवतीति । किमेतस्य ज्ञापने प्रयोजनम् ? । बेभिदीति चेच्छिदीतीत्येतत्सिद्धम्भवति" एवमुक्तम् । एतेन प्रघट्टकेन यङ्लुङ्निवृत्त्यर्थं हुश्नुग्रहणस्यावश्यकत्वमुक्तम् । तेनाकस्येत्याऽङ्गस्येति षष्ठीनिर्देशेनोपस्थितस्यासंयोगपूर्वग्रहणस्य सम्बन्धो ध्वनितः । ओरित्यस्यानुवृत्तिश्च ध्वनिता । किं च वुको नित्यत्वम् "इन्धिभवतिभ्यां च"( पा० सू० १-२-६ ) इतिसूत्रे भवतिग्रहणप्रत्याख्यानावसरे इन्धेश्छन्दोविषयत्वाद् भुवो वुको नित्यत्वात्ताभ्यां लिटः किद्वचनानर्थक्यम् । न ह्यन्तरेण छन्द इन्धेरनन्तरो लिङ् लभ्यः आमा भाषायां भवितव्यम् । भुवो वुको नित्यत्वाद्भवतेरपि नित्यो. वुक् कृतेऽपि प्राप्नोत्यकृतेऽपि ताभ्यां लिटः किद्वचनानर्थक्यमित्युक्तम् । एतेन भाष्यप्रघट्टकेन ओरित्यस्यास्वरितत्वं स्पष्टमेव लभ्यत इति । *व्याख्यानादिति । एकाजित्यस्य विधायकत्वासम्भवमूलकाद्व्याख्यानादित्यर्थः । तथा हि नायं विधिः "लिटि" ( पा० सू० ६-१-८ ) इत्यादिसूत्रेषु विधेयनिर्देशना-

एकाजिति तद्गुणसंविज्ञानबहुव्रीहिणा प्रथमविशेषणम् । *अत एव जागर्त्यादौ द्वित्वं, तदाह—धात्ववयवत्वस्येत्यादि । पचादौ इण्धातौ च प्रथमत्वैकाच्त्वधात्ववयवत्वानि *व्यपदेशिवद्भावेन बोद्धयानि । अजादेरिति *कर्मधारयस्तदाह—आदिभूतादिति । एवञ्च द्वितीयस्येति न कार्यमिति बोद्धयम् । अत्र एकाच इत्यादेः *कारकषष्ठीत्वाद् द्विःप्रयोगपक्ष एव । *अत एवाऽऽटिटदित्यादौ णिलोपसिद्धिः, स्पष्टञ्च "आदेशप्रत्यययोः"(पा०सू० ८-३-५९)इति सूत्रेऽस्य *द्विःप्रयोगत्वमुक्तं भाष्ये । अत्रोत्तरखण्डस्यैवा-र्थवत्त्वम्, अभ्यासोऽनर्थक एव । *ध्वनितश्चेदं "दयतेः"(पा०सू०७-४-९-) इति सूत्रे भाष्ये । न च अत्र पक्षे सिषेवेत्यादौ "सात्पदाद्योः"(पा० सू० ८-३-१११) इति षत्वनिषेधापत्तिः । सिचेरत्र तिङ्विहित इति द्वितीयोच्चारणविशिष्टस्य पदत्वात्पदादित्वस्योत्तरखण्डाद्यसकारे सत्त्वा-दिति वाच्यम् । "तावेव सुप्तिङौ यौ ततः परौ, सैव च प्रकृतिराद्या,

---

नन्वयप्रसङ्गात् । नापि "शेषे" ( पा० सू० ४-२-९२ ) इतिसूत्रवदुभयरूपता । लिटीत्यादेर्नियामकत्वकल्पनापेक्षयाऽस्याधिकारत्वकल्पनया विधित्वस्योचित-त्वादिति । *अत एव=प्रथमविशेषणत्वादेव । यदि धातोर्विशेषणमेतद्भवेत्तदा जागर्त्तेरनेकाच्त्वाद् द्वित्वं न स्यात् । *व्यपदेशिवद्भावेनेति । एकस्मिन्नारोपि-तानेकावस्थारूपत्वस्य च कल्पनेन सूत्रस्य प्रवृत्तिः । *कर्मधारय इति । विशेषणस्याप्यादिशब्दस्य राजदन्तादित्वादनित्यत्वात्पूर्वनिपातप्रकरणस्य वा परनिपातः । स च कर्मधारयः परिनिष्ठितविभक्त्या समास इतिपक्षे पञ्चम्यन्तयोर्बोध्यः । अत एव "न न्द्राः" ( पा० सू० ६-१-३ ) इति सूत्रेऽचः परादित्यर्थस्योपपत्तिः । तेनेन्द्रीयियिषतीत्यत्र दकारस्य द्विर्वचनसिद्धिः । द्वे इत्यत्र द्विशब्दस्य संख्येयबोधकतयोच्चारणरूपं तत्कल्प्यम् । तत्र साधक-माह-*अत्रेति । *कारकषष्ठीत्वात्=उच्चारणक्रियापेक्षया कर्म्मषष्ठीत्वस्योचि-तत्वादिति भावः । *अत एव=द्विःप्रयोगस्वीकारादेव । यदि स्थाने-द्विर्वचनं स्यात्तदा टि इत्यस्य स्थाने टिटि इत्यादेशो वस्नसादेशस्थल इव प्रकृतिप्रत्ययविभागसंमोहेन णिलोपो न स्यादिति भावः । *अस्य= षाष्ठद्वित्वस्य । उत्तरखण्डस्यैवेत्येवकारेण पूर्वखण्डस्य समुदायस्य च व्यवच्छेदः, तदाह-*ध्वनितमिति । तत्र ह्यार्द्धधातुक इत्यस्य परसप्तमी-त्वेऽस्तेर्लिटि परत्वाद् भूभावात्पूर्वं द्वित्वे कृते परस्य खण्डस्य भूभावे पूर्व-स्य श्रवणं प्राप्नोतीत्युक्त्वाऽऽर्द्धधातुक इत्यस्य विषयसप्तमीत्वमाश्रित्य दोषः परिहृ-तः । यदि पूर्वखण्डस्य समुदायस्य वाऽर्थवत्त्वं स्यात्तदा उत्तरखण्डस्यानर्थक्या-त्परखण्डस्य भूभावे कृत इत्यसम्बद्धं स्यात्तेनोत्तरखण्डस्यार्थवत्त्वं ध्वनितमि-त्यर्थः । नापि प्रत्येकमर्थवत्त्वम् । बोधावृत्त्यापत्तेः । *अत्र पक्षे=द्विः प्रयोगपक्षे ।

आदिग्रहणश्च कृतं, समुदायपदत्वमेतेन" इति भाष्येण समाधानात् । यौ ततो विधानावधेः परौ तावेवेमौ सुप्तिङौ, यतो विहितौ सा प्रकृतिराद्यैव । "आगन्तूनामन्ते निवेशः" इति न्यायात् द्वितीयोच्चारणस्यैव विधेयत्वात् । आद्या=आद्योच्चारणविषया । ननु द्वितीयोच्चारणेन व्यवधानमत आदिग्रहणमिति । यस्मात्प्रत्ययविधिस्तदादीत्यस्यात्रानुवर्त्तनात् । समुदायपदत्वमिति । उच्चारणद्वयविषयत्वेन समुदायव्यवहार इति तदर्थः । *कृते तु द्वित्वे द्वितीयोच्चारणेनैवार्थबोधादभ्यासस्य नैरर्थक्यव्यवहारोऽपि । यत्तु द्वित्वे लिटीत्यस्य विषयसप्तमीत्वमाश्रित्य पूर्वं द्वित्वे ततः समुदायाल्लिटि ततस्तिङि यस्मात्तिङ्विधिस्तदादितिङन्तस्य समुदायस्यैव पदत्वम् । *समुदायोऽपि द्विःप्रयोगत्वाद् द्वित्वस्य धातुबुद्धिविषय इति पक्षान्तरमुक्तम्, तत्त्वेकदेशयुक्तिः । गणपठितत्वाभावेन क्रियावाचकत्वाभावेन च तस्य धातुत्वोपपत्त्यभावात् । *अत एव "दयतेः"( पा० सू० ७-४-९) इति सूत्रे असति द्वित्वे परस्य भूभावे रूपासिद्धिमाशङ्क्यार्द्धधातुके इत्यस्य विषयसप्तमीत्वेन परिहृतम् । *इदं प्रथमद्विर्वचनापवादः । *अजादेर्धातोर्द्वितीयाभावे प्रथमवाक्येनैव प्रथमस्य द्वित्वमिति भाष्ये स्पष्टम् । व्यपदेशिव-

---

द्वितीयभागावधिकसमुदायस्य तिङन्तत्वमुपपादयति-*तत्रेति । तावेवेति दृष्टान्तार्थम् । सुब्ग्रहणं च पदसंज्ञासूत्रेऽस्तीति प्रसङ्गादुच्चरितत्वस्य प्रकृते उपयोगः । यथा तावेव सुप्तिङौ तथा यस्मात्तिङ् विहितः सा प्रकृतिराद्यैवेत्यर्थः । ननु यद्याद्योच्चारणविषयभूता प्रकृतिस्सैव तर्हि तस्यानर्थकत्वाभावात् "नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे" इत्यस्यासङ्गतिरत आह-*कृते त्विति । अभ्यासस्य नैरर्थक्यव्यवहारे द्वितीयस्योच्चार्य्यमाणस्य ज्ञानम्प्रतिबन्धकमित्येवङ्कल्पनयोपपत्तिः कार्य्या । न चात्र सर्वथा वाचकतासम्बन्धावच्छिन्नप्रतियोगिताकोऽर्थाभावस्सम्भवति । शब्दार्थयोस्सम्बन्धस्यानित्यत्वापत्तेः । ननु यदि प्रथमं द्वित्वं तदा समुदायात् कथं लिट् अधातुत्वादत आह—*समुदायोऽपीति । *अत एव=समुदायस्य क्रियावाचकत्वाभावादेव । ननु 'ऊर्णुनविषति' इत्यत्र द्वितीयस्यैकाचो द्वित्वे कृते प्रथमैकाचोऽपि द्वित्वं कुतो नेत्यत आह-*इदम्प्रथमद्विर्वचनापवाद इति । तक्रकौण्डिन्यन्यायादिति शेषः । यत्र प्रथमस्य द्वितीयस्यैकाचस्सम्भवस्तत्रेदं शास्त्रं प्रवर्त्तते । यत्र तु नैवं, यथा इयायेत्यादौ, तत्र पूर्वेणैव द्वित्वमित्याह--*अजादेर्धातोरिति । ननु लिटि परे द्विर्वचनविधानाल्लिट्परत्वस्य च धातावेव सम्भवात्प्रकृतसूत्रे धातुग्रहणं किमर्थमित्यभिप्रायेण प्रश्नो धातोरिति किम् ?, जजागारेति । प्रथमस्यैकाचो जागित्यस्य लिट्परत्वाभावाद्द्विर्वचनं न स्यादिति भावः । अन-

द्भावेन तु न द्वितीयत्वं प्रथमस्येत्युक्तोभयसत्त्वाऽयामित्वाजादेरित्यस्य प्रवृत्तेः। धातोरिति किम् ?, तद्भावे लिटीत्यादिप्रथमैकाच एव विशेषणं स्यात् । एवञ्च पपाचेत्यादावेव स्यान्न तु जजागारेत्यादौ । "अनभ्यासग्रहणमनर्थकं छन्दसि वा वचनात्" इति भाष्यम् । *यङन्तात्सनि सन्नन्तात् णिचि चङि वा लोके प्रयोगा अनाभिधानादसाधव एवेति *तदाशयः। *"स्तौतिण्योः" (पा० सू० ८-३-६१)इति सूत्रभाष्योदाहृतं सोषुपिषते इति तु छान्दसमेव । जुगुप्सिषते इत्यादौ 'लक्ष्यलक्षणस्य'इति न्यायेन निर्वाह इति बोद्धव्यम् ।

'द्वे'इत्यनुवृत्तं षष्ठ्या विपरिणम्यते तदाह—तयोरिति ।

हलादिः शेषः (पा० सू० ७-४-६०) । "अत्र लोपोऽभ्यासस्य" (पा० सू० ७-४-५८)इत्यतोऽभ्यासस्येत्यनुवर्त्तते । यद्यपि अभ्यासस्यादिर्हल् शिष्यत इति वाक्ये आदिहल्वत एव ग्रहणात् अभ्यासस्या शेषग्रहणसामर्थ्यलभ्याभ्यासस्यान्ये हलो लुप्यन्त इति वाक्ये *तादृशस्यैवाभ्यासस्य ग्रहणं प्राप्नोति तथापि *लक्ष्यानुसारा*द्व्याप्तिन्यायाश्रयेणाभ्यास-

---

भ्यासग्रहणस्य प्रयोजनमादौ उक्तमनभ्यासस्येति किमर्थम् ? । कृण्णो नोनाव वृषभो, यदीदं नोनूयतेर्नोनावेति । अत्र यङन्तस्य प्रत्ययान्तत्वेपि 'अमन्त्रे' इति प्रतिषेधादामोऽभावेन लिट् । यङो लुक् यङन्ताद्द्वित्वे कृतेऽपि लिण्निमित्तकं द्वित्वं स्यात् । तदुत्तरमुक्तम् । अभ्यासप्रतिषेधानर्थक्यं छन्दसि वावचनात्। अवश्यं छन्दसि वा द्वे स्त इति वक्तव्यम् । किम्प्रयोजनम्?। प्रयोजनमादित्यान् याचिषामहे । देवता नो दाति प्रियाणि । मघा दात्विति । छन्दसि द्विर्वचनस्य वैकल्पिकत्वेन यङन्तत्वात् कृते द्विर्वचने"लिटि धातोः"(पा० सू० ६-१-८) इति प्राप्तमपि द्विर्वचनं न भविष्यतीत्यभ्यासप्रतिषेधोऽनर्थक इति भावः । ननूत्तरार्थन्तदावश्यकम् । लौकिकेऽपि प्रयोगे तत्प्रयोजनसम्भवादित्याशयेनाह—*यङन्तात्सनीति । *तदाशयः=भाष्याशयः । ननु सुषुविषत इति प्रयोगः "स्तौतिण्योः" ( पा० सू० ८-३-६१ ) इति सूत्रे दृश्यत एवेत्यत आह—*स्तौतिण्योरिति । यत्त्वत्र कैयटेनोक्तम्—"चङीत्येतदर्थस्तु कर्त्तव्यो यदा सन् यङन्तात् णिचि कृते चङ् भवति-अजुगुप्सत्, अलोलुपदिति; तदा द्विर्वचनं माभूत" इति । तस्यायमाशयः—यस्मिन् सूत्रेऽनभ्यासस्येत्युक्तं तस्मिन् प्रयोजनाभावपरभाष्यमिति । तत्रेदं वक्तव्यम् । "अभ्यासप्रतिषेधानर्थक्यं छन्दसि वावचनात्" इति भाष्यवार्त्तिकस्वारस्येन येषु प्रयोगेषु सार्थक्यसम्भावना तेषामनभिधानमेव । भाष्यवार्त्तिकयोस्संकोचेन व्याख्याने प्रमाणाभावात् । अत एव भाष्यकृता विशिष्य सूत्रान्तरेऽपि प्रयोजनं नोक्तमिति । *तादृशस्यैव=आदिहल्वत एव । *लक्ष्यानुसारात्=आट, आटतुरित्यादिलक्ष्यानुसारात् । *व्याप्ति-

मात्रग्रहणं बोध्यम् । यद्वा संहितापाठेऽहलादिः शेष इति च्छेदः । अभ्यासस्याहल्=हलभावो भवति, यत्रादिः स तत्र शिष्यते इत्यर्थान्न दोषः । आदेर्हलः *शेषोक्तेः प्रत्यासत्त्याऽन्यस्य हल एव लोप इतरनिवृत्तिपूर्वकावस्थाने शेषशब्दस्य वृत्तेरित्याशयेनाह—अन्ये हल इति ।

ह्रस्वः (पा०सू०७-४-५९)। यद्यपि "भवतेरः"(पा० सू०७-४-७३) इत्येव सिद्धेरस्य प्रकृते नोपयोगस्तथापि पर्जन्यवच्छास्त्रप्रवृत्त्यभ्युपगमेनेदमत्रोक्तम् । अत्राभ्यासस्येत्यनुवर्त्तते । अच इति चोपस्थितं, तच्च व्यधिकरणमभ्यासावयवस्याच इत्यर्थः । *अत एव छो इत्यस्यात्वे लिटि छाशब्दस्य द्वित्वेऽन्तरङ्गत्वात्तुकि अनजन्तस्यापि ह्रस्वसिद्धिः । ह्रस्वो ह्याङ्गत्वाद् बहिरङ्गः । *एतेन तुगपेक्षया परत्वाद्ध्रस्व इत्यपास्तम् । स्पष्टञ्चेदं "दीर्घोऽकितः"(पा० सू० ७-४-८३) इत्यत्र भाष्ये । एवम् "उरत्"(पा० सू० ७-४-६६)"सन्यतः"(पा० सू० ७-४-७९)इत्यनयोरपि बोध्यम् । *वार्णादाङ्गमिति तु उभयोरादेशत्वे एवेति तद्भावः ।

भवतेरः (पा० सू० ७-४-७३)। प्रयोगे दृष्टानां *भुवामनुकरणात् श्तिप् । *अत एवास्तेर्भूभावेऽपि बभूवेत्येव । *तस्यार्धधातुक एव विधानेन लुग्विकरणत्वाभावान्न लुग्विकरणेति परिभाषाप्रवृत्तिः । उभयानुकरणेनादादिमात्रत्वाभावान्न शपो लुक् । प्रकृतिवदनुकरणमित्यस्या *नि-

---

ति । व्यापनं=व्याप्तिः । तच्च लक्षणस्यानेकलक्ष्येषु प्रवृत्तिरूपम् । अचोऽनिवृत्तये आह—*शेषोक्तेरिति । *अत एव=वैयधिकरण्येनान्वयादेव । *एतेन=तुकोऽन्तरङ्गत्वोपपादनेन । *इत्यनयोरपीति । वैयधिकरण्येन सम्बन्धाभिप्रायेणैवाभ्यासऋवर्णस्य व्याख्यानं मूलकालीयं सङ्गच्छते । ननु "वार्णादाङ्गम्" इतिन्यायेन पूर्वं ह्रस्व एव भविष्यतीत्यत आह—*वार्णादाङ्गमिति । *आदेशत्वे एवेति । ज्ञापकसाजात्यादेवमेवेति बोध्यम् ।

भवतेरः ( पा० सू० ७-४-७३ ) । *भुवामिति भूशब्दानामित्यर्थः । *अत एव=प्रयोगस्थभूशब्दानुकरणादेव । अनुकरणस्यानुकार्य्योपस्थापकत्वमनुकार्यत्वं चोभयोरपि भूशब्दयोरिति भावः । नन्वस्तेर्लुग्विकरणत्वात्तदादेशस्य लुग्विकरणपरिभाषया ग्रहणं न भविष्यतीत्यत आह—*तस्यार्द्धधातुकेति । लुग्विकरणत्वं च लुक्प्रतियोगिविकरणप्रकृतित्वं, तच्चास्य न सम्भवतीत्यत आह—*लुग्विकरणत्वाभावादिति । स्थानिवत्त्वेनैतदलभ्यशास्त्रीयत्वात् । किं च यस्मिन्नार्द्धधातुके भूभावस्तत्प्रयोगघटकस्यास्तेर्भिन्नत्वात्तत्र विकरणेनैव प्राप्नोतीति न लुग्विकरणपरिभाषाया अवसर इति । नन्वनुकरणादपि परस्य शपः प्रकृतिव-

त्यत्वेनादादित्वानतिदेशाच्च । "व्यथो लिटि"(पा० सू० ७-४-६८) इत्यतो लिटीत्यनुवर्त्तते इत्याह—लिटीति ।

असिद्धवद (पा० सू० ६-४-२२) । इदं सूत्रमनित्यम् । "श्नसोरल्लोपः"(पा० सू० ६-४-१११) इति सूत्रस्थतपरकरणात् । तथाहि—अस् तामिति स्थिते "जनसन"(पा० सू० ६-४-४२)इति सूत्र*भाष्योक्तरीत्याऽऽभीयेषु विप्रतिषेधसत्त्वेन परत्वाल्लोपे *तस्याभीयत्वेनासिद्धत्वात्पुनःप्रसङ्गविज्ञानेनाऽऽटि *लक्ष्यभेदात् "लक्ष्ये लक्षणस्य"इति न्यायाप्राप्तौ प्राप्तस्याटो लोपस्य वारणाय तत्र तपरकरणं, *तच्चाटोऽसिद्धत्वे व्यर्थं सत्तदनित्यत्वज्ञापकमिति बोद्ध्यम् । इदञ्च "अत एक"( पा० सू० ६-४-१२०) इति सूत्रे भाष्ये स्पष्टम् । तेन दम्भेर्देभतुरिति सिद्धम्* । उपक्रमीति । णल्यपि वृद्ध्यपेक्षया नित्यत्वाद् वुकि वृद्धेराभीयत्वाभावेन

---

दित्यतिदेशात् लुक् कुनो नेत्यत आह—*प्रकृतीति । नित्यस्य ह्यावश्यकप्रवृत्तिकत्वमनित्यस्य तु लक्ष्यानुसारिप्रवृत्त्याप्रवृत्तिकत्वमिति भावः अत्रेदम्बोध्यम् । "उपसर्गात्सुनोति" (पा० सू० ८-३-६५) इत्यादिनिर्देशात् "लोपः पिबतेः" (पा० सू० ७-४-४ इति निर्देशाच्च श्तिप्प्रत्ययस्य कर्तृवाचकत्वाभावेऽपि विकरणस्य प्रवृत्तिः । कर्तृवाचकत्वाभावादेव भावकर्मणोरपि प्रवृत्तिः । यत्त्वत्र मनोरमायामुक्तम्-'श्तिपः शित्त्वसामर्थ्यादकर्त्रर्थकत्वेऽपि विकरण 'इति, तदपरे न क्षमन्ते । शित्त्वस्यार्द्धधातुकत्वव्यावर्त्तकतया चारितार्थ्यसम्भवात् । तेन सुनोतीत्यादाविङभावः सिध्यति । यदि तु "तितुत्रतथ"इतिनिषेधस्तर्हि ब्रवीतीत्यत्र सार्वधातुकस्य हलादेः पितो "ब्रुव ईट्"(पा० सू० ७-३-९३) इति सूत्रेण विधीयमान ईट् न स्यात् । किं च "ध्यायतेस्सम्प्रसारणं च" इत्यत्र शकारसत्त्वेऽशिति जायमानमात्वं न भवति, सम्प्रति तु स्यादिति । तस्मात्तत्र शकारोच्चारणसामर्थ्यादकर्तृवाचिन्यपि श्तिपि शबादय इति ।

असिद्धवदत्राभात् (पा० सू० ६-४-२२) । व्याख्यातमेतत् । *भाष्योक्तरीत्येति । तत्र हि सातः सातवानित्यत्रात्वानुनासिकलोपयोः प्राप्तौ विप्रतिषेधादात्वमित्युक्त्वाऽऽभीयत्वेनासिद्धत्वाद्विप्रतिषेधानुपपत्तिमाशङ्क्य "घुमास्था"(पा० सू० ६-४-६६) इति सूत्रस्थं हल्ग्रहणं ज्ञापकम्भविष्यतीह विप्रतिषेध इति"इत्युक्तम् । विप्रतिषेधेन व्यवस्थायामसिद्धत्वं न भवतीत्यर्थः । हल्ग्रहणं हि 'गोदः' 'कम्बलदः' आलोपात्परत्वादीत्ववारणाय कृतम् । यदि परत्वेन व्यवस्थायामप्यसिद्धत्वं स्यात्तदा जातेऽपि परत्वादीत्वे तस्यासिद्धत्वादात्वबुद्ध्या तल्लोपेनेष्टसिद्धौ हल्ग्रहणं व्यर्थमेव स्यादितिरीत्येत्यर्थः ॥ *तस्य=अल्लोपस्य । *लक्ष्यभेदात्=पूर्वमस्तेरकारस्य जातः सम्प्रति त्वाकारस्य प्राप्तिरतो लक्ष्यभेदात् । *तच्च=तपरत्वं हि । *देभतुरिति सिद्धमिति । अत्र हि "श्रन्थिग्रन्थिदम्भिस्वञ्जी-

तत्रासिद्धत्वाभावात् *तदप्राप्तावुवङः प्राप्तिः । *अभ्यासविकारेषु बाध्यबाधकभावाभावाद्धलादिः शेषात्वयोरत्र समावेशो बोद्धव्यः ।

आर्द्धधातुकस्येट् (पा० सू० ७-२-३५) । "नेड् वशि कृति"(पा० सू० ७-२-८) इति प्रकृते एकयोगनिर्दिष्टानामेकदेशोऽप्यनुवर्त्तत इति न्यायेन नेति निवृत्त्या सिद्धे पुनरिड्ग्रहणं "नेड् वशि"(पा० ७-२-८) इति सूत्रे भाष्ये *प्रत्याख्यातम् । *आर्द्धधातुकस्येति किं ?, *प्रजुगुप्सते ।

---

नाम्" इति लिटः कित्त्वेनानुनासिकलोपेऽपि यद्यसिद्धत्वं स्यात्तदा संयुक्तहलमध्यस्थत्वादेत्वाभ्यासलोपौ न स्यातामसिद्धत्वाऽप्रवृत्तौ तु भवत इति भावः ॥ *तदप्राप्तौ=वृद्धेरप्राप्तौ । न च 'येन नाप्राप्ति'न्यायेन वुक उवङादेशापवादत्वेन कथन्तद्विषये उवङः प्राप्तिरिति वाच्यम् । परस्परप्रवृत्तौ परस्परस्यासिद्धत्वादुवङ्निरूपितापवादत्वस्य वुकि वक्तुमशक्यत्वात् ॥ नन्वत्वमपवादत्वाद्धलादिः शेषम्बाधित्वा पूर्वञ्जातमिति पुनर्हलादिः शेषो न स्यादत आह--*अभ्यासविकारेष्विति ।

आर्द्धधातुकस्येड्वलादेः ( पा० सू० ७-२-३५ ) । *प्रत्याख्यातमिति । न च "दीधीवेवीटाम्" ( पा० सू० १-१-६ ) इति सूत्रस्थेड्ग्रहणप्रत्याख्यानावसरे "नेड् वशि" पा० सू० ७-२-८ ) इतिसूत्रादिड्ग्रहणानुवृत्त्यैव सिद्धे पुनरार्द्धधातुकेति सूत्रे इड्ग्रहणमिडेवेति नियमार्थम्, तेन भवितेत्यादावीटो गुणाभावस्य सिद्धौ "दीधी" इतिसूत्रे इड्ग्रहणन्न कार्यमित्युक्तमिह तु एतत्सूत्रस्थमिड्ग्रहणन्न कार्यमित्युच्यत इति विरोध इति वाच्यम् । "दीधीवेवीटाम्" ( पा० सू० १-१-६ ) इतिसूत्रस्थेड्ग्रहणप्रत्याख्यानपरभाष्यस्य गौरवग्रस्तत्वेनैकदेश्युक्तित्वस्यान्यत्र विस्तृतत्वात् । *आर्द्धधातुकस्येति किमिति । प्रकृतसूत्रस्याङ्गाधिकारीयत्वेनाङ्गस्येति सम्बध्यते । तत्राङ्गस्येति षष्ठ्या निमित्तार्थकत्वस्य क्लृप्तत्वादङ्गसंज्ञानिमित्तस्य वलादेरित्यर्थो भविष्यति । न च वृक्षत्वम्, वृक्षता, गोभ्यामित्यादावपि प्राप्नोतीति वाच्यम् । "ऋत इद्धातोः" ( पा० सू० ७-१-१०० ) इति सूत्राद्धातुग्रहणमनुवर्त्य तच्च पञ्चम्या विपरिणमय्य धातोर्विहितस्य वलादेरङ्गसंज्ञानिमित्तस्येत्यर्थकरणेनादोषात् । एवञ्चार्द्धधातुकग्रहणाभावेऽपि वलादेरित्यस्याङ्गविशेषणत्वापत्तिरित्येषा शङ्का न भविष्यतीति प्रश्नः । *प्रजुगुप्सत इति । अत्र सनो धातोर्विहितत्वात्प्राप्नोति । न च तद्धातुग्रहणं शब्दाधिकारमाश्रित्य स्वरूपपरं विज्ञास्यते धातोरित्येवं यो विहित इति । अत एव लूभ्यां, पूभ्यामित्यादावपि न भविष्यतीति वाच्यम् । एवमपि जुगुप्सति, मीमांसत इत्यादौ सार्वधातुकस्य तिङ इट्प्रसक्तेर्दुर्वारत्वात् । अत्रेदमवधेयम् । "रुदादिभ्यः सार्वधातुके" ( पा० सू० ७-२-७६ ) इति सूत्रस्य प्रकृतसूत्रे आर्द्धधातुकपदाभावे नियमार्थत्वम्भविष्यति-'सार्वधातुकस्य यदि भवति तर्हि रुदादिभ्य एव'इति । न च रुदादिभ्यः परस्य सार्वधातुकस्यैवेति नियमः किन्न स्यादिति वाच्यम् । "रुद-

स्यतासी(पा०सू०३-१-३३)। *यद्यपि लृशब्देन लृङ्लृटोर्ग्रहणं तथापि इह यथासंख्यं, वाचकशब्दसाम्यात् । शबाद्यपवाद इति । *अत्रार्द्धधातुक इत्यनुवृत्त्याऽस्य लावस्थायां प्राप्तावपि यदीदं न स्यात्तर्हि शप्स्यात्कृते त्वप्राप्तिरेवेत्येतावतेति भावः ॥

---

विद्" ( पा० सू० १-२-८ ) इति क्त्वासनोः कित्त्वविधानरूपज्ञापकेन विपरीतनियमस्य वारयितुं शक्यत्वात् । यदि रुदधातोः परस्यार्द्धधातुकस्येट् स्यात्तदा क्त्व इडागमे "न क्त्वा सेट्" ( पा० सू० १-२-१८ ) इति प्रतिषेधे प्राप्ते क्त्वः कित्त्वविधानं कार्यम् । विपरीतनियमे तु तत्रेट् न भविष्यतीति स्वतस्तस्य कित्त्वं सिद्धमेव । तथा सनोऽपि "हलन्ताच्च" ( पा० सू० १-२-१० ) इति कित्त्वं सिद्धमेव । एवञ्च प्रकृतसूत्रे आर्द्धधातुकग्रहणस्य न फलम् । किन्तु योगविभागार्थम् । आर्द्धधातुकस्येड्यावानिट् स आर्द्धधातुकस्यैवेति । तेन "स्यसिच्सीयुट्" ( पा० सू-६-४-६२ ) इति सूत्रेण विधीयमान इट् अडाड्वदङ्गाधिकारादङ्गस्य न भवति । तस्मिन्सूत्रे भाष्यकृताऽप्येवमेवोक्तम् । प्रकृतग्रन्थे जुगुप्सते, इत्यत्रेड्व्यावृत्तिप्रदर्शनं तु यथाश्रुताभिप्रायेणेति दिक् । बभूविव, बभूविम, इत्यत्र "श्र्युकः किति" ( पा० सू० ७-२-११ ) इतीण्निषेधस्य प्राप्तावपि क्रयादिनियमादिट् ।

स्यतासी लृलुटोः ( पा० सू० ३-१-३३ ) । अत्र यथासङ्ख्यमुपपादयति—*यद्यपीत्यादिना । शबाद्यपवाद इति मूलस्य यद्यपि स्याद्यपेक्षया लादेशानाम्परत्वात्पूर्वम्प्रवृत्तौ स्वविषये शबादिप्राप्तः सुगमत एवोपपत्तिर्भवति । न चादेशानामनित्यत्वं कृते स्यादौ व्यवधानादप्राप्तेः, स्यादेस्तु नित्यत्वमिति कथं विप्रतिषेध इति वाच्यम् । धातोर्विहितस्य लस्येत्यर्थेनादेशानामपि नित्यत्वात् । पूर्वमादेशप्रवृत्तौ पश्चात्तस्य प्रत्ययस्योत्पत्तौ सति शिष्टत्वात्स्यस्योदात्तत्वेनादेशानान्निघाते प्राप्ते तासेः परस्य लसार्वधातुकस्यानुदात्तत्वविधानेन ज्ञापितम्—'अन्यत्र विकरणेभ्य' इति, तेनादेशस्वरस्यैव बलवत्त्वमित्यन्यत्रोक्तम् । तथापि प्रकृतसूत्रे आर्द्धधातुकपदानुवृत्त्या लावस्थायामेवास्य प्रवृत्तिः आदेशानान्तु "द्व्येकयोः" ( पा० सू० १-४-२२ ), लस्य" ( पा० सू० ३-४-७७ ) "तिप्तस्झि" ( पा० सू० ३-४-७८ ) "अनुदात्तङितः" (१-३-१२) इत्यादीनामेकवाक्यतया धातोर्विहितस्य लस्य स्थान इत्यर्थेनोत्तरकाले प्रवृत्तिरिति स्वीक्रियते लाघवान्न तु जातानान्नियमो गौरवादित्यन्यत्र प्रपञ्चितं, तस्मिन्नपि पक्षेऽपवादत्वस्योपपत्तिमाह—*अत्रेत्यादिना । तासेरिकार उच्चारणार्थः । न चैवं मन्तेत्यत्र लुटि तस्य कर्मबोधकस्य तादेशे तस्य "लुटः प्रथमस्य" ( पा० सू० २-४-८५ ) इति डादेशे टिलोपे "अनिदिताम्" ( पा० सू० ६-४-२४ ) इति नलोपापत्तिरिति वाच्यम् । टिलोपस्याभीयत्वेनासिद्धत्वात् ।

लुटः प्रथमस्य ( पा० सू० २-४-८५ ) । अत्र शब्दतः साम्याभावाद्य-

लुटः प्रथ (पा० सू० २-४-८५) ॥ *एकार्थस्यैकार्थ इत्याद्यान्तरतम्यान्निर्वाहः । डित्त्वेति । *सर्वादेशत्वन्त्वनुबन्धान्तरेणापि सुशकमिति भावः ।

पुगन्त (पा०सू०७-३-८६)। बहुव्रीहिगर्भो द्वन्द्वः । सार्वधातुकादिकश्चैको विशेषणम् । अङ्गावयवस्येक इत्यर्थः । *अत एव भिनत्तीत्यादौ न गुणः। नन्वेवं भेत्तेत्यादावपि न स्यादत आह-येन नेति । सूत्रारम्भसामर्थ्यादेकवर्णव्यवधानमेवाश्रीयते इत्यर्थः । *अत्र क्नोः क्त्विसामर्थ्याद् भूतपूर्वलघूपधत्वाश्रयो गुणः । "इको गुणवृद्धी"(पा० सू० १-१-३)इति सूत्रे भाष्ये तु पुकि अन्तो, लघ्वी उपधा, तयोः समाहारद्वन्द्व इत्याश्रितम् । सार्वधातुकादिकश्चाङ्गविशेषणं, तत्रैवोत्थिताकाङ्क्षत्वात् । तत्पराङ्गावयवपुगन्तलघूपधारूपेको गुण इत्यर्थ इति तदाशयः ।

दीधीवे (पा० सू० १-१-६) । इडत्रागम एव *व्याख्यानात् ।

तासस्त्योः (पा० सू० ७-४-५०) । "सः स्यार्द्धधातुके"(पा० सू० ७-४-७९) इत्यतोऽनुवृत्तसीत्येतद्बोधितसकारस्य प्रत्ययावयवस्यैव सम्भवेन फलितमाह-सादाविति ।

"लृट् शेषे" (पा० सू० ३-३-१३)इति चरहितः पाणिनेः पाठ

---

थासंख्यनिवृत्तेराह—*एकार्थेति । ननु डकारोच्चारणेन डादेशस्य सर्वादेशत्वं लभ्यत इति कथं डित्त्वसामर्थ्यादित्युक्तमत आह-*सर्वादेशत्वमिति । वस्तुतस्तु डा आ इत्याकारस्य प्रश्लेषेण सर्वादेशत्वे सिद्धे डकारोच्चारणं टिलोपार्थमेव ।

*अत एव=सार्वधातुकादेरिग्विशेषणत्वादेव । ननु "संयोगे गुरु" ( पा० सू० १-४-११ )इत्यस्य प्रवृत्त्या भेत्तेत्यत्र न लघूपधत्वमत आह-*अत्र क्नोः क्त्विसामर्थ्यादिति ।

दीधीवेवीटाम् ( पा० सू० १-१-६ ) । *व्याख्यानादिति । इदं सूत्रम्भाष्ये प्रत्यख्यातम् । दीधीवेव्योश्छन्दोविषयत्वात्, छन्दसि च गुणदर्शनात्, अदीधेदिति । इटश्चापि ग्रहणं शक्यमकर्त्तुम् । कथम् ? । "नेड्वशि" ( पा० सू० ७-२-८) इति सूत्रादिड्ग्रहणानुवृत्त्यैव सिद्धे "आर्द्धधातुक"(पा० सू० ७-२-३५) इति सूत्रे इड्ग्रहणमिद् इडेवेति नियमार्थम् । अङ्गाधिकारे नियमादाङ्गस्यैव विकारस्य निवृत्तिः"इत्याद्युक्तं तन्मूलकादित्यर्थः ।

तासस्त्योर्लोपः ( पा० सू० ७-४-५० ) । "सः स्यार्द्धधातुके" ( पा० सू० ७-४-७९) इत्यतः सीति वर्त्तते ।

इति *भाष्यस्वरसः । तत्र योगविभागः—"लृट्"इति । अत्र क्रियार्थाया-मित्याद्यनुवर्त्तते । "शेषे"इति अक्रियार्थोपपदार्थम् । न च क्रियार्थेऽप्यादि-निवृत्त्यैव सिद्धे शेषग्रहणं व्यर्थम् । भावकर्त्रोस्तुमुन्ण्वुलभ्यां लृटो बाधा-भावाय तत् ! न च वासरूपविधिना तत्सिद्धिः "तुमुन्ण्वुलौ"(पा० सू० ३-३-१०)इति सूत्रे ण्वुल्ग्रहणेन क्रियार्थायां क्रियायामुपपदे वासरूपविधिना प्रत्ययान्तराभावज्ञापनस्य भाष्ये उक्तत्वात् । सर्वञ्चेदं *भाष्ये स्पष्टम् ।

आशिषि (पा० सू० ३-३-७१) ॥ आशीः=*इष्टप्राप्तीच्छा ।

अनन्यार्थङित्त्वेष्विति । *तद्बलकल्प्यमानार्थानुवाद एव "ङिच्च"(पा० सू० १-१-५३) इत्येतत् । *अर्थान्तरकल्पनानिवृत्त्यर्थमिति भावः । परिभाषाणाञ्च प्रायेण पक्षप्राप्तार्थानुवादेनार्थान्तरनिवृत्त्यर्थत्वं "व्रीहीनवहन्ति" इत्यादिवदिति स्पष्टमेव । संप्रसारणादीति । आदिना

---

*भाष्यस्वरस इति । तत्र ह्यादौ शेषग्रहणस्य प्रयोजनमुक्तं लृटि शेषवचनं क्रियायामप्रतिपदविध्यर्थमिति । अविशेषेण विधाने लृटोऽभावः स्यात् । हरिष्यामीति व्रजति । करिष्यामीति व्रजति । अयम्भावः—अविशेषेण विधाने यत्र न क्रियार्था क्रिया उपपदं करिष्यति हरिष्यतीत्यादौ तत्रैव स्याद्यत्र तु क्रियार्था क्रिया उपपदं तत्र न स्यात् । ण्वुला बाधात् । शेषे चेति क्रियमाणे यत्र क्रियार्था क्रिया नास्ति तत्र भवति । चशब्दाद्यत्र साऽस्ति तत्रापि भवति । न च वाऽसरूपविधिना ण्वुल्विषये लृडपि भविष्यतीति वाच्यम् । "तुमुन्ण्वुलौ" ( पा० सू० ३-३-१० ) इति सूत्रे ण्वुल्ग्रहणं ज्ञापकं, क्रियार्थायां क्रियायामुपपदे तृजादयो नेति । अन्यथा वासरूपसूत्रबलात्क्रियार्थायां क्रियायां ण्वुल्तृचौ" ( पा० सू० ३-१-१३३ ) इतिसामान्यसूत्रेण ण्वुल्वत्तृजपि स्यादित्युक्तत्वेन ज्ञाप्यवचनेन लृडभावप्रसङ्गात् । एवमुक्त्वा "स तर्हि चकारः कर्त्तव्यो न कर्त्तव्यः लृड् भवतीतीयता सिद्धे यच्छेषग्रहणङ्करोति तस्यैतत्प्रयोजनं योगाङ्गं यथा विज्ञायेत सति च योगाङ्गे योगविभागः करिष्यते । "लृट्" अस्मिन्सूत्रे क्रियार्थायामित्याद्यनुवर्त्तते । तेन करिष्यामीति व्रजतीत्यादि सिद्धम् । ततः "शेषे" इति । शेषे लृट् भवति करिष्यति, हरिष्यतीत्यादौ"इत्युक्तम् । एतेन चकाररहितः पाठ इति स्पष्टमेव लभ्यते । *भाष्ये स्पष्टमिति । उपपादितमेतत् ।

*इष्टप्राप्तीच्छेति । इष्टश्चेच्छाकर्तृसम्बन्ध्यन्यसम्बन्धि वेत्यन्यदेतत् ।

सातङनेकाल्त्वात्सर्वस्य स्थाने भवतीत्युक्त्वा "ङिच्च" ( पा० सू० १-१-५३ ) इत्यस्यानेकाल्सूत्रापवादत्वेनान्त्यादेशत्वमाशङ्क्यानन्यार्थङित्त्वेष्वनङादिषु चरितार्थ इत्युक्तम्, अपवादत्वाभावबीजन्तु नाभिहितमित्याशङ्कानिवारणायाह-*तद्बलेत्यादि । अनङादिषु ङकारोच्चारणबलेत्यर्थः । अनङः सर्वादेशत्वं ङकाराभावेऽपि सिद्धम् । *अर्थान्तरेति । नायं सर्वादेशः किन्तु यस्य विधी-

ध्रुव इडभावः। सम्भवत्प्रयोजनेति । इदं प्रयोजनं सर्वादेशत्वे एव नान्त्यादेशत्वेऽप्रत्ययत्वात् । मन्थरमिति । सम्भवत्प्रयोजनतया *स्व-विषयाभावसम्भावनया ङित्त्वमात्रदर्शनेन स्वविषयसम्भावनया च मन्दं प्रवृत्तिरित्यर्थः । समबलत्वादिति । मन्दप्रवृत्त्यैव तत्त्वमिति भावः । *एतेन टाप-यप्-अबादिष्वनन्यार्थपित्त्वेषु चरितार्थस्य "अनुदात्तौ सुप्पितौ"(पा० सू० ३-१-४) इत्यस्य 'जित्वरी'इत्यादौ तुक्सम्पादनेन चरितार्थपित्त्वे क्वापि उक्तन्यायेनान्तरङ्गेण प्रत्ययाद्युदात्तत्वेन बाधापत्तिरिति *परास्तं, *तद्वदस्य* पित्त्वसामर्थ्यसिद्धत्वाभावात् । वस्तुतस्तु तत्सामर्थ्यसिद्धस्य "ङिच्च"(पा० सू० १-१-५३) इत्यस्यात्राप्राप्तिरेव* । 'ङित्त्वस्य सावकाशत्वात्तातङि विप्रतिषेधात्सर्वादेशः'इति भाष्यस्य सावकाशङित्त्वे प्रवृत्तौ परिभाषात्वविरोधादप्रवृत्तौ सर्वादेशः सिद्ध इत्यर्थः । *न च गुणवृद्धिप्रतिषेधार्थत्वे सर्वादेशत्वं, तत्त्वे च तदर्थत्वमित्यन्योन्याश्रयेण सर्वादेशत्वालाभे अन्त्यादेशत्वमेव स्यादिति वाच्यम् । "एरुः" (पा० सू० ३-४-८६)इति प्रकरणे 'तिह्योस्तात्' इति न्यासेनानयोरिवर्णस्य तादित्यर्थकेनान्त्यादेशत्वसिद्धौ ङित्करणस्य गुणवृद्धिप्रतिषेधार्थत्वबोधनद्वारा सर्वादेशार्थत्वेनादोषात् । स्पष्टश्चेदं सर्वं भाष्यकैयटयोः । तुस्थानिकश्चायमान्तरतम्यादनुदात्त एव । हिस्थानिकस्तू*दात्त एवेत्याहुः।

---

यते तदवयवस्य यस्य कस्य चिदित्येवं कल्पनेत्यर्थः । एतेन पाक्षिकी प्राप्तिरुद्भावितप्राया । परिभाषात्वञ्च "ङिच्च" (पा० सू० १-१-५३) इत्यस्य लब्धम् । *स्वविषयाभावसम्भावनयेति । "ङिच्च" (पा० सू० १-१-५३) इत्यस्यानन्यार्थङकारोच्चारणसामर्थ्यलब्धानुवादतया यत्र ङकारस्यानन्यार्थत्वं स स्वविषय इति भावः । *एतेन=पूर्वोक्तव्याख्यानेन । *परास्तम्=उक्तक्रमेण मूलन्दूषयतामतम्परास्तम् । *तद्वत्=ङिच्चेतिसूत्रवत् । *अस्य="अनुदात्तौ सुप्पितौ" ( पा० सू० ३-१-४ ) इत्यस्य । अनुदात्तत्वस्यापूर्वस्य विधानादस्य नानुवादत्वमिति भावः । *अत्राप्राप्तिरेवेति । तथा च परेण बाधादप्राप्तिरिति न, किं त्वप्राप्तिरेवेत्यर्थः । अन्योन्याश्रयान्न सर्वादेशत्वं, किन्तु अन्त्यादेशत्वमेवेति वादिमतमाशङ्क्य खण्डयति-*न चेत्यादिना । न च 'तिह्योस्तात्' इतिन्यासेऽन्यलकारसम्बन्धिनोऽपि तिशब्दस्य ग्रहणापत्तिरिति वाच्यम् । हिशब्दसाहचर्येण लोट्स्थानिकस्यैव ग्रहणात् । *उदात्त एवेति । ह्यादेशस्यापित्त्वविधानात् ।

लोटो लङ्वत् ( पा० सू० ३-४-८५ ) । अत्रोपमेये षष्ठीदर्शनाल्लङ्-

नित्यं ङितः (पा० सू० ३-४-९९) ॥ ङिदुत्तमस्येति *षष्ठीतत्पुरुषः । एतल्लेखो भवानीत्युत्तरमुचितः* ।

सेर्ह्य (पा० सू० ३-४-८७) ॥ *अपिद्ग्रहणात्पित्त्वेनानुदात्तसेः स्थाने जायमानहेरान्तरतम्यात्प्राप्तमप्यनुदात्तत्वं न । *एतेन "सेर्हि ङिच्च" इत्येवास्त्विति परास्तम् ।

भवतादिति । लुगपेक्षया *परत्वाद्धेस्तातङ् । *'अन्तरङ्गानपि'

---

शब्दात्षष्ठ्यन्ताद्वतिः । तेन लङि परतोऽङ्गस्य विधीयमानावडाटौ न । न च यद्यल्लङः कार्यं तस्य सर्वस्य विनिगमनाविरहादतिदेशः स्यात् तथा सति 'यान्तु' 'वान्तु' इत्यत्र "लङः शाकटायनस्य" ( पा० सू० ३-४-१११ ) इति जुस्, 'जुह्वतु' 'विदन्तु' इत्यत्र "सिजभ्यस्त" (पा० सू० ३-४-१०९ ) इति जुश्च स्यादिति वाच्यम् । ङ्लोड्विधानेन सिद्धे लोटो लङ्वदित्यतिदेशेन बोधनं लङ्सम्बन्धिकार्यविधानस्यातिदेशिकत्वेनानित्यत्वज्ञापनार्थमित्यदोषादिति केचित् । यत्तु "विदो लटो वा" ( पा० सू० ३-४-८३ ) इत्यतो वेत्यस्याकर्षणेनास्य व्यवस्थितविभाषात्वमिति, तन्न । व्यवस्थितविभाषापरिगणनविरोधात् । वस्तुतस्तु "लङः शाकटायन" ( पा० सू० ३-४-१११ ) इतिसूत्रे "यासुट्" ( पा० सू० ३-४-१०३ ) इत्यतो ङिदित्यनुवर्त्य षष्ठ्या विपरिणमय्य ङिदेव यो लङ् तस्य ग्रहणम् त्वनिर्देशेन यो लङ् तस्य । तच्च लङ्ग्रहणम्पृथक्कृत्य ङिदेव यो लङ् तस्यैव झेर्जुसिति व्याख्येयम् । तेन "सिजभ्यस्त" ( पा० सू० ३-४-१०९ ) इत्यनेनाप्युक्तस्थले नेति बोध्यम् ।

नित्यं ङितः ( पा० सू० ३-४-९९ ) ङित् उत्तमो यस्मादितिरीत्याऽतद्गुणसंविज्ञानबहुव्रीहौ सकारान्तधात्ववयवसकारलोपापत्तिरत आह-*षष्ठीतत्पुरुष इति । ङित उत्तम इत्येवं विग्रहे जायमानः । *उचित इति । तत्रैवोपयोगात् । परन्तु "लोटो लङ्वत्" ( पा० सू० ३-४-८५ ) इत्यतिदेशेन यथा "तस्थस्थ" ( पा० सू० ३-४-१०१ ) इत्यस्य प्रवृत्तिस्तथा "नित्यं ङितः" (पा० सू० ३-४-९९ ) इत्यस्यापीत्यातिदेशप्रयोज्यप्राप्तिकत्वरूपधर्मकृतसादृश्यात् "तस्थस्थ" ( पा० सू० ३-४-१०१ ) इतिसूत्रानन्तरमस्य लेख इति शेषः ।

सेर्ह्यपिच्च (पा० सू० ३-४-८७ ) । अपित्त्वातिदेशो ङित्त्वार्थ एवेति भ्रमेण प्रक्रियालाघवाय कृतां सेर्हि ङिच्चेत्येवोचितमितिशङ्कान्निरस्यति-*अपिद्ग्रहणादिति । *एतेन=फलान्तरस्यापि सत्त्वेन ।

*परत्वाद्धेस्तातङिति । एवञ्च स्थानिवद्भावेन तातङो हित्वेऽपि न लुक् सकृद्गतिन्यायात् । न्यायविरोधम्परिहरति-*अन्तरङ्गानपीति । यत्त्वत्र दण्डिनाऽन्तरङ्गानपीतिन्यायस्य प्राप्तिमाशङ्क्यान्तरङ्गेनैव लुग्बाधते न तु परमपीत्युक्तम्, तन्न । अपिशब्दस्वारस्यविरोधात् । अत एवैतत्फलितार्थकथनपरः "सर्वविधिभ्यो लुग्विधिर्बलवान्" इति प्राचाम्पाठः सङ्गच्छते ।

इति न्यायस्तु 'ज्ञापकसिद्धं न सर्वत्र'इति न्यायेनानित्यत्वान्न ।

मेर्निः (पा० सू० ३-४-८९) ॥ अमोऽपवादोयम् ।

स पिच्चेति । *यस्याडागमः स इत्यर्थः । सामर्थ्यादिति । अन्यथा प्रक्रियालाघवाय हुनू एव विदध्यादिति भावः । भवानीति । लङ्वद्भावात्प्राप्तमपि "इतश्च"(पा० सू० ३-४-१००) इति न । मोन इति वक्तव्ये मेर्निरिति सूत्रकरणात् । एवं *हेरपि बोध्यम् ।

अनद्यतने (पा० सू० ३-२-१११) । अयं *बहुव्रीहिः । *तेन 'अद्य ह्यश्चाभुङ्क्ष्महि'इत्यत्र व्यामिश्रे लुङेव ।

स चोदात्त इति । *अन्तरङ्गत्वाच्चिबादिषु कृतेषु नित्यत्वाद्द्विकरणे कृते विकरणान्ताङ्गस्याडागमः । *लकारप्रश्लेषेण लावस्थायामेवाडिति षष्ठे भाष्ये पक्षान्तरमुक्तम् । नन्वत्र पक्षे 'अकरोत्' इत्यादौ उभयत्यात्युदात्तत्वनिबन्धनमनुदात्तत्वमटः स्यात् । उदात्तत्वन्तु 'अभवत्'इत्यादौ चरितार्थमिति चेन्न । उदात्तपदे स्वरितत्वप्रतिज्ञानात्स्वरितेनाधिकं कार्यमित्यप्यर्थात्* बलवतोऽपि सतिशिष्टस्वरस्य बाधनात् । पूर्वशाङ्गेण बल-

---

आडुत्तमस्य (पा० सू० ३-४-९२) । *यस्याडागम इति । आट एव पित्त्वे तु समुदायस्य पिद्व्यपदेशलाभो न स्यात् । एवञ्च भवाव, भवामेत्यत्र वकारमकाराकारयोरनुदात्तत्वन्न स्यात् । न चात्र "यदागमाः" इतिन्यायेन सर्वत्र पित्त्वप्राप्तिराटः । वस्मसोरपित्त्वात् । न चाट एव पित्त्वातिदेशवैयर्थ्यम् । जुहवाव, जुहवामेत्यत्राटः पित्त्वविधानसामर्थ्याद् गुणप्रवृत्तेः फलत्वस्य वक्तुं शक्यत्वात् । *हेरपीति । तत्रापि सो ह इत्येव वदेत् । न च 'मो नः' इतिन्यासे मसो मकारस्यापि स्यादिति वाच्यम् । "एरुः" (पा० सू० ३-४-८६) इत्यत एरित्यस्यानुवृत्त्या तस्य लोड्विशेषणत्वेनेवर्णान्तस्य लोटो मस्य नः इत्यर्थेनादोषात् । न च "इतश्च" (पा० सू० ३-४-१००) इत्यस्य प्राप्तिशङ्कावसरे "एरुः" (पा० सू० ३-४-८६) इत्यस्य वैयर्थ्यं शङ्क्यम् । तस्य विषये सर्वत्र लोपप्राप्तावपि हुनु इत्यकरणेनैतयोरुत्वविषयत्वाभावे निश्चिते सत्युत्वमपवादत्वात्प्रथमपुरुषे चरितार्थम् । एवं सति लोपस्यान्यत्र प्राप्तिरिति भावात् ।

अनद्यतने लङ् (पा० सू० ३-२-१११) । कालोऽपि धात्वर्थ इत्याशयेन मूलेऽनद्यतनभूतार्थवृत्तेरिति । *बहुव्रीहिरिति । तत्पुरुषत्वे त्वतिप्रसङ्गः स्यात् । तमाह—*तेनेति ।

*अन्तरङ्गत्वादिति । अपरनिमित्तकत्वेन तु तत्त्वम् । *लकारप्रश्लेषेणेति । "मयतेरिदन्यतरस्यांल्लुङ्लङ्" इतिसंहितापाठेनेति शेषः । *इत्यप्यर्था-

वतोऽपि परशास्त्रस्य बाधनवत् अधिकः कार इत्यप्यर्थस्तेन पूर्वेण परस्य बाध इति स्पष्टं "स्वरितेन" (पा० सू० १-३-११) इति सूत्रे भाष्ये । *अत एव पक्षयोर्न फलभेद* इत्यलम् ।

अभवादिति । न चात्र "आदेः परस्य" (पा० सू० १-१-५४) इत्यादेर्लोपापत्तिः अनुवृत्तधातोरित्यस्य विहितविशेषणत्वेन *परशब्देन परस्य कार्यविधानाभावात् ॥

विधिनि (पा० सू० ३-३-१६१) ॥ संप्रश्नः=संप्रधारणं, विचारः तद्वा कर्त्तव्यमिदं वेत्यादिरूपः ॥

---

दिति । अत्रापिना प्रसिद्धार्थपरिग्रहः । उदात्तपदे स्वरितत्वप्रतिज्ञायाम्प्रमाणमाह—*अत एवेति । * न फलभेद इति । स्वरितत्वाभावे तु विकरणान्तस्याडागमपक्षे 'अकरोत्' इत्यत्राट उदात्तस्य श्रवणम्भवति, लावस्थायामडागमे तूत्तरकालप्रवृत्तिकस्योकारस्वरस्य बलवत्त्वेनाटोऽनुदात्तत्वं स्यादिति फलभेदः स्पष्ट एव । न च लावस्थायामेव चेदट् तदाऽपिबदित्यत्राट्सहितस्य पिबादेशापत्तिरिति वाच्यम् । निर्दिश्यमानपरिभाषया समाधानात् । * परशब्देनेति । "तस्मादित्युत्तरस्य" (पा० सू० १-१-६७) इति सूत्रादुत्तरस्येत्यनुवृत्त्यैव सिद्धे तत्र परशब्दोपादानं यत्र परशब्देन कार्यविधानन्तत्रादेः कार्यमित्यर्थबोधनाय । परशब्देनेत्यस्य परत्वविशिष्टबोधकशब्देनेत्यर्थः । तेन "तस्मादित्युत्तरस्य" (पा० सू० १-१-६७) इति सूत्रस्य यत्र प्रवृत्तिस्तत्र "आदेः परस्य" (पा० सू० १-१-५४) इत्यस्य प्रवृत्तिरिति सिद्धम् ।

विधिनिमन्त्रणा (पा० सू० ३-३-१६१) । मूले द्योत्येषु वाच्येषु वेति । अत्राऽऽद्यपक्षस्येत्थमुपपत्तिं वर्णयन्ति—यदि विध्यादयो लिङ्वाच्यास्स्युस्तदा विशेषविहितत्वेन कर्त्राद्यर्थानाम्बाधापत्तिरिति कर्तुरनभिधानाच्चैत्रः पठेदित्यत्र चैत्रपदात्तृतीयापत्तिः, शप् च न स्यात्सार्वधातुकस्य कर्त्रर्थकत्वाभावात् । पुरुषव्यवस्था च न स्यात् । द्योत्यत्वे त्वेषां विषयभावेनाश्रयणात्प्रत्ययस्य कर्त्राद्यर्थकत्वमिति तानि कार्याणि सिद्ध्यन्ति । "लः कर्मणि" (पा० सू० ३-४-६९) इत्यत्र ल इतिजातौ बहुवचनमिति लिङोऽप्युपग्रहात् । वाच्यत्वपक्षेऽप्येवं वदन्ति । विध्यादिभिः कर्त्राद्यर्थानान्न बाधो विरोधाभावात् । किञ्च तक्रकौण्डिन्यन्यायस्य न विषयताऽत्र । तस्य विधेयविषयत्वात्, पूर्ववज्जातौ बहुवचनस्य स्वीकाराच्च । किञ्च यदि विध्यादीनां विशेषविहितत्वेन कर्त्राद्यर्थबाधकता स्यात्तदा तुल्यन्यायाल्लडादिस्थलेऽपि वर्त्तमानादिष्वर्थेषु विधानेन तैरपि कर्त्राद्यर्थबाधः स्यादिति पचति चैत्रेणेत्याद्यपि स्यात् । पुरुषाव्यवस्थाऽपि स्यात् । न च "लः कर्मणि" (पा० सू० ३-४-६९) इति सूत्रारम्भसामर्थ्यान्न बाध इति वाच्यम् । पर्यायापत्तेर्दुर्वारत्वात् । प्रत्ययार्थत्वेनास्मिन्पक्षे विध्यादीनाम्प्राधान्यापत्तिस्तु न । प्रत्ययार्थप्राधान्यनियमस्यौत्सर्गिकत्वात् । परन्त्वा-

थपक्षो युक्तः। यत्र प्रत्ययस्य निवृत्तिः पच, कुरु इत्यादौ, तत्रापि प्रवर्त्तनाप्रतीतेः, पञ्चभिर्हलैः कृषतीत्यादौ प्रवर्तनाया धात्वर्थत्वदर्शनाच्च तस्या धात्वर्थत्वस्योचितत्वात्। न चास्मिन्पक्षे निमन्त्रयेय भवन्तमित्यादौ निमन्त्रणस्य धातुनाऽभिधानाल्लिङ् न स्यादिति वाच्यम्। प्रयोजकनिष्ठनिमन्त्रणादन्यस्यावश्यकर्त्तव्यत्वस्वरूपस्य निमन्त्रणस्य प्रत्ययार्थत्वेनादोषात्। ईदृशे विषये "अर्हे कृत्यतृचश्च" (पा०सू० ३-३-१६९) इति लिङ्। अर्हत्वं चावश्यकर्त्तव्यत्वम्। एवमेवामन्त्रणविषयेऽपि बोध्यम्।

मूले निकृष्टस्य प्रवर्त्तनम्। इयमेवाज्ञा। तच्च प्रवर्तनं स्वाभिलषितेऽर्थे पराभिलषितेऽर्थे वेत्यन्यदेतत्। अप्रवृत्तस्य प्रयोज्यस्य तदज्ञातोपायप्रदर्शनेन प्रवर्त्तनमपि, यथा "स्वर्गकामो यजेत" "राहूपरागे स्नायात्" इत्यादि। एवमज्ञातमार्गकथनमपि। यथा अनेन आयाहीत्यादि। नियोगकरणम्=आवश्यके प्रेरणारूपम्। कामचारानुज्ञेति। कामचारश्च प्रवर्त्यस्य पुरुषस्य प्रवर्त्तनं स्वाभिलषितेऽर्थे। एवमनुज्ञाऽप्यामन्त्रणमेव। यथा प्रवृत्तस्यैव पुरुषस्य श्रमेण निवृत्तावुन्मुखस्य तदभिलषितेऽर्थे निवृत्तिप्रतिबन्धेन प्रवर्त्तनं, "यदारब्धन्तदवश्यङ्कर्त्तव्यमेवेत्याद्युक्तिः। एवमादिः सर्वोऽप्युपदेशो बोध्यः। अधीष्टं=सत्कारपूर्वको व्यापारः। यथा माणवकमध्यापयेति। शिष्यस्य वा-मामध्यापयेति। एषा अभ्यर्थनापदेनाप्युच्यते। प्रार्थना तु स्वार्थिते वस्तुनि क्रियायां वा स्वापेक्षया महतः प्रवर्त्तनमञ्जलिकरणादिना प्रवर्त्तनमेव। सम्प्रश्नस्यैभ्यो विलक्षणत्वात्पृथगुक्तिः। उक्तचतुष्टयस्थले प्रवर्त्तनायाः सत्त्वेन प्रवर्त्तनायां लिङित्युक्तम्। प्रवर्त्तनात्वं सर्वसाधारणम्बोध्यतावच्छेदकं लिङ्लोट्लेट्कृत्यानाम्। प्रवर्त्तनातिरिक्तोंऽशः प्रमाणान्तरलभ्यः। न च प्रैषोऽपि विधिरेवेति "प्रैषातिसर्गप्राप्तकाल" (पा० सू० ३-३-१६३) इतिसूत्रे तदुपादानं व्यर्थमिति वाच्यम्। निमन्त्रणादौ कृत्याभावार्थन्तस्यावश्यकत्वात्। लोड्विधानप्राप्तकालार्थम्। प्रवर्त्तना च प्रवृत्त्यनुकूलो व्यापारः। ण्यन्ताद्युच् करणेऽर्थे। स च व्यापारो लिङादिघटितवाक्योच्चारणरूपो लौकिकानाम्। वेदो माम्प्रवर्त्तयतीत्यादौ तु लिङाद्यन्तशब्दघटितत्वमेव वेदनिष्ठम्प्रवर्त्तकत्वम्। इदमेव वेदे व्यापारः। स एव शाब्दी भावनेत्युच्यते। लिङ्गसंख्यानन्वयित्वात्तत्र व्यापारव्यपदेशः। यत्तु प्राञ्चः-प्रवृत्तिजनकज्ञानीयप्रकारतावच्छेदकत्वमिष्टसाधनत्वादिनिष्ठम्प्रवर्तनापदार्थतावच्छेदकमितीष्टसाधनत्वादिकमेव विध्यर्थः। तन्न। इष्टसाधनत्वादेः साध्यक्रियानिष्ठस्य प्रवर्त्तकनिष्ठत्वाभावेन गुर्वादिर्माम्प्रवर्त्तयतीत्यादिव्यवहारानापत्तेः। अत एव "हेतुमति च" (पा० सू० ३-१-२६) इतिसूत्रभाष्ये पृच्छतु माम्भवानित्यत्र णिच् कस्मान्न भवतीत्याशङ्काया द्रव्यमात्रविषयकप्रेरणायां लोट्, सक्रियस्य प्रवर्त्तनायां णिजिति समाधानस्य च सङ्गतिर्भवति। न हि णिचेष्टसाधनत्वम्बोध्यते इति कस्याप्यभ्युपगमः। अत एव वक्तृधर्मः प्रेरणेति व्यवहारो लोकानाम्। अत एव च निमन्त्रणादीनामुपादानम्प्रपञ्चार्थमिति प्राचामुक्तिरपि सङ्गता भवति। प्रवर्त्तनापदस्येष्टसाधनत्वादि-

यासुट्प (पा० सू० ३-४-१०३) ॥ सीयुटोऽपवादः* । प्रत्ययसन्नियोगशिष्टतयाऽन्तरङ्गत्वात्परस्मैपदानां तसादीनामुदात्तत्वे कृते यासुडागमोऽनुदात्तः स्यादित्युदात्तवचनम् । न च "आद्युदात्तश्च" (पा० सू० ३-१-३) इति सूत्रोक्तभाष्योक्तरीत्या* परस्मैपदविषये लस्यैव यासुटिधातोरित्यस्य विहितविशेषणत्वात् निर्दिश्यमानलस्यैवादेश इति नोक्तं फलमिति वाच्यम् । लस्य यासुट्यपि लस्य स्थाने आद्युदात्तस्तस् भवतीत्येवमर्थादुत्पद्यमानस्यैवाद्युदात्तत्वेन तत्र 'यदागमाः' इत्यस्या अनुवादविष-

---

बोधकत्वे निमन्त्रणादिकन्ततो भिन्नमेवेति तथाभिधानमसङ्गतमेव स्यात् । तदुक्तं हरिणा—

"अस्ति प्रवर्त्तनारूपमनुस्यूतश्चतुर्ष्वपि ।
तत्रैव लिङ् विधातव्यः किम्भेदस्य विवक्षया ॥
न्यायव्युत्पादनार्थं वा प्रपञ्चार्थमथापि वा ।
विध्यादीनामुपादानश्चतुर्णामादितः कृतम् ॥" इति ।

न्यायेति । व्यापकधर्मस्य व्याप्यधर्मव्यापकत्वमेवेति न्यायेत्यर्थः । कथन्तर्हि भवान्पचेदित्यादिवाक्यश्रवणानन्तरम्प्रयोज्यः पाके प्रवर्त्तते इष्टसाधनताज्ञानस्य प्रवृत्तिकारणतया तस्य शब्देनाजननादिति चेत् पाको मादिष्टसाधनं मत्कर्त्तव्यत्वेनाप्तोक्तत्वादित्याद्यनुमानादिति गृहाण । विध्यादीनान्द्योत्यतापक्षे तु प्रयोजकव्यापारोऽपि धात्वर्थस्तस्यापि परम्परया फलानुकूलत्वात् । तत्र तेषु व्यापारेषु प्रयोजकव्यापारो विषयितया विशेषणमेवेतरेषां विशेष्यत्वम् एवमन्वये लिङादिसमभिव्याहारस्तात्पर्यग्राहकः । एवञ्च पचेदित्यादिशब्दादेकाश्रयिका प्रेरणाविषयभूता पाकानुकूला भावनेत्यादिक्रमेण बोधः । अधिकमन्यत्र स्पष्टम् । प्रवर्त्तना च वस्तुतो वर्त्तमानकाला, धात्वर्थस्तु भविष्यत्कालिक एव भासते, शब्दशक्तिस्वभावात् । यत्र तु णिच् तत्र प्रयोज्यप्रयोजकव्यापारयोः समानकालिकयोर्भानम् । यत्र तु विधौ लिङ् तत्रोत्तमपुरुषो न प्रवर्त्तते किन्तु प्रथममध्यमावेव । स्वप्रवृत्तौ स्वोच्चारणस्याप्रयोजकत्वात् । इदमेवाभिप्रेत्योत्तमपुरुषो विधिशक्तिप्रतिबन्धक इतिमीमांसकानामुक्तिः सङ्गच्छते ।

यासुट् पर ( पा० सू० ३-४-१०३ ) । *अपवाद इति । सीयुटि कृतेऽपि तस्यागमिभक्ततया परस्मैपदपरत्वाविघातादिति भावः । *भाष्योक्तरीत्येति । तत्र हि प्रसङ्गविशेषेणोक्ते "आगमा अविद्यमानवद्भवन्ति" इतिवचने यदयं यासुट् परस्मैपदेषूदात्तो ङिच्चेत्याहेत्युक्तम । तत्र कैयटः—यदि प्रत्ययाद्युदात्तत्वे कर्त्तव्ये आदित्वमागमा विहन्युस्तदा चिनुयातामित्यादौ यासुटः प्रत्ययादित्वात्सिद्धमुदात्तत्वमिति तन्न कुर्यात् । न च परस्मैपदनिमित्तकत्वादस्यादेशोत्तरम्प्रवृत्त्या पूर्वमेवान्तरङ्गत्वादाद्युदात्तत्वे प्रत्ययस्य कृते ततो यासुडस्वरकः स्याच्छेषनिघातेनानुदात्तो वेति चरितार्थमुदात्तवचनमिति कथं

याया अप्रवृत्त्या तेन यासुडुदात्तत्वस्य दौर्लभ्यात् । 'आगमा अनुदात्ताः' इत्येषोऽर्थः शेषनिघातमूलक एव । "अनुदात्तं पदम्" ( पा० सू० ६-१-१५८ ) इति सूत्रे पदग्रहणस्य परिमाणार्थत्वेन यावतः पदत्वं भावि याव-च्च पदत्वं भावि तावत्संनिहितानां सर्वेषां शेषनिघातेन पश्चात्प्रवृत्तागमा-नामपि तेन निघातप्रवृत्तेः । सन्निहितानान्तु तत्समकालमेव निघात इत्य-न्यत् । *'अलावीत्' इत्यादौ सिचश्चित्त्वे तेनेट उदात्तत्वान्न निघात इति "आद्युदात्तश्च" ( पा० सू० ३-१-३ ) इति सूत्रे भाष्यप्रदीपोद्द्योते निरूपितम्। *अनेन यासुटो ङित्त्वंप्यवयवेऽचरितार्थं लिङ्गं समुदाये विशेष-णमिति न्यायेन समुदाये ङित्त्वं बोद्ध्यम् । ङित्त्वोक्तेरिति । अत्र यद्व-क्तव्यन्तत् "टिड्ढा" ( पा० सू० ४-१-१५ ) इति सूत्रे उक्तम् ।

---

ज्ञापकमिति वाच्यम् । परस्मैपदेष्वित्यस्य विषयसप्तमीत्वेन लावस्थायामेव यासुटि ततो निर्दिश्यमानस्य लस्यादेशे तन्निमित्तकाद्युदात्तत्वे यासुटः सिद्धे उदात्तग्रहणं ज्ञापकमित्याशयात् । युक्तिसिद्धेनाप्यागमा अनुदात्ता इति वचने-न यथा इटोऽनुदात्तत्वन्न भवति तथाह-*अलावीदित्यादाविति । ननु या-सुटो ङित्त्वेऽपि समुदायस्य ङित्त्वाभावात्कथञ्चिनुयादित्यादौ गुणनिषेधादी-त्यत आह-*अनेनेति । यत्तु "श्यासः परस्मैपदेषु" इत्येवं सूत्रमस्तु । परस्मै-पदं यतो विहितन्तदादेः परस्मैपदे परे 'श्यास' प्रत्ययो भवति । श्यासेत्यत्र स-काराकार उच्चारणार्थः । तेन सकारस्य नेत्त्वम् । अयञ्च 'येननाप्राप्ति'न्यायेन शा-पोऽपवादो यद्यपि भवति तथाप्यस्मिन्कृते शकारेत्संज्ञकत्वेन सार्वधातुकत्वा-च्छबादिः प्रवर्त्तते । न च सार्वधातुकत्वेऽप्यस्य कर्त्रर्थत्वाभावेन कथं शबिति वाच्यम् । "भवतेरः" ( पा० सू० ७-४-७३ ) इति निर्देशेन क्वचित्कर्त्रर्थकत्वाभा-वेऽपि शब्भवतीति कल्पनेनादोषात् । न चापवादविषये कथमुत्सर्गप्रवृत्तिरिति वाच्यम् । "सोऽचि लोपे चेत्पादपूरणम्" ( पा० सू० ६-१-१३४ ) इति निर्दे-शेनापवादविषयेऽप्युत्सर्गस्य क्वचित्प्रवृत्तिस्वीकारात् । अन्यथा त्यदाद्यत्वा-प्राप्तियोग्ये विषयेऽचारितार्थ्यरूपस्यापवादत्वबीजस्य "तदोः" ( पा० सू० ७-२-१०६ ) इति सत्वे सत्त्वेन सत्वे कृते त्यदाद्यत्वानापत्तिरिति मतम् । तन्न । भूधातोराशीर्लिङि श्यासप्रत्यये श्यासः सार्वधातुकत्वाच्छप्प्रवृत्तावियादेशा-पत्तेः । शपोऽप्रवृत्तिस्वीकारेऽपि ह्रूयादित्यादौ दीर्घो न स्यात् । सार्वधातुकपर-त्वात् । किञ्च ष्ठिवुप्रभृतिभ्य आशीर्लिङि श्यासप्रत्यये "ष्ठिवुक्लमुचमां शिति" (पा० सू० ७-३-७५ ) इति क्लमुचम्वोर्दीर्घापत्तेः । यदपि ङ्यासुड्विधानेन सिद्धे "ङिच्च" ( पा० सू० १-१-५३ ) इति किमर्थमिति । तदपि न । जागर्यादित्यस्या-सिद्ध्यापत्तेः । "किदाशिषि" ( पा० सू० ३-४-१०४ ) इति कित्त्वातिदेशेन सि-द्धान्ते विशेषविहितेन ङित्त्वातिदेशो बाध्यत इति "जाग्रोऽविचि" ( पा० सू०

सुटा यासुड् नेति । *आत्मनेपदे चारितार्थ्ये ऽपि परत्वात्प्राप्तो बाधो नेत्यर्थः । विषयभेदादिति । एवञ्च यौगपद्यासम्भवरूपविप्रतिषेधाभावान्न परत्वेन बाध इति भावः । *एतेन "एधिषीष्ट" इत्यादौ सुटा सीयुटो येननाप्राप्तिन्यायेन बाधः स्यादित्यपास्तं तकारथकारयोः सुटः सत्त्वेन कार्यिभेदादिति भाष्यकैयटयोः स्पष्टम् । ननु "अस्ति च सम्भवो यदुभयं स्यात्" इति वार्त्तिकमतेऽस्य समाधेर्वक्तुं शक्यत्वेऽपि "सत्यपि सम्भवे बाधनं भवति" इति भाष्यनये प्रथमाद्विर्वचनस्य द्वितीयद्विर्वचनेन बाधवत् सुटापि सीयुटो बाधो दुर्वार इति चेत्, सत्यम् । 'यासुड्विषये सीयुटः प्रतिषेधो वक्तव्यः' इति वचनेना*त्र प्रकरणे बाध्यबाधकभावाभावज्ञापनेनादोषादिति निरूपितं भाष्यप्रदीपोद्द्योते । *अत एव झेर्जुसादिविषये यासुट्सिद्धिः । अन्यथा जुसा यासुटो बाधापत्तिरिति दिक् ॥

लिङः स ( पा० सू० ७-२-७९ ) । "रुदादिभ्यः" ( पा० सू० ७-२-७६ ) इत्यतः सार्वधातुक इत्यनुवर्त्तते । सकारद्वयस्यापीति । युगपत्प्रवृत्त्या लक्ष्यभेदात् *पुनः प्रवृत्त्या वेति भावः ।

यलोप इति । न च तत्र कर्त्तव्येऽङ्गसञ्ज्ञासापेक्षस्येयो बहिरङ्गतयाऽसिद्धत्वमिति वाच्यम् । तस्यामङ्गशब्देन शब्दरूपस्य सप्तम्याद्यन्तोपात्तस्य निमित्तस्यैव ग्रहणं न तु सञ्ज्ञाया अर्थस्य वेत्यदोषात् । एवञ्चेयोऽपरनिमित्तकत्वेनान्तरङ्गत्वमिति बोद्धव्यम् । सार्वधातुकावयवस्येति किमिति । "रुदादिभ्यः" ( पा० सू० ७-२-७६ ) इत्यतः सार्वधातुकग्रहणमत्रानुवर्त्तते । अन्यथा पचेदित्यादौ दीर्घप्राप्त्या चिकीर्ष्या-

---

७-३-८५ ) इति गुणो भवति सम्प्रति तु ङित्त्वस्यौपदेशिकतयाऽस्यातिदेशिकेन कित्त्वेन बाधाभावेन ङित्त्वपर्युदासाद् गुणानापत्तेः । यदपि क्यासुडिति न्यासं कृत्वा "किदाशिषि" ( पा० सू० ३-४-१०४ ) इति सूत्रं त्याज्यमिति । तत्तुच्छम् । धचधातोर्जागृधातोश्च विधिलिङि वच्यात् जागृयादित्यत्र सम्प्रसारणगुणयोरापत्तेः । तस्माद्यथान्यासमेव रमणीयमिति ।

*आत्मनेपदइति । सुट इत्यादिः । *एतेन=विषयभेदप्रदर्शनेन । *अत्र प्रकरण इति । एतेन सुड्यासुटोरपि समावेशः साधितः । *अत एव=बाध्यबाधकभावाभावादेव ।

*पुनः प्रवृत्त्या वेति । अवयवावयवस्यापि समुदायावयवत्वम् । अङ्गुल्यादिवत् ।

दिसादौ अतोलोपप्राप्त्याऽऽनर्थक्येनोभयोरपि बाधः स्यात्, 'मध्येऽपवादाः' इति न्यायेन लोपमेव वा बाधेतेति । स्पष्टञ्चेदं भाष्यकैयटयोः, तदाह-मध्येऽपवादेत्यादि ।

उस्यप ( पा० सू० ६-१-९६ )॥ अपदान्तात्किम् ?, का उस्रा=कोस्रा । न चात्र लाक्षणिकत्वमुसः अपदान्तादित्येतत्सामर्थ्येनेह परिच्छेदकन्यायाप्रवृत्तिज्ञापनात् । *अत एवानर्थकेऽप्रत्यये च भिन्द्युरित्यादौ पररूपसिद्धिः । *अवर्णादुसोऽवयवेऽचीति सूत्रार्थस्तदाह-इति प्राप्ते इति । याशब्दाकारेणेति भावः । नित्यत्वादिति । *एकादेशस्य पूर्वान्तत्वेन ग्रहणादिति भावः । यासुट् इत्यन्तस्येति । *वार्णादाङ्गमित्यनपेक्ष्येदम् । सन्धिरार्ष इति । "आने मुक्"( पा० सू० ७-२-८२ )इति सूत्रे भाष्येऽतो या इति व्यस्तपाठ एव दृश्यते । नन्वेवमपि*भवेत्यकारेणेयुसः पररूपं दुर्वारं, 'यदागमाः' इति न्यायेनेयुस उस्त्वादिति चेन्न । भिन्द्युरित्यसिद्ध्यापत्त्याऽर्थवत्परिभाषाया इव 'यदागमाः' इत्यस्या अप्युस्विषयेऽप्रवृत्तेः । अन्यथाऽऽगमसत्त्वे केवले उस्त्वस्याप्यभावेन तदसिद्धिः स्पष्टैव ।

क्ङिति च(पा०सू०१-१-५)॥ इह चर्त्वेन *गकारोऽपि निर्दिश्यते ।

---

*अत एव=परिच्छेदकन्यायाप्रवृत्तेरेव । सर्वस्योसो निवृत्त्यभावायाह-*अवर्णादित्यादि । ननु कृते पररूपे चेदियादेशस्य प्राप्तिस्तदाऽस्य नित्यत्वं, सैव तु कथमत आह-*एकादेशस्येति । एवञ्च प्राप्तिमात्रेण नित्यत्वन्न तु रूपसिद्धिपर्यन्तमीक्षा कार्या । मूलेऽन्तरङ्गत्वादिति । प्रत्ययमात्रापेक्षत्वेनान्तरङ्गत्वात् । इयादेशस्य त्वाङ्गत्वेन प्रकृतिप्रत्ययोभयापेक्षत्वेन वहिरङ्गत्वमिति भावः । वार्णपरिभाषयैव सिद्धे यासित्येतत्पर्यन्तस्प्रयासो न युक्त इत्यत आह-*वार्णादाङ्गमिति । *एवमपि=यासितिपदच्छेदेऽपि । मूले आर्द्धधातुकसंज्ञ एवेति । "लङः शाकटायन" ( पा० सू० ३-४-१११ ) इतिसूत्रादेवकारानुकर्षः कार्यः । अन्यथाऽस्या आर्द्धधातुकसंज्ञाया अनाकडारीयत्वात्सार्वधातुकसंज्ञया समावेशे शबादिः स्यादिति भावः ।

किदाशिषि ( पा० सू० ३-४-१०४ ) । इदङ्कित्त्वविधानमिज्यादित्यादौ सम्प्रसारणार्थम् । जागर्यादित्यत्र गुणसिद्धिरपि प्रयोजनम् । अन्यथा यासुटो ङित्त्वातिदेशेन गुणो न स्यात् । सम्प्रति तु विशेषविहितेन कित्त्वातिदेशेन ङित्त्वातिदेशो बाध्यत इति तस्य सिद्धिः । सलोप इति । भूयादित्यत्र सुट इव यासुटोऽपि सस्य संयोगादिलोपः । भूयास्तामित्यादौ तु यासुटः सस्यैवेति विशेषः ।

तेन ग्स्नौ जिष्णोः सिद्धिः । स्थास्नुरित्यत्रेत्वापत्त्या नायङ्क्षिदित्याशयेनाह-गिदित्यादि । निमित्ते इति क्ङिति सति ये गुणवृद्धी प्राप्नुत इत्यध्याहारेण सिद्धं, *सिद्धसाध्यसमभिव्याहारन्यायेन निमित्तत्वं बुद्ध्यते इति केचित् । *वार्त्तिककृता तु "तन्निमित्तग्रहणं कर्त्तव्यम्" इत्युक्तं, भाष्यकृता *क्नोः कित्त्वेन ज्ञापकेन प्रत्याख्यातं गुणवृद्धिविशेषणत्वेऽपि क्ङिति अव्यवहितं उपश्लिष्टस्य पूर्वस्य ये प्राप्नुत इत्यर्थस्य सम्भवेन परिभाषाया दुर्वारत्वात् । *अनुवादे परिभाषा नेति तु "इको गुणवृद्धी" ( पा० सू० १-१-३ ) "अचश्च" ( पा० सू० १-२-२८ ) इति सूत्रद्वयविषयमेवेत्युक्तं भाष्ये । तस्य निषेधस्यानुपलम्भाच्च । अधिकरणसप्तमीसम्भवे "उपपदविभक्तेः कारकविभक्तिर्बलीयसी" इति न्यायेन "यस्य च भावेन" ( पा० सू० २-३-३७ ) इति सप्तमी युक्तेत्यप्युक्तम् । सिद्धसाध्येति न्यायस्य *परिभाषया बाध एवोचितः । तन्निमित्तग्रहणेन सामर्थ्यात् ज्ञापकेन वा परिभाषाबाध इति सूचितम् । इक इति च स्वरूपपरमत्रानुवर्त्तते अर्थाधिकारात् । तदाह-इग्लक्षणे इति । इक्पदलक्षणे

---

*गकारोऽपि निर्दिश्यत इति । ककारात्पूर्वमिति शेषः । *सिद्धसाध्यसमभिव्याहारन्यायेनेति । 'सिद्धसाध्यसमभिव्याहारे सिद्धं साध्यायोपुज्यत' इतिन्यायेनेत्यर्थः । दृष्टश्चायं न्यायः-'मलिनं ते वपुः स्नाया' इत्यत्र । केचिदितिकथनेन सिद्धसाध्यसमभिव्याहारन्यायेन निमित्तत्वलाभ इत्यत्र स्वस्यापरितोषं सूचयन् भाष्योक्तरीत्याह-*वार्तिककृता त्विति । *क्नोः कित्त्वेन ज्ञापकेनेति । तद्धि गृध्नुरित्यादौ गुणनिषेधार्थम् । यदि प्रकृतसूत्रे तन्निमित्तेत्यर्थो न स्यात् तदा यत्र क्ङित्प्रत्ययाव्यवधानन्तत्रैव निषेधः स्यादिति क्नोः कित्त्वं व्यर्थमेव स्यात् । ननु "विधौ परिभाषोपतिष्ठते, नानुवादे" इति परिभाषया "तस्मिन्" ( पा० सू० १-१-६६ ) इति परिभाषाया इहानुपस्थानं भविष्यतीत्यत आह-*अनुवाद इति । *परिभाषया=तस्मिन्निति परिभाषया । किञ्च भाष्ये उपधालक्षणस्य गुणस्य प्रतिषेधे सनः कित्त्वविधायकं "हलन्ताच्च" ( पा० सू० १-२-१० ) इति सूत्रमपि ज्ञापकमित्युक्तन्तत्र यद्यप्येवं शङ्का भवति-"हलन्ताच्च" ( पा० सू० १-२-१० ) इति न ज्ञापकम्, धिप्सतीत्यत्र दम्भधात्ववयवस्य लोपसम्पादनेन दिदृक्षति सिसृक्षतीत्यत्र "सृजिदृशोः" ( पा० सू० ६-१-५८ ) इत्यमागमप्रतिबन्धेन च तस्य चारितार्थ्यसम्भवादिति, तथापि "क्ङिति" ( पा० सू० १-१-५ ) इति सूत्रस्य तावदेव चेत्प्रयोजनन्तर्हि "सृजिदृशोर्झल्यमकिति सनि" "इको झल्" "दम्भेश्च" इत्येव वदेदिति "हलन्ताच्च" इति सामान्यसूत्रं ज्ञापक-

इत्यर्थः । भूयास्तामिति । *धातोर्विहिततसादीनामित्यर्थेन परत्वाद् "आद्युदात्तश्च" ( पा० सू० ३-१-३ ) । इति सूत्रभाष्यरीत्या* लस्य यासुटि अन्तरङ्गत्वाद्वा पूर्वं यासुट्यपि निर्दिश्यमानपरिभाषया न क्षतिः ।

माङि लुङ् ( पा० सू० ३-३-१७५ ) ॥ *मास्तु इत्यादौ तु निषेधार्थो माशब्दो न माङिति न दोष इति केचित्, तन्न । "आङ्माङोश्च" ( पा० सू० ६-१-७४ ) इति सूत्रस्थेन "माङो विशिष्टस्य ग्रहणं किमर्थम् ? । प्रतिषेधार्थकसम्प्रत्ययार्थम्, प्रमाच्छत्रमित्यादौ माभूत्" इति भाष्येण तदभावबोधनादिति परे ।

गापाविहेति । *व्याख्यानादिति भावः । *अत एव "गापोर्ग्रहणे इण्पिबत्योर्ग्रहणम्" इति उक्तं भाष्ये ।

भूसुवोः (पा० सू० ७-३-८८) । *अत्र पितीत्यनुवृत्तावननुवृत्तौ वा*फलदोषयोरभावेन तदनुक्तिः ।

भत्वमिति । तेन कुत्वजश्त्वे न । विद्यमानादिति । तत्त्वञ्च=*सर्वादेशेनानपहृतत्वम् । *अत एवासीदित्यादौ न दोषः । *भाष्यात्तु "अ-

---

मेवेति सा निवर्त्तनीया । आगमविशिष्टस्य तामादेशवारणायाह-*धातोर्विहितेति । *भाष्यरीत्येति । परस्मैपदेष्वित्यस्य विषयसप्तमीत्वेनेत्यादिरीत्येत्यर्थः ।

दण्डिसम्मतं समाधानम्भाष्याननुगुणमित्याह-*मास्त्वित्यादाविति । प्रतिषेधार्थकसम्प्रत्ययार्थमित्यनेन प्रतिषेधार्थको ङिदेवाङित्तु न प्रतिषेधार्थक इति ध्वनितम् । अत एव प्रतिषेधार्थकसम्प्रत्ययार्थमित्यस्य प्रत्युदाहरणम्प्रमाछन्द इति दर्शितम् । व्याख्यातञ्च कैयटेन प्रोपसृष्टान्माङ "आतश्चोपसर्गे" (पा० सू० ३-३-१०६ ) इत्यङ् । यद्यप्ययम्माङ् तथापि टावन्तन्न माङिति । एवञ्च यत् क्वचित्पुराणादौ मास्त्विति दृश्यते तत्त्वार्षत्वात्साधु, लौकिकन्त्वसाधुरेव । *व्याख्यानादिति । प्रकृतसूत्रीयभाष्यसम्मतव्याख्यानादित्यर्थः । तदेव दर्शयति-*अत एवेति । तद्ग्रहणस्यैवेष्टत्वादेव ।

*अत्र=भूसुवोरिति सूत्रे । *फलदोषयोरभावेनेति । पितीत्यस्य फलम्पित्स्येव प्रवृत्तिरिति तच्च गुणविधायकशास्त्रस्य क्ङिद्भिन्नसार्वधातुक एव प्रवृत्त्याऽन्यथासिद्धमिति तदभावः, पितीत्यस्यानुवृत्तौ दोषश्च पिद्भिन्ने प्रवृत्त्यभावापत्तिरूपो वाच्यस्स चात्र नास्त्येवेति भावः ।

*सर्वादेशेनानपहृतत्वमिति । श्रौतो यः सर्वादेशस्तेनानपहृतत्वमित्यर्थः । *अत एव=उक्तस्य विद्यमानत्वस्य विवक्षणादेव । अभूदित्यत्र श्रौतो यः सर्वादेशो लुक् तेनापहृतत्वमेवास्तीति विशिष्टाभावः । आसीदित्यत्र तु "आटश्च" ( पा० सू० ६-१-९० ) इतिवृद्धिरूपादेशसत्त्वेऽपि स न श्रौतः सर्वादे-

स्तिस्सिचोऽपृक्ते" इति सूत्रपाठो लभ्यते । तत्र स् इति मध्यमणिन्यायेनोभाभ्यां सम्बध्यते । सान्तादस्तेः सान्तात्सिचश्चेत्यर्थः । लुक्यपि स्थानिवत्त्वं न । अल्विधित्वात् । प्रत्ययलक्षणसूत्रन्तु नियमार्थम् । विद्ध्यर्थत्वेऽपि सान्तादिति विशेषणसामर्थ्येन श्रूयमाणसान्तपरम् । *अत एव वार्त्तिककृता सकारः सिच एव विशेषणमित्याशयेन भुव ईटि स्थानिवत्त्वप्रतिषेध उक्तः* न तु सिज्लुकोऽपि तन्निषेध आरब्धः । "सिचस्स्" इति प्रश्लेषे द्विसकारको निर्देशः" इत्यस्य भाष्यस्यासङ्गतिः । तदुच्चारणाभावादिति भाष्यप्रदीपोद्द्योते विस्तर इत्याहुः ।

इति प्राप्ते इति । प्रत्ययलक्षणेन प्राप्तिः । *आदन्तादेवेति । *विपरीतनियमस्तु न, *व्याख्यानात् "च्लि लुङि" (पा० सू० ३-१-४३) इत्यत्र प्रकृतसूत्रे च भाष्ये स्पष्टमेतत्सर्वम् ।

अडाटाविति । *लुङादिषु यदुक्तं तन्नेति व्याख्यानादिति भावः ।

---

श इति निरुक्तं विद्यमानत्वमस्त्येव । आनुमानिकस्य सर्वादेशत्वस्य सत्त्वेऽपि तस्य न श्रौतत्वमिति भावः । *भाष्यादिति । 'द्विसकारको निर्देशः' इति भाष्यादित्यर्थः । *अत एव=द्विसकारकनिर्देशस्याभिमतत्वादेव । *प्रतिषेध उक्त इति । "आहिभुवोरीट्प्रतिषेधः" (का वा०) इत्यनेनेति शेषः ।

आतः ( पा० सू० ३-४-११० ) । पूर्वेण सिद्धे नियमोऽयमित्याशयेनाह—*आदन्तादेवेतीति । *विपरीतनियम इति । आदन्ताच्चेत् सिज्लुक्येवेति विपरीतनियम इत्यर्थः । *व्याख्यानादिति । प्रकृतसूत्रभाष्ये "किमिदं जुस्याकारग्रहणं नियमार्थम्, आहोस्वित् प्रापकम् ? । कथञ्च नियमार्थं स्यात् कथञ्च प्रापकम् ? । यदि सिज्ग्रहणमनुवर्त्तते ततो नियमार्थमथ निवृत्तन्ततः प्रापकम् । (नियमपक्षस्य सिज्ग्रहणानुवृत्तौ सत्यामातः सिचश्च परस्य झेरित्यर्थे सिचः परत्वात्पूर्वेण सिद्धेऽयं योगो नियमार्थ इत्येवमुपपत्तिः कार्या । ततः) नियमार्थमिति चेत्सिज्लुग्ग्रहणं कर्त्तव्यमातः सिज्लुगन्तादिति वक्तव्यम्, इह माभूत्-अकार्षुः, अहार्षुः, अस्तु तर्हि प्रापकम । प्रापकमिति चेत्प्रत्ययलक्षणप्रतिषेधो वक्तव्यः । अभूवन्निति प्रत्ययलक्षणेन जुस्भावः प्राप्नोति" इत्याद्यभिधाय "अस्तु तर्हि नियमार्थम् । ननु चोक्तं सिज्लुग्ग्रहणङ्कर्त्तव्यमिति । नैष दोषः । तुल्यजातीयस्य नियमः । कश्च तुल्यजातीयः । यो द्वाभ्यामनन्तरः । आतः सिचश्च" । द्वाभ्यामानन्तर्यञ्च सिज्लुक्येव सम्भवतीतिसिज्लुकीति लभ्यम् । यदीदं सिज्लुकि सति प्रवर्त्तते तदा प्रत्ययलक्षणेन पूर्वसूत्रेण सिद्धे नियमोऽयम्भवति स च यथा अभूवन्नित्यादिलक्ष्यसिद्धिर्भवति तथैव कल्पनीय इत्यभिप्रायकव्याख्यानादित्यर्थः ।

उभयोर्निषेधलाभस्य प्रकारमाह—*लुङादिष्विति ।

लिङ्निमित्ते ( पा० सू० ३-३-३९ )। हेतुहेतुमद्भावादित्यादिना* "आशंसावचने लिङ्" ( पा० सू० ३-३-१३४ ) इत्यपि गृह्यते इत्येके। अतिपत्तिः=अनभिनिर्वृत्तिः। उदाहरणे सुवृष्टिभवनसुभिक्षभवनयोर्हेतुहेतुमतोर्भविष्यत्कालयोरनभिनिर्वृत्तिरितो वाक्याद्गम्यते। प्रमाणान्तराच्च तयोरतिपत्तिं वक्ताऽवगत्य वाक्यं प्रयुङ्क्ते।

आनि लोट् ( पा० सू० ८-४-१६ )। *उपसर्गात्परसमुदायावयवाऽऽनिशब्दनकारस्य णत्वमित्यर्थः। *प्रहिमानीत्यादौ तु न दोषः। अनर्थकत्वात्प्रादीनामनुपसर्गत्वाच्च। *एतच्च लोड्ग्रहणमनर्थकमिति भाष्ये स्पष्टम्।

दुरः षत्वणत्वेति (का० वा०)। दुरः कृतरेफसान्तस्याप्यत्रानुकरणात्तस्याप्ययं निषेध इति निरूपितम्।

---

लिङ्निमित्ते लङ् क्रिया (पा० सू० ३-३-१३९)। "भविष्यति मर्यादावचने" (पा० सू० ३-३-१३६) इति सूत्राद्भविष्यतीति सम्बध्यते। लिङ्निमित्तशब्देन किमिह ग्राह्यमित्याकाङ्क्षायामेतत्प्रकरणोपात्तमेव ग्राह्यम्। तच्च शीघ्रोपस्थितिकत्वाद् "हेतुहेतुमतोर्लिङ्" ( पा० सू० ३-३-१५६ ) इति, तदेवादावुपात्तमादिना चोत्तरसूत्रोपात्तस्यैव पूर्वसूत्रोपात्तस्यापि ग्रहणमित्याशयेनाह-*आशंसावचन इति। अनभिनिर्वृत्तिर्यस्मिन्देशे काले वा क्रिययोरुत्पत्तियोग्यता तदन्यस्मिन्देशे काले वा तयोरुत्पत्तिसम्भावनामिति यावत्। सम्भावनञ्चोत्कटकोटिकः संशयः। तत्राभावनिष्ठोत्कटत्वाख्यो विषयताविशेषो ग्राह्यः। प्रमाणान्तरात्। येन हेतुना हेतुभूतक्रिया भवति, ज्ञायते च, तदतिरिक्तेन हेतुना सम्भावितेन तस्याः क्रियाया अभावो यदा ज्योतिःशास्त्रादिकथितलक्षणज्ञानेनोपस्थितो भवति तदा तदभावानुमापकलिङ्गज्ञानमिह प्रमाणान्तरं विवक्षितम्। तयोः क्रिययोर्हेतुहेतुमद्भावश्च लोकतो ज्ञातो ग्राह्यः। यथा-मङ्गलादिग्रहकृतवृष्टिप्रतिबन्धे सम्भाविते वक्ता "सुवृष्टिश्चेदभविष्यत्तदा सुभिक्षमभविष्यत्" इति प्रयुङ्क्ते। वर्त्तमानप्रागभावप्रतियोगिसम्भावितहेतुभूतसुवृष्टिभवनजन्यं वर्त्तमानप्रागभावप्रतियोगिसम्भावितं सुभिक्षकर्तृकभवनमिति बोधः। अत्र क्रिययोर्हेतुहेतुमद्भावे तत्कर्त्रोर्हेतुहेतुमद्भावोऽर्थात्फलति।

आनि लोट् ( पा० सू० ८-४-१६ )। अत्र लोडिति लुप्तषष्ठीकम्पदम्। "उपसर्गादसमासेऽपि" ( पा० सू० ८-४-१४ )। इत्यस्त उपसर्गादिति सम्बध्यते। उपसर्गपदञ्चोपसर्गावयवपरन्तच्चाभेदेन रषाभ्याम् इत्यस्य विशेषणमिति उपसर्गावयवरषाभ्यामुत्तरस्यानिशब्दावयवस्य नस्याडादिव्यवहितस्य णत्वमित्यर्थः फलितः, तत्पर्यवसितार्थमाह—*उपसर्गादिति। *प्रहिमानीत्यादाविति। आदिना प्रवपानीत्यादिसङ्ग्रहः। *एतच्चेति

*अन्तः शब्दस्येति (का० वा०) । *"हन्तेरत्पूर्वस्य" ( पा० सू० ८-४-२२) इत्युत्तरम् "अन्तरदेशे" ( पा० सू० ८-४-२४ ) इति तु देशप्रतिषेधार्थमिति भावः । "अयनं च" ( पा०सू० ८-४-२५ )इत्युत्तरसूत्रमपि "कृत्यचः"(पा०सू०८-४-२९)इति सिद्धे देशप्रतिषेधार्थमेव ।

शेष विभाषा ( पा० सू० ८-४-१८ ) । अकखादाविति-च्छेदः । ननु संहिताधिकारात्तद्विवक्षाऽविवक्षायां रूपद्वयसिद्धौ विभाषाग्रहणं व्यर्थमत आह—संहितेति । *अत्रैकपदशब्देन *अखण्डम्पदम् । *अत एव 'नित्या समासे' इति चरितार्थम् । अत एवाग्रे अग्रे इत्यादौ पदद्वित्वे संहिता अनित्यैव । अखण्डत्वश्च=*पदत्वाभाववदुत्तरखण्डकत्वम् ।

---

उपसर्गात्परस्यार्थवत एवानिशब्दस्य ग्रहणसिद्धौ च । *अन्तःशब्दस्येतीति । "अन्तरपरिग्रहे" ( पा० सू० १-४-६५ ) इति सूत्रे वार्त्तिकमिदम् । नन्वनेन णत्वे कर्त्तव्ये चेदुपसर्गत्वन्तदाऽन्तर्हण्यादित्यत्र "हन्तेरत्पूर्वस्य" ( पा० सू० ८-४-२२ ) इत्येव सिद्धे "अन्तरदेशे" ( पा० सू० ८-४-२४ ) इत्यस्य वैयर्थ्यापत्तिरत आह-*हन्तेरदिति ।

*अत्र=संहितैकपद इतिवचने । *अखण्डम्पदमिति । विवक्षितमिति शेषः । अखण्डपदत्वञ्च=पदसंज्ञायोग्यद्वितीयभागानवयवकत्वाविशिष्टपदत्वम् । पदसंज्ञायोग्यद्वितीयभागनिवेशेन राजीयतीत्यत्र नाखण्डपदत्वक्षतिः । उत्तरभागे पदसंज्ञायोग्यत्वनिवेशात् परमाश्वेनेत्यत्र "उत्तरपदत्वे चापदादिविधौ" इत्यस्य प्रत्याख्यानरीत्याऽश्वशब्दस्य भत्वेऽपि नाखण्डपदत्वव्यवहारः । वाक्यमिह यथाकथञ्चिदपि यः पदसमुदायः स विवक्षितो न तु परस्परान्वितार्थकत्वपर्यन्तमपि निविष्टम् । तेनानर्थकस्यापि समुदायस्य सङ्ग्रहः । अकखादावषान्तेत्यत्र नञ्समासः । अयमुत्तरपदार्थप्रधान इति कखादिषान्तपदार्थस्य प्राधान्यं तस्य चोपदेशपदसापेक्षत्वेऽप्यसामर्थ्यन्न शङ्कनीयम् । न चैवमपि कखपदस्योपदेशपदसापेक्षत्वेनासामर्थ्यादादिपदेन षपदस्यान्तपदेन च समासो न स्यादिति वाच्यम् । उपदेशपदस्य कर्मघञन्ततयोपदिश्यमानो यः कखादिरारोपितस्तस्येह विवक्षितत्वात् । उपदेशावस्थायां यः ककारखकारादिस्तद्भिन्न इति तु फलति । *अत एव=निरुक्तस्यैकपदत्वस्य विवक्षितत्वादेव । *पदत्वाभाववदुत्तरखण्डकत्वमिति । पदत्वाभाववानुत्तरखण्डो यस्य तत्त्वमित्यर्थः । न चैवं 'राजाश्वः' इत्यादौ "उत्तरपदत्वे चापदादिविधौ" इति निषेधस्य प्रवृत्तौ पदत्वाभाववदुत्तरखण्डकत्वसत्त्वादेकपदत्वलक्षणस्य समाससामान्यावृत्तिपदार्थकत्वानुपपत्तिरिति वाच्यम् । पदसंज्ञायोग्यत्वाभावस्य विवक्षितत्वात् । न चात्र नोत्तरपदस्य कार्यित्वमिति वाच्यम् । राज्ञो अः राजाः, पूज्य इत्यादौ दोषापत्तेः । अत्र द्वितीयाबहुवचनान्तराजन्शब्दस्य 'अद्' धातुप्रकृति-

तेन राजीयतीत्यादौ न दोषः । अन्यथा तत्र पक्षे शवेकादेशोऽपि न स्यादिति बोद्ध्यम् । अर्थनिर्देशश्चेति । भूसत्तायामित्यादिरभियुक्तकृत*इत्यर्थः । स च क्रियावाचित्वबोधार्थ इति भावः । *पाणिनिस्तु कांश्चिदर्थरहितान्पठति, कांश्चिदर्थसहितान् । *अत एव भूवादिसूत्रे "परिमाणग्रहणं कर्त्तव्यम् । कुतो ह्येतत्?, भूशब्दो धातुसञ्ज्ञो भविष्यति न पुनर्भ्वेधशब्दः"इति भाष्ये उक्तम्, *"चुटू" (पा० सू० १–३–७) इति सूत्रे "यदयमिरितः कांश्चिन्नुमनुषक्तान्पठति 'उबुन्दिर् निशामने, स्कन्दिर् गतिशोषणयोरिति, तेन नेरितामिदिद्विधिः"इति भाष्ये उक्तम्, तथा "नमोवरिव" (पा० सू० ३–१–१९) इति सूत्रे भाष्ये उक्तम्—"कः खल्वपि पचादीनां क्रियावचनत्वे यत्नं करोतीति?, अथ खल्वप्याचार्यश्चित्रयति क्वचिदेकं क्वचिन्न"इति । उपलक्षणमिति । "अनेकार्था अपि धातवो भवन्ति"इति भाष्यमत्र मानम् । तच्च प्रयोगानुसारेणैव, न त्वमर्यादम् । भाष्यस्थापिशब्दात् । *एवञ्च "सेधतेर्गतौ" (पा० सू० ८–३—११३) इति सूत्रे गतौ इत्युपादानात् षिधगत्यामित्यर्थनिर्देशोऽपाणिनीय इति बोध्यम् । *द्योतका इति । *अत एवानुभवत्यादेः सकर्मकत्वम् । अत्रोपस-

---

कडप्रत्ययान्तेन अशब्देन समासः, कृदुत्तरपदप्रकृतिस्वरोऽत्र भवति, पदादिविधित्वसम्भावनया न तस्य निषेधस्य प्रवृत्तिरिति यद्यपि शङ्का भवति तथापि योग्यतानिवेशे न कोऽपि क्लेशः । एवमुत्तरखण्डे पदत्वाभावनिवेशे समासस्य 'राजाश्व' इत्यादेर्यं उत्तरखण्डः श्व इति तस्य पदत्वाभाववत्त्वेनाखण्डपदत्वमेवायाति । अर्थवत्त्वन्तूत्तरखण्डे निवेशयितुमशक्यम्, राजीयतीत्यस्यासङ्ग्रहापत्तेरिति यथाश्रुतमेतद्वक्तुमशक्यम् । अतः पूर्वोक्तार्थ एव कल्पनीय इति दिक् । प्रकृतसूत्रे उपदेशपदस्य प्रयोजनन्तु प्रनिचकार, प्रनिचखाद, प्रनिरोक्ष्यतीत्यादिव्यावृत्तिः । *अभियुक्तकृत इति । एतेन मूलोक्तार्थनिर्देशस्य सप्रमाणत्वं लब्धम् । एवमुपादानस्य फलमाह–*पाणिनिस्त्विति । *अत एव=अर्थनिर्देशरहितस्य भूशब्दस्य पाठादेव । क्वचिदर्थनिर्देशसहितः पाणिनेः पाठ इत्यत्रापि भाष्यमेव प्रमाणम्, तत्सूचयति–*चुटू इति सूत्र इति । *एवञ्च=अर्थनिर्देशस्यासार्वत्रिकत्वे च । *द्योतका इतीति । समभिव्याहृतधातुगता या तत्तदर्थनिरूपिता शक्तिस्तदुद्बोधका इत्यर्थः । *अत एव=उपसर्गाणान्द्योतकत्वादेव । अनुसमभिव्याहारेण भूधातुनिष्ठा याऽनुभवानुकूलव्यापारनिरूपिता शक्तिः सा उद्बुध्यते=उद्बुद्धसंस्कारविषयतावती भवति, ततस्तस्मात्स्मरणम्, ततोऽनुभवानुकूलव्यापारोपस्थितिस्ततः शाब्दबोधः, एवं सर्वत्र द्योतकविषये बोध्यम् । अत्र फलव्यापारयोः पृथग्वाच्यत्वम् । विषयता फलतावच्छेदकसम्बन्धः ।

गास्त्वित्युक्त्या* निपातानां *द्योतकत्वं वाचकत्वञ्चाभ्युपैति ।

एध वृद्धौ । अकर्मकः* ।

*वृद्धिक्षयभयजीवितमरणं लज्जासत्तास्थितिजागरणम् ।
शयनक्रीडारुचिदीप्त्यर्थं धातुगणं तमकर्मकमाहुः ॥

इत्यभियुक्तोक्तेः ।

टित आत्मनेपदानाम् (पा०सू०३–४–७९)। आत्मनेपदशब्देनात्र प्रकृतास्तङ एव* गृह्यन्ते । तेन आनस्य* न इति भाष्ये स्पष्टम् ।

सार्वधातुकम् ( पा० सू० १–२–४ )। अपिदिति पर्युदासः। न च यवे इत्यत्र परादिवद्भावेन शविटोरेकादेशस्यापित्वान्ङित्त्वे *गुणानापत्तिः । एकादेशस्य पूर्वविधौ स्थानिवत्त्वेनादोषात् । *यत्तु वदन्ति–पिदार्द्धधातुकयोरिति पठित्वा इदन्त्यक्तुं शक्यमिति, तन्न । 'मृष्टे' इत्यादौ मृजेर्वृद्धेः "क्ङिति च" ( पा० सू० १–१–५ ) इति निषेधानापत्तेः ।

---

फलतावच्छेदकसम्बन्धेन फलाश्रयस्यैव कर्मत्वम् । अनुभवनिष्ठव्यापारजन्यतावच्छेदकसम्बन्धश्च समवायसम्बन्धावच्छिन्नाश्रयत्वम् । व्यापारश्चात्ममनःसंयोगः, व्यापारतावच्छेदकसम्बन्धोऽपि प्रकृते समवायः । एवञ्च फलतावच्छेदकसम्बन्धव्यापारतावच्छेदकसम्बन्धाभ्यां फलव्यापारयोर्वैयधिकरण्यात्सकर्मकत्वम् । यत्र तु ताभ्यां सम्बन्धाभ्यान्तयोः सामानाधिकरण्यन्तत्राकर्मकत्वम् । न चैषा व्यवस्था वचनबलात्कल्प्यत इति भ्रमितव्यम् । यत्र फलतावच्छेदकसम्बन्धेन फलाधिकरणवृत्तित्वरूपफलसामानाधिकरण्यं व्यापारे तत्र परया कर्तृसंज्ञया कर्मसंज्ञाया बाधादेवाकर्मकत्वस्य सिद्धेः । *इत्युक्त्या=विशेषोक्त्या । *द्योतकत्वं वाचकत्वञ्चेति । प्रयोगभेदेनेत्यादिः । इदम्मञ्जूषादौ स्फुटमित्यत्र न तन्यते ।

*अकर्मक इति । वृद्धिस्तदनुकूलो व्यापारश्च धात्वर्थः । व्यापारजन्यतावच्छेदकः, फलतावच्छेदकसम्बन्धश्च स्वरूपसम्बन्धावच्छिन्नाश्रयतालक्षण एक एवेति । तेन सम्बन्धेन फलस्य व्यापारसमानाधिकरणत्वादकर्मकत्वमिति । वृद्ध्यर्थकस्याकर्मकत्वे प्राचामपि सम्मतिमाह—*वृद्धीति ।

*तङ एवेति । तिबादीनामुक्तानामनुवृत्त्या षष्ठ्या विपरिणामेनात्मनेपदानामित्यस्य विशेषणादिति भावः । *आनस्य=पचमानो याचमान इत्येतद्घटकानस्य ।

*गुणानापत्तिरिति । "क्ङिति च" ( पा० सू० १–१–५ ) इति निषेधादिति शेषः । "सार्वधातुकमपित्" ( पा० सू० १–२–४ ) इति सूत्रस्यापिति गुणव्यावृत्तिरेव फलं, तच्च गुणविधायकसूत्रे पिद्ग्रहणेनैव सिद्धमितिभ्रममूलिकामाशङ्कान्निराकरोति–*यत्त्विति ।

थासः से (पा० सू० ३-४-८०)। तद्वदेशानां टेरेत्वं नेति ज्ञापनायैकारोच्चारणम्* ।

इजादेश्च गु (पा० सू० ३-१-३६)। "धातोरेकाच" (पा० सू० ३-१-२२) इत्यतो धातोरिति, "कास्प्रत्यया" (पा० सू० ३-१-३६) इत्यत आम् लिटीति चानुवर्त्तते। इयेषेत्यादौ तु नाम्। सन्निपातपरिभाषाविरोधात्। लिण्निमित्ता हि *तस्य गुरुमत्ता। इजादेर्गुरुमतो विहिते लिटीति वाऽर्थान्न दोषः। *'इचो गुरोः' इत्येवा*नृच्छ इति पर्युदासादर्थान्तरस्यासम्भवाच्चेजादेर्गुरुमत इत्यर्थलाभे मतुब्ग्रहणमादिग्रहणञ्च स्पष्टार्थम्। मतुब्ग्रहणादौपदेशिकगुरुमतो* ग्रहणमिति तु न युक्तम्। इरिव ऋजीखादेरुच्छेश्चामनापत्तेः। तत्र हि नुमतुगुत्तरं गुरुमत्ता, अनृच्छ इत्यस्य वैयर्थ्यापत्तेश्च* । *आदिग्रहणान्मुख्येजादेरेव ग्रहणं न तु व्यपदेशिवद्भावेनेजादेरित्यपि न युक्तम्। ईङ्गताविरखादेरयाञ्चक्रे इति माधवाद्युदाहृतस्यासङ्गत्यापत्तेः। न च ऋच्छेर्लिटि गुणविधानसामर्थ्यादेव तत आमभावे सिद्धेऽनृच्छ इति व्यर्थम्। आम्बाधापेक्षया "तस्मिन्" (पा० सू० १-१-६६) इति परिभाषाबाधेन *व्यवधानेऽपि *गुणप्रवृत्त्या *तत्सामर्थ्याभावेन *तत्सार्थक्यादिति तात्पर्यम्। ज्ञापकादि-

---

*एकारोच्चारणमिति। एवञ्चेदमेवैकारोच्चारणन्तत्र ज्ञापकमस्तु वक्ष्यमाणन्त्वेतत्फलमिति बोध्यम्।

*इजादेश्च गुरुमतः (पा० सू० ३-१-३६)। तस्य=इषधातोः। *इचो गुरोरिति। अत्र "यस्मिन्विधिः" इतिपरिभाषया तदादिविधिरिति केचित्, तन्न। विशेषणविशेष्ययोः सप्तम्यन्तत्वे एव तत्प्रवृत्तेस्तस्माद्वक्ष्यमाणानृच्छ इति प्रतिषेधादेव तदादिविधिः। एवं गुर्वंशे तदन्तविधिना गुर्वन्तादित्यर्थोऽपि नेत्याह- *अनृच्छ इति पर्युदासादिति। *औपदेशिकगुरुमत इति। तेनेयेषेत्यस्य सिद्धिरित्याशयः। *वैयर्थ्यापत्तेश्चेति। अस्य हि नौपदेशिकगुरुमत्ता, किन्तु तुङ्निमित्ता। अन्योक्तस्प्रकृतसूत्रस्थादिग्रहणप्रयोजनं खण्डयति-*आदिग्रहणादित्यादिना। *व्यवधानेऽपि=आमोऽनुप्रयुज्यमानकृञादेश्च व्यवधानेऽपि। *गुणप्रवृत्त्या="ऋच्छत्यृताम्" (पा० सू० ७-४-११) इति गुणप्रवृत्त्या। *तत्सामर्थ्याभावेन=गुणविधानसामर्थ्याभावेन। *तत्सार्थक्यादिति। प्रकृतसूत्रस्थस्यानृच्छ इति पर्युदासस्य सार्थक्यादित्यर्थः। अनृच्छ इति किम्? आनर्च्छ। ननु "ऋच्छत्यृताम्" (पा० सू० ७—४—११) इति लिटि गुणविधानाल्लिङ्गाद्दच्छेर्लिट्याम्न भविष्यति। न च व्यवधानार्थन्तत् स्यादिति वाच्यम्। प्रकृतसूत्रेऽनृच्छ इतिपदाभावे ऋच्छेर्लिटि परे आमो गुणस्य च प्राप्तौ प्रतिपदोक्तत्वादपवा-

ति । ननु मित्त्वादन्त्यादचः परत्वसामर्थ्याद्असञ्जातविरोधित्वन्यायेन सवर्णदीर्घबाधोऽस्त्विति चेन्न । मध्यानसवर्णदीर्घबाधापेक्षया इत्सञ्ज्ञाबाधस्यैवौचित्यात् ।

कृञ्चानु ( पा० सू० ३-१-४० ) । "कास्प्रत्ययात्" ( पा०सू० ३-१-३५ ) इति सूत्रादनुवृत्तमामिति पञ्चम्या विपरिणम्यते, लिटि परत उपश्लिष्टस्य कृञ आमन्तादनुप्रयोग इति सूत्रार्थस्तत्फलितमाह-आमन्ताल्लिट्परा इति । आमन्तादिति पञ्चम्या निर्दिश्यमानपरिभाषया मशब्देन चाव्यवहिते एव प्रयोगः । अनुशब्दात्पश्चादेव इति च बोद्ध्यम् । कृञ्ग्रहणमिति । कृञ एवानुप्रयोगेऽनुप्रयोगश्चेत्येव सिद्धे तद्वैय-

---

दत्वाच्च गुणे इजादित्वाभावादेवाम्न भविष्यतीति व्यवधानार्थताया वक्तुमशक्यत्वादिति चेन्न । "अन्तरङ्गानपि" इतिन्यायेन लुक्प्रयोजकसमासादीनाम्प्राबल्यबोधनवदामोऽपि तेन न्यायेन बलवत्त्वं स्यात् । एवञ्च ऋच्छेर्लिटि प्रतिपदोक्तादपि गुणात्पूर्वमामि लुकि लिट्परकृञोऽनुप्रयोगे व्यवधानेऽपि गुणसम्पादकतया ऋच्छेर्गुणविधानस्य चरितार्थतयाऽनृच्छ इतिपर्युदासस्यावश्यकत्वमित्याशयात् । अत एवोक्तम्-इति तात्पर्यमिति । अत एव "सर्वविधिभ्यो लुग्विधिर्बलवान्" इति प्राचामुक्तिरपि सङ्गच्छते । अचः परत्वसामर्थ्यादिति । आस्कास्धातोरन्त्याचःपरत्वसाधकतद्विषयकवाक्यकल्प्याऽऽम्प्रत्यये मकारोच्चारणसामर्थ्यादित्यर्थः । असञ्जातविरोधि वन्यायेनेति । न सञ्जातो विरोधी यस्य सोऽसञ्जातविरोधी तस्य भावस्तत्त्वम् । प्रकृते च विरोधी वैयर्थ्यशङ्कोद्भव एव । यद्यत्र सवर्णदीर्घस्य बाधः कल्प्यते तदा कस्यापि व्यर्थत्वशङ्का न भवतीति तद्बाध एवोचित इति भावः । औचित्यादिति । 'गुणे त्वन्याय्यकल्पना' इतिन्यायेन गुणबाधकल्पनस्योचितत्वात् ।

आमः ( पा० सू० २-४-८१ ) । आम, आमतुरित्यत्र तु न लुक् । उपजीव्यविरोधाल्लाक्षणिकत्वाच्च । अयञ्च लुक् लावस्थायामेवादेशापवादत्वात् । लकारस्य च कृत्त्वात्तदन्तादौत्सर्गिके सुपि कृतेऽपि च प्रवर्त्तते । अत एवैधाञ्चक्र इत्यादौ "तिङ्ङतिङः" ( पा० सू० ८-१-२८ ) इतिनिघातसिद्धिः । अत्र लेरिति नानुवर्त्तते । तेन विदाङ्कुर्वन्त्वित्यत्र लोटोऽपि लुक्सिद्धिः । आमन्तादिति पञ्चम्या इति । सूत्रव्याख्यानवाक्यस्थपञ्चम्या इत्यर्थः । इति च बोध्यमिति । एतदर्थमेवेदं सूत्रम् । अनुप्रयोगस्य तु, कालसमानसङ्ख्यापुरुषविशेषस्याभिव्यक्त्यर्थं सूत्राभावेऽपि सिद्धेः । आमन्तस्य तु न तत्प्रतिपादनसामर्थ्यम् । अनभिव्यक्तार्थकत्वात् । न च धात्वन्तरानुप्रयोगनिवृत्त्यर्थं सूत्रमस्त्विति वाच्यम् । क्रियासामान्यार्थकतयैषामनुप्रयोगस्यैव सम्भवादिति भावः । "कृभ्वस्तियोगे"(पा०सू० ५-४-५०) इति सूत्रे च भ्वस्तिसाहचर्यात् क्रियासा-

ऽर्थः स्पष्टमेव । तेषाङ्क्किरेति । *एधभृञादयः फलानुकूलव्यापारवा-
चकाः। कृञ् तूत्पत्त्यनुकूलव्यापारवाची भवस्ती च सत्तानुकूलव्यापारवाच-
कौ आम्प्रकृतिसमभिव्याहारे चोत्पत्त्यादिकमामन्तार्थफलनिष्ठमेव । एव-
ञ्च एधाञ्चक्रे इत्यस्यैककर्तृकवृद्ध्यनुकूलव्यापाराभिन्नपरोक्षानद्यतनभूत
उत्पत्त्यनुकूलोव्यापार इति बोधः । सम्पदादिस्त्विवति । "अभिविधौ स-
म्पदा च" (पा० सू० ५-४-५३) इति सूत्रे पठित इत्यर्थः । अनन्वि-
तार्थत्वादिति । सम्पदेर्हि सिद्धवस्तुनो योग्यरूपान्तरापत्तिरूपार्थकत्वा-
दिति भावः । *द्रव्यं सम्पादयतीत्यादौ तु धातूनामनेकार्थत्वाक्रान्तताकर-
णमर्थः केवलपदेऽप्यनुप्रयोगो नापाद्यः । उत्तरदेशसंयोगानुकूलव्यापार-
वाचित्वेन तस्यापि विशेषवाचित्वात् । *एतेन कृञ्सजातीयानान्धातूना-
मेव प्रत्याहारे ग्रहणात्सम्पदेर्विशिष्टस्याधातुत्वाच्चिन्त्यमिदमित्यपास्तम् ।

*अतद्गुणेति । आमन्तस्यात्मनेपदानर्हत्वात्प्रत्ययग्रहणा न्वेति
भावः । तृतीयान्ताद्वतिः, अनुप्रयोगस्येति कर्मणि घञ् पञ्चम्यर्थे षष्ठी ।*अ-
त्र न प्रत्याहारग्रहणम् । अनुप्रयोगम्येत्येव सिद्धे कृञ्ग्रहणात् । पूर्व-

---

मान्यार्थकस्यैव कृञो ग्रहणम् । 'कृञ्' हिंसायामिति स्वादिस्तु तथा नेति बो-
ध्यम् । अनुप्रयोगे सति वाक्यार्थनिष्पत्तिमाह-*एधेत्यादि । अकर्मकाणामपि
धातूनामंशद्वयाभिधायकत्वस्य सुप्रसिद्धत्वाद् वृद्ध्यनुकूलव्यापारभाने न कि-
ञ्चिद् बाधकम् । एवञ्च यत्राकर्मकधातुप्रकृतिकामन्तात्कृञोऽनुप्रयोगस्तत्रानुप्र-
युज्यमानस्य फलसमानाधिकरणव्यापारवाचकतयाऽकर्मकत्वेन भावकर्त्रोरेव
लिट् । यत्र तु ईक्षादिभ्यः सकर्मकेभ्य आम्, तत्रानुप्रयुज्यमानस्यापि सकर्मक-
त्वेन कर्मण्यपि लिड् भवति । न च यत्र कर्मणि लिट् तत्र फलव्यापारयोर्व्य-
त्यासस्यानुभवसिद्धतयोभयत्र फलांशस्य प्राधान्यमिति, कथमभेदान्वय इति
वाच्यम् । आम्समभिव्याहारे एतत्प्रकृतिधात्वर्थफलव्यापारयोर्व्यत्यासाकल्पना-
दिति 'साम्राज्यमीक्षाञ्चक्रे' 'ईक्षाम्बभूवे' इति वाक्यादेककर्तृकसाम्राज्यकर्मक-
दर्शनानुकूलव्यापाराभिन्नपरोक्षानद्यतनभूत उत्पत्तिसत्तान्यतरानुकूलो व्यापार
इति क्रमेण बोधः । योग्यरूपान्तरापत्तिमुपपादयति-*द्रव्यमित्यादि । *एतेन=
अनन्वितार्थत्वादितिकथनेन । प्रत्याहारेऽन्तर्भूतः पदधातुरेव, तस्यैवानुप्रयोगा-
भावेऽस्य ग्रन्थस्य तात्पर्यम् । तस्य केवलस्य सूत्रे समः प्रयोगात्सम्पूर्वस्य वा
नाऽनुप्रयोग इति भावः ।

*आम्प्रत्ययवत् ( पा० सू० १-३-६३ ) । परगामिनि क्रियाफलेऽप्रा-
प्तात्मनेपदार्थमिदं सूत्रम् । आम्प्रकृत्या तुल्यमिति यन्मूले व्याख्यातन्तल्लाभप्रका-
रमाह-*अतद्गुणेतीत्यादि । *अत्र-"आम्प्रत्ययवत्"(पा०सू० १-३-६३) इति

वदिति । तृतीयान्ताद्वतिः, पूर्वशब्देन पूर्वोपादानकात्मनेपदभवनं लक्ष्यते, तदाह–पूर्ववदेवेति । *पूर्ववाक्ये "आम्प्रत्ययवत्" (पा० सू० १–३–६३) इति तु *इन्दाञ्चकार इत्यादावकर्तृगामिनि क्रियाफले एतद्विहितात्मनेपदवारणाय । न तङिति । *इदमुपलक्षणं *कानचोऽपि ।

एकारोच्चारणमिति । "थासः से" ( पा० सू० ३–४–८ ) इत्यत्रसमर्थ्यैवम् । तेन ङेत्यादि । "टित आत्मनेपदानाम्" ( पा० सू० ३–४–७९ ) इत्यत्र भाष्ये *स्पष्टमिदमेकदेश्युक्त्या । वस्तुतः परत्वादेत्वे पुनः प्रसङ्गविज्ञानेन डादिषु कृतेषु 'लक्ष्येलक्षणस्य' इति न्यायेन नैत्वमिति "लुटः प्रथमस्य" ( पा० सू० ३–४–८० ) इत्यत्र भाष्ये स्पष्टम् ।

क्ङित्स्यादिति । क्ङिद्वत्स्यादित्यर्थः ।

द्विर्वचने (पा० सू० १–१–५९) । *स्थान्यचः पूर्वत्वेन दृष्टस्यैव 'चक्रे' इत्यादौ कार्याभावात् "अचः परस्मिन्" इत्यनेनासिद्धेरिदमारब्धम् । द्विर्वचने अचीत्यनयोः सामानाधिकरण्यासम्भवात् *द्विर्वचनशब्देन त-

---

सूत्रे । *पूर्ववाक्य इति । अत्राम्प्रत्ययवदित्युपादानसामर्थ्याद्वाक्यभेद इति पूर्वशब्दोपादानेन बोधितम् । अन्यथाऽनुप्रयुज्यमानात्कृञः पूर्ववदात्मनेपदमित्यर्थे 'एधाञ्चक्रे' इत्यत्र परगामिक्रियाफलेऽप्राप्तात्मनेपदविधानस्य सिद्धेरेकवाक्यतयैव विधानं स्यात् । वाक्यभेदे सति यत्प्रयोजनं सिध्यति तदाह–*इन्दाञ्चकार' इत्यादि । न्यूनतापरिहारायाह–*इदमुपेति । *कानचोऽपीति । अवेदम्बोध्यम् । पूर्ववदित्यस्यानुवृत्तिं कृत्वा वाक्यभेदप्रदर्शनम्प्रकृतयोगस्य विभागाभावाभिप्रायेण नियमसिद्धस्यार्थिकस्य प्रतिषेधस्यानन्तरस्येतिन्यायेनैतद्बाधकत्वमेव स्यादित्यभिप्रायेण च । अन्यथा कृञोऽनुप्रयोगस्येत्यादौ योगः कार्यः । इदमेधाञ्चक्रे इत्यादावकर्तृगामिक्रियाफलविवक्षायामप्राप्तात्मनेपदार्थम् । तत आम्प्रत्ययवदितिद्वितीयो योगः कार्यः । नियमार्थमिदम् । कृञोऽनुप्रयोगस्येत्यनुवर्त्तते । अनुप्रयुज्यमानात्कृञो यदात्मनेपदं विहितन्तदाम्प्रकृत्या तुल्यमेव । तेन 'इन्दाञ्चकार'इत्यादौ न । योगविभागसामर्थ्याच्च "स्वरितञितः" (पा०सू० १–३–७२ ) इत्यस्याप्ययंनियम इत्येवं सिद्धे पूर्ववद्ग्रहणानुवृत्तिर्व्यर्था स्यादिति ।

*स्पष्टमिदमिति । एकारोच्चारणस्य ज्ञापकत्वप्रदर्शनम् ।

द्विर्वचनेऽचीतियोगस्य स्थानिवद्भावविधायकत्वाभिप्रायेण व्याचष्टे–*स्थान्यच इति । द्विर्वचनशब्दघटकवचनशब्दे भावल्युडभिप्रायेणाह–*द्विर्वचन इति । यदि त्वधिकरणे ल्युट् क्रियते तदा लक्षणां विनापि सामानाधिकरण्योपपत्तिः ।

न्निमित्तं लक्ष्यते। अतोऽचीत्यनेन सामानाधिकरण्यं,तदाह-द्वित्वनिमित्ते-ऽचीति। *प्रत्यासत्त्या तन्निमित्तनिमित्तकादेशस्यैव स्थानिवत्त्वं बोद्ध्यम्। *'ऊर्णुनविषति' इत्यादावपि *तद्भावभावितामात्रेण निमित्तताश्रयणादि-सस्तन्निमित्तत्वम्। किं च लक्ष्यानुरोधेन साक्षात्समुदायघटकतया वा द्वि-त्वप्रयोजकत्वे निमित्तत्वमिहेति चक्रतुरित्यादिसिद्धिः। एवञ्च द्वित्वेऽजा-दिप्रत्ययस्य निमित्तत्वेऽचोऽपि तत्त्वं यणि अचो निमित्तत्वेऽजादिप्रत्यय-स्यापि। *"सन्यङोः" (पा० सू० ६-१-९) इत्यस्य षष्ठ्यन्तत्वेऽपि सनो द्वित्वप्रयोजकत्वमस्ति, *तत्र लोके समवायिकारणातिरिक्ते एव निमि-त्तकारणत्वव्यवहारात् 'अरीरिषत्' इत्यादौ नेस इकारस्य वा द्वित्वनिमि-त्तत्वमिति न गुणनिषेधः। इसो द्वित्वाश्रयत्वात्। तदाहुः-"न हि कार्य-मनुभवन्कार्यी निमित्तत्वेनाश्रीयते' इति। तस्य समवायिकारणत्वादिति त-दाशयः। *एतेन शयितरि व्रते इति ज्ञापकसिद्धं परिभाषान्तरमिति व-दन्तः परास्ताः, भाष्येऽस्यानुक्तेश्च। *व्याकरणेऽपि कार्यिणोपश्लिष्टस्यैव निमित्तत्वव्यवहाराच्च। न च 'अरीरिषत्' इत्यादावस्तथा। उपश्लेषस्य स-मीपसम्बन्धरूपस्य भेदानिबन्धनत्वात्। अचि किं? 'आधिजगे' "गाङ् लिटि" (पा० सू० २-४-४९) इत्यत्र द्विलकारकनिर्देशेन लावस्था-याङ्गाङादेशस्य सत्त्वाल्लिटि* 'आर्द्धधातुके' इत्यादीनां विषयसप्तमी-त्वेऽपि तद्भावभावित्वेनेव तद्बुद्धिभावभावितामात्रेणापि निमित्तत्वस्य

---

द्विर्वचननिमित्ते परे तदव्यवहितपूर्वघटकाजादेशः स्थानिवादित्यर्थे दिदवमीयिषतीत्यादावपि स्थानिवद्भावः स्यादत आह-*प्रत्यासत्त्येति। तत्=द्विर्वचननिमित्तम्। ननूर्णुनविषतीत्यत्र द्विर्वचननिमित्तत्वमिसेतिसमुदा-यस्य न त्वच इति कथं स्थानिवत्त्वमत आह-*ऊर्णुनविषेति। *तद्भाव-भावितेति। तस्य भावः=तद्भावः, तदीयसत्ता। तद्भावे सति भवति तच्छी-लस्तद्भावभावी तस्य भावस्तद्भावभावितेत्यर्थः। नन्वेवमपि "सन्यङोः" (पा० सू० ६-१-९) इत्यस्य षष्ठीत्वात्कथमूर्णुनविषतीत्यस्य सिद्धिरत आह-*सन्यङोरिति। अरिरिषतीत्यादौ सूत्रातिप्रसङ्गं वारयति-*तत्रेत्यादि। *एतेन=पूर्वोक्तलोकप्रसिद्धन्यायेन। न हि तस्य न्यायस्य लौकिकत्वमे-वेत्यत आह-*व्याकरणेऽपीति। नन्वचीत्यस्याभावेऽपि कथमधिजग इत्यत्र स्थानिवत्त्वप्रसक्तिर्गाङादेशस्यार्द्धधातुक इत्यस्य विषयसप्तमीत्वेन लिडुत्पत्तेः प्रागेव प्रवृत्तेरत आह-*लिटीत्यादि। ननु तर्हि लिङादेशस्याचोऽपि निमित्त-

वक्तुं शक्यत्वात् । *अत्र सूत्रोपात्तलिड्बुद्धिभाव एव निमित्तमिसन्निमित्तत्वाभावः । सर्वत्रैव चात्र शास्त्रे बुद्धिकृतमेव निमित्तत्वादि । इदमेवाचीनि ईदृशनिमित्तत्वाश्रयणे लिङ्गम् । *आवृत्त्या कालावधारणमपीत्याह–द्वित्वे कर्तव्ये इति । अच इति किम् ? *ईजाथे । तत्र हि कित्त्वनिमित्तत्वात्सम्प्रसारणस्यादेशेषु कृतेषु प्रवृत्त्याऽजिनमित्तत्वात् । *अत्र तन्निषेधे द्वित्वे हलादिशेषे उत्तरखण्डे सम्प्रसारणे पूर्वखण्डे सम्प्रसारणं न स्यात्, "न सम्प्रसारणे" (पा० सू० ६–१–३७) इति निषेधात् । *लावस्थायान्तु न कित्त्वं परैस्तिवादिभिर्बाधात् । *अत एव "असंयोगात्" ( पा० सू० १–२–५ ) इत्यत्रापिदिसनुवृत्तिश्चरितार्थेति दिक् ॥

उरत् ( पा० सू० ७–४–६६ ) । *चच्छृदतुरित्यादावभ्यासविकारे बाध्यबाधकभावाभावेन पूर्वं हलादिशेषे ततोऽन्तरङ्गत्वात्तुकि उरदत्वसिद्धये आह–अभ्यासऋवर्णस्येति । *इदञ्च "दीर्घोऽकितः" ( पा० सू० ७–४–८३ )इति सूत्रे भाष्ये स्पष्टम् । 'ननृते' इत्यादौ तेनैव

---

त्वादतिप्रसङ्गस्तदवस्थ एवेत्यत आह–*अत्र सूत्र इति । कृते द्विर्वचने 'पपाश्चक्रे' इत्यादौ यणः स्थानिवद्भावे श्रवणन्न स्यादत आह–*आवृत्त्येति । *ईजाथे इति । यजधातोर्लिट् । धातोः स्वरितेत्त्वादात्मनेपदम् । "वचिस्वपि"(पा०सू० ६–१–११) इति सम्प्रसारणम् । *अत्र तन्निषेध इति । सम्प्रसारणनिषेध इत्यर्थः । एवं व्याख्यानेन मूलोक्तं द्विर्वचननिमित्तेऽचि योऽजादेशः प्राप्तः स नेतिव्याख्यानमेव युक्तमिति ध्वनितम् । अत एव नपदान्तसूत्रानन्तरमस्य सूत्रस्य पाठः साधु सङ्गच्छते । स्थानिवद्भावपरत्वेन व्याख्याने द्विर्वचनात्प्राक् तत्तदादेशस्य प्रवृत्तिः स्वीकार्या । पश्चात्स्थानिवद्भावेन रूपातिदेशपर्यवसायिना तन्निवृत्तिः कार्या । रूपातिदेशोऽचीत्यस्य ज्ञापकता स्वीकार्या । क्लृप्तस्य शास्त्रातिदेशस्य कार्यातिदेशस्य वा त्यागः स्वीकार्यः । 'प्रक्षालनाद्धि' इत्यस्य लोकप्रसिद्धस्य न्यायस्य विरोधश्च स्वीकार्य इति महागौरवमिति भावः । ननु लावस्थायाम् "असंयोगात्" (पा० सू० १–२–५)इति कित्त्वेन सम्प्रसारणं स्यादत आह–*लावस्थायान्त्विवति । *अत एव=आदेशोत्तरमेव "असंयोगात्" (पा० सू० १–२–५)इत्यस्य प्रवृत्तिस्वीकारादेव ।

अभ्यासऋवर्णस्येति वैयधिकरण्येन यद्व्याख्यातन्तत्फलमाह–*चच्छृदतुरिति । *इदम्=अभ्यासविकारे बाध्यबाधकभावो नास्तीति वचनम् । तत्रत्यमकिद्ग्रहणमत्र ज्ञापकम् । न चैवमपि 'ननृते' इत्यादौ यथा हलादि शेषेण तकारानिवृत्तावपि पुनः "उरत्"( पा० सू० ६–४–५६ ) इति अत्वे कृते लक्ष्यभेदेन

न्यायेनोरदत्वे कृते हलादिशेष इति बोद्ध्यम् । प्रत्यये किमिति । अङ्गेन प्रत्ययाक्षेपः किमर्थमिति प्रश्नः । चन्नश्चेति । अन्यथोरदत्वस्यापरनिमित्तत्वात्स्थानिवत्त्वाभावेन "न सम्प्रसारणे" (पा० सू० ६-१-३७) इति निषेधानापत्तिः । *अत एवासप्तमसमाप्तेरङ्गाधिकार उक्तो भगवता । न च प्रागभ्यासविकारेभ्योऽङ्गाधिकारेऽपि अभ्यासेन *प्रत्ययाक्षेपो भविष्यतीति वाच्यम् । अभ्याससञ्ज्ञैकवाक्यतया लिटि परे ये द्वे तयोः पूर्वस्य ऋतोऽदित्यर्थलाभेऽपि अत्वस्य परनिमित्तत्वानुपपादनात्* । किं च "सन्यङोः" (पा० सू० ६-१-९) इत्यस्य षष्ठीत्वेन तद्विषये सन्नन्तस्य ये द्वे इत्यर्थेन सर्वथाऽपरनिमित्तत्वन्दुरुपपादम् । अङ्गसञ्ज्ञैकवाक्यतया तु *प्रत्यय इत्यस्यावृत्त्या न दोषः । *'अजर्घाः' 'चर्करीति' इत्यादौ यङ्लुगन्ते "न लुमता"(पा० सू० १-१-६३) इति निषेधानित्यत्वेन न क्षतिरिति भावः । *वस्तुतस्तेन तदाक्षेपाभावेऽपि अङ्गसञ्ज्ञाद्वाराऽस्य परनिमित्तत्वम् । नियमतः परबुद्धेः पूर्ववृत्तितया परनिमित्तत्वात् । एवञ्च 'चर्करीति' 'अजर्घाः' इत्यादौ दोषशङ्कैव नेति *दिक् ।

---

हलादिशेषेण रेफनिवृत्तिर्भवति, तथा चच्छृदतुश्चेच्छिद्यत इत्यादौ तुकोऽपि निवृत्तिः स्यादिति वाच्यम् । "नुगत" (पा० सू० ७-४-८५) इत्यादिसूत्रारम्भसामर्थ्येनाभ्याससंज्ञाप्रवृत्तिकाले साक्षात्स्थानिद्वारा वा सन्निहितहलामेव तेन निवृत्तिस्वीकारेणादोषात् । *अत एव—उरदत्वस्य परनिमित्तत्वसिद्ध्यर्थमेव । *प्रत्ययाक्षेपो भाविष्यतीति । अभ्याससंज्ञाया द्वित्वोत्तरप्रवृत्त्या द्वित्वस्य च प्रत्ययसद्भाव एव प्रवृत्तेरिति भावः । *अनुपपादनादिति । आसप्तमसमाप्तेरङ्गाधिकारे तु भाष्यप्रामाण्येनाङ्गसंज्ञायाः प्रत्ययनिमित्तकत्वादङ्गसंज्ञाद्वारोरदत्वस्य परनिमित्तत्वमिति भावः । नन्वङ्गसंज्ञाद्वारा निमित्तत्वमित्यस्याङ्गसंज्ञाम्प्रति-प्रत्ययस्य निमित्तत्वादुरदत्वम्प्रति निमित्तत्वमित्यर्थो वाच्यः । स च न युक्तः । प्रत्ययस्य साक्षान्निमित्तत्वानुपपादनात् । अत आह-*प्रत्यय इत्यस्यावृत्त्येति । ननु "न लुमता" (पा० सू० १-१-६३) इति निषेधात्कथमजर्घा इत्यादीत्यत आह-*अजर्घा इत्यादि । पूर्वोक्तं व्याख्यानमाक्षेपपरतया व्याख्यानाभिप्रायेण । वस्तुत आक्षेपाभावेऽपि न क्षतिरित्याह-*वस्तुत इति । *दिगिति । प्रत्ययपदस्यावृत्त्यभावेऽपि न क्षतिः । प्रत्ययबुद्धिनिमित्तकत्वेन प्रत्ययनिमित्तकत्वमासप्तमसमाप्तेरङ्गाधिकारव्यवस्थापनपरभाष्यप्रामाण्यादित्यादि द्रष्टव्यम् ।

एकाच उपदेशेऽनुदात्तात् ( पा० सू० ७-२-१० ) । मूले उभयान्वयीति । पूर्वान्वयफलम्बिभित्सति, चिकीर्षतीत्यादि । उत्तरान्वयफलङ्कर्तुङ्गन्तुमित्यादि । अत्र नित्स्वरेणाद्युदात्तत्वेऽपि निषेधसिद्धिः । न च विहितविशेषणेन

*ननूपदेशेऽनुदात्तस्यैकाचूत्वाव्यभिचारात्किं तेनेति पृच्छति–एकाच इति किमिति । न च वधिव्याटृत्त्यर्थन्तत्*, *तत्सामर्थ्येन *उपदेशमात्रे एकाचो ग्रहणादिति वाच्यम् । *आद्युदात्तनिपातनेन सिद्धेरित्यभिमानात् । एकाज्ग्रहणेनेति । तदर्थकेनाच इति पदेनेत्यर्थः । *अन्यथोपदेशेऽनेकाचामुदात्तत्वस्यैव सत्त्वेन *तद्वैयर्थ्यं स्पष्टमेवेति भावः । *ननु वधादावाद्युदात्तनिपातनेऽपि न सिद्ध्यति सत्युपदेशे तस्यानुदात्तत्वाक्षतेः। नच *तत्सामर्थ्यं *गौरवादत आह–अच इत्येवेति । उपात्तविभक्त्यर्थत्यागे मानाभावेन तद्विवक्षेति भावः । तद्वत इति । *समुदाये एकत्वविशिष्टाजूपत्वारोपेणेति भावः । सिद्धे इति । *शब्दविशेषमनादृत्यार्थविशेषपुरस्कारेणैवोक्तपरिभाषाप्रवृत्तेः सूपपादत्वादिति भावः । सामर्थ्यादिति । उपदेशमात्रे य एकाजेवेत्यर्थकल्पनयेत्यर्थः । अनेकाच्त्वादिति । *"हनो वध" (पा० सू० २–४–४२) इति सूत्रेऽस्यादन्तताया भाष्ये उक्तत्वात् । *अत एव 'अवधीत्' इत्यत्र "अतो हलादेः" ( पा० सू० ७–२–७ ) इति *वृद्धिर्न । एवञ्चाद्युदात्तनिपातनन्तस्य

---

निर्वाहः । प्रत्ययोत्पत्तेः प्राग्धातुस्वरस्य दुर्वारत्वेनासम्भवापत्तेः । उपदेशपदस्योत्तरत्रान्वयस्यावश्यकत्वे एकाज्ग्रहणस्य किम्प्रयोजनमित्यस्य प्रश्नग्रन्थस्याभिप्रायम्प्रकटयितुमाह–*नन्विति । *तत्=एकाज्ग्रहणम् । *तत्सामर्थ्येन=एकाज्ग्रहणसामर्थ्येन । *उपदेशमात्र इति । अत्र मात्रपदं कार्त्स्न्ये । *आद्युदात्तनिपातनेन=वधादेशे आद्युदात्तनिपातनेन । यङ्लुग्व्यावृत्तिरिति । यङ्लुको निषेधनिमित्तत्वव्यावृत्तिरित्यर्थः । इदमेव कथमत आह–स्मरन्तीति । ननु यदि एकाच्पदघटितत्वेन निषेधसूत्रस्य यङ्लुक्यप्रवृत्तिः फलन्तर्हि अच इत्येवेत्युत्तरग्रन्थासङ्गतिः । एकग्रहणाभावेऽस्य सूत्रस्यैकाच्पदघटितत्वाभावादत आह–तद्दर्थकेनेति । एवञ्च श्तिपाशपेतिवचने यत्रैकाज्ग्रहणमित्यस्यैकाजर्थकपदग्रहणमित्यर्थः । *अन्यथा=यङ्लुकि निषेधाप्रवृत्तिरूपफलास्वीकारे । *तद्वैयर्थ्यमिति । एकाजर्थकस्याच इतिपदस्य वैयर्थ्यमित्यर्थः । *ननु वधादावाद्युदात्तेति । अत्र वधादावित्युपादानेनाद्युदात्तत्वनिपातनवादिमते वधादेशो हलन्त इत्यभिमानः प्रकटीकृतः । *तत्सामर्थ्यम्=आद्युदात्तनिपातनसामर्थ्यम् । *गौरवादिति । निपातनसामर्थ्येन निषेधाप्रवृत्तिकल्पने गौरवादित्यर्थः । ननु मत्वर्थे लक्षणास्वीकारे शक्यतावच्छेदकारोपो लक्षणेति सिद्धान्तविरोध इत्यत आह–*समुदाय इति । एकपदाभावेऽपि प्रकृतसूत्रे परिभाषाप्रवृत्तिमुपपादयति–*शब्दविशेषमिति । ननु वधादेशस्य हलन्ततापूर्वोक्तेति कथमेकग्रहणे कृतेऽपि सूत्राप्रवृत्तिरत आह–*हनो वधेतीति । *अत एव=वधादेशस्यादन्तत्वादेव । *वृद्धिर्ने-

*निष्फलमिति भावः। *वस्तुत *आरोपितार्थबोधकत्वे *तात्पर्यग्राहकाभावेनाजन्तस्येत्यर्थवारणाय चैकपदस्या*वश्यकत्वेऽपि *अवच्छेदकावच्छेदेनान्वयस्यौत्सर्गिकत्वेन लक्ष्यानुरोधेन च तथैवान्वयाद्वा‌धिं‌ग्यावृत्तिः। स्पष्टाचे*यं रीतिः "उपदेशेऽत्वतः" (पा० सू० ७-३-६२) इति सूत्रे भाष्यकैयटयोः। तत्र हि-"घसौ प्रतिषेधाभावाय हलादिग्रहणं कर्त्तव्यम्" इति भाष्यमुपादाय "उपदेशग्रहणमुभाभ्यां सम्बध्यते उपदेशे योऽत्वान् हलादिश्चेति, *न च 'घसिरद्युपदेशे हलादिः' इति कैयटेनोक्तम्। यद्वा यस्य साक्षादुपदेशः सम्भवति तस्य मुख्यत्वात्स एव गृह्यते *न तु स्थान्युपदेश इति न दोषः। इयमपि रीतिः "उपदेशेऽत्वतः" (पा०सू० ७-३-६२) इति सूत्रशेषे "ऋतो भारद्वाजस्य (पा० सू० ७-३-६३) इति सूत्रे च *भाष्ये। *परे त्वेकाज्ग्रहणव्यावर्त्योऽत्र *बधिरेव।

---

ति। आर्द्धधातुकीयाः सामान्येन भवन्तीत्युक्तत्वेनार्द्धधातुकस्य सिचो विवक्षायां वधादेशे ततः सिचि "अतो लोपः" (पा० सू० ६-१-४८) इत्यलोपे "अचः परस्मिन्" (पा० सू० १-१-५७) इत्यल्लोपस्य स्थानिवत्त्वेन वृद्धिर्नेत्यर्थः। *निष्फलमिति। अत एव पूर्वमभिमानादित्युक्तम्। मौलग्रन्थयोजनां कृत्वा भाष्यसम्मतरीत्यैकपदस्य प्रयोजनमाह-*वस्तुत इति। *आरोपितार्थबोधकत्वे=लाक्षणिकार्थबोधकत्वे। *तात्पर्यग्राहकाभावेनेति। न च पचादीनामनुदात्तानाम्पाठसामर्थ्यमेव तात्पर्यग्राहकम्। पक्ष्‍ मुगित्यादावनुदात्तश्रवणस्य फलस्य वक्तुं शक्यत्वात्। धातोरन्तोदात्तत्वविधानन्तु गोपायतमित्यादौ चरितार्थमिति भावः। *आवश्यकत्वेऽपीति। एवञ्चैकग्रहणसामर्थ्यादिति योक्तिः सा विहतेति भावः। कथन्तर्ह्यवधीदित्यत्रेट्सिद्धिरित्यत आह-*अवच्छेदकावच्छेदेनेति। उपदेशत्वावच्छेदेनैकाचो ग्रहणादित्यर्थः। *इयं रीतिः=अवच्छेदकावच्छेदेनान्वयरूपा रीतिः। *न च घसिरद्युपदेश इति। एतेनोपदेशत्वावच्छेदेन हलादित्वं विशेषणं विवक्षितमिति सूचितम्। *न तु स्थान्युपदेश इति। एवञ्च वधादेशस्य साक्षादुपदेशसम्भवात्तस्मिन्ननेकाच्त्वान्न निषेध इति भावः। *भाष्य इति। आद्ये जघसिथेत्यत्रेट्प्रतिषेधमाशङ्क्य "सिद्धन्तु हलादिग्रहणात्" इत्युक्तम्। ततः "तच्चावश्यं वक्तव्यम्। अद्यशी प्रयोजयतः। अद्यशी न प्रयोजयतः। किङ्कारणम्?। तासावनिट् इत्युच्यते सेटौ चेमौ तासौ। अदिस्तर्हि प्रयोजयति-'आदिथ'। क्रियमाणेऽपि वै हलादिग्रहणेऽत्र प्राप्नोति-जघसिथ। एषोऽपि हलादिः। तस्य चाभावात्तासौ"। एवं समाधाय "ननु च यस्तासौ नास्ति अनिडप्यसौ तासौ भवति" इति शङ्कितम्, स्थान्युपदेशमादायायन्तासावनिडिति भावः। तत उक्तम् "नैवं विज्ञायते यस्तासावनिट् इति। कथन्तर्हि यस्तासावास्त अनिट् चेति" इत्युक्तम्। एतेन घसेः साक्षादुपदेशसम्भवात्तस्य च तासावभावान्न

*किंच उत्तरार्थमेकाज्ग्रहणम् ।*अत एव जागरितवानित्यादावुपदेशे उगन्तत्वमादाय "श्रयुकः" (पा०सू० ७-२-११) इति इण्निषेधो न । तत्रोपदेशानुदात्तेश्च *स्तीर्णमित्यादाविण्निषेधायेत्याकरे स्पष्टम् । *"श्तिपा शपा" इति नास्त्येव । भाष्यानुक्तत्वात् । *न च भाष्ये यङ्लोपे वेभिदितेत्यादाविड्प्रवृत्त्यर्थमुपदेशेऽनुदात्तादेकाचः श्रूयमाणादित्यर्थे सनीट् प्रतिषेधो वक्तव्यः बिभित्सतीति दोषोपन्यासबद्यङ्लुकि दोषानुपन्यासेन *तत्र *इडिष्टः । *"यङ्लोपे" इत्यादि भाष्यं तूपक्रमोपसंहारबलेन *न

---

निषेध इति ध्वनितम् । अन्त्ये "ऋतो भारद्वाजस्य" (पा० सू० ७-१-६३) इत्यस्य नियमार्थत्वमुपवर्ण्य जहर्थेत्यत्र गुणे रपरत्वे च कृतेऽनजन्तत्वान्निषेधस्य "अचस्तास्वत्" ( पा० सू० ७-२-६१ ) इति इत्यस्याप्राप्तौ "ऋतः" ( पा० सू० ७-२-६३ ) इति सूत्रमुपदेशपदसम्बन्धेन विधायकम्भविष्यतीत्याशङ्क्योपदेश पदस्य "अचस्तास्वत्" ( पा० सू० ७-२-६१ ) सूत्रे सम्बन्धेन 'ऋत' (पा ०सू० ७-२-६३) इत्यस्य नियमार्थत्वमुपपादितं योगविभागेन । 'अचस्तास्वत्थल्यनिटो नित्यमुपदेशे । ततः—अत्वतः । अत्वतश्चोपदेशे" इति । अत्र कैयटः-"आदेशोपदेशोऽप्याश्रीयते न तु स्थान्युपदेश एवेति । अत एवाजत्यादेशस्य वीशब्दस्य चक्षिङादेशस्य ख्यो विकल्पस्थलि भवति । विवेथ,विवयिथ । आचख्यिथ, आचख्याथेति । एतेनादेशोपदेशमादाय कार्यसिद्धिः स्पष्टमेव प्रतिपादिता । प्राचीनोक्तन्दूषयन्स्वसिद्धान्तमाह-*परे त्विति । *वधिरेवेति । एतच्चैकाज्ग्रहणस्य चारितार्थ्यादेतच्चैकाज्ग्रहणेन ज्ञाप्यत इत्यसङ्गतम् । उत्तरसूत्रेऽपि तच्चरितार्थमित्याह-*किञ्चेति । *अत एव=एकाज्ग्रहणानुवर्त्तनादेव । *स्तीर्णमित्यादाविति । आदिना स्तर्तव्येत्यस्य सङ्ग्रहः । यदपि तद्वचनव्याख्यात्रा ज्ञाप्यत इत्यस्य 'एकदेशानुमत्या सत्त्वम्बोध्यते'इत्युक्तन्तदपि न । तस्य वचनस्यैवाभावादित्याह-*श्तिपा शपेतीति । यद्यपीदं वचनम्भाष्ये न पठितम्, तथापि भाष्यकृता तत्सत्त्वन्ध्वनितमित्यभिप्रायेणाशङ्कते-*न चेति । *तत्र=यङ्लुकि । *इडिष्ट इति । यदि यङ्लुकि प्रतिषेध इष्टः स्यात्तदा 'यङ्लुकीट्प्रतिषेधो वक्तव्यः' इत्यपि भाष्यकृतोक्तं स्यादिति भावः । ननु यङ्लोपे वेभिदितेति भाष्येणैव यङ्लुकि इट्प्रवृत्तिप्रकार उक्त इत्यत आह-*यङ्लोप इत्यादि भाष्यमिति । *न यङ्लुग्विषयमिति । किन्तु यङ्लोपविषयमेवेति शेषः । "एकाच उपदेश"( पा० सू० ७-२-१० ) इति सूत्रे भाष्ये एकाज्ग्रहणस्य वधिषीष्टेत्यत्रेट्प्रतिषेधाभावरूपम्प्रयोजनमभिधायाभिहितम्-"एतदपि नास्ति प्रयोजनम् । किङ्कारणम् ? । वध इट्प्रतिषेधः सन्निपात एकाच्त्वात् प्रकृतेश्चानुदात्तत्वात्" इति । सन्निपात इत्यस्य प्रतिषेधप्रवृत्तिकाल इत्यर्थः । तत उभयविशेषणमुपदेशग्रहणमस्त्वित्यभिप्रायेण 'किम्पुनः कारणमेवं विज्ञायते उपदेशेऽनुदात्तादेकाचः श्रूयमाणादिति यङ्लोपार्थम् । यङ्लोपे मा भूदिति बेभिदिता बेभिदितुम्"

यङ्लुग्विषयम्। *किं च तस्य तद्विषयत्वे यङ्लोपे स्थानिवत्त्वस्यैव यङ्लुक्युपायाप्रदर्शनेन *न्यूनतापत्तिरिति वाच्यम्। *इङ्विषये यङ्लुको लोकेऽनभिधानेन छन्दसि सर्वविधीनां वैकल्पिकत्वेन च तत्र दोषानुपन्यासेनादोषात्। *अन्यथैकाज्ग्रहणं किमर्थमिति प्रश्नस्योत्तरत्र जागर्त्यर्थमित्युत्तरस्य च भाष्ये *निरालम्बनतापत्तेः। *अजर्घाः, वेभिद्वीतीत्यादौ श्नम्श्यनादयस्तु चर्करीतञ्चेत्यस्यादादौ पाठेन यङ्लुगन्ते गणान्तरप्रयुक्तस्याप्राप्त्या न। *छान्दसत्वादेव कार्यान्तराणामपि छन्दसि दृष्टप्रयोगेष्वदृष्टानामभावो बोध्यः। *भाषायान्तु तादृशानाम्*भाव एव श्तिपशबादिनिर्देशास्तु लिडादिनिमित्तक "भवतेरः" (पा० सू० ७-४-७३) इत्यादिस्थलनिर्देशवन्नार्थसाधका *इत्याहुः।

इणः षीध्वम (पा० सू० ८-३-७८)। षीध्वमि *षकारोच्चारणन्तु च्युषीध्वमित्यादावेकदेशविकृतन्यायेन षीध्वमः सत्त्वेन ढत्ववारणाय। अङ्गा-

---

इत्युपक्रमे उक्तम्। उपसंहारग्रन्थे च "स्थाने द्विर्वचनं "सन्यङोः"इत्यस्य स्थानषष्ठीत्वं स्वीकृत्य 'भिद्'शब्दस्य द्वितीयाजवधिकस्य स्थाने भिद्भिद् इत्यादेशे सम्प्रयुग्धत्वात्प्रकृतिप्रत्ययस्य नष्टः स भवति यः स एकाजुपदेशेऽनुदात्त" इत्युक्तम्। एवमुपक्रमोपसंहारबलेनास्य यङ्लोपविषयत्वं स्पष्टमेव लभ्यते। ततोऽग्रे 'द्विष्प्रयोगो द्विर्वचनम्' इति पक्षे दोषोऽस्त्येवेत्यभिधायाल्लोपस्य स्थानिवद्भावाश्रयणमेवेति समाधानान्तरं कृतमिति। भाष्यस्थलोपपदस्य लुक्परत्वमप्यस्त्वित्यभिप्रेत्याह—*किञ्च तस्येति। *न्यूनतापत्तिरिति। अत एकाज्ग्रहणघटितत्वान्निषेधसूत्रस्य यङ्लुक्यप्रवृत्तिर्ध्वनिता। सा च 'श्तिपा शपा' इतिपरिभाषासत्त्व एवेति परिभाषा भाष्यकारसम्मतेति शेषः। भाष्यन्यूनतान्परिहरति-*इङ्विषय इति। *अन्यथा=एकाज्ग्रहणस्य परिभाषासत्त्वबोधनद्वारा यङ्लुकि निषेधाप्रवृत्तिबोधकत्वे। *निरालम्बनतापत्तेरिति। एकाज्ग्रहणस्य कृतार्थत्वात्प्रश्नस्य निरालम्बनत्वम्परिभाषाबोधनार्थमित्यनभिधाय जागर्त्यर्थमिति विशेषाभिधानस्य च निरालम्बनत्वमित्यर्थः। परिभाषाभावेऽपि परिभाषासाध्यप्रयोजनान्यथासिद्धिमाह-*अजर्घा इत्यादि। *छान्दसत्वादेव=यङ्लुकश्छान्दसत्वादेव। *भाषायान्त्विति। तुना भाषायान्न सर्वत्र यङ्लुक्सत्त्वमिति ध्वनितम्। *अभाव एवेति। भाष्ये तत्र शङ्कासमाधानयोरकरणात्। *इत्याहुरिति। भाष्यानुसारिण इति शेषः।

इणः षीध्वम (पा० सू० ८-३-७८)। इण्कोरिति वर्त्तमाने इण्ग्रहणम्प्रकृतसूत्रे तदसम्बन्धबोधनाय। तेन कवर्गात्परत्वं यत्र तत्र पक्षीध्वं शक्षीध्वमित्यादौ न। ननु सीध्वमित्येवास्तु मूर्द्धन्योच्चारणङ्किमर्थमित्यत आह-*ष-

तिं कि ? *वेविषीध्वम्, अस्य षीध्वमोऽनर्थकत्वेऽपि अर्थवत्परिभाषाया अनित्यत्वज्ञापनाय *इदम् । *तेन 'अनिनस्मन्ग्रहणानि' इति सिद्धमिति *केचित् । क्रसू चेति । *यद्यपि कृञित्युक्तौ लाघवमस्ति तथापि *एकस्यैव लाभार्थं प्रत्याहारग्रहणे क्लेशो दुर्ज्ञेयता चेति भावः, तदुक्तम् 'अत उत्सार्वधातुके' ( पा० सू० ६–४–११० ) इति सूत्रे भाष्ये–'अनुप्रयोगे तु भुवाऽस्त्यबाधनं स्मरन्ति *कर्त्तुर्वचनान्मनीषिणः, इति ।

परूपापवाद इति । पररूपपदमेकादेशोपलक्षणम् । 'आनृजे' इत्यादौ गुणस्यैव प्राप्तः । *अभ्यासविकारे बाध्यबाधकभावाभावेन पूर्वोपस्थितहलादिशेषोत्तरं दीर्घ इति भावः । अत्र लिटीति वर्तते तेन ऋधा-

---

कारोच्चारणमिति । *वेविषीध्वमिति । विष्धातोरिदं रूपम् । *इदम्=अङ्गग्रहणम् । अनित्यत्वस्य फलमाह–*तेनेति । नन्विण इति विहितार्थान्वय्यस्त्विति वाच्यम् लिक्षीध्वं धुक्षीध्वमित्यत्र ढत्वघत्वयोरपि सतोर्मूर्द्धन्यापत्तेः । *केचिदिति । 'अनिनस्मन्' इति परिभाषा वाचनिकी । "विभाषेटः"(पा०सू०८–३–७९) इत्युत्तरसूत्रेऽनर्थकस्यैव षीध्वमः सम्भवात्प्रकृतसूत्रेऽप्यनर्थकस्य ग्रहणसम्भवः स्यादित्यङ्गादित्युक्तमितिसिद्धान्तोऽनेन सूचितः । यत्तु "कार्मस्ताच्छील्ये" (पा० सू० ६–४–१७२) इति "ब्राह्मोऽजातौ"(पा० सू० ६–४–१७१) इति च टिलोपनिपातनमस्या ज्ञापकम् । अन्यथा कर्मन्ब्रह्मन्शब्दयोर्मनिनन्ततया तदवयवयोरनयोरनर्थकतया "अन्"इतिप्रकृतिभावाप्राप्त्या "नस्तद्धिते"(पा०सू०६–४–१४४) इत्येव टिलोपे सिद्धे किन्निपातनेनेति । तन्न । अनंशे तयोर्ज्ञापकत्वसम्भवेऽपीनांशे तत्त्वासम्भवात् । एकदेशानुमत्या ज्ञापकत्वमित्यस्य च वाचनिक्याः परिभाषाया एकदेशानुमत्या इहाश्रयणमित्यत्रैव पर्यवसानम् । न च तयोः सूत्रयोरनिनस्मन्निति परिभाषाज्ञापकत्वमिति न ब्रूमः किन्त्वर्थवत्परिभाषाऽनित्यत्वबोधकतां वदामः । एवञ्चानिनस्मन्नित्यर्थसिद्धमित्यस्या वाचनिकत्वन्निराकर्तुम् इति वाच्यम् । "अन्तर्बहिर्भ्याञ्च लोम्नः" (पा० सू० ५–४–११७ ) "स्थाम्नोऽकारः"(का० वा०) इतिनिर्देशेनानंशे विशिष्टरूपोपादानेऽप्युपस्थितार्थस्य विशेषणत्वास्वीकारेणान्ग्रहणेऽनर्थकस्यापि ग्रहणे सिद्धे तयोः सूत्रयोश्चारितार्थ्यसम्भवेन मूलशैथिल्यात् । गौरवाज्ज्ञापकत्वन्न सम्भवतीत्याशयेन शङ्कते–*यद्यपीति । *एकस्यैव=भुवः । *कर्त्तुर्वचनादिति । कर्त्तुः=पाणिनेर्वचनात्="कृञ्" इति वचनादित्यर्थः ।

नन्वेकादेशापवादकत्वकथनमसङ्गतम् । "अत आदेः"(पा०सू० ७–४–७०) इत्यस्य हलादिशेषात्पूर्वम्प्राप्तेस्तदानीमेकादेशाप्राप्तेरिति चेन्न । अभ्यासविकारे बाध्यबाधकभावाभावेऽपि पूर्वम्प्रवृत्तौ पूर्वोपस्थितत्वस्य नियामकत्वमन्यत्र इष्टमिति हलादिशेषे कृते एकादेशस्य प्राप्त्यैकादेशप्राप्तियोग्यविषयेऽस्याऽचारितार्थ्येनापवादत्वाक्षतेः । प्रकृते सूत्रप्रवृत्तिक्रममाह–*अभ्यासविकार इति ।

तोरशूधातोश्च यङ्लुकि नायं दीर्घ इति *केचित्। आदिग्रहणं तदन्तविधिनिरासार्थम्।

धि च (पा०सू०८-२-२५)। धादौ प्रत्यय इति। तेन पयो धावति पयोधावनमित्यादौ न लोपः। *अत एव भाष्ये सडीत्युक्तं सनः सकारमारभ्य महिङो ङकारेण प्रत्याहारः *'चकाधीत्येवेष्यते' इति भाष्योक्तेरयं सिचो लोप इति सडीत्यस्यैकदेशयुक्तं प्रत्याख्यानं न युक्तम्, तत्र सङोऽन्यस्य धादेः सान्तादसम्भवेन प्रत्यय इत्येवाध्याहृतं मूलकृता। *यत्तु पद-

---

न च "अत आदेः"(पा० सू० ७-४-७०) इत्यस्यैकादेशापवादत्वकथनादपवादविषये उत्सर्गाप्रवृत्तेः कथमेकादेश इति वाच्यम्। अपवादपदस्य निरवकाशत्वेन बाधकपरत्वात्। येन नाप्राप्तिन्यायेन बाधस्तु वक्तुमशक्यः। उत्सर्गे कृतेऽपि यत्रापवादत्वेनाभिमतस्य प्राप्तिस्तद्विषयतायास्तस्य न्यायस्य स्वीकारात्। एवञ्च "अत आदेः" (पा० सू० ७-४-७०) इति कृतेऽप्येकादेशो भवत्येव। अपवादत्वव्यवहारस्तु यदीदन्न स्यात्तदा हलादिशेषे कृते पररूपं स्यात्, कृते त्वस्मिन् तत्प्राप्तिर्नेत्येतावता। यत्त्वत्र दण्डिनाऽभिहितम् "अयम्पररूपापवाद इति ग्रन्थो नामधातुस्थेन 'औ' 'अतुः' इति रूपव्युत्पादनपरग्रन्थेन विरुध्यते। तत्र हि-"कास्प्रत्ययाल्" (पा० सू० ३-१-३५) इति सूत्रे प्रत्ययग्रहणमपनीय 'अनेकाज्ग्रहणङ्कर्तव्यम्' इत्युक्तेर्नाम्, किन्तु द्वित्वम्। "अतो गुणे" (पा० सू० ६-१-९७) "अत आदेः" (पा० सू० ७-४-७०) 'औ' 'वृद्धिरित्युक्तम्' इति। तत्रेदं वक्तव्यम्-तस्य ग्रन्थस्य माधवोक्तप्रक्रियाभिप्रायकत्वात्। अपवादो यद्यन्यत्र चरितार्थस्तर्ह्यन्तरङ्गेण बाध्यते। तच्चारितार्थ्यञ्च 'आनर्द' इत्यत्र। अत्र ह्यादेरचः परस्य द्वितीयस्यैकाचोऽभावेनाजादेरित्यस्याप्रवृत्तेः 'नन्द्राः' (पा० सू० ६-१-३) इत्यस्याप्यप्रवृत्तावर्देत्यस्य द्विर्वचने हलादिशेषेण सह युगपत् पूर्वमेव वा "अत आदेः" (पा० सू० ७-४-७०) इति दीर्घः। अभ्यासविकारे बाध्यबाधकभावो नास्तीत्यस्य युगपत्प्रवृत्तौ स्याय्यक्रमेण वा समावेश इत्यत्र तेषां तात्पर्यम्। पररूपापवाद इति ग्रन्थस्तु तदभावे पररूपस्य तत्तत्स्थलेप्राप्तिमात्रेण ज्ञेय इति। अधिकमग्रे व्युत्पादयिष्यते। *केचिदिति। यङ्लुको भाषायामपि प्रवृत्तिवादिनः।

धि च (पा० सू० ८-२-२५)। एतद्व्याख्यानावसरे मूलकृता 'धातौ प्रत्यय' इति यद्व्याख्यातन्तल्लाभोपायमाह-*अत एवेति। धादौ प्रत्यय एव लोपस्येष्टत्वादेव। अत्र भाष्यकृता 'सडीति वक्तव्यम्' इत्युक्तम्। सङ् च प्रत्यय एवेति प्रत्यय इत्यस्य लाभः। यत्तु वार्त्तिकैकदेशिना 'सिचो ग्रहणङ्कर्तव्यम्' तेन सिचः सकारस्यैव लोपो भविष्यति पयो धावतीत्यत्र तु न सिच्। सिच्च प्रत्ययपर एवेति सडीत्यस्यार्थतो लाभ इति। सा त्वेकदेश्युक्तिः चकाधीत्येवेष्यत इति भाष्यविरोधादित्याह-*चकाधीति। कैयटोक्तप्रत्यय इत्यस्य लाभप्रकारं खण्डयति-*यत्त्विति। धादौ परे पदावयवस्येत्यर्थे पयो धावतीत्यादौ दोषस्तदवस्थ

स्येत्यधिकारेण प्रत्यासत्त्या *व्याख्यानेन चाखण्डैकपदस्थयोर्निमित्तनि-
मित्तिनोर्ग्रहणमिति कैयटेनोक्तं *तत्त्वतिक्लिष्टम् । *ततो *वचनमेव
ज्याय इति परे ।

ह एति ( पा० सू० ७-४-५ ) । 'तासस्त्योर्लोपः' ( पा० सू०
७-४-५० ) इत्यतस्तासस्त्योरिति "सः सि" इत्यतः स इति च वर्तते ।

लोट इति । *लोडादेशस्येत्यर्थः ।

सलोप इति । लिङः सलोप इत्यनेन ।

---

एवेति प्रत्यासत्तिन्यायानुसरणमेवमपि पयोधावनमित्यादावपि प्राप्नोतीत्याशये-
नोक्तम्-*व्याख्यानेन चेति । चकाधीत्याद्यखण्डपदरूपलक्ष्यदर्शनमूलकव्याख्या-
नेनेत्यर्थः । *तत्त्वतिक्लिष्टमिति । अखण्डत्वात्मकविशेषणविशिष्टस्य लाभक्लेशे-
नेत्यर्थकमत्रोक्तमतिक्लिष्टमिति । *ततः=तदपेक्षया । *वचनमेव=सङ्गीतिवचन-
मेवेत्यर्थः ।

आमेतः (पा०सू० ३-४-९०)। लोट एकारासम्भवादाह-*लोडादेशेति ।

आडजादीनाम् ( पा० सू० ६-४-७२ ) । अत्र भाष्यकृता 'अजादीना-
मटा सिद्धम्' इत्युक्तम् । तस्यायमाशयः— "आटश्च" ( पा० सू० ६-१-९० ) इ-
त्यस्य स्थानेऽटश्चेति कार्यम् । आडागमविधानन्तु न कार्यम् । सामान्यसूत्रेणै-
वाटः सिद्धेः । "उपसर्गादृति" ( पा० सू० ६-१-९१ ) इत्यतो 'धातौ' इत्यस्या-
पकर्षकृत्वाऽटो धात्ववयवेऽचीति व्याख्यानेनाऽऽस्वपोऽहसन्नित्यत्र 'अड् गार्ग्य-
गालवयोः' ( पा० सू० ७-३-९९ ) इत्यस्यापि न वृद्धिः । 'बहुश्रेयस्यै' इत्यत्रा-
स्मिन्पक्षे वृद्धिरेचीत्येव वृद्धिः । तत्राऽट् तु वक्तुमशक्यः । "अतो गुणे" ( पा०
सू० ६-१-९७ ) इति पररूपापत्तेः । न चाटो विधानसामर्थ्यम् । 'बहुश्रेयस्याम्'
इत्यादौ नुड्बाधनेन चारितार्थ्यात् । न चैवमप्यस्वपोऽस्तीत्यत्र वृद्धिः प्राप्नोति,
अटः सिप्स्थानिकोकारेणैकादेशे पूर्वान्तवद्भावेनाट्त्वाद्धात्ववयवाच्परत्वाच्चेति
वाच्यम् । आदित्यनुवर्त्याकाररूपाटोऽचि परे वृद्धिरित्यर्थेनादोषात् । न च 'आ-
टश्च' ( पा० सू० ६-१-९० ) इत्यस्य 'ऐन्दिदत्' इत्यत्र चरितार्थतया 'आतीत्'
इत्यादौ "अतो गुणे" ( पा० सू० ६-१-९७ ) इति पररूपापत्तिरिति वाच्यम् ।
पुनर्वृद्धिविधानार्थेनाटश्चेतिचकारेण तस्य बाधनात् । 'आस्ताम्' "आसन्' इत्यत्र
त्वस्मिन्पक्षे न दोषः । लावस्थायामेवाडागमेऽन्तरङ्गत्वाद्वृद्धौ 'श्नसोः' ( पा०
सू० ६-४-१११ ) इत्यस्याप्रवृत्तेः । वन्दे आनडित्यत्र दीर्घश्रवणन्तु "व्यत्ययो ब-
हुलम्" ( पा० सू० ३-१-८५ ) इत्यनेन सिध्यति । अत्र केचित्-'एवं सति वक्ष्य-
माणेनेण्धातुनिरूपणप्रस्तावे "अतो गुणे" इत्युत्तरम् 'नाटः' इति कर्तव्यन्ते-
नाटीदित्यादौ न पररूपमिति शेखरग्रन्थेनास्य ग्रन्थस्य विरोधः । तत्र 'नाट' इ-
त्युक्तौ 'बहुश्रेयस्यै' अत्राप्यडागमोऽस्तु पररूपन्तु न भविष्यति । नाट इति नि-
षेधात् । एवञ्च वक्तुमशक्यं इत्युक्त्यसङ्गतिः' इति । अत्रेदमूहनीयम् । अत्राट्

इटोऽत् (पा० सू० ३-४-१०६)। *तकार उच्चारणमात्रफलको—'न विभक्तौ' (पा० सू० १-३-४) इत्यस्योच्चारणमात्रफलकेऽप्रवृत्तेः 'अच्च घेः' (पा० सू० ७-३-११९) इत्यत्रोपपादितत्वादित्सञ्ज्ञया निवर्त्तते। षत्वमिति। लक्ष्यभेदात्पुनः प्रवृत्तिरिति भावः। *युगपदेव वोभयोः षत्वम्।

ढधयोरित्त। मतभेदेनेति शेषः। ढस्येत्येव युक्तम्। *इति मते त्वित्यनेन तन्मते भाष्याननुग्रहरूपस्य युक्त्यभावरूपस्य *चास्वरसस्य बोधनात्। ऊदृदन्तैरिति। *दीर्घोकारान्तानामुदात्तत्वादेव 'बभूथाततन्थ' (पा० सू० ७-२-६४) इति *इडभावनिपातनमारब्धम्।

---

वक्तुमशक्य इति ग्रन्थो लाघवानुसारी। नुड्बाधनार्थमडागमस्यावश्यकत्वे तत्र आकारोच्चारणेनैव पररूपाभावे सिद्धे तदर्थञ्चाट इतिवचनान्तरञ्च कार्यमिति। आटीदित्यत्र पररूपाभावस्तु "उस्योमाङ्क्ष्वाटः प्रतिषेधः" इत्येतद्वार्तिकान्यथासिद्धिकरणार्थञ्चकारस्य पुनर्वृद्धिकरणार्थत्वकथनस्यावश्यकत्वे तेनैव "अतो गुणे" (पा० सू० ६-१-९७) इति पररूपाभावस्य सिद्धौ तदर्थं योगारम्भ एव गौरवदोषमासादयतीति। आदादिको 'नाट' इति ग्रन्थस्तु विशिष्याट्शब्दोच्चारणेन या वृद्धिस्तस्याः प्रतिबन्धकं यत्पररूपन्तन्निराकरणं यथा भवति तथा यत्नः कार्यः। स च पुनर्वृद्धिविधानरूपो वा स्पष्टप्रतिपत्त्यर्थञ्चाट इति वचनारम्भरूपो वा कार्य इत्येतावन्मात्रतात्पर्यको बोध्यः। एवञ्च "उस्योमाङ्क्ष्वाटः प्रतिषेधः" इतिवार्त्तिकान्यथासिद्धिकारकं पुनर्वृद्धिविधानन्तु तद्विषयकमेवेति तात्पर्यम्। अयञ्च ग्रन्थो लाघवानादरेण बोध्य इति।

ननु "न विभक्तौ" (पा० सू० १-३-४) इति निषेधाददादेशावयवतकारस्य कथमित्संज्ञेत्यत आह—*तकार इति। *युगपदेवेति। पूर्वोक्ता युक्तिस्तु लक्ष्यभेदाल्लक्षणभेदाभिप्रायेणेयञ्चादेशविधायकलक्षणभेदाभावमाश्रित्य। मूले एधिषीढ्वमिति। अत्रेटः षीध्वंशब्दभक्ततयाऽङ्गस्येण्णन्तत्वाभावेन मूर्द्धन्याभावः। *इति मते त्विति। "विभाषेटः" (पा० सू० ८-३-७९) इत्युत्तरसूत्रे इणः परस्येटो ग्रहणेन तत्रानुवर्त्तमानमिणिति पदमवश्यमिडतिरिक्तपरमिति स्वीकार्यमिति पूर्वसूत्रेऽपि तथैव युक्तमिति तेषाम्भावः। *अस्वरसस्येति। भाष्यानुपलभ्यमानत्वमात्रमत्रास्वरसबीजम्। ननु भाष्यकृतोवर्णान्ता अनुदात्ता इत्युक्तमतोऽत्र ऊदन्तपर्युदासः कथमत आह—*दीर्घ इति। *इडभावनिपातनमिति। एवञ्च दीर्घोकारान्तपर्युदासे तदेव मानमित्यर्थादुक्तम्भवति। ऋदन्तपर्युदासे मानन्तु "वृतो वा" (पा० सू० ७-२-३८) इत्यनेन ऋदन्तात्परस्येटो दीर्घविधानन्तरिता तरीतेत्यभियुक्तोदाहरणञ्च। तथा भाष्ये 'के पुनरनुदात्ताः' इतिप्रश्नङ्कृत्वा तेषान्निरूपणावसरे ऋदन्ताश्च जागृ, वृङ्, वृञ्, इत्युक्तम्। तत्र जागृप्रभृतीनां ह-

एकाच इति । *तेन 'जागृ' 'दीधी' इत्यादीनां व्यावृत्तिः* । शक्लि-ति । *भाष्ये त्वनुबन्धरहितः पाठो दृश्यते । पचिनि *डुपचेव, प्रसिद्धत्वात् । *सृजिर्दिवादिस्तुदादिश्च । बुध्यतीति । *यद्यपि भाष्ये श्यना निर्देशो नास्ति तथापि *माधवादिप्रामाण्यादुक्तः । तृप्यतिदृप्यतीति । *अत एव *'शे मुचादीनाम्' (पा० सू० ७-१-५९) इति सूत्रभाष्ये 'तृपितो, दृपितः' इत्युदाहृतम् । लुप् तुदादिरेव न दिवादि*र्व्याख्यानात् । शप्धातो*र्भ्वादेर्दिवादेश्च ग्रहणम् । श्लिष्यतीति *श्यना नि-

---

स्वऋवर्णान्तत्वात्पर्युदासेन तादृशानामेव ग्रहणम् । यौतिः=यु मिश्रणे । रौतिः=रुशब्दे रुङ् गतीति च, निरनुबन्धकपरिभाषालुग्विकरणपरिभाषाभ्याम् । *तेन=एकाच इति कथनेन । न चैकाच एव चेदनुदात्तत्वन्तदोर्णुञ्धातोरनेकाच्त्वादनुदात्तत्वञ्च स्यादिति 'ऊर्णुतः' इति न सिध्यतीति वाच्यम् । "ऊर्णोतेर्नुवद्भावो वाच्यः" इति वार्त्तिकबलेन तस्य सिद्धेः । न च नुवद्भावविधानदेकाच्त्वमेवातिदेशात्कल्प्यतामिति वाच्यम् । यथा तस्यैकाच्कल्पना तथानुपर्युदासस्यापि प्राप्तिसत्त्वात् । 'ऊर्णुतः' 'ऊर्णुतवान्' इति तु "श्र्युकः किति" ( पा० सू० ७-२-११ ) इत्यनेन सिध्यति । ऊर्णुनावेत्यत्राऽऽमभाववत् । अत एवोर्णोनूयते इत्यत्र यङ् । *भाष्ये त्वनुबन्धरहित इति । एवञ्च 'शक विभाषितः' इत्यस्याप्यनुदात्तत्वम्प्राप्नोति । *डुपचेवेति । अत्रैवकारेण 'पच व्यक्तीकरणे' इत्येतद्व्यावृत्तिः । न च तदनुबन्धकपरिभाषया तस्यैव ग्रहणं स्यादिति शङ्क्यम् । तस्याऽन्यतरानुबन्धोच्चारण एव प्रवृत्तेः। अत एवात्र पच् इत्यनुबन्धरहित एवोच्चारित इति । *सृजिरिति । 'सृज विसर्गे' इति । खिदित्यनेन-खिद दैन्ये खिद्यतेः खिनत्तेः खिन्दतेश्च ग्रहणम् । विद्यतिः=विद सत्तायामिति । विनत्=विद विचारणे । *यद्यपि भाष्य इति । तत्र हि युधिबुधीत्येव पाठात् । *माधवादिप्रामाण्यादिति । तेन बोधतेर्न ग्रहणमिति सिद्धम् । *अत एव=तृप्यतिदृप्यतीतिपाठादेव । यद्यप्यनिटां स्वरूपदर्शनपरभाष्ये तृपिदृपीत्येव पठितं तथापि "शे मुचादीनाम्" ( पा० सू० ७-१-५९ ) इतिसूत्रस्थभाष्यीयप्रयोगदर्शनादिह श्यना निर्देशः कृत इत्याह-*शे मुचादीनामितीति । एतेन तुदादिगणपठितयोर्व्यावृत्तिः । तप् इत्यनेन तप सन्तापे, तप ऐश्वर्ये । तप दाहे इत्यपि णिजभावपक्षे गृह्यते । भाष्ये तपीतिसामान्यत एव निर्देशात् । तिप्= तपृ प्रेरणे, तिप क्षरणे । तृप प्रीणने, दृप हर्षविमोचनयोः । यद्यप्यनयोरिड्विकल्पो भवति रधादित्वात्तथाप्यनुदात्तत्वमनयोः "अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्" ( पा० सू० ६-१-५९ ) इत्यमागमार्थम् । लुप् तौदादिक एव लुप्लृ छेदने इति । तेन दैवादिकस्य व्यावृत्तिः । *व्याख्यानादिति । भाष्ये लुपिलिपीति लिपिसाहचर्येण पाठमूलकव्याख्यानादित्यर्थः । *भ्वादेर्दिवादेश्चेति । शप उपालम्भे, शप आक्रोशे । भाष्ये शपीत्येव पाठात् । *श्यना निर्देशः=श्लि-

र्देशः 'श्लिष आलिङ्गने' (पा० सू० ३-१-४६) इति सूत्रभाष्यप्रामाण्यात्। तत्र हि 'श्लिषः' इति *विभक्तविहितक्सस्य पुषा*द्यङ्बाधकत्वमुक्तम्। *अनिट इत्यनुवर्त्तना*द्दाहार्थस्य सेटो ग्रहणाभाव इति कैयटः। मृषेर्भाष्ये *अनार्षः पाठः। *मृषस्तितिक्षायामिति सेणिनष्ठाया अकित्त्वविधानात्। अत एव मूले मृषिर्नोक्तः। पुष्येति। श्यना निर्देशो *मा-

ष्यतय इति निर्देशः। *विभक्तविहितस्येति। विभक्तेन सूत्रेण विहितस्येत्यर्थः। *अङ्बाधकत्वमुक्तमिति। स चाङ् यत्र प्राप्नोति तस्येह ग्रहणम्। अङ् च पुषादेरेव। तत्र हेतुमाह-*अनिट इत्यनुवर्त्तनादिति। 'श्लिष आलिङ्गने' इत्यस्य ग्रहणम्। कैयटोक्तिरपि साधिकेत्याह-*दाहार्थस्येति। यद्यपि "एकाचः" (पा० सू० ७-२-१०) इतिसूत्रभाष्ये 'श्लिषिविषी' इति सामान्यत एवोक्तं, तथापि श्लिष आलिङ्गन इतिसूत्रस्थभाष्यप्रामाण्येन दैवादिकस्यैवानिट्त्वङ्कल्प्यत इति भावः। भौवादिकः श्रिषु, श्लिषु, प्रुषु, प्लुषु, दाहे इत्ययन्तु न गृह्यते तस्य सानुबन्धकत्वेन सेट्कत्वात्। ननु "श्लिष आलिङ्गने" (पा० सू० ३-१-४६) इतिसूत्रेऽनिट इत्यनुवृत्तावेव किम्प्रमाणमिति चेत् 'आलिङ्गन' इति विभक्तसूत्रस्य नियमार्थत्वोपपादनपरम्भाष्यमेव। तथाहि-तत्र हि "श्लिष आलिङ्गने" (पा० सू० ३-१-४६) इति सूत्रस्य पुषाद्यङ्बाधकत्वमुत नियमार्थत्वमितिविचारे कैमर्थक्यान्नियमो भवतीत्यनेन पुषाद्यङ्बाधकतया चारितार्थ्यमुद्भाव्य 'उपाश्लिषज्जतु काष्ठम्' इत्यादावपि क्सः प्राप्नोति "शल इगुपधा" (पा० सू० ३-१-४५) इति सूत्रेण। एवमात्मनेपदे आलिङ्गनेऽनालिङ्गने च क्सः प्रसज्येतेत्यतिप्रसङ्गमभिधाय योगविभागात्सिद्धम्। योगविभागः करिष्यते। "श्लिषः" क्सो भवति। पुषाद्यङ्बाधनार्थम्। ततः-"आलिङ्गने" आलिङ्गने एव क्स इति नियमार्थमिदम्। तेन 'उपाश्लिषज्जतु काष्ठम्' इत्युक्तम्। अत्र भाष्ये श्लिष इत्यस्याङ्बाधकत्वकथनादङश्चानिट्कादेव प्राप्तेः "श्लिषः" (पा० सू० ३-१-४५) इति सूत्रेऽप्यनिट इत्यनुवृत्तिः सूचितेति। न च विभक्तसूत्रन्दाहार्थकधातोश्चिण् प्राप्तः 'उपाश्लेषि कन्या देवदत्तेन' इत्यत्र, तत्र तद्बाधनार्थमेवास्त्विति वाच्यम्। "चिण् भावकर्मणोः" (पा० सू० ३-१-६६) इति सूत्रे "चिण् ते पदः" (पा० सू० ३-१-६०) इति सूत्राच्चिण्ग्रहणानुवृत्त्यैव सिद्धे पुनश्चिण्ग्रहणञ्चिणेव यथा स्याद्यदन्यत्प्राप्नोति तन्मा भूत्" इत्युक्तम्भाष्ये। तेनास्य चिण्बाधकत्वाभावात्। *अनार्ष इति। क्वचिद् दृश्यते सोऽपपाठ इत्यर्थः। तत्र हेतुमाह-*मृष इति। *माधवादिप्रामाण्यादिति। मृषीत्येव भाष्ये पाठादिति भावः। कृष्धातुस्तु 'कृष् विलेखने' इति भौवादिकस्तौदादिकश्च गृह्यते 'कृषि कर्षति' इति व्याघ्रभूतिनोक्तत्वात्। 'विषिशिषी' जौहोत्यादिकरौधादिकौ च गृह्येते। पुष्धातुर्यद्यपि भाष्ये न पठितस्तथापि माधवादिप्रामाण्यान्निर्दिष्टः परन्तु दैवादिक एव न तु भौवादिक इत्याह। 'एवं विष विप्रयोगे' इति क्र्यादिषु पठितोऽपि। माधवस्तु जिष, विष, इति दण्डकपठितस्यापि भौवादिकस्य ग्रहणमित्याह।

धत्वादिप्रमाणात् । *वसतिर्भ्वादिः, वसिः *प्रसारणीति भाष्यात् । *शक्ल इति चन्द्रदुर्गाऽऽदिमतेन । वस्तुतो *भाष्ये लृदित्पाठाभावेन दिवादेरप्यनिट्त्वमत्र । *विद्यतिर्विनादिति विकरणनिर्देशस्य व्याख्यां व्याख्यान्तरखण्डनव्याजेन दर्शयति–विन्दतिरिति । भाष्येऽपीति । विन्दति, विनत्ति, विद्यतीति पाठ* इति भावः । सम्प्रत्युपलभ्यमाने विन्दि, विद्यति इति पाठेऽपि विन्दिग्रहणेन *उभयोर्ग्रहणं, विन्ते वेत्ति,विन्दतीति प्रयोगस्थविदेरनुकरणादिटः सत्त्वात् । *अत एव यस्य विभाषा अविदेरिति वक्तव्यम् इह माभूत् 'विदितः,' तत्तर्हि वक्तव्यं न वक्तव्यं यदुपाधेर्विभाषा तदुपाधेः प्रतिषेधः शविकरणस्य विभाषा, लुग्विकरणश्चायम्"इति "यस्य विभाषा" ( पा० सू० ७–२–१५ ) इति सूत्रे भाष्ये उक्तम् । *तौदादिकस्यापि सेट्त्वे 'अविदेः'इति वार्त्तिके *तद्ग्रहणमेव स्यात् । एवञ्च यदुपाधेरित्याश्रयणेऽपि *तदर्थं वार्त्तिकस्यावश्यकत्वेन तत्प्रत्याख्यानासङ्गतिः । मम तु त्रयाणामप्यनुदात्तत्वेन वार्त्तिके लुग्वि-

---

विनिगमनाविरहात् । *वसतिर्भ्वादिरिति । 'वस निवासे' इति । तत्र प्रमाणमाह–*प्रसारणीति । सम्प्रसारणीत्यर्थः । विनापि प्रत्ययमिति संशब्दलोपादेवन्निर्देशः । दुहधातुः 'दुह प्रपूरण' इति निर्दिष्टोऽदादौ, स एव ग्राह्यो न तु 'तुहिर्, दुहिर्, उहिर् अर्दने' इति भ्वादिः । *शक्ल इतीति । यद्यपि शकधातुस्वरूपनिरूपणं पूर्वत्र कृतमेव तथापि गणान्तरनिर्दिष्टानां केषां चिद्धातूनामिह यादृशानु ्व्या यदर्थान्निर्देशो यन्निवृत्त्यर्थञ्चानस्तन्निरूपणं करिष्यमाणं ज्ञात्वा शकधातोः पुनः स्मरणेन सिंहावलोकनन्यायेन पुनस्तत्र विशेष उक्तः । *भाष्य इति । तत्र हि 'शकिः कवर्गान्तानाम्'इत्येवोक्तम् । एवञ्च कान्त एक इति नव्योक्तमसङ्गतमिति भावः । *विद्यतिरिति । अत्र 'विद्यतिर्विनद्' इतिनिर्देशेन द्वावेव गृह्येते इति भ्रान्तिः स्यादिति 'विद्लृलाभ' इति तुदादौ निर्दिष्टो न व्यावर्त्यः किन्तु 'विद ज्ञान' इत्यदादिरिति दर्शयति–*इति पाठ इति । इति भाष्ये पाठ इत्यर्थः । *उभयोः=तौदादिकरौधादिकयोः । *अत एव=पूर्वोक्तानान्त्रयाणामेव ग्रहणस्य सर्वसम्मतत्वादेव । एतेनाश्रूयमाणविकरणः सेट्क इति दर्शितम्भवति । *तौदादिकस्यापीति । अपिनाऽदादिपठितसङ्ग्रहः । *तद्ग्रहणमेव=तौदादिकग्रहणमेव । "विभाषा गमहन" ( पा० सू० ७–२–६८ ) इतिसूत्रे विशिनारितिखण्डैनैकवाक्यतया तस्यैव ग्रहणसम्भवादिति भावः । *तदर्थम्=तौदादिकार्थम् । तद्रीत्या तस्येट्सहित एव प्रयोगो यथा स्यादिति निषेधाभावाय वार्तिकमावश्यकमिति तस्यानिट्त्वेनेड्रहितप्रयोग एव साध्योऽतस्तत्र प्रतिषेधेऽपीष्टापत्तिरिति 'अविदेः' इति वार्तिके वेत्तेरेव

करणस्यैव ग्रहणमिति न दोषः। *अत एव 'ज्येष्ठं परित्यज्य दारानग्नींश्च लब्धवानित्यर्थे परिवेत्तेति तृजन्तप्रयोगः सङ्गच्छते। यत्तु कैयटेन तत्रत्यं भाष्यमुपादाय वेत्तिरत्र विवक्षितो 'विद्ल लाभे' इत्यस्य तु प्रतिषेधो भवत्येव विन्न इति, विद्यतिविन्त्योस्त्वनुदात्तत्वादिट्प्रतिषेधः सिद्ध इति, तद् *एतेन परास्तम्। तौदादिकस्यापि सेट्त्वे अविदेरित्यनेन वेत्तेरेव ग्रहणे बीजाभावात्।

'नवेति'(पा० सू० ६-१-२०६) *'तेन रक्तम्' (पा० सू० ४-२१) 'तदस्मिन्नन्नं प्राये' (पा० सू० ५-२-८२) "क्तोऽकृतमितप्रतिपन्नाः" "शुष्कधृष्टौ (पा० सू० ६-१-२०६) क्तेन नञ्विशिष्टेन" (पा० सू० २-१-६०) इति निर्देशात् नुन्नो मग्नः पुष्टो मङ्क्ता मङ्क्तव्यमित्यादिभाष्यव्यवहाराच्च "वसतिक्षुधोरिट्" ( पा० सू० ७-२-२ ) "नुदविदोन्दत्रा" (पा० सू० ८-२-५६) "मस्जिनशोर्झलि" ( पा० सू० ७-१-६१ ) इत्यादिगमकाच्च नुत्तवद्वा *तुन्नवद्वेति भाष्यप्रयोगाच्चेति भावः। अकर्मक इति। देवदत्तो यज्ञदत्तं स्पर्द्धते इत्यत्र *स्पर्द्धापूर्वके शब्दने वृत्तिर्बोद्ध्या।

शर्पूर्वाः (पा० सू० ७-४-६१)। "हलादिः" (पा० सू० ६-४-६०) इत्यतः शेष इत्यनुवर्त्तते *अत्रादिरित्यनुवर्त्तते। तत्र *शर्व्यतिरिक्तवर्णापेक्षया धात्वादिभूता इत्यर्थः। तेन वव्रश्चेत्यत्र चस्य न शेषः। खयः किम्? सस्नम्भ। शर्पूर्वाः किम्? सपूर्वा इत्युक्तौ उखादिष्वपि खयः शेषापत्तेः। आशिष्येवेति। आशीःप्रतिपादनाय एवेति वाच्योऽर्थः। अर्थान्तरे "शेषात्" ( पा० सू० १-३-७८ ) इति परस्मैपदमेव।

अत एक ( पा० सू० ६-४-११० )। एकशब्दोऽसहायवाची,

---

ग्रहणम्। *अत एव=विन्दतेरनिट्त्वादेव *एतेन=पूर्वोक्तव्याख्यानेन। नवानामिहोक्तौ व्याघ्रभूतिसम्मतेर्हेतुत्वम्मूलकृता दर्शितन्तत्र न तत्सम्मतिरेव हेतुः किन्तु साधकान्तरमप्यस्तीत्याह—*"तेन रक्तम्" ( पा० सू० ४-२-१० ) इत्यादिना। तुदधातुर्भाष्यानुक्त इतिपक्षेऽप्याह—*तुन्नवद्वेति। *स्पर्द्धापूर्वके शब्दन इति। स्पर्द्धापूर्वकशब्दोत्पत्त्यनुकूलव्यापार इत्यर्थः। फलतावच्छेदकसम्बधश्चात्र स्वप्रयोज्यज्ञानाश्रयत्वमिति अस्य सकर्मकत्वसिद्धिरिति भावः। अभ्यासावयवस्य शर्पूर्वस्य खय्मात्रस्य शेषविधाने वव्रश्चधातावतिप्रसङ्गः स्यादिति तद्व्यावृत्त्यर्थमाह—*अत्रादिरिति। तदनुवृत्तावादिः खय् इत्यर्थः सम्पन्नस्तथा सत्यसम्भवो न हि शर्पूर्व आदिश्च भवतीत्यत आह—*तत्र शरिति।

*द्विवचनान्तेन समासः, द्वयोरेव मध्यसम्भवादित्याह—असंयुक्तेत्यादि। लिटीत्यादेशविशेषणम्। *एकदेशान्वयेऽपि सौत्रत्वाद् वृत्तिस्तदाह—लिण्निमित्तेति। तन्निमित्तादेशादिभिन्नमित्यर्थः। निमित्तञ्च प्रत्यासत्त्या *उपस्थितो लिडेवेत्याशयेनाह—किति लिटीति। "गमहन" (पा० सू० ६-४-९८) इत्यादितो यद्यपि क्ङितीत्यनुवृत्तं तथापि लिटो ङित्त्वासम्भवात्कितीत्युक्तम्। अभ्यासलोप इति। *विशिष्टविधिरत्र। प्राप्ताप्राप्तविवेकेन च लोपमात्रे विधेयता पर्यवस्यति। यद्वा समासेऽप्युद्देश्यविधेयतयाऽन्वयोऽस्ति सति तात्पर्ये क्वचित्। *लिटीति किम्?, पापच्यते। *अभ्यासविकारे बाध्यबाधकभावाभावेन दीर्घात्पूर्वं कृते वाऽभ्यासदीर्घे

---

*द्विवचनान्तेति। संख्यावाचकस्यैवैकशब्दस्य नित्यैकवचनान्तत्वनियम इति भावः। नन्वेकदेशान्वये गमकत्वाभावात्कथं वृत्तिरत आह—*एकदेशेति। *उपस्थितो लिडेवेति। लिटीत्यस्यावृत्त्योभयविशेषणत्वमित्यन्ये। समासे उद्देश्यविधेयभावाप्रतीतिवादिमताभिप्रायेणाह—*विशिष्टेत्यादि। अत्र लिटीतिप्रकृतसूत्रस्थमावर्त्यादेशस्य विशेषणमेतवाभ्यासलोपे निमित्तञ्चेति स्वकार्यमित्यभिप्रायेण मूले किति लिटीत्युक्तम्। तत्रादेशविशेषणस्य फलम् 'नेमिथ' 'सेहे' इति मूले एवोपात्तं, निमित्तत्वेन तदुपादानस्य फलन्तु नोक्तमत उपक्रमे भाष्योक्तन्तत्फलमाह—*लिटीति किम्? पापच्यते इति। प्रकृतसूत्रस्य लिण्निमित्तकत्वे लिटो ङित्त्वासम्भवेन कितीत्यस्यैव सम्बन्धो वर्णितः। लिटीत्यस्य तथात्वे तु ङितीत्यपि वक्तुं शक्यमिति भावः। न च पापच्यते इत्यत्र दीर्घत्वमेत्वम्बाधिष्यत इति वाच्यम्। अभ्यासविकारे बाध्यबाधकभावो नास्तीत्येतस्य कृतेऽपि दीर्घत्वे प्राप्तेः। एतदेवोपपादयति—*अभ्यास इत्यादिना। प्राप्नुत इत्युपादानेन सम्भवमात्रेणैतत्प्रयोजनत्वं तु तद्युक्तमिति ध्वनितम्। कथमिति चेदुच्यते—एत्वाभ्यासलोपयोः कृते दीर्घत्वे यद्यपि प्राप्तिस्तथापि यङीतिविशेषोपादानाद्विशेषविहितेन सामान्यविहितत्वम्बाध्यत इति प्रसिद्धन्यायेन दीर्घत्वम्बाधकम्भविष्यति। ननु स न्यायः प्रकृते नास्ति लिटीत्यस्यात्राप्युपादानात्। किञ्चैत्वाभ्यासलोपविषये ह्रस्वहलादिशेषयोरवश्यम्प्राप्तयोरेतौ यथा बाध्यसामान्यचिन्तया ह्रस्वहलादिशेषयोर्बाधकौ तथा दीर्घत्वस्यापि बाधकौ भविष्यत इति चेन्न। अपवादत्वस्यैव तत्प्रत्यभावात्। तदुक्तम्भाष्ये—"अभ्यासविकारेष्वपि ज्येष्ठमध्यमकनीयांसः प्रकारा भवन्ति। तत्र ह्रस्वहलादिशेषावुत्सर्गौ तयोर्दीर्घत्वमपवाद एत्वञ्च। अपवादविप्रतिषेधाद्दीर्घत्वम्भविष्यति" इति। अत्र भाष्येऽपवादविप्रतिषेधादित्यनेन दीर्घत्वम्प्रत्यपवादत्वन्नास्ति, तदप्राप्तियोग्यविषयेऽचारितार्थ्याभावादिति ध्वनितम्। यः सर्वबाध्यः स कनीयान्, यस्तु कस्य चिद्बाध्यः स मध्यमः, यस्तु

एत्वाभ्यासलोपौ प्राप्नुतः। *किं च परत्वादेत्वाभ्यासलोपस्य दीर्घत्वेन बाधः,'सकृद्गति'न्यायाच्च न पुनस्तौ इति भाष्यं उक्तम्। शब्दान्तरप्राप्त्या-च लोपो न नित्यः। अभ्यासविकारेषु न बाध्यबाधकभाव इति तु ज्ञा-पकसिद्धस्यासार्वत्रिकत्वान्नात्राश्रीयत इति *तदाशयः। *एतेन यत्रान्य-तरस्मिन्कृते सर्वेषां प्रवृत्तिस्तद्विषयः स न्याय इति कैयटोक्तमपास्तम्। दीर्घे कृते इत्वस्याप्राप्त्या 'अचीकरत्' इति "गुणो यङ्लुकोः" (पा० सू० ७-४-८२) इति सूत्रोक्ततदुदाहरणपर*भाष्यविरोधापत्तेः।

थलि च सेटि (पा० सू० ६-४-१२१)। *सेटीत्येव सामर्थ्यादेवा-किलिड्विषयत्वे लब्धे थल्ग्रहणं स्पष्टार्थम्। तेष्विति। 'देभे' इत्यादिषु *दकारादिषु सत्स्वपीत्यर्थः। एकेत्यादि किमिति। 'आटतुः' इत्यादौ हल्मध्ये इत्येतावताऽपि वारणसम्भवात् *इति प्रश्नः। नच 'बभणतुः' इत्यत्र "अभ्यासे चर्च्च" (पा० सू० ८-४-५४) इत्यस्यासिद्धत्वादेत्वादि स्या-दिति वाच्यम्। फलिभजिग्रहणेनैत्वाभ्यासलोपयोरभ्यासादेशस्यासिद्ध-त्वाभावज्ञापनात्। अनादेशादिरित्यादिग्रहणन्तु हलादिशेषमादाय सूत्र-स्यासम्भववारणाय *स्पष्टार्थम्। उत्प्लवनम्=उत्प्लुत्य गमनम्।

---

सर्वबाधकः स ज्येष्ठ इत्युच्यते। प्रकृते तु सम्भव एतस्य प्रकारस्य पर्जन्यन्या-येन नेमतुः इत्यादौ ह्रस्वप्राप्त्योपपादनीयः। तथा च दीर्घत्वे कृते पुनरेत्वा-भ्यासलोपौ न भविष्यतः। यथा तु दीर्घत्वे कृते तयोरप्राप्तिस्तत्प्रकारमाह-*किञ्चेत्यादिना। न च परत्वादित्यसङ्गतमेत्वाभ्यासलोपयोर्नित्यत्वादिति वा-च्यम्। शब्दान्तरप्राप्त्याऽनित्यत्वात्। *तदाशयः=भाष्याशयः। *एतेन= वक्ष्यमाणदूषणेन। *भाष्यविरोधापत्तेरिति। तत्र हि कृते दीर्घे "सन्यतः" इतीत्वन्न स्यादनया परिभाषया तु भवतीति प्रतिपादितम्।

*सेटीत्येव सामर्थ्यादिति। एतत्सूत्रारम्भसामर्थ्यादित्यर्थः। नन्वा-दिग्रहणम्प्रकृतसूत्रे व्यर्थम्। हलादिशेषस्य सर्वत्र प्राप्त्या सूत्रस्यैव वै-यर्थ्यापत्तिरिति तदतिरिक्तस्यैवादेशस्य ग्रहणसम्भवादिति चेन्न। देभतुरि-त्यत्रानुनासिकलोपेऽस्य सूत्रस्याप्रवृत्त्यापत्तेः। किन्त्वन्तु तत्र "श्रन्थिग्रन्थि" इति व्याकरणान्तरीयवचनेन भवति। *दकारादिष्विति। दकारस्य स्थान इत्यादिः। *इति प्रश्न इति। न च देभतुरित्यत्रानुनासिकलोपस्याभीयत्वेना-सिद्धत्वादेत्वं न स्यादिति "दम्भेश्च"इति वार्त्तिकमारब्धन्तदपि चेदादिग्रहणा-भावे न स्यात्तदा तद्वैयर्थ्यमिति वाच्यम्। तस्यादिग्रहणसिद्धार्थानुवादक-त्वात्। एवञ्चैकेत्यादि किमित्यस्यैकग्रहणविशिष्टङ्किमर्थमित्यर्थः। तत्सरतुरि-त्यत्र दोषवारणाय हल्विशेषणार्थमेकग्रहणमावश्यकमित्युत्तरस्य भावः। *स्प-

इदितो ( पा० सू० ७-१-५८ ) । इदित इति कर्मधारयेण धातोर्विशेषणम् । तेनेदिदन्तस्य धातोर्नुम्विधाना*चक्षिङादौ न दोषः । *धातोरिति धातूपदेशावस्थायां नुमर्थम् । तेन कुण्डेत्यादौ "गुरोश्च हलः" ( पा० सू० ३-३-१३ ) इत्यप्रत्ययसिद्धिः । अनुवर्तमानमङ्गस्येत्यङ्गत्वयोग्यस्येत्यर्थकं बोद्धव्यम् । तासौ तु न दोषः । तास एव वक्तुं शक्यत्वात् । सिच्यपि न दोषः । सच एव वक्तुं शक्यत्वादिति *स्पष्टं भाष्ये । श्विन्दते इति । *श्वेतो भवतीत्यर्थः । अभिवादनम्=*नतिः,तत्पूर्वकमाशिषां वाचनञ्च । *स्वप्नः=*आलस्यं निद्रागतावस्थाविशेषश्च ।

न शस ( पा० सू० ६-४-१२६ ) । गुणशब्दोऽत्र नादेङ्मात्रपरः *शसिददिग्रहणवैयर्थ्यापत्तेः । *व्यपदेशिवद्भावेन गुणावयवत्वस्थार्थमिति । देभतुरित्यत्र दोषाभावस्य स्पष्टप्रतिपत्त्यर्थमित्यर्थः ।

*चक्षिङ्ङादाविति । अत्रादिना ये धातव इरितस्तेषाम्प्रत्येकमिकाररेफयोरित्संज्ञाभवनपक्षे दोषाभावसङ्ग्रहः । ननु प्रकृतसूत्रे धातुग्रहणमनर्थकम् । न चाभैत्सीदित्यादौ सिजन्ते दोषः । तस्य स्थाने सजिति पाठेनादोषात् । तासिरप्यकारान्त एवोच्चारणार्थोकारान्तः पठनीयः । न च सजिति करणेऽमंस्तेत्यत्रानुनासिकलोपापत्तिरिति वाच्यम् । "हनः सिच्"(पा०सू० १-२-१४)इति कित्त्वविधानबलोपार्थं क्रियमाणमत्रैव नलोप इत्यर्थम्भविष्यतीत्यदोषात् । न च तस्सज्निमित्तक एव नलोपो यथा स्यात्सार्वधातुकनिमित्तको मा भूदिति नियमार्थम्भविष्यत्यन्यथा सार्वधातुकनिमित्तकस्य व्याश्रयत्वादसिद्धत्वाभावादत्रो लोपापत्तिरिति वाच्यम् । अन्तरङ्गेऽतो लोपे बहिरङ्गस्य नलोपस्यासिद्धत्वादेव तदप्राप्तेरार्द्धधातुकोपदेशेऽदन्तत्वाभावाच्च । न च तासेरिकाराभावे 'आहन्ता'इत्यादौ टिलोपे कृतेऽनिदितामिति नलोपापत्तिरिति वाच्यम् । "असिद्धवदत्राभात्" (पा० सू० ६-४-२२) इत्यनेन टिलोपस्यासिद्धत्वादत आह-*धातोरितीति । धातुग्रहणन्धातुसंज्ञाप्रवृत्त्यवस्थाविशिष्टे लाक्षणिकमिति भावः । न चाङ्गाधिकारबाधः । लक्ष्यानुरोधेनाङ्गपदस्याङ्गसंज्ञाप्रवृत्तियोग्यलाक्षणिकत्वात् । *स्पष्टम्भाष्य इति । धातुग्रहणसामर्थ्यात्तदुपदेशे नुम्विधानमिति हि तत्रोक्तम् । 'श्विदि श्वैत्ये' इत्यत्र श्वैत्यपदेन फलमात्रस्य निर्देशो न तु व्यापारस्य । न च तावता क्रियावाचकत्वलाभ इति श्वैत्यपदन्तत्समानाधिकरणभवनक्रियापलक्षणम्, इत्याशयेनाह-*श्वेतो भवतीति । *नतिः=नमस्करणम् । मदि स्तुति । मोदो=हर्षः । मदो=गवः । स्वप्नपदार्थमाह-*स्वप्न इति । *आलस्यम्=कर्तव्यार्थानवधानम् ।

*न शसददवादि । अत्र गुणशब्दस्यादेङ्मात्रपरत्वे गुणो योऽकार इत्यर्थापत्तावाह-*शसिददीति । नन्वत्र गुणशब्दो गुणावयवपरोऽवश्यं वाच्योऽन्यथा तेरतुस्तेरुरित्यस्यासङ्ग्रह इति कथं शसिददिग्रहणवैयर्थ्यमत आह-*व्यपदेशिवद्भावेनेति । ननु शसिददिग्रहणसामर्थ्याद्व्यपदेशिवद्भावानाश्रयण-

म्भवात्। अतो *व्याख्यानाच्च लक्षणया गुणशब्देनभावितपरः स इति बोध्यम्। अर्थमित्यादि। *आस्वादनम्=अनुभवो रुचिश्च।

धात्वादेः (पा० सू० ६-१-६४)। अत्र *सुब्धातुव्यावृत्तये *उपदेश इत्यनुवृत्तेरावश्यकतया षडित्यादेरपि तेनैव व्यावृत्तौ धातुग्रहणं स्पष्टार्थम्। आदेरिति *लषतिव्यावृत्तये, *षोपदेशफलन्त्वसिष्वददिति। 'ष्वद मानें' *मानं=सुखम्, चादास्वादने।

उपधायाञ्च (पा० सू० ८-२-७८)। "सिपिधातोः" (पा० सू० ८-२-७४) इत्यतो धातोरिति "र्वोरुपधायाः" (पा०सू०८-२-७६) इत्यतो र्वोरिति इति "हलि च" (पा० सू० ८-२-७७) इत्यतो

---

मत आह-*व्याख्यानादिति। तेरतुरित्यादिलक्ष्यदर्शनमूलकव्याख्यानादित्यर्थः। न च शसिदद्ग्रिहणसामर्थ्यादित्यनुपपन्नम्। गुणशब्दस्य गुणमात्रपरत्वे विधिनिषेधयोर्विषयव्यवस्थाया एवासम्भवः स्यादिति वाच्यम्। तावतापि विधिनिषेधयोर्विभागार्थङ्गुणशब्दस्य धातूपदेशेऽश्रूयमाणगुणे लक्षणाया आवश्यकत्वे गुणशब्देन भाविते लक्षणाया उचितत्वात्। न चैवं गुणशब्दस्य स्थाने ऋग्रहणमेव कार्यम्। ऋकारस्य स्थाने यो गुणस्तदवयवस्य निषेध इत्यर्थोऽस्त्विति वाच्यम्। ससरिथेत्यस्य सिद्धावपि लुलविथेत्यादेरसिद्ध्यापत्तेः। न च गुणस्य योष्वार इत्येवास्तु गुणशब्दश्च शब्दपर एवास्तु स्वबोध्यावयवत्वं षष्ठ्यर्थो भविष्यति गुणशब्दोपादानसामर्थ्यादशब्दसंज्ञेत्यस्य च बाधोऽस्त्वेतेनव सर्वेष्टसिद्धौ भावितपदोपादानवैयर्थ्यमिति वाच्यम्। गुणशब्दस्य गुणशब्दभाविते लक्षणायां शसेईदेरित्यत्र यथाऽवयवावयविभावः षष्ठ्यर्थोऽस्ति तथैव गुणस्य नेति वाक्येऽपि भवतीति शसिददिवादिभ्यस्तुल्यरूपत्वोपपत्तये मूलकृतैवमभिधानात्। गुणशब्दभावितत्वञ्च साक्षात्परम्परासाधारणमिति लुलविथेत्यादेः सङ्ग्रहः। नन्वास्वादन इत्येव मूले प्रथमत उपात्तमित्ययमित्यनेनार्थभेदेन सकर्मकत्वाकर्मकत्वविभागकथनासङ्गतिरत आह-*आस्वादनमिति।

*सुब्धातुव्यावृत्तय इति। षकारीयतीत्यादिव्यावृत्तय इत्यर्थः। *उपदेश इत्यनुवृत्तेरिति। उपदेशो वादिश्च धातुरेव न प्रातिपदिकम् "उद्देशश्च प्रातिपदिकानान्नोपदेशः" इति "आदेच उपदेशेऽशिति" (पा० सू० ६-१-४७) इति सूत्रे भाष्ये उक्तेः। *लषतीति। न चास्य सत्वे षकारोच्चारणवैयर्थ्यमिति वाच्यम्। लेषतुः लेषुरित्यत्र षत्वसम्पत्त्या चरितार्थत्वात्। ष्वदधातोः षोपदेशत्वफलमाह-*षोपदेशेति। *मानं सुखमिति। इह तथार्थो धातूनामनेकार्थत्वात्।

*उपधायाञ्च (पा० सू० ८-२-७८)। स्फूर्जधातोर्दीर्घोच्चारणादयन्दीर्घोऽनित्यः। तेन "हुर्छति" इत्याद्यपि भवतीति केचित्। वस्तुतस्तत्रापि ह-

हलीति चानुवर्त्तते धातोरित्यस्याभावे पदाधिकारस्य सत्त्वेन पदोपधाभूत-
योरित्यर्थे 'ऊर्द्दतः' इत्यसिद्धिः । सूत्रन्तु क्विबन्ते 'ऊर्दः' इत्यादौ चरितार्थ-
म् । कुर्द खुर्द । गुर्देति पृथग्धातुः । सेगिति । भाष्ये क्वचित् ह्रस्वा-
न्तस्य क्वचित् स्तॄ इति दीर्घान्तस्य पाठदर्शनादुभयोपादानं यद्यपि "एकाच"
( पा० सू० ७-२-१० ) इत्यत्र भाष्ये न दृश्यते तथापि यङ्विधौ 'सो-
सूच्यते' इति भाष्योदाहरणात्पूरितं सेगादिपर्युदासाद्वा तल्लाभः । यद्यपि
भाष्ये ष्वष्कतिर्न दृश्यते तथापि "सुब्धातुष्ठिवुष्वष्कतीनां प्रतिषेधः" इति
वार्तिकबलात्पठितः । *ष्ठिवेस्तु न सत्वं यादित्वादिति बोद्ध्यम् । "न रपर"
( पा०सू० ८-३-११० ) इति सूत्रे सृपि-सृजि-स्पृशि-स्पृहीनाम् *अ-
षोपदेशत्वेऽपि "पूर्वपदात्" (पा० सू० ८-३-१०६) इति सूत्रेण प्राप्तषत्व-
निषेधार्थं ग्रहणम् । तत्र हि "आदेशप्रत्यययोः"(पा० सू० ८-३-५९) इति
न सम्बद्ध्यते । अत एव द्विषाहस्रमित्यादौ छन्दसि तेन षत्वसिद्धिरिति वृत्तौ
स्पष्टम् । "पूर्वपदात्" ( पा० सू० ८-३-१०६ ) इति सूत्रे च छन्दसीति
सम्बद्ध्यते । *यद्यपि छन्दसि दृष्टानुविधिस्तथापि छान्दसान्यनिषेधवदिद-
मपीति बोद्ध्यम् । ग्रथि कौटिल्ये । कौटिल्यं=शाठ्यं वक्रता वा ।

श्लाघायामिति । अविद्यमानगुणसम्बन्धज्ञापनं श्लाघा ।

अथा*ष्टात्रिंशदिति । अष्टत्रिंशदिति पाठे भिन्ने पदे ।

इट ईटि ( पा० सू० ८-२-२८ ) । "संयोगान्तस्य" ( पा०
सू० ८-२-२३ )इत्यतो लोप इति "रात्सस्य"( पा० सू० ८-२-२४ )
इत्यतः सस्येति चानुवर्त्तते ।

वदव्रज ( पा० सू० ७-२-३ ) । हलन्तत्वादेव सिद्धे "अतो ह-
लादेः" ( पा० सू० ७-२-७ ) इत्यस्य बाधनार्थं*मनयोर्ग्रहणम् । तदन्त-

---

स्वपाठ एवेति बोध्यम् । ष्ठिवुधातावतिप्रसङ्गमाशङ्क्याह-*ष्ठिवेरिति । दन्त्या-
जन्तेत्यनेन लक्षणेन षोपदेशत्वनिर्णयकरणे यत्र साम्प्रतं षकारः श्रूयते 'षिधू
शास्त्रे' इत्यादौ तत्र लक्षणेनापि तथात्वनिश्चयः । यत्र तु साम्प्रतं सकार एव
श्रूयते सत्वादौ यथा, तत्र पूर्वकालस्थितपाठभ्रंशानुमानम्बोध्यम् । *अषोपदे-
शत्वेऽपीति । सृपिसृजी तु पर्युदस्तौ । स्पृशिस्पृहीत्यनयोस्तु दन्त्याजन्त-
सादित्वन्नास्ति।ननु छन्दसि दृष्टानुविधानादेव षत्वाभावे सिद्धे "न रपर"(पा०
सू० ८-३-११०)इति सूत्र एषामुपादानवैयर्थ्यमत आह-*यद्यपीत्यादि । *अ-
ष्टात्रिंशदिति । ह्यष्टन इत्यात्वम् ।

*अनयोः=वदव्रजेत्यनयोः । अजग्रहणसामर्थ्यादिति । तद्धि नाजन्त-

विधिनैव सिद्धेऽन्तग्रहणं स्पष्टार्थम्। ननु अज्ग्रहणसामर्थ्यात् *"नेटि"(पा० सू० ७-१-४) इति निषेधाच्चानन्त्याचो ग्रहणे सिद्धे हलन्तग्रहणं व्यर्थमिति चेन्न। इत आरभ्य *वृद्धिभाज एव सिच्परत्वेन विशेष्यन्त इत्यर्थज्ञापनार्थन्तत्सत्त्वात्। एवञ्चागङ्क्षीदित्यादिसिद्धये वर्णग्रहणे जातिग्रहणाय तदावश्यकम्। *अत एव लावस्थायामडागमेऽपाक्षीदित्यादावटो न वृद्धिः। विलोडनं=क्षोभणम्।

निषेधे प्राप्ते इति। *इदमुपलक्षणम्—अनष्टभ्नातीत्यादावप्राप्तस्य विधानात्।

उपसर्गात्सु (पा० सू० ८-३-६५)। *अभिषावयतीति ण्यन्तेऽपि षत्वं भवत्येव। शब्दशक्तिस्वभावेनोपसर्गाणां *प्रकृत्यर्थविशेषणताया एव स्वीकारात्। तदुक्तं भाष्ये-"सुनोत्यादीनां षत्वे ण्यन्तस्योपसंख्यानमधिकत्वात् अभिषावयति। नवाऽनन्यत्वात्। न च नात्र सुनोतिं प्रति क्रियायोगः किं तर्हि सावयतिं प्रतीति। सुनोतिं प्रत्येव क्रियायोगः। नासावेवं प्रेष्यते सुनुअभीति, किं तर्हि उपसर्गविशिष्टमसौ प्रेष्यते अभिषुणु इति" इति। अत्र वचनप्रत्याख्यानयोः *समफलत्वाय "नासावेवम्" इत्यादि-

---

स्येत्यर्थकम्। अकारान्तानामसम्भवात्। इगन्तानां तु "सिचि वृद्धिः" (पा० सू० ७-२-१) इति प्राप्तेः। एजन्तास्तु वृद्धियोग्याः सिच्परा न सम्भवन्त्यात्वस्य प्रवृत्तेरिति सामानाधिकरण्येनान्वयेऽज्ग्रहणवैयर्थ्यमिति भावः। *नेटीति निषेधादिति। इडादौ सिच्येतादृशानामेव सम्भव इति भावः। *वृद्धिभाजः=वृद्धिस्थानिनः। येन नाव्यवधानन्यायश्चाश्रयणीयस्तथा सत्येकवर्णव्यवधाने एव स्यान्न त्वराङ्क्षीदित्यादावधिकव्यवधाने। हल्ग्रहणे तु निर्दिष्टपरिभाषयोपस्थितमव्यवहितपदं हल्त्वजात्याश्रयातिरिक्तकृतव्यवधानाभावपरमिति भावः। *अत एव=वृद्धिभाजो विशेष्यत्वादेव। अतधातोः सातत्यगमनार्थकत्वेऽपि क्वचित्प्रत्यासत्तावपि वृत्तिरत एवास्माद् धातोरौणादिके कनि कृतेऽत्कशब्दः प्रत्यासन्नवाची श्रूयते।

"अत्के चेन्मधु विन्देत किमर्थम्पर्वतं व्रजेत्।"

इति यथा। मूले श्च्युतिर् क्षरणे। यकाररहितोऽप्ययमित्यत्रायमित्यस्य श्चुतिरित्यर्थः। तेन 'मधुश्चुतम्' इति प्रयोगसिद्धिः। मूले "सात्पदाद्योः" (पा० सू० ८-३-१११) इति। निषिषेधेत्यत्रेत्यादिः। निषेधबाधनार्थमेव 'उपसर्गात्सुनोति" (पा० सू० ८-३-६५) इत्यादिसूत्राणीति भ्रमवारणायाह—*इदमुपेति।

ननु ण्यन्तेनाभेर्योगात्कथं षत्वमत आह—*अभिषावयतीत्यादि। *प्रकृत्यर्थविशेषणम्=प्रकृत्यर्थगतविशेषणद्योतकता। *समफलत्वायेति। यदि

भाष्येण च मदुक्ते एव तात्पर्यं लभ्यते ।

सदिरप्र (पा० सू० ८-३-६५) । अप्रतेः किम् ? प्रतिसस्वाद ।
*ननु सदेरालम्बनाविदूर्ययोर्वृत्त्यभावादेवासम्बन्धः सिद्धोऽत आह-किं चेति ।

अवाच्चा ( पा० सू० ८-३-६८ ) । आविदूर्यं=*सामीप्यम् ।
अवष्टब्धा गौः=निरुद्धा सती समीपे आस्ते इत्यर्थः ।

*परिनिविभ्यः ( पा० सू० ८-३-७० ) । सेवेत्यत्राकार उ-

---

ण्यन्तसमभिव्याहारे शब्दशक्तिस्वाभाव्यादुपसर्गाणाम्प्रकृत्यर्थविशेषणत्वमेवेति नियमो न स्यात्तदा वचनारम्भपक्षे ण्यन्तसमभिव्याहारेऽभीत्याद्युपसर्गस्य प्रकृत्यर्थविशेषकत्वम्भवतु ;ण्यन्तविशेषणत्वम्वोभयथापि षत्वम्भविष्यति । प्रत्याख्यानपक्षे तु यदा सुनु अभीतिप्रेषणन्तदा षत्वन्न स्यादभिषुण्वति प्रेषणे तु स्यादिति फलभेदः स्पष्ट एवेति भावः । अत्र सेधेतिनिर्देशः शपा दैवादिकव्यावृत्त्यर्थः । तथा च 'षिध गत्याम्' 'षिधू शास्त्रे माङ्गल्ये च'इत्यनयोरेव ग्रहणसिद्धिः । निरनुबन्धकपरिभाषा तु "विप्रतिषिद्धञ्चानाधिकरणवाचि" ( पा० सू० २-४-१३ ) इतिनिर्देशान्न प्रवर्त्तते । विप्रतिषिद्धमित्यत्रेडभाव ऊदित्त्वाद्बोध्यः । "इण्कोः" ( पा० सू० ८-३-५७ ) इत्युभयोर्निमित्तत्वेनोपादानेऽपि कवर्गस्योपसर्गावयवस्यासम्भवादिण एव ग्रहणम् । न चोपसर्गाणां विशेष्यत्वमिण इति विशेषणमितीण्णन्तादुपसर्गादित्येव कुतो न व्याख्यायत इति वाच्यम् । निःषेधति दुःषेधतीत्यस्यासिद्धिप्रसङ्गात् । उपसर्गस्थान्निमित्तादिति व्याख्यानेन त्विण एव विशेष्यत्वमुपसर्गादिति तस्याभेदेन विशेषणन्तात्स्थ्याच्चाच्छब्द्यमिति न्यायात् । विसर्गसकारयोर्व्यवधानेऽपि षत्वम्भवत्येव । नुम्विसर्जनीयेत्यधिकारात् । निर्गतः सावक इत्यर्थविवक्षायान्निःसावक इत्येव । यत्क्रियायुक्ता इतिवचनेन सुनोत्यादीनां य उपसर्गस्तस्यैव ग्रहणात् ।

"उपसर्गात्(पा०सू०८-३-६५)इति सूत्रस्थमुपसर्गादितिपदमुत्तरसूत्रेषु सम्बध्यतेऽतः सौकर्यायेहैव तानि व्याचष्टे-*सदिरप्र ( पा० सू० ९-३-६६ ) ।

योगविभागस्य निमित्तान्तरमाह—*नन्वित्यादिना ।

अवाच्चा ( पा० सू० ८-३-६८ ) । अत्र चकारोऽलङ्काराय । आलम्बनम्=आश्रयणम् । *सामीप्यमिति । अत्र निरूपकम्प्रकरणादिना कल्पनीयम् । "न नञ्पूर्वे" (पा० सू० ५-१-१२१) इतिनिषेधेऽप्यत एव निपातनादाविदूर्येत्यत्र भावार्थकः प्रत्ययः ।

वेश्च स्वनो भोजने ( पा० सू० ८-३-६९ ) । भोजन इत्यस्य भोजने धात्वर्थ इत्यर्थः । विष्वणति चर्व्यम् । सशब्दम्भुङ्क्ते इत्यर्थः । भोजने किम् ? । विस्वनति मृदङ्गो वीणा चेति ।

*परिनिविभ्यः ( पा० सू० ८-३—७० ) । सेवेत्यत्राकार उच्चारणार्थ-

चारणार्थः। *सितसयौ षिञ्प्रकृतिकौ *व्याख्यानात्।

स्थादिष्व ( पा० सू० ८-३-६४ )। "प्राक्सिता" ( पा० सू० ८-३-६३ ) इत्यस्य सम्बन्धार्थं "प्राक्सिता" ( पा० सू० ८-३-६३ ) इत्युत्तरमिदं पठितम् न चाभ्यासस्य *नैरर्थक्यात्तस्य षत्वाप्राप्त्या कथमस्य नियमार्थत्वमिति वाच्यम्। द्विःप्रयोगत्वादभ्याससकारस्यापि अर्थवत्सुनोत्यादिसम्बन्धित्वाक्षतेः। अर्थवत्सुनोत्याद्यवयवत्वमिव तत्सम्बन्ध्यवयवत्वस्यापि अत्र षष्ठ्यर्थत्वात्। *यद्वा अत्र प्रकरणे तत्तद्धातोरिव तदानुपूर्वीकस्य च ग्रहणं *व्याख्यानात् *अत एव 'अनुषस्यन्दे' इत्यादौ 'अनुविपर्यभिनिभ्यः" ( पा० सू० ८-३-७२ ) इति अभ्यासस्य षत्वम्। *स्थादिष्विति नियमस्तु प्राक्सिताच्चेदभ्यासस्य षत्वं तदा स्थादिष्वेवेत्येवमिति नात्र तस्य प्राप्तिः "सुपिसूतिसमाः" ( पा० सू० ८-३-८८ ) इति सूत्रे भाष्ये सर्वमिदं स्पष्टम्। तत्र हि भाष्ये "विसुष्वापेति अभ्यासस्य षत्वं प्राप्नोति। नच स्थादिष्विति नियमान्न भविष्यति। प्राक्सितसंशब्दनान्नियमः, उत्तरश्च सुपिः। एवन्तर्ह्यनर्थकत्वान्न। न चैवं विषुषुपुरिति न सिद्ध्यति इति वाच्यम्। *सुपिभूतस्य द्विर्वचनात्" इत्युक्तम्। सुपिभूतस्येति प्रतीके यद्यपि कैयटेन द्विःप्रयोगे स एव सुपिर्द्विरुक्त इति समुदायाश्रयमेव षत्वमिति व्याख्यातं तथापि "दयतेर्दिगि" ( पा०सू० ७-४-९ ) इति

---

स्तेन 'षेवृ सेचन' इत्यस्य सङ्ग्रहः। सुट् आगमः। तेन परिष्करोतीत्यादौ षत्वसिद्धिः। सितशब्दः षिञ् बन्धन इत्यतः के सिद्धः। एवं सयशब्दोऽपि तदाह—*सितसयाविति। षिञ्प्रकृतिकाविति कथनेन षोऽन्तकर्मणीत्यस्य व्यावृत्तिः। *व्याख्यानादिति। अच्प्रत्ययान्तसयशब्दसाहचर्यमूलकव्याख्यानादित्यर्थः। प्रत्ययविशिष्टयोः सितसयशब्दयोरुपादानं विसिनोतीत्यत्र षत्वाभावार्थम्।

*नैरर्थक्यादिति। परभागसमभिव्याहारप्रतिबद्धार्थबोधजननशक्तिमत्त्वादित्यर्थः। अवयवावयविभावमात्रस्य षष्ठ्यर्थत्वस्वीकारेऽप्याह—*यद्वेति। *व्याख्यानादिति। सुविनिर्दुर्भ्यं इतिसूत्रीयभाष्यसम्मतव्याख्यानादित्यर्थः॥ भाष्यग्रन्थश्चानुपदमुदाहरिष्यते। *अत एव-तदानुपूर्वीकस्य च ग्रहणमितिव्याख्यानादेव। ननु स्थादिष्वितिनियमात्कथमनुषस्यन्द इत्यत्राभ्यासस्य षत्वमत आह—*स्थादिष्वितीति। *सुपिभूतस्य द्विर्वचनादिति। एतेन भाष्यग्रन्थेन तदानुपूर्वीकस्य ग्रहणमिति स्पष्टमेव लभ्यते। *दिगीतिसूत्रस्थभाष्यविरोधादिति। तत्र ह्यार्द्धधातुक इत्यस्य सप्तमीत्वात्तस्मिन्परतो भूभावेऽस्तेर्लिटि

सूत्रस्थभाष्यविरोधात्समुदायस्य सुपित्वानुपपत्तेश्च मदुक्तव्याख्याने एव भाष्यतात्पर्यम्। 'दिवि' (पा० सू० ७-४-९) इति सूत्रस्थभाष्यं त्वग्रे तनादिगणे स्फुटीकरिष्यते।

गङ्गां विसेधतीति। *'विप्रतिषेधः' इत्यत्र "सेधतेर्गतौ" (पा० सू० ८-३-११३) इति निषेधो न। तस्य विरोधार्थत्वेन गत्यर्थत्वाभावात्। सिषेधेत्यादौ "आदेशप्रत्यययोः" (पा० सू० ८-३-५९) इति षत्वं भवत्येव "अनन्तरस्य" इति न्यायेन "सेधतेर्गतौ" (पा० सू० ८-३-११३) इत्यनेन "आदेशप्रत्यययोः" (पा० सू० ८-३-५९) इत्यस्यानिषेधात् इति *के चित्। *सिचो यङीत्यादिसाहचर्यात्सर्वषत्वनिषेधः। "उपसर्गात्" (पा०सू० ८-३-६५) इत्यस्य तु नात्र सम्बन्धो विच्छिन्नत्वात्तेन गङ्गां विसिषेधेत्येव यद्यभिधानमस्तीति *अन्ये।

स्वरतिसूति (पा० सू० ७-२-४४)। सूतीत्यत्र गुणाभावः *सौत्रः। धूञः सानुबन्धकनिर्देशो 'धू विधूनने' इत्येतद्व्यावृत्त्यर्थः। "इट् सनि वा" (पा० सू० ७-२-४१) इत्यनुवर्त्तमाने वाग्रहणं "लिङ्सि-

---

परत्वाद्द्विर्वचने द्विःप्रयोगपक्ष एवास्तेर्भूरित्यनेन परस्य भूभावे कृते पूर्वस्य श्रवणम्प्राप्नोतीत्याशङ्क्य "आर्द्धधातुकीयाः सामान्येन भवन्ति अनवस्थितेषु प्रत्ययेषु, तत्रार्द्धधातुकसामान्ये भूभावे कृते यो यतः प्राप्नोति स ततो भविष्यति" इत्युक्तम्। यदि कैयटोक्तरीत्या समुदायस्य कार्यंतदा परस्य भूभावे पूर्वस्य श्रवणं प्राप्नोतीत्याभिधानमसङ्गतमेव स्यादिति तन्मते भाष्यविरोधः स्पष्ट एव।

ननु षिध गत्यामिति गतिरूपस्यार्थस्याभियुक्तोक्तत्वेन षिध्धातोर्गत्यर्थकत्वनिर्णयात् 'सेधतेर्गतौ' (पा० सू० ८-३-११३) इत्यत्र गताविति व्यर्थमित्याशङ्कानिवारणायाह—*विप्रतिषेध इति। तथा च प्रकृतसूत्रस्थगताविन्त्येव धातूनामनेकार्थत्वे लिङ्गम्। *के चिदिति। अनन्तरस्येतिन्यायमात्रानुसारिणः। *सिचो यङीत्येतत्साहचर्यादिति। न च सूत्रान्तरसाहचर्यन्न नियामकमिति साहचर्यादित्यनुपपन्नमिति वाच्यम्। साहचर्यादित्यनेन तस्मिन्सूत्रे "न रपर" (पा० सू० ८-३-११०) इति सूत्रान्नञः सम्बन्धेन सिचो यङि यद्यत्सूत्रविहितं षत्वम्प्राप्नोति तन्न भवतीत्यवश्यमेव व्याख्येयम्। 'अभिसिसेच्यते' इति तत्सूत्रभाष्योदाहरणात्। अन्यथा उपसर्गादित्यनेनाभ्यासस्य या प्राप्तिस्तस्या निषेधेऽपि "आदेशप्रत्यययोः" (पा० सू० ८-३-५९) इतिसूत्रेणोत्तरखण्डस्य षत्वं दुर्वारमेव स्यात्। तस्यैव च नञः सेधतेरित्यत्र सम्बन्धात्पूर्वसूत्रवदस्यापि तथैव व्याख्याया: सूचनात्। *अन्य इति। भाष्यस्वरसविदः।

*सौत्र इति। एवन्निर्देशो ह्रस्वान्तत्वभ्रमो न भवतीति फलं सिध्यति।

चोरात्मनेपदेषु" (पा० सू० ७-२-४२)*इत्यस्य निवृत्त्यर्थम् । न च स्वरतिग्रहणसामर्थ्यादेव तन्निवृत्तिः सिद्धा "ऋतश्च" ( पा० सू० ७-४-९२ ) इतीड्विकल्पस्य सिद्धत्वादिति वाच्यम् । स्वरतिग्रहणं नियमार्थं स्यादिति तस्याज्ञापकत्वादिति कैयटः ।

ऋकार इदिति । तत्फलन्तु "नाग्लोपि" ( पा० सू० ७-४-२ ) इति *ह्रस्वनिषेधः ।

अतो हलादेः ( पा० सू० ७-२-७ ) । अत्राङ्गान्त्येऽकारासम्भवाद्धलादेरिति सामर्थ्याच्चाङ्गस्याकार इति वैयधिकरण्येनान्वयः, हलः परस्याङ्गावयवाकारस्येत्यर्थेन सिद्धे आदिग्रहणं स्पष्टार्थम् । अचकासीदित्यादौ तु चकाराकारे नातिप्रसङ्गः सिच्परत्वेनाकार*विशेषणात् । नन्वेवं लघोरिति व्यर्थम् अतक्षीदित्यत्रापि 'येननाव्यवधान'न्यायेनैव वारणसम्भवादिति चेन्न, स्पष्टार्थत्वात् । अत इति तु 'अकुटीत्' *इत्यादौ वृद्धिवारणाय ।

नेर्गद (पा० सू० ९-४-१७) । अत्राड्व्यवायेऽपि *इति वर्त्तते । तेनाकारादिव्यवधानेऽपि णत्वम् । यद्यपि तत्र सूत्रे "रेफषकारयोर्निमित्तयोर्निमित्तिनश्च नस्याडादिव्यवाय आश्रितस्तथापि यत्र यन्निमित्तं निमित्ती च तयोरप्यडादिव्यवाये णत्वम्, अस्ति चात्र *गदादेर्निमित्तत्वं नेर्निमित्तित्वम्" इति *स्पष्टं भाष्यकैयटयोः ।

---

*इत्यस्य निवृत्त्यर्थमिति । तत्सूत्रस्थवाग्रहणानुवृत्तौ मध्यपतितत्वादस्याप्यनुवृत्तिः स्यात् । अधिकमत्र यद्वक्तव्यन्तत्परिभाषेन्दुशेखरे उक्तम् ।

*ह्रस्वनिषेध इति । अचखाददित्यत्र ।

*विशेषणादिति । अत्र 'येननाव्यवधान'न्यायस्य चाश्रयणेनान्यत्र दोषाभावादिति शेषः । *इत्यादाविति । आदिना 'न्यपुटीत्'इत्यस्य सङ्ग्रहः ।

*नेर्गदनद ( पा० सू० ८-४-१७ ) । *इति वर्तत इति । अट्कुप्वाङिति सूत्रस्थमड्ग्रहणं व्यवायेऽपीतिपदश्चानुवर्त्तत इत्यर्थः । कुप्वादिग्रहणन्तु नानुवर्त्तते । तथा च प्रण्यगदत् प्रण्यागददित्यादौ णत्वसिद्धिः, प्रनिक्कागददित्यत्र च न भवति । *गदादेर्निमित्तत्वमिति । रषाभ्यामितिपञ्चम्यन्तपदोपात्तस्य यथा निमित्तत्वन्तथा गदादिशब्दघटितप्रकृतिकसप्तम्यन्तशब्दोपात्तस्यापि निमित्तत्वमिति भावः । *स्पष्टं भाष्यकैयटयोरिति । तत्र हि-'नेर्गदादिष्वड्व्यवाय उपसङ्ख्यानङ्कर्त्तव्यम् । प्रण्यगदत् । आङा चेति वक्तव्यम् । प्र-

धात्वादेरित्यनुवर्त्तनादाह—धात्वादेरिति । अत्रोपदेश इत्यनुवृ-त्त्या *णादिनामधातुव्यावृत्तिर्बोद्ध्या ।

नाटीति । 'नट अवस्यन्दने' चुरादिरेव *व्याख्यानात् । तेन भ्वादिर्णोपदेश एव । आहुरिति । *भाष्यविरोधोऽत्रारुचिः ।

उपसर्गाद (पा० सू० ९-४-१४)। "पूर्वपदात्सञ्ज्ञायाम्" (पा०सू० ८-३-१०६) इत्यतः पूर्वपदात् *इत्यनुवृत्तौ तदाक्षिप्तसमासे एव स्यादतः असमासेऽपीति । ननु पूर्वपदाधिकारस्यात्र निवृत्ते*र्व्या-ख्यानत एव सिद्धाविदं व्यर्थम् । न चासञ्ज्ञायां "पूर्वपदात्" (पा० सू० ८-३-१०६) इति नियमव्यावर्त्तितणत्वमतिप्रसङ्गाय समासासमासयो-*र्विशिष्यविधानार्थम् । पूर्वपदादिति दृष्ट्या "उपसर्गादसमासे" (पा०

---

ण्यागदत् । ननु चायमट् गदादिभक्तो गदादिग्रहणेन ग्राहिष्यते । न सिध्यति । अङ्गस्याडित्युच्यते विकरणान्तश्चाङ्गम् । एवन्तर्ह्यड्व्यवाय इति वर्त्तते । क्व प्रकृतम् ? । अट्कुप्वाङ्नुम्व्यवायेऽपीति । तद्धि कार्यिविशेषणन्निमित्तविशेषणेन चेहार्थः । तत्रापि निमित्तविशेषणमेव" इत्युक्तम् । अत्र कैयटः—"यत्र यन्निमि-त्तन्तत्र तस्याडादिभिर्व्यवधाने णत्वमित्याश्रीयते" इति । गदादीनामपि निमि-त्तत्वसद्भावादड्व्यवधाने णत्वं सिध्यतीत्यर्थः । एतद्भाष्यकैयटैकवाक्यतया "अट्कुप्वाङ्" (पा० सू० ८-४-२) इतिसूत्रस्यापि व्याख्याऽडादिव्यवहितर-षाभ्यामुत्तरस्य नस्य णत्वमित्येवोचिता । अडादिभिर्व्यवहितस्य नस्येति तु फलितार्थः ।

*णादिनामधात्विति । णकारीयतीत्यादेः ।

*व्याख्यानादिति । नाटीतिदीर्घनिर्देशमूलकव्याख्यानादित्यर्थः । *भा-ष्यविरोध इति । "णो नः" (पा० सू० ६-१-६५) इति सूत्रभाष्ये—"अथ किमर्थं णकारमुपदिश्य नकार आदेशः क्रियते, न नकार एवोपदिश्येत ? । लघ्वर्थमि-त्याह । अविशेषेणायं णकारमुपदिश्य तस्य नकारमादेशमुक्त्वा तस्य लघुनोपा-येन णत्वन्निर्वर्त्तयति उपसर्गादसमासेऽपि णोपदेशस्येति । इतरथा हि येषान्तत्र णत्वमिष्यते तेषान्तत्र ग्रहणं कर्त्तव्यं स्यात् । के पुनर्णोपदेशा धातवः ? । सर्वे णाद-यो णोपदेशाः नृतिनन्दिनर्दिनक्किनाटिनाथृनाधृनृवर्जम्" इति प्रतिपादितम् । ये नाधादीनां णोपदेशत्वं वदन्ति, तेषां पर्युदासपरवाक्यविरोधः स्पष्ट एव ।

*इत्यनुवृत्ताविति । "कुमति च" (पा० सू० ८-४-१३) इति सूत्रप-र्यन्तन्तदनुवृत्तेः क्लृप्तत्वादिहापि तदनुवर्त्ततेति भावः । *व्याख्यानत एवेति । उत्तरसूत्रेषूपसर्गादित्यनुवृत्त्यैव सामञ्जस्ये पूर्वपदादित्यस्य निष्प्रयोजनत्वे-नासम्बन्धात्प्रकृतसूत्रेऽप्यसम्बन्ध इत्येतत्समीक्षामूलव्याख्यानत इत्यर्थः । *वि-शिष्य विधानार्थमिति । योगविभागेनासमासेऽपीति विशिष्य विधानार्थम् ।

सू० ९-४-१४ ) इत्यस्यासिद्ध्या नियमेन व्यावृत्तेः कर्तुमशक्यत्वात् । न च*एतत् 'प्रकरणे प्रकरणमसिद्धं न तु सूत्रे सूत्रम्' इत्यर्थज्ञापकमिति वाच्यम् । *"रषाभ्याम्" ( पा० सू० ८-४-१ ) इत्यत्र समानपदे इत्यस्याखण्डपदे इत्यर्थेन पूर्वपदादित्यस्य विध्यर्थत्वेन ज्ञापकासम्भवात्, इति चेन्न । स्पष्टार्थत्वात् ।

तस्मात् ( पा० सू० ७-१-७१ ) । तच्छब्देन "अत आदेः" (पा०सू० ७-४-७०) इति कृतदीर्घः परामृश्यते *उपस्थितत्वात्, तदाह-दीर्घीभूतादिति । अत्रापि लिटीति वर्त्तते । दन्दशूकस्याक्रियात्वादाह-*दन्दशूकक्रियायामिति । दन्दशूको=बिलेशयः । यदनैकदेश इति । *तत्क्रियायामित्यर्थः ।

आदिर्ञि ( पा० सू० १-३-५ ) । ञिकारीयतीत्यादौ नेदम् । तेषाम*नभिधानात् । यत्तूपदेश इत्यनुवृत्तेस्तत्र न दोष इति, तन्न । तस्या*स्वरितत्वात् । किं च तदनुवृत्तावादिग्रहणवैयर्थ्यापत्तिः । पट्वादिशब्दे उपदेशाभावादेव तदप्रवृत्तेरित्याहुः ।

द्विचत्वारिंशादिति । "विभाषा चत्वारिंशत्प्रभृतौ" ( पा० सू० ६-३-४१ ) इति विकल्पविधानादात्वाभावः । अषोपदेशत्वादिति । सेकः पर्युदासादन्ययोर्दन्त्याजन्तसादित्वाभावादित्यर्थः ॥

ऋदुपधेभ्य इति ( का० वा० ) । यद्यपि 'विभिदतुः' इत्यत्र कित्वं नित्यं तथापि ऋदुपधे तदनित्यङ्गुणे संयोगात् परत्वात् । तत्र *परत्वात् गुणे प्राप्ते इदम् । कित्त्वावकाश ईजतुरित्यादिः, गुणावकाशश्चेतती-

---

अन्यथोपसर्गात् णोपदेशस्येत्यस्य पूर्वपदादिति नियमेन व्यावृत्तिः स्यात् । *एतत्=असमासेपीति विभक्तसूत्रम् । पूर्वपदादित्यस्य नियमार्थत्वे भवदुक्तं सम्भवदुक्तिकम्भवेत् तदेव तु नेत्याह-*रषाभ्यामित्यादिना ।

*उपस्थितत्वात्=अव्यवहितपूर्वसूत्रोपस्थितत्वात् । *दन्दशूकक्रियायामितीति । दन्दशूककर्तृकक्रियायामित्यर्थः । पूर्ववदनुपपत्त्याऽऽह—*तत्क्रियायामिति ।

*अनभिधानादिति । ञिकारीयतीत्यादिव्यावृत्यर्थं विशिष्य यत्नाकरणमत्र बीजम् । *अस्वरितत्वादिति । एतच्च "उपदेशेऽज्"(पा० सू० १-३-२) इतिसूत्रघटकोपदेशपदे स्वरितत्वाभावप्रतिपादनावसरे प्रतिपादितम् ।

त्यादिः । परे तु ऋदुपधविषये *तल्लक्षणोपप्लवकृतकित्त्वस्या*नवकाशत्वमेव । तदुक्तं भाष्ये—"उक्तं वा क्सस्यानवकाशत्वादपवादो गुणस्य" इति । यथा "क्सस्य कित्त्वसामर्थ्यादेवालिक्षदित्यादौ गुणो बाध्यते, तथेह ऋदुपधविषयैतल्लक्षणोपप्लवप्रापितातिदेशसामर्थ्यादित्यर्थः" इति कैयटः । न च *परत्वाद् गुणस्यै*तद्विषयलक्षणोपप्लव एव नेति वाच्यम् । "असंयोगात्" ( पा० सू० १-२-५ ) इति कित्त्वस्यैतद्विषये निषेधातिदेशकत्वेन 'निषेधाश्च बलीयांसः' *इति न्यायादत्र विषये विप्रतिषेधाप्रवृत्तेः । न च संप्रसारणविधौ कित्त्वस्य कृतार्थत्वात् दुर्बलनानेनानिदेशेन प्राप्यमाणो गुणनिषेधो दुर्बल इति विधिरनेन स्पर्द्धत इति परत्वप्रवृत्तिरस्त्येवेति वाच्यम् । 'विचति' 'गृह्णाति' इत्यादौ *अतिदेशप्राप्तङित्त्वस्य संप्रसारणेन कृतार्थतया तदनन्तरप्राप्तगुणेन *त्वदुक्तरीत्याऽतिदेशप्राप्तगुणानिषेध*बाधापत्तेः । एवञ्च "विषम उपन्यासः अनवकाशं क्सस्य कित्त्वम् । इह पुनरुभयं सावकाशम्" इत्यादिस्तदुत्तरभाष्यग्रन्थ एकदेश्युक्तिरित्याहुः ।

उवोर्खति । "द्विर्वचनेऽचि" ( पा० सू० १-१-५९ ) इति निषेधात्पूर्वन्द्वित्वे कृते उकारस्य वार्णादाङ्गस्य बलीयस्त्वात्सवर्णदीर्घं बाधित्वा गुणे कृते उवङ् । *एतेन गुणस्य स्थानिवत्त्वेन *अन्तरङ्गत्वात्स-

---

*परत्वात्=कित्त्वात्परत्वात् । *एतल्लक्षणोपप्लवेति । असम्भवादिति लक्षणोपप्लवेत्यर्थः । गुणापेक्षया पूर्वविप्रतिषेधेन कित्त्वस्य बलवत्त्वं यदुक्तं तन्न युक्तमित्याशयेनाह–परे त्विति । *अनवकाशत्वमेवेति । एवञ्चातुल्यबलत्वात् पूर्वविप्रतिषेधो न युक्त इति भावः । *परत्वाद् गुणस्येति । "असंयोगात्" (पा० सू० १–२–५) इति सूत्रापेक्षया परत्वादित्यर्थः । *एतद्विषयलक्षण इति । एतद्विषयककित्त्वविधायकलक्षणेत्यर्थः । *इति न्यायादिति । अस्य बलवत्त्वेनेति शेषः । *अतिदेशप्राप्तेति । "सार्वधातुकमपित्"(पा० सू० १–२–४)इत्यतिदेशप्राप्तेत्यर्थः । *त्वदुक्तरीत्या=दुर्बलेनातिदेशेनेत्युक्तरीत्या । *बाधापत्तेरिति । एवञ्च "न च" इत्यादिकैयटोक्ता रीतिरसङ्गतेति भावः । मूले सुब्धाताविति । एतदुदाहरणं षण्ढीयतीत्यादि । भाष्ये तु "धात्वादेः"(पा० सू० ६–१–६४) इति सूत्रे उपदेशपदसम्बन्धेन तत्रत्यं धातुग्रहणमेतद्वार्तिकस्थं सुब्धातुग्रहणञ्च प्रत्याख्यातम् । ष्ठिवुप्रभृतीनामपि यादित्वादेव सिद्धौ तेषामप्यत्र वार्तिके ग्रहणमनावश्यकमिति बोध्यम् ।

*एतेन=वार्णपरिभाषाप्रवर्त्तनेन । एतस्याः परिभाषाया अन्तरङ्गपरिभाषाबाधकत्वादिति भावः । *अन्तरङ्गत्वात्=उवङादेशापेक्षयाऽन्तरङ्गत्वात् ।

वर्णदीर्घः स्यादित्यपास्तम् । *पूर्वस्यैव विधौ स्थानिवत्त्वात् । उवङि तु न स्थानिवत्त्वम् । अ*सवर्णग्रहणसामर्थ्यात् । सन्निपातेति । आमि सति धातोर्णल्परत्व*व्याघातः स्यादिति भावः । वार्णादिति । *अत्र हि "अभ्यासस्य"(पा०सू०६-४-७८)*इति सूत्रं ज्ञापकम् । तद्धि 'इयेष' इत्यादावियङाद्यर्थम् । तत्र पूर्वप्राप्तगुणवृद्ध्योः "द्विर्वचनेऽचि" (पा०सू०१-१-५९) इति निषेधे द्वित्वोत्तरं प्राप्ते गुणवृद्धी बाधित्वाऽन्तरङ्गत्वात्सवर्णदीर्घे *तद्वैयर्थ्यं स्पष्टमेवेति *अन्यत्र विस्तरः । परत्वाच्चेति । अस्य *परकाल-

---

प्रकारान्तरेण तदुक्तङ्खण्डयति-*पूर्वस्यैवेति । *असवर्णग्रहणसामर्थ्यादिति । एतद्धि यत्रासवर्णपरत्वन्तत्रैव यथा स्यादित्येवमर्थम् । यद्येतत्प्रवृत्तिकाले "अचः परस्मिन्" (पा० सू० १-१-५७) इति स्थानिवद्भावः स्यात्तदाऽसवर्णपरत्वन्दुर्लभं स्यादिति भावः । *व्याघातः स्यादिति । णल्निमित्तिका ह्यस्य गुरुमत्ता, यदि णलो निवृत्तिः स्यात्तदोपजीव्यविरोधः स्पष्ट एवेति भावः । *अत्र=वार्णपरिभाषायाम् । *इति सूत्रमिति । एतदानुपूर्वीकन्धातुविशेषोपादानरहितं सूत्रमित्यर्थः । *तद्वैयर्थ्यम्=तादृशसूत्रवैयर्थ्यम् । यत्त्वेतत्परिभाषाज्ञापनावसरे भाष्ये "अभ्यासस्यासवर्णे" ( पा० सू० ६-४-७८ ) इत्यसवर्णग्रहणङ्करोतीत्युक्तन्तस्यायमर्थः—गृह्यते यस्मिन्तद् ग्रहणम् असवर्णस्य=असवर्णपदस्य ग्रहणम्=असवर्णग्रहणम्, असवर्णपदघटितं सूत्रमित्यर्थः । अत एव भाष्यकृता "अनर्थकमेतत्स्यात्" इत्यनेन सूत्रस्य सार्थक्यमाशङ्कितम् । *अन्यत्र विस्तर इति । इयर्तीत्यादौ चारितार्थ्येऽपि सामान्यतो लक्ष्यसंस्कारकसूत्रवैयर्थ्यमेव । ऋधात्वर्थमुरित्येव ब्रूयात् । आरेत्यत्रापत्तिरिति तु न । य्वोरित्यनुवर्त्यार्त्तेरिवर्णस्याभ्यासावयवस्येयङित्यर्थात् । न चार्त्तेरेवात्र ग्रहणमत्र किम्मानमृवर्णान्तधातोरिति किन्न स्यादिति वाच्यम् । "इणो यण्" ( पा० सू० ६-४-८१ ) इत्येतत्साहचर्येण वर्णात्मकस्य धातुपाठपठितस्य ग्रहणात् । तेन ऋशब्दे क्व्यन्ते नातिप्रसङ्गः । नन्वेवमङ्किटकटीत्यत्र प्रश्लिष्टाद्धीगतीत्यत्र प्रश्लिष्टाद्वा इकारात्मकाद्धातोर्लिटि थलि भारद्वाजनियमादिड्विकल्पे इययिथ, इयेथेत्यत्रेडभावपक्षे पूर्वप्राप्तगुणस्य "द्विर्वचनेऽचि" ( पा० सू० १-१-५९ ) इत्यनेनाच्परत्वाभावान्निषेधाप्राप्त्या जाते गुणे द्वित्वेऽभ्यासह्रस्वत्वेऽसवर्णपरत्वेन प्रकृतसूत्रस्य चारितार्थ्यमिति वाच्यम् । सम्पूर्णसूत्रस्य ज्ञापकतापरभाष्यप्रामाण्येनैतादृशे विषये "अचस्तास्वत्थल्यनिटो नित्यम्" ( पा० सू० ७-२-६१ ) इत्यस्य सूत्रस्याप्रवृत्तिकल्पनेन क्रादिनियमादिडागमस्यैव प्रवृत्तिस्वीकाराद् "द्विर्वचनेऽचि" ( पा० सू० १-१-५९ ) इत्यस्य निषेधशास्त्रस्य प्रवृत्तेः । न चेयायेत्यादौ जातेऽपि सवर्णदीर्घे पूर्वान्तवद्भावेनाभ्यासत्वादिवर्णत्वाच्च णल्यसवर्णे परे इयङ्विधायकत्वेन सूत्रसार्थक्यम् । "अचि श्नु" ( पा० सू० ६-४-७७ ) इत्यनेन तु न सि-

प्राप्तिकृत्वादित्यर्थः । एवञ्चाभ्यासविकारे बाध्यबाधकभावाभावेन ह्रस्वहलादिशेषयोर्युगपत्प्रवृत्तौ ततः परकालो दीर्घ इत्यन्तरङ्गत्वाद्दीर्घत्वं स्यादिति *न वाच्यमिति भावः ।

अनिदितामिति । इदं कुञ्चधातुविषयम् । कुञ्चौ "अनिदिताम्" ( पा० सू० ६-४-२४ ) इति न प्रवर्त्तते । *"परेश्च घा" ( पा० सू० ८-२-२२ ) इति सूत्रस्थभाष्यप्रामाण्येनास्य ञोपधत्वात् । "नकारजावनुस्वारपञ्चमौ' इति तु प्रायिकं, तदाह—कुञ्चयादिति । ञकाररहितपाठस्त्वपपाठः ।

इति मते त्विति । *इदमेव युक्तम् । तपरकरणफलस्य भाष्यानुक्तत्वात् ।

अजेर्व्यी ( पा० सू० २-४-५६ ) । *अत्र "वा लिटि" ( पा० सू० २-४-५५ ) इत्यतो वेत्यनुवर्त्तते । तेन व्यवस्थितविभाषा । *तेन घञपूक्यप्सु न, ल्युटि वा, वलादावार्द्धधातुके वा, अन्यत्र नित्यमेव । अत्र अ-

---

द्धिर्वृद्ध्या बाधादिति वाच्यम् । प्रत्यासत्त्याऽसवर्णपदेनाभ्यासोत्तरखण्डसम्बन्ध्यसवर्णाच एव ग्रहणादित्यादिकमन्यत्र विस्तृतमित्यर्थः । नन्वनेन सूत्रेणान्तरङ्गपरिभाषाया अनित्यत्वमेव ज्ञाप्यतान्तावतैव सकलेष्टसिद्धिर्भविष्यतीतीयम्परिभाषा नारब्धव्येतिमतेनाह-मूले परत्वाच्चेति । परत्वादित्येतद्व्याचष्टे-*परकालेति । *न वाच्यमिति । तथा च ह्रस्वस्य पूर्वम्प्रवृत्तत्त्वाद्विकारकृतलक्ष्यभेदाभावेन पुनर्ह्रस्वो न भविष्यतीति भावः । *"परेश्च घा" (पा० सू० ८-२-२२) इति सूत्रस्थभाष्येति । तत्र-"सङि लत्वसलोपसंयोगादिलोपकुत्वदीर्घत्वानि"इति वार्त्तिकव्याख्यानावसरे कुञ्चेत्यत्र चोः कुञ्झलीति कुत्वम्प्राप्नोति । सङीति वचनान्न भवति । एतदपि नास्ति प्रयोजनम् । निपातनादेतत्सिद्धम् । किन्निपातनम् ? । ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चाम्" इति प्रतिपादितम् । यद्ययन्नकारोपधः स्यात्तदाऽनुस्वारपरसवर्णयोरसिद्धत्वान्नकार एव कुत्वविधायकशास्त्रदृष्ट्याऽस्तीति कुत्वस्य प्राप्तिरेव नास्तीत्येवमभिधानमसङ्गतं स्यादिति प्रतिपादितम् ।

*इदमेव=स्वाभाविकह्रस्वपरिग्रहार्थमित्यत्र भाष्यसम्मतसाधकाभावान्मुखसुखार्थत्वमेव ।

अजेर्व्यघञपोः ( पा० सू० २-४-५६ ) । अत्राघञपोरित्यस्य न प्रयोजनमिति प्रतिपादयितुमाह-*अत्रेत्यादि । *तेन=व्यवस्थितविभाषात्वस्वीकारेण । *स्पष्टश्चेदम्भाष्य इति । तत्र हि-"वा लिटि ( पा० सू० २-४-५५ ) इत्यतो

घञपोरिति न वक्तव्यम् । *स्पष्टश्चेदं भाष्ये । एवञ्चैतद्विकल्पसामर्थ्या-द्वीधातोरज्यर्थसार्वधातुके एव प्रयोगो नार्द्धधातुक इति बोद्धव्यम् । स्वर-दीर्घेति । 'पूर्वत्रासिद्धीये' इति *निषेधस्याप्ययं नियम इति भावः ।

चतुर्णामिति । *कृत्वादिना चतुष्टं विनिगमनाविरहेण तेषां सर्वे-षां नियमार्थत्वमेव । तदुत्तरेषान्तु विध्यर्थत्वसंभवा*न्न तदर्थत्वम् । *प्रकृत्या-श्रयः="एकाच उपदेशे" ( पा० सू० ७-२-१० ) इति क्रादिषु प्राप्तः, *प्रत्ययाश्रयः="श्र्युकः क्किति"(पा०सू०७-२-११)इति *वृधातोः प्राप्तः । *प्रत्ययाश्रयस्य नियमे वृग्रहणमेव मानम् । धात्वानिति । नञ्त्वाशब्दा*न्य-

---

वाग्रहणमनुवर्त्याजेर्वीभावो भवति वा । व्यवस्थितविभाषा चेति । तेनेह भवि-ष्यति-प्रवेता, प्रवीतुम्, प्रवीतो रथः, संवीतिः । इह न भविष्यति-समाजः, उदाजः, समजः, उदजः, समजनम्, उदजनम्, समज्या चेति । तत्रायमप्यर्थः-इदमपि सिद्धम्भवति प्राजिता'इति । अत्र प्रवेता प्राजितेत्युभयोपादानाद्वला-दावार्द्धधातुके परे विकल्प इति लब्धम् । विव्यतुः विव्युरित्यत्रोपाध्यायाश्चेतिदी-र्घमाशङ्क्य स्थानिवद्भावेन समाहितम् । एतदुत्तरं यणादेशस्य बहिरङ्गत्वेनाप्येत-त्सुसाधमिति क्वाचित्कोऽपपाठः । त्रैपादिकेऽन्तरङ्गे बहिरङ्गपरिभाषाया अप्रवृ-त्तेर्बहुषु प्रतिपादितत्वात् । प्राचीनरीत्या कार्यकालपक्षाश्रयणेन वा तस्योपपत्तिः कार्या । *निषेधस्याप्ययन्नियम इति । अत्र च रिर्यतुः । रिर्युः । संविव्यतुः । संविव्युरित्यत्र स्थानिवद्भावस्यैव दीर्घवारकस्य स्वीकारपरभाष्यमेव मानम् ।

कृसृभृवृ ( पा० सू० ७-२-१३ )। मूले चतुर्णामित्युक्तं नोपपद्यते वृ-इत्यनेन वृङो वृञश्च बोधनेनाधिक्यसम्भवादत आह-*कृत्वादिनेति । *न तद-र्थत्वम्=न नियमार्थत्वम् । *प्रकृत्याश्रयः=प्रकृतिविशेषसम्बन्धी । *प्रत्यया-श्रयः=गित्किदिति प्रत्ययविशेषोपादानेनारब्धः । *वृधातोः प्राप्त इति । वमा-दावित्यादिः । न च थलोऽस्मात्परस्य निषेधाप्राप्त्या तत्र विध्यर्थमेव ग्रहणम-स्त्विति वाच्यम् । "बभूथाततन्थ"(पा० सू० ७-२-६४) इति सूत्रेण थालि ववर्थे-त्यत्रेडभावनिपातनेन लोके थलस्तस्मात्परस्येडागम इष्ट एवेत्याशयात् । ननु "एकाच उपदेशे"(पा० सू० ७-२-१०)इति सूत्रस्य बहुषु प्राप्तत्वात्तन्नियम एव भविष्यतीत्यत आह-*प्रत्ययाश्रयस्येति । ननु क्रादीनाञ्चतुर्णां ग्रहणस्य नियमा-र्थतोक्ता सा नोचिता स्तुद्र्वादीनामप्यनुदात्तत्वात्तेष्वपि प्रतिषेधस्य प्राप्तेरष्टाना-मिति वक्तुमुचितमिति चेन्न । अष्टानामपि नियमार्थत्वे 'तुष्टोथ' 'दुद्रोथ'इत्याद्येव ह्येषु भवति । भवन्मते तु भारद्वाजनियमादिट्प्राप्तेः सेटामप्यापत्तेः । मम तु स्त्वादिभ्यः परस्य थलो भारद्वाजनियमात्प्राप्तोऽपीट् स्त्वादिग्रहणेन निवार्यते-ऽतो नैतेभ्य इड् भवतीति व्यवस्था सिध्यति । *अन्यतरप्रापित इति । विक-

तरप्रापित इत्यर्थः। तेन 'षिधू' इत्यस्य *सिषेधिथेत्येकमेव। *यदि तु "नेड् वशि"( पा० सू० ७-२-८ )*इति प्रक्रमात्तत्प्रापितस्यैव नियमः स्यात्, तदा "उपदेशेऽत्वतः" ( पा० सू० ७-२-६२ ) इति सूत्रे नित्यानिट इत्यस्याजिव्यावर्त्य इत्यर्थपरभाष्यासङ्गतिः । तत्र *नित्यानिट इत्यस्याभावेऽज्ञौ "ऋतो भारद्वाजस्य" (पा० सू० ७-२-६३) इति *विकल्पः स्यात्, *तत्सत्त्वेऽप्यूदित्त्वप्रयुक्तविकल्पस्यैव सत्त्वेन तदसङ्गतिः* । *मम तु क्रादिनियमेन नित्य इडिति भावः । *क्रादिभ्यश्चेदिण्न तर्हि लिट्येवेति विपरीतनियमस्तु न । *कृते परिवृत्त इत्यादिलक्ष्यविरोधात् । अत्र सूत्रे 'कृञोऽसुट'इति वक्तव्यम्, तेन सञ्चस्करिवेत्यादि सिद्धम्'इति स्पष्टं भाष्ये। ततश्चतुर्णामिति । नियमाद्विधिर्बलवानिति भावः ।

उपदेशेऽजन्त इति । उपदेश इत्युत्तरसूत्रस्थम् । तथा च सूत्रविभागादिहैव क्रियत इति । *"ऋतो भारद्वाजस्य"(पा०सू०७-२-६३)

---

ल्पस्यापि पक्षेऽभावतात्पर्यकत्वादिति भावः । *सिषेधिथेत्येकमेवेति । ऊदित्वप्रयुक्तस्याप्यभावांशस्य नियमेन बाधनादेकमेवेत्यर्थः । उभयोरपि निषेधयोर्नियमेन निवर्त्तने साधकमाह-*यदि त्वित्यादिना । *इति प्रक्रमादिति । तत्रत्यस्य नेडित्यस्य प्रकृतसूत्रे सम्बन्धादिति भावः । *नित्यानिट इत्यस्याभाव इति । नित्यशब्दोपादानप्रयोजनकथनमेतत् । "अचस्तास्वत्" ( पा० सू० ७-२-६१ ) इतिसूत्रादनिट इत्येतावन्मात्रानुवृत्तौ तासावनिट्त्वमूदित्वात्तस्यास्त्येवेति भावः । भाष्यासङ्गतिमुपपादयति-तत्रेत्यादिना । *विकल्पः स्यात्= "उपदेशेऽत्वतः" ( पा० सू० ७-२-६२ ) इति सूत्रबोध्यस्याभावस्य विषये भारद्वाजनियमेन पक्षे इटः सत्त्वेन विकल्पः स्यात् । *तत्सत्त्व इति । नित्यानिट इत्यस्य सत्त्व इत्यर्थः। *तदसङ्गतिः=तद्भाष्यासङ्गतिः । *मम तु=विकल्पप्रापितस्याप्यभावांशस्य क्रादिनियमो बाधक इतिवादिनो मते तु । विपरीतनियमं वारयति-*क्रादिभ्य इति । *कृते परिवृत इति । "कृते ग्रन्थे" ( पा० सू० ४-३-११६ ) "परिवृतो रथः" ( पा० सू० ४-२-१० ) इति सूत्रस्थे लक्ष्ये । *"ऋतो भारद्वाजस्य" इति सूत्रे इति । तत्र "ऋत" ( पा० सू० ७-२-६३ ) इतिसूत्रस्याचस्तास्वदित्येव सिद्धेऽयं योगो नियमार्थ इत्यनेन नियामकत्वमभिहितम् । तच्च "उपदेशेऽत्वतः" ( पा० सू० ७-२-६२ ) इतिसूत्रादुपदेशपदस्याचस्तास्वदित्यत्र सम्बन्धे सत्युपपद्यते। अन्यथा 'जहर्थ'इत्यादौ गुणे रपरत्वे च कृतेऽनजन्तत्वादचस्तास्वदित्यस्याप्राप्तौ "ऋत" इत्यप्राप्तप्रापकत्वेन विधायकमेव स्यादसति नियामकत्वे 'पेचिथ' 'शेकिथ'इत्येतन्न सिध्येदतो नियामकत्वमावश्यकमिति

इति सूत्रे भाष्ये स्पष्टम् । *एवञ्च धेडादेर्दधिथेत्यादिसिद्धयेऽग्ग्रहणमाव-श्यकम् । अन्यथोपदेशे एजन्तानामात्वविधानेनाज्ग्रहणमेव *कुर्यात् ।

तासौ नित्यानिट इति । *तासौ सतस्तत्र नित्यानिट इत्यर्थः । यस्तासावस्ति नित्यानिट् चेति भाष्योक्तेरिति भावः । तास्वदिति । सप्तम्यन्ताद्वतिः । यथा तासौ नेट् तथा थल्यपीत्यर्थः । नित्यानिटः किम् ? दुधविथ । अयं "स्वरति" (पा०सू०७-२-४४) इति सूत्रेण तासौ विकल्पितेट् । अतो ऽस्य थलि नित्यपदाभावे भारद्वाजनियमेन विकल्पः स्यादिति *वृत्तिः । तासाविति किम् ? घस्लादेशे जघसिथेत्यादौ नित्य एवेट् *यथा स्यादिति ।

उपदेशेऽत्व ( पा० सू० ७-२-६२ ) । "उपदेशे किम् ? कर्ष्टा, चकर्षिथ; अत्वत इति किम् ? भेत्ता, बिभेदिथ; तपरः किम् ? राद्धा, रराधिथ; तासौ किम् ? *जिघृक्षति, जग्रहिथ; नित्यानिटः किम् ? *आनञ्जिथ" इति भाष्यम्, चक्रमिथेत्यपि प्रत्युदाहरणम् । "स्नुक्रमोः" ( पा० सू० ७-२-३६ ) इति नियमेनात्मनेपदपरतासा *विडभावेऽपि परस्मैप-

---

भावः । *एवञ्च=उपदेशपदसम्बन्धसिद्धौ च । *कुर्यादिति । अग्ग्रहणे धेट उपदेशेऽगन्तत्वविरहादस्याप्रवृत्तिः स्यात् ।

तासौ नित्यानिडित्यस्य यस्तासौ नित्यं सेट् तद्भिन्न इत्यर्थकत्वे 'जघसिथ' इत्यत्र "उपदेशेऽत्वतः" ( पा० सू० ७-२-६२ ) इत्यस्य प्राप्तौ "ऋतो भारद्वाजस्य" ( पा० सू० ७-२-६३ ) इतिनियमाद्विकल्पः स्यादतो व्याचष्टे-*तासौ सत इति । न च तासौ सत्त्वं स्थानिवद्भावेन भविष्यतीति वाच्यम् । अशास्त्रीयस्य धर्मस्यातिदेशेनालाभात् । *वृत्तिरिति । "नेड् वशि कृति" ( पा०सू० ७-२-८ ) इतिप्रक्रमात् क्रादिग्रहणकृतनियमस्यात्राप्राप्तिरिति केचित् । अत्र वृत्तिरितिकथनेन तादृशं यन्मतन्तन्न युक्तम् । किन्तु नञ्वाशब्दान्यतरप्राप्तस्याभावांशस्य बाधकः क्रादिनियम इति ध्वनितमेव मतं युक्तम् । अन्यथा वृत्तिग्रन्थविरोधोऽपि स्यात् । *यथा स्यादिति । अन्यथा "उपदेशेऽत्वतः" ( पा० सू० ७-२-६२ ) इतिसूत्रेऽप्यनिडित्यस्यैव सम्बन्धे य उपदेशेऽत्वाननिट् चेत्यर्थः स्यात् । तथा चेडभावस्य शास्त्रीयत्वात्स्थानिवद्भावेनास्यानिट्त्वादनेन निषेधे प्राप्ते भारद्वाजनियमेन विकल्पः स्यादिति भावः ।

*जिघृक्षतीति । अत्र हि "सनि ग्रहगुहोश्च" ( पा० सू० ७-२-१२ ) इतिनिषेधादनिट्त्वम् । *आनञ्जिथेति भाष्यमिति । एतच्च प्रागुपपादितम् । *इडभावेऽपीति । तथा च नित्यपदाभावे यस्तासावस्ति अनिट् चेत्यर्थेऽस्यात्मनेपदपरतासावनिट्त्वादस्य प्रवृत्तौ भारद्वाजनियमः स्यादिति भावः ।

दे तत्सत्त्वात् ॥

ऋतो भा ( पा० सू० ७-२-६२ ) । "अचस्तास्वत्" ( पा० सू० ७-२-६१ ) इत्येव सिद्धे नियमोऽयमित्याह—ऋदन्तादेवेति । *न च ऋदन्ते विकल्पेन निषेधार्थमिदमिति वाच्यम् । *"अचस्तास्वत्" ( पा० सू० ७-२-६१ ) इति सामान्यसूत्रप्रणयनेन भारद्वाजातिरिक्तैरप्यृदन्ते निषेधस्यैवाङ्गीकारेण स्मृत्यन्तरानुसन्धानद्वारा विकल्पस्य वक्तुमशक्यत्वात् । *वृञादिषु परत्वान्नित्यत्वाच्च गुणे रपरत्वे ऋदन्तत्वाभावेऽप्युपदेशग्रहणस्य तथासूत्रविभागेन "अचस्तास्वत्" ( पा० सू० ७-२-६१ ) इत्यत्रैव तत्करणात् प्राप्तिः । नियमफलितार्थमाह—तेनान्यस्येति । *अत्रापि भारद्वाजस्येति सम्बध्यते । अन्यस्येत्यस्य ऋकारान्तभिन्नस्य तासौ नित्यानिट उपदेशेऽजन्तस्यात्वतश्चेत्यर्थः । *एतेन ययिथेत्यादावजन्तसन्निपातेन जात इट् सन्निपातपरिभाषया आलोपनिमित्तं न स्यादित्यपास्तम् *उपदेशे इत्युक्तेः, तदाह—अजन्त इत्यादि । अस्योपदेशे इत्यादिः । ईदृक्=तासौ नित्यानिट् । ननु स्तुद्रुस्रुश्रुवां थलि भारद्वाजनियमादिट् स्यात्, क्रादिसूत्रस्थस्त्वादिग्रहणेन तु येननाप्राप्तिन्यायेन *क्रादिनियमप्रापितस्यैव बाधौचित्यादित्याशयेनाह—न चेति ।

---

ननु ऋदन्तात्थलो नेट् भारद्वाजमतेऽन्यमते भवत्विति स्मृत्यन्तरानुसन्धानेन विकल्पेनेड्विधायकमिदमस्त्वित्यभिप्रायेण शङ्कते-*न च ऋदन्त इति । समाधत्ते-*अचस्तास्वदितीति । ननु वृञस्थलि परतो निषेधविधायकमेवेदं सूत्रमस्त्वित्यत आह-*वृञादिष्विति । छन्दसि ववर्थेतिनिपातनेनेड्भावेऽपि लोके इडिष्ट एवेति तत्रेड्भावार्थमिदं विध्यर्थमिति न शङ्कनीयम् । अन्यस्येत्यस्य ऋकारान्तभिन्नो योऽजन्तोऽत्वांश्चेत्यर्थेऽजन्तत्वमत्वत्त्वञ्चेडागमे प्रयोजकमिति लभ्यते । तच्चायुक्तमाकारान्तपादिधातोरजन्तत्वेन ततः परस्य थल इडागमेऽजन्तत्वस्य प्रयोजकतया कृते इडागमे सन्निपातपरिभाषया लोपो न स्यादिति कस्य चिद् दूषणन्तच्चायुक्तमित्याशयेन व्याचष्टे-*अत्रापीति । कल्पितेऽन्यस्यापीति वाक्ये अन्यस्येत्यस्य व्याख्या ऋकारान्तभिन्नस्येत्येव । उपदेशेऽजन्तत्वमुपदेशेऽकारवत्त्वञ्च तद्विशेषणं यत्र निषेधविधायकयोः पूर्वपठितसूत्रयोः प्राप्तिस्तत्रैवास्य प्रवृत्तिरितिनियमसिद्धिरिति बोधनाय । एवञ्च ऋकारान्तभिन्नत्वस्योपदेशेऽजन्तत्वसहितस्येड़ागमप्रवृत्तौ प्रयोजकतया तस्य जातेऽपि लोपे न विघात इति न सान्निपातपरिभाषया आकारलोपप्रतिबन्ध इति भावः । एवञ्च पपिथेति रूपम्भारद्वाजमते । अन्यमते तु पपाथेति । *एतेन-उपदेशेऽज-

समाधत्ते—योगद्वयेति । अयं भावः—थल्यनिटो नित्यमित्यस्यानुवृत्त्या तत्पदसम्बन्धवान य इण्निषेधः स भारद्वाजमते ऋकारान्तस्यैवेति नियमेन क्रादिनियमस्य नायं निषेध इति । *एतेन भारद्वाजनियमो *येननाप्राप्तिन्यायेन "अचस्तास्वत्" ( पा० सू० ७-२-६१ ) इत्यस्यैव बाधकइति जघनिथेत्यादा*विण् न स्यादित्यपास्तम् । *ध्वनितश्चेदमत्रैव सूत्रे भाष्ये । *किं च पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यादपि स्त्वादिनिषेधेनानन्तरस्यापि भारद्वाजनियमस्य बाध इति *"नेड्वशि" ( पा० सू० ७-२-८ ) इत्यत्र *"वस्वेकाजाद्" ( पा० सू० ७-२-६७ ) इत्य-

---

न्तस्येत्युक्तत्वेन । कृतेऽपि लोपे तदा यद्यपि माजन्तत्वं तथाप्युपदेशेऽजन्तत्वस्य न विघातस्तदाह-*उपदेश इत्युक्तेरिति । *क्रादिनियमप्रापितस्यैवेति । एवकारेण भारद्वाजनियमप्रापितस्य व्यवच्छेदः । तेन येननाप्राप्तिन्यायाभावात् । *एतेन=तत्पदसम्बन्धवानितिव्याख्यानेन । *येन नाप्राप्तिन्यायेनेति । ऋकारान्तेऽचस्तास्वदित्यस्यैव प्राप्तेस्तस्योपदेशेऽत्वत्त्वस्याभावादिति नोपदेशेऽत्वत इत्यस्यावश्यकप्राप्तिः । *इड् न स्यादिति । "उपदेशेऽत्वतः" ( पा० सू० ७-२-६२ ) इत्यनेन निषेधादिति शेषः । *ध्वनितं चेदमिति । तत्र हि 'अहर्थ' इत्यत्र गुणे रपरत्वे च कृतेऽजन्तत्वस्योपदेशेऽत्वत्त्वस्य चाभावेन निषेधाप्राप्तौ "ऋत"(पा०सू०७-२-६३ ) इति सूत्रं विधायकमेव भविष्यतीति नियमानुपपत्तिरित्याशङ्क्योपदेशपदस्य पूर्वसूत्रेऽपि सम्बन्धेन नियमार्थत्वमुपपादितम् । तत्रोपदेशपदस्योभयत्र सम्बन्धोपादानावसरे "योगविभागः करिष्यते-अचस्तास्वत्थल्यनिटो नित्यमुपदेशे । ततः-अत्वतः । अत्वतश्चोपदेशे" इत्युक्तम् । अत्र द्वितीयसूत्रप्रदर्शनेन तस्यापि "ऋत" ( पा० सू० ७-२-६३ ) इति नियामकमिति ध्वनितम् । अतस्थल्यनिटो नित्यमिति सूत्रे सम्बन्धेनेत्युक्तिरुचितैवेति भावः । मूलोक्तनचेत्यादिशङ्कासमाधानाभ्यां स्त्वादिधातुविषये इड्निषेध एवेति सिद्धम् । तत्रैवार्थे साधकान्तरमाह-*किञ्चेत्यादिना । *नेड् वशि कृतीत्यत्रेति । तत्र हि "कर्त्तरि कर्मव्यतिहारे" ( पा० सू० १-३-१४ ) "न गतिहिंसार्थेभ्यः" ( पा० सू० १-३-१५) इतिवद्विध्युत्तरकाल एव प्रतिषेधप्रकरणङ्कुतो न क्रियत इत्याशङ्क्य "नैवं शक्यम् । इह हि 'तुष्टोथ' 'तुद्रोथ' इति "ऋतो भारद्वाजस्य" ( पा० सू० ७-२-६३ ) इति नियमादिट् प्रसज्येत कृसृभृवृस्तुद्रुश्रुस्रुवो लिटीत्येष योगः प्रतिषेधार्थो भविष्यति" इत्युक्तम् । एतेन स्त्वादिग्रहणेन यो नियमः स भारद्वाजनियमप्रापितेटो बलवानिति स्पष्टमेव लभ्यते । "पुरस्तात्प्रतिषेधे सति अनारभ्यापवादोऽयम्भवति तेन यावानिड् नाम तस्य सर्वस्य प्रतिषेधः सिद्धो भवति" इति चोक्तम् । *वस्वेकाजादित्यत्र चेति । तत्र हि "अस्य सूत्रस्य किम्प्रयोजनम्" इति प्रश्ने "नियमार्थोऽयमारम्भः । वसौ एकाजाद्धसामेव । क्व मा भूत् । बिभि-

त्र च भाष्ये स्पष्टम् ।

सिचि वृद्धिः (पा० सू० ७-१-६७) । *वृद्धिश्रुत्योपस्थितमिक इति अङ्गस्य समानाधिकरणं विशेषणमित्याह — इगन्ताङ्गस्येति । *तत्फलन्त्वकोषीदित्यादौ व्यञ्जनस्य वृद्ध्यभावः । *न च "नेटि" (पा०सू०७-२-४) इति निषेधः । *तत्र हलन्तस्येत्यनुवृत्त्या *तद्विषये *परत्वा*द्धलन्तलक्षणया *ऽस्या वृद्धेर्बाधेन।*नया येननाप्राप्तिन्यायाभावेना*स्यास्तेन निषेधेनाबाधात् । *भ्रष्टावसरन्यायस्तु *नास्त्येव । *नान्तः पादमिति पाठे-

---

द्धान् । किमुच्यते नियमार्थमिति ?। न पुनर्विध्यर्थोऽपि स्यात् । प्रतिषेधोऽपि ह्यत्र प्राप्नोति नेड्वशि कृतीति । कृच्चैव ह्ययं वशादिश्च । एवन्तर्हि कृसृभृवृस्तुद्रुस्रुश्रुवो लिटीत्येतस्मान्नियमादत्रेड्भविष्यति" । एवञ्च सिद्धे इडागमे "वस्वेकाच्" ( पा० सु० ७-२-६७ ) इति सूत्रन्नियमार्थम्भविष्यतीति भावः । ततः "प्रकृतिलक्षणस्यैव प्रतिषेधस्य स प्रत्यारम्भः" इत्याशङ्क्य "प्रत्ययलक्षणस्यापि प्रत्यारम्भः । वृङ्वृञोर्ग्रहणात्" इत्युक्तम् । वृङ्वृञोरुदात्तत्वात्प्रकृतिलक्षणो य "एकाच उपदेशेऽनुदात्तात्" ( पा० सू० ७-२-१० ) इतिप्रतिषेधस्त स्याप्राप्तेः प्रत्ययलक्षणो यः प्रतिषेधो "नेड् वशि" ( पा० सू० ७-२-८ ) इति तस्यापि प्रत्यारम्भ इति भावः । एतेन "कृसृभृ" ( पा० सु० ७-२-१३ ) इतिसूत्रविषयेऽनन्तरस्येति नियमो न प्रवर्त्तत एवेति लभ्यत इति ।

*वृद्धिश्रुत्येति । विधेयसमर्पकवृद्धिपदश्रवणेन । *तत् फलम्=इक्पदोपस्थितिफलम् । अकोषीदित्यत्र हलन्तलक्षणवृद्धेरिवास्यापि बाधो भविष्यतीत्याशयेनाशङ्कते-*न चेति । समाधत्ते-*तत्रेति । तत्र-"नेटि" ( पा० सू० ७-१-४ ) इति सूत्रे । *तद्विषये=हलन्तविषये । *परत्वात्=अपवादत्वेनोत्कृष्टत्वात् । प्रकृतसूत्रे इक्परिभाषाया अनुपस्थितौ "सिचि वृद्धिः" ( पा० सू० ७-२-१) इतिसूत्रस्य हलन्तेऽपि प्रसक्त्या हलन्तलक्षणवृद्धेरेतदपवादत्वसम्भवादिति भावः । *हलन्तलक्षणया । वृद्ध्येति शेषः । *अस्याः="सिचि वृद्धिः" ( पा० सू० ७-२-१ ) इति सूत्रविहितवृद्धेः । *अनया=सिचि वृद्धिरिति वृद्ध्या । *अस्याः="सिचि" ( पा० सू० ७-२-१ ) इति वृद्धेः । ननु "सिचि" ( पा० सू० ७-२-१ ) इतिवृद्धिबाधकहलन्तलक्षणवृद्धेः "नेटि" ( पा० सू० ७-१-४ ) इति प्रतिषेधेन बाधे 'सिचि'इति वृद्धिर्भ्रष्टावसरन्यायेन न भविष्यतीत्यत आह-*भ्रष्टावसरेति । *नास्त्येवेति । "तौ सत्" ( पा० सू० ३-२-१२७ ) इतिनिर्देशात् । ननु स न्यायो "नान्तः पादम् " ( पा० सू० ६-१-११५ ) इतिपाठे आवश्यकः । अन्यथा गो अग्रमिति स्थिते "एचः" ( पा० सू० ६-१-७८ ) इतिसूत्रबाधकस्य "एङः" ( पा० सू० ६-१-१०९ ) इतिसूत्रस्य "सर्वत्र विभाषा" (पा० सू० ६-१-१२२ ) इतिसूत्रेण निषेधेऽवादेशापत्तिरत आह-*नान्तः पादमितीति ।

ऽपि एङोऽतीत्यनुवर्त्य एङोऽति यद्यत्प्राप्नोति तस्य निषेध इत्यर्थस्य "नान्तः"(पा० सू० ६-१-११५) इति सूत्रे भाष्ये उक्तत्वेन फलाभावात् ।

कूजिनेति । अर्थैक्यादिति भावः ॥

ह्मयन्तक्षण ( पा० सू० ७-२-५ ) । इडादौ किम् ? *अधा-

---

'अट्ट' अतिक्रमहिंसनयोः । अत्र मूले दोपधोऽयमिति । अस्य दकारोपधत्वफलन्तु द्वित्वे कर्तव्ये "नन्द्राः" ( पा० सू० ६-१-३ ) इतिनिषेधेन 'आट्टित्' 'अट्टिटिषत' इत्यत्राचःपरदकारस्परित्यज्य द्वित्वप्रवृत्तिः । 'पूर्वत्रासिद्धीयमद्विर्वे' इतिवचनस्य द्वित्वे कर्तव्ये प्रवृत्तिर्न तु तन्निषेधे कर्त्तव्ये । न च यदि दकारस्य ष्टुत्वेन डकारे ततश्चर्त्वेन टकारेऽट्ट इति श्रवणं तदा—

"नकारजावनुस्वारपञ्चमौ झलि धातुषु ।
सकारजश्शकारश्चेर्षाट्टवर्गस्तवर्गजः" ॥

इत्यभियुक्तोक्त्या तस्यासङ्ग्रहः । अस्य टवर्गस्य षात्परत्वाभावादिति न्यूनता, इति वाच्यम् । नेदं वचनमपूर्वंकिन्तु त्रैपादिककार्यप्रवृत्तिसिद्धार्थकथनमिति । प्रकृतेऽपि तस्य प्रवृत्तौ बाधकाभावात् । अथ वा षाट्टवर्ग इति टवर्गयोगे श्रूयमाणष्टवर्गस्तवर्गज इत्यस्याप्युपलक्षणम् । तोपधत्ववादिमतेऽपि तथैव । अस्य मते पूर्वत्रासिद्धीयमिति वचनस्य प्रवृत्त्या 'आटिट्टत्' इति भवतीति विशेषः । 'वठि' एकचर्यायाम् । एकस्य=असहायस्य, चर्या=गमनन्तस्यामित्यर्थः । गमनमत्र नोत्तरदेशसंयोगफलकव्यापार एव, किन्तु स्थित्यनुकूलव्यापारोऽपि । तेनापत्यरहितायां विधवायाञ्च वण्ठेति प्रयोगसिद्धिः । 'डुडि' वरणे । वरणमत्र स्वीकारः । 'शडि' रुजायां सङ्घातेच । तालव्योष्मादिरयम् । शण्डः=असुरपुरोहितः । 'पडि' गतौ । पण्डो=गमनकर्त्ता । धातूनामनेकार्थत्वात्पण्डा=विलक्षणा बुद्धिरित्यपि भवति । 'बाडृ' आप्लाव्ये । अत्रादौ पठितो वर्णो न यण्, किन्तु जश्प्रत्याहारान्तर्गत एव । यणादित्वे तु बशादिरिति मूलोक्तेर्व्यावर्त्याप्रसिद्धिः स्यात् । 'शाडृ' श्लाघायाम् । इदमुपलक्षणम् । 'शाल' धातुरप्यत्र बोध्यः । तेन 'शालते' इत्यस्यापि सिद्धिः ।

ह्मयन्तक्षणश्वसजागृ ( पा० सू० ७-२-२५ ) । *अधाक्षीदिति । 'दह' भस्मीकरणे । अयं हान्तोऽनुदात्त उपदेश इत्यस्मात्परस्य "एकाच उपदेशे" ( पा० सू० ७-२-१० ) इति प्रतिषेधान्नेट् । नन्वत्र जागृग्रहणं व्यर्थम् । "जाग्रोऽविचि" ( पा० सू० ७-३-८५ ) इतिगुणविधानाज्ज्ञापकात् । तथाहि—तत्र गुणविधानस्य प्रयोजनम्-'अजागरीत्'इत्यत्र "सिचि वृद्धिः" ( पा० सू० ७-२-१ ) इति वृद्धिं बाधित्वा गुणो यथा स्यादिति । यदि गुणे कृते पुनर्वृद्धिः स्यात्तदा गुणविधानमनर्थकं स्यात्, प्रथमप्राप्तवृद्ध्यैव वृद्धिघटितरूपसिद्धेः । न च जागरक इत्यत्र गुणे "अचोञ्णिति" ( पा० सू० ७-२-११५ ) इति वृद्धिम्बाधित्वा गुणे जातेऽप्युपधालक्षणवृद्धिप्राप्तौ सा मा भूदित्येव ज्ञाप्यताम्,तावताऽपि गुणविधा-

क्षीत् । इयतुरिति । *इकारोऽत्र ह्रस्वः । *द्वित्वे कृते "एरनेकाच"( पा० सू०६-४-८२ ) इति यण्सवर्णदीर्घयोः प्राप्तयोः'वार्णादाङ्गम्'इति परिभाषया यणिति बोद्ध्यम् । केचित्त्विसारभ्योदाहरन्तीयन्तम रुचिग्रस्तमिति *केचित् । कुङि । वैकल्यम्=अविवेकः । 'तुड्' तोडने । तोडनम्=दारणं हिंसनं च । लळयोश्चेति । अत्रैको दुःस्पृष्टः, स च *शिक्षादौ प्रसिद्धः ।

लिङ्सिचा ( पा० सू० १-२-११ ) । "इको झल्" ( पा० सू० १-२-९ ) हलन्ताच्च ( पा० सू० १-२-१० ) इति "असंयोगात्

---

नश्चरितार्थमिति वाच्यम् । सामान्यतो वृद्धिर्नेत्येव ज्ञाप्यवचनमस्तु, न तु लक्षणविशेषप्राप्तेत्यस्य तत्र प्रवेशो लाघवार्थमिति स्वीकारादिति चेन्न । प्रकृतसूत्रभाष्यसन्दर्भबलेन गुणविधानस्य 'जागरक' इत्यत्रोपधावृद्ध्यप्रवृत्तिज्ञापकतया चारितार्थ्यसम्भवात् । अनेकशास्त्रबाधकल्पनापेक्षया ज्ञापकस्य सजातीयापेक्षत्वमुचितमिति भाष्याशयात् । गुणस्य "अत" ( पा० सू० ७-२-११६ )इत्युपधावृद्धेश्च कथं साजात्यमिति चेत्, उच्यते-गुणस्य जागृत्वमात्रमुद्देश्यतावच्छेदकं तच्च नान्यवृत्ति,एवमुपधावृद्धेरप्यत्त्वमुपधात्वसामानाधिकरण्यावीशिष्टम्, तदप्यकारमात्रवृत्ति न त्विकारादौ । एवञ्च विजातीयानेकनिष्ठाधिकरणत्वानिरूपकधर्मावच्छिन्नोद्देश्यकविधित्वेन साजात्यमनयोरस्ति । सिचि निमित्ते सति वृद्धेस्त्विगन्ताङ्गत्वादिकमुद्देश्यतावच्छेदकं तच्चानेकसाधारणमिति नान्यासां साजात्यम् । इदमेव गुणविधानमत्र शास्त्रे ज्ञापकस्य सजातीयापेक्षत्वं न्याय्यमित्यर्थे ज्ञापकमस्तु । भाष्यसन्दर्भश्च—किमर्थञ्जागर्तेः प्रतिषेध उच्यते ?, सिचि वृद्धिर्मा भूदिति । नैतदस्ति प्रयोजनम् । जागर्तेर्गुण उच्यते वृद्धिविषये प्रतिषेधविषये च, स बाधको भविष्यति । गुणे तर्हि रपरत्वे च हलन्तलक्षणा वृद्धिः प्राप्नोति । नेटीति तस्याः प्रतिषेधो भविष्यति । इयं तर्हि अतो ल्रान्तस्येति । तामपि बाधित्वाऽतो हलादेर्लघोरिति विभाषा वृद्धिः प्राप्नोति, न च किञ्चिदिति ।" "न च किञ्चिदिति । तस्याः पाक्षिकया वृद्धेरपवादभूतन्न किञ्चिद् गुणविधानमस्ति यतो गुणविधानमकर्तव्यं स्यात् " इति कैयटः । एतेन भाष्यप्रघट्टकेन "ह्मयन्त" ( पा० सू० ७-२-५ ) इतिसूत्रस्थजागृग्रहणस्य पाक्षिकवृद्धिनिवारकतया चारितार्थ्यमिति लभ्यते । अत एव मूलकारोऽपि कैयटोक्तस्य "गुणो वृद्धिर्गुणो वृद्धिः"इतिसङ्ग्रहश्लोकस्यानुवादङ्करिष्यति . किञ्च 'जागरितम्' तेन 'जागरितः' 'जागरितवान्' इत्यत्रार्द्धधातुकनिमित्तकगुणस्य प्रतिषेधविषये गुणविधायकतया जागृग्रहणस्य सार्थक्यं बोध्यम् । *इकारोऽत्र ह्रस्व इति । अभ्याससंज्ञक इकारः स्वभावतो ह्रस्वो न त्वस्य कोऽपि विकार इत्यर्थः । एतदेवोपपादयति—*द्वित्वे कृत इत्यादिना । *केचिदिति । इकारप्रश्लेषस्य प्रामाणिकत्वेऽस्येदित्त्वसम्भावना कर्त्तुं शक्या, तत्रैव मानाभाव इति तेषां भावः । *शिक्षादाविति । बह्वृचां चेत्यपि बोध्यम् ।

( पा० सू० १-२-५ ) इत्यतः क्विदिति चानुवर्त्तते। आत्मनेपदेष्विति किम् ? अद्राक्षीत् । अत्र हि कित्वे *अम्न स्यात्। अर्थभेदादिति। पूर्वो दैन्यार्थ इति भावः ॥

नृफल ( पा० सू० ६-४-१२२। गुणशब्देन भावितकारत्व-त्वाद्विरूपादेशादित्वादेकहल्मध्यस्थत्वाभावाच्च यथायथमप्राप्ते विधिरयम्। तद्बीजान्त्विति। पूर्वसवर्णप्रवृत्तिषत्वाप्रवृत्त्योर्बीजं त्वित्यर्थः।

अर्थविशेषानिर्देशादाह—स्वार्थे इति। "धातोरेकाचः" ( पा० सू० ३-१-२२ ) इत्यतो धातोरित्यधिकाराद् *स्यार्द्धधातुकत्वम्। आ-योऽकारान्तः। *तत्फलं तु गोपायतमित्यादौ गोपायेत्यस्य धातुस्वरेणा-न्तोदात्तत्वे शबकारेणैकादेशस्याप्यन्तोदात्तत्वे तमित्यस्यादुपदेशात्परलसा-र्वधातुकत्वेनानुदात्तस्य "उदात्तादनुदात्तस्य" ( पा० सू० ८-४-६६ ) इति स्वरितत्वम् ॥

सनाद्यन्ता ( पा० सू० ३-१-३२। सञ्ज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणनिषेधादन्तग्रहणम्। यस्मात्स विहितस्तदादेरिसंशस्तु प्रवर्त्तत एव। *तेन देवदत्तश्चिकीर्षतीत्यादौ देवदत्तादेः समुदायस्य न। *एतत्सा-ध्यधातुसञ्ज्ञकघटकानां *सूत्रादीनां *समुदायानाञ्च क्रियावाचकत्व-न्तु स्वभावाद् बोद्ध्यम्। *स्पष्टं चेदं "सुप आत्मनः" ( पा० सू० ३-१-८ ) इति सूत्रे "नमो वरिव" ( पा० सू० ३-१-१९ ) इति सूत्रे च भाष्ये।

---

*अम् न स्यादिति। "सृजिदृशोः" ( पा० सू० ६-१-५८ ) इतिसूत्रेऽ-कितीत्यस्योपादानात्। *अस्यार्द्धधातुकत्वमिति। अत एव गोपायतीत्यादौ ल-घूपधत्वप्रयुक्तगुणस्य सिद्धिः। *तत्फलम्=आयप्रत्ययाकारस्य फलम्।

*तेन=यस्माद्विहित इत्याद्यंशोपस्थितिस्वीकारेण *एतत्साध्येति। "सनाद्यन्ताः" ( पा० सू० ३-१-३२ ) इतिसूत्रसाध्येत्यर्थः। *सूत्रादीनामिति। सूत्रं करोतीत्यादिप्रयोगघटकानां सूत्रादीनामित्यर्थः। *समुदायानाम्=णिजा-द्यन्तानाम्। *स्पष्टश्चेदमिति। आद्ये "अथास्य क्यजन्तस्य कानि साधनानि भवन्ति। भावः कर्त्ता च। अथ कर्म ?। नास्ति कर्म। ननु चायमिषिः सकर्मकः। यस्यायमर्थे क्यज्विधीयते। अभिहितं तत्कर्म अन्तर्भूतं धात्वर्थः सम्पन्नः। कथं तर्ह्ययं सकर्मको भवति अत्र मुण्डमिवाचरति माणवकमिति ?। अस्त्यत्र विशेषः। उपमानकर्म उपमेयकर्म च। उपमानकर्मान्तर्भूतम्, उपमेयकर्मणा सकर्मको भवति, मुण्डं करोति मुण्डयति माणवकमिति। अत्रापि द्वे कर्मणी सामान्यकर्म विशेषकर्म च। तत्र सामान्यं कर्मान्तर्भूतं विशेषक-

*विवक्षायामिति । विषयसप्तमीति भावः । परसप्तमीत्वे हि आर्द्धधातुकोपदेशकाले यदकारान्तमिति गोपायितेत्यत्र लोपो न स्याद *'गोपाया'इति च न सिद्ध्येत् पूर्वाङ्गेन एवापत्तेः ।

कास्प (पा०सू० ३-१-३५) । प्रत्ययान्तेभ्यश्चेति । धातुभ्य इति शेषः । सूत्रे प्रत्ययग्रहणमपनीयेति ।*एतच्च हरदत्तग्रन्थे स्पष्टम् । परे तु *कासीति सप्तम्यन्तं, तद्घटितसूत्रे इत्यर्थः । भाष्ये—'कास्ग्रहणेऽनेकास उपसङ्ख्यानम्' इति *उपक्रमस्वारस्यात् । *अत एव भाष्ये—'तन्न कर्त्तव्यम्' इति नोक्तम् । *अत एव "आचारेऽवगल्भ" (का० वा०) इति-

---

र्मणा सकर्मको भवति । सामान्यं कर्म मुण्डादि । विशेषकर्म माणवकादि । ननु चात्र वृत्त्यैव न भवितव्यं किं कारणमसामर्थ्यात् कथमसामर्थ्यम् ?, सापेक्षमसमर्थवद्भवति"इत्याशङ्क्य "मुण्डादयो गुणवचनाः । गुणवचनाश्च सापेक्षाः । तत्र वचनात्सापेक्षाणां वृत्तिर्भविष्यति"इति । वचनात्=मुण्डमिश्रेतिवचनसामर्थ्यात् । एतेन क्यच्प्रत्ययस्य निरपेक्षेभ्यः पुत्रादिभ्यः प्रत्ययविधायकतया चारितार्थ्यात्पण्डितं पुत्रमिच्छतीत्यत्र क्यज् नेति सूचितम् । एवमुक्त्या भगवतोक्तम् । "अथ वा धातव एव मुण्डादयः । न चैव ह्यर्था आदिश्यन्ते क्रियावचनता च गम्यते" इति । "धातव इति । सौत्रा धातवो मुण्डादयः तेभ्यश्चुरादिवत्स्वार्थिको णिच् । न चैवेति । यद्यपि क्रियाविशेषाभिधायित्वं मुण्डादीनां नोपात्तं तथापि स्वाभाविकत्वादर्थाभिधानस्य प्रयोगादेव तदवसीयत इत्यर्थः । यथा च कण्ड्वादयो द्विविधास्तथा मुण्डादयोऽपीति भावः" इति कैयटेनोक्तम् । अन्त्येऽप्युक्तं भवगता:-"तत्र हि नमःशब्दयोगे चतुर्थीविधानात् नमस्यति देवानित्यत्र द्वितीया कथम्" इत्याशङ्क्य "उपपदविभक्तेः" इतिसमाधाय, "क्यजादिषु प्रत्ययार्थनिर्देशः कर्तव्यः . क्रियावचनता यथा स्यात्" इत्याशङ्क्य "साधने जायमानानां तव्यदादीनामुपपत्तये "सनाद्यन्ताः" ( पा० सू० ३-१-३२ ) इति धातुसंज्ञाविधानसामर्थ्यात्सनाद्यन्तानां क्रियावचनत्वावसायो भविष्यति" इति समाधाय "अथ वा धातव एव क्यजादयः । न चैवं भवति । क्रियावचनता च गम्यते । कः खलु पचादीनां क्रियावचनत्वे यत्नं करोति ? येनैव हेतुना पचादयः क्रियावचनाः । एवमेतऽपि । एवमर्थं खल्वप्याचार्यश्चित्रयति क्व चिदर्थानादिशति क्वचिन्न" इत्युक्तम् । अत्र कैयटः-"विनाप्यादेशनमभिधानशक्तिस्वाभाव्याद्विशिष्टक्रियावचनत्वं सिद्धम्" इति । *गोपायेति चेति । अत्र हि "अप्रत्ययात्"इत्यनेन प्रत्ययान्तादकारः प्रत्ययः स्त्रियां विधीयते इति भावः ।

*एतच्चेति=अपनीयेत्येतत् । *कासीतीति । वार्तिकस्थं कासीतिपदमित्यर्थः । *उपक्रमस्वारस्यादिति । तेनानेकाज्भ्यः प्रत्ययसिद्धिरत्र प्रयोजनत्वेनोक्ता । न त्वेकाज्भ्यवृत्तिः प्रयोजनत्वेनोक्ता, तत्स्वारस्यादित्यर्थः । *अत एव= प्रत्ययग्रहणस्यानभिप्रेतत्वादेव । *अत एव=प्रत्ययग्रहणसत्त्वादेव । अकारस्य=

वार्तिके धातुभिरेव सिद्धिमाशङ्क्य 'अवगलभाञ्चक्रे' इत्यादौ "कास्प्रत्ययादाममन्त्रे" (पा० सू० ३-१-३५) इत्याम्यथास्यात्" इत्युक्तं भाष्ये। तत्रा*कारस्यानुबन्धत्वेनैकाच्त्वात्। न च *भौतपूर्विकानकाच्त्वं गृहीत्वा तत्रामिति वाच्यम्। *आमर्थं वार्त्तिकमित्युत्तरमपर आह—"सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः" (का० वा०)। एवन्तर्ह्यवगलभाद्यनुक्रमणं न कार्यम्, कार्यश्च 'अनुबन्धानासंक्ष्यामि'इति 'अवगलभक्लीबहोड' इति भाष्योक्त्या *तदर्थ*तस्य चारितार्थ्येन भौतपूर्विकानेकाच आमित्यर्थे मानाभावात्। अनुबन्धासङ्गश्च "सर्वप्रातिपदिकेभ्यः" (का० वा०) इत्यनेन क्विपि *अवगलभतीत्यादीनां वारणायावश्यकः। कृते*त्वस्मिन्*न तेनैभ्यः क्विप् येननाप्राप्तिन्यायेनास्य तद्बाधकत्वात्। *सर्वग्रहणन्त्ववगल्भेति वार्त्तिकापेक्षया बहुविषयत्वबोधनायेत्याहुः।

अत्रेदं बोध्यम्—प्रत्ययग्रहणापनय*वादिनोऽप्येकाज्भ्य आचारक्विपोऽनभिधानमावश्यकम्। अन्यथाऽऽरम्भप्रत्याख्यानयोः फलभेदः स्यात्, इति हरदत्तोदाहृतानि 'सस्वौ' 'चकौ'इत्यादीनि चिन्त्यान्येवेति।

अतो लोपः (पा० सू० ६-४-७०)। *आर्द्धधातुके किम् ?, *वृक्षस्य। *व्युत्पत्तिपक्षे स्यप्सय उपदेशेऽकारान्तः।

---

अवगल्भेत्यत्र यो भकारोत्तरोऽकारस्तस्य। *भौतपूर्विकेति। इत्संज्ञाप्रवृत्तिप्राक्कालिकमित्यर्थः। भूतपूर्वानेकाच्त्वाङ्गीकारे विरोधमाह—*आमर्थमित्यादिना। *तदर्थमिति। अनुबन्धासङ्गार्थमित्यर्थः। *तस्येति। अवगल्भेत्यादिसमुदायोच्चारणस्येत्यर्थः। अनुबन्धासञ्जनप्रयोजनमात्मनेपदसिद्धिरित्याह—*अवगलभतीत्यादि। अस्य प्राप्ताविति शेषः। *अस्मिन्=आचारेत्यादिवचने। *न तेनैभ्यः क्विबिति। 'सर्व'इत्यनेन। नन्वेवं न सर्वेत्यनेन सर्वप्रातिपदिकेभ्यः क्विप उत्पत्तिर्जातेति सर्वेत्यपार्थकमत आह—*सर्वग्रहणमिति। न च कर्तृक्विबन्तावगलभादिभ्यः आचारे क्विपि कृतेऽवगलभतीत्यादि स्यादेवेति वाच्यम्। "ह्रस्वनद्यापः"( पा० सू० ७-१-५४ ) इतिसूत्रस्थभाष्यप्रामाण्येन हलन्तेभ्य आचारे क्विबभावस्यान्यत्र प्रतिपादनात्। *वादिन इति। हरदत्तस्येति शेषः। *आर्द्धधातुके किमिति। सार्वधातुकस्य शप उपदेशेऽकारान्तस्य गोपायेत्यस्य सत्यपि लोपे रूपे न विशेष इति प्रश्नः। अत्र यद्यपि गोपायेत्यस्य धातुस्वरेणान्तोदात्तस्य शबकारेणैकादेशे "एकादेश उदात्तेन" ( पा० सू० ८-२-५ ) इत्यनेन उदात्तत्वे ततः परस्य तिपः पित्त्वादनुदात्तत्वे मध्योदात्तं गोपायतीति भवति सार्वधातुकस्य शपः उपदेशे एव पकाराकारलोपे तु सर्वानुदात्तं पदं प्रसज्यते इति स्वरे विशेषोऽस्त्येव, तथापि स्वरकृतदोषस्य झटिति ज्ञातुमशक्यत्वात्। यत्र रूपे वि-

घुण घूर्ण *अस्य दीर्घपाठः *प्रक्रियालाघवार्थः । *अन्ये तु ह्रस्वमेव पठन्ति । स्तुताविवत्येवेति । यद्यपि पृथङ्निर्देशो यथासंख्यनिवृत्त्यर्थ इत्यपि वक्तुं शक्यम्, तथापि *सम्प्रदायानुरोधादेवमुक्तम् । स्तुनावनुबन्धस्येति । आर्द्धधातुकविषये आयादीनां वैकल्पिकत्वेन *तदभावे *चारितार्थ्यमिति भावः । चक्षंसे इति । "अनुनासिकस्य"(पा० सू० ६-४-१५) इति दीर्घस्तु न । क्विप्ताहचर्येण तिङ्भिन्नस्यैव झला-

---

शेषस्तमाह-*वृक्षस्येति । *व्युत्पत्तिपक्ष इति । उपदेशे अकारान्त इत्यस्य स्वस्योपदेशे अकारान्तस्येत्यर्थः स्यादित्यभिप्रायेण व्युत्पत्तिपक्षे इत्याद्यभिहितम् । न चान्यस्य उपदेशे अकारान्तमित्यर्थे उणाद्यन्तानामव्युत्पन्नत्वमितिपक्षे च नायं दोषः । स्यप्रत्ययोपदेशमादाय वृक्षशब्दान्त्यलोपापत्तिस्तु न । सन्निपातपरिभाषाविरोधात् इति वाच्यम् । अस्य वृक्ष इत्यादिप्रथमान्तोपलक्षणत्वात् । अत्र सूत्रे "अनुदात्तोपदेश" ( पा० सू० ६-४-३७ ) इति सूत्रादेकदेशो स्वरितत्वप्रतिज्ञया उपदेशपदमनुवर्त्तते तस्मिन्सति कस्योपदेश इत्याकाङ्क्षायामुपस्थितत्वादार्द्धधातुकपदं विभक्तिविपरिणामेनान्वेति । न चार्द्धधातुके पर इत्येवास्तु इति वाच्यम् । अप्पयादिभ्यो धातुभ्यः क्विपि यलोपे अत्, पत्, इत्यादौ तुकं बाधित्वा परत्वाच्छिष्टावयवाकारस्य लोपापत्तेः । वध्यादित्यस्य सिद्धिस्तु आर्द्धधातुक इतिवल्लिङीत्यस्यापि विषयसप्तमीत्वात् इति बोध्यम् ।

'घुण' 'घूर्ण' भ्रमणे । *अस्य=द्वितीयस्य । *प्रक्रियालाघवार्थ इति । ह्रस्वं पठित्वा "उपधायां च" ( पा० सू० ८-२-७८ ) इतिदीर्घकरणे प्रक्रियागौरवमिति भावः । अत्र के चित्-"अस्माद्धातोः "अन्येभ्योऽपि दृश्यते" इति वनिपि कृते "विड्वनोरनुनासिकस्य" ( पा० सू० ६-४-४१ ) इत्यनेन नकारस्याकारे ह्रस्वपाठे घुरावेति, दीर्घपाठे घूरावेति फलभेदस्य स्पष्टतया कथमेतत् ? न च दीर्घे कर्तव्ये परनिमित्तकत्वेन बहिरङ्गस्यात्वस्यासिद्धत्वादादौ दीर्घे न फलभेद इति वाच्यम् । त्रैपादिकेऽन्तरङ्गे बहिरङ्गपरिभाषाभावस्योपपादितत्वात्"इति । अत्राहुः-'कार्यकालपक्षे त्रिपाद्यामन्तरङ्गपरिभाषा प्रवर्तत इति प्राचीनसम्मतपक्षाभिप्रायेण प्रक्रियालाघवार्थ इत्यभिधानम्'इति । वस्तुतस्तु कार्यकालपक्षेऽप्यप्रवृत्तिरेव न्याय्येत्याशयेनाह-*अन्ये त्विति । एतन्मते घुरावा ब्राह्मणीत्येव वनिबन्तस्य भवति "उपधायां च" ( पा० ८-२-७८ ) इतिदीर्घस्यात्वस्य च युगपत् प्राप्तौ दीर्घविधायकस्यासिद्धत्वादाकारादेशस्यैव प्रवृत्तेः । न चास्माड्डिजन्तात्सौ भ्यामादौ च नलोपे कर्तव्ये नकारादेशणत्वयोः प्राप्तौ णत्वस्यासिद्धत्वान्नलोपे कृते लघूपधलक्षणगुणापत्तिः । गुणे कर्तव्ये नलोपासिद्धत्वं तु न "नलोपस्सुप्स्वर" ( पा० सू० ८-२-२ ) इतिपरिगणनादिति वाच्यम् । "अन्येभ्योऽपि दृश्यते" ( पा० सू० ३-२-१७८ ) इत्यत्र दृशिग्रहणादस्माड्डिज् न भवतीत्याशयात् । *सम्प्रदायानुरोधात्=वृत्तिसम्मतव्याख्यानानुरोधात् । *तदभाव

दे*ग्रहणात् ।

काामयत इति । अनिग्लक्षणत्वान्नोपधावृद्धिनिषेधः ।

अयामं ( पा० सू० ६–४–५५ ) । लोपापवाद इति । णिलोपापवाद इत्यर्थः । वस्तुतोऽ*यनुवादोऽयं, तदनुवादबलाच्च णिलोपबाधः । ध्वनितश्चेदं प्रकृतसूत्रे भाष्य इति, "उणादयः"(पा० सू० ३–३–१) इति सूत्रे निरूपयिष्यामः ।

ननु परत्वादियङादिषु णिलोपो न स्यादत आह–ण्यल्लोपाविति । क्विजन्तमिति । क्विन् तु दुर्लभोऽप्रत्ययादित्यनेन *बाधात् । एवं 'ज्ञीप्सति' इत्यप्यवकाशः । इडभावे "इको झल्"(पा० सू० १–२–९) इति किस्वात् । *यत्तु "यदि पुनः प्रसङ्ग आश्रीयते, स्थानिवद्भावेन च णित्त्वन्तदा णिलोपांशे वार्त्तिकमनावश्यकम् । *अत एव सप्तमशेषे ण्यन्ताण्णौ परत्वाण्णिचि वृद्धिः । वृद्धौ कृतायां लोपस्तन्नाग्लोप्यकम् इति भाष्ये उक्तम्" इति, *तन्न । अगिति प्रत्याहारग्रहणसामर्थ्येनाकृतायां वृद्धौ लोप इत्यर्थस्य "णौ चङि (पा० सू० ७–४–१) इति

---

इति । आयप्रत्ययाभावे इत्यर्थः । *चारितार्थ्यमिति । अनुबन्धस्येत्यादिः । *ग्रहणादिति । क्विबप्यत्राचारार्थे यो विहितस्तद्भिन्न एव हलन्तेभ्योऽस्येोत्पत्त्यभावात् ।

*अयनुवादोऽयमिति । णेरार्द्धधातुकपरत्वनिमित्तकगुणेऽयादेशे च कृते सति सम्भवे अय्शब्दस्तदनुवाद इत्यर्थः । न चैवमामादिषु परेषु प्राप्तस्य णिलोपस्य निषेधार्थं नेत्येवाभिधीयताम् अय्विधानं किमर्थमिति शङ्क्यम् । "ल्यपि लघु" ( पा० सू० ६–४–५६ ) इत्युत्तरसूत्रार्थं तत्सत्त्वात् । अनुबन्धकार्ये "अनल्विधौ" इतिनिषेधानापत्त्या ल्यपः स्थानिवद्भावेन कित्त्वादत्र गुणाप्राप्तेरिति बोध्यम् ।

णिश्रिद्रु ( पा०सू० ३–१–४८ ) । णिशब्देन णिङ्णिचोर्ग्रहणम् । एकस्यैव ग्रहणे साधकाभावात् । *बाधादिति । न च क्विपि कृते इटः प्राप्तिः । "तितुत्र" ( पा० सू० ७–२–९ ) इतिनिषेधात् । केचित्तु "णिश्रीतिसूत्रेण च्लेः स्थाने अङादेश एव विधातव्यः "चङि" ( पा० सू० ६–१–११ ) इति सूत्रे अङीत्येव कार्यम्, चित्त्वमस्य स्थानिवत्त्वेन सिद्धम्" इत्याहुः । अत्राहुः–'अनुबन्धकार्येपि क्वचिदनल्विधाविति निषेधः प्रवर्त्तत इति ज्ञापनार्थं चकारोच्चारणम्' इति । पूर्वविप्रतिषेधाश्रयणमनर्थकमितिवादिमतमाह–*यत्त्विति । *अत एव=एतादृशस्थले "स्थानिवत्" ( पा० सू० १–१–५५ ) सूत्रस्य प्रवृत्तेरेव । दृष्टान्तपरभाष्यं खण्डयति–*तन्नेत्यादिना । *अल्विधित्वेनेति । आदेशविधायकशास्त्रेस्थानिनो

सूत्रभाष्ये 'अवीवदत्' इत्युपक्रम्यैव सिद्धान्तितत्वेन "ण्यल्लोपौ" (का० वा०) इति पूर्वविप्रतिषेधपरभाष्यविरोधेन च परत्वाद् वृद्धिरित्यत्रत्यभाष्यस्य एकदेश्युक्तित्वात् । किं च वृद्धौ णिलोपोऽपि दुर्लभः । णेरभावात् । न च स्थानिवद्भावः । वृद्धिस्थानीकाररूपाल्वृत्तिधर्मणित्वाश्रयलोपस्याल्विधित्वेन तत्र स्थानिवत्त्वाप्रवृत्तेः । स्पष्टा चेयं रीतिः "भोभगो" (पा० सू० ८-३-१७) इति सूत्रे भाष्ये *ण्यन्ताण्णावबीवददित्यादावित्वदीर्घत्वोपधाह्रस्वत्वसिद्धये "णेर्णिच्युपसंख्यानमेव कार्यम् । "सन्वत्" (पा० सू० ७-४-९३) सूत्रे णेर्णिच्युपसंख्यानमिति वचनाभावेन सिद्ध्यति । णिचाव्यवहितत्वादग्लोपित्वाच्च" इत्येव सिद्धान्त्युक्तिः । *अग्रिमभाष्यन्त्वेकदेश्युक्तिः । *एवम् "अतो लोपः" (पा० सू० ६-४-४८) इति सूत्रे "ण्यल्लोपौ" इति पूर्वविप्रतिषेधमुक्त्वा "न वक्तव्यः । एषु विधिषु कृतेषु स्थानिवद्भावाण्णित्वेन लोपो भविष्यति । नैवं शक्यम् । इयङादेशेऽन्त्यलोपापत्तेः" इत्युक्तं भाष्ये । तदप्येकदेश्युक्तिरेव "भोभगो" (पा० सू० ८-३-१७) इति सूत्रस्थन्यायसिद्धभाष्यविरोधात् । *किञ्च "णेरनिटि" (पा० सू० ६-४-५१) इत्यस्य ण्यन्ताङ्गस्य निर्दिश्यमानो योऽन्त्यस्तस्य लोप इत्यर्थ इति, "एकाचो द्वे" (पा० सू० ६-१-१) इति सूत्रभाष्याल्लभ्यते । तत्र हि- "स्थानेद्विर्वचने आटिटदित्यादौ *णिलोपो न स्यात्" इत्यापादितम् । एवञ्चेयाङि अन्त्यस्य निर्दिश्यमानधर्मावच्छिन्नत्वाभावात्समुदायस्य चान्त्याल्रूपत्वाभावाल्लोपाप्राप्त्या तस्यैकदेश्युक्तित्वावश्यकत्वात् । वचनसामर्थ्यादिति । परत्वाद् *गुणादीनां णिलोपबाधकत्वे इडादावपि गुणेन

---

ऽपदेनैवोपादानात् । ननु वृद्धेः प्राग्यदि णिलोपस्तदाऽवीवददित्यस्य सिद्धिरग्लोपित्वान्न स्यादित्यत आह-*ण्यन्ताण्णाविति । *अग्रिमभाष्यमिति । शब्दान्तरप्राप्तथा वृद्धेरप्यनित्यत्वमुपपाद्य वृद्धौ कृतायां लोप इत्येतद्व्यवस्थापनेनानग्लोपित्वात्सिद्धेर्णेर्णिच्युपसंख्यानं न कार्यमित्यभिप्रायकम्भाष्यमित्यर्थः । *एवम्= सन्वत्सूत्रभाष्यवत् । "भोभगो" ( पा० सू० ८-३-२२ ) इतिसूत्रस्थभाष्यविरोधेन एकदेशित्वमुक्त्वा भाष्यान्तरविरोधादपि तामाह-*किं चेति । *णिलोपो न स्यादिति । स्थानेद्विर्वचनपक्षे "अजादेर्द्वितीयस्य" ( पा० सू० ६-१-११ ) इत्येकवाक्यतया "चङि" ( पा० सू० ६-१-१२ ) इत्यनेन टिशब्दस्य स्थाने टिटीत्यादेशे प्रकृतिप्रत्ययविभागसम्मोहेन निर्दिश्यमानधर्मावच्छिन्नविषयकत्वस्यासम्भवाल्लोपो न स्यादिति भावः । *गुणादीनामिति । इयङ्विधायकसूत्रस्य य-

बाधसिद्धिरिति भावः । तेन कारणादिसिद्धिः । *परे त्वेवम*नेकवचन-कल्पनया तत्तत्सामर्थ्येन तत्तद्बाधकल्पनापेक्षया पूर्वविप्रतिषेधकल्पकताया एवानिटीत्यस्यौ*चित्यमित्याहुः ।

णौ चङि(पा०सू०७–४–१)। *णिनाऽङ्गस्याव्यवहितपरत्वम्। चङा तु सामर्थ्याद्व्यवहितपरत्वम् । तत्फलितमाह–चङ्परे णाविति । णाविति किम् ? चङ्परोपधाया ह्रस्वभाविन्या *असम्भवेन सूत्रवैयर्थ्यापत्तेः । *न च 'लू इ अ'इति स्थिते ऊकारस्य सम्भवः। *तत्राप्य*न्तरङ्गत्वाद् वृद्ध्यावा-देशयोः कृतयोस्तदसम्भवात् । न च ह्रस्वो वृद्धेर*पवादः। *ह्रस्वप्रवृत्तिकाले वृद्धेर्निष्पन्नत्वेन तस्य तद्बाधकत्वासम्भवात् । *पदसंस्कारपक्षेऽपि निमि-त्तनिमित्तिभावापन्नशास्त्रकार्याणां क्रमेणैव ज्ञानेन *धातुसञ्ज्ञा–तिङुत्पत्ति–चङुत्पत्ति–समये एव वृद्ध्यावोर्निष्पन्नत्वज्ञानेन चङुत्तरकालिकह्रस्वेन त-द्बाधायोगात्। न च *सामर्थ्येन चङि यः प्रत्ययस्तस्मिन्नुपधाया इत्यर्थो भविष्यतीति वाच्यम् । *तदपेक्षया सकलबालदुधृबोधक्षमत्वेन णावित्यस्यैव लघुत्वात् । चङि किम् ?, कारयति । उपधाया इति किम् ?, अचकाङ्क्ष-

---

णादिविधायकेभ्योऽप्यष्टाध्याय्यां पूर्वपाठेन वार्त्तिकनिर्देशेऽपि गुणस्येयङ्बाधक-तयाऽत्र वार्त्तिकोक्तक्रमव्यत्यासः । *परे त्वेवम्=पूर्वविप्रतिषेधानङ्गीकारे । *अ-नेकवचनेति । गुणादीनां यत्र यत्र प्राप्तिस्तत्तद्विषयकस्य ल्युटि णेर्लोपः ण्वुलि णेर्लोपः इत्येवम्प्रकारेणानेकवचनेत्यर्थः । एवम्=वचनानङ्गीकारे 'अनन्तर-स्य' इतिन्यायेन णिलोपशास्त्रस्य यणि यङ्बाधकतया चारितार्थ्येन गुणादिबा-धकत्वं न स्यादिति भावः । *औचित्यमिति । एकवचनकल्पनयैव सर्वसामञ्ज-स्यादिति भावः ।

णौ चङि ( पा० सू० ७-४-१ )। अत्र सप्तमीनिर्देशेन णिपरे चङि च परे यत्पूर्वन्निर्दिष्टमङ्गमित्यर्थे असम्भवपरिहाराय यादृशी कल्पना कर्त्तव्या ता-माह–*णिनाङ्गस्येत्यादिना । *असम्भवेनेति । णिचा व्यवधानादित्यादिः । "णौ चङि" ( पा० सू० ६–२–२८ ) इत्यत्र णिग्रहणं न कार्यं चङीत्येतावदस्तु । अ-सम्भवस्तु लक्ष्यस्य नास्तीत्यभिप्रायेण शङ्कते–*न चेति । समाधत्ते–*तत्रेति । *अन्तरङ्गत्वात्=पूर्वोपस्थितनिमित्तकत्वेनान्तरङ्गत्वात् । *अपवादः=येन नाप्रा-प्तिन्यायात् । * ह्रस्वप्राप्तिकाले इति । चङुत्पत्तिप्राक्काले वृद्धेः प्राप्तेरिति भावः । पदसंस्कारपक्षेऽप्याह–*पदेति । णिजन्ते यत्रोपधाह्रस्वत्वमभिप्रेतं तत्रत्यं क्र-ममाह–*धातुसंज्ञेत्यादिना । अस्य धातुज्ञाने णिजुत्पत्तिज्ञानमित्यादिः पूरणी-यः । एवं च णिज्ज्ञानस्य चङ्विषयकज्ञानपूर्वकालिकतया पूर्वं वृद्ध्यावोः प्रवृ-त्तिः स्यादिति भावः । *सामर्थ्येन=सूत्रारम्भसामर्थ्येन । *तदपेक्षयेति । सा-

त् । *प्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षत्वात्, णावित्यङ्गस्यैव विशेषणं नाच इति बोद्ध्यम् । तदुक्तं–"शर्पूर्वाः" (पा० सू० ७-४-६१) इति सूत्रे कैयटे–शब्दनित्यत्वेऽपि उपायानामवश्याश्रयणीयोऽन्तरङ्गबहिरङ्गभावः" इति । नित्यः शब्दो वाक्यपदरूपः तदन्वाख्यानेऽपीत्यर्थः । अन्यथाऽन्वाख्यानविलय इति तदर्थः ।

*बहुव्रीहिरिति । *परग्रहणसामर्थ्यादिति भावः । तद्विशेष्यश्च णिरेव न लघु । अङ्गस्येत्यावृत्त्या *ङ्गसञ्ज्ञानिमित्तमिति व्याख्यानात् । *अत एव श्रिप्रभृतीनां *न सन्वत्त्वम् । तदाह–अङ्गसञ्ज्ञेत्यादि । तत्परं यल्लघ्विति । सन्निधानाच्चङ्परे णाविति लघोरेव विशेषणमिति भावः ।

---

मर्थ्यकल्पनापेक्षयेत्यर्थः । ननु णमवितिह्रस्वभाव्युपधाविशेषणमस्तु तावतैवाचकाङ्क्षदित्यादौ दोषो न भविष्यतीत्याशङ्कायामाह–*प्रत्ययस्येति ।

सन्वल्लघुनि ( पा० सू० ७-३-२१ ) । चङ्पर इत्यत्र कर्मधारयस्य भ्रमवारणायाह–*बहुव्रीहिरिति । तत्र मानमाह–*परग्रहणमिति । कर्मधारयस्याभिप्रेतत्वे चङीत्येव वदेत् । परशब्दस्य परोपादानं तु न साधकम् । बहुव्रीहिपक्षेपि साम्यात् । अङ्गस्येत्यस्यावृत्तौ चङ्परशब्दबोध्यविशेषणत्वमेकस्याङ्गस्येत्यस्य । द्वितीये त्वत्र षष्ठ्यर्थो निमित्तनिमित्तिभाव इत्याशयेनाह–*अङ्गसंज्ञानिमित्तमितीति । अत एव=अङ्गसंज्ञानिमित्तं यच्चङ्परं णिरितिव्याख्यानादेव । *न सन्वत्त्वमिति । णेर्विशेष्यत्वाभावे चङ् परो यस्मादित्येतावन्मात्रोक्तौ श्रिप्रभृतिष्वपि सन्वद्भावापत्तिरिति भावः । नन्वभ्यासस्यालघुत्वान्न 'अशिश्रियत्' इत्यत्र सन्वद्भावापत्तिर्दोषः । अकाराभावेन "सन्यतः" ( पा० सू० ७-४-७९ ) इत्यस्याप्यप्राप्तेः । 'प्रादुद्रुवत्' इत्यत्रावर्णपरधात्वक्षराभावात् । "स्रवतिशृणोति" (पा० सू० ७-४-८१) इति सूत्रविहितमित्त्वमस्य तथा सति स्यादित्यपि न, सन्वद्भावस्य नित्त्वरोपि न प्रयोजनं, चङ्न्यतरस्यामित्युपोत्तमोदात्तत्वस्य परत्वादिति चेन्न । श्रिशब्दस्य णेरभावेपि यस्माद्धातोः परस्य च्लेश्चङ् तदुपलक्षणत्वात् । अत एव प्रभृतिशब्दोपादानं सार्थकम् । एवं चास्य वाक्यस्याचकमतेत्यत्र "कमेश्च्लेश्चङ् वक्तव्यः" ( का० वा० ) इति वार्त्तिकेन णिङभावेऽपि यदा चङ् तदापि स्यादित्यत्र तात्पर्यम् । न च चङ् परो यस्मात्तादृशो लघुः ककाराकारो न च तत्परोऽभ्यासाकारः ककारेण व्यवधानादिति वाच्यम् । इष्टस्थले सर्वत्रैव व्यवधानेन 'येननाव्यवधान'न्यायेन सिद्धेः । यत्तु–यद्यचकमत इत्यस्योपलक्षकं तदिति व्याख्यायते तदाचीकमतेत्येव स्यात् इति "कमेर्णिङ्" ( पा० सू० ६-१-३२ ) इति सूत्रानन्तरं "आयादय" ( पा० सू० ३-१-३३ ) इति सूत्रबाधनाय 'कमेर्लुङि च इति सूत्रं कार्यम् । कमेर्लुङि परतो णिङ् भवतीत्यर्थो भविष्यति तावतैवेष्टसिद्धेः इति तन्न । न्यासान्तरारम्भे गौरवस्य स्पष्टत्वात् । तदपेक्षयाङ्गस्येत्यस्यावृत्त्या व्याख्यानस्योचितत्वात् ।

*अत एव "इह कस्मान्न भवति-'अजजागरत्'?। लघुनि चङ्पर इत्युच्यते व्यवहितश्चात्र लघु चङ्परे" इति भाष्यं सङ्गच्छते । चङ्परे णौ यल्लघु तदभ्यासस्य व्यवहितमित्यर्थः। एवञ्च 'अचचकासत्' इत्यादौ *नैव सन्वत्त्वम् । 'औन्दिदत्' इत्यादौ च *नैव दीर्घत्वम् । 'और्णुनवत्' इत्यत्र च *भवत्येव सन्वत्त्वम् । *'अचिक्ष्मयत्' 'अचिक्षणत्' इत्यत्र "अत्स्मृदृत्वर" (पा०सू०७-४-९५) इत्यनेनेत्वबाधनार्थेन संयोगव्यवधाने प्रवृत्तिज्ञापनान्न दोषः । अङ्गस्येति । *अवयव इत्यर्थः । *अस्य फलं चिन्त्यम् । तत्परलघुपराभ्यासस्येत्येव सिद्धेः । माधवानुरोधेन तु मूलकृतोक्तम् । तन्मते फलन्त्वग्रे स्फुटम् । णाविति । चङ्परे इत्यस्यावृत्तेरिति भावः । अथ वेति । चङ्परे इत्यस्याङ्गविशेषणत्वेऽङ्गत्वस्य प्रत्ययनिमित्तत्वेनैव

---

*अत एव=चङ्परशब्दार्थस्य लघुविशेषणत्वादेव । *नैव सन्वत्त्वमिति। प्रथमव्याख्यायामित्यादिः। यद्यपि चङ्परशब्दार्थस्यानुवाद्यविशेषणत्वं तथापि विधौ परिभाषेत्यस्याभावान्निर्दिष्टपरिभाषा प्रवर्तत एव । *नैव दीर्घत्वमिति । प्रथम पक्ष एवेति शेषः। *भवत्येवेति । नुशब्दस्य द्वित्वेऽभ्यासोत्तरखण्डस्य वृद्धावावादेशे ह्रस्वत्वेऽभ्यासस्य चङ्परणिपरलघुपरत्वसत्त्वात्सन्वत्त्वेव पक्षद्वयेऽपीति भावः। ननु येननाव्यवधानन्यायेन नादृशलघुपरत्वं यत्रैकव्यञ्जनव्यवहिताभ्यासस्य तत्र सन्वद्भावस्य चारितार्थ्यादचिक्ष्मयदित्यादौ संयोगव्यवधाने न स्यादत आह-*अचिक्ष्मेत्यादि । नन्वस्मिन्पक्षेऽचकथदित्यादौ सन्वद्भावाभावायोपात्तस्यानग्लोपिग्रहणस्य वैयर्थ्यमल्लोपस्य स्थानिवद्भावेनाभ्यासस्य चङ्परणिपरलघुपरत्वाभावात् । न चाभ्यासस्य नानादिष्टादचः पूर्वत्वमिति कथमत्र स्थानिवद्भाव इति वाच्यम् । द्विःप्रयोग एव द्विर्वचनमिति यः स्थानिभूतादचः पूर्वत्वेन दृष्टस्तत्त्वमस्त्येवेति चेन्न । अभ्यासस्य कार्ये तदुत्तरखण्डादेशस्य तत्प्रतिबन्धकीभूतं स्थानिवत्त्वन्नेति "अभ्यासस्यासवर्णे" ( पा० सू० ६-४-७८ ) इतिसूत्रस्यासवर्णग्रहणज्ञापितवचनेन दोषाभावात् । अभ्यासस्याङ्गत्वाभावादाह--*अवयव इति । *अस्य फलमिति । अभ्यासविशेषणस्याङ्गस्येत्यस्य फलमित्यर्थः । न च "एकाचो द्वे" ( पा० सू० ६-१-१ ) "पूर्वोऽभ्यासः" ( पा० सू० ६-१-४ ) "अङ्गस्य" ( पा० सू० ६-४-१ ) इत्येषां कार्यकालपक्षे एकवाक्यतयाऽङ्गसंज्ञकैकाच्धातुकर्मके ये द्वे उच्चारणे तयोः पूर्वस्य सन्वत्त्वमिति प्रकृतसूत्रार्थः स्यात्, तथा चैकाच्धातुसम्बन्ध्यभ्यासस्यैव सन्वत्त्वं नानेकाच्धातुविषय इत्येव फलमस्त्विति वाच्यम् । प्रकृतसूत्रभाष्ये "इह कस्मान्न भवति 'अजजागरत्' लघुनि चङ्पर इत्युच्यते, व्यवहितश्चात्र लघु चङ्परम्" इति भाष्यविरोधात् । एतद्भाष्यविरोधेन यथोद्देशपक्षस्यैवाश्रयणमत्रोचितमिति । यदि कार्यकालपक्षमाश्रित्यैकवाक्यता विधिशास्त्रेण स्याच्चदाऽनेकाक्षु ह्रस्वत्वादिकमपि न स्यात् ।

णिरूपविशेष्यलाभ इति भावः। अयं पक्षस्तु *उक्तभाष्यविरुद्धः। 'औन्दिदत्'इत्यादौ दीर्घा*पत्तिश्चात्र पक्षे चङ्परे णौ यदङ्गमौन्दिदिति तदीयोऽभ्यासश्चङ्पादाय णिलोपस्य स्थानिवद्भावेन णिमादाय वा लघुपर इति बोद्ध्यम्। *ननु "मीमादीनान्तु अभ्यासस्य लोपः प्राप्नोति, अमीमयत्। सिद्धन्तु सनि यादृशमभ्यासरूपं दृष्टं तादृशस्यैवात्रातिदेशो न तु कार्यस्य। न च मीमादीनां सन्यभ्यासरूपमस्ति लोपश्च न रूपम्"इत्युक्त्वा "अङ्गान्यत्वाद्वा सिद्धम्" इति भाष्ये उक्तम्। तत्र कैयटः—"मीमादीनामङ्गानामभ्यासलोपो विहितोऽयन्त्वभ्यासो ण्यन्तानाम्।" अन्ये तु—'चङ्परे णौ यदङ्गं तदभ्यासस्य सन्वत्त्वं णौ मीमादीन्येवाङ्गानि तस्मादङ्गान्यत्वात्'इति। अस्यायमर्थः—येषामङ्गानामच इस् इत्यादिर्विधीयते *तस्यात्र ग्रहणाल्लोपो न ऽत्विसादिरहितानाममीमयदित्यादौ धातोः सन्वत्त्वाभावादभ्यासस्यैव ह्यनेन सन्वत्त्वमिति। एवञ्च कैयटेनाप्ययं पक्ष उक्त इति चेन्न। अङ्गस्याभ्यास इत्यत्राङ्गं किं निरूपितं ग्राह्यम्। चङ्निरूपितम् णिनिरूपितं वा? तत्रोपस्थितत्वात्प्राधान्याच्च णिनिरूपितमेव गृह्यते इत्येवं परतया पूर्वभाष्याविरोधेन तस्य योजयितुं शक्यत्वात्। अन्यथा एकस्यैव प्रयोगस्य सूत्रव्याख्यानभेदेन साधुत्वासाधुत्वयोरापत्तौ "न वा"(पा०सू० १-१-४४)इति सूत्रस्थभाष्यविरोध इति दिक्।

सन्यतः (पा० सू० ७-४-४९)। अतः किं? जुघुक्षति। तपरत्वं *स्पष्टार्थम्। *"अभ्याससम्बन्ध्यकारस्येत्यर्थः" इति "दीर्घोऽकितः"(पा० सू० ७-४-८३) इति सूत्रे भाष्ये स्पष्टम्। *अत एव 'चिच्छादयिषति' इत्यादावन्तरङ्गत्वात्तुक्यपि इत्वसिद्धिः। *सन्पराभ्यासस्येत्यर्थः। द्विःप्रयो-

*उक्तभाष्येति। अचचकासदित्यत्र सन्वत्त्वाभावप्रतिपादनपरभाष्यविरोधादित्यर्थः। *आपत्तिश्चात्र पक्षे इति। न च चङ्परणिपरत्वाङ्गमिति कथमत्र प्राप्तिरिति वाच्यम्। यस्मात् णिर्विहितस्तदादित्वमुन्दिद् इत्यस्यास्त्येवेत्याशयात्। सन्वद्भावेन सनि यद्यत्कार्यं दृष्टं तस्य सर्वस्यातिदेश इत्यभिप्रायेणाशङ्कते—*नन्विति। *तस्यात्रेति। तदीयाभ्यासस्येत्यर्थः। अङ्गान्यत्वादित्यस्य द्विविधव्याख्यानेनाङ्गकर्मकद्विरुच्चारण इत्यर्थस्य भाष्यसम्मतत्वमिति स्पष्टमेवेति भावः। *स्पष्टार्थमिति। ह्रस्वत्वविधानेनाभ्यासावयवस्यात्वमव्यभिचरितमिति भावः। अभ्यासस्य विशेष्यत्वमतो विशेषणत्वामित्यदन्ताभ्यासस्येत्यर्थे वक्ष्यमाणरूपासिद्धिरत आह—*अभ्याससम्बन्ध्यकारस्येति *अत एव=अत इत्यस्य विशेष्यत्वादेव। *सन्पराभ्यासस्येति। सनि परे तदपेक्षया यः पूर्वो-

गत्वाद् द्विर्वचनस्य 'अधीषिषति' इत्यादौ सन्परत्वमभ्यासस्य यङोऽल्लोपस्य स्थानिवत्त्वात् 'पापचिषते'इत्यादौ न दोषः । ध्वनितञ्चेदं "स्तौतिण्योः"(पा० सू० ८-३-६१)इति सूत्रे भाष्ये । तत्र हि-"अभ्यासादित्यस्य सनि योऽभ्यासस्तस्माद्या प्राप्तिस्तया नियमो यथा स्यात्, यङि योऽभ्यासस्तस्माद्या प्राप्तिस्तत्र नियमो माभूत्, सोषुप्यतेः सन् सोषुपिषते । अथ वाऽभ्यासाद्या प्राप्तिस्तस्या नियमो यथा स्यात्, धातोश्च या प्राप्तिस्तस्याश्च नियमो माभूत् अधीषिषति"इति प्रयोजनमुक्तम् ।

सञ्ज्ञायाः कार्येति । *तत्पक्षे हि "पूर्वोऽभ्यासः"(पा० सू० ६-१-४) इत्यस्य एकाच इत्यनुवृत्तसहितस्य कार्यदेशे सन्निधानम्, अङ्गञ्च तत्र संनिहितम् । तत्राङ्गस्येति कर्मणि षष्ठी । कारकविभक्तेर्न्याय्यत्वात् । एकाच इति च तत्समानाधिकरणम् । एवञ्चाङ्गसञ्ज्ञकैकाच्कर्मके ये द्वे उच्चारणे तयोः पूर्वोऽभ्याससञ्ज्ञकस्तस्य च सन्वदित्यर्थ इत्येकाक्ष्वेव प्रवृत्तिः । एतदर्थमेवाङ्गस्येत्यस्यानुवृत्तिरिति भावः । *इदञ्च 'अजजागरत्' इत्यादौ सन्वद्भावापादानपरभाष्यविरुद्धमित्यरुचेराह—*वस्तुत इत्यादि । अत्र पक्षेऽङ्गस्येत्युपरञ्जकतया कथं चिन्तेयम् । ऊर्णौ दीर्घ इति । स्यादिसपक्ष्यते सन्वत्त्वन्त्वत्र *नोपयुज्यते । अर्थापयताविति । अर्थशब्दाण्णिचि प्रकृतेरापुगिति भावः । वस्तुत आपुडागम इति भाष्योक्तपक्षान्तरेण फलाभेदाय लुङि अस्यानभिधानमेवोचितम् । मूलन्तु *कृत्वाचिन्तान्यायेनेति दिक् । न स्यादिति । *न स्यादेवेत्यर्थः । व्यवस्थयेति । अथवेत्याद्यर्वाचीनोक्तपक्षेणेत्यर्थः । कैयटेनैवेति । एतन्निष्कर्षश्लोकः । अगितामिति । *कमिप्रभृतीनामित्यर्थः ।

---

ऽभ्यासोत्तरखण्डभिन्नाव्यवहितभिन्नस्तस्येत्यर्थः । अन्यथा पिपक्षतीत्यादावुत्तरभागेन व्यवधानान्न स्यात् । सूत्रसार्थक्यन्तु "अधीषिषति"इत्यादौ भविष्यत्येव । तादृशाव्यवधानाश्रयणे प्रमाणन्तु "भ्राजभास" (पा० सू० ७-४-३) इतिसूत्रे "काण्यादीनां वा" (का० वा०) इत्येतद्वार्त्तिकस्य 'अचकाणत्' 'अचीकणत्' इत्यादिप्रयोगदर्शनमेव । *तत्पक्षे=कार्यकालपक्षे । *इदञ्च=कार्यकालपक्षमाश्रित्योक्तव्याख्यानञ्च । *वस्तुत इत्यादीति । आद्यपक्षस्य परिष्कारोऽयम् । *नोपयुज्यत इति । सन्वद्भावविषये दीर्घस्य विधानात् । *कृत्वा चिन्तान्यायेनेति । यद्यापुगागमः स्यात्तदा द्वयं स्यादित्येवमत्र चिन्ता द्रष्टव्या *न स्यादेवेत्यर्थ इति । नियमबीजन्तु प्रागुपपादितम् । *कमिप्रभृतीनामिति । एतेषामग्लो-

ये विभाषा (पा०सू०६-४-४३)। "जनसन" (पा०सू०६-४-४२) इति सूत्रे जन्ग्रहणेन यथा जुहोत्यादिदिवाद्योर्ग्रहणं तथा सन्ग्रहणेनापि सनतेः सनोतेश्च ग्रहणम्।*अत एव"सनोतेरनुनासिकलोपादात्वं विप्रतिषेधेन" (का०वा०) इति वार्तिकव्याख्यावसरे"आत्वे सनोतेर्ग्रहणस्य को ऽवकाशः?, सनि च ये विभाषा च आत्वस्यावकाशो*ऽन्ये जनादयः" इत्युक्तं भाष्ये। अन्यथाऽन्ययोर्जनखनोर्द्वयोरेव सत्त्वेऽनजनादय इति बहुवचनासङ्गतिः स्यात्। मम त्वेवं सनमादाय तदुपपत्तिः स्पष्टैव।*एतेन भाष्ये सनोतेरित्युक्त्याऽस्य न तत्र ग्रहणमित्यपास्तम्। नच "आङो यि"(पा०सू०७-१-६५) इतिवन्निर्देशे कार्ये*ऽकारोच्चारणेन यगादावेवास्य प्रवृत्तिर्न तु यासुडादाविति वाच्यम्। "अजनि आशाम्=अजन्याशामित्यत्र यणि "ये विभाषा" (पा०सू०६-४-४३)इत्यात्वं प्राप्नोति"इति "अचः परस्मिन्"(पा०सू०१-१-५७) इति सूत्रशेषस्थ*भाष्यविरोधापत्तेः। तस्मादकारोऽत्राद्दष्टार्थ एव। क्रामत्विति। *उत्क्राम इत्यत्र हेर्लुकि दीर्घो भवत्येव । "क्रमः"(पा० सू० ७-३-७६) इति सूत्रेऽनुवृत्ताङ्गस्य परस्मैपदपराशिन्निरूपितस्यैव ग्रहणेन हेर्लुक्यपि *तन्निरूपिताङ्गस्य कार्याभावेन "नलुमता"(पा० सू० १-१-६३) इत्यस्याप्रवृत्तेः, प्रत्यासत्तिन्यायेन लुमता लुप्ते प्रत्यये यदङ्गन्तस्य कार्य एव निषेधप्रवृत्तेः ।

---

पित्वेऽपि णिज्निमित्तकाग्लोपित्वन्नास्तीति भावः । *अत एव=सनतेःसनोतेश्च ग्रहणादेव। "सनोतेरनुनासिकलोपादात्वं विप्रतिषेधेन"(का० वा०) इतिवार्त्तिकेन "जनसन" (पा० सू० ६-४-४२) इतिसूत्रे एव सन्ग्रहणेन सनतेः सनोतेश्च ग्रहणमिति व्यवस्थाप्यते। तत्रोभयोर्ग्रहणे सिद्धेऽर्थाधिकारानुरोधाद् "ये विभाषा" ( पा० सू० ६-४-४३ ) इत्यत्रोभयोर्ग्रहणमर्थसिद्धम्। *अन्येजनादय इति। उपक्रमभाष्यमिदम्। *एतेन=पूर्वोक्तरीत्योभयोर्ग्रहणस्य व्यवस्थापनेन। *अकारोच्चारणेन=ह्रस्वाकारोच्चारणेन । *भाष्यविरोधापत्तेरिति। यदि ह्रस्वाकारविशिष्टस्य येत्यस्य विवक्षा तदा भाष्यविरोधः स्पष्ट एव।

ननु "क्रमः परस्मैपदेषु" ( पा० सू० ७-३-७६ ) इतिसूत्रे परस्मैपदेष्वित्युपादानाद्यत्र परस्मैपदपरत्वन्तत्रैव स्यादिति लुकि न स्यात्। "न लुमता" ( पा० सू० १-१-६३ ) इतिनिषेधादत आह-*उत्क्रामेत्यत्रेति। *तन्निरूपितेति। परस्मैपदनिरूपितेत्यर्थः।

"स्नुक्रमोरनात्मनेपदे" ( पा० सू० ७-२-३६ )। *प्रथमार्थे षष्ठी-

स्नुक्रमोर (पा० सू० ७-२-३६) । स्नुक्रमोरिति *प्रथमार्थे षष्ठी । अनात्मनेपदनिमित्त इति प्रसज्यप्रतिषेधः । स्नुक्रमी यत्रात्मनेपदनिमित्ते न भवतस्तत्र प्रत्यासत्त्या ताभ्यां परस्यार्द्धधातुकस्येडित्यर्थः । उदात्तत्वादिटि सिद्धे नियमोऽयम् । तदाह—अत्रैवेति । *'प्रस्तुतः' इत्यादौ तु "श्र्युकः किति"(पा० सू० ७-२-११) इति निषेध एव पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यात् । निमित्तत्वं चात्र फलोपहितम्, न योग्यतामात्रम् । तेन 'प्रस्नविता' इत्यादाविट् भवत्येव । *'स्नुक्रमोरनात्मनेपद' इति तु न सूत्रितम् । तत्र हि परस्मैपदे इडित्यर्थे "चिक्रमिषिष्यति"इत्यसिद्धिः स्येन व्यवधानात् । आत्मनेपदे नेडित्यर्थे तु 'प्रचिक्रंसिष्यते' इत्यसिद्धिरतो निमित्तपदोपादानमिति दिक् ।

ततः परेषामिति । यद्यपीटः षीध्वमन्त्रयवत्वात्तस्य ततः परत्वं *दुरुपपादम्, तथापि श्रुतिकृतानन्तर्यमात्रेण सामर्थ्याच्छास्त्रप्रवृत्तिर्बोद्ध्या । *अन्ये तु—'इटः परस्यैषां धस्येत्यर्थः । षीकारव्यवधाने तु सामर्थ्यात्प्रवृत्तिः' इत्याहुः । अत्राङ्गादिति निवृत्तम् । *अत एव 'उपदिदीयिध्वे' इत्यत्र विकल्पः । अन्यथा *युटः परादित्त्वान्न स्यात् । इयञ्च प्राप्तविभाषा लुङ्यपि । "धि च"(पा० सू० ८-२-२५) इति सलोपे

---

ति । लाघवात्पर्युदासोऽयम् । आत्मनेपदनिमित्तभिन्ने यत्र स्नुक्रमी तत्रैवेत्यर्थः । यदि तु प्रसज्यप्रतिषेध आश्रीयते आत्मनेपदनिमित्त इति भावप्रधाननिर्देशः । स्नुक्रमोरात्मनेपदनिमित्तत्वाभावे सति प्रत्यासत्त्या ताभ्यां परस्यार्द्धधातुकस्येतिव्याख्याने तु षष्ठीनिर्देशो न्याय्य एव ।

नन्वेवं व्याख्याने 'प्रस्नवितव्यम्' इत्यादिवत् 'प्रस्नुतः' इत्यत्रापि स्यादत आह-*प्रस्नुत इति । प्रकृतसूत्रस्थनिमित्तपदस्य प्रयोजनमाह-*स्नुक्रमोरिति । न चैवं प्रक्रन्तेत्यत्रापि प्रतिषेधः स्यादिति वाच्यम् । क्रमेः कर्त्तरि चात्मनेपदविषयादितिवचनेन प्रतिषेधात् । 'प्रचिक्रंसते' इत्यत्र तु प्रतिषेधो भवत्येव । "पूर्ववत्सनः" ( पा० सू० १-३-६२ ) इतिशास्त्रप्रामाण्येन स्नुक्रमोरात्मनेपदनिमित्तत्वादेव सन्नन्तादात्मनेपदविधानात् । *दुरुपपादमिति । अवयवे समवेतोऽह्यवयवी न तु ततः पर इति भावः । *अन्ये त्विति । अत्रारुचिबीजन्तु सामर्थ्यकल्पने गौरवं स्फुटमिति । *अत एव=अङ्गादित्यस्यासम्बन्धादेव । *युटः="दीङो युट्" ( पा० सू० ५-४-६३ ) इतिविहितस्य । "उपसर्गस्यायतौ" ( पा० सू० ८-२-१९ ) इति सूत्रेऽयतावित्युपसर्गविशेषणमिति रीत्या

इवर्णान्तमङ्गन्त्वमिजातमिति "इणः षीध्वम्" (पा० सू० ८-३-७८) इत्यस्य प्राप्तेः । परस्योपसर्गस्येति । *श्रुतत्वादयतावित्युपसर्गविशेषणम् । *अत एव 'निलयते' 'प्लायते' 'पलायते' इत्यादौ सर्वत्र लत्वसिद्धिः । रेफविशेषणत्वे तु 'प्लायते' 'निलयते' इत्यत्र श्रुतिकृताव्यवधाने एव स्यादिति भावः । प्लायत इति । "अचःपरस्मिन्" (पा०सू०१-१-५७) इति स्थानिवत्त्वादयतिपरत्वमिति स्पष्टं भाष्ये । इणो रूपमिति । *प्लयय इति तु न अनभिधानादिति *कैयटः । कथमुदयतीति । शानच् स्यादिति प्रश्नः । अनित्यमिति । इदं भाष्ये न दृश्यते । इट किटेत्यत्र प्रश्लेषाभाववादिनां मते त्वयं प्रयोगो*ऽसाधुरेवेति बोध्यम् । उन्दः=क्लेदनम् । पुनःप्रसङ्गेति । द्वित्वे कृते 'पी' सावकाश इत्य*भिमानः । लिटीति । विषयसप्तमीति *परे ।

दीपजन(पा० सू० ३-१-६१) । बुधेति । बुध्यतेरेव ग्रहणं तस्यैवात्मनेपदित्वात् ।

चिणो लुक् (पा० सू० ६-४-१०४) । 'अकारितराम्' इत्यादौ तरपो न लुक् प्रतिलक्ष्यं लक्षणभेदेन पूर्वचिणो लुक् । उत्तराचिणो लुक्य-

---

व्याख्यातं तत्र कारणमाह-*श्रुतत्वादिति । *अत एव=अस्योपसर्गविशेषणत्वादेव । इणो रूपमितिस्वीकारेण प्रत्यय इत्यस्योपपत्तावपि यदाऽयतिपरत्वम्प्रतेस्तदा प्लत्यय इत्यपि स्यादत आह-*प्लत्यय इतीति । *कैयट इति । अनभिधाने मानन्तु रेफस्यायताविति विशेषणमिति भाष्योक्तपक्षान्तरेणैकवाक्यत्वमिति । तस्मिन्पक्षे प्रत्यासत्त्याऽयतिम्प्रति य उपसर्गस्तदवयवस्य रेफस्यायतिपरस्येत्यर्थ आश्रयणीय इति श्रौताव्यवधाने चारितार्थ्यात्पल्ययत इत्यत्र न स्यादित्येव दूषणन्न तु प्रत्यय इति सिध्यतीत्यप्युक्तन्तदेव । किञ्च भवत्सम्मतस्य लकारघटितस्य प्रामाणिकत्वे तदसिद्धिरूपस्य दूषणस्य तस्मिन्पक्षे भाष्यकृताऽवश्यं कथनं कर्त्तव्यन्तच्चानुक्तमतस्तादृशरूपस्यानभिधानमिति । *असाधुरेव=गत्यर्थस्य प्राधान्येन प्रतिपादकस्यासाधुत्वमत्र बोध्यम् । यदि तु पचाद्यचि कृते तदन्तादाचारे क्विप् क्रियते तदा साधुरेव, किन्त्वर्थभेद इति बोध्यम् । *अभिमान इति । लिण्निमित्तकपीभावस्यानवकाशत्वादेवञ्चारितार्थ्यप्रदर्शनमयुक्तमिति । *पर इति । एवञ्च लिङुत्पत्तेः प्रागेव पीभाव इति भावः ।

दीपजनबुध (पा० सू० ३-१-६१) । इदं सूत्रङ्कर्त्तरि प्रवर्त्तते न तु भावकर्मणोः । तत्र हि परत्वाद्भावकर्मणोरित्यस्य प्रवृत्तेः । "चिण् ते पदः"

*सिद्धत्वात् ।

अतो ल्रान्त (पा० सू० ७-२-२)। क्वचिद्भाष्येऽतोर्लान्तस्ये-ति पाठो दृश्यते आगन्तुनाऽकारेण निर्देशः। सङ्कोच इति। नेत्रस-

---

(पा० सू० ३-१-६०) इतिसूत्रात्ते इत्यनुवर्त्तते। *असिद्धत्वादिति। यदि तु प्रतिलक्ष्यं लक्षणभेदो नाश्रीयते तदा "गमहनजन" (पा० सू० ६-४-९८) इति-सूत्रात् क्ङितीत्यनुवर्त्य विभक्तिविपरिणामेन क्ङितो लुगिति व्याख्येयम्। मूले तद्भाष्येति। षोपदेशलक्षणवाक्ये स्त्यायतिरिवायं न पर्युदस्त इत्ययं दन्त्याजन्तसादित्वात्षोपदेश एवान्यथा भाष्यस्य न्यूनत्वापत्तिरिति सोपदेश-त्ववादिनो भाष्यविरोध इति भावः। ममव्येति। अत्र "यस्य हलः" (पा० सू० ६-४-४९) इति यशब्दस्य लोपो न। तत्र यस्येति सङ्घातस्य ग्रहणात्। मूले स्नानमिति। अत्र "स्नानं स्यादभिषवः" इत्यमरोक्तः स्नानशब्दार्थः।

अतो ल्रान्तस्य (पा० सू० ७-२-२)। अत्रान्तशब्दः परसमीपवाची। ल्रान्तस्येत्यत्र न बहुव्रीहिः। ल्रेत्यस्य सापेक्षत्वात्। किन्तु भिन्नं पदमित्युक्तम्मूले। अत इति त्वावर्त्तते। तदन्तस्याङ्गस्येति व्याख्यानाद् 'अश्वल्लीत्' इत्यत्र न वृद्धिः। यद्यपि व्यवहिते पदार्थेऽपि समीपव्यवहारो लोके दृश्यते। तथापि प्रकृतेऽव्यवहितसमीपवाचक एवान्तशब्दो भाष्यप्रामाण्यात्। सिचीत्यस्य ल्रविशेषणत्व-मङ्गीकृत्य तस्याङ्गविशेषणत्वेन सिच्परल्रान्तस्याङ्गस्यातो वृद्धिरित्यर्थेन सामञ्जस्ये प्रकृतसूत्रस्थमन्तग्रहणमसति बाधके प्रत्ययस्याङ्गविशेषणत्वमेवेति ज्ञापयति। किञ्चान्तपदोपादानाद्वर्णग्रहणेऽपि न जातिग्रहणम्। नन्विदं सूत्रम् "अतो हलादेः" (पा० सू० ७-२-७) इतिसूत्रानन्तरम्पाठ्यम्। अत इति ततोऽनुवर्त्तनीयम्प्रकृतसूत्रस्थमत इति तु न पाठ्यमत इति प्रकृतसूत्रे पञ्चम्यन्तविभक्तिव्यत्ययकल्पनेन भविष्यत्यतः 'अश्वल्लीत्' इत्यादौ न दोषः। अनुवादेऽपि "तस्माद्" (पा० सू० १-१-६७) इतिपरिभाषायाः प्रवृत्तिर्भविष्यतीति चेन्न। कण्ठताल्वादिव्यापारस्याधिकस्य प्रकृतसूत्रेऽत इत्यस्योपादाने आधिक्येऽपि "अतो हलादेः" (पा० सू० ७-२-७) इतिसूत्रस्थात इतिपदे एव स्वरितत्वं, हलादे-रित्यत्र तु नेतिकल्पनया विभक्तिव्यत्ययकल्पनया "तस्माद्" (पा०सू०१-१-६७) इतिपरिभाषोपस्थितिकल्पनया च मनोव्यापारगौरवस्य स्पष्टत्वात्। इदमेवा-द्ग्रहणं मनोव्यापारगौरवमपि दोषावहमित्यर्थे ज्ञापकमिति दिक्। अतः कि-म्? अखोरीत्। न च "नेटि" (पा०, सू० ७-२-४) इति प्रतिषेधः। तस्य 'अनन्तरस्य' इति न्यायेन हलन्तलक्षणवृद्धिमात्रबाधकत्वात्। मूले तृफलभजेत्येत्व-मिति। न च "दिव औत् (पा० सू० ७-१-८४) इतिसूत्र इवाप्रत्ययविधावपि निरनुबन्धकपरिभाषाप्रवृत्त्या 'फल निष्पत्तौ' इतिधातोरेव ग्रहणं युक्तमिति वाच्यम्। प्रकृतसूत्रस्थचकारेण ञिफलेत्यस्यापि ग्रहणात्। *प्रचुरप्रयोगादिति। क्वचित्तु स्पष्टप्रतिपत्तये गम्यमानस्यापि नेत्रपदस्य प्रयोगोऽपि। "सम्मीलने

क्रौंच इत्यर्थः। तत्रैव *प्रचुरप्रयोगात् । गतिचातुर्यम*श्चीयं बोद्धव्यम् । छद्मगतिः=कपटगतिः । कूर्छनं=कौटिल्यम् ।

सँल्लिण्निमित्तेति । सँल्लिटोरिति सप्तमी । अभ्यासविशेषणं चेति भावः । *सँल्लिट्परो योऽभ्यास इति वक्तुमुचितम् । उप्रत्ययश्चेति । सन्नियोगशिष्टत्वेनो*भयोपदेशकालस्यै*कत्वादार्द्धधातुकोपदेशकालेऽदन्तत्वादतो लोप इति भावः । *तस्य स्थानिवद्भावादिति । *एतेन वस्य लोप एव विधीयतामित्यपास्तम् । *धिन्वन्तीत्यादौ वस्य स्थानिवत्त्वेनार्द्धधातुकत्वादिण्न । उकारवृत्त्यार्द्धधातुकत्वस्यालधर्मत्वेनानल्विधाविति निषेधात् । स्पष्टा चेयं रीतिः "भोभगो" (पा० सू० ८-३-१७) इति सूत्रे भाष्ये । "अचः परस्मिन्" (पा० सू० १-१-५७) इति सूत्रे भाष्ये त्वभ्युपेत्य स्थानिवत्त्वं पञ्चमीसमासेन परिहृतमे*कदेशिनेति बोद्धव्यम् ।

प्रत्ययोकार इति । असंयोगपूर्वादित्यनेनावद्धयाधिमतोः *साजात्यादुकार एव विशेष्य इति भावः । असंयोगपूर्वो य उकार*स्तदन्तो यः प्रत्यय इति *वक्तुमुचितम् । *अमवीदिति । यत्तु "इको

---

नयनयोर्न हि किञ्चिदस्ति" इत्यत्र यथा । *अद्वीयमिति । अत एव 'धोरितकम्' इतिस्वार्थकञन्तमश्वगतौ प्रयुज्यते ।

सन्लिटोर्जेः ( पा० सू० ७-३-५७ ) । सन्लिण्निमित्त इत्यस्योपपत्तिरत्र परम्परया द्वित्वस्य तन्निमित्तकतया तदुत्तरमभ्याससंज्ञाप्रवृत्त्या संज्ञायास्तन्निमित्तकत्वेन संज्ञिनि तद्धर्मारोपेण च कार्या । तदपेक्षया लाघवादाह-*सन्लिट्पर इति । न च 'जिगीषति' इत्यत्र कुत्वन्न स्यात् । अत्र हि द्वितीयाजवधिकस्य जिस्शब्दस्य द्वित्वेन सनः कार्यित्वादिति वाच्यम् । सन्ग्रहणसामर्थ्येन 'न हि कार्यी'इति न्यायस्येहाप्रवृत्तेः । *उभयोपदेशकालस्य=अकारोपदेशकालस्य, उप्रत्ययोपदेशकालस्य च । *एकत्वादिति । अत्रैकत्वं क्षणत्रयसमुदायात्मकस्य कालस्य विवक्षितम् । एतावताऽप्यार्द्धधातुकस्योप्रत्ययस्याधिकरणकालेऽकारान्तबुद्धिसत्तासम्भवो बोध्यः । *तस्य स्थानिवद्भावादिति । अल्लोपस्य स्थानिवद्भावादित्यर्थः । *एतेन=प्रकृते लघूपधलक्षणगुणस्याप्रवृत्तेरिष्टत्वेन । ननूकारस्यार्द्धधातुकत्वे तदादेशस्य यणोऽप्यार्द्धधातुकत्वादिडागमः स्यादत आह-*धिन्वन्तीत्यादाविति । *एकदेशिनेतीति । स्थानिवद्भावस्यैवाप्राप्त्या तत्परिहारचिन्ताया वैयर्थ्यमिति तस्यैकदेशित्वं द्रष्टव्यम् । *साजात्यादिति । अत्र साजात्यं वर्णत्वेन ग्राह्यम् । *तदन्तो यः प्रत्यय इति । धिन्वित्यत्र तदन्तत्वं व्यपदेशिवद्भावेन बोध्यम् । 'आप्नुहि' इत्यत्र लोपाभावायासंयोगपूर्वत्वमुकार-

गुण" (पा० सू० १-१-३) इति सूत्रे भाष्ये "अतो ल्रा" (पा० सू० ७-२-२) इति सूत्रे वकारप्रश्लेषमुक्त्वा माभवानवीन्मवीदित्यत्र दोषमाशङ्क्य "ह्मयन्त" (पा० सू० ७-२-५) इत्यत्राविमव्योर्नेत्युक्तेरत्र नित्यनिषेध एव लभ्यते इति", तन्न। मध्येऽपवादन्यायेनास्य निषेधस्यातोल्रेत्येतन्मात्रबाधकत्वात्। जागर्तौ तु *लक्ष्यानुरोधात् बाध्यसामान्यचिन्ताया एवाङ्गीकारात्। ह्मयान्तादिविषये तु सामर्थ्याद्विकल्पस्यैव निषेधात्। अत एव सूत्रभाष्ययोर्न*विरोधः। "इकः" (पा० सू० १-१-३) इति सूत्रस्थभाष्यं पूर्वपक्ष्युक्तिरिति परे इति दिक्।

दीक्ष। मौण्ड्यादयः पञ्चार्थाः। ईष गति। दानेष्विति पाठान्तरम्। परिभाषणम्=अनृतभाषणम्। *आद्य इति। *अत एव 'वेहद्गर्भोपघातिनी' इत्यादि सङ्गच्छते। गाढेति। लोपे ष्टुत्वासिद्धत्वम्। नलोपविधानसामर्थ्यात्।

शल इगु (पा० सू० ३-१-४५)। अनिटश्च्लेरिति। धातु-

---

विशेषणमिति न्याय्यमेव। *वक्तुमुचितमिति। सामानाधिकरण्ये लाघवमौचित्यबीजम्। *अमवीदित्यादि। अत्र "अतो हलादेः" (पा० सू० ७-२-७) इति विकल्पः। *लक्ष्यानुरोधादिति। तस्य 'अजागरीत्' इत्येवं दृश्यते तदनुरोधादित्यर्थः। *न विरोध इति। अन्यथा सिच्यन्तरङ्गनास्तीत्यस्य णिश्रिग्रहणेन ज्ञापकेन सिद्धौ "अविमव्योर्न" (का० वा०) इत्यस्याभावेन विकल्पस्य दुर्वारतया विरोधः स्पष्ट एव।

अव रक्षणेत्यादि। कान्तिरत्र शोभा इच्छा वा। दीप्तिः=तेजः। तृप्तिः=इच्छानाशः। स्वाम्यर्थः=स्वामिधर्मः स्वामित्वरूपः। 'भाष व्यक्तायां वाचि'। शुकादिविषये सम्यग्भाषते इत्यादिप्रयोगस्त्वारोपात्। अत एव "मृदङ्गशङ्खतूणवाः पृथङ् नदन्ति संसदि" इतिप्रयोगस्याप्युपपत्तिः। 'भासृ दीप्तौ'। ऋकारोच्चारणमत्रात्मनेपदमात्रफलकं न तु "नाग्लोपि" (पा० सू० ७-४-२) इत्यस्य प्रवृत्त्यर्थम्। "भ्राजभास" (पा० सू० ७-४-३) इत्यनेनोपधाह्रस्वत्वस्य विकल्पात्। अनुबन्धान्तराकरणमृकारान्तप्रकरणानुरोधात्।

मूले के चित्त्विति। अत्रारुचिबीजन्तु'देवासुरान् प्रवल्ह्य'इति श्रौतप्रयोगविरोधः। प्रवल्ह्येत्यस्यानृतं भाषित्वेति व्याख्यातारः। उक्तश्रुतिव्याख्यानुरोधादेवाह-परिभाषणमनृतभाषणमिति। एतेन परिभाषणमनृतभाषणमितिव्याख्याने

"यः सनिन्द उपालम्भस्तत्र स्यात्परिभाषणम्।"

इतिकोशविरोध इति कस्य चिदुक्तिर्निरस्ता। *आद्यः=वेहधातुः। *अत

---

(१) ह्मपवर्ग इति लिखित पुस्तके पाठः।

विशेषणत्वे तु गुहू इत्यस्य सेट्त्वाद् 'अघुक्षत्' इत्यादौ क्सो *न स्यात्, पाक्षिकेऽभावमादाय*निट्त्वे तु *नित्यमेव स्यात्। च्ल्यारम्भत्वादिसूत्रमते इदमनिट इति विशेषणादेव क्सस्य *न "ऊदितः" (पा० सू० ७-२-४४) इतीट्। न च गुहादेशच्ल्यवस्थायां गुणः स्यात्। इगुपधत्वाभावेऽपि क्सविधानं भूतपूर्वगत्या चरितार्थमिति वाच्यम्। क्सस्य *कित्त्वसामर्थ्यात्तदप्रवृत्तेः। न च ककाराभावे तृणादिभ्यश्चा*तुरर्थिके से तृणसाविसादौ "क्सस्याचि" (पा० सू० ७-३-७२) इति लोपापत्तिः, तत्रो*त्तरसूत्रस्थात्मनेपदग्रहणापकर्षणादोषात्तदाह—अजादौ तङीति। *अत एव ककारे कृतेऽपि दृशेः क्से "तादृक्षौ" इत्यादौ न लोपः। *उत्तरसूत्रे च्ल्यादेशक्सस्यैव ग्रहणेनार्थाधिकारानुरोधादत्र तस्यैव ग्रहणेन तङीति निष्फलं निर्मूलं चेत्यन्ये।

अघृक्षातामिति। *लोपाभावे "आतो ङितः" (पा० सू० ७-२-८१) इति स्यादिति भावः। प्रनिज्ञानमिति। तच्च *शब्देन स्वाभिप्रायप्रकाशनम्। अपपाठत्वे हेतुरवज्ञेत्यादि। सूक्षणम्=आदरस्त-

---

एव=अस्य दन्त्योष्ठ्यादित्वादेव। अन्त्य इत्यस्य मूलस्थस्य बाह्वधातुरित्यर्थः। अत एव 'बाहवः परिघोपमाः' इत्यस्योपपत्तिः। न चास्य धातोरात्मनेपदित्वाद् 'बवाह रक्तम्पुरुषास्ततो जाताः' इतिप्रयोगस्यानुपपत्तिरिति वाच्यम्। आर्षत्वात्। 'ऊह' वितर्के। वितर्कः=अत्रानेकधर्मप्रकारकं ज्ञानम्। अस्य धातोरात्मनेपदित्वेन 'अनुक्तमप्यूहति पण्डितो जनः' इति प्रयोगः प्रामादिकः। *न स्यादिति। न विद्यते इड् यस्मादित्यर्थे सर्वत्रेडभावसत्त्व एव प्रवृत्तिः स्यादिति भावः। *अनिट्त्वे त्विति। नञेट्शब्दस्य समासं कृत्वा सामानाधिकरण्येन सम्बन्धस्वीकार इत्यर्थः। *नित्यमेव स्यादिति। क्सादेश एव नित्यं स्यादित्यर्थः। *नोदित इतीडिति। उपजीव्यविरोधात्सोऽत्र न भवतीत्यर्थः। *कित्त्वसामर्थ्यादिति। अत्र ककारो गुणाभावार्थ एव। यदि पूर्वं गुणः स्यात्तदा ककारो व्यर्थ एव स्यात्। *चातुरर्थिके="वुञ्छण्" (पा० सू० ४-२-८०) इति "तदस्मिन्" (पा० सू० ४-२-६७) इत्यादिनापठितसूत्रचतुष्टयार्थे चतुर्थाध्यायपठितसूत्राविहिते से इत्यर्थः। *उत्तरसूत्रस्थेति। "लुग्वा दुह" (पा० सू० ७-३-७३) इति सूत्रस्थेत्यर्थः।

*अत एव=आत्मनेपदग्रहणापकर्षादेव। स्वरितत्वाकल्पनेन लाघवादाह—*उत्तरसूत्र इति। ननु क्सस्याऽलोपविधानं व्यर्थमजादावेवास्य प्रवृत्त्या एतदभावेऽपि सवर्णदीर्घेण सिद्धेरत आह—*लोपाभाव इति। *शब्देनेति। शब्दकरणकेऽर्थ एवोद्घोषशब्दस्य प्रसिद्धेरिति भावः। 'णिक्ष' चुम्बने।

तोऽन्यदस्तक्षणमिति*तदर्थः ।

तीषस ( पा० सू० ७-२-४८ )। "इषेस्तकारे श्यन्प्रत्ययात्प्रतिषेधः" इति वार्तिकादत्रेषग्रहणेने*च्छतीष्णात्योरेव ग्रहणम् । अत्र सूत्रे धातुपाठे च 'इषु' इत्युदित्पाठोऽनार्षः । तादेरिति । ननु तादेरित्यर्थो दुर्लभः । वलादेरित्यादिग्रहणसामर्थ्येन विशेष्यविशेषणयोरुभयोरपि सप्तम्युच्चारणे एव "यस्मिन्विधिः" ( प० भा० ) इत्यस्य प्रवृत्तेः । *अत एव "ड: सि धुट्" ( पा० सू० ८-३-२९ ) इत्यादौ सादेः पदस्येति नार्थ इति चेन्न *सूत्रत्वात् वलादेरित्यनुवृत्तविशेषणीभूतवलपदार्थस्य तकारेण विशेषणात्तकाररूपवलादेरिति वाच्योऽर्थः । एवं "सेऽसिचि" ( पा० सू० ७-२-५७ ) इत्यादावपि बोद्ध्यम् । सप्तमी तु प्रथमार्थे एवेत्यलम् ।

उषविद (पा० सू० ३-१-३८)। इयमप्राप्तविभाषा "प्रत्ययान्ता धात्वन्तराणि"इति "न वा"(पा० सू० १-१-४४ ) इति सूत्रे *भाष्ये स्पष्टम् । कैयटादय इति । "श्लिष आलिङ्गने" ( पा०सू० ३-१-४६ ) इति सूत्रस्था इति बोद्ध्यम् । अत्रैव पाठ इति । *न च धातुसञ्ज्ञार्थः पाठः द्युतात्पूर्वं पाठेनैव सिद्धेऽत्र *पाठस्य ज्ञापकत्वात् । *एतेनायं द्युतात्पूर्वं पाठ्यः, पुषादिसूत्रे घसादीति पाठ्यं, लृदित्त्वञ्च न कार्यमित्यपास्तम् । पाठस्याङ्सम्पादकतया चारितार्थ्येन शपि परस्मैपदे प्रयोगानापत्तेः । लृदित्करणमिति । यद्यपि *घस्लादेशेनैव 'अघसत्' इति सिद्धं तथापि

---

प्रणिक्षतीति । "उपसर्गादसमासेऽपि" ( पा० सू० ८-४-१३ ) इति णत्वम् । "वा निंसनिक्ष" ( पा० सू० ८-४-३३ ) इति तु कृतीत्यनुवर्त्तनात्कृत्येव । *तदर्थः= असूक्ष्णशब्दार्थः । यदि तादृशः पाठः स्यात्तदाऽभावाभावस्य प्रतियोगिरूपतयाऽवज्ञापर्यायवाचकत्वानुपपत्तेरिति भावः । *इच्छतीष्णात्योरेवेति । परिशेषादेतयोरेव ग्रहणमिति भावः । *अत एव=विशेषणविशेष्ययोरुभयोः सप्तम्यन्तत्व एव तस्याः परिभाषायाः प्रवृत्तेरेव । ननु वलादेरित्यत्र वलपदार्थस्योपसर्जनत्वात्कथं तस्य ती.तिविशेषणमत आह-*सूत्रत्वादिति ।

*भाष्ये स्पष्टमिति । न च विदंशे यङ्लुकि प्राप्तविभाषात्वं सम्भवति । पूर्वोत्तरसाहचर्येणास्य यङ्लुक्यप्रवृत्तेरिति बोध्यम् । 'घस्लृ'अदने । स्वातन्त्र्येण पठितस्यास्य धात्वन्तरवन्न सार्वत्रिकत्वमित्यत्र "लिड्यन्यतरस्याम्" ( पा० सू० २-४-४० ) इत्यस्य ज्ञापकता मूलकृतोक्ता, भ्वादौ पाठस्य शपि परस्मैपदे प्रयोगे ज्ञापकता चोक्ता, तामुपपादयितुं शङ्कते-*न चेति । *पाठस्य तथा पाठस्य । *एतेन=अत्र पाठस्य शपि परस्मैपदे प्रयोगे ज्ञापकत्वेन । घस्लादेशेन=

*'अघात्सीत्'इति प्रयोगवारणार्थमस्य लृदित्वं बोद्धव्यम् । आशिषीति । *इदमुपलक्षणं यङ्चणोर्विषये च *प्रयोगाभावस्य । *परेतु "लिट्यन्यतरस्याम्" ( पा० सू० २-४-४० ) इत्येतत्सामर्थ्याल्लिटि मास्तु प्रयोगोऽन्यत्र तु भवत्येव *जघस्थेति रूपवारणेन च तत्सार्थक्यम् । *जघस्थेत्यस्येष्टत्वे हि असार्वत्रिकत्वबोधनेऽपि न कथमपि सार्थक्यम् । *अत एव "उपदेशेऽत्वतः" ( पा० सू० ७-२-६२ ) इति सूत्रे "घसेः प्रतिषेधो वक्तव्यो जघसिथ" इति वार्तिकं तासौ नित्यानिट्त्वाभावात् *प्रत्याख्यातं भाष्ये । अन्यथाऽस्य प्रतिषेधार्थं वार्त्तिकं स्यादिति तत्प्रत्याख्यानासङ्गतिः *अच्प्रत्यये घस्लादेशविधानं तु 'अदः' इत्येतद्रूपवारणार्थमित्याहुः'। अश्वीदश्वाचीदिति । यद्यपि "इको गुण" ( पा० सू० १-१-३ ) इति सूत्रे "अतो ल्रां" ( पा० सू० ७-२-२ ) इत्यत्र वकारप्रश्लेष उक्तस्तथा-

---

लुङि घस्लादेशेन । *अघात्सीदितिप्रयोगेति । अदेः स्थाने यो विहितस्तस्य यद्यपि 'अघसत्' इति सिध्यति, तथापि स्वतन्त्रस्याऽस्य 'अघात्सीत्' इति स्यात्तद्वारणार्थमस्य लृदित्त्वमित्यर्थः ।

नन्वाशिष्यप्रयोग इति न्यूनमाशिषि यत्र लोट् तत्र शपि परस्मैपदे प्रयोगज्ञापकेनैव प्रयोगसम्भवादिति चेन्न । आशिषीत्यस्याशिषि लिङीत्यर्थात् । *इदम्=आशिषीतिकथनम् । *प्रयोगाभावस्येति । ज्ञापकमिति शेषः । "लिट्यन्यतरस्याम्" ( पा० सू० २-४-४० ) इत्यनेनादेशविधानात्सार्वत्रिकत्वे प्रयोगाभावज्ञापकत्वकल्पनापेक्षया लिटि उपस्थितत्वात्तत्रैवाप्रयोगज्ञापकताऽस्त्वित्याशयेनाह-*परे त्विति । लिटि परतः प्रयोगस्त्वादेशस्यैव, न तु स्वतन्त्रस्येतिज्ञाप्यसिद्धेरुपपत्तिमाह-*जघस्थेतीति । मूलोक्तम्प्रकारङ्खण्डयति-*जघस्थेत्यादिना । *अत एव=स्वतन्त्रस्यास्य लिट्यप्रयोगादेव । *प्रत्याख्यातं भाष्ये इति । यद्यसार्वत्रिकत्वमात्रं ज्ञाप्यते तदाऽनिट्कारिकापाठेन वलाद्यार्द्धधातुके प्रयोगरूपज्ञापकेन तासौ नित्यानिट्त्वमस्य सम्भाव्यते तथा च जघस्थेत्येव स्यात्तद्वारणाय 'घसेः प्रतिषेधः' इत्यावश्यकमिति प्रत्याख्यानासङ्गतिः स्यादिति भावः । *अच्प्रत्यये घस्लादेशेति । तथोक्तम्भाष्ये-'घस्लादेशोऽच्युपसङ्ख्यानम् । प्रात्तीति प्रघसः' इति ।

*पुषादिद्युता ( पा० सू० ३-१-५५ ) । अत्र पुषादयो न भ्वादिपठिता गृह्यन्ते । द्युतादीनाम्पुषादिपाठोत्तरम्पाठेन पुषादिपाठेनैव सामञ्जस्ये द्युतादीनाम्पृथक्पाठसामर्थ्यात् । नापि चुरादिपठिताः । णिचा व्यवधानात् । नापि क्र्याद्यन्तर्गताः । तेषु पुषादिषु लृकारपाठेनैव सामञ्जस्येऽत्र सूत्रे पुषादिग्रहणवैयर्थ्यापत्तेः । तेषु च ग्रहधातौ पठितव्यो लृकारः स्वरितः पाठ्यस्तेनोभयपदं

पि *पूर्वपक्षत्वात्तस्य सिद्धान्ते प्रश्लेषे मानाभावेनात्र विभाषावृद्धिरिति भावः। 'मह' पूजायाम्। अयं दाने इति "दाश्वान्" ( पा० सू० ६-१-१२ ) इति सूत्रे भाष्ये।

द्युतिस्वाप्योः (पा० सू० ७-४-६७)। प्रत्यासत्त्या*ङ्गाभ्यासयोरेकनिमित्तत्वे एवास्य प्रवृत्त्या'दु*द्योतकीयिषति' इत्यादौ सम्प्रसारणाभावः *'व्यदिद्युतत्' इत्यत्र द्युच इश्चेति समाहारद्वन्द्वगर्भद्वन्द्वाश्रयणेन न दोषः। इकारेणोपस्थितद्युतेरेवे*कारान्तस्य ग्रहणम्, इकारश्च णिच एव स्वापिसाहचर्यादिति वृत्त्यनुसारिणः। *अत्र मानाभावात् द्युतेर्ण्यन्ताच्चाङि संप्रसारणं न भवत्येवेति *भाष्यानुसारिणः। स्वापिर्न *नामधातुर्द्युतिसाहचर्यात्। *न चा-

---

सिद्धमिति परिशेषादुक्तम्मूले श्यन्विकरणेति। न च श्यन्विकरणपुषादिष्वत्र पठितेषु द्युतादिषु चानुबन्धो लकारेण निमातव्यस्तेनैवाङः सिद्धौ सूत्रे पुषादिद्युतादिग्रहणवैयर्थ्यमिति वाच्यम्। 'ञिमिदा' 'ञिक्ष्विदा' धात्ववयवाकारस्य "आदितश्च" ( पा० सू० ७-२-१६ ) इति सूत्रप्रवृत्त्यर्थमावश्यकतया स्वादीनामुदित्त्वस्यापि क्त्वायामिड्विकल्पार्थमावश्यकतया च निमानासम्भवात्। न च ञिकारस्यादौ पाठवदनयोर्मध्ये पाठोऽस्त्विति वक्तुं शक्यम्। विपरीतगौरवापत्तेः। एवं 'स्यन्दू' धातोरूदित्त्वमपि न स्यादिति बोध्यम्। *पूर्वपक्षेति। तत्र हि वृद्धिग्रहणाभावेऽपि सिच्यन्तरङ्गस्य प्रवृत्त्या वृद्धिग्रहणस्य न प्रयोजनमितिपूर्वपक्षेत्यर्थः।

द्युतिस्वाप्योः सम्प्रसारणम् ( पा० सू० ७-४-६७ )। "अत्र लोपोऽभ्यासस्य" ( पा० सू० ७-४-५८ ) इत्यतोऽभ्यासस्येत्यनुवर्त्तते। *अङ्गाभ्यासयोरिति। अङ्गसंज्ञाऽभ्याससंज्ञयोरित्यर्थः, तत्फलमाह-*दुद्योतकीयिषतीति। अत्र द्युतेरङ्गसंज्ञायां ण्वुल्प्रत्ययो निमित्तम्परस्परयाऽभ्याससंज्ञायान्तु सन्प्रत्यय इत्येकनिमित्तकत्वाभावः स्पष्ट एव। ननु णिजन्ते द्वयोः संज्ञयोरेकनिमित्तकत्वाभावाद्दोषोऽत आह-*व्यदिद्युतदिति। *इकारान्तस्येति। इशब्दो द्युतिप्रकृतिकेकारान्तलाक्षणिक इति भावः। वृत्त्यनुसारिण इत्यनेन सूचितामरुचिं सूचयन्नाह-*अत्रेति। अत्र=उक्तद्वन्द्वगर्भद्वन्द्वे। *भाष्यानुसारिणः=वक्ष्यमाणभाष्यानुसारिणः।

*नामधातुरिति। घञन्तात्स्वापशब्दात् "तत्करोति तदाचष्टे" (चु० ग० सू०) इति णिजन्तो नेत्यर्थः, किन्तु णिजन्तः। अत एव भाष्ये स्वापिग्रहणं व्यवहितार्थमिति प्रयोजनमुक्त्वा 'सुष्वापयिषति' इति सम्प्रसारणघटितं रूपमुदाहृत्य शङ्कितम् "इहापि प्राप्नोति स्वापकमिच्छति स्वापकीयति स्वापकीयतेः सन्

भ्यासस्य प्रकृतिभूतद्युतिस्वाप्योः प्रत्यासत्त्याऽभ्यासनिमित्तप्रत्ययान्तयोः संप्रसारणमित्यर्थे नोक्तदोषप्राप्तिः । स्पष्टा चेयं रीतिः "ह्वः संप्रसारणम्" ( पा० सू० ६-१-३२ ) इति सूत्रे भाष्ये इत्यङ्गाधिकारपाठो व्यर्थ इति वाच्यम्। अभ्यासस्य संप्रसारण *लाभानापत्तेः *अभ्यासस्येत्यनुवृत्त्यर्थं *तत्र पाठाच्च *अशोकवनिकान्यायाच्च । एतेनाभ्यासादिषु प्रत्ययस्य प्रकृत्याकाङ्क्षायामुपात्तधातोरेव ग्रहणेनाभ्यासनिमित्तप्रत्ययप्रकृतिभूतद्युतेः संप्रसारणमित्यर्थेन नाङ्गाधिकारे एतत्सूत्रपाठे फलमिति परास्तम् । किं चाभ्यासस्योत्पत्तौ प्रत्ययापेक्षत्वेऽपि *ज्ञाने तदपेक्षत्वाभावेन शास्त्रे तदाक्षेपे मानाभावः । *अत एव 'अभिषिषेचयिषति' इत्यत्र "स्थादिषु" ( पा० सू० ८-३-६४ ) इति षत्वं *भवत्येवेति दिक् ।

द्युद्भ्यो लुङि ( पा० सू० १-३-९१ ) । बहुवचनादाद्यर्थावगतिः, *षष्ठ्यर्थे लुङीति सप्तमी, तदाह—द्युतादिभ्य इति

---

सिष्वापकीयिषतीति । सिद्धन्तु णिग्रहणात् । णिग्रहणं कर्त्तव्यम् । व्यवेतार्थम्" इत्यनेन व्यवहितेऽपि प्रवृत्तिर्दर्शिता, सा यथा स्वप्धातोर्णिजन्तस्याभ्यासस्य भवति एवमधिकव्यवधानेऽपि प्राप्नोतीति पूर्वपक्षः । णिग्रहणमित्यनेन स्वप्धातुप्रकृतिकणिजन्तस्य यथा ग्रहणं भवति तथा व्याख्येयमित्युत्तरम् । एतेन भाष्यप्रघट्टकेन स्वप्धातुविषये एव व्यवस्थोक्ता न तु इकारप्रश्लेषेण द्युतधातुप्रकृतिकणिजन्तस्य ग्रहणमित्युक्तम्, तेन तादृशकल्पनायाम्मानाभाव इति लभ्यते । इदं सूत्रं "लिट्यभ्यासस्योभयेषाम्" ( पा० सू० ६-१-१७ ) इति सूत्रानन्तरम्पाठ्यं षष्ठेऽध्याये, अस्मिन्सूत्रे सम्प्रसारणग्रहणञ्च कार्यमित्याभिप्रायेण शङ्कते—*न चेति । *लाभानापत्तेरिति । अनुवर्त्तमानमभ्यासपदञ्चाभ्यासनिमित्तप्रत्ययान्तयोरित्यर्थसम्पादकत्वेन चरितार्थमिति भावः । *अभ्यासस्येत्यनुवृत्त्यर्थमिति । प्रत्ययविशेषासम्बद्धस्याभ्यासस्येत्यस्यानुवृत्त्यर्थमित्यर्थः । *तत्र=समये । अङ्गाधिकारे पाठाकरणमात्रे एव चेच्छङ्का, तत्राह—*अशोकवनिकेति । ननु सम्प्रसारणग्रहणाकरणप्रयुक्तलाघवार्थन्तत्रैव पाठः कार्य इति वदाम इति चेत् । "व्यथो लिटि" ( पा० सू० ७-४-६८ ) इत्यर्थन्तत्सत्त्वात् । एवञ्चाङ्गाभ्यासयोरेकनिमित्तकत्वमनायासेन सिध्यति । *ज्ञाने=अभ्यासत्वेन ज्ञाने । यद्यपि ज्ञाने विषयविधयाऽभ्यासो निदानं, तञ्च प्रत्ययो जनयतीति परम्परया प्रत्ययस्य प्रयोजकताऽस्त्येव । तथापि ज्ञानस्प्रत्यन्यथासिद्धतया न कारणत्वमिति भावः । *अत एव=अङ्गस्येत्यस्य यत्र सम्बन्धस्तत्रैवोक्तप्रत्यासत्तिलाभो नान्यत्रेति स्वीकारादेव । *भवत्येवेति । अत्रापि प्रत्यासत्त्याश्रयणे षत्वञ्च स्यादिति भावः ।

-*षष्ठ्यर्थे इति । तेन लुङः स्थाने परस्मैपदमित्यर्थः सम्पद्यते ।

वृद्भ्यः स्यसनोः (पा० सू० १-३-९२)। प्रतिप्रसवविधिरयम्। अन्तरङ्गमपीति। *सकारादिविशेषापेक्षत्वादात्मनेपदनिमित्तत्वाभावनिमित्तत्वाच्च निषेधस्य बहिरङ्गत्वमित्यभिमानः। चतुर्ग्रहणसामर्थ्यादिति। तेन हि सर्वेषु प्रत्येकं निषेधव्यापारो ध्वन्यते। अन्यथा "न वृद्भ्यः" (पा० सू० ७-२-५९) इत्येतावतैव सिद्धौ तद्वैयर्थ्यं स्पष्टमेव। *कृपिव्यावृत्तिस्तु न फलम्। "तासि च" (पा० सू० ७-२-६०) इति चकारेण सार्वधातुके तस्यापि निषेधसत्त्वात्।

---

मिदेर्गुणः (पा० सू० ७-३-८२)। प्रकृतसूत्रे "ष्ठिवुक्लमु"(पा० सू० ७-३-७१)इत्यतोऽनुवर्त्तमानं शितीति पदङ्कर्मधारयप्रकृतिकसप्तम्यन्तम्। तेनाङ्गाधिकारेण प्रत्ययाक्षेपाच्छित्संज्ञकशकारादाविति लब्धम्। 'क्षुभ' सञ्चलने। सञ्चलनम्=प्रकृतिविपर्यासो मन्थनश्च। पित्तादेः क्षोभः। अत्र पूर्वावस्थाविपर्यासः प्रतीयते। दध्नः क्षोभे नवनीतम्भवतीत्यत्र मन्थनम्।

न वृद्भ्यश्चतुर्भ्यः (पा० सू० ७-२-५९)। स्यन्दतेरूदित्त्वाद्विकल्पेऽन्येभ्यो नित्यमिटि प्राप्ते निषेधोऽयम्। "गमेरिट्" (पा० सू० ७-२-५८) इत्यतोऽनुवर्त्तमानम्परस्मैपदन्तङानयोरभावं लक्षयति। तच्च "सेऽसिचि" (पा० सू० ७-२-५७) इत्यतोऽनुवर्त्तमानस्य से इत्यस्य वृद्भ्य इतिपञ्चमीबलादत्र षष्ठ्या विपरिणतस्य विशेषणम्। अत एव 'वर्त्तिषीष्ट' इत्यत्र सार्वधातुकस्य षीष्टशब्दस्य तङानयोर्यो भावस्तत्परत्वाभावेऽपि नेट्प्रतिषेधः। सार्वधातुकघटिते प्रयोगे तङानयोरभावसत्त्व एव निषेधस्य प्रवृत्तेरङ्गीकारात्। न चैवमपि 'विवर्त्तिषते' इत्यत्र लङुत्पत्तेः प्राक् तयोरभावसत्त्वान्निषेधः स्यादिति वाच्यम्। परस्मैपदशब्दस्य तङाननिमित्ताभावलक्षकत्वात्। "पूर्ववत्सनः"(पा० सू० १-२-६२) इत्यनेन यत्सनः प्रकृतिभूतो यो धातुस्तन्निष्ठस्यात्मनेपदनिमित्तस्यातिदेशात्। वृतादिभ्योऽव्यवहितस्य सार्वधातुकस्यानेनेट्प्रतिषेधः। अत एव 'विवर्त्तनीयिषति' इत्यत्रेट्सिद्धिः। निमित्तत्वञ्च फलोपहितत्वरूपम्। अत एव 'विवृत्सिता' इत्यत्र तृजन्ते निषेधस्य सिद्धिः। 'विवर्त्तिषते'इत्यत्रेटो 'विवृत्सिता' इत्यत्र निषेधस्य चेष्टत्वादेव भाष्ये वृतादीनामात्मनेपदेन समानपदस्थस्येड् भवतीति वक्तव्यमित्युक्तम्। न चैवं 'विवृत्सिषीयते' इत्यत्र क्यङन्तेऽपीट्प्रसङ्गः स्यादिति वाच्यम्। आत्मनेपदेनैव समानपदस्थस्येड् भवतीति तदर्थादत्र तु क्यङुत्पत्तेः प्राक् यः सुप् तेनापि समानपदस्थत्वम्। ऊदिल्लक्षणस्येटोऽन्तरङ्गत्वमुपपादयति-*सकारादीत्यादिना। *अभिमान इत्यभिधानबीजन्तु शब्दशास्त्रे शब्दस्य प्राधान्यात्सप्तम्याद्यन्तशब्दोपात्तमेव निमित्तं गृह्यत इत्याद्यन्यत्र निरूपितम्। चतुर्ग्रहणाभावे कृपेरपि सङ्ग्रहापत्तिरिति शङ्कां वारयति—*कृपिव्यावृत्तिस्त्विति। *अत एव—वृतादिसमासेरपीष्टत्वादेव। ननु यदि प्रतिषेधस्य

वृत्करणेन हुतादेरिव वृतादेरपि समाप्तिर्बोधयितुं शक्या। *अत एव "वृद्भ्यः स्यसनोः" ( पा० सू० १-३-९२ ) इति सूत्रं सङ्गच्छते । *"न वृद्भ्यः" ( पा० सू० ७-२-५९ ) इति वचनन्तु 'येननाप्राप्ति'न्यायेनार्द्धधातुकलक्षणेड्बाधेन चरितार्थम्। *कृपेस्तु "तासि च" ( पा० सु० ७-२-६० ) इति सूत्रारम्भसामर्थ्यादेव विकल्पो नेति भावः । *वस्तुतश्चतुर्ग्रहणं इति व्यर्थम् । "निषेधाश्च बलीयांसः" इति न्यायेनान्तरङ्गाणामपि बाधसिद्धेः वृतादिभ्यो यद्यत्प्राप्तन्तन्नेति वचनव्यक्त्या सर्वेण निषेधाच्च । *अत एव चतुर्ग्रहणं इत्यस्य प्रत्याख्यानं भाष्योक्तं सङ्गच्छते । *किं च *बहिर्भूतशब्दनिमित्तकस्यैव बहिरङ्गत्वमिति *परत्वेनापि तद्बाधोऽनेनेति दिक् ।

उ इति च्छेद इति । *स्पष्टं चेदं प्रत्याहाराह्निके भाष्ये । तच्चेति । कृपेति पदमित्यर्थः । *सूत्रमित्यन्ये । आवृत्तिफलं वाक्यभेदः ।

---

पूर्वोक्तरीत्या बहिरङ्गत्वमिड्विधायकशास्त्रदृष्ट्या तदा प्रतिषेधवैयर्थ्यमत आह—*न वृद्भ्य इतीति । ननु "तासि च" (पा० सू० ७-२-६०) इति सूत्रस्यापि "स्वरति" ( पा० सू० ७-२-४४ ) इतिसूत्रदृष्ट्या बहिरङ्गत्वम्पूर्वोक्तरीत्या स्यादिति तत्राप्यूदिल्लक्षणाविकल्पापत्तिरत आह—*कृपेस्त्विति । मूलोक्तरीत्या चतुर्ग्रहणसार्थक्यमुपपाद्य स्वसिद्धान्तमाह—*वस्तुत इति । *अत एव=उक्तरीत्या चतुर्ग्रहणवैयर्थ्यादेव । पूर्वोक्तम्बहिरङ्गत्वमभ्युपेत्य व्याख्यानम् । वस्तुतो बहिरङ्गत्वमेव नेत्याह—*किञ्चेति । *बहिर्भूतनिमित्तकस्येति । अन्तरङ्गशास्त्रनिमित्तबहिर्भूतनिमित्तकस्येत्यर्थः । *परत्वेन="स्वरति" ( पा० सू० ७-२-४४ ) इति सूत्रापेक्षया "न वृद्भ्यः" ( पा० सू० ७-२-५९ ) इतिसूत्रस्य परत्वेन । अपिना पूर्वोक्तस्य "निषेधाश्च"इति न्यायस्य समुच्चयः ।

*स्पष्टञ्चेदमिति । वर्णैकदेशानां वर्णग्रहणेनाग्रहणेऽप्यन्तर्भूतानन्तर्भूतसाधारणजातिनिर्देशेनेष्टसिद्धिरिति भावः ।

सकृदुच्चरित इति न्यायाविरोधः सम्पूर्णसूत्रावृत्तिं विना न सम्भवतीत्याशयेनाह—*सूत्रमितीति । नन्वयं कृप् लकारोपधः पाठ्यः । लादेशविधायकञ्च सूत्रन्न पाठ्यम् । एतावतैव क्लृप्त इत्यादिरूपं सेत्स्यति । कल्पत इत्यादि तु गुणे लपरत्वे च कृते भविष्यति । न चैवं सति कृपणः कृपा इति न स्यादिति वाच्यम् । सूत्रारम्भपक्षेऽत्र लत्वाभावस्य बाहुलकेन सिद्धिवत् तथा पाठे लकारस्य स्थाने बाहुलकादृकारादेशेनेष्टसिद्धेरिति चेन्न । 'अचीक्लृपत्' इत्यस्यासिद्ध्यापत्तेः । धातोर्ऋदुपधत्वे तु लत्वस्यासिद्धत्वाद् गुणे प्राप्ते "उर्ऋत्" ( पा० सू० ७-४-७ ) इत्यनेन ऋकारादेशे ततो लत्वे कृते सिध्यति, सम्प्रति तु लकारस्य "उर्ऋत्" ( पा० सू० ७-४-७ ) इत्यनेन ऋकारादेशे गुणबाधके कृते 'अ-

वृदिति । *वृत्तेः कर्त्तरि क्विप् ।

षितश्चेति । अतिदेशोऽयम् । फलन्तु "षिद्भिदादिभ्यः" (पा० सू० ३-३-१०४) इत्यङ् । *तत्र येऽन्यविकरणा अनूद्यन्ते तेषां तत्तत्प्रयुक्ता एव विकरणाः, ये तु भ्वादिस्था एवानूद्यन्ते स्वतन्त्रा वा पठ्यन्ते, तेषां *शबेव । न च तस्यैवेति । एवञ्च 'विघटयति' इत्यादौ *मित्त्वं न स्यादिति भावः ।

नान्ये मित इति (चु० ग० सू०) । *अनुवादसामर्थ्येन तद्बाधकल्पनापेक्षया स्वातन्त्र्यकल्पनस्यैवौचित्यादिति भावः । न च षित्त्वार्थमयञ्चुरादेरनुवादः, तत्रैव 'घटष्' इति पठितुं युक्तत्वात् "ण्यासश्रन्थ" (पा० सू० ३-३-१०७) इति युच एव प्राप्त्या षित्त्वे फलाभावाच्च ।

हलादिः शेषापवाद इति । *यस्थानिकहलादिःशेषापवाद इत्यर्थः । न चाभ्यासविकारे बाध्यबाधकभावाभावेनेदमसङ्गतम्, 'अजीचिक्लृपत्' इत्येव स्यात् । ऋकारेण सावर्ण्याल्लृकारोपस्थितावान्तरतम्याल्लृकारो भविष्यतीति तु वक्तुमशक्यम् । "उर्ऋत्" (पा० सू० ७-४-७) इत्यनेनेररारामपवादभूतस्य ह्रस्वस्य ऋकारस्य विधानेन 'अचीकृतत्' इत्यत्र दीर्घस्यापि ऋकारस्य स्थाने जायमानस्यापूर्वत्वेन 'भाव्यमानेन सवर्णानां ग्रहणन्न' इति निषेधस्यावतारात् । अनेन निषेधेन दीर्घऋकारो यथा 'अचीकृतत्' इत्यत्र न भवति तथा 'अचीक्लृपत्' इत्यत्र लृकारोऽपि न भविष्यति । किञ्च लृकारोपधपाठे लत्वाविधायकसूत्रस्याकरणे 'चलीक्लृप्यते' इत्यपि न सिद्ध्यति । ऋकारेण लृकारग्रहणाद् "रीगृदुपधस्य च" (पा० सू० ७-४-९०) इत्यनेन रीगागमे रीशब्दस्यैव श्रवणापत्तेरिति ।

तासि च क्लृपः (पा० सू० ७-२-६०) । अत्राप्यनुवर्त्तमानं "गमेरिट्" (पा० सू० ७-२-५८) इतिसूत्रात्परस्मैपदपदं तङानयोरभावलाक्षणिकम् । तेन क्रृप्धातोः सन्नन्तात्तृचि 'चिकल्पिषिता' 'चिक्लृप्सिता' इति सिध्यति ।

*वृत्तेः=सम्पूर्त्तिबोधकाद् 'वृत्'धातोः ।

*तत्र=घटादिषु । *शबेव=विकरणान्तराप्राप्तेः परिशेषाच्छबेव ।

*मित्त्वञ्च स्यादिति । यदि चौरादिकस्यायमनुवादस्तदाऽनुकरणस्यानुवाद्यबोधकतया चौरादिकस्योपस्थितौ तत्र "घटादयो मितः" (भ्वा० ग० सू०) इति प्राप्तमपि मित्त्वं "नान्ये मितः" (चु० ग० सू०) इत्यनेन निषिध्येतेत्यर्थः ।

नन्वनुवादसामर्थ्यान्न बाध इत्यत आह—*अनुवादसामर्थ्येनेति ।

*यस्थानिकेति । यकारस्य प्राप्ता या "हलादिः शेषः" (पा० सू० ७-४-६०) इत्यनेन बोधिता निवृत्तिस्तस्या इत्यर्थः । विकारो भावस्वरूप एव न,

गणत्' इत्यादौ हलादिःशेषे ईत्वस्य ज्ञाप्यार्थप्रयोजन*भाष्ये उपन्यासाल्लोपस्यापि तत्र विकारग्रहणेन ग्रहणात्। एवञ्च वस्यैव सम्प्रसारणापत्तिरिति वाच्यम्। "लिट्यभ्यासस्य" (पा० सू० ६-१-१७) इत्यत्रोभयेषांग्रहणेन सामान्यतं एवाभ्यासलोपाभ्याससम्प्रसारणविषये तन्न्यायाप्रवृत्ते*र्ज्ञापनेनादोषात्। 'सम्प्रसारणं तदाश्रयञ्च बलवत्' इति तु उभयेषां ग्रहण*वैयर्थ्यापत्त्या। "लिट्यभ्यासस्य" (पा० सू० ६-१-१७) इति सूत्रे भाष्ये एव प्रत्याख्यातमिति तदुपन्यासः केषाञ्चिदयुक्त एवेति दिक्। मित्त्वसामर्थ्यादिति। *असञ्जातविरोधन्यायेनेति भावः। अक्षञ्ज्ञीति। ण्यन्ताच्चिणि तशब्दस्य लुक्। क्षाञ्ज्ञक्षाञ्ज्ञामिति। ण्यन्तादाभीक्ष्ण्ये णमुल्, क्रियासमभिहारे द्वित्वम्। एतत्सर्वं दक्षादिष्वपि बोद्धव्यम्। मित्त्वार्थ इति षित्त्वस्याप्युलक्षणम्*। "गुरोश्च हलः"(पा० सू० ३-३-१०३)इत्यप्रत्ययेनापि सिद्धेः षित्त्वे फलाभाव इति काश्चित्। मित्त्वार्थ आत्मनेपदार्थश्चेति। चेन षित्त्वमप्युपलक्ष्यमनिदित्पाठे, इदित्पाठे तु क्षञ्जिवत्। उत्सृष्टानुबन्ध इति। त्यक्तानुबन्ध इत्यर्थः। डकारेऽकार उदात्त उच्चारणार्थः; अनुवादत्वे लाघवेनान्य एवेति नोक्तमिति भावः। *अत्र गणेऽन्यत्र पठितानां सति सम्भवेऽनुवाद एवेति "श्रृतं पाके" (पा० सू० ६-१-२७) इति सूत्रे भाष्ये कैयटे च ध्वनितम्। तत्र हि "श्राश्रप्योः शृभावो निपात्यते" इति भाष्यमुपादाय "श्रापाके इत्यदादौ 'श्रैपाके' इति भ्वादौ घटादिषु मित्त्वार्थं 'श्रापाके' इति पठ्यते" इति कैयटः। *अत एव भाष्ये श्राश्रपिश्रापीनामिति नोक्तम्। प्रागेवेति।

---

किन्त्वभावरूपोऽपीत्याह-*भाष्ये उपन्यासादिति। "न गणेरीत्वमपवादत्वाद्धलादिः शेषस्याधते किन्तर्ह्यनवकाशत्वात्" इत्यनेनोपन्यासादित्यर्थः। *ज्ञापनेनेति। उभयेषां सम्प्रसारणमेव यदन्यत्प्राप्नोति तन्नेत्यर्थकल्पनयेत्यादिः। *वैयर्थ्यापत्त्येति। स्वविषये चारितार्थ्यविरहेण तस्य वैयर्थ्यापत्तिरिति भावः। न च "लिट्यभ्यासस्योभयेषाम्" (पा० सू० ६-१-१७) इति सूत्रानन्तरं "व्यथः, द्युतिस्वाप्योः" इति पठनीयम्। लिटीति सम्प्रसारणमिति च न कार्यमिति वाच्यम्। द्युतिस्वाप्योरिति सूत्रे दत्तोत्तरत्वात्। *असञ्जातविरोधेति। यद्यनुपधात्वेऽपि दीर्घविकल्पः स्वीक्रियते तदा मित्त्वस्य वैयर्थ्यशङ्कोद्भवेन विरोधो न सञ्जायत इति भावः। *उपलक्षणमिति। तेन दक्षा स्त्री इति सिध्यतीति शेषः। 'हेड' वेष्टने। उत्सृष्टोऽनुबन्ध ऋकारोऽस्य न त्वयमपूर्व एव। घटादिगणेऽनुवादानामपि पाठे भाष्यसम्मतिमाह-*अत्र गण इत्यादिना। *अत

त्वरतेरग्रे इत्यर्थः। षित्त्वं त्रयोदशानामेव अनुदात्तेत्त्वन्त्वन्येषामप्यस्तीवति भावः। परस्मैपदमिति। न चैतदर्थं पाठस्य चारितार्थ्येन कथमर्थविशेषनियमलाभ इति वाच्यम्। घटादिषु पाठेन तत्प्रयुक्तकार्यस्याप्यावश्यकत्वेन विजातीयार्थपाठेन च *तस्यापि लाभात्। एवञ्च मित्त्वं परस्मैपदे वेष्टने एवेति बोद्ध्यम्। अहिडि अहीडीति। "चिण्णमुलोः" (पा० सू० ६-४-९३) इति दीर्घः। *एतदर्थं तत्र ह्रस्व एव न विकल्पितः। *परे तु ह्रस्वविकल्पेनैव सिद्धे "चिण्णमुलोः" (पा० सू० ६-४-९३) इत्यत्र दीर्घग्रहणं व्यर्थमित्याशङ्क्य शमेर्ण्यन्ताण्णिचि 'अशामि' इत्यादौ णिलोपस्य स्थानिवद्भावाद्ध्रस्वो न स्यात्, दीर्घग्रहणे तु दीर्घे स्थानिवत्त्वनिषेधान्न दोष इति 'कर्मणिङ्'सूत्रे भाष्ये उक्तं, तदनुपपन्नम्। प्रकृतोदाहरणार्थं दीर्घविधानस्यावश्यकत्वेन शङ्कोत्तरयोरुभयोरपि निर्दलत्वापत्तेः। तस्मादस्या*त्रासांप्रदायिकः पाठः। कैयटादयस्तु चिन्त्या एव। "ऊकालः" (पा० सू० १-२-२७) इति सूत्रे भाष्येऽप्येत*द्ध्वनितमिति

---

एव=अनुवादादेव। अपूर्वत्वे द्वयोरेवोपन्यासानुपपत्तिरिति भावः। *तस्यापि=अर्थविशेषनियमस्यापि। *एतदर्थमिति। 'अहीड़ि' इतिरूपसिद्ध्यर्थमित्यर्थः। ह्रस्वविकल्पे तु 'अहिडि' 'अहेडि' इति स्यादिति भावः। भाष्यसम्मतरीत्याऽऽह-*परे त्विति। *अत्र=घटादिषु। *ध्वनितमितीति। तत्र हि "उकालो ह्रस्वसंज्ञक इति वाक्ये ग्रहणकशास्त्रप्रवृत्तौ दीर्घप्लुतयोः पूर्वसंज्ञाप्रसङ्ग इतिशङ्कायाङ्कालग्रहणकरणरूपसमाधानोत्तरम्-'अथ वा ह्रस्वसंज्ञावचनसामर्थ्याद्दीर्घप्लुतयोः पूर्वसंज्ञा न भविष्यति' इति समाहितम्। ह्रस्वसंज्ञावचनमित्यस्य ह्रस्वसंज्ञया वचनमित्यर्थः। तेन ह्रस्वविधानसामर्थ्यादिति च फलितम्। यदि ग्रहणकशास्त्रबलेन दीर्घप्लुतयोरपि ह्रस्वसंज्ञा स्यात्तदा "ह्रस्वो नपुंसके" (पा० सू० १-२-४७) इत्यादिना दीर्घस्यान्तरतम्याद्दीर्घ एव भविष्यतीति ह्रस्वसंज्ञाविधानस्य वैयर्थ्यमेव भविष्यतीति भावः। ततः-'इदन्तर्हि प्रयोजनम्। एच इग्घ्रस्वादेश इति। यदि ह्रस्वसंज्ञाविधानञ्च स्यात्तदा "एच इग्घ्रस्वादेशे" (पा० सू० १-१-४८) इति वक्तुमशक्यमिति त्रिर्ह्रस्वप्रदेशेषु एव इगिति वक्तव्यं स्यात्"। "ह्रस्वो नपुंसके प्रातिपदिकस्य" (पा० सू० १-२-४७)। "णौ चङ्युपधाया ह्रस्वः" (पा० सू० ७-४-१) "ह्रस्वः" (पा० सू० ७-४-५९) इत्येषु त्रिषु वाक्यभेदेन एचो ह्रस्व इग्रूप एव यथा स्यादित्येवमर्थं तत्तत्सूत्रानन्तरमेव इगिति वक्तव्यमिति भावः। एवञ्चैरवोद्भावनसमये त्रिर्ह्रस्वप्रदेश इत्येवोक्तम्। यदि घटादिषु हेडधातोः पाठः प्रामाणिकः स्यात्तदा 'हिडयति' इतिरूपसिद्ध्यर्थं "मितां ह्रस्वः" (पा० सू० ६-४-९२) इत्यत्रापि एच इगिति वक्तव्यमिति त्रिग्रहणमसङ्गतं स्यादित्येतेन भाष्येण ध्वनितमित्यर्थः। हेडधातोर्घटादिपाठस्याभावेऽपि 'अशामि' इत्यत्र

भाष्यप्रदीपोद्द्योते निरूपितम् । *'द्विर्वचनादीनि न वक्तव्यानि वरेयलोपस्वरवर्जम्' इति नपदान्तसूत्रभाष्ये वर्ज्यकोटौ दीर्घोऽप्युपलक्षणीयः । *किं च यदापि पाठस्तदापि उत्सृष्टानुबन्धत्याद्यसङ्गतम् । अपूर्वत्वे बाधकाभावात्, अर्थविशेषे इत्यत्रापि न मानम् । *किं च सर्वेषामनेकार्थत्वे न मानम् । एवञ्चोपात्तार्थे एव मित्त्वमिति *तत्र फलाभावः, एवमन्यत्राप्यनेकार्थत्वनिर्णायकाभावे । *किं च 'भ्वेधस्पर्द्धे'इति धातुपाठस्य भूवादिसूत्रभाष्योक्तेः "अथ खल्वपि आचार्यश्चित्रयति क्वचिदर्थानादिशति क्वचिन्न" इति "नमोवरिवः" ( पा० सू० ३–१–१९ ) इति सूत्रभाष्योक्तेश्चात्रत्यार्थनिर्देशस्य पाणिनीयत्वमेवेत्यत्र न दृढतरं मानम् । एवञ्च नियमकथापि निर्मूला । *अतिप्रसङ्गपरिहारस्त्वनभिधानात् प्रयुक्तानामेवान्वाख्यानाच्च । *किं च ज्वरादिभ्यः प्रागग्रे वा पाठे न किंचिद् गौरवं लाघवं वा । एवञ्च तत्रानुवादमात्रेण परस्मैपदकल्पनापि निर्मूलेत्याहुः* । ननु विशेषानालिङ्गितसामान्यस्याभावेन क्रियासामान्यार्थत्वमयुक्तमत आह—अनेकार्थत्वादिति । निपात्यत इति । तत्र णिप्रकृतिधातोरेव ग्रहणं न घञन्तस्य *व्याख्यानात् *पूर्वोत्तरसाहचर्याच्चेति भावः । *धातुपाठे ह्रस्वोच्चारणन्तु दीर्घणिचोरभावे चरितार्थम् । नन्व*त्र *पाठवै-

---

ह्रस्वसिद्ध्यर्थं दीर्घग्रहणस्यावश्यकत्वप्रदर्शने कृते नपदान्तसूत्रभाष्यग्रन्थे न्यूनत्वशङ्का भवति ताम्परिहरति–*द्विर्वचनादीनीत्यादिना । मूलकारोक्तिं खण्डयति–*किञ्चेति । ननु धातूनामनेकार्थत्वेनार्थविशेष इतिकथनं युक्तमेवात आह–*किञ्चेति । *तत्र=वेष्टनातिरिक्ते । वेष्टन इत्यस्य पाठस्य पाणिनीयत्वनिश्चयेऽर्थविशेष इत्युपपद्यते तत्रैव न मानमित्याह–*किञ्चभ्वेधेति । सर्वत्रार्थनिर्देशस्यापाणिनीयत्वे येषु कथितेष्वर्थेषु घटादीनाम्मित्त्वम्भवति तदधिकेष्वपि प्राप्नोति । धातूनामनेकार्थत्वस्वीकारादत आह–*अतिप्रसङ्ग इति । 'ज्वरादिभ्यः प्रागेव पाठे कर्त्तव्ये' इत्युक्तं तदप्यसङ्गतङ्गौरवाभावादित्याह–*किञ्च ज्वरादिभ्य इति । *आहुः=भाष्यसिद्धार्थानुसारिण इति शेषः । नाट्यादिपदार्थानाम्भेदमाह मूले–तत्रायं विवेक इत्यादिना । वाक्यार्थाभिनयः=ह्रस्वादिचेष्टया वाक्यार्थसूचनम् । यथा 'एद्दहमेतत्थणिय' इत्यादिना काव्यप्रकाशे स्पष्टमभिहितम् । पदार्थाभिनयस्तु लोके प्रसिद्ध एव । *व्याख्यानादिति । लक्ष्यदर्शनमूलकव्याख्यानादित्यर्थः । लक्ष्यविसंवादादाह–*पूर्वोत्तरेति । नन्वेवं धातुषु दीर्घ एव पठनीयो निपातनापेक्षया लाघवादत आह–*धातुपाठ इति । *अत्र=

यथ्यमत आह—मित्त्वन्त्विति । निपातनञ्च चिण्णमुलतिरिक्तविषये चरितार्थं, *तदभावेऽपि न वृद्धिः । फले विशेषाभावेन दीर्घेण *बाधस्य वैयर्थ्यापत्तेः, *तच्छास्त्रस्य *तदभावेऽपि तात्पर्यादिति भावः । उदित्करणसामर्थ्यादिति । तदनुवादे तनादेरुदित्त्वेन पुनरत्र *तत्करणं व्यर्थमित्यर्थः । *'विशिष्यार्थो नोच्यते' इत्युक्त्या नियमस्य वक्तुमशक्यत्वेन तद्वैयर्थ्यमिति भावः । *अत एव पूर्वपठितवनो नानुवादः । उक्तरीत्याऽर्थनियमासम्भवेन *तत्र वनपाठस्य वैयर्थ्यापत्त्या तदनुवादासम्भवात्, उदित्त्वफलन्तु णिजभावे । परे तु पूर्वपाठः सम्भक्तौ शब्दे च वनोतीति रूपव्यावृत्त्यर्थः* । *अन्यथाऽनेनैव वनतीत्यादिसिद्ध्या *तवापि *तद्वैयर्थ्यं तदवस्थमेव । तनादौ 'वनु याचने' इति पाठः । *अत्र तु 'वन शब्दे' 'वन षण सम्भक्तौ' इति । उदित्त्व*मस्य तु तानादिकस्यैवात्रानुवाद इत्यर्थबोधनाय । तेन पूर्वपठितस्य 'प्रवानयति' इत्येव । *तानादिकस्योदित्त्वेन पूर्वपठितस्यानुदित्त्वेन निष्ठायां रूपद्वयं *तवापीष्टमेवेत्याहुः । विकल्पो वक्ष्यत इति । "ग्लास्नावनुवमाञ्च" ( भ्वा० ग० सू० ) इत्यनेनेति भावः । क्र्यादेरिति । *दिवादेरित्यपि बोद्धव्यम् । ताच्छीलिकप्रकरणा-

---

घटादिषु । *पाठवैयर्थ्यमिति । क्रथधातोरित्यादिः । *तदभावेऽपीति । "चिण्णमुलोः" ( पा० सू० ६-४-९३ ) इतिसूत्रविहितदीर्घस्य वैकल्पिकतया तदभावेऽपीत्यर्थः । *बाधस्य=ह्रस्वत्वबाधस्य । *तच्छास्त्रस्य="चिण्णमुलोः" ( पा० सू० ६-४-९३ ) इतिशास्त्रस्य । *तदभावे=वृद्ध्यभावे । *तत्करणम्=उदित्त्वकरणम् । ननु भौवादिकव्यावृत्त्यर्थमेवोदित्त्वमस्तु एवञ्चापूर्वत्वासिद्धिरत आह-*विशिष्येति । अस्मिन्नेवार्थे मित्त्वमितिनियमसत्त्वे उदित्त्वाभावे भ्वादिष्वर्थान्तरे पठितस्यार्थविशेषे मित्त्वार्थोऽनुवाद इति वक्तुं शक्यं, तत्तु न । तादृशनियमाभावादिति पूर्वत्र वनपाठसामर्थ्यादस्य भौवादिकानुवादत्वासम्भवे तानादिकानुवादत्वं वाच्यम् । एवञ्चोदित्त्वं व्यर्थमेवेति भावः । *अत एव=क्रियासामान्यार्थत्वादेव । *तत्र=पूर्वत्र । *रूपव्यावृत्त्यर्थ इति । अर्थविशेषोपादानस्यातानादिकत्वसूचकत्वात् । *अन्यथा=पूर्वपाठस्यातानादिकत्वसूचकत्वन्न किन्तु 'वनति' इतिरूपसिद्धिफलकत्वमिति स्वीकारे । *तवेति । तानादिकभिन्नत्वबोधनञ्चोदित्करणसामर्थ्यादिति वक्तुस्तवेत्यर्थः । *तद्वैयर्थ्यमिति । पूर्वपाठवैयर्थ्यमित्यर्थः । *अत्र तु=भ्वादौ पूर्वत्र तु । *अस्य=घटादिपठितस्य । ननु यदि तानादिकस्यैवानुवादोऽयं तदाऽस्मान्निष्ठायामिण्निषेधो "यस्य विभाषा" ( पा० सू० ७-२-१५ ) इति स्यादित्यत आह-*तानादिकेति । 'दॄ विदारणे' इतिक्र्यादेरयमनुवाद इत्युक्तम्मूले तत्र न्यूनतापूरणायाह-*दिवादेरित्यपीति । *भाष्यसम्मतत्वादिति । तत्र हि "अन्येभ्यो-

न्तेऽस्य दिवादिताया अपि *भाष्यसम्मतत्वात् । अण्यन्तत्वे *दृणाति दीर्यतीति वा । इति मते इति । *इदमेव युक्तमिति भाति । एवमन्यत्रापि बोद्धव्यम् । अत्र पठिष्यमाणानामन्यत्र पठितानामपि नानेकार्थत्वमित्यन्ये । पाकादन्यत्रेसाद्यपि चिन्त्यसमर्थान्तरे वृत्तौ मानाभावात् । परिभाषाभ्यामिति । *विरोधे*ऽनित्यत्वादुभयोरप्यप्रवृत्तिरिति भावः । मारणेत्यादि । मारणे सम्पूर्वकस्यैव प्रयोग इति पुरुषकारेण उक्तम् । कथमिति *माधवान्यमते आक्षेपः, तद् ध्वनयन्नाह—माधवेति । अत्र माधवमतं ज्यायः* । कम्पने चलिरिति । कम्पनेऽर्थे चलधातुरित्यर्थः । *एवमन्यत्रापि । स्वार्थे णिजभावे इति । "आधृषाद्वा" (चु० ग० सू०)

---

ऽपि दृश्यते" ( पा० सू० ३-२-१७८ ) इति सूत्रे "दृणातेर्ह्रस्वश्च द्वे च क्विप् चेति वक्तव्यम् । दद्दत् । दृणातेर्दीर्यतेर्वा" इत्युक्तम् । ण्यन्तस्य 'दरयति' इति मित्त्वे सत्युदाहृतम् । अण्यन्तस्य स्वयमाह—*दृणातीत्यादि । 'कथादेरयमनुवादः' इत्यस्य भयरूपेऽर्थे मित्त्वार्थ इत्यादिः । तदुक्तम्मूले भयादन्यत्रेति । *इदमेव=धात्वन्तरत्वमेव । ये त्वयं ह्रस्वान्त इति वदन्ति तन्मतम्पाणिनीयसूत्रविरुद्धम् । "शॄदॄप्राम्" ( पा० सू० ७-४-१२ ) इतिविकल्पेन ह्रस्वत्वं विहितम् । यद्ययं ह्रस्वान्तोऽपि स्यात्तदा धातुद्वयेन 'दद्रतुः' 'ददरतुः' इतिरूपद्वयं सिद्धमेवेति विकल्पेन ह्रस्वत्वविधानं व्यर्थं स्यात् । *विरोधे=द्वयोः परिभाषयोर्विरोधे । *अनित्यत्वादिति । लुग्विकरणपरिभाषायांः साहचर्यपरिभाषामूलकत्वात्साहचर्यपरिभाषायाश्च क्त्वोऽर्थग्रहणेनानित्यत्वज्ञापनाल्लुग्विकरणपरिभाषाऽप्यनित्या । "स्वरतिसूतिसूयति" ( पा०सू० ७-२-४४ ) इति सूत्रे सूङ इति वक्तव्ये सूतिसूयत्योः पृथङ्निर्देशस्य नास्यां ज्ञापकत्वम् । स्वरतिसाहचर्यादलुग्विकरणस्यैव ग्रहणे प्राप्ते पृथङ्निर्देशसार्थक्यात् । तस्माद् "यस्य विभाषा" ( पाऽ सू० ७-२-१५ ) इतिसूत्रभाष्ये 'विदितः' इति प्रयोगे 'विभाषा गमहनविदविशाम्" ( पा० सू० ७-२-६८ ) इति विकल्पसत्त्वान्निषेधमाशङ्क्य 'यदुपाधेर्विभाषा तदुपाधेः प्रतिषेधः' इति समाहितम् । विकल्पेनेड्विधायकसूत्रे च 'विशिसाहचर्याच्छविकरणस्य विभाषा, लुग्विकरणश्चायम्' इति चोक्तं, तेनैषा ध्वनितेति । लक्षणप्रतिपदोक्तपरिभाषायास्तु "भुवश्च महाव्याहृतेः" ( पा० सू० ८-२-७१ ) इति सूत्रे महाव्याहृतिग्रहणेनानित्यत्वङ्कल्प्यते । तद्धि भूशब्दप्रकृतिकजसन्तस्य भुव इत्यस्य रेफविकल्पाभावार्थमिति । 'विज्ञापना भर्तृषु सिद्धिमेति' इत्यस्य निशामनं चाक्षुषज्ञानमिति माधवमते चाक्षुषज्ञानान्यज्ञानार्थकतयोपपत्तिसम्भवात्तदाह—*माधवान्यमत इति । *ज्याय इति । 'तज्ज्ञापयत्याचार्यः' इति भाष्यप्रयोगसंवादात् । 'ज्ञप्स्यमानः' इति तु 'ज्ञा नियोगे' इति चौरादिकस्य रूपमिति बोध्यम् । *एवमन्यत्रापीति । 'जिह्वोन्मथने लडिः' ( भ्वा० ग०

इति वैकल्पिकत्वादित्यर्थः । स्वार्थे णिचि त्विति । "नान्ये मितः" ( चु० ग० सू० ) इत्यस्य प्रवृत्तेरिति भावः । जिह्वामिति । तां ज्ञापयतीत्यर्थः । जिह्वयेति । *तया ज्ञापयतीत्यर्थः । *लडयति शत्रुमिति । *गालयतीत्यर्थः । दधीति । उन्मथ्नाति=विलाडयतीत्यर्थः । दैवादिकस्येति । *अस्यैवानुवाद इत्यर्थबोधनार्थमीदित्वमिति भावः ।

घञन्तादिति । णौ *टिलोपे सति तस्य स्थानिवत्त्वान्न "मितां ह्रस्वः" (पा० सू० ६-४-९२) इति भावः । घृत्तिकृदिति । *भाष्ये तु न दृश्यत इति भावः । प्राप्ते इति । वनः पूर्वपाठाद्वमोऽमन्तत्वादिति भावः । अत्र वनोस्तानादिकस्यापि ग्रहणमित्यन्ये ।

यमोप ( भ्वा०ग०सू० ) । *परिवेषणं=भोजनानुकूलः पात्रेऽन्नस्थापनादिरूपो व्यापार इति बोद्धव्यम् । नियमवच्छब्दादिति । न च मतुब्लोपे *"टेः" ( पा० सू० ६-४-१५५ ) इत्यस्याप्राप्तौ वृद्धौ पुगापत्तिः नियमवदित्यर्थकार्शआद्यजन्तनियमशब्दादित्यर्थेनादोषात् । उपेक्ष्यमिति । 'नियमयन्' इत्यादेः सामञ्जस्येनात्र मते उपपत्तेस्तावेवोपेक्ष्याविति कश्चित् । असम्भवादिति । प्राप्तिं विना निषेधासम्भवादित्यर्थः ।

फणेः प्रागेवेति । *"यो व्यतीकारं फाणयन्सुयुक्तामुपदाशुषे" इत्यादिश्रौतप्रयोगोऽत्रानुकूल इति बोद्ध्यम् । तत्र हीति । षत्वविधाविसर्थः । टल ट्वल । वैक्लव्यं=भयादिजनितोद्वेगः । तद्व्यापार इति ।

---

सू० ) इत्यत्राप्येवमेव । *तया ज्ञापयतीति । जिह्वया तृषादि ज्ञापयतीत्यर्थः । *लडयति शत्रुमितीति । अत्रोन्मथनं=चित्तविक्षेपानुकूलव्यापारः, तदाह-*गालयतीति । *अस्यैव=दैवादिकस्यैव । 'ध्वन शब्दे' । शब्दशब्दोऽत्र ध्वन्यात्मकशब्दस्यैव बोधकः । 'स्वन अवतंसने' । अवतंसनं=भूषणं तस्य द्रव्यत्वादवतंसनशब्दोऽत्र तदीयशब्दानुकूलव्यापारे द्रष्टव्यः । मूले प्राप्तविभाषेयमिति । 'ज्वल' धातोः पूर्वत्र पाठात् 'नम' धातोरमन्तत्वात्प्राप्तविभाषेत्यर्थः ।

*टिलोपे=घञो लोपे । कथं सङ्क्रामयतीति । अत्र घञा सिद्धिर्न भवति "नोदात्तोपदेशस्य" ( पा० सू० ७-३-३४ ) इति निषेधादित्यभिप्रायेण शङ्का द्रष्टव्या । व्यवस्थितविभाषात्वे न साधकमित्याह-*भाष्ये त्विति । मूलोक्तप्रयोगाणान्तर्हि का गतिरिति चेत् । बाहुलकत्वाद्दीर्घ इति तेषु बोध्यम् ।

यमोऽपरिवेषणे ( भ्वा० ग० सू० ) । प्रतियोगिबोधकपदं व्याचष्टे-*परिवेषणमिति । *टेरित्यस्याप्राप्ताविति । विन्मतोर्लुकष्टिलोपापवादत्वात् ।

फणेः प्रागेव वृत्करणमित्यत्र साधकमाह-*य इत्यादि । 'राजृ दीप्तौ'

बन्धुत्वानुकूलो व्यापार इत्यर्थः । अकव्रथीदिति । एदित्वान्न वृद्धिः । सुधाकर इति । *अस्यैवमर्थसाहितस्य पाणिनिना पाठे प्रमाणाभाव इति अत्रारुचिः । तद्भाष्याद्वाचिति । 'वेमुः' इत्यादयस्त्वसाधव *एवेति भावः । मर्षणं=क्षमा, सा चापराधे सत्यपि कोपानाविष्करणम् । ढलोप इति *बहुव्रीहिपक्षे निमित्तत्वेनाश्रयणादेव ष्टुत्वादीनामसिद्धत्वं न । यद्वा शब्दाधिकारात् षष्ठीतत्पुरुषत्वेन ढलोप इति विषयसप्तमी । *तत्र क्तप्रत्ययं विना तद्विषयज्ञानाभावाद् 'ऊढः' इत्यादौ *तत्र कृते-सम्प्रसारणौत्वयोः प्राप्तौ परत्वादौत्वे सम्प्रसारणे पूर्वत्वे च कृते 'लक्ष्ये लक्षणस्य' इति न्यायेन पुनरोत्वाप्रवृत्त्याऽवर्णस्येति भाष्ये प्रत्याख्यातम् । रलोपस्य त्वसम्भवान्निवृत्तिः ।

सोढः ( पा० सू० ८-३-११५ ) । "न रपर" ( पा० सू० ८-३-११० ) इत्यतो नेत्यनुवर्त्तते । सोढः किम् ?, परिषहते ।

सिवादीनाम् ( पा० सू० ८-३-७१ ) । सिवुसहसुट्स्तुस्वञ्जः=सिवादयः ।

विशीर्णतायामिति । विशरणे इत्यर्थः । ननु शातनं *तदनुकूलो व्यापारः । एवञ्च तेनार्थकथनमसङ्गतं सकर्मकत्वापत्तेरत आह-शातनन्तिवति । विषयतयेति । विषयताऽत्र जनकतारूपा । एवञ्च *तज्जन्यविशरणमर्थ इति भावः ।

---

स्वरितेत् । सुधाकर इत्युक्तिबीजन्दर्शयति-*अस्यैवमर्थेति । उद्धरणमित्येवैतन्मते । उद्धरणम्=अन्तर्गतस्य मुखेन निस्सारणम् । *असाधव एवेति । 'वेमुश्च केचिद्रुधिरम्' इति त्वार्षम् । वमेरुपदेशे यादित्वान्न निषेध इति केचिद्वदन्ति, "स्यसिच्" ( पा० सू० ६-४-६२ ) इतिसूत्रादुपदेश इत्यस्य सम्बन्धेनोपदेशे यो वकारादिस्तस्य निषेध इति च स्वीकुर्वन्ति; तेषामबहुयोगव्यवहितस्योपदेशपदस्य सम्बन्धे क्लेशः । ननु "सहिवहोः" ( पा० सू० ६-३-११२ ) इतिसूत्रदृष्ट्या ष्टुत्वस्यासिद्धत्वात्कथन्निमित्तत्वं ढलोपे सतीत्यनेनोक्तमत आह-*बहुव्रीहिहिपक्ष इति । *तत्र=ढलोपे इति विषयसप्तमीति पक्षे । *तत्र कृते=क्तप्रत्यये कृते । 'ऊढः' 'ऊढवान्' इत्येवावर्णस्य प्रत्युदाहरणं, तच्चान्यथा सिद्धमिति भावः ।

*तदनुकूलः=विशीर्णत्वानुलकूलः । *तज्जन्येति । शातनपदवाच्यो यो व्यापारस्तज्जन्यविशरणमात्रमर्थ इति भावः ।

शदेः शितः ( पा० सू० १-३-६० ) । अत्र शिच्छब्दस्य शिद्भाविनि

शदेः शितः ( पा० सू० १-३-६० )। *शदेस्तिङुत्पत्तेः पूर्वं शितोऽसंभवाच्छित इत्यस्य शिद्विषये लक्षणा, तदाह—शिद्भाविन इति। शिद्विशिष्टे लक्षणायान्तु शितः=शबादेः सार्वधातुकाश्रयत्वेन परस्मैपदे जाते 'भुक्तवन्तम्' इति न्यायेनाऽस्य सूत्रस्य वैयर्थ्यापत्तिरिति भावः। बोधितेति। बुध्यतेरेवानिट्त्वमिति भावः। *वृदिति। परे तु "ज्वलितिकसन्तेभ्यः" ( पा० सू० ३-१-१४० ) इति सूत्रादत्र वृत्करणमनार्षम्। अन्यथा 'ज्वलादिभ्यो णः' इत्येव सूत्रयेदित्याहुः।

अवुददिति। इर इत्त्वेऽपि इदित्त्वाभावान्न नुम्। *रुन्धे इत्यादौ स्वरितेत्त्वप्रयुक्तमात्मनेपदन्तु भवत्येव स्वरितत्वप्रतिज्ञासामर्थ्यात्। *प्रत्ये(१)कमिरोरित्त्वमिति पक्षेऽपि न नुम्, कर्मधारयेणान्तेदित एव तद्विधानात्*। "अनिदिताम्" ( पा० सू० ६-४-२४ ) इत्यस्यापीत्सञ्ज्ञ-

---

लक्षणायास्मानमाह-*शदेरिति। अत्र वृदिति क्वचिन्मूले पाठस्तदभिप्रायेण प्रतीकधारणं-*वृदितीति। ननु यथा 'इर्' इत्यस्येत्संज्ञायामित्संज्ञकेन तेन समुदायेनेरित्त्वमेव नेदित्त्वमिति तथा स्वरितत्वमपि न स्यादत आह—*रुन्ध इत्यादाविति। 'इर इत्संज्ञा वक्तव्या' ( का० वा० ) इत्यस्य प्रत्याख्यानपक्षे आह—*प्रत्येकमिति। *तद्विधानादिति। "न दृशः" ( पा० सू० ३-१-४७ ) इतिसूत्रेणाप्ययमर्थो ज्ञाप्यते। अन्तेदित इति व्याख्यानाभावे दृशधातोर्नुमागमे कृते इगुपधत्वाभावेन क्सप्राप्तिरेव नेति तद्वैयर्थ्यं स्पष्टमेव। वादित्रग्रहणेतिमूलस्य वादनार्थं यत्तस्य ग्रहणन्तत्रेत्यर्थः। ये विभाषा खायादिति। "ये विभाषा" ( पा० सू० ६-४-४३ ) इत्यत्र ये इति विषयसप्तमी। तेन जायते स्वयमेवेत्यादौ "अचः कर्तृयकि" ( पा० सू० ६-१-१२५ ) इति स्वरसिद्धिः। तत्र हि 'स्तीर्यते' इतिप्रयोगासिद्ध्यर्थं "तास्यनुदात्तेत्" ( पा० सू० ६-१-१८६ ) इत्यत उपदेशपदं सम्बध्यते। न च यादिप्रत्ययविवक्षायाञ्चेदस्य प्रवृत्तिस्तदा प्रत्यये परतो विधीयमानाऽङ्गसंज्ञा नास्तीत्यङ्गाधिकारस्य बाधः स्यादिति वाच्यम्। अङ्गत्वमस्य भविष्यतीति बुद्धिविषयेऽङ्गस्येत्यस्य लक्षणाया एतादृशे विषये स्वीकारात्। 'स्पश' बाधनस्पर्शनयोः। 'पस्पशा' इतिरूपमस्यैव यङन्तादप्रत्यये संज्ञापूर्वकविधेरनित्यत्वात्पृषोदरादित्वाद्वाऽभ्यासदीर्घाभावे साधु। सेयमुभयतः स्पाशा रज्जुरित्यप्यस्यैव भिदादित्वादङ्प्रत्यये बोध्यम्।

ऊदुपधाया गोहः ( पा० सू० ६-३-८९ )। अत्रोपधापदस्य निष्फल-

---

(१) इरोरित्त्वमिति। इकारस्य रेफस्य च पृथक् पृथक् "उपदेशेऽजनुनासिक इत्" ( पा० सू० १-३-२ ) इति "हलन्त्यम्" ( पा० सू० १-३-२ ) इति सूत्राभ्यामित्संज्ञेत्यर्थः।

केकारान्तभिन्नाङ्गानामित्यर्थ इति नलोपो भवत्येवेति बोद्ध्यम् ।

ऊदुपधाया ( पा० सू० ६–४–८९ ) । *उपधाया इत्युत्तरार्थम् । प्रकृते तु "ओः सुपि" ( पा०सू० ६–४–८३ ) इत्यत ओरित्यनुवृत्त्याऽपि सिद्धम् । गोह इति *विषयार्थं, तदाह—गुणहेताविति । तेन 'जुगुहतुः' इत्यादि सिद्धम् ।

दन्त्ये तङीति । वर्णग्रहणाद् "यस्मिन्विधिः" ( प० भा० ) इति न्यायाच्च दन्त्यादौ तङीत्यर्थः । अन्तलोप इति । *अत एव 'अधुक्षाताम्' इत्यादौ "आतो ङितः" ( पा० सू० ७–२–८१ ) इतीयादेशो न ।

ऋद्धनोः ( पा० सू० ७–२–७० ) । *"एकाचः" ( पा० सू०७–२–१० ) इति निषेधे प्राप्ते इदम् ।

रिङ्शयग्लिङ्क्षु (पा० सू० ७-४–२८) । "अयङ्" (पा०सू०७–४–२२) इत्यतो यीति "अकृत्सार्व" ( पा० सू०७–४–२५ ) इति चानुवृत्तं लिङ एव विशेषणं शेऽसम्भवात् यकि वैयर्थ्यात्तदाह—यादाविति । *इगागमेन सिद्धे रेफोच्चारणं, निर्दिश्यमानपरिभाषया सिद्धे ङकारोच्चारणञ्च स्पष्टार्थम् ।

उश्च ( पा० सू० १–२–१२ ) । "इको झल्" ( पा० सू० १–२–९ ) इत्यतो झल्ग्रहणं "लिङ्सिचौ" ( पा० सू० १–२–११ ) इति सूत्रञ्चानुवर्त्तते, तदाह-ऋवर्णादित्यादि ।

ह्रस्वादङ्गात् (पा० सू० ८–२–२७) । *अङ्गग्रहणमङ्गसञ्ज्ञानिमित्तस्य लोपार्थं, तच्च पूर्व*परसाहचर्यात्सिजेव, तदाह–सिच इति ।

---

स्वं दर्शयति—*उपधाया इति । *विषयार्थमिति । यत्र गोहरूपं सम्भाव्यते तत्रादेश इति बोधनायेत्यर्थः ।

*अत एव=अलोऽन्त्यपरिभाषयाऽन्तस्य लोपादेव ।

ऋद्धनोः स्ये ( पा० सू० ७–२–७० ) । प्रतिप्रसवविधिः । तदाह—*एकाच इतीति ।

रिङ्शय ( पा० सू० ७–४–२८ ) । ननु रिङादेशापेक्षया लाघवाद्वर्णान्तानामिगागमविधानेऽपीष्टसिद्धिर्भविष्यतीत्यत आह—*इगागमेनेति ।

ह्रस्वादङ्गात् ( पा० सू० ८–२–२७ ) । "रात्सस्य" ( पा० सू० ८–२–२४ ) इत्यतः सस्येति "झलो झलि" ( पा० सू० ८–२–२६ ) इत्यतो झलीत्यनुवर्त्तते । अत्र सस्येतिपदं सिचो बोधकं, तदाह–*अङ्गग्रहणमिति । *परेति ।

तेन 'अस्तम्' *'द्विष्टमाम्' इत्यादौ न। यद्यपि 'ह्रस्वात्सिचः' इत्येव सिद्धम्। 'अलाविष्टाम्' इत्यादौ तु न दोषः, आगमे कृते तत्सहितस्यैव प्रत्ययत्ववत्सिच्त्वमिति स्वावयवेन *पौर्वापर्याभावात् तथापि पदलाघवा-भावादेवमेवोक्तम्।

आदेच (पा० सू० ६-४-४५)। उपदेश इति षष्ठ्यर्थे सप्तमी, तेनैजन्तस्योपदिश्यमानस्येत्यर्थः। *कर्मव्युत्पन्नोपदेशपदेनाद्योच्चारणविषय उच्यते। तेन 'ढौकिता' इत्यादौ न दोषः। समुदायस्योपदिश्यमानत्वं न तु तदवयवस्य, तदुपदेशे तात्पर्याभावात्। उपदेशे किम्?, गोभ्याम्। उद्देशश्च प्रातिपदिकानां नोपदेशः *उणादीनामव्युत्पन्नत्वाच्च गो इत्यादीना-मुपदिश्यमानैजन्तत्वमिति न वाच्यम्। *तादृशश्च प्रायेण *धातुरेवेत्यतो धातोरित्युक्तम्। मेङादौ ङकारसत्त्वे परस्य ङस्य सत्त्वेन तस्यैजन्तत्वा-भावेन "उदीचां माङः" (पा० सू० ३-४-१९) इति निर्देशस्य 'नानुबन्ध-कृतमनेजन्तत्वम्'(प० भा०)इत्यर्थज्ञापकता सुस्था। ङकारलोपे त्वेजन्तत्व-सत्त्वेन धातुसञ्ज्ञादिकार्यार्थं तावतोऽप्युपदेशे तात्पर्याच्चोपदिश्यमानैजन्त-त्वसत्त्वेन भवत्येवाऽऽत्वम्, *धातोरित्यनुवृत्तौ त्वनुबन्धलोपोत्तरं तद्वि-निर्मुक्तस्यैव धातुताया "न धातुलोप" (पा०सू० १-१-४)सूत्रे *भाष्ये उक्तत्वेन "उदीचां माङः" (पा० सू० ३-४-१९) इत्यादावात्वानापत्तिः। *धातोरित्येतत्सम्बन्धं विनापि तदन्तविधिरत्रेति "अणिञोः" (पा० सू० ४-१-७८)इति सूत्रशेषेऽपि भाष्ये ध्वनितम्। तत्र हि-"अवश्यमात्वार्थं

---

"इट ईटि" (पा० सू० ८-२-२८) इत्येतत्। परसाहचर्याश्रयणफलं *द्विष्टमामिति। *पौर्वापर्याभावादिति। एवङ्कथनमङ्गादित्यस्य सत्त्वेऽप्यावश्यकम्। अन्यथाऽऽगमसन्निधानेऽप्यागमिनः सिच्त्ववत्प्रत्ययत्वमपि स्यादिति 'अलाविष्टाम्' इत्यादाविडन्तस्याङ्गसंज्ञासूत्रे तदादिग्रहणादङ्गत्वाद्दोषः स्यात्।

'ढौकिता'इत्यादावतिप्रसङ्गं वारयति-*कर्मव्युत्पन्न इति। ननु 'डो' इत्युपदेशमादाय 'गोभ्याम्'इत्यादौ दोषः स्यादत आह-*उणादीनामिति। अत्रोपदिश्यमानस्येतिव्याख्यानादेव धातोरिति लब्धं, तदाह-*तादृशश्चेति। *धातुरेवेति। एतेन "लिटि धातोः" (पा० सू० ६-४-८) इत्यतो धातोरिति सम्बध्यत इति वादिमतान्निरस्तम्। प्रत्युत तदनुवृत्तौ दोषोऽपीत्याह-*धातोरित्यनुवृत्ताविति। *भाष्ये उक्तत्वेनेति। तत्र हि "धातोरिति किम्?, लूञ् लविता, पूञ् पविता" इत्युक्तम्। ननु धातोरित्यस्यात्र सूत्रेऽसम्बन्धे विशेष्यासन्निधानात्कथन्तदन्त-

धातुग्रहणं कर्त्तव्यमिह माभूत् गोभ्यामिति *उपदेशे यदेजन्तं तस्य चेदात्वमिष्यते, उद्देशो रूढिशब्दानां, तदा गोर्न भविष्यति" इत्युक्तम् । न च 'इरे'प्रभृतीनामुपदेशे एजन्तत्वादात्वव्यावृत्तये धातोरित्यावश्यकं 'शिति न' इत्युक्त्या शित्प्रत्ययपरत्वयोग्यस्यैवैजन्तस्य ग्रहणेनादोषात् । *एवञ्चोपदेशे इत्यस्य वर्णग्रहणे लक्षणप्रतिपदोक्तपरिभाषाऽप्रवृत्तिज्ञापकताऽपि *चिन्त्येति दिक् । न तु शितीति । शितीति *कर्मधारयात्सप्तमी *पूर्वोत्तरसूत्राणां प्रत्ययेष्वेव प्रवृत्तेस्तत्साहचर्यादत्र शितीति 'शिति प्रत्यये' इत्येतद्वाक्यैकदेशः । एवञ्च तदादिविधावित्सञ्ज्ञकशकारादौ नेत्यर्थः । तेन 'जग्ले' इत्यस्य सिद्धिः । विषयसप्तमी चेयम् । तेन 'ग्लायति' इत्यादौ शबाद्युत्पत्तेः प्रागपि नात्वमित्यलम् ।

आतो लोपः (पा०सू० ६-४-६४)। "दीङो युट्" (पा० सू० ६-४-६३) इत्यतोऽचि क्ङितीति वर्त्तते, तदाह-अजाद्योरिति । इट् आगम एवाऽन्यासम्भवात् । *'जगे' इत्यादौ त्वजादिकित्त्वादेव सिद्धम् । इट आर्धधातुकत्वं *तदवयवत्वाद् बोद्धव्यम् । क्ङितीति चेटो न विशेषणमिड्ग्रहणसामर्थ्यात् ।

दारूपा इति । प्रयोग इति शेषः । प्रयोगस्थदाधारूपाणामेव सूत्रेऽनुकरणात्, प्रयोगस्थानामेव सूत्रेऽनुकरणमित्यर्थस्य 'तङादेशानां टेरेत्वं न'इत्यर्थे आनयीति वक्तव्ये "आने मुक् (पा०सू० ७-२-८२) इति सूत्रनिर्देशस्य ज्ञापकत्वं वदता भाष्यकृता *सूचनाच्च । यद्यपि लाक्षणिकत्वाद्दोदेङ्घेटां कृतात्वानां न प्राप्नोति तथापि "गामादाग्रहणेष्वविशेषः" इति परिभाषया न दोषः । अस्याश्च दैपः पित्त्वं ज्ञापकम् ।

---

विधिरत आह-*धातोरित्येतदिति । *उपदेशे यदेजन्तमिति । एवङ्कथनेन शब्दस्वरूपमितिपदमध्याहृत्य तदन्तविधिरुपपाद्य इति ध्वनितमित्यर्थः । *एवञ्चेति । धातोरित्यस्य पूर्वोक्तरीत्याऽसम्बन्धे 'गोभ्याम्' इत्यादावदोषायोपदेशपदस्य चारितार्थ्ये चेत्यर्थः । *चिन्त्येति । तदनित्यताज्ञापकन्तु "भुवश्च महाव्याहृतेः" (पा० सू० ८-२-७१) इति सूत्रे महाव्याहृतिग्रहणमित्यवोचाम । अशितीत्यत्र बहुव्रीहेर्नञ्समास इति भ्रमं वारयति-*कर्मधारयादिति । *पूर्वोत्तरेति । "विभाषा परेः" (पा० सू० ६-१-४४) "न व्यो लिटि" (पा० सू० ६-१-४६) इति । अन्यासम्भवमुपपादयति-*जगे इत्यादाविति । *तदवयवत्वादिति । एवञ्चार्द्धधातुकत्वारोपोऽत्र बोध्यः ।

*सूचनाच्चेति । "टित आत्मनेपदानाम्" (पा० सू० ३-४-७९) इति

तच्चाऽदाबिति निषेधेऽस्यापि ग्रहणाय। धारूपा इति प्रयोगबाहुल्येन बहुवचनम्। 'प्रनिधारयति' इत्यादावनर्थकत्वात् *तत्त्वेनैव घुनिरूपितोपसर्गत्वाभावाच्च न णत्वम्। 'प्रणिदापयति' इत्यादौ "यदागमाः"(प०भा०)इति न्यायेन न दोषः*। पस्त्वाकारागमो न दा इत्यस्य। *दासाहचर्याद्धाग्रहणेन धेटोऽपि ग्रहणम्। *अत एव "दोदद्घोः" (पा० सू० ७-४-४६) इत्यत्र दधातेर्हिविधानसत्त्वात् धेण्निवृत्त्यर्थं दाग्रहणं चरितार्थम्।

एर्लिङि(पा०सू०६-४-६७)। घुमास्थेत्यादि वर्त्तते,क्ङितीति च।

विभाषा धेट् (पा० सू० ३-१-४९)। "णिश्रि" (पा० सू० ४-१-४८) इत्यतः कर्त्तरीति चङिति च वर्त्तते।

विभाषाघ्रा (पा० सू० २-४-७८)। "गातिस्था" (पा० सू० २-४-४७) इत्यतः सिचः परस्मैपदेष्विति, लुगिति च वर्त्तते।

यमरमन (पा० सू० ७-२-७३)। *अनयोः(१) सगिड्विधानम् 'अयंसीत्' इत्यादौ *वृद्धेरभावाय 'अयंसिष्टाम्' इत्याद्यर्थश्च; आतोऽपि 'अधासिष्टाम्' इत्यादौ फलम्।

---

सूत्रस्थस्य "टित एत्वे आत्मनेपदेष्वानप्रतिषेधः" इतिवार्त्तिकस्य प्रकृतानामात्मनेपदानामेत्त्वमिति तिबाद्यनुवृत्त्या प्रत्याख्यानोत्तरं तस्मिन्नेवार्थे ज्ञापकमप्युक्तम्-'आनेमुक् ज्ञापकं त्वेत्वे टित्तङामिशिसीरिचः" इत्यादिना। अत्र कैयटः-यद्येत्वमानस्य स्यात् तदा आनयिमुगिति वक्तव्यं स्यादित्यर्थः। टित्तङामिति। टितः स्थाने ये तङस्तेषामेत्वन्न त्वानस्य। "अध्येता' इत्यादौ दोषाभावायाह-इशिसीत्यादि। एश् इरेच् थासः से इत्यादौ लाघवाय इकारमेवोच्चारयेदित्यर्थः। तङादेशानामिति। तङ्रूपादेशानामित्यर्थः। इदञ्च ज्ञापकमेकदेश्युक्तिः। शानन्-चानश्सम्बन्ध्यानेमुक्सिद्धये तथानिर्देशस्यावश्यकत्वादिति। अविशेष इत्यस्य व्यवस्थापकपरिभाषया विशेषस्यैव ग्रहणमिति नियमो नेत्यर्थः। *तत्त्वेनैव। अनर्थकत्वेनैव। *न दोषः=नाव्याप्तिः। *दासाहचर्यादिति। पूर्वोक्तरीत्या दाग्रहणेन लाक्षणिकस्यापि ग्रहणे सिद्धे तत्साहचर्याद्धेटो लाक्षणिकस्यापि ग्रहणमित्यर्थः। *अत एव=धेटोऽपि ग्रहणादेव।

यमरमनम ( पा० सू० ७-२-७३ )। ननु यमरमधातोः सग्विधानं व्यर्थम्, सिचैव सिद्धेरत आह-*अनयोरिति। *वृद्धेरिति। "अतो हलादेः" ( पा० सू० ७-२-७ ) इति सूत्रविहितवृद्धेः।

वाऽन्यस्य संयोगादेः ( पा० सू० ६-४-६८ )। दीङो युडचि ( पा० सू० ६-४-६३ ) इत्यतः क्ङितीति "एर्लिङि" ( पा० सू० ६-४-६७ ) इत्यतो

---

(१) 'एषाम्' इत्युचितः पाठः। नम्धातोरपि यमरमधातुसमत्वात्।

घाऽन्यस्य (पा० सू० ६-४-६८)। अन्यस्येति स्थाधातौ *पर-त्वादेतद्विकल्पवारणाय। क्ङिति लिङीति। यद्यपि *क्ङितीत्यनुवर्त्तते तथापि आर्द्धधातुके इत्यनुवृत्तेर्विधिलिङि न प्रवृत्तिरिति ङितीत्यनुवृत्तौ फलाभाव इति भावः। एवम् "एर्लिङि" (पा० सू० ६-४-६७) इत्य-त्रापि बोद्धव्यम्। पिबादेश इति। स चादन्त आद्युदात्तश्चेति स्पष्टं भाष्ये। तेन पिबतीत्यादौ गुणाभाव आद्युदात्तत्वञ्च सिद्धम्। *एवञ्च हलन्त एव अङ्गवृत्तपरिभाषया गुणाभाव इति भाष्योक्तपक्षान्तरम्। परि-भाषारम्भेण गुरुफलान्तरञ्च नास्या इति निरूपितं युष्मत्प्रकरणे। 'ष्ठा' गति। *अत्र सपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यतायां ष्टुत्वाप्रवृत्त्या सत्वे थस्यैव श्रवणं बोद्धव्यम्। *'प्रतिष्ठति' इत्यादौ तिष्ठतेरेव गतिरर्थः। प्रशब्दस्त्वादिकर्मणि इति "भूवादि" (पा० सू० १-३-१) सूत्रे भाष्ये स्पष्टम्। 'तिष्ठन्मूत्रयते' इत्यादावूर्ध्वदेशसंयोगोऽपि तिष्ठतेरर्थ इति समर्थ-सूत्रे भाष्ये *ध्वनितम्।

---

लिङीति वर्त्तते। *परत्वादिति। "घुमास्था" (पा० सू० ६-४-६६) इतीत्वं स्थितमित्यत्र वैकल्पिकमेत्वं 'ग्ला'-'म्ला'धातौ चरितार्थम्। *क्ङितीत्यनुवर्त्तत इति। "दीङो युडचि" (पा० सू० ६-४-६३) इति सूत्रे समासेन निर्देशादुभयो रनुवृत्तिरुक्ता। *एवञ्चेति। अत्र चकारो वाक्यालङ्कारे। पिबादेश इत्यर्थः।

'ष्ठा' गतिनिवृत्तौ। "धात्वादेः षः सः" (पा० सू० ६-१-६४)। नन्व-कृतव्यूहपरिभाषाया 'निमित्तापाये नैमित्तिकस्याप्यपायः' इत्यस्यापि वा स्वसिद्धान्तविरुद्धतया "धात्वादेः" (पा० सू० ६-१-६४) इति सत्वेपि पूर्वका-लप्रवृत्तष्टुत्वनिष्पन्नस्य ठकारस्य स्थितिः स्यादेवेति तच्छ्रवणापत्तिरत आ-ह-*अत्र सपादेति। एवञ्च यद्यपि धातुस्वरूपबोधनाय 'ष्ठा' इत्युपदेशस्त-थापि सपादसप्ताध्यायीस्थस्य सत्वादिकार्यस्य प्रवृत्तियोग्यतासत्त्वात् "ष्टुना ष्टुः" (पा० सू० ८-४-४१) इत्यस्याप्रवृत्तिरिति थस्यैव श्रवणम्भवति। षोपदे-शफलं प्रतिप्रयोगे 'प्रतिष्ठाता' 'प्रतिष्ठा' इत्यादौ षत्वस्य सिद्धिः। नन्वयं धातु-र्यदि गतिनिवृत्तिवाचकस्तदा 'प्रतिष्ठति' इत्यादौ कथं गतिप्रतीतिरत आह-*प्रतिष्ठतीत्यादाविति। *ध्वनितमिति। एकस्यापि शब्दस्यान्यार्थे प्रक्रान्त-स्यान्यसम्बन्धविवक्षायामन्यार्थत्वम्भवतीत्यर्थे दृष्टान्ततया तत्र ह्येवमुक्तम्-"त-द्यथा कश्चित्कञ्चित्पृच्छति क्व देवदत्त इति स तस्मा आचष्टे असौ वृक्षे। कत-रस्मिन्। यस्तिष्ठति वृक्षोऽधिकरणम्भूत्वा कर्त्ता सम्पद्यते" इति। तत्र कैय-टः-"यदाऽन्ये निपतिता वृक्षा एकस्तूर्ध्वस्तदा विशिष्टवृक्षाधिकरणत्वेन देवदत्तः प्रतिपाद्यते"। एतेनोर्ध्वदेशसंयोगोऽप्यर्थ इति ध्वनितमित्यर्थः।

ऋतश्च (पा० सू० ७-४-१०)। तपरत्वं*स्पष्टार्थम्। *अरैव सिद्धे गुणग्रहणम् "ऋच्छत्यृताम्" (पा० सू० ७-४-११) इत्यस्येग्लक्षणत्वेन "क्ङिति च" (पा० सू० १-१-५) इति निषेधाय। क्सोः कित्त्वसामर्थ्यात् निषेधविषयस्यापि तस्य गुणस्य*निषेधाङ्गीकारात्। उपधावृद्धिरिति। *"जाग्रोऽवि" (पा० सू० ७-३-८५) इति गुणविधानन्तु जागृधातावेव गुणोत्तरं वृद्ध्यभावबोधकम्। *अत एव कृधात्वादौ भावकर्मणोः परत्वाद् गुणे उपदेशग्रहणाच्चिण्वत्त्वे 'कारिष्यते' इत्यादावुपधावृद्धिरिति भावः।

श्र्युकः (पा० सू० ७-२-११)। एकाचः किम्?, जागरितः। गिदिति। चर्त्वेनायं* प्रश्लिष्यते। तेन भूष्णुः सिद्धः। *स्थास्नुसिद्धये हि स्नुर्गिदिति दिक्। परत्वादिति। "स्वरति" (पा० सू० ७-२-४४) इति विकल्पस्तु 'मध्येऽपवाद'न्यायान्नास्य बाधक इति भावः।

ऋच्छत्यृ (पा० सू० ७-४-११)। ऋधातोरिति। बहुवचननिर्देशादृकारोऽपि प्रश्लिष्यते। ऋवर्णान्तधातुमात्रस्य तु न ग्रहणम्। "ऋतश्च संयोगादेः" (पा० सू० ७-४-१०) इत्यस्य वैयर्थ्यापत्तेः। *अन्यथा ऋ अतुसिति स्थिते द्वित्वे उरदत्वेऽभ्यासलोपे "अत आदेः" (पा० सू० ७-४-७०) इति दीर्घे उत्तरखण्डे प्राप्तं यणं बाधित्वा परत्वादाद्गुणे 'अरतुः' इति स्यादिति भावः।

---

ऋतश्च संयोगादेर्गुणः (पा० सू० ७-४-१०)। "दयतेः" (पा० सू० ७-४-९) इत्यतो लिटीति वर्त्तते। *स्पष्टार्थमिति। दीर्घान्तेऽपि प्रवृत्तेः। अत्राकारविधानेन सिद्धे गुणग्रहणं चिन्त्यप्रयोजनमिति कश्चित्तन्मतं दूषयति-*अरैव सिद्ध इत्यादिना। *निषेधाङ्गीकारादिति। तेन 'तितीर्वान्'इत्यस्य सिद्धिः। ननु यदि गुणोत्तरं वृद्धिस्तदा "जाग्रः" (पा० सू० ७-३-८५) इति सूत्रेण वृद्धिविषये गुणविधानवैयर्थ्यमत आह-*जाग्रो वीतीति। *अत एव=ज्ञापकस्य विशेषापेक्षत्वादेव।

*अयम्=गकारः। ननु स्नुप्रत्ययः किदेवास्त्वित्यत आह-*स्थास्नुसिद्धय इति। किच्वे त्वीत्वापत्तिः। पुरस्तादिति मूले। अत एव "सनीवन्त" (पा० सू० ७-२-४९) इतिसूत्रे स्वृग्रहणश्चरितार्थम्। ननु निषेधो यदि बलवांस्तदाऽस्यापि बाधकः स्यादत आह-क्रादिनियमादिति। एतस्य निषेधबाधकत्वं स्पष्टमेव।

*अन्यथेति। ऋकारस्य प्रश्लेषाभाव इत्यर्थः।

इडत्यर्त्ति (पा० सू० ७-२-६६)। *इड्ग्रहणं स्पष्टार्थम् । अर्ती- त्यु*भयोर्ग्रहणं*व्याख्यानात् । गृघृ । घृणातोर्घृतघर्मघृणाभ्योऽन्यत्र न प्रयोग इति "तृन्तव" (पा० सू० ७-१-९५)सूत्रे भाष्ये स्पष्टम् ।

श्रुवः शृ च (पा० सू० ३-१-७४)। श्रुवः स्वादिपाठः कुतो न कृत इति *चिन्त्यम् । *यत्तु यङ्लुकि 'शाशृणोति' इति रूपार्थमिति, तन्न । 'शबादेशाः श्वन्नादयः' इति भाष्योक्तपक्षान्तरे श्नोः स्थानिवत्त्वेन श- प्त्वात्तस्य लुकि सन्नियोगशिष्टन्यायेनादेशनिवृत्तावुक्तरूपस्य दुर्लभत्वात् । तस्मात् *पक्षान्तरेऽप्यस्य *साहचर्याद्यङ्लुक्यप्रवृत्तिः, "चर्करीतञ्च" (अ० ग० सू०) इस*दादौ पाठाच्चेत्याहुः ।

हुश्नुवोः (पा० सू० ६-४-८७) । "एरनेकाचः" (पा० सू० ६-४-८२) इत्यतोऽसंयोगपूर्वस्येत्यनुवृत्तम् "ओः सुपि" (पा० सू० ६-४-८३) इत्यस्य विशेषणं न तु प्रत्ययस्य । तेन 'आप्नुवन्ति' इत्यत्र यण्न । "अचि श्नु" (पा० सू० ६-४-७७) इत्यतोऽचीत्यनुवर्त्तते । हु- श्नुवोरिति किम् ?। अपुवन् । न चानेकाच इत्यनुवृत्त्याऽट आभीयासिद्धत्वेन

---

इडत्यर्ति ( पा० सू० ७-२-६६ ) । ननु "गमेरिट् ( पा० सू० ७-२-५८ ) इतिसूत्रादिड्ग्रहणानुवृत्त्यैव सिद्धे प्रकृतसूत्रे इड्ग्रहणवैयर्थ्यमत आह–*इड्ग्रहणं स्पष्टार्थमिति । न च "विभाषा सृजि" ( पा० सू० ७-२-६५ ) इतिसूत्रे विभाषा- पदासम्बन्धायेड्ग्रहणमस्त्विति शङ्क्यम् । अर्तीयत्योर्विषये भारद्वाजनियमेन विकल्पस्य सिद्धौ पुनरत्रैतयोरुपादानसामर्थ्याद्विकल्पस्य निवृत्तेः । न च "न वृद्भ्यः" ( पा० सू० ७-२-५९ ) इत्यतो नग्रहणाननुवृत्त्यर्थमस्तु । ऋग्रहणसामर्थ्या- त्तन्निवृत्तेरिति भावः । *उभयोः=भ्वादिजुहोत्यादिपाठितऋधात्वोः । *व्याख्या- नादिति । अभौवादिकार्त्तिसाहचर्यभौवादिकव्ययतिसाहचर्यमूलकव्याख्या- नादित्यर्थः ।

श्रुवः शृ च ( पा० सू० ३-१-७४ ) । *चिन्त्यमिति । तत्र पाठे हि "स्वा- दिभ्यः" ( पा० सू० ३-१-७३ ) इतिसूत्रेणैव श्नुप्रत्यये सिद्धे पुनरनेन वाक्यभेदेन श्नुप्रत्ययविधानन्न कार्यमिति लाघवम् । यदि "स्वादिभ्यः" ( पा० सू० ३-१-७३) इतिसूत्रेण श्नुप्रत्ययस्तदा 'श्तिपा शपानुबन्धेन'इतिनिषेधाद्यङ्लुकि न स्यादि- ति केचित् तन्मतन्दूषयितुमाह—*यत्त्विति । *पक्षान्तरे=आदेशाभावपक्षे । *साहचर्यात्=स्वादिभ्य इतिसूत्रसाहचर्यात् । *अदादौ पाठाच्चेति । तथा च तेन वचनेन निषेधादिति न वाच्यम् । अस्य विशिष्यादादित्वबोधनेन "स्वादिभ्यः" ( पा० सू० ३-१-७३ )"इत्यस्य प्राप्तेरेवाऽभावादिति भावः । केचित्तु गणका- र्यस्यानित्यत्वबोधनायास्य स्वादावपाठ इत्याहुः ।

न दोष इति वाच्यम् । *तत्प्रत्याख्याने दोषवारणाय सत्त्वात् । *स्पष्टा चेयं रीतिः "श्विन्विकृण्व्योर च"(पा० सू० ३-१-८०) इति सूत्रे भाष्ये । तत्र हि वलोपेन सिद्धेऽकारविधानं तल्लोपे स्थानिवद्भावाद् गुणाभावाय । न च वलोपेऽपि "नधातुलोप" (पा० सू० १-१-४) इति निषेधसिद्धिः, "प्रत्याख्यायते स योगः,तस्मिन्प्रत्याख्याते गुणः स्यादेव"इत्युक्तं,'श्नसोरल्' इति तपरत्ववत् *तदनित्यत्वबोधनेन चारितार्थ्याच्च । *भाष्ये यङ्लुको भाषायामपि प्रयोग इत्यर्थज्ञापकत्वोक्तिस्त्वेकदेशिन एव । *अत एव "किमेतस्य ज्ञापने प्रयोजनम् ?, बेभिदीति चेच्छिदीतीत्येतत्सिद्धं भवति भाषायामपि" इत्यग्रे भाष्ये उक्तम् । अन्यथा ज्ञापितेऽप्यस्य सार्थक्याय उवर्णान्तेभ्योऽपि यङ्लुक आवश्यकत्वेनैतदिति भाष्यासङ्गतिः, 'इत्यादि सिद्धं भवति"एवं सिद्धं भवति'इति वक्तव्यं स्यात्,किमेतस्येत्यादिप्रश्नस्याप्यनुपपत्तेश्च । लोके उवर्णान्तप्रकृतिकप्रयोगादर्शनमेवास्य प्रश्नस्य बीजम् । *तत्र तत्प्रयोगाप्रदर्शनेनोत्तरमेकदेश्युक्तिरित्यपि बोध्यम् । "यङोऽचि च" (पा० सू० २-४-७४) इति सूत्रे बहुलग्रहणानुवृत्त्या वाक्यभेदेन च लभ्यस्यानैमित्तिकयङ्लुको बाहुलकेनैव यथाप्रयोगं लोकेऽपि लाभेन ज्ञापकानुपयोगाच्चेति सुधियो विभावयन्तु ।

ङादेशस्यैवेति । *व्याख्यानादिति भावः । स्पष्टश्चेदं "गाङ् लिटि" (पा० सू० २-४-४९) इत्यत्र भाष्ये । फले तु न भेद इति । 'गा अ आते' इत्यत्र वार्णपरिभाषया सवर्णदीर्घं बाधित्वा "आतो ङितः" (पा०सू० ७-२-८१) इतीयादेशः स्यादिति भेदस्तु न* । तस्याः स्थान्ये-

---

*तत्प्रत्याख्याने="असिद्धवदत्राभात्" ( पा० सू० ६-४-२२ ) इत्यस्य प्रत्याख्याने । ननु प्रत्याख्यानस्योत्तरकालिकत्वेन तदभिप्रायेण पूर्वं पाणिनिना ह्रस्वनुग्रहणङ्कृतमिति कथं वक्तुं शक्यमत आह-*स्पष्टा चेयमिति । *तदनित्यत्वेति । आभीयानित्यत्वेत्यर्थः । यत्तु 'योयुवतीत्यत्र यङ्लुकि यणभावार्थं ह्रस्वनुग्रहणं भाष्यसंवादात्'इति मतम्, तद् दूषयति-*भाष्ये यङ्लुक इति । *अत एव=पूर्वभाष्यस्यैकदेश्युक्तित्वादेव । यदि सा सिद्धान्त्युक्तिः स्यात्तदा भाषायामपि यङ्लुग्भवतीत्यस्योवर्णान्तधातोरेव प्रयोग उदाहर्तव्य इत्याशयः । *तत्र=उवर्णान्ते ।

*व्याख्यानादिति । स्थानिनो ङित्कार्यलाभे सिद्धे पुनः "गाङ्"इत्यत्र ङरोच्चारणं गाङ्ग्रहणेऽस्यैव ग्रहणार्थमित्येवङ्कल्पनमूलकव्याख्यानादित्यर्थः । भ्वादौ पाठपक्षेऽतिप्रसङ्गः स्यादित्यभिमानेन शङ्कते-*नेति । स्थान्येकत्वे

कत्वे एव प्रवृत्तेः ।

वृत्तिरिति । *इदमुपलक्षणं भाष्यस्यापि ।

मान्बध (पा० सू० ३-१-६) । *अभ्यासविकारः=आभ्यासः, स चेत्वमेव व्याख्यानात्तदाह —इकारस्येति । *वस्तुतस्तद्धितनिर्देशो ऽनर्थः । अभ्यासविकाराणां समावेशस्यैव वक्तव्यतया इत्वोत्तरं दीर्घस्य सुलभत्वात् । स्पष्टञ्चेदं "गुणो यङ्लुकोः" (पा० सू० ७-४-८२) इत्यत्र भाष्ये । गुपेर्निन्दायामिति । गोपनाद्यर्थकानां निन्दादौ वृत्तिरनेकार्थत्वाद् बोध्या । जिज्ञासायामिति । *तत्प्रयोज्ये विचारे इत्यर्थः । अत एव 'मनोविचारे' इति वृत्तिग्रन्थेन न विरोधः ।

सन्नन्तस्येति । *अत एव 'सन्यङ्‌चङ्क्षु' इति न सूत्रितम् ।

---

आङ्गवार्णकार्ययोर्यत्राङ्गात्मकमेकं कार्यं तत्र तस्याः परिभाषायाः प्रवृत्तेः ।

इष्यत इत्युक्त्वा वृत्तिरितिकथनेन वृत्तिप्रामाण्यादेव बाधकल्पनेति भ्रान्तिः स्यादित्येतस्यानुत्पत्तये आह--*इदमुपलक्षणमिति । अयम्भावः-दयतेर्लिटि परे दिग्यादेशद्वित्वयोः प्राप्तौ 'येननाप्राप्ति'न्यायेन दिग्यादेशो पुनर्वाध्यस्य द्वित्वस्याप्रवृत्तिः यासुड्विषये सीयुट इवेति । न चैवम् "अस्तेर्भूः" (पा० सू० २-४-५२) इत्यनेनापि लिड्विषयकेन द्वित्वबाधः स्यादिति वाच्यम् । तत्रार्द्धधातुक इत्यस्य विषयसप्तमीत्वात् । प्रकृते लिटीति परसप्तम्येव लक्ष्यानुसारादिति ।

स्थाघ्वोरिच्च (पा० सू० १-२-१७) । न च 'अधासीत्' इत्यत्रातिप्रसङ्गः । स्थासाहचर्येण घोः परस्मैपदे परतोऽप्रवृत्तेः । "लिङ्सिचावात्मनेपदेषु" (पा० सू० १-२-११) इतिसूत्रादात्मनेपदेष्वित्यस्यानुवृत्त्या दोषाभावाच्च । तपरत्वमस्य मुखसुखार्थं, न तु सवर्णस्याग्रहणाय । भाव्यमानत्वात् ।

मान्बध (पा० सू० ३-१-६) । आभ्यासस्येतिच्छेदः, तदाह-*अभ्यासविकार इति । आकारप्रश्लेषवादिमतमुपन्यस्य सिद्धान्तमाह-*वस्तुत इति । यद्यपि गुपादयः सामान्यत एव सूत्रे निर्दिष्टास्तथापि सन्नन्तस्य "जुगुप्साविरामप्रमादार्थानाम्" (का० वा०) इत्यत्रार्थविशेषे प्रयोगदर्शनेन "क्षेत्रियच्परक्षेत्रे चिकित्स्यः" (पा० सू० ५-२-९२) इतिसौत्रप्रयोगेण "विचिकित्सा तु संशयः" इति कोशबलेन वृत्त्यादिप्रामाण्येन विशेषार्थकेभ्य एव गुपादिभ्यः स्वार्थे सन् भवतीत्याशयेन मूले गुपेरित्यादिकथनम् । 'मीमांसते' इतिशब्दाज्जिज्ञासा न प्रतीयत इत्याशयेनाह-*तत्प्रयोज्य इति ।

*अत एव="सन्यङोः" (पा० सू० ६-१-९) इत्यस्य षष्ठीत्वादेव ।

*अत एव यङ्लुकि प्रत्ययलक्षणेन यङन्तत्वाद् द्वित्वं सिद्ध्यति, परस्मैपदं तु "न लुमता" (पा० सू० १-१-६३) इति निषेधान्न स्यात्* । गुपिप्रभृतय इति । गुप्तिज्मान्बधा इत्यर्थः । 'कित्'भिन्ना इति । "य एवं विद्वान् चिकित्सति" इत्यादिप्रयोगात्स परस्मैपदीति भावः । यद्यपि भाष्ये "गुप्तिज्कितमाना अनुदात्तेतः" इत्युक्तं तथापि अनुक्रमदर्शनाय कितिः पठितो न स्वयमनुदात्तेदिति कैयटः* । यद्यपि बधिर्नोक्तो दानशानौ च स्वरितेताविति नोक्तं तथापि वृत्त्यनुसारादेवमुक्तम्* । "गुपादिष्वनुबन्धकरणम्" इति भाष्येण ध्वनितोऽप्ययमर्थः । अन्यथा गुपादिष्वनुदात्तेत्त्वमित्येव वदेत् । *परे तु यथाश्रुतभाष्यस्वरसात्कितिरनुदात्तेद्बधिः परस्मैपदी 'विचिकित्सति' इति तु छान्दसमित्याहुः* । अर्थान्तरे त्वननुबन्धका इति । *अत एव "गुपादिष्वनुबन्धकरणसामर्थ्यात्सन्नन्तादात्मनेपदम्" इति भाष्योक्तं सङ्गच्छते । *अन्यथा *सनोऽभिधानस्वभावादर्थविशेष एव साधुत्वेनार्थान्तरे सनभावे आत्मनेपदार्थ*तस्य चारितार्थ्येन सामर्थ्योक्तिरसङ्गता स्यादिति भावः । *चुरादय इति । *एतच्च वृत्त्यनुरोधेन । परे तु "दाधर्ति" (पा० सू० ७-४-६५) इति सूत्रे "तेतिक्ते इति किं निपात्यते?, तिजेर्यङ्लुगन्तादात्मनेपदम्" इति भाष्याद् भ्वादौ शब्विकरणा अप्येते । अन्यथा णिजन्ताद्य*ङ्णिलोपयोरपि निपात्यता स्यात् । एतेन भ्वादौ गोपनाद्यर्थेषु गुपादेरनुदात्तपाठो व्यर्थ इत्यपास्तम्* । *गुपादिष्वनुबन्धकरणसामर्थ्यादिसस्य सन्प्रकृति-

---

*अत एव । उक्त एवार्थः । *न स्यादिति । इदमुपलक्षणम् 'प्रतीषिषति' इत्याद्यपि न स्यादित्यपि बोध्यम् । *कैयट इति । अत एव मूले भ्वादौ परस्मैपदिषु पठितः । *एवमुक्तमिति । "गुपिप्रभृतयः किंद्भिन्नाः" इत्याद्युक्तम् । धातुपाठे तथा पाठः सम्प्रति दृश्यत इत्यपि बोध्यम् । वृत्त्याद्यनुसारिमूलोक्तं व्याख्याय भाष्यानुसारिमतमाह-*परे त्विति । *अत एव=अननुबन्धकत्वादेव । *अन्यथा=अर्थान्तरेऽपि सानुबन्धकत्वे । *सनः=नित्यसनः । *तस्य=अनुबन्धस्य । *चुरादय इतीति । किमत्र प्रमाणमिति चेत् । गुप्तिज्मानां चुरादिषु पाठदर्शनाद् वृत्त्यादिप्रामाण्येन बहुलग्रहणाच्च तथात्वमिति । अत एवाह-*एतच्च वृत्त्याद्यनुरोधेनेति । *यङ्णिलोपयोरिति । णिचि सति धातोरनेकाच्त्वाद्यङोऽप्रासेर्यङो णेः सत्त्वात् णिलोपस्य च निपात्यता स्यादित्यर्थः । *इत्यपास्तमिति । गोपनादिष्वर्थेषु सनोऽभावेऽप्यात्मनेपदं यथा स्यादित्येवमर्थं तथा पाठस्यावश्यकत्वादिति भावः । स्वीयकल्पनायाम्भाष्यग्रन्थाविरोधायाह-

भूतेष्वर्थविशेषविशिष्टेष्वित्यर्थः । भाष्यद्वयप्रामाण्यात्तद्विशिष्टेष्वपि अनुदात्तपाठः पाणिनेरिति ज्ञायते इत्याहुः ।

भाष्योदाहरणादिति । आद्यम् "अत एक" (पा० सू० ६-४-१२०) इति सूत्रे अन्त्यं "सदेः परस्य लिटि"(पा० सू० ८-३-११८) इति सूत्रे, इति बोद्धयम् ।

कृत्येवेदमिति । परे त्व*त्र न भाष्यानुग्रहः । अत एव "अनुविपरिभ्यः" (पा० सू० ८-३-७२) इति सूत्र इवात्र भगवता पर्युदासप्रसज्यप्रतिषेधयोः फलभेदविचारो न कृतः । तस्माद्विपूर्वस्यास्य तिङन्तप्रयोगो वा सषत्वे वा प्रयोग इत्याहुः ।

भाष्यमिति । सम्प्रसारणाच्च" (पा० सू० ६-१-१०८) इत्यादिसूत्रेष्विति शेषः । मतान्तरे त्विति । *इदमेव सारमिति वक्ष्यते । अत्रारुचिबीजन्तु त्रैपादिकेऽन्तरङ्गे परिभाषाया भाष्यनयेऽप्रवृत्तिरिति । तस्मादत्रापि पक्षे णत्वं भवत्येव । अत एव 'अभिषिषेणयिषति' 'अभिषुणु' इति भाष्यप्रयोगाः सङ्गच्छन्ते ।

इषुगमि (पा० सू० ७-३-७७) । अत्र *मण्डूकप्लुत्या*ऽचीति वर्त्तते, तस्य च शितीति विशेषणम् । तेनाज्रूपे शितीसर्थादिष्णातीष्यत्योर्नातिप्रसङ्गः । *एवञ्चात्र सूत्रे तुदादौ चोदित्पाठोऽनार्ष इति बोद्धयम् ।

---

*गुपादिष्विति ।

वेः स्कन्देरनिष्ठायाम् ( पा० सू० ८-३-७८ ) । दन्त्याजन्तसादित्वाभावान्नायं षोपदेश इति षत्वाप्राप्तेरप्राप्तविभाषेयम् । *अत्र=कृत्येवेतिनियमे । कृत्येवेतिभवदुक्तार्थे विपूर्वस्यास्य तिङन्तस्यापि प्रयोगे पर्युदासपक्षे षत्वाभावस्य प्रसज्यप्रतिषेधे षत्वस्य च प्राप्तेः फलभेदस्य सत्त्वादत्रापि तथा विचारस्यावश्यकता स्यादिति भावः ।

मतान्तरे त्विति मूलं तुनाऽरुचिर्बोधिता । तद्वीजन्तु लक्ष्यानुरोधेनान्यतरपक्षानुसरणस्यैवावश्यकतया प्रकृते उभयानुसरणवैयर्थ्यमिति । नन्वनयोर्मतयोः कस्याश्रयणमिहोचितमिति चेत्-'अभिषिषेणयिषति' 'अभिषुणु' इति भाष्यप्रयोगदर्शनेनाद्यपक्ष एवेह ग्रहीतुमुचित इति गृहाण । इदं त्रिपाद्यामबहिरङ्गपरिभाषाप्रवृत्तिमभ्युपेत्य । स्वमतमाह--*इदमेवेति ।

*मण्डूकप्लुत्येति । "शमामष्टानाम्" ( पा० सू० ७-३-७४ ) इत्यत्रासम्बन्धादित्यादिः । *अचीति वर्त्तत इति । "क्सस्याचि" ( पा० सू० ७-३-७२ ) इत्यतोऽनुवर्त्तत इत्यर्थः । *एवञ्च=भाष्यप्रामाण्यादज्ग्रहणसम्बन्धेन

*इका निर्देशेऽपि सौत्रत्वान्नोपधालोपः ।

गमेरिट् (पा० सू० ७-२-५८) । अत्र परस्मैपदमात्मनेपदाभावे लाक्षणिकं "न वृद्भ्यः" (पा० सू० ७-२-५९) इतिवत् । *अत एव तृचि 'सञ्जिगमिषिता' इत्यत्रेट्सिद्धिः ।

अनुदात्तस्य च (पा० सू० ६-१-५९) । "आदेच" (पा० सू० ६-१-४५) इसत उपदेश इति "सृजिदृशोः" (पा० सू० ६-१-५८) इत्यतो झल्यमकितीति च वर्त्तते । "धातोः कार्यमुच्यमानम्" इति परिभाषया सन्निधापितस्य प्रत्ययस्य अकितीत्यस्य वा झलीति विशेषणम् ।

अनुनासिकलोप इति । *स च दंष्ट्राव्यापारार्थके एव "तनुत्रं वर्मदंशनम्" इत्यमरस्वरसात् । आधुनिकत्वादिति । सर्वधातुष्वर्थनिर्देशस्य पाणिनीयत्वाभावादित्यर्थः ।

'यज' देवपूजा । इह देवतोद्देशेन द्रव्यत्यागः=पूजा ।

लिट्यभ्या (पा० सू० ६-१-१७) । "वचिस्वपि" (पा० सू० ६-१-१५) "ग्रहिज्या" (पा० सू० ६-१-१६) इति *सूत्रोपात्तयोरुभयेषाङ्ग्रहणेन ग्रहणमित्याह—वच्यादीनामिति ।

वचिस्वपि (पा० सू० ६-१-१५) । इका निर्देशे सौत्रमसम्प्रसारणम् । *आदिशब्दो वचिस्वपिभ्यां न सम्बध्यते स्वपिग्रहणात्* चुरा-

---

व्याख्यानस्य प्रामाणिकत्वे चेत्यर्थः । उदित्पाठो ह्यत्रेष्यतीष्णात्योर्व्यावृत्त्यर्थो वाच्यस्तयोर्व्यावृत्तिस्त्वेवमेव जातेति तथा पाठो व्यर्थ एवेति भावः । गमीत्यत्रोपधालोपशङ्कायामाह-*इका निर्देशेऽपीति ।

*अत एव=तादृशार्थलाक्षणिकत्वादेव ।

पृषोदरादित्वादनुनासिकलोपकथनमपि न सर्वत्र किन्त्वर्थविशेषविवक्षायामेवेत्याह-*स चेति ।

*सूत्रोपात्तयोरिति । उपस्थितत्वादिति शेषः ।

वचिस्वपियजादीनाम् ( पा० सू० ६-१-१५ ) । वचिरदादिश्चुरादिश्च । वचिस्वपियजेत्येषां त्रयाणाद्वन्द्वोत्तरमादिशब्देन समासे आदिशब्दस्य वचिनाऽपि सम्बन्धः स्यादत आह—*आदिशब्द इति । *स्वपिग्रहणादिति । वचिना सम्बन्धे स्वपेर्वच्यादित्वेनैव ग्रहणे सिद्धे स्वपेः पृथगुपादानं व्यर्थं स्यादिति भावः । न च स्वपिना सम्बन्धोऽस्तु तथा सति श्वसेर्ग्रहणम्भविष्यतीति वाच्यम् । त्रयाणाद्वन्द्वस्यादिशब्देन समासेन "द्वन्द्वान्ते श्रूयमाणम्"

दौ* सम्प्रसारणयोग्यवच्यादेरभावाच* । यजादिः श्वयत्यन्तः । परत्वात्सम्प्रसारणे कृते सकृद्गतिन्यायेन द्वित्वाप्राप्तेराह—पुनरिति । विकिरणमिति क्युप्रत्ययः । *अत एव "वपिः प्रकिरणार्थ" इति "सन्यङोः" (पा० सू० ६-१-९) इत्यत्र भाष्यम् ।

शासिवसि (पा० सू० ८-३-६०) । आदेशप्रत्ययत्वाभावादप्राप्ते विधिरयम् । शासि*द्वयमप्यत्र गृह्यते "आशिषि लिङ्" (पा० सू० ३-३-१७३) इत्यादिनिर्देशात् । अवात्तामिति । सिज्लोपस्यासिद्धत्वात् "सः सि" (पा० सू० ७-४-७९) इति तत्वे सिज्लोपः ।

इकार इति । इत्सञ्ज्ञकत्वे नुम्स्यादित्यभिमानः । *परे तु वयिरित्यादौ स्थानिवद्भावेन भाव्यातिदेशिकधातुत्वं गृहीत्वा धातुनिर्देशे इकः सत्त्वेन न नुमित्याहुः । उवायेति । *"लिटि वयो यः" (पा० सू० ६-१-३८) इति यस्य निषेधाद्वस्य सम्प्रसारणम् ।

अत्र ग्रह्यादिसाहचर्यात् *परस्मैपदिनो वयेर्ग्रहणं न त्वयवयेति दण्डकपठितस्यात्मनेपदिनः ।

---

इतिन्यायेन सहविवक्षामूलकेन सर्वत्रैव सम्बन्ध उचितो न त्वेकत्र तत्परित्यागोऽन्यत्र तत्सम्बन्धः । तथा स्वीकारे द्वन्द्वस्यैवासाधुता स्यात् । ननु चुरादिपठितवच्यादिग्रहणार्थं व्रचिनाऽपि सम्बन्धोऽस्त्वित्यत आह—*चुरादाविति । *अभावाच्चेति । वचधातोराधृषीयत्वात् णिजभावे किति परे सम्प्रसारणयोग्यतासत्त्वेऽपि तदन्येषां यण्घटितानामभावादित्यर्थः । न च वरादयस्तत्र सन्त्येवेति वाच्यम् । तेषामदन्तत्वादाधृषीयत्वाभावाच्च सम्प्रसारणयोग्यत्वाभाव इति भावः । *अत एव=बीजसन्तानपदस्यैतादृशार्थकत्वादेव ।

*द्वयमपीति । 'शासु' अनुशिष्टौ । 'आङः शासु' इच्छायामित्येतद् द्वयमपीत्यर्थः ।

अभिमान इत्येतत्कथनबीजन्दर्शयति—*परे त्विति । ननु सम्प्रसारणयोग्यस्य द्वितयस्य यत्र सत्त्वन्तत्र परस्य यणः पूर्वं सम्प्रसारणेन भाव्यमिति 'उवाय' इत्यनुपपन्नमत आह—*लिटीति ।

ग्रहिज्यावयिव्यधि (पा०सू० ६-१-१६) । *परस्मैपदिन इति । परस्मैपदयोग्यस्य । तेन वयादेशस्य स्थानिवद्भावेन ञित्त्वादात्मनेपदपक्षे 'ऊये' 'ऊवे' इत्यत्र सम्प्रसारणसिद्धिः । अत्रेदमवधेयम्-"ग्रहिज्या" (पा० सू० ६-१-१६) इतिसूत्रे वयिग्रहणन्न कार्यम् । स्थानिवद्भावेनास्य वेञ्त्वाद् "वचिस्वपि" (पा० सू० ६-१-१५) इत्येव सिद्धेः । न च "वेञः" ( पा० सू० ६-१-४० ) इतिनिषेधे प्राप्ते प्रतिप्रसवविधिरयमस्त्विति वाच्यम् । "लिटि वयो यः" ( पा० सू०

ऊवतुरिति। *वकारे कृते तस्य सम्प्रसारणन्तु न उश्चास्येत्येव सिद्धे वादेशविधानसामर्थ्यात् । *उपदेशेऽजन्तत्वाद*त्वत्त्वाच्च थलि निषेधमाशङ्क्याह—वयस्तासाविति । "यस्तासावस्ति नित्यानिट् च" इति भाष्योक्तः । न हि तासौ सत्ता स्थानिवद्भावसहस्रेणापि अतिदेष्टुं*शक्येति भावः ।

---

६-१-३८ ) इतिनिषेधारम्भसामर्थ्येन "वेञः" ( पा० सू० ६-१-४० ) इतिनिषेधस्यात्राप्रवृत्तेः । न च "लिटि वय" इति सूत्रं वयेर्यस्यैव सम्प्रसारणञ्चेतिनियमार्थमस्त्विति वाच्यम् । एवमपि वयादेशस्य यो यकारस्तस्य नियमेन सम्प्रसारणाभावे वकारस्य परिशेषाद् "वचिस्वपि" ( पा० सू० ६-१-१५ ) इत्यनेन सिद्धे "ग्रहिज्या" ( पा० सू० ६-१-१६ ) इतिसूत्रे वयिग्रहणवैयर्थ्यस्य तदवस्थत्वात् । "वेञः" (पा० सू० ६-१-४०,) इत्यत्र कितीत्यनुवृत्त्या कित्येव निषेध इति तु न वाच्यम् । अविशेषेण लिटि प्रतिषेधस्येष्टत्वात् । अत एव 'ववौ' 'ववाथ' इत्यस्य सिद्धिः । तदुक्तम्भाष्ये–"अविशेषेण प्रतिषेधः । निवृत्तन्तत्र कितीति । आतश्चाविशेषेण । वेञोऽपि हि पित्सु वचनेष्वभ्यासस्य सम्प्रसारणमिष्यते"इति ।

वश्चास्यान्यतरस्याङ्किति ( पा० सू० ६-१-३९ ) । अत्रास्येत्यनेन वयिः परामृश्यते । य इति चानुवर्त्तते । नन्वनेन वकारे कृते सम्प्रसारणापत्तिः । "वेञः" ( पा० सू० ६-१-४० ) इति निषेधस्तु न भविष्यति । "लिटि वयो यः" ( पा० सू० ६-१-३८ ) इतिसूत्रारम्भसामर्थ्यादत आह—*वकारे कृत इति । अत्र चकारेण सम्प्रसारणनिषेधस्यापि विधानमित्यपि बोध्यम् । अत्रेदमवधेयम् । भाष्यकृता प्रकृतसूत्रस्थं 'वश्चास्य' इति प्रत्याख्यातम्—"वश्चास्यग्रहणं शक्यमकर्त्तुम्"इति । अन्यतरस्याङ्किति वेञ इत्येकमेवास्तु नतिसम्प्रसारणमिति चानुवर्त्तनीयम् । वेञः सम्प्रसारणाङ्किति वा न स्यात् । निषेधविकल्पे विधिविकल्पपर्यवसानमिति वेञः सम्प्रसारणस्य "वचिस्वपि" ( पा० सू० ६-१-१५) इतिप्राप्तस्य पक्षेऽभावार्थमेतत्सूत्रमिति फलितम् । 'ऊवतुः' 'ऊवुः' इत्यस्य सिद्धिस्तु द्वित्वापेक्षया परत्वात्सम्प्रसारणे पूर्वरूपे च कृते ततो द्वित्वे 'वार्णादाङ्गम्' इतिन्यायेन सवर्णदीर्घम्बाधित्वोवङि ततः सवर्णदीर्घे भविष्यति । सम्प्रसारणाभावे तु 'ववतुः' इति भविष्यति । न च "वेञः"( पा० सू० ६-१-४० ) इत्यस्य निषेधसूत्रस्याभावे 'ववौ' 'ववाथ'इत्यत्र "लिट्यभ्यासस्य" ( पा० सू० ६-१-१७ ) इतिसम्प्रसारणापत्तिरिति वाच्यम् । "ल्यपि च"(पा० सू० ६-१-४१) इतिचकारेण लिटीत्यस्यानुकर्षणात्सर्वेष्टसिद्धिर्भविष्यतीति ।

*उपदेश इति । स्थान्युपदेश इत्यर्थः । *अत्वत्त्वादिति । अस्य 'आदेशस्य' इत्यादिः । *शक्येति । अशास्त्रीयत्वादिति शेषः । उभयेषाङ्ग्रहणेना-

वेञः (पा० सू० ६-२-४०)। अत्र कितीति नानुवर्तते, तदाह — ववाविति ।

सामर्थ्यादिति । *तत्सामर्थ्यात्पुनर्विधानम् । तेन विध्यन्तराणां बाध इति भावः । इदमेव च सामान्यतो ज्ञापयति 'अभ्यासलोपाभ्याससम्प्रसारणविषये ऽभ्यासविकारे बाध्यबाधकभावो नेति न प्रवर्त्तते' इति, इति बोद्धयम्। तेन "व्यथो लिटि" (पा० सू० ७-४-६८) इत्यस्यापि यलोपं बाधित्वा प्रवृत्तिः । "सम्प्रसारणं तदाश्रयञ्च कार्यं बलवत्" इति तु उभयेषाङ्ग्रहणवैयर्थ्यापत्त्या भाष्ये प्रत्याख्यातमिति दिक् । इडत्यर्तीति । *अन्यथा "ऋतो भारद्वाजस्य" (पा० सू० ७-२-६३) इति विकल्पः स्यादिति भावः । वीयादिति । सम्प्रसारणे "अकृत्सार्व" (पा० सू० ७-२-२५) इति दीर्घः ।

अभ्यस्तस्य च (पा०सू० ६-१-३३)। *ननु द्वित्वे ऽभ्यस्तसञ्ज्ञायामुत्तरखण्डस्य सम्प्रसारणे अभ्यासस्य "न सम्प्रसारणे" (पा० सू०

---

भ्यासावयवस्य "हलादिः शेषः" ( पा० सू० ७-४-६० ) इत्यनेन प्राप्ता या निवृत्तिस्तस्या बाध इति इत्युक्तन्तल्लाभोऽक्षरमर्यादया न लभ्यत इत्यत आह— *तत्सामर्थ्यादिति । *अन्यथा=इडत्यर्त्तीतिसूत्रापरामर्शे ।

अभ्यस्तस्य च ( पा० सू० ६-१-३३ )। अभ्यस्तस्य ह्वेञः सम्प्रसारणमित्यर्थे 'जुहूषति' 'जोहूयते' इति न सिध्यति । 'जिह्वाययिषति' इत्यत्र सम्प्रसारणाभावाच्चाभ्यस्तनिमित्ते परे सम्प्रसारणमित्यर्थो वक्तव्यः । एवञ्च "न सम्प्रसारणे" ( पा० सू० ६-१-३७ ) इतिनिषेधादभ्यासस्य न स्यादित्याशयेन शङ्कते—*नन्विति । अभ्यस्तीभविष्यत इत्यत्र च्विप्रत्ययोपादानेन प्रकृतौ यस्य समुदायस्याभ्यस्तसंज्ञा भवति तद्रूपत्वारोपेणात्राभ्यस्तशब्दो निर्दिष्ट इति सूचितम्। एवञ्च यस्याभ्यस्तनिमित्तप्रत्यये कृते द्विर्वचनं सम्भाव्यते तस्याभ्यस्तनिमित्तप्रत्ययानुत्पत्तावेव सम्प्रसारणमिति णिजन्तात्सनि कृते ह्वाययतेरभ्यस्तनिमित्तप्रत्ययपरत्वं यत्र तत्र न भविष्यतीति भावः। न च प्रकृतसूत्रे निमित्तशब्दानुपादानादेतावतोऽर्थस्य कथं लाभ इति वाच्यम् । "दधित्रपुसं प्रत्यक्षो ज्वरः" "आयुर्वै घृतम्"इत्यत्रेव कार्यस्य निमित्ते कारणतादात्म्यारोपेण व्यवहारात् । न च षाष्ठद्विर्वचनस्यादेशरूपत्वेऽभ्यस्तप्रकृतित्वं ह्वः सम्भवति द्विःप्रयोगपक्षे तु कथमयं व्यवहार इति वाच्यम् । आरोपितप्रकृतिविकृतिभावस्य सुलभत्वात् । उक्ताशयानभिज्ञः शङ्कते—*न चेति ।

६-१-३७) इति निषेधः स्यादत आह-अभ्यस्तीभविष्यत इति। *न च*'जिह्वायकीयिषति' इत्यादावपि सम्प्रसारणापत्तिः। *'अभ्यस्तीभविष्यतो ह्वेञः' इत्यस्याऽभ्यस्तप्रकृतिभूतस्य ह्वेञ इत्यर्थेनादोषात्। अत्र हि क्यजन्तः सन्नन्तो वा *तत्प्रकृतिः, यद्गतधातुत्वं निमित्तीकृत्यात्रयवस्यैकाचो द्वित्वं स हि तत्प्रकृतिरित्युच्यते। *अत एव "ह्वः सम्प्रसारणम्" (पा० सू० ६-१-३२) इति सन्चङ्परे णौ सम्प्रसारणविधायकं चरितार्थम्। तत्र ह्वाययतेरभ्यस्तप्रकृतित्वात् स्पष्टं चेदं भाष्ये*। यत्तु कैयटेनाभ्यस्ताक्षिप्तप्रत्ययेऽनन्तरस्य ह्वयतेर्ग्रहणेन नात्र दोष इत्युक्तं तत्तु "द्युतिस्वाप्योः" (पा० सू० ७-४-६७) इति सूत्रोक्तरीत्या*ऽसङ्गतमिति स्पष्टमेव। जुहुवतुरिति। ह्वा अतुस् इत्यत्रालोपापेक्षयाऽ*नैमित्तिकत्वेनान्तरङ्गत्वात्सम्प्रसारणे वार्णपरिभाषाया *अनित्यत्वाश्रयणेनान्तरङ्गत्वात्पूर्वरूपे ततो द्वित्वे उवङ्, *उवाङि पूर्वरूपस्य न स्थानिवत्त्वम्। उवर्णान्तधातोरुवङ्विधानेनाकारात्पूर्ववृत्तिधर्मावच्छिन्नोद्देश्यकत्वाभावात् *आकारैकादेशस्याकारात्परीभूतनिमित्तकत्वाभावाच्च। प्रत्यासत्त्या "अचः परस्मिन्" (पा० सू० १-१-५७) इत्यत्रादेशस्थान्यपेक्षपरत्ववन्निमित्तकस्यैव

*जिह्वायकीयिषतीति। ह्वेञो ण्वुल्, क्यच्, सन्। अत्र सन्नन्तस्य यः प्रथमैकाच् तस्य द्विर्वचनप्रवृत्त्या ह्वोऽभ्यस्तनिमित्तत्वमस्त्येवेति भावः। उक्ताशयम्प्रकटयति—*अभ्यस्तीभविष्यत इत्यादिना। *तत्प्रकृतिः=अभ्यस्तप्रकृतिः। *अत एव="अभ्यस्तस्य च" (पा० सू० ६-१-३३) इति सूत्रस्यैतादृशार्थकत्वादेव। *स्पष्टश्चेदम्भाष्य इति। प्रकृतसूत्रे भाष्ये "ह्वः सम्प्रसारणमभ्यस्तस्य" इतिसूत्रे 'जुहावयिषति' 'अजूहवत्' इत्यस्य सन्चङ्परणिजन्तस्य रूपसिद्ध्यर्थं योगविभागम्प्रदर्श्य 'जिह्वायकीयिषति' इत्यत्र सम्प्रसारणमाशङ्क्य "अभ्यस्तस्येति न ह्वयतिसमानाधिकरणा षष्ठी का तर्हि सम्बन्धषष्ठी अभ्यस्तस्य यो ह्वयतिः, किञ्चाभ्यस्तस्य ह्वयतिः ? । प्रकृतिः । ह्वोऽभ्यस्तप्रकृतेः" इत्युक्तम्। *असङ्गतमिति। 'जिह्वायकीयिषति' इत्यत्र दोषवारणायैषा कल्पना तेन कृता। तस्य च दोषस्याभ्यस्तस्य प्रकृतेर्ह्वयतेरितिव्याख्यानेन भाष्यकृता निरासस्य सूचनादिति भावः। *अनैमित्तिकत्वेनेति। अभ्यस्तीभविष्यत इति व्याख्यानेनानुत्पन्न एवाभ्यस्तनिमित्तप्रत्यये सम्प्रसारणविधानात्। *अनित्यत्वाश्रयणेनेति। तस्याः परिभाषायाः प्रवृत्तौ त्वाकारलोपः स्यात्। उवङादेशे "अचः परस्मिन्" (पा० सू० १-१-५७) इति स्थानिवद्भावमाशङ्क्याह-*उवङीति। वस्तुतः प्रकृते स्थानिवद्भावशङ्कैवासङ्गतेत्याह-*आकारैकादेशस्येति। अजादेशाधिकरणत्वपर्याप्त्याधिकरणस्य यत्र परस्मिन्नितिशब्दबोध्यपरत्वेन ग्रहणं तत्र स्थानिवद्भा-

ग्रहणात् । अच्छ वदतीति । "अच्छगत्यर्थवदेषु"(पा० सू० १-४-६९)इति *गतित्वम् ।

विभाषा श्वेः (पा० सू० ६-१-३०)। उभयत्र विभाषेयम् । शुशावेति । *अत्र *नित्यत्वात्संप्रसारणेऽन्तरङ्गत्वात्पूर्वरूपे द्वित्वे वृद्ध्यावाविति भावः । नन्वे*तदभावे "लिट्यभ्यासस्य"(पा० सू० ६-१-१७)इति दुर्वारम् । तथा च 'शिश्वाय'इत्यसिद्धिरत आह–श्वयतेर्लिटीति । वाचनिकमेवेदम् । *एतत्सामर्थ्याच्छ्वयत्यभ्यासविषयलक्षणानुपप्लव एवेति भावः । यत्त्व*नेन परत्वात् *तस्य बाध इति, तन्न । अस्य परत्वेन द्विर्वचनात्पूर्वं प्राप्त्या "लिट्यभ्यासस्य"(पा० सू० ६-१-१७)इत्यस्य च द्वित्वोत्तरं प्राप्त्या युगपत्प्राप्त्यभावेन विप्रतिषेधशास्त्राप्रवृत्तेः । तदभावपक्षे तेन बाधस्य *वक्तुमशक्यत्वाच्च ।

पररूपमिति । आर्द्धधातुकोपदेशेऽदन्तत्वाभावान्नातो लोपः । अश्वयीदिति । नन्व*न्तरङ्गत्वाद् गुणे इगन्तत्वाभावाद् वृद्ध्यप्राप्त्या*ऽयादेशे यान्तत्वादेव हलन्तलक्षणाया निषेधे सिद्धे किं "ह्म्यन्त"(पा० सू० ७-२-५) इत्यत्र णिश्विग्रहणेनेति चेन्न । सिचिवृद्धेर्येननाप्राप्ति-

---

वस्य प्रवृत्तेरिति भावः । *गतित्वमिति । एतेनास्मिन्वदधातावस्य गतिसंज्ञा भवतीति स्वरूपकथनं कृतम् । गतिसंज्ञाफलन्तु 'अच्छोद्य' इत्यत्र द्रष्टव्यम् ।

शुशावेत्यत्र द्वित्वात् परत्वाद् वृद्धावायादेशे च रूपासिद्धिरतआह–*अत्रेति । *नित्यत्वादिति । कृताकृतप्रसङ्गित्वमात्रेण नित्यत्वादित्यर्थः । *एतदभावे=अस्य वैकल्पिकत्वेनैतदभावे । *एतत्सामर्थ्यात्="श्वयतेर्लिटि"-(का० वा०) इतिवचनसामर्थ्यात् । *अनेन="विभाषा श्वेः" (पा० सू० ६-१-३०) इत्यनेन । *तस्य="लिट्यभ्यासस्य" (पा० सू० ६-१-१७) इत्यस्य । एवञ्चैतद्बोधिताभावांशेन बाधनात् "लिट्यभ्यासस्य" (पा० सू० ६-१-१७) इति न भविष्यतीति भावः । *वक्तुमशक्यत्वाच्चेति । वैकल्पिकशास्त्रेण स्वबोधितभावांशस्य प्रवृत्तिः पक्षे प्रतिबध्यते न तु शास्त्रान्तरप्रापितस्य बाध्यार्थस्य । यत्र तु स्वबोधितस्याभावांशस्य भावांशप्रापकशास्त्रान्तरप्रवृत्तौ वैयर्थ्यप्रसक्तिस्तत्र शास्त्रान्तरबोधितस्यापि तस्य बाधः । "स्वरतिसूति" (पा० सू० ७-२-४४) इत्यत्र यथा । न चैवम्प्रकृत इति भावः ।

*अन्तरङ्गत्वादिति । परस्मैपदपरसिज्निमित्तकत्वेन वृद्धेर्बहिरङ्गत्वङ्गुणस्य तु सिज्मात्रापेक्षत्वेनान्तरङ्गत्वमिति भावः । *अयादेश इति । गुणे

न्यायेनान्तरङ्गापवादत्वादिति *दिक् ।

इति भ्वादयः ॥

सौत्र इति । *"कर्मेणिङ्" (पा० सू० ३-१-३०)इति साहचर्यात्तान्त इका निर्दिष्टो न त्विकारान्तः । ङ्यप्रत्यये "अकृत्सार्व"(पा० सू० ७-४-२५) इति दीर्घेण सिद्धे ईयङ्करणात् । इत्येके इति । "ऋतीयतेः स्याद् घृणयोः"इति कोशादर्थद्वयमपि तत्र । घृणयोरित्यस्य जुगुप्साकरुणयोरित्यर्थः ।

नित्यमिडिति । अन्यथा भारद्वाजनियमाद्विकल्पः स्यादिति भावः ।

हुझल्भ्यो(पा० सू० ६-४-१०१) । 'रुदिहि' इत्यादौ तु न । *निर्दिश्यमानस्य व्यवहितत्वादिट्सहितस्य चानिर्दिश्यमानत्वात् । 'अत्तात्' इत्यत्र धित्वात्परत्वात्तातङि स्थानिवत्त्वेन पुनर्धित्वन्तु न । 'सकृद्गतौ'इति न्यायात् । युगपत्प्रवृत्तौ *स्वस्वनिमित्तानन्तर्याभावरूपासम्भवस्य सत्त्वेन परत्वप्रवृत्तेः । तादृशासम्भव एव च विप्रतिषेधशास्त्रप्रवृत्त्युपयोगी । स्थानिवद्भावस्तु कार्यप्रवृत्त्युत्तरं न प्रवृत्तिकाले इति युगपदसम्भवः स्पष्ट एवेति दिक् ।

---

कृत इत्यादिः । *दिगिति । दिगर्थस्तु न "न सिच्यन्तरङ्गमस्ति" इति परिभाषान्तरेणायमर्थो बोध्यते किन्तर्हि 'येननाप्राप्ति'न्यायेन वृद्धेरन्तरङ्गबाधकत्वमूलकमेव तद्वचनमिति । अधिकमन्यत्र स्पष्टम् । इति भ्वादिविवरणम् ।

## ॥ अथ अदादिविवरणम् ॥

'ऋत'धातोः सौत्रत्वे "ऋतेरीयङ्" ( पा० सू० ३-१-२९ ) इतिनिर्देशेन जातस्येकारान्तत्वभ्रमस्य वारणायाह-*कर्मेणिङितीति । एवञ्चेका निर्देशोऽयम् । अत एव "वञ्चिलुञ्च्यृतश्च ( पा० सू० १-२-२४ ) इति सङ्गच्छते । यङा सिद्धे ईकारोच्चारणसामर्थ्यान्नायमिकारान्तः । अन्यथा "अकृत्सार्व" ( पा० सू० ७-४-२५) इति दीर्घेण सिद्धे ईकारोच्चारणं व्यर्थं स्यात् । न च यङि सति "सन्यङोः ( पा० सू० ६-१-९ ) इत्यस्य प्रवृत्त्यापत्तिरिति वाच्यम् । ङ्यप्रत्ययेनेष्टसिद्धेः ।

हुझल्भ्यो ( पा० सू० ६-४-१०१ ) । हुझल्भ्यः परस्य निर्दिश्यमानस्य हेरित्यर्थाभिप्रायेण समाधत्ते-*निर्दिश्यमानस्येति । के चित्तु "घसिभसोः" ( पा० सू० ६-४-१०० ) इत्यतो हलीत्यस्यानुवृत्तिङ्कृत्वा हलादेर्हेरितिव्याख्यानेन 'रुदिहि' इत्यादौ न दोष इत्याहुः । तन्न । निर्दिश्यमानपरिभाषयैव दोषाभावे सिद्धे हलीत्यनुवृत्तेर्गौरवप्रस्तत्वात् । *स्वस्वनिमित्तेति । न च "हुझल्भ्यः"

अदः सर्वेषाम् ( पा० सू० ७-३-१०० ) । "अड्गार्ग्य"(पा० सू० ७-३-९९) इत्यतोऽडिति वर्तते ।

प्रणिहन्तीति । "नेर्गद"(पा० सू० ८-४-१७) इति णत्वम् । लुप्तषष्ठीकमिति । असमस्तम्, सौत्रत्वाल्लुप्तविभक्तिकमित्यर्थः । *तेन *मुचादौ न दोषः । अनुदात्तोपदेशा इति । *अनुनासिकान्ता इति शेषः । उपदेशेति किम् ?, यतिः । क्तिनि नित्त्वेनाद्युदात्तत्वेऽपि *न दोषः ।

'जघनिथ'इत्यादौ ञ्णिन्नपरत्वाभावादाह—अभ्यासाच्चेति । इदञ्चा*भ्यासाङ्गनिमित्तप्रत्ययैक्य एव । तेन 'जिहनीयिषति'इत्यादौ न ।

अदन्त इति । तेन 'अवधीत्'इत्यादौ *न वृद्धिः ।

अलिक्षतेति । "शलः"(पा० सू० ३-१-४५) इति क्सः । "लुग्वा"( पा० सू० ७-३-७३ ) इति वा लुक् । अलिक्षातामिति "क्सस्याचि"( पा० सू० ७-३-७२ ) इत्यन्तलोपः । युजर्थ इति । "अनुदात्तेतश्च हलादेः"( पा० सू० ३-२-१४९ ) इति युच् । विचक्षणोऽन्तोदात्तः* । ज्ञापनार्थ इति । *अन्तेदित्त्वव्याघातकत्वेन चारितार्थ्यात्कथञ्ज्ञापकत्वं भाष्यानुक्तं च ज्ञापकत्वम् । अत *इदं *माधवानुरोधेन, 'स्फायन्' इत्याद्यसाध्वेवेति बोद्ध्यम् ।

---

( पा० सू० ६-४-१०१ ) इतिसूत्रस्य प्रवृत्तौ झलन्तानन्तर्यं यद्यपि प्रयोजकं, तथापि तातङः प्रवृत्तौ न कस्याप्यानन्तर्यमाश्रीयत इति कथमेतदिति वाच्यम् । निमित्तपदस्य स्थानितावच्छेदकधर्मप्रकारकबुद्धिपरत्वात् । तदानन्तर्यस्योभयशास्त्रप्रवृत्तिहेतुत्वं स्पष्टमेव । अस्याङ्गाधिकारीयत्वेन हेर्यस्माद्विधानं तदादेरित्यस्य स्वीकृतपञ्चम्यन्तस्योपस्थित्या तदपेक्षत्वाच्च ।

*तेन=लुप्तविभक्तिकस्यानुनासिकेतिपदस्य वनतीतरविशेषणत्वेन । *मुचादाविति । आदिना 'नह'धातुपरिग्रहः । एतद्विशेषणाभावेऽनुदात्तयोरेतयोः क्तप्रत्यये 'मुक्तः' 'नद्धः' इत्यत्राद्यानुनासिकलोपापत्तिः । 'मृशनुदादीनामप्यनुदात्तोपदेशत्वादेतेऽनुदात्तोपदेशा इति न्यूनमत आह-*अनुनासिकान्ता इतीति । *न दोषः=नाव्याप्तिः ।

*अभ्यासाङ्गनिमित्तेति । अभ्याससंज्ञानिमित्तद्विर्वचननिमित्तस्य हन्तिनिष्ठाङ्गसंज्ञानिमित्तस्य प्रत्ययस्यैक्य इत्यर्थः ।

*न वृद्धिरिति । अल्लोपस्य स्थानिवत्त्वात् ।

*अन्तोदात्त इति । चित्त्वादन्तोदात्त इत्यर्थः । *अन्तेदित इति । नुम्विधौ "गोः पादान्ते" ( पा० सू० ७-१-५७ ) इतिसूत्रादन्तग्रहणमनुवर्तत इति भावः । *इदम्=ज्ञापकत्वकथनम् । *माधवानुरोधेनेति । अक्षरसमाम्ना-

असिद्धकाण्डे इति । *तेन सुप्रख्येन निर्वृत्तं=सौप्रख्यं, तत्र भवः-'सौप्रख्यीयः'इत्यत्र "धन्वयोपधात्"(पा० सू० ४-२-१२१) इति वुञ् न, किं तु छ एव* । तच्च वचनं णत्वप्रकरणानन्तरं बोध्यम् । तेन 'पर्याख्यानम्'इत्यत्र "कृत्यचः"(पा० सू० ८-४-२९)इति णत्वं न* ।

अस्यतिवक्ति(पा० सू० ३-१-५२) । अस्यतेः पुषादित्वात्सिद्धे *तङर्थं ग्रहणम् । वक्तीति वच्यादेशस्वतन्त्रयोरुभयोरपि ग्रहणम् । ख्यातीति प्रयोगस्थ*ख्याधातूनामनुकरणं दाधेतिवत् ।

वैचित्र्यार्थ इति । *'ध्वे' इत्यस्य पूर्वत्रापकर्षः, से इत्यस्योत्तर-

---

येऽकारस्य प्रथमत उपदेशात् 'चक्ष' इति पठितव्यो युजर्थस्तेनैवात्मनेपदे सिद्धे ङकारो ज्ञापनार्थ इति तेषामभावः । अत्र यदीकारस्य स्थानेऽकारः पठितः स्यात्तदा भवदुक्तं सङ्गच्छेत स तु न पठितः । अपि चाकारेकारयोः पाठे न मात्रालाघवगौरवचर्चा । प्रथमोपस्थितत्वन्तु न नियामकम् । "णिजां त्रयाणाम्" ( पा० सू० ७-४-७५ ) इति सूत्रे त्रयाणाङ्ग्रहणादिति सिद्धान्तिनः । वस्तुतस्तु 'विचक्षणः' इतिवैदिकप्रयोगेऽन्तोदात्तत्वं "व्यत्ययो बहुलम्" ( पा० सू० ३-१-८५ ) इत्यनेनापि सिद्धम् । इकारस्तूदात्त एवेति ङकारोपादानमात्मनेपदार्थमन्तेदित्त्वाभावश्च तेन सिध्यति । एवञ्च ज्ञापनार्थ इत्यसङ्गतमेवेतिभाष्यानुक्तज्ञापकेन लक्ष्यसिद्धिर्नेत्येव युक्तम् । "तास्यनुदात्तेत्" ( पा० सू० ६-१-१८६ ) इतिस्वरस्तु ङिदुपदेशात्परत्वात्सिद्धः । इकार उच्चारणार्थ इति तत्त्वम् ।

*तेन=असिद्धकाण्डे पाठेन । *छ एवेति । "वृद्धाच्छः" ( पा०सू० ४-२-११४ ) इति च्छ एवेत्यर्थः । *णत्वन्नेति । "कृत्यचः" ( पा० सू० ८-४-२९ ) इतिसूत्रदृष्ट्या "ख्शाञः शस्य यो वा" ( भा० इ० ) इत्यस्यासिद्धतयाऽडादिभिन्नेन शकारेण व्यवधानात् णत्वन्नेत्यर्थः ।

*तङर्थङ्ग्रहणमिति । यदा कर्मव्यतिहारे तङ् तदा 'व्यत्यसत' इत्यादौ परस्मैपदपरत्वाभावादङादेशार्थं ग्रहणम् । *ख्याधातूनामिति । बहुवचनम्प्रयोगबाहुल्येन । अत्र प्रयोगस्थख्याधातूनामिति कथनाद्यदा लौकिके प्रयोगे "ख्शाञः शस्य यो वा" ( भा० इ० ) इति यत्वं तदाऽङादेश इति बोधितम् । यत्तु वक्तीति कृतकुत्वसाहचर्याद्यदा यकारादेशस्तदा भविष्यति सूत्रे तु ख्शाञोऽनुकरणमिति, 'अक्शासीत्' इत्यपि सङ्गतमिति, तन्न । ख्शाञः क्वापि लौकिके शब्देऽदर्शनेन तदनुकरणमित्यस्य वक्तुमशक्यत्वात् । किन्तु ख्यातीतिनिर्देशाद्यदा यकारस्तदैवाङ् । न चैतद्दृष्ट्या यत्वस्यासिद्धतया कथंख्यातीत्यनेनास्य ग्रहणमिति वाच्यम् । 'ख्या प्रकथने' इत्यस्य सार्वधातुकमात्रविषयतया विधिसामर्थ्येनासिद्धत्वस्याभावात् ।

ईशः से ( पा० सू०७-२-७७ ) ईडजनोर्ध्वे च (पा० सू० ७-२-७८) ।

त्रानुवृत्तिरिति वैचित्र्यम् । ईशेर्ध्वे इडभावार्थं योगविभाग इति न युक्तम् । *भाष्यविरोधात् । "ईडजनोर्ध्वे च" इति *भाष्यसम्मतः पाठः ।

आङः शासु । अयं धातुर्वेवीङनन्तरमिति "जक्षित्यादि"(पा० सू० ६-१-६) सूत्रस्थ*भाष्यस्वरसः । नमोवाकमिति । वचेर्घञि वाकः 'नमः' इति वचनमित्यर्थः । नमस्कारमिति यावत् । प्रशास्महे=कुर्महे इत्यर्थः । *धातूनामनेकार्थत्वात् । शिजि । अयं दन्त्यादिरपि ।

शीङो रुट्(पा० सू० ७-१-६) । "झोऽन्तः"(पा० सू० ७-१-३) इत्यतो झ इति "अदभ्यस्तात्"(पा० सू० ७-१-४) इत्यतोऽदिति च वर्त्तते । तच्च षष्ठ्या विपरिणम्यते तदाह-अत इति । *झस्यैव रुटित्वदादेशो *दुर्लभः ।

उतो वृ (पा० सू० ७-३-८९) । अचीत्येतद्रहितं "नाभ्यस्तस्य" (पा० सू० ७-३-८७) इति सूत्रमनुवर्तते, तदाह—पितीति । भाष्ये पिच्चेति । इदञ्च "हलः श्नः" (पा० सू० ३-१-८३) इति सूत्रे भाष्ये स्पष्टम् । "सार्वधातुकमपित्" (पा० सू० १-२-४) इत्यस्यावृत्त्येदं लभ्यते । ननु पूर्ववाक्येन ङित्त्वमपि दुर्लभमत आह—विशेषेति । यूयादिति । आर्द्धधातुकत्वान्न वृद्धिः ।

स्मरन्तीति । *अव्यवहिततिङ ईड्विधानमत्र बीजम् ।

---

अत्र यन्मूले वैचित्र्यार्थ इत्युक्तं तत्र वैचित्र्यमाह—*ध्वे इत्यस्येति । *भाष्यविरोधादिति । एवं हि भाष्ये उक्तम्—"किमर्थो योगविभागः । न ईशीडजनां स्ध्वे इत्येवोच्येत । ईशो ध्वे मा भूत् । इष्यते ईशिध्वे" इत्यादिना त्रिष्वपि धातुषु यत्र यत्रातिप्रसङ्गस्तत्रेष्टापत्त्या तम्परिहृत्य "योगविभागे फलाभावः" इति । *भाष्यसम्मत इति । स्ध्वे इतिनिर्देशादेवं कल्प्यत इति भावः । उभयत्रैदन्तानुकरणफलन्तु मूल एवोक्तम् ।

*भाष्यस्वरस इति । तत्र हि "जक्षित्यादिषु सप्तग्रहणं वेवीत्यर्थम्" इत्युक्त्वा "न वाऽर्थः परिगणनेन । अस्त्वागणान्तमभ्यस्तसंज्ञा । इहापि तर्हि प्राप्नोति आङः शासु । अस्तु । अभ्यस्तकार्याणाम्परस्मैपदेषु विधानम् । आत्मनेपदी चायम् । स्वरस्त्वभ्यस्तनिमित्तकोऽनुदात्तेतः परत्वात्सिद्ध्यति" इति । ननु 'प्रशास्महे' इत्यत्रेच्छारूपार्थप्रतीत्यभावान्नायन्धातुरत आह-*धातूनामिति । 'नमो वाकम्' इत्यस्य 'नमस्ते रुद्रमन्यवः' इत्यादिवचनमर्थः ।

*झस्यैवेति । अद्ग्रहणाननुवृत्तावित्यादिः । *दुर्लभ इति । निर्दिश्यमानस्य व्यवधानात् ।

*अव्यवहितेत्यादि । रुसाहचर्यमपि बोध्यम् ।

शम्यमोः "बहुलं छन्दसि"(पा० सू० २-४-७३) इति विकरणलुकि वेदे उदाहरणम् ।

ऊर्णोतेः (पा० सू० ७-३-९०)। "उतो वृद्धिः" (पा० सू० ७-३-८९) इत्यतो वृद्धिरित्यनुवर्त्तते । आम्नेतीति । *ऊर्णोतेर्नुवद्भावेनेजादेरित्यनेकाच इति वाऽऽमोऽभावस्यातिदेशादिति भावः ।

नन्द्राः(पा०सू० ६-१-३)। अजादेरिति कर्मधारयात्पञ्चमी,तदाह- अचः परा इति । *आदिभूतादचः परा इत्यर्थः । ननूत्तरखण्डेऽपि णश्रवणं स्यादत आह-नुशब्दस्येति । णत्वस्यासिद्धतया नुबुद्ध्यैव द्वित्वकरणात् । *यद्बुद्ध्या शास्त्रप्रवृत्तिस्तदीयद्वितीयप्रयोगस्यैव साधुत्वान्वाख्यानान्नोत्तरखण्डे णश्रवणं, पूर्वोच्चारणेन व्यवधानाच्च न शास्त्रेण तत्प्रसङ्ग इति भावः । पूर्वत्रासिद्धीयमिति । "पूर्वत्रासिद्धम्"(पा० सू० ८-२-१)इत्यधिकारे भवमित्यर्थः । गहादित्वाच्छः । यत्पूर्वत्रासिद्धीयं शास्त्रं तत्राद्वित्वे इत्युपतिष्ठते इत्यर्थः"। *तच्च पूर्वत्रेत्यनेनान्वेति । एवञ्च द्वित्वभिन्ने पूर्वत्रेदमसिद्धमित्यर्थः । द्वित्वस्य *त्वन्यत्रासिद्धत्वं *भवत्येव । अत्र द्वित्वशब्देन षाष्ठमाष्टमिकश्चाविशेषात् । लिङ्गादिति । अन्यथा "अनितेः"(पा०

---

ननूर्णोतेरनेकाच्त्वाद्वार्त्तिकमते आम् स्यादेवेत्यत आह—*ऊर्णोतेरिति ।

*आदिभूतादिति । तेन 'इन्दिद्रीयिषति' इत्यस्य सिद्धिः । नन्वसिद्धेऽपि जायमानकार्यस्य यत्रारोपस्तस्यैव प्रसक्त्या प्रयोगे णश्रवणं दुर्वारमत आह- *यद्बुद्ध्येति । अत्रोत्तरखण्ड इतिकथनेनागन्तूनामन्ते सन्निवेशस्य सुप्रसिद्धत्वाद्द्विर्वचननिष्पाद्यत्वमुत्तरखण्डस्येति सूचितम् । *तच्च=अद्वित्व इत्येतत् । एवञ्च द्वित्वभिन्ने पूर्वत्र कर्त्तव्ये इति सिद्धम् । द्वित्वविधायकशास्त्रदृष्ट्या तु नासिद्धत्वम् । द्वित्वञ्चात्र षाष्ठमाष्टमिकञ्च गृह्यते इत्युक्तम् । अत एव षष्ठाध्याये "सन्यङोः" ( पा० सू० ६-१-९ ) इतिसूत्रे स्थानेद्विर्वचनमिति पक्षे 'यियक्षति' 'यियक्षा' इत्यत्र सनः सकारविशिष्टस्य द्विर्वचने कृते प्रकृतिप्रत्ययविभागसम्मोहात्सनः सकारस्य षत्वन्न स्यादिति दोषस्य कृते षत्वे द्वित्वमिति प्रक्रियया परिहारः कृतः । आष्टमिकद्वित्वविषये च विभाषिता विधयः "पूर्वत्रासिद्धम्" ( पा० सू० ८-२-१ ) इत्यधिकारस्थाः 'पूर्वत्रासिद्धीयमद्विर्वचने' इति वचनारम्भम्प्रयोजयन्तीत्यभिधाय 'द्रोग्धा द्रोग्धा' 'द्रोढा द्रोढा' इति प्रयोजनमुक्तम् । आष्टमिकञ्च पदद्विर्वचनं वर्णद्विर्वचनञ्च गृह्यते । अत एव "अनचि च" ( पा० सू० ८-४-४७ ) इतिसूत्रघटकानचीति पदे प्रसज्यप्रतिषेधमाश्रित्य वाक् वाक्क् इत्यस्य सिद्धेः प्रयोजनत्वमुक्तम् । *अन्यत्र=कार्यान्तरे कर्त्तव्ये । *भवत्येवेति ।

सू० ८-४-१९) इत्यनेन कृतणत्वस्य द्वित्वे 'प्राणिणत'इत्यादेः सिद्धौ "उभौ"(पा० सू० ८-४-२१) इति सूत्रं व्यर्थं स्यात्। *एवञ्च णत्वविधावस्यानुपस्थानमिति भावः।

विभाषोर्णोः(पा०सू०१-२-३)।"गाङ्कुटादिभ्यः"(पा०सू०१-२-१) इत्यतो ङिदिति "विज इट्"(पा० सू० १-२-२) इत्यत इडिति चानुवर्तते। तत्र इट् आगम एव। "विज इट्"(पा० सू० १-२-२) इत्यत्र *तस्यैव संभवेनार्थाधिकारात्। अतः 'प्रौर्णुवि' इत्यत्र नायं विकल्पः। अन्यथा परमपि "सार्वधातुकमपित्"(पा० सू० १-२-४)इति बाधित्वा-*"निषेधाश्च बलीयांसः"इति इदमेव स्यादिति दिक्।

गुणोऽपृक्ते(पा० सू० ७-३-९५)। "नाभ्यस्तस्य"(पा० सू० ७-३-८७) इत्यतः पितीत्याद्यनुवर्त्तते। "उतो वृद्धिः"(पा० सू० ७-३-८९) इत्यतो हलीति च।

ऊर्णोतेर्विभाषा (पा० सू० ७-२-६)। "सिचि वृद्धिः"(पा० सू० ७-२-१) इति सूत्रं "नेटि"(पा० सू० ७-२-४) इति च वर्त्तते। निषेधविकल्पे विधिविकल्पस्य फलितत्वान्नेति निवृत्तेर्वाऽऽह-वृद्धिर्वेति।

ब्रुवः पञ्चानाम् (पा० सू० ३-४-८४)। आद्यं ब्रुव इति पञ्चम्यन्तं, द्वितीयं षष्ठ्यन्तम्। "विदो लटो वा"(पा० सू० ३-४-८३) इत्यतो लटो वेति वर्त्तते।

चर्त्वमिति। *महाप्राणादेशप्रकरणात् 'आहस्तः' इति नोक्तम्।

हलादेः पित इति। "नाभ्यस्तस्य"(पा० सू० ७-३-८७) इत्यतः पितीत्याद्यनुवर्त्तते। सार्वधातुकस्येत्यपि बोद्ध्यम्। तेन *उव-

---

तेन 'निष्पीतम्' 'दुष्पीतम्'इत्यादौ जातेऽपि द्विर्वचने "इदुदुपधस्य"(पा० सू० ८-३-४१) इति षत्वे कर्त्तव्ये तस्यासिद्धत्वेन षत्वसिद्धिः। *एवञ्च= अनित्यत्वाश्रयणे च।

*तस्यैव सम्भवेनेति। तस्य परस्मैपदित्वात्। *निषेधाश्चेति। विभाषापदश्रवणेनास्य पक्षे निषेधविधित्वम्।

ननु "आहस्थः" (पा० सू० ८-२-३५) इत्यत्र 'आहस्तः' इत्येव प्रक्रियालाघवाय कर्त्तव्यमत आह-*महाप्राणादेशप्रकरणादिति। "होढः" (पा० सू० ८-२-३१) इत्यादिप्रकरणादित्यर्थः।

*उवक्थेति। "लिट् च" (पा० सू० ३-४-११५) इत्यनेनास्यार्द्धधातुकत्वात्।

कथ'इत्यत्र न । अपृक्त इति तु नानुवर्त्तते । 'ब्रवीति' इत्यसिद्ध्यापत्तेः ।

वक्तीत्यङिति । प्रयोगस्थानामनुकरणेऽस्य स्वतन्त्रस्य च विनिगमनाविरहादनुकरणमिति भावः ।

दीर्घ इणः(पा० सू० ७-४-६९)। "अत्र लोपः"(पा० सू० ७-४-५८-)इत्यतोऽभ्यासस्येति "व्यथो लिटि"(पा० सू० ७-४-६८) इत्यतो लिटीति चानुवर्त्तते । कितीति किम् ? । *इयाय । *न च *परत्वाद्दीर्घेऽपि अभ्यासविकारे बाध्यबाधकभावाभावेन पुनःप्रसङ्गविज्ञानेन चेयङि रूपसिद्धिरिति वाच्यम् । अभ्यासविकारे बाध्यबाधकभावाभावेन परत्वाप्रवृत्तौ इयङुत्तरं दीर्घेऽनिष्टस्यापत्तेः* । ईयतुरिति । ननु इ इ अतुसिति स्थितेऽभ्यासदीर्घे यण्यपि स्थानिवत्त्वेन सवर्णदीर्घेऽभ्यास*दीर्घविधानसामर्थ्यात्पुनर्यणभावे ईअतुरिति प्राप्नोति *'अनन्तरस्य' इति न्यायेन तत्सामर्थ्येन यण एव बाधो न तु दीर्घस्येति चेन्न । पूर्वस्यैव विधौ स्थानिवत्त्वेन यणि दीर्घाप्रवृत्तेः । 'आयन्' इति यण आभीयासिद्धत्वाद् । एतदसिद्धत्वप्रत्याख्याने तु लावस्थायामडेव *कर्त्तव्यः । "आडजादीनाम्"(पा० सू० ६-४-७२)इति च न कार्यम् । "आटश्च"(पा० सू० ६-१-९०) इति सूत्रम् 'अटश्च' इति कार्यम् । तेन 'ऐज्यत' इत्यादौ न दोषः । वृद्धिविधौ धातोरित्यपकर्षेण 'अस्वपो हसति'इत्यत्र *न वृद्धिः । "अतो गुणे"(पा० सू० ६-१-९७) इत्युत्तरं नाट इति कर्त्तव्यम् । तेन 'आटीत्' इत्यादौ न पररूपम् । *'आयुनक्' इत्यादौ वेदे तु छान्दसो दीर्घः । 'आयन्' इत्यत्र चान्तरङ्गत्वाद् वृद्धावायादेशः । वृद्धौ कृतायाम् "इणो यण्"(पा० सू० ६-४-८१) इति तु न । तत्र एरित्यपकर्षणेनेकाररूपस्येणो

---

*इयायेति । अत्र इशब्दस्य द्वित्वे 'वार्णादाङ्गम्' इतिन्यायेन सवर्णदीर्घम्बाधित्वा परस्य वृद्धौ पूर्वस्य "अभ्यासस्यासवर्णे" ( पा० सू० ६-४-७८ ) इतीयङादेशः, तत्र शङ्कते-*न चेति । *परत्वादिति । इयङादेशापेक्षया परत्वादित्यर्थः । *आपत्तेः=कितीत्यस्याननुवृत्तावनिष्टस्यापत्तेः । *दीर्घविधानसामर्थ्यादिति । 'येननाप्राप्ति'न्यायेन दीर्घस्य यणपवादत्वात् पुनर्यणभाव इत्यर्थः । ननु यण्वत्सवर्णदीर्घस्यापि तेन बाधोऽस्त्वित्यत आह-*अनन्तरस्येतीति । *कर्त्तव्य इति । "अजादीनामटा सिद्धम्" इतिभाष्योक्तेः । *न वृद्धिरिति । 'अस्वपो हसति' इत्यत्र "अड् गार्ग्यगालवयोः" ( पा० सू० ७-३-९९ ) इति विहितस्याटोऽचि परे वृद्धिर्नेत्यर्थः । हसतीत्यस्योपादानमुत्वाय । आटोऽभावेऽप्यायुनगिति साधयति-*आयुनेति ।

यणित्यर्थात् । इदश्च "असिद्धवत्"(पा० सू० ६-४-२२) सूत्र-"न माङ्योगे"(पा० सू० ६-४-७४) इतिसूत्रयोर्भाष्ये स्पष्टम् ।

इणोऽण इति । *प्रसिद्धत्वादस्यैवात्र ग्रहणमिति भावः । उभयत इति । *पूर्वपरशब्दाभ्यामन्तादिशब्दाभ्याञ्च विरोधस्य पुरःस्फूर्तिकत्वाद्विरुद्धातिदेशद्वयस्य युगपदसम्भवः । यथा द्वयोरेकः प्रेष्यस्ताभ्यां युगपद्भिन्नदेशे कार्याय प्रेरितोऽविरोधार्थी कस्यापि कार्यं न करोति तद्वदिति भावः । एतद्विषये *स्थानिवत्त्वन्तु न । आनुमानिके स्थान्यादेशभावे विशिष्टस्य स्थानित्वेऽपि प्रत्येकं तयोः स्थानित्वे मानाभावात्, श्रौतस्तु वर्णयोरेवेति बोध्यम् । स्पष्टा चेयं रीतिः "उपसर्गादस्यत्यूह्योः" इत्यस्य 'प्रोह्यते' इत्यादौ गुणे कृते प्रवृत्तिवारणपरभाष्ये । न च भान्तस्यैकदेशविकृतन्यायेनोपसर्गत्वादीकारस्य परादिवद्भावेनण्त्वाद्भ्रस्वो दुर्वारः । स्पष्टा चेयं रीतिः "उदकेऽकेवले" ( पा० सू० ६-२-९६ ) इति पूर्वपदान्तोदात्तत्वं प्रयोजनम् गुडोदकम्" इति भाष्यमुपादाय "अन्तादिवच्च" ( पा० सू० ६-१-८५ ) इति सूत्रे कैयट इति वाच्यम् । "येन विधिः" ( पा० सू० १-१-७२ ) इति सूत्रे भाष्ये 'सर्वके' इत्यत्र जसः शी कथम् ? । न च यथा गङ्गाप्रविष्टनद्या गङ्गाग्रहणेन ग्रहणं तथा तदन्तःप्रविष्टाकस्यापि तद्ग्रहणेन ग्रहणमिति वाच्यम् । यथा परिच्छिन्नपरिमाणार्थकवाचकानां ख्यादिद्रोणादिशब्दानां न्यूनाधिकयोर्न प्रवृत्तिस्तथा सर्वाद्युपादानेन क्रियमाणसञ्ज्ञाया विना शास्त्रव्यापारं न न्यूनेऽधिके वा प्रवृत्तिरित्याशङ्क्य "नेदमदसोः" ( पा० सू० ७-१-११ ) इति ज्ञापकात्समाहितम्, तत्तुल्यन्यायादत्रापि दीर्घविशिष्टे भान्ते च लौकिकन्यायेनोपसर्गत्वाभावात् उपसर्गसञ्ज्ञायाः परिच्छिन्नपरिमाणप्रादिगतत्वादि-

---

इणित्यत्र प्रत्याहारग्रहणशङ्कानुत्थानायाह-*प्रसिद्धत्वादिति । 'उभयत' इतिवचनस्य युक्तिसिद्धत्वमाह-*पूर्वपरेति । *स्थानिवत्त्वमिति । प्रथमसूत्रविहितं स्थानिवत्त्वमित्यर्थः । न चान्तादिवद्भावप्रवृत्तावपि न क्षतिः । एकादेशे धर्मद्वयलाभेऽपि तासौ नित्यानिवृत्त्ववदशास्त्रीयत्वेनोपसर्गात्परत्वस्याति-

ति बोध्यम् । *लक्ष्यानुसारात्क्वचिन्न्यायानाश्रयणमिति न दोष इत्य-न्ये । परे तु वतिघटितशास्त्रस्याऽऽहार्यारोपबोधकत्वेन तस्य च विरुद्धवि-षयस्यापि युगपत्सम्भवेन लौकिकन्यायेनो*क्तेन नास्य सिद्धिः । *किं च तत्रान्तादिवत्त्वेऽपि व्यपवर्गाभावेनोपसर्गात्परत्वस्येणि अभावेन 'अभी-यात्' इत्यादिसिद्धिः । *न च "उपसर्गस्य" ( पा० सू० ८-२-१९ ) इति सूत्रेऽयतिपरस्योपसर्गस्येत्यर्थे 'प्लायते' इत्यादावेकादेशे कृते व्यप-वर्गाभावादयताविति लत्वं न स्यादित्याशङ्क्य 'अन्तादिवद्भावेन व्यपव-र्गः' इति भाष्यासङ्गतिस्तस्मात्पूर्वपरान्तादिवद्भावे आर्थसमाजग्रस्तः स इति वाच्यम् । *तद्भावेऽपि वास्तवभेदाभावेनायतिपरत्वस्या*नुपपाद-नेन तस्यैकदेश्युक्तित्वात् । *न हि *तेनातिदेशेन वाच्यवृत्त्या *तदारोप-बोधनं शक्यं कर्तुम् । तस्मादेकदेशिनोक्ते तस्मिन्नर्थे परेणैकदेशिना 'उभय-त आश्रये नान्तादिवत्' इत्युक्ते "अचः परस्मिन्" (पा० सू० १-१-५७) इति स्थानिवद्भावाद्व्यपवर्ग इति सिद्धान्तिनोक्तम् । *अत एव 'उभे अ-भ्यस्तम्" ( पा० सू० ६-१-५ ) इति सूत्रे 'ईर्त्सन्' इत्यादौ*नुम्प्रतिषे-

---

देष्टुमशक्यत्वादिति वाच्यम् । पूर्वत्वातिदेशेन तदतिदेशस्यापि वक्तुं शक्य-त्वात् पूर्वत्वस्य शास्त्रीयत्वाच्चेत्यार्थसमाजग्रस्तत्वेन पूर्वस्मात्परत्वं वक्तुं श-क्यमिति तद्भावः । "अचः परस्मिन्" ( पा० सू० १-१-५७ ) इति तु प्रवर्तत एव । अन्यथा 'प्लायते' इत्यस्यासिद्धिः स्यात् । *लक्ष्यानुसारादिति । 'अभीया-त्'इतिलक्ष्यस्य सम्प्रतिपन्नस्यानुसारादित्यर्थः । अन्य इत्यनेनारुचिः सूचिता । एकदेशविकृतन्यायस्य लौकिकतया लोकदृष्टप्रकारस्य त्यागे बीजाभाव इति । *उक्तेन=उभयत इत्यनेन । अस्य लौकिकत्वन्तु प्रागुपपादितमेव । एतेन तस्य न्यायस्यात्र शास्त्रेऽनाश्रयणं सूचितम् । नन्वेतन्न्यायाभावे कथम् 'अभीयात्' इ-त्यस्य सिद्धिरत आह-*किञ्चेति । पूर्वोक्ताशयेन शङ्कते-*न चेति । *तद्भावे-ऽपीति । पूर्वपरान्तादिवद्भावेऽपीत्यर्थः । *अनुपपादनेनेति । अवध्यवधिमतोर्भेदे एव लोके पूर्वपरव्यवहारस्य प्रसिद्धेरिति भावः । अतिदेशेनापि न लाभ इत्याह-*न हीति । *तेनातिदेशेन=अन्तादिवदित्यातिदेशेन । *तदारोपः=व्यपवर्गारोपः । *अत एव=एतादृशे विषयेऽन्तादिवद्भावेन व्यपवर्गाभावादेव । *नुम्प्रतिषेधः= "नाभ्यस्तात्" ( पा० सू० ७-१-७८ ) इत्यनेन नुम्प्रतिषेधः । युक्ततरप्रकारे-

ध एकादेशे कृते व्यपवर्गाभावाद्वारितः । *किं च 'अभीयात्' इत्यादौ 'वार्णादाङ्गम्' इति न्यायेन ह्रस्वे कृते 'लक्ष्ये लक्षणस्य' इति न्यायेन पुनर्ह्रस्वाप्राप्तेर्नास्य निषेधस्योपयोगः । इदम् "उपसर्गाद्ध्रस्वः" (पा० सू० ७-४-२३) इति सूत्रे कैयटे स्पष्टम् । यत्तु *व्याश्रयत्वादत्र तन्न्यायाप्रवृत्तिरिति *तेनोक्तं, तत्तु 'इयाय' *इत्याद्यसिद्ध्याऽसङ्गतमिति स्पष्टमेव । *यदपि 'प्रोह्यते' इत्यत्रैकादेशे कृते व्यपवर्गाभावान्न ह्रस्व इति तत्सूत्रे भाष्ये उक्तं तस्य अन्तादिवद्भावेऽपि उपसर्गात्परत्वाभावादित्यर्थः । साऽप्येकदेशयुक्तिरेव । वार्णपरिभाषया सिद्धेः । 'आ-ऊह्यते=ओह्यते' 'समोह्यते' इत्येतद्वारणाय तत्र 'समेयात्' इत्येतद्वारणायात्र चाण इत्यनुवर्त्तते इति भाष्यमप्येकदेशयुक्तिरेव । आङोऽप्युपसर्गत्वेन *तेन न्यायेन पूर्वं ह्रस्वस्यैव प्रवृत्तेः । *अत एवान्तादिवत्सूत्रे "अभ्यासादीनां ह्रस्वत्वे नान्तादिवत् । के पुनरभ्यासादयः ? अभ्यासोह्यम्बार्थनदीनपुंसकोपसर्जनह्रस्वत्वानि, उपेयाय, प्रोह्यते, अम्बात्र" इत्याद्युदाहृत्य "न वा बहिरङ्गलक्षणत्वात्, अन्तरङ्गं ह्रस्वत्वं, बहिरङ्गा एते विधयः" इत्युक्तम् । न च ऊहेर्ह्रस्वत्वं न अन्तरङ्गमुपसर्गसम्बन्धोत्तरमेव प्रवृत्तेः, वर्णाश्रयत्वादेकादेश एवान्तरङ्ग इति वाच्यम् । *तदपवादवार्णपरिभाषाया अप्यनेनोपलक्षणात् । एवञ्चोभयत इत्यादेरण्ग्रहणानुवृत्तेश्चैकदे-

---

ण 'अभीयात्' इत्यत्रैकादेशे कृते ह्रस्वत्वाभावं साधयति-*किञ्चेति । *व्याश्रयत्वादिति । उपसर्गापेक्षत्वेन व्याश्रयत्वात् । *तेन=कैयटेन । *इयायेत्याद्यसिद्ध्येति । अत्रापि वृद्धेः प्रत्ययापेक्षतया बहिरङ्गत्वेनान्तरङ्गैकादेशे रूपासिद्धिः । वार्णपरिभाषा तु तथैव व्याश्रयत्वान्नेति । तस्माद्वार्णप्रवृत्तावुभयोरङ्गसम्बन्धित्वमात्रम्प्रवृत्तौ नियामकमिति वक्तव्यन्तच्चास्त्येवेति यथा 'इयाय' इत्यस्य सिद्धिस्तथा 'अभीयात्' इत्यस्यापि भविष्यतीति भावः । स्वोक्तौ भाष्यान्तराविरोधमाह-*यदपीति । *तेन न्यायेन='वार्णादाङ्गम्' इतिन्यायेन । *अत एव=ह्रस्वत्वस्यैकादेशात्पूर्वम्प्रवृत्तेरेव । 'उपेयाय' इत्यत्राभ्यासनिमित्तकस्य 'प्रोह्यते' इत्यत्र "उपसर्गाद्" (पा० सू० ७-४-२३) इति विहितस्य 'अम्बाऽत्र' इत्यत्र "अम्बार्थनद्योः" (पा० सू० ७-३-१०७) इतिविहितस्य ह्रस्वत्वस्य प्राप्तिः । *तदपवादेति । बहिरङ्गपरिभाषापवादेत्यर्थः । वार्णपरिभाषया-

श्युक्तित्वं स्पष्टमेवोक्तम् । *किं चोहेरिवेणमभ्यासादिष्वगणयता 'अभीयात्' इत्यादेरनभिधानं सूचितम् । यदपि "अन्तादिवच्च" ( पा० सू० ६-१-८५ ) इति सूत्रे 'प्राटितः' इत्यादावेकादेशा*दुत्तरपदप्रकृतिस्वरो विप्रतिषेधेन, स चावश्यं विप्रतिषेध आश्रयितव्यः । न ह्येकादेशे उत्तरपदं परं भवति" इति व्यपवर्गाभावाभिप्रायेण सिद्धान्तिनोक्ते "न चान्तादिवद्भावेन परम्" इति पूर्वपक्ष्येकदेशिना शङ्किते "उभयत आश्रयणे नान्तादिवत्" इत्युक्तं, साऽप्येकदेश्युक्तिरेव । एवं "न पदान्त" ( पा० सू० १-१-५८ ) सूत्रस्थे "गोस्त्रियोः" ( पा० सू० १-२-४८ ) इति सूत्रस्थेऽन्यत्र च भाष्येऽस्योल्लेख एकदेश्युक्तिरेव । निरूपितश्च तत्र भाष्यप्रदीपोद्द्योते *तस्य तत्त्वम् । *अत एव "अन्तादिवच्च"( पा० सू० ६-१-८५ ) इति सूत्रे 'उभयत आश्रये' इत्यर्थं न्यायसिद्धमुक्त्वा तस्योदाहरणं न दत्तम्, वृत्तिकृता च सोऽर्थो नोक्त इत्याहुः । समेयादिति । आङः प्रश्लेषोऽत्र बोध्यः । औवादिकस्येति । 'इटकिटकटी' इत्यत्र प्रश्लिष्टस्याऽऽशीर्लिङीति भावः । इहार्द्धधातुक इति स्वरूपकथनं 'क्ङिति लिङि'*इत्येतावतैव सिद्धेः ।

नित्यमधिपूर्व इति । धातुसञ्ज्ञा तु पाठापेक्षणादधिरहितस्यैव । क्रियावाचकत्वन्तु काल्पनिकन्तस्यास्त्येव । अधिरुपरिभावे । उपरिभावश्च पठने *नियमपूर्वकत्वमिति "भूवादि" (पा० सू० १-३-१) सूत्रभाष्ये स्पष्टम् ।

---

'अभीयात्' इत्यस्य सिद्धिरिति यत्प्रागभिहितन्तदपि तत्सत्त्वमभिप्रेत्य । वस्तुतो भाष्यान्तरस्वारस्यादस्यानभिधानमेवेत्याह—*किञ्चेति । *उत्तरपदप्रकृतिस्वरः="गतिकारकोपपदात्" ( पा० सू० ६-२-१३९ ) इति विहितः । *तस्य तत्त्वमिति । 'उभयत' इत्युक्तेरेकदेश्युक्तित्वमित्यर्थः । *अत एव='उभयत' इति वचनस्य लक्ष्यासाधकत्वादेव । ननु 'समीयात्' इत्यत्राणत्वाद्ध्रस्वत्वन्दुर्वारमत आह—मूले औवादिकेति । *इत्येतावतैवेति । "क्ङिदाशिषि"(पा० सू० ३-४-१०४) इति किङ्त्वस्य तत्रैव विधानात् ।

*नियमपूर्वकत्वमिति । एवञ्चास्य विशेषणस्य द्योतकोऽत्राधिः ।

ननु "द्विर्वचनेऽचि" ( पा० सू० १-१-५९ ) इति निषेधादिङ एव द्वित्वे उत्तरखण्डस्य गादेशे 'अधीगे' इति स्यादत आह —लाघवस्थायामित्यादि । *एवञ्च द्वित्वनिमित्ताज्निमित्तत्वाभावेन "द्विर्वचनेऽचि" ( पा० सू० १-१-५९ ) इत्यस्याप्रवृत्तिरिति भावः । गुणाद्यादेशयोरिति । "पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण" इति "सुट् कात्पूर्वः" ( पा० सू० ६-१-१३५ ) इति सूत्रे भाष्ये सिद्धान्तितत्वादिति भावः । साधनेनेत्यस्य कारकेणेत्यर्थः । उपसर्गेण=तत्सञ्ज्ञक*शब्देन । इति दर्शन इति । अनेनारुचिर्बोधिता । तद्बीजन्तु तत्रैव भाष्ये एवमुपक्रम्य 'नैतत्सारम्' इत्युक्तिः । निर्देशाच्चेति । अनेन हि निर्देशेन 'पूर्वं धातुः साधनेन' इत्युक्तन्यायो ज्ञाप्यते । उपसर्गार्थेन तु पूर्वयोगः । तेन पूर्वयोगादेव 'अनुभूयते' 'निविशते' इत्यादौ कर्मणिलकारात्मनेपदयोः "नेर्विशः" ( पा० सू० १-३-१७ ) इत्यादेर्नेः परत्वयोग्यादित्यादिक्रमेणार्थात्पूर्वमेव तङ् । "संपृचानुरुधा" (पा० सू० ३-२-१४२) इत्यादेरपि संपूर्वत्वयोग्यात्पृचेरिसादिक्रमेणार्थः । *अत एव न तत्र धातूपसर्गयोः समासः । तिङि 'अतिङ्' इति निषेधात् । ध्वनितश्चेदम् "उपपदमतिङ्" ( पा० सू० २-२-१९ ) इति सूत्रे भाष्ये । 'गोसन्दायः' इत्यादावपि सन्द्योत्यार्थविशिष्टाद्धातोः कर्मण्युपपदेऽणि ततः संशब्दयोगे गतिसमासे उपपदसमासो बोध्यः । *साध्यत्वेन प्रतीतये च पूर्वं साधनसम्बन्धः, तस्मिंश्च तत्प्रयुक्तं कार्यमपि पूर्वमेवान्तरङ्गत्वात् । एवञ्च तिङुत्पत्त्यनन्तरमधिसम्बन्धे 'वार्णादाङ्गम्' इति न्यायेन गुणादौ कृते यण् *घञ्ल्युडादयोऽप्युपसर्गार्थविशि-

---

*एवञ्च=लाघवस्थायामित्यस्य स्वीकारे च । इदमार्द्धधातुक इत्यस्यासम्बन्धमभिप्रेत्य । वस्तुतस्तत्सम्बन्धेऽपि न दोष इत्याशयेनाह-मूले विवक्षित इति । *शब्देनेति । एतेनोपसर्गद्योत्यार्थस्योपसर्गसंज्ञकशब्दयोगात्प्राग् धात्वर्थेऽन्तर्भावो भवत्येवेति बोधितम् । तेन 'उपास्यते हरिः' इत्यस्य सिद्धिः । "णेरध्ययने" ( पा० सू० ६-२-२६ ) इतिनिर्देशस्यापूर्वार्थज्ञापकत्वापेक्षया भाष्यसम्मतपक्ष एव ज्ञापकत्वकल्पने लाघवमिति भावः । *अत एव=उपसर्गसंज्ञकशब्दयोगस्य प्रागभावादेव । पूर्वन्धातुः साधनेनेत्यत्र बीजमाह-*साध्यत्वेनेत्यादि ।

ष्टे सिद्धत्वप्रतिपादनाय। पूर्वं *तदर्थसम्बन्धेऽन्तरङ्गत्वात्पदद्वयनिमित्तसमासात्पूर्वमेव। एवं भावार्थतिङोऽपि। ध्वनितश्चेदं "सुट्कात्पूर्वः" (पा० सू० ६-१-१३५) "गतिर्गतौ" (पा० सू० ८-१-७०) "उपपदमतिङ्" (पा० सू० २-२-१९) इत्यादिभाष्येषु। *भिन्नपदवाच्यकारकबोधकपदसम्बन्धस्तूपसर्गसञ्ज्ञकशब्दयोगोत्तरमेव। अत एव 'अद्य आ ऊढा=अद्योढा' इत्यत्र पूर्वमन्तरङ्गत्वादाद्गुणे पररूपमिति "संप्रसारणाच्च" (पा० सू० ६-१-१०८) इति सूत्रे भाष्ये। परत्वादियङिति। आडपेक्षयेत्यादिः। अत्र वदन्ति-लावस्थायामडिति पक्षेऽन्तरङ्गत्वाद् *वृद्धावेतद्रूपासिद्धिः। *कथञ्चिद् 'वार्णादाङ्गम्' इत्याश्रयणेऽपि अनेकाच्त्वाद्यणापत्तिः। न चाटोऽसिद्धत्वान्न यण्। अत्र पक्षे 'असिद्धवत्" (पा० सू० ६-४-२२) सूत्रस्य भाष्ये प्रत्याख्यानात्। न च "एरनेकाचः" इति योगं विभज्य "इणो यण्" (पा० सू० ६-४-८१) इत्यनुवर्त्याडादिसहितानेकाचश्चेद्यण् तर्हि इवर्णान्तेण एवेति नियमान्न दोष इति वाच्यम्। शब्दमर्यादयाऽलाभात्। *उक्तरीत्याऽडादिसहितानेकाजिणो यण एवाभावात्। भाष्ये तु "असिद्धवत्" (पा० सू० ६-४-२२) सूत्रप्रत्याख्यानेऽस्य योगविभागस्य विध्यर्थतामाश्रित्यैतत्सामर्थ्याद् "आयन्' इत्यत्र पूर्वमाडित्युक्तम्। तस्मादीदृशे विषये पक्षयोः फलाभेदाय 'इङ्' धातोर्लोकेऽनभिधानमेव। "संप्रसारणाच्च" (पा० सू० ६-१-१०८) इति सूत्रोदाहृतम् 'अध्यैयाताम्" इत्यादि तु छान्दसम्। तत्र हि "बहुलं छन्दस्यमाङ्योगेऽपि" (पा० सू० ६-४-७५) इति बहुलग्रहणादादेशोत्तरं परत्वादियङि तत आटि वृद्धिः। नचाण् नित्यः, इयङोऽपि त-

---

साधनार्थकप्रत्ययस्थले व्यवस्थामुक्त्वा भावार्थकप्रत्ययस्थले तामाह-*घञ्ल्युडादय इति। *तदर्थसम्बन्ध इति। भावार्थकप्रत्ययद्योत्यस्य सिद्धत्वस्य सम्बन्ध इत्यर्थः। *भिन्नपदेति। एतेन बहिरङ्गत्वन्तत्प्रयुक्तकार्यस्य द्योतितम्। *वृद्धौ="आटश्च" (पा० सू० ६-१-९०) इति वृद्धौ। *कथञ्चिदिति। 'पदस्य विभज्यान्वाख्यानम्' इतिपक्षमभिप्रेत्य। *उक्तरीत्येति। प्रत्याख्यानपक्षे वृ-

स्वात् । अन्तरङ्गया वृद्ध्या बाधेऽपि लक्षणान्तरेण निमित्तविघातेऽपि *नित्यत्वाङ्गीकारादिति । केचित्तु लावस्थायामडिति पक्षेऽपि 'वार्णादाङ्गम्' इति न्यायेनाङ्गस्य तन्निमित्तभूतादेशानाञ्च पूर्वं प्रवृत्त्या *न दोषः । यथा 'अन्तरङ्गानपि' इति न्यायो लुकूतत्प्रयोजकसमासादीनाञ्च प्राबल्यबोधकः । अतिप्रसङ्गस्तु अनित्यत्वाद्वारणीय *इत्याहुः ।

गाङादेशादिति । *व्याख्यानमत्र शरणम् ।

घुमास्था ( पा० सू० ६-४-६६ ) । जहातीति हाको ग्रहणं *न हाङो व्याख्यानात् । "दीङो युड्" ( पा० सू० ६-४-६३ ) इत्यतः क्ङितीति वर्त्तते । आर्द्धधातुक इति चाधिकृतम् , 'ईद्यति" ( पा० सू० ६-४-६५ ) इत्यत ईदिति च वर्त्तते ।

इक्स्मरणे । 'इणवदिकः' ( का० वा० ) इत्यादौ विशेषणार्थः ककारः । केचित्त्विति । *अत एव भाष्ये "इणो गा लुङि" ( पा० सू० २-४-४५ ) इत्येतत्प्रकरणे इदं पठितम् । अधीयन्निति । इयङि सवर्णदीर्घः । राघवयोरिति "अधीगर्थ:" ( पा० सू० २-३-५२ ) इति षष्ठी । केचिदिति । अत्रारुचिबीजमट आभीयतयाऽसिद्धत्वेनानेकाच्त्वाभावः । *लावस्थायामडिति पक्षेऽपि लङादिनिमित्तत्वादटः समानाश्रयत्वेन स्थानिनमादाय वा समानाश्रयत्वेनासिद्धत्वं सूपपादम् । ईद्दशाद्यर्थम् 'असिद्धवत्"( पा० सू० ६-४-२२ )सूत्रमावश्यकमेव । *अत

---

द्विरन्तरङ्गत्वादाटा सहेतिरीत्या यणोऽप्रवृत्त्या नियमासम्भवादित्यर्थः । *नित्यत्वाङ्गीकारादिति । यस्य लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यमिति परिभाषया नित्यत्वस्य बोधनादिति । *न दोष इति । एवङ्कल्पनया ह्यत्र पूर्वं लादेश इति तद्भावः । *इत्याहुरिति । भाष्यानुक्तत्वमत्रारुचिः ।

*व्याख्यानमत्रेति । "गाङ् लिटि" ( पा० सू० २-४-४९ ) इत्यत्र ङकारस्यात्रैव विशेषणार्थमुपादानमित्येतन्मूलकमित्यर्थः ।

*न हाङो व्याख्यानादिति । जहातीतिनिर्देशमूलकव्याख्यानादित्यर्थः । हाङो ग्रहणे हि 'भृञामित्" ( पा० सू० ७-४-७६ ) इतीत्त्वापत्तिः स्यात् ।

*अत एव=आर्द्धधातुकाधिकारोक्तकार्यातिदेशस्येष्टत्वादेव । असिद्धत्वप्राप्तिमुपपादयति-*लावस्थायामिति । *अत एव=सर्वथा तत्प्रत्याख्यानस्या-

एव तत्सूत्रभाष्ये वार्त्तिकोक्तफलानामन्यथासिद्धिं कृत्वाऽपि 'आरभ्यमाणेऽस्मिन्सूत्रे' इत्याद्युक्तम् । सर्वथा प्रत्याख्याने तु अस्य लङ्प्रथमपुरुषबहुवचने ऽनभिधानं *स्वीकार्यम् । अस्यार्द्धधातुके न प्रयोग इत्यज्भातावुक्तम् ।

जुस्वेति। एवकारस्तूत्तरत्र पठ्यमाने "लिट् च" ( पा० सू० ३-४-११५ ) "लिङाशिषि" ( पा० सू० ३-४-११६ ) इत्यादावर्थवान्। तथा "नित्यं ङितः" ( पा० सू० ३-४-९९ ) इत्यतो ङित *इत्यनुवृत्त्या सिद्धे लङ्ग्रहणं लङ्वद्भावेनैतदप्रवृत्त्यर्थम् । विध्याशिषोः "स्कोः" ( पा० सू० ८-२-२९ ) इति सलोपे 'यायात्' इत्येव रूपमिति विशेषद्योतनाय द्विवचनमुदाहरति-यायातामिति । "लिङः सलोपः" ( पा० सू० ७-२-७९ ) इति सलोपः । पा रक्षणे "गातिस्था ( पा० सू० २-४-७७ ) घुमास्था" ( पा० सू० ६-४-६६ ) इत्यत्र पिबतेरेव ग्रहणान्नेत्त्वसिज्लुकौ । प्रणिदातीति । घुत्वाभावात् "शेषे विभाषा" ( पा० सू० ८-४-४१ ) इति वैकल्पिकं णत्वम् । सार्वधातुकमात्रेति । मात्रशब्दोऽवधारणे । सस्थानत्वमिति । ख्याञादेशस्य ख्शादित्वप्रयोजनकथनावसरे वार्तिकमिदम् । सस्थानत्वं *सस्थानशब्द*स्तेन स्ववाच्यो जिह्वामूलीयो बोध्यते । *यद्वा सस्थानत्वशब्दे सस्थानशब्दः शब्दपरस्त्वभावश्च तदर्थ एव, तदाह—सस्थानो जिह्वामूलीय इति। *अन्यथाऽस्मात्तृचि तस्य दुर्वारत्वेन भाष्यासङ्गतिः। प्रमाणानां सामान्ये पक्षपाताच्चार्द्धधातुकमात्रे प्रयोगाभाव इति

---

नभिप्रेतत्वादेव । *स्वीकार्यमिति । अन्यथा फलभेदः स्यात् ।

*इत्यनुवृत्त्या सिद्ध इति । ङित आदन्तात्परत्वं लङ्यथेव सम्भवतीति भावः । *सस्थानशब्द इति । शब्दस्य स्वप्रयोज्यार्थोपस्थितौ प्रकारतया भानेन त्वप्रत्ययान्तेन शब्द एवोच्यत इति भावः । त्वान्तस्य शब्दपरत्वे तस्य लक्ष्ये प्राप्त्यभावेऽपि लक्षणया त्वान्तस्य वाच्यार्थपरत्वमित्याशयेनाह-*तेनेति । लक्षणानाश्रयणेनाह-*यद्वेति । *अन्यथा=ख्याधातोरार्द्धधातुकेऽपि प्रयोगे । सामान्यापेक्षज्ञापकाश्रयणे "न ख्याख्या-

भावः । 'नटः ख्याति' इत्यादौ तु जिह्वामूलीयो भवत्येवेति दिक् । संपूर्वस्येति । सार्वधातुकेऽपि नेति भावः । 'सङ्ख्या' इति प्रयोगस्तु चक्षिङ एव । नास्येति । 'घुमस्थातिमाङ्' इति भाष्ये पाठादिति भावः । अयमन्तीति । शिष्टैरिति शेषः । अत्रार्थे न भाष्यानुग्रहः ।

'विदः' इति पञ्चमी, विकरणव्यवधाने लटस्ततः परत्वासम्भवादाह—वेत्तेरिति । अकारान्तनिपातनादिति । आम्सन्नियोगेनेति शेषः । तदुक्तं भाष्ये *निपातनादगुणत्वमिति ।

विदाङ्कुर्वन्त्वित्यति ( पा० सू० ३-१-४१ ) । इतिशब्दः प्रकारे । एवञ्जातीयकमित्यर्थस्तदाह—पुरुषवचने इति । तयोर्नान्तरीयकमुच्चारणमिति भावः । *कर्तृत्वपरस्मैपदे तु विवक्षिते एव । लोकविवक्षानुसारकेतिशब्दादित्येके । एते अप्यविवक्षिते नान्तरीयकत्वादेवेत्यन्ये । लोट् तु*च्चारणसामर्थ्याद्विवक्षित एव । *अत एव "उषविद" ( पा० सू० ३-१-३८ ) इत्याम्विधानम् । *तत्रापि व्याख्यानादुषजागृसाहचर्याच्चास्यैव *परस्मैपदिनो ग्रहणम् ।

गणकार्यस्येति । *तनादिसाहचर्येण तद्गणस्थस्यैव कृञोऽत्र ग्रहणम् । *क्रियासामान्यवाचित्वेनान्वययोग्यतया तस्यैवात्रानुप्रयोग इति भावः । *भाष्ये कृग्रहणस्यात्र प्रत्याख्यानादत्रार्थे तस्य तात्पर्यमयुक्तम् ।

---

पूमूर्छि" ( पा० सू० ८-२-५७ ) इति सूत्रे ख्याग्रहणन्न कार्यम् । यत्वस्यासिद्धतया यण्वत्ताविरहादिति लाघवमप्यस्याङ्कल्पनायामस्तीति बोध्यम् । मूले अयमन्तीति । अत्रायमित्यनेनादादिकस्यैव तत्राप्रयोगः । यस्तु चुरादिपठित आघृषीयस्तस्य णिजभावेऽपि तत्र प्रयोगो भवत्येवेति सूचितम् ।

"विदो लटो"( पा० सू० ३-४-८३ ) इतिसूत्रे वेत्तेरेव ग्रहणे प्रमाणमाह-*निपातनेति । 'निपातनादगुणत्वम्' इतिभाष्यात् "उषविदजागृभ्य" ( पा० सू० ३-१-३८ ) इति निर्देशाच्चायमर्थः कल्प्यते ।

कस्य चिन्मतमाह-*कर्तृत्वेति । *उच्चारणसामर्थ्यादिति । विदाङ्कुर्वन्तुशब्दे लोडुच्चारणसामर्थ्यादित्यर्थः । *अत एव=लोटो विवक्षितत्वादेव । अत्र लोटोऽविवक्षायामनेनैव लिख्यप्यामः सिद्धौ तस्मिन्सूत्रे विदशब्दोपादानमनर्थकं स्यात् । ननु तत्र विदग्रहणेनान्यस्य विदधातोर्ग्रहणमस्त्वित्यत आह-*तत्रापीति । *परस्मैपदिन इति । तेन 'विद' विचारणे इत्यस्य रुधादिगणपठितस्य व्यावृत्तिः ।

ननु कृञ्ग्रहणेन 'कृञ्' हिंसायाम् इत्यस्य स्वादौ पठितस्य ग्रहणमिति वक्तुं शक्यमिति कथं कृञ्ग्रहणस्य गणकार्यानित्यत्वज्ञापकत्वमत आह-

'न विश्वसेत्' इत्याद्यार्षमेव । ज्ञापितेऽपि तच्चारितार्थ्याभावाच्चेत्यन्ये ।

अत उत्सा ( पा० सू० ६-४-११० ) । "गमहन" ( पा० सू० ६-४-९८ ) इत्यतः क्ङितीति, "नित्यं करोतेः" ( पा० सू० ६-४-१०८ ) इति "उतश्च प्रत्ययात्" ( पा० सू० ६-४-१०६ ) इत्यत उत इति चानुवर्त्तते । तपरत्वसामर्थ्यादिति । इदं "स्थानिवत्" (पा०सू० १-१-५६)सूत्रे भाष्ये स्पष्टम् । 'उदवोढाम्' इत्यत्र वृद्धिवत् 'लक्ष्येलक्षणस्य' इति न्यायेनाप्येतद्वारयितुं शक्यम् । विकारभेदकृतलक्ष्यभेदानाश्रयणादिति *केचित् । *तत्स्थानिक इव तत्स्थानिकस्थानिकेऽपि लोकन्यायेन तत्त्वबुद्धेः । *स्वस्थानिकादेशस्थानिकादेशकृतलक्ष्यभेदानाश्रयणेऽपि स्वस्थानिकादेशावयवस्थानिकादेशकृतलक्ष्यभेदानाश्रयणे मानाभाव इति "स्थानिवत्' ( पा० सू० १-१-५६ )सूत्रस्थभाष्याशयं परे । 'कुर्वन्तु'इत्यत्र "हलि च" ( पा० सू० ८-२-७७ ) इति दीर्घस्तु न । "नभकुर्छुराम्"( पा० सू० ८-२-७९ ) इति निषेधात् । लुकोऽसिद्धत्वादिति । *सार्वधातुक इत्यस्याभावेऽपि उकारान्ताङ्गावयवकरोतेरत उदित्यर्थात् । अङ्गसञ्ज्ञायाश्च लुक्यपि प्रत्ययलक्षणेन "युवोरनाकौ" ( पा० सू० ७-१-१ ) इत्यादिसूत्रभाष्ये स्वीकारेण सार्वधातुकग्रहणं स्पष्टार्थम् । एतत्सूत्रशेषस्थम् "इदं तर्हि प्रयोजनं सार्वधातुके भूतपूर्वमात्रेऽपि यथा स्यात् कुर्वीति" इति भाष्यं त्वेकदेश्युक्तिरिति बोद्धव्यम् ।

दश्च( पा० सू० ८-२-७५ ) । "सिपि धातोः"( पा० सू० ८-२-७४ ) इति सूत्रे पदस्येति चानुवर्तते । पदान्तस्येति किम् ? वेत्सि ।

---

*तनादिसाहचर्येणेति । युक्त्यन्तरमाह—*क्रियेति । सिद्धान्तमाह—*भाष्य इति ।

भाव्यमानत्वेन सवर्णाग्राहकतया तपरत्वमत्र व्यर्थमिति तस्योत्तरकालिकविकाराभावार्थत्वमस्त्वित्याशयेन मूले तपरत्वसामर्थ्यादिति । *केचिदिति । भाष्यविरोधोऽत्रारुचिः । ननु 'उदवोढाम्' इत्यतोऽस्य वैषम्यम् । तत्र हि अकारस्य वृद्ध्या आकारे कृते तस्मिन्नाकारे स्थानिवद्भावेन तत्त्वबुद्धिस्सम्भवति, प्रकृते तु न तथा । ऋकारस्याकारे गुणे तस्य स्थाने उकारादेशे कृते उकारे ऋकारबुद्ध्यसम्भवादतस्तदाशयमाह—*तत्स्थानिक इति । स्वमते भाष्याविरोधमाह—*स्वस्थानिकेति । ननु 'अन्तरङ्गानपि' इति न्यायेन हेर्लुकि कृते सार्वधातुकपरत्वाभावात्कथमुत्वमत आह—मूले लुक इत्यादि । वस्तुतस्तस्यानावश्यकत्वमाह—*सार्वधातुक इति ।

चर्त्वस्यासिद्धत्वाद्दोऽस्त्यत्र ।

श्नसोरल्लोप इति । शकन्ध्वादित्वात्पररूपम् । *अत्र सार्वधातुके इति निष्फलम् । आर्द्धधातुके तस्य भूभावात् । (१)'ईहामास' इत्यादौ "अत आदेः" (पा० सू० ७-४-७०) इति दीर्घे परस्य लोपेऽपि क्ङित्त्वाभावात् श्नस्य सार्वधातुके एव सत्त्वाच्च ।

आसन्निति 'आयन्' इतिवत्* ।

उपसर्ग(पा० सू० ८-३ ८७)। परस्येति सस्य विशेषणम् । तेन 'प्रादुरासीद्'इत्यत्र न षत्वम् । अस्तेः किम् ?। अनुसूते=अनुसूस्तस्यापत्यम्='आनुसेयः' इत्यत्र शुभ्रादित्वाड् ढकि "ढे लोपः" (पा० सू० ६-४-१४७) इत्युलोपे *सकारनिरूपितोपसर्गत्वसत्त्वेन षत्वापत्तेः ।

मृजेर्वृद्धि( पा० सू० ७-२-११४ )। अत्रास्याऽऽधृषीयस्य च 'मृजू' इत्यस्य ग्रहणं*व्याख्यानात् । लुग्विकरणपरिभाषा त्व*नित्यत्वादत्र न प्रवर्त्तते । 'धातोः कार्यमुच्यमानम्' इति परिभाषालब्धमर्थमाह—धातुप्रत्यये इति । तेन 'परिमृड्भ्याम्' इत्यादौ न । अजादाविति । *आद्यंशो "यस्मिन्विधिः" इति परिभाषालभ्यार्थानुवादः । मृड्ढीति । हेर्धिः । षत्वष्टुत्वजश्त्वानि ।

---

*अत्र="श्नसोः" ( पा० सू० ६-४-१११ ) इति सूत्रे ।

*इति वदिति । अल्लोपस्यासिद्धत्वादिति भावः ·

ननु "आनुसेयः'इत्यत्र कथमनो रुपसर्गत्वमत आह—*सकारनिरूपितेति । "यः शिष्यते' इति न्यायेन तस्यैव क्रियावाचकत्वात् ।

*व्याख्यानादिति । उभयोरपि धात्वोरूदित्त्वकरणेन व्यवस्थापकस्य वचनान्तरस्याप्रवृत्त्या चोभयोरपि ग्रहणं युक्तमित्येतन्मूलकादित्यर्थः । *अनित्यत्वादिति । "यस्य विभाषा" ( पा० सू० ७-२-१५ ) इति सूत्रभाष्ये 'विदितः' इत्यत्रेण्निषेधमाशङ्क्य 'यदुपाधेर्विभाषा'इत्यादिना लुग्विकरणपरिभाषाया "विभाषा गमहन" ( पा० सू० ७-२-६८ ) इति सूत्रे विशिसाहचर्याल्लुग्विकरणस्यैव ग्रहणमित्यनेन साहचर्यपरिभाषामूलकत्वसूचनात्साहचर्यपरिभाषायाश्च "क्ङिति" ( पा० सू० ८-३-४३ ) इतिसूत्रे कृत्वोर्थग्रहणेनानित्यत्वस्य ज्ञापनादियमप्यनित्येति भावः । अधिकमन्यत्र स्पष्टम् । *आद्यंशः=अजादावित्यंशः । वेति तु इहान्ये वैयाकरणा मृजेरजादौ सङ्क्रम इत्यत्रान्य इत्युपादानाल्लब्धः ।

---

(१) 'ईहामास' इति मध्यमपुरुषबहुवचनम् । प्रथमोत्तमैकवचनस्य किस्वाभावात् लोपाप्रवृत्तेरिति बोध्यम् ।

परत्वादिति । युगपत्प्रवृत्तौ द्वयोः स्वस्वनिमित्तानन्तर्यासंभव-रूपो विरोधोऽस्तीति भावः ।

रुदश्च( पा० सू० ७-३-९८ ) । हलादेः किम् ? व्यत्यरुदि । पञ्चभ्यः किम् ? । अजागः । *पित इति स्वरूपकथनम् । अपृक्तापितो ऽसम्भवात् । "तुरुस्तु" ( पा० सू० ७-३-९५ ) इत्यत्रैव तन्निवृत्तेश्च । सार्वधातुकस्येत्यप्येवम् । अरुदितामिति । तामादिविधौ धातोरित्यस्य विहितविशेषणत्वेन *निर्दिष्टपरिभाषानपेक्षणादन्तरङ्गत्वात्तामादयस्तत इट्। इदं "पादः पत्"(पा० सू० ६-४-१३०) इति सूत्रे भाष्ये स्पष्टम् ।

*प्रकृतीति । *प्रत्ययविशेषापेक्षयासुडपेक्षयाऽन्तरङ्गत्वात् "इतश्च"(पा० सू० ३-४-१००) इति लोपे यासुडीटोः प्राप्तयोरन्तरङ्गत्वाद्यासुडित्यर्थः । सामान्यधर्मापेक्षशास्त्रापेक्षया कश्चिद्विशेषधर्मोऽधिको निमित्तकोटौ यत्र विशेषापेक्षशास्त्रे ऽस्ति तत्ततो बहिरङ्गमिति तदर्थः । रुदादित्वं सार्वधातुकत्वञ्च तथा, सार्वधातुकत्वज्ञानाय प्रकृतेर्धातुत्वज्ञानं प्रत्ययस्य प्रत्ययत्वज्ञानं चावश्यकमिति सामान्यधर्मनिमित्तकत्वमप्य*त्रास्तीति बोद्धव्यम् । वस्तुत इदं बहिरङ्गत्वं भाष्ये क्वापि नाश्रितमिति परिभाषावृत्तौ निरूपितम् । तस्मान्नित्यत्वादत्र यासुटि कृतेऽपृक्तत्वाभावेनाडीटोः प्राप्त्यभावेन तयोरनित्यत्वादित्यन्ये ।

सुविनिर्दुर्भ्यः(पा०सू०८-३-८८) । सुपीत्यागन्तुनेकारेण कृतसंप्रसारणस्य ग्रहणम् । सुतीति क्तिन्नन्तं, समेति पचाद्यजन्तम् । साहचर्येण तस्यापि कृदन्तस्यैव ग्रहणात् । पूर्वन्धातुरुपेति । द्वित्वात्पूर्वं षत्वायेदम् । षत्वे कृते इति । *"सुपिभूतो द्विरुच्यते" इति भाष्यादिति भावः । *यदि तु सुपिसंबन्धिसस्येति सूत्रार्थोऽभ्याससोपि सुपिसंबन्धी भवत्येव, तदीयद्वितीयप्रयोगसम्बन्धित्वादित्युच्यते, तदा षत्वात्पूर्वं द्वित्वे-

---

"अस्तिसिचः" ( पा० सू० ७-३-९६ ) इति सूत्रादपृक्तग्रहणानुवृत्त्यैव सिद्धे पित इति किमर्थमत आह-*पित इतीति । *निर्दिष्टपरिभाषेति । तस्मादिति परिभाषेत्यर्थः । तदेकवाक्यतया वाक्यतया बोधस्त्वव्यवधानांशघटित इति गुरुभूत इति भावः । *प्रकृतीति । मूलोक्तमुपपादयति-*प्रत्ययेत्यादिना । *अत्र="रुदादिभ्यः" ( पा० सू० ७-२-७६ ) इतिसूत्रे ।

*सुपिभूत इति । एतेन पूर्वमुपसर्गयोगवादिमते साधकमुपन्यस्तम् । पूर्वं साधनयोग एवेतिभाष्यीयसिद्धान्तानुसारेणाह-*यदि त्वित्यादि । अभ्या-

ऽपि न दोषः । इदमेव युक्तम् । "पूर्वं धातुः साधनेन" इति सिद्धान्तात् । अत एव भाष्ये "सुपिभूतो द्विरुच्यते" इति प्रचुरः पाठः । अन्यथाऽभ्यासस्यानर्थक्यात्तत्सम्बन्धिनः पत्वमेव न स्यादिति निरूपितं "स्थादिषु"( पा० सू० ८-३-६४ ) इति सूत्रे । नित्यत्वाच्चेति । *अभ्युच्चयोऽयम् । सुपिरूपाभावादिति । अर्थवत्सुपिरूपाभावादित्यर्थः । *अन्यथैकदेशविकृतन्यायेन तत्त्वं दुर्वारमेव । अभ्यासस्य नार्थवत्त्वं नापि समुदायस्येत्यत्रैव सूत्रे "दयतेर्दिगि"( पा० सू० ७-४-९ ) इत्यत्र "सुट् कात्"(पा० सू० ६-१-१३५ ) इत्यत्र च भाष्ये स्पष्टम् ।

अनितेः( पा० सू० ८-४-१९ ) । "उपसर्गादसमासे"(पा० सू० ८-४-१४ ) इत्यत उपसर्गादिति वर्त्तते, नो ण इति च । अत्र समीपार्थकमन्तपदमपकृष्य(१) सप्तम्या विपरिणम्य *अनितेः समीपे यो रेफस्तस्मात्तस्य णत्वमित्यर्थः । सामीप्यञ्चाव्यवहितमेव व्याख्यानात् । 'प्राणिति' इत्यत्रैकादेशस्य परादिवत्त्वेनानितेरव्यवहितत्वं रेफस्यास्ति । स्थानिवत्त्वन्तु न । पञ्चमीसमासस्यानित्यत्वात् । 'पर्यनिति' इत्यादौ यकारेण व्यवधानान्न णत्वम् । अन्यथाऽडादिव्यवायेऽपि स्यादिति भाष्ये स्पष्टम् । "अन्तः"( पा० सू० ८-४-२० )इति सूत्रं 'हेप्राण्' इत्यत्र "पदान्तस्य"( पा० सू० ८-४-३७ ) इति प्रतिषेधबाधनार्थम् ।

अन्तापवाद इति । *यद्यप्यन्तरङ्गो ह्रस्वस्तथाप्य*पवादविषयं प्रकल्प्योत्सर्गाणां प्रवृत्तेर्न 'ग्रामण्ये कुलाय' इत्यादौ प्रवर्त्तत इति "तृतीयादिषु"(पा० सू० ७-४-७४) इति सूत्रकैयटोक्तरीत्या "प्रकल्प्य

---

सविकारे बाध्यबाधकभावादाह-*अभ्युच्चय इति । *अन्यथा=अर्थवत्त्वविशेषणघटितव्याख्यानाभावे ।

*अनितेः समीप इति । अव्यवहितसमीप इत्यर्थः । अपकर्षसामर्थ्यात् ।

"तृतीयादिषु" ( पा० सू० ७-१-७४ ) इति पुंवद्भावस्य नुमभावमात्रबोधकत्वमिति 'ग्रामण्ये कुलाय' इत्यादौ ह्रस्वत्वे घित्वाद् गुणापत्तिरितिशङ्कायाम् 'अर्थातिदेशात्सिद्धम्'इत्यादिना ह्रस्वत्वाभावोऽप्यतिदिश्यत इति भाष्ये प्रतिपादितम् । तत्र पुंवद्भावो विभक्तिसापेक्षत्वेन बहिरङ्गो ह्रस्वत्वन्त्वनैमित्तिकत्वेनान्तरङ्गमिति पुंवद्भावात्पूर्वमेव स्यादित्याशङ्कायाङ्कैयटेन यदुक्तं तदाह-

---

( १ ) "अन्तः"(पा० सू० ८-४-२०) इति सूत्रस्थमिति शेषः ।

चा*पवादविषयमुत्सर्गोऽभिनिविशते" इति भाष्योक्तन्यायमूलकेन 'उपसंजानिष्यमाणोऽप्यपवाद'न्यायेन दर्दतीत्यादौ अन्तरङ्गोऽप्यन्तादेशो न। 'ईर्त्सन्ति' इत्यादौ नायम्। 'अनतः' इत्यपकर्षात्(१)। *अत एव 'प्रतीषिषन्ति' इत्यादौ न।

जाग्रो (पा० सू० ७-३-८५)। चिण्णल्पर्युदासेन वृद्धिविषयस्य ङित्पर्युदासेन प्रतिषेधविषयस्य ग्रहणम्। विरत्रै*तच्छास्त्रकल्प्यो विन्। 'जागृविः' 'दर्विः' इत्याद्यव्युत्पन्नं प्रातिपदिकम्। उणादिषु पाणिनेरव्युत्पत्तिपक्षस्यैव सत्त्वात्। अत्रौणादिको विनिति चिन्त्यम्। एतच्च "उणादयः" (पा० सू० ३-३-१) इति सूत्रे निरूपयिष्यते। *विग्रहणसामर्थ्याज्जागृवौ लक्षणान्तरेणापि गुणो न। क्विप्तु न गृह्यते। शुद्धेकारपरस्यात्र ग्रहणात्। क्विपस्तु *सोऽनुनासिक इति भाष्ये स्पष्टम्। निषिध्यत इति। *'जागरकः' इत्यत्र गुणे कृते उपधावृद्धिस्तु न। चिण्णल्प्रतिषेधवैयर्थ्यापत्त्या जागर्तेर्गुणे उपधावृद्ध्यभावकल्पनात्। यत्तु गुणोत्तरं वृद्धिमात्राभावे एतज्ज्ञापकमाश्रित्य "ह्म्यन्त" (पा० सू० ७-२-५) इति सूत्रे जागृग्रहणं त्याज्यमिति, तन्न। सति सम्भवे सजातीयापेक्षत्वेव ज्ञापकस्योचितत्वयथस्य जागृग्रहणेन ज्ञापनादित्याहुः। "जाग्रः"(पा० सू० ७-३-८५) इति सूत्रस्थभाष्यस्य तु सामान्यापेक्षज्ञापकत्वे एव *स्वरसो दृश्यते।

---

*यद्यप्यन्तरङ्ग इति। *अपवादविषयमिति। अपवादस्य पुंवद्भावप्राप्यह्रस्वत्वाभावस्य विषयमित्यर्थः। *अत एव=अनत इत्यस्यापकर्षादेव। 'अपवादो यद्यन्यत्र चरितार्थः' इतिन्यायस्य तु नात्र विषयः। अन्तादेशाप्राप्तियोग्ये चारितार्थ्यविरहात्।

*एतच्छास्त्रकल्प्य इति। एतेनोणादीनामव्युत्पन्नत्वेऽपि न पर्युदासानुपपत्तिरिति ध्वनितम्। नन्वनेन गुणाभावेऽपि "सार्वधातुकार्धधातुकयोः" (पा० सू० ७-३-८४) इति स्यादेवेत्यत आह-*विग्रहणसामर्थ्यादिति। *सः=इकारः। ननु "जाग्रोऽवि" (पा० सू० ७-३-८५) इतिसूत्रेण गुणोत्तरं यदि वृद्धिप्राप्तिस्तदा 'जागरकः' इत्यत्र गुणोत्तरमुपधावृद्ध्यापत्तिरत आह-*जागेति। *स्वरसो दृश्यत इति। तत्र हि "यदयमचिण्णलोरिति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यो न गुणाभिनिर्वृत्तस्य वृद्धिर्भवतीति" एवमुक्तम्।

इद्दरिद्रस्य (पा० सू० ६-४-११४)। "गमहन" (पा० सू०६-४-९८)

---

(१) "आत्मनेपदेष्वनतः"(पा० सू० ७-१-५) इति सूत्रादिति शेषः।

इद्दरिद्रस्य(पा०सू०६-४-११४)। सौत्रो ह्रस्वः। "ई हल्यघोः" (पा०सू०६-४-११३) इत्यस्यापवादः । *आर्द्धधातुके लोपविधानात्सार्वधातुके एवेदम् । *आत इत्यनुवृत्त्या लोपोत्तरं नास्य प्रवृत्तिः ।

अनयोरात इति । श्नासाहचर्येणाभ्यस्तेऽप्यन्त्यस्यैव ग्रहणात् 'जाग्रति' इत्यत्र न दोषः । तत्साहचर्येणाभ्यस्तस्यापि सार्वधातुके एव लोप इत्याह-सार्वधातुके इति । आमिति । "कास्प्रत्ययात्"(पा० सू० ३-१-३५ ) इति सूत्रे भाष्ये स्पष्टमिदम् । औइत्येवेति । *ओकारस्य विवृततरत्वेन(१) यत्नलाघवादिति भावः । आलोप इति । *आर्द्धधातुके विवक्षिते लोपेऽपि औविधानसामर्थ्यादेव भूतपूर्वगत्याकारान्तत्वमाश्रित्य णल आदेश इति भावः । आम्नेति । *पक्षे इति भावः । *इदं मतं "वस्वेकाजाद्"( पा० सू० ७-२-६७ ) इति सूत्रे *भाष्ये ध्वनितं *कैयटेन स्पष्टमेवोक्तम् । सानण्वुलीति । 'अनन्तरस्य'इति न्या-

---

इत्यतः क्ङितीति "अत उत्" ( पा० सू० ६-४-११० ) इत्यतः सार्वधातुकपदञ्चानुवर्त्तत इति केचित्तत्राह-*आर्द्धधातुक इति । एवञ्चानुवृत्तिर्व्यर्थेति भावः । *आत इत्यनुवृत्त्या="श्नाभ्यस्त" ( पा० सू० ६-४-११२ ) इत्यत आत इत्यनुवृत्त्या ।

नन्वोकारौकारयोर्द्विमात्रत्वाविशेषात् कथं ज्ञापकत्वमत आह-*ओकारस्येति । नन्वालोपे कृते आकारान्तत्वविरहाद् "आत औ" (पा० सू० ७-१-३४ ) इत्यस्य न प्राप्तिरत आह-*आर्द्धधातुक इति । सामान्यत आम्नेत्यसङ्गतम् । "उषविद ( पा० सू० ३-१-३८ ) इत्यनेन तस्य विधानादत आह-*पक्ष इति । *इदस्मतम्=औकारविधानसामर्थ्यादाम्नेतिमतम् । *भाष्ये ध्वनितमिति । तत्र हि "एकाज्ग्रहणङ्किमर्थम् ?, इह मा भूत्—'बिभिद्वान्' । क्रियमाणेऽप्येकाज्ग्रहणेऽत्र प्राप्नोति । एषोऽपि ह्येकाच् । एवन्तर्हि कृते द्विर्वचने एकाच् । कथम् ? । एकाज्ग्रहणसामर्थ्यात् । न हि कश्चिदकृते द्विर्वचनेऽनेकाजस्ति यदर्थमेकाज्ग्रहणं क्रियते । ननु चायमस्ति जागर्त्तिः । 'जागृवांसो अनुग्मन्' । ( छन्दसि वेति वक्तव्यम्' ( का० वा० ) इति द्विर्वचनाभावः । ) यत्तर्ह्याकारग्रहणङ्करोति न हि कश्चिदकृते द्विर्वचने आकारान्तोऽनेकाजस्ति । ननु चायमस्ति दरिद्रातिः । न दरिद्रातेरिटा भवितव्यम् । किङ्कारणम ?, उक्तमेतत् । दरिद्रातेरार्द्धधातुके लोपः सिद्धश्च प्रत्ययविधौ" इति भाष्ये उक्तम् । अत्र दरिद्रातेरिट्शङ्कया आम्नेति ध्वनितमित्यर्थः । *कैयटेनेति । तेन हि-दरिद्रातेरनित्य आम् इति

---

( १ ) अस्य "औकारस्य च विवृततमत्वेन" इति शेषः । तदुक्तं शिक्षायाम्-"तेभ्योऽपि विवृतावेङौ ताभ्यामैचौ तथैव च ॥" इति ।

येन वार्तिकप्राप्तस्यैव निषेधः। तेन 'दिदरिद्रिषति' इत्यत्रातो लोपो भवत्येव। "दिदरिद्रिषतीत्येके दिदरिद्रासतीति वा" इति भाष्यात्। अदरिद्रासीदिति। *अयं प्रयोग "इद्दरिद्रस्य" (पा० सू० ६-४-११४) इति सूत्रे भाष्ये।

इत्येके इति। "भि च" (पा० सू० ८-२-२५) इत्यत्र "सिचो ग्रहणं कर्त्तव्यम्" इति वार्त्तिकादिति भावः। भाष्यमिति। "इष्टमेवैतत्संगृहीतं भवति"... "इष्टमेवैतच्चकाधि" इति भाष्योक्तेः। सिचोऽनुवृत्तेरभावोऽपूर्वकरणञ्चानिष्टावहमिति *तद्भावः।

तिप्यनस्तेः (पा० सू० ८-२-७३)। अनस्तेः किम्? सलिलं *सर्वमा इदम्। 'आः' इति लङि तिप्यस्ते रूपम्। "बहुलं छन्दसि" (पा० सू० ७-३-९७) इति ईट् न।

सिपि धा (पा० सू० ८-२-७४)। सिपि वेत्येव दत्वविकल्पे सामान्यसूत्रेणैव रुत्वे सिद्धे धातोरुरिति "दश्च" (पा० सू० ८-२-७५) इत्यु*त्तरार्थम्।

शास इति। अङ्योग्यस्यैव शासेर्ग्रहणाद् 'आशास्ते' इत्यादौ नेति भाष्ये स्पष्टम्।

शा हौ (पा० सू० ६-४-३५)। इत्वापवादः। यद्यपि पूर्वसूत्रे शास इत्यत्रावयवषष्ठी तथापीहोपधापदनिवृत्त्या *स्थानषष्ठ्येव।

पश्चेति। *अत एव "दीधीवेवी" (पा० सू० १-१-६) इति

---

"आत औ णलः" (पा० सू० ७-१-३४) इत्योकारे विघातऽप्ये औकारविधानेन ज्ञापितम्। *अयम्प्रयोग इति। एतेन "लुङि वा" (का० वा०) इत्यत्र प्रमाणमुपन्यस्तम्।

*तद्भावः=भाष्यकारस्य भावः।

*सर्वमा इदम्। "अस्तिसिचः" पा० सू० ७-३-९६) इतीडभावाय छान्दसमुदाहरणमुपन्यस्तम्।

*उत्तरार्थम्="दश्च" (पा० सू० ८-२-७५) इति सूत्रेऽनुवृत्त्यर्थमित्यर्थः। न च "ससजुषः" (पा० सू० ८-२-६६) इतिसूत्रानन्तरं "अस्तेः" इतिसूत्रङ्कार्यमनेन दत्वस्य बाधे सिद्धेऽनस्तेरिति न वाच्यमिति, तु न शङ्क्यम्। योगविभागेन पुनर्विधानसामर्थ्येन बाधकल्पनापेक्षया यथान्यासे प्रतिपत्तिलाघवात्।

*स्थानषष्ठीति। शब्दाधिकारात्।

*अत एव=छान्दसत्वादेव।

सूत्रे "दीधीवेव्योः छान्दसत्वात्" इति भाष्यं, "जक्षित्यादयः" (पा० सू० ६-१-६) इति सूत्रे "षसिवशी छान्दसौ" इति भाष्यञ्च ।

यीवर्णयोर्दी (पा० सू० ७-४-५३) । "तासस्त्योः" (पा० सू० ७-४-५०) इत्यतो लोप इत्यनुवर्त्तते । यिश्च इवर्णश्चेति द्वन्द्वः । यीत्यत्रेकार उच्चारणार्थस्तदाह—यकार इति । नित्यत्वादित्यन्तरङ्गत्वस्याप्युपलक्षणम् । टेरेत्वमिति । *"अचः परस्मिन्" (पा० सू० १-१-५७) इति सूत्रे 'आदीध्ये' इति भाष्यप्रयोगादिति भावः । आदीधयतेर्ण्वुलि अन्तरङ्गत्वेन णिलोपात्पूर्वं "यीवर्णयोः" (पा० सू० ७-४-५३) इति लोपे 'आदीधकः' इति सिद्धम् । यत्तु "नाग्लोपि" (पा०सू० ७-४-२) इति सूत्रे भाष्ये वर्णग्रहणसामर्थ्यात्*लुप्तेऽपीत्युक्तम् । तत्तु अन्तरङ्गत्वमनालोच्य । एवञ्चान्तरङ्गपरिभाषाया अनित्यत्वे एतज्ज्ञापकमिति बोद्धव्यम् । एतेन वर्णग्रहणसामर्थ्याच्छ्रूयमाण इवर्ण एव लोप इति हरदत्ताद्युक्तमपास्तम् । वेवीङोऽनन्तरमाङःशास्विति पठ्यते इति "जक्षित्यादयः"(पा० सू० ६-१-६) इति सूत्रस्थ*भाष्यस्वरसः ।

षसस्सस्ति । "जक्षित्यादयः" (पा०सू०६-१-६) इति *सूत्रस्थ-

---

ननु नित्यत्वाट्टेरेत्वमित्यसङ्गतम् । कृतेऽप्येत्वे भूतपूर्वगत्या लोपप्रवृत्तेः । यीवर्णयोरित्यत्र यि इवर्णयोरिति छेदात् । द्विवचननिर्देशेन इवर्णान्तरपरिग्रहसामर्थ्याद् भूतपूर्वगतिरिहाश्रीयते । अत एव दीधीङो णिजन्तात् ण्वुलि णिलोपेऽपि कृतेऽनेनान्त्यलोप इति चेन्न । "अचः परस्मिन्" (पा० सू० १-१-५७) इतिसूत्रस्थभाष्यप्रयोगविरोधात् तदाह-*अच इति । *लुप्तेऽपीति । 'आदीधकः' इत्यत्र दीधयतेर्ण्वुलि णिलोपस्य स्थानिवत्त्वादित्यर्थः । तत्र हि "णेर्णिच्युपसंख्यानम्" (का० वा०) इत्यनेन 'अवीवदत्' इत्यस्य सिद्धौ "चङ्परनिर्ह्रासः" इत्यनर्थकमिति मनसि निधाय 'अममालत्' इत्यत्र टिलोपस्य स्थानिवत्त्वादनुपधात्वादेव सिद्धावग्लोपिग्रहणम्मास्त्विति शङ्किते हलच्समुदायस्य 'अत्यरराजत्' इत्यादौ लोपे प्राप्नोतीत्याशङ्क्यावयवलोपेनाग्लोपित्वमिवावयवाचमाश्रित्यैव स्थानिवत्त्वप्राप्तिरितिशङ्कायामग्लोपिग्रहणमेवोत्तरत्र स्थानिवत्त्वाभावे ज्ञापकमस्त्वित्युक्ते 'आदीधकः' इत्यत्र यीवर्णयोरिति न प्राप्नोतीति पूर्वपक्षे वर्णग्रहणसामर्थ्यात्स्थानिवत्त्वमित्युक्तम् । *भाष्यस्वरस इति । तत्र हि "जक्षित्यादिषु सप्तग्रहणं वेवीत्यर्थम्" (का० वा०) इतिवार्त्तिकस्यापरिगणनमागणान्तत्वादित्यनेन प्रत्याख्याने कृते आङः शास्वित्यत्रातिप्रसङ्गमाशङ्क्यास्त्वित्यनेनेष्टापत्त्या समाहितमिति ।

*सूत्रस्थभाष्यस्वरसादिति । तत्र हि-"षसिवशी छान्दसौ" इ-

भाष्यस्वरसात्तु सस्तिधातुरत्र नास्तीति प्रतीयते । *तत्रैव कैयटे 'षस शास्ति स्वप्ने' इत्येके पठन्ति । तत्र श्तिपानिर्देशेन शास एवार्थभेदात्पुनः पाठ इत्युक्तम् । माधवानुरोधात्तु मूलपाठः । तदनुसारेणैव पञ्चानां छान्दसत्वोक्तिः । अस्तः, असदिति । "सिपि धातोः" ( पा० सू० ८-२-७४ ) इति वा रुः । सन्तीति । इदित्वान्नुमि "स्कोः" ( पा० सू० ८-२-२९ ) इति सलोपे "झरो झरि" पा० सू० ८-४-६५ ) इति पक्षे तलोपः । इत्येके इति । अत्रारुचिबीजन्तु "हलोऽनन्तराः" ( पा० सू० १-१-७ ) इति सूत्र*भाष्यविरोधः । तत्रत्यभाष्यादप्ययमप्रामाणिकः । अन्यथा बहूनां सन्निधाने बहूनामेवेति पक्षे मसूजधाताविवात्रापि दोषात्तदनुक्तौ बीजानापत्तिः । वश कान्तौ । अस्य भाषायां प्रयोगो*ऽसाधुरेव । उड्ढीति । संप्रसारणधित्वषत्वजश्त्वष्टुत्वानि । अवट् इति । लङि हल्ङ्यादिलोपे षत्वजश्त्वचर्त्वानि । औष्टाम् । संप्रसारणेऽजादित्वादाट् । यद्यपि लावस्थायामडिति पक्षे आड् न प्राप्नोति । तथापि भाव्यजादेरपि तेनाऽऽड्विधानान्न दोषः । तत्पक्षे 'ऐज्यत' इत्यादिसिद्धयेऽटमेवाश्रित्य आटः प्रत्याख्यानाच्च ।

चर्करीतञ्चेति । चर्करीतमिति *यङ्लुकः सञ्ज्ञा । तेन तदन्तग्रहणं सामर्थ्यात् । *"किराति चर्करीतान्तम्" इति सप्तमे भाष्योक्तेः । अदादाविति । तेन यङ्लुगन्ताच्छबेव न तु तत्तद्गणप्रयुक्तः श्यनादिः, शपो लुक्च । परस्मैपदिन उपक्रम्या*स्य पाठादस्य परस्मैपदित्वमेवेति बोद्ध्यम् ।

इत्यदादयः ।

---

त्युक्तम् । अत्र कैयटः-'षस सस्ति स्वप्ने' इति ये न पठन्ति केवलं षस स्वप्ने वश कान्ताविति तन्मतेनैतदुक्तम् । मतान्तरं तेनोक्तम्, तदाह- *तत्रैवेत्यादिना । *भाष्यविरोध इति । तत्र हि बहूनां समवायेऽपि निर्गलैयान्निर्ग्लायान्निर्म्लैयान्निर्म्लायादित्यादौ "वान्यस्य संयोगादेः" ( पा० सू०६-४-६८) इत्येतस्य वैकल्पिकप्रवृत्तिः स्वीकृता । *असाधुरेव । 'षसिवशी' इति पूर्वोक्तभाष्यात् । औष्टामित्यत्र सम्प्रसारणे अजादित्वादाडित्युक्तन्तच्च लावस्थायामजादित्वाभावान्न प्राप्नोतीति वाच्यम् । भाव्यजादेरप्याड्विधानात् ।

*यङ्लुकः संज्ञेति । न तु तदन्तस्य संज्ञा । तत्रोपष्टम्भकम्भाष्यमाह-*किरतिमिति । *अस्य-यङ्लुगन्तस्य । इत्यदादिविवरणम् ।

भाष्यमिति । "तृतीया च होः" ( पा० सू० २-३-३ ) *इत्यत्र । दानं प्रसिद्धश्चेद् 'विप्राय जुहोति' इत्यपि स्यादत आह-प्रक्षेप इति । वैध इति । आहवनीयाग्न्यादिरूपे । *तत्र प्रज्वालनाय प्रक्षिप्यमाणकाष्ठादावतिप्रसङ्गनिवृत्तये आह-हविषश्चेति ।

जुहुत इति (१)श्लोः परनिमित्तत्वाभावेन श्नुत्वेन स्थानितया-*ऽजादेशत्वाभावेन च स्थानिवद्भावेन श्नुत्वमाश्रित्य न गुणः ।

परत्वादिति । "हुश्नुवोः" ( पा० सू० ६-४-८७ ) इत्येतदपेक्षयेति भावः ।

भियोऽन्य ( पा० सू० ६-४-११५ ) । "गमहन" ( पा० सू० ६-४-९८ ) इत्यतः क्ङितीति वर्तते । *अभ्यस्तस्येत्यनुवृत्त्या* सार्वधातुक इत्यनुवृत्त्या वा 'भीतः' इत्यादौ न दोषः । पॄ । *दीर्घोच्चारणमुत्वाय ।

उदोष्ठ्य ( पा० सू० ७-१-१०२ ) । अङ्गावयवौष्ठ्येति 'ॠ गतौ' इति क्र्यादेः क्ते 'समीर्णः' इति यथा स्यादिति *तत् ।

---

## अथ जुहोत्यादिविवरणम् ।

*इत्यत्रेति । एवञ्च ह्लादानुकूलो व्यापारो हुधात्वर्थः । *तत्र=वैधे आधारे ।

*अजादेशत्वाभावेनेति । स्थानितावच्छेदकत्वेनोपात्तस्य धर्मस्य यच्छ्नुत्वावच्छिन्नपर्याप्तत्वन्तन्नैव स्थानिवद्भावप्रसक्तिः । वस्तुतोऽत्र द्वितीयकोटिरभ्युच्चयवादेन । अत एव णिलोपस्य स्थानिवद्भावसिद्धिः(२) ।

*अभ्यस्तस्येति । यद्यपि "श्नाभ्यस्तयोः" ( पा० सू० ६-४-११२ ) इति सूत्रेऽभ्यस्तयोरित्युपात्तम्, तथाप्येकदेशानुवृत्त्या विभक्तिविपरिणामेनैवमुक्तम् । अत एव क्लेशादाह-*सार्वधातुक इति । *दीर्घोच्चारणमिति । 'पॄ' इत्यत्र दीर्घोच्चारणम् "उदोष्ठ्यपूर्वस्य" ( पा० सू० ७-१-१०२ ) इत्युत्वाय ।

*तत्=अङ्गावयवेइत्युपादानम् ।

श्रृदृप्रामिति । न च "ऋच्छत्यृताम्" ( पा० सू० ७-४-११ ) इति प्राप्तस्य गुणस्य विकल्पेन सिद्धौ ह्रस्वविधानमनर्थकमिति वाच्यम् । 'वार्णादाङ्गम्'

---

( १ ) "न लुमताऽङ्गस्य" ( पा० १-१-६३ ) इति निषेधात् प्रत्ययलक्षणाप्रवृत्तेः । "स्थानिवत्" ( पा० सू० १-१-५६ ) इति स्थानिवद्भावस्तु न प्रत्ययपर्याप्तस्थानिताकलोपे प्रत्ययलक्षणमेवेति नियमात् ।

( २ ) तस्माद् "अचः परस्मिन्" ( पा० सू० १-१-५७ ) इति स्थानिवद्भावस्य "अल्विध्यर्थमिदम्" इत्युक्तेरल्विधावेव प्रवृत्तेरत्र न प्रवृत्तिरिति बोध्यम् ।

शृदॄ (पा० सू० ७-४-१२)। *ह्रस्वविधानस्य किमेव फलमिति सूचयितुं-क्तीति। गुणाभावे "वार्णादाङ्गम्" इति यणं बाधित्वोत्वापत्त्या गुण एव न विकल्पितः।

भृञामित् (पा० सू० ७-४-७६)। बहुवचनादाद्यर्थावगतिः। "णिजाम्" (पा० सू० ७-४-७५) इत्यतस्त्रयाणामित्यनुवर्त्तते।

ईहल्य (पा० सू० ६-४-११३)। श्नासाहचर्यादभ्यस्तांशेऽपि सार्वधातुक एवेदम्।

जहातेश्च (पा० सू० ६-४-११६)। अभ्यस्तस्येत्यनुवृत्त्याऽस्य "लोपो यि" (पा० सू० ६-४-११८) इत्यस्य च सार्वधातुके एव प्रवृत्तिः।

दत्त इति। अघोरिति प्रतिषेधादीत्वाभावे "श्नाभ्यस्त" (पा० सू० ६-४-११२) इत्यालोपः। अदात्। "गातिस्था" (पा० सू० २-४-७७) इति सिचो लुक्।

दधस्त (पा० सू० ८-२-३८)। झषन्तस्य वश इत्यनुवृत्तिसामर्थ्याद्द्विरुक्तग्रहणेन ध इत्येव सिद्धे 'दधः' इति *स्पष्टार्थम्। झषन्तस्येति किम्?, दधाति। नन्वाल्लोपस्य स्थानिवत्त्वाद् 'धत्तः' इत्यादावपि न स्यादत आह-वचनेति। पूर्वत्रासिद्ध इति। एवञ्च वामनादीनां वचनसामर्थ्याश्रयणं वृथेति भावः।

णिजान्त्र (पा० सू० ७-४-७५)। श्लाविति किम्?, निनेज। *कपिञ्जलाधिकरणन्यायस्यात्र शास्त्रेऽनाश्रयणबोधनाय त्रयाणामिति, "भृञामित्" (पा० सू० ७-४-७६) इत्युत्तरार्थम्। अत्र तु नोपयोगः। गणान्ते पाठेन त्रयाणामेव निजादित्वस्य वक्तुं शक्यत्वात्।

नाभ्यस्तस्य (पा० सू० ७-३-८७)। अभ्यस्तस्य किम्?, द्वेषाणि। आचिकिम्?, नेनेक्ति। *पितीत्युत्तरार्थम्। अत्र थलीड् नेति। ओ-

---

इतियणम्बाधित्वोत्वापत्तेस्तदाह-*ह्रस्वविधानस्येत्यादि।

*स्पष्टार्थमिति। सामर्थ्यादर्थविशेषकल्पनापेक्षया सौत्रनिर्देशेन तस्यार्थस्य कल्पने स्पष्टप्रतिपत्तिर्भवतीति भावः।

*कपिञ्जलाधिकरणेति। तत्र यथा बहुवचनेन त्रयाणामेव ग्रहणमिति प्रतिपादितन्तद्वत्।

नाभ्यस्तस्याचि पिति (पा० सू० ७-३-८७)। 'अनन्तरस्य' इतिन्यायेन लघूपधगुणस्यैवायम्प्रतिषेधः। नन्वत्र पितीति व्यर्थम्। अपिति ङित्त्वादेव

विजी इत्यस्यैवेति । तौदादिकस्य रौधादिकस्यैव च तत्र ग्रहणं *व्याख्यानादिति भावः ।

अभिजिहर्तीति । अत्रापि छान्दसत्वादित्वम् । इयूतीति । यणः "अचः परस्मिन्" ( पा० सू० १-१-५७ ) इति स्थानिवत्त्वात् "लोपो व्योः" ( पा० सू० ६-१-७६ ) इति यलोपो न । यलोपे स्थानिवत्त्वनिषेधस्तु *लोपरूपाजादेशस्यैवेति दिक् । ऐय इति । द्वित्वेऽभ्यासस्येत्वे इयङि उत्तरखण्डे गुणे रपरत्वे हल्ङ्यादिलोपे विसर्गे आटि वृद्धिः । लावस्थायामडिति पक्षेऽपि "बहुलं छन्दस्यमाङ्" ( पा० सू० ६-४-७५ ) इति बहुलग्रहणा*त्तदुत्तरमत्राट् । "बहुलंछन्दसि" ( पा० सू० ७-४-७८ ) इति सिद्धे "अर्तिपिपर्त्योश्च" (पा० सू० ७-४-७७) इत्यत्रार्त्तिग्रहणाज्ज्ञापकाल्लोके प्रयोगेऽपि छान्दसप्रकरणे पाठात्क्वचिदेव लोके साधुत्वं न सर्वत्रेति बोद्धव्यम् । *अत एव ऋलृक्सूत्रे भाष्ये उक्तम्—"अर्त्तिप्रवृत्तिश्चैव लोके लक्ष्यते" इति । *प्रकारान्तरमपि 'इङ्' धातावुक्तम् 'केचित्तु' इत्यादिना । दधन्त इति । 'चक्षंसे' इतिवन्न दीर्घः ।

जजायादिति । "ये विभाषा" ( पा० सू० ६-४-४३ ) इत्यात्वम् । जिगीत इति । "बहुलं छन्दसि" ( पा० सू० ७-४-७८ ) इत्यभ्यासस्येत्वम् । "ईहल्यघोः" ( पा० सू० ६-४-११३ ) इति ईत्वम् ।

इति जुहोत्यादयः ।

दिवु । उदित्त्वम् "उदितो वा" ( पा० सू० ७-२-५६ ) इति क्त्वायामिड्विकल्पार्थम् ।

सेऽसिचि (पा० सू० ७-२-५७) । स इत्यकारोऽविवक्षितः ।

---

गुणाभावस्य सिद्धेरत आह–*पितीत्युत्तरार्थमिति । "उतो वृद्धिः" ( पा० सू० ७-३-८९ ) इत्युत्तरसूत्रार्थमित्यर्थः । *व्याख्यानादिति । प्रकृतसूत्रे ङिद्ग्रहणं "गाङ्कुटादिभ्यः" ( पा० सू० १-२-१ ) इत्यतोऽनुवर्त्तते । तस्मिन्सूत्रे च कुटादिपदेन श्रूयमाणविकरणकस्यैव ग्रहणमिति प्रकृतसूत्रेऽपि श्रूयमाणविकरणकस्य विज्धातोर्ग्रहणमित्येतन्मूलकादित्यर्थः ।

*लोपरूपेति । स्वरदीर्घेतिनियमात् । *तदुत्तरम्=आदेशनिमित्तककार्योत्तरम् । *अत एव=लोकेऽपि प्रयोगादेव । *प्रकारान्तरमिति । लावस्थायामडागमेऽपि शब्दान्तरप्राप्त्या वृद्धेरनित्यत्वाद्द्वित्वेऽभ्यासकार्ये च कृते वृद्धिरिति बोध्यम् । 'दधन्तः' इति यङ्लुगन्तस्य रूपम् । "अनुनासिकस्य" ( पा० सू० ६-४-१५) इति दीर्घस्तु न । बहुलग्रहणात् । इतिजुहोत्यादिविवरणम् ।

असिचीति पर्युदासात् । सादेरित्यर्थलाभो यथा तथा "तीषसह" ( पा० सू० ७-२-४८ ) इत्यत्र *निरूपितम् । तृप्तेरिति । यद्यपि प्रतीघातोऽपि चक्यर्थस्तथापि प्रकृते तृप्तेरेव ग्रहणम् । "पूरणगुण" ( पा० सू० २-२-११ ) इति सूत्रे सुहितार्थशब्देन तृप्तेरेव ग्रहणस्याऽऽकरे उक्तत्वादिति भावः । जेरतुरिति । "ऋच्छत्यृताम्" (पा० सू० ७-४-११) इति गुणे "वा जॄभ्रमु" ( पा० सू० ६-४-१२४ ) इत्येत्वविकल्पः ।

दीङो युड ( पा० सू० ६-४-६३ ) । "उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्" इत्यचीति षष्ठ्यर्थे सप्तमी तदादिविध्यर्थेत्याशयेनाह-अजादेरिति । *उत्तरार्था च सप्तमीत्यपि बोध्यम् ।

युटि कृतेऽपि तस्यासिद्धत्वेन यणप्राप्तिमाशङ्क्याह-वुग्युटाविति ।

मीनाति ( पा० सू० ६-१-५० ) । अत्रैच इति उपदेश इति च वर्त्तते । उपदेशपदश्च तदुत्तरकालपरम् । एच इत्यस्य 'विषये सति' इति शेषः । एवञ्चैचो विषये सति उपदेशोत्तरकाले एव आत्वमित्यर्थः । स्पष्टश्चेदं भाष्ये । एवञ्चाशितीत्यनुवृत्तेः *फलं चिन्त्यमिति परे ।

लीलीङोरिति । *क्र्यादिराधृषीयश्च निरनुबन्धः परस्मैपदी ।

---

# अथ दिवादिविवरणम् ।

*निरूपितम् । वलादिग्रहणानुवृत्तेः ।

*उत्तरार्था="आतो लोपः" (पा० सू० ६-४-६४) इतिसूत्रेऽनुवृत्त्यर्था । एतेन दीङ इति पञ्चम्या अकृतार्थत्वात्तद्बलेन सप्तम्यन्तस्य षष्ठ्यन्तत्वकल्पनं युक्तमेव ।

उपदेशोत्तरकालमिति । व्याख्यानादात्वस्यैज्निमित्तप्रत्ययविषयेऽनुत्पन्न एव प्रत्यये प्रवृत्तिः । अत एव 'उपदाय' इत्यत्र घञ्प्रत्ययः सिध्यति । अन्यथा भावे परत्वात् स्यात् ।

*फलश्चिन्त्यमिति । शित्प्रत्ययस्य श्यनः श्नोश्चैज्निमित्तत्वाभावादेव व्यावृत्तिः ।

विभाषा लीयतेः ( पा० सू० ६-१-५१ ) । यका निर्देश इति । न च "सार्वधातुके यक्" ( पा० सू० ३-१-६७ ) इतिविहितो यक् धात्वर्थफले आश्रयान्वयविवक्षायाम्भवति प्रकृते च न तद्द्योत्यार्थसद्भाव इति कथं यगिति वाच्यम् । सौत्रत्वेन यकः साधुत्वात् । यत्तु 'विभाषा लियः' इत्येव सूत्र्यतान्तावतैव सर्वेषां ग्रहणम्भविष्यति किं सर्वसङ्ग्राहकयङ्निर्देशेन इति मतम्, तन्न युक्तमित्याशयेनाह-*क्र्यादिराधृषीयश्चेति । 'ली' श्लेषणे 'ली' द्रवीकरणे इत्युभ-

स्वादय इति । गणसूत्रमेतत् । 'घूङ्' इत्यारभ्य व्रीङन्ता इत्यर्थः । ओदित इत्यतिदेशः । सकर्मक इति । *अत्र *मानन्तु चिन्त्यम् । षोऽन्त । अन्तकर्म=नाशनम् ।

पतेति । *अत्र पाठे प्रमाणं प्रयोगमाह—द्युनद्यामेनि । पक्षान्तरे इति । परं तु नित्येषु शब्देषु स्थान्यादेशत्वानुपपत्तिमाशङ्क्य बुद्धिविपरिणामेन परिहृत्य "एवं तर्हि अपवादे उत्सर्गकृतं प्राप्नोति" इत्याशङ्क्य "नापवादे उत्सर्गकृतं भवति । यदयं *श्यन्नादीन्कांश्चिच्छितः करोति" इति श्यनः शित्त्वस्य ज्ञापकतोक्ता स्थानिवत्सूत्रे भाष्ये । न च पित्त्वनिवृत्तये नियमार्थं शित्त्वमिति वाच्यम् । नित्त्वसामर्थ्यादेव तत्सिद्धेः । तद्ध्या*द्युदात्तार्थम् । श्यनः पित्त्वे तु पित्त्वादेवानुदात्तत्वे लसार्वधातुकानुदात्तत्वे च धातुस्वरेणैव सिद्धे किं तेनेति तदाशयः । न च ताच्छील्यादिविषये *चानशि प्रकृतेरा*द्युदात्तार्थं नित्त्वमिति वाच्यम् । 'अन्यत्र विकरणेभ्यः' इत्युक्त्या तत्र श्यन्स्वराप्राप्तेः । न च *तस्यापि *तत्सामर्थ्या-

---

यत्र निरनुबन्धकपाठात् । एवञ्च निरनुबन्धकपरिभाषया तयोरेव ग्रहणापत्तिः । 'लीङः' इतिनिर्देशे त्वस्यैव ग्रहणापत्तिरिति यका निर्देशेन निरनुबन्धकपरिभाषाया बाधात्सर्वेषां ग्रहणं सिध्यतीति भावः । अत्र परस्मैपदीत्येतस्योपादानं वस्तुस्थितिकथनाय न तु प्रकृते किञ्चिदस्य प्रयोजनम् । *अत्र=प्रीङ्धातोः सकर्मकत्वे । *मानश्चिन्त्यमिति । अनन्यथासिद्धस्य साधकस्यालाभात् । न च "रुच्यर्थानाम्प्रीयमाणः" ( पा० सू० १-४-३३ ) इति निर्देश एव साधक इति वाच्यम् । तेन निर्देशेन तत्र धातूनामनेकार्थतया विषयत्वावच्छिन्नप्रीत्यनुकूलव्यापारस्य धात्वर्थत्वात् । तस्य निर्देशस्य दर्शनेन मूलकृता सकर्मक इत्युक्तम् । आधेयत्वावच्छिन्नप्रीत्यनुकूलव्यापारस्य धात्वर्थत्वं सर्वत्र । 'प्रीयमाणः' इतिनिर्देशस्तु सौत्र इति प्रकृतग्रन्थाभिप्रायः ।

षोऽन्तकर्मणि । कर्मशब्दोऽत्र क्रियापरः ।

*अत्र पाठे=पतेतिपाठे । *श्यन्नादीनिति । अत्रादिना "गापोष्टक्" ( पा० सू० ३-२-८ ) इति टकः कित्त्वस्य सङ्ग्रहः । तेन श्यनः शकारस्य "ओतः श्यनि" ( पा० सू० ७-३-७१ ) इत्यत्र विशेषणार्थतया ज्ञापकत्वासम्भवशङ्का निरस्ता । *आद्युदात्तार्थम्=प्रकृतेराद्युदात्तार्थम् । एवञ्च 'दीव्यते' इति पदमाद्युदात्तम्भवति । *चानशीति । 'दीव्यमानः' इत्यत्र ताच्छील्यादिविषये चानशीत्यर्थः । *आद्युदात्तार्थमिति । यद्यपि तत्र चित्त्वादन्तोदात्तत्वम्भवति, तथापि तत्रैतस्यापि चित्त्वप्रयुक्तस्वरस्य बाधोऽस्त्वित्याशयः । *तस्यापि=अन्यत्र विकरणेभ्य इत्यस्यापि । *तत्सामर्थ्यात्=नित्त्वसामर्थ्यात् ।

द् बाधः । तद्बाधकल्पनापेक्षयाऽतिदेशप्राप्तपित्त्वबाधस्यैवौ*चित्यात् । वा-वृतु इत्यस्यानेकाचः सत्त्वे तत्र *धातुस्वरेणासिद्धेर्नित्त्वस्यावश्यकतया *त-त्सामर्थ्याभावेन पित्त्वनिवृत्तये ङित्त्वस्यावश्यकत्वाद्भाष्यासङ्गतिः स्पष्टैव । *भट्टिप्रयोगे तु वाशब्दस्येवार्थतया कामयमानेव न तु तथा किन्तु च्छलनार्थमागतेत्यर्थान्न दोषः । "वृत्ते तु वृत्तवावृत्तौ" इति कोशोक्तत्वाद्वृ-त्तशब्दस्तु *पृषोदरादित्वात् । पित्त्वनित्त्वयोरविशेषमुक्त्वा चानाशि विशेषं प्रदर्शयतः कैयटस्याप्यनेकाचो धातोरत्र गणेऽभाव एव स्वरसः । न च ज्ञापकत्वान्नियमार्थत्वे लाघवं सर्वथानुपपन्नस्यैव ज्ञापकतया नियमार्थत्वे ज्ञापकत्वस्यैवासम्भवात् । किं च नियमार्थत्वे एकत्रैवातिदेशबाधो ज्ञापक-त्वं तु अनेकत्रेति *नियम एव युक्त इत्याहुः ।

क्लेद इति । *अत एव क्लिन्नं शुक्तमिति प्रयोगः ।

तशब्दे इति । स चात्रात्मनेपदप्रथमैकवचनं पदेस्तस्यैव सम्भ-वात् । अबोधीति । "दीपजन" ( पा० सू० ३-१-६१ ) इति चि-ण् । युधमिच्छतीति । "व्यत्ययो बहुलम्" ( पा० सू० ३-१-८५ ) इति सूत्रभाष्ये तु "प्रतीपमन्य ऊर्मिर्युध्यति" इत्यत्र व्यत्ययेन *परस्मै-पदमित्युक्तम् । *एतद्भाष्यविरोधादनुदात्तेत्त्वप्रयुक्तात्मनेपदा*नित्यत्व-मपि चिन्त्यमेव । अकर्मक इति । अकर्मकोऽपीत्यर्थः । अतः "सृजियुज्योः सकर्मकयोः कर्मवद्भावः" इति "कर्मवत्"(पा० सू० ३-१-८७)सूत्रस्थवा-र्त्तिकेन *न विरोधः । स्त्रष्टेति । "सृजिदृशोः"(पा०सू० ६-१-५८)इत्यम् ।

---

*औचित्यादिति । एवं सति "मध्येऽपवादाः पूर्वान्विधीन्बाधन्ते" इतिन्यायस्या-प्यनुसरणम्भवतीति भावः । *धातुस्वरेणासिद्धेः=प्रकृतेराद्युदात्तत्वासिद्धेः । *तत्सामर्थ्याभावेन=नित्त्वसामर्थ्याभावेन । भट्टिप्रयोगस्य तु गतिमाह—*भट्टीत्या-दि । *पृषोदरादित्वादिति । एवञ्च तत्र "यस्य विभाषा" ( पा० सू० ७-२-१५ ) इतीट्प्रतिषेधे कर्त्तव्ये पञ्चमीसमासमाश्रित्य स्थानिवद्भावो न भवति । *नि-यम एव युक्त इति । एवञ्च समकक्षत्वे लाघवस्य साधकत्वन्तदेव नात्रेति भावः ।

*अत एव=क्लेदस्य पूतीभावपदार्थत्वादेव ।

मूले कथं युध्यतीति । युधधातोरनुदात्तेत्त्वात्परस्मैपदानुपपत्तिरिति भावः । *एतद्भाष्येति । व्यत्ययेन परस्मैपदप्रतिपादनपरभाष्येत्यर्थः । *अनि-त्यत्वमपीति । अपिना युधमिच्छतीति मूलोक्तप्रकारपरिग्रहः । इच्छार्थस्य निय-मेनास्मात्प्रतीतिरित्यत्र मानाभावोऽपि बोध्यः । *न विरोध इति । एतत्तत्त्व-न्तत्रैव निरूपयिष्यते । समाध्यर्थे तु अकर्मक एव ।

*एवकारादर्थान्तरे राधः श्यन्न स्यादत आह–भिन्नेति । *अत एवाकर्मकादि*ति सार्थकम् । उदाहरणमिति । तथा च वृद्धावित्युपलक्षणम् । अत एव "राध्यत्योदनः स्वयमेव" इति "कर्मवत्" ( पा० सू० ३–१–८७ ) सूत्रस्थभाष्यप्रयोगोपपत्तिरिति भावः । हिंसार्थस्येति । 'शत्रुमपराध्नोति' इत्यादौ हिनस्तीत्यर्थदर्शनात् । चुरादिश्चेति । ज्ञेय इति शेषः । तथा प्रयोगदर्शनादिति भावः ।

"श्लिषः" ( पा० सू० ३–१–४६ ) इति प्रतिप्रसवविधिस्तदाह–अङोऽपवाद इति । पुषाद्यङस्त्व*न्ये पुषादयोऽवकाशः । यद्वा *वक्ष्यमाणनियमपर्यालोचनयाऽनालिङ्गने चरितार्थस्याङोऽयमपवाद इति भावः । सिच्फलं दर्शयति—अश्लिक्षत अश्लिष्टाइति । अत्रादादेश-"झलो झलि" ( पा० सू० ८–२–२६ ) इतिलोपयोः सिद्धिरिति भावः । ररन्धतुरिति । *परत्वान्नुमि सत्य*कित्वान्न नलोपः ।

नशेः षान्त ( पा० सू० ८–४–३६ ) । "नभाभू" ( पा० सू० ८–३–४४ ) इत्यतो नेति वर्त्तते । भूनपूर्वेति । स्पष्टश्चेदं भाष्ये । *नञा प्रापितनिषेधस्यैव क्रादिसूत्रेण नियम इति मतेनाह—दुद्रोढ दुद्रोहिथेति । वस्तुतो *'दुद्रोहिथ' इत्येकमेव रूपं न्याय्यम् । आगणान्तादिति । यत्तु "अस्यतेस्थुक्" ( पा० सू० ७–४–१७ ) इति सूत्रमत्र लिङ्गमिति, तन्न । "अस्यतिवक्ति" (पा० सू० ३–१–५२) इत्यनेनात्मनेपदे तङि *तस्य चारितार्थ्यात् ।

---

"राधोऽकर्मकाद् वृद्धौ" । अन्तर्गणसूत्रमेतत् । अत्र य एवकारस्तस्यान्यत्र सम्बन्धे बीजमाह–*एवकारादिति । *अत एव=एवकारस्य भिन्नक्रमत्वादेव । *इति सार्थकमिति । एवकारस्य भिन्नक्रमत्वाभावे राधो वृद्धावेवेत्युक्तेऽपि वृद्धिप्रतिपादकस्याकर्मकत्वाव्यभिचारादकर्मकादिति व्यर्थं स्यादिति ।

*अन्ये पुषादय इति । न च पुषादिषु श्लिषः पाठवैयर्थ्यमिति वाच्यम् । 'समश्लिषज्जतु काष्ठम्' इत्यत्र प्रत्यासत्त्यर्थकत्वे तस्य चारितार्थ्यात् । *वक्ष्यमाणनियमेति । 'आलिङ्गने' ( पा० सू० ३–१–४६ ) इतिविभक्तसूत्रसिद्धनियम इत्यर्थः । *परत्वान्नुमि=कित्वापेक्षया परत्वान्नुमि । *अकित्वादिति । संयोगात्परत्वादिति भावः ।

मूलकारोक्तरीत्याह–*नञा प्रापितेति । नञ्वाशब्दान्यतरप्रापितेति पूर्वोक्तसिद्धान्तिमतेनाह–*दुद्रोहिथेत्येकमेवेति । *तस्य=थुकः ।

दाहे पठित इति । दित्रादावेवेत्यर्थः । 'युपरुपलुप' इति पाठः । उदित्पाठो लेखकप्रमादात् धातुवृत्त्यादिविरोधात् ।

इह पाठ इति । दिवाद्यन्तर्गणपुषादावित्यर्थः । श्यन्नर्थ इति । *एवञ्च पुषादेः प्रागेव *पठितुं युक्त इति भावः । *अत्र गणे 'त्रुट छेदने' इति पठन्ति, चुरादौ च । चुरादेर्नित्यण्यन्तत्वात् 'त्रोटति' इत्यस्य सिद्धये "वा भ्राश" (पा० सू० ३-१-७०) इत्यत्र त्रुटिग्रहणम् । "ददत् दणातेर्दीर्यतेर्वा" इति भाष्यात् दधातुरप्यत्र बोध्यः, तदाह- स्वादिवदाकृतिगण इति ॥

इति दिवादयः ।

*सुरासन्धानं=सुरोत्पादनप्रकारः । सुन्व इति । "लोपश्चास्य"( पा० सू० ६-४-१०७ ) इति वा उलोपः । सुनु इति । "उतश्च"( पा० सू० ६-४-१०६ ) इति हेर्लुक् । 'सुनवानि'इत्यत्र "हुश्नुवोः"( पा० सू० ६-४-८७ ) इति यणं बाधित्वा परत्वाद् गुणः ।

सुनोतेः स्य( पा० सू० ८-३-११७ ) "न रपर"( पा० सू० ८-३-११० )इत्यतो नेति वर्त्तते । सन्यभिसुसूषतेरप्रत्यये *'अभिसुसूः' इत्युदाहरणम्, अन्यत्र "स्तौतिण्योरेव" ( पा० सू० ८-३-६१ ) इति "स्थादिष्वभ्यास" ( पा० सू० ८-३-१६४ ) इति च नियमादेव तदभावसिद्धेः ।

विभाषा चेः (पा० सू० ८-३-५८) । "चजोः"( पा०सू० ७-३-५२) इति सूत्रात्कुरिति "अभ्यासाच्च" (पा० सू० ७-३-५३) इति "सन्लिटोर्जेः"(पा० सू० ७-३-५३)इत्यतः सन्लिटोरिति चानुवर्त्तते ।

ऋतश्चसं( पा० सू० ७-२-४३ ) "इट्सनिवा" ( पा० सू० ७-२-४१) इत्यत इड् वेति "लिङ्सिचोः" ( पा० सू० ७-२-४२ )इति

---

*एवञ्च=दिवादिपाठस्य श्यन्नर्थत्वे च । *पठितुं युक्तः । अन्योऽन्यथासिद्धेः । *अत्र=दिवादौ । इति दिवादिविवरणम् ।

## अथ स्वादिविवरणम् ।

सुरासन्धानमिति समस्तपाठः । तदाह—*सुरेति ।

*अभिसुसूरिति । अभिपूर्वकात्सुनोतेः सनि "सुनोतेः" (पा० सू० ८-३-११७) इत्यनेन षत्वनिषेधे "अज्झन" (पा० सू० ६-४-१६) इति दीर्घे रूपम्

सूत्रश्चानुवर्त्तते । *न च लावस्थायामटि संयोगादित्वाभावाद् 'अस्तरिष्ट' इत्यसिद्धिः, संयोगादिरिति कर्मधारयोऽङ्गस्येति तद्विशेषणमिति संयोगसञ्ज्ञासूत्रभाष्योक्तपक्षेऽप्यङ्गाद्यवयवसंयोगात्परस्य ऋकारस्येत्यर्थादसिद्धिरेवेति वाच्यम् । अत्र सिजनुवृत्तिसामर्थ्येनाडागमे भूतपूर्वसंयोगादित्वमादाय शास्त्रप्रवृत्तेर्ज्ञापनेनादोषात् । *अत एव 'अस्तर्यत' इत्यादौ "गुणोर्ति" ( पा० सू० ७-४-२९ ) इति गुणसिद्धिरिति दिक् ।

*क्रादिनिषेधादेव सिद्धे 'ववर्थ'ग्रहणं निगम एवेति नियमार्थं, तदाह—तेनेति ।

लिङ्सिचोः( पा० सू० ७-२-४२ ) । "वृतः" ( पा० सू० इति "इट्सनिवा"( पा० सू० ७-२-४१ ) इत्यत इड् वेति च वर्त्तते ।

न लिङि( पा० सू० ७-२-३९ ) । वृत इति दीर्घ इति च वर्त्तते । अचरीष्टेति । "वृतो वा" ( पा० सू० २०-२-३८ ) इति दीर्घः ।

प्रहिणोतीति । गुणस्य *स्थानिवत्त्वाद् 'हिनु'शब्दोऽत्र "पूर्वत्रासिद्धे न स्थानिवत्" ( प० भा० ) इत्यस्य "तस्य दोषः संयोगादिलोप"( का० वा० ) इत्यादिना निषेधात् । स्पष्टश्चेदं भाष्ये । *बहिरङ्गपरिभाषा तु नैपादिकेऽन्तरङ्गे नेत्यसकृदावेदितम् ।

हेः ( पा० सू० ७-४-५६ ) । अचङीति पर्युदासो न्याय्यः । आप्नुवन्तीति । संयोगपूर्वकत्वाद् "हुश्नुवोः"( पा० सू० ६-७-८७ ) इति *यण्, 'उतश्च"( पा० सू० ७-४-१२१ ) इतिहेर्लुक् च न ।

---

"ऋतश्च संयोगादेः" (पा० सू० ७-४-१०) इतिसूत्रे "लिङ्सिचोः" (पा० सू० ७-२-४२) इतिसमुदायस्यानुवृत्तिपक्षे सिज्विषयेऽसम्भवमाशङ्कते—*न चेति । *अत एव=पूर्वोक्तज्ञापकादेव ।

'ववर्थ' इतिनिपातनस्य नियमार्थत्वमुपपादयति—*क्रादिनिषेधादेवेति ।

*स्थानिवत्त्वात्='सर्वे सर्वपदादेशाः' इतिन्यायेन स्थानिवत्त्वात् ।

*बहिरङ्गपरिभाषा त्विति । इदन्धातूपसर्गयोः कार्यस्यान्तरङ्गत्वमभ्युपेत्य तस्याः प्रवृत्तिस्वीकारेणान्तरङ्गे णत्वप्रतिषेधे कर्त्तव्ये बहिरङ्गस्य गुणस्यासिद्धत्वादेव सिद्धे स्थानिवद्भावस्यात्र नोपयोग इति कस्य चिच्छङ्कानिवारणायोक्तम् । 'पूर्वं धातुः साधनेन युज्यते' इति सिद्धान्तिसम्मतेऽर्थे तु तस्याः प्राप्तिरेव नास्तीति बोध्यम् ।

*यणिति । अस्य नेत्यत्र सम्बन्धः । किन्तु "अचिश्नु" (पा० सू० ६-४-७७) इत्युवङ् ।

राधो ( पा० सू० ६-४-१२३ )। *अत इत्यनुवर्त्तमानेऽपि सामर्थ्यात्तपरत्वलभ्यार्थबाधः, *श्नाभ्यस्तयोरातः"(पा० सू० ६-४-११३) इत्यतो मण्डूकप्लुत्या आत इत्यनुवृत्तिर्वा ।

अशू । अयं परस्मैपद्यपीति "उपदेशेऽत्वतः"( पा० सू० ७-२-६२ ) इति सूत्रस्थ*भाष्यस्वरसः ।

अश्नोतेश्च( पा० सू० ७-४-७२ ) । तस्मान्नुडिति वर्त्तते । अशेरिति वक्तव्येऽश्नातिव्यावृत्त्यर्थं श्नुनिर्देशः ।

इहाप्याश्रीयत इति । *"सदेः परस्य लिटि"(पा०सू० ८-३-११८) इति सूत्रस्थः 'परिषस्वजे' इति भाष्यप्रयोगो 'देभतुः'इति "अत एक"( पा० सू० ६-४-१२० ) इति सूत्रस्थभाष्यप्रयोगश्चेह मानम् । *दम्भेश्च"( का० वा० ) इति "अत एक"( पा० सू० ६-४-१२० ) इति सूत्रे भाष्ये वार्त्तिकम् । सुधाकरादय इति । *अत्रारुचिबीजन्तु "श्रन्थिग्रन्थि"( व्याकरणान्तरं वाक्यम् ) इत्यत्र लिट्पदस्य कित्पदस्य च कर्त्तव्यतापत्त्या गौरवमिति । मम तु व्याकरणान्तरेऽपि "असंयोगात्" ( पा० सू० १-२-५ ) इति कित्प्रकरण एवैतदिति तयोरकर्त्तव्यता स्पष्टैव । *अत एव भाष्ये प्रथमोपस्थितणलं विहाय 'देभतुः'इत्युदाहृतं

---

राधो हिंसायाम् (पा० सू० ६-४-१२३) । अत्रात इत्यवश्यमनुवर्त्तनीयम् । अन्यथा "अलोऽन्त्यस्य" (पा० सू० [illegible]) इत्यन्त्यस्य स्यात्तथा च तपरत्वबोध्यार्थस्यासत्त्वात्कथमत्र प्रवृत्तिरत आह-*अत इत्यादि । अत इत्यस्य प्रकृतसूत्रे असम्बधेऽप्याह—*श्नाभ्यस्तयोरिति ।

*भाष्यस्वरस इति । तत्र हि-"तासावत्वत्प्रतिषेधे घसेः प्रतिषेधप्रसङ्गोऽकारवत्त्वात् । सिद्धन्तु हलादिग्रहणात् । हलादिग्रहणं कर्त्तव्यम् । तच्चावश्यं कर्तव्यम् । अस्यशी प्रयोजयतः । अस्यशी तावच्च प्रयोजयतः । तासावनिट इत्युच्यते सेटौ चेमौ तासौ । अञ्ज्यशू तर्हि प्रयोजयतः । तासौ नित्यानिट इत्युच्यते विभाषितेटावेतौ" । एतस्य भाष्यस्य थलप्रसङ्गेन प्रसक्तस्य यस्मात्थलः सम्भवस्तत्रैव प्रवृत्तिर्वाच्या । तेनास्य परस्मैपदसम्बन्धित्वमपि इति ध्वनितमिति कल्प्यते । आत्मनेपदित्वन्तु अनुदात्तादेव सिद्धम् ।

'दम्भु' दम्भने । दम्भो नाम लोकानुरञ्जनार्थं कर्मानुष्ठानम् । व्याकरणान्तरीयवचनस्येह व्याकरणे प्रवृत्तौ मानमाह—*सदेः परस्येत्यादि । "दम्भेश्च" (का० वा०) इत्यस्य सूत्रत्वभ्रमं वारयति—*दम्भेश्चेत्यत एकेतीति । पिदपिद्विषयकमितिवादिनो मतेऽस्यापूर्वत्वमेव वाच्यम् । एवञ्च लिट्पदङ्कित्पदञ्चापूर्वङ्कार्यमित्याह—*अत्रेत्यादि । *अत एव=अस्य वचनस्यापिद्विषय-

"दम्भेश्च" ( का० वा० ) इत्येत्वविधायके । तृप । *अत्रत्योऽयं *सेट्कः । छन्दसीति *गणसूत्रम् ।

इति स्वादयः ।

आर्द्धधातुके इति । *'बरीभृज्यते' इत्यत्र रीको रेफस्य न निवृत्तिरभ्यासस्य *नैरर्थक्यात्, समुदायस्य तु न भ्रस्जित्वं द्विप्रयोगपक्षे दुरुपपादत्वात्, अतो न 'तन्मध्यपतित' न्यायेन तत्र प्राप्तिशङ्का । उपदेश इत्यनुवृत्त्या रीको रेफस्य 'बरीभृज्यते' इत्यादौ रमागमव्यावृत्तिरित्येतत्परभाष्योक्तिस्तु एकदेशिनः । "दयतेर्दिगि" (पा० सू० ७-४-९) इति सूत्रसंमतया न्यायसिद्धयो*क्तरीत्या प्राप्तेरेवाभावात् । रम्यकार उच्चारणार्थः । रोपधेत्यत्र च *रोपधयोः स्थाने=प्रसङ्गे रम्प्रयुज्यते, रोपधे न प्रयुज्येते इत्यर्थः । बभ्रज्जतुरिति । संयोगात्परत्वात्किच्वाभावः । नन्वाशीर्लिङि संप्रसारणं बाधित्वा परत्वाद्रमि 'सकृद्गति' न्यायेन संप्रसारणाभावे पुनःप्रसङ्गविज्ञानेन संप्रसारणेऽप्याद्गुणे 'भर्ज्यात्' इति स्यादत आह—पूर्वविप्रतिषेधेनेति । संप्रसारणरमोः 'भृज्जति' 'भर्ष्टा' इत्यवकाशौ, कृताकृतप्रसाङ्गित्वमात्रेण संप्रसारणं नित्यमित्यपि *सुवचम् । न च ऋकारान्तर्गतरेफमादाय रमपि नित्यः । सिद्धान्ते वर्णग्रहणे वर्णैकदेशाग्रहणादिति स्पष्टं भाष्ये ।

---

कत्वादेव । *अत्रत्यः=स्वादिषु पठितः । *सेट्कः । 'तृप्यतिदृप्यती' इति तत्र पाठात् । *गणसूत्रमिति । तस्याधिकारित्वे गणे पठिता ये धातवस्तेषां च्छान्दसत्वमेवेति सिद्धम् । इति स्वादिविवरणम् ।

## अथ तुदादिविवरणम् ।

दिश अतिसर्जने । अयं केवलो दाने प्रयुज्यते । उपसर्गवशेन त्वर्थान्तरेऽप्यस्त्यस्य प्रयोगः । अत एव "तस्मिन्निति निर्दिष्टे" (पा० सू० १-१-६६) इति सूत्रव्याख्यानावसरे 'निःशब्दो नैरन्तर्यवचनः । दिशिरुच्चारणक्रियः' इति व्याख्यानं सङ्गच्छते । ननु "भ्रस्जो रोपधयोरमन्यतरस्याम्" (पा० सू० ६-४-४७) इतिसूत्रे रोपधयोरितिषष्ठीनिर्देशाद्भ्रस्जेः सम्बन्धिनो रेफस्य निवृत्तिस्वीकारे 'बरीभृज्यते' इत्यत्र रीको रेफस्य निवृत्त्यापत्तिरत आह—*बरीत्यादि । *नैरर्थक्यमिति । भ्रस्ज इति रोपधयोरर्थविशिष्ट एव विशेषणम् । *उक्तरीत्येति । अनर्थकत्वरूपयोक्त्या । रम आगमत्वेऽपि यथाऽस्य प्रसङ्गेन रोपधयोर्निवृत्तिस्तथार्थमाह—*रोपधयोः स्थान इति । *सुवचमिति । एवञ्च पूर्वविप्रतिषेधो न स्वीकार्य इति भावः ।

अक्रुक्षतेति । क्सादेशे तङेकवचने, सिच्पक्षे बहुवचने च 'अनतः' इत्यदादेशे एतदेव रूपम् । अक्रुक्षन्तेति । क्सादेशे ऽनत इत्युक्तेरदादेशो न । कुन्मात्रेति । *अवधारणे मात्रशब्दः । "ऋच्छत्यृताम्"( पा० सू० ७-४-११ ) इति 'ऋच्छति'शब्देन धातुपाठे साक्षात्पाठादस्यैव ग्रहणं न ऋधातोः।*प्रश्लेषेणैव तस्य सिद्धत्वाच्च । *अत एव सूत्रे बहुवचनम् । नन्वस्य तुकि तस्य चुत्वेन चकारे लिटि द्वित्वे ऽभ्यासकार्ये "ऋच्छति"( पा० सू० ७-४-११ ) इति गुणे त्रिहल्त्वान्नुट् न स्यादत आह-अनेकहलिति ।

तृप तृम्फ । "शे मुचादीनाम्"( पा० सू० ७-१-५९ )इतिसूत्रभाष्ये 'शे तृम्पादीनां नुम्वाच्यः, तृम्पति तृम्फति' इति पाठदर्शनादा*द्योऽपि सनकार इति प्रतीयते । मूलन्तु धातुवृत्त्यनुसारीति बोध्यम् । अङपवादत्वादिति । "उत्सर्गसमानदेशा अपवादाः" इति न्यायादिति भावः । किं च तत्रा*नयोर्ग्रहणे पक्षे सिजभावे च्लेरेव श्रवणोपपत्तौ 'च्लिःक्वापि न श्रूयते' इति भाष्यविरोधः । वृण च । *यत्तु "रुधादिभ्यः"( पा० सू० ३-१-७८ ) इति सूत्रे भाष्ये 'पृणाति' इत्यादौ "प्वादीनाम्"( पा० सू० ७-३-८० ) इति ह्रस्वाय श्नमः शित्त्वम् । न वा धात्वन्यत्वात् । पृणिमृणी तौदादिकौ धात्वन्तरम्"इत्युक्त्वा"यत्तर्हि न धात्वन्तरं वृणसे इति, तत्तु तद्योग्यं धात्वन्तरं नेत्यभिप्रायकम् । अस्य परस्मैपदित्वात् । परे तु व्यत्ययेन श्नम्वत् तेनैवात्मनेपदसम्भवात्तद्भाष्यप्रामाण्येनास्याप्रामाणिकत्वमेवेत्याहुः । करोतेरेवेति । *व्याख्यानादिति भावः । लिख । 'लिखितुम्' इत्यादि *प्रामादिकमेव । 'कुङ'

---

*अवधारण इति । एवञ्चायं कुटादित्वातिदेशः कृत्संज्ञकप्रत्ययपरस्य एवेति सिद्धम् । *प्रश्लेषेणेति । ऋच्छति ऋ ऋताम्=ऋच्छत्यृतामिति प्रश्लेषेणेत्यर्थः । *अत एव=ऋकारप्रश्लेषादेव ।

तृप तृम्फ । *आद्यः=तृपधातुः । *अनयोः=तुदादिपठिततृपदृपधात्वोः । वृण च । अयमपि धातुः प्रीणने द्रष्टव्यः । अस्य तुदादौ पाठे भाष्यविरोधाशङ्कां वारयितुमुपक्रमते—*यत्त्विति । *व्याख्यानादिति । यद्यपि करोतेः कुर इति स्वरूपं लाक्षणिकं तथापि "विदाङ्कुर्वन्त्वित्यन्यतरस्याम्" (पा० सू० ३—१—४१ ) इतिलक्ष्यदर्शनमूलकव्याख्यानात्तस्य ग्रहणमिति भावः । *प्रामादिकमेवेति । अस्य कुटादिबहिर्भूतत्वेन ततो जातस्य

मदे । अस्य कुटादित्वसामर्थ्याद् *ञ्णिन्लक्षणवृद्धेरपि निषेध इति *क-
श्चित् । *'अशोकवनिका' न्यायेनात्र पाठ इति परे ।

*तङिति आनस्याप्युपलक्षणम् । अन्तरङ्गत्वादिति । "ना-
जानन्तर्ये" ( प० भा० ) इति तु न । समकालप्रवृत्तिकत्वात् *तस्या
असत्त्वाच्च ।

अडभ्यासेत्यादि । अत्र यद्वक्तव्यं तत्तनादौ वक्ष्यते ।

गिरतेरिति । *व्याख्यानात् "ग्रो यङि" इत्यत्रास्यैव ग्रहण-
मिति भावः । अजादाविति । 'धातोः कार्यमुच्यमानम्' इति परिभाषा-
सन्निधापितस्य प्रत्ययस्यार्चीति विशेषणमिति भावः । *अत एव 'गिरौ'
इत्यादौ न । "मृजेर्वृद्धिः"(पा० सू० ७-२-११४) इत्यादौ भाष्ये स्पष्ट-
मेतत् । आद्रियते इति । रिङ्, इयङ् । प्रष्टेति । "व्रश्च"(पा० सू० ८-

---

तुमुनो ङित्वाभावेन निषेधाप्राप्तेः । *अनिग्लक्षणवृद्धेः="अतो हलादेः" (पा०
सू० ७-२-७) इतिप्राप्तायाः । *कश्चिदिति । 'कडति' इतिरूपसिद्ध्यर्थन्तुदादा-
घस्य क्व चित्पाठस्यावश्यकत्वम् । तत्र कुटादिबहिर्भावेन तेषु वा पाठे न
लाघवगौरवविचार इत्यरुचिबीजम् । भ्वादौ पाठे तु "शप्श्यनोः" (पा० सू०
७-१-४१) इतिसूत्रविषयता स्यात् । अत एवाह—*अशोकेति ।

'मृङ्' प्राणत्यागे । अस्य धातोर्ङित्वादात्मनेपदे सिद्धे "म्रियतेः" (पा०
सू० १-३-६१) इतिसूत्रन्नियमार्थम् । स चात्मनेपदसामान्यस्य न तु तङ एवे-
त्याशयेनाह—*तङित्यानस्येति । ननु "म्रियतेः" (पा० सू० १-३-६१) इतिसूत्र-
स्य विध्यर्थत्वमेवास्तु धातोर्ङित्त्वम्मास्त्वितो मूले स्वरार्थमिति । मा हि मृते-
त्यत्र ङितः परत्वेन लसार्वधातुकानुदात्तत्वे धातोरुदात्तत्वस्य श्रवणम्भवति ।
न च सिज्लोपस्य स्वरे कर्त्तव्येऽसिद्धत्वापत्तिरिति वाच्यम् । अस्य ङित्वसा-
मर्थ्येनासिद्धत्वस्य बाधादित्याहुः । रि पि गतौ । रियति । लघूपधगुणादन्तर-
ङ्गत्वादियङ् । *तस्याः=नाजानन्तर्यपरिभाषायाः ।

*व्याख्यानादिति । "अचि विभाषा (पा० सू० ८-२-२१) "णावुपस-
ङ्ख्यानम्" (का० वा०) इहापि यथा स्यात् निगार्यते, निगाल्यते" । इत्युक्त्वा
णिलोपे कृतेऽच्परत्वाभावादन्यथा न स्यादित्युक्त्वा "अचः परस्मिन्" (पा०
सू० १-१-५७) इति स्थानिवद्भावमाशङ्क्य 'पूर्वत्रासिद्धे न स्थानिवत्' इतिवच-
नोत्तरम्भाष्ये पठितम्-गिरतेर्लत्वे णावुक्तम् । किमुक्तम् ? । "तस्य दोषः संयोगा-
दिलोपलत्वणत्वेषु" इति । अत्र गिरतेरितिकथनेनास्य ग्रहणमिति स्पष्टमेवे-
त्येतन्मूलकव्याख्यानादित्यर्थः ।

*अत एव='धातोः कार्यम्' इतिपरिभाषयोपस्थितस्य विशे-

२-३६) इति षः । न च षत्वस्यासिद्धत्वात्पूर्वं तुकि छस्य षत्वे 'प्रष्ठा' इति स्यादिति वाच्यम् । अत्रापि सतुक्कनिर्देशात् । मज्जतीति । सस्य श्चुत्वजश्त्वे । अन्त्यात्पूर्वं इति । *एतत्फलन्तु 'मग्नः' इत्यादौ नलोपः । ततः संयोगादिलोपः । ममङ्क्थेति । जस्य कुत्वे नस्यानुस्वारे परसवर्णे गस्य चर्त्वं बोद्धव्यम् । मङ्क्ष्यतीति । स्ये सस्य षत्वं *विशेषः । तङर्थ इति । पूर्वपाठस्तु कर्त्रभिप्रायेऽपि परस्मैपदार्थः । विदॢ । 'विन्तो भोग"( पा० सू० ८-२-५८ ) इति सूत्रस्थकैयटे 'विदिर्लाभे' *इति पठ्यते ।

इति तुदादयः ।

जश्त्वं ष्टुत्वमित्यादि । *अत्र प्रक्रियाप्रदर्शनमात्रे तात्पर्यं न तु क्रमे । *शिंड्ढीति । सानुस्वार एव पाठः । अनुस्वारस्यादिष्टादचः पूर्वत्वेन स्थानिवत्त्वाप्रवृत्तावपि "दीर्घादाचार्याणाम्"( पा० सू० ८-४-५२ ) इत्युत्तरम् "अनुस्वारस्य ययि" "वा पदान्तस्य"( पा० सू० ८-४-५८ ) "तोर्लि"( पा० सू० ८-४-६० ) "उदः स्था"( पा० सू० ८-

ष्यत्वादेव । *एतत्फलम्=अन्त्यापूर्वं इत्यस्य फलम् । *विशेषः=पूर्वोक्तप्रक्रियातो विशेषः । *इति पठ्यते इति । तस्य धातुस्वरूपप्रतिपादने तात्पर्यमिति शेषः । न तु लृदित्त्वाभावे । तथा सत्यङभावापत्तिः स्यात् । षिच क्षरणे । क चित्त्वयमिरित्पठितः । सोऽपपाठः । "लिपिसिचिह्वश्च" (पा० सू० ३-१-५३) इतिनित्यमङ्विधानात् । इति तुदादिविवरणम् ।

## अथ रुधादिविवरणम् ।

रुधादिभ्यः श्नम्(पा० सू० ३-१-७८) । अस्य मित्त्वेऽपि प्रत्ययाधिकारपाठात्प्रत्ययत्वमपि । अत एव शस्येत्त्वम् । शकारोच्चारणन्तु "श्नान्नलोपः" (पा०सू० ६-४-२३) इत्यत्र विशेषणार्थम् । तेन यज्ञानामित्यत्र न दोषः । न च शः श्रवणार्थं एवास्तु । "तृणहः" (पा० सू० ७-३-९२) इतिनिर्देशात् । न च श्नमः प्रत्ययत्वे 'भनक्ति' इत्यत्र दीर्घापत्तिरिति वाच्यम् "यस्मात्प्रत्ययविधिः"(पा० सू० १-४-१३) इत्यस्य यद्रूपावच्छिन्नमुद्दिश्य प्रत्ययविधिरित्यर्थात् । स च धर्मो रुधेत्याद्यानुपूर्वीरूपस्तदाश्रयत्वन्नावयवानाम् । समुदायस्याप्यत्र नाङ्गत्वन्तत्प्रत्ययपरत्वाभावात् । शप्त्वेभ्यो न । 'सत्यपि सम्भवे बाधनम्' इति न्यायेन श्नमो बाधकत्वात् । रुधादिभ्यो धातुभ्योऽन्त्यादचः परः श्नम् प्रत्ययो भवतीति वाक्यार्थो बोध्यः । ननु शिण्ढिशब्दव्युत्पादनावसरे जश्त्वं ष्टुत्वमित्युक्तम्, तन्नायुक्तम् । ष्टुत्वदृष्ट्या जश्त्वस्यासिद्धत्वादत आह—*अत्र प्रक्रियेति । भाष्योक्तसिद्धान्तानुसारेणाह—*शिंड्ढीति सानुस्वार इति ।

४–६१ ) "झयो हो"( पा० सू० ८–४–६२ ) "शश्छोटि"( पा० सू० ८–४–६३ ) इति "षट्सूत्रीपाठोत्तरं "झलाञ्जशझशि"( पा०सू० ८–४–५३ ) "अभ्यासे चर्च"( पा०सू० ८–४–५४ ) "खरि च"( पा० सू० ८–४–५५ ) "वाऽवसाने"( पा० सू० ८–४–५६ ) "अणोऽप्रगृह्यस्य"( पा० सू० ८–४–५७ ) इति पञ्चसूत्रीपाठ इति भाष्यसंमताष्टाध्यायीपाठपक्षे परसवर्णदृष्ट्या "झलाञ्जग्"( पा० सू० ८–४–६४ ) इत्यस्य "झरो झरि"( पा० सू० ८–४–६५ ) इत्यस्य चासिद्धत्वेन यय्परत्वाभावात् परसवर्णाप्राप्तेरित्यन्यत्र विस्तरः ।

तृणहः( पा० सू० ७–३–९२ ) । *श्नमि कृते इम् यथा स्यादिति श्नमो निर्देशः । अन्यथा *'येननाप्राप्ति'न्यायेन श्नमो बाधकः स्यात्तदाह–श्नमि कृत इति ।

अञ्जेः सिचि(पा०सू० ७–२–७१)।ऊदिल्लक्षणविकल्पापवादः।

इति रुधादयः ।

तन्व इति । "लोपश्चास्यान्यतरस्याम्"( पा० सू० ६–४–१०७ ) इति वा लोपः । आत्रेयादय इति । अत्रारुचिस्तु तदनित्यत्वे भाष्यानुक्तत्वम् । '*क्षिणु' इत्यादिप्रयोगास्तु 'बहुलमेतन्निदर्शनम्'( चु० ग० सू० ) इतिरीत्या क्षिधातुं स्वादावप्यङ्गीकृत्य निर्वाह्या इत्यन्ये । तत्र पठित एव *भाषायामपीत्येके ।

---

तृणह इम् (पा० सू० ७-३-९२) । मूले एतत्सूत्रव्याख्यानावसरे तृहः श्नमि कृत इति यदुक्तन्तत्फलमाह–*श्नमि कृत इत्यादिना । *येन नाप्राप्तिन्यायेनेत । श्नमि कृतेऽपि तन्मध्यपतितन्यायेन श्नम्विशिष्टस्य तृहग्रहणेन ग्रहणं स्यादिति येन नाप्राप्तिन्यायस्येह सम्भवः । इति रुधादिविवरणम् ।

## अथ तनादिविवरणम् ।

"तनादिभ्यस्तथासोः" (पा० सू० २-४-७९) इत्यत्र साहचर्याश्रयणे नैकवचनस्य ग्रहणे सति यत्फलं सिद्धान्तन्मूले उक्तमतनिष्ट अतानिष्टेति । "अतो हलादेः"(पा० सू० ७-२-७) इति वा वृद्धिः । ननु क्षिण्वित्यस्य "उतश्च" (पा० सू० ६-४-१०६) इतिसूत्रे कैयटोक्तस्य का गतिरत आह—क्षिण्वित्यादीति । *भाषायामपीत्येक इति । अस्य एवन्तद्ग्रहणव्याख्यानावसरे मूले एवोक्तमिति शेषः ।

नित्यङ्करोतेः (पा०सू० ६-४-१०८) । आरम्भसामर्थ्यान्नित्यत्वे लब्धे नित्यग्रहणं स्पष्टार्थम् ।

समवायः=संबन्धः, समूहश्च ।

उपात्प्र(पा० सू० ६-१-१३९) । यद्यप्यत्र सूत्रे चो वृत्तौ न पठ्यते तथापि संपर्युपेभ्य इति वृत्त्युक्तपाठफलस्य भाष्यमते साधनार्थं *तदावश्यकतेत्याहुः । *केचित्तु भूषण(१)संबन्धयोरुपात्परस्य सुटं नेच्छन्ति, चञ्च न पठन्ति ।

सुट् कात्पूर्वः( पा० सू० ६-१-१३५ ) । *अत्राद्यं सूत्रम् *अन्त्यं वार्त्तिकम् । अभ्यासस्या*नर्थकत्वेनोत्तरखण्डस्यैवार्थवत्तया करोतित्वेन च तस्य च समोऽभ्यासेन व्यवधानादड्विषये *विकरणान्तभक्ततयाऽटस्तेन व्यवधानात्सुटोऽप्राप्तौ अन्त्यमारब्धम् । अडभ्यासव्यवायेऽपि सुड् भवति स च कात्पूर्व इत्यर्थः । *भाष्यकृता तु अत्र कात्पूर्वग्रहणं कालावधारणार्थं, तदा सुट् भवति यदा कृतः कात्पूर्वो भवतीति । तेनान्तरङ्गमपि द्वित्वादिकं बाधित्वा पूर्वं सुडिति अडभ्यासव्यवायेऽपीति न कार्यमिति तत्प्रत्याख्यातम् । कात्पूर्व इत्यपि प्रत्याख्यातमित्याह-पूर्वं धातुरिति । उपसर्गेणेत्यस्य *तदर्थेनेत्यर्थः । *अत एव 'अनुभूयते'इति कर्मणि लकारः । एवञ्चान्तरङ्गार्थकोपसर्गनिमित्तकत्वाद् द्वित्वाद्यपेक्षया

---

सम्परिभ्याम् (पा० सू० ६-१-१३७) । *तदावश्यकतेति । चकारस्यावश्यकतेत्यर्थः । *केचित्त्विति । "अत उत्सार्वधातुके" (पा० सू० ६-४-११०) इतिसूत्रभाष्ये 'सम्परिभ्याम्भूषणसमवाययोः' इतिपाठानुसारिण इत्यर्थः । न च भाष्यरीतिस्वीकारे यथासङ्ख्यापत्तिरिति वाच्यम् । "संस्कृतम्भक्षाः" (पा० सू० ४-२-१६) इतिनिर्देशेन तस्येहानाश्रयणात् । समवायशब्दस्य सम्बन्धमात्रपरतया प्रकृते सुट् सुलभः । अत एवोक्तं-समवायः सम्बन्धः समूहश्चेति ।

सुट् कात्पूर्वः (पा०सू० ६-१-१३५) । *आद्यम्="सुट्कात्" (पा०सू० ६-१-१३५) इति । *अन्त्यम्="अड्भ्यासव्यवायेऽपि"(पा०सू० ६-१-१३६) इत्येतत् । *अनर्थकत्वेन=परभागसमभिव्याहारप्रतिबद्धार्थबोधकत्वशक्तिमत्त्वेन । एतच्च प्रागुपपादितमेव । *विकरणान्तभक्ततया=अङ्गस्याड्विधानादट् समुदायभक्तः । एवञ्च वार्त्तिकरीत्या प्रत्ययनिमित्तकद्वित्वादयुत्तरं सुटः प्रवृत्तिः । वार्त्तिकप्रत्याख्यानप्रकारमाह— *भाष्यकृता त्विति । *तदर्थेन=उपसर्गार्थेन । उपसर्गद्योत्यार्थान्तर्भावः=तत्प्रतिपादकता धातोः प्रत्ययोत्पत्तेः प्रागेव धातोः स्वीक्रियते । *अत एव=धातोरुपसर्गद्योत्यार्थे वृत्तिस्वीकारादेव । ननु 'लावस्थयामट्' इतिपक्षे सुट् कात्पूर्व एव यथा स्यादित्येवमर्थं कात्पूर्वग्रहणं कार्य-

---

(१) संघयोरिति क्वचित्पाठः ।

सुडन्तरङ्ग इत्याशयः । *लावस्थायामडिति पक्षे तु संपरिभ्यां परत्वयोग्यस्य करोतेः सुडित्यर्थात्सर्वतः पूर्वं सुडिति न दोषः । सुडित्यंशस्तु संपरिभ्यामित्यत्रैव पाठ्य इति तदाशयः । ऋतश्च संयोगादेरिति । ननु द्वित्वे समुदायस्यैवाङ्गत्वेन संयोगादित्वं दुरुपपादं नित्यत्वेन गुणात्पूर्वं "शर्पूर्वाः खयः" ( पा० सू० ७-४-६१ ) इत्यस्य प्रवृत्तेः । न च-अभ्यासस्य नैरर्थक्येनोत्तरखण्डस्यैवार्थवत्त्वेनाङ्गत्वमिति न दोषः । अभ्यासस्य नैरर्थक्यञ्च लोके केवलाभ्यासतोऽर्थाबोधात् । उत्तरखण्डस्य तु प्रत्ययाव्यवहितप्राग्वर्त्तिनः केवलस्याप्यन्यत्रार्थबोधकताया दृष्टत्वेनार्थवत्त्वमेव । 'पेचतुः' इत्यादौ तदभावेऽप्यर्थबोधेन तस्यार्थवत्त्वाच्च अभ्यासप्रयोगस्तु 'रैपोषं पुष्यति' इतिवत्साधुत्वार्थ एव । 'यातिः'इत्यादौ 'शिष्यमाणं लुप्यमानार्थाभिधायि' इति न्यायेन शिष्यमाणाभ्यासस्यैवोत्तरखण्डाभावादर्थबोधजनकत्वम् । इदं केवलस्यानर्थकत्वं समुदायस्यार्थवत्त्वमिति वदतोऽप्यावश्यकम् । अत एव "दयतेर्दिगि" ( पा० सू० ७-४-९ ) इति सूत्रे तु "अस्तेर्द्वित्वे कृते परस्य भूभावे पूर्वस्य श्रवणं प्राप्नोति" इत्याशङ्क्यार्द्धधातुके इत्यस्य विषयसप्तमीत्वेन परिहृतम् । समुदायेऽस्तित्वन्तु द्विःप्रयोगपक्षे दुरुपपादं भिन्नानुपूर्वीकत्वात् । एवञ्च धातुत्वमप्यु*त्तरखण्ड एव-इति वाच्यम् । 'द्विःप्रयोगो द्विर्वचनम्' इति सिद्धान्तेनाद्ये प्रत्ययविधानावधित्वप्रत्यभिज्ञया तदादिग्रहणसत्त्वेन समुदाये एवाङ्गत्वस्य "एकाचो द्वे" ( पा० सू० ६-१-१ ) इति सूत्रे भाष्ये उक्तत्वात् । अङ्गसञ्ज्ञाया विकरणविशिष्टे समुदाये निरर्थकेऽप्यङ्गीकारेणासमर्थसमासे निरर्थकस्याप्यङ्गत्वदर्शनेनाङ्गसञ्ज्ञायामर्थवत्परिभाषाया अप्रवृत्तेः । 'यस्माद्' इत्यनेनोद्देश्यतावच्छेदकशब्दानुपूर्वीमात्रावच्छिन्नस्यैव ग्रहणात् । धातुत्वादिकं तूत्तरखण्डे एवेति बोध्यम् । *न चास्तूक्तरीत्या समुदायस्याङ्गत्वमुत्तरखण्डमात्रस्यापि तु तद् दुर्वारम्, ईदृशे विषये गुरुमतदादिलाभेन व्यपदेशिवद्भावलभ्य-

---

मेवेत्यत आह—*लावस्थेत्यादि । *उत्तरखण्ड एवेति । एतेन प्रघट्टकेन यदि द्वित्वादितः पूर्वं सुट् तदा गुणस्य "ऋतश्च" (पा० सू० ७-४-१०) इतिविहितस्य प्रवृत्तिर्दुरुपपादेत्युक्तम्भवति । *न चेति । तद् दुर्वारमित्यत्रास्यान्वयः । आनुपूर्वीमात्रावच्छिन्नेति । न च "हलादिः शेषः" (पा० सू० ७-४-६०) इत्यादिशास्त्रस्य प्राक् प्रवृत्तौ न साऽऽनुपूर्व्यस्तीति वाच्यम् । तस्याङ्गाधिकारे पाठेनाङ्गसंज्ञाया एव प्राक् प्रवृत्तेः ।

तदादेरप्रवृत्तेरिति चेन्न। प्रत्ययोत्पत्तिवेलायां संयोगादित्वस्य विवक्षणेनाऽदोषात्। *अत एव 'सस्वरतुः' इत्यादिसिद्धिः, सूत्रञ्च सार्थकम्। सुट् तु संपरिभ्यां परत्वयोग्यस्य सुट्विधानात्प्रत्ययोत्पत्तेः पूर्वमेवेति दिक्। 'नित्यमित्यनुवर्त्तते इति। इदञ्च "सुट्कात्"( पा० सू० ६-१-१३५ ) इति सूत्रे कैयटे स्पष्टम्। परन्त्विदं चिन्त्यं तस्यातिदूरत्वात् विच्छिन्नत्वाच्च *तस्य तत्सूत्रे *विधेयविशेषणत्वाच्च। किं च नित्यं संयोगादित्वं न प्रयोगमात्रावच्छेदेन तत्त्वं, क्वाप्यभावात् 'सस्वरतुः' 'सस्वरिथ' इत्यादौ तदभावात्। यगादिघटितप्रयोगमात्रावच्छेदेन तत्त्वमित्यपि न। 'अस्तर्यत' 'तरीस्तर्यात्' इत्यादावभावात्। *अत एव प्रत्येकं संयोगसञ्ज्ञापक्षे 'संहृषीष्ट' 'संह्वियते' इत्यादौ इड्गुणापादनपरं "हलोऽनन्तराः"( पा० सू० १-१-७ ) इति सूत्रस्थं भाष्यं सङ्गच्छते। *एतेनेड्विधावुपदेशग्रहणानुवृत्तिरपि परास्ता। तस्मादिड्गुणयोः *प्रतिषेधवचनारम्भ एव ज्यायानिति परे।

इति तनादयः।

हलः( पा० सू० ६-४-२ ) अङ्गस्येत्यावर्त्तते। तत्रैकं हलो विशेषणं, अवयवसंबन्धे षष्ठी, द्वितीयञ्च संप्रसारणस्य विशेष्यं, तदन्त-

---

*अत एव=प्रत्ययोत्पत्तिवेलायामित्यर्थाश्रयणादेव। *तस्य=नित्यग्रहणस्य। *विधेयविशेषणत्वादिति। "उत्रृत्" (पा० सू० ७-४-७) इतिसूत्रानन्तरम्पाठेन विधेयस्य ऋकारादेशस्य विशेषणत्वादित्यर्थः। *अत एव=नित्यग्रहणासम्बन्धादेव। *एतेन=प्रत्येकं संयोगसंज्ञापक्षे संहृषीष्टेत्यत्रेडापादनपरभाष्यप्रामाण्येन। *प्रतिषेधवचनारम्भ एवेति। 'असुट' इति तत्र तत्र वक्तव्यमिति भावः। इति तनादिविवरणम्।

## अथ क्र्यादिविवरणम्।

मूले विष्टभ्नोतीति। "स्तन्भेः" (पा० सू० ८-३-६७) इति षत्वम्। अवष्टभ्नोतीति। "अवाच्चालम्बना" (पा० सू० ८-३-६८) इति।

विष्कभ्नोतीति। ननु "वेः स्कभ्नातेर्नित्यम्" (पा० सू० ८-३-७७) इति सूत्रे श्नाप्रत्ययनिर्देशाद्यदा श्नाप्रत्ययस्तदैव षत्वं न्याय्यमिति कथं श्नुप्रत्ययपक्षे षत्वमिति चेन्न। धातुनिर्देशे श्तिप्प्रत्यये कृते विकरणस्यावश्यकतया शबपवादयोः श्नुश्नाप्रत्यययोः प्रवृत्तिरवश्यं स्वीकार्या। तत्रान्यतरोच्चारणं साधुत्वार्थमेव न त्वितरव्यावृत्त्यर्थमिति स्वीकारात्। 'दॄ' विदारणे। अयं दिवादिरपि प्रागुक्तः। "दीर्यतेर्दृणातेर्वा दृहत्" इति भाष्यात्।

विधिस्तदाह-अङ्गावयवादिति । *तेन 'निरुतम्'इत्यादौ न । *दीर्घनिर्देशेति । *अङ्गवृत्तपरिभाषा निष्फलेत्यनेन सूचयति । सिज्लोपस्येति । प्रत्ययलक्षणसूत्रं त्रिद्ध्यर्थम्, "एकाचः"( पा० सू० ६-१-१ ) इति सूत्रे धसाहचर्यात्सादिप्रत्यय एव गृह्यते इति *मतेनेदम् । यदा त्विदं नियमार्थं स्थानिवत्सूत्रदृष्ट्या च त्रिपादी*नासिद्धा तदाऽलिविधित्वान्न स्थानिवत्त्वमिति बोद्ध्यम् । तत्र मूलमिति । 'एत्वाभ्यासलोपावप्यत्र' इत्यारभ्य यदुक्तं तत्र मूलं मृग्यमित्यर्थः । संयुक्तहल्मध्यस्थत्वात् ग्रन्थेराद्देशादित्वाच्च सूत्रेणाप्राप्ते वार्त्तिकादर्शनाच्चेति भावः । श्यन्प्रत्ययादिति *बहुव्रीहिः । चेष्टति । न्यासकृन्मतेनेदम् ।

ग्रहो ( पा० सू० ७-२-३७ ) । *इडित्यनुवृत्तस्य ग्रह इति पञ्चम्या षष्ठी कल्प्यते इत्याह-इट इति । एकाच इत्यादि

---

हलः (पा० सू० ६-४-२)। *तेन=अङ्गस्येत्यस्यावृत्त्या हल्विशेषणत्वेन । आवृत्त्या सम्प्रसारणविशेष्यतयाऽङ्गस्योपादानन्तु विध्यतीत्यादौ दीर्घाभावाय । 'क्षीष्' हिंसायाम् । षित्त्वमस्याङर्थम् । तेन 'क्षिया' इत्यस्य सिद्धिः । क्षिया=धर्मव्यतिक्रमरूपा । धातूनामनेकार्थतया धर्मव्यतिक्रमेऽप्यस्य प्रवृत्तिः । *दीर्घनिर्देशेतीति । 'जा'इतिदीर्घनिर्देशेत्यर्थः । अत्र सामान्यतो दीर्घनिर्देशसामर्थ्यादित्येवोक्तन्तेनाङ्गवृत्तपरिभाषाऽभावो ध्वनितस्तदाह—*अङ्गवृत्तेति । *मतेनेदमिति । सिज्लोपस्यासिद्धत्वादितिकथनमित्यर्थः । *नासिद्धेति । वतिघटितानामतिदेशानां त्रिपाद्यामपि प्रवृत्तिरिति प्रागुपपादितम् । 'इष' आभीक्ष्ण्ये । *बहुव्रीहिरिति । श्यन्प्रत्ययो यस्मादित्यतद्गुणसंविज्ञानो बहुव्रीहिरित्यर्थः ।

*इडित्यनुवृत्तस्य="आर्द्धधातुक" (पा० सू० ७-२-३५) इतिसूत्रादिडित्यनुवृत्तस्य । प्रथमा तु पूर्वसूत्रे चरितार्था । विहितस्येति किम् ? । ग्राहिता । णिजन्तात् तृच् । न चात्र "अचः परस्मिन्"(पा० सू० १-१-५७) इति स्थानिवत्त्वम् । अपूर्वविधित्वात् । पञ्चमीसमासेऽपि दीर्घविधिम्प्रति न स्थानिवदिति प्रतिषेध इत्यभिप्रायः । "न पदान्त" (पा० सू० १-१-५८) सूत्रभाष्ये "वरे यलोपस्वरवर्जम्" इति भाष्यन्दीर्घस्याप्युपलक्षणम । विहितविशेषणादेव 'जरीग्रहिता' 'जरीग्रहितुम्' 'जरीगृहितव्यम्'इत्यत्र यङन्ते न दीर्घः । "आर्द्धधातुकस्येड्" (पा० सू० ७-२-३५) इतिसूत्रादिटोऽनुवर्त्तनादर्थाधिकाराच्चस्यैवेटोऽनेन दीर्घ इति चिण्वदिटो नानेन दीर्घः । तेन 'ग्राहिता' 'ग्राहिष्यते'इत्यस्य सिद्धिः । यत्तु मूले एकाचो ग्रहेरितिव्याख्यातं तत्रैकाजिति न प्रकृतत्रापि वार्त्तिककृताऽत्र 'एकाज्ग्रहणङ्कर्त्तव्यम्'इत्युक्तं तथापि हरदत्तानुरोधेनोक्तं जाग्रहिता जाग्रहिष्यतीत्यत्र यङ्लुगन्ते दीर्घाप्रवृत्तिश्चैकाच इत्यस्य फलमित्यपि वक्तुं शक्यम् । परन्तु

*हरदत्तानुरोधेनेदमुक्तम् । *'अग्रहीष्टाम्' इत्यादौ लात्रस्थायामडिति पक्षे एकाचो विहितत्वाभावाद्दीर्घाप्राप्त्याऽसङ्गतमिदं हरदत्तेनोक्तम् ।

इति क्र्यादयः ।

प्रपञ्चार्थमिति । न च *स्वार्थे विधानार्थमस्तु । *'सत्यस्य कृञ्यापुग्' इति भाष्यविरोधात् । न चापुग्निपातनार्थं सत्यापग्रहणमावश्यकम् । अर्थवेदार्थमावश्यके वार्तिके एव सत्यपाठेन सिद्धेरिति भावः । स्वार्थे इति । (१)करण इत्यस्य तु नानुवृत्तिः । विच्छिन्नत्वादिति भावः ।

णिचश्च( पा० सू० १-३-७४ ) । लक्षयतेः स्वरितेत्त्वमनार्षम् । *एतेन लक्षेः स्वरितेत्त्वादिदङ्चुरादौ न प्रवर्त्तते इति परास्तम् । इदित्करणमिति । णिचो नित्यत्वे हि तेन व्यवधानान्नलोपाप्रसक्त्या *किं तेनेति भावः । न च णिजन्तात्क्विपि नलोपाभावाय *तच्चरितार्थं, स्थानिवत्त्वन्तु क्वौ विधौ निषिद्धमिति वाच्यम् । "असिद्धवदत्र"( पा०सू० ६-४-२२ ) इति णिलोपस्यासिद्धत्वात् । 'क्वौ विधिम्'(प० भा० ) इत्यस्य *क्विशब्दमुच्चार्यविहितविधिविषयत्वाच्च । 'क्वौ लुप्तम्'(प० भा० ) इति तु न सार्वत्रिकम् । परे त्विदित्त्वस्य क्त्रिमत्वादौ व्यभिचरितत्वेन 'क्वौ लुप्तम्' इत्याश्रयणे ज्ञापकतौचित्येन च 'चिन्त' इति पाठेऽर्द्धमात्रागौरवेण च णिच्शास्त्रबाधे न मानं *भाष्यानुक्तत्वाच्च वक्ष्यमाण"णेरणौ"( पा० सू० १-३-६७ )इतिसूत्रस्थकैयटासंमतश्चेत्याहुः । सामान्यापेक्ष-

भाष्यानुक्तत्वादप्रमाणमेतदित्यभिप्रायेणाह—*हरदत्तानुरोधेनेति । तन्मते दोषान्तरमप्याह—*अग्रहीष्टामित्यादाविति । न चाडागमस्य बहिरङ्गत्वेनासिद्धत्वादेकाचो विधानमस्त्येवेति वाच्यम् । नाजानन्तर्यपरिभाषायास्तन्मते सत्त्वेन तया निषेधात् । बहिरङ्गपरिभाषाया अनित्यत्वाच्चेति । इति क्र्यादिविवरणम् ।

## अथ चुरादिविवरणम् ।

*स्वार्थे विधानार्थमिति । अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति स्वार्थेविधानार्थमित्यर्थः । *सत्यस्य कृञ्यापुक् । सत्यशब्दस्य कृञर्थे णिचि आपुगित्यर्थः ।

*एतेन=लक्षयतेः स्वरितत्वस्यानार्षत्वेन । *किन्तेन=इदित्त्वेन । *तच्चरितार्थमिति । इदित्त्वञ्चरितार्थमित्यर्थः । *क्विशब्दमुच्चार्यविहितेति । लक्षणप्रतिपदोक्तपरिभाषयेति भावः । *भाष्यानुक्तत्वादिति । णिचः पाक्षिकत्वस्येत्या-

(१) "शब्दवैर"( पा० सू० ३-१-१७ ) इति सूत्रस्थस्य इति शेषः ।

मिति । *चुरादित्वापेक्षमित्यर्थः । जगणतुरिति । *मन्त्रत्वादाम्नेति तदाशयः । *नित्यण्यन्तत्वेऽपि णिलोपेनेष्टसिद्ध्या इयं वृत्ति*र्न साधिका, गणेरनित्यण्यन्तत्वे "णेरणौ"(पा० सू० १-३-६७) इति सूत्रस्थभाष्यासङ्गतिश्च । तत्र हि-'गणयति गणः स्वयमेव' इत्यादौ णौ कर्मणोऽणौ कर्तृत्वे आत्मनेपदाभावाय "णेरणौ"( पा० सू० १-३-६७ ) इति सूत्रमित्याशङ्क्योच्यत एवात्रात्मनेपदञ्चुरादिण्यन्तानां नित्यण्यन्ततया, केवलानाञ्चुरादीनां प्रयोगाभावात् अणौ कर्मणोऽसम्भवात् । अत्र सूत्रे हेतुमण्णेरेव ग्रहणमित्यहेतुमण्णौ गणस्य कर्मत्वे हेतुमण्णौ कर्तृत्वमिति सूत्रविषय एवायमिति भाष्यकैयटयोरुक्तम् । किं च ज्ञापकस्य सामान्यापेक्षत्वे "घुषिरविशब्दने"(पा० सू० ७-२-२३ ) इतिसूत्रस्थभाष्यविरोधः । तत्र हि विशब्दनार्थस्य चुरादित्वेन नित्यणिजन्ततया भ्वादेश्चाविशब्दन एव वृत्तेः सूत्रे 'अविशब्दने'इति व्यर्थमित्याशङ्क्य 'एतदेव ज्ञापयति घुषेर्विशब्दने विभाषाणिच्, तेन जुघुषुरिति सिद्धम्'इत्युक्तम् । *अत एव चुरादाविरित्त्वमपि सार्थकमिति बोद्ध्यम् । विशेषेति । असंयोगोपधेकारान्तरूपविशेषेत्यर्थः । तच्चिन्त्यमिति । नस्योपधत्वाभावेन नलोपाप्रसक्त्या ज्ञापितेऽपि चारितार्थ्याभावादिति भावः ।

परितेत्यादीति । आदिना *ऋकारान्तत्वप्रयुक्तकार्यविशिष्टरूपग्रहणं फलमिति । एवञ्च 'पर्ता' इति रूपवारणाय दीर्घोच्चारणमिति भावः । वस्तुत इदमपि ज्ञापकं चिन्त्यमेव । दीर्घपाठस्य सन्दिग्धत्वादित्याहुः ।

---

दिः । *चुरादित्वापेक्षमिति । चुरादिभ्यो णिज्वैकल्पिक इत्यर्थे एतज्ज्ञापकमित्यर्थः । एतन्मते "आधृषाद्वा"(चु० ग० सू० ) इति ज्ञापकासिद्धस्यासार्वत्रिकत्वबोधनाय । आधृषीयाणामेव सर्वत्र विकल्पोऽन्येषान्तु लक्ष्यानुरोधेनेति बोधनाय चेति भावः । गणयतेरनेकाच्त्वेऽप्यामोऽभावायाह—*मन्त्रत्वादिति । अनित्यत्ववादिमतं व्याख्याय स्वयमाह—*नित्यण्यन्तत्वेपीति । *न साधिकेति । आमोऽभावस्य तेनैवोपपादनादिति भावः । *अत एव=सामान्यापेक्षज्ञापकाभावादेव ।

*ऋकारान्तत्वप्रयुक्तकार्येति । "ऋच्छत्यृताम्" (पा० सू० ७-४-७७) इतिगुणात्मककार्यम् "ऋतश्च" (पा० सू० ७-४-९२) इतिसूत्रविहितरुग्भावात्मककार्यविशिष्टग्रहणमित्यर्थः ।

'षान्त्व'साम । केचित्त्वत्र 'षाम सान्त्वप्रयोगे' इति पठन्ति । णिजन्तात्तङिति। *चित्रङादावु*क्तन्यायस्य क्लृप्तत्वाच्छास्त्रबाधस्यान्याय्यत्वाच्च णिचो वैकल्पिकत्वं नोक्तम् । ज्ञापने चेति । चात् मारणादावपीत्यन्ये । वेष्टनमिति । अण्यन्तपरिविषेर्ल्युडिति भावः । नन्वण्यन्ततत्प्रकृतिकल्युडन्तेनादनीयवस्तुनो भोजनार्थं भोजनपात्रे निक्षेपोऽप्युच्यते तत्रापि मित्त्वं स्यादत आह- न तु भोजनेति । *उक्तरूपेत्यर्थः । *भुज्यर्थयमधातोर्हेतुमण्णात्वमन्तत्वेन मित्त्वसिद्धेः । ननु ण्यन्ताल्ल्युटि वेष्टनापि परिवेषणशब्देनोच्यते तत्रापि *मित्त्वं स्यादत आह—नापि वेष्टनेति । अमन्तत्वेनैव सिद्धेः । "न कमि" ( भ्वा० ग० सू० ) इति निषेधप्रकरणस्थे "यमोऽपरिवेषणे" ( भ्वा० ग० सू० ) इति परिवेषणभिन्नेऽर्थे मित्त्वनिषेधके घटाद्यन्तर्गणसूत्रे भोजनाव*द्वेष्टनाऽपि गृह्यते विनिगमनाविरहादिति भावः । *घटादिपठितवचने वेष्टनन्तु न परिवेषणशब्देन गृह्यते, *तस्य *हेतुमण्णात्वेव प्रवृत्तेः *फलाभावादिति भावः । केचित्तु *त्र सूत्रे*ऽर्थत्रयग्रहणेऽपि बाधकाभावः विनिगमनाविरहाच्च सर्वग्रहणं*घटादिपठितेऽपरिवेषण इति तु *ततो हेतुमण्णौ 'यामयति' इत्येतद्वारणाय । न चैवमन्नार्थत्रयग्रहणं व्यर्थम् । *एकणिज्ज्ञानेनापि धर्मोत्पत्तिबोधनेन

---

ननु ङित्त्वात् णिज्विकल्प इत्येव कुतो नोक्तमत आह-*चित्रङादाविति । *उक्तन्यायस्य='अवयवेऽचरितार्थस्य समुदायोपकारकत्वम्' इतिन्यायस्येत्यर्थः । *उक्तरूपेति । अदनीयवस्तुनो भोजनार्थम्भोजनपात्रे निःक्षेपरूपा इत्यर्थः । *भुज्यर्थयमधातोरिति । 'यमोऽपरिवेषणे' इत्युक्तत्वादस्मिन्नर्थे तस्य निषेधस्याप्रवृत्तेः । एवञ्च तस्यार्थस्य ग्रहणे यम चेत्यनेन चुरादिण्यन्ते मित्त्वविधानं व्यर्थं स्यात् । *मित्त्वं स्यात् यमचेत्यनेनेत्यादिः । *वेष्टनापि गृह्यत इति । एवञ्चापरिवेषणे स निषेधः। वेष्टना तु परिवेषणमेवेति तस्य निषेधस्यायमविषय इति बोध्यम् । ननु घटादिपठितवचने परिवेषणशब्देन वेष्टनस्यापि ग्रहणे तस्य निषेधस्याप्रवृत्त्याऽमन्तत्वेन सिद्धे यम चेत्यस्यवैयर्थ्यमत आह—*घटादिपठितेति । *तस्य=घटादिपठितवचनस्य । *हेतुमण्णावेवेति । पूर्वोत्तरसाहचर्यात् । *फलाभावादिति । यदि वेष्टनस्य परिवेषणशब्देन ग्रहणं कृत्वा निषेधाविषयत्वं सम्पाद्यते तदा वैयर्थ्यं वेष्टनरूपेऽर्थे स्वार्थे णिचः सत्त्वेन तस्य वचनस्याप्रवृत्तेरित्यर्थः । *अत्र सूत्रे=चुरादिपठिते "यम च" (चु० ग० सू०) इतिसूत्रे । *अर्थत्रयेति । वेष्टनभोजनावेष्टनारूपार्थत्रयेत्यर्थः । नन्वत्रार्थत्रयग्रहणे परिवेषणे मित्त्वाभ्युनुज्ञासूचकं यदा घटादिपठितवचनेऽपरिवेषणे इति तद्यर्थमनेन मित्त्वसिद्धेरत आह—*घटादिपठित इति । *ततः=स्वार्थणिजन्तात् । *एकणिज्ज्ञानेन=

सार्थक्यात् इत्याहुः ।

चिस्फुरोः (पा० सू० ६-१-५४) । अत्र णिशब्देन चुरादि-णिच एव ग्रहणं *प्रतिपदोक्तत्वात् । *अत एव स्वादेश्चेरन्यस्य स्फुर-श्चात्र न ग्रहणम् । नन्वेवमस्य चिञो *ञित्त्वं व्यर्थं *सामान्यग्रहणस्य तवानिष्टत्वेन सामान्यग्रहणाविघातार्थमपि नेत्यत आह–ञित्करणेति । एवञ्चास्माण्णिजभावे हेतुमण्णावपि *नात्वमिति बोद्धयम् । इदं माधवा-द्यनुसारेण । *परे तु ञित्त्वं सामान्यग्रहणाविघातार्थमेव णिशब्देन चिश-ब्देन चो*भयोरपि ग्रहणम् । एवं स्फुरशब्देनापि । *ईदृशरीत्या प्रतिपदो-क्तपरिभाषा त्वसार्वत्रिकी । चुरादिशब्दमुच्चार्य विहितत्वेऽपि चिस्फुरावुच्चा-र्याविहितत्वाच्च । एवञ्च स्वादेर्हेतुमण्णावात्वं भवत्येव । *उत्तरत्र "बिभेते-र्हेतुभये" (पा० सू० ६-१-५६) इत्यादौ णावित्यस्य शब्दाधिकारश्च ने-त्याहुः । आकुस्मादिति गणसूत्रमात्मनेपदविधायकं, तदाह–*अकर्तृ-गेति । *णिच्संनियोगेनैवेति च । 'भल' आभण्डने । 'आलम्बने' इति पाठान्तरम् । *नाम्नो वा' इत्यंशं व्याचष्टे–अथ वेति । धात्वर्थे

---

यमयतीत्यत्रैकणिज्ज्ञानेन ।

प्रतिपदोक्तत्वात्=साक्षाच्चुरादित्वसिद्धणिशब्दानुवादेन विहित-त्वात् । *अत एव=चुरादिणिच एवात्र ग्रहणादेव । *ञित्त्वं व्यर्थ-मिति । आत्मनेपदस्य "णिचश्च" (पा० सू० १-३-७४) इत्येव सिद्धेः । ननु चिशब्देन सामान्यग्रहणार्थं ञित्त्वमस्त्वित्यत आह–*सामान्येति । *नात्वमिति । तत्रास्याप्रवृत्तेरुक्तत्वात् । स्वादिपठितचेरपि "चिस्फुरोः" (पा० सू० ६-१-५४) इत्यनेनात्वमित्यभिप्रायेणाह–*परे त्विति । *उभयोः=हेतुम-ण्णिच्स्वादिपठितचिञ्धात्वोः । *ईदृशरीत्या=चिञ्धातोश्चुरादित्वात्ततो णिज्विधानेन प्रतिपदोक्तत्वमितिरीत्या । णिशब्देन णिसामान्यग्रहणलाघ-वमपीत्याह–*उत्तरत्रेति । 'म्लेच्छ' अव्यक्ते शब्दे । अव्यक्ता वागपशब्द-रूपा । 'गुर्द' 'पूर्व' निकेतने । गुर्द पूर्वेति द्वौ धातू । अन्ये तु गुर्देत्येक एव । पूर्वनिकेतनमित्यस्य पूर्वनिवास इत्यर्थ इत्याहुः । *अकर्तृगेतीति । परगामि-क्रियाफले परस्मैपदबाधनार्थमित्यर्थः । *णिच्संनियोगेनैवेति । अत एव दंशि-प्रभृतिभ्य इदित्त्वाण्णिजभावपक्षे दंशतीत्यत्रात्मनेपदम् । 'भल' आभण्डने । आभण्डनमत्र लक्षणस्वरूपप्रामाण्यादिप्रकारकज्ञानानुकूलव्यापाररूपम् । *नाम्नो वेत्यंशमिति । नामत्वमस्य नाव्युत्पन्नत्वेन किन्तु कुशब्दपूर्वकस्मयतेः "अन्ये-ष्वपि" (पा० सू० ३-२-१०१) इति डप्रत्यये "कुगति" (पा० सू० २-२-१८) इति-समासे बोध्यम् । धात्वर्थे इत्यस्य लाभस्तु "प्रातिपदिकाद्धात्वर्थे बहुलम्" (चु०

इति। करोत्यर्थे आचष्टे इत्यर्थे वेत्यर्थः। 'शब्द'उपसर्गादिति। यद्यपि शब्दशब्दात् "तत्करोति" ( चु० ग० सू० ) इति णिचि 'शब्दयति' 'प्रतिशब्दयति' इत्यादि सिद्धं, तथापि "शब्दवैर" ( पा० सू० ३-१-१७ ) इति* क्यङा बाधाभावाय विशिष्टेऽर्थे साधुत्वार्थं चेदमुक्तम्। नान्येमित ( चु० ग० सू० ) इति। "न कम्यमि" ( भ्वा० ग० सू० ) इति निषेधस्तुचमिसाहचर्यात्पूर्वोत्तरसाहचर्याच्च हेतुमण्णावेवेति भावः। तस्मा-द्धस्विति। "न कम्यमि" ( भ्वा० ग० सू० ) इति निषेधाद् वृद्धिर्भवत्येवेति भावः। हन्त्यर्थाश्चेति। *तेषां तद्ग्रहणे पाठसामर्थ्याण्णिज्वा। *एवं कृपेरपि। *अत एव ज्ञापकान्निवृत्तप्रेरणादित्यसार्वत्रिकम्। 'यत' तालव्याऽन्तस्थादिः।

असिष्वददिति। षोपदेशलक्षणे स्वञ्जिसाहचर्येण भ्वादेर्निरनुबन्धकपरिभाषया*ऽस्य च ग्रहादिति भावः। इत्यास्वदयीः।

'अर्च पूजायामिति। अयमनुदात्तेदिति शाकटायनः। *अस्य भ्वादौ पाठोऽनार्षः। अनेनैव सिद्धेः। तस्याप्यात्मनेपदितायाः शाक-

---

ग० सू० ) इत्यस्य व्यापारसत्त्वात्। *क्यङा बाधाभावायेति। अन्यथा "शब्दवैरकलहा"( पा० सू० ३-१-१७ ) इत्यत्र शब्दशब्दस्य विशिष्योपादानात्क्यङा णिचो बाधः स्यादिति भावः। हन्त्यर्थाश्चेति विहितो णिज् वैकल्पिक इत्यत्रार्थे मानमाह-*तेषान्तत्तद्ग्रहण इति। *एवं कृपेरपीति। "कृपेश्च"( चु० ग० सू० ) इत्यनेन स्वार्थेऽत्र णिज्विधानात्कृपधातोर्भ्वादौ पाठसामर्थ्याण्णिज्विकल्प इत्यर्थः। *अत एव ज्ञापकादिति। 'हन्त्यर्थाश्च'( चु० ग० सू० ) इति सामर्थ्यादित्यर्थः। यदि निवृत्तप्रेषणादिति सार्वत्रिकं स्यात्तदा हन्त्यर्थेभ्योऽपि धातुभ्यो निवृत्तप्रेषणेभ्यो हेतुमण्णौ स्वार्थे णिचि योऽर्थस्तस्य लाभे 'हन्त्यर्थाश्च' इति स्वार्थे णिज्विधायकं वचनं व्यर्थं स्यादिति भावः। घुषिर्विशब्दने। विशब्दनेऽर्थे घुषिरिति धातुश्चुरादौ द्रष्टव्यः। मूल निषेधाल्लिङ्गादिति। अस्माण्णिचो नित्यत्वेऽस्मात्परा निष्ठा नास्तीति स प्रतिषेधो व्यर्थः स्यात। न च भ्वादिपठिताद्यदा निष्ठा तदा तद्व्यावृत्त्यर्थन्तदस्तु। घुषिरविशब्दने इत्युक्तत्वेन भ्वादेर्विशब्दने वृत्त्यभावात्। न च चुरादिण्यन्तात्क्विपि णिलोपे तत आचारे क्विपि निष्ठायां सम्भवोऽस्तीति वाच्यम्। हलन्तेभ्य आचारे क्विपोऽभावात् णिलोपस्य स्थानिवत्त्वाच्च। "कौ लुप्तम्"इति न सार्वत्रिकम्। एवमिदित्करणमपि णिचः पाक्षिकत्वे ज्ञापकं बोध्यम्।

*अस्य चेति। चुरादिपठितस्वदधातोः।

टायनमते माधवेनोक्तेः । *एवमन्येषामपि परस्मैपदिनां भ्वादिपाठो *बोध्यः । लाययतीति । "लीलोः" ( पा० सू० ७-३-३९ ) इति नुक्तु न । लासाहचर्याद्धेतुमण्णावेव तस्य प्रवृत्तेः । लेनेति । "विभाषा लीयतेः" ( पा० सू० ६-१-५१ ) इत्यात्वं तु न "लिनातिलीयत्योर्यका निर्देशः" *इति भाष्यात् ।

नुकमाहुरिति । "शाच्छासा" ( पा० सू० ७-३-३७ ) इति सूत्रे भाष्ये*ऽस्य पाठात्तत्साहचर्येण हेतुमण्णावेवास्य प्रवृत्तिः । 'वायुर्विधूनयति' इति च हेतुमण्ण्यन्तस्यैव रूपमिति तु परे । हरदत्तेति । अनेन भाष्यासंमतत्वं सूचितम् ।

स्थानिवत्त्वादिति । "अचः परस्मिन्" ( पा० सू० १-१-५७ ) इत्यनेनेति भावः । 'गण' सं । अयं संख्यानिमित्तज्ञानविशेषरूपपरिच्छेदे भागशोऽवस्थापने चेति "णेरणौ" ( पा० सू० १-३-६७ ) इत्यत्राकरः ।

ई च गणः ( पा० सू० ७-४-९७ ) । णिचः प्राग्वर्तिनोऽनुकरणम् । *एतेन नित्यणिजन्तत्वाद्गण इत्यसङ्गतमित्यपास्तम् । तेन स्वार्थण्यन्ताच्चङ्यपि प्रवृत्तिः । *गणेरिति ण्यन्तानुकरणे तु ण्यन्ताण्णौ चङ्येव स्यात् *णौ चङ्यर इत्यनुवृत्तेरिति बोध्यम् । यद्यपि गणरूपाभ्या-

---

*अस्य=अर्चधातोः । *एवमन्येषामपि परस्मैपदिनामिति । यथा तपधातोर्वदधातोश्च भ्वादौ पाठोऽनावश्यकः । आधृषीयत्वेन णिजभावे समीहितरूपसिद्धेः । परस्मैपदिनामित्युपादानमात्मनेपदी यः षहधातुस्तद्व्यावृत्तये । णिज्भावेऽप्यात्मनेपदार्थमस्य भ्वादौ पाठस्यावश्यकत्वात् । 'अन्येषामपि' इति बहुवचनम्प्रयोगभेदेन । *बोध्यः=अनावश्यकत्वेन बोध्यः । 'ली' द्रवीकरणे । लाययति । णिचि वृद्धिः । *इति भाष्यादिति । वस्तुतो लाययतीत्येवात्र लेख उचितः । लेतेत्यस्य तु णिजभावे आत्वस्य वैकल्पिकत्वेन तदभावेऽपि सिद्धेः ।

*अस्य पाठात्="धूञ्प्रीञोः" ( का० वा० ) इत्यस्य पाठात् । एवं प्रीञ्धातोरस्मिन्मते 'प्राययति' इत्येव रूपम् । मूले'कथ'वाक्यप्रबन्धे कथयति । स्वार्थणिज्विवक्षायामल्लोपः । आर्द्धधातुकस्य बुद्धिस्थत्वे लोपविधानेन लोपस्य परनिमित्तकत्वम् ।

*एतेन=णिच्प्राग्वर्त्तिगणशब्दानुकरणत्वस्वीकारेण । *गणेरितिण्यन्तानुकरण इति । गणधातोरदन्तत्वान्नैकाऽयन्निर्देश उपपद्यते किन्तु ण्यन्तस्यैव । वृत्तौ गणेरभ्यासस्येत्यत्र गणेरिति तु लुप्ताकारानुकरणादिका बोध्यः । *णौ चङ्यर इति । यद्यपि णाविति न प्रकृतम्, तथापि चङ्यर इति बहुव्रीहिणा

सान्त्यस्य *णस्य ई इत्यर्थाद्धलादिःशेषेणान्त्यानिवृत्तावस्याप्राप्त्याऽनवकाशत्वेनेदं तद्बाधकं प्राप्नोति तथापि अभ्यासविकारे बाध्यबाधकभावाभावेन पूर्वं हलादिःशेषेऽवशिष्टान्त्यस्यैकारः, एकदेशविकृतन्यायेन चावशिष्टस्य णरूपत्वम्। स्पष्टं चेदं "गुणो यङ्लुकोः" (पा०सू०७-४-८२) इत्यत्र भाष्ये। स्तनगदी। *इगन्ताद् द्विवचनं *प्रकरणाच्चादन्तत्वम्।

ऊन। अस्माण्णौ चङि नशब्दस्येष्टं द्वित्वं दुर्लभम्। द्वित्वाद*न्तरङ्गत्वादल्लोपात्, णिचो द्वित्वनिमित्तत्वाभावाद् "द्विर्वचनेऽचि"( पा० सू० १-१-५९ ) इति दुर्लभमत आह—ओः पुयणीति। *अयं भावः—'बिभावयिषति' इत्यादावन्तरङ्गत्वाद् वृद्ध्यावादेशे "सन्यतः" ( पा० सू० ७-४-७९ ) *इत्येव सिद्धं पूङ्. यौतेश्च सनि "स्मिपूङ्" ( पा० सू० ७-२-७४ ) "सनीवन्त" ( पा० सू० ७-२-४९ ) इतीटि "द्विर्वचनेऽचि" ( पा० सू० १-१-५९ ) इति सूत्रप्रवृत्त्याऽभ्यासे उकारसत्त्वेऽपि तदर्थं पयोरित्येव वाच्यम्। न च "पिपविषते' इत्यादौ गुणावादेशयोः "अचः परस्मिन्"( पा० सू० १-१-५७ ) इति स्थानिवत्त्वेनावर्णपरयकारादिपरत्वाभावः *एतत्सूत्रारम्भसामर्थ्येनैव *तदभावात्। एवञ्च वर्गादिग्रहणं व्यर्थं सत् णिचो द्वित्वनिमित्तत्वाभावेऽपि *तन्निमित्तकाजादेशस्य द्वित्वे कर्त्तव्ये निषेधं ज्ञापयतीति। णिचीति। णिज्निमित्तक इत्यर्थः। णिचि परत इत्यर्थे तु 'पुस्फारयिषति' इत्यादौ रेफेण व्यवधानान्न स्यात्। ज्ञापनफलन्तु *'तुतावयिषति' 'अतूतवत्' 'ऊर्णुनाव-

---

"सन्वत्"(पा०सू० ७-४-९३) इति सूत्रे तथाऽऽक्षिप्तमितीहाप्येवमुक्तम्। *णस्य ई इति। णस्य ईकारादेश, इत्यर्थः। क्वचित् णस्येदिति पाठः। 'स्तनगदी' देवशब्दे। ननु गदधातोरदन्तत्वाद्गदी इत्यनुपपन्नमत आह-*इगन्तादिति। लुप्ताकारान्तानुकरणादिका निर्देशोऽयमिति भावः। वस्तुतोऽयमकारान्त एव तदाह-*प्रकरणादिति।

*अन्तरङ्गत्वादिति। आर्द्धधातुकोपदेश एव लोपविधानेनाल्लोपस्य प्रथमत एव प्रवृत्तेः। यदुक्तम्पयोरिति मूले तस्योपपत्तिमाह-*अयम्भाव इत्यादिना। *इत्येव सिद्धेरिति। एतेन वर्गग्रहणाभावेऽपीष्टसिद्धिरुपपादिता। *एतत्सूत्रारम्भसामर्थ्येन=पयोरित्युपादानसामर्थ्येन। *तदभावात्=स्थानिवत्त्वाभावात्। *तन्निमित्तकाजादेशस्य=णिज्निमित्तकाजादेशस्य। एवञ्च द्वित्वे कर्त्तव्ये णिज्निमित्तकादेशो न भवतीति वचनव्यक्त्या निषेधस्य बलवत्त्वात्तद्विषयेऽन्तरङ्गस्यापि कार्यस्य पूर्वमप्रवृत्तिरिति भावः। *तुतावयिषती-

यिषति' 'और्णूनवत्' 'पुस्फारयिषति' 'अपुस्फरत्' इति । णिचीति णिङोऽप्युपलक्षणम् । तेनाऽऽस्यशब्दात् "णिङ्ङात् निरसने" ( चु० ग० सू० ) इति णिङि चङि 'आसस्यत्' इत्यादौ प्रक्रियादशाया-मवर्णस्योत्तरखण्डे सत्त्वादल्लोपानिषेधे'स्य'शब्दस्य द्वित्वसिद्धिः । न च णिचीत्यस्य सूत्रेऽभावेन कथन्तल्लाभ इति वाच्यम् । यतो नाने-नापूर्वो निषेधो ज्ञाप्यते किं तु "द्विर्वचनेऽचि" ( पा० सू० १-१-५९ ) इत्यस्य व्यवधानेऽपि प्रवृत्तिस्तत्र द्वित्वनिमित्तेऽजादौ प्रत्यये परेऽजादेशो नेत्यर्थकस्य 'येननाव्यवधानम्'इति न्यायेन *एकव्यवधाने तत्प्रवृत्तिरत-स्तल्लाभः । *तेन 'दिद्वनीयिषति' इत्यादौ नातिप्रसङ्गः । एतन्मूलकमे-वाच इति स्वरूपकथनम् । एवञ्च "द्विर्वचनेऽचि" (पा० सू० १-१-५९) इत्यस्य द्वित्वनिमित्तेऽजादौ प्रत्यये एकप्रत्ययातिरिक्ताव्यवहिते परे *तद-न्यतरनिमित्तकादेशो नेति सूत्रार्थः । इतीति । इत्यत्र वर्गादिग्रहो लिङ्गमिति पूर्वेणान्वयः । यत्रेति । यद्यपि 'अचिकीर्तत्' इत्यत्र त इत्यवर्णपरत्वमस्ति तथापि न दोषः । चङ्सहितस्योत्तरखण्डत्वाभावात् । आद्योऽजिति । स्पष्टार्थः । तदुक्तं भाष्ये—ओः पुयण्जिषु वचनं ज्ञापकं णौ स्थानिवद्भावस्य । यद्येतज्ज्ञाप्यते 'अचिकीर्तत्' इत्यत्रापि प्राप्नोति । तुल्यजातीयस्य ज्ञापकम् । कश्च तुल्यजातीयः ? । यथाजातीयाः पुयण्जयः । कथं जातीयकाश्चैते ? । अवर्ण-पराः"इति । तत्रावर्णपरत्वं किं द्वित्वप्रवृत्तिवेलायामुत परिनिष्ठिते रूपे ? । नाद्यः । 'चुक्षावयिषति'इत्याद्यसिद्ध्यापत्तेः । नान्त्यः । 'औननत्'इत्याद्यसिद्धे-रत आह—प्रक्रियायामिति । न त्वमुकत्रैवेत्याग्रह इति भावः । उवर्णादेश एव स्थानिवदिति तु न युक्तम् । तथा सति भाष्ये कथं जातीयाश्चैते इति प्रश्ने उवर्णादेशपरा इत्येव वदेत् । अनेन उवर्णादेशादन्यत्रापि स्थानिवत्त्वसूचनेन परिनिष्ठिते एव यत्रावर्णपरत्वं तत्रैव निषेध इति विकल्पनाऽपि प्रत्युक्ता । एतेन "ओः पुयण्" ( पा० सू० ७-४-८० ) इति सूत्रेऽभ्यासस्येकार इति व्याख्येयमलोऽन्त्यपरिभाषयाऽन्तस्य भविष्यति । एवं च ओरित्यधिकं ज्ञाप्यकोटावुवर्णादेशानिवेशार्थमिति परास्तम् । अत इत्यनुवृत्तिशङ्कावारणाय

---

त्यादि । एतेष्वभ्यासे उकारस्य श्रवणम्भवति । *एकव्यवधाने तत्प्रवृत्तिरिति । अस्य 'इत्येव ज्ञाप्यते' इति शेषः । *तेन=येननाव्यवधानन्यायाश्रयणेन । *तद-न्यतरेति । द्वित्वनिमित्तप्रत्ययव्यवधायकैकप्रत्ययेत्यर्थः । अत्र णिज्ग्रहणं णि-

तत्सत्त्वात् । *नन्वेवं सति "हलिकल्योरदन्तत्वनिपातनं कृतायां वृद्धौ टिलोपज्ञापकम्" इति भाष्यासङ्गतिः, ण्यन्ताभ्यामाभ्याञ्ङि 'यथेष्टं नामधातुषु' इत्यनेन *द्वितीयद्वित्वे 'अहललत्' इत्यादौ अभ्यासेऽकारश्रवणेन चारितार्थ्यादिति चेन्न । *एतद्भाष्यप्रामाण्येन "कण्ड्वादेस्तृतीयस्य" (का० वा०) इत्युत्तरं *तत्पाठेन च त्र्येकाचामेव तत्र भाष्ये उदाहृतत्वेन च द्वित्वप्रवृत्तियोग्यैकाच्त्रयसन्निधाने एव यथेष्टमित्यस्य प्रवृत्तेरदोषात् । तद् ध्वनयन्नाह-औननदिति । *यत्त्वदन्तत्वसामर्थ्याद्दल्लोपविकल्प इति, तन्न, शास्त्रबाधस्यान्याय्यत्वात् । मम तु न कस्यापि शास्त्रस्य बाधः । एतेन *णिज्विकल्पार्थन्तदित्य*पास्तम् । *किं चास्यादन्तत्वमग्लोपित्वसंपादनेन ह्रस्वाभावार्थन्तद् ध्वनयन्नाह-मा भवानूननदिति । *परे तु भाष्ये "ओः पुयण्जिषु वचनं ज्ञापकं णौ स्थानिवद्भावस्य । यद्येतज्ज्ञाप्यते 'अचिकीर्तत्' *इत्यत्रापि प्राप्नोति । तुल्यजातीयस्य ज्ञापकम् । कश्च तुल्यजातीयः ? । यथा जातीयकाः पुयण्जयः । कथं जातीयकाश्चैते ? । अवर्णपराः" इत्युक्तम् । तत्र पावित्यस्य णिनिमित्तकोऽच आदेश इत्यर्थः । णौ पर इत्यर्थे रेफेण व्यवधानात् 'पुस्फारयिषति' इत्याद्यसिद्धिः । ज्ञापनफलन्तु *'तुतावयिषति' इत्यादि । तुल्यजातीयस्येत्यस्य प्वादिघटितधात्वच्तुल्यस्या-

---

सामान्योपलक्षणम् । तेन आस्यशब्दात् "णिङ्ङाङ्गान्निरसने" (चु० ग० सू०) इति णिङ्प्रत्ययेऽपि निषेधप्रवृत्त्या 'आसस्यत्' इत्यत्र प्रक्रियादशायामुत्तरखण्डेऽवर्णसत्त्वेन निषेधासिद्धिः । तदुक्तम्भाष्ये-"ओः पुयण्जिषु वचनं ज्ञापकम् । णौ स्थानिवद्भावस्य" इति । *नन्वेवमिति । यत्र प्रक्रियादशायां परिनिष्ठिते वेत्यस्य स्वीकारे । *द्वितीयद्वित्वे=लशब्दस्य द्वित्वे । अत्र प्रक्रियादशायामुत्तरखण्डेऽवर्णलाभस्य सत्त्वात् । *एतद्भाष्येति । कृतायां वृद्धौ टिलोप इत्यत्र हलिकल्योरदन्तत्वनिपातनस्य ज्ञापकत्वप्रतिपादनपरभाष्येत्यर्थः । *तत्पाठेन=यथेष्टमित्यस्य पाठेन । यथा 'कथ' इत्यत्राकारोच्चारणं वृद्ध्यभावार्थन्तथोनेत्यत्राकारोच्चारणमुपधाकार्यप्रतिबन्धार्थम् । दीर्घोकारस्य सत्त्वादित्यकारोच्चारणादिहाल्लोपविकल्प इति कश्चिदाह, तन्मतन्दूषयति-*यत्त्विति । *णिज्विकल्पार्थमिति । एवञ्च णिजभावेऽप्यनेकाच्त्वादस्मादाम्भवतीति तद्भावः । *अपास्तम् । अभ्यासेऽकारस्य श्रवणेनाकारोच्चारणस्य चारितार्थ्यात्सामर्थ्यस्यैवाभावादिति भावः । फलान्तरमप्याह-*किञ्चेति । माधवादिसम्मतरीत्या मूलोक्तं व्याख्याय भाष्यस्वारस्यसिद्ध्यर्थमाह-*परे त्विति । *इत्यत्रापि प्राप्नोतीति । "उपधायाश्च" (पा० सू० ७-१-१०१) इतीत्वस्य स्थानिवद्भावः प्राप्नोतीत्यर्थः । *तुतावयिषतीत्यादीति । आदिना 'तुनावयिषति' इत्यस्य सङ्ग्रहः । 'तु' 'नु' धातुभ्यां हेतुमति णिचि सति

च इत्यर्थः । षष्ठ्यन्ततयाऽच इत्यस्यैव तद्विशेष्यत्वात् । अचूत्वेन तुल्यत्वं कृतेरपीति पृच्छति–कश्चेति । उत्तरयति–यथाजातीयका इति । अत्र पुयण्जकारैरचस्तुल्यत्वासम्भवात् । पुयाणित्यादेस्तद्घटितधात्वच इत्यर्थः । धात्ववयवत्वादिना साम्यमत्रापीति पृच्छति–कथं जातीयका इति । उत्तरयति–अवर्णपरा इति । एवञ्च द्वित्वप्रवृत्तिवेलायामवर्णपरत्वसंपादकादेशस्थानिनोऽच आदेश इत्यर्थः । तदैव स्थानिवत्त्वप्रवृत्त्या तत्कालिकसाजात्यग्रहणस्यैवौचित्यात् । एवञ्चा*वर्णपरत्वसम्पादकादेशस्थानित्वेन तुल्यतेति भावः । *एतेनाद्यजवर्णकपरखण्डका इत्यर्थो ऽस्येति परास्तम् । तत्प्रवृत्तिवेलायां परखण्डाभावाद् आद्यजित्यादेः शब्दमर्यादयाऽलाभाच्च । एवञ्च यत्र द्विरुक्तौ परभागस्याद्योऽजवर्णस्तत्रायं स्थानिवद्भाव इति "द्विर्वचनेऽचि"( पा० सू० १–१–५९ ) इत्यादौ भाष्यकैयटयोः स्थितमिति माधवोक्तं चिन्त्यम् । अत्रत्यभाष्यकैयटाभ्यामक्षरमर्यादया तदर्थालाभात् *सर्वथा 'औनिनत्' इत्यादि चिन्त्यमेव । *द्वित्वप्रवृत्तिवेलायां स्थानिवद्भावात्पूर्वमुत्तरखण्डेऽकाराभावात् । नापि द्वित्वोत्तरं सः । द्वित्वे कर्त्तव्ये एव स्थानिवद्भावेन तदुत्तरमुत्तरखण्डे तदश्रवणात् स्थानिवद्भावकृताकारश्रवणस्य तत्प्रवृत्तौ निमित्तत्वायोगाच्च । अत एव णौ स्थानिवदित्यस्य प्रथमोपस्थिताऽदन्तोदाहरणं विहायोकारान्तोदाहरणं दत्तं भाष्ये इति प्राहुः ।

णिङ्विकल्प इति । *सूत्रादेरदन्तत्वमनेकाच्त्वेनाषोपदेशत्वार्थमिति न ततो णिज्विकल्प इति भावः । अन्त उदात्त इति । तेन 'गर्वति' इति *मध्योदात्तम् । सूत्रमूत्रयोः पाठे फलं चिन्त्यम् । 'तत्करो-

---

रूपम् । *अवर्णपरत्वसम्पादकेति । अत्रावर्णपरत्वसम्पादकेत्युपादानात्साक्षात्स्वस्यावर्णसम्पादकत्वाभावेऽपि 'तुतावयिषति'इत्यादौ वृद्ध्यावावादेशस्य तत्सम्पादकत्वाद्वृद्धेरप्यवर्णसम्पादकत्वस्वोध्यम् । *एतेन=वक्ष्यमाणदूषणेन । *सर्वथेति । अत्र सर्वथेतिकथनेनावर्णपरत्वसम्पादकादेशस्थानित्वेन तुल्यतेति सिद्धान्तरीत्या स्थानिवद्भावाप्रवृत्तिः सूचिता । आदेशस्यावर्णपरत्वसम्पादकत्वाभावात् । मूलोक्तरीत्यापि न स्थानिवद्भावप्रवृत्तिरित्याह–*द्वित्वप्रवृत्तिवेलायामित्यादिना ।

*सूत्रादेरिति । अत्रादिना स्थूलसत्रयोः परिग्रहः । अत्र स्थूलादेरिति वक्तुमुचितम् । *मध्योदात्तमिति । शपा सहैकादेशेऽपि 'एकादेश उदा-

ति"( चु० ग० सू० ) इत्यस्य 'सूत्रयति' 'मूत्रयति' इति भाष्ये उदाहरणात् । वस्त्रं वेष्टयतीत्यर्थे 'वस्त्रं सूत्रयति' इति सिद्धये घटः प्रस्रवतीत्यर्थे 'घटो मूत्रयति' इत्यर्थं तयोः पाठ *इति कश्चित् । 'मूत्राश्चकार' इत्यर्थोऽन्त्यपाठः, 'कार्पासेन वेष्टयति' इत्यर्थे 'कार्पासेन सूत्रयति' इत्यर्थश्चाद्यपाठ इत्यन्ये ।

*गणसूत्रमाह-प्रातिपदिकादिति । यत्तु तत्प्रकृतिकसुबन्तादित्यर्थः तत्करोतीत्यस्य तद्विवरणत्वात् । तत्र हि तदिति कर्मपरम् । 'द्वितीयान्तात्प्रत्ययः' इति तृतीये हरदत्तोक्तेः । तन्न । सुप इत्यस्याप्रकृतत्वात् सुप इत्येव सिद्धे गणसूत्रस्थप्रातिपदिकपदासङ्गतेश्च । *अत एव 'स्वार्थे परिपूर्णम्'इति न्यायोऽत्र न । *अत एवाचारक्विप् प्रातिपदिकादेव । इदमेवाभिप्रेत्य मूले 'तत्करोतीति, पूर्वस्य प्रपञ्चः' इत्युक्तम् । माधवस्वरसोऽप्येवमेव । द्वितीयान्तादिति हरदत्तस्य *तदन्तार्थकादित्यर्थः । *अत एव 'अत्यरराजत्' 'पचयति' इत्यादौ न कुत्वं पदत्वाभावात् । परे तु तत्करोतीति "हेतुमति च" ( पा० सू० ३-१-२६ ) इति सूत्रे *वार्तिकात् "टेः" ( पा० सू० ६-४-१५५ ) इति सूत्रे 'णाविष्ठवत् प्रातिपदिकस्य' इति वार्तिकाच्च गणसूत्राणि प्रातिपदिकाद्धात्वर्थे इत्यत्रेष्ठवच्चेति चाप्रामाणिकानि तत्र सूत्रे वृत्तिकारादिभिः *ख्युनामित्यादीनां सूत्रावयवत्वेन पठितानामपि वार्तिकेषु दर्शनेनाप्रामाणिकत्वकल्पनस्य सर्वसंमतत्वात् । वार्तिके करोतीति धात्वर्थोपलक्षणम् । इष्ठवत्त्वविधायके प्रातिपदिकस्ये-

---

त्येनोदात्तः"( पा० सू० ८-२-५ ) इति मध्योदात्तमित्यर्थः । *इति कश्चिदिति । भाष्योक्तोदाहरणास्वारस्यमत्रारुचिः । सूत्राश्चकारेत्यामर्थः पाठ इत्यपि कश्चित् ।

*गणसूत्रमिति । चुराद्यन्तर्गणसूत्रमित्यर्थः । *अत एव=प्रातिपदिकपदोपादानादेव । *अत एव=प्रातिपदिकपदोपादानं यत्र तत्र सुबन्तादित्यर्थालाभादेव । *तदन्तार्थकादिति । द्वितीयान्तार्थकात्कर्मसमर्पकादित्यर्थः । *अत एव=सुबन्तादुत्पत्त्यभावादेव । 'पचयति'इत्यत्र पचाद्यजन्ताण्णिच् । न च कुत्वे कर्त्तव्ये स्थानिवद्भावाट्टिलोपस्य भविष्यतीति वाच्यम् । कुत्वे न स्थानिवदिति निषेधात् । *वार्त्तिकादिति । "तत्करोति तदाचष्टे"( का० वा० ) इति वार्त्तिकादित्यर्थः । *ख्युनामित्यादीनामिति । "टिड्ढाणञ्"( पा० सू० ४-१-१५ ) इति सूत्रे तरप्ख्युनामिति हि केचित्पठन्ति । केचित्तु सुबन्ताण्णिजुत्पत्तावपि न 'अत्यरराजत्' 'पचयति' इत्यत्र कुत्वस्य प्राप्तिः । इष्ठवदित्यातिदिष्टेन भत्वेन पदत्वस्य

त्युक्त्या *प्रातिपदिकादेव तदुत्पत्तिलाभात्। (१)(अत एव 'घटो जायते' 'घटं पचति' इत्यर्थे च 'घटयति' इत्यादिं न) इत्याहुः। *तत्र वार्त्तिके णाविष्ठवत्युपमेये सप्तमीदर्शनात्सप्तम्यन्ताद्वतिरित्याह–इष्ठे यथेति। *अत एव 'भावयति' इत्यादौ "इष्ठस्य यिट् च" (पा० सू० ६-४-१५९) इति यिडागमो न। प्रस्थयत्यादि। आदिना सकलषाष्ठादेशाः *पाश्चमिकः कन् च गृह्यते। *अत एव भारद्वाजीयैः 'णाविष्ठवत् प्रातिपदिकस्य पुंवद्भावरभावटिलोपयणादिपरप्रादिविन्मतोर्लुक्कन्विध्यर्थम्' इति पाश्च-

---

बाधात्। यथोद्देशपक्षाश्रयणेन पूर्वकालजातभत्वेन णिचो लोपेऽपि पदत्वबाधस्य वक्तुं शक्यत्वात्। प्रातिपदिकाण्णिजितिपक्षेऽपि भत्वातिदेशोऽवश्यमङ्गीकार्यः। अन्यथा 'स्रग्विणमाख्यत्=असस्रजत्' इत्यत्र कुत्वापत्तिरिति, तन्न। सुबन्तादित्यस्य सुप इत्यस्याप्रकृतत्वेन तस्य पक्षस्य पूर्वमेवासम्भवस्योपपादितत्वात्। न च 'तत्करोति' इत्यत्र तदिति 'तेनातिक्रामति' इत्यत्र तेनेति विभिन्नविभक्तिनिर्देशात्स पक्षः स्वीक्रियत इति वाच्यम्। तत्तेनेतिविभिन्नविभक्तिनिर्देशस्य क्वचित्कर्मसमर्पकात्क्वचित्करणसमर्पकात्प्रातिपदिकाण्णिज् यथा स्यादित्येवमर्थत्वस्य स्वीकारात् प्रातिपदिकपदस्य लक्षणायां साधकाभावाच्च। इष्ठवदित्यतिदिष्टभत्वेन पदत्वस्य बाध इत्यपि न। कार्यकालपक्षे णिचो लोपेन तन्निमित्तस्य भत्वस्य वक्तुमशक्यत्वात्। "प्रत्ययलोपे" (पा० सू० १-१-६२) इति सूत्रस्य नियमार्थत्वमेव भाष्यकृता सिद्धान्तितमिति स्थानिवद्भाव एव प्रकृते वाच्यः, स च न सम्भवति। यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तिस्तन्निमित्तातिरिक्तसर्वनिमित्तकत्वमतिदेशस्येत्यस्य सर्वसम्मतत्वादन्यथा सर्वस्मिन्नित्यत्रापि सुप्त्वातिदेशेन यञादित्वाभावेऽपि दीर्घापत्तिः स्यात्। एवञ्चातिदिष्टभत्वस्याप्यज्निमित्तकतयाऽनल्विधाविति निषेधात्। न चात्र यथोद्देसपक्ष एवाश्रीयते न तु कार्यकालपक्ष इति वाच्यम्। अन्तर्वर्त्तिसुन्निमित्तकपदत्वस्य बहिर्भूतणिज्निमित्तकभत्वेन बाधायोगात्। न च पदत्वोत्तरम्भत्वमस्तु। संज्ञाद्वयस्याकडारीयत्वेनासमावेशात्। यदपि प्रातिपदिकाण्णिजितिपक्षेऽपि भत्वातिदेशः 'असस्रजत्' इत्येवमर्थं स्वीकार्य इति। तदपि न। स्रग्विणमाचष्टे स्रजयतीत्यत्र कुत्वादर्शनेनैतादृशे विषयेऽन्तर्वर्त्तिसुन्निमित्तकपदत्वस्यापि बहिरङ्गणिज्निमित्तकभत्वेन भाष्यप्रामाण्येन बाधस्य कल्पनादिति दिक्। *प्रातिपदिकादेवेति। अन्यथा सुप इत्येव वदेत्। इष्ठवदित्यनेनेष्ठन्निमित्तककार्यस्यैवातिदेशो न त्विष्ठनो यत्कार्यन्तस्याप्यतिदेश इत्याह–*तत्रेत्यादिना। *अत एव=इष्ठन्निमित्तककार्यस्यैवातिदेशादेव। *पाश्चमिकः कन्निति। "युवाल्पयोः कनन्यतरस्याम्" (पा० सू० ५-३-६४) इति सूत्रविहितः कन्नित्यर्थः। एतेन पाश्चमिकज्यायादेशनिरासः। *अत एव=पाश्चमिककन्मात्रातिदेशस्येष्टत्वादेव।

---

(१) कंसान्तर्गतो ग्रन्थः आदर्शपुस्तके नास्ति।

मिकः कनेवोपात्तो न तु तत्रादिपदमुपात्तं. नापि प्रथमोपस्थितत्रस्योपा-
दानमिति *केचित् । तस्मात् कन्व्यतिरिक्तपाञ्चमिकानामनभिधानमेव
णाविति बोध्यम् । माधवादयस्तु कन्ग्रहणमुपलक्षणं मत्वा सर्वपाञ्चमि-
कादेशान् *मन्वते । *यद्यपि भसञ्ज्ञा भाष्ये न दृश्यते तथापि 'उदा-
हरणमेतन्न परिगणनम्'इति भाष्यात्*तस्या अपि ग्रहणम् । तेन स्रग्वि-
णमाचष्टे='स्रजयति' इत्यादौ न कुत्वम् । ण्यन्तात्क्विपि 'स्रग्' इत्यादौ ब-
हिर्भूतसुब्निमित्तबहिरङ्गपदत्वस्यान्तरङ्गेण भत्वेन बाधायोगात्कुत्वं भवत्येव।
पुंवद्भावोदाहरणम् 'इडविडमाचष्टे=*ऐडविडयति' इति । *इष्ठनि दृष्टस्यै-
वातिदेश इति आदिवृद्धेर्नातिदेश इति दिक् ।

परत्वाद् वृद्धाविति । *अत एव "मुण्डमिश्र" ( पा० सू० ३-१-२१ ) इत्यत्र हलकलेति हलिकल्योरदन्तत्वनिपातनं भा-
ष्योक्तं सार्थकम् । वृद्धेः पूर्वं लोपे तु इका लोपेऽप्यग्लोपिः
त्वसत्त्वेन तद्वैयर्थ्यं स्पष्टमेव । *लोपस्य शब्दान्तरप्राप्त्या वृद्धेः स्वत
एवानित्यत्वेनोभयोरनित्ययोः परत्वाद् वृद्धौ आवादेशात्पूर्वं परत्वा-
दाङ्गत्वाच्च लोप इत्यनग्लोपित्वात् सन्वत्त्वं भवत्येवेति भावः । न चात्र
पक्षे 'वारि आख्यद्=अवीवरत्' इत्यादौ वृद्धौ कृतायाङ्कृत*स्यापि टिलो
पस्य स्थानिवत्त्वाद्ध्रस्वत्वं न प्राप्नोतीति वाच्यम् । चङ्परनिर्ह्रासे तन्निषे-

*केचित्=मुख्याः । *मन्वते । भारद्वाजीयवार्त्तिकन्तु न परिगणनङ्किन्तूदाह-
हरणनिदर्शनपरमिति च सम्प्रतिपद्यन्ते इत्यपि बोध्यम् । अमुमेवार्थमाह-*य-
द्यपीत्यादिना । *तस्या अपि=भसंज्ञाया अपि । *ऐडविडयतीति । इडविडो-
ऽपत्यं स्त्री इडविड् । "जनपदशब्दात्"( पा० सू० ४-१-१६८ ) इत्यञ् । तस्य
"अतश्च"( पा० सू० ४-१-१७७ ) इति स्त्रियां लुक् । ततं आख्यातार्थे णिच् ।
पुंवद्भावेनाञन्तत्वमिति टिलोपेऽप्यञ एव निवृत्तिः । नन्विष्ठवदित्यतिदेशेन
णिचस्तद्धितत्वातिदेशे तस्मिण्णिति आदिवृद्धिरपि स्यादित्यत आह-*इष्ठनि
दृष्टेति। तद्धितत्वन्तु नातिदिश्यते। उपमेये सप्तमीदर्शनादित्युक्तत्वादिति भावः।
भारद्वाजीयवार्त्तिकस्यापरिगणनपरमिति वादिनोऽपि टिलोपपदं टिलोपनिमित्त-
भसंज्ञाया अप्युपलक्षणम्। 'स्रजयति' इति भाष्योदाहरणादित्यपि दिगित्यनेन
सूचितम्। एनीमाचष्टे एतयतीत्येतत्पुंवद्भावोदाहरणं नोपन्यस्तम् । टिलोपेन
ङीपि निवृत्ते तत्सन्नियोगशिष्टनस्यापि निवृत्तिसिद्धेः । एवं 'दारदयति'इत्यपि
पुंवद्भावोदाहरणन्द्रष्टव्यम् ।

*अत एव=वृद्धौ सत्यां टिलोप इतिपक्षस्वीकारादेव । ननु
लोपस्य नित्यत्वेन परत्वादित्यसङ्गतमत आह-*लोपस्येति । *कृतस्यापि टि-

धात् । इदञ्च "मुण्डमिश्र" (पा० सू० ३-१-२१) इति सूत्रे भाष्यकैयटयोः स्पष्टम् । वृद्धेर्लोप इति । *अत एव "नाग्लोपि" (पा०सू० ७-४-२) इति सूत्रेऽग्लोपीत्यत्रागिति *प्रत्याहारग्रहणं चरितार्थम् । *इदुदुपधेभ्यो णिजन्तेभ्यो लुङ् तु न भाष्यप्रामाण्यादिति भावः । *साम्प्रमिकमेव न्यायः । "मुण्डमिश्र" (पा० सू० ३-१-२१) इति सूत्रस्थन्त्वेकदेश्युक्तिः । 'अचकलत्' इत्यादौ वृद्धेरपि नित्यत्वमाशङ्क्य शब्दान्तरप्राप्त्या अनित्यत्वप्रतिपादकस्य "मुण्ड" (पा० सू० ३-१-२१) इति सूत्रस्थभाष्यस्य *तत्त्वावश्यकत्वात् । *लोपस्य स्थानिवद्भावेन "अत उपधायाः" (पा० सू० ७-२-११६) इत्यस्याप्राप्तेः "अचोऽञ्णिति" (पा० सू० ७-२-११५) इत्यस्याः स्थान्यभावेनाप्राप्तेश्च 'अत उपधायाः" (पा० सू० ७-२-११६) इत्यस्या भिन्नलक्षणत्वाद्भिन्नस्थानिकत्वाच्च । *अत एव "णौ चङि" (पा० सू० ७-४-१) इति सूत्रे *'अवीवदत्' इत्यत्र*णिलोपे ऽग्लोपित्वाद्धस्वप्रतिषेधः प्राप्नोति । न च परत्वाद् वृद्धौ कृतायां लोप इत्यग्लोपित्वाभावः । "नाग्लोपि" (पा० सू० ७-४-२) इति सूत्रे प्रत्याहारग्रहणेन वृद्धेर्लोपस्य बलवत्त्वज्ञापनात् । अथवा "ण्यल्लोपौ (का० वा०) इति पूर्वविप्रतिषेधात्पूर्वं णिलोप इत्याशङ्क्य णेर्णिच्युपसंख्यानेन परिहृतम् । *एतदेवाभिप्रेत्य सप्तमे कैयट आह—अनाश्रित्य ज्ञापकमत्वनिपातनमुक्तं, ज्ञापकाश्रयणन्तु न्याय इति ।

---

लोपस्येति । अपिना कृतायां वृद्धौ टिलोपसंग्रहः । *अत एव='वृद्धेर्लोपो बलीयान्' इति पक्षस्वीकारादेव । *प्रत्याहारग्रहणञ्चरितार्थमिति । तद्धि यत्रैको लोपप्राप्तिस्तत्र वृद्धेः पूर्वं यदि लोपः स्यात्तदा चरितार्थम्भवेत् वृद्धौ सत्यां लोपे त्वनग्लोप इत्यग्लोपित्वमकारलोपेनैव सम्पादनीयमित्यलोपिनो व्यावृत्तये नालोपीत्येव वदेदिति भावः । ननु 'स्वामिनमाख्यत्=असस्वामत्' 'गोदुहमाख्यत्=अजुगोहत्' इत्यत्र वृद्धेः प्राप्त्यभावात्प्रत्याहाराश्रयणञ्चरितार्थमत आह—*इदुदुपधेभ्य इति । द्वयोः पक्षयोर्युक्तम्पक्षमाह—*साम्प्रमिकमेवेति । *तत्त्वेति । एकदेश्युक्तित्वामित्यर्थः । तदेतदुपपादयति—*लोपस्येति । एकस्या वृद्धेः कृताकृतप्रसङ्गित्वस्य वक्तुमशक्यतया नित्यत्वाशङ्काया एवासङ्गत्या प्रकारान्तरेण तस्या अनित्यत्वोपपादनमयुक्तमिति सा एकदेश्युक्तिरिति भावः । *अत एव=वृद्धेर्लोपस्य बलवत्त्वादेव । *अवीवददिति । णिजन्ताण्णिच् लुङ् चङ् । *णिलोपे=प्रथमणिचो लोपे । कैयटस्यापि द्वितीयः पक्षः सम्मत इत्याह—*एतदेवेति ।

*किं च हलकलेत्यकारान्तयोरेव ग्रहणाद् 'अचकलत्' इत्यादि सिद्धं हलिकलिभ्यां णिजेव नास्तीत्यफलमत्वनिपातनम्। न च तत्करोतीति णिच् इकारान्तयोरकारान्तयोश्च पर्यायत्वेन हलकलग्रहणस्य *नियमार्थत्वेन तयोर्णिजभावादिष्टसिद्धेः। एवञ्च चङ्परनिर्ह्रासे स्थानिवत्त्वनिषेधो न कार्यः तत्साध्यस्यावीवददित्यादेर्णेर्णिच्यु*पसंख्यानेन सिद्धेः। *अन्येषान्तु *तत्साध्यानामनभिधानमेवेति "नाग्लोपि" ( पा० सू० ७-४-२ ) इति सूत्रे *कैयटे स्पष्टम्। धातुरूपं चेति गणसूत्रम्। वार्त्तिकमिति। "हेतुमति च" ( पा० सू० ३-१-२६ ) इति सूत्रे इति शेषः। अत्राख्यानशब्देन सर्वं न प्रसिद्धं कंसवधाद्येव। तेन 'राजागमनमाचष्टे=राजानमागमयति'इत्येव। *आख्यानवाचककृदन्तात्तदाचष्ट इत्यर्थे णिचिणच्प्रकृत्यवयवकृतो लुक् तस्यैव कृतो या प्रकृतिर्हन्त्यादिस्तस्या विकारपरित्यागेन स्वेन रूपेणावस्थानमित्यर्थः। प्रकृतिवच्चेति। कृत्प्रकृतिप्रकृतिकणिजन्तवदित्यर्थः, तदाह-हेतुमण्णिजन्त इत्यादिना। *अत एव पुष्ययोगं जानाति='पुष्येण योजयति'इत्यादौ तृतीयासिद्धिः,

---

द्वितीयपक्षस्यैव युक्तत्वेऽपि'अचकलत्'इत्यस्य सिद्धिमाह-*किञ्चेति। *नियमार्थत्वेनेति। हलप्रतिपादकाद्यदि णिच् तदा हलकलयोरेवेति नियमार्थत्वेनेत्यर्थः। *उपसंख्यानेनेति सिद्धेरिति। अत एव "[illegible]"( पा० सू० ७-४-१ ) इति सूत्रभाष्ये णेर्णिचीतिवचनस्यावीवददित्यत्र प्रयोजनमुक्त्वा णिलोपे कृते व्यवधानाभावशङ्कायां स्थानिवद्भावेन व्यवधानमुक्त्वा चङ्परनिर्ह्रासे स्थानिवत्त्वनिषेधमुक्त्वा यदर्थमयं प्रतिषेधस्तस्य ह्रस्वत्वस्य "नाग्लोपि"( पा० सू० ७-४-२ ) इति निषेधः स्यादिति शङ्काया वृद्धेर्लोपस्य प्रत्याहारग्रहणेन बलवत्त्वेनोपपादनं कृत्वाऽवीवददित्यस्य 'णेर्णिचि' इति वचनेनैव सिद्धिरुपसंहारे उक्ता 'तस्मादुपसङ्ख्यानङ्कर्तव्यम्'इत्यनेन। *अन्येषान्त्विति। भासस्य इः=भासिः। वासस्य उः=वासुः। 'भासयमाख्यत्=अबीभसत्' 'वासामाख्यद्=अवीवसत्' इत्यादीनामित्यर्थः। *तत्साध्यानाम्='चङ्परनिर्ह्रासे' इतिवचनसाध्यानाम्। *कैयटे स्पष्टमिति। तत्र हि "नाग्लोपि"( पा० सू० ७-४-२ ) इति सूत्रसाध्यस्य 'अममालत्' इत्यस्य टिलोपस्य स्थानिवत्त्वादनुपधात्वात्प्राप्तिरेव नास्तीत्याशङ्काया भाष्यीयाया अभिप्रायमुक्त्वा 'ननु प्रतिषिध्यते स्थानिवत्त्वं चङ्परनिर्ह्रासेन'इत्याशङ्क्योक्तम् "नैतदस्ति। यदर्थः स प्रतिषेधस्तस्य णेर्णिच्युपसङ्ख्यानमित्यनेन साधितत्वान्न वक्तव्यः" इति प्रतिपादितम्। चकारस्यानुक्तसमुच्चयार्थत्वे साधकमाह-मूले तथा च वार्त्तिकमित्यादिना। आख्यानशब्दे कर्मणि ल्युट्। वार्त्तिकार्थमाह-*आख्यानवाचकेति। *अत एव=वार्त्तिकस्योक्ता-

राजानमागमयतीत्यादौ द्वितीया च। द्वितीयान्तमित्युपलक्षणमाख्यानात्तदाचष्ट इति चोपलक्षणम् । द्वितीयान्तमिति । *अन्यथा प्रत्ययलक्षणेन कृदन्ततया कृत्प्रकृत्यर्थकर्मत्वेन षष्ठी स्यादिति भावः । *परे तु प्रकृतिप्रत्यापत्तिरित्यत्रापि प्रकृतिपदेन प्रत्यासत्त्या कृत्प्रकृतिप्रकृतिकहेतुमण्ण्यन्तप्रकृतिस्तस्याः प्रत्यापत्तिः=प्रत्यभिज्ञाविषया आपत्तिःस्थितिः, सा च पृथक् तत्सत्त्वे तत्रत्यकार्यसत्त्वे च भवतीत्यनेनैव कारकवहिर्भावो, वधाद्यादेशनिवृत्तिः, कुत्वतत्वादिकं, 'योजयति' इत्यादौ कुत्वादिनिवृत्तिश्च सिद्धा । अत एव 'रात्रिविवासमाचष्टे=रात्रिं विवासयति' इत्युदाहरणविषये वचने प्रकृतिप्रत्यापत्तिरित्युक्तिर्भाष्ये चरितार्था । अन्यथा तत्र कृत्प्रकृतेर्विकाराभावेन तदुक्तेर्वैयर्थ्यमेव स्यात् । मम तु कारकवहिर्भावाय तदुक्तिः सार्थिका । एवमपि कंसादेः षष्ठी प्राप्नोतीत्यतः प्रकृतिवच्चेति । यद्विभक्त्यन्तं तत्र कारकं तादृशमत्रापीत्यर्थः । एवञ्च *प्रकृतिपदयोरेकार्थता भवति, चकारमूलकं भिन्नं वाक्यञ्च न कल्प्यं भवतीत्याहुः। कर्तृकरणादिति *न द्वन्द्वो व्याख्यानादित्याशयेनाह-*कर्त्तुर्व्यापारार्थमिति ।

---

र्थत्वादेव । *अन्यथा=यादृशं कारकमित्यर्थास्वीकारे। यदुक्तम्प्रकृतिप्रत्यापत्तिरित्यस्य कृतो या प्रकृतिस्तस्या विकारपरित्यागेन स्वरूपेणावस्थानमिति व्याख्यानन्तन्न युक्तमित्यभिप्रायेणाह-*परे त्विति । *प्रकृतिपदयोः=वार्त्तिकस्थप्रकृतिपदयोः । आख्यानपदे कर्मणि ल्युटो बाहुलकात्करणेन यद्यदाख्येयं तत्सर्वं गृह्यते न तु प्रसिद्धमेव । अत एव काश्याः प्रस्थितो द्वियोजने सूर्योद्गमनं सम्भावयते='सूर्यमुद्गमयति' इत्यपि भवति । किञ्च यदाख्येयन्तद्दर्शनसमानकालिकमेव कथनं यत्र तत्रैवास्य प्रवृत्तिरिष्यते । यदा त्वरण्ये मृगरमणन्दृष्ट्वा ततो ग्रामे आगत्य मृगरमणमाचष्टे तत्र वाक्यमेव भवति न तु णिच् । कंसवधादिशब्दानामाख्यानवाचककृत्पदेन ग्रहणं कृद्ग्रहणपरिभाषया बोध्यम् । नच 'प्रकृतिवच्च कारकम्' इत्यनेन कृति सति कारकं यद्विभक्त्यन्तन्तस्या निवृत्तिरपूर्वा तत्प्रकृतिवाच्यार्थकारकवाचिका विभक्तिश्चेद्विधीयते तदा राजानमागमयतीत्यत्र प्रत्ययलक्षणेन पदत्वान्नलोपः स्यादिति वाच्यम् । उत्तरकालजातविभक्तिनिमित्तकभत्वेन पदत्वस्य बाधात् । *न द्वन्द्वो व्याख्यानादिति । द्वन्द्वस्याभिप्रेतत्वे द्विवचनेनैव निर्दिशेत् । किञ्च तेनातिक्रामतीत्यतस्तेनेत्यनुवृत्त्यैव सिद्धे "कर्त्तृकरणाद्" इत्युपादानवैयर्थ्यञ्च स्यादित्येतन्मूलकव्याख्यानादित्यर्थः । *कर्तुर्व्यापारार्थमितीति । कर्तृवृत्तिव्यापारप्रयोज्यव्यापाराश्रय इत्यर्थः । कर्तृग्रहणाद्यद्यत्कर्तृव्यापार्यन्तत्सर्वं गृह्यते न तु करणत्वेन लोकप्रसिद्धमेवेति भावः। चित्र चित्रीकरणे। अत्र चित्रेति लुप्तपञ्चम्यन्तम् । अदन्तत्वे 'चदि'इत्या-

चित्र । चित्रात्क्यचा णिचो बाधा मा भूदिति पाठः । अदन्तेष्विति । *'वटि'इत्यादिनिर्देशस्तु *सौत्र इति भावः । शाकटायन इति । अत्रारुचिस्तु *सर्वत्राल्लोपबाधे मानाभाव इति । सङ्ग्रामेति । युद्धे इत्यस्य णिजर्थत्वन्तु न प्रकृत्यैव लोकव्युत्पत्त्या तद्बोधात् । *अस्य गणसूत्रत्वादत्र विवक्षित एवार्थः 'मारणतोषणनिशामनेषु ज्ञा'(भ्वा० ग० सू०) इत्यादिवत् ।"अनुदात्तेदिति । *तत्त्वञ्च केवलसङ्ग्रामशब्दस्य क्रियावाचकत्वाभावेनाधातुत्वात्तत्राचरितार्थमिति ण्यन्ते उपकरोतीति बोद्धव्यम् । अकारप्रश्लेषादिति । अदन्तप्रकरणात् । तेनाग्लोपित्वादुपधाह्रस्वो नेति भावः । अस्यानुदात्तत्वे कैयटाद्युक्तं दृढं मानं *चिन्त्यम् । *भृशादिसूत्रे भाष्ये "अवश्यं सङ्ग्रामयतेः सोपसर्गादुत्पत्तिर्वक्तव्या 'असङ्ग्रामयत्शूरः' इत्यर्थम् । तन्नियमार्थम्-अस्मादेव सोपसर्गान्नान्यस्मात्सोपसर्गात्"इत्येवोक्तम् । तस्यायं भावः—ग्रामशब्द एव युद्धार्थकः, संशब्दस्तु तस्य तदर्थत्वद्योतकः । एवञ्च "प्रातिपदिकात्" ( चु० ग० सू० ) इति णिचि 'प्रजयति' इत्यादौ द्योतकस्य प्रादेरिवास्यापि द्योतकस्य धातावन्तर्भावो न स्यात् । एवञ्च 'सङ्ग्रामयते' इत्येव स्यादतो ग्राम युद्धे इत्येतावतैव युद्धे वर्त्तमानाद्ग्रामशब्दान्तादित्यर्थकेन सङ्ग्रामेति विशिष्टात् णिचि सिद्धे सङ्ग्रामेति पाठो नियमार्थ इति । नियमाकारादि चाग्रे दर्शयिष्यते । एवञ्चास्यानुदात्तत्वे मानं चिन्त्यम् । भाष्यप्रयोगस्य णिचश्चेति पाक्षिकात्मनेपदेनापि सिद्धेरित्यलम् । बहुलमिति । *"भूवादि" (पा० सू० १-३-१) सूत्रे तु 'पाठेन धातुसञ्ज्ञा'इति भाष्यप्रतीकमुपा-

---

दिनिर्देशस्य का गतिरत आह-*वटीत्यादीति । *सौत्र इति । एवञ्च वटेति वक्तव्ये इकारनिर्देशोऽस्येदित्त्वमपीत्येतद्बोधनायेति बोध्यम् । *सर्वत्र=कथादिधातुषु।'सङ्ग्राम युद्धे'।युद्धे वर्त्तमानं सङ्ग्रामेतिप्रातिपदिकं धात्वर्थे णिचं लभत इत्यर्थः । प्रातिपदिकपदानुवृत्त्या प्रातिपदिकमिति लब्धम् । *अस्य सूत्रत्वादिति । एवञ्च युद्धे इत्यस्य णिजर्थबोधकत्वे तदुपादानवैयर्थ्यापत्तिरिति भावः । *तत्त्वञ्च=अनुदात्तेत्त्वञ्च । *चिन्त्यमिति । ननु 'असंग्रामयत शूरः' इति भाष्यप्रयोग एव मानम्भविष्यतीत्यतो भाष्यतात्पर्यमाह-*भृशादिसूत्र इत्यादिना । *भूवादिसूत्र इति । तत्र भाष्ये आदिग्रहणस्य यदि पाठो भूप्रभृतीनां क्रियते तदा ते पठित्वा ते धातव इति पठनीयमादिग्रहणं सूत्रे न कार्यं, यदि तु न भ्वादयः पठ्यन्ते तदा पठितोऽप्यादिशब्दोऽसम्बद्धार्थक इति शङ्कोत्तरम्भगवतोक्तमेवन्तर्हि सिद्धे यदादिग्रहणङ्करोति तज्ज्ञापयत्याचार्यो

दाय स पाठो नोपलक्षणार्थोऽपितित्वियत्ताप्रतिपादनार्थ इति कैयटेनोक्तं, तेनेदमनार्षमिति सूचितम् । नन्वगणीत्यादि । हन्त्यर्थाश्चेत्यसङ्गतेरिदं चिन्त्यम् । चुरादिभ्य इति । इदमपि 'चिति'धातौ दूषितप्रायम्* । 'णिङ्गात्' 'श्वेताश्व' इति च *गणसूत्रे । मङ्गलार्थः=प्रसङ्गात्तदर्थः *सिद्धशब्द इत्यर्थः ।

## इति चुरादयः ।

तत्प्रयोजको ( पा० सू० १-४-५५ ) । तच्छब्देन "स्वतन्त्रः कर्ता" ( पा० सू० १-४-५४ ) इत्यत्रोपस्थितः कर्ता गृह्यते चेन च ।

हेतुमति च ( पा० सू० ३-१-२६ ) । हेतुशब्देनोक्तः कृत्रिम एव । *अन्यथा त्रिक्लिन्त्यनुकूलव्यापारादीनामपि हेतुमत्त्वेनातिप्रसङ्गात् । हेतुमांश्च प्रेरणादिरेव,हेतुः=*कर्त्ताऽस्येति व्याख्यानात्तदाह—प्रयोजकव्यापारे इति । स च वाच्य एव । *द्योत्यत्वे तु तस्य विशेषणतापत्तौ 'गमितो ग्रामं देवदत्तो यज्ञदत्तेन' इत्यादौ प्राधान्येन गत्यर्थत्वात्कर्तरिक्तस्यापत्तेरिति भाष्ये स्पष्टम् । विशेष्यत्वे तु 'पाचयति देवदत्तो यज्ञदत्तेन' इत्यादौ प्रधानीभूतव्यापारानाश्रयत्वेन प्रयोज्यस्य कर्तृत्वानापत्तिरित्याशयेनाह—वाच्ये इति ।

ओः पुयण्ज्ये ( पा० सू० ७-४-८० ) । अः परो यस्मादिति व-

---

ऽस्ति च पाठो बाह्यश्च सूत्रादिति । किमेतस्य ज्ञापने प्रयोजनम् ?, पाठेन धातुसंज्ञेत्येतदुपपन्नं भवतीति । तत्र पाठेनेतिप्रतीकमुपादाय कैयटेन तथोक्तमिति । तेन बहुलमेतन्निदर्शनमितिभाष्यविरुद्धमिति कल्प्यत इति भावः । *दूषितप्रायमिति । यदि चुरादिभ्यो णिज् विकल्पेन स्यात्तदा "आधृषाद्वा"(चु० ग० सू०) इत्यस्य वैयर्थ्यापत्तिरित्येवं व्याख्यानन्न युक्तमिति भावः । *णिङङ्गान्निरसने । निरसनमत्र प्रक्षेपः । *गणसूत्र इति । एतेन एतदन्तेषु इष्ठवदित्यस्यासम्बन्धो ध्वनितः । अन्यथा णिङि टिलोपो न स्यात् । पूर्वसूत्रविहितेभ्यो णिच्यपि स न स्यात् । *सिद्धशब्द इति । उपात्त इति शेषः । इति चुरादिविवरणम् ।

## ॥ अथ ण्यन्तविवरणम् ॥

*अन्यथा=हेतुशब्दस्य कारणमात्रपरत्वे । *कर्ताऽस्येति । स्वनिष्ठाधिकरणतानिरूपिताधेयत्वमत्र षष्ठ्यर्थः । *द्योत्यत्वे त्विति । तस्मिन् पक्षे प्रेषणाऽध्येषणादीनान्धातुवाच्यत्वमेव वक्तव्यन्तथा सति तेषां विशेषणत्वं विशेष्यत्वं वा कल्प्यमुभयथाऽपि न युक्तमिति भावः ।

हुव्रीहि*र्न तु यस्येति। पुयणादीनामकारावयवकत्वाभावात्। णौ कृतादेशस्य स्थानिवत्त्वज्ञापनाद् भूभू इति द्वित्वे सन्वद्भावेने*त्वे दीर्घस्तदाह—अबीभवदिति।

'अपरे' इति वर्त्तते, तच्च बहुव्रीहिः, अन्यपदार्थश्च प्रत्यासत्त्या *धात्वक्षरमेव; तदाह—अवर्णपरे इत्यादि। *एकहल्व्यवधाने तु सामर्थ्यात्प्रवृत्तिः। "ओः पुयण्" (पा० सू० ७-४-८०) इत्यस्य तु न व्यवधाने प्रवृत्तिः मानाभावात्। *अत एव 'पुस्फारयिषति' इत्यादिसिद्धिः। अवर्णपर इति किम्?, सुस्रूषति। अचीचकासदिति। चङ्परे णौ-यदङ्गं तस्य योऽभ्यास इति व्याख्यातॄणामर्वाचां मतं एतत्। मतान्तरे इति। चङ्परे णौ यल्लघ्विति *भाष्यसम्मते पक्षे इत्यर्थः। द्वयोरपी-

---

ओः पुयण्ज्यपरे (पा० सू० ७-४-८०)। *न तु यस्येतीति। पञ्चम्यर्थे बहुव्रीहिर्न तु षष्ठ्यर्थे इत्यर्थः। *इत्व इति। प्रकृतसूत्रेण। कृते इति शेषः। ननु प्रकृतसूत्रे ओरिति व्यर्थम्। तथाहि—अवर्णपरपवर्गादिपरकाभ्यासावयवाकारस्य 'पिपक्षति' 'यियक्षति' इत्यादावित्वप्रवृत्तिरिष्टैव। तादृशश्चेकारो नास्त्येव। उकारस्य चेत्वमिष्टमेव। तादृशयोर्ऋकारलृकारयोरपि सम्भवो नास्ति। 'वेञ्' 'रै' 'पै' 'वै' धातुभ्यो यत्र सन् तत्रापि प्रथमत आत्वप्रवृत्त्याऽभ्यासेऽकारस्यैव सत्त्वमिति नैज्व्यावृत्तिः फलमिति परिशेषादुकारस्यैव भविष्यतीति चेन्न। 'पापाचिषते' 'वावचिषते' इत्यादौ यङन्तात्सनि यङ्निमित्ताभ्यासावयवाकारस्यान्तरङ्गत्वात् "दीर्घोऽकितः" (पा० सू० ७-४-८३) इति दीर्घे कृतेऽप्यनेनेकारः स्यादिति तद्व्यावृत्त्यर्थत्वात्। न चैतदपि सनि परे सन्निमित्ताभ्यासावयवस्यैवेति प्रत्यासत्तिकल्पनेन वारयितुं शक्यमिति वाच्यम्। एवन्तर्हि द्विर्वचननिमित्ताङ्गाभ्यासावयवस्य द्विर्वचननिमित्तनिमित्तकङ्कार्यन्तन्निमित्तकाभ्यासस्यैव भवतीति प्रत्यासत्तिलभ्य एवार्थे तस्य प्रकृतसूत्रस्थस्य 'ओः' इति पदस्य ज्ञापकत्वमस्त्विति कल्पनसम्भवात्। तत्फलन्तु जङ्गम्यादिभ्यो यङन्तेभ्यः सनि 'जङ्गमिषते' इत्यादौ "सन्यतः" (पा० सू० ७-४-७९) इतीत्वाभाव इति दिक्। पुयण्जीति किम्?। 'तुतावयिषति' 'जुहावयिषति'। अपर इति किम्?। 'बुभूषति' 'रुरूषति'।

स्रवतिशृणोति (पा० सू० ७-४-८१)। "ओः पुयण्जि" (पा० सू० ७-४-८०) इत्यतोऽनुवर्त्तमानेऽपर इति पदेऽन्यपदार्थजिज्ञासामाह—*धात्वक्षरमेवेति। धात्वक्षरञ्च पूर्वसूत्रोपस्थितःवाद्यण्रूपम्। येन नाव्यवधानन्यायेनैकवर्णव्यवधानेऽप्यस्य प्रवृत्तिरित्याह—*एकहलिति। *अत एव—पूर्वसूत्रस्याव्यवधाने 'अबीभवत्' इत्यादौ चारितार्थ्येन व्यवधाने प्रवृत्त्यभावादेव। *भाष्यसम्मत इति। एतच्च प्रागुपपादितम्।

ति । *'अवीवदत्' इत्यादौ सन्वत्त्वस्याप्युपलक्षणमिदम् । णिनिमित्तक-णिलोपस्य स्थानिवत्त्वेन चङ्परणिपरोपधायास्तत्परलघोरभावाच्च तयो-रसम्भव *इत्यपि बोद्ध्यम् । ण्याकृतीति । "ते प्राग्" ( पा० सू० १-४-८० ) इत्यादौ गत्याकृतिनिर्देशवदिति भावः । *एतेन वर्णग्रहणे एव जातिग्रहणं नान्यत्रेत्यपास्तम् । एवञ्च चङ्परणित्वजात्याश्रयैकानेक-व्यक्तिपरेत्यर्थ इति बोद्ध्यम् । इदञ्च वृत्त्यनुरोधेन । परे तु आकृतिनि-र्देशोऽयुक्तः, जातेः पौर्वापर्याभावेन ह्रस्वसन्वद्भावविधायके चङ्परे णा-विति विशेषणासङ्गतेः । व्यक्तिद्वारकं पौर्वापर्यमिति "हलन्ताच्च" ( पा० सू० १-२-१० ) इति सूत्रकैयटोक्तन्तु न युक्तम् । द्वितीयाध्यायस्थे "आ-र्द्धधातुके" ( पा० सू० २-४-३५ ) इति सूत्रे जातिनिर्देशाज्जात्या पौर्वा-पर्यासम्भवेन विषयसप्तमीति *भाष्यासङ्गत्यापत्त्या जातिनिर्देशे व्य-क्तेर्विशेषणत्वेन तद्द्वारकं न पौर्वापर्यमित्यस्यासङ्गतत्वात् । *किञ्च यथा "आर्धधातुके" ( पा० सू० २-४-३५ ) इति सूत्रे "तस्मिन्" ( पा० सू० १-१-६६ ) इति परिभाषाया अप्रवृत्तिस्तथा जातिनिर्देशेऽत्रापि तदप्रवृत्तिः । एवञ्च 'अवीवदत्' इत्यादौ णिलोपस्य स्थानिवत्त्वेन चङ्प-रणिपरलघोरभावात् "सन्यतः" ( पा० सू० ७-४-७९ ) इतीत्वानाप-त्तिः, एवं "दीर्घो लघोः" ( पा० सू० ७-४-९४ ) इत्यस्याप्यनापत्तिः । किं च णावित्यस्याग्लोपविशेषणत्वेन णित्वजातिनिमित्तकाग्लोपेत्यर्थेन एकणिनिमित्तकापरणिलोपस्यापि णित्वजातिनिमित्तकत्वेनाग्लोपित्वं दुर्वारम् । णित्वजात्याश्रयानेकनिमित्तकेत्यर्थे 'अचकथत्' इत्यादौ दोषः । एकणिजन्ते तावन्मात्रनिमित्तकस्यैवाग्लोपस्य ग्रहणमनेकसत्त्वे त्वनेक-

---

*अवीवददित्यादाविति । हेतुमण्णिजन्ताद्धेतुमण्णिच्सत्त्वे । *इत्यपीति । अपिना मूलोक्ताग्लोपित्वस्य सङ्ग्रहः । *एतेन=वर्णग्रहणातिरिक्तेऽप्याकृति-निर्देशदर्शनेन । *भाष्यासङ्गत्यापत्त्येति । तत्र हि "आर्द्धधातुके' इत्यस्य परसप्त-मीत्वपक्षे 'भव्यं' 'प्रेयम्' 'आख्येयम्' इत्यत्र ण्यति कृतेऽनिष्टे प्रत्यये आदेशाः स्युरितिदोषस्य सामान्याश्रयत्वाद्विशेषस्यानाश्रय इत्यादिनाऽऽर्द्धधातुकत्वजातौ 'भव्यम्' इत्यादौ "अस्तेर्भूः" ( पा० सू० २-४-५२ ) इत्यादेशे कृते यो यतः प्राप्नोति स ततो भविष्यतीति समाधाने जातिवादिनैकदेशिना कृते सामान्येन पौर्वापर्याभावाज्जग्ध्यादीनामनुपपत्तिरिति दूषणमभिधायार्थसिद्धिरेवैषा यत्सा-मान्येन पौर्वापर्यन्नास्तीत्यसति पौर्वापर्ये विषयसप्तमी विज्ञास्यते" इत्युक्तम् । त-

निमित्तकस्यैव तस्य ग्रहणमित्यर्थस्य शब्दमर्यादया न लाभः। अनेकाणि-निमित्तकाग्लोपस्यापसिद्धत्वाच्च। *अत एव "सन्वत्" (पा०सू०७-४-९३) सूत्रे "णौ चङि"(पा० सू० ७-४-१) इत्यत्र ण्णिच्युपसंख्यान-मेवोक्तं भाष्ये *इत्याहुः।

णौचसं( पा० सू० ६-१-३१ )। अत्र णौ च संश्चङोरिति वि-षयसप्तमी। एवञ्च तयोर्विवक्षितयोर*न्तरङ्गत्वाद् वृद्ध्यादेः पूर्वं सम्प्रसार-णम्। अन्यथाऽन्तरङ्गत्वाद् वृद्ध्यायोः कृतयोः पश्चात्संप्रसारणेऽपि 'अशू-शवत्' इत्याद्यसिद्धिस्तदाह-संप्रसारणं तदाश्रयश्चेति। न त्वियं परि-भाषेति भ्रमितव्यम्। तस्या भाष्ये प्रत्याख्यानात्।

स्तम्सुसि (पा० सू० ८-३-११६)। उपसर्गेति। "उपसर्गा-दिति वक्तव्यम्" इति वार्त्तिकात्। *तत्फलमुदाहरति-न्यसीषहदिति। अत्राभ्यासनिमित्तं षत्वं भवत्येवेति भावः। *ऋदित्करणादिति। *अन्यथा

---

बुकरीत्या जात्या पौर्वापर्यमभ्युपेत्याप्याह-*किञ्चेति। *अत एव='णावग्लो-पे' इति पदस्य भवदुक्तव्याख्याने विकल्पेन दूषणसम्भवादेव। *इत्याहुः=भा-ष्यतत्त्वविदः।

*अन्तरङ्गत्वाद् वृद्ध्यादेरिति। अन्तरङ्गत्वादप्राप्तस्य वृद्ध्यादेरित्यर्थः। *तत्फलम='उपसर्गनिमित्तात्' इतिव्याख्यानफलमित्यर्थः। *अन्य-था=उपधाह्रस्वत्वस्य प्रागप्रवृत्तिस्वीकारे। मूले 'उब्ज' आर्जवे। उपदेशे=धा-तूपदेशे। दकारोच्चारणसामर्थ्यादिति। तद्धि "न न्द्राः" (पा० सू० ६-१-३) इतिनिषेधप्रवृत्त्यर्थमेव। यदि निपातनेन बकारोऽन्तरङ्गो द्वित्वात्प्राक् स्यात्तदा दकारोच्चारणं व्यर्थं स्यात्। नन्विदं "भुजन्युब्जौ" (पा० सू० ७-३-६१) इति-सूत्रव्याख्यानकालिकग्रन्थविरुद्धम्। तथाहि-तत्र हि 'पाण्युपतापयोः किम्? भोगः, समुद्गः' इति। अत्र 'समुद्गः' इत्यत्र दकारस्य श्रवणं यथा स्यादित्येव-मर्थं दकारोच्चारणस्य चारितार्थ्याद्दकारोच्चारणसामर्थ्यादित सामर्थ्योक्तेरस-ङ्गतेरिति चेन्न। "इको गुणवृद्धी" (पा० सू० १-१-३) इतिसूत्रे यथा "इग्ग्रह-णमात्सन्ध्यक्षरव्यञ्जननिवृत्त्यर्थम्" (का० वा०) इत्यनेन व्यञ्जननिवृत्त्यर्थत्वे क-थिते तृतीयप्रयोजननिराकरणावसरे "गमेरप्ययण्डो वक्तव्यः। अभ्युद्गः, समुद्गः इति यथा स्यात्" इत्युक्तम्भाष्ये। यदि कुत्वविषयेऽप्युब्जेः प्रयोगः स्यात्तदाऽस्माद् घञि अभ्युद्गः, समुद्गः इति प्रयोगयोः सिद्धौ "गमेरपि"इति भाष्यासङ्गतिरिति अविरोधेकन्यायेनास्य कुत्वविषये 'गम्' धातुप्रकृतिकडान्त-स्य प्रयोग इत्यत्र भाष्यतात्पर्यम्, तथा 'पाण्युपतापयोः किम्? अभ्युद्गः, समुद्गः' इतिग्रन्थस्यापि तद्भाष्यैकवाक्यतयाऽकुत्वविषयेऽस्योब्जधातोः कुत्वविषये गम्-धातुप्रकृतिकडान्तस्य प्रयोग इत्यत्रैव तात्पर्यङ्कल्प्यते इत्याशयात्। परे तु

नित्यत्वाद् द्वित्वे उपधात्वाभावात्प्राप्त्यभावे किन्तेन । मा भवानिति । अत्र यद्वक्तव्यं तद् एत्येधति"(पा०सू०६-१-८९) इत्यत्रोक्तम् । औन्दिददिति । चङ्परे णौ यल्लघु तत्पराभ्यासाभावान्न दीर्घः । अजादेरित्येवेति । अजादेरिति च कर्मधारयात्पञ्चमी, आदिभूतादचः परे इत्यर्थः । तेन 'इन्दिद्रीयिषति'इत्यादौ दस्य न द्वित्वनिषेधः । स्पष्टञ्चेदं संयोगसञ्ज्ञासूत्रे भाष्ये । तत्र हि "नन्द्राः" ( पा० सू० ६-१-३ ) इत्यत्र 'अजादेरिति वर्त्तते'इत्युक्तम् । अदिद्रपदिति । ननु लावस्थायामडिति*पक्षे आदेरचः परत्वमस्त्येव । किं च "चङि"( पा० सू० ६-१-११ ) इति द्वित्वात्*परत्वादपि प्रथममट् न्याय्य इति चेन्न । "नन्द्राः" ( पा० सू० ६-१-३ ) इत्यस्या*धिकारसूत्रत्वेन तत्तत्सूत्रे उपस्थितौ तत्र धातोरिति सत्त्वेन प्रत्यासत्त्या व्याख्यानेन च धातुसञ्ज्ञाकालिकादादेरचः परा नदरा इत्यर्थान्न दोष इत्याहुः । ईदृशानामभिधाने दृढं मानं चिन्त्यमिति कश्चित् ।

ह्लायिबाणि । द्वितीयः पवर्गीयादिः । लोटिलोचय इति । आद्यष्टवर्गप्रथमोपधः, चोपधोऽन्त्यः । वाणिलोठीति । आद्यो दन्त्योष्ठ्यादिः, द्वितीयस्तु द्वितीयोपधः । अत्र पूर्वं 'षट् भाष्ये' इत्युक्त्या न्यासादिमतस्याप्रामाणिकत्वं सूचितम् ।

---

दकारोच्चारणञ्च 'अभ्युद्गः' 'समुद्गः' इत्यत्र दकारश्रवणार्थं तयोरुपधायान्तकारस्य थकारस्य चोच्चारणेन सिद्धिसम्भवादिति दकारोच्चारणं "नन्द्राः" ( पा० सू० ६-१-३ ) इतिनिषेधप्रवृत्त्यर्थमेवेत्याशयश्चेति न पूर्वापरविरोध इत्याहुः । अदिद्रपदिति । अत्र दकारस्य संयोगादित्वेऽप्यादिभूतादचः परत्वाभावान्निषेधो नेति भावः । *इतिपक्ष इति । "मयतेरिदन्यतरस्याम्लुङ्लङ्लृङ्क्ष्वडुदात्तः"( पा० सू० ८-४-७० ) ( पा० सू० ६-४-७१ ) इति ङिलकारकनिर्देशपक्षे । *परत्वादपीति । शब्दान्तरप्राप्त्या द्वयोरप्यनित्यत्वमिति भावः । *अधिकारसूत्रत्वेन="एकाचो द्वे'( पा० सू० ६-१-१ ) इतिवदधिकारसूत्रत्वेन । एतेन द्वित्वविधायकसूत्रे धातोरित्यस्य सत्त्वात्तदेकवाक्यतासम्भवो ध्वनितः । एवञ्च "चङि" ( पा० सू० ६-१-११ ) इतिसूत्रेऽप्युपस्थितौ तत्प्रदेशे धातुसंज्ञाकालिकादादेरचः पराः संयोगादयो नदरा द्विर्न भवन्ति इति वाक्यार्थः प्रसज्यप्रतिषेधपक्षे । पर्युदासन्यायेन तु धातुसंज्ञाप्रवृत्तिकालिकादादिभूतादचः परे ये संयोगादयो नदरास्तद्भिन्ना द्वे भवन्तीत्यर्थान्निषेधाप्राप्तिरिति भावः । किञ्च विधिशास्त्रैकवाक्यतया निषेधस्यान्तर्भूतचङ्निमित्तकत्वेनैतद्दृष्ट्या बहिर्भूतलकारनिमित्तकस्याटोऽसिद्धत्वेन निषेधाभाव इत्यपि बोध्यम् । नाजानन्तर्यपरिभाषा त्वमित्यत्र, नस्त्येव धाति बोध्यम् ।

स्वापेश्चङि ( पा० सू० ६-१-१८ )। चङीति विषयसप्तमी। तेन पूर्वं सम्प्रसारणे द्वित्वम्।

शाच्छासा ( पा० सू० ७-३-३७ )। अत्र पाशब्देनालुग्विकरणत्वा*दलाक्षणिकत्वाच्च पिबतेरेव ग्रहणमिति कैयटः।

ह्वः सम्प्रसारणम् ( पा० सू० ६-१-३२ )। णौ च संश्चङोरित्यनुवर्त्तते। सा च विषयसप्तमी।

लोपः पिबतेः ( पा० सू० ७-४-४ )। अभ्यासेकारसन्नियोगशिष्टत्वाद् द्वित्वे कृते उपधालोपः। अर्पयतीति। वृद्धिं बाधित्वा नित्यत्वात्पुकि गुणः। यलोप इति। "लोपो व्योः" ( पा० सू० ६-१-७६ ) इत्यनेन।

पातेणौ ( का० वा० )। पुक इति। *"अर्त्तिह्री" ( पा० सू० ७-३-३६ ) इत्यस्येत्यर्थः। अत्र लुगागम एव। 'पाल रक्षणे' इत्यनेन रूपे सिद्धेऽप्यागमान्तरनिवृत्तये *वचनम्।

वो विधू( पा० सू० ७-३-३८ )। अत्र वातेरेव ग्रहणं, न वेञो नापि वै इत्यस्य, लाक्षणिकत्वात सानुबन्धकत्वाच्च। केशान्वापयतीति। सुगन्धीकरोतीत्यर्थः।

लीयतेरिति। लीलीङोरित्यर्थः। लातेश्चेति। आदादिकस्य कृतात्वस्य लीयतेश्चेत्यर्थः। *व्याख्यानादिति बोद्धव्यम्। निपातनं=द्रवीकरणम्। ननु कृतात्वस्यापि स्थानिवत्त्वेन लीत्वान्नुक् स्यादत आह—ली ई इति। प्रलम्भनाभिभवेत्यादि। यद्यपि भाष्ये "लीयतेः प्रलम्भनशालीनीकरणयोर्नित्यम्" इत्येव पठितं तथापि तदा*त्मनेपदविषयोप-

---

*अलाक्षणिकत्वादिति। एतेन 'पै' इत्यस्य व्यावृत्तिः सूचिता।

*अर्त्तिह्रीत्यस्येति। युगागमविधायके पिबतेरेव ग्रहणमिति हि प्रतिपादितम्। *वचनम्="पातेणौ" का० वा० ) इति वचनम्। "पातेणौ" (का० वा० ) इतिवचने णावित्यस्य निमित्तस्योपादानेन प्रत्ययादर्शनस्योक्तिसम्भवाभावाच्च लुक्शब्दस्य संज्ञाभूतस्य ग्रहणमित्यपि बोध्यम्।

*व्याख्यानादिति। सूत्रेऽन्यतरस्याङ्ग्रहणकरणमूलकव्याख्यानादित्यर्थः। यदि निरनुबन्धकत्वात् क्र्यादेर्लीधातोरादादिकस्य लाधातोः प्रतिपदोक्तस्यैव ग्रहणमभिप्रेतमभविष्यत्तदा धातुभेदेन रूपद्वयसिद्धौ प्रकृतसूत्रेऽन्यतरस्याङ्ग्रहणन्नाकरिष्यदिति भावः। *आत्मनेपदविषयेति। "लियः सम्मानन"

लक्षणम्, तेन पूजायामपीति कैयटः । द्वयोरेवेऽपि मतान्तरं तेनैवोक्तम् । *इदमेव भाष्यसम्मतं विशिष्य द्वयोरेवोपादानात् । अशितीति तु प्रकरणाल्लब्धम् । अशिश्चात्र णिरेव "क्रीङ्जीनाम्" ( पा० सू० ६-१-४८ ) इत्यत्र पाठात् भाष्ये णावित्युक्तेश्च ।

लियः सं ( पा० सू० १-३-७० ) । *इहापि द्वयोर्ग्रहणं व्याख्यानात्, तदाह—लीङ्लियोरिति । शालीनीकरणम्=अभिभवः ।

प्रयोजकाद् भयश्चेदिति । *हेतुसम्बन्धिभयस्याण्यार्थकत्वात्पञ्चम्यन्तेन समास आश्रीयते इति भावः ।

हेतुभय इत्युक्तेर्भयस्मयावित्यनुपपन्नमत आह—सूत्रे इति ।

भी ई इति । स्थानिवत्सूत्रे भाष्ये स्पष्ट*मेतत् ।

नित्यं स्म ( पा० सू० ६-१-५७ ) हेतुभय इति वर्त्तते । भय इति धात्वर्थोपलक्षणं, तदाह—हेतोः स्मय इति । भाययतीति । द्वितीयोऽपि तालव्यान्तस्थः । कथन्तर्हि विस्मापयन्निति । आत्वं कृतमात्मनेपदञ्च नेत्यत्र बीजाभाव इति प्रश्नः । उभौ तालव्ययकारावेवेति न दोष इत्युत्तरम् । यद्वेति । आत्मनेपदं *भीस्मिप्रकृतिकण्यन्तादेवेति न ण्यन्ताण्णाविति भावः ।

णौ च सं । ( पा० सू० २-४-५१ ) । अत्राधिकृतमार्द्धधातुक इति *णाविति च विषयसप्तमीति स्पष्टमाकरे । *तत्रादेशस्य णिबुद्धिनिमित्तकत्वेऽपि गाङो द्वित्वे कार्ये "णावच आदेशो न" इति न प्रवर्त्तते । सति हि तस्मिन् "अजादेर्द्वितीयस्य"( पा० सू० ६-१-२ ) इति णिच एव द्वित्वे उत्तरखण्डेऽवर्णपरत्वाभावात् अस्योवर्णादेशत्वाभावाच्च ।

---

( पा० सू० १-३-७० ) इत्यनेन तत्रात्मनेपदविधानादिति भावः । *इदमेव=मतान्तरमेव ।

*इहापि द्वयोर्ग्रहणं व्याख्यानादिति । अन्यतरस्याङ्ग्रहणेन लीधातुविषये व्यवस्थापकन्यायाप्रवृत्तिज्ञापनमूलकव्याख्यानादित्यर्थः ।

कारणपरहेतुशब्देन षष्ठीसमासे हेतुपदोपादानमनर्थकमित्याह—*हेतुसम्बन्धीति ।

*एतत्=इकारप्रश्लेषेण दोषवारणम् ।

*भीस्मिप्रकृतिकेति । प्रत्यासत्त्या तथा कल्प्यत इति भावः । *णाविति चेति । "आर्द्धधातुके" इत्यस्य विषयसप्तमीत्वं प्राग् व्यवस्थापितमिति तत्सामानाधिकरण्याण्णावित्यपि विषयसप्तमीति भावः । "ओः पुयण्ज्यि"

प्रजने वीयतेः ( पा० सू० ६–१–५५ ) । नायं श्यन् , आदादिकत्वात् । यका निर्देशस्त्वदृष्टार्थः । ण्येञो ग्रहणार्थन्तु न । तस्य प्रजने वृत्तौ मानाभावात्, तस्य "शाच्छासा" ( पा० सू० ७–३–३७ ) इति पुगपवादयुको विधानेन रूपे *विशेषाभावाच्च । *"वचिस्वपि" ( पा० सू० ६–१–१५ ) इत्यादिसंप्रसारणयोग्यण्यन्तेभ्यः काम्यच्सूत्रस्थयोः संप्रसारणविधायके विहितविशेषणपक्षतदितर*पक्षयोः फलैक्याय क्विब्भावस्य सत्त्वाच्च । *एतेन ण्यन्तात्क्विप्यात्वपक्षे*'व्याः' 'व्यौ' इत्यादिरूपाणि, तदभावपक्षे 'व्यैः' 'व्यायौ' इत्यादिरूपाणीति विशेष इत्य-

---

( पा० सू० ७-४-८० ) इतिसूत्रस्थवर्गादिग्रहणज्ञापितवचनस्येहाप्रवृत्त्या णौकृतस्य गाङादेशस्य न स्थानिवत्त्वमित्याह–*तत्रादेशस्येत्यादिना ।

सिध्यतेरपार ( पा० सू० ६-१-४९ ) । अपारलौकिकोऽर्थःप्रकृते धात्वर्थफलरूपो विवक्षितः । परलोकः प्रयोजनमस्य=पारलौकिकम् । 'अन्नं साधयति'इत्यत्र धात्वर्थफलनिष्पत्तिरूपम् । तच्च परम्परया यद्यपि ब्राह्मणेभ्यो दानादिना पारलौकिकम्भवति । तथापि साक्षाद्यत्पारलौकिकन्तदेव फलम् अपारलौकिकेत्यत्र प्रतियोगित्वेन विवक्षितमित्येतत्सूचनाय ऐहलौकिक इति वक्तव्येऽपारलौकिक इत्युपात्तम् ।

प्रजने वीयतेः ( पा० सू० ६-१-५५ ) । *विशेषाभावादिति । आत्वभावाभावयोर्विशेषाभावादित्यर्थः । विशेषसम्भावनानिरासायाह–*वचिस्वपीत्यादीति । *पक्षयोरिति । तत्र हि–काम्यचः ककारस्य फलाभावादित्संज्ञाऽभावे उक्ते "इदन्तर्हि प्रयोजनम्–'उपयट् काम्यति'इत्यत्र सम्प्रसारणं यथा स्यात्"इतिपूर्वपक्षिणोक्ते"यजादिभिरत्र कितं विशेषयिष्यामः यजादिभ्यो विहिते किति" इति समाधाय "अथापि कथञ्चिदित्कार्यं स्यादेवमपि न दोषः "सुप आत्मनः क्यच्"काम्यच्च" इति चकारस्य प्रश्लेषेण काम्यचः ककारस्यानादित्वं साधितम् । अथापीति । "यजादिभिः किन्न विशेष्यते कार्यित्वेन यजादयो निर्दिश्यन्ते" इति कैयटः । एतेनोभयोः पक्षयोः फलैक्यम्बोधितम् । यदि सम्प्रसारणयोग्येभ्यो ण्यन्तेभ्यः क्विप्स्यात्तदा णिलोपे'कौ विधिम्प्रति' इति स्थानिवद्भावनिषेधे विहितविशेषणाभावपक्षे सम्प्रसारणस्य विहितविशेषणपक्षे सम्प्रसारणाभावस्य प्राप्तिरिति फलभेदः स्यादिति तादृशेभ्य क्विब्भावः कल्प्य इति भावः । *एतेन=पूर्वोक्तव्याख्यानेन । *'व्याः' 'व्यौ' इत्यादिरूपाणीति । आत्वपक्षे णौ युगागमेऽपि णिजन्तात्क्विपि णिलोपे वल्निमित्तकयकारलोपे 'व्याः' इत्यादिरूपम् । वलि लोपे णिलोपस्य स्थानिवत्त्वन्तु न । 'कौ लुप्तम्' ( प० भा० ) इति निषेधात् । आत्वाभावपक्षे तु णिक्परत्वेऽपि युगागमो न । "शाच्छासा" ( पा० सू० ७-३-३७ )

पास्तम्, *विचोऽसार्वत्रिकत्वाच्च । अत एव भाष्ये "विभाषा लीयतेः" (पा० सू० ६-१-५१) इत्यत्रत्रात्र सामान्यग्रहणार्थत्वं नोक्तमित्यलम् ।

वा चित्त (पा० सू० ६-४-९१) । णाविति वर्त्तते । प्राप्तविभाषेयम् । तेनेह न—चित्तस्य दोषः । जृणातेस्त्वति । *तस्य षित्त्वाभावेन मित्त्वाभावादिति भावः । आखेट इति । *अनेन पक्ष्याखेटेऽपि 'रजयति पक्षिणः' इत्येवेति सूचयति । *अन्ये तु 'रजयाञ्चकार विरजाः स मृगान्' इत्यादिप्रयोगान्मृगरमणं यथाश्रुतमेव । अत एव भाष्ये मृगरमण इति किमर्थं 'रञ्जयति वस्त्राणि' इति प्रत्युदाहृतमित्याहुः । ज्ञपादिरिति । तेन मित्त्वाद्ध्रस्वः । चिनोतेस्तु "चिस्फुरोः" (पा० सू० ६-१-५४) इत्यात्वे पुकि तस्यामित्त्वान्न ह्रस्वः । पक्षे तालव्यौ द्वौ यकारौ । *इदञ्चुरादिलिखिते 'परेतु'मते बोद्ध्यम् । अपुस्फरदिति । *आत्वस्य णौ कृतत्वेन स्थानिवत्त्वेन स्फुरित्यस्य द्वित्वमिति भावः ।

---

इतिसूत्रे आत इत्यस्य "अर्त्तिह्री" (पा० सू० ७-३-३६) इतिसूत्रादनुवर्त्तनात् । अत एव 'अजूहवत्' 'अजुहावत्' इत्यत्र युगागमाभावः । एवञ्च "अचोञ्णिति" (पा० सू० ७-२-११५) इति वृद्धौ 'व्यैः' इत्यादिरूपमिति बोध्यम् । ननु णिजन्ताद्विचि सत्यात्वपक्षे युगागमे वलि लोपे णिलोपस्य स्थानिवत्त्वेन यान्तम्, आत्वाभावे तु 'व्यैः' इतिविशेषोऽस्त्येवेत्यत आह—*विच इति ।

वा चित्तविरागे (पा० सू० ६-४-९१) । चित्तं=मनः । तस्य विरागोऽप्रीतिः स्वीययोग्यार्थग्रहणानुकूलव्यापाराभावरूपा । *तस्य=क्नूयादेः । *अनेन='आखेट' इति व्याख्यानेन । 'मृगरमणम्' इति समुदाय आखेटकपरः, मृगपदार्थो न विवक्षितः । आखेटश्च ग्रहणानुकूलव्यापारविशेषः । *अन्ये त्विति । एतन्मते मृगरमण इत्यत्र मृगपदार्थो विवक्षित एव । यत्र रञ्जधातुर्मृगनिष्ठग्रहणाद्यनुकूलव्यापारवाचकस्तत्रैवास्य प्रवृत्तिः ।

चिस्फुरोर्णौ (पा० सू० ६-१-५४) । अत्र चिशब्देन चुरादिस्वादिपठितयोर्ग्रहणम् । मित्त्वे तु विशेषः । ननु प्रतिपदोक्तपरिभाषया चुरादिणिच एव णावित्यनेन ग्रहणमिति मते चिनोतेः 'चापयति' इत्यनुपपन्नमत आह—*इदञ्चुरादीति । ननु कृतात्वस्य द्वित्वेऽभ्यासेऽकारश्रवणापत्तिरत आह—*आत्वस्येति ।

ननु "उभौ साभ्यासस्य" (पा० सू० ८-४-२१) इत्यत्र साभ्यासस्येति कार्यिणो नकारस्य विशेषणं स्याद् 'गुणानाञ्च परार्थत्वात्' इति न्यायात् 'उभौ' इति च न नकारस्य विशेषणम्भविष्यति । साभ्यासस्येत्यनेनैवाभ्यासावयवनकारस्य निवृत्तेर्लाभे सत्युभाविति व्यर्थं स्यादिति सामर्थ्यादुभाविति विधेयस्य णस्य विशेषणं स्यात्तथा चाभ्यासस्योत्तरखण्डनकारस्य च "भ्रस्जो रोपधयोरमन्यतरस्याम्" (पा० सू० ६-४-४७) इत्यत्रेव स्थानषष्ठीनिर्देशान्निवृत्त्यापत्तिरत

*साभ्यासस्येत्यनितेर्विशेषणं *व्याख्यानात्तदाह-साभ्यासस्यानितेरिति। अनेनोत्तरखण्डे एव तत्तद्धातुत्वमिति सूचयति। एतेन प्राधान्यान्नकारविशेषणत्वेऽभ्याससहितनस्येत्यर्थे रमागमेन रोपधयोरिवाभ्यासनिवृत्तावुभौग्रहणान्नस्यैव स्थाने णद्वये 'प्राण्णत्' इति स्यादित्यपास्तम्। *अत एव प्रकृतसूत्रे भाष्ये उक्तं-"साभ्यासस्य द्वयोरिष्टम्" इति। "अनितेः" (पा० सू० ८-४-१९) इत्यनेन तु न सिद्धिः। अभ्यासस्यानर्थकत्वादुत्तरखण्डस्य व्यवहितत्वात्। *अत एवेदं सूत्रम*भ्यासेनेति अभ्यासस्येति वा नोक्तं किन्तु साभ्यासस्येत्येवमुक्तमिति तदाशयः। परे तु साभ्यासानितिसम्बन्धिनकारयोरुभौ णकारौ भवत इति वृत्तिरुचिता। न चाभ्यासस्य "अनितेः" (पा० सू० ८-४-१९) इत्यनेन सिद्धिः। तस्यानर्थक्यात्। अनितेरवयवस्य तत्सम्बन्ध्यवयवस्य चेत्यर्थे तु *तदनुवादकमेवेदं, तथार्थाभावे तु विधायकमेवेदमुभयोर्णकारयोः। *अत एव "एकः पूर्वपरयोः" (पा० सू० ६-१-८४) इति सूत्रे भाष्ये उक्तम्—"उभौग्रहणसामर्थ्याद् द्वावादेशौ भवतः" इति। कैयटश्च 'साभ्यासस्यानितेरुभौ णकारौ भवतः' इत्याह। एवमेव युक्तं न तूभौ नकाराविति। न इत्यस्य षष्ठ्यन्तस्यैवाधिकारेणोभयोरित्यापत्तेः *अत्पूर्वस्येतिवत्। उभौग्रहणन्त्वादेशद्वयार्थम्। *अन्यथा "ज्वर" (पा० सू० ६-४-२०) इत्यादावूठ्वत्सकृत्प्रवृत्तस्यैवोभयोर्निवृत्तौ स्थान्यभावादेव पुनरप्रवृत्तौ आदेशद्वयलाभो न स्यादित्याहुः। "पूर्वत्रासिद्धीयमद्वित्वे" इत्युक्तेः पूर्वं णत्वे द्वित्वेन सिद्धावपि क्वचित्तदप्रवृत्तिज्ञापनार्थमिति बोद्ध्यम्। निमित्ते सतीति। तच्चोपसर्गरेफः।

णौ गमिः (पा० सू० २-४-४६)। णाविति विषयसप्तमी।

---

आह-*साभ्यासस्येति। 'गुणः कृतात्मसंस्कारः' इति न्यायेन प्रकृते 'गुणानाञ्च' इत्यस्य बाध इति भावः। *व्याख्यानादिति। लक्ष्यानुसारिव्याख्यानादित्यर्थः। इदञ्च प्रकृतसूत्रभाष्ये 'साभ्यासस्य द्वयोरिष्टम्' इत्यनेन स्पष्टम्। *अत एव=उक्तार्थस्यैवाभिप्रेतत्वादेव। *अत एव=अभ्यासश्रवणस्येष्टत्वादेव। *अभ्यासेनेति। 'विना तद्योगम्' इत्युक्तत्वेन सहार्थे तृतीया। *तदनुवादकम्="अनितेः" (पा० सू० ८-४-१९) इतिसूत्रसिद्धार्थानुवादकम्। *अत एव=उभावित्यस्य विधेयविशेषणत्वादेव। *अत्पूर्वस्येतिवदिति। तस्य यथा स्थानिविशेषणत्वेन षष्ठ्यन्ततया निर्देशः कृतस्तद्वदित्यर्थः। *अन्यथा=उभौग्रहणाभावे।

अत्र बोधनं=शब्दजं ज्ञानं नान्यादिति 'इकू' धातौ माधवः। ईर्ष्यतेरिति। ईर्ष्यतिप्रकृतिकप्रत्ययान्तधातोरित्यर्थः। स च ण्यन्तः सन्नन्तश्च विनिगमनाविरहात्। *ईर्ष्यतेरामः सत्त्वेन लिटोऽभावात् अन्यत्र द्वित्वाभावाच्चेति दिक्। इनि वार्थ इति। "नन्द्राः" (पा० सू० ६-१-३) इति सूत्रे भाष्ये स्पष्टमेतत्। षकारस्येति। रेफस्य तु "नन्द्राः" (पा० सू० ६-१-३) इत्यनेन वारितमिति भावः। द्वितीयस्यैवेति। अजादेर्द्वितीयस्येत्यनेन, रेफस्य तु "नन्द्राः" (पा० सू० ६-१-३) इति निषेध इति भावः। इहोपन्यासस्तु *आद्यव्याख्याने उपयोगादिति बोध्यम्।

इति ण्यन्तप्रक्रिया।

धातोः क (पा० सू० ३-१-७)। इषिकर्मण इति। कर्मादिकं चार्थद्वारकं धातोर्विशेषणम्। एवञ्चेषिकर्मवाचकादित्यर्थः। ननु कर्तृत्वस्य क्रियानिरूपितत्वात्समानकर्तृकादित्युक्त्या क्रियावाचकाद्धातोरेव भविष्यति किं धातोर्ग्रहणेनेत्यत आह—धातोरिति। *अत एव "इको झल् (पा० सू० १-२-९) इति किरवं सार्थकम्। कर्मणः

---

ण्यन्तः सन्नन्तश्चेत्येवोपात्तन्न तु लिट्पदमपि, तदभिप्रायमाह—*ईर्ष्यतेराम इति। *आद्यव्याख्याने='तृतीयव्यञ्जनस्य' इति व्याख्याने। इति हेतुमण्ण्यन्तविवरणम्।

## अथ सन्नन्तविवरणम्।

धातोः कर्मणः समानकर्तृकात् (पा० सू० ३-१-७)। अत्र केचित्—प्रकृतसूत्रे एवात्मन इत्युपादेयम्। तदेवोत्तरसूत्रेऽप्युपकरिष्यति—आत्मन इति। प्रकृतसूत्रे धातोरित्यस्य विशेषणम्। षष्ठ्यर्थश्चात्र कर्तृत्वमिति समानकर्तृकादित्यस्य लाभो भविष्यति। तदेवेच्छायामित्यस्य च विशेषणम्। प्रकृतेऽपि षष्ठ्यर्थः कर्तृत्वमेवेत्युभयोरर्थयोर्लाभे समानकर्तृकादिति व्यर्थमित्याहुः। अत्रेदं वक्तव्यम्—आत्मन इत्यत्राक्लृप्तस्य स्वरितत्वस्य कल्पनयोत्तरत्र सम्बन्धस्य प्रत्यासत्त्या चैकात्मबोधकत्वकल्पनायाङ्गौरवमिति स्पष्टमेव। किञ्चैकस्यात्मन इत्यस्य परम्परया धातुपदबोध्यविशेषणत्वमिच्छायामित्येतद्विशेषणत्वन्तु साक्षादित्येतत्कल्पने समानस्वभावविरोधः। किञ्च सकृदुच्चरितस्यात्मन इतिपदस्योभयविशेषणत्वं 'सकृदुच्चरित'इतिन्यायविरुद्धम्। आवृत्त्योभयविशेषणत्वे तु मनोव्यापारगौरवमधिकं स्पष्टमेवेति। *अत एव=सन आर्द्धधातुकत्वादेव। तद्धि गुणाभावार्थम्। यद्यस्यार्धधातुकत्वन्न स्यात्तदाऽत्र गुणस्य प्राप्तिरेव नास्तीति किर्त्वविधानवैयर्थ्यं स्पष्टमेवेति भावः। कर्मण इत्यस्याभावेऽपि यथा कर्मण इत्य-

किमिति । *प्रत्ययवाच्येच्छाया नियतं कर्माकाङ्क्षतया तदाकाङ्क्षायां *प्रत्यासत्त्या प्रकृत्यर्थकर्मिकायामेव विधानं भविष्यतीति प्रश्नः । प्रत्यासत्तिः सर्वैं *दुर्ज्ञेयेत्युत्तरम् । समानकर्तृकात्किमिति । प्रत्यासत्तिमाश्रित्य प्रश्नः । प्राग्वदेवोत्तरम् ।

रुदविद ( पा० सू० १-२-८ ) । *लक्ष्यानुरोधिव्याख्यानाद्विदेः सर्वस्य ग्रहणमित्याहुः ।

सनिग्रह ( पा० सू० ७-२-१२ ) । चकार उगनुकर्षणार्थः । *अन्यथा 'बुभूषति'इत्यादौ किस्वात्परत्वादिडेव स्यात् *किस्वाभावेन "श्र्युकः" ( पा० सू० ७-२-११ ) इत्यस्याप्रवृत्तेः । *एकाजित्येव 'जिजागरिषति' । *ननु परत्वेन षत्वकत्वयोः कृतयोर्भष्भावो न स्यादत आह-*षत्वस्येति ।

किरश्च ( पा० सू० ७-२-७५ ) । "सनिग्रह" ( पा० सू० ७-२-१२ ) इति "एकाचः" ( पा० सू० ७-२-१० ) इति च निषेधे प्राप्ते वचनम् । जिगरिषतीति । "इट् सनि वा"( पा० सू० ७-२-४१ ) इत्येतम*पवादत्वादयं बाधते । अत्रेट इति । इदं वृत्तौ स्पष्टं, भाष्ये तु न दृश्यते ।

---

स्य लाभस्तत्प्रकारमाह-*प्रत्ययवाच्य इति । *प्रत्यासत्त्या=शीघ्रोपस्थितिकत्वेन । 'धातोः' इतिपदस्यार्थविशिष्टतत्तद्धातूपस्थापकतया विशेषणतयाऽर्थस्यापि तस्यामुपस्थितौ विषयत्वादिति भावः । *दुर्ज्ञेयेत्युत्तरमिति । 'कर्मण' इत्यस्याभावे समानकर्तृकाद्धातोरित्यनेन यस्य यस्य समानकर्तृकत्वं तस्य सर्वस्योपस्थितौ करणभूतार्थवाचकादपि यत्किञ्चित्कर्मिकायामिच्छायामपि स्यादिति भावः ।

रुदविदमुष ( पा० सू० १-२-८ ) । रुदूसाहचर्याद्वेत्तेरेव ग्रहणमिति शङ्कां वारयितुमाह-*लक्ष्यानुरोधादिति ।

*अन्यथा=उगनुकर्षाभावे । *किस्वाभावेन="इको झल्" ( पा० सू० १-२-९ ) इतिसूत्रप्रवृत्तेः प्राक्किस्वाभावेन । *एकाजित्येवेति । "एकाच उपदेशे" ( पा० सू० ७-२-१० ) इत्यत एकाज्ग्रहणमनुवर्त्तत इत्यर्थः । *ननु परत्वेन षत्वकत्वयोरिति । अत्र लक्ष्ये षत्वकत्वयोः प्रवृत्तिर्भवतीत्येतावतैव षत्वकत्वयोरित्युक्तं न त्वेवं क्रमः कत्वात्पूर्वं षत्वाप्राप्तेः किन्तु कत्वे षत्वे च परत्वात् कृते इति विवक्षितम् । *षत्वस्येति । कत्वस्याप्युपलक्षणमिदम् ।

*अपवादत्वादिति । कृतेऽपि तेनेडागमेऽस्य प्राप्तेः । एतेन प्रतिपदोक्तत्वेन "किरश्च पञ्चभ्यः" ( पा० सू० ७-२-७५ ) इति कृतेऽपि "इट् सनि वा"

हलन्ताच्च ( पा० सू० १-२-१० ) । हलिति लुप्तपञ्चम्यन्तम्, अन्तशब्दः समीपवाची इक इत्यनुवृत्तं *षष्ठ्या विपरिणम्यते, तदाह—इक्समीपादिति । यियक्षते इति । सति कित्त्वे यजेः संप्रसारणं स्यादिति भावः । जातिपरमिति । हल्त्वजात्याक्रान्तैकानेकव्यक्तिपरमित्यर्थः, सामीप्यमव्यवहित एवेति भावः ।

अज्झन ( पा० सू० ६-४-१६ ) । "च्छ्वोः" ( पा० सू० ३-४-१९ ) ति सूत्रे भाष्ये झलनुवृत्तेरुक्तत्वादाह-झलादौ सनीति ।

---

( पा० सू० ७-२-४१ ) इत्यनेन पुनरिट् स्यादित्यपास्तम्।

इको झल् ( पा० सू० १-२-९ )। नन्विदं सूत्रं व्यर्थम्। एतद्धि गुणाभावार्थम्। स च येन नाप्राप्तिन्यायेन "अज्झनगमाम" ( पा० सू० ६-४-१६ ) इति दीर्घविधानेन सिद्धः। न च गुणे कृते दीर्घो गुणस्वरूप एव भविष्यतीति फलाभावात्तदा दीर्घाप्राप्तेः कथं येननाप्राप्तिन्याय इति वाच्यम्। पर्जन्यवल्लक्षणन्यायेन तदापि प्राप्तेः। न च गुणाभाव इव 'चिकीर्षति' इत्यत्रेत्वाभावोऽपि स्यादिति वाच्यम्। दीर्घस्येत्वनिमित्ततया तद्बाधायोगात्। यो दीर्घऋवर्णान्तस्तत्रापि गुणाभावरूपो दीर्घस्योपकारो भविष्यतीति तत्रापि पर्जन्यन्यायेन दीर्घः स्यादेव। मिञ्धातोः सनि दीर्घे मीग्रहणेन तस्य ग्रहणं यथा स्यादित्येवमर्थे दीर्घत्वस्य चारितार्थ्यान्न गुणबाधकत्वम् इत्यपि न। तत्र दीर्घाभावेऽपि गुणविषये आत्वे कृते माग्रहणेन तद्ग्रहणसिद्धेः। न च कुटादिपठिताभ्यां 'गु' 'धु'भ्यां सनि गुणाभावस्य ङित्वेन सिद्धेः जुगूषति इत्यत्र दीर्घस्य चरितार्थत्वात्कथं गुणबाधकत्वमिति वाच्यम्। उङ्नीत्येव सिद्धेऽज्ग्रहणस्य गुणाभावप्रवृत्तौ ज्ञापकत्वसम्भवात्। न च वक्ष्यमाणरीत्या "अज्झनगमाम्" ( पा० सू० ६-४-१६ ) इति सूत्रेऽजादेशगमेरित्यर्थलाभोऽज्ग्रहणसत्त्वे भवति, सम्प्रति तु कथमिति वाच्यम् । सनीत्यस्यावृत्त्या सन्निमित्तकगमेरित्यर्थेन तल्लाभसम्भवादिति चेन्न। "हलन्ताच्च"( पा० सू० १-२-१० ) इत्युत्तरार्थत्वात्। न च तत्रैव पठनीयं, योगविभागो व्यर्थ इति वाच्यम्। दीर्घविधानस्य विषये बाध्यसामान्यचिन्ता भवताऽवश्यं वाच्या, अन्यथा'पुरस्तादपवाद'न्यायेन'दीर्घस्य णिलोपबाधकत्वमेव स्यात् । एवं सति यथा गुणस्यायं बाधकस्तथा णिलोपस्यापि बाधकः स्यादिति कित्त्वविधानमर्थवदित्यभिप्रायात् । णिलोपोदाहरणं 'ज्ञीप्सति' इति। अत्र हि णेर्गुणदीर्घलोपाः प्राप्तास्तत्र विशेषाभावादनवकाशत्वेन दीर्घत्वमुभयोर्गुणलोपयोर्बाधकं स्यात् । 'येननाप्राप्ति'न्यायेन गुणस्यैव बाधकन्दीर्घत्वमिति तु न शङ्क्यम्। बाध्यस्य भेदेनापेक्षायां स न्यायो, न तु सामान्यचिन्तायाम्।

*षष्ठ्या विपरिणम्यत इति। अन्तपदार्थान्वयायेत्यादिः।

अज्झनगमां सनि ( पा० सू० ६-४-१६ )। अत्र गमूशब्दो नानादेश-

जिगमिषतीति। "गमेरिट्" ( पा० सू० ७-२-५८ ) इतीट्। *तत्र हि *सर्वोऽपि गमिर्गृह्यते*व्याख्यानादिति भावः।

रलोव्यु ( पा० सू० १-२-२६ )। "न क्त्वा" ( पा० सू० १-२-१८ ) इत्यतः सेडिति वर्तते, तच्च क्त्वासम्बद्धमपीहानुवर्त्तमानं सनोऽपि विशेषणं *व्याख्यानात्। "नोपधा" ( पा० सू० १-२-२३ ) इत्यतो वेति वर्त्तते नेति निवृत्तं, सनि प्राप्त्यभावेन निषेधस्य वक्तुमशक्यत्वात्तदाह-सेटौ वेति। *सामान्यापेक्षेति। *"णौ चङि" ( पा० सू० ७-४-१ ) इति सूत्रभाष्ये "यदयमोणिऋदितं करोति तज्ज्ञापयति-द्विर्वचनाद्ध्रस्वत्वं बलीयः" इत्युक्तत्वेन सामान्यापेक्षज्ञापकत्वमस्य चिन्त्यम्। अत्र हलादेरिति तु 'एषित्वा' इत्यादौ नित्यं किच्वाभावाय। *किञ्च 'एषिषिषति' इत्यत्र नित्यत्वाद् द्वित्वेऽभ्यासस्य *नैरर्थक्यादिटोनापत्तौ रूपासिद्धिस्तस्माच्छब्दान्तरप्राप्त्या द्वित्वस्याप्यनित्यत्वात् द्वयोरनित्ययोः परत्वादिड् वाच्य इति ततोपि पूर्वं परत्वाद् गुणेनेष्टसिद्धेरिति दिक्।

सनीवन्त ( पा० सू० ७-२-४९ )। अत्र सन् धातुस्तनादि-

---

गम्परः। 'जिगंसते' इत्यत्र दीर्घापत्तेरत उक्तम्-अजादेशगमेरिति। एतादृशार्थलाभस्त्वत्रैवाज्ग्रहणेन भवति। एतद्धि अजन्तानामित्यर्थलाभायोपात्तम्। एतदभावेपि "अचश्च" ( पा० सू० १-२-२८ ) इतिपरिभाषयोपस्थितस्याच इत्यस्याङ्गविशेषणतयाऽजन्तानामित्यस्य लाभः स्यादेव। न च "अचश्च" ( पा० सू० १-२-२८ ) इतिपरिभाषयोपस्थितमच इतिपदं हन्गम्विशेष्यबोधकमेव भविष्यतीति वाच्यम्। हनगमामितिबहुवचननिर्देशस्यैवं सति वैयर्थ्यापत्तेः। एवञ्चाजितिपदं षष्ठ्यन्तं गम्विशेषणमिति। तादृशार्थलाभस्य सनीतिपदस्यावृत्त्या कल्पने तु न बहुवचनसामर्थ्यकल्पनाक्लेश इत्यवधेयम्। *तत्र="गमेरिट्" ( पा० सू० ७-२-५८ ) इतिसूत्रे। *सर्वोऽपि=स्वतन्त्र आदेशरूपश्च। *व्याख्यानादिति। "सनि च" ( पा० सू० २-४-४७ ) इतिसूत्रभाष्यमूलकव्याख्यानादित्यर्थः। स्वतन्त्रस्य ग्रहणन्तु प्रतिपदोक्तत्वान्न्याय्यमेव। तथाऽऽदेशस्यापि ग्रहणम्। तत्र भाष्ये-"इण्वदिकः इत्येव अधिजिगमिषति अधिजिगमिषतः" इत्युक्तम्। अत्रेडागमदर्शनेनादेशस्यापि ग्रहणम्।

रलो व्युप ( पा० सू० १-२-२६ )। *व्याख्यानादिति। 'दिद्युतिषते' 'दिद्योतिषते' इत्यादीड्घटितप्रयोगदर्शनमूलकव्याख्यानादित्यर्थः। *सामान्यापेक्षेतीति। इदम्प्राचामनुरोधेन। भाष्यरीत्याऽऽह-*णौ चङीति। सामान्यापेक्षज्ञापकत्वाभावेऽपि 'एषिषति' इत्यस्य सिद्धिमाह-*किञ्चेत्यादिना। *नैरर्थक्या-

र्वादिश्च विनिगमनाविरहात् ।

आप्ज्ञ ( पा० सू० ७-४-५५ ) । "सनि मीमा" ( पा० सू० ७-४-५४ ) इत्यतोऽच इति सनीति *च, "सः सि" ( पा०सू० ७-४-४९ ) इत्यतः सीति चानुवर्त्तते । *आबादिभिरचो विशेषणाद*नन्त्ये सावकाशमीत्त्वं पूर्वविप्रतिषेधेन णिलोपो बाधते इति नान्त्यस्य णिच ईत्वम् । *यदि पूर्वविप्रतिषेधवार्त्तिके दीर्घग्रहणेन नेत्वग्रहणं तदाऽनन्त्यस्येति वक्तव्यम् ।

अत्रलो ( पा० सू० ७-४-५८ ) । अत्र "सनिमीमा" ( पा० सू० ७-४-५४ ) इत्यादिसूत्रचतुष्टये लोपोऽभ्यासस्येत्युपतिष्ठते इत्यर्थस्तत्फलितमाह-*सनिमीत्यादि । यद्वा "सनिमीमा" ( पा० सू०७-४-५४ ) इत्यादिविहिते कार्ये कृते सति, योऽभ्यासस्तस्येत्यर्थः । अत्र "अलोन्त्यस्य" ( पा० सू० १-१-५२ ) इति नोपतिष्ठते "नानर्थके" ( प० भा० ) इति निषेधात् । *लोपस्याविकारत्वादनभ्यासविकार इत्यस्याप्रवृत्तिः । *यद्वा "सनि मीमा" इत्याद्यनुवृत्त्यैव सिद्धेऽत्रग्रहणादत्राभ्यासत्वेन यो निर्ज्ञातस्तस्य लोप इत्यर्थात्तदनुपस्थितिः । इत्सनीति । *"पू-

---

दिति । एतच्च सनः समात्रस्य द्वित्वमितिमतेन । तदा तस्यानर्थकतयाऽप्रत्ययत्वेनार्द्धधातुकत्वाभावादिति भावः । यदि तु धात्ववयवषकारसहितद्विर्वचनन्तदोत्तरखण्डस्य 'ष' इत्यस्य नैरर्थक्येन सन्ग्रहणेनाग्रहणादिडागमस्य "सन्यतः" ( पा० सू० ७-४-७९ ) इतीत्वस्य चानापत्तिरिति रूपासिद्धिरिति बोध्यम् ।

आप्ज्ञप् ( पा० सू० ७-४-५५ ) । इह ज्ञपीत्यनेन चुरादिण्यन्तस्य ग्रहणे णिच ईकारादेशे 'ज्ञीप्सति' इतिरूपासिद्धिरत आह-*आबादिभिरिति । *अनन्त्य इति । आप्ऋधसाहचर्याज्ज्ञपिधातोरप्यनन्त्यस्येत्त्वमिति भावः । *यदि पूर्वेति । अत्र यदीत्युपादानाद्वृद्धिशब्दसाहचर्याद्दीर्घशब्दोच्चारणेन विहितदीर्घस्यैव ग्रहणे त्वनन्त्यस्येति वाच्यमिति ध्वनितम् । इदञ्च व्याख्यानं ज्ञपीतिणिजन्तानुकरणमितिमतेन । यदि तु पान्तानुकरणमेव, ज्ञपीति त्विका निर्देशस्तदा णिचोऽप्राप्तिरेवेति बोध्यम् ।

अत्र लोपो ( पा० सू० ७-४-५८ ) । अत्रेत्येतद्बोध्याकाङ्क्षाशान्त्यर्थमाह-*सनिमीत्यादीति । *लोपस्याविकारत्वादिति । "लोपागमवर्णविकारज्ञो हि सम्यग्वेदान् परिपालयिष्यति" इत्यत्र भाष्ये लोपपदोपादानेऽपि विकारपदोपादानात् । "नानर्थके" इति परिभाषाप्रत्याख्यानपक्ष आह-*यद्वा सनीति । 'ईर्त्सति' इत्यत्र शास्त्रप्रवृत्तिक्रममाह-*पूर्वत्रासिद्धीयमिति । एतेनात्र यत्केन

वैत्रासिद्धीयमद्वित्वे" ( प० भा० ) इति चर्त्वे कृते 'त्स'शब्दस्य द्वित्वम् । भ्रस्जेरिट्समागमयोर्विकल्पाच्चत्वारि रूपाणि । उदोष्ठ्येति । "अञ्झन" ( पा० सू० ६-४-१६ ) इति दीर्घे कृते इति भावः । यियविषतीति । "द्विर्वचनेऽचि" ( पा० सू० १-१-५९ ) इति युशब्दस्य द्वित्वे "ओः पुयण्" (पा० सू० ७-४-८०) इतीत्वम् । ऊर्णोतेरिडभावे "अञ्झन"(पा० सू० ६-४-१६ ) इति दीर्घः इट्पक्षे "विभाषोर्णोः" ( पा० सू० १-२-३ ) इति वा ङित्त्वम् । चौरादिकश्चेति । *ह्रस्वविशिष्टयोरुभयोरपि लाक्षणिकत्वादिति भावः । कित्त्वान्न गुण इति । णिच इति शेषः । णिलोपेन *गुणस्य बाध इत्यपि बोद्धव्यम् ।

आशङ्कायामिति । *आशङ्काविषयार्थप्रतिपादिकाद्धातोः स्वार्थे सनित्यर्थः । श्वा मुमूर्षतीति । वर्त्तमानसामीप्ये लट् । आशङ्का च प्रयोक्तृगता ।

सनिमीमा (पा० सू० ७-४ ५४) । "सः सि"( पा० सू० ७-४-४९ )इत्यतः सीत्यनुवर्त्तते मीशब्देन कृतदीर्घयोर्मीनातिमिनोत्योर्ग्रहणं *व्याख्यानात् । शकग्रहणेन च द्वयोर्ग्रहणं *द्वयोरपि सानुबन्धकत्वात् ।

मुचोऽक(पा०सू०७-४-५७) । *कित्त्वाद् गुणाप्राप्तौ *वचनम् ।

इट् सनि वा ( पा० सू० ७-२-४१ ) । "सनिग्रह" ( पा०

---

चित् "अजादेर्द्वितीयस्य" ( पा० सू० ६-१-२ ) इत्यनेन घ्सशब्दस्य द्वित्वमित्युक्तन्तन्निरस्तम् । नन्वापूञपीत्यत्र प्रतिपदोक्तत्वाच्चुरादिपठितस्यैव ग्रहणन्न्याय्यमत आह-*ह्रस्वविशिष्टेति । *गुणस्य बाध इति । "ण्यल्लोपौ" ( का० वा० ) इति वचनादित्यादिः ।

आशङ्कायामर्थेऽनेन सन्निति भ्रमवारणायाह-*आशङ्काविषयार्थेति ।

*व्याख्यानादिति । 'गामादाग्रहणेष्वविशेषः' इति परिभाषया माग्रहणेन सर्वेषां ग्रहणे सिद्धे तत्साहचर्यान्मीशब्दांशेऽपि न्यायाप्रवृत्तिः । न चैवं दिवादिपठितमीङ्धातोरपि ग्रहणापत्तिरिति मीनातिमिनोत्योरित्यनुपपन्नमिति वाच्यम् । "इको झल्" ( पा० सू० १-२-९ ) इतिसूत्रभाष्ये मीग्रहणेन कृतदीर्घमिनोतेर्ग्रहणेनोभयोर्ग्रहणस्यैव प्रतिपादितत्वात् । *द्वयोरिति । 'शकॢ' शक्तौ 'शक' विभाषित इत्यनयोः ।

*कित्त्वात्="हलन्ताच्च" ( पा० सू० १-२-१० ) इति कित्त्वात् । *वचनम्="मुचोऽकर्मकस्य" ( पा० सू० ७-४-५७ ) इति वचनम् । इदमुपलक्षणम् अभ्यासलोपार्थमित्यपि बोध्यम् ।

सू० ७-२-१२ ) इत्यस्यापवादः ।

प्रकृतिप्रत्यापत्तीति । *'पुष्ययोगं जानाति=पुष्येण योजयति' इत्येतत्साधके "पुष्ययोगेज्ञि" इति वचने भाष्यकृत्कृतप्रत्यापत्त्यनुवृत्तिर्ज्ञापिका । तत्र हि "चजोः" (पा० सू० ७-३-५२ ) इति घिति परतः कुत्वम् । अन्यथा क्ल्लुकि निमित्तापायपरिभाषयैव कुत्वनिवृत्तौ सिद्धायां किं तदनुवृत्त्येत्यन्यत्र विस्तरः । वस्तुत एतै*स्तत्परिभाषाऽभाव एव वोध्यते । पुस्फारयिषतीति । व्यवधानाद् "ओः पुयण्" ( पा० सू० ७-४-८० ) इति न ।

स्तौतिण्योरेव ( पा० सू० ८-३-६१ ) । *एवकार इष्टतोऽवधारणार्थः । अन्यथा षण्येवेति नियमः स्यात् । तथा च 'तुष्टाव' इति न स्यात् । सानुवन्धकषणीति किम् ? *सुषूप इह । उपसर्गात्त्विति । *"स्तौतिण्योः" ( पा० सू० ८-३-६१ ) इति नियमेन मध्येऽपवादन्यायवलाद् "आदेशप्रत्यययोः" ( पा० सू० ८-३-५९ ) इति षत्वमेव बाध्यत इति भावः । सोषुप्यतेः सनि 'सोषुपिषते' इत्यादौ तु षत्वं भवत्येव प्रत्यासत्त्या सनि योऽभ्यासस्तस्माद्या प्राप्तिस्तस्या एव नियमेन व्यावृत्तेः । अयन्तु यङ्निमित्तोऽभ्यासः । प्रतीषिषतीति । *अत्राभ्यासान्तस्य "अज्झनगमाम्" ( पा० सू० ६-४-१६ ) इति न दीर्घः । 'सिषेच' इत्यत्र पदादित्ववारणाय "एकाचोद्वे" ( पा० सू० ६-१-१ ) इति सूत्र*भाष्योक्तरी-

---

आख्यानादितिवचनपठितप्रकृतिप्रत्यापत्तिरितिवचनस्य ज्ञापकत्वमितिभ्रमवारणायाह-*पुष्ययोगमिति । एतच्च आख्यानादिति वचनस्थप्रकृतिप्रत्यापत्तिरित्यस्य 'परं तु' मतोक्तरीत्या ज्ञापकत्वासम्भव इति मतेन । *तत्परिभाषाऽभावः=निमित्तापायपरिभाषाऽभावः ।

'सिद्धे सति' इतिन्यायेन "स्तौतिण्योः" ( पा० सू० ८-३-६१ ) इत्यस्य नियमार्थत्वे लब्धे एवकारो व्यर्थ इत्यत आह-*एवकार इति । *सुषूप इहेति । सन्नन्तादिट् । अयादेशे यलोपः । षेत्युच्यमाने यत्र कृतषत्वस्य सनोऽकारान्तस्य श्रवणन्तत्रापि नियमः स्यादित्यत्र न स्यात् । षणीत्युक्ते तु इड्विशिष्टस्यानर्थकत्वान्न षण्पदेन ग्रहणम् । शपा सहैकादेशे तु विकरणानामनर्थकतया विशिष्टस्यार्थवत्त्वमस्त्येव । 'परिषिषिक्षति इत्यत्र "स्तौतिण्योः" ( पा० सू० ८-३-६१ ) इतिनियमेन व्यावृत्तिशङ्कायामाह-*स्तौतिण्योरितीति । 'प्रतीषिषति' इत्यत्र द्वितीयषकारे सन्त्वबुद्ध्या तन्निरूपिताङ्गत्वस्येषीत्यत्र सम्भवेन "अज्झनगमाम्" ( पा० सू० ६-४-१६ ) इति दीर्घः प्राप्नोतीत्यत आह-*अत्राभ्यासान्तस्येति । *भाष्योक्तरीत्येति । "तावेव सुप्तिङौ यौ ततः परौ सैव च प्रकृतिरा-

शा द्वित्वनिष्पन्नस्योत्तरभागस्य प्रत्ययाधिकारस्थत्वाभावेना*प्रत्ययतया चाभ्यासान्तसमुदायस्याङ्गत्वाभावात् *श्रुतिपातिरूपसन्त्वन्त्वस्त्येवेतीत्वं भवत्येव। "सन्यतः"(पा० सू० ७-४-७९) इत्यस्य ह्य*ङ्गावयवाभ्यासस्यात इत्सनि परत इत्येवार्थ इत्यलम्। *धातूपसर्गैकादेशनिष्पन्नेणुनिमित्तमत्राद्यखण्डे षत्वं न त्वभ्यासेणुनिमित्तं द्विष्प्रयोगत्वादभ्यासस्य*षण्परत्वन्द्वितीयस्य तु न* षण्परत्वम्।

सः स्विदि (पा० सू० ८-३-६२)। नस्विदीति वक्तुं युक्तम्। शैषिकादिति। सन्निधायके भाष्ये इदम्। शेषाधिकार*भवप्रत्ययान्तात्तदधिकारभवः सरूपो न। शालीये इति। शालायां भव इत्यर्थः।

---

धा, समुदाये पदत्वमेतेन" इति यथोक्तन्तद्रीत्या प्रथमषिशब्दे 'सर्वे सर्वपदादेशा' इति न्यायेन स्थानिसन्बुद्धौ तत्परत्वन्न तदन्तस्य, द्वितीयसनि च न तत्त्वबुद्धिः 'आगन्तूनामन्ते सन्निवेशः' इति न्यायादिति द्वितीयस्य प्रत्ययपदेनाङ्गसंज्ञासूत्रस्थेन न ग्रहणमिति भावः। *अप्रत्ययतयेति। न च "आदेशप्रत्यययोः" (पा० सू० ८-३-६९) इति षत्वमप्युत्तरखण्डावयवस्य न स्यादिति वाच्यम्। 'पूर्वत्रासिद्धीयमद्विर्वचने' (का० वा०) इतिवचनेन कृतषत्वस्य द्वित्वमित्यभ्युपगमात्। ननु यदि नेषीत्यस्याङ्गत्वन्तदा "सन्यतः"(पा० सू० ७-४-७९) इतीत्वमपि न स्यादत आह-*श्रुतिपातीति। *अङ्गावयवेति। नं चाभ्यासान्त्यस्य नाङ्गत्वमिति प्रागुक्तमिति कथं सनि परे यदङ्गन्तदवयवत्वमिति वाच्यम्। सनि सति यत्किञ्चिन्निरूपिताङ्गावयवस्य ग्रहणात्। न च 'यंयम्य' इतियङन्तात्सनि 'यंयमिषते' इत्यत्रत्वापत्तिः। सन्निमित्ताभ्यासस्याङ्गावयवस्य ग्रहणात्। अङ्गत्वञ्च सन्निरूपितमन्यनिरूपितं वेत्यन्यदेतत्। एवमपि 'प्रतीषिषति' इत्यत्र षण्परत्वात् "स्तौतिण्योः"(पा० सू० ८-३-६१) इतिनियमेन षत्वमत्र न स्यात् 'पूर्वत्रासिद्धीयमद्वित्वे' इत्यस्यानित्यत्वादप्रवृत्तिरितिपक्ष इत्याशयेन कस्य चिच्छङ्कायामाह-*धातूपेति। *षण्परत्वमिति। इदं वस्तुस्थितिकथनं न त्वस्येदानीमुपयोगः। *न षण्परत्वमिति। एवञ्च तद्विषये शङ्कैव नेति भावः। द्विःप्रयोगपक्षे सन्त्वबुद्धिवत्प्रत्ययावयवत्वबुद्धिरपि सकारेऽस्तीति भावः। प्रत्ययत्वन्तु न सकारे गृह्यते प्रत्ययावयवत्वन्तु गृह्यते इति तु विरुद्धमाभातीति नायम्प्रकारः साधुः। किन्तु कृतषत्वस्य द्विर्वचनमित्येव युक्तमिति वक्तव्ये तथानभिधानं स्वरूपव्याक्रियैव पराक्रियेति न्यायेन।

*भवप्रत्ययान्तादिति। शैषिकादित्यत्राध्यात्मादित्वाठ्ठञ्। अत्र 'शैषिकाच्छैषिको न' इति वाक्येऽपि सरूप इत्यस्य सम्बन्धो बोध्यस्तत्फल-

*वाक्यमेवेति । एवकारेण च्छ एव व्यावर्त्यते, तदाह—न त्विति । अण् तु भवत्येवेति भावः । अण्णन्तादिति । भवाद्यर्थाण्णन्तादित्यर्थः । *अत्र सारूप्यं शब्दत एव । तेन जातार्थच्छान्ताद्भवार्थेऽपि छो नेत्याहुः । स्पष्टं चेदं वृत्तौ । न च शालाशालीययोः पठतिपिपठिषत्योश्चैककालिकोपस्थित्यभावात्कथन्तत्तत्प्रत्ययान्तेभ्यस्तत्तत्प्रत्ययप्राप्तिरिति निषेधो व्यर्थ इति वाच्यम् । नित्यशब्दपक्षे धातुत्वेन प्रातिपदिकत्वेन च सर्वानुवादेन विधिसम्भवात् । *अत एव त्वप्रत्ययान्तात्त्वप्रत्ययासिद्धिः *सत्यभिधाने । तथाऽल्पार्थे सिद्धसर्वकशब्दाद्*र्थान्तरे पुनरकच् सत्यभिधाने इष्ट एव । अन्यथा त्वनभिधानान्न । सरूपः स नेति । सारूप्यं शब्दतोऽर्थतो वा । *तेन समानार्थो विरूपः सरूपश्च न, भिन्नार्थः समानाकारो नेत्यर्थः । 'दण्डिमती' इत्यत्र *षष्ठीसप्तम्यर्थान्यतरवृत्तेः सप्तमीषष्ठ्यन्यतरार्थे प्रत्ययेऽर्थतः शब्दतश्च सरूपत्वाभावान्न दोष इति मतुप्सूत्रे आकरे स्पष्टम् । तत्र हि 'मत्वर्थीयान्मतुवादेः प्रतिषेधो वक्तव्यः । *तच्चापि ब्रुवता *समानवृत्तौ सरूप इति च वक्तव्यम्' इत्युक्तम् । *सनि त्वर्थसारूप्यमेव विशेषणसामर्थ्यात् ।

इति सन्नन्तप्रक्रिया ।

भृशार्थः=कार्त्स्न्यम् । तस्मिन्द्योत्ये इति । वाच्यत्वे तु सन्नन्ते इच्छाया इव तस्य विशेष्यत्वं स्यादिति भावः ।

पुनःपुनरित्यादि धातोः क्रियासमभिहारवृत्तिता*द्योतक-

---

माह-*वाक्यमेवेति । अत्र शालीये वाक्यमेवेति मूलपाठः । *अत्र=शैषिकादिति वाक्ये । *अत एव=शैषिकादित्युपादानेन निषेधादेव । अत्र प्रातिपदिकत्वेन त्वान्तस्याप्युपस्थितिरस्तीति भावः । *सत्यभिधान इति । घटत्वत्वमित्यादिप्रयोगाभिधाने । *अर्थान्तरे=कुत्साद्यर्थे । *तेन=शब्दतोऽर्थतो वेतिकथनेन । *षष्ठीसप्तम्यर्थादिति । अत्र यथासङ्ख्येनान्वयः । *तच्चापि ब्रुवता=मत्वर्थीयान्मतुवादेः प्रतिषेधं ब्रुवता । *समानवृत्तौ=समानार्थवृत्तौ । तृतीयवाक्यार्थे विशेषमाह-*सनि त्वर्थेति ॥ इति सन्नन्तविवरणम् ।

## अथ यङन्तविवरणम् ।

धातोरेकाचो हलादेः ( पा० सू० ३-१-२२ ) । *द्योतकमिति । एवञ्च

म् । बोभूयत इति । "समभिहारे द्वे" ( का० वा० ) इति द्वित्वन्तु न "क्रियासमभिहारे लोण्मध्यमपुरुषैकवचनस्य द्वे" ( का० वा० ) इति "क्रियासमभिहारे लोट्" ( पा० सू० ३-४-२ ) इति सूत्रे भाष्ये पाठेन *तस्य लोड्विषयत्वात् । किञ्च यङः क्रियासमभिहारातिरिक्तार्थाभावेन यङैव तद्द्योतनसम्भवा*न्न तत् । लोटस्तु समुच्चयेऽपि विधानादस्ति तद्द्योतने द्वित्वापेक्षा । *भृशार्थे यङि ततः पौनःपुन्यविवक्षायान्तु भवत्येव "नित्यवीप्सयोः" ( पा० सू० ८-१-४ ) इति द्वित्वम्–'पापच्यते पापच्यते' इति । भृशङ्क्रियां सम्पादयन्पुनःपुनः पचतीत्यर्थात् । *पौनःपुन्ये यङि तु न "नित्यवीप्सयोः" ( पा० सू० ८-१-४ ) इति द्वित्वं "क्रियासमभिहारे द्वे" इत्यनेन पौनःपुन्येऽपि लोडन्तद्वित्वविधानेन पौनःपुन्यस्य केनचित् द्योतने सौत्रद्वित्वाप्रवृत्तेर्ज्ञापनात् । अन्यथा भृशार्थ इत्येव वदेदिति निरूपितं द्विरुक्तप्रक्रियायामिति दिक् । क्रियासमभिहारे *धातोरेव वृत्तिसम्भवात्पृच्छति–धातोः किमिति । यङ् नेतीति । *अनभिधानादिति भावः । यङ्विधौ "धातोः कर्मणः" ( पा० सू० ३-१-७ ) इसतो वेत्यनुवर्त्तते । तेन धातुसम्बन्धे पक्षे यङोऽभावे 'भवान् लुनीहि लुनीहीत्येवायं लुनाति' इत्यादौ लोट्सिद्धिरिति भाष्ये स्पष्टम् ।

---

पुनःपुनरुत्पत्तिकत्वरूपम्पौनःपुन्यन्धातुवाच्यम्, तत्पुनःपुनःपदसमभिव्याहारे प्रतीयते । न चैकस्याः क्रियायाः पुनःपुनरुत्पत्तिर्न सम्भवतीति कथमेतदिति वाच्यम् । यथाऽवयवसमूहरूपक्रियायाः प्रारब्धापरिसमाप्तत्वरूपस्य वर्त्तमानत्वस्यासम्भवेऽपि विवक्षितक्रियासमूहस्य विलक्षणबुद्धिविषयस्य तादृशवर्त्तमानत्वव्यवहारस्तथा सजातीयानेकसमुदायावयवकस्य समूहस्यैकबुद्धिविषयत्वेनैकत्वविवक्षया तादृशसमुदायस्य समुदायान्तरस्य सजातीयस्य पुनःपुनरुत्पत्तिर्यत्र तादृशस्थले 'पापच्यते' इतिप्रयोगस्तादृशसमुदायविवक्षया भवति, एवञ्च द्योत्यार्थस्य विशेषणतया पुनःपुनरुत्पत्तिरैकैककर्तृका वर्त्तमाना पचिक्रियेत्यादिरीत्या बोधः 'पापच्यत' इत्यादितो भवति । *तस्य=द्विर्वचनविधायकवचनस्य । *न तत्=न द्विर्वचनम् । यत्र तु कृत्स्ना विवक्षिता क्रिया पुनःपुनरुत्पन्नेति विवक्षा तत्र भवत्येव द्विर्वचनमित्याह—*भृशार्थे इति । तथैव पौनःपुन्ये यङि द्वित्वस्य प्रसक्तिस्तु नेत्याह—*पौनःपुन्ये यङि त्विति । *धातोरेवेति । द्रव्यन्तु स्वभावतः सिद्धरूपमेव प्रतीयते शब्दशक्तिस्वभावादिति शेषः । 'भृशमीक्षते' इत्यत्र हलादित्वाभावाद्यङोऽभावेऽपि 'भृशं शोभते' इत्यर्थविवक्षायां शुभधातोः प्राप्तिशङ्कायाम्भाष्यप्रामाण्यादेव यङोऽनभिधानन्तादृशस्थले इत्याह—*अनभिधानादिति ।

सूचिसूत्रि ( का० वा० ) । सूत्रे एकाज्झलादिग्रहणप्रत्याख्यान-*फलमिदम् । सूत्रे स एकदेशानुवादः । भृशं शोभते रोचते इत्यादावव्याप्तेः सूच्यादावव्याप्तेश्च तत्प्रत्याख्यातं यथास्थितसूत्रन्यासे तु तेषामुपसंख्यानं कर्त्तव्यं स्यादिति *स्पष्टं भाष्ये । यथान्यासेऽपि "ऊर्णोतेर्न वक्तव्यः, नुवद्भावेन सिद्धेः" इति चोक्तं तत्र ।

अकितोऽभ्यासस्येति । अकित इति बहुव्रीहिः, किद्रहिताभ्यासस्येत्यर्थः । 'अनन्तरस्य' इति न्यायेनैतत्प्रकरणस्थकिद्युतानामेव व्यावृत्तिरिति'चाच्छायते' इत्यादावन्तरङ्गत्वात्तुकि दीर्घो भवत्येवेति माधवादयः।

भाष्योदाहरणादिति । *एतेन यङो द्वित्वं प्रति कार्यित्वेन दीर्घनिमित्तत्वायोग इत्यपास्तम् । अनेन भाष्योदाहरणेन *यं प्रति कार्यित्वन्तं प्रति निमित्तत्वाभावस्यैव 'न हि कार्यी'इत्यनेन बोधनादिति भावः।

नित्यग्रहणं न वाक्यनिवृत्तये "विग्रहेण यङन्तप्रतिपाद्यविशेषासम्प्रत्ययान्नित्यग्रहणानर्थक्यम्" इति भाष्यात् । तस्मात्कौटि-

---

*फलमिदमिति । वार्त्तिकप्रतिपादितेभ्यो यङ्विधानम् । *स्पष्टम्भाष्य इति । एवं हि तत्रोक्तम्-'एकाज्झलादिग्रहणं किमर्थम् ?, जागर्ति भृशम्, ईक्षते भृशम् इति । एकाज्झलादिग्रहणे चोक्तम् । तत्र तावदुक्तङ्कर्मसमानकर्तृकग्रहणानर्थक्यमिच्छाभिधाने प्रत्ययविधानादकर्मणो ह्यसमानकर्तृकाद्वा अनभिधानादिति । इहाप्येकाज्झलादिग्रहणानर्थक्यं क्रियासमभिहारे यङ्वचनात् । अनेकाचोऽहलादेर्ह्यनभिधानमिति । तच्चावश्यमनभिधानमाश्रयितव्यम्। क्रियमाणे ह्येकाज्झलादिग्रहणे यत्रैकाचो हलादेश्चोत्पद्यमानेन यङाऽर्थस्याभिधानन्न भवति, न भवति तत्रोत्पत्तिः। तद्यथा 'भृशं शोभते,भृशं रोचते' । यत्र चानेकाचोऽहलादेर्वोत्पद्यमानेन यङाऽर्थस्याभिधानम्भवति तत्रोत्पत्तिः- 'अटाट्यते' 'अरार्यते' 'अशाश्यते' 'सोसूच्यते' मोमूत्र्यते' । वार्त्तिकोक्तमूर्णोतिग्रहणन्तु न कार्यमित्याह-*यथान्यासेपीति । नुवद्भावेनास्माद्यथाऽऽमोऽभाव इड्भावश्च भवति तथा यङपि भविष्यतीति भावः ।

*एतेन=भाष्योदाहरणादिति कथनेन । *यम्प्रतीति । न चैवं "स्थण्डिलाच्छयितरि"( पा० सू० ४-२-१५ ) इत्यस्य निर्देशस्य परिभाषायां ज्ञापकत्ववर्णनासङ्गतिः । प्रकृते यथा द्वित्वम्प्रति कार्यित्वेऽपि दीर्घम्प्रति निमित्तत्वम्भवति तथा प्रकृतेऽपि गुणम्प्रति कार्यित्वेऽपि निषेधम्प्रति निमित्तत्वं स्यादिति वाच्यम् । निषेधस्य पर्युदासन्यायेन विध्यङ्गतया विधीयमानकार्यसम्बन्धित्वमित्यभिप्रायेण ज्ञापकत्वसम्भवात् ।

ल्यपदान्वयः *अवधारणार्थन्तदित्याह—कौटिल्य एवेति। इदञ्च वृत्त्यनुरोधेन। *"धातोरेकाचः"( पा० सू० ३-१-२२ ) इति सूत्रे भाष्ये तु "उत्तरयोर्विग्रहेण विशेषासम्प्रत्ययान्नित्यग्रहणानर्थक्यम्। क्रियासमभिहारे च नैतेभ्यो यङ् भवितव्यम्" इति। येन विशेषासम्प्रत्ययादित्युच्यते। विग्रहेण=कुटिलङ्गच्छतीत्यनेन। चंक्रम्यत इत्यर्थासम्प्रत्ययान्नित्यग्रहणमाद्येऽनर्थकं कुटिले पन्थानं गच्छतीत्येव सम्प्रत्ययात्। क्रियासमभिहारे चेति। एतत् "लुपसद"( पा० सू० ३-१-२४ ) इत्ये*तद्विषयस्यैव भाष्ये उदाहरणात्। तस्माद् गत्यर्थेभ्यः क्रियासमभिहारे यङ् भवत्येव। *अतोऽपि वक्ष्यमाणं यत्त्वित्यादिमतमसङ्गतम्। *अत एव स्थावरप्रतिद्वन्द्व्यर्थकं 'जङ्गम' इति सिद्धम्। स्थितिशीलो हि स्थावरः, तत्प्रतिद्वन्द्वी भृशंगन्ता हि जङ्गमः। योगद्वये नित्यग्रहणाभावेन योगयोरित्यस्यै*वमेव व्याख्योचिता चकारस्वारस्याच्च *यत्र *तत् कृतं तत्र *तत्प्रत्याख्याने उत्तरत्रासम्बन्धस्य सिद्धत्वाच्च।

भावगर्हायामेवेति। *इदमपि वृत्तिरीत्यैव। *यत्तु गत्यर्थादिभ्यः कौटिल्यभावगर्हयोर्विशेषविहितेन यङा क्रियासमभिहारार्थयङस्तक्रकौण्डिन्यन्यायेन बाधस्ताभ्यामर्थाभ्यां वा तदर्थस्य बाध इति, तन्न। *तस्य न्यायस्य विधेयविषयत्वाद*चरितार्थविषयत्वाच्च। अत्र क्रियासमभिहारा-

---

नित्यङ्कौटिल्ये गतौ( पा० सू० ३-१-२३ )। *अवधारणार्थमिति। नित्यशब्दस्य कौटिल्य एवान्वयो न तु क्रियायाम्। *धातोरेकाच इति सूत्रे भाष्ये इति। "धातोरेकाचः" (पा० सू० ३-१-२२) इति सूत्रं यस्मिन् प्रकरणे तत्प्रकरणस्य व्याख्यानपरे भाष्य इत्यर्थः। तेनैवंविधभाष्यस्य "नित्यङ्कौटिल्ये"( पा० सू० ३-१-२३ ) इति सूत्र एव सत्त्वेऽपि नासङ्गतिः। *एतद्विषयस्यैव="लुपसद"( पा० सू० ३-१-२४ ) इति सूत्रविषयस्य। "भृशं जपति ब्राह्मणः। भृशं समिधो दहति" इत्येव ह्युक्तम। *अतोऽपि=अस्माद्भाष्यादपि। *अत एव=गत्यर्थेभ्यः क्रियासमभिहारे यङः सत्त्वादेव। *एवमेव=योगद्वयोदाहरणार्थप्रदर्शकवाक्ये विशेषासंप्रत्ययादित्यत्रैवोत्तरयोरित्यस्यान्वयेनैव। *यत्र=पूर्वसूत्रे। *तत्=नित्यग्रहणम्। *तत्प्रत्याख्याने=नित्यग्रहणस्य प्रत्याख्याने।

भावगर्हायामेव=भावो धात्वर्थस्तद्गर्हायामित्यर्थः। *इदमपि=एवकारघटितवाक्येन व्याख्यानमपि। पूर्वसूत्रस्थनित्यग्रहणस्य सम्बन्धेन हि वृत्तावेवमुक्तम्। कैयटीयं व्याख्यानं खण्डयति—*यत्त्विति। *तस्य न्यायस्य=तक्रकौण्डिन्यन्यायस्य। *अचरितार्थेति। उत्सर्गाप्राप्तियोग्ये विषयेऽचरितार्थवि-

देर्यङ्द्योत्यतया तद्वृत्तेर्धातोरित्यर्थेनाविधेयत्वं क्रियासमभिहाराविवक्षायां चारितार्थ्यञ्च । *अत एवाटतेर्चेश्च गत्यर्थकात्क्रियासमभिहारे *यङुदाहृतो भाष्ये, एकाज्हलादिग्रहणञ्च *प्रत्याख्यातम् ।

उत्परस्य( पा० सू० ७-४-८८ )। परशब्दसामर्थ्यादभ्यासस्ये-*त्यनुवर्त्तमानं पञ्चम्या विपरिणम्यते, तदाह—अभ्यासात्परस्येति । अत इति तपरत्वं स्पष्टार्थम् । अस्येत्युक्तौ लाघवाभावात् ।

ग्रो यङि(पा० सू० ८-२-२०) । *गिरतेरेवात्र ग्रहणम् *व्याख्यानात् । सञ्चेस्क्रीयते इति । न च सम्-कृ इत्यस्यामवस्थायान्द्वित्वनिमित्तयङः पूर्वमन्तरङ्गत्वात्सुटि कृते ततो यङि द्वित्वात्परत्वाद्दीङश्च *अपवादत्वाद् "यङि च"(पा०सू०७-४-३०) इति गुणः स्यादिति वाच्यम् । "सुट्कात्पूर्वः"(पा० सू० ६-१-१३५) इति *सूत्रभाष्यध्वनितेन गुण-

---

षयत्वादित्यर्थः । तथा तु न प्रकृते, कुटिलं व्रजति='वाव्रज्यते' इत्यत्र क्रियासमभिहाराप्रतीतेरिति । *अत एव=अर्थयोर्बोध्यबाधकभावाभावादेव । *यङुदाहृतो भाष्य इति । 'अटाट्यते' 'अरार्यते' इति यथा । *प्रत्याख्यातमिति । तच्च प्रागुपपादितम् ।

*अनुवर्त्तमानमिति । "अत्र लोपोऽभ्यासस्य"( पा० सू० ७-४-५८ ) इत्यतोऽनुवर्त्तमानम् ।

ग्र इतिनिर्देशस्य 'गॄ' शब्दे इतिक्र्यादिपठितस्यापि सम्भवादाह—*गिरतेरेवेति । तुदादेरेवेत्यर्थः । *व्याख्यानादिति । "अचि विभाषा"( पा० सू० ८-२-३१ ) इति सूत्रे 'यङीत्यस्यानुवृत्तिपक्षे यङ्निमित्तस्य गिरते रेफस्य' इति कथनमूलकव्याख्यानादित्यर्थः । *अपवादत्वादिति । संयोगादिविषये ऽपवादत्वादित्यर्थः । अन्तरङ्गत्वञ्चोपसर्गद्योत्यार्थान्तर्भावेण धातोः पूर्वमेव वृत्तेः स्वीकारेण यथा 'पूर्वन्धातुः साधनेन युज्यते पश्चादुपसर्गेण' इति मतेऽपि सुटः पूर्वम्प्रवृत्त्या "सुट् कात्पूर्वः"( पा० सू० ६-१-१३५ ) इतिसूत्रस्थं कात्पूर्वग्रहणम्प्रत्याख्यातन्तथाऽत्रापि सम्शब्दद्योत्यार्थविशिष्टक्रियाबोधात् पौनःपुन्यविषययङः प्रागुपसर्गयोगेन बोध्यम् । *सूत्रभाष्यध्वनितेनेति । "सुट् सर्वतोऽन्तरङ्गतरको भवति" इति भाष्यध्वनितेनेत्यर्थः । अत एवैतदुत्तरम्भाष्य एव 'संस्कृषीष्ट' "ऋतश्च संयोगादेः"( पा० सू० ७-२-४३ ) इतीट् प्राप्नोति 'संस्क्रियते' "गुणोर्त्तिसंयोगाद्योः"( पा० सू० ७-४-२९ ) इति गुणः प्राप्नोति इतिशङ्कायाः सुटष्ककारमकृत्वाऽभक्तत्वं स्वीकृत्य संयोगादित्वाभावेन परिहारे कृते "संस्करोति" इत्यत्र "तिङ्ङतिङः"( पा० सू० ८-१-२८ ) इति निघातो न प्राप्नोति इति दूषणेनाभक्तत्वपक्षस्य परिहारे कृते सति परिहारो न कृतः । एतद्व्याख्यानावसरे कैयटेनापि सुटः परादित्वमुपपाद्य 'इड्गुणयोः प्रतिषेधो वक्तव्य एव'इत्युक्तम् ।

निषेधेन 'संस्क्रियते' इतिवददोषात्। तत्र हि भाष्ये 'सर्वतोऽन्तरङ्गतरकः सुड्' इत्युक्तम्। कैयटेन च 'इड्गुणयोस्तु प्रतिषेधो वक्तव्य एव' इत्युक्तम्। *एतच्च तनादिशेषे निरूपितम्।

*शपा निर्देशस्य फलमाह—कौतीत्यादि। भ्वादेरेव कुङोऽत्र ग्रहणमिति भावः।

नीग्वञ्चु (पा० सू० ७-४-८४)। *कसधातुर्भ्वादिरेवा-लुग्विकरणत्वादिति केचित्। अकित इत्युक्तेरिति। नचा*जन्ता-भ्यासस्य दीर्घ इत्यर्थे नुग्रुगादौ कृतेऽजन्तत्वाभावान्नीकि विशेषाभावा-द्रिकि रीग्विधानेनैव सिद्धे रिग्विधिसामर्थ्यादेव तदभावसिद्धेः किमकित इत्यनेनेति चेन्न। अभ्यासविकारविधौ वैयधिकरण्यान्वयज्ञापनार्थ-त्वात्। तेन छ्यतेः सनि द्वित्वे*ऽन्तरङ्गत्वात्तुकि 'चिच्छासति' इत्यादा-वभ्यासह्रस्वेत्वसिद्धिः। न चैवमप्य*पवादत्वान्नीगादिभिर्दीर्घबाधे व्यर्थ-मेव तदिति वाच्यम्। 'अभ्यासविकारे बाधका न बाधन्ते' इत्यर्थस्यापि ज्ञा-

---

एतेन सुटः सकारेण संयोगादित्वात् "ऋतश्च" (पा० सू० ७-२-४३) इतिसूत्रे 'असुट इति वक्तव्यम्' "गुणोर्ति" (पा०सू० ७-४-२९) इत्यत्र 'असुट इति वक्तव्यम्' इति प्रतिषेधवचनन्ध्वनितं तथा "याङि च" (पा० सू० ७-४-३०) इत्यत्राप्यसुट इति वक्तव्यमिति भावः। यत्त्वत्र कैयटेन इड्विधौ "एकाच उपदेशेऽनुदात्ता-त्" (पा० सू० ७-२-१०) इति सूत्रादुपदेशपदसम्बन्धेनोपदेशे संयोगादित्वा-भावादिटो "गुणोर्ति" (पा० सू० ७-४-२९) इतिसूत्रे "नित्यं छन्दसि" (पा० सू० ७-४-८) इति सूत्रान्नित्यग्रहणस्य सम्बन्धेन गुणस्य परिहार इति समा-धानान्तरं कृतं तत्तु न युक्तम्। संयोगसंज्ञासूत्रभाष्ये प्रत्येकं संयोगसंज्ञेति पक्षे 'संह्वषीष्ट' 'संह्रियते' इत्यत्रेड्गुणयोरापादनपरभाष्यविरोधात् नित्यग्रहणसम्ब-न्धेनाप्यर्थासङ्गतिरिति तनादिशेषे निरूपितम्। तदाह—*एतच्चेति।

सिचो यङि (पा० सू० ८-३-११२)। यद्यपि "उपसर्गात्सुनोतिसुव-ति" (पा० सू० ८-३-६५) इतिसूत्रं "सात्पदाद्योः" (पा० सू० ८-३-१११) इति निषेधस्य बाधकन्तथापि "सिचो यङि" (पा० सू० ८-३-११२) इतिसूत्रं स-र्वस्य बाधकम्। विनिगमनाविरहात्। *शपा निर्देशस्य='कवतेः' इतिशपा निर्देशस्य।

*कसधातुर्भ्वादिरेवेति। एतेनादादौ कस्य चिन्मते कसेतिपाठेऽपि तस्य व्यावृत्तिः। *अजन्ताभ्यासस्येति। "दीर्घोऽकितः (पा० सू० ७-४-८३) इत्यत्र दीर्घश्रुत्योपस्थितस्याच इत्यस्याभ्यासविशेषणत्वादेतल्लाभः। *अन्तर-ङ्गत्वात्तुकीति। दीर्घादिति तुको वर्णमात्रापेक्षत्वेनान्तरङ्गत्वादित्यर्थः। *अपवा-

पनात् । *तेषां सति सम्भवे युगपदेव प्रवृत्तिः, यौगपद्यासम्भवे क्रमेणैव । *तत्रान्यत्र बाधकप्रवृत्त्युत्तरं बाध्यप्रवृत्त्यभावः, प्रकृते तु तस्मिन्कृतेऽपि प्राप्तियोग्यं बाध्यं भवत्येव । यत्र तु बाधकप्रवृत्त्युत्तरं बाध्यस्य प्रवृत्त्ययोग्यता तत्र पूर्वं बाध्यस्य प्रवृत्तिरनन्तरं बाधकस्य प्रवृत्तिरिति । *अत एव 'मीमांसते' 'अचीकरत्' इत्यादावित्वे कृते दीर्घः ।

अनुस्वार इति । तस्य पदान्तवत्त्वात्पक्षे परसवर्णः । घ्नीभाव इति । *अत्र यङीति विषयसप्तमीति पूर्वं घ्नीभावे 'पिप्ये' इतिवद् द्वित्वम् । यङ्येवोपसंख्यानाद्य*ङ्लुकि न ।

रीगृत्वत इति । *एवञ्च "रीगृदुपधस्य" ( पा० सू० ७-४-९० ) इत्यत्र ऋदुपधग्रहणं न कार्यं रुग्रिकौ चेत्यत्र "ऋत्वतः" इत्यस्यैवानुवृत्तेर्ऋतश्चेत्यपि न कार्यमिति केचित्, तन्न । ऋदुपधग्रहणप्रत्याख्याने मानाभावात् । *अत एव तन्न कर्त्तव्यमिति भाष्ये नोक्तम् । रुग्रिकौ च" ( पा० सू० ७-४-९१ ) इत्यत्र ऋदुपधस्येत्यस्यानुवृत्त्यर्थं तस्यावश्यकत्वात् । एवञ्च ऋतश्चेत्यप्यावश्यकमेव । *अत एव *तृक्षमृक्षादौ यङ्लुकि न रुगादि । रीक्तु अनेन वार्त्तिकेन भवत्येवेति परे ।

ईघ्रा ( पा० सू० ७-४-३१ ) । *दीर्घोच्चारणम् 'अस्य च्वौ"

---

दत्वात्=येन नाप्राप्तिन्यायेनापवादत्वात् । *तेषाम्=अभ्यासविकाराणाम् । तेषु व्यवस्थामाह-*तत्रेति । *अत एव=बाध्यस्य पूर्वम्प्रवृत्तिरितिस्वीकारादेव । 'मीमांसते' इत्यत्र "मान्बध" ( पा० सू० ३-१-६ ) इतिसूत्रविधीयमानदीर्घो यद्यप्यन्तरङ्गस्तथापि पूर्वन्न प्रवर्त्तते लक्ष्यानुसारात् ।

"हन्तेर्हिंसायां घ्नीभावो वाच्यः ( का० वा० ) । यद्यप्यत्र ह्नीत्येवास्तु "अभ्यासाच्च"( पा० सू० ७-३-५५ ) इतिकुत्वेनेष्टसिद्धिर्भविष्यति, तथापि प्रक्रियालाघवाय घ्नीभाव एव कृतः । घ्नीभावस्य द्वित्वोत्तरम्प्रवृत्तौ दोषादाह-*अत्रेति । *यङ्लुकि नेति । "न लुमता" ( पा० सू० १-१-६३ ) इति निषेधात् ।

अन्योक्तिं खण्डयति-*एवञ्चेति । *अत एव=प्रत्याख्यानस्यानभिप्रेतत्वादेव । *अत एव="रुग्रिकौ च" ( पा० सू० ७-४-९१ ) इतिसूत्रे ऋदुपधस्येत्यस्य सम्बन्धादेव । * तृक्षमृक्षादाविति । 'तृक्ष' गतौ । 'मृक्ष' सङ्घाते । आदिना 'स्तृक्ष' गतौ 'वृक्ष' वरणे इत्यनयोः सङ्ग्रहः ।

ई घ्राध्मोः ( पा० सू० ७-४-३१ ) । ह्रस्वेकारादेशेऽपि "अकृत्सार्व" ( पा० सू० ७-४-२५ ) इति दीर्घेण यद्यपि 'जेघ्रीयते' इत्यादि सिध्यति तथाप्युत्तरार्थन्दीर्घोच्चारणमित्याह—*दीर्घेति ।

( पा० सू० ७-४-३२ ) इत्युत्तरार्थम् ।

शाशय्यत इति । यि क्ङितीत्यस्य विषयसप्तमीत्वादन्तरङ्गत्वेन अयङि द्वित्वम् । *अन्यथा दिग्यादेशेनत्रायङोऽपि द्वित्वबाधः स्यादिति बोध्यम् ।

इति यङन्तप्रक्रिया ।

यङोऽचि(पा० सू० २-४-७४)। अच् प्रत्यय एव *व्याख्यानात् । चेन बहुलमित्यपकृष्यते । अत एव 'योयूयः' 'रोरूयः' इत्यादौ न । फलान्तरमप्याह—चकारात्तं विनाऽपीति । बहुलग्रहणानुवृत्त्या वाक्यभेदेन तदर्थसिद्धिः । *स च छन्दस्येव प्रयोगदर्शनात्तद्विषय एव, बाहुलकादेव क्वचिल्लोकेऽपि 'बेभिदीति' 'चेच्छदीति' इति । एतत्प्रयोगद्वयमेव लोक इति "हुश्नुवोः" ( पा० सू० ६-४-८७ ) इतिसूत्रस्थभाष्यस्वरसः* । *अन्तरङ्गत्वादिति । *लुक्त्वाच्चेत्यपि बोध्यम् । धातुत्वादिति । 'चर्करीतम्' ( अ० ग० सू० ) इत्यस्यादादौ पाठाद् भ्वादित्वेन भूवादिसूत्रेणेति भावः । ङित्त्वस्येति । *न चायमनुबन्धनिर्देश इति भ्रमितव्यम् । यदीयानुबन्धनिर्देशस्तत्प्रकृतिकयङ्लुगन्ते तस्याप्रवृत्तिरित्यर्थस्यैव श्तिपुनिर्देशादिसाहचर्येणाङ्गीकारात्, 'श्तिपा शपाऽनुबन्धेन

---

*अन्यथा=विषयसप्तमीत्वाभावे । इति यङन्तविवरणम् ।

## अथ यङ्लुगन्तविवरणम् ।

यङोऽचि च ( पा० सू० २-४-७४ ) । *व्याख्यानादिति । अच्प्रत्ययपरकस्यैवोदाहरणस्य 'योयूयः' इत्यस्य भाष्येऽन्यत्र च प्रदर्शनपरकव्याख्यानादित्यर्थः । *स च=वाक्यभेदेन विधीयमानो लुक् च । *भाष्यस्वरस इति । तत्र हि-'यान्ति' 'धियन्ति' 'सुवन्ति' 'अयुवन्' 'ऊर्णुवन्ति' इत्येषामसंयोगपूर्वोवर्णस्याजादौ सार्वधातुके इत्यर्थेनानेकाज्ग्रहणेनाटोऽसिद्धत्वेन च सिद्धौ यङ्लुगर्थं हुश्नुग्रहणम्"इत्युक्त्वा "योयुवन्तीनां वृषभं, रोरुवन्तीनां वृषभम्" इत्यत्र "छन्दस्युभयथा" ( पा० सू० ३-४-११७ ) इत्यनेनार्द्धधातुकत्वात्सिद्धम्"इत्युक्त्वा "एवन्तर्हि सिद्धे सति यद्धुश्नुग्रहणं करोति तज्ज्ञापयत्याचार्यो भाषायामपि यङ्लुग्भवति" इत्युक्तम् । ततो "बेभिदीति' 'चेच्छिदीति' इत्येतत्सिद्धम्भवति' इत्युक्तम् । एवंविधप्रयोगद्वयस्यैवोपादानान्न सर्वत्र भाषायाम्भवतीति कल्प्यते । प्रयोगद्वयोदाहरणमुपलक्षणमिति तु प्राञ्चः । *अन्तरङ्गत्वादितीति । अत्रान्तरङ्गत्वम्प्राथमिकप्राप्तिकत्वरूपम् । *लुक्त्वाच्चेत्यपीति । सर्वविधिभ्यो लुको बलवत्वात् । *न चायमिति । 'श्तिपा शपा' इतिपरिभाषास्वरसधादिप्राचीनरी-

इति निषेधस्य भाष्येऽदर्शनाच्चेति भावः । यत्र हीति । *तस्य सूत्रस्य नियमार्थत्वमेव सिद्धान्ते इति भावः । अनुबन्धनिर्देशादिति । परे तु *तन्निषेधाभावेऽपि 'तेतिक्ते' इति निपातनेनैव 'अत्रैवात्मनेपदं यङ्लुगन्ते, नान्यत्र'इति नियमान्न दोषः । निजेर्न निशानार्थस्येदं रूपम् । तस्य नित्यं सन्नन्तत्वेन ततो यङभावात् । तस्मादर्थान्तरवृत्तेरनुदात्तेत्सु पठितस्य भ्वादेरिदं रूपम् । अर्थान्तरेऽप्यनुदात्तेत्सु पाठेनानुदात्तेत्त्वमस्त्येव । अनुबन्धकरणसामर्थ्यात्सन्नन्तादात्मनेपदमिति "गुप्तिज्" ( पा० सू० ३-१-५ ) इतिसूत्रस्थभाष्यस्य क्षमादिरूपार्थविशेषेऽप्यनुबन्धकरणसामर्थ्यादित्यर्थः । केषु चिद्धातुषु अर्थसहितो धातुपाठः पाणिनीय इति भाष्यसम्मतमिति निरूपितम् । अर्थान्तरवृत्तेश्चुरादित्वमेवेति मतन्त्वयुक्तमेतद्भाष्यविरोधात् । एवञ्चानुदात्तेत्त्वादात्मनेपदे सिद्धे *तद् उक्तनियमार्थम् । *अत एव "अनुदात्तङितः" ( पा० सू० १-३-१२ ) इत्यात्मनेपदं सिद्धमित्युक्तम् । अन्यथा ङित इति आत्मनेपदं सिद्धमित्येव वदेत । *उक्तरीत्या ङित्त्वप्रयुक्तस्य तत्राप्राप्तेश्च । एतन्मूलक एवादादौ "चर्करीतञ्च" ( अ० ग० सू० ) इत्यस्य परस्मैपदिषु पाठः । श्यन्नादयोऽपि न "चर्करीतञ्च" इत्यस्य विशिष्यादादौ पाठेन तत्र गणान्तरप्रयुक्तस्याप्राप्तेरित्याहुः ।

यङन्तादिति । लुक्यपि *प्रत्ययलक्षणेन यङन्तात्परत्वम् । छन्दसि निपातनादिति । *सङ्कोचे मानाभावेन यङ्लुगन्तभूधातोः छन्दस्येव, तत्रापि *लोड्येव गुणाभाव इति नियम इति भावः । *तत्र

---

त्येयमाशङ्का । *तस्य सूत्रस्य="प्रत्ययलोपे" (पा० सू० १-१-६२) इतिसूत्रस्य । *तन्निषेधाभावे='श्तिपाशपा' इतिनिषेधाभावे । *तदुक्तनियमार्थमिति । अत्रैव यङ्लुगन्तादितिनियमार्थम् । *अत एव=अर्थान्तरवृत्तेर्धातोरिदं रूपमित्यस्याभिप्रेतत्वादेव । *उक्तरीत्या=प्रत्ययलक्षणसूत्रस्य नियमार्थत्वेन ।

*प्रत्ययलक्षणेन । यङ्त्वस्य प्रत्ययासाधारणत्वात् । ननु "भूसुवोः" ( पा० सू० ७-३-८८ ) इतिगुणनिषेधो यङ्लुकि भाषायान्नेतिनियमस्वीकारे 'सु'धातोरपि यङ्लुकि भाषायान्निषेधाप्रवृत्तिः स्यादत आह—*सङ्कोचे मानाभावेनेति । सुधात्वंशे सङ्कोचे मानाभावेनेत्यर्थः । *लोड्येवेति । यद्वा तादृशानियमस्वीकारे यङ्लुकि भाषायान्निषेधाप्रवृत्तिलाभेऽपि छन्दसि लङादावपि निषेधः स्यादत आह-संकोच इति । नियमसंकोचे मानाभावेनेत्यर्थः । *तत्र

सूत्रे 'एकाज्ग्रहणं कर्त्तव्यम्' इति वार्त्तिकारम्भे यङ्लुकि भाषायां *सर्वत्र गुण एव लभ्यत इति तदेकफलत्वाय तत्प्रत्याख्यानप्रकारेऽपि द्विविधनियमस्यैवौचित्यम् । *अत एव वार्त्तिकारम्भे 'अभूव्' इत्यसिद्धिवत् भाषायां यङ्लुकि गुणापत्तिर्दोषत्वेन भाष्ये *नोद्भावितेति दिक् । परं तु लोट्येवेत्येव नियमः 'बोभूतु' इत्यस्य छान्दसेषु पाठस्तु यङ्लुकश्छान्दसत्वादेव । भाषायामस्य यङ्लुगन्तस्य प्रयोगसत्त्वे न मानम् । *अत एव भाष्ये 'बोभूतु' इतिनियमार्थम् । अत्रैव यङ्लुगन्तस्य गुणाभावो नान्यत्र 'बोभवीति' इति *लेटि उदाहृतमित्याहुः । न चेति । *तस्य भूत्वाभावादिति भावः । ग्रहणादिति । परं तु उत्तरखण्डस्य भूत्वादिना "भूसुवोः" ( पा० सू० ७-३-८८ ) इत्यस्य तदन्ताङ्गस्येत्यर्थात्प्राप्तस्य निषेधस्य *नियमः । *द्विः प्रयोगत्वेऽपि विशिष्टानुपूर्वीभेदात्प्रकृतिग्रहणेन तद्ग्रहणोपपादनासम्भवात् । *अत एव "दयतेः" ( पा० सू० ७-४-९ ) इति सूत्रे भाष्यम्-"अस्तेर्भूआदेशे यदि स्थाने द्विर्वचनं, कृते द्वित्वे सर्वादेशो भूभावः प्राप्नोति । अथ द्विःप्रयोगो द्विर्वचनं, तदा परस्य भूभावे कृते पूर्वस्य श्रवणं प्राप्नोति" इत्युक्तम्, इत्याहुः । नित्यत्वादु लुगिति । "जुसि च" ( पा० सू० ७-३-८३ ) इति गुणापेक्षयेत्यर्थः । अपास्पा इति । न च दीर्घे "सिपि धातोः" ( पा० सू० ८-२-७४ ) इति *रुत्वमसिद्धम् । "ढ्लोप" ( पा० सू० ६-३-१११ ) सूत्रे ढ्ग्रहणेन लण्सूत्रे 'अजर्घाः' इति भाष्योदाहरणेन च "पूर्वत्रासिद्धम्" ( पा० सू० ८-२-१ ) इति सूत्रे पूर्वग्रहणेनै*तत्सूत्राग्रहणबोधनात् । वनीवञ्चीतीति-

---

सूत्रे="भूसुवोः" ( पा० सू० ७-३-८८ ) इतिसूत्रे । *सर्वत्र गुण एव लभ्यत इति । एकाच्त्वस्य तत्राभावात् । *अत एव=उक्तस्य द्विविधनियमस्याभिप्रेतत्वादेव । *नोद्भावितेति=तत्र गुणस्येष्टत्वादिति शेषः । ननु लोट्येवेतिनियमश्चेदभिप्रेतस्तर्हि निपातनवैयर्थ्यम् । छन्दसि सर्वविधीनां वैकल्पिकत्वेन लोडतिरिक्ते निषेधाप्रवृत्तेर्लाभादत आह-*अत एव=भाषायामप्रयोगाभावादेव । *लेटि उदाहृतमिति । न तु भाषायामिति शेषः । *तस्य=यङ्लुगन्तस्य 'बोभू' इत्यस्य । समुदायस्य शब्दान्तरत्वादिति भावः । *नियम इति । एवञ्च "प्रकृतिग्रहणे" इत्यस्य ज्ञाप्यवचनस्याभावेऽपि निषेधस्य प्राप्तेर्नियमोपपत्तिरिति भावः । प्रकृतिग्रहणे यङ्लुगन्तस्यापीतिवचनस्वीकारेऽपीष्टासिद्धिरित्याह-*द्विःप्रयोगत्वेऽपीति । *अत एव=समुदायस्य शब्दान्तरत्वादेव । *रुत्वमसिद्धमिति । एवञ्च ढ्लोपपदघटकरशब्देनैतत्सूत्रविधेयरेफस्य ग्रहणञ्च भविष्यतीति भावः । *एत-

नि । न च "नीग्वञ्चु" ( पा० सू० ७-४-८४ ) इत्यनुबन्धनिर्देशेन यङ्लुकि नीग् दुर्लभ इति वाच्यम् । यङ्लुकोरित्यनुवृत्तिसामर्थ्येनादोषात् । अत एव 'सनीस्रंसः' 'दनीध्वंसः' इति "यङोऽचि च" (पा० सू० २-४-७४) इत्यत्र भाष्ये प्रयुक्तम् । *नलोपस्तु न । यङो *लुका लोपात् 'श्तिपा शपा' (प० भा०) इत्यस्या अप्रवृत्तेश्च । चनीस्कन्द इति । ततो ङित्वान्नलोपः, ईकारोच्चारणसामर्थ्यान्नीगादेर्न गुणः । सामान्यापेक्षेति । *अन्यथै-काज्निबन्धनस्यैवानित्यत्वं स्यादिति भावः । आशिषि तु वध्यादिति । इदं "दयतेः" ( पा० सू० ७-४-९ ) इति *सूत्रस्थभाष्यविरुद्धमपि भाष्यानुरोधेनोक्तं, *निरूपितञ्चैतत्तनादिशेषे । धातोर्विशेषणमिति ।

---

तत्सूत्रेति । "ढ्लोपे" (पा० सू० ६-३-१११) सूत्रेत्यर्थः । नन्वयं ग्रन्था "हल्ङ्याब्भ्यः" सूत्रस्थशब्दरत्नग्रन्थेन सह विरुध्यते । तत्र हि 'हल्ङ्यापः सोः' इत्येव सूत्रयितुमुचितम्' इति मनोरमास्थसुपदन्तिस्योरप्युपलक्षणम्, तेन 'अविभा राज्यम्' इति सिद्धम् । अत्र हि 'अविभर् स्' इति स्थिते सकारस्य संयोगान्तलोपे रेफस्य "रो रि" (पा० सू० ८-३-१४) इति लोपे "ढ्लोपे" (पा० सू० ६-३-१११) इति दीर्घोऽन्यथा न स्यात्संयोगान्तलोपस्यासिद्धत्वादित्युक्तम् । यदि "ढ्लोपे" ( पा० सू० ६-३-१११ ) सूत्रस्य पूर्वग्रहणेन "पूर्वत्रासिद्धम्" ( पा० सू० ८-२-१ ) इत्यत्राग्रहणन्तदाऽविभा राज्यमित्यस्यानायासेन सिद्धिर्भविष्यतीति चेन्न । अस्य शेखरग्रन्थस्य सामान्यापेक्षज्ञापकत्वाभिप्रायकत्वं शब्दरत्नग्रन्थस्य तु यथा 'न मुने' इतियोगविभागेन क्वचिदसिद्धत्वाभावः कल्प्यते तथा "अजर्घाः" इतिभाष्योदाहरणेन प्रामाणिकप्रयोगस्थले प्रयोगदर्शनेनासिद्धत्वाभावसिद्धौ सामान्यापेक्षज्ञापकत्वाश्रयणे मानाभाव इत्याशयात् । वस्तुतस्तु बहुषु स्थलेषु प्रयोगाणामप्रामाणिकत्वस्य निश्चेतुमशक्यतया सामान्यापेक्षज्ञापकत्वमेव युक्तमिति बोध्यम् । प्रत्ययलक्षणेन यङ्निमित्तस्य "अनिदिताम्" ( पा० सू० ६-४-२४ ) इतिनलोपस्य शङ्कायामाह—*नलोपस्तु नेति । *लुका लोपादिति । "न लुमताऽङ्गस्य" (पा० सू० १-१-६३ ) इतिनिषेधादिति शेषः । *अन्यथा=सामान्यापेक्षत्वानङ्गीकारे । *सूत्रस्थभाष्यविरुद्धमिति । तत्र यथा 'आर्द्धधातुके' इत्यस्य परसप्तमीत्वपक्षे 'बभूव' इत्यत्र "अस्तेर्भूः" ( पा० सू० २-४-५२ ) इत्यनेन लिटि परत्वाद्द्वित्वे परस्य भूभावे पूर्वस्य श्रवणम्प्राप्नोतीत्युक्तन्तथा यङन्तत्वाद्धन्तेर्द्वित्वोत्तरं वधादेशश्चेत्स्यात्तदा परस्यैव स्यादिति भाष्यविरुद्धमित्यर्थः । *निरूपितमिति । परस्यैव धातुत्वमितिनिरूपितमित्यर्थः । तस्माद् 'वध्यात्' इत्यस्य प्रामाणिकत्वे यङ्लुकि 'श्तिपा शपा' ( प० भा० ) इति निषेधानित्यत्वस्य सामान्यापेक्षज्ञापकेन पूर्वोक्तस्य 'ज्ञापकसिद्धन्न सर्वत्र' इति परिभाषया अप्रवृत्तिस्वीकारेणैकाज्ग्रहणघटितस्य तद्विषयकस्य यङन्तद्विर्वचनविधायकवचनस्याप्रवृत्तिरिति प्राचीनरीत्या निर्वा-

एतदपि अशास्त्रीयस्याप्यतिदेश इति मते। *एतेन साभ्यासत्वस्याशास्त्रीयत्वेन तासौनित्यानिदूत्ववदतिदेशालभ्यत्वमित्यपास्तम्। असिद्धत्वेनेति। त्रिपादीस्थत्वेनेति भावः। *बहिरङ्गत्वेन गुणोऽप्यसिद्ध इति चिन्त्यम्। *"उदोष्ठ्य"( पा० सू० ७-१-१०२ )इत्युत्वे 'पोपूर्यते' इत्यत्राभ्यासगुणो विप्रतिषेधसूत्रे *भाष्ये दृश्यते। न अवन्तीति। एतन्माधवानुसारेण। *न विद्यते किद्यस्मिन्निति बहुव्रीहिगर्भबहुव्रीह्याश्रयणात् 'जाहेति' इत्यादावकित इति दीर्घनिषेधो न। *तत्सामर्थ्यादेव व्यपदेशिवद्भावोऽपि न। उत्वं नेति। संप्रसारणं नेत्यर्थः। इण्नेति। एतदपि माधवानुरोधेन।

चाद्रीगनुवर्त्तत इत्याह--रीगिति। अवर्वर्त् इति। *इदं माधवानुरोधेन। वस्तुतोऽस्यानभिधानम्। "रात्सस्य" ( पा० सू० ८-२-२४ ) इत्यत्र तकारप्रश्लेषे तलोपस्य प्राप्त्या सूत्रमतेऽप्राप्त्या फलभेदापत्तेः। चाकर्तीति। यङं निमित्तीकृत्यान्तरङ्गमपि "ऋत इत्" ( पा० सू० ७-१-१०० ) इतीत्वं न। *यङोलुका *लुप्तत्वात्। *उरदत्वं भवत्येवेति *निरूपितं "न लुमता"( पा० सू० १-१-६३ ) इति सूत्रे। *न

---

ह्यः कार्यः। यङ्लुकश्छान्दसत्वे तु न कापि क्षतिः। *एतेन='इतिमते' इत्युपादानेन। *बहिरङ्गत्वेनेति। अपरनिमित्तकस्य तपरसूत्रस्यान्तरङ्गत्वेन तदृष्ट्या गुणस्य बहिरङ्गत्वादिति भावः। ननु तपरत्वेन 'चञ्चूर्यते' इत्यत्र गुणाभाववत् 'पोपूर्यते' इत्यत्र "गुणो यङ्लुकोः" ( पा० सू० ७-४-८२ ) इति गुणोऽप्यभ्यासस्य न स्यादत आह-*उदोष्ठ्य इति। *भाष्य इति। तथा च भाष्यप्रामाण्यान्न तत्र तपरत्वेन व्यावृत्तिरिति भावः। 'अकित' इत्यस्य न किदकित्तस्येत्यर्थे ह्याकः कित्त्वाद्दीर्घनिषेधः स्यात्तथा तु न बहुव्रीहिसमासाश्रयणादित्याह-*न विद्यत इत्यादिना। *तत्सामर्थ्यात्=तादृशसमासाश्रयणसामर्थ्यात्।

*इदम्माधवेति। "यङो वा" ( पा० सू० ७-३-९४ ) इतिसूत्रविहितस्येडागमस्याभावे 'अवर्वर्त्' इत्याकारकस्य रूपस्याभिधानं माधवानुरोधेनेत्यर्थः। *यङो लुका लुप्तत्वादिति। अत्र लुकेत्युपादानात् 'अन्तरङ्गानपि' इति न्यायप्रवृत्तिः सूचिता। लुगुत्तरमपि नेत्याह-*लुप्तत्वादिति। ननु "उरत्" ( पा० सू० ७-४-६६ ) इत्यत्त्वस्याप्यभ्यासनिमित्तप्रत्ययनिमित्तकतया तस्येह लुकाऽपहारात् "न लुमता" ( पा० सू० १-१-६३ ) इतिनिषेधादप्रवृत्त्यापत्तिरत आह-*उरदत्त्वमिति। *निरूपितमिति। उरदत्त्वञ्च साक्षात्प्रत्ययनिमित्तक-

च 'चाकर्त्ति' इत्यत्राभ्यासह्रस्वत्वे ऋत्वत्तया "रीगृत्वतः" ( का० वा० ) इति रीग्दुर्वार इति वाच्यम् । अभ्यासऋकारमादाय ऋत्वतो ग्रहणे ऋत्वत इति *तपरत्ववैयर्थ्येन *तद्ग्रहणस्य वक्तुमशक्यत्वात् । *नित्यत्वेन "उरत्" ( पा० सू० ७-४-६६ ) इत्यस्य प्रवृत्त्या *तदभावाच्च । स्थानिवत्त्वं तु न अपूर्वविधित्वात् । 'चाकर्ति' 'चाकीर्तः' *इत्युपक्रम्य

किरतिश्चर्करीतान्तं *पचतीत्यत्र योजयेत् ।
प्रातिज्ञन्तमहं मन्ये प्रारब्धस्तेन सङ्ग्रहः ॥

इति भाष्योक्तेः । पचतीति लटः सञ्ज्ञा । तेना*न्यत्रास्याप्रयोगः सूचितः । *आरतीति "ढ्रलोपे" ( पा० सू० ६-३-१११ ) इति दीर्घः । न च दीर्घे *यणः । स्थानिवत्त्वम् । अभ्यासकार्ये *तदनव-

---

ङ्क्त्वङ्गावयवाभ्यासस्य य ऋवर्णस्तस्यात्त्वमित्येव, अङ्गत्वम्परं द्वित्वनिमित्तप्रत्ययनिमित्तकम्, तच्च भवत्येव। अङ्गसंज्ञायां "न लुमता" (पा०सू० १-१-६३) इतिनिषेधाप्रवृत्तेः । "उरत्" ( पा० सू० ७-४-६६ ) इत्यत्त्वस्याङ्गसंज्ञाद्वारा परनिमित्तकत्वमाश्रित्य स्थानिवद्भावः "अचः परस्मिन्" ( पा० सू० १-१-५७ ) इत्यनेन प्रवर्त्तते 'ववश्च' इति भाष्योदाहरणादिति भावः । चाकर्त्तीत्यत्राभ्यासविकारे बाध्यबाधकभावाभावेन पूर्वं ह्रस्वत्वस्य तत उरदत्त्वस्य प्रवृत्तिस्ततो हलादिःशेषदीर्घयोरिति क्रम इत्याशयेन शङ्कते—*न च चाकर्त्तीत्यत्रेति । *तपरत्ववैयर्थ्येनेति । अभ्यासह्रस्वत्वेन सर्वस्य ऋत्वत्त्वादिति भावः । *तद्ग्रहणस्य=ऋत्वच्छब्देन तद्ग्रहणस्य । *नित्यत्वेन=रीगागमापेक्षया नित्यत्वेन। *तदभावात्=ऋत्वत्त्वाभावात् । *इत्युपक्रम्येति । रीग्विधायकसूत्रभाष्ये—'तपरकरणे किम्प्रयोजनम् ? । 'चाकर्त्ति ' 'चाकीर्त्तः' इत्युपक्रम्येत्यर्थः ।

*पचति इत्यत्र योजयेदिति । लडन्ते एवंविधशब्दं परिनिष्ठितत्वेनोपपादयेदित्यर्थः ।

*अन्यत्र=लडतिरिक्ते । *आरतीति । ऋधातोर्यङ्लुगन्ताल्लटि श्चेरदादेशे रुगागमस्योत्तरखण्डादेशस्य यणि "रो रि" ( पा० सू० ८-३-१४ ) इति लोपे "ढ्रलोपे" ( पा० सू० ६-३-१११ ) इति दीर्घः । *यणः स्थानिवत्त्वमिति । "अचः परस्मिन्" ( पा० सू० १-१-५७ ) इत्यनेन स्थानिवत्त्वमित्यर्थः । *तदनवयवधात्ववयवादेशस्येति । अभ्यासानवयवधात्ववयवादेशस्येत्यर्थः । अत्र तदनवयवधात्ववयवेति समुदाय उत्तरखण्डपरः । धातुत्वस्योत्तरखण्डे विश्रान्तेः सिद्धान्तिततया धात्ववयवस्याभ्यासानवयवत्वविशेषणस्याव्यावर्त्तकतया यथाश्रुतशब्देनैव निवेशस्यापुष्टार्थत्वापत्तिरन्यथा स्यात् । तथा सत्युत्तर-

यवधात्ववयवादेशस्य *तत्प्रतिबन्धकस्थानिवत्त्वं नेत्यर्थस्य "अभ्यासस्यासवर्णे" ( पा० सू० ६-४-७८ ) इत्यसवर्णग्रहणेन ज्ञापिततयाऽक्षतेः दीर्घविधौ तन्निषेधाच्च । *अरियूनीति । यणादेशस्य स्थानिवत्त्वात् *परत्वादिना ततः पूर्वमेव वा इयङ् । एकाच इत्यनुवृत्तेरिति । इदं हरदत्तानुरोधेन । वस्तुतोऽस्माद्यङ्लुङन्तत्वेऽपि दीर्घस्य प्राप्तिरेव नास्ति भाष्यकृता द्वित्वेऽभ्यासविशिष्टस्यैवाङ्गत्वाङ्गीकारवत् "प्रत्ययग्रहणे यस्मात्" ( प० भा० ) इति न्यायेन विशिष्टस्यैव यङन्तत्वाद्धातुत्वाङ्गीकारो न तु तस्य ग्रहित्वमिति इङ्योगप्रत्ययस्य ग्रहेर्विहितत्वाभावात्तदनुवृत्तिर्निष्फलैवेति तनादिशेषे क्र्यादिशेषे च निरूपितम् । एवञ्च *माधवस्य भाष्यविरुद्धत्वमपि चिन्त्यमिति दिक् ।

---

खण्डादेशस्येत्येव वक्तव्ये एवमुक्तिर्वैचित्र्याय । *तत्प्रतिबन्धकम्=अभ्यासकार्यप्रतिबन्धकम् । "अभ्यासस्यासवर्णे"( पा० सू० ६-४-७८ ) इत्यसवर्णग्रहणेनेत्यस्यासवर्णेति पदं गृह्यते यस्मिन्नित्यर्थेन "अभ्यासस्यासवर्णे"( पा० सू० ६-४-७८ ) इति सम्पूर्णसूत्रेणेत्यर्थः । एतद्धि 'इयाय' इत्यादावभ्यासस्येयङुवङौ स्यातामित्यर्थमारभ्यते । यद्युत्तरखण्डादेशस्य स्थानिवत्त्वं स्यात्तदा सवर्णपरत्वमेवायातीति सूत्रवैयर्थ्यं स्पष्टमेव । अत्र तत्प्रतिबन्धकमित्युपादानाद् 'अरियियात्'इत्यस्य सिद्धिः । ऋधातोरेव यङ्लुगन्ताल्लिङि तिबादेशे यासुटि रिङादेशेऽपि तस्य स्थानिवद्भावेनाच्त्वादभ्यासावयवस्य रिगागमस्येयङादेशः । न चास्मिन्कृतेऽपि वलि परतो लोपः स्यादिति वाच्यम् । रिङादेशस्य बहिरङ्गत्वेनासिद्धत्वात्स्थानिवद्भावाच्च । अत्रेदमवधेयम्-यदि रिङादेशादन्तरङ्गत्वात्पूर्वमेवेयङादेशस्तर्हि प्रतिबन्धकेतिविशेषणवैयर्थ्यम् । किञ्च तत्प्रतिबन्धकेत्यस्य निवेशे 'अचकाणत्' इत्यत्र "काण्यादीनां वा"( का० वा० ) इति ह्रस्वत्वाभावपक्षे उत्तरखण्डावयवदीर्घस्य स्थानिवद्भावेन ह्रस्वत्वबुद्ध्या सन्वद्भावे "सन्यतः"( पा० सू० ७-४-७९ ) इतीत्वापत्तिः । एतस्य स्थानिवद्भावस्याभ्यासकार्यप्रतिबन्धकत्वाभावादतोऽभ्यासकार्येत्यत्राभ्यासपदमभ्यासत्वाश्रयमात्रपरं वाच्यम् । एवञ्च 'अचकाणत्' इत्यत्राभ्यासत्वाश्रयस्य सन्वद्भावे कर्त्तव्ये उत्तरखण्डावयवाजादेशस्य स्थानिवत्त्वनिषेधान्न सन्वत्त्वम् । तत्प्रतिबन्धकेतिपरित्याज्यमेव उत्तरखण्डपदमुत्तरखण्डावयवाचपरम् । एवञ्च'अरियियात्'इत्यत्र रिङादेशापेक्षयाऽन्तरङ्गत्वादियङित्येव स्वीकार्यमिति तत्त्वम् । एवमेव'आरति'इत्यत्रापि दीर्घे कर्त्तव्ये यणादेशस्य स्थानिवत्त्वनिषेधः । *अरियूतीतीति । अत्र यणादेशस्य स्थानिवत्त्वादित्युपपादनन्तत्प्रतिबन्धकेत्युपादानेन । पूर्वोक्तरीत्या तस्य परित्यागे तु स्थानिवद्भावस्य निषेधः स्यादत आह—*परत्वादिनेति । अत्रादिपदोपादानेनान्तरङ्गत्वस्य परिग्रहः । *माधवस्येति । एवञ्च

ज्वरत्वर ( पा० सू० ६-४-२० ) । *अत्रोपधायाश्चेति च-कारेण वाक्यभेदादा*देशिभेदेनोड्द्वयम्, तयोश्च सवर्णदीर्घे'जूः'इत्यादिसि-द्धिः । ऊठ् एक एव रमागमन्यायेन तूभयोर्निवृत्तिरित्यन्ये । एतत् द्वयम-पि "एकः पूर्व" ( पा० सू० ६-१-८४ ) इत्यत्र भाष्ये स्पष्टम् ।

राल्लोपः ( पा० सू० ६-४-२१ ) । वालि लोपेन सिद्धे लोप-विधानमूठो बाधनार्थम् ।

न धातुलो ( पा० सू० १-१-४ ) । धातुलोप इति बहुव्रीहिस्त-दाह-धात्वंशलोपेत्यादि । सर्वधातुलोपस्याभावादिति भावः । स्पष्टञ्चे-दं भाष्ये । गुणवृद्धी नेति । सन्निहिते*क्परिभाषानिषेधे तु "दीधीवे-वीटाम्" ( पा० सू० १-१-६ ) इत्य*सम्बद्धं स्यादिति व्याख्याना-द् गुणवृद्ध्योरेव निषेध इति भावः । नन्वेवं* हलादिःशेषस्याङ्गाधिका-रस्थत्वेनाङ्गाक्षिप्तप्रत्ययनिमित्तत्वाद् 'बिभेद' इत्यादावनेन निषेधापत्तिरिति चेन्न । अभ्यासस्य धात्वनवयवत्वात् । इदञ्च तनादिशेषे निरूपितम् । किं च "युवोरनाकौ" ( पा० सू० ७-१-१ ) इत्यादिसूत्र*भाष्योक्तरीत्या

---

'माधवस्तु दीर्घमाह' इति मूलोक्तमसङ्गतमिति बोधितम् । मूले भाष्ये ध्वनित-मिति । तत्र हि-"छ्वोः"(पा० सू० ६-४-१९)इति सूत्रे क्ङिद्ग्रहणमनुवर्त्तते उताहो नेति विचारे एतावानेव विशेषः अनुवर्त्तमाने क्ङिद्ग्रहणे छः षत्वं वक्तव्यम-ननुवर्त्तमाने तु छः शादेशे शान्तत्वादेव 'प्रष्टा' इत्यादिरूपसिद्धौ "व्रश्च" ( पा० सू० ८-२-३६ ) इति सूत्रे छग्रहणन्न कार्यम् । अत्रैतावानेवेतिवदता ऊठ्भाविभ्यो यङ्लुग् नास्तीति ध्वनितमन्यथा दिवेर्यङ्लुगन्तस्य 'देदेति' 'देदेषि'इत्यादावूठो भावाभावाभ्यां विशेषस्य स्पष्टतया एतावानेवेत्येवकारो विरुध्येतेति । तद्विषयक-मिति । तत्रैव विचारकरणात् । 'ज्वरत्वर ( पा० सू० ६-४-२० ) इत्यूड्भाविनोः' इत्युक्तन्तत्र प्रसङ्गादाह-'मव्य' बन्धने इति ।

ज्वरत्वर ( पा० सू० ६-४-२० ) । अत्र "छ्वोः" ( पा० सू० ६-४-१९ ) इतिसूत्रादूडिति एकवचनान्तमनुवर्त्तते क्वचित्तु "ज्वरत्वर" ( पा० सू० ६-४-२० ) इत्यूठावित्युच्यते तत्र मतभेदमाह—*अत्रोपधाया इत्यादिना । *आदेशिभेदेन=अन्त्योपधारूपादेशिभेदेन । *इक्परिभाषानिषेधे त्विति । धात्वंशलोपनिमित्तार्द्धधातुके यत्र गुणवृद्धी प्राप्नुतस्तत्रेक्पदञ्चोपतिष्ठत इत्यर्थकल्पनेनेक्परिभाषाबोध्यनिषेधे सति परिभाषानिषेधः स्पष्ट एव ।

*असम्बद्धं स्यादिति । तथा व्याख्याने 'भविता' इत्यादाविटो गुणः स्यादेवेति तदसम्बद्धमित्यर्थः । *एवम्=गुणवृद्धिनिषेधविधायकत्वे । *भाष्यो-

*तृज्वद्भावस्येवा*स्याप्यनैमित्तिकत्वात् । निरूपितं चैतत् "न लुमता" (पा०सू०१-१-६३) इति सूत्रे। सूत्रोदाहणं-'लोलुवः' 'पापुवः' इत्यादि। धात्वितिकिम्?, लून् लविता । *तदभावे बहुव्रीह्यलाभेन लोपनिमित्त इत्यर्थालाभात्। आर्द्धधातुक इति किम् ?, *तोतोर्ति। "क्ङितिच"( पा० सू० १-१-५ ) इति सूत्रस्थ*भाष्यात्त्वेषां यङ्लुगन्तानाम*भाव एव भाषायामिति लभ्यते तदाऽऽर्द्धधातुकग्रहणं स्पष्टतया बहुव्रीहिलाभार्थम्। विषयासम्भवेनेति । *भाविज्ञानस्यैव शब्दीयविषयपदार्थत्वादि-त्याहुः। प्रत्ययलक्षणन्तु न "न लुमता" ( पा० सू० १-१-६३ ) इति निषेधात्।

इति यङ्लुगन्तप्रक्रिया।

---

करीत्येति। तत्र यथा 'नन्दनदधि' 'कारकदधि' इत्यत्र समासाद्या विभक्ति-स्तस्या लुकि अङ्गत्वाभावात्कथं "युवोरनाकौ" ( पा० सू० ७-१-१ ) इत्यस्य प्रवृत्तिरितिशङ्कायां "न चेह परन्निमित्तमाश्रीयते अस्मिन्परतो युवोरनाकौ भ-वत इति किन्तर्हि अङ्गस्य युवोरनाकौ भवतः। अङ्गसंज्ञा भवति प्रत्ययलक्षणेन" इत्युक्तम्। *तृज्वद्भावस्येति। तत्र यथा 'पञ्चक्रोष्टृ कुलम्' इत्यत्र तृज्वद्भावो न प्राप्नोतीतिशङ्कायाम्भाष्ये "न चापरन्निमित्तमाश्रीयते किन्तर्ह्यङ्गस्य क्रोष्टुस्तृ-ज्वदिति अङ्गसंज्ञा भवति प्रत्ययलक्षणेन" इति प्रतिपादितम्। *अस्यापि=अ-भ्यासलोपस्यापि। *तदभावे=धात्वितिपदाभावे । *तातोर्त्तीति। 'तुर्वी'धा-तोरिदं रूपम्। *भाष्यात्त्वेषामित। तत्र हि "क्ङिति चेतिसूत्रे तन्निमित्तग्रहणं कर्त्तव्यङ्किम्प्रयोजनमुपधारोरवीत्यर्थम्" इत्युक्तम् । तत्र "रोरवीत्यर्थेन नार्थः। छान्दसमेतत्। दृष्टानुविधिश्छन्दसि भवति" इत्यभिधाय "अथ वा पूर्वस्मिन्यो-गे यदार्द्धधातुकग्रहणन्तदनवकाशं तस्यानवकाशत्वाद् गुणो भविष्यति" इत्यु-क्तम। आर्द्धधातुकग्रहणस्यापि "न धातुलोप" ( पा० सू० १-१-४ ) इतिसूत्रे 'रोरवीति' इत्यस्य सिद्धिः प्रयोजनमुक्तम् । यदि तेन निषे-धाभावेऽप्यनेन निषधः स्यात्तर्हि तत्रार्द्धधातुकग्रहणस्य वैयर्थ्यापत्तिरिति भावः। *अभाव एवेति। यदि 'तोतोर्ति' इत्यादीनामभिधानं स्यात्तदा पूर्वस्मिन्योगे य-दार्द्धधातुकग्रहणन्तदनवकाशमित्यनवकाशत्वोक्तिर्व्यर्था स्यादिति । *भाविज्ञा-नस्येति। भावि यत् परत्वेन ज्ञानं प्रत्ययस्य तद्यत्रास्ति तत्रैव विषयत्वव्यवहार इति भावः। इति यङ्लुगन्तविवरणम्।

## अथ नामधातुविवरणम्।

सुप आत्मनः क्यच् ( पा० सू० ३-१-८ )। अत्र सुप्पदं सुबन्तपरम्।

सुपः ( पा० सू० ३-१-८ ) । *आत्मनः किम् ?, राज्ञः पुत्रमिच्छति । पदविधित्वेन समर्थपरिभाषाप्रवृत्त्यै सुप इति, महान्तं पुत्रमिच्छति इत्यादिर्वाक्यान्माभूदि*ति च । *काम्यचि पूर्वस्य पदत्वाय च तत् ।

अस्य ईदिति । अवर्णान्तस्याङ्गस्येत्यर्थः । नाव्यतीति । *गोसमानाक्षरनान्तादिति त्वेकदेशिमतं न सिद्धान्तः । *अत एव "नः क्ये" ( पा० सू० १-४-१५ ) इति सूत्रे 'वाच्यति' इति भाष्ये प्रयुक्तम् ।

नः क्ये ( पा०सू० १-४-१५ ) । ककारोच्चारणं सामसु साधुः=सामन्य इत्येतन्न्यावृत्तये । अन्यथा तन्नैव विध्यर्थं स्यात् । "यस्य हलः" ( पा० सू० ६-४-४९ ) इति लोपमाशङ्क्याह–सन्निपातेति । राजीयतीति । "नलोपः सुप्स्वर" ( पा० सू० ८-२-७ ) इति नियमादीत्वे नलोपो नासिद्धः । चिन्त्यमिति । पुंशब्दमिच्छतीत्यर्थेऽपि 'प्रकृतिवदनुकरणम्' ( प० भा० ) इत्यनेन धातुत्वमस्त्येवेति भावः । प्रामादिक इति । "हलि च"(पा०सू०८-२-७७) इत्यत्र धातोरित्यनुवृत्तेरिति भावः । क्यच्क्योश्चेति । आपत्ययलोपोऽनेन क्रियते । वाच्यतीति । *अत्र सम्प्रसारणं न "धातोः कार्यमुच्यमानम्" ( प० भा० ) इति परिभाषणात् ।

---

तस्यार्थद्वारकमात्मन इति विशेषणम् । इच्छायामित्यनुवर्त्तते । आत्मपदञ्च कर्तृपरम् । कर्त्ता च प्रत्यासत्त्या इषेर्ग्राह्यः । तत्र सुबन्तविशेषणमात्मन इति किमर्थमिति पृच्छति–*आत्मन इति किमिति । *इति चेति । चेन पूर्वस्य पदसंज्ञा च प्रयोजनमिति बोधितम् । तदेव स्पष्टप्रतिपत्तये आह–*काम्यचीत्यादि । चेन क्यचि परतोऽपि । तेन 'राजीयति'इत्यादेः सिद्धिः । न च क्यचः प्रथमोपस्थितत्वात्तत्परित्यज्य काम्यज्ग्रहणादाने बीजाभाव इति वाच्यम् । "नः क्ये" ( पा० सू० १-४-१५ ) इतिसूत्रस्य तदा विधायकत्वात्क्यचि पदत्वस्य सिद्धेः ।

यद्यपि भाष्ये गोसमानाक्षरनान्तादिति पठ्यते तथापि क्यजन्यप्रकृतिकादपि भवतीत्यत्र हेतुमाह–*गोसमानाक्षरेति । *अत एव=तस्यैकदेश्युक्तित्वादेव ।

वाक्शब्दस्य 'वच्'धातोः क्विपि निष्पन्नतया क्यचि सम्प्रसारणप्राप्तेराह–*अत्रेति । क्यज्विधायकसूत्रे "मान्ताव्ययानाम्प्रतिषेधः" इत्येव वार्त्तिकम्, तच्च यथाश्रुतमसङ्गतम्,पुत्रमिच्छतीत्यत्रापि प्रतिषेधापत्तेः । सूत्रन्तु द्विवचनबहुवचनान्तात्प्रत्ययविधायकत्वेन चरितार्थम् । अतः शेषपूरणेन मूले व्याख्यातम्–मान्तप्रकृतिकेति ।

अशनायोदन्यधनायाः(पा०सू०७-४-३४) । एते समुदाया बुभुक्षादिष्वर्थेषु निपात्यन्ते । प्रकृत्यर्थोऽत्र न विवक्षितः । "उदन्या तु पिपासा तृड्"(अ०को०)

"सर्वप्रातिपदिकानाम्" इतिवार्त्तिकस्य 'दध्यस्यति' 'मध्वस्यति' 'दधिस्यति' 'मधुस्यति' इत्येवमर्थमितिशेषात् इदं दधिमधुशब्दविषयकमेवेति माधवः ।

काम्यच्च ( पा० सू० ३-१-९ ) । धातुस्वरेण सिद्धेऽस्य चित्त्व*श्चिन्त्यप्रयोजनम् । कस्येत्संज्ञा तु न । फलाभावात् ।

कर्तुः क्यङ् ( पा० सू० ३-१-११ ) । "धातोः कर्मणः" (पा० सू० ३-१-१७ ) इत्यतो वेत्यनुवर्त्तते । कर्तुरिति क्यङ्विधौ पञ्चम्यन्तमपि सलोपविधौ योग्यतया षष्ठ्यन्तं, तेन तदन्तविधिरिति बोध्यम् । तेन 'हंसायते' इत्यादौ *सलोपो न । सन्नियोगशिष्ट इति । सान्तसम्बन्धिक्यङित्यर्थः । *तेन क्यङि तदभावो नेति भावस्तदाह—स च व्यवस्थित इति । इतरेषामिति । भाष्ये*नानामतप्रदर्शनेन विकल्पे तात्पर्यादिति भावः । सपत्नीवेति । *एतत्तत्त्वं "भस्याऽढे"(भा०इ०)इत्यत्र निरूपितम् । युवायत इति । वयोवाचिनां जातिकार्यं वैकल्पिकमिति *"जातेरस्त्री"(पा०सू०४-१-६३)इति सूत्रे भाष्ये स्पष्टम् । एतेन "जा-

---

इतिकोशात् । अशनशब्दः कर्मल्युडन्तः । कालान्तरोपयोगार्थं योऽशनमिच्छति, स्नानायोदकमिच्छति, दारिद्र्यपीडितः सन् यो धनमिच्छति तत्र न प्रत्ययः, किन्तु धने सत्यपि धनेच्छारूपगार्द्ध्य एव । "अश्वक्षीर" ( पा० सू० ७-१-५१ ) इत्यनेन प्रकृतिविशेषोपादानेऽपि "वृषस्यन्ती तु कामुकी" (अ० को०) इति कोशात्प्रकृत्यर्थोऽत्रापि न विवक्षितः । तथा च मानुष्यामपि "वृषस्यन्ती" इति प्रयोगः । लालसा=उत्कटेच्छा ।

*चिन्त्यप्रयोजनमिति । केचित्तु धेट्दृष्टित्ववद्यत्र काम्यजन्तात्सन् तत्र सतिशिष्टमपि नित्स्वरश्चित्स्वरो बाध्यतामित्येवमर्थं चित्त्वमित्याहुः ।

कर्त्तुः क्यङ् सलोपश्च ( पा० सू० ३-१-११ ) । अत्र चकारोऽन्वाचये । सेतिलुप्तषष्ठीकम्पृथक्पदम् । तच्च कर्तुरित्यस्य विशेषणम् । *सलोपो नेति । कर्तृवाचकस्य सान्तत्वविरहात् । *तेन=क्यङा सन्नियोगशिष्टत्वाङ्गीकारेण । *नानामतेति । तत्र हि सलोपसन्नियोगेनायं क्यङ् विधीयते, तेन यत्र सलोपस्तत्रैव क्यङित्येकवाक्यतयेदं विधायकमित्येकम् । अन्वाचयशिष्टः सलोप इति निष्कृष्टं द्वितीयम् । सलोपो वा । ओजसोप्सरसो नित्यम् । अपर आह सलोपोऽप्सरस एवेति नानामतमित्यर्थः । *एतत्तत्त्वमिति । शत्रुपर्यायात्सपत्नशब्दाच्छार्ङ्गरवादिङीनन्ताद्भाषितपुंस्कात्क्यङि "क्यङ्मानिनोश्च" ( पा० सू० ६-३-३६ ) इतिपुंवत्त्वे 'सपत्नायते' इति रूपम् । विवाहनिबन्धनसंस्कारविशिष्टेरूढो यः सपत्नीशब्दस्तस्मात्क्यङि भाषितपुंस्कत्वाभावान्न पुंवत्त्वमित्यादि त-

तेश्च" ( पा० सू० ६-३-४१ ) इति निषेधादिदं रूपं दुर्लभमिति परास्तम् । वाग्रहणादिति । अन्यथा विशेषविहितत्वात्क्विपा क्यङो बाधः स्यादिति भावः । *एतानन्तुक्रमस्य "सर्वप्रातिपदिकेभ्य इत्येके" इति भाष्योक्तेर*स्यापि प्रातिपदिकादेवोत्पत्तिः । सर्वप्रातिपदिकेभ्योऽस्य क्यङश्च विधानेन वचनसामर्थ्यलभ्यपर्यायस्यैवानुवादको वाशब्द इति माधवः । *भूतपूर्वादपीति । अकारस्यानुबन्धत्वेन सांप्रतिकानेकाच्त्वस्यात्राभावात् । *अत एव धातुभिरेव रूपसिद्धिमाशङ्क्य 'अवगलभाश्चक्रे' इत्यादौ "कास्प्रत्ययात्"(पा० सू० ३-१-३५) इत्याम् यथा स्यादिति क्विप् कृतः" इति भाष्ये उक्तम् । न च *'अवजिगल्भिषते' इत्यादावाचारक्विबन्तात्सनि "यथेष्टं नामधातुषु"(भा०इ०)इत्यस्य प्रवृत्त्यर्थमिदं वार्तिकमावश्यकमिति वाच्यम् । नामशब्दस्य *सुबन्तपरतया *तत्प्रकृतिके एवास्य* प्रवृत्तेः *आचारक्विबन्तेभ्यः *सन एवानुत्पत्तेश्च । वृत्तिसंभवादिति । न चाचारेऽर्थे सर्वेत्थनेनाजन्तात्क्विपि 'अवगलभति' इत्यादिवारणायानुबन्धास-

---

क्तामित्यर्थः । *जातेरस्त्री इतिसूत्रे भाष्ये स्पष्टमिति । इदम्प्रागुपपादितम् । "आचारेऽवगल्भ" ( का० वा० ) इत्यपि सुप इति प्रक्रान्ते पठ्यतेऽतोऽस्यापि सुबन्तादुत्पत्तिरिति भ्रमवारणायाह-*एतानन्तुक्रमस्येति । *अस्य=क्विपः । *भूतपूर्वादपीतीति । क्विपि सति प्रत्ययान्तत्वादाम्भवति यदा त्वनेकाज्ग्रहणं क्रियते तदा तु तत्सन्नियोगेनाच्प्रत्ययस्यानुदात्तत्वानुनासिकत्वप्रतिज्ञाकरणादित्संज्ञया तस्य निवृत्तौ गल्भेति नानेकाजिति कथमेभ्य आमित्याशङ्कावारणाय भूतपूर्वादपीत्युक्तम् । तदेवोपपादयति-*अकारस्येति।तत्र प्रमाणमाह-*अत एवेति । तादृशार्थस्याभिप्रेतत्वादेव *अवाजगल्भिषते इति । अवेत्यस्य पृथक्करणाद् गल्भशब्दात्सनि गल्भ् इत्यस्य द्वित्वम् ।*सुबन्तपरतयेति । नमन्ति=आख्यातार्थम्प्रति विशेषणताम्प्राप्नुवन्तीत्यर्थस्यान्यत्र प्रदर्शितत्वात् ।*तत्प्रकृतिके=सुबन्तप्रकृतिके । *अस्य=यथेष्टमित्यस्य । नमन्त्याख्यातार्थम्प्रति विशेषणीभवन्तीति नामानीत्यर्थस्य स्वरसादेव लक्षणेहाश्रिता । 'पुपुत्रीयिषति' अस्यैव भाष्ये उदाहरणत्वेन प्रदर्शनात् । कर्मधारयसमासाश्रयणेन नामाभिन्नाद्धातोरित्यर्थे यत्राचारक्विबन्तात्सनि ततः कर्तरि क्विप् तत्रैव स्यादिति भाष्योदाहरणविरोधः स्पष्ट एव । तदुक्तोदाहरणे यथेष्टमित्यंशस्य प्रवृत्तिमभ्युपेत्य नामधात्वित्यंशाभावान्न तस्य वचनस्य प्रवृत्तिरित्यभिधाय यथेष्टमित्यंशोऽपि 'अवजिगल्भिषते' इत्यत्र नास्तीत्याह-*आचारक्विबन्तेभ्य इति । *सन एवानुत्पत्तेरिति । प्रकृते यथेष्टमित्यंशप्रवृत्तिप्रयोजकस्य सनोऽनुत्पत्तेरित्यर्थः । अवेत्यस्य पृथक्करणेन गल्भेत्यस्मात् क्विबन्तात्सन उत्पत्तिर्वाच्या द्वित्वार्थम्, तच्च द्वित्वम्प्रकृते न सम्भवति । यत्र नामघटितधात्ववयवैकाच्कत्वसद्भावस्तत्र द्वित्वस्य प्रवृत्तेः स्वीका-

ज्ञनार्थं *वचनमावश्यकमिति वाच्यम् । "सर्वप्रातिपदिकेभ्यः"(का०वा०) इत्यनेन क्विपि तथा प्रयोगे इष्टापत्तिरित्यभिमानः । वस्तुत इदं सर्वं हरदत्तानुरोधेनेति ध्वनयन्नाह-पूर्ववार्त्तिकन्तु अनुबन्धासञ्ज्ञार्थमिति । आचारेऽजन्तात्क्विपि 'अवगल्भति'इति प्रयोगवारणाय सर्वेत्येतत्क्विबनुवादेनानुदात्तासङ्ग *एषां बोध्यते इत्यर्थः । अत्र चातिरिक्तोऽकारः पररूपेण प्रश्लिष्टोऽनुनासिक आसज्यते इत्यनेकाच्त्वप्रयुक्तस्यामः सिद्धिरिति भावः । हरदत्तानुसारेणाह-प्रत्ययग्रहणमपनीयेति । वस्तुतस्तदपनये न म नमिति निवेदितं प्राक् । एवञ्च *प्रत्ययान्तत्वादेवात्राम्सिद्धिर्बोध्या । किं च तदपनयनादिना *एकाज्भ्योऽनभिधानात्क्विबनुत्पत्तिरेव वाच्या । अन्यथा सूत्रवार्त्तिकयोः फलभेदापत्तेः । *यत्र भिन्नफलार्थमेवोत्तरस्य प्रवृत्तिस्तत्र फलभेदेऽपि प्रत्याख्यानमस्तु । न चात्र तथा सत्यनेकाज्ग्रहणञ्चुलुम्पाद्यर्थमितिवदेकाज्व्यावृत्त्यर्थमित्यपि* वदेत् । किं चैवं* सति "न क्वादेः"( पा० सू० ७-३-५९ ) इत्यादौ "अनर्थकः प्रतिषेधो निष्ठायामनिटः कुत्ववचनात्"इतिवत् "प्रत्ययादित्यनर्थकम् अनेकाच आम्विधानात्"इति वदेदिति दिक् । तत्र हरदत्तोक्तमङ्गीकृत्य माधवेनोक्तं प्रक्रियाक्रमप्राह—अतो गुणेऽत आदेरित्यादि । *अतोलोपम् "अत आदेः ( पा० सू० ७-४-७० ) इति दीर्घञ्च बाधित्वाऽन्तरङ्गत्वात्पूर्वरूपम्, 'वार्णादाङ्गम्' इति तु नानित्यत्वादिति माधवाभिप्रायः । दीर्घइति । परत्वादतो लोपं बाधित्वा पूर्वान्तत्वेनाभ्यासत्वादित्यभिप्रायः । मालातीति । 'आतो नापः' 'आतोवातोः' इति न्यासयोः *फलैक्याया-

---

दादिति भावः । मूले-इत्यादिसिद्धिरिति । आचारेऽर्थे इत्यादिसिद्धिरित्यर्थः । *वचनम्="आचारेऽवगल्भ" ( का० वा० ) इति वचनम् । *एषां बोध्यत इति । पूर्ववार्त्तिकेनेति शेषः । *प्रत्ययान्तत्वादेवेति । अत एव भाष्ये "प्रत्ययान्तादित्यास्यथा स्यात्" इत्येवोक्तं, न त्वनेकाजित्युक्तम् । *एकाज्भ्यः=लिडादिप्रातिपदिकेभ्यः । "हृत्वनधापः" ( पा० सू० ७-१-५४ ) इतिसूत्रभाष्यप्रामाण्येन हलन्तेभ्य आचारे क्विबभावे तु कादिप्रातिपदिकेभ्य इत्यर्थो वा वाच्यः । फलभेदेऽपि "वसेस्तव्यत्" ( का० वा० ) इत्यस्य प्रत्याख्यानं दृष्टं यद्यपि तथाप्यत्र तथा नास्तीत्याह-*यत्र भिन्नेति । *इत्यपीति । तथा तु नोक्तमतः प्रत्ययशब्दापनयनन्नाभिप्रेतमिति भावः । *एवम्=तदपनयनस्याभिप्रेतत्वे । नन्वल्लोपस्यापि प्राप्तिसत्त्वात्तस्यानुक्तिः कथमत आह-*अतो लोपमिति । *फलैक्यायेति । यद्यादन्तेभ्य आचारे क्विप्स्यात्तदा धातुग्रहणसत्त्वे लोपः स्यात्, 'अनापः' इत्युक्ते

बन्तेभ्य आचारक्विबेव नेत्यपरे । साहचर्यादिति । *ईकाररूपङन्तात्सिपोरसम्भव* इति भावः । कैयटादय इति । इदञ्च गोशब्दादाचारक्विपि 'अगावीत्' इत्युपक्रम्य *"इको गुण" ( पा० सू० १-१-३ ) इति सूत्रे कैयटेनोक्तम् । अत्रारुचिबीजन्तु "न वै सन्ध्यक्षरमन्त्यमस्ति" इति "इकोगुण" ( पा० सू० १-१-३ ) इति *"वदव्रज" ( पा० सू० ७-२-३ ) इतिसूत्रस्थभाष्यप्रामाण्याद् "ओतः श्यनि" ( पा० सू० ३-७-७१ ) "आदेच:" ( पा० सू० ६-१-१४५ ) इत्यादिसूत्रस्थभाष्यप्रामाण्यादेजन्तेभ्य आचारक्विपोऽभाव इति । सुगसुग्विधायक*वार्त्तिकोक्तमाधवरीत्याऽस्यापि वार्तिकस्य 'अश्वति' 'गर्दभति' इत्येवमर्थमितिवाक्यशेषात्तन्मात्रविषयतैवास्येति कश्चित् ।

---

तु नेति फलभेदः स्पष्ट एव । कस्य स्त्री=की । तस्मादाचारक्विबन्ताद्यङ्लुकि लङि 'अचेकेत्' इत्यस्य सम्भवाभिप्रायेणाह-*ईकाररूपेति । *असम्भव इति । शपा व्यवधानादसम्भव इत्यर्थः । *इको गुणेतीति । अस्य सूत्रस्थभाष्येत्यत्रान्वयः । *वदव्रजेतीति । अस्य सूत्रमुपक्रम्येति शेषः । एवञ्च "इको गुण" ( पा० सू० १-१-३ ) इतिसूत्रस्थभाष्यप्रामाण्यादङन्तेभ्य आचरक्विपोऽभावः "ओतः श्यनि" ( पा० सू० ७-३-७१ ) "आदेच उपदेशे" ( पा० सू० ६-१-४५ ) इति सूत्रस्थभाष्यप्रामाण्यादोकारान्तेभ्य इति परित्यज्य सामान्यत एजन्तेभ्य इत्युक्तम् । आद्ये वृद्धिग्रहणस्य प्रयोजननिरूपणावसरे इहार्थमेव सिजर्थं वृद्धिग्रहणं कर्त्तव्यम् सिचि वृद्धिरिक एव यथा स्यादित्येतन्निरूपणावसरे कस्यानिकः प्राप्नोतीतिशङ्कायां सन्ध्यक्षरस्य प्राप्नोतीति परेण कथिते न वै सन्ध्यक्षरमन्त्यमस्तीत्युक्तम् । यद्येङन्तेभ्यः से-णो-प्रभृतिभ्य आचारे क्विप्स्यात् तर्ह्येतद्भाष्यविरोधः स्पष्ट एव । द्वितीये "ओतः श्यनीत्यत्र शितीति वक्तव्यम् । किम्प्रयोजनम् ? । उत्तरत्र शिद्ग्रहणाभावाय" इत्युक्तम् । अत्र "ष्ठिवुक्लमु" ( पा० सू० ७-३-७५ ) इतिसूत्रे शिद्ग्रहणाकरणप्रयुक्तलाघवं दर्शितं न तु तथा सत्योकारान्तादाचारक्विपि लटि शपि लोपप्राप्तिरुद्भाविता । तत्र कैयटोऽप्याह-"न ह्योतः श्यनोऽन्य ओतः शिदस्ति" इति । तेन गोप्रभृतिभ्य आचारे क्विबभावो ध्वनितः । तृतीये "प्रातिपदिकानामप्रतिषेधो वक्तव्यः-गोभ्याम्, नौभ्याम् । स तर्हि प्रतिषेधो वक्तव्यो न वक्तव्यः । धातोरिति वर्त्तते । क्व प्रकृतम् ? । लिटि धातोरनभ्यासस्य । अथापि निवृत्तम् । एवमप्यदोषः । उपदेश इत्युच्यते । उद्देशश्च प्रातिपदिकानान्नोपदेशः" इत्युक्तम् । यद्येजन्तेभ्य आचारे क्विप्स्यात्तदा धातुग्रहणानुवृत्त्या समाधानासङ्गतिः स्फुटैव । भूद्रुशब्दौ पृथ्वीवृक्षयोर्वाचकौ । *वार्त्तिकोक्तमाधवरीत्येति । तत्र तेन यथा "सर्वप्रातिपदिकेभ्यः" इतिवार्त्तिकस्य 'दध्यस्यति' 'मध्वस्यति' 'दधिस्यति' 'मधुस्यति' इत्येमर्थमितिशेषादिदं दधिमधुशब्दविषयमेवेत्यु-

इदामतीति । हलन्तेभ्य आचारक्विन्नास्तीति "ह्रस्वनद्यापः" (पा० सू० ७-१-५४) इति सूत्रे *भाष्ये स्पष्टम् । पथीनतीति । इदं माधवानुसारेण । क्विबङ्गीकारेऽपि 'पथेनति' तु युक्तम् । "इन्हन्" (पा० सू० ६-४-१२) इति नियमेन दीर्घाप्राप्तेः । न च नियमस्य *सजातीयापेक्षत्वात्सुडानन्तर्ये एव नियमफलनिषेधप्रवृत्तिरिति वाच्यम् । 'वृत्रघ्नः स्त्री=*वृत्रघ्नी' इत्याद्यसिद्ध्यापत्तेरित्यपरे । हरदत्त इत्यत्रारुचिं दर्शयति—माधव इति । अनाकरमेवेति । अत्र यद्वक्तव्यन्तदुक्तम्* ।

भृशादिभ्यो (पा० सू० ३-१-१२) । भृशादिराकृतिगणः । सुमनसादयो बहुव्रीहयः, 'अभूततद्भावग्रहणं कर्त्तव्यम्' इति वार्त्तिकं, *तदाह—अभूतेत्यादि । वार्त्तिकान्यथासिद्धिमाह—अच्वेरिति । चोऽन्वाचये । *अत एव भृशग्रहणं *चरितार्थम् । भृशा इति । भृशा लोका इत्यर्थः । कैयटे तथा पाठात् । प्रातिपदिकमिति । न धातुः, तथा सति भाष्योक्त*वक्ष्यमाणज्ञापकानुपपत्तिरिति भावः । उपसर्गसमानाकारमिति । *अन्यथाऽत्रत्यसंशब्दस्य क्रियायोगाभावेनानुपसर्गत्वाज्ज्ञापकानुपपत्तिरिति भावः । *उपसर्गस्यापि प्रयोगभेदेनोपसर्गसमानाकारत्वं

---

क्तं, तथाऽत्रापि कल्प्यत इति भावः ।

*भाष्ये स्पष्टमिति । तत्र हि "कास्प्रत्ययात्" (पा० सू० ३-१-३५) इतिसूत्रविहितस्यामो मकारस्येत्संज्ञा कुतो नेत्याशङ्कायाम् "इत्कार्याभावान्न भविष्यति । प्रत्ययान्तादयमाम् विधीयते तत्र नास्ति विशेषः प्रत्ययपरत्वेऽन्त्याद्चः परत्वे वा" इत्युक्तम् । तेन हलन्तेभ्य आचारे क्विबभावो ध्वनितः । *सजातीयापेक्षत्वादिति । तस्मिन्सूत्रे शावित्युपादानात्तथा कल्प्यते । *'वृत्रघ्नी' इत्याद्यसिद्ध्यापत्तेरिति । अत्र 'वृत्रहन्'शब्दस्य क्विबन्ततया तत्र "अनुनासिकस्य" (पा० सू० ६-४-१५) इति दीर्घः स्यात्तथा चास्मात्पुंयोगात् स्त्रियां वृत्तौ नान्तलक्षणे ङीपि कृतेऽल्लोपो न स्यादिति । *तदुक्तमिति । कास्प्रत्ययादितिसूत्र इति शेषः । तत्र हि सूत्रवार्त्तिकयोः फलैक्यायैकाज्भ्यः क्विपोऽनभिधानमुक्तम् ।

*तदाहेति । तदभिप्रायेणाहेत्यर्थः । *अत एव=अन्वाचयशिष्टत्वाङ्गीकारादेव । *चरितार्थमिति । समुच्चयविवक्षायान्तु यत्र हलो लोपसम्भवोऽलोन्त्यपरिभाषैकवाक्यतया स्यात्तत्रैव प्रत्ययोऽपि स्यादिति भृशग्रहणवैयर्थ्यं दुर्वारमिति भावः । *वक्ष्यमाणेति । उपसर्गसमानाकारमित्यादिरूपमित्यर्थः । अनुबन्धासङ्गस्तु तत्र "अतो गुणे" (पा० सू० ६-१-९७) इति पररूपेण द्रष्टव्यः । *अन्यथा=अत्र समानाकारमिति पदाभावे । उपसर्गसंज्ञकम्पूर्वपदमित्येवोक्तौ यत्रोपसर्ग एव पूर्वपदन्तत्राव्याप्तिं वारयति-*उपसर्गस्यापीति । उपसर्गसमाना-

बोध्यम् । चिकीर्षिते इति । पृथक्करणेन समासाभावकल्पनेऽपि तद्विषये क्यङादिप्रत्ययविधायके लक्षणे सुबन्तादित्यंशे यस्माद्विहितस्तदादीत्यं- *शामवृत्त्या न दोषः । यस्माद्विहित इत्यनेनाधिकव्यावृत्तिरेव न तु न्यूनव्यावृत्तिरिति तत्त्वम् । पृथक् क्रियते इति । *तेन जातसमासाभावः कल्प्यते । *अत एव 'सुमनाय्य' इत्यादौ पुनः क्त्वान्तेन समासे ल्यप्सिद्धिः । तदुक्तं "भृशादिभ्यः" ( पा० सू० ३-१-१२ ) इति सूत्रे भाष्ये "सङ्ग्रामयतेरेव सोपसर्गान्नान्यस्मात्सोपसर्गात" इति । श्रूयत इति । उत्तरपदात्पार्थक्येनेति शेषः । आदेशेनेति । एकादेशरूपेणेत्यर्थः । *अत एव 'स्वाशश्वत्' 'सम्यचिचत्' इति माधवोदाहृतं सङ्गच्छते । *अवगल्भ्येति । स्वोत्तरभागेन धातुसञ्ज्ञानिमित्तप्रत्ययप्रकृतिभूतैकदेश*धातुना समर्थत्वादिकं तद्द्वारा तद्घटितविशिष्टार्थेऽपि क्त्वान्तेन सह समर्थतया "कुगति" ( पा० सू० २-२-१८ ) इति सूत्रेण समासे क्त्वो ल्यबादेशः । प्रकृत्येकदेशद्वारकमेव च कृत्सु *सर्वत्र सामर्थ्यमिति दिक् । चशब्देनेति । एवञ्च विनिगमनाविरहेण बाध्यसामान्यचिन्तया सर्वबाधकत्वन्तस्येति भावः । अन्यथा 'पुरस्तादपवाद'न्यायेन "ओमाङोः" (पा० सू० ६-१-९५ ) इत्यस्यैव बाधः स्यान्न तु "उसि" ( पा० सू० ६-१-९६ ) इत्यस्येति बोद्ध्यम् ।

---

कारेत्युपादानफलन्तु तुन्दपरिमृजादिप्रातिपदिकात्क्यङ्प्रत्ययचिकीर्षायान्न तुन्देत्यस्य पृथक्करणम् । पूर्वपदमित्युपादानेन 'आन्दोलयित्वा' 'प्रेङ्खोलयित्वा' इत्यत्र आप्रशब्दयोर्धात्ववयवयोर्न पृथक्करणम् । यत्र समानावयवत्वम्पूर्वपदस्य तादृशस्यास्ति तत्रैव पृथक्कृतिर्भवति । *अंशाप्रवृत्त्येति । अन्यथा तस्य सुपस्समुदायप्रकृतिकतया मनस् स् इत्यस्य यस्मात्सुब्विहितस्तदादिसुबन्तत्ववि- रहादसम्भवः स्यादिति भावः । *तेन=पृथक्करणेन । *अत एव=जातस्याप्यभावकल्पनादेव । सोपसर्गादित्यत्रोपसर्गपदमुपसर्गसमानाकारपरम् । *अत एव=एकादेशरूपेणेतिव्याख्यानादेव । 'स्वाशश्वत्' इत्यादौ तूपसर्गसमानाकारस्य सुशब्दादेर्यणादेशेन विकारेऽपि पृथक्कृतिर्भवत्येवेति भावः । तस्य पृथक्करणेन धातुसंज्ञाप्रयोजके प्रत्यये कृते ततः क्त्वाप्रत्यये च कृते पुनर्यथा समासो तथोपपादयति-*अवगल्भ्येतीति । *धातुना=गल्भेतिशब्देन । *सर्वत्र=यत्र पृथक्करणन्तत्रैव यत्र न धातुसंज्ञाप्रयोजकप्रत्ययचिकीर्षा तत्रापि । यथा अच्छगत्येत्यत्राच्छेत्यस्य गत्वाशब्दैकदेशगम्धातुद्वारकमेव सामर्थ्यमिति । मूले-आटः प्रतिषेध इति । "उस्यपदान्तात्" ( पा० सू० ६-१-९६ ) "ओमाङोश्च" ( पा० सू० ६-१-९५ ) इतिप्राप्तस्य पररूपस्य प्रतिषेध इत्यर्थः । एतन्निषेधसामर्थ्या-

अत्राच्वेरिति। *अत एव भाष्ये लोहितभिन्नानां लोहितादिगणे पठ्यमानानां *भृशादिपाठे*नित्यात्मनेपदमेव प्रयोजनमुक्तं न त्वभूततद्भावविषयतालाभोऽपीति भावः। असम्भवादिति। अनुकरणाद्डाज्विधानेनानुकरणत्वभङ्गापत्त्या तत्र तदसम्भव इति भावः। तत्र= आदिशब्दस्य। "भृशादिभ्यः" (पा० सू० ३-१-१२) इति नित्यमात्मनेपदस्यैव तेभ्य इष्टेरिति भावः। तस्यापीति। *ककारस्यापीत्यर्थः। योगं विनापीति। तदर्थसत्तामात्रेणेत्यर्थः। एवञ्च तदर्थविवक्षया डाचि कृते ततस्तदर्थे क्यषिति भावः। तद्भाष्येति। *उक्तभाष्येत्यर्थः।

कष्टा (पा० सू० ३-१-१४)। क्रमणम्=उत्साहः। *'कष्टायते'

---

त्प्रकृते "अर्थवद्ग्रहण" परिभाषायाः प्रतिपदोक्तपरिभाषायाश्चाप्रवृत्तिरिति बोध्यम्। विशेषापेक्षज्ञापकाभावे तु प्रकृतवार्त्तिकोदाहरणविषयेऽप्याङः पृथक्कृतिः स्यादिति क्यच्प्रत्यय उस्रशब्दात्स्यात्तदन्ताल्लुङि कृते आडागम आङः परो जायेत, ततश्च "ओमाङोश्च" (पा० सू० ६-१-९५) इत्यस्य प्राप्तिरेव नास्तीतिवार्त्तिकस्योक्तिसम्भवो न स्यादिति भावः। *अन्यथा=बाध्यसामान्यचिन्तानाश्रयणे। अत्रेदम्बोध्यम्। इदञ्च ज्ञापकम्भृशादिपठितसुदुस्पूर्वमनस्शब्दे स्वरातिरिक्तविषये। तेन 'चैत्रः सुमनायते' इत्यादौ सुविशिष्टस्य निघातस्ततः परस्यानिघातः। अत एवास्य सिध्यर्थम्भाष्यकृता "भृशादिषूपसर्गः पराङ्गवत् स्वरविधौ" इति वचनम्पठितम्।

*अत एव=अच्वेरित्यस्यानुवृत्तेः सत्त्वादेव। *भृशादिपाठे="भृशादिष्वितराणि" (का० वा०) इत्यनेन भृशादौ पाठे। *नित्यात्मनेपदमेवेति। अत्रैव पाठे त्वनेन क्यषि "वा क्यषः" (पा० सू० १-३-९०) इत्यनेन विकल्पः स्यात्। *ककारस्यापीति। न च ककारो "नः क्ये" (पा०सू० १-४-१५) "क्यस्य विभाषा" (पा०सू० ६-४-५०) इत्यत्र विशेषणार्थोऽस्तु। लोहितडाज्भ्य एव क्यष्विधानेन फलाभावात्। 'वा क्यषः' इत्यत्रापि 'वा यषः' इत्येवास्तु। *उक्तभाष्येति। "लोहितडाज्भ्यः क्यष्वचनम्भृशादिष्वितराणि" इतिभाष्येत्यर्थः।

कष्टाय क्रमणे (पा० सू० ३-१-१४)। कष्टार्थप्रतिपादकप्रातिपदिकप्रकृतिकसुबन्तात्क्रमणेऽर्थे क्यङ्, स च सुप् कष्टायेत्युपादानाच्चतुर्थी। अत्र सूत्रे क्यङ्ग्रहणमनुवर्त्तते मण्डूकप्लुत्या। न च "लोहितादिडाज्" (पा० सू० ३-१-१३) इतिसूत्रे क्यष्ग्रहणमकृत्वा "लोहितडाज्भ्यो ञिच्च" इति पठनीयम्। क्यङस्तत्राप्यनुवृत्तिः कार्या। प्रकृते मण्डूकप्लुतिर्न स्वीकार्या "वा क्यषः" (पा० सू० १-३-९०) इतिसूत्रञ्च न कार्यम्। ञित्त्वादेवोभयपदसिद्धेरिति वाच्यम्। लोहिनीशब्दात्क्यङि "क्यङ्मानिनोश्च" (पा० सू० ६-३-३६) इति पुंवद्भावापत्तेः कर्तृगामिक्रियाफलविवक्षायाम्परस्मैपदाभावापत्तेश्चेति।

इत्युक्त्वा गमनाद्यप्रतीतावपि कष्टविषयकोत्साहप्रतीतेः, तदाह–उत्साहेऽर्थे इति । पापं कर्त्तुमिति । *अन्तरङ्गत्वात्कर्त्तुमित्यस्यैवान्तर्भावः । विग्रहे कर्तुमित्यध्याहारेण "क्रियार्थोपपदस्य" ( पा० सू० २–३–१४ ) इति चतुर्थी । *"वृत्तिसर्ग" ( पा० सू० १–३–३८ ) इति तङ् । वृत्तिविषय इति । न च तत्रैव *तत्त्वे कष्टाय क्रमते इति विग्रहोऽनुचितोऽस्वपदविग्रहस्यैवौचित्यादिति वाच्यम् । *अस्य सत्राद्यभिप्रायेण प्रवृत्तेः । *अत एव भाष्ये कष्टाय क्रामतीति विग्रहं प्रदर्श्य सत्रादिषु स न दर्शितः । पापञ्चिकीर्षतीति । उत्पादनायाः कृञर्थत्वाद् द्वितीयाः। भाष्ये तु क्रामतीति परस्मैपदं प्रयुक्तम् । क्रमणं गमनमत्र पापोद्देश्यकेन हि तेन तद्विषयकोत्साहो गम्यते इति क्रमेरुत्साहार्थत्वाभावः । *कण्वचिकीर्षायामित्यस्य हि तस्याङ्गम्यायामित्यर्थ इति तदाशयः ।

कर्मण इति षष्ठी । प्रतिपादकत्वं षष्ठ्यर्थः । कर्मप्रतिपादकरोमन्थतपोभ्यामिति वाच्योऽर्थः । फलितमाह–कर्मभ्यामिति । *वर्तीति ण्यन्ताद्धात्वर्थनिर्देशे इक् । कैयट इति । *उक्तश्च भाष्ये–"उद्गीर्णस्यावगीर्णस्य वा मन्थो=रोमन्थः" इति । उद्गीर्णम्=उदरादुपर्याकृष्टम्, अवगीर्णम्=अपानान्निर्गतम्, मन्थः=चर्वणमिति तदर्थः ।

शब्दवैर ( पा० सू० ३–१–१७ ) । कर्मण इति वर्त्तते । कर-

---

*अन्तरङ्गत्वात्=करोत्यर्थस्य शीघ्रोपस्थितत्वात् । *वृत्तिसर्गेतितङिति । तत्र सूत्रे सर्गेत्यनेनोत्साह एव प्रामाणिकैरुक्तः । न चैतत्सूत्रभाष्ये "क्रमणेऽनार्जवे क्यङ् निपात्यते" इत्युक्तं, तेन विरोध इति वाच्यम् । अनार्जवपदेनानृजुः सम्बन्ध उच्यते । भाष्यप्रामाण्याद्भावार्थकेऽप्युत्तरपदवृद्धिः । अनार्जवे गम्ये कष्टायेति निपात्यते । क्रमणम्=गमनम् । तच्च नार्जवविषयकं विवक्षितं तेन तद्विषयकोत्साहो गम्यत इत्यभिप्रायेण मूलकारस्याभिप्रायमाह—कष्टायत इत्युक्त्वेति । अन्तरङ्गत्वादिति । करोत्यर्थस्य व्यापारस्य सर्वोपकारकत्वेनान्तरङ्गत्वम् । *तत्त्वे=पापार्थत्वे । *अस्य=पापार्था इति कथनस्य । *अत एव =तदभिप्रायकत्वादेव । 'कण्वचिकीर्षायाम' इत्यस्य कण्वचिकीर्षारूपेऽर्थे इत्यर्थः प्रतीयते स न युक्त इत्याह–*कण्वचिकीर्षायामिति ।

कर्मणो रोमन्थ ( पा० सू० ३–१–१५ ) । अत्र यद्वर्त्तनायामिति व्याख्यातन्तल्लाभप्रकारमाह–*वर्त्तीतीति । अत एव तन्निरूपितकर्मत्वस्यापि सम्भवः । चरित्यत्र सम्पदादित्वाद्भावे क्विप् । कैयटोक्तौ प्रमाणमाह–*उक्तश्चेति । उभयत्रान्वयाय मन्थश्चर्वणमिति व्याख्यातम् ।

शब्दवैरकलह ( पा० सू० ३–१–१७ ) । करणशब्दस्य कारकविशेषबो-

णमत्र क्रिया, *व्याख्यानात्। इति न्यास इति । भाष्यानारूढ-त्वमत्रारुचिः ।

सुखादिभ्यः ( पा० सू० ३-१-१८ ) । *वेदनाकर्तृसम्बन्धि-सुखादिप्रतिपादकेभ्यः सुखादिभ्यः इति वाच्योऽर्थः । फलितमाह—वेद-नेत्यादि ।

*पूजायामित्यादि नमआदिभिः क्रमेणान्वेति। चित्रङो ङित्त्वम*व-यवेऽचरितार्थमिति क्यजन्तात्तङानौ।

पुच्छादिति । *अत्र पुच्छादयः स्वकर्मकोदसनक्रियादौ लाक्ष-णिकाः । ततः स्वार्थे णिङ्, णाविष्ठवदिति *टिलोपः ।

वस्त्रादित्यादि हल्यादिभ्य इति च भाष्ये न दृश्यते। संवस्त्रय-तीति । वस्त्रैः समाच्छादयतीत्यर्थः । परत्वाद् वृद्धाविति । न च नि-

---

धकतया करणे कारक इत्यर्थः प्रतीयते स तु न युक्तः । शब्दाद्यर्थस्याक्रिया-त्वात्तन्निरूपितकारकत्वासम्भवादत आह—*व्याख्यानादिति । सुदिनदुर्दिने-त्यादिवार्त्तिकम्। अत्रत्यचकारेण भाष्योक्तानामटाऽट्टाशीकाकोटापीठासोठाप्रु-ष्टाप्लुष्टानां ग्रहणम्।

वेदनेत्यत्र विदधातोर्ज्ञानार्थकाण्णिचि युच्।प्रत्यासत्तिलभ्यार्थमाह—*वेदनाकर्तृसम्बन्धीति ।

नमोवरिवश्चित्रङः क्यच् ( पा० सू० ३-१-१९ )। वरिवस्शब्दोऽव्यु-त्पन्नप्रातिपदिकं सेवार्थकम्। यद्यप्यत्र क्रियासामान्यार्थकङ्करणपदमनुवर्त्तते तथापि भाष्यीयव्याख्यानात्क्रियाविशेषः क्रमेण विवक्षित इत्याशयेनाह—*पूजा-यामित्यादीति । तदुक्तम्भाष्ये-"नमसः पूजायाम्, वरिवसः परिचर्यायाम्, चित्रङ आश्चर्ये" । मूले-नमस्यति देवानिति । अत्र नमःशब्दस्य योगेऽपि वृत्ति-घटकस्यानर्थकत्वान्न तद्योगे "नमः स्वस्ति" (पा० सू०२-३-१६) इति चतुर्थी । "स एवायमितिप्रत्यभिज्ञयाऽर्थवत्त्वमेवेति चेत् 'उपपदविभक्तेः कारकविभक्ति-र्बलीयसी' इति द्वितीया" इति भाष्ये उक्तम्। चतुर्थी तु "नमोऽस्तु देवेभ्यः" इत्यत्र चरितार्था। यत्र "नारायणन्नमस्कृत्य" इति प्रयुज्यते तत्रापि "उपपद" इतिन्या-येन द्वितीयैव । नमःशब्दस्य निपातस्य द्योतकतया करोतेस्तत्र स्वनिष्ठापकृष्ट-त्वप्रकारकज्ञानानुकूलव्यापारवाचितया देवानाङ्कर्मत्वात्।*अवयवेऽचरितार्थमि-तीति ।अस्य 'चित्रङ' इत्युच्चारणस्य सत्त्वाद्यद्यप्युपदेशोऽयं ङित् तथापि चित्री-येतिसमुदायस्य तदन्तत्वाभावादात्मनेपदाप्राप्तेः सामर्थ्यादेवङ्कल्प्यत इति भावः।

पुच्छभाण्डचीवरा ( पा० सू० ३-१-२० ) । यद्यपि करण इति प्रागु-क्तन्तथापि तत् "सुखादिभ्यः कर्तृवेदनायाम्"(पा० सू० ३-१-१८)इत्यनेन व्यव-हितमत आह-*अत्र पुच्छादय इति । *टिलोप इति । णाविष्ठवत्प्रातिपदिकस्ये-

त्यो लोपः । शब्दान्तरप्राप्त्या *तस्याप्यनित्यत्वात् । व्यक्तिभेदमात्रेण च शब्दान्तरप्राप्तिग्रहणात् । 'रन्धयति' इत्यत्र तु *तस्य अनित्यत्वान्न दोषः । अत्र यद्वक्तव्यं तदुक्तञ्चुरादौ । सापेक्षेभ्योऽपीति । स्पष्टं चेदं "सुप आत्मनः" ( पा० सू० ३-१-८ ) इत्यत्र *कैयटे । *गमकत्वात् 'मुण्डयति माणवकम्' इत्यत्र णिज् भवति, क्यच् तु नागमकत्वादिस्यपि तत्र भाष्ये स्पष्टम् । तदा प्रपञ्चार्थमेव मुण्डादिग्रहणम् । *'माणवकं मुण्डं करोति' इत्यत्र वाक्ये कर्मसामानाधिकरण्यात् माणवकस्य कर्मत्वम् । वृत्तौ तु मौण्ड्यरूपफलाश्रयत्वात्तत्त्वं बोद्धव्यम् । सत्यापयतीति । आपुग्विधानसामर्थ्यात्* टिलोपो न । *एषां लुङ्यनभिधानम् । *अत एव णेरा*पुडिति भाष्यं सङ्गच्छते । घ इति । कर्मण्ययं*, निपातनात्कुत्वाभावः । कर्तर्यजन्त इत्यपि वक्तुं शक्यमित्यन्ये । एतयतीति । न चात्र *परत्वाट्टिलोपः स्यात्, अतिदिश्यमानकार्याणामुपदेशदेशस्यैव देशत्वान्नीकारादिति वाच्यम् । 'भस्याढे' (भा०इ०) इत्यस्य प्रत्ययोत्पत्तेः पूर्वं प्रवृत्त्याऽन्तरङ्गत्वात्

---

त्यत्र सामान्यतो णाविष्टवदित्येवोक्तमतोऽस्यापि ग्रहणमिति भावः ।

*तस्य=टिलोपस्य । *तस्य=शब्दान्तरेत्यस्य । कृताकृतप्रसङ्गमात्रेण नित्यत्वस्य लक्ष्यानुरोधादाश्रयणमिति भावः । *कैयट इति । एतेन तस्य भाष्यानारूढत्वन्ध्वनितम् । भाष्यसम्मतरीत्या त्वाह-*गमकत्वादिति । यद्यपि 'माणवकम्मुण्डङ्करोति' इति वाक्ये माणवकस्य कर्मसमानाधिकरणत्वमस्ति तथापि वृत्तौ मुण्डीतिणिजन्तस्यार्थो मौण्ड्यानुकूलव्यापार इति मौण्ड्यरूपफलाश्रयत्वात् 'मुण्डयति माणवकम्' इत्यत्र माणवकपदोत्तरं द्वितीया, मौण्ड्याश्रयस्य करणत्वासम्भवादित्याशयेनाह-*माणवकमित्यादि । आपुकः प्रातिपदिकावयवत्वाट्टिलोपशङ्कायामाह-*विधानसामर्थ्यादिति । *एषाम्="सत्याप" ( पा० सू० ३-१-२५ ) इतिसूत्रविहितण्यन्तानाम् । *अत एव=लुङ्यनभिधानकल्पनादेव । *आपुडितिभाष्यमिति । तत्र हि सत्यस्यापुगागमे टिलोपस्य प्राप्तिमाशङ्क्य "एवन्तर्ह्यापुट् करिष्यते" इत्युक्तम् । आपुटो णिज्भक्तत्वात्तस्मिन् टिलोपेऽपि 'सत्यापयति' इति भविष्यतीत्याभिप्रायः । तदुत्तरम् "अथ वा पुनरस्तु आपुगेव । ननु चोक्तं टिलोपः प्राप्नोति । आपुग्वचनान्न भविष्यति" इत्युक्तम् । एवमुक्तमिति त्वन्यत् । अत्र णिच आपुडागमपक्षे टिलोपे च सति ततो लुङि चङि द्विर्वचने 'अससत्यापत्' इति रूपम् । आपुगागमपक्षे तु "णौ चङि" (पा० सू० ७-४-१ ) इति ह्रस्वत्वे 'अससत्यपत्' इति स्यादिति लुङ्यापुट्पक्षेऽनभिधानमावश्यकमन्यथा 'अथ वा पुनरस्तु' इतिकथनस्वारस्यभङ्गः स्यात् । *अयम्=घप्रत्ययः । हलन्तात् "तत्करोति" (चु० ग० सू०) इति णिचि तु 'त्वाचयति' इत्येव । *परत्वा-

*तदतिदेशसामर्थ्याच्च । न च पुंवत्त्वस्यासिद्धत्वाट्टिलोपो दुर्लभः । आभीयासिद्धत्वस्यानित्यत्वात् । *अत एव "टेः" (पा० सू० ६-४-१५५) इतिसूत्रे भाष्ये 'एतयति' 'श्येतयति' इत्युदाहृतम् । इष्ठनि छन्दस्येव तृलोपप्रवृत्तेर्लोके न तदतिदेश इति पुंवद्भावादिषु तृलोपो नोक्तो मूले नाप्युदाहृतः । *अत एव 'मातयति' 'भ्रातयति' इत्युदाहृतं "र ऋतः" (पा० सू० ६-४-१६१) इति सूत्रे भाष्ये । प्रथयतीति । रभावटिलोपावत्र ।

असिद्धत्वादिति । द्वित्वे तदसिद्धत्वेन हकारघटितबुद्ध्या द्वित्वेऽभ्यासे श्चुत्वसिद्धिः । इदं "पूर्वत्रासिद्धम्" (पा० सू० ८-२-१) इतिसूत्रे वृत्तौ । ढीत्वस्येति । तदनित्यत्वम् "उभौ साभ्यासस्य" (पा० सू० ८-४-२१) इति लिङ्गाण्णत्वमात्रविषयमिति *तद्भावः । ऊडिढदिति । *द्वित्वे कृते तदाश्रयस्य कार्यान्तरे कर्त्तव्येऽप्यसिद्धत्वनिषेधान्नाभ्यासे चुत्वादीति भावः । *वैयाघ्रपद्यवार्त्तिके "शर्पूर्वाः" (पा० सू० ७-४-६१) इति सूत्रे कैयटे च 'औजढत्' इति प्रयोगो दृश्यते इत्यनित्यत्वमन्यविषयेऽपीति अत्रारुचिः । स प्रयोगोऽपि चिन्त्य इत्यन्ये । ऊनयताबुक्तमिति । तच्चासङ्गतमिति *तत्रैवोक्तं कैयटे । अभ्यासेऽकारपाठो लेखकप्रमादात् "पूर्वत्रासिद्धम्" ( पा० सू० ८-२-१ ) इतिसूत्रस्थवृत्तिग्रन्थोऽपि चिन्त्य एव । तत्र हि 'ऊढमाख्यत्=औजढत्' इत्युक्त्वा 'औजिढदिति तु ऊढिशब्दस्य' इत्युक्तम् । प्रकृत्यैकाजिति । तेनातिदिष्टटिलोपो न । "यस्य"

---

त्=पुंवद्भावात्परत्वात् । *तदतिदेशसामर्थ्याच्चेति । पुंवद्भावातिदेशसामर्थ्याच्चेत्यर्थः । भवदुक्तरीत्या सर्वत्र टिलोपस्य प्राप्त्या तदतिदेशोऽन्यथा व्यर्थः स्यात् । *अत एव=तस्याप्रवृत्तिस्वीकारादेव । अनित्यत्वे "श्नसोरल्लोपः" ( पा० सू० ६-४-१११ ) इति तपरत्वमप्रमाणमित्यन्यत्रोपपादितम् । *अत एव=छन्दस्येव तृलोपसत्त्वादेव । मूले-पर्यवव्रढदिति । 'प्रभौ परिवृढः' इति निपातनेन ढत्वस्य प्रवृत्त्या तत्र यथा वृढशब्दद्वित्वन्तथोढिशब्दस्य नेति ध्वनयितुमेतदुपादानम् । उपसर्गसमानाकारस्य परिशब्दस्य पृथक्कृतिरत्र द्रष्टव्या ।

*तद्भावः=ढिशब्दस्य द्वित्वयादिनो भावः । ननु ढिशब्दद्वित्वेऽप्यभ्यासावयवस्य चुत्वे ढत्वस्यासिद्धत्वात् 'औजिढत्' इति स्यादत आह-*द्वित्वे कृत इत्यादि । *वैयाघ्रपद्यवार्त्तिके=

"शुष्किका शुष्कजङ्घा च क्षामिमानौजढस्तथा" ( वै० वा० )

इतिवार्त्तिके । *तत्रैवोक्तमिति । परेत्वित्यादिना एत्वादिघटितधात्वच्तुल्यत्वं यत्र तत्रैव स्थानिवद्भाव इत्युक्तम् । ननु यदि स्वशब्दस्यापि "अचोऽञ्णिति" (पा० सू० ७-२-११५) इति वृद्धिस्तदाऽस्य सूत्रस्य "अत उपधायाः" इत्यनेन योग-

( पा० सू० ६-४-१४८ ) इति लोपश्च न । इष्ठनि तस्यादृष्टत्वेन तदनतिदेशात् नैकाजिति सिद्धे प्रकृत्येत्युक्त्या तस्यापि बाधाच्च । वृद्धिपुकाविति । *'प्रापयति' इति भाष्यप्रयोगाद्- "अचोऽञ्णिति" (पा०सू०७-२-११५) इति सूत्रस्थं "न ञ्णितयत उपधाया इत्येवोच्येत, किमर्थो योगविभागः ?, सख्यर्थः" इति भाष्यन्तु प्रयोजनोपलक्षणमिति भावः । *अन्तरङ्गत्वादिति । वार्णपरिभाषाया अनित्यत्वादप्रवृत्तिरिति भावः । अनित्यत्वाश्रयणे *दृढतरमानाभावात्, *व्याश्रयेऽपि 'इयाय' इत्यादौ तत्प्रवृत्तेश्चायमेव न्याय्यमिति परे । अन्यथासिद्धीति । एवं हि तत्र भाष्यम्- "इष्ठेमेयःसु प्रकृतिभावे किमुदाहरणं ?, प्रेष्ठ इति । प्रादीनामसिद्धत्वान्न भविष्यति । इदन्तर्हि श्रेष्ठः । अकारोच्चारणसामर्थ्यान्न भविष्यति । विन्मतोर्लुगर्थं तर्हि 'स्रग्वितमः' 'स्रजिष्ठः' इति । नाप्राप्ते टिलोपे लुक आरम्भेण लुका टिलोपबाधात तद्विषये तदभावात्" इति । असिद्धवत्त्वप्रत्याख्याने तु *परत्वात्प्रादिषु टिलोपं बाधित्वा कृतेषु सकृद्गतिन्यायेन टिलोपाप्राप्तिर्बोध्या । अत एव 'प्रेष्ठः' इत्यत्रोच्चारणसामर्थ्यादिति नोक्तम् । *किं च विन्मतोर्लुगित्र प्रादयः श्रादयश्च नाप्राप्ते टिलोपे आरभ्यमाणास्तद्बाधका इति तद्विषये न टिलोप इत्य*न्त्यमेव सर्वसाधारणम् । *अत एव 'कनिष्ठः' इत्यादौ "टेः" (पा०सू०६-४-१५५) इति न । "न स्तद्धिते" (पा० सू० ६-४-१४४) इत्यपि न । अत *उच्चारणसामर्थ्या-

---

विभागस्य सख्यर्थ इत्येव प्रयोजनमुक्तन्तदसङ्गतमत आह—*प्रापयतीत्यादि । *अन्तरङ्गत्वादितीति । "छ्वोः" (पा०सू०६-४-१९) इतिसूत्रे सतुक्ग्रहणाद्धि साऽनित्या । *दृढतरमानाभावादिति । पदस्य विभज्यान्वाख्याने हि सतुकनिर्देशस्य ज्ञापकत्वं सम्भवति । यदि साऽनित्या न स्यात्तदा तया परिभाषया शादेशस्य पूर्वम्प्रवृत्तिः स्यादिति सतुकनिर्देशो व्यर्थः स्यादिति रीत्या । यदि तु प्रकृते क्रमेणान्वाख्यानमेव कल्प्यते तदा वार्णशास्त्रस्याङ्गशास्त्राप्राप्तिसमये प्राप्तया तुकोऽश्रवणाय सतुक्कनिर्देशस्यावश्यकत्वेन तस्यानित्यत्वे ज्ञापकत्वन्न सम्भवतीति भावः । *व्याश्रयेऽपीति । समाननिमित्तिकत्वं समानाश्रयत्वमिति भवत्संमतमिति भावः । *परत्वात्प्रादिष्विति । न च प्राद्यादेशविषये टिलोपस्यावश्यप्राप्त्या चारितार्थ्याभावात् कथमेतदिति वाच्यम् । कृतेऽपि टिलोपेऽवशिष्टे आदेशस्य चारितार्थ्यमित्यभिमानात् । वस्तुतष्टिलोपाप्राप्तियोग्ये चारितार्थ्याभावेन प्राद्यादेशानामपवादत्वमेवेत्याह-*किञ्चेति । *अन्त्यमेव=अपवादत्वेन समाधानमेव । *अत एव=अपवादत्वादेव । *उच्चारणसामर्थ्यादिति । अत्राप्यपवादत्वादिति

त्। *सर्वादेशत्वं 'क'इत्यादेशेनापि सिद्धम्। मेष्ठज्येष्ठयोराद्ये समाधाने एकदेशिनः। परे तु किमुदाहरणमिति प्रश्ने परोक्तोदाहरणानामन्यथासिद्धिं प्रदर्श्योदाहरणान्तरानुक्तेरस्योदाहरणाभाव एव। औपदेशिकोदाहरणाभावे *आतिदेशिकफलार्थमात्रं सूत्रारम्भस्यादर्शनाच्च प्रत्याख्याने एव भाष्यतात्पर्यमित्याहुः।

टेरित्यस्यैवेति। एवकारेण "नस्तद्धिते" (पा० सू० ६-४-१४४) इत्यस्य व्यावृत्तिः। तेन सह येननाप्राप्त्यभावात्, तस्यानन्तरत्वाच्च। भत्वादिति। *इष्ठवदित्यतिदेशेन भत्वात्। "श्वयुव" (पा० सू० ६-४-१३३) इति संप्रसारणम्। *नान्तश्वादीनामित्यर्थेऽपि टिलोपस्याभीयासिद्धत्वान्न दोषः। परे तु 'बहुश्वन्'शब्दात् स्त्रियां डापि नान्तत्वाभावेन सम्प्रसारणाभावे 'बहुश्वा' इत्येव भाव्यमिति डाप्सूत्रे भाष्ये उक्तं, तत्प्रामाण्यात्संप्रसारणेऽनित्यत्वेनाभीयासिद्धत्वाप्रवृत्तेरावश्यकत्वेन *कथं सम्प्रसारणम्?। न च "नकारग्रहणं कर्त्तव्यम्" इति वार्त्तिकप्रत्याख्यानाय भाष्येऽन इत्यपकर्षः कृतस्तत्पक्षे संप्रसारणं दुर्वारम्, लोपस्य स्थानिवद्भावेन अन्तया(१)ऽन्नन्तत्वस्यार्थसमाजग्रस्तत्वात्, श्वन्शब्दत्वन्तु "सर्वे सर्वपदादेशाः" इति न्यायेनेति वाच्यम्। *वार्त्तिकैकवाक्यतया "अल्लोपोऽनः" (पा० सू० ६-४-१३४) इत्यस्य श्रूयमाणान्नन्त एव प्रवृत्तेः *स्तत्साहचर्येणा*र्थाधिकारेण च 'बहुश्वा इत्येव'इति भाष्यविरोधेन

---

तु नोक्तम्। आदेशात् पूर्वं तस्याप्राप्तेः। ननु वर्णमात्रस्यादेशत्वे सर्वादेशत्वन्तस्य न स्यादत आह-*सर्वादेशत्वमिति। *आतिदेशिकमिति। स्वादयतीत्यादिमूलोक्तम्। ननु स्वादित्वविरहात् कथम्भत्वमत आह—*इष्ठेति। अतिदेशेनेत्यनेन "यचि भम्" (पा० सू० १-४-१८) इत्यस्याप्राप्तिमङ्गीकृत्यैव समाहितम्। न ह्यतिदेशेन णिचः स्वादित्वातिदेशो लभ्यते। इष्ठवदित्यत्र सप्तम्यन्ताद्वतेः स्वीकारात्। अत एव "श्वयुव"(पा० सू० ६-४-१३३) इतिसूत्रघटकस्यातद्धित इत्येतद्बोध्यनिषेधस्याप्रवृत्तिः। ननु "श्वादीनां सम्प्रसारणे नकारान्तग्रहणमनकारान्तप्रतिषेधार्थम्" (का० वा०) इतिवार्त्तिककारोक्तेः कथमत्र सम्प्रसारणमत आह-*नान्तेति। *कथं सम्प्रसारणमिति। नान्तत्वविरहात्कथं सम्प्रसारणमित्यर्थः। *वार्त्तिकैकवाक्यतयेति। अस्या 'अस्यापि' इत्यत्रान्वयः। *तत्साहचर्येण="अल्लोपोऽनः"(पा० सू० ६-४-१३४) इत्येतत्साहचर्येण। सूत्रान्तरसाहचर्यस्य व्यवस्थापकमत आह-*अर्थाधिकारेति। टि-

---

(१) स्थानिवद्भावेन अन्त्वादित्यर्थः।

चास्यापि श्रूयमाणानन्त एव प्रवृत्तेरदोषात् । *किं च "षपूर्व" (पा० सू० ६-४-१३५) इति सूत्रे भाष्ये प्रकृतिभावस्य "अल्लोपोऽनः" (पा० सू०६-४-१३४)इत्येतद्बाधकताया अप्युक्तत्वेन नैकाजित्येव सिद्धे प्रकृतिग्रहणेन प्रकृतिभावविधायके न्यायाप्रवृत्तेर्बोधनेन च "नस्तद्धिते" (पा०सू० ६-४-१४४) इत्यस्यापि प्रकृतिभावो न्याय्य इति टिलोपोऽपि दुर्लभः । *यत्तु "प्रकृत्यैकाच्" (पा० सू० ६-४-१६३) इति सूत्रे भाष्ये "यस्येत्यादौ प्रकृतिभावः" इत्युक्तं तत्रादिशब्दः प्रकारे, लोपत्वेन च सादृश्यमिति न तद्विरोधः । एवञ्च वृद्धौ 'श्वानयति' इति प्राहुः । शुनयतीति । ननु सम्प्रसारणे पूर्वत्वं बाधित्वा "वार्णादाङ्गम्". इति न्यायेन टिलोपे इदं रूपं दुर्लभमिति वाच्यम् ।'शुशुवतुः' इत्यादौ संप्रसारणे कृते तेन न्यायेन"एरनेकाचः" (पा०सू०६-४-८२)इति यणि रूपासिद्ध्या पूर्वरूपविषयेऽनित्यत्वेन *तन्न्यायाप्रवृत्तेरिति भावः। आहुरिति । अत्रारुचिबीजन्तु ब्रह्मवच्छब्दादिष्ठनि मतोर्लुकि*"टेः" (पा० सू०६-४-१५५)इत्यस्याप्रवृत्तौ "नस्तद्धिते" (पा० सू० ६-४-१४४). इत्यस्य प्रवृत्तेर्दृष्टत्वेनेष्ठनि तस्याट्दृष्टत्वादित्यसङ्गतम् । *किं च 'ब्रह्मिष्ठः' इत्यादावित्यप्यसङ्गतम् । तथा हि केवलादगुणवचनत्वेनेष्ठन्नेव दुर्लभः मत्वन्तादिष्ठनि मतोर्लुकि *तेन "टेः"(पा० सू० ६-४-१५५ ) इत्यस्य प्रवृत्तिमात्रबाधनेन लुगुत्तरं तदप्रवृत्त्या पर-

---

लोपमभ्युपगम्य सम्प्रसारणाभावमुपपाद्य टिलोप एव तावद् दुर्लभ इत्याह-*किञ्च षपूर्वेतीति । प्रकृतिभावस्य "नस्तद्धिते" ( पा० सू० ६-४-१४४ ) इतिसूत्रबाधकत्वाङ्गीकारेऽपि भाष्याविरोधः प्राप्नोति । "यस्य" (पा० सू० १-४-१४८) इतिसूत्रानन्तरपठितेष्वेव 'यस्येत्यादौ प्रकृतिभावः' इत्यनेन प्रकृतिभावस्य लाभ इति तद्विरोधशङ्कावारणाय तदभिप्रायमाह-*यत्त्विति। न च पूर्वोक्तरीत्या तद्धितत्वाभावात्कथं "नस्तद्धिते" ( पा० सू० ६-४-१४४ ) इत्यस्यापि प्रकृतिभाव इत्येतदिति वाच्यम् । तद्धितत्वाभावेऽपि 'ब्रह्मिष्ठः' इत्यत्र तस्य दर्शनेन तदतिदेशस्य सम्भवात् । न च मूलोक्तरीत्या तद्दर्शनमेव दुर्लभमिति वाच्यम् । वक्ष्यमाणरीत्या तद्दर्शनसम्भवात् ।*तन्न्यायेति ।'वार्णादाङ्गम्'(प०भा०)इतिन्यायेत्यर्थः । *टेरित्यस्याप्रवृत्ताविति । विन्मतोर्लुकस्तदपवादत्वस्य कथनात् । 'ब्रह्मिष्ठः' इतिरूपङ्क्मिमतुबन्तस्य उत ब्रह्मन्शब्दस्यैवेति वितर्क्य पक्षद्वयेऽपि दूषणमाह-*किञ्चेति । *तेन=लुका । न चोत्सर्गस्य टेरित्यस्य प्रवृत्त्युत्तरं यदि "विन्मतोः" ( पा० सू० ५-३-६५) इत्यस्य प्राप्तिस्तदाऽस्यापवादत्वं 'येननाप्राप्ति'न्यायेन स्यात्तदा प्रवृत्तिमात्रबाधः स्यात्सैव तु कथम् । पूर्वस्ब्रह्मवच्छब्दादिष्ठनि मतुबवयवस्यातो निवृत्तौ ह्यर्धाधिकविकारसत्त्वेनैकदेशविकृतन्यायाप्रवृत्त्या मतुप्त्व-

त्वादित्यस्यासङ्गतिः । *किं च "नस्ताद्धिते" (पा० सू० ६-४-१४४) इत्यस्य "टेः" (पा० सू० ६-४-१५५) इत्यपेक्षया परत्वमित्यर्थस्य "प्रकृत्यैकाच्" (पा० सू० ६-४-१६३ ) इति सूत्रे भाष्ये *ध्वनिततयाऽपि तदयुक्तमिति । नेत्येक इति । *टिलोपेनासो लोपे वस्त्वं दुर्लभं 'राजकीयम्' इत्यादावन्त्यवत् । एवञ्च संप्रसारणप्राप्तेरत्राभावेनाङ्गवृत्तपरिभाषोपन्यासो वृथेति । अत्रारुचिबीजं *तत्परिभाषाया अभावश्चेति च । *इदमेवाग्रिममतद्वये ऽरुचिबीजम् । रूपन्तु 'त्रिद्व्यति' इत्येव सत्यभिधाने ।

प्रतीचयन्तीति । "अचः" ( पा० सू० ६-४-१३८ ) इत्यल्लोपे *"चौ"(पा०सू०६-३-१३८)इति दीर्घः । इकोऽसवर्णे इति । *"न समासे" ( का० वा० ) इति तु न । *पृथक्करणेन समासनिवृत्तेरुक्तत्वात् । सम्यञ्चिचदिति । सम्यादेशस्य स्थानिवत्त्वेनोपसर्गत्वात्पृथक्करणम् ।

---

बुद्ध्यसम्भवादिति वाच्यम् । विनाद्यन्तं यद्भाभिन्नमङ्गं तदवयवस्य निर्दिश्यमानसजातीयावयवस्य लुगित्यर्थेन लुगुत्तरमपि 'सर्वे सर्वपदादेशाः' इतिन्यायेन तान्तस्य वान्तादेशे स्थानिवद्भावेन मतुबन्तत्वबुद्ध्या तदवयववकारे निर्दिश्यमानावयवत्वबुद्ध्या लुक्प्राप्तेर्निरूपयितुं शक्यत्वात् । परत्वादित्युक्तिमपि खण्डयति-*किञ्चेति । *ध्वनिततयेति । तत्र हि "प्रकृत्यैकाच्"(पा० सू० ६-४-१६३) इतिसूत्रोदाहरणानामन्यथासिद्धिनिरूपणावसरे 'स्रिग्वताल्लुगर्थम्' इत्यभिधाय "ननु च विन्मतोर्लुक् टिलोपस्बाधिष्यते यथैव खल्वपि विन्मतोर्लुक् टिलोपं बाधते एवन्नस्तद्धित इत्येतमपि बाधेत" इत्युक्त्वा "येन नाप्राप्तिन्यायेन टिलोपस्यैव बाधः" इत्युक्तम् । ततश्च "स्रजीयान् इति न सिद्ध्यति । अथ वा पुरस्तादपवादन्यायेन टिलोपस्यैव बाधकस्सः" इत्यभिहितम् । अत्र पुरस्तादपवादन्यायेनेति "नस्तद्धिते" (पा० सू० ६-४-१४४) इत्यस्य टिलोपापेक्षया परत्व एवोपपद्यत इति तथा कथनेन तस्य परत्वन्ध्वनितमिति । नेत्येक इत्यत्रैकपदाभिधानस्य बीजन्दर्शयति-*टिलोपेनेत्यादिना । *तत्परिभाषेति । अङ्गवृत्तपरिभाषेत्यर्थः । परिभाषायाः प्रदर्शनानन्तरं किमेतस्याः प्रयोजनमितिप्रश्ने पिबतेर्गुणप्रतिषेध उक्तस्स न वक्तव्य इत्येव प्रयोजनमुक्तन्न तु लक्ष्यसिद्धिरूपम् । तेन परिभाषाऽभावो ध्वनितः । *इदमेव=वस्वन्तत्वस्य दुर्लभत्वमेव ।

*चाविति दीर्घ इति । वाक्यसंस्कारपक्षे 'प्रति अच् इ' इति स्थिते "प्रकृत्यैकाच्" (पा०सू०६-४-१६३)इतिप्रकृतिभावे "अचः"(पा०सू०६-४-१३८) इत्यल्लोपे "चौ"(पा०सू०६-३-१३८) इतिदीर्घ इत्यर्थः । *नसमास इति तु नेति । "सिन्नित्यसमासयोः"(का०वा०)इतिप्रतिषेधो नेत्यर्थः।ननु यदि पृथक्करणेन समासनिवृत्तिस्तर्ह्युत्तरपदपरत्वाभावेन सम्यादेशाभावात्कथं समीत्यस्य श्रवणमत आह-*पृथक्करणेनेत्यादि । *स्थानिवत्त्वेन=सर्वस्याच् इत्यस्य चे इत्यादेशकल्प-

पृथक्करणेन समासस्य निवृत्तेरुत्तरपदपरत्वाभावेपि अन्तरङ्गत्वाज्जातः स-
म्यादेशो न निवर्त्तते।'समीचयति'इत्यादौ चकारस्याश्रुतित्वन्तु *स्थानिव-
त्त्वेन बोध्यम् । अञ्चेरिति । *तिरसोऽनुपसर्गत्वेन पृथक्करणाभावे-
नानेकाच्त्वात्प्रकृतिभावाप्राप्तेरिति भावः । बहिरङ्गत्वेनासिद्धत्वादि-
ति । बहिर्भूतणिनिमित्तकत्वादिति भावः । *"तिरसस्तिर्यलोपे" ( पा०
सू० ६-३-९४ ) इत्यत्रानन्तरत्वेन "अचः" ( पा० सू० ६-४-१३८ )
इति लोपस्यैव प्रतियोगित्वेन ग्रहणाट्टिलोपेऽपि तिरिः । *स्थानिवत्त्वेन तिरे-
रव्ययत्वेन 'अव्ययानां भमात्रे' ( का० वा० ) इति टिलोपो न "नस्त-
द्धिते" ( पा० सू० ६-४-१४४ ) इति सूत्रे भाष्येऽस्य पाठेन परया वृ-
त्त्या बाधात् । *अत एव "यस्य" ( पा० सू० ६-४-१४८ ) इति लो-

---

पया । न चान्तरङ्गत्वात्सम्यादेशस्येव प्रत्यञ्चमाचष्टे='प्रतीचयति' इत्यत्रापि णि-
ज्युत्पत्तेः प्रागयणादेशोऽपि स्यादिति 'प्रतीचयति' इत्यस्यासिद्धिः । अकृतव्यूहप-
रिभाषायाः स्वीकारे तु 'समीचयति' इत्यस्याप्यसिद्धिरिति वाच्यम् । "चौ प्र-
त्यङ्गस्य प्रतिषेधः" ( का० वा० ) इतिवार्त्तिकेन 'प्रतीचयति' इत्यस्य सिद्धेः ।
प्रत्यङ्गम्=अन्तरङ्गम् । न च वार्त्तिकेन'समीचयति'इत्यत्रापि प्रतिषेधः प्राप्नोतीति
वाच्यम् । तदुत्तरभाष्ये "एतदेव ज्ञापयति न चौ प्रत्यङ्गम्भवति । यदयञ्चौ दीर्घ-
त्वं शास्ति' इत्युक्तम् । तद्भाष्यैकवाक्यतया यत्रान्तरङ्गनिमित्तस्य बहिरङ्गेणाऽस-
म्बन्धिलोपेन विनाशसम्भावना तत्रैव वार्तिकेनान्तरङ्गस्य प्रतिषेधो बोध्यते ।
'समीचयति' इत्यत्र तु स्थानिवत्त्वेन तथा नास्तीति भावः । तिर्यञ्चमाचष्ट इत्यत्र
प्रकृतिभावाभावं साधयति—*तिरस इति । 'अलोप' इति प्रतिषेधस्त्वत्र न प्रव-
र्त्तत इत्याह—*तिरसस्तिर्यलोपे इति । "विष्वग्देवयोः" ( पा० सू० ६-३-९२ )
इतिसूत्रादञ्चतावप्रत्यय इत्यनुवर्त्तते । न लोपो यस्येत्यर्थकमलोप इतिपदञ्च त-
स्य विशेषणमिति प्रतियोगितासम्बन्धावच्छिन्नप्रतियोगिताकलोपाभाववतो
ग्रहणमित्यर्थश्चेत्स्यात्तदा "टेः" ( पा० सू० ६-४-१५५ ) इतिसूत्रविहितलोपस्य
ग्रहणात्स्यात्तिर्यादेशस्य प्रतिबन्धः । परन्तु स लोपो न गृह्यते किन्त्वनन्तरत्वात्
"अचः" ( पा० सू० ६-४-१३८ ) इत्यलोप एव टिलोपस्तु ततो व्यवहितः । ए-
वञ्चात्र न लोपो यस्येति बहुव्रीहिसमास एव । "अचः" ( पा० सू० ६-४-१३८ )
इतिसूत्रविहितो लोपश्च प्रतियोगितयाऽवयवं वर्त्तते । तदभेदोऽञ्चतावित्यनेन
बाधित इत्यलोपपदमर्शआद्यजन्तमिति लोपाभाववत्सम्बन्धिनो ग्रहणम् । सम्ब-
न्धश्चावयवावयविभावो लोपाभाववतावयवेनाबाधित इत्यच इतिलोपस्तिरश्चेत्या-
दौ वर्त्तते तत्र तिर्यादेशो न भवति, प्रकृते तु स्यादेवेति भावः । ननु तिर्यादेशे
जातेऽपि टिलोपः "अव्ययानाम्" ( का० वा० ) इतिविहितः प्राप्नोतीत्यत आह—
*स्थानिवत्त्वेनेत्यादि । *अत एव=असिद्धत्वादेव । टिलोपस्य पराऽसम्बन्धि-

पो न। *अनेन सर्वटिलोपवारणेऽपि भाष्यवाक्यमभ्युच्चययुक्तिमाह—अ-सिद्धवदिति। तदनिसत्वेऽप्याह—अङ्गवृत्तेति। वृद्धिस्तु भवत्येव, *तस्या अनित्यत्वादिति भावः। अङ्गवृत्तपरिभाषायाः *फलाभाव इतीदं चिन्त्य-म्। निरूपितश्चैतद्युष्मदस्मत्प्रकरणे। देवद्र्यश्चमिति। "विष्वग्देवयोः" (पा० सू० ६-३-९२) इत्यद्र्यादेशः।

स्वयतीति। *"अव्ययानाम्" (का० वा०) इति टिलोपो-ऽतिदेशेन भवत्वात्। सञ्ज्ञापूर्वकत्वादिति। *णावित्याङ्गेनातिदेशेन विनो लुकः सत्त्वादङ्गवृत्तपरिभाषया न वृद्धिरिति कैयटः। *अत एव "टेः"(पा० सू० ६-४-१५५) इति सूत्रे 'दवयति'इत्यत्र वृद्धिर्न कृता भाष्ये। *परे तु *एतद्भाष्यप्रयोगात् 'मापयति' इति भाष्यप्रयोगाच्च ल-क्ष्यविशेषविषयके*ऽस्मिन् वाक्ये *ऽभावातिदेशेऽपि तेने*ष्टसिद्धिः। 'उ-दाहरणमात्रम्'इति भाष्योक्त्या *तदनुक्तभसञ्ज्ञातिदेशवत् क्वचिदस्याप्य-तिदेशे बाधकाभावात्। *एतेन सञ्ज्ञापूर्वकविधेरनित्यत्वं न भाष्यस-म्मतम् 'अङ्गकार्ये'( प० भा० )इत्यपि न लक्ष्यसाधकं, तत्र तज्ज्ञापकमुक्त्वा "किं प्रयोजनम्?, पिबेर्गुणप्रतिषेधः प्रयोजनम्" इत्येवोक्तं न त्वेवंविधल-

---

त्वेन बहिरङ्गत्वमिति भावः। *अनेन=असिद्धत्वेन। *तस्याः=अङ्गवृत्तपरिभाषा-याः। *फलाभाव इति। पिबतेर्गुणप्रतिषेधाकरणमात्रस्य तत्प्रयोजनत्वेन भाष्ये कथनात्। मूले आमुमुआययदिति। अत्र मुत्वस्यासिद्धत्वेन दशब्दबुद्ध्या द्वित्वे-ऽभ्यासे दकारस्यैव श्रवणापत्तिरिति तु न शङ्क्यम्। 'पूर्वत्रासिद्धीयमद्विर्वचने' (प० भा०) इति निषेधात्।

*अव्ययानामिति टिलोप इति। "प्रकृत्यैकाच्" (पा० सू० ६-४-१६३) इति प्रकृतिभावस्तु "टेः" (पा० सू० ६-४-१५५) इत्यस्यैव बाधक इति प्रागु-क्तमिति शेषः। यदि तु सर्वस्य प्रकृतिभावः प्रकृत्येतिपदस्वारस्यात्कल्प्यते त-दा 'स्वरयति' इत्येव। संज्ञापूर्वकविधेरनित्यत्वस्प्राचीनसम्मतं यद्यपि तथापि कैयटेन तेन वचनेन समाधानन्न कृतं किन्तु परिभाषान्तरेणेति तस्या असत्त्वन्ध्वनितमित्यभिप्रायेणाह-*णावित्याङ्गेनेति। अस्याङ्गत्वमतिदिश्यमान-कार्याणामुत्पत्तिदेश एव देश इति स्वीकाराद् बोध्यम्। *अत एव=अङ्गवृत्तप-रिभाषया निषेधादेव। सिद्धान्तिसम्मतपक्षमाह-*परे त्विति। *एतद्भाष्यप्र-योगात्='दवयति' इति भाष्यप्रयोगात्। *अस्मिन्वाक्ये='इष्ठवत्' इति वाक्ये। वाचकत्वसम्बन्धावच्छिन्नाधारत्वं सप्तम्यर्थः। *अभावातिदेशः=इष्ठनि यन्न भ-वति तण्णावपि नेतिरीत्याऽभावातिदेशः। *इष्टसिद्धिः='दवयति' 'प्रापयति' इ-त्यनयोः सिद्धिः। *तदनुक्तेति। भाष्यानुक्तेत्यर्थः। *एतेनेति। अभावातिदेशे-

क्ष्यासिद्धिस्तत्प्रयोजनत्वेनोक्तेति एषां प्रकारान्तरेण सिद्धेर्भाष्याभिप्रेतत्वात् इत्याहुः । श्रीमतीमिति । णिचि पुंवत्त्वे मतोर्लुक् । अशिश्रयदिति । 'णावच आदेशो न' ( प० भा० ) इति श्रीशब्दस्य द्वित्वे उत्तरखण्डे वृद्ध्यायोः कृतयो*र्नञ्घटितानित्यत्वेन "नाग्लोपि" (पा० सू० ७-४-२) इति निषेधाभावे ह्रस्वत्वमिति भावः । *एतच्च माधवानुरोधेन । सत्यभिधाने 'अशिश्रायत्" *इति उचितमित्यन्ये । यवयतीति । "स्थूलदूर" (पा० सू० ६-४-१५६) इति *यणादिलोपगुणौ । अङ्गवृत्तपरिभाषयाऽनन्तत्वाभावेन वा संप्रसारणं न । 'ज्यापयति' 'नेदयति' 'साधयति' इति *माधवानुरोधेन पाश्चमिकयोर्विन्मतोर्लुक्कनोरेव भाष्यकृता इष्टवद्भावेनाङ्गीकारादित्युक्तम् । कनयतीति । अत्रोपधावृद्धिर्न *'स्रजयति' इतिवत् । उपसर्गस्येति । तत्पृथक्करणेन *विशिष्टस्य प्रातिपदिकत्वाभावात्तत्रातिदेशाप्रवृत्तिरिति भावः ।

इति नामधातुप्रक्रिया ।

एभ्यो धातुभ्य इति । *धातोरित्यनुवृत्तिसामर्थ्यात् भ्वादि-

---

न । अस्येत्येवोक्तमित्यत्रान्वयः । *नञ्घटितानित्यत्वेन । 'नञ्घटितमनित्यम्' इतिपरिभाषया । 'अरराजत्' इत्यत्रेव मतुपो लुक्यप्यग्लोपित्वमस्त्येव । *एतत्='अशिश्रयत्' इत्यस्याभिधानम् । *इत्युचितमिति । 'नञ्घटितम्' इतिपरिभाषाया असत्त्वादिति भावः । *यणादिलोप इति । वन्शब्दस्य लोपः । *माधवानुरोधेनेति । आदेशस्य ज्यादेरुच्चारणमिति शेषः । *स्रजयतीतिवदिति । तत्र यथा प्राचीनैः संज्ञापूर्वकविधेरनित्यत्वादुपधावृद्ध्यभाव उपपाद्यते तथाऽत्रापि, तत्र यदि'संज्ञापूर्वक' इति परिभाषाया असत्त्वेऽप्यभावातिदेशेन वृद्ध्यभावस्तदाऽत्रापि तथेति भावः । कनादेशो "युवाल्पयोः" ( पा० सू० ५-३-६४ ) इति भवतीति तमुपपाद्य तत्प्रसङ्गेन आदेशोऽप्युपस्थित इति तद्विषये विशेषमाह मूले-इह अज्यौनेति । *विशिष्टस्य=प्रशब्दसहितस्य । इदमपि माधवरीत्यैव । यस्मात्प्रातिपदिकात् णिज्विधीयते तस्यैव प्रातिपदिकस्यातिदेशेनादेशः प्रकृते तु णिच्प्रकृतिभूतं प्रातिपदिकं 'शस्य'इत्येव, तस्य न स्थानित्वेनोपादानमतोऽत्र नादेशस्य प्रवृत्तिः ।

इति नामधातुविवरणम् ।

## ॥ अथ कण्ड्वादिविवरणम् ॥

नन्वेभ्यो धातुभ्य इत्यनुपपन्नं भ्वादिपठितानामेव धातुसंज्ञाविधानादत आह-*धातोरित्यनुवृत्तीति । "धातोरेकाचः" ( पा० सू० ३-१-२२ ) इत्य-

पाठेनैषां धातुत्वमिति भावः । *कण्ड्वादिराकृतिगण इति गणरत्नमहोदधौ । तेन 'रैयति' 'चवरयति' इत्यादिसुब्धातुवृत्तौ स्पष्टम् ।

इति कण्ड्वादयः ।

प्रथमैकाच इति । "अजादेर्द्वितीयस्य" (पा० सू० ६-१-२) इत्यस्याप्युपलक्षणमेतत् । तृतीयस्येति । *एकाच इत्यर्थः । एकाच इत्यनुवृत्तेः । कण्ड्वादेरित्यस्य *तद्घटितयगन्तस्येत्यर्थः । *भाष्ये 'कण्डूयियिषति' इति यिशब्दद्वित्वकरणात् । नामधातुष्विति । *नामघटितधातुष्वित्यर्थः । नामशब्देन सुबन्तम् । तेषु विद्यमानानान्त्र्याणामेकाचां यथेष्टमित्यर्थः । *अत एव 'पुपुत्रीयिषति' इत्याद्युदाहृतं भाष्ये । *अतो-

---

तो धातोरित्यनुवृत्तिसामर्थ्यादेषां धातुत्वमस्तीति ज्ञायते । 'कण्ड्वादयः भ्वादिपठिताः धातुप्रकृतिककार्योद्देश्यत्वात्' इत्यनुमानम् । अनुवृत्तिसामर्थ्यादित्युपलक्षणम् । यकः कित्त्वसामर्थ्यादित्यपि बोध्यम् । तद्धि 'कण्डूयति' 'कण्डूयते' इत्यादौ गुणाभावार्थम् । एषां प्रातिपदिकत्वे च दीर्घपाठः 'कण्डू' 'मन्तू' इत्यादौ दृष्टो ज्ञापकः । यद्येते धातव एव स्युस्तर्हि दीर्घः "अकृत्सार्वधातुकयोः" ( पा० सू० ७-४-२५ ) इत्येव सिद्ध इति दीर्घोच्चारणं व्यर्थं स्यात् । तदुक्तम्भाष्ये—

"धातुप्रकरणाद्धातुः कस्य चासञ्जनादपि ।
आह चायमिमं दीर्घमतो धातुर्विभाषितः" ॥ इति ।

न च दीर्घविधानाभावेऽप्येभ्यः क्विपि "सर्वप्रातिपदिकेभ्यः" ( का० वा० ) इत्यनेन कृते, पुनः कर्त्तरि क्विपि 'कण्डूः" इत्यादिसिद्ध्यर्थं दीर्घोच्चारणमस्त्विति कथन्दीर्घोच्चारणस्य ज्ञापकत्वमिति वाच्यम् । "नैतेभ्यः क्विप् दृश्यते" इत्यनेन भाष्यकृतैव समाधानात् । कण्ड्वादीनामाकृतिगणत्वस्वीकारे प्रमाणमाह—*कण्ड्वादीति । इतिकण्ड्वादिविवरणम् ।

## ॥ अथ प्रत्ययमालाविवरणम् ॥

तृतीयस्येत्यनेनाच्सहितस्य द्विर्वचनन्न लभ्यतेऽतोऽत्राप्येकाच इत्यस्य सम्बन्धो बोध्यस्तस्मादेवाह—*एकाच इत्यर्थ इति । *तद्घटितेति । कण्ड्वादिघटितेत्यर्थः । लक्षणायाम्मानमाह—*भाष्य इति । कण्ड्वादिघटित एव लक्षणा न तु यगन्तघटिते । तेन कण्डूमिच्छतीत्यर्थे यत्र केवलकण्डूप्रकृतिकसुबन्तात् क्यच् ततः सन् तत्रापि द्वित्वसिद्धिर्यथेष्टं बोध्या । नामधातुष्वित्यत्र नामधातुशब्दो नाम्नो धातुरित्यर्थकस्तत्पुरुषसंज्ञकः । विग्रहवाक्ये दृष्टा या षष्ठी तदर्थश्च घटितत्वरूपः सम्बन्ध इति तदर्थान्तर्भावेणैकार्थीभावस्वीकारादाह—*नामघटितेति । नामपदञ्च सुबन्तपरमिति प्रागुक्तम् । *अत एव=नामघटितधातौ यथेष्टं द्वित्वस्वीकारादेव । *अतोऽपीति । सुबन्तघटितधातोरेव भाष्यीयोदाहरणदर्शनादपि ।

ऽपि *ण्यन्ताच्चङि नास्य प्रवृत्तिः । त्रयाणामिति । *एकाचो द्वेऽजादेः कण्ड्वादेरित्यत्र पूर्वं त्रयाणामेवोपस्थितेः पूर्वत्र बाध्यबाधकभावस्य निर्णयात्त्रयाणां न युगपद् द्वित्वम् । तत्राजादेर्द्वितीयतृतीययोः पर्यायेणान्येषां तु त्रयाणां पर्यायेण द्वित्वमिति बोध्यम् । *एषां वचनानां "नन्द्राः" ( पा० सू० ६-१-३ ) इति सूत्रे पाठेन *तद्वदेवाधिकारत्वादविशेषेण प्रवृत्तेर्यथाभिधानं प्रवृत्तिरित्याहुः । नदराणामिति । तेषां मध्ये *आदिभूतादचः परस्यैवेत्यर्थः । द्रीशब्दयिशब्दयोरिति । *न च "द्विर्वचनेऽचि" (पा० सू० १-१-५९)इत्यल्लोपनिषेधाद्यशब्दस्य द्वित्वप्राप्त्या यिशब्देत्यसङ्गतम् । 'नटभार्यावद्व्यञ्जनानि' इति न्यायेनेकारसकारसहितस्य द्वित्वप्राप्त्या *कार्यानुभवेन "न हि कार्यी"( प० भा० )इति निषेधेन "द्विर्वचनेऽचि"(पा०सू०१-१-५९)इत्यस्याप्रवृत्तेः । *न च यिस्शब्दो न नामधात्व-

---

*ण्यन्ताच्चङि=प्रातिपदिकप्रकृतिकण्यन्ताच्चङि । नामघटितधातुस्थल एव 'पुपुत्रीयिषति' इत्युदाहरणादेव नामधातुशब्दस्य कर्मधारयत्वशङ्काऽपि न कार्या । यदुक्तम्मूलेऽन्यतमस्य, तत्साधकमाह-*एकाच इत्यादि । ननु यत्र कण्ड्वादियगन्ताण्णिच् तदन्तात्सन् तत्र कण्ड्वादेरित्यनेन'कण्डूययिस'इति स्थितौ यशब्दस्य द्वित्वे 'कण्डूयियियिषति' इति, एवङ्कण्ड्वादियगन्तविषये "आयादय आर्द्धधातुके वा" ( पा० सू० ३-१-३१ ) इत्यनेन यकोऽभावेऽपि कण्डूधातोर्ल्युट् तदन्तादाचारे क्विप् ततः सन् आचारक्विबन्ताद्धेतुमण्णिजन्ताच्चङ् वा तत्रापि तृतीयैकाचो द्वित्वापत्तिरेवं पुत्रीयेतिक्यजन्तात् णिजन्तात्पुनर्णिच् ततः सन् चङ् वा तत्रापि यथेष्टमित्यस्य प्रवृत्त्यापत्तिरत आह-*एषां वचानानामिति । अत्र बहुवचनम् 'ईर्ष्यतेस्तृतीयस्य' ( का० वा० ) इत्यस्यापि सङ्ग्रहाय । *तद्वदेव='नन्द्राः" ( पा० सू० ६-१-३ ) इतिसूत्रवदेव । *आदिभूतादचः परस्यैवेति । अजादेरित्यनुवृत्त्या 'नटभार्यावद्व्यञ्जनानि'इति न्यायेन नकारसहितस्य यत्राद्रिशब्दप्रकृतिकसुबन्तात् क्यच् तदन्तात्सन् तत्र दकारसहितस्य च प्राप्तमपि द्वित्वं "नन्द्राः" इतिनिषेधेनादिभूतादचः परस्यैव नैत्यर्थः । इन्द्रीयतेः सनि इडागमे "अतो लोपः" ( पा० सू० ६-४-४८ ) इत्यल्लोपस्य "द्विर्वचनेऽचि" ( पा० सू० १-१-५९ ) इतिनिषेधाद्यशब्दस्य द्वित्वप्राप्त्या यिशब्दस्येत्युपपादनमनुचितमित्यभिप्रायेण शङ्कते-*न चेति । *कार्यानुभवेन=समुदायावयवयोरिकारयकारयोर्द्वित्वप्राप्त्या सनो द्वित्वानुभवसत्त्वेन "द्विर्वचनेऽचि" ( पा०सू०१-१-५९ )इत्यस्याप्रवृत्तिरिति भावः । नामधातुष्वित्यनेन सुबन्ते यत्रैकाच्त्रयन्तत्र प्रवृत्तिर्यथेष्टमित्यस्येत्यभिमानेन शङ्कते-*न चेति । नामघटितधातुषु नामघटितधातुघटकवर्णसम्बद्धैकाचामित्यर्थस्याश्रयणेन प्रकृते नामघटितधातुघटकयकारस्य तद्घटकत्वान्निषेधस्य प्रवृत्ति-

यवः *नामधातुघटकवर्णसंबद्धैकाचामित्यर्थेनादोषात् । अत एव 'पुत्रीयियिषति'इति भाष्ये उदाहृतम् । *यिशब्दद्वित्वेऽपि सनवयवेकारस्य द्वित्वानुभवेन द्वित्वनिमित्तत्वायोगोऽस्त्येवेत्य*नास्थया मूले यिशब्देत्येवोक्तम् । चन्दिद्रीयिषतीति । *इदं *माधवानुरोधेन । *आदिभूतादचः परस्येति भाष्यसंमतेऽर्थे तु चिन्त्यमिदम् । चिचारयिषतीति । *माधवेन वृद्ध्यङ्गीकारात्तन्मते इदम् ॥

इति प्रत्ययमाला ॥

कर्तरि कर्म (पा० सू० १-३-१४) । *कर्मेह क्रिया । कर्मव्यतिहारे वर्त्तमानाद्धातोरित्यर्थेन धातोः क्रियायां वृत्तेरन्तरङ्गत्वेन तस्या एव ग्रह इति प्रकृतसूत्रे संख्यासञ्ज्ञासूत्रे च कैयटे स्पष्टम् । कर्मव्यतिहारविषये इत्यर्थसम्भवेऽपि *न कृत्रिमकर्मग्रहणमुक्तार्थस्यौचित्यात् । तेन देवदत्तस्वामिकं धान्यं स्वद्रव्यं दत्त्वा लवनेन स्वीकरोतीत्याद्यर्थके 'देवद-

---

यैथेष्टमिति वचनस्य च प्रवृत्तिरस्त्येवेत्याह—*नामधात्विति । ननु मूले यिशब्देत्येवोक्तम् तु यिस्शब्देत्यत्र किम्बीजमत आह—*यिशब्दाद्वित्वेऽपीति । *अनास्थयेति । यथा कथञ्चित्कार्यानुभवसत्ताऽपेक्षिता, साऽस्त्येव; यिस्शब्दस्य द्वित्वेऽपि सनोऽकारान्तस्य यथा द्वित्वानुभवो भवन्मतेऽपि नास्ति तथापि "न हि कार्यी" इतिवचनस्य प्रवृत्तिर्भवत्येव तथाऽस्माकमपीति भावः । *इदमिति । 'चन्दिद्रीयिषति' इत्यत्र नकारपरित्यागेन द्वित्वकरणमित्यर्थः । *माधवानुरोधेनेति । अत एव 'नदराणां संयुक्तानामचः परस्यैव द्वित्वनिषेधः' इत्येव प्रागुक्तम् । *आदिभूतादचः परस्येति । अत्रादित्वञ्च धातुघटकाजन्तरापेक्षयैवेति, किन्तु यत्र द्वित्वस्य प्रसक्तिस्तत्र तस्य समुदायस्यावयवो योऽच् स्वाव्यवहितोत्तरत्वसम्बन्धावच्छिन्नप्रतियोगिताकतादृशसमुदायघटकालभाववांस्ततः परेषान्नदराणामेव निषेधस्य प्राप्तिरिति न चन्द्रशब्दस्यावयवो यो नकारस्तस्य निषेधप्राप्तिरिति भावः । *माधवेनेति । एतेन पूर्वोक्त'दवयति'इतिभाष्यप्रयोगे यथा वृद्ध्यभावोऽभावातिदेशात्तथा 'स्रजयति' इत्यत्रैव वृद्ध्यभावस्तेनापि स्वीकार्य इति ध्वनितम् । इति प्रत्ययमालाविवरणम् ।

## ॥ अथ पदव्यवस्थाविवरणम् ॥

कर्त्तरि कर्मव्यतिहारे ( पा० सू० १-३-१४ ) । 'क्रियाऽपि कृत्रिमङ्कर्म" इति भाष्योक्त्या यद्यपि कर्मशब्देन क्रियाग्रहणे विरोधो नास्ति तथापि कर्मशब्दस्य लौकिककर्मपरत्वमेव प्रसिद्धत्वादिति प्रतिपादयितुमाह-*कर्मेह क्रियेति । *न कृत्रिमकर्मग्रहणम्—न लोकप्रसिद्धकर्मग्रहणम् । कर्मशब्दस्य क्रियापरत्वे सु-

त्तस्य धान्यं व्यतिलुनाति' इत्यादौ न । *यद्यपि साध्यस्वभावाक्रियाणां परिवर्त्तनरूपो व्यतिहारो न सम्भवति 'प्रणिदानं=व्यतिहार इत्येको ऽर्थः' इति घुसञ्ज्ञासूत्रकैयटात् "उदीचां माङो व्यतीहारे" (पा० सू० ३-४-१९) इति सूत्रोदाहरणस्य 'अपमित्य याचते' इत्यस्य 'याचित्वा वस्त्राणि परिवर्तयतीत्यर्थः' इति कैयटाच्च । स्ववस्तुदानपूर्वकपरवस्त्वङ्गीकारो हि परिवर्त्तनम् । *अत एव "कर्मव्यतिहारे द्वे वाच्ये" इति वार्तिके 'कर्मव्यतिहारः=क्रियाविनिमयः' इति व्याख्यातमभियुक्तैः । *एतेन 'अन्यक्रियाया अन्येन करणं=व्यतिहारः' इत्यपास्तम् । *अत एव 'अन्यक्रियामन्यः करोति इतरक्रियामितरः' इति कर्मव्यतिहारं जयमङ्गलाकारः प्रादर्शयत् । तथा ऽपि *"तत्तत्साध्यत्वेन ज्ञातक्रियाणां साध्यसाधनभावव्यत्यासः सः, परस्परकरणञ्च* सः । यथा 'संप्रहरन्ते राजानः' इति" इति कैयटः । तत्र वर्त्तमानाद्धातोः कर्तरीत्यर्थे विनिगमनाविरहात् *तत्कर्तृमात्रे प्रत्ययौचित्येन द्विवचनबहुवचनान्तान्येवास्योदाहरणानि न त्वेकवचनान्तानि । *अत एव भाष्ये क्वाप्येकवचनान्तानि नोदाहृतानि । एवञ्च 'व्यतिलुनते' इत्यस्यान्योन्यव्यत्यासेन लुनन्तीत्यर्थः । एतेन—'देवदत्तेन सह चैत्रो व्यतिलुनीते' इत्येकवचनान्तप्रयोगसम्भवः । *अत एव "दाणश्च"

---

अर्थानुपपत्तिं शङ्कते-*यद्यपीति । *अत एव=उक्तस्य व्यतीहारस्य क्रियासम्बन्धित्वाभावादेव । *एतेन=क्रियायाः साध्यस्वभावत्वेन । क्रियाया एकत्वे हि देवदत्तकर्तृकाक्रियाया यज्ञदत्तेन करणं सम्भवेत्तदेव न सम्भवति कर्तृभेदेन क्रियाया भेदादिति भावः । *अत एव=परिवर्त्तनरूपस्य व्यतीहारस्यासम्भवादेव । *तत्तत्साध्यत्वेनेति । यथा देवदत्तसाध्यत्वेन ज्ञाता या क्रिया सा यदा यज्ञदत्तेन क्रियते तदा 'व्यतिलुनीते' इत्यादिव्यवहारः । अन्यक्रियामन्यः करोतीत्यादिजयमङ्गलाकारोक्तेरप्ययमेवार्थः । *सः=प्रकृतसूत्रघटककर्मव्यतिहारशब्दार्थः । अर्थान्तरमप्याह—*परस्परकरणमिति । *तत्कर्तृमात्रे । अत्र मात्रपदं कार्त्स्न्ये । *अत एव=एतादृशे विषये द्वयोर्बहूनां वा तादृशक्रियाकर्तृत्वविवक्षया यत्र सद्भावस्तत्रैव सूत्रोदाहरणादेव । *एतेन=वक्ष्यमाणप्रकारेण, एकस्यैव कर्तृत्वासम्भवेन च । अपास्तमित्यत्रास्यान्वयः । 'देवदत्तेन सह चैत्रो व्यतिलुनीते' इत्यस्माद्देवदत्तसाहित्यवच्चैत्रकर्तृकं व्यत्यस्तं लवनमिति शाब्दबोधे देवदत्तेन कर्तुं योग्या या लवनक्रिया तामेकश्चैत्रः करोतीति मानसबोधसम्भव इति कर्मव्यतिहारोऽस्त्येव । *अत एव=एतादृशे विषये एकवचनान्तप्रयोगस्येष्टत्वा

( पा० सू० १-३-५५ ) इति सूत्रे "कथञ्चतुर्थ्यर्थे तृतीया स्यात् ? । एवन्तर्हि अशिष्टव्यवहारे तृतीया च विधीयते आत्मनेपदञ्च" इति सिद्धान्तितोक्ते "इतर आह यद्येवं नार्थोऽनेन सहयुक्ते तृतीया स्याद्व्यतिहारे तद्वो विधिः—दास्या संप्रयच्छते" इति भाष्ये उक्तम् । 'दास्यै विश्राण्य तया सहोपभुङ्क्ते' इत्यर्थ इति कैयटेन चोक्तम्—इति परास्तम् । तस्य भाष्यस्य पूर्वपक्ष्युक्तित्वेनार्थासाधकत्वात् । तथा हि तस्यै विश्राण्य तामुपभुङ्क्ते इत्यर्थे *ऽकर्मव्यतिहारेऽप्यशिष्टत्वप्रतीतेः तया सहोपभुङ्क्ते इत्येतन्मात्रेण व्यतिहाराप्रतीतेश्च सूत्रस्यावश्यकत्वात् । *किं च 'उपपदविभक्तेः( प० भा० ) इति न्यायेन विश्राणननिरूपितचतुर्थ्या एव युक्तत्वम् । *किं च धातोर्व्यतीहारे वृत्तावपि उक्तरीत्या कर्तृद्वयस्यापि तिङोक्तत्वाच्चेनैव न्यायेन प्रथमोचिता, न सहयोगतृतीया । *अत एव क्रियायोगे 'पुत्रेण सहागतः' इत्यादौ कर्तरि तृतीयायां सिद्धायाम् *अक्रियायोगार्थं "तेन सह"( पा० सू०२-२-२८ ) इति सूत्रमिति तत्सूत्रे उक्तं भाष्ये । भाष्यकृता त्वतिफल्गुत्वान्न

---

देव । *अकर्मव्यतिहार इति । कर्मशब्दोऽत्र क्रियापरः । क्रियाव्यतिहाराभावेऽपीत्यर्थः । 'तस्यै विश्राण्य तया सहोपभुङ्क्ते' इत्यत्र तस्या विश्राणनक्रियासम्प्रदानत्वविषयकशाब्दबोधे सति तत्साहित्यवदेककर्तृकवर्तमानकालिकी उपभोगक्रियेतिशाब्दबोधे तस्याः शाब्दीयो य उपभोगान्वयस्तदभावस्य सत्त्वेन तस्या अप्राधान्यसत्त्वात् "सहयुक्तेऽप्रधाने" ( पा० सू० २-३-१९ ) इत्यनेन तृतीयासहार्थयोगे एव जातेति तृतीयान्तप्रयोगस्य यद्यप्युपपत्तिस्तथापि क्रियाभेदादेकजातीयोपभोगक्रियायामन्यकर्तृकत्वेन सम्भावितायामन्यकर्तृकत्वस्याप्रतीतिरतो व्यतीहाराप्रतीतिरिति भावः । ननु विश्राणनकर्त्तरि दासीसाहित्यविवक्षायां सहार्थतृतीया स्यादेवेत्यत आह—*किञ्चेति । अयम्भावः—विश्राणनविशिष्टोपभोगोऽत्र सम्पूर्वकदाण्धात्वर्थः ।दाण्धात्वर्थघटकदाने च तस्याः कथमपि न कर्तृत्वमिति सम्प्रदानत्वमेव कल्पनीयमुपभोगकर्त्तरि च साहित्यमिति कारकविभक्तेः प्राबल्याच्चतुर्थ्येव युक्तेति । परोक्तमभ्युपेत्याह—*किञ्च धातोरिति । दास्या प्रोत्साहितः कामुकस्तस्यै यावद्ददाति तावत्तया विपरीतरत्यादिना प्रथमत एवोपभोगः प्रारब्धो यत्र तत्र प्राधान्येन भासमानोपभोगे तस्याः कर्तृत्वमिति कारकविभक्तित्वात्प्रथमैव युक्ता । तस्यै विश्राण्येत्यस्य क्त्वाप्रत्ययस्योपपत्तिस्तूपभोगमध्य एव कामुककर्तृकदानानन्तरमप्युपभोगसत्त्वात् 'मुखं व्यादाय स्वपिति' इत्यत्रेव कार्या । *अत एव='उपपदविभक्तेः' इति,न्यायेन कारकविभक्तेः प्राबल्यादेव । *अक्रियायोगार्थमिति । क्तप्रत्ययार्थकर्त्तरि साहित्यविवक्षया क्रियायोगाभावार्थमित्यर्थः । नन्वेकवचनान्तप्रयोगो भट्टिकाव्य एव दृश्यत इति चेत्

तद्दूषणाभिनिवेशः कृतः । *एतेन भट्टिकाव्ये विश्वामित्राश्रमे मारीचं प्रति 'किमर्थं ब्रह्मवधादि करोषि?, इति रामेण पृष्टे 'ममायं धर्मः' इति तेनोत्तरिते

धर्मोऽस्ति सत्यं तव राक्षसायमन्यो व्यतिस्ते तु ममापि धर्मः ।
ब्रह्मद्विषस्ते प्रणिहन्मि येन राजन्यबन्धुर्धृतकार्मुकेषुः ॥

इति रामवाक्ये तव धर्मेण देवब्राह्मणद्वेषरूपेण ममान्यो धर्मस्तपोरूपो व्यत्यासेन भवति, येन धर्मेण युक्तोऽहं येन धर्मेण युक्तान् त्वत्सम्बन्धिनो ब्रह्मद्विषः प्रणिहन्मीत्यर्थके अत्रारभ्य त्वद्धर्मः क्रौर्यं मयि भवति, मद्धर्मोऽक्रौर्यं च त्वयि । वर्त्तमानसामीप्ये लट् । रामबाणपातेन समुद्रसमीपे पतितो मारीचस्तपश्चरिष्यतीत्येतत्तात्पर्यके 'व्यतिस्ते' इति प्रयोगोऽपि परास्तः । यतो भातोरात्मनेपदं मत्यासत्त्या तदर्थक्रियायां तत्कर्त्रोर्व्यत्यासे एवात्मनेपदौचित्याच्च । *"तासस्त्योः" (पा० सू० ७-४-५०) इति सूत्रवृत्त्युदाहृतं 'व्यतिसे' इति तु छान्दसम् । तत्र हि व्यत्ययेन द्विवचनादिस्थाने एकवचनं "रि च" ( पा० सू० ७-४-५१ )इति सूत्रे 'व्यतिरे' इतिवत् "इरयो रे"( पा० सू० ६-४-७६ ) इत्यस्य छान्दसत्वात्तच्छान्दसमेव । "ह एति" ( पा० सू० ७-४-५२ ) इति सूत्रे 'व्यतिहे' इत्यपि तथैव । लोके त्वेकवचनान्तमसाध्वेवेति दिक्* ।

---

ब्रूषे तर्हि सोऽप्यनुचित इत्याह-*एतेनेति । पूर्वार्केस्य तत्तत्साध्यत्वेन ज्ञातक्रियायाः साध्यसाधनभावव्यत्यासस्यैव कर्मव्यतिहारपदार्थत्वेन । *आत्मनेपदौचित्याच्चेति । प्रकृते तु न तथा । उभयोरपि धर्मयोः कर्तृत्वस्यासधात्वर्थनिरूपितस्य युगपत्प्रतीतिर्न तु त्वद्धर्मकर्तृकत्वेनोचितक्रियायाम्मद्धर्मस्यैव कर्तृत्वप्रतीतिरिति नात्रात्मनेपदमुचितमिति भावः । तत्तद्भाष्ये दृष्टानामेकवचनान्तप्रयोगाणान्तु छान्दसत्वमेवेत्याह-*तासस्त्योरित्यादिना । *इति दिगिति । दिगर्थस्तु द्वितीयस्यापि परस्परकरणरूपव्यतीहारस्य नात्र भट्टिप्रयोगस्थले प्रसङ्गः । यत्र कर्तृभेदेऽपि युगपदुभयकर्तृका क्रियाऽऽशुसञ्चारित्वेनालातचक्रवदकर्त्रैककालिकत्वेन च गृह्यते तत्रैव तादृशव्यतीहारस्य स्यात्मनेपदप्रयोजकत्वम् । 'संप्रहरन्ते राजानः' इत्यत्र यथा । प्रकृते तु न तथा । क्रौर्याक्रौर्यकर्तृकभवनयोर्भेदस्यैव प्रतीतेरिति । नन्वस्मिन्सूत्रे कर्तृग्रहणं व्यर्थम् । भावकर्मनिवृत्त्यर्थत्वन्तु तस्य न सम्भवति । तत्र हि"भावकर्मणोः" ( पा०सू० १-३-१३ ) इत्यनेनेष्यत्र एवात्मनेपदम् । 'व्यतिगम्यन्ते ग्रामाः' 'व्यतिहन्यन्ते दस्यवः'इति यथा । न च "न गति"( पा० सू० १-३-१५ ) इतिसूत्रेणात्मनेपदस्य कर्मव्यतिहारे निषेधेन न स्यादिति वाच्यम् । अनेन सूत्रेण प्राप्तस्य'अनन्त-

नेर्विशः ( पा० सू० १–३–१७ )। *नेरिति षष्ठी। नेरर्थद्वारसंबन्धिनस्तद्द्योत्यार्थकस्य विशेरित्यर्थस्तेन 'न्यविशत' इत्यादौ न दोषः। "परिव्यवेभ्यः" ( पा० सू० १–३–१८ ) इत्यादावपि षष्ठ्यर्थे पञ्चमी। स्पष्टं चेदं "शदेः शितः" (पा० सू० १–३–६०) इत्यत्र भाष्ये। *अत एव न्यादीनामुपसर्गाणामेव ग्रहणमिति दिक्।

आङोदो ( पा० सू० १–३–२० )। *अकर्त्रभिप्रायेऽप्यात्मनेपदार्थमिदम्। आस्यविहरणे ददातेरेव प्रसिद्धत्वेन संयोगवाद्विप्रयोगस्यापि विशेषावगतिहेतुत्वेन तस्यैव ग्रहणमित्याह–ददातेरिति। आस्यग्रहणमिति। विहरणशब्दस्य क्रीडापादविहरणाद्यर्थत्वाभावबोधपूर्वकं *विकासार्थत्वमात्रे तात्पर्यग्राहकं तदिति भावः। *'प्रतीकमाददाति' 'भिक्षामाददाति' इति चिन्त्यमेव। यत्त्वत्र स्मरणे आकारो ङित्त्वेनेत्यात्मनेपदं नेति, तन्न। विस्मृतस्यार्थस्य स्मृतिविषयताद्योतकस्यैव भाष्यबलेनाङित्वलाभात्स्मरणपूर्वकग्रहणे धातोर्वृत्तौ तात्पर्यग्राहकत्वेन क्रियायोगसत्त्वेन ङित्त्वस्यैव लाभाच्च*। ङकारस्तु *अस्यैवार्थस्यानुवादकः। ण्यन्तस्येरस्य' इति न्यायेन निषेधेऽपि व्यवहितेन"भावकर्मणोः" (पा० सू० १–३–१३) इत्यनेन प्राप्तस्य निषेधासम्भवादिति चेन्न।" शेषात्कर्तरि" ( पा०सू० १–३–७८ ) इतिसूत्रार्थमेतदुपादानात्। तत्र हि कर्त्तरीत्यनुवर्त्य कर्तैव यः कर्त्ता तत्र यथा स्यादित्यर्थ इष्यते। "अनुपराभ्याम" ( पा० सू० १–३–७९ ) इति सूत्रार्थश्चाति तत्रैव वक्ष्यते।

नेर्विशः ( पा० सू० १–३–१७ )। 'पूर्वं धातुः साधनेन युज्यते' इतिन्यायेन साधनबोधके लकारे तस्यापरनिमित्तकत्वेनान्तरङ्गत्वात् "तिप्तस्" ( पा० सू० ३–४–७८ ) इतिसूत्रेण सामान्यत आदेशे उपसर्गयोगेऽपि कृताकृतप्रसङ्गित्वेन नित्यत्वाद्विकरणे विकरणान्ताङ्गस्यादि कृते तस्य समुदायभक्ततया धातोर्नेः परत्वासम्भवान्नियमो न स्यादित्याशयेनाह–*नेरिति षष्ठीति। *अत एव=द्योतकानां न्यादीनां ग्रहणादेव। तेनोन्निकुलं ग्रामम्प्रविशतीत्यर्थके 'उन्निविशति ग्रामम्' इत्यत्र न।

आङो दोऽनास्य ( पा० सू० १–३–२० )। ददातेर्ञित्त्वादात्मनेपदं सिद्धमेवेत्यत आह–*अकर्त्रभिप्राय इति। *विकासार्थत्वेति। ओष्ठपुटविभागार्थत्वमित्यर्थः। अत एव 'विपादिकां व्याददाति' इत्यत्रापि प्रतिषेधः सिद्धः। एवञ्चाविकासार्थस्य ददातेर्ग्रहणे यदोपसर्गवशाद् ग्रहणाद्यर्थकता तदाऽनेनात्मनेपदमिति सिद्धौ प्रतीकमाददातीत्यादि न भवति तदाह–*प्रतीकमिति। *लाभाच्चेति। एवञ्च मनोरमोक्तो हरदत्ताद्यनुसारी समाधानाभासो निरस्तः। *अस्यैव=पूर्वोक्तस्यैव। अत्र भाष्ये–'स्वाङ्गकर्मकाच्च' इत्युक्तम्। तस्य स्वाङ्ग-

ति ।*भाष्ये ण्यन्तस्यैवोदाहरणादिति भावः । *"हन्त्यर्थाश्च" ( चु० ग० सू० ) इति गणसूत्रेण णिच् हन्तेर्गत्यर्थत्वस्यापि सत्त्वात् ।

मा त्वरिष्ठा इति । सहस्व कं चित्कालमित्यर्थः । शिक्षेरिति । *अत्र जिज्ञासायामित्युक्तेर्ज्ञानपदाध्याहारे आत्मनेपदं तात्पर्यग्राहकम् । वैषयिके आधारे सप्तमीत्याह—धनुर्विषय इति । प्रकार इति । *धर्म इत्यर्थः । ताच्छील्यं=नियततत्स्वभावता । विषया इति । समभिव्याहृतपदान्तरगम्या इत्यर्थः ।

आलेखनम्=खननम् । अपस्किरत इति । अत्र कृधातोः खननपूर्वकेधूल्यादिविक्षेपे वृत्तिः । अपकिरति कुसुममिति । इहालेखनाभावात्सुडभावः* । 'म्रियमाणो वृषभः पादैर्भुवमपकिरति' इत्यत्र हर्षाद्यभावादप्रवृत्तिः । नेष्यत इति । *अत एव भाष्ये ससुट्कान्येवोदाहरणानि दृश्यन्ते । गजोऽपकिरतीति । स्वभावाख्यानमत्र ।

आनुते इति । शृगाल उत्कण्ठापूर्वकं शब्दं करोतीत्यर्थ

---

कर्मकादेव प्रतिषेध इत्यर्थः, तदभिप्रायेण मूले पराङ्गकर्मकान्न निषेध इति । *भाष्ये ण्यन्तस्यैवेति । माणवक आगमयस्व तावदित्यस्य । नन्वागमयस्वेत्यत्र प्रयोजकव्यापाराप्रतीतेः कथण्णिजित्यत आह—*हन्त्यर्थाश्चेतीति । "शिक्षेर्जिज्ञासायाम्" ( का० वा० ) इत्यत्र 'शिक्ष' विद्योपादाने, इत्यस्य न ग्रहणं किन्तु शकिः सन्नन्तः "सनिमीमा" ( पा० सू० ७-४-५४ ) इति सूत्रेण कृतेस्भावविशिष्टोऽनुकृतः । एवञ्च जिज्ञासायांमित्यस्यान्वयाय ज्ञानपदाध्याहार आवश्यक इत्याह—*अत्रेत्यादि । मूले नियमार्थमिति । न चैतादृशनियमस्वीकारेऽस्यानुदात्तेत्त्वं व्यर्थमिति वाच्यम् । युजर्थन्तत्सत्त्वात् ।

हरतेर्गतताच्छील्ये ( का० वा० ) । *धर्म इति । गुणक्रियादिः । 'मातुरनुहरति' इति प्रत्युदाहरणे तु सादृश्यमात्रप्रतीतिर्न तु मातृवृत्तिगुणस्य सततम्परिशीलनमिति नात्मनेपदम् ।

किरतेर्हर्षजीविका ( का० वा० ) । यद्यपि "कुलायो नीडमस्त्रियाम्" ( अ० को० ) इति कोशान्नीडवाची कुलायशब्दस्तथापि भाष्ये 'अपस्किरतेश्वाऽऽश्रयार्थी' इत्युदाहृतमित्यतोऽत्र कुलायशब्दो वासस्थानमात्रपरः । *सुडभाव इति । "अपाच्चतुष्पात्" ( पा० सू० ६-१-१४२ ) इति विहितसुटोऽभावः । मूले नेष्यत इति । "किरतेः" ( का० वा० ) इति वार्त्तिकोदाहरणानां ससुट्कानामेव भाष्यकृतोदाहरणात्सुडभावे नेष्यते इति कल्प्यत इत्याह—*अत एवेति । 'शप' उपालम्भे । मूले उपालम्भ इति प्राचीनसम्मतपाठमाक्रोशार्थादित्यनेन व्या-

इति कैयटः । शप इति । *परे तु उपलम्भनेऽनेनात्मनेपदं भाष्ये उपलम्भन इत्येव पाठदर्शनात् । उपलम्भनं=प्रकाशनम् । धातोः शपथकरणकप्रकाशने वृत्तौ तद् तात्पर्यग्राहकः । शपथश्च लोकप्रसिद्ध एव । *अत एवोदाहरणे देवदत्तायेत्यत्र *चतुर्थ्येव भाष्ये प्रयुक्ता । 'सख्यः शपामि यदि किञ्चिदपि स्मरामि' इत्यादौ शपथमात्रं विवक्षितं न तु प्रकाशनम् । मूले उपालम्भ इति पाठ आक्रोशार्थादित्यादिव्याख्यानञ्च वृत्त्यनुरोधेनेति वदन्ति ।

ईहा=*कायपरिस्पन्दरूपो व्यापारः । *शतमुत्तिष्ठतीत्यस्योत्पद्यत इत्यर्थः ।

उपान्मन्त्र (पा० सू० १-३-२५) ॥ *मन्त्रकरणकेऽर्थे वर्त्तमानादित्यर्थः ।

---

ख्याय भाष्यसम्मतमाह-*परे त्विति । प्रकाशनमात्रशक्तस्योपलम्भनशब्दस्य शपथकरणके प्रकाशने लक्षणा । *अत एव=शपथकरणेऽर्थे वृत्तिस्वीकारादेव । *चतुर्थ्येव="श्लाघह्नुङ्" (पा० सू० १-४-३४) इति चतुर्थ्येव ।

प्रकाशनस्थेयाख्ययोश्च (पा० सू० १-३-२३) । प्रकाशनं=ज्ञापनम् । स्थेयः=विवादपदनिर्णेता । स्थेयशब्दे च "कृत्यल्युटो बहुलम्" (पा० सू० ३-३-११३) इत्यत्र बहुलग्रहणादधिकरणे यत् । तिष्ठन्ति यस्मिञ्जनाः, विवादपदनिर्णयकर्तृत्वप्रकारकनिश्चयविशेष्यतया स्वीकुर्वन्तीत्यर्थः ।

"स्थेयो विवादस्थानस्य निर्णेतरि पुरोहिते" (मे० को०) ।

इति मेदिनीकारः । 'कर्णादिषु तिष्ठते' इत्यत्र तथा स्पष्टम् ।

उदोऽनूर्ध्वकर्मणि (पा० सू० १-३-२४) । अत्रोर्ध्वशब्द ऊर्ध्वदेशानुयोगिकसंयोगपरस्तस्य नञा समासे क्रियापरकर्मशब्देन षष्ठीतत्पुरुषः । ऊर्ध्वदेशवृत्तिसंयोगभिन्नसंयोगानुकूलव्यापारलाभेनानूर्ध्वदेशसंयोगफलकक्रियालाभात्तादृशक्रियायां वर्त्तमानादुदः परात्स्थाधातोरात्मनेपदमित्यर्थः । 'मुक्तावुत्तिष्ठते काशीम्' इत्यत्र 'निमित्तात्कर्मयोगे' (का० वा०) इति सप्तमी । मुक्तिफलककाशीवृत्तिसंयोगानुकूलैककर्तृको वर्त्तमानो व्यापार इति शाब्दबोधः । 'उद ईहायाम्' इति वार्तिकमूलकाद्व्याख्यानान्मूले ईहायामेवेत्युक्तन्तत्रेहापदार्थमाह-*कायपरिस्पन्देति । 'मुक्तावुत्तिष्ठते' इत्यत्रेहा स्पष्टैव । 'पीठादुत्तिष्ठति' इत्यत्रापीहाऽस्त्येवेति 'अनूर्ध्वकर्मणि' इत्युपात्तम् । 'शतमुत्तिष्ठति' इत्यत्र नेहेति बोधयितुमाह-*शतेति ।

उपान्मन्त्रकरणे (पा० सू० १-३-२५) मन्त्रकरणकेऽर्थे वर्त्तमानादित्यर्थो बहुव्रीहिसमासाश्रयणात्कार्यस्तदाह—*मन्त्रेति । आग्नेय्याऽऽग्नीध्रमुपति-

सङ्गतिकरणम्=उपश्लेषः, मित्रकरणम्=अनुपश्लिष्टस्यापि मैत्री-संबन्धः । लिप्सायामिति । *लिप्सोपसर्जनकेऽर्थे वर्त्तमानादित्यर्थः ।

उद्भ्याम् ( पा० सू० १-३-२७ ) ॥ उद्भ्यां किम् ?, निष्टपति । ज्वलतीत्यर्थः ।

ल्यबन्तं विनैवेति । *'वाक्ये वाक्यैकदेशप्रयोग'न्यायेन अत्र शब्दाध्याहार इति भावः । *अस्यायुक्तत्वं मन्यमान आह-भेत्तुमित्यादीति । *तद्घटितवाक्यस्यैकदेशोऽयमित्यर्थः । समीपमेत्येति वेति । विषमविलोचनस्य समीपमेत्य स्वं वक्ष आजघ्ने इत्यन्वय इति भावः ।

वेत्तेरेवेति । *व्याख्यानादिति भावः ।

अर्तीति द्वयोरिति । *व्याख्यानादिति भावः । सूत्रे ऋच्छतिग्रहणं तौदादिकऋच्छेः सम्पूर्वात्परस्मैपदनिवृत्तये, 'समृच्छिषते' इत्याद्यर्थश्च । समार्त्तेति । "उश्च" ( पा० सू० १-२-१२ ) इति कित्त्वाद् गुणाप्राप्तौ "आटश्च" ( पा० सू० ६-१-९०) इति बाधित्वा परत्वा-

---

ष्ठते' इत्यत्र मन्त्रकरणकोऽर्थः स्तुतिरूपः । आग्नेयी=अग्निर्देवता यस्यास्सा ऋक् । अग्निमिन्धे=अग्नीत् ऋत्विग्विशेषः, तं तया ऋचा स्तौतीत्यर्थः ।

वा लिप्सायामित्यत्र लिप्सा लाभेच्छा सा यत्र गम्यते तत्रात्मनेपदमिष्यते इत्याशयेनाह-*लिप्सोपसर्जनक इति । 'भिक्षुकः प्रभुमुपतिष्ठते' इत्यत्र स्थाधातोः समीपगमनानुकूलो व्यापारोऽर्थस्तस्या लिप्सा करणभूतेति भवत्युदाहरणम् ।

"आङो यमहनः" ( पा० सू० १-३-२८ ) इत्यस्य स्वाङ्गकर्मकेऽर्थे वृत्तिः । 'आजघ्ने विषमविलोचनस्य वक्षः' इत्यत्र तु न तथेति कथमात्मनेपदमत्रेति शङ्कायामप्राप्येत्यध्याहारेण समाधाने "ल्यब्लोपे कर्मणि" ( का० वा० ) इति पञ्चमीमाशङ्क्य ल्यबन्तं विनेत्याद्युक्तम् । तत्र 'उच्चरितः शब्दः प्रत्यायको नानुच्चारितः' इति भाष्योक्तेः कथन्तदर्थावगतिरित्याशङ्कायामाह-*वाक्य इत्यादि । लोपपदस्वारस्यादयमर्थो लभ्यते । ननु शब्दाध्याहारेऽपि लोपोऽप्रयोगोऽस्त्येवेत्यत आह-*अस्यायुक्तत्वमिति । *तद्घटितेति । तुमुनन्तघटितेत्यर्थः ।

समो गम्यृच्छिभ्याम् ( पा० सू० १-३-२९ ) । अकर्मकाच्चेत्यनुवर्त्तमानं द्विवचनान्तानुरोधेन द्विवचनान्तत्वेन विपरिणम्यत इत्याशयेनोक्तम्मूले अकर्मकाभ्यामित्येवेति ।

विदिप्रच्छिस्वरतीनाम् ( का० वा० ) । *व्याख्यानादिति । 'संवित्ते' इति भाष्यीयोदाहरणदर्शनमूलकात "वेत्तेर्विभाषा" ( पा० सू० ७-१-७ ) इति झादेशानुवादेन रुडागमविधानदर्शनमूलकाच्च व्याख्यानादित्यर्थः । *व्याख्या-

त्सिज्लोपे वृद्धिः । *"सिज्लोप एकादेशे" इति सिद्धकाण्डे पाठाद् वृद्धिं प्रति सिज्लोपो नासिद्धः । *यत्तु "ह्रस्वादङ्गात्" ( पा० सू० ८-२-२७ ) इत्यत्राङ्गपदसत्त्वेन वार्णपरिभाषया वृद्धेः पूर्वं सिज्लोप इति, तन्न । तस्य वार्णाङ्गयोरेकस्थानिकत्व एव प्रवृत्तेस्तज्ज्ञापकस्य सजातीयापेक्षत्वेनाङ्गाधिकारस्थस्यैवाङ्गस्य तत्र ग्रहणाच्च । "ह्रस्वात्" । (पा० सू० ८-२-२७) इति सूत्रे ऽङ्गपदप्रयोजनन्तु *तत्रैवोक्तम् । *'अध्यैष्ट' इति तु *सिज्लोपस्यासिद्धत्वात्परत्वाद्वार्णादाङ्गस्य बलवत्त्वाच्च "सार्वधातुक" ( पा० सू० ७-३-८४ ) इति गुणे वृद्धौ सिद्ध्यतीति भावः । परे तु लावस्थायामडिति पक्षे सर्वतो वृद्धेरन्तरङ्गत्वेन तत्पक्षे सिज्लोपो दुर्लभस्तदेकवाक्यतया *पक्षान्तरेऽपि तदलोप एवोचितः । *किं च "सिज्लोप एकादेशे" ( का० वा० ) इति सिद्धत्वमपि प्रत्यासत्त्या सिज्लोपनिमित्तकैकादे-

---

नादिति । साहचर्यानाश्रयणमूलकात् । तदाश्रयणे तु श्रुदृशसाहचर्यादलुग्विकरणस्यैव ग्रहणं स्यात् ।

नन्‍ु परत्वात्सिज्लोप इत्यसङ्गतम । सिज्लोपस्यासिद्धत्वादत आह—*सिज्लोप एकादेश इतीति । 'वार्णादाङ्गम्' इति परिभाषायामाङ्गपदेनाङ्गसम्बन्धिकार्यस्य ग्रहणं तादृशं कार्यं लोपोऽप्यङ्गपदोपादानादित्यभिमानेन वृद्धेः पूर्वमेव लोपप्रवृत्तिवादिनो मतन्निरस्यति—*यत्त्विति । *तत्रैवोक्तमिति । 'अलाविष्टाम्' इत्यादौ लोपाभावरूपम्प्रयोजनमित्यर्थः । नन्वेवम् 'अध्यैष्ट' इत्यत्रापि सिचः श्रवणन्न स्यादत आह—*अध्यैष्टेति त्विति । *सिज्लोपस्यासिद्धत्वादिति । गुणविधायकशास्त्रदृष्ट्याऽसिद्धत्वादित्यर्थः । यत्तु 'ह्रस्वात्सिचः' इत्येव वाच्यम् सिचा चाङ्गस्याक्षेपेण यस्मात्सिज्विहित इत्यर्थेन निर्दिश्यमानपरिभाषया 'अलाविष्टाम्' इत्यादिसिद्धावङ्गग्रहणवैयर्थ्यमिति तत्सामर्थ्यादङ्गाधिकाराभावेऽपि वार्णपरिभाषायाः प्रवृत्तिरिति, तन्न । आक्षेपादिक्लेशपरिहारार्थमेव तत्राङ्गपदोपादानात् । यदपि 'सिज्लोप एकादेशे' ( का० वा० ) इत्यत्रैकादेशपदेन यस्यैकादेशस्य सिज्लोपोत्तरम्प्रवृत्तिस्तस्यैव ग्रहणम् 'अग्रहीत्' इत्यादौ यथा । वृद्धेस्त्वतथात्वात्तस्यामसिद्धत्वम्भवत्येवेति । तदपि न । तादृशनियमे मानाभावात् । यच्च वार्णपरिभाषायाः समाननिमित्तकत्वे प्रवृत्तिर्न तु समानस्थानिकत्वे । अन्यथा द्यौरिवाचरति='द्यवति' इत्यत्र दिवशब्दादाचारे क्विपि वस्योठि 'दि ऊ अति' इति स्थिते यण्गुणयोः प्राप्तयोराङ्गत्वाद् गुण एव स्याल्लघूपधत्वान्न तु यण् । मन्मते तूभयोः समाननिमित्तकत्वाभावान्न परिभाषाप्रवृत्तिरिति । तदपि न । हलन्तेभ्य आचारे क्विबभावस्य प्रागुपपादनात् । *पक्षान्तरे=लादेशात्पूर्वमडागम इति पक्षान्तरे । पूर्वोपपादितं सिज्लोपस्य सिद्धत्वमप्यनुचितमित्याह—*किञ्चेति । नन्‍ु पूर्वोक्तरीत्या यद्ये-

र्थं मत्येवोचितं न तु प्रकृतविषयमपि । *न चैकादेशपदसामर्थ्यं सवर्णदीर्घपदापेक्षया लघुत्वादित्याहुः । मासमरतेति । *"सर्त्तिशास्ति" (पा० सू० ३-१-५६) इति सूत्रे पुषादिसूत्रेण योगविभागसामर्थ्यात्परस्मैपदेष्विन्त्यस्यासम्बन्धादिति भावः । *अत एव

समारन्त ममाभीष्टाः संकल्पास्त्वय्युपागते ।

इति भट्टिः सङ्गच्छते, वृत्तौ च स्पष्टमेतत् । *परे तु "शास इदू" ( पा० सू० ६-४-३४ ) इति सूत्रे 'आशास्ते' इत्यादावित्ववारणाय 'यस्माच्छासेरङ् विहितस्तस्य ग्रहणम्' इति भाष्यमुपादाय "सर्त्तिशास्ति" ( पा० सू० ३-१-५६ ) इत्यत्र परस्मैपदाधिकारान्नाशास्तेरङित्युक्तं कैयटेन* । *किं च "अस्यतिवक्ति" ( पा० सू० ३-१-५२ ) इत्यनेन सर्त्तीत्यादेर्योगविभागस्य फलं*निरूपयितुमशक्यम् । *अत एव भाष्ये प्रकृतवार्तिके धातु*द्वयसाधारण्येन 'मासमृत' इत्याद्येवोदाहृतम् । एतञ्च भट्टिप्रयोगवृत्त्यादि चिन्त्यमित्याहुः । अकर्मकादित्येवेति । "समोगमि" ( पा० सू० १-२-२९ ) इत्यत्रोपसंख्यातत्वादिति भावः । न च 'समोगमादिषु विद्यादीनामुपसंख्यानम्' इति भाष्ये आदिशब्दबहुवचनाभ्यां "समः क्ष्णुवः" ( पा० सू० १-३-६५ ) इत्यत्राप्येषामुपसंख्यानेन सकर्मकेभ्योऽप्यात्मनेपदेष्टेरकर्मकादित्येवेत्यसङ्गतमिति वाच्यम् । *तेनैव सिद्धेऽत्रोपसंख्यानस्य वैयर्थ्यापत्तेः । न हि तत्र सकर्मकादित्य-

---

कादेशपदेन सवर्णदीर्घ एव गृह्येत तदा स्पष्टप्रतिपत्तये सवर्णदीर्घपदमेवोच्चारयेदत आह—*न चैकादेशपदेति । ननु 'मा समरत' इत्यत्राऽङ् दुर्लभः । "पुषादि" ( पा० सू० ३-१-५५ ) इतिसूत्रस्थस्य परस्मैपदेष्वित्यस्य "इरितो वा" ( पा० सू० ३-१-५७ ) इत्यादौ सम्बन्धात् "सर्त्तिशास्ति" ( पा० सू० ३-१-५६ ) इत्यत्रापि सम्बन्धादित्यत आह—*सर्त्तिशास्तीतिसूत्र इति । *अत एव=तत्र तस्यासम्बन्धादेव ।

भाष्यानुसारिमतमाह—*परे त्विति । *कैयटेनेति । मण्डूकप्लुतिकल्पने गौरवाद्यस्माच्छासेरङ् विहित इति भाष्याक्षरस्वारस्याच्च "सर्त्ति" ( पा० सू० ३-१-५६ ) इति सूत्रेऽपि तस्य सम्बन्ध इति तद्भावः । नन्वेवं योगविभागवैयर्थ्यमत आह—*किञ्चास्येति । *निरूपयितुमशक्यमिति । भवदुक्तलक्ष्यविसंवादादिति शेषः । किन्तु विपरीत एव दृश्यत इत्याह—*अत एवेति । *द्वयेति । अर्त्तीयर्त्तीतिद्वयेत्यर्थः । *तेनैव सिद्ध इति । तत्रोपसंख्यानेनैव सिद्ध इत्यर्थः । "धातोरर्थान्तरे वृत्तेः" इति इदम् मूले पठितम्प्राचां वचनं ध्वनितम् "उद्विभ्याम्" (पा० सू० १-३-२७) इति सूत्रे भाष्यकृतेति केचिदाहुस्तत्र किं युक्ति-

स्ति येनाकर्मकार्थमिदं स्यात्। भाष्ये बहुवचनन्तु प्रयोगभेदाभिप्राये-णेत्याहुः। *वहतीति। प्रापणार्थस्य वहतेरर्थान्तरे *स्पन्दने वृत्तिरिति भावः। *जीवतीत्यत्र जीवनं कर्म धात्वर्थेऽन्तर्भूतम्। अकर्मकत्वञ्च *पृथगुपस्थितैतच्छास्त्रविहितकर्मसञ्ज्ञकानन्वयार्थकत्वम्। स्पष्टञ्चेदं "सुप आत्मनः" (पा० सू० ३-१-८) इति सूत्रे भाष्ये। वर्षतीति। *इदं चिन्त्यम्। अत्र प्रसिद्ध्या झटित्युपस्थितस्य 'प्रविश पिण्डीम्' इत्यादा-

---

च युक्तमिति बोधयति-*वहतीतीत्यादिना। तत्र हि "अथोद्भ्यामित्यत्र किम्प्रत्युदाह्रियते ?, 'निष्टप्यते' इति। किम्पुनः कारणमात्मनेपदमेव प्रत्युदाह्रियते न पुनः परस्मैपदम्प्रत्युदाहार्यं स्यात्। तपिरयमकर्मकः। अकर्मकाश्चापि सोपसर्गाः सकर्मका भवन्ति। न चान्तरेण कर्मकर्त्तारं सकर्मका अकर्मका भवन्ति। यदुच्यते न चान्तरेण कर्मकर्त्तारं सकर्मका अकर्मका भवन्तीति। अन्तरेणापि कर्मकर्त्तारं सकर्मका अकर्मका भवन्ति। तद्यथा नदी वहतीत्यकर्मकः, भारं वहतीति सकर्मकः। तस्मात् 'निष्टपति' इति प्रत्युदाहार्यम्" इत्युक्तम्। "उद्विपूर्वोऽयन्तपिः 'सुवर्णमुत्तपति' इत्यत्र सकर्मकत्वेन दृष्टोऽप्यकर्मको भासनेऽर्थे भवति-उत्तपते वितपते सूर्यः" इति। भासत इत्यर्थः। यदि कर्मणः कर्तृत्वं विनाप्यकर्मकत्वमुत्तपतेस्तदाऽयं योगो विध्यर्थः। यदि तु कर्मणः कर्तृत्वेनैवाकर्मकत्वन्तदा कर्मवद्भावेन सिद्धे आत्मनेपदे उद्विभ्यामपरस्मादात्मनेपदमेव न यगादीत्येवमर्थकनियमार्थमेतत्स्यादित्यभिप्रायकाथेति शङ्कायां 'निष्टप्यत' इत्युत्तरेण नियमार्थत्वमेकदेशिनोक्तम्। ततस्तपिरयमित्यादिना विध्यर्थत्वं सूचितम्। अकर्मकाणामुपसर्गसम्बन्धे सति सर्वत्र सकर्मकत्वमेव भवतीति न नियमः। 'प्रलम्बते' इत्यादौ व्यभिचारात्। किन्तूपसर्गसम्बन्धादन्तर्भावितण्यर्थताऽर्थान्तरवृत्तित्वं वा तदैव सकर्मकत्वम्भवति तथाऽत्र न विवक्षितमिति विध्यर्थमेवैतत्सूत्रमिति सिद्धान्तः। अत्र 'नदी वहति' इत्यत्राकर्मकत्वप्रदर्शनेनायं श्लोकः सप्रमाण एवेति सूचितम्। *स्पन्दने वृत्तिरिति। एवञ्च स्पन्दनं=क्रियाविशेषस्तदनुकूलो व्यापारो वेगादिस्तयोरेकत्र सत्त्वात्प्राप्ताऽपि कर्मसंज्ञा परया कर्तृसंज्ञया बाध्यत इत्ययमकर्मक एव। एवमन्यत्रापि बोध्यम्। यत्र कर्म धात्वर्थेऽन्तर्भूतन्तस्याकर्मकत्वमपि युक्तिसिद्धमित्याह—*जीवतीत्यत्रेति। जीवनम्=प्राणः। ननु यदि प्राणानाञ्च कर्मत्वन्तदा कर्मण उपसङ्ग्रहादित्यनुपपन्नम्। यदि च कर्मत्वन्तदा धारणपदार्थैकदेशधृतावन्वयोऽस्त्येवेत्यत आह-*पृथगुपस्थितेति। अन्वयशब्देन विभिन्नशब्दाभ्यामुपस्थितयोः संसर्गबोध एव सकर्मकलक्षणे विवक्षित इति। यदि चैकेन तिङोपस्थितयोः सङ्ख्याकारकयोरप्यन्वयबोध इति विभिन्नशब्दाभ्यामुपस्थितयोरेव संसर्गबोधोऽन्वयबोध इति न नियम इति विभाव्यते तदा पृथगुपस्थितिविषयसंसर्गबोधोऽन्वयबोधपदार्थः। प्रसिद्धेरित्यस्योदाहरणम्मूले 'मेघो वर्षति' इति। कर्मविषयकोत्थिताकाङ्क्षाऽविषयत्वं हि तत्त्वमिति प्राचा-

त्रिवा॥न्वयसम्भवेन तद्वाचकानुपादानमात्रं न त्वेतावताऽकर्मकत्वं न्याय्यं कदाचित् 'मेघो जलं वर्षति' इति प्रयोगात् ।*अत एव तपरसूत्रे 'अयुक्तोऽयं निर्देशः' इति प्रतीकमुपादाय "न्यायेनासंबद्ध इत्यर्थः । न्यायशब्दस्य तु प्रयोगः प्रसिद्धत्वान्न कृतः । कदाचित्तु प्रसिद्धार्थस्यापि प्रयोगो दृश्यते न्यायेनायुक्त इति । धात्वर्थेऽन्तर्भूतस्य तु प्रयोगाभावो न हि भवति जीवति प्राणान्" इति कैयटेनोक्तम् । *एवं रीत्याऽकर्मकत्वस्य भाष्येऽनुपलम्भाच्चेति । *कर्मणोऽविवक्षा नाम कर्मविशेषान्वयाविवक्षा । सा च क्वचित्सार्वत्रिकी यथा सूलोदाहृते, तत्र निर्बाधं *भावे लादीनां साधुत्वं, क्वचित्तु कार्यप्रवृत्तिवेलायान्तदविवक्षा, पश्चात्तु तद्विवक्षा । यथा तु 'कृतपूर्वी कटम्' इत्यादि*वृत्तिविषये । *किं च कर्मणो धात्वर्थं प्रति सम्बन्धसामान्येनान्वयविवक्षा न तु कर्मत्वेनेत्ययमप्यविवक्षापदार्थः । *अत एव 'मातुः स्मर्यते' इत्यत्राविवक्षितकर्मतया भावे लडुक्तः "अधीगर्थ" ( पा० सू० २-३-५२ ) इत्यत्र भाष्ये । 'हितान्न यः' इत्यत्रापि हितात्पुरुषाद्धितार्थस्य यो न संशृणुते=न जानातीति प्रतीतेः 'मातुः स्मर्यते' इतिवदेवाविवक्षा । एतेनेदं प्रसिद्ध्या गतार्थमित्यपास्तमित्यन्ये ।

निवृत्तमिति । सोपसर्गास्यत्यूह्योः सकर्मकत्वेनाकर्मकादित्येतत्सं बन्धस्य वक्तुमशक्यत्वा दिति भावः ।

स्पर्द्धायाम् ( पा० सू० १-३-३१ ) । स्पर्द्धाविषये इत्यर्थः । आह्वयतेः शब्दन एव वृत्तेरिति भावः ।

वेः शब्द ( पा० सू० १-३-३४ ) । शब्दः कर्मकारकं यस्य

---

प्राशयः । परन्त्विदमकर्मकत्वम् युक्तमित्याह-*इदश्चिन्त्यमिति ।*अन्वयसम्भवेनेति । यदि पृथगुपस्थितिस्तदा अन्वयस्य सम्भवः । यदि च तत्रैव वाक्यैकदेशन्यायेन कर्मघटितेऽर्थे शक्तिरेव स्वीक्रियते तदा शाब्दबोधस्तद्विषयको भवतु परन्तु नान्वयबोध इति व्यवहारः । *अत एव=झटिति यस्य प्रतीतिस्तद्वाचकशब्दाप्रयोगेऽप्युपस्थितस्यान्वयबोधादेव । *एवं रीत्या=प्रसिद्धत्वेन । कर्मणोऽविवक्षायामाह-*कर्मण इत्यादि । *भावे लादीनामिति । सूलोदाहृते तु कर्त्र्यस्ति । भावोदाहरणं 'चैत्रेण श्रूयते' इति । अत्र श्रुधात्वर्थः श्रावणप्रत्यक्षन्तच्च नियमेन शब्दशब्दाभावान्यतरविषयकमिति कर्मणोऽन्यतरस्यान्वयाविवक्षा । *वृत्तिविषये=वृत्तिविषय एव । एवमविवक्षा च न स्वेच्छया कार्या किन्तु भाष्यकारादिप्रयोगादवसेया । तृतीयमप्यविवक्षापदार्थमाह—*किंचेति । *अत एव=सम्बन्धसामान्येनान्वयस्थलेऽप्यविवक्षयाऽकर्मकत्वस्येष्टत्वादेव ।

ततः कृञो विपूर्वादात्मनेपदमित्यर्थः।

*प्रयोगोपाधय इति। यथा 'शास्त्रे नयते' इत्यत्र नयतेः प्रापणमर्थः शिष्यादिसंमाननन्तु तत्फलतया मानसबोधविषयः, एवं 'माणवकमुपनयते' इत्यत्र विधिना वेदाध्ययनफलकमुपनयनाख्यसंस्कारेणात्मसमीपप्रापणं नयतेरर्थः। एवं हि 'सोऽध्यापक आचार्यो भवति' इति आचार्यकरणं मानसबोधविषयः। 'कर्मकरानुपनयते' इत्यत्रात्मसमीपप्रापणं नयत्यर्थः। तच्च भृतिदानकरणकमेवेति तन्मानसबोधविषय इति भावः।

कर्तृस्थे कर्मणीति। कर्तृस्थे कर्मकारके सतीत्यर्थः। शरीरशब्देनेति। *शरीरतादात्म्यापन्नस्यैव कर्तृत्वेन शरीरस्य तत्स्थत्वासम्भवः, अवयवानान्तु *सम्बन्धविशेषेण तत्स्थत्वसम्भव इति भावः। कर्तृस्थे इति किम्? राज्ञः क्रोधं विनयति। अन्ये तु विध्यर्थमिदम्, अकर्तृगेऽपिक्रियाफले 'नयन्ति पौरुषम्' इति तु प्रमाद इत्याहुः।

---

हितार्थस्येत्यनेन सम्बन्धसामान्येनान्वयो बोधितः।

निसमुपविभ्यो ह्वः ( पा० सू० १-३-३० )। अत्र ह्व इत्येकारान्तानुकरणं, लक्षणवशसम्पन्नमात्वम्। तेन 'निह्वयते' इत्यत्राप्यात्मनेपदम्भवति। कृतात्वानुकरणे तु यत्रात्वविषयताऽस्ति तत्रैव स्यात्।

गन्धनावक्षेपण ( पा० सू० १-३-३२ )। मूले गन्धनं हिंसेति। 'गन्ध' अर्दने। 'अर्द' हिंसायामिति हि चुरादौ पठितम्। सहसा वर्त्तते=साहसिकः। तत्कर्म=साहसिक्यम्। बलात्कारेणाविचारेण वा यः कर्म करोति तत्कर्तृका क्रियेति यावत्। अत्र त्रासाद्यनुकूलो व्यापारो धात्वर्थः। गन्धनादिकन्तु प्रयोगोपाधि।

सम्माननोत्सं ( पा० सू० १-३-३६ )। *प्रयोगोपाधयः=प्रयोगनियामकाः। नयतेर्ञित्त्वात्परगामिक्रियाफलविवक्षायामात्मनेपदार्थं वचनम्।

शरीरशब्दस्य शरीरावयवलक्षणायाम्बीजन्दर्शयति-*शरीरतादात्म्येति। तादात्म्यापन्नस्य=शरीराभिन्नत्वेन लौकिकव्यवहारविषयस्य। वस्तुतोऽयं व्यवहारो न युक्तः। आत्मनोऽन्तःकरणस्य वा कर्तृत्वं, तयोश्च न शरीरतादात्म्यमित्येतद्ध्वनयितुमापन्नपदोपादानम्। *सम्बन्धविशेषेण=स्वनिष्ठाधिकरणतानिरूपितसमवायसम्बन्धावच्छिन्नाधेयत्वसम्बन्धेन।

वृत्तिसर्गतायन ( पा० सू० १-३-३८ )। मूले वृत्तिरप्रतिबन्धइति। यत्र न प्रतिबन्धस्तत्रैव लोके एतादृशव्यवहारस्य दर्शनात्। स्फीतानीति। प्रवृद्धानीत्यर्थः।

उपपराभ्याम् ( पा० सू० १-३-३९ ) क्रम इत्यनुवर्त्तते। यदुक्तम्मूले

उपपराभ्याम् (पा० सू० १-३-३७)। *अस्य नियमत्वं "वृत्तिसर्ग" ( पा० सू० १-३-३८ ) इत्यनुवृत्त्या बोध्यम्। विधित्वे तु अनेनैव सिद्धे "प्रोपाभ्याम्" ( पा० सू० १-३- ४२ ) इति सूत्रे उपग्रहणवैयर्थ्यापत्तिः। 'प्रात् प्रारम्भे' इत्येव सिद्धेः।

वेः पादवि ( पा० सू० १-३-४१ )। *धातूनामनेकार्थत्वं बोधयितुं सूत्रे 'पादविहरणे' इत्युक्तम्।

अनुपसर्गाद्वा ( पा० सू० १-३-४३ )। इदं सूत्रं लिटि आशीर्लिङि च न। अस्य "विकरणेभ्यो नियमो बलीयान्" (प० भा०) इत्यर्थज्ञापकतापर "अनुदात्तङितः" ( पा० सू० १-३-१२ ) इति*सूत्रस्थभाष्यप्रामाण्यात्। नित्यमेवेति। *पूर्वविप्रतिषेधेनेति भावः।

सम्प्रतिभ्याम् ( पा० सू० १-३ ४६ )। *उत्कण्ठापूर्वकं स्म-

---

आभ्यामेवेति, तदेव युक्तमित्याह—*अस्य नियमत्वमिति।

आङ उद्गमने ( पा० सू० १-३-४० )। उद्गमनम्=ऊर्ध्वदेशसंयोगानुकूलव्यापारः। अत्रोर्ध्वदेशत्वङ्कल्पितमेव। आकाशस्यानवयवकत्वात्।

वेः पादविहरणे ( पा० सू० १-३-४१ )। विहरण इत्येव सिद्धे पादशब्दोपादानस्य प्रयोजनमाह—*धातूनामिति।

*सूत्रस्थभाष्येति। तत्र हि—अनुदात्तङित इति किमर्थमित्याशङ्क्य, नियमार्थम्। सामान्यतो लस्य स्थाने तिप्तसिति सिद्धेः। विकरणेभ्यो व्यवधानादनुदात्तात्परत्वासम्भवात्पुनरप्यनुपपत्तिशङ्कायां 'विकरणेभ्यो नियमो बलीयान्' इति समाहितम्। तत्रादौ "पुषादिद्युतादि" (पा० सू० ३-१-५५) इत्यादिसूत्रे परस्मैपदादीनान्निमित्तत्वेनोपादानस्य ज्ञापकत्वमुद्भाव्य सामान्यसूत्रेण परस्मैपदादीनां सिद्धत्वान्निमित्तत्वानुपपत्तिं परिहृत्य यत्तर्ह्यनुपसर्गाद्वेति विभाषां शास्तीत्युक्तम्। एतद्धि शेषादिति प्राप्तनियमबाधनार्थम्। यदि नियमस्य विकरणापेक्षया बलवत्त्वन्न स्यात्तदा सामान्यसूत्रेणोभयपदे सिद्धे विकरणव्यवधानेन शेषादित्यस्याप्राप्तावीष्टं सिद्ध्यत्येवेति अनुपसर्गाद्वेत्यस्य वैयर्थ्यमिति प्रतिपादितम्। तच्च ज्ञापकत्वन्तदा घटेत यदि वैयर्थ्यं स्यात्। तदेव तु न सम्भवति 'चक्रमे' 'चक्राम' 'क्रम्यात्' 'क्रंसीष्ट' इत्यत्र विकरणाभावात् "शेषात्" ( पा० सू० १-३-७८ ) इति प्राप्तनियमबाधकतयाऽस्य चारितार्थ्यमित्यतोऽस्य लिडादावप्रवृत्तिः स्वीकार्येति भावः। *पूर्वविप्रतिषेधेनेति। "नवेति विभाषा" ( पा० सू० १-१-४४ ) इतिसूत्रभाष्ये एतत्स्पष्टम्।

*उत्कण्ठापूर्वकमिति। झटिति झटित्युद्बुद्धसंस्कारजन्यस्मरणं हि उत्कण्ठा, तज्जन्यं द्वितीयादिस्मरणमित्यर्थः। "यः कौमारहरः" इत्यादिनोद्बोधकसमवधानम्प्रदर्श्य 'वेतसीतरुतटे चेतः समुत्कण्ठते' इत्यनेन काव्यप्रकाशे स्पष्ट-

रणम्=आध्यानम्। योगो विभज्यत इति। अत्र वृत्त्यादिक*मेव मानम्।

*भासमान इति। शिष्यैः स्तूयमानो हि भासेत, तथा चोपर्युपरिशास्त्रार्थप्रतिभासात्स्फूर्तिर्निर्वहति तेजोभङ्गे तु न शक्नुयाद्वदितुमिति भावः। ज्ञाने इति। 'शास्त्रे वदते' इति *बोधोत्तरं शास्त्रविषयकज्ञानवत्त्वं मनसा बुध्यत इति भावः। यत्नः=*उत्साहः। 'क्षेत्रे वदते' इत्यस्य तद्विषयकमुत्साहमाविष्करोतीत्यर्थः। विवदन्त इति। वैमत्यहेतुकं नानाविधं भाषन्त इत्यर्थः।

वदेर्व्यक्तवागर्थत्वेन 'व्यक्तवाचाम्' इत्युपादानसामर्थ्याद्येषां *प्रसिद्धतरं व्यक्तवाक्त्वं त एवेह गृह्यन्ते। तेन *'वरतनु सम्प्रवदन्ति कुक्कुटाः' इत्यादौ न। रतिविराममनिच्छन्तीं तरुणीं प्रति तद्वि*रामौचित्यद्योतिकोक्तिरियं, तदाह—मनुष्यादीनामिति। समुचेत्यादि किम्?, क्रमेण संप्रवदन्ति।

विभाषाविप्र (पा० सू० १-३-५०)। युगपत् *परस्परविरो

---

मियं दर्शिता। *मेव मानमिति। भाष्ये तु न दृश्यत इति शेषः।

*भासमान इति। कर्त्तरि ल्युट्। अन्यदीयज्ञानस्य प्रत्यक्षमन्यस्य न सम्भवतीति ज्ञाने इत्यस्येदङ्कथनमयुक्तमित्याशङ्कायामाह—*बोधोत्तरमिति। 'शास्त्रे वदते' इति शब्दजन्यशाब्दबोधोत्तरमित्यर्थः। ज्ञानवत्त्वमित्यस्य वदनकर्त्तुरिति शेषः। *उत्साहः=चित्तवृत्तिविशेषः। तद्विषयकाविलक्षणज्ञानजन्यसुखविशेषो वा।

*प्रसिद्धतरमिति। खगानाञ्च तथा तदुच्चारितशब्दे सादृश्यात्तथा प्रतीतिमात्रम्। एतेन शुकसारिकादीनां व्यावृत्तिः। *वरतन्विति।

"अयि विजहीहि दृढोपसञ्जनं त्यज रतिसङ्गमकाङ्क्षमानसे।
अरुणकरोद्गम एष वर्त्तते वरतनु सम्प्रवदन्ति कुक्कुटाः॥

*विरामौचित्येति। इदमुपलक्षणम्नवोढाया रमणेच्छोर्नायकस्योक्तिरियमित्यपि बोध्यम्। तद्यथा

"अयि विजहीहि दृढोपगूहनं त्यज नवसङ्गमभीरुवल्लभे।
अरुणकरोद्गम एष वर्तते वरतनु सम्प्रवदन्ति कुक्कुटाः॥

तदुक्तम्भाष्ये—"व्यक्तवाचामित्युच्यमानेऽप्यत्र प्राप्नोति। एतेऽपि हि व्यक्तवाचः कुक्कुटेनोदिते उच्यते कुक्कुटो वदतीति। एवन्तर्हि सर्व एव व्यक्तवाचस्तत्र प्रकर्षगतिर्विज्ञास्यते साधीयो ये व्यक्तवाचः। येषां वाच्यकारादयो वर्णा व्यज्यन्ते" इति। *परस्परविरोधेनेति। 'विप्रलापो विरुद्धोक्तिः'। (अ०को०)

धेन कथनं=विप्रलापः ।

*इति भाष्यमिति । एवञ्च तुदादेरत्र ग्रहणमिति भावः ।

समस्तृतीया ( पा० सू० १-३-५४ ) । तृतीयेत्यादि किम्?, उभौ लोकौ सञ्चरसीमञ्चामुञ्च देवलेति ।

दाणश्च ( पा० सू० १-३-५५ ) । इदमशिष्टव्यवहारे इष्यते । दानपूर्वके भोगेऽत्र दाण्धातुः । सूत्रद्वयमिति । "शदेः" ( पा०सू० १-३-६० ) इति सूत्रभाष्यात्तु *सर्वत्रैव षष्ठी व्यवहिते प्रवृत्तिश्चेति लभ्यते ।

स्वकरणं स्वीकार इति । *च्विस्तु प्रकृतिविकृतिभावा*विवक्षणान्न । स्वत्वोत्पादने इत्यर्थात् । *स्वीकार इत्यव्युत्पन्नं प्रातिपदिकमिति बोद्धव्यम् । पूर्वसूत्रस्यैवेति । एवञ्च तस्य सकर्मकविषयत्वेन सकर्मकस्यैव निषेधो*ऽकर्मके तु परत्वात् "पूर्ववत्सनः" ( पा० सू० १-३-६२ ) इत्यात्मनेपदमिति भावः ।

प्रत्याङ्भ्याम् ( पा० सू० १-३-५९ ) । प्रत्यासत्त्या श्रुधात्वर्थविशेषकावेव प्रत्याङौ गृह्येते, तौ च उपसर्गावेवेत्याशयेनाह—कर्मप्रवचनीयादिति । ते हि सम्बन्धपरिच्छेदका न क्रियाविशेषका इति स्पष्टमेव ।

---

इति कोशात् । *इति भाष्यमितीति । तत्र हि "गिरतेरिति वक्तव्यं गृणातेर्मा भूत् । तत्तर्हि वक्तव्यम् न वक्तव्यं प्रयोगाभावात् । न चावपूर्वस्य गृणातेः प्रयोगोऽस्ति" इत्युक्तम् ।

समस्तृतीयायुक्तात् ( पा० सू० १-३-५४ ) । अत्र समस्तृतीययेत्येव सिद्धे युक्तग्रहणाद्यत्र श्रूयमाणतृतीयान्तपदयोगस्तत्रैवात्मनेपदमिदम्, तेन 'उभौ लोकौ सञ्चरसि' इति प्रत्युदाहरणं साधु सङ्गच्छते ।

*सर्वत्रैव षष्ठीति । येन येनोपसर्गयोगे विधानं तत्र सर्वत्रैव षष्ठीत्यर्थः ।

उपाद्यमः स्वकरणे ( पा० सू० १-३-५६ ) । ननु "अस्वं यदा स्वं करोति तदा भवितव्यम्" इति भाष्यात् च्विप्रत्ययोऽत्रोचित इत्येवन्निर्देशोऽनुपपन्नोऽत आह-*च्विस्त्विति । भाष्ये-"करोतिग्रहणार्थश्चेत्प्रकृते च्विः स्यात्स एव तु न किन्तु निष्पादनवचनः" । *अविवक्षणादिति । इदमुपलक्षणम् । न वास्तवे तथा भवने च्विप्रत्ययः किन्त्वारोपित एव स्वभावादित्यपि बोध्यम् । यद्येवन्तदा स्वीकारो द्रव्यस्य प्रतिग्रहादित्यादावारोपाभावात् च्विप्रत्ययानुपपत्तिरत आह-*स्वीकार इत्यव्युत्पन्नमिति । *अकर्मके इति । 'सर्पिषोऽनुजिज्ञासते' इत्यत्र "ज्ञो ऽविदर्थस्य" ( पा० सू० २-३-५१ ) इति षष्ठी । अकर्मकत्वन्तु प्रवर्त्तनार्थकत्वात् । स्पष्टञ्चेदम् "अनोः प्रतिषेधे सकर्मकग्रहणम्" इत्यादिना भाष्ये ।

पूर्ववत्सनः (पा० सू० १-३-६२)। *प्रत्यासत्त्या सनः पूर्वं इत्यर्थलाभः। प्रकृतिगतमेव निमित्तं सना व्यवधानेऽप्यात्मनेपदं प्रवर्त्तयतीत्यर्थः। *ननु 'शिशत्सति' इत्यादौ शिदादिविपयशदेरात्मनेपदविधानाच्छिद्विषयसन्नन्तादपि प्राप्नोतीत्यत आह—वाक्यभेदेनेति।

स्वराद्यन्तेति। स्वराद्युपसर्गात्स्वरान्तोपसर्गाच्चेत्यर्थः।

णेरणौ (पा० सू० १-३-६७)। *इह *वाक्यत्रयम्। णेरिति, अणौ यत्कर्म णौ चेदिति च, स कर्त्तेति च। तत्र स्यादित्यन्तेनाद्यं व्याख्यातम्। *द्वितीयं व्याचष्टे—अणाविति। कर्मात्र क्रिया। *यत्तदोर्नित्यसम्बन्धात् यच्छब्देन तच्छब्दाक्षेपात्सैव चेदित्यर्थलाभः। *न चात्र सत्त्वैव

---

*प्रत्यासत्त्येति। एवञ्च षष्ठ्यर्थे पञ्चमीति फलितम्। पूर्वत्वस्य सावधित्वात्कस्मात्पूर्व इत्याकाङ्क्षायामाह-*प्रत्यासत्त्येति।

पूर्ववदित्यनेन सन्प्रकृतितुल्यत्वं सन्नन्तस्य कल्प्यते तच्च यथा प्रकृतिगतङकारादिनिमित्तातिदेशेन तथा शदधातौ सन्नन्तेऽपि सम्भवति शिद्विषये आत्मनेपदप्रयोजकत्वेनेत्यत आह-*नन्विति।

प्रोपाभ्यां युजेरयज्ञपात्रेषु(पा०सू०१-३-६४)।प्रोपाभ्यां युक्ताद्युजेरात्मनेपदं स्यात् यज्ञपात्रेषु नेत्यर्थः। 'द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति' इत्यस्य न्यञ्चि=न्युब्जीकृतानि पात्राणि द्वन्द्वम्प्रयुनक्तीत्यर्थः। अत्र यज्ञीयपात्राणां युज्धात्वर्थक्रियासाधनत्वं स्पष्टमेव।

णेरणौ यत्कर्म णौ चेत्स कर्त्ताऽनाध्याने (पा० सू०१-३-६७)।*इह=प्रकृतसूत्रे। *वाक्यत्रयम्=विधेयात्मनेपदसम्बन्धिवाक्यत्रयम्। *द्वितीयम्=अणौ यत्कर्म णौ चेदित्येतत्। अस्य तच्छब्दाक्षेपेणार्थपर्यवसानमित्याह-*यत्तदोरिति। कर्मशब्दोऽत्र क्रियापरः "कर्त्तरि कर्मव्यतिहारे" (पा० सू० १-३-१४) इतिसूत्रस्थकर्मशब्दवत्। यद्ययं कर्मकारकपरः स्यात्तदा अणौ यत्कर्म णौ चेदिति वाक्यस्य कर्मकारकत्व एव प्रवृत्तिरित्येतद्वाक्यप्रतिपाद्यकर्मणः कर्मत्वेन सद्भावस्यात्मनेपदनिमित्तत्वं लभ्येत तच्चोदाहरणभूतकक्ष्यायामनोपपद्यते तस्य कर्मणः कर्त्तृत्वे एवात्मनेपदप्रवृत्तेः। स कर्त्तेत्यनेन वाक्येन प्रतिपादनादतः कर्मशब्दोऽत्र क्रियापरः। अत एव वाक्यभेदस्याप्युपपत्तिरन्यथाऽणौ यत्कर्म णौ चेत्स कर्त्तेत्येवाविरोधाय स्यात्। तच्छब्दस्याक्षेपे सति तस्य क्रियाबोधकतया सेत्यस्याध्याहारे सर्वनाम्नामुद्देश्यविधेयान्यतरलिङ्गत्वेन सुप्रसिद्धतयाऽणौ यत्कर्म णौ चेत्सेत्येवं सामानाधिकरण्ये न किञ्चिद्बाधकम्। इदञ्च द्वितीयवाक्यम्, एवकारस्याप्यध्याहारेण व्याचष्टे-*यत्तदोरित्यादिना। तत्रैवकारस्य नियमपरतयाऽन्ययोगव्यवच्छेदः प्रकृते प्रतिपाद्यस्तत्फलं वक्तुं शङ्कते-*न चात्रेति।

प्रतिपाद्यता।ङ्किमेवकारेणेति वाच्यम् । अध्यारोपितमेषण *द्वितीयकक्ष्यायामधिकप्रवेशेऽपि तत्सत्ताया अक्षतया वाक्यवैयर्थ्यापत्तेः* । तृतीयं व्याचष्टे—अणौ यत्कर्मेत्यादि । अत्र पूर्ववाक्यमनुवर्त्तते, कर्मशब्दश्च *कारकपरो *व्याख्यानादिति भावः । स कर्त्रेति । सर्वनाम्नां पर्यायेणोद्देश्यविधेयान्यतरलिङ्गतेति भावः । *तत्रासति प्रतिबन्धके उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयस्य व्युत्पत्तिसिद्धतयाऽण्यन्तावस्थास्थकर्मकारकत्वावच्छेदेन णौ कर्तृत्वलाभः । *तेन *'देवदत्तो गां याचते यज्ञदत्तम्'*'यज्ञदत्तो गां याचते' 'देवदत्तो गां याचयति' 'यज्ञदत्तेन यज्ञदत्तो' गां याचयति' इत्यादौ *नात्मनेपदम् । यच्छब्देन तच्छब्दाक्षेपेऽपि स इति स्पष्टार्थम् । ननु णौचेदिति व्यर्थम्, अणौ यत्कर्म स कर्तेत्यत्र क्वेत्याकाङ्क्षायां प्रत्यासत्त्या यत्रात्मनेपदं तत्रेत्यर्थलाभादिति चेन्न यत्तच्छब्दवत्स्पष्टार्थत्वात्* । *अत्र फलक-

---

*द्वितीयकक्ष्यायाम्='दर्शयति भवः' 'आरोहति हस्ती'इत्यत्र।*वाक्यवैयर्थ्यापत्तेरिति । एतद्धि तस्मिन् पक्षेऽन्ययोगसत्त्वेनात्मनेपदाव्यावर्त्तकत्वेन व्यर्थं स्यादित्यर्थः । चाक्षुषज्ञानविषयत्वानुकूलव्यापारानुकूलव्यापारस्य णिजन्तेन प्रतिपादनात्प्रकृत्यर्थस्य तत्र सद्भावादेवकाराभावे व्यर्थमेव । *कारकपरः=कर्मकारकपरः । *व्याख्यानादिति । तत्रापि कर्मशब्दस्य क्रियापरत्वे तस्याः कर्तृत्वे सत्येव तृतीयवाक्यप्रवृत्तिर्वाच्या सा न सम्भवति । क्रियायाः कर्तृत्वस्य प्रकृतसूत्रोदाहरणस्थलेऽप्रतीतेरित्येतन्मूलकव्याख्यानादित्यर्थः । *तत्र=तृतीयवाक्यजन्यबोधस्थले । 'ब्राह्मणः पण्डितः' इति वाक्यस्थलेऽवच्छेदकावच्छेदेन विधेयान्वयासम्भवादसति बाधक इति । *तेन=अवच्छेदकावच्छेदेनान्वयस्वीकारेण । *देवदत्तो गां याचते यज्ञदत्तमिति । अत्र स्वसम्प्रदानकदानानुकूलव्यापारानुकूलव्यापारो याचतेरर्थः । दानमत्र स्वत्वन्तदाश्रयतया गोः कर्मत्वन्तदनुकूलव्यापाररूपफलाश्रयतया यज्ञदत्तस्य च कर्मत्वम् । *यज्ञदत्तो गां याचते इति । अस्यां द्वितीयकक्ष्यायां द्वितीयव्यापारस्य सौकर्यविवक्षया त्यागे स्वसम्प्रदानकदानानुकूलव्यापार एव याचतेरर्थस्तदाश्रयतया यज्ञदत्तस्य कर्तृत्वम् । पुनर्देवदत्तस्य प्रयोजकत्वविवक्षया "हेतुमति च" ( पा० सू० ३-१-२६ ) इति णिचि देवदत्तो गां याचयति यज्ञदत्तेनेति तृतीया कक्ष्या । अत्र "गतिबुद्धि"(पा० सू० १-४-५२ ) इति सूत्रस्य नियमार्थत्वान्न यज्ञदत्तस्य कर्मत्वम् । पुनश्चतुर्थकक्ष्यायां णिजर्थव्यापारस्य त्यागेन यज्ञदत्तस्य कर्तृत्वेन यज्ञदत्तो गां याचयतीति चतुर्थी कक्ष्या । *नात्मनेपदमिति । अत्र द्वितीयकक्ष्यायां या क्रिया सैव चतुर्थ्यामस्ति । अणौ कर्मणो णौ कर्तृत्वञ्चास्तीति प्राप्तमप्यात्मनेपदमवच्छेदकावच्छेदेनान्वयस्वीकारान्न भवति । अणौ कर्मत्वस्य गव्यपि सत्त्वात् तस्याश्च न णौ कर्तृत्वमिति । *स्पष्टार्थत्वादिति । प्रत्यासत्त्या णावित्यस्य लाभेऽपि सा-

ल्पना तु भाष्यानुक्तत्वादयुक्तेति प्रामाणिकाः । अणावकर्मकादिति । *यत्र क्राप्यण्यन्तावस्थायामकर्मकादि*त्यर्थेन प्राप्तिरिति भावः । पूर्वविप्रतिषेधेनेति । *अत्र च मानं *'दर्शयते राजा' इति भाष्योदाहरणम् । प्रेरणेति । सौकर्यविवक्षयेति भावः । *अत्र *कर्मस्थक्रियत्वाभावेन कर्मकर्तर्यपि शबादि । नृत इति । फलवाचकाचद्यधिकरणे *व्यापारे इत्यर्थः । पुनर्ण्यर्थस्येति । *ण्यन्तस्य तद्रहितेऽर्थे लक्षणा । गङ्गादिपदस्य तीरलक्षणायामपि टाप्स्थितिवत् णिचः स्थितिरिति भावः । प्रथमतृतीययोरिति । *'सर्वनाम्नो वृत्तिमात्रे' ( भा० इ० ) इति पुंवत् । एवं तृतीयकक्ष्यायामित्यत्रापि । यावतीषु सोपानस्थानीयास्वर्थविभागभूमिषु पदं विन्यस्येयं प्रायोगिकी *भूमिः प्राप्यते ता भूमयः कक्ष्या इत्युच्यन्ते

---

क्षादुच्चारणं विना वृत्त्यनुपस्थितत्वाच्छाब्दबोधविषयता न सम्भवतीति श्रूयमाणशब्दस्य तद्घटिते शक्तिः कल्पनीया तदपेक्षया णावित्यस्योच्चारणस्यैव युक्तत्वादित्यर्थः । यत्तु तृतीयवाक्ये णावित्यस्याभावेऽणौ या क्रिया सा चेण्णावित्येतदुदाहरणभूतकक्ष्याघटितकक्ष्यासमुदायघटकयत्किंचित्कक्ष्यामादाय यथोपपाद्यते तथाऽणौ यत्कर्म स चेत्कर्तेत्यस्याप्यर्थो याङ्काञ्चित्कक्ष्यामादायोपपादनीय इत्यपि स्यात्तथा च निवृत्तप्रेषणपक्षीयतृतीयकक्ष्यायामात्मनेपदापत्तिः । प्रथमामादायाणौ या क्रिया सा चेदित्यस्य यथोपपादनन्तथाऽणौ यत्कर्म स चेत्तादृशसमुदायघटकयत्किञ्चित्क्रियायामित्यस्य [illegible]मादायोपपादनसम्भवात् । णावित्युपादाने तु णिजन्तघटिततादृशसमुदायघटककक्ष्यामादायैव तृतीयवाक्यार्थस्योपपत्तिः कार्या सा च यां कक्ष्यामादाय भवति तस्यामेवात्मनेपदमिति वदन्ति तन्न युक्तमित्याशयेनाह*—अत्र फलकल्पना त्विति । प्रत्यासत्त्यैव भवदुक्तफलस्य गतार्थत्वादिति भावः । "अणावकर्मकात्" ( पा० सू० १-३-८८ ) इति सूत्रस्य प्राप्तिमुपपादयति-*यत्र क्राप्येति । *इत्यर्थेनेति । अस्य द्वितीयामादायाणावकर्मकत्वस्य सत्त्वादिति शेषः । *अत्र=पूर्वविप्रतिषेधे । *दर्शयते राजेतीति । "दर्शयते भृत्यान् राजा" इत्युदाहरणमिति बोध्यम् । भृत्यानित्यस्यानुपादानन्तु 'दर्शयते भवः' इत्येतत्तुल्यत्वप्रदर्शनाय । यदि परस्मैपदबाधनार्थमेवैतत्सूत्रन्तदा यत्र परस्मैपदप्राप्तिस्तादृशोदाहरणमेव प्रदर्शयितुमुचितमिति भावः । *अत्र='पश्यति भव' इत्यत्र । *कर्मस्थाक्रियत्वाभावेनेति । यत्र कर्मणि क्रियाकृतो विशेषो दृश्यते तत्रैव क्रिया कर्मस्था प्रकृते तु न तथेति भावः । *व्यापार इति । अभिधेये इति शेषः । ननु पुनर्ण्यर्थस्य चेदविवक्षा तदा तत्प्रतिपादकणिचोऽपि निवृत्तिः स्यात्प्रयोजकव्यापाराविवक्षायामेव तस्य साधुत्वाभ्यनुज्ञादर्शनादत आह—*ण्यन्तस्येत्यादि । *सर्वनाम्नो वृत्तिमात्र इति । क्वचित्सर्वनामत्वेन दृष्टस्य पुंवद्भावः । तद्दर्शनञ्च प्रकृतेऽप्यस्तीति भावः । *भूमिः=प्र-

ऽवस्था इति च । तथा हि—'आरोहन्ति हस्तिनं हस्तिपकाः' *इत्येका कक्ष्या । ततो णिचि व्यापारान्तरप्रतीतिः स्यात् । अतो मध्येऽन्या कक्ष्या '*आरुह्यते हस्ती स्वयमेव' इति । अत्र न्यग्भवनमात्रमर्थः । ततो णिच्यारोहन्तीत्यनेन समानार्था तृतीया । *इयञ्च तृतीयवाक्यार्थे*व्यावर्त्यभूता उदाहरणकक्षोपपादिका च । ततो व्यापारत्यागे 'आरोहयते हस्ती स्वयमेव' इत्युदाहरणभूता । तदुक्तम्—

न्यग्भावना न्यग्भवनं रुहौ *शुद्धे प्रतीयते ।
न्यग्भावना न्यग्भवनं ण्यन्तेऽपि प्रतिपद्यते ॥
अवस्थां पञ्चमीं प्राहुर्ण्यन्ते तां कर्मकर्तरि ।
निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजुच्यते ॥ इति ।

अत्र पञ्चमीत्वं *यथाकथञ्चिदुपपाद्यम् । *न्यग्भवनमधोदेशस्थित्यनुकूलो व्यापारः । तदनुकूलो व्यापारश्च न्यग्भावना । तत्राद्यकक्ष्यायां न्यग्भवने स्वरूपयोग्यतानिश्चयेन न्यग्भावनायां कर्तुः प्रवृत्तिरिति प्रतीतिः । *अन्यथा शिलायामङ्कुरोत्पादनायेवाप्रवृत्त्यापत्तिः । द्वितीयायान्तु प्रयोज्यस्य स्वव्यापारेणैव प्रवृत्तिरिति सौकर्यप्रतीतिः । तृतीयायां न्यग्भवने स्वत एव प्रवृत्तं दृष्ट्वा तत्क्षेमाय कर्तृप्रवृत्तिरिति सौकर्यप्रतीतिः उदाहरणे तु क्षेमार्थमपि न स्वव्यापारभिन्नप्रयोजकव्यापारापेक्षेति सौकर्यातिश-

---

योगात्मकं स्थानम् । प्राप्यते=ज्ञायते इत्यर्थः । *इत्येका कक्ष्येति । अत्र न्यग्भवनानुकूलव्यापारो रुहधात्वर्थः । *आरुह्यते हस्ती स्वयमेवेति । अत्र कर्मणि हस्तिनि न्यग्भूते क्रियांकृतविशेषस्य दर्शनाद्भवत्यात्मनेपदं यक् च । *इयम्='आरोहयन्ति हस्तिनं हस्तिपकाः' इति कक्ष्या । *व्यावर्त्यभूतेति । अणौ कर्मणो णौ कर्तृत्वविरहेण सा व्यावर्त्यते । *शुद्धे=णिज्रहिते । *यथा कथञ्चिदिति । अवस्थाचतुष्टयस्थले पूर्वोक्तैव रीतिः पञ्चमीत्वपक्षे तु द्वितीयकक्ष्यायां फलसमानाधिकरणो व्यापारोऽर्थः । ततः प्रयोजकव्यापारे णिच् । ततः प्रयोजकव्यापारस्य फलसमानाधिकरणव्यापारस्य च त्यागे चतुर्थी कक्ष्या । ततः फलसमानाधिकरणस्य व्यापारस्यैव प्रयोजकत्वविवक्षया तस्मिन्विवक्षिते पुनर्णिजिति । एतादृशार्थसूचनाय सर्वान्ते हरिणा 'निवृत्तप्रेषणात्' इत्याद्युक्तम् । उदाहरणभूतकक्ष्यायामणावित्यादिवाक्यार्थद्वयसत्त्वमाविष्कर्तुम्भूमिकामाह— *न्यग्भवनेत्यादिना । *अन्यथा=स्वरूपयोग्यतानिश्चयस्यानपेक्षायाम् । प्रतीयते इति कथनेन न्यग्भावनादीनां वाच्यत्वमिति भ्रमः स्यात्तद्वारणायाह—

यप्रतीतिरिति बोद्ध्यम् । *अत्र 'रुहौ शुद्धे प्रतीयते' इत्यनेना*र्थी प्रतीतिर्न तु तद्वाच्यत्वन्तयोरिति सूचयति । तथाहि-ऊर्ध्वदेशावच्छिन्नसंयोगानुकूलव्यापारो रुह्यर्थः । 'रुहिर्गत्यर्थः'इति "यद्धि तु परम्" ( पा० सू० ८-१-५६ ) इत्यत्र भाष्यात् । तदवच्छिन्नसंयोगाश्रयत्वेनैव गजस्य कर्मत्वम् । *अत एवायं कर्तृस्थक्रियः संयोगस्य कर्तर्यपि सत्त्वात् । उपरिगमनस्य व्यग्रभवनं विनाऽसम्भवात् तस्यापि मानसो बोध इति बोध्यम् । यद्वेति । *अत्रापि पक्षे क्रियासाम्यं निवृत्तप्रेषणद्वितीयकक्ष्यामादाय बोध्यम् । *तस्या अप्येत*न्मूलभूतत्वात् । *आधिक्यमात्रव्यवच्छेदे त्वेतत्पक्षीयप्रथमामादायापि तद् बोद्ध्यम् । *अयमपि पक्ष उक्तो हरिणा—

> केषाञ्चिद्देवदत्तादेर्व्यापारो यः सकर्मके ।
> स विना देवदत्तादेः कटादिषु विवक्ष्यते ॥

स यदा प्रयोजककर्तारमन्तरेणापि कर्मणि विवक्ष्यते तदेत्य*स्या-अर्थः ॥

> स्वीकृतप्रेषणं कर्म स्वस्य कर्तुः प्रयोजकम् ।
> प्रेरणान्तरसंबन्धे ण्यन्ते लेनाभिधीयते ॥ इति ।

*प्रेरणास्वीकारे सौकर्यातिशयप्रतीतिः *स्वीकरनम् । प्रेरणान्तरसंबन्धे=कर्तृविषयप्रेरणान्तरसंबन्धे । तेन स्वविषयप्रेरणा सर्वत्र स्वस्मिन्नस्तीति दर्शितम् । *अत्र पक्षे *स्वयंदूती स्पष्टं *निदर्शनम् । आद्यपक्षे आदौ—या दूती साऽपेक्षा, ततस्तदनपेक्षा; साऽपि निदर्शनम् । द्वितीय-

---

*अत्रेत्यादि । *आर्थी=मानसबोधविषयरूपा । *अत एव=ऊर्ध्वदेशावच्छिन्नसंयोगानुकूलव्यापारस्य रुहधात्वर्थत्वादेव । *अत्रापि पक्षे=अध्यारोपितप्रेषणपक्षे । *तस्याः=निवृत्तपक्षीयकक्ष्यायाः । *मूलभूतत्वात्=क्रियासाम्यं यां कक्ष्याम्प्रदर्श्य बोधनीयं सा कक्ष्या तन्मूलभूतेति व्यवहारादिति रीत्या मूलभूतत्वात् । *आधिक्यमात्रेति । अणौ या क्रिया सैव चेदित्यनेनाधिका तदपेक्षया या क्रिया सा व्यवच्छिद्यते न तु न्यूनेति भावः । *अयमपि=यद्वेत्यादिना उक्तो द्वितीयोऽपि । स देवदत्तादेर्विना कटादिषु विवक्ष्यत इत्यन्वयः । *अस्याः=प्रथमकारिकायाः । देवदत्तादिनिष्ठव्यापारस्य कटादिकर्मवृत्तित्वविवक्षायाः फलमाह-*प्रेरणास्वीकार इत्यादि । *अत्र पक्षे=यद्वेत्यादिप्रदर्शितद्वितीयपक्षे । *स्वयन्दूती=स्वकार्यसाधनाय स्वयमेव नायकम्प्रति, गत्वाऽधुना मद्गृहे भवताऽऽगन्तव्यमिति या वक्ति सा । *निदर्शनम्=दृष्टान्तः।

कक्ष्यायां *न तङिति । नन्वेतत्समानार्थान्तर्भावितण्यर्थस्यापि वक्तुं शक्यत्वेन तामादाय क्रियासाम्यमत्रापि । न च *सा ण्यन्तस्य न मूलभूता *तत्तत्कक्ष्यास्थण्यन्तधातुप्रकृतित्वं हि ण्यन्तमूलत्वमिति वाच्यम् । *एवं हि निवृत्तप्रेषणचतुर्थकक्ष्यायां कर्मणः कर्तृत्वमाद्यकक्ष्यामादायोपपाद्यमानमनुपपन्नं स्यात् । तुर्यकक्ष्यायां तत्प्रकृतिकण्यन्तत्वाभावात् । द्वितीयकक्ष्यास्थप्रकृतिकण्यन्तत्वस्यैव तत्र सत्त्वात् । *न च यदर्थकाद्यदर्थकमूलकाद्वा प्रयोगात् कक्ष्यान्तरेऽर्थस्य त्यागो वृद्धिर्वा, सा मूलभूता । अस्ति ह्याद्यकक्ष्यार्थैकदेशस्योदाहरणभूतकक्ष्यायां त्यागः । द्वितीयकक्ष्यार्थैकदेशस्यापि तस्यां त्यागाच्च तस्या अपि मूलत्वं, नैव *प्रकृते इति वाच्यम् । कक्ष्ययोर्मूलमूलिभावस्य सूत्र*भाष्याक्षराद्यनारूढत्वात् । *अन्तर्भावितण्यर्थकक्ष्यास्थधातोर्निवृत्तप्रेषणतां कृत्वा णिचि कृते तत्समानार्थण्यन्तप्रयोगेण तस्या अपि तन्मूलत्वाक्षतेश्च । *तदर्थकमूलका*त्तत्र वृद्धेः

---

*न तङितीति । तदैकस्य व्यापारस्याधिक्यात्समानक्रियत्वाभाव इति भावः । *अन्तर्भावितण्यर्थस्येति । शुद्धरुहधातोरेवोर्ध्वदेशावच्छिन्नसंयोगानुकूलव्यापारानुकूलव्यापारे शक्तिकल्पनयेति शेषः । *सा=अन्तर्भावितण्यर्थपक्षे या दर्शिता । तदेतदुपपादयति–*तत्तत्कक्ष्यास्थेति । *एवं हि=एवम्परिष्कारे हि । परोक्तामनुपपत्तिम्परिष्कृत्य परिहरति–*न चेति । वाच्यमिति परेणान्वयः । कक्षाशब्दः कक्ष्यापर्यायः । कक्षो बाहुमूले । कषधातोः "वृतॄवदिहनिकमिकषिभ्यःसः"(उ०पा०३–सू०३४९)इति सप्रत्ययान्तः।तस्मादाचारेऽर्थे कक्ष इव आचरति या सा कक्षा आचारक्विबन्तादचि टाप् । कक्ष्याशब्दे आचारक्विबन्ताद्बाहुलकात्कर्त्तरि यत् ततष्टाप् । तद्वदाचरणञ्च स यथा प्राणिनोऽवयविन उपकारङ्करोति तद्वदियमवस्था चतुष्टयस्योदाहरणोपपादकस्य घटकतयोपकारङ्करोतीति । *प्रकृते=अन्तर्भावितण्यर्थतायाम् । *भाष्याक्षराद्यनारूढत्वादिति । एवञ्च कक्ष्ययोर्मूलत्वविचारेण समाधानमसङ्गतमिति भावः । *अन्तर्भावितण्यर्थेति । प्रथमकक्ष्यायामेवान्तर्भावितण्यर्थेत्यर्थः । तद्यथा–प्रथमकक्ष्यायामेव चाक्षुषज्ञानविषयत्वानुकूलव्यापारानुकूलव्यापारार्थको यो धातुस्तदर्थघटकव्यापारस्यैकस्य त्यागं कृत्वा ततः परित्यक्तव्यापार एव णिचि कृते यो धातुर्दर्शयेति तस्य 'दर्शयति भव' इत्यत्र प्रयोगेणेत्यर्थः । *तदर्थमूलकादिति । प्रथमकक्ष्यास्थधात्वर्थमूलकाद्यो मध्ये निवृत्तप्रेषणको धातुः कल्प्यते तदर्थादित्यर्थः । *तत्र=द्वितीयकक्ष्यायाम् । एवं ह्यत्र क्रमः प्रथमकक्ष्यायाञ्चाक्षुषज्ञानविषयत्वानुकूलव्यापारानुकूलव्यापारैकदेशस्य द्वितीयव्यापारस्य त्यागेन चाक्षुषज्ञानविषयत्वानुकूलव्यापाररूपेऽर्थे पश्यन्ति भवम्भक्ता इति प्रयोगस्ततो यः परित्यक्तो भवनिष्ठो व्यापारश्चाक्षुषज्ञानविषयत्वानुकूलव्यापारस्य प्रयोजको व्यापारस्तत्रैव णि-

सत्त्वादिति चेन्न । *गमकं विनाऽन्तर्भावितण्यर्थताया अभावात् । *अणाविति किम् ? । *निवृत्तप्रेषणपक्षीयतृतीयकक्ष्यास्थकर्मणो हेतुत्वारोपेण द्वितीयहेतुमण्णौ 'दर्शयति भवो भक्तैः' इत्यत्रैव माभूदिति*कर्मनिष्ठप्रयोजकव्यापारश्च ज्ञानविषयीभवनमेवेति दिक् ।

*मध्वपाययत स्वच्छं सोत्पलं दयितान्तिके ।

---

चि 'दर्शयति भव' इति प्रयोगः । ततो द्वयोरपि व्यापारयोस्त्यागे चाक्षुषज्ञानविषयतामात्रेऽर्थे णिजन्तस्य लक्षणां स्वीकृत्य 'दर्शयते भवः' इति प्रयोगस्तत्राणौ प्रथमकक्ष्यायां या क्रिया ततो न्यूना यद्यप्यस्ति तथाप्यधिका नास्ति नियमेन सैव चेदित्यनेन व्यावृत्तिस्तु तत्र वक्तुमशक्या । आधिक्यमात्रव्यवच्छेदे तात्पर्यमित्युक्तत्वात् । अणौ कर्मकारकस्य भवस्य तत्र कर्तृत्वाच्च भवत्यात्मनेपदमिति । एतादृशस्थले द्वितीयकक्ष्यायामात्मनेपदस्य शङ्कयन्द्वितीयकक्ष्यायामपि प्रथमकक्ष्यायां या क्रिया सैवास्ति न ततोऽधिका न्यूना वा । अणौ कर्मकारकस्य कर्तृत्वञ्चास्तीतिसमाधत्ते-*गमकं विनेति । एवञ्च प्रकृते तादृशगमकस्यादर्शनेन द्वयोर्मध्ये एकस्य त्यागं कृत्वा परित्यक्तव्यापार एव णिजिति निर्वक्तुमशक्यमिति भावः । *अणाविति किमिति । कर्म णौ चेदित्येव द्वितीयं वाक्यमस्तु । यत्किञ्चित्क्रियानिरूपितकर्मत्वं विवक्षितम् । कर्मशब्दश्च क्रियापर एव । एवञ्च स्वमूलभूतकक्ष्यायां या क्रिया प्रतीयते सैव चेत् ण्यन्तेनोच्येतेत्यर्थोऽस्त्विति भावः । *निवृत्तप्रेषणेत्यादि । अत्रेदम्बोध्यम्-चाक्षुषज्ञानविषयत्वानुकूलव्यापाररूपेऽर्थे 'पश्यन्ति भवम्भक्ताः' इति प्रथमकक्ष्या । ततो व्यापारस्य त्यागेन चाक्षुषज्ञानविषयत्वमात्रस्य धात्वर्थत्वविवक्षया 'पश्यति भव' इति द्वितीया । ततः परित्यक्तव्यापारे ज्ञानविषयीभवनानुकूलत्वेन विवक्षिते णिचि 'दर्शयन्ति भवम्भक्ता' इति तृतीया । ततः कर्मणो भवस्यैव प्रयोजकत्वविवक्षया तदीयव्यापारे विषयीभवनरूपे द्वितीयणिचि 'दर्शयति भवो भक्तैः' इति तुरीया कक्ष्या, तत्र तुरीयकक्ष्यायां मा भूदिति । यस्य भवनिष्ठव्यापारस्य प्रयोजकत्वविवक्षा तं व्यापारन्दर्शयति-*कर्मनिष्ठेत्यादिना । अणावित्युपादाने चाणौ प्रथमकक्ष्यायां ज्ञानविषयत्वमात्रस्य सत्त्वन्न तु ज्ञानविषयीभवनस्येत्याधिक्यसत्त्वान्नात्मनेपदमिति भावः । न च ज्ञानविषयीभवनानुकूलव्यापारस्य यत्र प्रथमकक्ष्यायां विवक्षा तत्रातिप्रसङ्गो दुर्वार इति वाच्यम् । अणौ या क्रियेत्यस्याण्यन्तावस्थास्थधातुजन्यबोधीयक्रियानिष्ठा यावद्विषयतास्ताभिरतिरिक्तविषयता यत्र तज्जन्यबोधीया नास्ति तत्र ण्यन्तादात्मनेपदमित्यर्थात् । न ह्येवं पूर्वोक्तविवक्षायामस्ति । ज्ञानविषयीभवनस्य द्वेधा भानादिति बोध्यम् । ननु भट्टिप्रयोगे 'मध्वपाययत' इत्यत्रात्मनेपदं दृश्यते तत्रात्मानमित्यस्य कर्मत्वदर्शनेन तस्य कर्मत्वोपपत्त्यर्थं क्रियाधिक्यं स्वीकार्यमिति कथमात्मनेपदमित्याशङ्कायामाह-*मध्वपाययतेत्यादि । ईदृशम्मधु स्वच्छं सोत्पलं सुरताभोगः=सु-

आत्मानं सुरताभोगविश्रम्भोत्पादनं मुहुः ॥

इति भट्टिश्लोके आत्मानं सुरताभोगविश्रम्भोत्पादनं दर्शयित्वेति शेषः । स मधु पिबति मध्वपाययतेत्यर्थादनेनैवात्मनेपदम् । ध्वनितञ्चेदं जयमङ्गलायाम् । *करेणुरारोहयतेऽनिषादिनमित्यत्रेवात्रापि "णिचश्च" (पा० सू० १-३-७४) इत्येवात्मनेपदमित्यन्ये । स्मरयतीति । मित्वाद्ध्रस्वः* । *अपरे तु "कर्तरि कर्मव्यतिहारे" ( पा० सू० १-३-१४ ) इति सूत्रे "क्रियाग्रहणं कर्त्तव्यम्" इति सूत्रकारशिक्षां कुर्वतो वार्तिककृतः कर्मपदस्य क्रियापरत्वं नाभिप्रेतमित्यण्यन्तस्य यत्कर्म यदा ण्यन्ते तदेव कर्म भवति तदा आत्मनेपदमित्यु*पक्रमवार्तिकस्थकर्मशब्दस्य क्रियापरत्वेन व्याख्यानं न युक्तमित्यु*भयत्रापि कर्मशब्दः कारकपर एव । *अत एव तद्व्याख्यानभाष्ये-

---

रतविमर्दस्तस्मिन्यो विश्रम्भो=विश्वासस्तस्य यदुत्पादनन्तत्र समर्थमात्मानं दयितस्य=कामुकस्यान्तिके=समीपे दर्शयित्वाऽपाययत इत्यन्वयः । ईदृशं यत् पूर्वश्लोकेनोक्तं रक्षसां गणः सुरामलमुपाभुङ्क्ताभ्याहृतवान् तत् । दर्शयित्वेत्यस्याध्याहारे सत्यात्मानमित्यस्य दर्शनक्रियानिरूपितकर्मत्वन्न तु पानक्रियानिरूपितामिति फलाधिक्यमात्मनः कर्मत्वोपपत्तये न कार्यमित्यणौ या क्रिया सैव ण्यन्तेनोच्यते कर्मणो मधुन एवाणौ तथात्वेऽपीदानीं णौ कर्तृत्वञ्चास्तीति भवति प्रकृतसूत्रेणात्मनेपदम् । 'सः मधु पिबति' इति प्रथमकक्ष्या । ततः कर्म मधु पिबन्तं रक्षोगणं प्रेरयति इत्यर्थे णिचि तमपाययत इति द्वितीया कक्ष्या। ततः सौकर्यविवक्षया द्वयोरपि प्रकृत्यर्थणिजर्थव्यापारयोस्त्यागे मध्वपाययतेत्येवमनेनैवात्मनेपदमिति भावः । उत्पादनमित्यत्र ण्यन्तात्पदेः "कृत्यल्युटो बहुलम्" ( पा० सू० ३-३-११३ ) इति कर्त्तरि ल्युट् । उदाहरणभूतकक्ष्यायान्दर्शनविशिष्टस्पानन्धात्वर्थो विवक्षित इत्यणौ या क्रिया तदधिकाऽस्तीति नानेन सूत्रेणात्मनेपदाङ्किन्तु "णिचश्च" ( पा० सू० १-३-७४ ) इत्यनेनेत्याशयेनाह—*करेणुरित्यादि । *मित्वाद्ध्रस्व इति । 'स्मृ' आध्याने इति घटादौ पाठेन मित्त्वाद्ध्रस्व इत्यर्थः । एवञ्च व्यसम्मतां व्याख्याम्प्रदर्श्य भाष्यानुसारिमतमाह—*अपरे त्विति।*उपक्रमवार्त्तिकस्थेति । "णेरात्मनेपदविधानेऽण्यन्तस्य कर्मणस्तत्रोपलब्धिः" (का०वा) इति हि तत्रवार्त्तिकम् । तद्व्याख्या=अणौ यत्कर्म यदा ण्यन्ते तदेव कर्म भवतीति । *उभयत्रापीति । "कर्मवत्कर्मणा" (पा०सू०३-१-८७) इति सूत्रे प्रकृतसूत्रे चेत्यर्थः। एवञ्च "कर्त्तरि कर्म" (पा०सू०१-३-१४) इति सूत्रदृष्टान्तेन क्रियापरत्वेन व्याख्यानन्न युक्तं प्रकृतसूत्रे । *अत एव=कर्मशब्दस्य कर्मकारकपरत्वादेव। नन्वेवमणौ कर्मणो णौ कर्तृत्वन्तृतीयवाक्येन प्रतिपाद्यमानं विरुध्येतेत्यत आ-

ऽपि कर्मशब्दप्रयोग एव कृतो न क्रियाशब्दप्रयोगः । नापि कर्मवद्भाव इवात्र सकर्मकाणां प्रतिषेधो वार्तिककृतोक्तः।*तत्र द्वितीयवाक्येनाणौ यत्कर्म णौ चेत्तदेव कर्मेति *कर्मान्तरनिवृत्तिः प्रतिपाद्यते न त्वणौ(१)कर्मत्वम् । उत्तरवाक्येन तस्य कर्तृत्वप्रतिपादनात् । एकस्यैकस्यां क्रियायामुभयरूपत्वासम्भवात् । न च 'दर्शयते भृत्यान् राजा' इति भाष्योदाहरणविरोधो *भृत्यरूपकर्मणः सत्त्वादिति वाच्यम् । एतद्भाष्योदाहरणप्रामाण्यादणौ *ये कर्तृकर्मणी तद्भिन्नकर्मव्युदासे तात्पर्यात् । *"कर्त्तरि कर्म" ( पा० सू० १-३-१४ ) इत्यतः कर्तृग्रहणमनुवर्त्य प्रथमया विपरिणमय्य यच्च यश्च यदित्ये*कशेषेणायमर्थो लब्धः । *कर्मान्तरनिवर्तकवाक्यफलन्तु 'आरोहन्ति हस्तिनं हस्तिपकाः' 'आरोहयमाणो हस्ती स्थलमारोहयति मनुष्यान्'इति भाष्योक्तम् । *तत्र हि स्थलमाधिकं कर्म तस्य मूलभूताऽण्यन्तावस्था मनुष्या हस्तिनमारोहन्तीत्येव सौकर्यातिशयप्रतिपादनाय *प्रेरणावृद्धिवत्तत्प्रतिपादनायैव फलांशवृद्ध्या द्विकर्मत्वम् । *अत्रोर्ध्वदेशतत्स्थवस्तु एतदुभयसंयोगानुकूलो व्यापारो *धात्वर्थः । स्थलशब्देन गजपृष्ठस्थं काष्ठादिमयमुपवेशनस्थानमुच्यते । गजोर्ध्वदेशसंयोगानुकूलव्यापारेण तन्न्यग्भवनरूपेण तत्स्थवस्तुसंयोगोऽपि जात इति

---

ह-* तत्र द्वितीयवाक्येनेति । तत्र=कर्मशब्दस्य कर्मकारकपरत्वे । *कर्मान्तरनिवृत्तिरिति । अणौ यत्कर्म तदतिरिक्तङ्कर्म न चेदित्येवङ्कर्मान्तरनिवृत्तिरित्यर्थः । *भृत्यरूपकर्मण इति । 'भृत्या राजानम्पश्यन्ति' इति प्रथमकक्ष्यायाम्भृत्यानाङ्कर्तृत्वन्तेषां ण्यन्तावस्थायाङ्कर्मत्वेनाणौ यत्कर्म तदतिरिक्तकर्मणो विद्यमानत्वाद्विरोधः । *ये कर्तृकर्मणी इति । एवञ्च भृत्यानान्तदानीङ्कर्तृत्वेनोभाभ्यामतिरिक्तङ्कर्म नास्तीति न विरोध इति भावः । नन्वेवङ्कर्मशब्दस्य तन्मते लक्षणापत्तिः, पूर्वमते तु 'क्रियाऽपि कृत्रिमं कर्म' इति न लक्षणेत्यत आह—*कर्त्तरि कर्मेत्यत इति । *एकशेषेणेति । "नपुंसकमनपुंसकेन" पा० सू० १-२-६९ ) इतिसूत्रेणैकशेषेणेत्यर्थः । कर्मान्तरनिवृत्तेः फलमाह-*कर्मान्तरेति । *तत्र हि='स्थलमारोहयति' इत्यत्र हि । *प्रेरणावृद्धिवदिति । यथाऽध्यारोपितप्रेषणपक्षे प्रेरणा वृद्धिः पूर्वमते प्रतिपादिता तद्वत् । *अत्र='स्थलमारोहयति मनुष्यान्' इत्यत्र । *धात्वर्थः=प्रकृत्यर्थः । नन्वेतादृशस्य धात्वर्थत्वे प्रथमत 'आरोहन्ति हस्तिनं हस्तिपकाः' इत्येव भाष्ये दर्शितत्र तु स्थलमपि कर्मेति न्यूनता प्राप्नोतीत्यत आ-

---

(१)'नत्वणौ कर्मणो णौ कर्तृत्वं प्रतिपाद्यते' इति बृहच्छेखरे पाठः ।

सौकर्यातिशयोऽत्र बोद्धव्यः । *आरोहन्ति हस्तिनं हस्तिपका इत्येषा त्वारोहयमाण *इत्यस्यैव मूलभूता । *आरोहयमाण इत्यन्तं सूत्रोदाहरणप्रदर्शनं दृष्टान्तार्थम् । यथा तत्रानेनात्मनेपदं तथाऽत्रापि स्यादिति तदाशयः । *किं चास्योदाहरणस्य *न मनुष्याः स्थलमारोहन्तीति मूलकक्ष्या । नापि तत्स्थलमारोहयतीति स्थलं कर्तृ; आरोहयमाणो हस्तीति शानजन्तप्रयोगेण मनुष्यकर्मकारोहणे स्वरसतो *हस्तिन एव कर्तृत्वप्रतीतेः । *शतृशानजाद्यन्तार्थानां स्वभावतः क्रियान्तरसाकाङ्क्षत्वात् । *क्रियान्तरस्य चानुपस्थितेः । एवञ्च त्वद्रीत्या मूलकक्ष्यानिरूपणेऽणौ कर्मणो णौ कर्तृत्वाभावादप्राप्तेः *प्रत्युदाहरणासङ्गतिः।*तव हस्तीत्यन्तस्य शुद्धदृष्टान्तार्थत्वे तु *तिङन्तमेवोच्चारयेत् । *किं च कर्मपदस्य क्रियापरत्वे समानाक्रि-

---

ह—*आरोहन्तीत्यादि । *इत्यस्यैव मूलभूतेति । एवञ्च यत्प्रत्युदाहरणत्वेनाभिप्रेतमस्य सा कक्ष्या मूलभूता न भवतीति न न्यूनतेति भावः । तत्प्रदर्शनवैयर्थ्यशङ्कां वारयति—*आरोहयमाणेत्यादिना । तस्य दृष्टान्तार्थमेवोपादानमित्येतद्विशदयति—*किञ्चास्योदाहरणस्येति । कर्मशब्दस्य क्रियापरत्ववादिना 'मनुष्याः स्थलमारोहन्ति' इति प्रथमकक्ष्या न्यग्भवनानुकूलो यो मनुष्यनिष्ठो व्यापारस्तद्बोधतात्पर्यिका वाच्या । ततः सौकर्यविवक्षया कर्मणोऽपि स्थलस्य कर्तृत्वविवक्षया यत्र यः कश्चन विलक्षणो न्यग्भवनसमानाधिकरणो व्यापारस्तस्य मनुष्यनिष्ठव्यापारजनकत्वविवक्षया 'मनुष्यान् स्थलमारोहयति' इति प्रयोगो यत्र तत्रात्मनेपदव्यावृत्तिपरत्वमस्य भाष्यग्रन्थस्येति वाच्यन्तन्न युक्तमित्याह—*न मनुष्या इत्यादिना । स्थलनिष्ठायाः क्रियाया अधिकायाः प्रतीत्याऽणौ या क्रिया तदधिकायाः प्रतीत्या द्वितीयवाक्यार्थाभावेन नात्मनेपदमिति भवता वाच्यन्तन्न सम्भवति हस्तिन एव स्वरसतः कर्तृत्वस्य प्रतीतेरिति भावः । *हस्तिन एव कर्तृत्वप्रतीतेः=मध्यमणिन्यायेन हस्तीत्यनेन पूर्वोच्चारितवाक्यार्थे परोच्चारितवाक्यार्थे च कर्तृत्वप्रतीतेः । हस्तिन एवेत्येवकारेण स्थलस्य कर्तृत्वं व्यवच्छिद्यते । तदेतदुपपादयति—*शतृशानजेति । यथा कुर्वन् कुर्वाणो वा सृष्टिं हरिर्विजयत इत्यत्र शतृशानच्प्रत्ययार्थकर्तुर्हरेर्विजयत इत्यत्र कर्तृत्वम्प्रतीयते तथा सर्वत्र प्रतीतिः शब्दशक्तिस्वभावतो भवतीति भावः । *क्रियान्तरस्य=आरोहणातिरिक्तक्रियायाः । *प्रत्युदाहरणासङ्गतिरिति । तृतीयवाक्यार्थाभावेनैतद्व्यावृत्तिलाभाद्द्वितीयवाक्यार्थघटकैवकारस्यवच्छेद्यत्वमस्य न सम्भवतीति भावः । ननु नारोहयमाणो हस्तीति वाक्यार्थघटकस्य हस्तिनः कर्तृत्वप्रतिपादने आरोहयमाणो हस्तीति वाक्योच्चारणतात्पर्यङ्किन्तु शुद्धदृष्टान्तार्थन्द्वितीयवाक्यार्थे कर्तृत्वं स्थलस्यैव विवक्षितमित्यत आह—*तव हस्तीति । *तिङन्तमेवेति । तिङ्संज्ञकात्मनेपदस्य व्यावर्त्यत्वेनैतत्तुल्यतया तिङन्तमेवोच्चार-

यत्त्वप्रदर्शनाय द्वितीयकक्ष्याप्युदाहर्त्तुमुचिता। कर्मणः कर्तृत्वबोधनाय प्रथमकक्ष्यावदिति तदनुक्त्वा कारकपरत्वमेवाभिप्रेतं लक्ष्यते। *एवं प्रथमप्रघट्टकेन। *कर्मकाणामेवैतदुदाहरणत्वं मन्यमानेन सकर्मकाणां प्रतिषेधस्य सूत्रकृताऽनुक्तत्वेन सूत्ररीत्या तेष्वपि कर्मवद्भावप्रवृत्तिं मन्यमानेन वा *ऽऽचार्यदेशीयेन कर्मकर्तृत्वात्सिद्धमित्युक्ते* अनाध्याने इति प्रतिषेधस्य प्रतिषेध्यसमर्पणायेदमि*त्याशङ्क्याध्यानार्थकानां *कर्तृस्थभावकत्वात्तत्र कर्मवद्भावस्यैवाप्राप्तेर्निषेधे न फलमित्यन्तेन मध्यमप्रघट्टकेन सूत्रवैयर्थ्ये आचार्यदेशीयेन शङ्किते *यथा तवाध्यानविषये कर्तृस्थभावकत्वा-

---

येदित्यर्थः। कर्मशब्दस्य क्रियापरत्ववादिमते भाष्यग्रन्थे न्यूनतापत्तिरित्याह—*किञ्च कर्मपदस्येति। एवकारबोध्यस्याभावस्य ज्ञानस्प्रतियोगिज्ञानजन्यमिति तत्सम्पादनाय द्वितीयकक्षोदाहर्त्तुमुचितेति भावः। *एवमिति। अस्य इति सूचितमिति परेणान्वयः। *अकर्मकाणामेवैतदिति। अधिकव्यवच्छेदफलकस्य समानक्रियत्वस्य तत्रैव सम्भवादिति भावः। *आचार्यदेशीयेनेति। यद्यपि "तर्त्तर्हि वक्तव्यन्न वक्तव्यम्" इत्यादिना समानक्रियत्वांशाभावप्रदर्शनपरवाक्योच्चारणेन समाधानार्थस्प्रवृत्त्या स आचार्यस्तथापि साक्षाद्याधिका क्रिया सैव स्पष्टप्रतिपत्तये प्रदर्शनीया सा न प्रदर्शिता किन्तु सकर्मकोदाहरणमेव दर्शितमतोऽयमाचार्यदेशीय इति भावः। *इत्युक्ते=परेणैवमुक्ते। कर्मकर्तृत्वात्सिद्धम्=कर्मण एव कर्तृत्वे "कर्मवत्कर्मणा तुल्यक्रियः" (पा० सू० ३-१-८७) इत्यनेन सिद्धम्। कर्मवद्भावातिदेशे "भावकर्मणोः" (पा० सू० १-३-१३) इत्यनेनात्मनेपदम्भविष्यतीति भावः। *इत्याशङ्क्येति। इदन्तर्हि प्रयोजनम् "अनाध्यान इति वक्ष्यामि। इह मा भूत्—स्मरति वनगुल्मस्य कोकिलः स्मरयत्येनं वनगुल्मः स्वयमेवेति" इत्येननाशङ्क्येत्यर्थः। *कर्तृस्थभावकत्वादिति। कर्मणि क्रियाकृतविशेषानुपलम्भादयन्न कर्मस्थक्रियः। नन्वत्र "अधीगर्थ" (पा० सू० २-३-५२) इति सूत्रेण कर्मणः शेषत्वविवक्षया वनगुल्मस्येति षष्ठी वाच्या। एवञ्च कर्मण एवाभावेनाणौ यत्कर्मकारकमित्यंशाभावात्कथमात्मनेपदप्राप्तिरिति चेन्न। सूत्रस्थकर्मशब्दस्य फलाश्रयमात्रपरत्वात्। न च "कर्मवद्भावात्सिद्धम्" इति भाष्यग्रन्थस्याकर्मकाण्येवोदाहरणानीति मत्वा प्रवृत्तेरत्रैनमित्यस्य कर्मवाचकस्योपादानेन नायमकर्मक इति कथमियमाशङ्केति वाच्यम्। कर्मबोधकपदाघटिते 'स्मरयति वनगुल्म' इत्यत्र तात्पर्यात्। यद्यपि "गतिबुद्धि" (पा० सू० १-४-५२) इतिसूत्रे ज्ञानसामान्यस्यैव बुद्धिपदेन ग्रहणन्न तु ज्ञानत्वन्यूनवृत्तिधर्मावच्छिन्नवाचकस्येति स्मरयतियोगे नाण्यन्तकर्तुः कर्मत्वप्राप्तिरित्येनमित्यस्यानुपपत्तिस्तथापि तत्र सूत्रे आध्यानार्थस्मरयतेरप्येतद्भाष्यबलाद् ग्रहणमिति तात्पर्यम्। यथा तव तत्र कर्मवद्भावस्याप्राप्तेर्निषेधवैयर्थ्यन्तथा ममापि तेनात्मनेपदाप्राप्तेरात्मनेपदासिद्ध्यर्थमिदं सूत्रमित्याह—*य-

दप्राप्तेर्निषेधवैयर्थ्यं तथा कर्मवद्भावाप्राप्तियोग्ये विषये आत्मनेपदार्थं सूत्रमित्याशयेनाचार्येणैतदेव ज्ञापयति भवत्येवंजातीयकानामात्मनेपदमिति विध्यर्थमिदमिति तृतीयप्रघट्टके सिद्धान्तितम्। तत्र एवंजातीयकानामित्यस्य कर्तृस्थभावकजातीयानामित्यर्थः* । तज्जातीयत्वं च कर्मवद्भावाप्राप्तियोग्यत्वेन । एवञ्च कर्तृस्थभावक्रियवत् *सकर्मकाण्यप्यस्योदाहरणानीति ध्वनयतोदाहृतं *'दर्शयते भृत्यान् राजा' इति । *अत एव *द्वितीयपक्षव्युत्पादकहरि*कारिकयोः प्रेरणावृद्धिप्रदर्शनवत्प्रेरणाद्वयत्यागविषयोदाहरणकक्ष्याप्रदर्शनं न कृतमाद्यपक्ष इव *तेन*तत्र द्वितीयकक्ष्याप्युदाहर-

---

था तवेत्यादि । *इत्यर्थ इति । प्रकारवचनार्थकजातीयर्प्रत्ययस्योपादानात् तज्जातीयत्वमित्यर्थः । *सकर्मकाण्यप्यस्येति । कर्मवद्भावस्य तु तत्र निवर्त्तनादिति भावः । *दर्शयते भृत्यान् राजेति । 'भृत्या राजानम्पश्यन्ति' 'भृत्यान् राजा दर्शयते' । अत्र प्रथमकक्ष्यायाश्चाक्षुषज्ञानविषयत्वानुकूलव्यापारोऽर्थः । ततो दृश्धातोस्तादृशव्यापारानुकूले व्यापारे णिच् । अत्र सकर्मकत्वकर्मस्थक्रियकत्वाभावौ स्पष्टावेव । कर्तृस्थभावक्रियवदिति । अपरिस्पन्दनसाधनसाध्यो धात्वर्थो=भावः । सपरिस्पन्दनसाधनसाध्यो धात्वर्थः=क्रिया । परिस्पन्दनम्=शरीरव्यापारः । दृश्धात्वर्थे दर्शनेऽपरिस्पन्दनसाधनसाध्यत्वं स्पष्टमेव । *अत एव=प्रकृतसूत्रस्थकर्मशब्दस्य कर्मकारकपरत्वादेव । *द्वितीयपक्षेति । अध्यारोपितप्रेषणपक्षेत्यर्थः । *कारिकयोः=केषाञ्चिद्देवदत्तादेरित्यादिनोक्तकारिकयोः । न च तयोः कारिकयोराद्यकारिकायां देवदत्तादेर्यो व्यापारस्स देवदत्तादेर्विना कटादिषु विवक्ष्यते इत्यनेन व्यापारस्यैव विवक्षाऽविवक्षे दर्शिते इति कर्मशब्दस्य क्रियापरत्वमेव तदभिमतमिति प्रतीयत इति वाच्यम् । देवदत्तादेर्यो व्यापारः प्रधानीभूतः स यदा कटादिषु विवक्ष्यत इत्यनेन प्रथमकक्ष्यायामप्रधानीभूतधात्वर्थाश्रयत्वन्देवदत्तस्य स्थितं यत्तद्देवदत्तं विनापि कटादिषु विवक्षितन्तदा कट एव प्रधानीभूतधात्वर्थाश्रयो भवति न तु देवदत्त इत्येतत्प्रदर्शनन्देवदत्तस्य कर्तृत्वाभावप्रदर्शनतात्पर्यकमेव न तु कर्मशब्दस्य क्रियापरत्वाभिप्रायकमत एवैतदुदाहरणदिक्प्रदर्शनाय द्वितीयकारिकया 'स्वीकृतप्रेषणङ्कर्म स्वस्य कर्तुः प्रयोजकम्'इत्यनेन तस्य प्राधान्यमेव दर्शितमित्यभिप्रायात् । *तेन=सूत्रस्थकर्मशब्दस्य कर्मकारकपरत्वेन । *तत्र=तस्मिन्पक्षे । सूत्रार्थप्रदर्शनपरभाष्ये द्वितीयकक्ष्याप्युदाहरणमिति सूचितम् । अत्रेदम्बोध्यम्-कर्मशब्दस्य क्रियापरत्वमिति मते "णेरणौ" ( पा० सू० १-३-६७ ) इति सूत्रस्योदाहरणस्थले सूत्राभावेऽप्यात्मनेपदङ्कर्मवद्भावात्सिद्धम् । दृशधातोश्चाक्षुषज्ञानविषयत्वानुकूलव्यापारे रुहधातोश्च न्यग्भवनानुकूलव्यापारे शक्तेः 'पच्यते ओदनः स्वयमेव'इत्यत्र यथा पचधातोर्विक्लित्तिमात्रपरत्वे कर्मस्थया क्रियया तुल्यस्वसत्त्वादात्मनेपदञ्जायते तथा प्रकृतसूत्रोदाहरणस्थले 'दर्शयते

भवः' इत्यत्र णिजन्तस्य चाक्षुषज्ञानविषयत्वमात्रार्थकत्वे 'आरोहयते हस्ती' इत्यत्रापि रोहेर्ण्यर्गभवनमात्रपरत्वे कर्मस्थया क्रियया तुल्यक्रियत्वसत्त्वात्। न चात्मनेपदमेव न तु यक्चिणाविति नियमार्थमेव सूत्रमस्तु, अन्यथा कर्मवद्भावात्तावपि स्यातामिति वाच्यम्, यक्चिणोः प्रतिषेधे "णिश्रन्थिग्रन्थिब्रूञात्मनेपदाऽकर्मकाणामुपसङ्ख्यानम्" (का० वा०) इति वार्त्तिकेन तयोर्निषेधादेव सिद्धेः। न च-यत्र क्रिया कर्मस्था तत्र कर्मवद्भाव इष्यते, कर्मस्थत्वञ्च यत्र कर्मणि क्रियाकृतो विशेषो दृश्यते तत्र कल्प्यते-यथा 'पच्यते ओदनः' इत्यत्र, तत्र पक्वापक्वतण्डुलयोर्विशेषस्य दर्शनात्; प्रकृते तु न तथा दृष्टादृष्टभवे विशेषानुपलम्भादिति वाच्यम्। पच्धात्वर्थक्रियाकृतस्य श्रमादिरूपस्य विशेषस्य कर्त्तर्यपि सत्त्वेन पच्धातोः कर्तृस्थक्रियकत्वापत्तेः चिन्तयत्यादीनां कर्तृस्थभावकत्वाभावापत्तेश्च। न हि कर्त्तरि क्रियाकृतो विशेष उपलभ्यते। तस्मादत्र व्यवस्था न विशेषदर्शनमात्रेण किन्तु फलताव्यापारजन्यतान्यतरावच्छेदकसम्बन्धेन कर्तृकर्मवृत्तिफलन्धातुना प्रतिपाद्यते यत्र तत्र स धातुः कर्तृस्थभावक इति व्यवहारः। यथा-'पश्यति घटं,' 'ग्रामं गच्छति' इत्यादौ। अत्र हि फलं दृशधातुप्रतिपाद्यश्चाक्षुषज्ञानविषयत्वानुकूलव्यापारस्य धात्वर्थत्ववादिमते चाक्षुषज्ञानविषयतैव सा फलतावच्छेदकस्वरूपसम्बन्धेन कर्मणि स्वप्रयोजकज्ञानवत्त्वसम्बन्धेन कर्त्तरि चास्तीत्ययन्धातुः कर्तृस्थभावकः। चाक्षुषज्ञानानुकूलव्यापारस्य धात्वर्थत्ववादिमते तु फलतावच्छेदकविषयतासम्बन्धेन कर्मणि व्यापारजन्यतावच्छेदकसमवायसम्बन्धेन कर्त्तरि चास्तीति। गम्धात्वादिगत्यर्थकधातुस्थले संयोगरूपम्फलमनुयोगितारूपफलतावच्छेदकसम्बन्धेन ग्रामादिकर्मणि व्यापारजन्यतावच्छेदकसमवायसम्बन्धेन कर्त्तरि चास्ति। एवं 'देवदत्तमुपहसति' इत्यत्रापि बोध्यम्। तत्रापि हस्धात्वर्थ इच्छानुकूलव्यापारस्तत्रेच्छारूपम्फलं स्वप्रयोज्यदुःखवत्त्वसम्बन्धेन कर्मणि व्यापारजन्यतावच्छेदकसमवायसम्बन्धेन कर्त्तरि चास्तीति। एवमेवान्यत्र कर्तृस्थभावकत्वस्य यथायथमुपपत्तिः कार्या। यत्र तु कर्त्रवृत्तिधर्मरूपम्फलन्धातुना प्रतिपाद्यते स धातुः कर्मस्थभावकः। यथा-'भिनत्ति' 'पचति' इत्यादौ। आद्ये द्विधाभवनं द्वितीये विक्लित्तिः फलन्तच्च कर्त्रवृत्तीति स्पष्टमेव। अत एव "कर्मवत्कर्मणा तुल्यक्रियः" (पा० सू०३-१-८७) इति सूत्रभाष्ये उक्तं "न च कर्तृस्थभावकानाङ्कर्मणि क्रियायाः प्रवृत्तिरस्ति" इति। तेषां धातूनां वाच्यायाः क्रियायाः कर्ममात्रे प्रवृत्तिर्नास्तीत्यर्थः। तदुक्तं हरिणा—

"विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता॥
क्रियाव्यवस्था त्वन्येषां शब्दैरेव प्रकल्पिता"॥ इति

एतत्कारिकापूर्वार्द्धोक्तार्थे पूर्वोक्तामनुपपत्तिम्परिचिन्त्योत्तरार्द्धेनान्येषाम्मते शब्दैरेव क्रियाव्यवस्था प्रकल्पितेति तेनोक्तम्। शब्दश्चानुपदमुक्तो ज्ञातव्यः। न च पूर्वोक्तरीत्या दृश्धातोः कर्तृस्थभावकत्वात् "यद्येवङ्कर्मकर्त्ताऽयम्भवति तत्र कर्मकर्तृत्वात्सिद्धम्" इति भाष्यग्रन्थासङ्गतिरिति वाच्यम्। "णे-

णमिति सूचितम् । *किं च 'गभीरायां नद्याम्' इत्यादौ गभीरनदीतीरबोधेन लक्षणातात्पर्यग्राहकतया गभीरादिपदसार्थक्यवदिह कर्मपदस्य णिचश्च सार्थक्यमन्वयो वा नोपपादयितुं शक्यः । न च कर्मपदणिज्घटितस्य तद्रहिते*स्वार्थसम्बन्धे लक्षणेति दोषः, अत एव णिच्स्थितिरिति वाच्यम् । प्रेरणारूपेऽर्थे शास्त्रेण साधुतया बोधितस्यान्यार्थे लक्षणयाऽपि साधुत्वस्य *वक्तुमशक्यत्वात् । *तस्मादर्शनाविषयीभवनसमाना-

रणौ" ( पा० सू० १-३-३७ ) इति सूत्रोदाहरणभूतकक्ष्यायां व्यापारस्य वाच्यत्वाभावेन व्यापारघटितस्योक्तशब्देन कर्तृस्थभावकत्वस्योपपादनासम्भवात् । ननु 'यद्येवम्' इति भाष्यग्रन्थेन कृता शङ्का "कर्मवत्कर्मणा" ( पा० सू० ३-१-८७ ) इति सूत्रस्थभाष्योक्तरीत्या न सङ्गच्छते । तत्र हि "कर्मवदकर्मकाणाङ्कर्ता कर्मवद्भवतीति वक्तव्यम् । किम्प्रयोजनम् ? । भिद्यमानः कुसूलः पात्राणि भिनत्तीति । अत्र भिद्धात्वर्थफलन्द्विधाभवनन्तच्च कुसूले पात्रे चास्तीति प्राप्नोति । तथा समानधाताविति वक्तव्यम् । इह मा भूत् । पचत्योदनन्देवदत्तः । राध्यत्योदनः स्वयमेव" इति प्रतिपादितम् । एवञ्च प्रकृतसूत्रोदाहरणस्थले समानधातुत्वाभावो णिचः सत्त्वासत्त्वाभ्यामस्तीति चेन्न । 'लुनाति केदारन्देवदत्तः । लावयते केदारः स्वयमेवेतिवदुपपत्तेः । तत्र यथा प्रथमा लुनाति केदारन्देवदत्तः' इति कक्ष्या । ततो 'लुनन्तन्देवदत्तङ्केदारः प्रयुङ्क्ते' इति विवक्षया लावयति केदारो देवदत्तेन' इति द्वितीया कक्ष्या । ततः प्रयोज्यप्रयोजकभावाविवक्षायां 'लावयते केदारः स्वयमेव' इति तृतीया कक्ष्या । तत्र यथा न्यूनक्रियासत्त्वेऽपि व्यवच्छेद्याया अधिकक्रियाया अभावाद्भवति तथा प्रकृतेऽपि स्यादिति । कर्मशब्दस्य कारकपरत्वमेवेति मते सकर्मकाणामेवोदाहरणत्वेन तत्र कर्मवद्भावो न भवतीति प्रागुपपादितम् । व्यापारद्वयत्यागेनोदाहरणस्थले लक्षणया 'गङ्गायाङ्घोषः' इत्यत्र गङ्गापदस्य तीरे लक्षणायामपि टाप्स्थितिवण्णिचः स्थितिस्तेनोपपादिता सा न युक्तेत्याह—*किञ्च गभीरायामित्यादिना । नदीतीरे यदि नदीपदस्य लक्षणाऽऽश्रीयते तदा नद्याः पदार्थैकदेशतया तत्र गभीरपदार्थान्वयो न स्यादिति नदीपदस्य गभीरनदीतीरे लक्षणा गभीरपदञ्च तादृशेऽर्थे लक्षणायान्तात्पर्यग्राहकमिति यथोच्यते तथा प्रकृते णिच्सत्त्व एव कर्मव्यापारे लक्षणा सम्भवति तदभावे तात्पर्यग्राहकाभावान्न सम्भवतीति वक्तुमशक्यं 'पच्यते ओदनः स्वयमेव' इत्यादिदर्शनादिति भावः । *स्वार्थसम्बन्धे इति । स्वार्थप्रतीतिश्चोभयसद्भावे भवतीति तयोरुपादानं सार्थकमिति भावः । *वक्तुमशक्यत्वादिति । न चैवं 'गङ्गायां घोषः' इत्यत्र तीरे लक्षणायामपि टापः साधुत्वानापत्तिरिति वाच्यम् । लक्षणा हि न शक्यसम्बन्धरूपा न वा शक्यतावच्छेदकातिरिक्तधर्मावच्छिन्नस्य लक्षणया बोध इति युक्तम् किन्तु शक्यतावच्छेदकारोपो लक्षणा । आरोपितशक्यतावच्छेदकप्रकारिकैव प्रतीतिरिति यद्धर्मावच्छिन्नबोधनाय टाबन्तस्य साधुत्वम्बोधितन्तद्धर्मावच्छिन्नविषयता-

धिकरणा प्रेरणा वास्तवी आरोपिता वा*णिजर्थ इति णिचः साधुत्वं कर्तृत्वं च *स्वस्योपपन्नम् । *अत एव ण्यन्ताण्यन्तयोर्न्यग्भवनतदनुकूल-व्यापारयोः प्रतीत्युपपत्तये पञ्चम्यामवस्थायां णिजुपपत्तये च हरिणा-

*निवृत्तप्रेषणाद्धातोः *प्राकृतेऽर्थे णिजुच्यते ।
*ब्रवीति पचतेरर्थं, *सिध्यतिर्न विना णिचा ॥
सण्यन्तः पचतेरर्थे सर्वथैवावतिष्ठते ।
*'तद्वद्रुहेरणौ णौ च तुल्यार्थत्वं प्रतीयते' ॥

इत्युक्तम् ।*इदमुक्ततृतीयकक्ष्योदाहरणभूतपञ्चमकक्ष्योभयसाधारणम् ।
*तत्र द्वितीयकक्ष्यायां न्यग्भवनसमानाधिकरणो व्यापारोऽर्थः ।

---

शाल्येव बोध इति नासाधुत्वम् । अत एव

"कचतस्त्रस्यति वदनं वदनात्कुचमण्डलन्त्रसति ।
मध्याद्बिभेति नयनन्नयनादधरः समुद्विजति ॥"

इत्यतश्चमत्कारो भवति । अत्र कचशब्दस्य राहौ, वदन-शब्दयोश्चन्द्रे, कुचमण्डलशब्दस्य कमलकुड्मले, मध्यशब्दस्य सिंहे, नयनशब्दयोः कुरङ्गे, अधरशब्दस्य रक्तनूतनाम्रादिपर्णे लक्षणाऽस्ति । यदि राहुत्वादिप्रकारको बोधो लक्षणया स्वीक्रियते तदा न तथा चमत्कारो यथा कचत्वादिप्रकारकबोध इति । स्वमते उपपत्तिमाह-*तस्मादिति । *णिजर्थ-इति । 'दर्शयते भवः' इत्यत्र णिजर्थः । *स्वस्य=भवस्य । *अत एव=उदाहर-णभूतकक्ष्यायामपि प्रेरणाया णिजर्थत्वादेव । हर्युक्तरीत्या पञ्चमी कक्ष्या सूत्रोदा-हरणमित्येतद्बोधयितुमादौ दृष्टान्तायाह-*निवृत्तप्रेषणादिति । *प्राकृतेऽर्थे=प्रकृ-तेरयम्प्राकृतः। अनिवृत्तिप्राक्कालिकप्रतीतिविषये व्यापाररूपेऽर्थे ।*ब्रवीति पचतेर-र्थमिति । अनिवृत्तप्रेषणकपचतेरर्थमित्यर्थः।*सिध्यतिर्न विनाणिचेति 'सिद्ध्यत्योदनः' इत्यत्र सिध्यतिर्विक्लित्तिमात्रार्थको भवति स सिध्यतिर्णिचि सति साधयतीत्यत्र ण्यन्तसमुदायघटकतया पचतेरर्थे 'पचत्योदनम्' इत्यत्र यः पचतेरर्थस्तस्मिन् सर्वथा वर्तते तदा विक्लित्त्यनुकूलव्यापारः साधयतेरर्थो भवतीत्यर्थः । *त-द्वद्रुहेरिति । निवृत्तप्रेषणकरुहधातोर्णिचि पूर्वावस्थायां यो न्यग्भवनानुकूल-व्यापाररूपोऽर्थस्तमादाय तुल्यार्थत्वमिति । *इदमुक्ततृतीयकक्ष्योदाहरणेत्या-दि । तृतीयकक्ष्यायामुदाहरणभूतपञ्चमकक्ष्यायाञ्च समानमित्यर्थः । ताः क-क्ष्या दर्शयति-*तत्र द्वितीयेत्यादिना । प्रथमकक्ष्यायां न्यग्भवनानुकूलो यो ह-स्तिपकनिष्ठो व्यापारस्तस्य प्रतीतिः 'आरोहन्ति हस्तिनं हस्तिपकाः' । 'आरो हति हस्ती' इति द्वितीया अत्र न्यग्भवनसमानाधिकरणो व्यापारो विवक्षि-तः । ततो हस्तिपकस्य प्रयोजकत्वविवक्षया तदीयव्यापारे णिचि 'आरोहय-न्ति हस्तिनं हस्तिपकाः' इति तृतीया । तत उभयोरपि व्यापारयोस्त्यागे सति तादृशोभयराहित्यबोधनाय शुद्धरुहधातुघटिता 'आरुह्यते हस्ती' इति तुर्या

ततो णिचि तृतीयकक्ष्या । तत्र णिजर्थव्यापारस्य प्रकृत्यर्थव्यापारस्य च त्यागे 'आरुह्यते हस्ती' इति तुर्या कक्ष्या । ततो न्यग्भवनसमानाधिकरणे प्रवर्त्तनात्वेनापि विवक्षिते व्यापारे णिच्युदाहरणभूता कक्ष्या । एवञ्च तस्या इयुक्तं पञ्चमकक्ष्यात्वं स्वरसत उपपद्यते । एवञ्च पूर्वण्यन्तादयं ण्यन्तस्तत्समानाकारो *भिन्नार्थ एव । एतत्सर्वमन्वाख्यानोपायमात्रमिति बोद्ध्यम् । एवञ्च समानक्रियत्वा*सम्भवोऽपि बोद्ध्यः । 'कर्मवद्भावात्सिद्धम्' इति प्रतीकमुपादाय 'लावयति केदारो देवदत्तेन' इत्यत्र कैयटे परस्मैपदं तु *तद्रीत्या बोद्ध्यम् । प्रायेणात्मनेपदपाठ एव तत्र दृश्यते । करिष्यमाणसिद्धान्तानुसारी तु सः* । *एवं पूर्वविप्रतिषेधोऽपि चिन्त्यः । भाष्येऽनुक्तेः । *'दर्शयते राजा' इत्यत्र "अणावकर्मकात्" ( पा० सू० १-३-८८ ) इत्यस्याप्राप्तेः स भाष्यप्रयोगो न मानम् । अणावकर्मकादित्यत्रोद्देश्यतावच्छेदकावच्छेदेनान्वयस्य लोकव्युत्पत्तिसिद्धतयाऽण्यन्तावस्थात्वावच्छेदेनाकर्मकत्वप्रतीत्याऽत्यन्ताविद्यमान-

---

कक्ष्या । अत्र कर्मवद्भावाद्यगात्मनेपदे । ततो न्यग्भवनसमानाधिकरणव्यापारस्य प्रयोजकत्वविवक्षया तस्मिन्व्यापारे णिच् । 'आरोहयते हस्ती' इति पञ्चमी कक्ष्या । अत्र स्वयन्दूती दृष्टान्तत्वेन कल्पनीया । एतदेव "न्यग्भावना न्यग्भवनं ण्यन्तेऽपि प्रतिपद्यते" इति प्रागभिहितम् । *भिन्नार्थः=तृतीयायां व्यधिकरणस्य व्यापारस्य सत्ताऽत्र तु नेति भिन्नार्थत्वमित्यर्थः । *असम्भवोऽपीति । न च द्वितीयामादाय समानक्रियत्वमस्तीति वाच्यम् । तत्र फलसमानाधिकरणस्य व्यापारस्यानुद्भूतस्य प्रतीतिः । अत्र तु तस्य हेतुत्वं विवक्षितमत उद्भूतत्वमिति वैलक्षण्यात् । अत्रैतादृशवैलक्षण्येऽपि कर्मवद्भावस्य प्राप्तिरिति न शङ्क्यम् । अण्यन्तप्रथमकक्ष्यायां समानाधिकरणव्यापारस्याप्रतीतेः । द्वितीयायां यद्यपि तत्प्रतीतिस्तथापि तदा हस्ती न कर्म । तृतीयायां यद्यपि कर्म तथापि तामादाय तुल्यक्रियत्वमेव न । तदा समानाधिकरणव्यापारस्यानुद्भूतस्य प्रतीतेः । तुरीयायां तु हस्ती न कर्मेति कर्मवद्भावस्याप्राप्तेरेतत्सूत्रोदाहरणमिति द्रष्टव्यम् । एवञ्च कर्मशब्दस्य कर्मकारकपरत्वमेवेति व्यवस्थासिद्धौ द्वितीया या अध्यारोपितप्रेषणपक्षे कक्ष्या तत्राप्यात्मनेपदमपेक्षितमिति लावयतीति परस्मैपदप्रयोगानुपपत्तिरत आह-*तद्रीत्येति । कर्मशब्दस्य क्रियापरत्ववादिरीत्या । *सः=परस्मैपदप्रयोगः । मूले यदुपक्रमे पूर्वविप्रतिषेधेनेत्युक्तन्तत्खण्डयति-*एवम्पूर्वेति । यद्यस्य सूत्रस्योदाहरणेऽणावकर्मकादित्यस्य प्राप्तिस्तदा युज्यते पूर्वविप्रतिषेधः । वस्तुतो न प्राप्तिरिति दर्शयितुं शङ्कते-*दर्शयत इति । भाष्यप्रयोगदर्शनेन पूर्वविप्रतिषेधकल्पनापि नेत्यर्थः । पर-

कर्मकेष्वेव तत्प्रवृत्तेरिदञ्चा*ण्यन्तसकर्मकेष्विति विषयभेदात् । "विभाषोपपदेन" ( पा० सू० १-३-७७ ) इत्यस्य च बाधे नैव मानं पश्याम इति प्राहुः ।

विभाषोप ( पा० सू० १-३-७७ ) । इयं प्राप्तविभाषेति 'न वा" ( पा० सू० १-१-४४ ) इति सूत्रे भाष्ये । *"स्वरितः" ( पा० सू० १-३-७२ ) इत्यादि पञ्चसूत्र्यत्रानुवर्त्तते । *कर्त्रभिप्रायक्रियाफलविषये आत्मनेपदमिति तदर्थः । अथाऽपि तदर्थद्योतकमात्मनेपदमेवमपि 'व्यतिलुनीते' इत्यादौ व्यतिभ्यां द्योतिते कर्मव्यतिहारे आत्मनेपदमिवे*हापि प्राप्नोतीति प्राप्तविभाषैवेति तदाशयः ॥

इत्यात्मनेपदप्रक्रिया ॥

---

स्मैपदविधायकसूत्राप्राप्तिमुपपादयति-*अण्यन्तसकर्मकेष्विति । अत एव भाष्ये 'पश्यन्ति भृत्या राजानम्' इति दर्शयित्वा 'दर्शयते भृत्यान् राजा' इति भाष्ये उपात्तम् ।

विभाषोपपदेन ( पा० सू० १-३-७७ ) । अस्याः प्राप्तविभाषात्वे हेतुमाह-*स्वरित इत्यादि । ननु क्रियाफलस्य कर्तृगामित्वद्योतकमत्र स्वमितिपदान्तरमुच्चारितमेवेत्यात्मनेपदप्रयोगो न सम्भवति यथा 'हे राम' इत्यादौ हे इत्यस्य हेशब्देन द्योतितेऽर्थे प्रयोगो न भवति। एवञ्च समीपोच्चारितेन पदेनेत्यनुपपन्नमत आह-*कर्त्रभिप्राय इत्यादि ।*इहापि प्राप्नोतीति । यत्र स्पष्टप्रतिपत्तये आदौ स्वमित्यादि प्रयुक्तं तत्रापि 'व्यतिलुनीते' इतिवत्प्राप्नोतीत्यर्थः । इत्यात्मनेपदप्रक्रियाविवरणम् ।

## अथ परस्मैपदप्रक्रियाविवरणम् ।

शेषात्कर्त्तरि परस्मैपदम् ( पा० सू० १-३-७८ ) । शेषात्=आत्मनेपदनिमित्तहीनात् । नन्वत्र शेषग्रहणेनात्मनेपदनिमित्तहीनस्य ग्रहणे 'भिद्यते कुसूलः स्वयमेव' इत्यत्रापि परस्मैपदस्प्राप्नोति । कर्तुः कर्मत्वातिदेशेऽपि स्वाश्रयस्य कर्तृत्वस्यानिवर्त्तनात् । अतिदिश्यमानधर्मविरुद्धस्वाश्रयधर्मप्रयुक्तकार्याभावस्यातिदेशस्वभावसिद्धत्वेन समाधानन्तु प्रकृते नास्ति । अतिदिष्टकर्मत्वेन कर्तृत्वस्य विरोधाभावात् । कर्तुरेव हि कर्मवद्भावो भवति । अत एव चाभिहिते कर्त्तरि प्रथमेति प्रथमा कुसूलशब्दाद्भवति । न च शेषपदं सप्तम्यन्तं करिष्यते । एवञ्चात्र शेषे कर्त्तरि गृह्यमाणे कुसूलात्मककर्तृ कर्मत्वातिदेशेनोपयुक्तम्भावकर्मणोरित्यत्रेति परस्मैपदन्न भविष्यतीति वाच्यम् । एधादिभ्योऽनुदात्तङिद्भ्यः परस्मैपदस्य शुद्धे कर्त्तरि दुर्वारत्वात् । यदि च सौत्रमेव शेषादिति पदमावर्त्यैकस्य सप्तम्यन्तत्वकल्पनया शेषाच्छेषे कर्त्तरीत्युच्यत तदा कर्त्तरीति

कर्त्तैव य इति । *कार्यातिदेशेऽप्यतिदिश्यमानकार्याणामुत्पत्तिदश एव देश *इति मते इयमेव कल्पना बोध्या । अत्रत्य*भाष्यस्वरसोऽप्यत्रैव पक्षे । तृज्वत्सूत्रेऽपि भाष्ये शास्त्रातिदेशकार्यातिदेशयोर*भेद एव सूचितः । एवमग्रेऽपि* ।

केचिदिति । नैतद्भाष्ये दृष्टम् ।

---

व्यर्थम् । भावकर्मणोरुपयुक्ततयाऽशेषत्वादिति चेन्न । सप्तम्यन्ते कर्त्तरीत्यस्योपादाने अ‌नुवर्त्तितस्यैकस्य विशेष्यानुरोधात्सप्तम्यन्तत्वम्भवतीति तत्रैव तात्पर्यग्राहकतया कर्त्तरीत्यस्य चारितार्थ्यात् उत्तरार्थत्वाच्च । अत एव "अनुपराभ्याङ्कृञः" ( पा० सू० १-३-७९ ) इति परस्मैपदम् 'अनुक्रियते स्वयमेव' 'पराक्रियते स्वयमेव' इत्यत्र न भवति । यदि च सप्तम्यन्तस्य कर्त्तरीत्यस्यावश्यमुत्तरार्थत्वे तत्रैव कर्त्तव्ये इह कर्त्तरीत्यस्योपादानाच्छेषपदं सप्तम्यन्तमेवास्तु । 'अनुदात्तङितः" ( पा० सू० १-३-१२ ) इति सूत्रमनुदात्तङित आत्मनेपदमेवेत्येवम्प्रकृतिनियमपरमित्याश्रीयते तदा शेषादित्यस्यावृत्तिर्न कार्या ।

अनुपराभ्याङ्कृञः ( पा० सू० १-३-७९ ) । कर्तृगामिक्रियाफलविवक्षायां "स्वरितञितः" ( पा० सू० १-३-७२ ) इत्यस्य बाधनार्थमिदं सूत्रम् । अत्र मूले कर्त्तरीत्येवेत्युक्तम । एतच्च प्रत्ययनियमपक्षे बोध्यम् । कार्यातिदेशस्य मुख्यतयेति । शास्त्रातिदेशस्य कार्यसम्पत्तिफलकत्वात्कार्यातिदेशस्य मुख्यत्वम् । एवञ्च प्रकृते आत्मनेपदविधायकं कर्त्तरि कर्मेत्येव, तच्च "अनुपराभ्याम्" ( पा० सू० १-३-७९ ) इत्यतः परमिति कर्मकर्त्तरि न भविष्यतीति भावः । 'यादेशस्य सुप्त्वात् "सुपि च" ( पा० सू० ७-३-१०२ )इति दीर्घः'इतिवत्प्रकृते कार्यम् "भावकर्मणोः"(पा० सू० १-३-१३) इत्यनेनैवेत्याश्रीयते तदाप्याह-*शास्त्रातिदेशपक्षे त्विति । मुख्यकार्यातिदेशपक्षेऽपि कर्तृग्रहणद्वयस्यानुवृत्त्या कर्त्तैव यः कर्त्तेत्यावश्यकमित्याह-*कार्यातिदेश इत्यादिना । *इति मत इति । इदञ्च मतम्मुख्यम् । अत एव 'परिवीः' इत्यत्र व्येञः क्विपि सम्प्रसारणेऽन्तरङ्गत्वात् क्विपो लोपेऽपि स्थानिवद्भावेनाङ्गत्वात्तुग्दीर्घत्वयोः प्राप्तौ परत्वाद्दीर्घ इति सङ्गच्छते । *भाष्यस्वरस इति । आत्मनेपदबाधनाय यत्पूर्वसूत्रे भाष्यकृतोक्तं "कर्त्तरि कर्म्मव्यतिहारे ( पा० सू० १-३-१४ ) इत्यत्र कर्तृग्रहणम्प्रत्याख्यायते तत्प्रकृतमुत्तरत्रानुवर्त्तिष्यते शेषात्कर्त्तरि कर्त्तरीति" तद्भाष्यस्वरस इत्यर्थः । पूर्वसूत्रे कर्तृग्रहणस्य पूर्वोक्तरीत्या प्रकृतसूत्रार्थत्वस्य स्वीकारादिति भावः । *अभेद एव सूचित इति । एतेनातिदिश्यमानकार्याणामुत्पत्तिदेश एव देश इति अर्थादुक्तम्भवति । *अग्रेऽपीति । "अभिप्रत्यतिभ्यः" (पा० सू० १-३-८०) इति सूत्रेऽपीत्यर्थः । भौवादिकस्य तु परिमर्षतीति मूले । आधृषीयत्वात् णिजभाव इत्यपि बोध्यम् । स हि स्वरितेत् । मतान्तरे त्वनुदात्तेत् ।

उपाच्च ( पा० सू० १-३-८४ )। उत्तरत्रोपेत्यस्यैवानुवृत्तये योगविभागः।

बुधयुध ( पा० सू० १-३-८६ )। अत्रा*कर्मकाणां यदाऽन्तर्भावितण्यर्थत्वेन सोपसर्गत्वेन वा सकर्मकत्वं *तदर्थमचित्तवत्कर्तृकार्थं चाकर्मकग्रहणम्। चित्तवत्कर्तृकाणान्तु सकर्मकार्थम्। 'प्रीतिं भक्तजनस्य *यो जनयते' इत्यादि प्रामादिकम्। यद्वा भक्तजनः प्रीतिं जनयत्यात्मनस्तस्य तामीश्वरो जनयते इति *ण्यन्ताण्णौ साधु, *प्रयोज्यकर्तुः शेषत्वविवक्षायां भक्तजनस्येति षष्ठीत्याहुः।

निगरणच( पा० सू० १-३-८७ )। *अत्र निगरणशब्देन "न पादमि" ( पा० सू० १-३-८९ ) इति सूत्रे*पाग्रहणात्पानमपि गृह्यते। *"इमां किमाचामयसे न चक्षुषी" इति श्रीहर्षपद्ये इमामित्यस्यैतन्मुखचन्द्रचन्द्रिकामित्यर्थेनाचामयतेः सादरज्ञानलाक्षणिकतया निगरणार्थत्वाभावान्नानेन परस्मैपदम्। *अत एव चक्षुषोः *कर्मत्वं ज्ञानार्थत्वादिति बोद्धव्यम्। यदि तु तृप्तिनिवर्त्तकस्तत्तद्व्यापार एव पानं सर्वेन्द्रियाणाञ्च स्वस्वविषयविषयके क्षुत्तृषे इत्यर्थस्यैतरेयोपनिषदि स्पष्टत्वादत्र न लक्षणा, किं तु मुख्यमेव निगरणं तदा चिन्त्य एवायं प्रयोग इति बोद्धव्यम्। प्रासस्यैवायमिति। 'अनन्तरस्य' इति *न्यायादिति भावः।

---

व्याङ्परिभ्यो रमः ( पा० सू० १-३-८३ )। रम्धातुरनुदात्तेदित्यस्यारम्भः।

*अकर्मकाणाम्=युध्नश्जन् इत्येषाम्। *तदर्थमिति। "अणावकर्मकात्" ( पा० सू० १-३-८८ ) इत्यस्य तदाऽप्राप्तेः। *यो जनयत इति। यः=ईश्वरः। अत्र चित्तवत्कर्तृकत्वात्परस्मैपदन्न्याय्यमिति भावः। *ण्यन्तात् णाविति। "अणावकर्मकात्" ( पा० सू० १-३-८८ ) इत्यस्य यो धातुरणावकर्मकस्तत्प्रकृतिकण्यन्त एव प्रवृत्तिरिति भावः। ननु भक्तजनस्य प्रीतिकर्तृकोत्पत्त्यनुकूलव्यापाररूपफलाश्रयत्वात्तस्य कर्मसंज्ञायान्द्वितीया स्यादत आह-*प्रयोज्यकर्तुरिति।

निगरणचलना ( पा० सू० १-३-८७ )। कठिनद्रव्यवृत्तिगलाधःसंयोगानुकूले व्यापारे निगरणशब्दस्य प्रसिद्धेः 'पा' पाने इत्यस्य ग्रहणन्न स्यादत आह-*अत्र निगरणेति। *पाग्रहणादिति। निषेधस्य प्राप्तिपूर्वकत्वादिति भावः। ननु 'चमु'धातोरदनार्थत्वेन निगरणार्थत्वाच्छ्रीहर्षपद्ये 'आचामयसे' इत्यत्रात्मनेपदमनुपपन्नमत आह-*इमाङ्किमिति। *अत एव=सादरज्ञानलाक्षणिकत्वादेव। *कर्मत्वमिति। "गतिबुद्धि" ( पा० सू० १-४-५२ ) इतिसूत्रेणेति शेषः। *इति न्यायादिति। न चैवम् 'अदेः प्रतिषेधः' इत्यस्य वैयर्थ्यमिति शङ्क्यम्। नि-

अणावकर्मका (पा० सू० १-३-८८) । चित्तवदित्यादि किम् ? *शुष्यन्ति व्रीहयस्तान् शोषयते । अकर्मकात् किम् ?, कटङ्करोति, तं प्रयुङ्क्ते कटङ्कारयते ।

इतरे इति । *दमिरकर्मकोऽपि एतत्प्रामाण्यात् । अत एव दमिः सकर्मक इति दिवादिस्थग्रन्थेनाविरोधः । परे तु अकर्मकत्वेऽस्य सूत्रस्य मानत्वेऽपि सकर्मकत्वे मानं चिन्त्यमित्याहुः । वासयत इति । *लुग्विकरणपरिभाषयाऽदादेः सकर्मकतया च भ्वादेरेव ग्रहणं वसेः । परस्मैपदं स्यादेवेति । *'अनन्तरस्य' इति न्यायेन *योगद्वयप्रापितपरस्मैपदस्यैव निषेधादिति भावः । पाययतीति । "शाच्छासा"( पा०

---

गरणचलना" ( पा० सू० १-३-८७ ) इति सूत्रस्य "णिचश्च" ( पा० सू० १-३-७४ ) इत्येतत्सूत्रापवादतया यत्र कर्तृगामित्वं क्रियाफलस्य विवक्षितन्तत्रात्मनेपदलक्षणादकत्वेन चारितार्थ्यात् ।

"अणावकर्मकात्" (पा०सू०१-३-८८)इति सूत्रे यच्चित्तवत्कर्तृकादिति तदणावकर्मकादित्यस्य यद्विशेष्यन्तस्यैव विशेषणन्तदभिप्रायेण तत्प्रयोजनमाह-*शुष्यन्ति व्रीहय इति । अत्र व्रीहीणां यद्यपि प्राणित्वमस्ति तथापि यादृशं चित्तवत्त्वम्मनुष्यादीनामस्ति तादृशन्नेति विवक्षितं, विवक्षितञ्च चित्तशब्देन तथैव । चित्तम्=चैतन्यम् । अणावित्यत्र प्रतियोगिभूतो णिर्हेतुमण्णिरेव । पूर्वस्मिन् "बुधयुध" (पा० सू० १-३-८६) इतिसूत्रे तस्यैव बुधादिभ्यः सम्भवात् । स एव च णिशब्द इहानुवर्तते । एवञ्च यत् णिजन्तादनेन परस्मैपदं विधीयते प्रत्यासत्त्या प्रतियोगित्वमपि तस्यैव । तेन चुरादिण्यन्ताद्धेतुमण्णौ भवत्येव परस्मैपदम् । 'चेतयमानम्प्रयोजयति=चेतयति' इति यथा ।

न पादम्याङ् ( पा० सू० १-३-८९ ) । निषेधस्य प्राप्तिपूर्वकत्वादेभ्यः प्राप्तिरुपपादिता-पिबतिर्निगरणार्थ इत्यादिना मूले । तेषु यदि 'दम्'धातुस्सकर्मक एव तदा "अणावक" ( पा० सू० १-३-८८ ) इत्यस्य न प्राप्तिरितीह तदुपादानं व्यर्थं स्यादित्याशयेनाह-*दमिरकर्मकोऽपीति । वस्धातुः प्रकृतसूत्रे भ्वादिरेव गृह्यतेऽत्र प्रमाणमाह-*लुग्विकरणेति । धेट्धातोर्निगरणार्थत्वात्प्राप्तपरस्मैपदान्निवर्तयितुमिहोपसंख्याने शेषादिति प्राप्तस्यापि निषेधे प्राप्ते आह-*अनन्तरस्येतीति । *योगद्वयेति । पादम्यादिभ्यो योगद्वयस्यैव प्राप्तेरितिद्वयपदोपादानम् । 'समीची' इत्यत्र प्रथमाद्विवचने "वा छन्दसि"(पा०सू० ६-१-१०६) इति पूर्वसवर्णदीर्घः । 'अनन्तरस्य' इति न्यायस्येहाश्रयणे मानन्तु 'भिक्षा वासयति' इति "हेतुमति च" ( पा० सू० ३-१-२६ ) इति सूत्रस्थभाष्यप्रयोग एव । इति परस्मैपदप्रक्रियाविवरणम् ॥

सू० ७-३-३७ ) इति युक् ।

इति पदव्यवस्था ॥

सार्वधातुके यक् ( पा० सू० ३-१-६७ ) । "धातोरेकाचः" ( पा० सू० ३-१-२२ ) इत्यतो धातोरिति "चिण्भाव" ( पा० सू० ३-१-६६ ) इत्यतो भावकर्मणोरिति चानुवर्त्तते* । उत्पादना=फलोत्पत्त्यनुकूलो व्यापारः । *फलत्वञ्च कर्तृप्रत्ययसमभिव्याहारे *तद्धात्वर्थविशेषणत्वे सति तद्धात्वर्थत्वम् । अनेकपर्यायोपादानं *चेतनाचेतनवृत्तिफूत्कारयत्नादीनां क्रियात्वं धात्वर्थत्वञ्च बोधयितुम् । *अत एव पचति पाकं करोतीत्यादिक्रमेण*कृञा सर्वधातूनां विवरणमिति "भूवादि"( पा० सू० १-३-१ ) सूत्रे भाष्ये स्पष्टम् । *क्रियात्वं धातुवाच्यत्वसमाना-

---

## ॥ अथ भावकर्मप्रक्रियाविवरणम् ॥

सार्वधातुके यक् ( पा० सू० ३-१-६७ ) । *अनुवर्त्तत इति । तच्च लौअस्य 'सार्वधातुके' इत्यस्य विशेषणम् । भावकर्मवाचिनीत्यस्य भावकर्मबोधके इत्यर्थः । तेन भावे यत्र लकारस्तत्र सार्वधातुकस्य धातुवाच्यभावनानुवादकत्वेऽपि न क्षतिः । भावो भावनेत्यत्र भूधातुरुत्पत्त्यनुकूलव्यापारवाचकस्तस्माद्धेतुमण्ण्यन्तादच् प्रत्ययः । अत एव भावनाशब्दस्योत्पादनाशब्दपर्यायवाचकता सङ्गच्छते । ननु फलशब्दस्योत्पत्त्याश्रयबोधकतया द्रव्यादिषु 'सत्तया स्थीयते' इत्यत्र स्थितेरुत्पत्त्यभावादनुपपत्तिरत आह-*फलत्वञ्चेति । कर्तृप्रत्ययसमभिव्याहार इति फलव्यापारयोः कर्मणि प्रत्यये विशेषणविशेष्यभावव्यत्यासेऽपि फलत्वासम्भवव्युदासाय।*तद्धात्वर्थविशेषणत्वे सतीति । तद्धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारताश्रयत्वे सतीत्यर्थः। विशेष्यता च न मुख्यविशेष्यतैव किन्तु प्रकारत्वावच्छिन्नविशेष्यताऽपि। अत एव गत्याद्यर्थकधातुप्रकृतिकाणिजन्तस्थले संयोगस्य फलत्वमुपपद्यते । तद्धात्वर्थत्वञ्च तद्धातुवाच्यत्वम् । वाच्यतावच्छेदकञ्च फूत्कारत्वादिकमेव । *चेतनाचेतनेति । तेन 'गम्यते ग्रामो रथेन' इत्यस्योपपत्तिः । *अत एव=क्रियाया धातुवाच्यत्वादेव । *कृञा=व्यापारार्थककृञा । विवरणविव्रियमाणयोः समानार्थत्वस्य "भूवादि" ( पा० सू० १-३-१ )सूत्रस्थभाष्ये "कथं ज्ञायते क्रियावचनाः पचादयः यदेतेषाङ्करोतिना सामानाधिकरण्यम्" इत्यनेन स्पष्टम्प्रदर्शनात् । क्रियावचना इत्यत्र क्रियात्वेन रूपेण क्रियायाः प्रवेशस्तच्च क्रियात्वङ्किमित्याकाङ्क्षायामाह-*क्रियात्वमिति । धातुवाच्यत्वसमानाधिकरण इत्युपात्तत्र तु धातुवाच्यतावच्छेदकमिति । क्रियात्वरूपसामान्यधर्मस्य वाच्यतानवच्छेदकत्वात् । अत एव 'पचति चैत्रः' इति वाक्यजन्यशाब्दबोधोत्तरम्फूत्कारवान्न वेति संशयानुत्पत्तिः सङ्गच्छते । यदि क्रियात्व-

भिकरणो *जातिविशेषः। तद्वद्रूपधातुत्वञ्च जातिविशेषः। तत्परिचायकञ्च भूवादिसूत्रम्। धातुत्वेनेति। *तद्यात्प्यपचित्वादिनेत्यर्थः। फूत्कारादीनां च तत्तद्रूपेण शक्यता। प्रामाणिकत्वाच्च *नानाशक्तिकल्पना न दोषाय। धातुत्वन्तु न शक्ततावच्छेदकम्, तदजानतोऽपि बोधात् सर्वधातुभ्यः सर्वक्रियाबोधापत्तेश्च। सकलेति। अकर्मकाणामप्यं*शद्वयाभिधायकत्वात्। फलव्यापारयोर्वैयधिकरण्ये सकर्मकत्वं, सामानाधिकरण्येऽकर्मकत्वं बोध्यम्। धातुवाच्येति। 'करोति' 'कर्ता' इत्यादौ *तथा क्लृप्तत्वादिति भावः। सामानाधिकरण्याभावादिति। असत्त्वभूतक्रियायाः सत्त्वार्थक*युष्मदादिसामानाधिकरण्यासम्भव इति भावः। तिङ्वाच्येति। *तङनूद्येत्यर्थः। लिङ्गाद्यनन्वयित्वं सर्वनामपरामर्शायोग्यत्वं वाऽसत्त्वम्। औत्सर्गिकत्वेनेति। एकवचनमि*त्येव सूत्रमुत्सर्ग इति भावः।

---

रूपसामान्यधर्म एव वाच्यतावच्छेदकः स्यान्न तु फूत्कारत्वादिविशेषधर्मस्तदा सामान्यधर्मावच्छिन्नप्रकारकनिश्चयस्य विशेषधर्मावच्छिन्नाभावकोटिकसंशयविरोधिता न स्यात्। न चैवं फूत्कारत्वादिविशेषधर्मावच्छिन्नप्रकारकशाब्दबोधे जाते सामान्यधर्मावच्छिन्नाभावकोटिकः संशयः स्यादिति वाच्यम्। विशेषधर्मावच्छिन्नप्रकारकनिश्चयोत्तरं सामान्यधर्मावच्छिन्नप्रकारकमानसस्यानुमितेर्वा जननात्। *जातिविशेषः। 'शब्दत्वव्याप्य' इति शेषः। धातुत्वेनेत्यत्र तृतीया प्रकृत्यादित्वात्। ज्ञायमान इति शेषः। अन्वयश्चास्य सकलधात्वित्यत्र। गमकत्वात्समासः। धातुत्वञ्च न शक्ततावच्छेदकम्, तदजानतोऽपि शाब्दबोधदर्शनात्। शक्ततावच्छेदिका च पचाद्यानुपूर्व्येव, तदाह–*तद्याप्येति। *नानाशक्तिकल्पना=शक्यतावच्छेदकभेदेन नानाशक्तिकल्पना। *अंशद्वयेति। फलव्यापाररूपांशद्वयेत्यर्थः। अकर्मकधातोः फलप्रतिपादकत्वादेव 'स्तोकमेधते' इत्यादौ फलसामानाधिकरण्यात्स्तोकादिपदेभ्यो द्वितीया। *तथा क्लृप्तत्वात्=धातुवाच्यत्वस्य क्लृप्तत्वात्। यत्र तु फलमात्रं वाच्यं व्यापारांशस्य त्यागः, तत्र फले एव क्रियात्वव्यवहारः। अत एव धातुसंज्ञा तत्प्रयुक्तकार्यञ्च। भावनाया धातुवाच्यत्वाभिधानञ्च भावनाप्रत्ययबोध्येतिमीमांसकमतनिरासाय। *युष्मदादीति। आदिनाऽस्मच्छब्दसंग्रहः। न चैवं शेषपदेन युष्मदस्मद्भिन्नोपस्थितौ तत्सामानाधिकरण्याभावात्प्रथमोऽपि कथमिति वाच्यम्। "शेषे प्रथमः" (पा० सू० १-४-१०८) इत्यस्योपयुक्तसामानाधिकरण्याभावे इत्यर्थात् वक्ष्यमाणया रीत्या शेषपदस्य त्यागाद्वा। पञ्चकन्धात्वर्थ इतिमताभिप्रायेणाह—*तङनूद्येति। *इत्येव सूत्रमिति। एवञ्च तेन यथाऽव्ययेभ्यो भवत्येवम्भावाख्यातस्थलेऽपि भवतु विशेषानुपलम्भादि[ति] भावः।

परे तु क्रियायामेकत्वमस्त्येव *'एका क्रिया' इतिरूपत्वादिसूत्रस्थ-भाष्यात् । एवञ्च *तस्य प्रकृत्यर्थेऽन्वयात् एकवचनं, *द्वित्वादिकं स्वो-त्तरतिङ्वाच्यकारकगतं तत्रारोप्यते इति कर्तृकर्मतिङ्क्षु द्विवचना-दि सिद्ध्यति । तस्याप्यन्वयः प्रकृत्यर्थे एव यथा 'हत*शायिकाः शय्यन्ते' इत्यादौ हतशयनसदृशानि शयनानीत्यर्थके उपमाने बहुत्वोपादानसा-मर्थ्येनोपमेये तिङर्थक्रियारूपे *उपमानगतबहुत्वारोपेण बहुवचनं, त-द्वत् *तिङ्वाच्यकारकगताया एवारोपो नान्यकारकगताया इत्यत्रार्थ-शक्तिस्वभाव एव बीजम् । तदुक्तं हरिणा—

एकत्वेऽपि क्रियाख्याते साधनाश्रयसंख्यया ।

भिद्यते, न तु*लिङ्गाख्यो भेद*स्तत्र *तदाश्रयः ॥ इति ।

न च प्रथमपुरुषोऽपि न स्यात्, तस्यापि शेषसामानाधिकर-ण्यनियतत्वादिति वाच्यम् । *शेषग्रहणं त्यक्त्वा प्रथमस्य उत्सर्गत्वकरणेन

---

*एका क्रियेति । अत्रैकत्वमेकबुद्धिविषयत्वेन । *तस्य=क्रियागतैकत्व-स्य । क्रियायान्तस्यैकत्वस्यान्वयः "प्रकृतिप्रत्ययौ सहार्थम्" इति न्यायादित्याशये-नाह—एवञ्च तस्येति । न केवलं भावाख्यातस्थलं एव क्रियायामन्वयः किन्तु यत्र कर्त्तरि कर्मणि वा तत्रापि क्रियायां सङ्ख्यान्वयः, द्वित्वादिकन्तु न स्वत इत्याह—*द्वित्वादिकमिति । *शायिका इति । धात्वर्थनिर्देशे ण्वुल् । *उपमान-गतबहुत्वारोपेणेति । न चोपमानोपमेययोरभेदान्वयस्वीकारादारोपस्य नात्रो-पयोग इति वाच्यम् । सादृश्यमूलकस्याभेदस्य कल्पनामात्रत्वं तु वास्तवाभेद इत्याशयात् । नन्वेवङ्करणादिकारकगतसंख्याया अप्यारोपः कुतो नेत्यत आह—*तिङ्वाच्येति । *लिङ्गाख्यो भेदः=लिङ्गाख्यो विशेषः । *तत्र=आख्या-ते । आख्यातपदञ्च तिङन्तपरम् । *तदाश्रयः=क्रियाश्रयः । *शेषग्रहणन्त्यक्त्वे-ति । अयम्भावः—यदि "युष्मदि" ( पा० सू० १-४-१०५ ) इत्यादिसूत्रा-णामुपपदनियमार्थत्वं युष्मदि मध्यम एवास्मदि उत्तम एवेति तदा शेषे मध्यमोत्त-मयोर्व्यावृत्त्यर्थं शेषे प्रथम एवेति नियमोऽपि स्वीकार्यः स च शेषपदसत्त्व एवोप-पद्यत इतिशेषग्रहणङ्कर्त्तव्यम् । यदि पुरुषनियमो युष्मद्येव मध्यमः अस्मद्येवो-त्तम इति तदा शेषग्रहणन्न कार्यमिति विचारे पुरुषनियमेऽपि शेषवचनं कार्यम-न्यथा मध्यमोत्तमयोर्नियतत्वेऽपि प्रथमस्यानियतत्वाद्युष्मत्सामानाधिकरण्येऽपि प्राप्नोतीत्यभिधाय भाष्यकृतोक्तम्—"उपपदनियमे शेषग्रहणं शक्यमकर्तुम् । कथ-म्?, युष्मदस्मदी नियते मध्यमोत्तमावनियतौ तौ शेषेऽपि प्राप्नुतः । ततो वक्ष्या-मि प्रथम इति । तन्नियमार्थम्भविष्यति यत्र प्रथमश्चान्यश्च प्राप्नोति तत्र प्रथम एव भवति" इति । एवं व्याख्यानेन भावे यत्र लकारस्तत्र मध्यमोत्तमौ प्राप्ता-वपि प्रथम इत्यनेन व्यावर्त्तिताविति प्रथमस्यैव श्रवणम्भवति । भवतामप्येवं-

तत्सिद्धेः *तत्र तत्रैकवचनवत्। *एकवचनमित्युत्सर्गेण तु अव्ययप्रकरणोक्तरीत्याऽव्ययेभ्य इव सर्वैकवचनापत्तेः। *स्पष्टञ्चेदं "युष्मदि" (पा० सू० १-४-१०५) इति सूत्रे भाष्ये इति वदन्ति।

स्यसिच् (पा० सू० ६-४-६२)। अत्र यथासंख्यं नास्त्वारितत्वात्। उपदेशे इति अच एव विशेषणं नान्येषाम*व्यभिचारात्तदाह-उपदेशे य इति। *अजिति पृथक्पदं लुप्तविभक्तिकं सौत्रो वा समास इति भावः। इड्विधायके स्यादीनामिति विभक्ति*विपरिणामः *अङ्गस्य तु नेट्। भाष्ये आर्द्धधातुकस्येति योगं विभज्य यावानिट् स आर्द्धधातुकस्यैवेति परिभाषणात् लक्ष्यानुरोधाच्च। चिण्वदिति सप्तम्यन्ताद्वतिः उपमेये सप्तमीदर्शनाच्चिण्वद्भावोऽत्र प्रधानम्, इट् तु चेन *तत्सन्नियोगशिष्टः। *भावकर्मणोरिति न स्यादीनां विशेषणं सीयुटो भावकर्मवाचित्वेऽपि स्यसिच्तासीनां तत्त्वाभावात्। नापि भावकर्मवाचिनि प्रत्यये परे ये स्यादय इत्य-

---

विधनियम आवश्यक इत्याह-*तत्रेति। भावाख्यातस्थले एकवचनमेवेति वदतस्तव मतेऽपि यत्रैकवचनञ्चान्यच्च प्राप्नोति तत्रैकवचनमेवेति नियमस्वीकार एवेष्टसिद्धिरन्यथा द्वित्वे द्विवचनमेव बहुत्वे बहुवचनमेवेति नियमेन द्विवचनबहुवचनयोरनियतत्वादेकत्वेऽप्येतौ स्याताम्। यदुक्तम्मूले तस्यौत्सर्गिकत्वेन संख्यानपेक्षणादिति तद् दूषयति—*एकवचनमित्युत्सर्गेण त्विति। यथा कर्मण्येव द्वितीयेत्यादिरीत्या प्रत्ययनियमेऽव्ययेभ्यो विभक्तिसामान्याभावे प्रसक्ते सति 'एकवचनम्'इति सूत्रमप्राप्तप्रापणार्थन्तच्चाविशेषात्सर्वासां सुब्विभक्तीनामेकवचनानि विधत्ते तथेहापि सर्वेषाम्पुरुषाणामेकवचनानि प्राप्नुवन्ति। पूर्वोक्तरीत्या एकवचनमित्यस्य नियमत्वे तु येषाम्प्रत्ययानामेकवचनञ्चान्यच्च प्राप्नोतीत्याकारकोक्तिबोध्यत्वन्तेष्वेकवचनमेवेति नियमे प्रथमपुरुषैकवचनमेव भवतीति भावः। *स्पष्टञ्चेदमिति। शेषग्रहणपरित्यागेन प्रथम इत्यस्योक्तनियमार्थत्वं स्पष्टमित्यर्थः।

स्यसिच्सीयुट् (पा० सू० ६-४-६२)। *अव्यभिचारादिति। यथा 'कारिष्यते' 'हारिष्यते' इत्यादौ परत्वाद् गुणे रपरत्वे च कृतेऽजन्तत्वस्य व्यभिचारोऽस्तीत्यप्राप्तप्रापणार्थमुपदेशग्रहणं क्रियते तथा न हनादिष्वस्तीति भावः। उपदेश इत्यस्याज्मात्रविशेषणत्वे सापेक्षत्वेनासमर्थत्वेन समासानुपपत्तिपरिहारायाह-*अजितीति। *विपरिणाम इति। स्यसिच्सीयुट्तासिष्वित्यस्यावृत्तिङ्कृत्वा एकत्र विभक्तिविपरिणाम इत्यर्थः। नन्वङ्गस्येत्यस्य षष्ठ्यन्तत्वं क्लृप्तमेवेति तस्यैवेडस्त्वित्यत आह-*अङ्गस्य त्विति। *तत्सन्नियोगशिष्टः=चिण्वद्भावसन्नियोगशिष्टः। "भावकर्मणोः" (पा० सू० १-३-१३) इत्यस्य कुत्रान्वय इत्याकाङ्क्षायामाह-*भावकर्मणोरित्यादि। असम्भवमुपपादय-

र्थः । स्यादीनां तादृक्प्रत्ययपरत्वसम्भवेऽपि सीयुटोऽसम्भवात् *आगमविशिष्टे प्रत्ययत्वार्थवत्त्वाद्यङ्गीकारात् । अतो विषयसप्तमीत्याह-गम्यमानयोरिति ।

चिण् भाव (पा० सू० ३-१-६६)। च्लेरिति, "चिण्ते" (पा० सू० ३-१-६०) इत्यतस्ते इति चानुवर्त्तते । पुनश्चिण्ग्रहणन्तु "न रुधः" (पा० सू० ३-१-६४) इति निषेधा*ननुवृत्तये । इत्याहुरिति । अत्रारुचिबीजन्तु साहचर्याश्रयणे दृढमानाभावः । *ननु ण्यन्तस्योपदेशाभावात्तत्र चिण्वदिट् न स्यात् । *उपदेशे योऽच् तदन्ताङ्गस्येत्यर्थेऽपि 'आरिता' 'स्मारिता' इत्यादौ नित्यत्वाद् गुणे रपरत्वे च चिण्वदिण्न स्यात् । न हि रान्तस्योपदेशे योऽच् तदन्तत्वमस्ति भूनीप्रभृतीनां गुणे उपदेशे योऽच् तदन्तत्वाभावाद्दोष एवेति चेन्न । "अतो लोपः" (पा० सू० ६-४-४८) इत्यत्रेवा*र्द्धधातुकोपदेशे यदजन्तमित्यर्थेनादोषात् *तत्रेवात्राप्यावृत्त्या *सीयुड्विशेषणत्वमपि ऋधातोस्तदुपदेशोऽजन्तत्वं तु व्यपदेशिवद्भावेन बोद्धव्यम् ।

---

ति-*आगमेति ।

*अननुवृत्तय इति । तच्चिण्ग्रहणन्नकारसम्बद्धमभूदिति भावः । 'गुणानाञ्च परार्थत्वात्' इति न्यायेनोपदेश इत्येतदजन्तविशेषणं स्यादित्याशयेन शङ्कते-*नन्विति । 'गुणः कृतात्मसंस्कारः' इतिन्यायमाश्रित्याह-*उपदेश इति । *आर्द्धधातुक इति । अच्पदमङ्गविशेषणमार्द्धधातुकमित्यपि सप्तम्यन्तस्यैव विशेषणङ्गुणानामिति न्यायश्चानुगृहीत इति भावः । *तत्रेव="अतो लोपः"(पा० सू० ६-४-४८) इति सूत्रे इव । *सीयुड्विशेषणत्वमपीति । तेन विधिलिङो व्यावृत्तिः । तथा च 'भूयेत'इति सिद्धम् । न चात्र नित्यत्वात् "लिङः स लोपः" (पा० सू० ७-२-७९) इति सलोपे वलादित्वन्नास्तीति इट्सन्नियोगशिष्टश्चिण्वद्भावो न प्राप्नोतीति सीयुट आर्द्धधातुक इति विशेषणं व्यर्थमिति वाच्यम् । वलादित्वस्यानपेक्षणात् । अत एव "नित्यश्चायं वल्निमित्तो विघाती" इति भाष्ये उक्तम् । न च विधिलिङः सार्वधातुकत्वाद्यक् स्यात्तस्मिंश्च सति तेन व्यवधानाद् भूधातोश्चिण्वद्भावो न भविष्यतीति वाच्यम् । यगन्तस्याप्युपदेशे योऽच् तदन्ताङ्गत्वानपायाद्दोषः स्यात् । आर्द्धधातुक इत्यस्य सत्त्वे ह्यार्द्धधातुकोपदेशे यदजन्तमित्यर्थो भवति ।

तपोऽनुतापे च (पा० सू० ३-१-६५)। तपश्च्लेः स्थाने प्राप्तश्चिणनुतापे गम्ये यत्र निषिध्यते तत्र कर्मणि भावे वा लुङ् सम्भाव्यत इत्याशयेन मूले आदौ कर्मणि लुङुदाहृतः । 'अन्वतप्त' इत्यत्र तप्धातुर्दुःखानुकूलव्यापारबोधकः । दुःखवत्त्वाच्चैत्रः कर्म । पापं कर्तृ । पापनिष्ठो व्यापारश्चात्मधारणादिरूप इति फल

तपोऽनुना( पा० सू० ३-१-६५ )। चादु "अचः कर्मकर्तरि" ( पा० सू० ३-१-६२ ) इत्यतः कर्मकर्त्तरीत्यनुवर्त्तते "चिण्ते" ( पा० सू० ३-१-६० )इति सूत्राच्चिणिति "न रुधः" ( पा० सू० ३-१-६४ ) इत्यतो नेति च वर्त्तते, *भावे वा लुङित्याह—पापेनेति । *अविचार्य कर्म कृत्वा पश्चादशोचीत्यर्थः । कर्मकर्त्तरि तूदाहरिष्यते । अचिण्णलोरिति *प्रसज्यप्रतिषेधे चिण्वद्भावेन निषेधः, पर्युदासेऽपि न दोषः । अतिदिश्यमानधर्मविरुद्धस्वाश्रयस्यातिदेशस्वाभाव्येनानङ्गीकारादिति भावः ।

घानिष्यत इति । "ऋद्धनोः" ( पा० सू० ७-२-७० ) इति बाधित्वा नित्यत्वाच्चिण्वदिट् । *वलीति हि तत्र वर्त्तते । नन्वार्द्धधातुके इत्यादेर्विषयसप्तमीत्वेन वधादेशस्यान्तरङ्गत्वेन चिण्वत्त्वं बाधित्वा *स एव स्यादत आह-आशीर्लिङीति । अपवाद इति । वाक्यार्थबोधवेलायां

---

व्यापारयोर्वैयधिकरण्यादयं सकर्मकः । पापदुःखयोर्जन्यजनकभावे पापनिष्ठात्मधारणमपि दुःखजनकम् । अत्र फलतावच्छेदकसम्बन्धोऽवच्छेदकता तेन सम्बन्धेन दुःखस्य चैत्रनिष्ठत्वात्तस्य कर्मत्वम् चैत्रशब्दस्यात्मावच्छिन्नशरीरपरत्वेऽवच्छेदकतासम्बन्धःफलतावच्छेदकः । शरीरावच्छिन्नात्मपरत्वे तु समवायसम्बन्धः फलतावच्छेदको बोध्यः । पापेन कर्त्रा दुःखित इत्यर्थः । यस्य दुःखमुत्पन्नं तेनाहमन्वतप्मीति प्रयुक्ते दुःखितगतोऽनुतापो गम्यते । यत्र त्वन्यदीयकार्य्यरोदनादिविषयकज्ञानोत्तरमयमन्वतप्तेति दुःखितपुरुषादन्येन प्रयुज्यते तदा प्रयोक्तुरनुतापो गम्यते । अनुतापश्च दुःखविषयकज्ञानवत्त्वमेव । *भावे वेति । यद्वेत्यादिना भावे लुङ् यत्र तत्रार्थमाहेत्यर्थः । पापेन पुंसेत्यत्र पापशब्दोऽर्शआद्यजन्तः । कर्त्तरि तृतीया । अत्र दुःखानुकूलव्यापार एव धात्वर्थः । धात्वर्थसङ्गृहीतकर्मकत्वेनायमकर्मकः । 'अशोचि' इत्यत्र शुच्धात्वर्थोऽपि स एव । अनुभवस्य फलत्वं समवायसम्बन्धावच्छिन्नाश्रयतया । तदनुकूलो व्यापारश्च मनःसंयोगादिरूप एव । 'अशोचि' इत्यत्रापि भावे लुङ् । अत्राप्यनुतापो यथा गम्यते तथाह—*अविचार्येति । मूले 'जग्ले' इत्यत्र भावे लिट् । 'दायिता' 'दाता' इत्यत्र कर्मणि लुट् । विकल्पेन चिण्वद्भावः । अदायि । कर्मणि लुङ्, चिण् । 'अग्लायि' इत्यत्र भावे लुङ्, चिण् । 'घानिता' इत्यादौ कर्मणि प्रत्ययः, चिण्वद्भावः । अचिण्णलोरित्यत्र पर्युदासः प्रसज्यप्रतिषेधो वा उभयथापि लक्ष्यसिद्धिरित्याशयेनाह—*प्रसज्येत्यादि । अजादीनाञ्चिण्वत्कार्यातिदेशविधानेन स्यादीनाञ्चिण्त्वमातिदिश्यते तथा च पक्षद्वयसम्भव इति भावः ।

नतु चिण्वद्भावसन्नियोगशिष्ट इटि कृते "ऋद्धनोः स्ये" ( पा० सू० ७-२-७० ) इतीट् पुनः कुतो नेत्यत आह—*वलीति हीति । *स एव=वधादेश

बाधकाभावेन *हन्तेरपि सीयुटा सम्बन्धेन तस्य निरवकाशत्वात् *पश्चाल्लु-क्षयसंस्कारवल्लोपस्थितवध्वबाधस्तेन* न्याय्यः, *सीयुट् तु तदविषये ऽच-रितार्थ इति भावः । परे तूभयत्रापि द्वन्द्वनिर्देशात्समुदायस्य समुदायेन सम्बन्धो *न्याय्यो न तु प्रत्येकं चतुर्णां सम्बन्धः शब्दाल्लभ्यते । एव-श्च न निरवकाशत्वम् । *अत एव भाष्ये विप्रतिषेध उक्तः—"वधि-भावात्सीयुटि चिण्वद्भावं विप्रतिषेधेन" इति, *चिण्वद्भाववाक्येऽपि स्यादि-ष्विति विषयसप्तमीति भाष्याशय इत्याहुः । अदर्शिषातामिति । *"न दृशः" ( पा० सू० ३–१–४७ ) इति निषेधात् च्लेः क्सो न । सि-चः कित्त्वादिति । "लिङ्सिचावात्मनेपदेषु" ( पा० सू० १–२–११ ) इत्यनेन । लत्वम् "अचि विभाषा" ( पा० सू० ८–२–२१ ) इत्यनेन, ढत्वं "विभाषेटः" ( पा० सू० ८–३–७९ ) इत्यनेन । द्वित्वत्रयम्=म-स्य, ढयोश्च "अनचि" ( पा० सू० ८–४ ४७ ) इति, वस्य "यणो मयः" ( का० वा ) इति त्रयम् । ढवमानामिति । "अचो रहाभ्यां" ( पा० सू० ८–४–४६ ) "यणो मयः" ( का० वा० ) "अनचिच" ( पा० सू० ८–४–४७ ) इत्येतैः ।

न स्थानिवदिति । आभीयासिद्धत्वन्तु न व्याश्रयत्वादिति भावः । भाष्ये त्विति । "नपदान्त" ( पा० सू० १–१–५८ ) सूत्र-स्थे इत्यादिः । नन्वेवं ण्यन्ताण्णौ दीर्घविकल्पानापत्तिर्वचनाभावादत आह—णाविति । "नपदान्त" ( पा० सू० १–१–५८ ) सूत्रस्थभाष्यापे-क्षया प्रकृतसूत्रस्थं "णिज्व्येतानां यङ्लोपे चोपसंख्यानम्" इति वा-

---

एव । *हन्तेरपि सीयुटा सम्बन्धेनेति । हन्तेः सीयुटि चिण्वदिति वाक्यकल्पना-ऽत्र बोध्या । *पश्चात्=तादृशकल्पनोत्तरकाले । *तेन=कल्पितेन तादृशवाक्ये-न । एतदेवाह—मूले विशेषविहितत्वादिति । *सीयुट् त्विति । सौत्रसीयुट्शब्द-स्त्वित्यर्थः । *न्याय्य इति । अन्यथा द्वन्द्वस्यैवासाधुत्वं स्यादिति भावः । *अ-त एव=अपवादत्वाभावादेव । ननु भाष्यकाराभिमतविप्रतिषेधः पूर्वोक्तरी-त्या वधभावस्यात्र नोपपद्यत इत्यत आह—*चिण्वद्भाववाक्येऽपीति । 'अद-र्शि' । कर्मणि लुङ्, तस्य तादेशः, च्लेश्चिण् । 'अदर्शिषाताम्' इत्यत्र प्रा-प्तस्य क्सादेशस्य निषेधे एव सिचः सम्भव इत्याशयेनाह—*न दृश इतीति ।

मूले कर्मणि ल इति । शम्धात्वर्थो नाशानुकूलो व्यापारः । तत्र फ-लतावच्छेदकसम्बन्धः प्रतियोगिता । ततो हेतुमति णिचि कृते नाशानुकूलव्या-पाराश्रयस्य "गतिबुद्धि" ( पा० सू० १–४–५२ ) इतिसूत्रेण शम्धातोरकर्मक-

र्लिकस्य स्थानिवत्त्वनिषेधेन प्रत्याख्यानपरं *भाष्यं दुर्बलं, *प्रकारान्तरेणापि प्रत्याख्यानसम्भवादित्यभिमानः । *प्रकृतसूत्रस्थे "कर्मणिङ्" ( पा० सू० ३-१-३० ) इति सूत्रस्थे च भाष्येऽत्रापि दीर्घस्थानिवत्त्वनिषेधः । अत एव दीर्घग्रहणश्चरितार्थमित्युक्तं, तत्प्रामाण्याद् "वरेयलोपस्वरवर्जन्द्विर्वचनादीनि न कर्तव्यानि" इति वार्तिके वर्ज्यकोटौ दीर्घोऽप्युपलक्षणीयः । हेडधातुश्च घटादावसांप्रदायिकः, ण्याकृतिनिर्देशस्य वक्तुमशक्यत्वञ्चोपपादितं *प्राक् । किं च *मिद्भ्यो यङ्लुक्सत्त्वे वार्तिकवैयर्थ्यापत्त्या *तदनभिधानावश्यकत्वेन यङ्लोपे*इत्यंशस्य *प्रत्याख्यानासम्भवः । दीर्घे न स्थानिवदित्यंशश्चैपादिकपर इत्यभिमानेन *वचनारम्भस्तदभिमानत्यागेन भाष्यकृत उत्तरमिति न मे कश्चिद्दोषः । तदाशय इति । नपदान्त" ( पा० सू० १-१-५८ ) सूत्रभाष्याशय *इत्यर्थः । निर्देश इत्युत्तरं दीर्घग्रहणश्चेदं मास्त्वित्यपाठः । हेडेर्घटादौ पाठितात्चिणि 'अहिडि' 'अहीडि'इति रूपार्थन्तत्सत्त्वात् । ह्रस्वविकल्पे तु'अहेडि' इति स्यात् । इदं कैयटादौ स्पष्टम् । *भाष्यरीत्या तु स्थानिवत्त्वनिषेधायैव दीर्घग्रहणमावश्यकमित्याहुः । शामिष्यत इति । स्यादीनाश्चिण्वत्त्वाद्दीर्घः । शम्यते मुनिनेति । *अकर्मकत्वाद्भावे लः ।

---

त्वात्कर्तुः कर्मत्वम् । मूले ह्रस्वविकल्पासिद्धेरिति । अनेन प्रथमस्य णेर्यो लोपस्तस्य स्थानिवद्भावे सति चिण्परणिपरत्वञ्चास्तीति दर्शयति । णावित्याकृतिनिर्देशेन समाधानस्याभिप्रायमाह—*भाष्यन्दुर्बलमिति । *प्रकारान्तरेण=ण्याकृतिनिर्देशस्वीकारेण । "न पदान्त" ( पा० सू० १-१-५८ )सूत्रे दीर्घग्रहणञ्च न कार्यमित्येव युक्तमिति तदाशयः । अभिमान इत्युक्तिबीजम्प्रकटयति—*प्रकृतसूत्रस्थेत्यादिना । *प्राक्=घटादौ । *मिद्भ्यः=शमादिभ्यः । *तदनभिधानेति । यङ्लुकोऽनभिधानेत्यर्थः । *इत्यंशस्येति । चिण्णमुलोर्णिज्यवेतानां यङ्लोपे चोपसङ्ख्यानम्" इति हि प्रकृतसूत्रे वार्त्तिकम् । *प्रत्याख्यानासम्भवः=ण्याकृतिनिर्देशेनेति रीत्या प्रत्याख्यानासम्भवः । शंशमयतेर्णिचि लुङि चिणि 'अशंशमि' 'अशंशामि', 'शंशमम्' 'शंशामम्'इति यथा स्यादित्येवमर्थन्तस्यांशस्यावश्यकत्वात् । *वचनारम्भ इति । तव मत इति शेषः । एवञ्च भाष्यकृतो ऽभिमानकल्पनापेक्षया मदुक्तव्याख्यानमेव युक्तमिति भावः । *इत्यर्थ इति । प्राचीनसम्मतैषा व्याख्या स्पष्टमित्यन्ता । स्वमतमाह—*भाष्यरीत्या त्विति । *अकर्मकत्वादिति । अहमाकारादिवृत्त्यनुत्पत्त्यनुकूलव्यापारस्य प्रकृते धात्वर्थत्वे तादृशनिवृत्तेर्व्यापारस्य चैकनिष्ठत्वेनाकर्मकत्वादित्यर्थः ।

नोदात्तोपदेश ( पा० सू० ७-३-३४ )। उपदेशेत्यनेन 'शमी' इत्यादौ घिनुणि वक्ष्यमाणस्वरेणानुदात्तत्वेऽपि निषेधः। अनाचमीति। यद्यपि भाष्ये आङ्रहित एव पठ्यते तथापि 'आचामः' इत्येव भाष्ये उदाहरणादाङ्पूर्व एव पर्युदस्यत इति भावः।

विभाषाचि ( पा० सू० ७-१-६९ )। "लभेश्च" ( पा० सू० ७-१-६४ ) इत्यतो लभेरिति वर्त्तते। प्रादेरित्युपसर्गोपलक्षणं, *भाष्यस्वरसात्। तत्र हि "उपसर्गात्खल्" ( पा० सू० ७-१-६७ ) इत्यत उपसर्गादित्यनुवर्त्य "न सुदुर्भ्याम्" ( पा० सू० ७-१-६८ ) इत्यतो नेति चानुवर्त्योपसर्गात्परस्य लभे*र्विभाषा नेति व्याख्यातम् "चिण्णमुलोरनुपसर्गस्येति वक्तव्यम्" इति वचनमेव वार्त्तिककृता कृतम्। द्विकर्मकेषु लादीनां व्यवस्थामाह-द्विकर्मकाणान्त्विति। दुह्यादेरित्यनेन "अकथितञ्च" ( पा० सू० १-४-५१ ) इति *सूत्रविषयाणां ग्रहणम्। प्रधाने इति। एतेन तेषां दुह्यादिपाठोऽसङ्गत इति दर्शयति। अन्येषाम्=गत्यर्थाकर्मकहृकरोतीनाम्। एतद्वाचनिकमेव। *स्पष्टं चेदम् "अकथितञ्च" ( पा० सू० १-४-५१ ) इति सूत्रे भाष्ये। *एतदप्यनेकसन्निधौ। तदभावे तु मुख्येऽपि भवति *'गवा दोग्धव्यं पयः' इत्यादि। तदुक्तम् "अकथितञ्च" ( पा० सू० १-४-५१ ) इति सूत्रे भाष्ये गुणकर्मणि लादिविधिः*स परे*ध्रुवचेष्टितयुक्तिषु चाप्यगुणे। अपर आह-

'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्।
अप्रधाने दुहादीनां, ण्यन्ते कर्तुश्च कर्मणः॥' इति।

---

*भाष्यस्वरसादिति। एवञ्च "विभाषा चिण्णमुलोः" (पा० सू०७-१-६९ ) इत्यस्य व्यवस्थितविभाषात्वं सप्रमाणमेवेति ध्वनितम्। *विभाषा नेतीति। एवञ्च नुमो नित्यत्वमर्थादेव लभ्यते। *सूत्रविषयाणाम्=दुहियाचिप्रच्छीत्यादिना भाष्ये पठितानाम्। *स्पष्टञ्चेति। प्रधानकर्मणीत्यारभ्य यदुक्तन्तत्सर्वमेवमेव स्पष्टमभिहितमित्यर्थः। नन्वेवं 'दुह्यते पयो गोपेन' इति न स्यात्पयसो मुख्यकर्मत्वादत आह—*एतदप्यनेकेति। *गवा दोग्धव्यम्पय इति। अत्र गोः करणत्वविवक्षा द्रष्टव्या। *सपर इति। सह परेण="गतिबुद्धि" ( पा० सू० १-४-५२ ) इति सूत्रेण। तत्र गुणकर्मशब्देन प्रयोज्यकर्म विवक्षितम्। अपर आहेत्यादिना 'ण्यन्ते कर्त्तुश्च कर्मणः' इत्यभिधानेन तदेकवाक्यत्वात्। *ध्रुवचेष्टितयुक्तिषु। ध्रुवयुक्तिषु=अकर्मकेषु, चेष्टितयुक्तिषु=गत्यर्थेषु।

उत्तरमते—

आद्यार्द्धे नयतिस्तुर्यपादे गमिरुदाहृतः ।

अकर्मकाणामिति । "लः कर्मणि" ( पा० सू० ३-४-६९ ) इति सूत्रे निर्णीतमेतत् ।

इति भावकर्मप्रक्रिया ।

न विवक्ष्यत इति । *तत्तत्कारकव्यापारश्च प्रधानधात्वर्थत्वेन न विवक्ष्यते इत्यपि बोध्यम् । कर्मणस्त्विवाति । *फलसमानाधिकरणतद्व्यापारस्यैव प्राधान्येन विवक्षायामित्यर्थः । प्रायेणाकर्मका इति । व्यापारव्यधिकरणफलाश्रयस्याभावादिति भावः । द्विकर्मकाणां कर्मणः कर्तृत्वविवक्षायामपि सकर्मकत्वात्प्रायेणेति । अकर्मकत्वफलमाह—तेभ्यो भावे इति ।

क्रियायाः कर्मणा साधनेन तुल्यत्वासम्भवात्कर्मशब्द*स्तत्स्थक्रियालक्षकः 'मञ्चाः क्रोशन्ति' इतिवत् । तुल्यक्रिय इति *बहुव्रीहिः एकरूपयोरपि क्रिययोः कर्तृकर्मावस्थाभेदेनौपाधिक*भेदारोपेण तुल्यत्वमुपपाद्यम् । "कर्तरि शप्" ( पा० सू० ३-१-६८ ) इत्यतः कर्तरीत्यनुवर्त्य प्रथमया विपरिणम्यत इत्याह—कर्तेति । *कर्मसञ्ज्ञक इत्यर्थशङ्कावारणाय वतिः । तादृशेऽर्थे हि सकर्मकत्वाद्भावे लो न

---

'पूर्वाचार्यप्रसिद्ध्या ध्रुवयुक्तयोऽकर्मका उच्यन्ते' इति कैयटः । इति भावकर्मप्रक्रियाविवरणम् ।

## अथ कर्मकर्तृप्रक्रियाविवरणम् ।

*तत्तत्कारकेति । करणादिकारकेत्यर्थः । अत एव तेषाङ्कर्तृत्वोपपत्तिः । *फलसमानाधिकरणेति । एवञ्च कर्तृसंज्ञायाः कर्मसंज्ञाबाधकत्वेनैतच्छास्त्रीयकर्मसंज्ञकार्थानन्वय्यर्थकत्वसत्त्वेनाकर्मकत्वम् । द्विकर्मकस्थले त्वेकस्य कर्मणः कर्तृत्वेऽप्यपरस्य कर्मणः सत्त्वान्नैतादृशमकर्मकत्वम् ।

कर्मवत्कर्मणा तुल्यक्रियः ( पा० सू० ३-१-८७ ) । *तत्स्थक्रिया=कर्मस्थक्रिया । अत्र क्रियाशब्दः फलपरः । *बहुव्रीहिरिति । तुल्या क्रिया यस्मिन्निति विग्रहः । *भेदारोपेणेति । सादृश्यस्य भेदघटितत्वमताभिप्रायेणेदम् । "गोतो णित्" ( पा० सू० ७-१-९० ) इति वद्वतिनिर्देशाभावेऽपि तल्लाभो भविष्यतीति शङ्कायामाह—*कर्मसंज्ञक इति । *तयोः=यगात्मनेपदयोः । ननु भावे

स्यात्। कार्यातिदेश इति । प्राधान्यादिति भावः । न च कार्यातिदेशेऽप्यतिदिश्यमानकार्याणामुत्पत्तिदेश एव देश इति भाष्यसम्मते पक्षे परत्वाच्छ्प्परस्मैपदे एव स्यातां न तु यगात्मनेपदे इति वाच्यम्। "न दुहस्नुनमां यक्चिणौ" ( पा० सू० ३-१८९ ) "कुषिरञ्जोः" ( पा० सू० ३-१-९० ) इत्याद्यारम्भसामर्थ्येन परमपि बाधित्वा *तयोरतिदेशात्, तदाह-तेनेत्यादि । छिनत्ति स्यादिति ।*न चोक्तरीत्या परत्वात्तृतीयापत्तिः । द्वितीयेत्यनेन कृत्यादेरुपलक्षणेनादोषात् । कार्यातिदेशेऽतिदेशदेश एव देश इति मते मूलमित्यन्ये । अतिदेशेन स्वनिष्ठाकर्मकत्वस्य निवारणेन भावे लो न स्यादिति ;*न शङ्कितम् । यदि तु अतिदिश्यमानविरुद्धस्वाश्रयाभावोऽतिदेशस्वाभाव्यात्तदा सोऽपि दोषो बोद्ध्य इति *केचित् । लकारवाच्य इति । *तत्र तस्य विधानादिति भावः । छिलकारकादिति । *सूत्रं *निर्देशो वाऽन्यपदार्थः । ल इतीति । अनेन तस्य लुप्तषष्ठ्यन्तत्वं दर्शयति । कृत्यक्तेति । *इदमुपलक्षणं* 'कतीह भिन्दानाः कुसूलाः' इत्यत्र चानशि न कर्मवत्त्वमिति । न यगित्यपि बोध्यम् । *क्तोऽत्र "निष्ठा" ( पा० सू० ३-२-१०२ ) इति सूत्रविहितः कर्मार्थको गृह्यते । तेनाकर्मकत्वप्रयुक्तः कर्तरि क्तो *भवत्येव । *अत

---

यत्र 'पच्यते ओदनेन' 'भेत्तव्यं कुसूलेन' इति प्रयोगस्तत्र ओदनादिपदाद् द्वितीया या आपादनमसङ्गतमतिदिश्यमानकार्याणामुत्पत्तिदेश एव देश इति सिद्धान्तात् द्वितीयायास्तृतीयापेक्षया पूर्वत्वादित्याशङ्क्ते-*न चेति । *न शङ्कितमिति । एकस्मिन्नेव पुत्रे ज्येष्ठत्वातिदेशेऽपि कनिष्ठत्वव्यवहारवद्भावे लकारो भविष्यतीति भावः । *केचित्=मुख्याः । कर्तुर्लकारवाच्यत्वमुपपादयति-*तत्र तस्य विधानादिति । कर्त्तरि लकारस्य विधानादित्यर्थः । छिलकारकादित्यस्य छौ लकारौ यस्मिन्नित्यर्थः । अन्यपदार्थजिज्ञासायामाह-*सूत्रमिति । लुप्तषष्ठ्यन्तलकारसहितं "लिङ्याशिष्यङ्" ( पा० सू० ३-१-८६ ) इति सूत्रमित्यर्थः । *निर्देशः=छिङीति निर्देशो वाऽन्यपदार्थः । *इदमिति । मूलोक्तकृत्यक्तेत्युपलक्षणम् । एतत्फलमाह-*कतीहेत्यादिना । भिन्दानाः=भेदवन्तः । भेदो=द्विधाभवनम् । क्तप्रत्ययविषये विशेषमाह-*क्तोऽत्रेति । *भवत्येवेति । कर्मत्वं यस्योत्पत्तौ निमित्तन्तस्यातिदिष्टकर्मत्वेन प्रसक्तिर्वाच्या "गत्यर्थाकर्मक" ( पा० सू०३-४-७२)इति क्तस्त्वतिदेशात्पूर्वमपि प्राप्नोतीति न तस्य बाध इति भावः । *अत एव=क्तविशेषस्य ग्रहणादेव । लकारवाच्यः कर्त्ता कर्मवदित्यतिदेशात् "निष्ठा" ( पा० सू० ३-२-१०२ ) इति सूत्रविहितः क्तप्रत्ययो न भवतीत्युक्तन्तस्य फल-

एव 'सिनोतेर्ग्रासकर्मकर्तृकस्य" इति सङ्गच्छते । *तेन *'परशुभिन्नः कुसूलः' इत्यादौ "तृतीया कर्मणि" ( पा० सू० ६-२-४८ ) इति पूर्वपदप्रकृतिस्वरस्याभावसिद्धिः । *एतेन 'सृजस्यात्मानमात्मना' इत्यादाविवौपाधिकभेदमाश्रित्य स्वयमित्यस्यात्मनेत्यर्थात्कर्तृत्वेनौदनस्य कर्मत्वान्मुख्ये *कर्मण्येव प्रत्ययोऽस्तु किमतिदेशेनेत्य *पास्तम् । *क्तादीनामप्यापत्ते *र्निवृत्तप्रेषणतायां 'साध्वसिश्छिनत्ति' इति वत् 'पचत्योदनः' इत्यस्यापत्तेश्च । *'नमते दण्डः' इत्यादौ यक्चिणोः प्रतिषेधे शप्चङोरनापत्तेश्च । *क्वचित्प्रयुज्यमानं स्वयमेवेति तु कर्त्रन्तराभावप्रतिपादनपरमिति दिक् । व्यवहार इति । उपपादितमेतत् । *प्रत्यासत्त्या समानधातौ कर्मस्थक्रियया तुल्यक्रियत्वाश्रयणात् 'पचत्योदनं देवदत्तः' इत्यत्र कर्मणो 'राध्यत्योदनः' इत्यत्र कर्तृत्वेऽपि न कर्मवत्त्वमिति बोद्ध्यम् । *ननु करणत्वावस्थायां वस्तुतः सन्नप्यसिस्थाल्योर्व्यापारो न धातुनोपात्तः, प्रकृतसूत्रे च "धातोरेकाचः" ( पा० सू० ३-१-२२ ) इत्यतो धातोरित्यनुवर्त्य घा-

---

माह-*तेनेति । *परशुभिन्नः कुसूल इत्यादाविति । परशुना भिन्न इति करणतृतीयान्तस्य "गत्यर्थ" (पा०सू०३-४-७२) इति सूत्रविहितक्तान्तेन सह समासःसाधनङ्कृतेति । यद्यत्रातिदिष्टकर्मत्वमादाय"निष्ठा"(पा०सू०३-२-१०२)इतिसूत्रविहितः कर्मणि क्तः स्यात्तदा तृतीयान्तम्पूर्वपदङ्कर्मवाचकक्तान्ते उत्तरपदे प्रकृतिस्वरं स्यादित्यर्थकं यत् "तृतीया कर्मणि"(पा०सू०६-२-४८)इतिसूत्रन्तत्प्रवर्त्तेत । यत्त्वत्र कैयटेन'भिद्यते कुसूलः'इत्यत्रातिदिष्टकर्मत्वमादाय द्वितीया कुसूलपदान्न भवतीत्युक्तन्तत्तु न युक्तङ्कर्मत्वातिदेशेऽप्यनभिहितत्वाभावेन द्वितीयाया अप्राप्तेः । अनभिहितत्वविशिष्टकर्मत्वस्याप्यतिदेशस्तु वक्तुमशक्यः । सामान्यस्यातिदेशेऽपि विशेषानतिदेशात् । *एतेन=लकारवाच्यकर्तुरेव कर्मत्वातिदेशेन । *कर्मण्येवेति । 'पच्यते ओदनः स्वयमेव'इत्यत्र मुख्ये कर्मण्येवास्तु । *अपास्तमिति । कर्त्तरि प्रत्ययो यत्र तत्रैवातिदेश इति भवदुक्तशङ्कावसराभावादपास्तमित्यर्थः।*क्तादीनामिति । तथात्वे इष्टापत्तिस्तु कर्त्तुमशक्या । 'परशुभिन्नः कुसूलः' इति प्रयोगे "तृतीया कर्मणि"(पा०सू०६ २-४८)इति पूर्वपदप्रकृतिस्वरापत्तेः।अतिदेशविधायकसूत्राभावे दूषणान्तरमाह-*निवृत्तेति । 'नमते दण्डःस्वयमेव' इत्यत्र चेत्कर्मणि प्रत्ययस्तदा दूषणान्तरमाह-*नमत इत्यादिना । नन्वेवं स्वयमेवेत्यस्य वैयर्थ्यात्प्रयोग एव न स्यादत आह-*क्वचिदिति । न च "लिङ्याशिष्यङ्" ( पा० सू० ३-१-८६ ) इत्यत्र लिशब्दात्पूर्वं लकारप्रश्लेषे तस्य श्रवणापत्तिरिति वाच्यम् । संहितापाठे व्यत्ययो बहुलंलिङ्याशिषीत्यत्रैव हलो यमां यमीत्यनेन लोपात् । 'राध्यत्योदनः' इत्यादौ कर्मवद्भावातिप्रसङ्गं वारयति-*प्रत्यासत्त्येति । "साध्वसिः' इत्यत्र कर्मणेत्यस्याभावेऽपि कर्मवद्भावस्य नापत्तिरित्याशङ्कते—*ननु

तोर्वाच्यया क्रियया तुल्यक्रिय इत्यर्थोऽतो नायं दोषोऽत आह-किं चेति। कर्मणेत्येतत्सामर्थ्यात् दृश्यमानकर्मनिष्ठविशेषप्रयोजककर्मस्थक्रिया *लक्ष्यत इति भावः। नेतरत्रेति। राजदर्शनग्रामगमनादौ कर्तर्येव हर्षश्रमादिलक्षणविशेषदर्शनात् *कर्तृस्थेत्येव व्यवहार इति भावः। उत्पादनार्थ इति। उत्पत्त्यनुकूलव्यापारार्थ इत्यर्थः। उत्पत्तिफलको यत्नो वाच्य इति तु न युक्तं 'बीजेनाङ्कुरः कृतः' इत्य*नापत्तेः। एतेन=ज्ञानस्य कर्तृस्थत्वेन। न त्वात्मनेपदमिति। शानजित्यर्थः। यगात्मनेपदयोस्त्वनुव्यवसीयमाने इति स्यादिति भावः। अन्योन्यं स्पृशत इति। *अयं भावः-कर्मपदेन तत्स्था क्रिया लक्ष्यते, न तु कर्मत्वोपयोगिनी तत्स्था क्रिया। मानाभावात्। एवञ्च 'अन्योन्यम्' इत्यादावुभयोः शब्दभेदेन कर्तृत्वकर्मत्वसत्त्वा*द्यैवैकस्मिन् संयोगानुकूलक्रिया संयोगो वा सैवापरस्मिन्कर्तरीति कर्मस्थक्रियया तुल्यक्रियकर्तृसत्त्वात्प्राप्तिः। *आश्रयभेदाद्भेदेन च तुल्यत्वाव्याघातः। यद्यपि 'इमौ गङ्गां स्पृशतः' इत्यत्र *कर्तृस्थः स्पर्शस्तथापि प्रकृते कर्मणोस्तयोरन्योन्यसंयोगकृतहर्षादिलक्षण-

---

करणत्वेति। *लक्ष्यत इति। एवञ्च लक्ष्यमाणार्थस्य शाब्दबोधविषयतासिध्यर्थङ्कर्मणेत्यावश्यकमिति भावः। *कर्तृस्थेत्येव व्यवहार इति। एतत्तत्त्वस्प्रागभिहितम्। ज्ञानेच्छावद्यत्नस्यापि कर्तृस्थत्वात् 'क्रियते घटः' इति नैयायिकमते करोतेर्यत्नार्थकत्वे न सिद्ध्येदित्याह-करोतिरुत्पादनार्थ इत्यादिना मूले। ननु केवलयत्नमात्रस्य कृञ्वाच्यत्वन्न वदामः किन्तु कृत्यनुकूलयत्नस्येति शङ्कां वारयति-*अनापत्तेरिति। बीजे तादृशयत्नाभावादनापत्तेरित्यर्थः। न च करोतेरुत्पत्त्यनुकूलव्यापारसामान्यार्थकत्वे कृतिशब्दाद्यत्नातिरिक्तव्यापारस्यापि बोधापत्तिरिति वाच्यम्। तस्य क्तिजन्ततया यत्नमात्रे रूढिस्वीकारात्। ननु 'पच्यते ओदनः' इत्यत्र यथा कर्मस्था क्रिया विक्लित्तिरूपा सैवावस्थाभेदेन कल्पितभेदवती व्यापारस्य त्यागेन कर्तृस्था सम्पन्नेति तामादाय कर्तृस्थक्रियत्वाद्भवति कर्मवद्भावस्तथा नान्योऽन्यं स्पृशत इत्यत्रास्ति एकस्य चैत्रस्य यत्क्रियामादाय कर्मत्वन्तत्क्रियामादाय न कर्तृत्वमिति कर्मवद्भावस्य न प्राप्तिरिति कथमेतत्सकर्मकाणामित्यस्योदाहरणमत आह-*अयम्भाव इति। *यैवेति। यज्जातीयैवेत्यर्थः। साजात्याद्भेदापरामर्शेन यैवेत्युक्तिः। प्रकृते तुल्यत्वमवस्थाभेदेन न किन्तु स्वरसत एवेत्याह-*आश्रयभेदादिति। *कर्तृस्थः स्पर्श इति। तथा च कथङ्कर्मवद्भावप्राप्तिरिति भावः। मूलेऽजा ग्राममन्नयति इति। अत्र नयतेर्हि-कर्म कतया अजारूपकर्मणः कर्तृत्वविवक्षायाङ्कर्मस्थया क्रियया तुल्यक्रियत्वसत्त्वा-

विशेषदर्शनात्कर्मस्थः स इति । अजा ग्राममिति । *इदन्तु चिन्त्यम् । गमनानुकूलव्यापाररूपेणाजानिष्ठफलेन *नेतृव्यापारेण वा तत्र विशेषादर्शनेन कर्मस्थक्रियत्वाभावात् । यदि ग्रामसंयोग*स्तथेत्युच्यते तर्हि 'ग्रामङ्गच्छति' इत्यादौ ग्रामेऽपि पुरुषसंयोगरूपविशेषदर्शना*द्गम्यर्थस्यापि कर्मस्थत्वं स्यात् । *अत एव 'अन्योन्यमाश्लिष्यतः' *इत्येव भाष्ये उदाहृतम् । दुहिपच्योरिति । अनयोर्द्विकर्मकतयैकस्य कर्मणः कर्तृत्वेऽप्यपरेण सकर्मकत्वादप्राप्ते वचनम् । *द्व्यर्थत्वात्पचेः 'तण्डुलानोदनं पचति' इतिवद् द्विकर्मकत्वम् । *यद्वा वृक्षपाकमन्तरेण फलपाकासम्भवात्पाचिरत्र

---

त् प्राप्तः कर्मवद्भावो ग्रामरूपकर्मणा सकर्मकत्वान्निषिध्यत इति भावः । *इदन्तु चिन्त्यमिति। अजायाः कर्मत्वं संयोगानुकूलव्यापारमादायोपपादनीयं स एवेदानीं कर्तृस्थो भवतीति यद्यपि कर्मवद्भावस्य प्राप्तिर्वाच्या सा न युज्यते । तद्व्यापारकृतविशेषस्य तत्रादर्शनात् । कर्त्रन्तरभेदमादाय विशेषो वाच्यस्सोऽपि नेत्याह—*नेतृव्यापारेणेति । *तथेति । कर्मणि विशेषसम्पादकः । *गम्यर्थस्यापीति । तथा च 'गच्छति ग्राम' इत्यत्र कर्मवद्भावापत्तिः । *अत एव=यत्र क्रियाकृतस्य विशेषस्य सुप्रसिद्धिस्तदेवोदाहरणं युक्तमित्यभिप्रायादेव । *इत्येवेति । एतज्जातीयकमेव । एतेन प्रकृतवार्त्तिकोदाहरणावसरे भाष्यकृता अन्योऽन्यमाश्लिष्यतः, अन्योऽन्यं संस्पृशतः, अन्योऽन्यं गृह्णीतः इत्येवमुदाहरणत्रयोपादानेन इत्येवेत्युपादानमसङ्गतमित्यपास्तम् ।

दुहिपच्योर्बहुलम् । ( का० वा० ) । सकर्मकयोर्दुहिपच्योः कर्त्ता बहुलं कर्मवद्भवतीति वाच्यमित्यर्थः । दुग्धे गौः पयः स्वयमेव । अत्र गोः कर्मणः कर्तृत्वविवक्षायान्द्रवद्द्रव्यवृत्तिविभागानुकूलव्यापारमात्रं धात्वर्थः । गोः कर्तृत्वेऽपि पयसः कर्मणः सत्वान्निषेधे प्राप्ते वचनम् । पचधातूदाहरणम्भाष्ये 'उदुम्बरः फलम्पच्यते' इति प्रदर्शितम । द्विकर्मकत्वे तूदाहरणम् 'उदुम्बरम्फलङ्कालः पचति'इति। तत्रोदुम्बरस्य कर्मणः कर्तृत्वविवक्षायाम् 'उदुम्बरः फलम्पच्यते'इति प्रयोगः । अत्र द्विकर्मकत्वमुपपादयति-*द्व्यर्थत्वादित्यादिना । 'तण्डुलानोदनम्पचति' इत्यत्र विक्लित्त्यनुकूलो निष्पत्त्यनुकूलश्च व्यापारो धात्वर्थः। स च व्यापारो बहिर्भूतदेवदत्तादिनिष्ठः । तद्वत् प्रकृते विभागानुकूलव्यापारानुकूलो विलक्षणरसोत्पत्त्यनुकूलश्च व्यापारो धात्वर्थः । स च व्यापारः कालनिष्ठः । यदा सौकर्यविवक्षया कालनिष्ठव्यापारस्य त्यागे उदुम्बरनिष्ठव्यापारस्य तादृशरसोत्पत्त्यनुकूलव्यापारानुकूलत्वविवक्षा तदा कर्मण उदुम्बरस्य कर्तृत्वं विवक्षाभेदेन वृक्षनिष्ठव्यापारमादाय समानक्रियत्वादादौ कर्मवदित्यस्य प्राप्तिः । विभागः फलावयवनिष्ठस्तन्निष्ठा कार्यता स्वाश्रयसमवेतत्वसम्बन्धावच्छिन्ना बोध्या । *यद्वेति । अयम्भावः—द्विकर्मकत्वावस्थायां रसविशेषोत्पत्त्यनुकूलव्यापारानुकूलो यःकालनिष्ठो व्यापारः स एव धात्वर्थः । सौकर्यविवक्षातः पूर्वं वृक्षे पाकश्च तादृशर-

विषये द्विकर्मकः, कालस्तु तदा कर्ता बहुलग्रहणं नेह पक्षे परस्मैपदार्थन्तस्यात्रा*निष्टत्वात् ।

विकल्पेनेष्यत इति । "*दुहश्च" ( पा० सू० ३-१-६३ ) इत्यनेनेति भावः । कर्मकर्त्तरि तशब्दे परे दुहेश्चिण्वेति तदर्थः । गौः पय इति । अप्रधानगोरूपकर्मण एव तथा विवक्षा नान्यस्येति भावः । 'गौः पयस्त्यजति' *इत्येतदर्थः ।

अचः कर्म ( पा० सू० ३-१-६२ ) । "चिण् ते" ( पा० सू० ३-१-६० ) इत्यतश्चिणिति, "दीपजन" ( पा० सू० ३-१-६१ ) इत्यतोऽन्यतरस्यामिति चानुवर्त्तते । इदं सूत्रमत्रास्थाने पतितं, करोतिप्रसङ्गतू*चितम् ।

श्रद्धोपपन्ने इति । *स च मुख्यकर्तैवेति तत्रात्यन्ताप्राप्तकर्मवद्भावार्थं, युजस्तु कर्मकर्त्तरि सकर्मकत्वेन प्रतिप्रसव*विध्यर्थम् । युज्यते ब्रह्मेति । । *"योगो ब्रह्मचारिणं युनक्ति" सम्बन्धानुकूलव्यापारवान्

---

सोत्पन्नानुकूलव्यापार एवेति । *अनिष्टत्वादिति । "बहुलवचनङ्किमर्थम् । परस्मैपदार्थं बहुवचनम् । यद्येवमार्थौ बहुलवचनेन । न हि परस्मैपदमिष्यते" इति भाष्यकारोक्तिरत्र प्रमाणम् । एवञ्च बहुलग्रहणस्प्रत्याख्यातमेवेति प्रतिभाति । परन्त्वेवम्बोध्यम् । प्रकृतवार्त्तिके यद्यपि न बहुलग्रहणस्य प्रयोजनन्तथापि करणेन तुल्यक्रिय इति वचने भाष्यकारपठिते उपयुज्यते । परिवारयति कण्टकैर्वृक्षम् । परिवारयन्ते कण्टका वृक्षमिति । अत्र "बहुलग्रहणात्साध्वसिश्छिनत्तीत्यादौ न भवति" इति कैयटः । अत एव तस्यात्रानिष्टत्वादिति लेखनेनैतद्वार्त्तिके बहुलवचनस्य प्रयोजनाभावः सूचितः ।

मूले चिण् तु विकल्पेनेष्यत इति । तत्र नेयमपूर्वेष्टिः किन्तु "दुहश्च" ( पा० सू० ३-१-६३ ) इतिसूत्रसिद्धार्थकथनमेतदिति बोध्यम् । तदेवाह-*दुह इति । *इत्येतदर्थ इति । 'गौः पयो दुग्धे' इत्यस्य गौः पयस्त्यजतीत्यर्थ इत्यर्थः ।

*उचितमिति । करोतेरजन्तत्वादिति भावः । "दुहश्च" ( पा० सू० ३-१-६३ ) इत्यस्य कर्मकर्त्तर्येव विकल्पेन चिण्विधायकत्वाच्चात्रास्मादेव सूत्रात्कर्मकर्त्तरीत्यनुवर्त्तेत इति मूलाशय इति कश्चित् ।

*स चेति । स्रजेः श्रद्धोपपन्नः कर्ता चेत्यर्थः । *विध्यर्थमिति । इदं वार्त्तिकमिति शेषः । युज्धातुविषये कर्मणः कर्तृत्वन्दर्शयति-*योग इति । युनक्तीत्यस्य सम्बध्नातीत्यर्थः । सम्बन्धश्च योगप्रतियोगिको ब्रह्मचार्यनुयोगिकः । योगश्च शमदमादिसम्पत्तिरूपः । प्रथमकक्ष्यायामाश्रयतारूपो यः सम्बन्धस्तद्-

भवतीति पूर्वकक्षा, *ततो युजेः प्रतियोगित्वावच्छिन्नसम्बन्धार्थकत्वे ब्रह्मचारिणः कर्तृत्वं, प्रतियोगिताश्रयत्वाच्च योगस्य कर्मत्वं बोध्यम् । भूषाकर्मेति । कर्मशब्दः क्रियापरः । यद्यपि भूषावाचिण्यन्तेषु "णिश्रि" ( का० वा० ) इत्यनेन यक्चिणोः प्रतिषेधः सिद्धस्तथापि *चिण्वदिडभावायेदम् । 'अन्यत्रात्मनेपदात्'इत्युक्तेस्त्रयाणामपि निषेध इत्याह—यगित्यादि । अवकिरते इति ।'कश्चित्परशवादिना हस्तिन*मवकिरति'इति पूर्वकक्षा । कॄ–गॄ–ह–धृ–प्रच्छः=किरादयः । तत्रा*द्ययोः कर्मस्थक्रियत्वयात्मनेपदव्यतिरिक्तनिषेधार्थम*न्येषां कर्तृस्थक्रियत्वेनात्मनेपदविद्ध्यर्थमिदम् ।

विध्यर्थमिदमिति । अयं भावः–उपवासादि तपस्तापसं तपति

---

त्वाद् ब्रह्मचारिणः कर्मत्वम् । ततो द्वितीयकक्ष्यायां योऽर्थस्तमाह—*तत इति । यत्तु द्वितीयकक्ष्यायांयुजेः सम्बन्धमात्रमर्थः । योगमिति द्वितीया तु प्रतिशब्दाध्याहारेण तद्योगे 'अभितः परितः'(का०वा०)इत्यनेन । एवञ्चाकर्मकत्वात्कर्मवद्भावः "कर्मवत्कर्मणा"(पा० सू० ३–१–८७) इत्येव सिद्धः । प्रकृतवार्त्तिके युजिग्रहणन्तु श्यन्मात्रविधानार्थमिति । तन्न । सृजियुज्योः श्यँस्त्विति वार्त्तिकव्याख्यानावसरे भाष्यकृता दुहिपच्योरिति वार्त्तिकात्सकर्मकयोरित्यस्यानुवृत्तिः सृजियुज्योः सकर्मकयोः कर्त्ता बहुलङ्कर्मवद्भवतीत्युक्त्या दर्शिता तद्विरोधात् । 'युज्यते' इत्यत्र श्यन्यकोर्विशेषश्च स्वरविशेषसम्पादकत्वेन द्रष्टव्यः । श्यनि नित्त्वात्प्रकृतेराद्युदात्तत्वम्भवति । यकि तु तङो लसार्वधातुकानुदात्तत्वे प्रत्ययस्वरेण यक एवोदात्तत्वं स्यात् ।

भूषाकर्मकिरादीनाम् (का० वा०) । "कर्मवत्कर्मणा" ( पा० सू० ३–१–८७ ) इतिसूत्रस्थं वार्त्तिकम् । *चिण्वदिडभावायेति । चेन तस्य सङ्ग्रहः । *अवकिरतीति । ताड़यतीत्यर्थः । *आद्ययोः=कॄगॄअनयोः । *अन्येषामिति । आद्यस्योपादेयत्वादिप्रकारकज्ञानानुकूलव्यापारो द्वितीयस्य धारणानुकूलव्यापारोऽर्थः । एतयोः कर्मणि क्रियाकृतविशेषानुपलम्भः स्पष्टः । तृतीयस्य ज्ञानेच्छानुकूलव्यापारोऽर्थः । अत्रेच्छारूपफलविशेषणज्ञानविषयस्यापीच्छाकर्मत्वं ग्रामञ्जिगमिषतीतिवत् । कर्मस्थक्रियकत्वाभावोऽत्रापि पूर्ववत् 'आपृच्छते चैत्रः' इत्यादि । मूले चिकीर्षते कट इति । अत्र सन्प्रत्ययार्थेच्छाविशेषणकरोत्यर्थनिरूपितकर्मत्वाश्रये उत्पत्तिरूपफलकृतस्य विशेषस्य दर्शनात्सन्नन्तेऽपि कर्मस्थक्रियकत्वादात्मनेपदव्यतिरिक्तनिषेधार्थे, यत्र तु 'जिज्ञासते घटः' इति प्रयोगस्तत्रात्मनेपदाप्राप्ते विध्यर्थञ्च सन्ग्रहणमिति बोध्यम् ।

न रुधः ( पा० सू० ३–१–६४ ) । अवारुद्ध गौः । निर्गमप्रतिबन्धपूर्वकदेशविशेषाधिकरणचिरस्थित्यनुकूलव्यापारो रुधधात्वर्थः । चिरस्थितेः कर्मनिष्ठत्वादयं कर्मस्थक्रियकः ।

दुःखयतीत्यर्थः । एवञ्च तापसस्य कर्मत्वे तपर्दुःखजननमर्थः, कर्तृत्वे त्वर्जनमर्थः तापसस्तप्यते अर्जयतीत्यर्थः । एवञ्च *क्रियाभेदात्सकर्मकत्वाच्चाप्राप्तो विधिरिति वृत्त्यनुसारिण इति । *भाष्ये त्वे*वकारसामर्थ्यान्नियमार्थत्वमुक्तम् । तत्र हि "सकर्मकाणां प्रतिषेधो वक्तव्यः" इत्यस्य प्रत्याख्यानाय "तपेर्वा सकर्मकस्य वचनं नियमार्थन्तपेरेव सकर्मकस्य नान्यस्येति तपेरिति योगविभागेनायं नियमः तस्य च तपःकर्मकस्यैव कर्ता कर्मवदिति । तेनेह न 'उत्तपति सुवर्णं सुवर्णकारः' उत्तप्यमानं सुवर्णं सुवर्णकारमुत्तपति" इत्युक्तम् । तस्या*यं भावः—यद्यप्युपवासादिरूपन्तपस्तापसन्तपतीत्यत्र तपिर्दुःखार्थः तपस्तं दुःखयतीत्यर्थात्, तापसस्तप्यत इति तापसस्य कर्तृत्वेऽर्जनार्थः तापसस्तदर्जयतीत्यर्थात्; एवञ्च कर्मस्थक्रियया तुल्यक्रियत्वस्य कर्तरि अभाव इति न कर्मवद्भावप्राप्तिस्तथापि शरीरसन्तापलक्षणायाः क्रियाया अवस्थाद्वयेऽपि तुल्यत्वात्तत्प्राप्तिः । तथा हि तपस्तापसन्तपतीत्यत्र ज्ञानजनकोपवासादिरूपसन्तापविशेषः तापसं तापयतीत्यर्थः । अन्तर्भावितण्यर्थोऽत्र तपिः । तापसवृत्तिशरीरसन्तापसामान्यानुकूलव्यापारानुकूलव्यापारः सन्तापविशेषवृत्तिरिति बोधः । तदनुकूलव्यापारश्च सन्तापविशेषे स्वरूपावस्थानरूप एव । तापसे शरीरसन्तापसामान्यानुकूलव्यापारविशेषः स्वीकार एव । ण्यर्थत्यागे तापसस्य कर्तृत्वं तापसस्तपः सन्तप्यते इत्यत्र सन्तापविशेषाभिन्नशरीरसन्तापानुकूलव्यापारस्तापसकर्तृक इति बोधः । स व्यापार एव चार्जनं, तत्र क्रियाविशेषणत्वात् 'स्तोकमेधते' इत्यादाविव तपसः कर्मत्वम् । भाष्यप्रामाण्यादेव सामान्यविशेषभावेनान्वयिनि क्रियाविशेषणे 'तापसेन तपस्तप्यते' इत्यादौ कर्मणि लकारो भवत्येवेति बोद्धव्यम् । तदुक्तं भाष्ये "यथा 'गोपोषमपुषत्' इत्यादौ सामान्यपुषेरवयवपुषिः कर्म, एवं 'तापसे-

---

तपस्तपःकर्मकस्यैव ( पा० सू० ३-१-८८ ) । *क्रियाभेदादिति । यदा तपसः कर्तृत्वविवक्षा तदा या दुःखोत्पत्त्यनुकूलव्यापाररूपा क्रिया ततः—तपसः कर्मत्वे या अर्जनरूपा क्रिया सा भिन्नास्तीति कर्मस्थया क्रियया तुल्यक्रियत्वाभावादित्यर्थः । *भाष्ये त्विति । "न दुह" ( पा० सू० ३-१-८९ ) इतिसूत्रे भाष्यकृतास्त्वित्यर्थः । *एवकारसामर्थ्यात्=एवकारबलात् । नियमद्वयलाभाय योगविभागो दर्शितः । ननु वृत्त्युक्तरीत्या क्रियाभेदाद्विध्यर्थमेवैतत्सूत्रम्भविष्यतीति कथन्नियमपरत्वेनास्य विवरणमिति चेन्न । कस्याञ्चिदपि क-

न तपस्तप्यत' इत्यादौ सामान्यतपेरवयवतपिः कर्म''इति । अवयवतपिरित्यस्य विशेषतपिर्ज्ञानजनकोपवासादिरूपन्तप इत्यर्थः । अत एव कर्मणि ले कः प्रत्ययार्थः इति प्रश्ने 'स एव संतापः' इति भाष्ये उक्तम् ।

---

मेकर्तृवृत्तिक्रियायास्तुल्यत्वात् । तथाहि–'तपति तापसन्तपः' इति प्रथमा कक्ष्या । अत्र तपतिरन्तर्भावितण्यर्थः । शरीरसन्तापानुकूलव्यापारानुकूलव्यापारो धात्वर्थः । शरीरसन्तापानुकूलो व्यापारश्च शरीरसन्तापस्वीकारस्तदाश्रयतया तापसस्य कर्मत्वम् । तपःपदार्थश्च शरीरसन्ताप एव । तत्र तापसवृत्तितादृशस्वीकाररूपफलानुकूलो व्यापारश्च स्वस्वरूपेणावस्थानमेव । 'तप्यते तपस्तापसः' इति द्वितीया कक्ष्या । अत्र ण्यर्थस्य त्यागेन शरीरसन्तापानुकूलव्यापार एव तपेरर्थः । तदाश्रयतया तापसस्य कर्तृत्वमिति । स्तोकम्पचतीत्यत्रेव तपःपदार्थस्य प्रकृतधात्वर्थघटकशरीरसन्तापेऽभेदान्वयात्तपसः कर्मत्वम् । एवञ्च प्रथमकक्ष्यायाङ्कर्मस्था या क्रिया तत्तुल्या क्रिया तापसस्य कर्तृत्वावस्थायां वर्त्तत एवेति अस्य कर्मवद्भावस्य प्राप्तिरिति अस्य योगस्य नियमार्थत्वं युक्तमेव । सकर्मकत्वसाधर्म्यात्सकर्मकसामान्यविषयको नियमो न त्वत्र कर्मणो भेदाभेदान्वयविचार इति सकर्मकाणामित्यस्य प्रत्याख्यानं युक्तमेव । ततस्तपःकर्मकस्यैवेति द्वितीयो नियमः । अभेदान्वयाभिप्रायेणैव भाष्ये "किमिदन्तप" इति प्रश्ने "तपेरयमौणादिको अस्कारः" इत्युत्तरितम् । एतद्भाष्यैकवाक्यतया उणादीनामव्युत्पन्नत्वपक्षेऽप्ययमेवार्थस्तपःशब्दस्य । न च तपस्तपःकर्मकस्येत्युक्तन्तन्नोपपद्यते क्रियाकर्मणोर्भेदस्य सुप्रसिद्धत्वादिति वाच्यम् । एवंविधनिर्देशसामर्थ्यात्सामान्यविशेषभावेनैकस्या एव क्रियायाःक्रियाकर्मभावसम्भवात् । अमुमेवार्थन्दर्शयितुम्भाष्यकृतोक्तम्–"अथ कः प्रत्ययार्थःकःप्रकृत्यर्थः?, स एव सन्तापः । कथम्पुनः स एव नाम प्रकृत्यर्थः स्यात्स एव च प्रत्ययार्थः?, सामान्यतपेरवयवतपिः कर्म भवति"इति । यदि तपसस्तपधात्वर्थकर्मत्वन्तापसस्य कर्तृत्वन्तदा तापसेन तपस्तप्यत इति प्रयोगोऽपि स्यात् तत्र प्रत्ययार्थप्रकृत्यर्थयोर्भेदाभावादनुपपत्तिरित्याशयेन "अथ कः" इत्याद्युक्तिरिति । स एवेत्यनेनोत्तरम् । तपधात्वर्थ एव क्रियापदेन कर्मपदेन च गृह्यते इत्यर्थः । तपधात्वर्थश्च ज्ञानविशेषजनकोपवासादिरूपन्तपः अवयवतपिः स एव विशेषःसन्तापपदव्यवहार्यः । अत्र यथा विशेषसामान्ययोः कर्मक्रियाभावो दर्शितस्तथान्यत्राप्यस्तीति दृष्टान्ततया भाष्ये प्रदर्शितम्'एतान्पोषानपुषत् गोपोषम् अश्वपोषम् रैपोषमिति । सामान्यपुषेरवयवपुषिः कर्म भवति'इति । अत्र पोषानिति भावघञन्तं सामान्यम्, तस्य विशेषसमर्पकानि गोपोषमित्यादीनि भावघञन्तान्येव बोध्यानि । ननु विशेषस्य सामान्यनिरूपितकर्मत्वेऽपि विशेषस्य सामान्यार्थेऽभेदेनैवान्वयो वाच्यस्तथा च कर्मणि लकारो न सम्भवति । "लःकर्मणि" (पा० सू० ३-४-६९) इतिसूत्रघटकः कर्मशब्दो धात्वर्थे भेदसम्बन्धेनान्वयिकर्मबोधक एव भविष्यति कर्तृसाहचर्यादिति कथं 'तापसेन तपस्तप्यते'इति प्रयोग इति

प्रस्नुते इति । प्रस्नवनानुकूलोत्कण्ठोत्पादनं स्नौतेरर्थः । प्रास्नौ-ष्टेति । "स्नुक्रमोः"(पा० सू० ७-२-३६) इति नियमाद्वलादिलक्षण इण् न । केवलनमतेरकर्मकत्वादाह-अन्तर्भाविततेति । चिण्वदिट् तिर्यति । *उक्तबीजमेतत् । ब्रूते कथेति । उच्चारणेन शब्दे प्राकट्यरूपविशेषदर्शना*त्कर्मस्थक्रियत्वमस्येति बोध्यम् । णिश्रन्थि (भा० वा०) । अत्र कर्मकर्तृत्वं विना येऽकर्मकास्ते आत्मनेपदाकर्मकशब्देन गृह्यन्ते कर्मकर्तृत्वेनाकर्मकत्वस्याव्यभिचरितत्वात् तेषामन्तर्भावितण्यर्थत्वेन सकर्मकतां कृत्वा पुनः सौकर्यातिशयविवक्षायां कर्मकर्तृत्वं बोध्यम् । उदपुपुच्छतेति । पुच्छमुदस्तवानित्यर्थः । व्यकारिष्टेति । चिणि निषिद्धे ण्यन्तत्वाभावाच्चङभावे सिचि चिण्वदिटि वृद्धिः, *तदभावपक्षे आह-व्यकृतेति । "ह्रस्वादङ्गात्" ( पा० सू० ८-२-२७ ) इति सिचो लोपः ।

इति कर्मकर्तृप्रक्रिया ॥

---

चेन्न । प्रकृतभाष्यग्रन्थस्य प्रामाण्येन सामान्यविशेषभावेन यस्यान्वयस्तादृशकर्मणोऽपि ग्रहणङ्कर्मपदेनेति स्वीकारात् । द्वितीयनियमस्य प्रयोजनम्भाष्यकृतोत्तपतीत्यादिनोक्तन्तत्रापि तपिरन्तर्भावितण्यर्थ एव सुवर्णं सुवर्णकारमुत्तापयतीत्यर्थ एवेत्यर्थः । एतदेव विशदयति-*अयम्भाव इत्यादिना भाष्ये उक्तमित्यन्तेन ।

*उक्तबीजमिति । चिण्वदित्यत्र सप्तम्यन्ताद्वतिरिति प्रागुक्तम् । तेन चिणि यत्कार्यं तस्यातिदेशोऽयम् । चिण् नेत्यतिदेशो हि न चिणि कार्यमतः स्यादीनामत्र चिण्वदिट् भवत्येवेति भावः । *कर्मस्थक्रियत्वमस्येति । तथा च कर्मवद्भावस्य विषयतासत्त्वात्तेनातिदेशेन यक्चिणोः प्राप्तिर्बोध्या । भारद्वाजीयवार्त्तिके णीत्येवोपात्तन्न तु हेतुमण्णिरिति तेन णिङोऽपि ग्रहणमित्याशयेनोदाहृतम्मूले उत्पुच्छयते गौरिति । आत्मनेपदाकर्मकाणामित्यस्यात्मनेपदविधौ योऽकर्मकस्तस्येत्यर्थस्तदभिप्रायेणोदाहृतम् 'विकुर्वते सैन्धवा' इति । *तदभावपक्षे=चिण्वद्भावाभावपक्षे ।

कुषिरञ्जोः ( पा० सू० ३-१-९० ) । "न दुह" ( पा० सू० ३-१-८९ ) इत्यतो नेति यगिति च वर्त्तते । किन्तु श्यन्निति । यत्र यकः प्राप्तिस्तत्र श्यन्परस्मैपदञ्चेत्यर्थः । यकस्तु सार्वधातुक एव प्राप्तिरिति अनेन सार्वधातुक एव श्यन्विधीयते इति लभ्यते । एतेन लिटि लिङि च प्रवृत्तिर्नेति ध्वनितम् । चुकुषे पादः स्वयमेव । कोषिषीष्ट पादः स्वयमेव । ररञ्जे वस्त्रं स्वयमेव । रंक्षीष्ट वस्त्रं स्वयमेव इत्यत्र न श्यन् । यग्विषये श्यनः फलन्तु "ञ्नित्यादिः"( पा० सू० ६-१-

लकाराणां कालविषये उत्सर्गापवादशास्त्राण्याह–अभिज्ञा (पा० सू० ३-२-११२)। "भूते" (पा० सू० ३-२-८४) इत्यधिकारः, "अनद्यतने लङ्" (पा० सू० ३-२-१११) इत्यतोऽनद्यतन इति वर्त्तते। एवं बुध्यसे इत्यादिं। अत्र मानं *दृढं चिन्त्यम्।

अभुञ्ज्महीति। "अभिज्ञा" (पा० सू० ३-२-११२) इति लृटोऽनेन निषेधे औत्सर्गिको लङ्।

साकाङ्क्ष इति। *विद्यमानाकाङ्क्षे इत्यर्थः। तेनाकाङ्क्षानिरूपके तद्विषये च सिद्ध्यति। वत्स्याम इति। लक्ष्यलक्षणभावस्य*विवक्षितत्वा-

---

१९७) इति स्वरस्य प्रवृत्तिरूपम्। अत्र ताच्छीलिके चानशि 'कतीह कुष्माणाः पादाः' इत्यत्र श्यन्न। लवाच्यकर्तुः कर्मत्वातिदेशविधानेनात्र कर्मत्वातिदेशाप्राप्त्या यग्विषयताया अभावादित्यपि बोध्यम्। एवं श्यनि 'कुष्यन्ती जङ्घा'। अत्र "शप्श्यनोः" (पा० सू० ७-१-८१) इति नित्यन्नुम्। यत्र यत्र स्वयमेवेति प्रयुज्यते तत्र स्वयमेवेत्यस्यात्मनेत्यर्थः। तत्रात्मनः करणत्वन्न तु कर्तृत्वमन्यथा कर्मण्येव लविधानं स्यात्। इति कर्मकर्तृप्रक्रियाविवरणम्।

## ॥ अथ लकारार्थप्रक्रियाविवरणम् ॥

अभिज्ञावचने लृट् (पा० सू० ३-२-११२)। अभिज्ञा=स्मृतिः। वचनशब्दः करणल्युडन्तः। उदाहरणे 'गोकुले वत्स्यामः' इति वाक्यार्थोऽभिजानासीत्यस्यार्थे कर्मत्वेन सम्बध्यते। तेनास्मिन्विषये 'पश्य मृगो धावति' इत्यत्रेव गोकुलाधिकरणकास्मत्कर्तृकभूतानद्यतनवासकर्मकं कृष्णसम्बोध्यकं स्मरणमिति बोधः। *दृढश्चिन्त्यमिति। दृढशब्दोपादानेन "अभिज्ञावचने" (पा० सू० ३-२-११२) इति सूत्रेऽभिज्ञायामित्येव वक्तव्ये यथा कथञ्चिदभिज्ञा यत्र प्रतीयते तत्राप्यस्य प्रवृत्तिरित्यस्य मानस्य सम्भवेऽपि भाष्ये तथा नोक्तमतः संस्कारजन्यतावच्छेदकजात्यवच्छिन्नवाचकोपपद एवास्य प्रवृत्तिरिति ध्वनितम्। वचनशब्दस्तु स्पष्टार्थ एव। 'यद्वनेऽभुञ्ज्महि' इत्यत्र यच्छब्दः स्मृतिविषयार्थस्य झटित्युद्बोधकसन्निहितत्वद्योतनाय। भूतानद्यतनवनाधिकरणकास्मत्कर्तृकभोजनकर्मकं स्मरणमिति बोधः।

विभाषा साकाङ्क्षे (पा० सू० ३-२-११४)। साकाङ्क्षपदस्य प्रायेणाकाङ्क्षाविषये एव प्रसिद्धिदर्शनादाह–*विद्यमानेति। तेन निरूपकत्वविषयत्वान्यतरसम्बन्धेनाकाङ्क्षावैशिष्ट्यं विशेषणमत्रेति बोधितम्। *विवक्षितत्वादिति। ज्ञापकत्वेन ज्ञाने कस्यायमर्थो ज्ञापकः। ज्ञाप्योऽयमिति ज्ञाने किमस्य ज्ञापकमित्याकाङ्क्षाया उत्थिताया दर्शनात्प्रकृते निरूपकत्वविषयत्वान्यतरसम्बन्धेनाकाङ्क्षावैशिष्ट्यमुभयत्रास्तीत्युभयत्राप्यस्य प्रवृत्तिः। ज्ञाप्यज्ञापकभावस-

स्साकाङ्क्षता बोद्ध्या। लक्षणं ज्ञापकं, लक्ष्यं ज्ञाप्यम्। परत्वादिति। तेनोभयत्रविभाषेयमिति भावः।

चित्तविक्षेपादिनेति। आदिना स्वापमनोऽसन्निधानादिसङ्ग्रहः। अत्यन्तेति। अपरोक्षार्थमिदम्। तद्देशगमनोत्तरकालिकवासप्रश्ने तत्कारणगमनस्यैवापलापादत्यन्तापह्नव उदाहरणे बोद्ध्यः। *अबाधितपरोक्तविपरीतबोधनाय तदुपपादकाभावप्रतिपादनम्=अत्यन्तापह्नवः। अत्र कलिङ्गवासाद्युपपादकं कलिङ्गगमनादि, तेन विना तदसम्भवात्। 'नाहं कलिङ्गान् जगाम'इत्येव पाठः। जनपदवाचिनो नित्यबहुवचनान्तत्वात्।

प्रश्ने चासन्न ( पा० सू० ३-२-११७ )। *प्रश्नविषयीभूतासन्नकालिकभूतानद्यतनपरोक्षार्थाद्धातोर्लिडित्यर्थः।

यजतिस्मेति। स्मशब्दो भूतकालद्योतकः।

एवंस्मेति। एवंशब्दोऽपरोक्षत्वद्योतकः।

---

म्बन्धेन वाक्यार्थविशिष्टवाक्यार्थस्य कर्मत्वमभिज्ञायाम्बोध्यम्।

परोक्षे लिट् ( पा० सू० ३-२-११५ )। इदं सूत्रम्प्राग्व्याख्यातमपि "अत्यन्तापन्हवे" ( का० वा० ) इत्यस्यापरोक्षविषय एव प्रवृत्तिं बोधयितुम्पुनरत्र व्याख्यातम्। परोक्षेऽनेनैव सिद्धेः। भूतानद्यतनत्वन्तु इहाप्यपेक्षितमेव। *अबाधितपरोक्तेति। एतेन यत्र चैत्रकर्तृकवङ्गगमनाभावेऽपि तदीयवङ्गगमनभ्रान्त्या 'वङ्गेष्ववात्सीः' इति प्रश्नस्तत्र नात्यन्तापह्नव इत्यर्थादुक्तम्भवति। अयञ्चात्यन्तापह्नवः स्वरूपतः सन्नेव लिट्प्रयोजको न त्वस्य शाब्दबोधविषयत्वापेक्षा।

प्रश्ने चासन्नकाले ( पा० सू० ३-२-११७ )। प्रश्नशब्दे कर्मणि नङ्प्रत्ययस्तेन यादृशो वाक्यार्थः सम्पन्नस्तमाह-*प्रश्नविषयीभूतेति। अत्राप्यासन्नकालत्वम्प्रयोगनियामकमेव न तु तस्य शाब्दबोधविषयत्वम्। आसन्नकाल इत्यत्र बहुव्रीहिः। मूले लिड्विषय इत्यनेन भूत इत्यादीनामिहानुवृत्तिर्ध्वनिता।

लट् स्मे ( पा० सू० ३-२-११८ )। अस्यापि सूत्रस्य लिड्विषय एव प्रवृत्तिः। अत एवापवादत्वम्।

अपरोक्षे च ( पा० सू० ३-२-११९ )। ननु "लट् स्मे" ( पा० सू० ३-२-११८ ) इति सूत्रे परोक्षशब्दस्य सम्बन्धो न कार्यः एवञ्चोभयत्र स्मशब्दयोगे लटः सिद्धाविदं सूत्रन्त्याज्यमिति चेन्न। तद्वदनद्यतन इत्यस्यापि निवृत्तिशङ्का मा भूदित्यर्थन्तत्सत्त्वात्।

ननौ पृष्टप्रतिवचने ( पा० सू० ३-२-१२० )। मूले निवृत्तमिति। "लट् स्मे" ( पा० सू० ३-२-११८ ) इति सूत्रभाष्ये "न पुराभूतमात्रे" इत्युक्तिरत्र प्रमाणम्। ननु क्रियानिवृत्तावपि केन चिल्लिङ्गेन क्रियाया अनुमानेन 'ननु कुर्व-

ननौपृष्टे ( पा० सू० ३–२–१२० )। पृष्टग्रहणं वचनंवचनं प्रतीत्याद्यर्थसम्भावनावारणाय । *यदा श्रमादिदर्शनेन तत्क्रियानुवृत्तिमारोप्य वर्त्तमाने लट् तदा 'ननु कुर्वन्तं पश्य' इति शत्रादि भवति । *सूत्रन्तु तदनारोपे भूतत्वविवक्षायां लुङ्बाधनार्थं शता 'अनन्तरस्य' इति न्यायात् । "वर्तमाने लट्" ( पा० सू० ३–२–१२३ ) इति विहितस्यैवेति स्पष्टमाकरे ।

नन्वोः ( पा० सू० ३–२–१२१ )। *अनयोर्योगे भूतसामान्ये पृष्टप्रतिवचने लङ् वेत्यर्थः । पक्षे लुङ् । *अनद्यतने तु लङेव ।

अनुवर्त्तते इति। यदि भूते एव स्यात् लुङ्ग्रहणमनर्थकं स्यादिति भावः । यथाप्राप्तमिति । लङित्यर्थः । पारोक्ष्ये तु लिडेव । अनुवर्तमाने इति । "भविष्यति गम्यादयः" ( पा० सू० ३–३–३ )

---

न्तरुपश्य' 'ननु कुर्वाणस्पश्य' इति प्रयोगो दृश्यते तत्र शत्राद्यादेशो न प्राप्नोति । वर्त्तमाने विहितलट एव स्थाने तयोर्विधानादत आह—*यदा श्रमादीति । ननु तेनैव प्रकारेण लटः सिद्धावस्य सूत्रस्य वैयर्थ्यमत आह–*सूत्रन्त्विति । अत्र नन्विति समुदायो वितर्के ।

नन्वोर्विभाषा ( पा० सू० ३–२–१२१ )। अत्र ननुशब्दौ पर्यायौ । प्रत्येकमनयोर्निमित्तत्वमित्याशयेनाह–*अनयोरिति । *अनद्यतने त्विति । अनद्यतनत्वविवक्षायान्त्वित्यर्थः । क्रियागतनिश्चितत्वद्योतकौ ननुशब्दौ ।

पुरि लुङ् चास्मे ( पा० सू० ३–२–१२२ ) । मूले मण्डूकप्लुत्याऽनुवर्त्तत इति । लुङित्यस्य पुनरुपादानेन "लुङ्" ( पा० सू० ३–२–११० ) इति सूत्रापेक्षयाऽस्य वैलक्षण्यम्बोधितमिति प्रकृतसूत्रेऽनद्यतन इत्यस्य सम्बन्धः । अत एव एतदभावेऽनद्यतनत्वमात्रविवक्षायां लङ् परोक्षत्वस्यापि विवक्षायान्तु लिड् भवति, न तु लुङ् । अपवादस्य विषयतायाः सत्त्वात् ।

यावत्पुरा ( पा० सू० ३–३–४ ) । निश्चयद्योतकौ=क्रियागतस्य विषयतया निश्चयविशिष्टत्वस्य द्योतकौ । एवञ्च 'यावद् भुङ्क्ते' इत्यत्र भुजधातोर्विषयतासम्बन्धेन निश्चयविशिष्टे भोजने लक्षणा । तया प्रत्यायितो निश्चयो यावच्छब्दसन्निधाने शाब्दबोधे भासते । लक्षणप्रतिपदोक्तपरिभाषयैव सिद्धे निपातग्रहणन्तस्याः परिभाषाया अनित्यत्व एव ज्ञापकम् । इदं सूत्रं मण्डूकप्लुत्याऽनद्यतन इत्यत्रानुवर्त्त्य वाक्यभेदेन व्याख्येयम । तेन 'यावच्छ्वो भुङ्क्ते इत्येव' इति भाष्ये स्पष्टम् । मूले करणभूतयेति । एतेन 'पुरा यास्यति' इत्यत्र पुरीवाचकात्पुःशब्दात्तृतीयेति ध्वनितम् ।

विभाषा कदाकर्ह्योः ( पा० सू० ३–३–५ )। भविष्यति इति, लडिति वर्त्तते । कदा कर्हि वा-भुङ्क्ते, भोक्ष्यते, भोक्ता वा । भविष्यत्त्वे विधीयमानोऽयं लट्

इति सूत्रात् ।

किंवृत्ते (पा० सू० ३-३-६)। किमा वृत्तं=निष्पन्नं तस्मिन्नुपपदे इत्यर्थः। ते च कः कतरः कतम इति त्रय एवेति वृत्तिः। *"यद्वृत्तान्नित्यम्" (पा० सू० ८-१-६६) इतिसूत्रस्थभाष्यरीत्या सर्वग्रहणमित्यन्ये। *उदाहरणे तादृशप्रश्नेन प्रष्टुर्लिप्सा गम्यते। उत्तरसूत्रोदाहरणेऽपि तादृशप्रयोगेण वक्तुर्लिप्सा गम्यते। *अत्र किंवृत्तग्रहणन्तु लिप्स्यमान*सिद्धिरहितायां लिप्सायामकिंवृत्तलृटो निवृत्त्यर्थम् ।

---

यदाऽनद्यतनत्वविशिष्टेऽपि काले प्रवर्त्तते एतदभावे भविष्यत्त्वमात्रविवक्षायां लृट्। सामानाधिकरण्यसम्बन्धेनानद्यतनत्वस्यापि यदा विवक्षा तदा तु लुट्। ननु 'कर्हि भोक्ष्यते' इत्यनुपपन्नम् "अनद्यतने र्हिलन्यतरस्याम्"(पा० सू० ५-३-२१) इत्यनेनानद्यतने एव र्हिल्प्रत्ययस्य विधानेन लुड्विषयताया एव सत्त्वात्। लादेशविषये वासरूपन्यायाभावेन वासरूपन्यायेनापि न स इति चेन्न। 'भूतमियं ब्राह्मणी'इतिवत्'शक्यञ्चक्षु उपहन्तुम्'इतिवच्च भविष्यत्सामान्ये भोक्ष्यत इति पदं व्युत्पाद्य कर्हि शब्दयोगः कार्य इति कल्पनयाऽदोषात्। स्पष्टा चेयं रीतिः "भविष्यति गम्यादयः"(पा०सू०३-३-३)इति सूत्रभाष्ये। तत्र हि "भविष्यतीत्यनद्यतने उपसङ्ख्यानम् श्वो ग्रामं गमी। किम्पुनः कारणन्न सिध्यति। लृटाऽयन्निर्देशः क्रियते। लट् चानद्यतने लुटा बाध्यते। तेन लृट एव विषये प्रत्ययाः स्युः। लुटो विषये न स्युः" इत्याशङ्क्य"न वाऽपवादस्य निमित्ताभावादनद्यतने हि तयोर्विधानम्" इत्युत्तरितम्। भविष्यतीति सामान्येन निर्देशात् तावन्मात्रविवक्षायामयम्प्रत्ययो भविष्यति विशेषस्य विवक्षायान्तु नेत्याशयेन शङ्का। वास्तवविशेषसम्भवेऽपि तस्यादावविवक्षया सामान्यस्यैव विवक्षामाश्रित्य तदाश्रयो णिनिः, अनद्यतनाख्यस्तु विशेषः पश्चात् श्वःशब्दसन्निधाने प्रतीयते इत्युत्तराशयः। "व्यत्ययो बहुलम्" (पा० सू० ३-१-८५) इति सूत्रस्थं 'श्वोऽग्नीनाधास्यमानेन' इत्यादौ कालव्यत्ययपरम् अधाता अयष्टेति प्राप्त इतिभाष्यन्तु वाक्यसंस्कारपक्षाभिप्रायेण।

किंवृत्ते लिप्सायाम (पा० सू० ३-३-६)। अत्र सूत्रे यद्यपि किंवृत्तमिति सामान्येनैवोपात्तन्तथापि प्रयोगानुसारेण त्रयाणामेव ग्रहणमिति वृत्तिकाराशयः। किंवृत्तमिति सामान्येनोपादानाद्यत्किंशब्दनिष्पन्नन्तस्य सर्वस्य ग्रहणम्, तेन'कः'इत्यादीनाङ्कस्मै दास्यसीत्यादीनाञ्च सङ्ग्रह इति भाष्यसम्मतैव रीतिर्युक्ता,तदाह-*यद्वृत्तादिति। लिप्सायामित्यस्य लिप्सायां वाच्यायामित्यर्थ इति भ्रमं वारयति-*उदाहरण इत्यादिना। ननु यत्र यथाकथञ्चिल्लिप्सा गम्यते तत्राकिंवृत्तेऽप्युत्तरसूत्रेण चेल्लृट् तदा प्रकृतसूत्रे किंवृत्तग्रहणमनर्थकमत आह-*अत्र किमिति। *सिद्धिरहितायामिति। याचकस्य लिप्सा यत्रास्ति दातुस्तु दानेच्छाभावादप्रवृत्तिस्तत्र किंवृत्तप्रयोग एव लडित्यर्थमिति उत्तरम् ।

लोडर्थे (पा० सू० ३-३-८)। लोडर्थप्रैषादिविषयधात्वर्थलक्षणे इत्यर्थः। *कृष्णभोजनं प्रैषविषयगोचारणस्य लक्षणं बोद्धयम्।

ऊर्ध्वमिति द्वितीयान्तम्। अकर्मकधातुयोगे कालादीनां कर्मत्वोक्तेः। ऊर्ध्वमिति *दिक्शब्दयोगे मुहूर्तादिति पञ्चमी। "तद्धितार्थ" (पा० सू० २-१-५१) इत्यत्र 'दिक्संख्ये' इत्यनुवर्तनात्समानाधिकरणाधिकाराच्चेह समासो दुर्लभोऽत आह—निपातनादिति। भवार्थे कालाट्ठञ्।

*स्वार्थे ष्यञिति। चातुर्वर्ण्यादित्वात्। वत्करणलभ्यमर्थमाह—*येनोपाधिनेति।

आशंसायां (पा० सू० ३-३-१३२)। *अप्राप्तप्राप्तीच्छा= आशंसा, तस्या *वर्तमानत्वेऽपि तद्विषयस्य वर्षादेर्भविष्यत्वाद्भविष्यती-

---

लोडर्थलक्षणे (पा० सू० ३-३-८)। प्रैषविषयगोचारणरूपा क्रिया यथा लक्ष्यते तथाऽऽह—*कृष्णभोजनमिति। अन्यदीये क्षेत्रे गोचारणार्थम्प्रवृत्तङ्गोपम्प्रति कृष्णाविषयकश्रद्धावतः क्षेत्रस्वामिनो वाक्यमिदम्।

लिङ् चोर्ध्वमौहूर्त्तिके (पा० सू० ३-३-९)। *दिक्शब्देति। ऊर्ध्वशब्दस्यापि दिशि दर्शनादिति भावः। अत्र लोडर्थलक्षण इत्यनुवर्त्तते। उपाध्यायस्य स्वगृहासत्त्वे तत्र समागतङ्कालविलम्बेन ततः 'परावृत्य स्वगृहम्प्रति गन्तुं प्रवृत्तं शिष्यम्प्रति गुरुपत्न्यादेरुक्तिरिहोदाहरणमित्याह—मूले उपाध्यायश्चेदित्यादि।

*स्वार्थे ष्यञिति। "प्रियतद्धिता दाक्षिणात्याः" इति भाष्यकारोक्तेः। *येनोपाधिनेति। अस्य येन निमित्तेनेत्यर्थः। मूले कदा आगतोऽसीति प्रश्नोल्लेखो भूतकालाभिव्यक्तये। ननु कदा आगत इति प्रश्ने कदेत्युपादानादागमनाधिकरणकालविषयकजिज्ञासा वक्तुः प्रतीयतेऽतोऽत्रोत्तरवाक्यमपि तादृशकालबोधकमेवापेक्षितमिति 'अयमागच्छामि' इत्यनुपपन्नम्। किञ्चागमनक्रियाया अतीतत्वादयमितीदमः साक्षिकृष्टवस्तुपरामर्शकस्य प्रयोगश्चानुपपन्न इति चेन्न। अयमित्यनेन नागमनं प्रतिनिर्दिश्यते किन्तु वर्त्तमानसमीपः सूर्योदयादिरूपो यः काल आगमनकर्तृपुरुषगतपांसुलपादत्वपरिकरबन्धनादिनाऽनुमितः स एव बोध्यते। तत्रत्यस्य चाध्याहारेण वाक्यार्थस्य पर्यवसानात्। एवम्भविष्यत्कालविषयेऽपि येन केनचिन्निमित्तेन तस्य कालस्य ज्ञाने तस्मिन्नित्यस्याध्याहारेण पर्यवसानङ्कल्प्यम्।

आशंसायां भूतवत् (पा० सू० ३-३-१३२)। *अप्राप्तेति। अप्राप्तस्य प्राप्तीच्छा। एतेनैतस्य सूत्रस्य प्रयोजनन्दर्शितम्। *वर्त्तमानत्वेऽपीति। यस्मिन्काले 'देवश्चेदवर्षीत्' इत्यादि प्रयुज्यते तस्मिन्काले निरुक्ता आशंसा अस्ति एतद्विषयो वर्षणं तत्रोत्पन्नमिति भविष्यत्कालिकवर्षणसम्बन्धादाशंसाऽपि भ-

 

त्युक्तम् । *आशंस्यमानक्रियावाचकाद्धातोरित्यर्थः । देवश्चेदिति । वृ-ष्टिप्रापयोरुभयोरप्याशंसाविषयत्वादुभयत्रापि लकारः ।

पूर्वविषये इति । आशंसायामित्यर्थस्तेन तदपवादोऽयं, तदा-ह—नेतीति ।

न तु भूतवदिति । नापि वर्त्तमानवदित्यपि बोध्यम् । *अस्य "आशंसायाम्" ( पा० सू० ३-३-१३२ ) इत्येतदपवादत्वात् *क्षिप्रप्रयो-गेऽपि परत्वादिदमेवेत्याह—आशंसे क्षिप्रमिति ।

नानद्यतनवत् ( पा० सू० ३-३-१३५ ) । प्रबन्धः=*सात-त्यम् । लङ्लुटौ नेति । भूतानद्यतने लङ् न, भविष्यत्यनद्यतने लुट् ने-

---

विष्यत्त्वेनोच्यते । आशंसायामित्यस्य विषयभूतायामिति शेषः । एवञ्च प्रत्या-सत्त्या यादृशार्थलाभस्तन्दर्शयति—*आशंस्यमानेति । मूले सामान्यातिदेश इति । भूतवदित्यनेन भूतसामान्यस्योपस्थितिर्न तु भूतत्वव्याप्यधर्मस्येति भूतत्वव्याप्यधर्मविशिष्टकालनिमित्तकं कार्यमत्र न भवतीत्यर्थः । अत एवात्र भाष्ये भूतवदतिदेशे "लङ्लिटोःप्रतिषेधो वक्तव्यः"इत्युक्त्वा "न वा अपवादस्य निमित्ताभावात्"इति समाहितम् । पूर्वसूत्राद्वाग्रहणानुवृत्त्याऽस्यातिदेशस्य वै-कल्पिकत्वादेतदभावे स्वाश्रयभविष्यत्सामान्यकृतमपि कार्यमित्याशयेन 'वर्षि-ष्यति' 'वप्स्यामः' इत्युपात्तम् ।

क्षिप्रवचने लृट् (पा०सू०३-३-१३३) । अत्र वचनग्रहणात्पर्यायलाभः । नेत्युक्तौ भूतवदित्यस्यातिदेशस्य निवृत्तौ चकारेण बोधितस्य वर्त्तमानवदित्यस्या-प्यतिदेशस्य निवृत्तौ पूर्वोक्तरीत्या आशंसाविषयस्य भविष्यत्त्वाल्लटः सिद्धौ लृड्ग्रहणमनर्थकमित्यत आह मूले लुटोऽपि विषय इति । तस्या विषयतायाः सूचनाय इव इत्युपात्तम् ।

*अस्येति । "क्षिप्रवचने" इत्यस्येत्यर्थः । एवञ्च यत्र क्षि-प्रपर्यायस्याशंसावाचकस्य च प्रयोगस्तत्रापवादविषयपरिहारेणोत्सर्गस्य प्रवृत्ते-र्भूतवदित्यस्य वर्त्तमानवदित्यस्य चातिदेशस्याप्रवृत्तौ-क्षिप्रपर्यायप्रयोगाभावे च-रितार्थस्य लिङ्विधायकस्य-क्षिप्रपर्यायप्रयोगस्य सत्त्वात्प्राप्तलङ्बाधकत्वमि-त्याह—*क्षिप्रप्रयोगेऽपीति ।

नानद्यतनवत् ( पा० सू० ३-३-१३५ ) । *सातत्यम्=नैरन्तर्यम् । इद-ञ्च यावज्जीवमित्यस्य प्रयोगेण गम्यते । अनद्यतनत्वस्य भूतत्वभविष्यत्त्वान्यत-रसमानाधिकरणतयाऽनद्यतनवन्नेत्यनेन विहितेन निषेधेन लङो लुटो लिट-श्च प्रतिषेधे भूतत्वविवक्षायान्तन्मात्रे विहितो लुङ् भविष्यत्त्वस्य विवक्षायाञ्च लृट् भवतीति बोध्यम् । लङ्लुटौ नेति मूले लिडपि नेति पूरणीयम् । एतेषा-म्प्राप्तिश्च भूतत्वभविष्यत्त्वात्मकसामान्यधर्मसमानाधिकरणेविशेषधर्मविवक्षाया-म्बोध्या । सामीप्यन्द्विविधम्प्रसिद्धम्—लक्षणकृतं देशकृतञ्च । तद् द्विविधमपि

ति भावः । *सामीप्यमत्र कालकृतं, तच्च प्रयोगकालापेक्षया । कालस्य सामीप्यन्तुल्यजातीयेनाव्यवधाना*देशसामीप्ये योऽयं देशोऽतिक्रान्त आगामी वा तस्मिन् 'आधित' 'आधास्यते' इत्युदाहरणमिति केचित् ।

भविष्यतीम( पा० सू० ३-३-१३६ )। *अक्रियाप्रबन्धार्थमसामीप्यार्थश्चेदम् । *यद्यपि भाष्येऽक्रियाप्रबन्धार्थमिदं क्रियाप्रबन्धार्थत्वे वचनानर्थक्यं सिद्धं क्रियाप्रबन्धे पूर्वेणैवेत्युक्तं तथापि तदसामीप्यस्याप्युपलक्षणमिति कैयटः । *असामीप्ये एतद्विषयोदाहरणानभिधानमित्यन्ये । अभविष्यति अमर्यादायां परस्मिन्नहोरात्रविभागे वा क्रियाप्रबन्धे नानद्यतनवदिति पूर्वसूत्रमेवेष्यत इति भाष्ये स्पष्टम् । भविष्यति किम् ? योऽयमध्वा*ऽतिक्रान्तः इत्यादौ सक्तूनपिबाम इत्येव । मर्यादेति किम् ?, योऽयमध्वा गन्तव्यो निरवधिकस्तस्य यदवरं साकेतादित्यादौ यातास्मः इत्येव । अवरस्मिन्निति किम्?, तस्य यत्परमिति प्रयोगे यातास्मः इत्येव यथा स्यादिति ।

कालवि ( पा० सू० ३-३-१३७ ) । कालकृतमर्यादोक्तावपरविभागे सतीत्यर्थः । अहोरात्रसम्बन्धिनीति । अनहोरात्राणामिति *शेषषष्ठी, न कर्तरि नापि कर्मणीति भावः । मर्यादाऽवरयोरन्यतरस्मि-

---

विनिगमनाविरहाद् गृह्यते, तदाह—*सामीप्यमत्रेत्यादि । तत्र कालकृतं सामीप्यं मूल एवोपपादितं, देशकृतन्तत्स्वयमाह—*देशसामीप्य इत्यादि । अतिक्रान्त आगामीत्यनयोर्यथासङ्ख्येन 'आधित' 'आधास्यते' इत्यनयोरन्वयः । न च कालविशेषविहितप्रत्ययस्यैव नानद्यतनवदित्यनेन निषेधात्प्रत्यासत्त्या कालकृतसामीप्यस्यैव ग्रहणं युक्तमिति वाच्यम् । "भविष्यति मर्यादा" ( पा० सू० ३-३-१३६ ) इतिसूत्रभाष्यप्रामाण्येन देशकृतस्यापि ग्रहणात् । तत्र हि "योऽयमध्वा गन्तव्य आपाटलिपुत्रात्तस्य यदवरं साकेतात्" इत्यादौ नानद्यतनवदितीष्यते इत्युक्तम् ।

भविष्यति मर्यादा ( पा० सू० ३-३-१३६ ) । सूत्रस्य प्रयोजनमाह—*अक्रियेत्यादि । उभयार्थत्वे प्रमाणमाह—*यद्यपीत्यादिना । कैयट इत्यभिधानसूचितामरुचिम्प्रकटयति—*असामीप्य इति । अनभिधाने प्रमाणन्तु भाष्यकारेण तथानुक्तत्वमित्येव । *अतिक्रान्त इति । अनेनातीतत्वस्याभिव्यक्तिः ।

कालविभागे ( पा० सू० ३-३-१३७ ) । कालेन कृतः=कालकृतः, कालकृतश्चासौ विभागश्च=कालविभागः । *शेषषष्ठीति । कालविभागशब्दार्थापेक्षया शेषषष्ठीत्यर्थः । तेनाहोरात्राणामन्येन कालेन विभागे कालान्तरस्य वाऽहोरात्रविभागेऽहोरात्राणामेवाहोरात्रैर्विभागे वाऽयन्निषेधः प्रवर्त्तते । मूलेऽवरः पश्चद-

ऽस्त्यहोरात्रसंबन्धिनि नेति तात्पर्यम् । प्रतिषेधार्थमिति । क्रियासातत्यसत्त्वे इत्यर्थः। तत्सत्त्वेऽहोरात्रसंबन्धिनि विभागेऽपि "नानद्यतनवत्" ( पा० सू० ३-३-१३५ ) इत्यस्येष्टेः । तस्य योऽवरः पञ्चदशरात्र इति बहुव्रीहिः "अच् प्रत्यन्वव" ( पा० सू० ५-४-७५ ) इति योगविभागात्समासान्तः *अतः पुंस्त्वं, पक्षोऽन्यपदार्थः । *पृषोदरादित्वात् मयूरव्यंसकादित्वाद्वा साधुत्वम् ।

परस्मिन् वि( पा० सू० ३-३-१३८ ) । कालविभागे एवेदमिति *भाष्ये स्पष्टम् । वर्ज्यमिति । ण्यन्तात्कर्मणि अचो यत् ।

भूते च ( पा० सू० ३-३-१४० ) । पूर्वसूत्रमिति । अनुवृत्तपूर्वसूत्रकोऽयमधिकारः "समानकर्तृकेषु" ( पा० सू० ३-३-१५८ ) इति यावत् । "उताप्योः"(पा० सू० ३-३-१५२)इत्यतः पूर्वन्तु वाग्रहणसम्बद्धमेतदधिक्रियते । तत्र "गर्हायां लडपि" ( पा० सू० ३-३-१४२) इत्यत्र नास्य सम्बन्धः लड्विधानेन तद्विषये लिङ्निमित्ताभावात् ।

परत्वादिति । *उत्कृष्टत्वादनवकाशत्वादित्यर्थः ।

गर्हायामिति । भविष्यतीत्यादि निवृत्तं, तदाह-कालत्रये इति ।

---

शरात्र इति । एतेनैतन्मासीयपञ्चदशरात्रान्तरेण मध्ये व्यवधानेन सामीप्याभावलाभः । *अतः पुंस्त्वमिति । बहुव्रीहित्वादेव पुंस्त्वमित्यर्थः । "सङ्ख्यापूर्वं रात्रं क्लीबम्" ( भा० इ० ) इति तु "रात्राह्नाहाः" ( पा० सू० २-४-२९ ) इत्येतदपवादतया द्वन्द्वतत्पुरुषयोरेवेति । योगविभागेन समासान्तकल्पनापेक्षया 'पञ्चदशरात्रः' इत्यस्य साधुत्वस्प्रकारान्तरेणाह—*पृषोदरेति ।

*भाष्ये स्पष्टमिति । तत्र हि—"कस्मिन्परस्मिन् ? । कालविभागे । कुत एतत् । योगविभागसामर्थ्यात्" इत्युक्तम् । 'भविष्यति मर्यादावचनेऽवरस्मिन्ननहोरात्राणाम्' इत्येकयोग एव कर्त्तव्ये पृथग्योगोपादानम् "परस्मिन्विभाषा" ( पा० सू० ३-३-१३८ ) इत्यत्र कालविभागग्रहणसम्बन्धार्थमेवेत्यर्थः ।

गर्हायां लडपिजात्वोः ( पा० सू० ३-३-१४२ ) । अपिजात्वोर्योगे लट् स्याद्गर्हायां विषये । भविष्यतीत्यादि प्रकृतसूत्रे न सम्बध्यते । तेन कालत्रय इत्यस्य लाभः । नन्वपिजातुशब्दयोगे त्रिषु कालेषु यस्य कस्य चित्कालस्य विवक्षायां लकारान्तरस्यावश्यम्प्राप्त्या निरवकाशोऽयं योग इति परत्वादित्यनुपपन्नमत आह—*उत्कृष्टत्वादिति । यदा त्वतीतानागतयोर्गर्हातिशयप्रतिपादनाय वर्त्तमानत्वस्यारोपस्तदा "वर्तमाने लट्" ( पा० सू० ३-२-१२३ ) इतिलटि शानजादेशोऽपि । 'अपि गणिकामाददानस्पश्य' इति । प्रकृतसूत्रं त्वनारोपार्थमिति बोध्यम् ।

*अत्र भविष्यतीति । *क्रियातिपत्तावित्यपि बोध्यम् । कथमो गर्हायाश्च लिङ्निमित्तस्य सत्त्वादिति भावः ।

किं वृत्ते ( पा० सू० ३-३-१४४ ) । *कालत्रये एतौ स्तः । लृङ् वेति नोक्तं *लड्वारणाय । प्राग्वदिति । भूते वा, भविष्यति नित्य-मित्यर्थः । *"लिङ्निमित्ते" (पा० सू० ३-३-१३९) इति सूत्रमत्रानुवर्त्य वाक्यभेदेन सम्बध्यत इति भावः । एतेन तद्विषयेऽपि परत्वादिदमेवोचित-मित्यपास्तम् ।

अनवक्लृ ( पा० सू० ३-३-१४५ ) । एतयोर्विषये *काल-त्रयेऽपि लिङ्लृटाविसर्थः । इह यथासंख्यं *नेष्यते । प्राग्वदिति । भूते वा, भविष्यति नित्यमित्यर्थः ।

---

विभाषा कथमि ( पा० सू० ३-३-१४३ ) । *अत्र भविष्यतीति । अत्र="विभाषा कथमि" ( पा० सू० ३-३-१४३ ) इति सूत्रे । भविष्यति=भवि-ष्यदर्थे । लिङो निमित्तङ्कथंशब्दो गर्हा च, एतद् द्वयमप्यस्ति भविष्यदर्थेऽप्यास्ति; यदवशिष्टं तदाह-*क्रियातिपत्तावित्यपीति ।

किंवृत्ते लिङ्लृटौ ( पा० सू० ३-३-१४४ ) । किमा वृत्तन्निष्पन्नमि-त्यर्थः । *कालत्रय इति । भविष्यतीत्यादिनिवृत्तेरुक्तत्वात् । *लट्वारणायेति । यदा वर्त्तमानत्वविवक्षा किंवृत्तसद्भावो गर्हा च तदा लिङोऽभावे लट् स्यादि-ति भावः । अपिजातुशब्दयोरन्यतरयोगे तु गर्हायामित्यनेन लट् स्यात् लट्ग्रह-णसत्त्वे तु तस्य योगस्य परत्वादनेन बाध इति भावः । ननु "लिङ्निमित्ते" ( पा० सू० ३-३-१३९ ) इति सूत्रस्येदं सूत्रम्परत्वाद्बाधकम्भविष्यतीति कथ-म्भविष्यतीत्याद्युक्तिरत आह-*लिङ्निमित्त इतीति । वाक्यभेदादेव क्रियातिप-त्त्यभावेऽपीदं सूत्रं प्रवर्त्तेत इति भावः ।

अनवक्लृप्त्य ( पा० सू० ३-३-१४५ ) । लिङ्लृटावित्यनुवर्त्तते । भविष्यतीत्यादिनिवृत्तेः प्रागुक्तत्वादाह-*कालत्रयेऽपीति । *नेष्यत इति । तत्प्र-योजकस्वरितत्वस्येहाभावात् । "यथासङ्ख्य" ( पा० सू० १-३-१० ) सूत्रभा-ष्ये स्पष्टमिदम् । अत्राकिंवृत्तेऽपीति किंवृत्तग्रहणासम्बन्धप्रतिपादनायोपात्तं, तच्च न कर्त्तव्यम् । पूर्वसूत्रस्थकिंवृत्तशब्दे स्वरितत्वाभावात्तस्येहासम्बन्धे-नोभयत्र सिद्धेः । न चाकिंवृत्त इत्यस्य पर्युदासतया किंवृत्तशब्दसदृशशब्दा-न्तरस्योपपदसंज्ञार्थमेतद्भविष्यतीति वाच्यम् । 'अतिङ्' इति समासनिषेधे-नोपपदसंज्ञायाः फलाभावात् । न च यदा सदादेशस्तदा नित्यसमासप्रवृत्तिः फलमस्त्विति वाच्यम् । भविष्यतीत्यनुवर्त्य विहितलट एव सदादेशस्य प्रवृ-त्तेः । तदुक्तम्भाष्ये "किंवृत्तस्यानधिकारादुत्तरत्राकिंवृत्तग्रहणानर्थक्यम् । तस्मिन्निवृत्ते ऽविशेषेण किंवृत्ते चाकिंवृत्ते च भविष्यति । इदन्तर्हि प्रयोजनमुपप-दसंज्ञां वक्ष्यामि । अतिङिति हि प्रतिषेधः प्राप्नोति । यदा तर्हि सत्संज्ञौ तदोपप-

लिङोऽपवाद इति। *पूर्वसूत्रेणोभयोः प्राप्तयोर्लृङ्ग्रहणेन लिङो निवृत्तिरिति भावः। अत्र लृङ् नेति। *लिङो निवृत्त्या एतद्युक्तानवक्लृप्त्यादेर्लिङ्निमित्तत्वाभावादिति भावः।

यच्चयत्रयोः ( पा० सू० ३-३-१४८ )। *अयमपि लृङपवादः। योगविभाग उत्तरत्रानयोरेवानुवृत्त्यर्थः। लृङ् प्राग्वत्।

लिङेवेति। *अनेन परत्वाद् "विभाषा कथमि" (पा० सू० ३-३-१४३ ) इति लटः "किं वृत्ते" ( पा० सू० ३-३-१४४ ) इत्यस्य च बाधादिति भावः। लृङ् प्राग्वत्।

शेषेल्ल (पा० सू० ३-३-१५१)। *अत्र लृङ् न। यदि सोऽधीयीतेति। "जातुयदोः" (पा० सू० ३-३-१४७) इत्यत्र यदायद्योरित्युपसंख्यानाल्लिङ्।

भूतेऽपीति। वाग्रहणस्य *निवृत्तत्वाद्भविष्यतीव भूतेऽपि नित्यमित्यर्थः।

कामप्रवेद (पा०सू०३-३-१५३)। सर्वलापवादः। अकच्चितीत्यस्य कच्चिच्छब्दप्रयोगाभावे इत्यर्थस्तदाह—न तिघति। कच्चिज्जीवती-

---

दसंज्ञा भविष्यति। भविष्यदधिकारविहितलृटः सत्संज्ञौ" इति।

किंकिलास्त्यर्थेषु ( पा० सू० ३-३-१४६ )। लिङपवादत्वमुपपादयति—*पूर्वसूत्र इति। *लिङो निवृत्त्येति। लृट्ग्रहणेन तस्य बाधनमनुपदमेवोक्तमित्यर्थः।

यच्चयत्रयोः ( पा० सू० ३-३-१४८ )। *अयमपीति। अपिना "जातुयदोः" ( पा० सू० ३-३-१४७ ) इत्यस्य सङ्ग्रहः।

लिङेवेति कथनेनेदं सूत्रन्नियमार्थमिति न भ्रमितव्यङ्किन्तु फलितार्थकथनमेतदित्याह-*अनेनेत्यादिना।

शेषे लडयदौ ( पा० सू० ३-३-१५१ )। *अत्र लृङ् नेति। एतत्सूत्रस्य यन्निमित्तन्तस्मिन् सति लिङो विधानाभावेन "लिङ्निमित्ते" ( पा० सू० ३-३-१३९ ) इति सूत्राप्राप्तेरिति शेषः।

उताप्योः समर्थयोर्लिङ् ( पा० सू० ३-३-१५२ )। *निवृत्तत्वादिति। "वोताप्योः" इत्युक्तत्वादिति भावः।

कामप्रवेदने ( पा० सू० ३-३-१५३ )। मूले कच्चिज्जीवतीति। न चात्र कामप्रवेदनस्य गमकाभावान्न लिङः प्राप्तिरित्यकच्चितीति व्यर्थमिति वाच्यम्। 'कामो मेऽस्ति कच्चिज्जीवति' इति वाक्यस्य कल्पनसम्भवात्। अथ वा क-

ति । *अयं प्रश्न एव कामप्रवेदनद्योतक इति भावः । क्वचिच्छन्दस्येच्छार्थकत्वाभावाद् "इच्छार्थेषु"(पा० सू० ३-३-१५७)इत्यत्र न प्रवर्त्तते ।

*प्रौढिः=क्रियायाः कृत्यसाध्यताविरहबोधनम् । संभावनं=क्रियायोग्यताविषयोत्कटकोटिकं ज्ञानम् । विपरिणम्यत इति । *आवर्त्य विपरिणम्यत इत्यर्थः । तच्चेदिति । इमां क्रियां*मनुष्ठातुं समर्थ इत्येवंरूपश्चेत्तत्सम्भावनमिति भावः । अत्रापि लृङ् प्राग्वत् । सिद्धाप्रयोगे इति । यत्र तत्प्रयोगं विनापि तदर्थो गम्यत इत्यर्थः । अपि गिरिमिति । सम्भावनस्य धात्वर्थविषयसामर्थ्यविषयताध्वनकोऽपिशब्दः, क्वचित्प्रकरणादिकमपि तथेति बोद्धव्यम् ।

सम्भावयामीति । 'भोजने भवान् शक्तः' इत्यु*त्प्रेक्षे इत्यर्थः । *प्रत्युदाहरणं पूर्वेण लिङ् ।

वा स्यादिति । विभाषेति पूर्वसूत्रादनुवर्त्तते । इष्यत इति । *लिङिति वर्त्तमाने पुनर्लिङ्ग्रहणांदतद्विशेषलाभः । हन्तीति ।

---

च्चिदित्यस्येष्टप्रश्न एव प्रयोगात्तत्प्रयोगेणैव कामप्रवेदनङ्गम्यते; तदाह-*अयमिति ।

प्रौढिपदार्थं व्याचष्टे—*प्रौढिरिति । 'अपि गिरिं शिरसा भिन्द्यात्' इत्युक्ते कर्तृत्वेन प्रतीतस्य पुरुषस्याङ्गदाढ्र्यनिश्चयेऽस्य कृत्यसाध्यत्वमास्तीति गम्यत इति भावः । "सम्भावनेऽलम्" ( पा०सू० ३-३-१५४ ) इत्यत्र च विभक्तिविपरिणामोऽर्थानुरोधात् । "सकृदुच्चरितः"इति न्यायाबाधायाह—*आवर्त्येति । *अनुष्ठातुं समर्थ इति । अनेन क्रियानिष्पादनसामर्थ्यनिष्ठा योत्कटत्वाख्या विषयता तच्छालिज्ञानम्ममास्तीति गम्यत इति प्रौढिरस्त्येव । अलमिति किम्? । प्रायेण गमिष्यति । अत्र संभावनस्य भविष्यद्विषयत्वाद्भविष्यद्विषयसर्वलकारापवाद इति हरदत्त आह ।

विभाषा धातौ सम्भावनवचने ( पा० सू० ३-३-१५५ ) । *उत्प्रेक्षे इति । उत्प्रेक्षाऽपि संभावनैव शक्तत्वनिष्ठोत्कटत्वाख्यविषयताविशेषनिरूपितविषयिताशालिज्ञानरूपसम्भावनाया अत्र सत्त्वात्पूर्वसूत्रस्य प्राप्तिरस्ति । *प्रत्युदाहरणे=अयदीत्यस्य प्रत्युदाहरणे ।

हेतुहेतुमतोर्लिङ् ( पा० सू०३-३-१५६ ) । हेतुहेतुमतोरर्थयोर्वर्त्तमानाभ्यां धातुभ्यां लिङ् । यत्र द्वयोर्धात्वर्थयोर्हेतुहेतुमद्भावः प्रतिपिपादयिषितस्तत्र विनिगमनाविरहादुभाभ्यामपि धातुभ्यां लिङ् भवति । एतत्सूत्रोदाहरणात् 'कृष्णन्नमेश्चेत्सुखं यायात्'इत्यादिभ्यो जायमानः शाब्दबोधो हेतुहेतुमद्भावसम्बन्धेन हेतुक्रियाविशिष्टकार्यक्रियाविषयको भवतीति भवतीह लिङः साधुत्वम् । *लिङिति वर्त्तमान इति । "उताप्योः" ( पा०सू० ३-३-१५२ ) इति सू-

हननं हेतुः, पलायनं कार्यम्। "गर्हायां लडपि" (पा० सू० ३-३-१४२) इत्यतो भविष्यतीति निवृत्त्या कालत्रयेऽप्येते प्रत्यया इति *अत्र प्राप्तिः। लृङ् प्राग्वत्। *उपसंवादाशङ्कयोरपि लिङ् वाच्यः। उपसंवादः=*कर्तव्ये पणबन्धः। 'यदि मे भवानिदं कुर्यादहमपि ते इदं दद्याम्' इत्युदाहरणम्। *अत्रावश्यबाधिभाव एव प्रतीयते न हेतुहेतुमद्भाव इति न "हेतुहेतुमतोः" (पा० सू० ३-३-१५६) इत्यनेन सिद्धिः। *आशङ्का=उत्प्रेक्षा, तेन 'सर्पिषोऽपि स्यात्' 'प्रासाद आसामिष्टकानां स्यात्' इत्यादेः सिद्धिः। स्पष्टं चेदम् "उपसंवादाशङ्कयोः" (पा० सू० ३-४-८) इति सूत्रे भाष्ये।

इच्छार्थेषु (पा०सू०३-३-१५७)। सर्वलापवादः। लृङ् प्राग्वत्।

इच्छार्थे उपपदे इति सूत्रार्थः। कामप्रवेदनं=स्वाभिप्रायाविष्करणम्। तच्च प्रयोक्तुरिति बोध्यम्। इदं न स्वतन्त्रं विधायकं किन्तु सूत्रशेषभूतमन्यव्यावर्त्तकमेव। अतो व्यावर्त्त्यमत्र दर्शयति-नेच्छाप्तिति।

---

त्ताल्लिङिति वर्त्तमान इत्यर्थः। न च "विभाषा धातौ" (पा० सू० ३-३-१५५) इति सूत्रे ततोऽनुवर्त्तमानं लिङ्ग्रहणं विभाषापदसम्बद्धमभूदिति विभाषापदानुवृत्त्यर्थमत्र लिङ्ग्रहणमस्त्विति वाच्यम्। विभाषापदसम्बन्धस्यात्रापीष्टत्वात्। अत एव 'हेतुहेतुमतोर्लिङ् वा" इति भाष्ये उक्तम्। ननु लिङ्ग्रहणसामर्थ्याच्चेद्भविष्यतीत्यस्य कल्पना तदा भूतेऽथवा वर्त्तमाने इत्येवास्त्विति चेन्न। "भविष्यदधिकारे च। भविष्यदधिकारे चेति वक्तव्यम्। वर्षतीति धावति। हन्तीति पलायते" इति भाष्यस्यैव मानत्वात्। *अत्र प्राप्तिः=वर्त्तमानत्वेऽपि प्राप्तिरित्यर्थः। नन्विह "लक्षणहेत्वोः" (पा०सू०३-२-१२६) इत्यनेन शत्राद्यादेशः कुतो नेति चेन्न। "शाच्छोरन्यतरस्याम्" (पा० सू० ७-४-४१) इतिसूत्रभाष्यपठिते 'देवत्रात'(भा०इ०)इति वचने 'इतियोगे च सद्विधिः' इत्युक्तत्वेन व्यवस्थितविभाषाश्रयणात्। अत्र मूलानुक्तमपि लिङ्प्रकरणात्स्वयमाह-*उपसंवादेति। *कर्तव्ये पणबन्धः=कर्त्तव्येऽर्थे सति यथा तस्य सिद्धिर्भवति तथाऽऽचरणप्रतिज्ञा। कर्त्तव्य इत्यत्रावश्यके कृत्यः कर्मणि। एतादृशे विषये "हेतुहेतुमतोः" इति सूत्रस्याप्राप्तिमुपपादयति-*अत्रेति। *आशङ्कोत्प्रेक्षा=भावकोटिनिष्ठोत्कटत्वाख्यविषयताकसम्भावना।

इच्छार्थेषु लिङ्लोटौ (पा० सू० ३-३-१५७)। अत्रेच्छार्थेषु लोट् चेति वाच्यम्पूर्वसूत्रविहितस्य लिङः सम्बन्धश्चकाराद्भविष्यतीति केचित्। तन्न। तत्र यथा हेतुहेतुमत्क्रियावाचकाभ्यामुभयत्र लिङ् भवति तथेहापीच्छार्थकादपि लिङ् स्यादतस्तस्मादस्य लिङो वैलक्षण्यसूचनाय पुनर्लिङ्ग्रहणात्। अत एवेच्छामीत्यस्योपादानम्।

लिङ् च (पा० सू० ३-३-१५९)। इच्छार्थेषु" (पा० सू० ३-३-१५७)

विधिनि (पा० सू० ३-३-१६१)। प्रवर्तनाविचारप्रार्थनाविषयार्थवाचकाद्धातोरित्यर्थः ।

प्रैषाति (पा० सू० ३-३-१६३)। *अनयोर्विध्यामन्त्रणाभ्यामभेदेऽपि निमन्त्रणादिषु कृत्यव्यावर्त्तयेऽत्र ग्रहणम् । "प्राप्तकाले च कृत्याश्च" इत्युक्ते हि तेष्वपि ते स्युः। *सामान्यविहितकृत्यानां प्रैषादिषु लोटा बाधा माभूदिति कृत्यविधिः। प्राप्तकालार्थमिति । प्रैषातिसर्गयोः पूर्वेण "लोट् च" (पा० सू० ३-३-१६२) इति सूत्रेण सिद्धत्वादिति भावः ।

लिङ् चो (पा० सू० ३-३-१६४)। प्राप्तकालेऽप्राप्तस्य लिङो विधानार्थमिदम् ।*अन्ययोर्विध्यादिसूत्रेण सिद्धेः। चाद्यथाप्राप्तं लोट् कृत्याश्च। अन्यथा लिङा तयोर्बाधः स्यात् । मुहूर्तादूर्ध्वं यजनं प्राप्तकालमित्यर्थः ।

स्मे लोट् (पा० सू० ३-३-१६५)। प्रैषादय ऊर्ध्वमौहूर्तिक इति चानुवर्तते । यजतां स्मेति। 'स्म' शब्दोऽधिकारसूचकः, भवानत्राधिकृत इत्यर्थः ।

---

इत्यत इच्छार्थेष्विति "समानकर्तृकेषु तुमुन्" (पा० सू० ३-३-१५८) इत्यतः समानकर्तृकेष्विति सम्बध्यते ।

प्रैषातिसर्गप्राप्तकालेषु (पा० सू० ३-३-१६३)। प्राप्तश्चासौ कालश्च=प्राप्तकालः प्राप्तो यो निमित्तत्वेन कालान्तरे स्वीकृतस्स लब्धावसरः। एतेष्वर्थेषु गम्यमानेषु कृत्या भवन्ति लोट् च। प्राप्तकाले यथा-'भवता भोक्तव्य ओदनः' 'भवतः कालो भोजनस्य' इति। यत्र पूर्वकालिकस्य निश्चयस्य कर्त्ताऽन्येन बोध्यते तत्र कृत्यप्रत्ययान्तस्य लोडन्तस्य वा प्रयोगः। प्रकृतसूत्रे पुनः प्रैषातिसर्गग्रहणस्य प्रयोजनमाह-*अनयोरिति । *सामान्यविहितेति । सर्वेभ्यो धातुभ्योऽर्थसामान्ये विहितानाम् । कृत्यग्रहणम्पाणिनीयसंकेतसम्बन्धेन कृत्यशब्दावच्छिन्नस्य बोधकम्। तेनैकस्य कृत्यस्य सर्वेभ्यो धातुभ्यो विधानाभावेऽपि न क्षतिः ।

लिङ् चोर्ध्वमौहूर्त्तिके (पा० सू० ३-३-१६४)। ऊर्ध्वमौहूर्त्तिकत्वं स्वरूपसत् निमित्तम्, तच्च धात्वर्थविशेषणम्। न त्वस्यार्थस्य प्रत्ययवाच्यत्वमनेन प्रतिपाद्यते। *अन्ययोः=प्रैषातिसर्गयोः । प्राप्तकालपदस्बहुव्रीहिसंज्ञकं यजनविशेषणतयोपात्तङ्गम्यमानस्याप्यर्थस्य स्पष्टप्रतिपत्त्यर्थम् ।

स्मे लोट् (पा० सू० ३-३-१६५)। स्मशब्दे उपपदे प्रैषादिषु गम्यमानेषु ऊर्ध्वमौहूर्त्तिके धात्वर्थे वर्त्तमानाद्धातोर्लोट् स्यात् । लिङ्कृत्यानामयमपवादः निरवकाशत्वेन बाधकः। स च नित्य एवेत्येतद्विषये लिङादीनामप्रवृत्तिरेव ।

अधीष्टे इति। लिङोऽपवादः। योगविभागादूर्ध्वमौहूर्तिक इति निवृत्तम्।

लिङ् यदि ( पा० सू० ३-३-१६८ )। कालसमयवेलास्वित्यनुवर्तते। यद्भवान् भुञ्जीत तस्य काल इत्युदाहरणार्थः। *भावे परत्वात्तुमुनमयं बाधते। सर्वलापवादोऽयम्।

अर्हेकृ ( पा० सू० ३-३-१६९ )। योग्ये कर्तरि गम्यमाने कृत्यादय इत्यर्थः।

शकिलि ( पा० सू० ३-३-१७२ )। *भावे क्विप्, शक्तौ गम्यमानायामित्यर्थः।

*सर्वलापवादत्वाच्छङ्कते—कथमिति। माशब्द इति। *सूत्रं सर्वलकारविषयेऽडागमाहितलुङन्तप्रयोगार्थम्। *वस्तुतः स नास्त्येव। "आङ्माङोश्च"(पा० सू०६-१-७४)इति सूत्रभाष्ये तथा *ध्वनितत्वात्।

धातुसम्बन्धे (पा० सू० ३-४-१)। प्रत्यया इत्युक्तेर्विधिरयम्। धातुसम्बन्ध इत्युत्तरत्राप्यनुवर्तते स्वरितत्वात्। सम्बन्धस्य द्विष्ठत्वात्

---

अधीष्टे च ( पा० सू० ३-३-१६६ )। अधीष्टः=सत्कृत्य व्यापारः। ऊर्ध्वमौहूर्तिकत्वाभावेऽपि प्रवृत्त्यर्थमिदम्।

लिङ् यदि ( पा० सू० ३-३-१६८ )। अस्य तुमुनपवादत्वमुपपादयति-*भाव इति। कर्तुर्विवक्षायामयञ्चरितार्थः। 'भगवता भवता कन्या वोढव्या, वहनीया। सद्विद्यादिगुणसम्पन्नं प्रत्युक्तिरियम्।

शकि लिङ् च ( पा० सू० ३-३-१७२ )। *भावे क्विविति। सूत्रे शकीति शकधातुप्रकृतिकभावक्विबन्तप्रकृतिकम्। शक्तोत्यर्थः सामर्थ्यम्। क्रियाजननानुकूलविजातीयव्यापारः। अत्र शक्तीतिप्रकृत्यर्थविशेषणम्। तेन शक्त्यर्थोपाधिकेऽर्थे वर्त्तमानाद्धातोरित्यर्थः।

माङि लुङ् ( पा० सू० ३-३-१७५ )। *सर्वलेति। वर्त्तमानाद्यर्थकानामयमपवादो यतस्ततः शङ्केयमिति भावः। ननु निरनुबन्धकमाशब्दप्रयोगे यदि सर्वे लकारास्तर्हि सूत्रवैयर्थ्यमत आह-*सूत्रमिति। असाधुत्वमेवैतादृशप्रयोगाणामनार्षाणामित्याह-*वस्तुत इति। *ध्वनितत्वादिति। प्रागुपपादितमेतत्।

धातुसम्बन्धे प्रत्ययाः (पा० सू० ३-४-१) द्विवचनान्तेन समासः। धात्वोः सम्बन्ध इत्यर्थः। इदञ्च विधिसूत्रन्न त्वधिकारसूत्रम्। तथा सति धातुसम्बन्ध इत्येव सिद्धे प्रत्यया इत्यस्य वैयर्थ्यापत्तेः। न च वृत्तौ सङ्ख्याविशेषानवगमात्कथन्द्विवचनान्तेन समासेऽपि सङ्ख्याविशेषावगतिरिति वाच्यम्। द्वित्वात्म-

द्विवचनान्तेन समासः । *धातुशब्देन *तदर्थो*लक्ष्यते । तेन गोमानासीद्भवितेति सिद्ध्यति, तदाह–धात्वर्थानामिति । द्विवचनान्तत्वमुचित-

---

कसङ्ख्याया अनवगतावपि व्यक्तिद्वयप्रतीतौ बाधकाभावात् । ननु धात्वोः सम्बन्धः समानकर्तृकत्वादिरूपो वाच्योऽर्थद्वारकः परस्परसम्बद्धार्थकानेकधातुप्रयोगे यत्र तेषाम्प्रत्ययानां शास्त्रान्तरेण विधानं ततोऽन्यत्र तेभ्यो धातुभ्यः प्रत्ययाः साधव इत्यर्थः । एवञ्च 'गोमानासीत्' 'गोमान् भविता' इत्यादावनुपपत्तिः । "तदस्यास्त्यस्मिन्" ( पा० सू० ५–२–९४ ) इत्यनेन वर्त्तमानसत्ताकर्तृगोसम्बन्धिपुरुषकर्तृकातीतसत्ताऽनेन प्रतिपादयितुं न शक्या । गोकर्तृकसत्ताप्रतिपादकधातुप्रयोगाभावेन तेन सम्बन्धस्य प्रतिपादनासम्भवात् । यदि तथा स्यात्तदा गौरस्तीत्यत्रास्तेरनेन सूत्रेणातीतकाले प्रत्ययं विधाय तेन धातुना सम्बन्धः स्यात् । किन्तु विद्यमान एव चैत्रे तद्गवांनामतीतानागतत्वप्रतिपादनायायम्प्रयोगः गोसम्बन्धिनो दरिद्रत्वभवनमेतद्युक्तम् । एवञ्च गोकर्तृकभूतसत्तायाः सम्बन्धवती या गौस्तद्वत्पुरुषकर्तृकभूतभविष्यत्सत्तेत्यर्थस्य भाष्यसम्मतस्य प्रतीत्यनुपपत्तिः । न च "तदस्यास्ति" ( पा० सू० ५–२–९४) इति सूत्रे कालाविवक्षयाऽयम्प्रयोग इति वाच्यम् । धनसत्त्वस्यातीतत्वे धनिनङ्गच्छेत्युक्ते शब्दप्रयोगाधिकरणकालजातदरिद्रत्ववत्पुरुषस्यापि प्रतीत्यापत्तेरत आह–*धातुशब्देनेति । *तदर्थः=धात्वर्थः । *लक्ष्यत इति । एवञ्च गोकर्तृकसत्ताप्रतिपादकधातुप्रयोगाभावेऽपि तदर्थस्य गम्यमानतया तस्मिन् सत्तारूपेऽर्थेऽतीतत्वसम्बन्धेनान्वयेन तदर्थावगतिरस्त्येव गोमत्त्वस्यातीतत्वात्तद्विशिष्टपुरुषकर्तृकसत्ताया अप्यतीतत्वेन गोमानासीदिति प्रयोगः । शब्देनाप्रयुज्यमानेन सम्बन्धाभावेऽप्यर्थेन बुद्धिस्थेन सम्बन्धो वक्तुं शक्यत एव । एवं 'गोमान् भविता' इत्यत्र गोकर्तृकसत्तायां भविष्यत्त्वकल्पनया प्रयोगस्योपपादनङ्कार्यम् । मतुप्प्रत्ययो यद्यप्यसन्निहितस्तथापि प्रकृतसूत्रे प्रत्यया इत्युपादानसामर्थ्यात्तस्योक्तरीत्योत्पत्तिः स्मर्त्तव्या । यदि प्रत्ययपदम्प्रकृतप्रकरणस्थलकारपरमेव स्यात्तदा प्रत्ययाधिकारेणैव सिद्धेऽस्य वैयर्थ्यं स्यात् । न चाधिकृतम्प्रत्ययसंज्ञापरमिति कथमधिकारेण संज्ञिलाभ इति वाच्यम् । सञ्ज्ञयन्तरस्येहानिर्देशेन संज्ञिपरत्वसम्भवात् । कृतश्चैतत्प्रत्ययपदमसन्निहितप्रत्ययस्यापि कालान्तरे साधुत्वार्थमिति विज्ञायते । न च स्पष्टप्रतिपत्तये क्रियासम्बन्ध इत्येवोच्यतामिति वाच्यम् । मात्रागौरवात् । न च सम्बन्धे प्रत्यया इत्येवास्तु धातोरित्यस्याधिकृतस्य षष्ठ्या विपरिणामेन सम्बन्धविशेषणत्वम्भविष्यतीति वाच्यम् । सम्बन्धेऽर्थे प्रत्ययविधायकत्वापत्तेः । प्रत्यया इति बहुवचनं विषयबहुत्वाभिप्रायेण । ननु तत्तत्प्रत्ययविधायकसूत्रेणैव प्रत्ययस्य सिद्धौ किमनेन सूत्रेण । अप्राप्तस्य प्रत्ययस्यानेन विधानमिति तु न युक्तम् । यस्मिन्नुपाधौ याभ्यश्च प्रकृतिभ्यो येषाम्प्रत्ययानां विधानमस्ति तेषामुपपदान्तरेऽन्यप्रकृतिभ्यश्च विधानमित्यपि कल्पना स्यादत आह–*यत्र काल इतीति । एवञ्च

म् । *यत्र काले इति । *"वर्तमानसामीप्ये" (पा० सू० ३-३-१३१) इत्यारभ्य कालान्यत्वप्रतिपादनस्यैव दर्शनादिति भावः । नन्वेवं 'वसन् ददर्श' इत्यादौ भूते लडिव वर्त्तमाने लिडित्यपि स्यादत आह—तिङन्ते-ति । भूते लडिति । अयं भावः-अनेन प्रयोगे श्रूयमाणानां कालान्तरे विधानं क्रियते । एवञ्च भूते शतुः साधुत्वे बोधितेऽर्थापत्त्या तदर्थंको लडपि कल्प्यते । *एतेनानेन लङ्यपि पुनरेतद्व्यापारे मानाभावाच्छता दुर्लभ इत्यपास्तम् ।

*भाष्यकृतस्तु 'भाविकृत्यमासील्' 'जनिष्यमाणः पुत्र आसीत्' इत्यत्र भाव्यादिशब्देऽनेन प्रत्यये आसीच्छब्द*पर्यायतया युगपत्प्रयो-गानुपपत्तिः, यदियन्तं कालं भावित्वादिना व्यवहृतं तदासी-दित्यन्वयस्तर्हि ज्योतिष्टोमयाजीत्येवंव्यवहरिष्यमाणो भवितेत्येव-मत्रापि बोधसम्भवाद्गोमानासीदित्यत्राऽपि गोमानित्येवंव्यवहृत आसी-दिति बोधसम्भवाद्गोमद्रूपस्यातीतत्वाद्वा भूते प्रत्ययेऽर्थाद् गवामप्यतीत-त्वप्रत्ययसम्भवात्सूत्रं व्यर्थं 'वसन् ददर्श'इत्यादौ च दर्शनकालिकवासस्य *वर्तमानत्वं बुद्धिस्थीकृत्य *प्रत्ययः, *तत्फलञ्च तत्समानकाल-

---

प्रत्ययानां यथायोगं विहितानाङ्कालान्यत्वस्यैव प्रतिपादनायैतत्सूत्रमिति भावः । तदेवाह-*वर्त्तमानसामीप्य इत्यादिना । *एतेन=अर्थापत्त्या लटोऽन्यकाले साधु-त्वकल्पनेन । प्रयोगे श्रूयमाणानामिति कथनेनास्मिन्प्रकरणे एतत्सूत्रप्राक्तनसू-त्रविहितानाम्प्रयोगे श्रूयमाणानां शत्रादीनामन्यकाले उत्पत्तिकल्पना न तु तिङा-मपीति सूचितम् । एतेन श्रूयमाणपदघटितवाक्यघटकधात्वर्थयोः साक्षात्सम्ब-न्धे पपाच भवति इत्यादौ चरितार्थमिदं सूत्रमिति गम्यमानधात्वर्थसम्बन्धे 'गोमानासीत्' 'गोमान्भविता' इत्यादौ न स्यादित्यपास्तम् । तिङाम्प्राक्तनसूत्र-विहितत्वाभावात् । अत्र सम्बन्धो धात्वर्थयोः समानकारकत्वस्वकारकसम्बन्धि-कारकत्वान्यतररूपो बोध्यः । एवं सति यत्राभिनवजातशत्रुत्ववत्पुरुषसम्बन्धि-ग्रामाभिप्रायेण ग्रामो गम्यमान आसीदित्यादिप्रयोगस्तत्राप्युपपत्तिः ।

सूत्रारम्भकृत्सूत्रकारस्याशयमुपवर्ण्य प्रकृतसूत्रानारम्भाभिप्रायकम्भा-ष्यकारीयकल्पनमाह-*भाष्यकृतास्त्विति । *पर्यायतयेति । न च'भावि'इत्यत्र भू-धातुस्सत्तार्थकस्ततोऽतीते प्रत्ययकल्पनेऽस्तु पर्यायत्वं जनिष्यमाणेत्यत्र तु कथम्प-र्यायत्वञ्जनधातोरुत्पत्त्यनुकूलव्यापारवाचकत्वमस्धातोस्सत्तार्थकत्वमित्यर्थभेदा-दिति वाच्यम् । धातूनामनेकार्थत्वेनास्तेरप्युत्पत्त्यनुकूलव्यापारार्थकत्वसम्भवात् । *वर्त्तमानत्वं बुद्धिस्थीकृत्य=वर्त्तमानत्वमारोप्य । *प्रत्ययः=शता । *तत्फलम्=आ-

त्व*प्रत्ययो दर्शने, शतृस्थले क्रिययोः समानकालत्वप्रतीतेः । *ननु चोत्पततैव वचनदोषश्चोदिताः स्म इति सरूपसूत्रस्थभाष्यप्रयोगस्याप्येवमेवोपपत्तिरित्याहुः ।

क्रियासमभिहारे ( पा० सू० ३-४-२ ) । धातुसम्बन्धे इति वर्तते । क्रियासमभिहार इत्येतत्प्रकृत्यर्थविशेषणं, तद्विशिष्टक्रियावाचकाद्धातोर्लोट् *सर्वलापवादस्तदाह-चोत्ये इति । तस्येति । लोट इत्यर्थः । *यदि तिबादीनां स्थाने स्यातान्तदा स्थानिवद्भावेन पित्त्वाल्लुनीहीत्यादावीत्वादि न स्यादिति भावः । तौ चेति । *लोडित्यनुवर्त्य हिस्वौ*लोडादेशहिस्ववदित्यर्थ इति भावः । उक्तातिदेशबलादेवाह-तिङ्मङ्गौ चेति । तेन पदत्वसिद्धिः । उक्तातिदेशबलादेव सार्वधातुकत्वात् ईशिष्वेशिष्वेत्येवायमीष्टे इत्यत्र "ईशः से" ( पा० सू० ७-२ ७७ ) इत्यस्य प्रवृत्तिः । ननु 'वा च तध्वमोः' इति वाक्यशेषासङ्गतिः तिङां हिस्वा-

---

रोपेणैतादृशप्रयोगकरणफलमित्यर्थः।*प्रत्ययः=प्रतीतिः। प्रकृतसूत्रस्य "सरूपाणाम्" ( पा० सू० १-२-६४ ) इति सूत्रस्थभाष्यप्रयोगोऽप्युदाहरणमित्याह—*ननु चोत्पततैवेत्यादिना । तत्र हि पृथक् सर्वेषां विभक्तिपराणामेकशेष इति पक्षे एकशेषेण प्रातिपदिकानाम्निवृत्तावपि विभक्तिश्रवणापत्तिरूपो दोष उक्तस्तस्य द्वन्द्वे कृते एकशेष इति पक्षमाश्रित्योद्धारबोधकमिदं वाक्यम्ननु चोत्पततैव वचनदोषश्चोदिताःस्म इति । अस्यार्थ -उत्पतता विभक्तिपराणामेकशेषपक्षे दोषमुपक्रमता पृथग्विभक्त्युपलब्धिस्तदाश्रयत्वादित्यनेन दोषश्चोदिताःस्म इति । अत्रोत्पततेति शत्रन्तम् । तस्य वर्त्तमानार्थकलट्स्थानिकत्वे दोषश्चोदिता इति भूतार्थकनिष्ठान्वयानुपपत्तिरिति प्रकृतसूत्रेण वर्त्तमानार्थकोऽपि भूते उपपाद्यः । प्रत्याख्यानपक्षे तु 'वसन्ददर्श' इत्यत्रेवोत्पूर्वकपतधातोर्भूते वर्त्तमानत्वारोपेण शतोपपाद्यः । न चोपक्रमतेत्यनुपपन्नं "प्रोपाभ्यां समर्थाभ्याम्" ( पा० सू० १-३-४२ ) इत्यनेन धातोः प्रारम्भार्थकत्वे आत्मनेपदविधानादिति वाच्यम् । उपक्रमतेत्यस्य दोषकथनाग्रहवतेत्यर्थात्प्रारम्भाविवक्षणात् । अत्राप्युत्पतनक्रियायाश्चुदधात्वर्थक्रियायाश्च समानकालत्वप्रतीतिरेवं सति भवति ।

क्रियासमभिहारे लोट् ( पा० सू० ३-४-२ ) । कालविशेषानुपादानेन विधानादयं सर्वकाले भवति । एवञ्च लडादिभिरव्यासावकाशाभावेनायं सर्वेषाम्बाधक इत्याशयेनाह—*सर्वलापवाद इति । लोट एव स्थाने हिस्वादेशविधानस्य फलमाह—*यदीति । एतयोर्हिस्वयोर्यथा परस्मैपदात्मनेपदसंज्ञा भवति तथाऽऽह—*लोडित्यनुवर्त्येति । द्वितीयवाक्ये लोडित्यनुवर्त्य लोटो लोड्वद्धिस्वौ भवत इति वाक्यनिष्पत्तिस्तत्र यदि लोड्धर्मस्य कृत्वप्रत्ययत्वमात्रस्यातिदेशार्थं लोड्वदित्यतिदेशस्तर्ह्यतिदेशविधानवैयर्थ्यं स्थानिवद्भावेन

भ्यां बाधेन तध्वमोरभावादत आह-तध्वमोर्विषय इति। विषयसप्तमी सेति भावः। तशब्दो मध्यमबहुवचनमेव *व्याख्यानात्। हिः कर्तरीति। *कर्त्रादयश्च कालसंख्यावदनुप्रयोगेणैव निर्णेयाः। एवञ्च कर्तरीत्यादेः कर्त्राद्यर्थकानुप्रयोगे इत्येवार्थः। भावकर्मार्थकानुप्रयोगे परस्मैपदिभ्योऽपि स्व इति युक्तम्।

समुच्चयेऽन्य (पा० सू० ३-४-३)। अत्र समभिहारपदरहितं पूर्वसूत्रं संपूर्णमनुवर्त्तते। *समुच्चीयमानक्रियावृत्तेर्धातोरित्यर्थः। *अत एव कारकसमुच्चये नास्य प्रवृत्तिः। विकल्पस्य लोटैवान्वयो न तु हिस्वाभ्यां *व्याख्यानात्।

---

सिद्धेरतो लोट्शब्दः स्वादेशलाक्षणिक इत्याशयेनाह—*लोडादेशेति। एवमपि नैकादेशसाहद्वयबोधनङ्किन्तु विनिगमनाविरहात्सर्वेषामादेशानान्तौल्यन्तेन परस्मैपदात्मनेपदसंज्ञयोर्लाभः। एवञ्च "सामान्यातिदेशे विशेषानतिदेशः" इत्येषा परिभाषाऽतिदेशविधानसामर्थ्याद्बाध्यत इति भावः। हिस्वयोरातिदिष्टे परस्मैपदात्मनेपदसंज्ञे यथासङ्ख्येन भवतस्तदाह मूले क्रमेणेति। हिस्वविधानसामर्थ्यादिति। यद्यनयोः पुरुषैकवचनसंज्ञयोरप्यतिदेशः स्यात्तदा "युष्मद्युपपदे" (पा० सू० १-४-१०५) इत्यस्यैकस्यैकवचनमिति च शास्त्रसंवादिनी प्रवृत्तिरनयोः स्यात्। एवञ्च सामान्यशास्त्रेण वचनद्वयैकवाक्यतया विधायकेन सिद्धावेतयोर्विधानं व्यर्थं स्यादिति भावः। *व्याख्यानादिति। ध्वंशब्दसाहचर्यमूलकव्याख्यानादित्यर्थः। मूले हिः कर्त्तरीत्युक्तं, तन्नोपपद्यते अनुप्रयुज्यमानसमभिव्याहारेणैव कर्त्राद्यर्थस्याभिव्यक्तेरेतयाः कर्त्राद्यर्थकत्वानङ्गीकारादत आह— *कर्त्रादयश्चेति। ननु स्वातन्त्र्येण क्रियासमभिहारे हिस्वौ विधेयौ न तु लोट् लोड्वदिति च वाच्यमत एव सर्वसामञ्जस्ये लोडिति प्रथमान्तञ्च वक्तव्यमिति चेन्न। लोडित्यस्यातिदेशवाक्यघटकस्य लोडादेशबोधकतानापत्तेः। लोटः स्थानेऽनयोर्विधाने हि पूर्वोक्तरीत्या लक्षणा भवति। क्रियासमभिहारे विहितोऽयं लोट् तस्याभिव्यक्तये द्विर्वचनमपेक्षत 'व्यतिलुनीते' इत्यादावात्मनेपदेन कर्मव्यतिहारस्य द्योतनेऽपि व्यतिशब्दवत्। अत एवात्र क्रियासमभिहारे द्विर्वचनं वक्ष्यते। यङ् पुनरस्मिन्नेवार्थे शक्त इति तस्य न द्विर्वचनापेक्षा।

समुच्चयेऽन्यतरस्याम् (पा० सू० ३-४-३)। अनेकक्रियाणां स्वस्वबोधकधातुघटितशब्दबोध्यानां विवक्षा=समुच्चयः। प्रकृते समुच्चयशब्दो बहुलग्रहणेन कर्मणि विधीयमानाजन्तः। अयञ्च क्रियापदार्थस्य विशेषणन्तदाह— *समुच्चीयमानेति। *अत एव=कर्मार्थकाजन्तस्य क्रियापदार्थविशेषणत्वादेव। भावाजन्तत्वे हि विनिगमनाविरहात्कारकसमुच्चयेऽपि स्यादिति भावः। एवञ्चैककाक्ककानेकक्रियाविवक्षायामस्य प्रवृत्तिः। *व्याख्यानादिति। पूर्वसूत्रवदस्मिन्नपि सूत्रे वाक्यत्रयकल्पनेन प्रथमवाक्यघटकलोट्कर्तृकभवनस्य पुरःस्फूर्ति-

यथाविध्यनु ( पा० सू० ३-४-४ ) । *अस्य व्यवहितादिप्रयोगोऽपि 'लुनीहि लुनीहीत्येवायं लुनाति' इति भाष्यप्रयोगात् ।

समुच्चयेमा ( पा० सू० ३-४-५ ) । *सामान्यवचनत्वं समुच्चितार्थबोधकधात्वपेक्षयैवोपस्थितत्वात् । तत्त्वञ्चा*नुप्रविष्टसमुच्चितधात्वर्थकत्वम् । अस्ति चाभ्यवहरतीत्यस्यानुप्रविष्टखानपानादिरूपार्थबोधकत्वम् । तेनोभयार्थगतसंख्यापुरुषकालाद्यभिव्यक्तिः । द्वे वाच्ये इति । इदमाद्यसूत्रविहितलोडन्तविषयमेवेति अत्रैव प्रकरणे *भाष्ये स्पष्टम् । लवनादीत्यादिना मोषणहरणे । अस्वास्थ्यक्रियेति । *अस्वास्थ्यमिति प्रथमान्तं क्रियाविशेषणमिति भावः । इत्थंशब्द उक्तक्रियाणां सामान्यभूत'चक्रे'इत्यर्थेऽभेदान्वयतात्पर्यग्राहक इति तात्पर्यम् । पुनःपुनरि-

---

कत्वमूलकव्याख्यानादित्यर्थः ।

यथाविध्यनुप्रयोगः पूर्वस्मिन् ( पा० सू० ३-४-४ ) । विधानं=विधिः विधिमनतिक्रम्य=यथाविधि । विधानस्य सावधिकत्वाद्यस्मादित्यस्याध्याहारः विधानक्रियाकर्म चोपस्थितत्वाल्लोडेव तस्येत्यस्य चाध्याहार इति यस्माद्धातोर्लोड्विधानन्तस्यानुप्रयोगोऽनेन बोध्यते । यद्यपि प्रकृतस्य लोटः कर्त्राद्यर्थानभिधायकत्वेनैतदन्तादपरिसमाप्तोऽर्थ इत्यनुप्रयोगः सङ्ख्याकर्त्राकाङ्क्षाशान्त्यर्थं प्रकृतसूत्राभावेऽपि सिद्ध एव । तथापि यथाविध्येवानुप्रयोग इति नियमार्थमिदं सूत्रम् । पूर्वस्मिन्निति तु स्पष्टार्थम् । समुच्चये विशेषस्य वक्ष्यमाणत्वात् । "कृञ्चानुप्रयुज्यते" ( पा० सू० ३-१-४० ) इति सूत्रविहितानुप्रयोगादस्य वैलक्षण्यमाह—*अस्येति । यथाविध्येवेति नियमात् याहि याहीति यातीत्येव प्रयोगो न तु याहि याहीति गच्छति, लुनीहि लुनीहीति छिनत्तीति भवति ।

समुच्चये सामान्यवचनस्य ( पा० सू० ३-४-५ ) । सामान्यमुच्यते येन सः=सामान्यवचनः । सामान्यं=समानो धर्मः, स च समुच्चितधात्वर्थवृत्तित्वे सति अनुप्रयुज्यमानधात्वर्थवृत्तिरेवञ्च यत्सिद्धन्तदाह—*सामान्यवचनत्वञ्चेति । *अनुप्रविष्टेति । अनुप्रविष्टः समुच्चितधात्वर्थो यस्मिन्नर्थे तादृशोऽर्थो यस्य धातोस्तत्त्वमित्यर्थः । *भाष्ये स्पष्टमिति । "लोड्मध्यमपुरुषैकवचनस्य क्रियासमभिहारे द्वे भवतः"(का०वा०)इत्यनेन स्पष्टम् । अस्वास्थ्यक्रिया इत्यत्रास्वास्थ्यस्य क्रियेति भ्रमवारणायाह—*अस्वास्थ्यमिति प्रथमान्तमिति । तेन प्रथमान्तेन क्रियाशब्दस्य प्रथमान्तस्य कर्मधारयसमासः । नन्वभेदान्वयतात्पर्यग्राहकस्येतिशब्दस्य प्रयोगे मध्ये कृतेऽनुप्रयोग इत्यस्य वाच्यार्थविरोध इति चेन्न । अत्रानुशब्दस्यानुवादकपरत्वात् । ननु 'गां दोग्धि' इत्यादौ यथाऽवधित्वफलाश्रयत्वयोर्युगपद्विवक्षायाम्परत्वात्कर्मसंज्ञायाङ्गोशब्दात्तु त्पन्नद्वितीयया कर्मत्वभानेऽप्यवधित्वम्भासते तथेहापि समुच्चयक्रियासमभिहारयोर्विवक्षायाम्परत्वात्-

ति । लोडन्तवाच्य इति हि तेषां व्याख्यानम् । अननुवृत्तेरिति । आख्यादावनुक्तेरिति भावः । लोडन्तेति । *उभयविवक्षायामपि समुच्चयस्यानेकविषयत्वेन समभिहारस्यैकविषयत्वेनान्तरङ्गत्वात् पूर्वसूत्रस्यैव प्रवृत्तिरिति द्वित्वापत्तिरिति भावः । परे तु अवस्कन्देत्यादिपदोपस्थितानामित्थंपदेना*काङ्क्षामुत्थाप्यास्वास्थ्यपदेन मनोदुःखार्थकेनान्वये जाते *तस्य 'चक्रे' इत्यनेन कर्मतयाऽन्वयः । एवञ्च थमो नासङ्गतिरित्थमित्यस्यास्थानस्थत्वञ्च न । *तत्र प्रकरणाद् बलीपदेन रावणस्यैवो*पादानात्कर्त्रर्थकत्वावगतिः । *तस्यातीततया लोकप्रसिद्धतया तत्कर्तृकक्रियाणामपि *तत्त्वावगतिः । बलीत्यस्यैव कर्तृत्वात्पुरुषोऽप्यवगत इति नात्रानुप्रयोगापेक्षा । किं च क्रियामात्रप्रतिपादने तात्पर्या*त्तदनुपयोग एव पौनःपुन्यमपि अहार्दिवमिति समभिव्याहाराद्रावणस्य तथा कर्मशालित्वेन प्रसिद्धत्वाच्च व्यञ्जनयैव बुद्ध्यते । यद्वाऽवस्कन्देत्यादीनि विधिलोडन्तान्येव *स्वसेवकप्रेरणाविषयावस्कन्दनादिजन्यमस्वास्थ्यं मनोदुःखं चक्रे इत्यर्थः । *अत एव "तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयं स्थानम्" इति श्रुतावनुप्रयोगाभावेऽपि समुच्चये लोट् । भवतिक्रियामात्रविवक्षणेन संख्याकालाद्यभिव्यक्त्यनुपयोगे नात्रानुप्रयोगाभावः । *अत एवानुप्रयोगविधायकं द्वयमपि भाष्ये *प्र-

---

नेन लोट्यप्युभयभानम्भविष्यतीत्यत आह-*उभयेति । *आकाङ्क्षामुत्थाप्येति । अनेन तस्या उत्थितत्वनिरासः । *तस्य=पुर्य्यवस्कन्दनाद्यभिन्नास्वास्थ्यस्य । न च मनोवृत्तिदुःखप्रयोजकव्यापारो ह्यत्रास्वास्थ्यपदेन प्रतीयते न तु मनोदुःखमेवेति अस्वास्थ्यपदेन मनोदुःखार्थकेनेत्यसङ्गतमिति वाच्यम् । 'ताद्थ्यात्ताच्छब्द्यम्'इति न्यायेन प्रयोजकव्यापार एव मनोदुःखपदस्य प्रवृत्तेः । *तत्र=तस्मिन्पद्ये । उपात्तेनेति शेषः *उपादानात्=प्रतिपादनात् । *तस्य=रावणस्य । *तत्त्वावगतिः=अतीतत्वावगतिः । *तदनुपयोगः=अनुप्रयोगानुपयोगः । कालकारकतद्गतसंख्याविशेषावगत्यर्थं सामान्यवचनस्यानुप्रयोगः प्रार्थनीयः । तेषाञ्चावगतिः प्रकरणाद्वाक्यैकदेशन्यायेन भविष्यतीति भावः । विधौ लोट् तदा वक्तव्यो यदि प्रेरणा प्रतीयेतेत्याशङ्कायामाह-*स्वसेवकेति । प्रेरणाविषयश्चासौ अवस्कन्दनादिश्चेत्यर्थः । *अत एव=गम्यमानस्थलेऽनुप्रयोगानावश्यकत्वादेव । *अत एव=प्रकरणसद्भावादेवानुप्रयोगे सिद्धे तदर्थं वचनस्यानावश्यकत्वादेव । *प्रत्याख्यातमिति । "किमर्थमिदमुच्यते । अनुप्रयोगो यथा स्यात् । नैतदस्ति प्रयोजनम् । हिस्वान्तमनभिव्यक्तपदार्थकन्तेनानुप्र-

स्याख्यातम् । श्रुतौ पौनःपुन्यमसकृत्पदगम्यम् । एतच्छ्रुतिसमानार्थके 'आ च सत्यलोकादाचावीचेर्जायस्वम्रियस्वेति विपरिवर्त्तमानमात्मानं जीवलोकश्चालोक्याऽस्मिन्संसारे नित्याशुचिदुःखात्मकं प्रसंख्यानमुपावर्तते' इति वाचस्पतिप्रयोगेऽप्येवमेव बोध्यम् । आचावीचेराचसत्यलोकादिति विपरिवर्त्तमानमिति च पदसमभिव्याहारेण पौनःपुन्यावगतिः । यत्तु कल्पतरुणा "क्रियासमभिहारे" ( पा० सू० ३-४-२ ) इति सूत्रेण पौनःपुन्ये लोडित्युक्तं, तन्न । द्वित्वापत्तेरिति वदन्ति इति सर्वेष्टसिद्धिः । *विस्तरस्तु बृहच्छब्देन्दुशेखरे बोध्यः ।

इति शिवभट्टसुतसतीगर्भजनागोजीभट्टकृते
लघुशब्देन्दुशेखरे तिङन्तं सम्पूर्णम् ।

---

योगो भविष्यति । यथाविधीति वक्ष्यामीति । एतदपि नास्ति प्रयोजनम् । समुच्चये सामान्यवचनस्येति वक्ष्यति तत्रान्तरेण वचनं यथाविध्यनुप्रयोगो भविष्यति" । समुच्चय एव सामान्यवचनस्यानुप्रयोगः इति नियमात् क्रियासमभिहारे यथाविध्यनुप्रयोगो भविष्यतीति भावः । एवम्प्रकारेण प्रथमं सूत्रं द्वितीयमपि हिस्वान्तमनभिव्यक्तपदार्थकन्तेनापरिसमाप्तोऽर्थ इति कृत्वाऽनुप्रयोगो भविष्यति । इदन्तर्हि प्रयोजनम् । सामान्यवचनस्येति वक्ष्यामि । एतदपि नास्ति प्रयोजनम् । सामान्यवचनस्याऽनुप्रयोगोऽस्तु विशेषवचनस्येति । सामान्यवचनस्यैवानुप्रयोगो भविष्यति लघुत्वात्" इत्यनेन प्रत्याख्यातमित्यर्थः । इदञ्च लाघवं क्व चिदेव पर्यायवचनस्थले आद्रियते न सर्वत्र पर्यायेषु लाघवगौरवयोरनादरात्प्रकृते त्वपर्यायत्वं स्पष्टमेवेति भावः । *विस्तरस्त्विति । यदि तु पुरामवस्कन्देत्यत्रावश्यमनुप्रयोगोऽपेक्षितं इति दुराग्रहस्तदा चक्रे इत्यस्य तन्त्रेणोभयत्रान्वयोऽस्त्वित्यनेनेत्यर्थः । मूले भ्रम एवेति । पुरुषांशे वचनांशे चेति शेषः । पूर्वोक्तरीत्यैव निर्णयसम्भवादिति सकलेष्टसिद्धिः । इति लकारार्थप्रक्रियाविवरणम् ।

इति श्रीमदनन्तकल्याणसद्गुणनिधानाखिलपण्डितसार्वभौमभूमण्डलप्रसारिविमलतरानवद्यसद्यशःपार्वणपीयूषभान्वगस्त्यकुलवंशावतंसश्रीभवदेवमिश्रात्मजभैरवमिश्रकल्पितायाश्चन्द्रकलायां शब्देन्दुशेखरव्याख्यायां तिङन्ताख्यं प्रकरणं सम्पूर्णम् । श्रीमत्सीतारामचन्द्रार्पणमस्तु ।

धातोः ( पा० सू० ३-१-९१ ) । *सोपसर्गाणामङ्गत्वव्यावृत्तये इदम् । *स्यादिव्यवधाने आदेशप्रवृत्तिस्तु धातोर्विहितस्य लस्यादेश इत्यर्थादक्षता ।* 'लुनाति' इत्यादौ लादेशव्यावृत्तये आतृतीयसमाप्तेरधिकार इति भावः ।

तत्रोपपदं ( पा० सू० ३-१-९२ ) । कृदतिङ् ( पा० सू० ३-१-९३ ) । *व्याख्याते ।

---

## ॥ अथ कृदन्तप्रकरणम् ॥

श्रीगणेशाय नमः ।

नत्वा श्रीजानकीजानिं सानुजं वरदम्प्रभुम् ॥
कृतां व्याख्यानमधुना क्रियते तत्प्रसादतः ॥ १ ॥

धातोः ( पा० सू० ३-१-९१ ) । अधिकारसूत्रमिदं, तस्य फलमाह- *सोपसर्गाणामिति । एतत्सूत्राभावे "वर्तमाने लट्" ( पा० सू० ३-२-१२३ ) इत्यादेर्वर्त्तमानाद्यर्थे प्रत्यासत्त्या तादृशार्थप्रतिपादकेभ्यो लडादयः स्युरित्यर्थे पर्यवसन्ने सति सोपसर्गाणामपि तादृशार्थप्रतिपादकतया तेषामप्यङ्गत्वापत्त्या वडाद्यव्यवस्थापत्तेरिति भावः । यद्यपि तृतीयाध्यायसमाप्तिपर्यन्तं "धातोरेकाचः" (पा० सू०३-१-२२)इतिसूत्रस्थस्य धातोरित्यस्य सम्बन्धेन धातोरेव लडादयो भविष्यन्तीति न सोपसर्गाणामङ्गत्वस्य प्रसक्तिस्तथापि द्वितीयस्य धातोरित्यस्याधिकारसूत्रस्याभावे "तिङ्शित्" ( पा० सू० ३-४-११३ ) इत्यस्य "आर्द्धधातुकम्" ( पा० सू०३-४-११४ ) इत्यस्य च धात्वर्थे तिङः शितश्च ते सार्वधातुकाभिन्नास्तेभ्यो भिन्नाश्चार्द्धधातुकाभिन्ना इत्यर्थापत्तिः स्यात् । तथा सति क्विबन्तानां 'लू' 'पू' प्रभृतीनामपि धातुत्वात् 'लूभ्याम्' 'पूभ्याम्' इत्यादौ भ्याम आर्द्धधातुकत्वस्य सत्त्वादिडागमः स्यात्, द्वितीयस्य धातोरित्यस्य सत्त्वे तु उक्तसूत्रयोर्धातोर्धातोरित्येवमानुपूर्वीकशब्दोच्चारणेन विहितानान्ते संज्ञे भवत इत्यर्थनिष्पादान्न भ्याम आर्द्धधातुकत्वस्य प्रसक्तिः । नन्वातृतीयसमाप्तेश्चेदयमधिकारस्तदा स्यादिप्रवृत्तियोग्ये विषये नित्यत्वात् स्यादिषु कृतेषु तदनन्तरं लस्य स्थाने तिबाद्यादेशस्य तेन व्यवधानात्प्रवृत्तिर्न स्यात् । सूत्रस्य "तिप्तस्" ( पा० सू० ३-४-७८ ) इत्यस्य चारितार्थ्यन्तु यस्य विकरणस्य सार्वधातुकनिमित्तकत्वन्तस्य शबादेर्विषये स्यादत आह- *स्यादिव्यवधान इति । "तिप्तस्" ( पा० सू० ३-४-७८ ) इति सूत्रे धातोरित्येतत्सम्बन्धस्य प्रयोजनमाह-*लुनातीत्यादाविति ।

*व्याख्यात इति । पूर्वार्द्धे प्रसङ्गतो व्याख्यात इत्यर्थः ।

वासरू ( पा० सू० ३-१-९४ ) । परिभाषेयम् । *अधिकारत्वे स्वरितत्वप्रतिज्ञागौरवमिति भावः । असरूप इति लिङ्गम् । यत्रासरूपप्रत्ययविधानं तत्र वेत्युपतिष्ठत इत्यर्थः । न च प्रत्ययत्वस्य वाक्यार्थबोधोत्तरं ज्ञानेन पूर्वन्तद्विधित्वज्ञानासम्भव इति वाच्यम् । यस्य प्रत्ययत्वं भावि तद्विधानित्यर्थात्, *यद्वा कप्रत्ययो भवति स च वेति वाक्यभेदेनान्वयः । असरूप इति च्छेदः । तत्रासरूपत्वं किमपेक्षयेत्याकाङ्क्षायां यस्य स्वविषये सर्वत्र प्रवृत्तिस्तदपेक्षया,उपस्थितत्वात् । स चोत्सर्ग एव नापवादः उत्सर्गविषये सर्वत्रापवादाप्रवृत्तेः । *अत एव विप्रतिषेधविषये तदप्रवृत्तिस्तदाह–असरूपोऽपवाद इति । उत्सर्गस्य बाधकोऽपवादो वा भवतीत्यर्थः । बाधकत्वविकल्पे शाप्तिपोरिव पक्षे समावेशः स्यात् । अत एव "नवा" ( पा० सू० १-१-४४ ) इति सूत्रे साधुत्वविकल्पे तस्यैव पक्षे-

---

वाऽसरूपोऽस्त्रियाम् ( पा० सू०३-१-९४ ) । असरूप इति छेदः । असरूपत्वञ्च किमपेक्षयेत्याकाङ्क्षायां यस्य स्वविषये सर्वत्र प्रवृत्तिस्तदपेक्षयेति प्रत्यासत्त्या लभ्यते । एतादृशश्चोत्सर्ग एवेति फलितमत उक्तम्मूले–असरूपोऽपवाद इति । न चापवादेनासरूप उत्सर्गो वा भवतीत्येवार्थोऽस्त्विति वाच्यम् । तथा सत्यपवादस्यान्यत्रेवात्रापि बाधकत्वन्नित्यमेव प्राप्तमिति प्रकृतसूत्रस्यापवादविषयेऽप्युत्सर्गो भवत्विति विध्यर्थः कल्प्यो विकल्पश्च कल्प्य इत्युभयविधायकत्वापत्तौ गौरवापत्तेः । अपवाद इतिकथनादेव विप्रतिषेधविषये नास्य सूत्रस्य प्रवृत्तिः । उभयोरपि सूत्रयोस्तत्र चारितार्थ्येन कस्यापि सूत्रस्य स्वविषयताव्यापकान्यविषयताकत्वस्याभावात् । तदुक्तं भाष्ये–"सापेक्षोऽयन्निर्देशः क्रियते वासरूप इति । न चोत्सर्गवेलायाङ्किञ्चिदपेक्ष्यमस्ति । अपवादवेलायाम्पुनरुत्सर्गोऽपेक्ष्यते" । किञ्चिदित्यस्य स्वविषयताव्यापकविषयताकङ्किञ्चिदित्यर्थः । अपवादवेलायामिति । बाध्यत्वेन यावदुत्सर्गो नापेक्ष्यते तावदपवादस्य प्रवृत्तिर्नास्तीत्यर्थः । अयम्भावः–भिन्नस्वरूपत्वं ह्यसरूपत्वन्तच्च किमपेक्षयेत्याकाङ्क्षायां तद्विधानसमये यः सर्वत्रोपस्थितो भवति तदपेक्षयेति कल्प्यते, एवञ्चोत्सर्गः सर्वत्रापवादविषयं लङ्घमान एव बुद्धावुपारूढ इत्यतस्तदपेक्षयाऽसरूपत्वं गृह्यते । न च "प्रकल्प्य चापवादविषयम्" इतिन्यायेनोत्सर्गस्याप्यपवादापेक्षाऽस्तीति वाच्यम् । लक्ष्यसंस्कारवेलायान्तथाऽपेक्षायामपि वाक्यार्थप्रमितिवेलायान्तदभावात् । अस्याः परिभाषायाः सत्त्वादपवादशास्त्रस्य च वाक्यार्थबोधजननवेलायामप्येकवाक्यता भवतीति । अस्य सूत्रस्याधिकारत्वन्निरस्यति–*अधिकारत्व इति । प्रत्ययत्वम्भावीत्यर्थाकल्पनलाघवानुरोधेनाह–*यद्वेति । *अत एव=उत्सर्गबाधकत्वेन निश्चितस्य भवनविकल्पस्यैवानेन बोधनादेव । यस्य शास्त्रेण विकल्पो बोध्यते तस्यैव पाक्षिकाभावप्रवृत्तिकत्वम्भवतीति

ऽसाधुत्वमापादितं *धर्मनिषेधे धर्म्यभावे मानाभावात्। एवञ्चापवादो वा भवतीत्येव सिद्धे उत्सर्गस्य बाधक इत्यस्य फलं चिन्त्यम्। अपवादपदार्थनिरूपणन्तदित्यन्ये। स्त्रियामित्यस्य *स्वरितत्वादाह- स्त्र्यधिकारोक्तमिति। अपवादमिति शेषः। *तेन व्यावक्रोशी व्यावकुष्टिरिति सिद्ध्यति। कर्मव्यतिहारे णचः स्त्र्यधिकारोक्तत्वाभावात्। *असारूप्यश्चौपदेशिकमेवेति क्विबादिषु *न दोषः। *तदप्यननुबन्धकृतमेव "ददातिदधात्योः" (पा० सू० ३-१-१३९) इति णबाधकशस्य विकल्पात्। अतः काणोर्न समावेश इति दिक्।

कर्त्तरि कृत् (पा० सू० ३-४-६७)। *न च धातोः परः कृत्प्रत्ययः कर्तरि वर्त्ततामित्येवमस्य सूत्रस्यार्थेऽतोऽर्थादन्यत्र वृत्त्यभावेन *प्रत्ययनियमोऽयं भवतीति 'काष्ठभिद्ब्राह्मणः' इत्यकारस्यापि

---

यदि बाधकत्वविकल्पोऽनेन शास्त्रेण बोध्येत तदोत्सर्गापवादयोः पक्षे समावेशः स्यादेवेति भावः। ननु बाधक इत्यनेनार्थाद्बाधकशास्त्राभाव एव बोध्यत इत्यत आह-*धर्मनिषेध इति। *स्वरितत्वादिति। तेनाधिकः कार इत्यर्थाश्रयणात् "स्त्रियाम्" (पा० सू० ४-१-३) इत्याधिकारीयप्रत्ययलाभो "गोस्त्रियोरुपसर्जनस्य" (पा० सू० १-२-४८) इतिसूत्रघटकस्त्रीपदेनेवेति भावः। *तेन=अस्त्रियामित्यत्र स्वरितत्वकल्पनेन। स्त्रियामित्यधिकारीयप्रत्ययविषये तु न विकल्पः। तेन 'चिकीर्षा' 'जिहीर्षा' 'जिगमिषा' इत्यादौ "अ प्रत्ययात्"(पा०सू०३-३-१०२)इत्यकारप्रत्यय एव। *असारूप्यश्चौपेति। एतत्परिभाषैकवाक्यतापन्नस्य तत्तद्विधिशास्त्रस्य लक्ष्यसंस्कारकतया तस्यामवस्थायां यद्रूपमुपस्थितस्भवति तस्यैव ग्रहणमुचितमिति भावः। *न दोष इति। परिनिष्ठितरूपे श्रूयमाणं यद्रूपन्तत्कृतासारूप्यस्य ग्रहणे क्विपः श्रवणाभावेन तत्र वासरूपपरिभाषाया अव्याप्तिरूपो दोषः स्यादिति भावः। *तदप्यननुबन्धकृतेति। असारूप्यमप्यनुबन्धभिन्नकृतमेव। उपदेशावस्थायामनुबन्धकृतस्याप्यसारूप्यस्य सम्भवात्। एतेन विकल्पारम्भेण 'नानुबन्धकृतमसारूप्यम्' इति परिभाषा सिद्धा। न चानुबन्धानामनेकान्तत्वपक्षेणैषा परिभाषा गतार्थेति वाच्यम्। एकान्तत्वपक्षस्यैव स्थिरत्वात्। किञ्च तस्मिन्पक्षे "चुटू" (पा० सू० १-३-७) "लशकु" (पा० सू० १-३-८) इतिसूत्रसम्बद्धस्यादिपदस्य पूर्वसमीपलाक्षणिकत्वमवश्यं वाच्यमिति चुञ्चुप्चणपोर्योग्रित्वकल्पनेन समाधानस्यासङ्गतिर्यकारलोपेऽप्युकारादिसमुदायपूर्वसामीप्यस्याक्षतत्वात्। यकारप्रश्लेषसामर्थ्यकल्पनापेक्षयाऽनुबन्धानामेकान्तत्वपक्षस्यैव युक्तत्वादित्याशयः।

कर्त्तरि कृत् (पा० सू० ३-४-६७)। कार्याः शब्दा इति वादिनः शङ्काम्प्रदर्श्य नित्याः शब्दा इति सिद्धान्तानुरोधेनात्र समाधातुं कार्यशब्दवादिमतन्तावदुपन्यस्यति-*न चेति। वाच्यमिति परेणान्वयः। *प्रत्ययनियमो-

*तत्र वृत्तिरिति तस्यापि कृत्सञ्ज्ञाप्रत्ययसञ्ज्ञे स्यातामिति वाच्यम्। *यः स्वभावतः कर्तरि वर्तते स एव कृत्सञ्ज्ञो नान्य इति सञ्ज्ञानियमेनादोषात्। *अत एव न शब्दार्थसम्बन्धनित्यताहानिः। एवं सर्वत्रार्थबोधकेषु बोद्ध्यम्। *स्पष्टं चेदमत्रैव भाष्ये।

तयोरेव (पा० सू० ३-४-७०)। तच्छब्देन "लः कर्मणि" (पा० सू० ३-४-६९) इतिसूत्रस्थभावकर्मणोः परामर्शः। तत्रासत्त्वभूतस्यैव भावस्य निर्देशेनात्रापि *तथाभूतस्यैव परामर्शेन भावे *एकवचनम्। *स्वभावाच्चास्य भावस्य नपुंसकत्वं बोद्ध्यम्। अत्र भावेऽकर्मकेभ्य इत्यनुवृत्त्या भावेऽकर्मकेभ्य एव, *एवकारः स्पष्टार्थः। *कर्तृव्यावृत्तये तु न, निर्दिष्टार्थत्वेन "कर्तरि कृत्" (पा० सू० ३-४-६७) इत्यस्याप्राप्तेरिति दिक्।

स्वरार्थाविति। "तित्स्वरितम्" (पा० सू० ६-१-१८५) "उपोत्तमं रिति" (पा० सू० ६-१-२१७) इति स्वरार्थः। तद्भाष्येति। तत्र 'भिदेलिमाः' इत्यस्य भेत्तव्या इति विवरणादिति भावः।

---

ऽयमिति। धातोः परः कृत्प्रत्ययः कर्त्तरि वर्त्ततामेवेत्यनेन यो धातोः परः श्रूयते स कर्त्तारं ब्रुवन् सन् कृत्संज्ञः स्यादित्यर्थमेतत्सूत्रं स्यादिति तदाशयः। *तत्र वृत्तिरिति। धातोः परत्र वृत्तिरित्यर्थः। *यः स्वभावत इति। अर्थस्य लोकतः सिद्धेस्तद्विधाने न शास्त्रव्यापार इति भावः। *अत एव=अस्य सूत्रस्य संज्ञानियामकत्वादेव। यदि शास्त्रमपूर्वार्थविधायकं स्यात्तदा नित्यत्वस्य हानिः स्यात्। *स्पष्टञ्चेदमिति। "किमयम्प्रत्ययनियमः, आहोस्वित्संज्ञानियमः" इत्यादिना स्पष्टमित्यर्थः।

तयोरेव कृत्यक्तखलर्थाः (पा० सू० ३-४-७०)। *तथाभूतस्यैव=असत्त्वभूतस्यैव। एतेन संख्यानन्वययोग्यता दर्शिता। *एकवचनम्=द्वित्वाद्यभावेनैकवचनम्। तिङन्तवाच्यभावतोऽस्य किञ्चिद्वैलक्षण्यमपीत्याह-*स्वभावाच्चेति। शब्दशक्तिस्वभावादित्यर्थः। एतावतैव "सत्त्वप्रधानानि नामानि" इति निरुक्तस्यापि प्रकृते सङ्गतिः। *एवकारः=प्रकृतसूत्रस्थैवकारः। नन्वकर्मकेभ्यो भाव एवेति कर्तृव्यावृत्तिफलकनियमबोधनायैवकारोऽस्त्वित्यत आह-*कर्तृव्यावृत्तय इति। एतेन "लः कर्मणि" (पा० सू० ३-४-६९) इतिसूत्रानन्तरङ्कृत्यक्तखलर्था इतिसूत्रम्पठनीयम्। 'ल' इतिपदम्परित्यज्य सम्पूर्णसूत्रम्पूर्वमनुवर्त्तनीयमस्मिन्सूत्रे तयोरेवेति न वाच्यमिति कस्य चिदुक्तिः प्रत्युक्ता। पूर्वसूत्रादस्य किञ्चिद्वैषम्यसूचनाय तयोरेवेत्यस्यावश्यकत्वात्।

कृत्यचः ( पा० सू० ८-४-२९ )। कृतीति विद्यत्यध्याहारेण तस्य विशेषणं, तदाह—कृत्स्थस्येति । *अत्र च व्याख्यानमेव शरणम् । अचः परत्वाभावादिति । इकारस्य नकारेण व्यवधानादिति भावः । नकारेण व्यवधानाच्चेति पाठे चो हेतौ बोध्यः । *अजपि कृत्स्थ एवेति तु न शक्यं वक्तुं 'प्रहीणः' इत्याद्यसिद्ध्यापत्तेः ।

हलश्चेजु ( पा० सू० ८-४-३१ )। कृतः प्रत्ययत्वेन "प्रत्ययग्रहणे यस्मात्स विहितस्तदादेः" ( प० भा० ) इति पञ्चम्यन्तोपस्थितत्या तस्येमे विशेषणे । तन्नेजुपधस्य हलन्तत्वाव्यभिचारादाह—हलादेरिति । अचः किम्?, प्रस्विन्नः ।

इजादेः ( पा० सू० ८-४-३२ ) । हलादेरित्यर्थकं हल इत्यनुवृत्तमपि सामर्थ्याद्धलन्तपरम् । इजादेर्हलादित्वासम्भवात् *विहितविशेषणञ्च तेनास्य नियमत्वम् । अन्यथा णिलोपे हलन्तात्परत्वेन प्रत्ययलक्षणप्राप्तणेर्विभाषेति बाधित्वा नित्यार्थो विधिरेव स्यात् । यद्यपि नियमे प्राप्तबाधः सिद्धस्य पुनरुपादानादनुवाददोषश्च तथापि लक्ष्यानुसारिभाष्यमेव नियमे मानमिति बोध्यम् । अनुस्वारश्च सर्वोऽपि गृह्यते *व्याख्यानात्तदाह—प्रोम्भणामिति ।

---

वसेस्तव्यत्कर्त्तरि णिच्च ( का० वा० ) । वसधातोस्तव्यत्कर्त्तरि स्यात्स च णित् स्यात् । मूले-अयमिति । केलिमर्प्रत्ययः ।

कृत्यचः ( पा० सू० ८-४-२९ )। 'उपसर्गात्' इति 'रषाभ्याम्' इति चानुवर्त्तते । तत्स्थात्ताच्छब्द्यमित्याशयेनाह-*उपसर्गस्थादिति । *अत्र च= कृत्स्थस्येति व्याख्याने च । एतेन कृति परे यतः कृतो विधानन्तदवयवस्योपसर्गस्थान्निमित्तात्परस्य नस्येत्यर्थ उचित इति निरस्तम् । प्रत्यासत्त्याऽजपि कृत्स्थ एव ग्राह्य इति शङ्कां वारयति—*अजपीति ।

णेर्विभाषा ( पा० सू० ८-४-३० )। अत्र णेरिति विधानक्रियानिरूपितापादाने पञ्चमी इत्याशयेन ण्यन्ताद्विहित इति व्याख्यातन्तस्यायमाशयः-अट्कुप्वाङित्यस्य सम्बन्धेन रषाभ्यामित्यंशे निर्दिष्टपरिभाषाबाधेऽपि णेरिति पञ्चमीदर्शनेन तदंशे निर्दिष्टपरिभाषाबाधे मानाभाव इति । एतत्फलञ्च मूलकारेणैव दर्शितम् ।

इजादेः सनु ( पा० सू० ८-४-३२ )। इजादेर्हलन्तादिति यदत्र व्याख्यातन्तदस्य सूत्रस्य नियमार्थत्वसम्पत्तये । एवं व्याख्याने ह्यस्य सूत्रस्य ण्यन्तेऽप्रवृत्तिर्लभ्यते, तत्राह-*विहितविशेषणञ्चेति । *व्याख्यानादिति । "अट्

वा निंस ( पा० सू० ८-४-३३ ) । *कृतीत्यनुवृत्तं निन्दामितिषष्ठीनिर्देशसामर्थ्याण्णत्वनिमित्तमित्याह—कृतिपर इति ।

पूञ एवेति । "भादिषु पूञो ग्रहणं कर्तव्यम्" इति वार्तिकादिति भावः । ण्यन्तभादीनामिति । *'प्रभायमानम्' इत्यादौ णत्वनिषेधाय भादीनामिति विहितविशेषणम् । एवञ्च ण्यन्तेऽप्राप्तिरिति भावः । प्रकरणोपरीति । *अत्र च 'णत्वं पर्याख्यानम्' इति ख्याञादेशसूत्रस्थं भाष्यं मानम् ।

कृत्यल्युटो ( पा० सू० ३-४-११३ ) । 'पादाभ्यां ह्रियते= पादहारकः' इत्यादिसिद्ध्यर्थं *कृतो बहुलमित्येवं भाष्ये उक्तम् ।

शक्यमकर्तुमिति । ऋवर्णान्तादिव हलन्तादपि ण्यता बाधादिति भावः ।*अज्ग्रहणे कृतेऽपि सन्निपातपरिभाषाया अनित्यत्वाद् 'दित्स्यम्' इत्यादावतोलोपो भवत्येव । सुपठत्वादिति । *वासरूपन्यायेन यत इव तव्यादीनां न बाध इति भावः ।

---

कुप्वाङ्" ( पा० सू० ८-४-२ ) इति सूत्र एव नुम्ग्रहणस्यानुस्वारसामान्यार्थकत्वेन तस्यैवेहानुवृत्तिमूलकव्याख्यानादित्यर्थः ।

वा निंसनिक्षनिन्दाम् ( पा० सू० ८-४-३३ ) । कृत्यच इत्यतः कृतीत्यनुवर्त्तते । तच्च तत्र यद्यपि नकारविशेषणन्तथापीह निमित्तमित्याह—*कृतीति ।

"ण्यन्तभादीनामुपसङ्ख्यानम्"(का०वा०) इति वार्त्तिकारम्भस्य बीजमाह—*प्रभायमानमित्यादाविति । भादीप्तौ । भावे लट् । शानच् । यक् । अत्र यका व्यवधानाद्भाधातोः परत्वाभावात्कृतो निषेधो न स्यादतो वेषामिति पञ्चम्यर्थे षष्ठी विहितविशेषणञ्चावश्यकम् । एवञ्च ण्यन्तस्य शब्दान्तरत्वादप्राप्ते निषेधे निषेधविध्यर्थं वार्तिकमिति भावः । *अत्र=णत्वप्रकरणोपरिपाठे ।

*कृतो बहुलमिति । बहुलग्रहणेनान्येषां कृतां ग्रहणापेक्षया; लाघवात्कृतो बहुलमित्येव युक्तमिति भावः ।

तव्यदादिषु यतः पाठेऽयमप्युत्सर्गः । अस्य विशेषविहितत्वात् ण्यद् बाधक इति भावः । नन्वज्ग्रहणसत्वे 'दित्स्यम्' धित्स्यम्" इत्यादौ यति सन्निपातपरिभाषयाऽतो लोपो न प्राप्नोति तदकरणे तु प्राप्नोतीति फलभेद इत्यत आह—*अज्ग्रहण इति । ननु यतो ण्यता बाधोऽधुनाऽवश्यं वाच्य इति यतस्तव्यदादिषु पाठे यत्साहचर्यात्तव्यदादयोऽपि ण्यता बाध्येरन्नित्यत आह—*वासरूपेति । न च ण्यत्तव्यदादिषु पठनीयः । ऋग्रहणञ्चासुयुवपीत्यत्र कार्यम् , हल्ग्रहणञ्च कार्यमित्येव कुतो नोक्तमिति वाच्यम् । ऋशब्दस्य तत्र पाठे धातुसाहचर्येण ऋधातोर्ग्रहणमिति कल्पनस्यापि

ईद्यति ( पा० सू० ६-४-६५ ) । "आतो लोपः" ( पा०सू० ६-४-६४ ) इत्यत आत इति वर्त्तते । स्वरार्थ इति । "यतोऽनावः" ( पा०सू० ६-१-२१३ ) इत्याद्युदात्तार्थ इत्यर्थः ।

पोर (पा० सू०३-१-९८) । तपरकरणाद् 'आप्यम्' *इत्यत्र न ।

आङोयि ( पा० सू० ७-१-६५ ) । "इदितः"( पा० सू० ७-१-५८ ) इत्यतो नुमिति "लभेश्च" ( पा० सू० ७-१-६४ ) इत्यतो लभेरिति च वर्त्तते । विवक्षित इति । एतदत्रैव *भाष्ये स्पष्टम् ।

---

सम्भवात् । नन्वजन्तभूतपूर्वादपि यद्यथा स्यादित्येवमर्थमज्ग्रहणमस्तु । अत एव 'दित्स्यम्' 'धित्स्यम्' इत्यादावार्द्धधातुकसामान्ये बुद्धिस्थेऽतो लोपे कृतेऽपि यद् भवति तेन "यतोऽनावः" ( पा० सू० ६-१-२१३ ) इत्येष स्वरो भवति । "अतो लोपः" ( पा० सू० ६-४-४८ ) इतिसूत्रसम्बद्धार्द्धधातुकपदे विषयसप्तमीस्वीकारेऽपि यस्य बुद्धिर्यस्य प्रवृत्तौ नियामिका तस्य तन्निमित्तकत्वव्यवहारः । अत एव 'गणयति' इत्यत्राल्लोपस्य स्थानिवद्भावाद्वृद्ध्यभाव इति चेन्न । भाष्यकारस्य तथैवेष्टत्वेनेष्टापत्तेः । अत एव भाष्यकृतोक्तरीत्याऽज्ग्रहणवैयर्थ्यमुपपाद्य 'इदन्तर्हि प्रयोजनमजन्तभूतपूर्वादपि यथा स्यात्' इत्युक्तम् । मूलन्तु तस्यार्द्धधातुकपदस्य परसप्तमीत्वाभिप्रायेण । प्रकृताज्ग्रहणमेवार्द्धधातुकपदस्य विषयत्वार्थकसप्तम्यन्तत्वाभिप्रायकमिति तु भाष्यकृतामाशयः । यत्तु दरिद्रातेरार्द्धधातुकविवक्षायामाकारलोपे भूतपूर्वाजन्तत्वेन यत्सिद्धिरज्ग्रहणफलमिति । तन्न । 'दरिद्र्य' इत्यस्य त्र्यच्कत्वेन ण्यद्यतोर्विशेषाभावात् ।

*इत्यत्र नेति । यत्प्रत्ययो न । किन्तु ण्यत् । एवञ्च "यतोऽनावः" ( पा० सू० ६-१-२१३ ) इत्यस्य तदनुबन्धकपरिभाषयाऽप्रवृत्तौ "तित्स्वरितम्" ( पा० सू० ६-१-१८५ ) इति प्रत्ययस्य स्वरितत्वम्भवति ।

हनो वा यद्वधश्च वक्तव्यः ( का० वा० ) । हन्धातोः सकर्मकत्वात्कर्मणि यत् । स च "अर्हे कृत्यतृचश्च" ( पा० सू० ३-३-१६९ ) इति योग्यतायाम् । यत्र तु न योग्यता किन्तु बलावष्टम्भेन हन्यते स घात्य एव । तद्धितो वेति भाष्यात् । तत्र हि—तद्धितो वा पुनरेष भविष्यति वधमर्हतीति वध्यः । "दण्डादिभ्यः" ( पा० सू० ५-१-६६ ) इति यत् । यदि तद्धितोऽयन्तदा समासविधायकलक्षणाभावादसिवध्यो मुसलवध्य इति न प्राप्नोति । यदि षष्ठीसमासस्तदाऽन्तोदात्तत्वापत्तिः । यदि हन्धातोर्यत्तदा यदन्तस्याद्युदात्ततया तेन सह "साधनंकृता" इति समासे "गतिकारकोपपदात्" ( पा० सू० ६-२-१३९ ) इति कृदुत्तरपदप्रकृतिस्वरे आद्युदात्तत्वमेव भविष्यति" इत्येवमर्थमिदं वार्त्तिकम्भाष्यकृता स्थापितम् । *भाष्ये स्पष्टमिति । एवञ्च कृदुत्तरपदप्रकृतिस्वरेणालम्भ्यशब्दे स्वरितस्यैवावस्थानम्भवति ।

गदमद ( पा० सू० ३-१-१०० ) । अनुपसर्ग इत्यर्थाभावे नञ्तत्पुरुषः । प्रत्यासत्त्या गदादिसंबन्ध्युपसर्गाभावे सतीत्यर्थ*इत्येके । *नियमार्थमिति । "पोरदुपधात्" ( पा० सू० ३-१-९८ ) इत्येव सिद्धेरिति भावः ।

गर्हायामेवेति । "वदः सुपि" ( पा० सू० ३-१-१०६ ) इत्यत्र भाव इति नापकृष्यते इति सिद्धान्त इति भावः । अनुद्यं गुरुनाऽऽत्ति । नञोऽन्यत्र 'मा वाद्यम्' । पक्षान्तरे 'मोद्यम्' इति ।

अजर्यम् ( पा० सू० ३-१-१०५ ) । *सङ्गच्छति=प्राप्नोति पुरुषमिति सङ्गतं=मैत्री, कर्तरिक्तः । अजर्यमिति च *निपातनात्कर्तरीति बोद्धव्यम् ।

वदः सुपि ( पा० सू० ३-१-१०६ ) अत्र सुब्ग्रहणे*उपसर्गग्रहणं न । *"सत्सू" ( पा० सू०३-२-६१ ) इति सूत्रे उपसर्गेऽपीत्यु-

---

उपात्प्रशंसायाम् ( पा० सू० ७-१-६६ ) । प्रशंसायाङ्गम्यमानायाम् । प्रत्ययस्तु प्राप्त्यर्थकात्कर्मण्येव । तेन यस्य यस्माद्वा लाभे सति प्रशंसा तस्य लाभहेतुका भवति तदिहोदाहरणम् । अत्रापि यीत्यनुवर्त्तमाने विषयसप्तम्येव । तेनान्तस्वरितकत्वसिद्धिः ।

*इत्येके इति । यदि पुनरर्थाभावशब्दस्य नञ्घटिततया सूत्रगृहीतान्वयेन समासाभाव इति प्रागुक्ता रीतिस्तदा नाव्ययीभावस्य प्रसक्तिरित्यस्वरसः । समासस्तु नञ्तत्पुरुष एव । पञ्चम्यर्थे सप्तमी । *नियमार्थमितीति । यमेर्यदि यत्तदोपसर्गाभाव एवेति नियमार्थमित्यर्थः । मूले-नियमे साधुरिति वेति । यदि पूर्वोक्तनियमस्याबाध एवेति स्वीक्रियते तदा नियमशब्दात् "तत्र साधुः" ( पा० सू० ४-४-९८ ) इति यत् । नचैवं सति त्वयेति तृतीया नियमपदार्थभूतक्रियान्वयविवक्षया वाच्या सा न सम्भवति "कर्तृकर्मणोः" ( पा० सू० २-३-६५ ) इति षष्ठ्या बाधात् । कृयति तु "कृत्यानां कर्तरि वा" ( पा० सू० २-३-७१ ) इति विकल्पात्सा भविष्यतीति वाच्यम् । कर्तुः करणत्वविवक्षया तस्याः सिद्धेः ।

अजर्यं सङ्गतम् ( पा० सू० ३-१-१०५ ) । अत्र सङ्गतशब्दोऽर्थविशेषे रूढ इत्याशयेनाह-*सङ्गच्छतीति । *निपातनादिति । ण्यतो बाधाभावाय निपातनस्यावश्यमाश्रयणीयतया तत एवायङ्कर्तरीत्यर्थकल्पनमपि भविष्यतीति बहुलग्रहणेनैषा कल्पना न कार्य्येति भावः ।

वदः सुपि क्यप्च । ( पा० सू० ३-१-१०६ ) । *उपसर्गग्रहणञ्चेति । तथा च सुब्ग्रहणमुपसर्गभिन्नसुबन्तलाक्षणिकमिति भावः । लक्षणायाम्मानमाह—*सत्सु इतीति । तत्र हि ज्ञापकमनुपसर्गग्रहणमन्यत्र सुब्ग्रहणे उपस

क्तेः। तत्र हि सुपीत्येव सम्बध्यते। इत्यपकृष्यत इति। भुवो*ऽकर्म-कत्वेनो*त्तरत्र*व्यर्थत्वात्। *यद्यपि प्राप्तावन्तर्भावितण्यर्थत्वे वा सकर्मक-स्तथापि अप्रसिद्धत्वान्न* तद्ग्रहणमिति भावः। *इदं चिन्त्यं "भुवो भावे" (पा० सू० ३-१-१०७) इति सूत्रे "उत्तरार्थं भावग्रहणम्" इति भाष्योक्तेः। *सोपपदस्य कालादिकर्मयोग एव नास्ति अनभिधाना-दिति तदाशयः। एक इति। सकर्मकत्वादिति भावः। अयमेव युक्तः पक्षः। भाष्यवृत्त्यादिसम्मतत्वात्।

*भावे 'ब्रह्मोद्यम्' इत्यादि तु छान्दसं बाहुलकाद्वेति बोद्ध्यम्। *अत एवानुपसर्ग इत्यस्य प्रवाद्यमिति *प्रत्युदाहृतम्। *ण्यत्त्वसमात्कर्म-ण्येव। अन्यथा 'प्रवादः' इति भावघञन्तम्प्रत्युदाहर्तव्यं स्यात्।

---

र्गग्रहणञ्चेत्यर्थस्येति भावः। भाव इत्यस्यापकर्षे निमित्तमाह-*अकर्मकत्व इति। *उत्तरत्र="भुवो भावे" (पा० सू० ३-१-१०७) इति सूत्रे। *व्यर्थत्वादिति। तथा च पूर्वसूत्र एव तस्य सम्बन्धेन तत्सफलमिति शेषः। उत्तरसूत्रेऽपि तस्य साफल्यमाशङ्क्य निराचष्टे-*यद्यपीति। *न तद्ग्रहणमिति। 'भू' प्राप्तौ इत्यस्यान्तर्भावितण्यर्थस्यास्य च न ग्रहणमित्यर्थः। एवञ्च तत्रत्यम्भावग्रहण-मेतत्सूत्रार्थमेवेति भावः। *इदञ्चिन्त्यमिति। "वदस्सुपि" (पा० सू० ३-१-१०६) इति सूत्रार्थमेव तत्सूत्रस्थभावइतीति चिन्त्यमित्यर्थः। ननूत्तरार्थमिति कुतस्तस्मिन्नपि सूत्रे अनुपूर्वकभूधातोस्सकर्म्मकान्मा भूदित्यर्थन्तस्यावश्यक-त्वादित्यत आह-*सोपपदस्येति। ब्रह्माद्युपपदसहितस्येत्यर्थः। सोपसर्गस्य व्यावृत्तिस्तु "गदमद" (पा० सू० ३-१-१००) इति सूत्रादनुपसर्गग्रहणानु-वृत्त्या भविष्यति। यद्यपि भाष्ये "भुवो भावे" (पा० सू० ३-१-१०७) इति सूत्रेप्यनुपसर्गग्रहणासम्बन्धो दर्शितस्तथापि सोपपदस्येति सोपसर्ग-स्याप्युपलक्षणमित्येतत्तात्पर्य्यकमत एव "सत्सू" (पा० सू० ३-२-६१) इति सूत्रस्थमुपसर्गेऽपीतिपदन्तस्य सुब्ग्रहणे उपसर्गग्रहणञ्चेत्येतज्ज्ञापकत्वप-रतया वर्णनपरं "सत्सू" (पा० सू० ३-२-६१) इतिसूत्रस्थपरग्रन्थविरोधो न। *सकर्म्मकत्वादितीति। वदेस्सकर्म्मकत्वात्तयोरेवेत्यस्य प्रवृत्तिर्न्याय्यैवेति भाव इत्यस्यापकर्षणे न प्रमाणमिति भावः।

नन्वेवं 'ब्रह्मोद्यम्' इत्यस्य का गतिरत आह-*भाव इति। *अत एव= भाव इत्यस्यापकर्षणाभावादेव। *प्रत्युदाहृतमिति। वृत्त्यादाविति शेषः। भाष्ये तु 'सुवाद्यम्' 'अपवाद्यम्' इति प्रत्युदाहृतमिति बोध्यम्। पूर्वोक्तमेवार्थ-न्द्रढयति-*ण्यत्त्वसमादिति।

हनस्त च ( पा० सू० ३-१-१०८ ) । तकारस्यादेशत्वं *व्याख्यानात् । सुपीति किम् ? *घातः । ण्यचु न । सकर्मकत्वेन*तदप्राप्तेः । भावे-किम् ?*श्वघात्यो वृषलः । *अनुपसर्गे किम् ?,प्रघातः । निरुपपदं 'हत्या' इति त्व*साधु ।

शिष्य इति । *"शास इदङ्" ( पा० सू० ६-४-३४ ) "सर्तिशास्ति" ( पा० सू० ३-१-५६ ) इत्यादौ प्रसिद्धत्वाच्छास्तेरेव ग्रहणं न त्वाशास्तेरिति भावः । न वृङ इति । 'वृञो ग्रहणं कर्तव्यम्' इति वार्तिकमूलाद्व्याख्यानादिति भावः । वार्या इति । *अत्र निरोधस्य विवक्षणान्न "अवद्य" ( पा० सू० ३-१-१०१ ) इत्यस्य प्राप्तिरिति भावः । पुनरिति । *तकारस्यादेशत्वेन चकारं विनाऽपि पूर्वसूत्रे क्यप्सम्बन्धसम्भवेन तत्र तस्य चानुकृष्टत्वादिति भावः । *स्पष्टश्चेदं भाष्ये ।

---

हनस्त च ( पा० सू० ३-१-१०८ ) । नन्वस्य सूत्रस्य हन्तेस्तकारप्रत्ययः क्यप् चेत्येवार्थः किन्न स्यादत आह-*व्याख्यानादिति । 'श्वहत्या वर्तते' इति भाष्यीयोदाहरणदर्शनमूलकव्याख्यानादित्यर्थः । *घात इति । भावे घञ् । *तदप्राप्तेरिति । तयोरेवेति नियमादिति भावः । *श्वघात्य इति । कर्मणि ण्यत् । शुना घात्य इत्यर्थः । *अनुपसर्गे किमिति । "वदस्सुपि" (पा०सू०३-१-१०६) इतिसूत्रादुपसर्गभिन्नसुपिलाक्षणिकसुप्पदानुवृत्तिः किमर्थेत्यर्थः । *असाध्विति । "विनापि प्रत्ययम्" (का०वा०) इत्यस्याश्रयणे प्रमाणसद्भावे तु साधुरेव । केचित्तु 'हनस्तः क्यप्यचिण्णलोः' इत्यनेन सूत्रेण क्यपि तकारादेशो विधेयः प्रकृते तु 'हन्भुवोर्भावे' इति सूत्रङ्कार्यमेतावतैव सिद्धौ "हनस्त च" ( पा० सू० ३-१-१०८ ) इति पृथक्सूत्रकरणमस्य क्वचिदनुपपदेऽपि प्रवृत्त्यर्थम् । तेन निरुपपदेऽपि 'हत्या' इति साध्वित्याहुः । तन्न । भाष्यानुक्तत्वात् । शब्दशक्तिस्वभावादेतद्विहितक्यबन्तस्य स्त्रीत्वम् ।

एतिस्तुशा ( पा० सू०३-१-१०९ ) । ननु यस्माच्छासेरङ् तस्य शासेरुपधाया इत्वमिति कथं शास्तेरित्वमत आह-*शास इदङिति । *अत्र निरोधस्येति । अत एव भाष्ये "क्यब्विधौ वृञो ग्रहणङ्कर्त्तव्यम् । इह मा भूत् । वार्या ऋत्विजः" इत्युक्तम् । निरोधश्च देशविशेषे स्थापननियमाचरणादिरूपः । ननु पूर्वसूत्रे चकारवशात्क्यपः सम्बन्धादस्मिन्सूत्रे तदसम्बन्धात्क्यब्ग्रहणमस्त्वित्यत आह-*तकारस्येति । *स्पष्टश्चेदमिति । पुनः क्यबुक्तेर्ण्यद्बाधकत्वं स्पष्टम् । तत्र हि "क्यबिति वर्तमाने पुनः क्यब्ग्रहणङ्किमर्थम् । क्यबेव यथा स्याद्यदन्यत्प्राप्नोति तन्मा भूत् । किञ्चान्यत्प्राप्नोति । ण्यत् ओरावश्यके" (पा० सू० ३-१-१२५) इत्युक्तम् । ननु हलन्तत्वात् ण्यतापि रूपसिद्धिर्भविष्यतीत्यत आ-

आङ्पूर्वादिति।*ण्यति तु कत्वनलोपाभावतित्स्वराणामापत्तिरिति भावः। ह्रस्वः सुपठ इति। *"ये विभाषा" (पा० सू० ६-४-४३) इत्यत्र ये इत्यस्य *विषयसप्तमीत्वेऽपि जनादिसाहचर्येण यादिप्रत्ययोत्पत्तिपूर्वकाले नान्तस्यैवात्वविधानेना*त्र तदप्राप्त्या नस्येत्वे आद्गुणेन रूपसिद्धेरिति भावः। *एतत्क्लेशपरिहारायैव दीर्घोच्चारणमिति तत्त्वम्।

---

इ-*ण्यति त्विति।

ई च खनः (पा० सू० ३-१-१११)। अत्र खनधातोरीकार आदेशो विधीयते न प्रत्यय इति विधेयस्य प्रत्ययान्तरस्याभावात्क्यपोऽनुवृत्तिः सिद्धैव चकारस्तु कार्यद्वयसमावेशार्थ एवेति क्यपश्चानुकृष्टत्वाभावादुत्तरत्र सम्बन्धो भवत्येवेति बोध्यम्।

ननु "ये विभाषा" (पा० सू० ६-४-४३) इति सूत्रेणेकारादेशे कृते ऽप्यात्वम्प्राप्नोतीति तद्बाधनायेकारान्तरस्य प्रश्लेषसूचको दीर्घनिर्देश इति ह्रस्वः सुपठ इत्यसङ्गतमत आह-*ये विभाषेत्यत्रेति। *विषयसप्तमीत्वेऽपीति। कीर्यते स्वयमेवेत्यत्र "अचः कर्तृयकि" (पा० सू०६-१-१९५) इत्याद्युदात्तत्वसिद्धये "तास्यनुदात्तेत्" (पा० सू० ६-१-१८६) इतिसूत्रादुपदेशपदानुवृत्त्योपदेशेऽजन्तानामित्यर्थस्यावश्यकत्वे यक्पदेन सम्बन्धाद्यगुपदेशेऽजन्तानामिति वाच्यमेवञ्च 'जायते स्वयमेव'इत्यत्र स्वरो न स्यादिति "ये विभाषा" (पा० सू० ६-४-४३) इत्यत्र विषयसप्तमीत्वमावश्यकमिति भावः। *अत्र तदप्राप्त्येति। "ये विभाषा" (पा०सू०६-४-४३) इत्यस्य यादिप्रत्ययविवक्षायाञ्चेत्प्रवृत्तिस्तदा प्रत्ययोत्पत्तेः प्रागेवेत्वं ततो यादिः प्रत्यय इति यादिप्रत्ययप्रकृतिपरामर्शकाल एव सौत्रक्रमपर्य्यालोचनेन पूर्वकाल इति तस्मिन् कालेऽयमीकारान्त इति भावः। ह्रस्वपाठेऽप्येवमेवात्वाप्राप्तिर्बोध्या। *एतत्क्लेशपरिहारायैवेति। यदि यादिप्रत्ययविवक्षायामात्वन्तदाऽऽत्वमुक्तरीत्या नान्तरङ्गमिति "ई च खनः" (पा० सू० ३-१-१११) इतिसूत्रप्रवृत्तेः प्राक् तस्याप्रवृत्त्या रूपासिद्धिः स्फुटैवेति दीर्घपाठेनेकारान्तरस्य प्रश्लेषसामर्थ्यान्न पूर्वमीत्वमित्यन्तरङ्गस्यात्वस्याप्राप्तिः। यदि तु ई चेति सौत्रक्रमानुरोधेनादावीत्वन्ततः क्यबितिक्रमकल्पनया यादिप्रत्ययोत्पत्तिकालपूर्वस्मिन्कालेऽन्तरङ्गस्यात्वस्याप्राप्तिरिति कल्पना तदा क्लेश इति भावः।

भृञोऽसंज्ञायाम् (पा० सू० ३-१-११२)। 'भार्या वधूः'इत्यत्र "संज्ञायां समज" (पा० सू० ३-३-९९) इति क्यपः प्राप्तिमाशङ्क्य बिभर्तेः क्र्यादेर्वा ण्यति 'भार्या वधूः'इत्यस्य सिद्धिः "संज्ञायां समज" (पा० सू० ३-३-९९) इति क्यप् तु भरतेरेवेत्युक्तम्मूले। अत्रेदम्बोध्यम्—यो बिभर्त्तिः='डुभृञ्' धारणपोषणयोः इति तस्य तदनुबन्धकपरिभाषया क्याब्विधौ न ग्रहणम्। यस्तु 'भृ' भर्त्सने इति क्र्यादिस्तस्य ञकारानुबन्धकत्वाभावान्न ग्रहणमिह स्यधिका-

*क्यप्स्विति । *अयम् । *स्त्र्यधिकारस्थश्च *युक्तेः साम्यात् । नन्वेवं भार्या वधूरितिवत् 'भार्याः क्षत्रियाः' इत्यस्यापि सिद्धावसञ्ज्ञायामिति व्यर्थमिति चेन्न, भरतेर्भार्यायाङ्क्यब्वारणाय तस्य सत्त्वात् ।

मृजेर्विभाषा ( पा० सू० ३-१-११३ ) ऋदुपधत्वात्प्राप्तविभाषेयम् ।

चजोः कु ( पा० सू० ७-३-५२ ) । यथासंख्यं न*रागादिसादिनिर्देशात् ।

न्यङ्क्वादीनाञ्च ( पा० सू० ७-३-५३ ) । *एषु उणादिपाठो व्युत्पत्तिवादिव्याकरणान्तराभिप्रायेणेत्याहुः ।

राजसूयो=यज्ञविशेषः । निपातनादिति । पूर्वोत्तरान्वयि । *क्यपो रुडिति । निपातनादिति शेषः । एवमग्रेऽपि । रुच्यो *निपातनात्कर्तरि । एवमग्रे ऽपि । धनं धातुपात्रादिरूपं न तु वस्त्रादि *तत्त्वेनाप्रसिद्धेः ।

*पूङिति । न्यादिसाहचर्येण शब्विकरणस्यैव ग्रहणमिति भावः ।

---

रस्थसूत्रे च अकारानुबन्धकस्य ग्रहणादिति । अत एव सामान्येनोक्तम्-*क्यप्स्विति । *अयमिति । "भृञोऽसंज्ञायाम्" ( पा० सू० ३-१-११२ ) इति विहितः । *स्त्र्यधिकारस्थः="संज्ञायां समज" ( पा० सू० ३-३-९९ ) इति सूत्रविहितः । *युक्तेः='भृञ्' इति अकारमात्रानुबन्धकोच्चारणरूपयुक्तेः । इहत्यस्भरतेरेव भवनकथनन्तु स्वरूपनिर्णयाय, न तु 'भार्या वधूः' इत्यस्य समाधानाय । संज्ञात्वादिहत्यस्य तत्राप्राप्तेः । नन्वेवं विभर्तेः ऋयादेर्वा क्यपोऽप्राप्तौ भरतेर्भार्यायां क्यब्वारणायेति । भार्यायां विवक्षितायां भरतेः क्यप्वारणायेत्यन्वयः । भार्यायामित्यस्य भर्त्तव्यायामिति नार्थः किन्तु स्त्रीविशेषे योगरूढो यो भार्याशब्दस्तत्रेत्यर्थः । न चेह "संज्ञायां समज" ( पा० सू० ३-३-९९ ) इत्यस्य प्राप्तिस्तस्य भावे प्रवृत्तेः । तदुक्तम्भाष्ये—"भाव इति तत्र वर्त्तते" । तत्र भृञ्विषये भाव एवेष्यत इत्यर्थः । मूले भार्यशब्दो बहुवचनान्तः ।

चजोः कुघिण्यतोः ( पा० सू० ७-३-५२ ) । *रागादित्यादीति । "तेन रक्तं रागात्" ( पा० सू० ४-२-१ )इति निर्देशादित्यर्थः । आदिना 'त्यागरागहास'इत्यस्य सङ्ग्रहः ।

*एषु=न्यङ्क्वादिषु ।

*क्यपो रुडितीति । यदा 'षू' प्रेरणे इति धातोः क्यप् तदेत्यर्थः । *निपातनात्कर्त्तरीति । तयोरेवेतिनियमात्कर्त्तर्यप्राप्ते निपातनमावश्यकम् । *तत्वेन=धनत्वेन ।

विपूयविनीय (पा० सू० ३-१-११७) । *पूङितीति । *पूञिति क्वचित्

कल्कः=पिष्टौषधिविशेषः । पापमिति । *तैलादावौषधे क्षिप्ते पाकानन्तरं यदजीर्णं तच्चेत्याहुः । जित्य इति । 'जि' अभिभवे । काष्ठमिति । ह-लिशब्दवाच्यमित्यर्थः ।

पद्यास्वै ( पा० सू० ३-१-११९ ) । *एषु चतुर्षु ग्रहः क्यबि-त्यर्थः । पदविषयेऽसन्निकर्षे ग्रहेरर्थः । यस्य पदस्यावग्रहप्रगृह्यसञ्ज्ञा च क्रियते तदाभ्यामुच्यते । 'गृह्यका' इत्यनुकम्पायां कन् । ग्रामगृह्येति । बहिर्भावोऽत्र ग्रहेरर्थः ।

युग्य इति । युज्यते शकटादिनेत्यर्थः । युग्यमिति सूत्रे सामान्ये न-पुंसकं *"पत्रपात्रवहित्रछत्राःपुंसि च"(लि.सू.)इतिलिङ्गानुशासनात् पत्रशब्दः पुंस्यपि । "युग्यं पत्रञ्च वाहनम्" ( अ० को० ) इति कोशे उपलक्षणम् ।

'युग्ययुग्या इति क्रुद्धाः सारथींश्च व्यनोदयन्' ।

इत्युद्योगपर्वणि प्रयोगः । *एतेन युग्य इत्यसङ्गतमित्यपास्तम् ।

अमाव ( पा० सू० ३-१-१२२ ) । अत्रान्यतरस्यामिति नि-पात्यमानह्रस्वसम्बद्धं, ण्यत्तु नित्य एव । सूत्रे तकारोच्चारणन्तु प्रकरण-प्राप्तक्यपि सम्प्रसारणाभावनिपातनशङ्का*वारणायेति बोद्ध्यम् । यथोत्त-रमिति *वार्तिकस्य सूत्रदूषणाय प्रवृत्तत्वाद्भाष्यकृता च वार्त्तिकमते* 'शोकः' इत्यस्यासिद्धिमाशङ्क्य सूत्रमतेऽपि ण्यति कुत्ववारणाय नियमार्थ-मावश्यकेन 'शुचेर्घञि' ( का० वा० ) इति वचनेन समाधानाद्वार्तिकमत-स्यैवाभ्यनुज्ञानाच्चेति भावः ।

भुजन्युब्जौ ( पा० सू० ७-३-६१ ) । भुजेरगुणत्वं निपात-

---

पाठः । न्यूनताभङ्गायाह—*तैलादाविति ।

*एषु चतुर्ष्विति । गम्यमानेष्विति शेषः ।

ननु पत्रशब्दस्य नपुंसकत्वविशिष्टार्थाभिधायकत्वेन युग्यशब्दस्य विशेष्यसमानलिङ्गकत्वं युक्तमेवेति सामान्ये नपुंसकत्वमित्यभिधानमनुचितमत आह-*पत्रपात्रेति । *एतेन=उक्तरीत्या पुंस्त्वस्यापि सम्भवेन ।

अमावस्यदन्यतर ( पा० सू० ३-१-१२२ ) । *वारणायेति । तकारो-च्चारणेन ण्यतो निश्चयादिति शेषः । यथोत्तरमित्यनेनं वार्त्तिककारोक्तेः सप्र-माणत्वं यदुक्तन्तद् युक्तमेवेत्याह-*वार्त्तिकस्येति । *शोक इत्यस्यासिद्धिमिति । निष्ठायां सेट्त्वाद् घञि कुत्वस्याप्राप्त्याऽसिद्धिरित्यर्थः । एवञ्च शोकशब्दस्य वार्त्तिकेन निष्ठायामनिट इति पूरणेन सिद्धिः सूचिता ।

नात् । *बाहौ भुजे इति अर्शआद्यजन्तम् । न्युब्जन्तीति । चेष्टारहिता अवाङ्मुखाः शेरत इत्यर्थः । यद्यपि न्युब्जयतीति अचिरोपे न्युब्जः सिद्धस्तथापि न्युद्ग*इत्येतद्व्यावृत्तये न्युब्जग्रहणमिति बोद्धव्यम् ।

अवश्यपाच्यमिति । आवश्यकाधमर्ण्ययोरित्यनुवर्त्तमाने "कृत्याश्च" ( पा० सू० ३-३-१७१ ) इति ण्यत् ।

प्रवाच्यमिति । इदं वृत्त्यनुरोधेन । भाष्ये तु प्रवाच्यः शब्दसञ्ज्ञायामेवेति "वचोऽशब्द"[पा० सू० ७-३-६७]इत्येव सिद्धिरित्य*त्र प्रवचिग्रहणं प्रत्याख्यातम् । चिन्त्यमिति । पूजेर्नित्यण्यन्तत्वेन तद्ग्रहे फलाभाव इति भावः । तदाह—भाष्येति ।

भोज्यं भ ( पा० सू० ७-३-६९ ) । भक्ष्यमत्र सर्वं न तु स्वरविशदमेव*व्याख्यानात् ।

---

*बाहाविति । करबोधकाद् भुजशब्दादजित्यर्थः । *इत्येतद्व्यावृत्तय इति । एतेन निपातनेन "स्तोः श्चुना" ( पा० सू० ८-४-४० ) इति सूत्रानन्तरं 'न्युद्जेर्बः' इति वचनङ्कार्यमित्यनुमीयते । तत्र "स्तोः श्चुना" इति सम्बध्यते । उद्जेः स्तोः श्चुना योगे बो भवति । एतस्य वचनस्य "सन्यङोः" ( पा० सू० ६-१-९ ) इत्येतद्दृष्ट्याऽसिद्धत्वात् 'उब्जिजिषति' इत्यत्र जिशब्दस्यैव द्वित्वम् । 'समुद्गः' इत्यादौ पदस्य विभज्यान्वाख्यानमिति पक्षाश्रयेण बकारादेशविधायकस्यानुमितवचनस्यासिद्धत्वात्कुत्वमादौ भवति । एतद्वचनस्योक्तविषयेऽर्थविशेषे न्युब्ज इत्यस्य प्रवृत्तिर्न त्वन्यत्रेति बोधनाय च निपातनमन्यथा न्युब्जेरचापि सिद्धे निपातनं व्यर्थमिति शङ्का स्यात् ।

*अत्र="यजयाच" ( पा० सू० ३-३-९० ) इति सूत्रे ।

*व्याख्यानादिति । भक्ष्याभक्ष्यप्रकरणेऽतादृशस्यापि स्मृतौ निदर्शनमूलकव्याख्यानादित्यर्थः ।

ओरावश्यके( पा० सू० ३-१-१२५ ) । अवश्यमित्यव्ययान्मनोज्ञादित्वाद्भावे वुञि परे "अव्ययानाम्" ( का० वा० ) इति टिलोपेऽस्य साधुत्वम् । द्योत्य इति प्रकरणादिहावश्यकत्वस्य प्रतीतिः । अवश्यकर्त्तव्य इत्यर्थेऽवश्यंशब्दो वर्त्तते वाक्यैकदेशन्यायेन । न च लाव्यमित्यनेनैवावश्यकत्वस्य प्रकरणादिना प्रतीतिसम्भवादवश्यंशब्दस्य प्रयोगोऽनुचित इति वाच्यम् । गम्यमानार्थस्यापि स्पष्टप्रतिपत्तये प्रयोगस्य बहुशो दर्शनात् । 'व्यतिलुनीते' इत्यादौ यथा । अवश्यलाव्यमित्यादौ मयूरव्यंसकादित्वादवश्यंशब्दार्थस्यैकदेशान्वयेऽपि समासः । कृदुत्तरपदप्रकृतिस्वरोऽप्येवमेव निपातनात् । लुम्पेदवश्यम इत्यन्तलोपः ।

आसुयु ( पा० सू० ३-१-१२६ ) । प्रकृतसूत्रे सुग्रहणेन सुञ एव ग्रह-

षुञिणि। *सुनोतेरित्यादौ व्यवहृतत्वेन प्रसिद्धत्वादिति भावः। *निरनुबन्धकपरिभाषा युगपद् द्वयोरुपस्थितावेवेति तात्पर्यम्। आचाम्यमिति पाठः। चाम्यमि*ति पाठे वृद्धिर्दुर्लभा।

विशेष इति। *यो गार्हपत्यादानीयते तत्रेत्यर्थः।

प्रणाय्यो (पा० सू० ३-१-१२८)। असम्मताविति बहुव्रीहिः।

आनाय्युगिति। *"मीनाति" (पा० सू० ६-१-५०) इत्येत्वे कृते इति भावः। माङो वा। हविर्विशेष इति। ऐन्द्रं=*पयो दधि वेत्यर्थः।

---

णमित्यत्र प्रमाणमाह-*सुनोतेरित्यादाविति। ननु निरनुबन्धकस्यैव निरनुबन्धकपरिभाषया ग्रहणं युक्तमत आह-*निरनुबन्धकेति। *इति पाठ इति। आङ् सत्त्वे"नोदात्तोपदेशस्य"(पा० सू० ७-३-३४) इति निषेधविधायकसूत्रस्य "अनाचमेः" इत्युक्तत्वादप्रवृत्तिर्भवतीति भावः।

दक्षिणाग्निविशेष एवेत्यत्र विशेषपदोपादानादाह-*यो गार्हेति। द्वौ दक्षिणाग्नी तयोर्मध्ये यो गार्हपत्यादानीयते तस्मिन्नेव निपातनन्तथैव शिष्टाचारानुसारिव्यवहारात्। मूले-वैश्यकुलादेरिति। वित्तवद्वैश्यकुलादेरित्यर्थः। आदिना भ्राष्ट्रपरिग्रहः।

"प्रणाय्योऽसम्मतौ" (पा० सू० ३-१-१२८) इति बहुव्रीहिरित्यनेन यस्मिन्नर्थे निपातनमत्र चौरादौ क्रियते तस्य बोध्यत्वं सूचितम्। सम्मतिरित्यत्र सम्पूर्वकान्मनधातोः प्रीतिभवनानुकूलव्यापारार्थकात्कर्मणि बाहुलकात् क्तिन्। भावे क्तिन्प्रत्ययेनैवेष्टसिद्धौ तावत्पर्यन्तानुसरणं व्यर्थमित्याशयेन मूले भोगेष्वादर इति। सा यत्र लोकानान्नास्तीत्यर्थविवक्षायां सप्तम्यर्थे बहुव्रीहिः। अथ वा सम्मतिशब्दः पूर्ववदेव। सा यस्य नास्तीति षष्ठ्यर्थे बहुव्रीहिर्वा। तदुक्तम्—अन्तेवासीति। प्रणेयोऽन्य इति। घटादिरिति शेषः। अत्र कर्मणि यत्।

पाय्यसान्नाय्य (पा० सू० ३-१-१२९)। मानकरणेऽर्थे पाय्यमिति निपात्यते तस्य द्वाभ्यामपि धातुभ्यामुपपत्तिरित्याशयेनाह-*मीनातीति। *पयो दधि वेत्यर्थ इति। 'ऐन्द्रन्दध्यमावास्यायामैन्द्रम्पयोऽमावास्यायाम्' इत्युक्तत्वादिति भावः। 'ऐन्द्रं हविः' इत्यत्र हविःसामान्ये प्रयोगस्तु लक्षणया। मूले-धाय्या ऋगिति। सामिधेनीनाम्मध्ये ऋग्विशेषः।

क्रतौ कुण्डपाय्य (पा० सू० ३-१-१३०)। अत्र कुण्डपाय्ये यत्प्रत्ययो द्रष्टव्यः। "कुण्डपाय्ये यद्विधिः। कुण्डपाय्ये यद्विधेयः। कुण्डपाय्यः क्रतुः" इति भाष्यात्। पाधातोर्यति तस्य युङ्निपात्यते। तेन "यतोऽनावः"(पा० सू० ६-१-२१३) इत्याद्युदात्तत्वम्भवति। तत उपपदसमासे कृदुत्तरपदप्रकृतिस्वरेणाकारोदात्तकोऽयम्। सान्नाय्यशब्दे तु ण्यत्प्रत्यय एव। प्रकरणात्। निपातनं त्वा-

संवाह्यमिति । *वहिसमानार्थ—ऊहेर्ण्यन्तात्सिद्धे सूत्रे समूह्येति व्यर्थमिति भाष्यम् ।

क्वचिन्नेति । *अत एव क्त्वाप्रत्ययेन तुमुनो*न नित्यं बाध इति 'आसित्वा भुङ्क्ते' 'आस्यते भोक्तुम्' इति च भवतीति भावः ।

---

यादेशस्य । क्तौ किम् ? । कुण्डपानम् । सञ्चेयः काष्ठादिः ।

अग्नौ परिचाय्योपचाय्य ( पा० सू० ३-१-१३१ ) । सूत्रेऽग्निपदं स्वधारणार्थं यदिष्टकाचयनादिनिर्मितं स्थलन्तत्र लाक्षणिकम् । निपातनञ्च ण्यदायादेशयोः । एवमेवोपचाय्येऽपि बोध्यम् । समूह्ये तु सम्पूर्वकाद्वहधातोर्ण्यति सम्प्रसारणन्दीर्घश्च निपात्यते । अत एव प्रत्युदाहरणोपपादनावसरे 'संवाह्यम्' इत्युपात्तम् । अत्र यो विशेषस्तमाह—*वहिसमानार्थे इति ।

चित्याग्निचित्ये च ( पा० सू० ३-१-१३२ ) । चित्यशब्दे कर्मणि क्यबन्तौ निपात्यते । अग्निचित्यशब्दे तु भावे क्यबन्तोदात्तत्वयोर्निपातनम् । अत एव "अग्निचित्येत्यन्तोदात्तो भावे" इति भाष्यसंवादः ।

सर्वोपकारकत्वात्प्रकरणान्ते आह—प्रैषातिसर्गप्राप्तकालेति मूले । लोटा बाधेति । लोटस्तत्र विशिष्यविधानादिह प्राप्तो बाधो नेत्यर्थः । वाऽसरूपन्यायेन बाधाभावसिद्धौ पुनरपि कृत्यग्रहणवैयर्थ्यमत आह—स्त्र्यधिकारादिति । अत्र स्त्र्यधिकारादूर्ध्वमित्यस्त्रियामित्यस्यार्थकथनम् । ज्ञाप्यांशस्तु वासरूपविधिः क्व चिन्नेत्येव । *अत एव=एतादृशस्य ज्ञाप्यांशस्य सत्त्वादेव । *न नित्यम्बाध इति । अयम्भावः—"समानकर्तृकयोः पूर्वकाले" (पा०सू०३-४-२१) इति सूत्रस्य समानकर्तृकयोरर्थयोर्मध्ये पूर्वकालविशिष्टार्थवृत्तेर्धातोः क्त्वाप्रत्यय इत्यर्थेन पूर्वकालकत्वं क्त्वाप्रत्ययद्योत्यन्तच्च प्रकारतयाऽऽसित्वा भुङ्क्ते इत्यत्रासनक्रियायाम्भासते । तादृशी चासनाक्रिया स्वसमानकर्तृकत्व—स्वोत्तरकालिकत्वोभयसम्बन्धेन भुजिक्रियायास्प्रकारतया भासते । उक्तोभयसम्बन्धेन पूर्वकालिकासनविशिष्टम्भोजनमिति बोधः । 'आस्यते भोक्तुम्' इत्यत्रापि "तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्" (पा० सू० ३-३-१०) इति सूत्रे क्रियार्थायामित्युपादानात्तुमुन्प्रकृत्यर्थक्रियापूर्वकालत्वस्यासनाक्रियायां फलार्थकतुमुन्समभिव्याहारात्प्रतीयते । एवञ्चोभयोः प्रयोगयोः समानार्थकत्वादास्यते भोक्तुमित्यर्थे 'आसित्वा भुङ्क्ते' इत्येव स्यात् न तु आस्यते भोक्तुमिति । न च तुमुना क्त्वाप्रत्ययस्य बाधशङ्का भवति । क्त्वाप्रत्ययविधायके सूत्रे 'पूर्वकाल' इत्यस्य साक्षादुपादानात् । तुमुन्विधायके तु कार्यार्थकार्थशब्दोपादानेन कारणत्वङ्गम्यते । कारणत्वस्य च पूर्वकालघटितत्वेन तत्र पूर्वकालत्वङ्गम्यते । तेन क्त्वाप्रत्ययेन तुमुनो बाध उक्तः । वासरूपन्यायस्य प्रवृत्तौ तु भुज्धातोस्तुमुनि कृते सति तत्समभिव्याहारेणासने पूर्वकालकत्वङ्गम्यत इति नास्धातोः क्त्वाप्रत्ययः किन्तु लट् । एवञ्च यत्र धातोः पूर्वकालविशिष्टक्रियावाचकत्वन्तत्र तद्द्योतकक्त्वाप्रत्यय इति । तदुक्तं—"समानकर्तृकयोः" ( पा० सू० ३-४-२१ ) इति सूत्रभाष्ये "इह कस्मान्न भवति

कर्त्तरि वेति। *"कर्तरि कृत्" (पा० सू० ३-४-६७) इत्यतः कर्त्तरीत्यनुवर्त्तते इति भावः। आवश्यकाधमर्ण्ययोरित्यनुवर्त्तमाने "कृत्याश्च" (पा० सू० ३-३-१७१) इति सूत्रं, तच्च भव्याद्यर्थम्।

*इति कृत्यप्रक्रिया।

ण्वुल्तृचौ (पा० सू० ३-१-१३३)। अनयोर्वर्तमानकालादन्यत्राप्रयोगोऽनभिधानादिति भाष्यम्। तत्र हि "तृजादिषु वर्त्तमानकालोपादानं कर्त्तव्यम्। न कर्तव्यम्। अन्येषां प्रत्ययानां कालमात्रे

---

आस्यते भोक्तुमिति। कुतः कस्मान्न भवति किमासेः आहोस्विद् भुजेः?। भुजेः कस्मान्न भवति। अपूर्वकालत्वात्। आसेस्तर्हि कस्मान्न भवति। यस्मादत्र लट् भवति। एतदत्र प्रष्टव्यं लडत्र कथं भवतीति। लट् चात्र वासरूपेण भविष्यति" इति। अत्र लट् चात्र वासरूपेणेत्युपादानाद्यत्र धातोः पूर्वकालविशिष्टक्रियावाचकत्वन्तत्र क्त्वाप्रत्यय इति ध्वनितमन्यथा लटः पूर्वकालार्थकत्वाभावेन कथं वाऽसरूपेण तदुपपादनम्। न च "वाऽसरूपोऽस्त्रियाम्" (पा० सू० ३-१-९४) इतिसूत्रे ऽस्त्रियामित्यनेन स्त्र्यधिकारात्पूर्वं वासरूपविधिर्नेति स्त्रियामित्यधिकारं दृष्ट्वा वासरूपविधिर्निवर्त्तत इति वाऽर्थ इति क्त्वाविषये कथं स इति वाच्यम्। 'अस्त्रियाम्'इत्यस्य स्त्र्यधिकारे नेत्येवार्थो न तु तं दृष्ट्वेति। एवञ्च स्त्र्यधिकारादूर्ध्वमपि वासरूपविधिर्भवति परन्तु क्व चिदेवेत्याशयेनात्र मूले क्वचित्पदोपादानमिति। मूले क्त्ल्युडिति। हसितञ्छात्रस्येत्यर्थे हसनमित्यर्थे च घञ् न। 'ईषत्पानः सोमः' इत्यत्र "आतो युच्" (पा० सू० ३-३-१२८) इत्यस्य विषये खल् न। 'इच्छति भोक्तुम्' इति तुमुन्विषये "इच्छार्थेषु लिङ्लोटौ" (पा० सू०३-३-१५७) इति लोड् न। लिङ् तु भवत्येव। क्वचिन्नेत्युक्तेः।

अर्हे कृत्यतृचश्च (पा० सू० ३-३-१६९)। अत्र चकारेण "लिङ् यदि" (पा० सू० ३-३-१६८) इति सूत्राल्लिङनुकर्षः। अनेन लिङा कृत्यतृचोर्बाधस्य प्रसक्तिः।

भव्यगेयप्रवचनीय(पा०सू०३-४-६८)। यदुक्तम्मूले कर्त्तरि वा निपात्यन्ते इति तस्योपपत्तिमाह-*कर्त्तरि क्तादित्यत इति। *इति कृत्यप्रक्रियेति। न च "कृत्याः" (पा० सू० ३-१-९५) "प्राङ् ण्वुलः" इत्युपादानात्कृत्याधिकारस्य प्रागेव निवृत्तेः "भव्यगेय" (पा० सू० ३-४-६८) इति सूत्रस्य कृत्येषु व्युत्पादनमनुचितमिति वाच्यम्। "कर्त्तरि कृत्"(पा० सू० ३-४-६७)इति सूत्रभाष्ये कर्त्तरीतिसूत्रस्य 'अनिर्दिष्टार्था'इतिन्यायेन प्राप्तस्य स्वार्थत्वस्य वारकतया सार्थकत्वमुक्त्वा घञ्विधायकेन"भावे"(पा०सू०३-३-१८)इति सूत्रेण ज्ञापकेन पुनः स्वार्थत्वाप्रसङ्गमाशङ्क्योक्तो भावभेदो भाष्य इत्यनेन तस्य सूत्रस्य चारितार्थ्यम्प्रदर्श्य कृतां स्वार्थिकत्वापत्तिवारकतया कर्त्तरीत्यावश्यकमित्युक्तम्। ततः ल्युन्विधायके "आढ्य" (पा०सू०

दर्शनात् चर्चापादः" इत्युक्तं, *तृचश्चकारः "तुश्छन्दसि" ( पा० सू० ५-३-५९ ) "तुरिष्ठेमेयस्सु" ( पा० सू० ६-४-१५४ ) इत्यत्र तृन्तृचोः सामान्यग्रहणाविघातार्थश्चकार इति भाष्ये स्पष्टम् । उणादीनां व्युत्पन्नत्वमते तृप्रत्ययान्तमात्रादिभ्यश्छदसि नेष्ठयसोर्दर्शनमिति तद्भावः । अव्युत्पत्तिपक्षाश्रयणेन 'मातयति' इत्यादौ नेष्ठवद्भावात् तृलोप इति "र ऋतः" ( पा० सू० ६-४-१६१ ) इति सूत्रे कैयटे । वोढुमर्हं इति । "अर्हे कृत्यतृचः" ( पा० सू-३-३-१६९ ) इत्युक्तेरिति भावः । वोढेति । अनुदात्तत्वादिड भावे ढत्व-धत्व-ष्टुत्व-ढलोपेषु "सहिवहोः" (पा० सू० ६-३-११२) इत्योत्वम् । विज इडिति । ङित्त्वविधायकम् । वध हिंसायामिति । अत एव "जनिवध्योः" (पा० सू० ७-३-३५) इत्यत्र वधिग्रहणं चरितार्थम् । वधादेशे त्वल्लोपस्य स्थानिवद्भावात्सिद्धम् । एतेनास्यार्द्धधातुके प्रयोगो नेत्यपास्तम् । इदं सर्वं वृत्तौ स्पष्टम् ।

---

३-२-५६) इति सूत्रे करण इति पाठेन कृत्यविषये तयोरित्यनेन विशेषविहितेन बाधे सिद्धे "तयोरेव"(पा०सू०३-४-४७०)इतिसूत्रस्थैवकारस्य तच्च भव्याद्यर्थमित्यनेन कृत्यसंज्ञया कृत्संज्ञायाः समावेशसूचनेन'गेयो माणवकः साम्नाम्' 'गेयानि माणवकेन सामानि' इत्युदाहरणप्रदर्शनेन च भव्यादीनामपि कृत्यान्तत्वमनुमीयत इत्यभिप्रायेण "भव्य" ( पा० सू० ३-४-६८ ) इतिसूत्रस्य कृत्यप्रक्रियायां व्युत्पादनात् भव्यादिघटका यदादयः कृत्याः कर्त्रर्थाबाधककर्मार्थकत्वतात्पर्यकत्वात् इतिन्यायस्य ध्वननादिति ॥ इति कृत्यप्रक्रियाविवरणम् ।

ण्वुल्तृचौ ( पा० सू० ३-१-१३३ ) । अत्र तृचः प्रत्ययस्वरेणान्तोदात्तत्वे सिद्धे चकारः "अप्तृन्तृच्" ( पा० सू० ६-४-११ ) इत्यत्र विशेषणार्थः । तस्मिन् सूत्रे तृ इत्युच्यमाने 'मातरौ' 'मातरः' इत्यत्र प्राप्नोति स्वसृनप्तृग्रहणं नियमार्थं भविष्यति एतयोरेव योनिसम्बन्धयोर्नान्येषां योनिसम्बन्धानामिति । एवञ्च तत्रानुपयुक्तत्वाच्चकारस्य प्रयोजनमाह-*तृच इति । यद्यपि कालविशेषोपादानं कृत्वा एतौ न विहितौ तथापि भाष्यप्रामाण्याद्वर्तमानकाल एवानयोः प्रयोग इत्याह-अनयोरिति । तदुक्तं भाष्ये-"तृजादिषु वर्त्तमानकालोपादानमध्यापकवेदाध्यायाद्यर्थम् ।अध्यापकः, वेदाध्यायः। अधीतवति अध्येष्यमाणे वा मा भूदिति । न वा कालमात्रे दर्शनादन्येषाम् । नवा कर्त्तव्यम् । किं कारणम् ?, कालमात्रे दर्शनादन्येषाम् । कालमात्रे अन्ये प्रत्यया दृश्यन्ते" इति । अन्येषाम्=ण्वुल्तृज्व्यतिरिक्तानाम् । एतेन वर्त्तमानकालोपादानं क्रियते तदा तस्याधिकारत्वात्प्रत्ययान्तरेषु दोषः स्यादिति वर्त्तमानाधिकारो न कार्यः; अनयोः कालान्तरे अनभिधानम् इति ध्वनितम् । न ह्यध्यापकोऽध्येता प्रयोगोऽधीतवत्यध्येष्यमाणे वा दृश्यते ।

परे त्वेवं सति "चक्षिङः" (पा० सू० २-४-५४) इतिसूत्रे "बहुलन्तण्यन्नवधकगात्रविचक्षणाजिराद्यर्थम्' इति वार्त्तिके वधकग्रहणवैयर्थ्यापत्तिः। अनेन धातुना सिद्धत्वात्। 'घातकः' इति त्विष्यत एव। बाहुलकात्। वधकमित्युपादाय ण्वुलि च वधादेश इति कैयटः। तथा स्थानिवत्सूत्रे वार्तिकं "वध्यादेशे वृद्धितत्वयोः प्रतिषेधः वधकं पुष्करम्" इति, "अन्योऽयं किदौणादिको वधकशब्दो रुचक इति यथा" इति भाष्यश्चासङ्गतं स्यात्। तस्मादयं निर्मूलः। आर्द्धधातुके चास्य प्रयोगो निर्मूलः। "जनिवध्योश्च" (पा०सू०७-३-३५) इति सूत्रे वधिग्रहणन्त्वादेशो हलन्त इत्यभिप्रायेण। अत एव "हनो वध" (पा० सू० २-४-४२) इति सूत्रे "किमयमदन्त आहोस्विद्व्यञ्जनान्तः?, किञ्चातः?, यदि व्यञ्जनान्तः वृद्धितत्वप्रतिषेध इड्विधिश्च। अथादन्तो न दोषः" इति भाष्यमुपादाय कैयट आह-"अवधीदित्यत्र हलन्तलक्षणा वृद्धिः प्राप्नोति तत्प्रतिषेधो वक्तव्यः, वधक इति ण्वुलि 'बहुलन्ताणि' (का० वा०) इति वधादेशे "अत उपधायाः" (पा० सू० ७-२-११६) इति प्राप्ता वृद्धिः "जनिवध्योश्च" (पा० सू० ७-३-३५) इति प्रतिषिध्यते स्थानिवद्भावाद् "हनस्तः" (पा० सू० ७-३-३२) इति तत्वं प्राप्तं तत्प्रतिषेधो वक्तव्यः। अवधीदित्यादावेकाच्त्वादिण्निषेधे प्राप्ते इड् विधेयः, अदन्तत्वे त्वल्लोपस्य स्थानिवद्भावाद् वृद्ध्याद्यभाव इडभावश्च"इति। एवञ्चादन्तत्वपक्षे वधिग्रहणं सूत्रे न कर्त्तव्यम् इति स्पष्टमेवोक्तमिति वृत्तिश्चिन्त्येत्याहुः।

नेट्यलिटि (पा० सू० ७-१-६२) "रधिजभोः" (पा० सू० ७-१-६१) इति प्राप्तनुमो निषेधोऽयम्। "रभेः" (पा० सू० ७-१-६३) इति "लभेश्च" (पा० सू० ७-१-६४) इति च नुम्विधायके। क्रमेः कर्त्तरीति। "स्नुक्रमोः" (पा० सू० ७-२-३६) इत्यत्र वार्त्तिकम्। अनन्यभाव इति। अत एव भाष्ये सोपसर्गमेवोदाहृतम्। केचिदिति। कैयटस्वरसस्त्वत्र पक्षे दृश्यते। तङानयोरभावमिति। फलोपहिततङानानिमित्तत्वाभावं लक्षयतीत्यर्थः। पापाचक इति। यङ्लुकोऽत्रानैमित्तिकत्वात् "नधातु" (पा० सू० १-१-४) इति निषेधो न, इग्लक्षणत्वाभावाच्च।

मधुसूदने "सात्पदाद्योः"(पा० सू० ८-३-१११) इति षत्वनिषेधः।

स्थायीति । आदन्तलक्षणे स्थायोऽपि के प्रस्थादिरपि । षत्वमपीति। निपातनादित्यनुकृष्यते । बाधकोर्त्ति । तेन मेषसेवदेवादयः सिद्धाः। आगमस्येति । न च दीर्घागमोच्चारणं सवर्णदीर्घबाधार्थं स्यादिति वाच्यम् । 'अनन्तरस्य' इति न्यायेन हलादिःशेषस्यैव बाध इत्याशयात्(१) । वस्तुतो दीर्घप्रवृत्तिकाले एव वैयर्थ्योपस्थितेस्तद्बाध एव न्याय्यः हलादिःशेषबाधनन्तु 'अभ्यासस्यानचि' इति भाष्योक्तेन वचनेन साध्यम् । अभ्यासस्य यदुच्यते तद्भिन्नमित्ताभ्यासभिन्नस्येत्यर्थः । अत एव 'लोलुवः' इत्यादौ गुणः । यद्यप्यत्र वचने वेति भाष्ये नास्ति तथापि 'रात्रिश्वरः' इत्यादिप्रयोगदर्शनादाश्रितम् । तत्र ट इत्यन्ये । घत्वञ्चेति । चात् द्वित्वमाक्च । णिलुक्चेति । चाद् द्वित्वम् । णिलुकरणमवृद्धये ।

ङ्गेआलोपः, प्रिये इयङ्, किरे ऋत इत् । सूत्रे सौत्रमेकवचनम् ।

प्रज्ञ इति । परत्वादिदमेव न्याय्यमिति भावः । यद्यपीदमुपसर्गापेक्षत्वेन बहिरङ्गं तथापि "अकारादनुपपदात्कर्मोपपदो विप्रतिषेधेन" इति भाष्योक्तेरत्रानित्यतया तदप्रवृत्तिरिति तात्पर्यम् ।

पाघ्रा ( पा० सू० ३-१-१३७ ) । अत्रालुग्विकरणत्वात्पिबतेरेव ग्रहणम् । हरदत्त इति । अत्रारुचिबीजन्तु भाष्याननुग्रहः । "टिड्ढा" ( पा० सू० ४-१-१५ ) इति सूत्रे प्रश्लासस्या टिदाद्यवयवाकारस्यैव ग्रहणौचित्यात् । टित्वसामर्थ्यादिति चेत् धयेत्यत्राप्यापत्तिः । तस्मात् 'स्तनन्धयी' इत्यस्य प्रामाणिकत्वे गौरादित्वं बोद्ध्यं, ङीपोऽप्युदात्तनिवृत्तिस्वरप्राप्त्या स्वरे विशेषाभावादित्याहुः ।

लिम्पो विन्द इति । "शे मुचादीनाम्"(पा० सू० ७-१-५९) इति नुम् । धार्यादयो हेतुमण्ण्यन्तास्तेभ्यः शे शपि गुणायादेशौ । अरविन्दमिति । भाष्ये 'अरविन्दः' इति पुल्लिङ्गं दृश्यते ।

पच्चेऽजिति । इदमुपलक्षणम् इगुपधेभ्यः क इत्यस्य । इहेति । 'अवतानः' इति भाष्योदाहरणादिति भावः ।

श्याद्व्यधा(पा०सू०३-१-१४१)। श्या आदिति छेदो व्याख्यानात् । तेन जलचरे इति । इदं "शाच्छोः" (पा० सू० ७-४-४१)इत्यत्र

(१) 'आदेशेनैव दीर्घेण सिद्धे आगमत्वकरणस्य ज्ञापकत्वमित्याशयात्' इति पाठ आदर्शपुस्तके ।

भाष्ये स्पष्टम् ।

गेहे कः ( पा० सू० ३-१-१४४ ) । यत्तु 'गृह' ग्रहणे इति चुरादेरदन्तात्णिचि पचाद्यचि भ्वादेर्वा 'गृहू' धातोरिगुपधलक्षणे के गृहं सिद्धं, रूढिस्वीकाराच्च नातिप्रसङ्गः तत्स्थेपु दारेष्विव इतीदं सूत्रं शक्यमकर्तुमिति; तन्न । तौ धातू छान्दसाविति सूत्राशयात् । धातुषु पाठार्थादावागमभ्रंशस्य क्षीरस्वामिनोक्तत्वेन सूत्रपाठे च तद्भ्रंशाभावेनैवमेवौचित्यात् । उच्छृङ्खलास्तु तयोर्धात्वोरप्रामाणिकः पाठः । वेदे तत्साध्यप्रयोगो यदि भवेत्स वर्णव्यत्ययादिना ग्रहेरेव साध्य इत्याहुः । अत एव भाष्यवार्त्तिककाराभ्यां नेदं प्रत्याख्यातम् ।

नृतिखनीति । वार्त्तिकम् । एवेति । तेन वेञो वायकः सिद्धः । रञ्जेस्त्विवाति । इदम् "आनिदिताम्" ( पा० सू० ६-४-२४ ) इति सूत्रे भाष्ये स्पष्टम् । ननु भाष्यमते 'रजकी' इति न स्यादत आह-पुंयोगे त्विति । तत्रैवेत्यर्थः । 'रजनी' इत्यत्र तु गौरादित्वान्ङीषित्याहुः ।

नन्दक इति । *आशास्यमाननन्दनक्रियाकर्त्रेत्यर्थः ।

---

आशिषि च ( पा० सू० ३-१-१५० ) । अत्राशिषीति प्रकृत्यर्थस्य विषयतासम्बन्धेन विशेषणं न तु प्रत्ययार्थः । "कर्त्तरि कृत्" (पा० सू० ३-४-६७) इति कर्त्तरि प्रत्ययविधानात् । सा चाशीःप्रयोक्तृसमवेताऽप्राप्तप्राप्तीच्छा।एवं च 'जीवकः' इत्यादौ जीवधातोः शब्दप्रयोगकालावधिकोत्तरदीर्घकालावच्छिन्नप्राणधारणेच्छाविशिष्टजीवने लक्षणा । एतादृशस्य धात्वर्थस्य वुन्प्रत्ययस्य समभिव्याहारेण प्रतीतिः । एवमेव 'नन्दकः' इत्यादावपि बोध्यम् । तदाह-*आशास्यमानेति ।

कर्मण्यण् (पा०सू०३-२-१)। धातोरण् प्रत्ययः कर्म चोपपदसंज्ञं भवतीत्यर्थः । मूलेऽनभिधानादिति । अनभिधाने मानन्तु प्रकृतसूत्रस्थभाष्यमेव । तत्र हि-"कर्मणि निर्वर्त्यमानविक्रियमाण इति वक्तव्यम् इह मा भूत् 'आदित्यं पश्यति' 'हिमवन्तं शृणोति' 'ग्रामङ्गच्छति' इति । निर्वर्त्यकर्मस्वरूपञ्च हरिणा दर्शितम्—

सती वाऽविद्यमाना वा प्रकृतिः परिणामिनी ।
यस्य नाश्रीयते तस्य निर्वर्त्यत्वम्प्रचक्षते ॥ इति ।

यस्य सती परिणामिनी प्रकृतिः कार्यसामानाधिकरण्येन यदा न विवक्ष्यते तदा तन्निर्वर्त्यङ्कर्मोच्यते । यथा—'कुम्भङ्करोति' इति । अत्र कुम्भस्य विद्यमानापि मृद्रूपा प्रकृतिः कुम्भसामानाधिकरण्येनाविवक्षितेति कुम्भात्मकं कर्म निर्वर्त्यम् । यदा तु प्रकृतेः कार्याभेदेन प्रतीतिर्जायतामितीच्छया मृदं घटङ्करो-

कर्मणः शेषत्वेति । *ओदनपचादयस्तु यदि नेष्टास्तर्ह्यनभिधानेन वारणीयाः ।

ह्वा ( पा० सू० ३-२-२ ) । ह्वेञ्साहचर्यात्सानुबन्धकस्य वेञ एव ग्रहणम् ।

---

तीति प्रयोगस्तदा तद्घटादिरूपं कर्म विकार्यमेव । अत्रोभयोपादानेन कार्यस्य घटस्य रूपान्तरपरिग्रहः प्रतीयते इति घटात्मकं कर्म विकार्यम् । तदुक्तं हरिणा विकार्यं कर्म—

"प्रकृत्युच्छेदसम्भूतङ्किञ्चित्काष्ठादिभस्मवत् ।
किञ्चिद्गुणान्तरोत्पत्त्या सुवर्णादिविकारवत्" ॥ इति ।

एतदुत्तरार्द्धोपात्तं विकार्यकर्मत्वन्तदा घटादेरस्त्येव । इदानीं घटादिकं कर्म विकार्यमेव न तु प्राप्यम् ।

"क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते ।
दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यते" ॥

इति तल्लक्षणात् । दर्शनात्=प्रत्यक्षात् । यदा तु प्रकृतेः कार्याभेदेन करणत्वेन सम्बन्धित्वेन वा विवक्षा मृदा मृदो वा घटङ्करोतीतिरीत्या तदा घटादिकं कर्म निर्वर्त्यमेव । अनुमानेन कर्मरूपा प्रतीतिर्यत्र तत्कर्म निर्वर्त्यमेव । यथा-'पुत्रः सुखं करोति' । अत्र पुत्रस्य चेष्टादिदर्शनेन पित्रादिनिष्ठं सुखात्मकङ्कर्म सुखविकासादिनानुमीयत इति । अत्र कर्मणः सुखस्याविद्यमाना प्रकृतिः कार्याभेदेन न प्रतीयत इति यद्यपि तथापि सुखस्य प्रकृतिरन्तःकरणीयविलक्षणज्ञानाकारा सा प्रकृतिरनुमितिगोचरा भवतीति प्राप्यत्वाभावान्निर्वर्त्यत्वम् । प्रकृतेः सामानाधिकरण्येन विवक्षाया अभावात् । एवञ्चादित्यम्पश्यतीत्यादावादित्यादिः प्राप्यं कर्मेति स्पष्टमेव । ततः "कर्मणि निर्वर्त्यमानविक्रियमाण इति चेत् वेदाध्यायादीनामुपसङ्ख्यानम् । वेदाध्यायः, चर्चापारः । ह्रग्रहिनीवहिभ्यश्चेतिवक्तव्यम्—'भारहरः', 'कमण्डलुग्राहः', 'उष्ट्रप्रणायः', 'भारवाहः' । अपरिगणनं वा । न वार्थः परिगणनेन । कस्मान्न भवति-'आदित्यं पश्यति''हिमवन्तं शृणोति''ग्रामङ्गच्छति' इति ? । अनभिधानात् । अनभिधानादेवात्र न भविष्यति"इति ।

अन्यत्राप्यनभिधानं क्वचिदाश्रयमित्याह—*ओदनपचादय इति ।

मूले आरम्भसामर्थ्यादिति । सुपीत्यनेन सिद्धेऽस्यारम्भसामर्थ्यादित्यर्थः । आरम्भसामर्थ्यात्पूर्वापेक्षया'स्थः'(पा० सू० ३-२-४)इतिसूत्रविषये किञ्चिद्वैलक्षण्यमवश्यं वाच्यम् । एवञ्चार्थनियामकस्य कर्त्तरीत्यस्यानुपस्थितिरेव कल्प्यते । एवञ्चानिर्दिष्टार्थत्वाद्भाव इति लब्धम् । अत एवैतद्विहितप्रत्ययान्तस्य नित्यैकवचनान्तत्वमेव । लिङ्गसिद्धिस्तु लोकाश्रयत्वात् । उपपदसमाससिद्धिफलकश्चायं योगः । तेन घञर्थे कविधानमित्यनेन सिद्धिर्न शङ्कनीया । घञर्थे कविधानमित्यस्य कर्तृकारकार्थत्वात्प्रतिष्ठतेऽस्मिन् धान्यादिकमित्यर्थे प्रस्थशब्दस्य सिद्धिः ।

आतोऽनु ( पा० सू० ३-२-३ )। उपसर्गाभावे सतीत्यर्थः। तत्फलितमाह-अनुपसर्गादिति। गोसन्दाय इति। "सत्सू" ( पा० सू० ७-३-३७ ) इति सूत्रे उपसर्गेऽपीत्यनेनात्र प्रकरणे सुप्पदेनोपसर्गाग्रहणबोधनात् "सुपि ( पा० सू० ३-५-४ ) इति कः। "आतोऽनुप" ( पा० सू० ३-२-३ ) इति सूत्रारम्भसामर्थ्येन तस्य कर्मण्युपपदेऽप्रवृत्तेर्वा। अत्रोपसर्गाणामव्यवहितप्रयोगाद्विशिष्टक्रियायां कर्मकारकान्वयाच्च गतिसमासगर्भोपपदसमासः। अत्र कर्माद्युपपदे बुद्धिस्थे एव प्रत्ययः। एतेन कुम्भं करोतीति द्वितीयान्तस्योपपदत्वे कुम्भअसित्यस्यानुपपदत्वेन तेन समास इति सिद्धान्तासङ्गतिः। अनुत्पत्तेः प्राक् षष्ठ्यभावेन षष्ठ्यन्तस्यानुपपदत्वात्। किञ्चोपसर्गसंबन्धात्पूर्वं कारकवाचिभिन्नपदासम्बन्धेन साधनकार्यात्पूर्वमुपसर्गसम्बन्धेन च "प्रे दाज्ञः" ( पा० सू० ३-२-६ ) इत्यादेरसङ्गतिरित्यपास्तम्। आह्व इति। न चात्र केऽप्यालोपं बाधित्वा नित्यत्वात् संप्रसारणे ततो "वार्णाद्" ( प० भा० ) इति न्यायेन पूर्वत्वं बाधित्वा लोपे तस्याभीयासिद्धत्वेनोवङोऽप्राप्तौ यणि 'याह्वः' इति सिद्धमिति वाच्यम्। आभीयासिद्धत्वानित्यत्वे "वार्णाद्" ( प० भा० ) इति न्यायानित्यत्वे वाऽस्य ज्ञापकत्वात्। तेन 'जुहुवतुः' इत्यपि सिद्धमित्याहुः।

योगो विभज्यते इति। इदं केवलोपसर्गे न। "आतश्चोपसर्गे" (पा० सू० ३-१-१३६)इत्येव सिद्धेः। कर्मण्युपपदेऽपि न। "आतोऽनुप" ( पा० सू० ३-२-३ ) इत्यारम्भात्; तदाह-द्वाभ्यामिति।

प्रष्ठो गौरिति। "आतश्चोपसर्गे" ( पा० सू० ३-१-१३६ ) इति कः। अभ्यगामित्वेन मुख्यत्वं लक्ष्यते।

द्वयमपीति। "चरेष्टः"( पा० सू० ३-२-१६ ) इति सूत्रे 'कर्मणीत्यपि वर्तते' इति भाष्यदर्शनेन सुपीत्यधिकारं दृष्ट्वापि न तन्निवृत्तिः। तेन "तुन्दशोकयोः" ( पा० सू० ३-२-५ ) इत्यादीनां कर्मण्येव प्रवृत्तिः, सुपीत्येतत्त्वकर्मकेषु सावकाशमिति भावः।

आलस्येति। तयोर्गम्यमानयोरित्यर्थः। तत्र सामर्थ्यादलससुखाहर्त्रोः कर्त्रोरिति बोध्यम्। मूलविभुजादिभ्य इति तादर्थ्ये चतुर्थी।

प्रेदाज्ञः ( पा० सू० ३-२-६ )। जनेर्नायं निर्देशः "खनो घ

च" ( पा० सू० ३-३-१२५ ) इत्यादौ धातुनिर्देशेऽल्लोपाकरणात् व्याख्यानाच्च । इत्युक्तेरिति । अनुवृत्तेरित्यर्थः । गोसंख्ये चक्षिङः ख्यादेशः ।

हरतेर ( पा० सू० ३-२-९ ) । उत्क्षेपणादन्यत्रार्थे वर्तमानादित्यर्थः । "शक्तिलाङ्गल" (का० वा०) इति तूद्यमनार्थम् । शक्तिः=शस्त्रविशेषः । सूत्रे चेति । धार्यर्थे गम्यमाने सति सूत्रशब्दे उपपदे इत्यर्थः ।

स्तम्बकर्णयोः ( पा० सू० ३-२-१३ ) । रमिजपावकर्मकौ ।

टो माभूदिति । परत्वादिति भावः । शङ्करेति । *'गृणातेः शङ्करैषा न शङ्करा' इति भाष्येणेदं प्रयोजनं खण्डितम् । शम्युपपदे स्थः क्विपो बाधनार्थं धातुग्रहणं*"स्थः क च"(पा०सू०३-२-७७)इत्यत्र भाष्ये ।

अधिकरणे शेतेः ( पा० सू० ३-२-१५ ) । "इत उत्तरम् अ-

---

वयसि च ( पा० सू० ३-२-१० ) । वयसि गम्यमाने इत्यर्थः । 'कवचहरः' इत्यनेन कवचस्यातिगुरुत्वेऽपि तद्धरणेन सम्भाव्यमानेन वा कर्तुः पौगण्डाद्यवस्थाविशेषो गम्यते ।

*गृणातेरिति । तत्र हि पुनर्धातुग्रहणेन टप्रत्ययस्य बाधनमुक्त्वा "कुमारवाडवस्त्वाह—नैषा शङ्करा शङ्करैषा, गृणातिः शब्दकर्मा तस्यैष प्रयोगः" इति प्रतिपादितम् । *स्थः क च इत्यत्र भाष्य इति । तत्र हि—किमर्थे स्थः ककिपावुच्येते? । न क्विब्सिद्धः अन्येभ्योऽपि दृश्यते इति, कश्चातोऽनुपसर्गे क इति । न सिध्यति । विशेषविहितः कः सामान्यविहितं क्विपम्बाधेत । वाऽसरूपेण क्विपपि भविष्यति । इदं तर्हि शंस्थः शंस्थाः । उक्तमेतत् शमि संज्ञायां धातुग्रहणं कृञो हेत्वादिषु टप्रतिषेधार्थमिति स यथैवाच् टम्बाधते एवङ्क्विपावपि बाधेत" इत्युक्तम् । अत्र 'शंस्थः' इति प्रयोगसिद्ध्यर्थं को विधेयः । अयञ्च कोऽञ्बाधकत्वेन चरितार्थ इति अस्य क्विबपवादत्वङ्गतमिति वाऽसरूपन्यायानवसरात्क्विपः परत्वात्केन नित्यम्बाधः स्यादिति क्विबपि विधेयः । न चाच्प्रत्ययेन 'शंस्थाः' इति भविष्यतीति वाच्यम् । भसंज्ञानिमित्तप्रत्यये आतोलोपानापत्तेः । पुरस्तादपवादन्यायेन टस्यैव बाध इति तु न शङ्क्यम् । येननाप्राप्तिन्यायेन क्विप एव बाध इत्यपि वक्तुं शक्यमिति अस्य भाष्यस्य बाध्यसामान्यचिन्तामाश्रित्योभयबाधकत्वतात्पर्यकत्वात् । शंस्थाशब्दे "घुमास्था" ( पा० सू० ६-४-६६ ) इतिसूत्रविहितेत्वस्य भाष्यकारीयप्रयोगादेवाप्रवृत्तिः । "ईत्वमवकारादौ" ( का० वा० ) इति वार्त्तिकन्तु 'धीध्र्यायतेर्दधातेर्वा' इति 'ध्यायतेः सम्प्रसारणम्' इति वार्त्तिकव्याख्यानावसरे उक्तत्वेन प्रत्याख्यातमेव । अथ वा क्विप्पदं सादृश्याच्चि उपलक्षणम् ।

धिकरणे इति सुपि कर्मणीति त्रयमनुवर्त्तते, यथायोगं सम्बन्धः" इति *"चरेष्टः" ( पा० सू० ३-२-१६ ) इत्यत्र भाष्यम् । उत्तानादिष्विति । कर्तृभूतेषूत्तानादिषूपपदेष्वित्यर्थः ।

चरेः सकर्मकत्वेऽपि चरेष्टः कर्मण्युपपदे न । "भिक्षासेना" (पा० सू० ३-२-१७ ) इति सूत्रे भिक्षाग्रहणात् । स्पष्टश्चेदं भाष्ये, तदाह— *अधिकरणे इति ।

सेनाचरे सेनायां भ्रमतीत्यर्थः । आदायचर इति । गृहीत्वा गच्छतीत्यर्थः ।

अग्रेणेति । पुरोऽग्रतःशब्दयोरव्ययत्वेन कर्मत्वासम्भवाच्चदसंबन्धे तत्साहचर्येणाग्रशब्देऽपि तदसम्बन्धादिति भावः । हरदत्त इति । अत्रारुचिरग्रेसर इत्यस्यालुका सिद्ध्या एदन्तत्वनिपातने न मानम्, पूर्वनिपातस्तु बहुशो व्यभिचरित इति ।

कृञो हे ( पा० सू० ३-२-२० ) । हेतुः=कारणमात्रम् । आनुलोम्यम्=आराध्यचित्तानुवर्त्तनम् । द्योत्येष्विति । उपपदानि तु न व्याख्यानात् ।

दिवाविभा ( पा० सू० ३-२-२१ ) । दिवापदार्थस्यापि वृत्तिविषये शक्तिमत्परत्वेन कर्मत्वादत्र कर्मणीति सम्बध्यते । अहेत्वाद्यर्थमपीति । हेत्वादिग्रहणाननुवृत्तेरिति भावः । अत इति तपरकरणाद् "अतः कृ" ( पा० सू० ८-३-४६ ) इत्यस्याप्राप्तेराह—कस्कादित्वादिति । नाञि जहातेरुत्पन्नत्वेनोत्तरपदस्थत्वाद् "अतः कृ" (पा०सू० ८-३-४६) इत्यस्याप्राप्तेराह—कस्केति। पाणिनिसम्मतेऽव्युत्पत्तिपक्षे तु "अतः कृ"

---

*चरेष्ट इत्यत्र भाष्यमिति । तत्र हि कुरूंश्चरति इत्यत्र टप्रत्ययमाशङ्क्य "चरेर्भिक्षाग्रहणं ज्ञापकङ्कर्मण्यप्रसङ्गस्य" इत्युक्तम् । भिक्षाशब्दे उपपदे "भिक्षासेना" ( पा० सू० ३-२-१७ ) इत्यनेन टो विधीयते । यद्यनेन कर्मण्युपपदे टः स्याच्चदा तेन तत्र टविधानं व्यर्थं स्यात् । अत्र चरतिश्चरणकरणकेऽर्जने वर्त्तते भक्षणार्थको वा । ज्ञापकपरभाष्यप्रामाण्यात्तत्रैवास्य प्रयोगः । एवञ्चाधिकरण इत्यस्य कर्मणीत्यस्य च सम्बन्धप्रदर्शनेन यथायोगं सम्बध इति ध्वनितमिति भावः ।

चरेष्टः ( पा० सू० ३-२- १६ ) । *अधिकरण इतीति । ज्ञापकेन कर्मण्युपपदेऽस्याप्रवृत्तावधिकरण इत्येव परिशेषाल्लब्धम् ।

इत्येव । नित्यं समासे इति । *प्रत्ययावयवत्वात्तस्य "इदुदुपधस्य" (पा० सू० ८-३-४१) इत्यस्य न प्राप्तिः । परत्वादिति । *अच् अर्हत्वादौ चरितार्थः, सूत्रे च किमादिग्रहणं न कार्यमित्यभिमानः ।

कर्मशब्दे इति । कर्मणीति चा*स्य विशेषणं, तेन करणादौ नातिप्रसङ्गः ।

पश्वाविति । कर्तृविशेषणम् । पशुरत्र प्रत्ययोपाधिः प्रत्ययान्तवाच्यत्वात् । एवं व्रीह्यादिष्वपि द्रष्टव्यम् । *स्यादवन्ध्यः फलेग्रहिः ।

एजन्तादिति । *अत एवास्मात् खश्विधानं *चरितार्थम् ।

अरुर्द्विषत (पा० सू० ६-३-६७) । कालिमन्यादावनवकाशत्वात्पूर्वं ह्रस्वे कृते ततो मुम् । अन्यथा मुम्यनजन्तत्वात्स न स्यात् ।

---

*प्रत्ययावयवत्वादिति । उणादीनां व्युत्पन्नत्वाभिप्रायेण । अन्तकरशब्दस्य नञा समासेऽनन्तकरस्य तु नेष्टस्य सिद्धिः । अनन्तशब्दे उपपदे कृत्प्रत्यये उपपदसमासे कृदुत्तरप्रकृतिस्वरस्य प्रवृत्तिर्भवति, नञाऽन्तकरशब्दस्य समासे तु "तत्पुरुषे तुल्यार्थ" इति पूर्वपदप्रकृतिस्वरापत्तेः । यदुक्तम्परत्वादिति तस्योपपत्तिरच्प्रत्ययस्य टप्रत्ययाप्राप्तियोग्ये विषये चारितार्थ्ये सति घटत इत्याशयेनाह-*अजर्हत्वादाविति । किमादीत्यादिना यत्तच्छब्दयोः परिग्रहः । एतेषां ग्रहणसत्त्वे त्वर्हत्वादावपि किमादिषूपपदेषु सूत्रेण टस्य प्राप्त्याऽच्प्रत्ययस्य चारितार्थ्यं न स्यादिति भावः । अभिमान इति कथनबीजन्तु भाष्यकृता सूत्रस्थकिमादिग्रहणस्याप्रत्याख्यानेनात्र पर्यायेण द्वयोरपि टाचोः प्रवृत्तिरिष्टैवेति । किञ्च पुंयोगाविवक्षायामपि स्त्रियाः कर्तृत्वे 'किङ्करी' इति सूत्रकारमतसिद्धस्य भवदुक्तरीत्याऽसिद्धिरपि द्रष्टव्या ।

कर्मणि भृतौ (पा० सू० ३-२-२२) । अत्र कर्मणीत्यनुवृत्त्यैव सिद्धे पुनः कर्मणीत्युपादानात्कर्मणीति कर्मशब्दपरम् । *अस्य=कर्मशब्दस्य ।

"व्रीहिवत्सयोरिति वक्तव्यम्" (का० वा० ) इति वार्त्तिकस्य समुदायेन प्रतिपादयितुमिष्टयोरित्यर्थः । तेन तयोः प्रत्ययार्थकर्तृविशेषणत्वमेवाभिप्रेतमिति बोध्यम् ।

फले ग्रहिरात्मम्भरिश्च (पा० सू० ३-२-२६) । फलेग्रहिशब्दस्यार्थविशेषे रूढिम्प्रदर्शयति-*'स्यादवन्ध्यः फलेग्रहिः' इत्यमरः । यस्य वृक्षस्य फलग्रहणयोग्यता तस्मिन् वृक्षे चायम्प्रयोगः फलोत्पत्त्यनवच्छेदककालसम्बन्धेऽपीष्यते ।

एजेः खश् (पा० सू० ३-२-२८) । *अत एव=ण्यन्तादिति व्याख्यानादेव । *चरितार्थमिति । शकारोच्चारणमस्य सार्वधातुकत्वे शप् यथा स्यादिति कृतम् । केवलादेजेर्यद्ययं स्यात्तर्हि शपि सत्यसति वा फलतो न

इहानव्ययस्येति वर्तते । तेन दिवामन्यादावव्ययानां *न मुम् । "वातशु-
नी" ( का० वा० ) इति वार्तिके 'गर्भेषु' इति पाठान्तरम् ।

मावा इति । मृगा इति भाष्ये पाठः ।

---

विशेषः । न चोत्तरार्थमस्य शित्वमस्त्विति वाच्यम् । इहार्थत्वस्यापि सम्भवे उत्तरार्थत्वमात्रत्वस्यायुक्तत्वादिति भावः ।

*न मुमिति । अनव्ययस्य सम्बन्धेऽपि न सर्वत्राव्ययस्य प्रतिषेधः । 'उपकुम्भम्मन्यः' इत्यादौ मुमागमस्येष्टत्वात् । एतच्चाव्ययीभावस्य लुङ्मुख-स्वरोपचारेष्वेवाव्ययत्वस्वीकारेण लभ्यते ।

नासिकास्तन ( पा० सू० ३-२-२९ ) । मूले—यथासंख्यं नेष्यते इति । प्रकृतसूत्रे भाष्ये 'स्तने धेटो नासिकायां ध्मश्च'( का०वा० )इति कथनात् इति भावः ।

नाडीमुष्ट्योश्च ( पा० सू० ३-२-३० ) । इदम् "नासिकानाडीमुष्टि-घटीखरीष्विति वक्तव्यम्" इति 'नासिकास्तन' ( पा० सू० ३-२-२९ ) इति भाष्ये दर्शनेन वार्त्तिकमिति प्रतीयते यद्यपि तथापि वृत्तावप्याख्याश्च पृथक् पाठात् यथासङ्ख्य( पा० सू० १-३-१० )सूत्रस्थभाष्यस्वारस्याच्च सूत्रमेवेति प्रतिपन्नाः । यथासंख्य(पा० सू० १-३-१०)सूत्रस्य सामान्यतः प्रवृत्तौ"करणाधि-करणयोः" ( पा० सू० ३-३-११७ ) इत्यनुवर्त्तमाने "अवेतॄस्त्रोर्घञ्" ( पा० सू० ३-३-१२० ) इति सूत्रेण घञि विधीयमाने "तॄस्त्रौ द्वौ, करणाधिकरणे द्वे, तत्र संख्यातानुदेशः प्राप्नोति" इत्यादिना भाष्ये सङ्ख्यातानुदेशादतिप्रसङ्ग-माशङ्क्य "समानयोगे संख्यातानुदेशं वक्ष्यामि" इत्यनेन समाधाय "ध्मा-धेटोः" (पा० सू० ३-२-२०)'नाडीमुष्ट्योः"(पा० सू० ३-२-३०)"खलगोरथात्" ( पा० सू० ४-२-५० )"इनित्रकट्यचश्च"( पा० सू० ३-२-५१ )"सिन्ध्वपकराभ्यां कन्" ( पा० सू० ३-२-३२ ) "अणञौ च" ( पा० सू० ४-३-३३ ) इत्यत्र सं-ख्यातानुदेशो न प्राप्नोतीति तादृशोक्तौ दोष उक्तः । एतदग्रे "यथासङ्ख्यमनु-देशः समानां स्वरितेन"इत्यनेन सिद्धान्तितम् । तत्र दोषप्रतिपादनपरभाष्ये खलगोरथादित्यस्य सिन्ध्वपकराभ्यामित्यस्य च यथा सूत्रत्वन्तथा नाडीमु-ष्ट्योरित्यस्यापि सूत्रत्वमिति समभिव्याहारात्प्रतीयते । वस्तुतस्तु नाडीमु-ष्ट्योर्विषये संख्यातानुदेशो न प्राप्नोतीति यथासंख्यसूत्रस्थमेकदेश्युक्तिः । "नासिकास्तनयोः" ( पा० सू० ३-२-२९ ) इति सूत्रभाष्यविरोधेनात्र यथा-संख्याभावस्येष्टत्वात् । तथाहि- "स्तने धेटो नासिकायां ध्मश्च धेटश्चेति व-क्तव्यम्"इत्यनेन यथासंख्याभावार्थे वार्त्तिककृता योगविभागो दर्शितः । तत्रा-व्याप्तिमुद्भावयन् भाष्यकार आह—"अत्यल्पमिदमुच्यते नासिकानाडीमु-ष्टिघटीखरीष्विति वक्तव्यम् । नासिकन्धमः नासिकन्धयः नाडिन्धमः नाडि-

असूर्य ( पा० सू० ३-२-३६ ) । यथासंख्यमत्र । असूर्यशब्दस्यानर्थकत्वेऽपि उपपदमिति महासञ्ज्ञया तस्य सुबन्तत्वम् । सुप् च द्वितीयैव, नञ्कुक्षकदेशस्य कर्मत्वेनान्यापेक्षया *युक्तत्वात् ललाटसाहचर्याच्चेति बोध्यम् ।

प्रियवशे ( पा० सू० ३-२-३८ ) । *खचश्चित्त्वं ण्यर्थं "खचि ह्रस्वः" इत्यादौ खे इत्येव खशो ण्यावृत्तिः सिद्धा 'कुलीनः' इत्यादौ च *णावित्यनुवृत्त्या न दोष इत्याहुः । मितङ्गम इति । वृत्तौ 'मतङ्गमः' इति पाठः । खच्च डिद्वेति । योगविभागादत्र विहायस इत्यस्यासम्बन्धस्तदाह—भुजङ्ग इति । भुजाभ्यां गच्छतीत्यर्थः । अत एव वार्तिके सुपीत्युक्तम् ।

---

न्धयः मुष्टिन्धमः मुष्टिन्धयः' इति रीत्या प्रतिपादितम् ।

उदि कूले रुजिवहोः ( पा० सू० ३-२-३१ ) । अत्रोदीति नोपपदम् । "हरतेर्दृतिनाथयोः" ( पा० सू० ३-२-२५ ) इति सूत्र इवोत्कूलयोरिति द्विवचननिर्देशे कर्तव्ये उदि कूल इति विभिन्नविभक्तिनिर्देशसामर्थ्यात् । किन्तूदि सति कूले उपपदे रुजिवहोरनन्तरः प्रत्यय इत्यर्थस्तेन यत्सिद्धन्तदाह मूले उत्पूर्वाभ्यामिति । अत एव यथासंख्यसूत्रे भाष्ये उक्तम्—"नोदिरुपपदम् । किं तर्हि विशेषणम्" इति ।

*युक्तत्वादिति । द्वितीयाया इति शेषः । राजदाराणां गुप्त्यतिशयप्रतिपादनपरमेतद्वाक्यम् । एवं ता गुप्ता यन्निवारणानर्हदर्शनमपि सूर्यन्न पश्यन्तीति ।

प्रियवशे वदः खच् ( पा० सू० ३-२-३८ ) । अत्र चकारः खचि ह्रस्व इत्यत्र विशेषणार्थं उपायतस्तस्य वैयर्थ्यमुपपादयति—*खचश्चित्त्वमिति । "खे ह्रस्व" इत्युच्यमाने "कुलात्खः" ( पा० सू० ४-१-१३९ ) इति कुलशब्दात् खप्रत्यये 'कुलीनः' इत्यत्र यस्येति लोपस्य स्थानिवद्भावेन लकारस्योपधात्वेऽपि नातिप्रसङ्ग इत्याह—*णावित्यनुवृत्त्येति । ननु "अचश्च" ( पा० सू० १-२-२८ ) इति परिभाषयाऽच इत्यस्योपस्थितौ खचि यददन्तं तस्योपधाया अच इत्यर्थेन कुलीन इत्यस्य सिद्धिर्भविष्यतीति णावित्यनुवृत्तिर्व्यर्थेति चेन्न । "ऊदुपधाया" ( पा० सू० ६-४-८९ ) इतिसूत्रादुपधापदसम्बन्धे सति निर्दिष्टस्थानिकत्वेन "अचश्च" ( पा० सू० १-२-२८ ) इति परिभाषाया अनुपस्थितिरित्याशयात् । किञ्च खचि यदङ्गं तदुपधाया अच इत्यर्थश्चेत् स्यात्तदा "द्विषत्परयोस्तापेः" ( पा० सू० ३-२-३९ ) इतिसूत्रस्य यदुदाहरणमिच एकाचोऽमितिसूत्रीयभाष्ये उक्तं वृत्तिकारादिसर्वजनसिद्धं 'द्विषन्तपः' 'परन्तपः' इति;तस्यासिद्धिः स्यात् ह्रस्वत्वे चिकीर्षिते णिलोपस्य स्थानिवद्भावेन खच्परमङ्गं

तापेरिति चुरादेर्हेतुमण्ण्यन्तस्यादेश्च ग्रहणमिति वृत्तिः।

अनित्यैति। "उपपदविधावेषा न" इति ङ्याप्सूत्रे भाष्योक्तेरिति भावः।

वाचि य (पा० सू० ३-२-४०)। वाक्शब्दे कर्मणीत्यर्थः। शास्त्रबोधितः संकल्पविशेषो=व्रतम्।

भयशब्देनेति। "येन विधिः" (पा० १-१-७२) इतिसूत्रस्य*भाष्यप्रामाण्याच्छब्दरूपं विशेष्यमादाय तदन्तविधिरत्रेति बोध्यम्।

क्षेमंकर इति। 'क्षेमंकरी' इत्यत्र गौरादित्वान्ङीष्।

आशिते भु (पा० सू० ३-२-४५)। 'अश' भोजने इत्यतो ण्यन्तात्प्रयोज्ये कर्मणि क्तः। उत्तरसूत्रात्सञ्ज्ञायामित्याकृष्यते। तेनासञ्ज्ञायां न। अत एव "ध्रौव्यगति" (पा० सू० ३-४-७६) इत्यादिना भावकर्माधिकरणेषु यः क्तस्तदन्तो न गृह्यते। सोपसर्गस्य प्राप्त्यर्थस्य वा भुवः सकर्मकत्वेऽपि कर्मणीति न सम्बध्यते। तस्याप्रसिद्धत्वात् *व्याख्यानाच्च, तदाह-आशितो भवतीति।

अन्यत्रापीति। अनेनैव सर्वत्र सिद्धौ सर्वत्रेत्यादि प्रपञ्चार्थम्। वस्तुतः "सप्तम्याञ्जनेः" (पा० सू० ३-२-९७) इति प्रकरणस्थेन "अन्येष्वपि दृश्यते" (पा० सू० ३-२-१०१) इत्यनेन सिद्धे इदमपि प्रपञ्चार्थमेव। तत्रापिग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वादिति बोध्यम्।

दारान्निति। शब्दापेक्षया पुंस्त्वम्, *अन्तग्रहणं स्पष्टार्थम्।

---

णिजन्तमेव तदुपधाभूतस्य पकारस्याच्त्वाभावात्। णावित्यनुवृत्तौ तु खच्परे णौ यदङ्गन्तदुपधाया अच्त्वाव्यभिचारादच्परिभाषाया इहानुपस्थितिरेवेत्याशयः। णावित्यस्याभावे यदि कुलीन इत्यत्र लकारस्य"यस्येतिच" (पा० सू०६-४-१४८) इत्यल्लोपस्य स्थानिवद्भावेनोपधाभूतस्य ह्रस्वः स्यात्तदा लकारः स्यात् तस्मिंश्चेकारनिमित्तकयणादेशापेक्षयाऽन्तरङ्गत्वादुकारस्य यण् स्यात्। अन्तरङ्गत्वञ्च पद्व्या मृद्या कर्त्र्यैतिवल्लक्ष्यभेदेन लक्षणस्य भेदकल्पनया पूर्वोपस्थितनिमित्तकत्वरूपम्बोध्यम्

*भाष्यप्रामाण्यादिति। तत्र हि'उपपदविधौ भयाढ्यादिग्रहणम्'इत्युक्तम्

*व्याख्यानादिति। संज्ञापदापकर्षमूलकव्याख्यानादित्यर्थः। इयञ्च संज्ञा यावतौदनेनातिथ्यादिर्भोजितो भवति तावत्प्रमाणकस्य।

अलोन्त्यपरिभाषयैव सिद्धे "दारावाहन" (का० वा०) इत्यत्रान्तशब्दोपादानमनर्थकमत आह-*अन्तग्रहणं स्पष्टार्थमिति। वार्तिकेषु प्रायो ला-

कुमारशीर्ष ( पा० सू० ३-२-५१ ) । अयं णिनिर्भविष्यद्वर्तमानयोरेव न भूते । "भूते" ( पा० सू० ३-२-८४ ) इत्यधिकारे "कर्मणि हनः" ( पा० सू० ३-२-८६ ) इत्यस्य पाठेनायमेव णिनिर्भूते इति एतदारम्भसामर्थ्येन तत्र नियमात् । यत्तु 'तक्रकौण्डिन्य'न्यायात्कुमारशीर्षयोर्विशेषविहितेन णिनिना "कर्मणि हनः" ( पा० सू० ३-२-८६ ) इत्येतद्विहितणिनिसहचरितभूतकालो बाध्यते । अत एव कुमारेत्यादि पुनर्विधानं *चरितार्थम् । न च तत्सामर्थ्याद्धासरूपबाधः शास्त्रबाधापेक्षया कालबाधस्यैवौचित्यात् । अत एव 'कुमारहन्ता' इत्यपीति, तन्न । तस्य न्यायस्य विधेयविषयत्वात् तत्कालवृत्तेर्धातोरित्यर्थेन कालस्यानुवाद्यत्वात् "भूते" ( पा० सू० ३-२-८४ ) इत्यधिकारसत्त्वे चोक्तनियमोपपत्तिरिति अस्य भूताधिकारप्रयोजनेनोक्तिः "भूते" ( पा० सू० ३-२-८४ ) इति सूत्रे भाष्ये इति दिक् ।

पत्निघ्नीति । "गमहन" ( पा० सू० ६-४-९८ ) इत्युपधालोपः, टित्त्वान्ङीप् ।

पाणिघ ( पा० सू० ३-२-५५ ) । शिल्पिनि कर्तरीत्यर्थः ।

आढ्यसु ( पा० सू० ३-२-५६ ) । च्व्यर्थेषु किम् ?, आढ्यं कुर्वन्त्यनेन । कर्तरि तु नायम् । करणरूपार्थेन तक्रकौण्डिन्यन्यायेन कर्तृरूपार्थबाधनात्, अर्थस्यापि विधेयत्वात् । अत एव कार्यशब्दवादे नियोगतः कर्तारं ब्रुवन् स कृत्सञ्ज्ञ इत्यर्थो भाष्ये दर्शितः । नियोगः=शास्त्रम् । नित्यशब्दवादे तु स्वभावतः कर्तारं ब्रुवन् कृत्सञ्ज्ञः स्वभावतः करणं ब्रुवन् ख्युन् कृत्सञ्ज्ञ इत्यादिक्रमेणार्थः तदा कर्त्रर्थस्याप्रसक्तिरेवेति दिक् ।

---

घवगौरवचर्चा नाद्रियत इत्यस्यार्थस्य स्पष्टप्रतिपत्त्यर्थमित्यर्थः ।

*चरितार्थमिति । भविष्यद्वर्तमानयोः प्रत्ययविधायकतया चरितार्थमित्यर्थः ।

आढ्यसुभग ( पा० सू० ३-२-५६ ) । च्विप्रत्ययस्य वैकल्पिकत्वेन च्विप्रत्ययाभावेऽपि च्व्यर्थत्वन्न विरुध्यते । मूले—निषेधसामर्थ्यादिति । च्व्यन्ते उपपदे ख्युनो निषेधेऽपि यदि ल्युट् स्यात्तदा प्रतिषेधोऽनर्थकः स्यात् । रूपस्वरे विशेषाभावात्, च्व्यन्तस्याव्ययत्वेन मुमकृतस्य च्व्यन्तस्य गतिसंज्ञकत्वेन नित्यसमासकृतस्य च विशेषस्याभावात्; भाष्यमते त्विति । "कर्तरि

कर्तरि भुवः ( पा० सू० ३-२-५७ )। अच्व्यन्तेषु किम् ?, आढ्यीभविता। *इष्णुच् तु न। गतिपूर्वेभ्यः प्रायेण ताच्छीलिकाप्रवृत्तेः।

स्पृशो ( पा० सू० ३-२-५८ )। अनुदके किम् ?, उदकस्पर्शः। अनुदके इत्येत*त्सामर्थ्यात्क्विबपि न।

---

भुवः खिष्णुच्खुकञौ" ( पा० सू० ३-२-५७ ) इत्युत्तरत्रानुवृत्त्यर्थत्वेनाच्वावित्यचारितार्थ्यस्य प्रदर्शनात्। तेन "आढ्यीभविता" इत्यत्र तौ नेति पूर्वसूत्रविषये ल्युड् भवत्येवेति भावः। *इष्णुच् तु नेति। "ग्लाजिस्थश्च" (पा० सू० ३-२-१३९) इतिसूत्रार्थे विभक्तं यत् 'भुवश्च' इतिसूत्रन्तस्य लोकसाधारणत्वस्य वक्ष्यमाणत्वात् प्राप्त इष्णुच् तु नेत्यर्थः। यद्यपि "भुवश्च" ( पा० सू० ३-२-१३८ ) इतिसूत्रव्याख्यानावसरे मूले छन्दसीत्यस्य णेश्छन्दसीत्यतोऽनुवर्तमानस्य सम्बन्धो दर्शयिष्यमाणस्तथापि "आढ्यसुभग" ( पा० सू० ३-२-५६ ) इतिसूत्रभाष्ये पूर्वोक्तरीत्याऽच्वावित्यस्य वैयर्थ्यम्प्रदर्श्य "उत्तरार्थं तर्हि प्रतिषेधो वक्तव्यः। "कर्तरि भुवः खिष्णुच्खुकञौ" ( पा० सू० ३-२-५७ )। अच्वावित्येव, आढ्यीभविता। अथेदानीमनेन उक्ते ताच्छीलिक इष्णुज्विधीयते सोऽत्र कस्मान्न भवति ?। रूढिशब्दप्रकारास्ताच्छीलिकाः। न च रूढिशब्दा गतिभिर्विशेष्यन्ते। न हि भवति देवदत्तः प्रदेवदत्तः" इतीष्णुजापत्तिपरं भाष्यमेव 'भुवश्च' ( पा० सू० ३-२-१३८) इत्यस्य लोकवेदसाधारणत्वे प्रमाणमिति भावः। न च "कर्तरि कृत्" ( पा०सू०-३-४-६७ ) इतिसूत्रेण कर्त्रर्थस्य सिद्धेः कर्तरीति व्यर्थम्। करण इत्यस्यानुवृत्तिभ्रमवारकतयाऽस्य चारितार्थ्यात्। यदि करणपदस्यास्वरितत्वेनैवासम्बन्ध इति कल्प्यते तदा तु कर्त्तरीति व्यर्थमेव। ननु भूधातोरुदात्तत्वेनेटा भविष्णुशब्दः सिद्ध एवेति खिष्णुच इकारो व्यर्थः। एवञ्च प्रत्ययस्वरेणान्तोदात्तत्वे सिद्धे चकारोऽप्यत्र न कार्य इत्यपरं लाघवमिति चेन्न। नञः परत्वं यत्रेष्णुजन्तस्य तत्र "कृत्योकेष्णुच्चार्वादयश्च" ( पा० सू० ६-२-१६० ) इत्युत्तरपदान्तोदात्तत्वसिद्ध्यर्थमिहेकारस्यावश्यकत्वात्। इडागमे सत्ययमपि इष्णुजेवेति तु वक्तुमशक्यम् लक्षणिकत्वात्।

स्पृशोऽनुदके क्विन् ( पा० सू० ३-२-५८ )। अत्रत्यो नकारो भाष्यकृता प्रत्याख्यातः। तथाहि—"नायं स्वरार्थः। स्पृशेरेकाच्त्वात्। नापि "ऋत्विक्" (पा० सू० ३-२-५९) इत्युत्तरार्थः। तत्र दधृक्शब्दस्य द्विर्वचनान्तोदात्तत्वयोर्निपातनात्। "क्विन्प्रत्ययस्य" इत्यत्र विशेषणार्थ इत्यपि न। तत्रापि 'क्विप्रत्ययस्य' इत्येव सिद्धिः। क्विपो व्यावृत्तिस्तु तदनुबन्धकपरिभाषया भविष्यति" इति। न च स्पृश्धातोर्यङ्लुगन्ताद्यत्र क्विन्तत्राद्युदात्तत्वसिद्ध्यर्थन्नित्त्वमस्त्विति वाच्यम्। नकारप्रत्याख्यानपरभाष्यप्रामाण्येन यङ्लुक्वयस्यानभिधानस्य कल्पनात्। *सामर्थ्यादिति। स्पृश्धातोरेकाच्त्वात्किन्क्विपोः स्वरेऽपि विशेषाभावात्। कुत्वकृतो विशेषस्तु न। क्विन्प्रत्ययस्येति बहुव्रीह्याश्रयणात्।

सत्सू ( पा० सू० ३-२-६१ ) । *अनुपसर्ग इत्यस्य निवृत्त्यैव सिद्धे उपसर्गेपीति अन्यत्र सुब्ग्रहणे उपसर्गग्रहणं नेति ज्ञापनार्थम् । तेन "वदः सुपि" ( पा० सू० ३-१-१०६ ) इत्युपसर्गे नेति भाष्यम् । "गदमद" ( पा० सू० ३-१-१०० ) इत्यत्रानुपसर्गे इत्यस्यास्वरितत्वमेव मध्येऽसम्बन्धात् । अत एव प्रगद्यमित्यादिसिद्धिः । प्रष्ठे "आतश्चोपसर्गे" ( पा० सू० ३-१-१३६ )इति क इति दिक् । द्युसदिति *सप्तम्यन्तेतरत्पूर्वपदम् । सप्तम्यन्तत्वे "हृद्द्युभ्याम्" इत्यलुगापत्तिः ।

भजो ण्विः (पा०सू०३-२-६२) । सुपि उपसर्गेऽपीति च वर्त्तते ।

अणबाधनार्थमिति । *स्पष्टश्चेदं भाष्ये । उपपदस्येति । *"क्रव्ये च" ( पा० सू० ३-२-५९ ) इति सूत्रं तु आममांसभक्षके 'क्रव्यादः' इत्येतद्व्यावृत्त्यर्थमिति भावः । अन्ये तु गङ्गाधरादिवत्पचाद्यचि सवर्णदीर्घे स साधुरित्याहुः । वस्तुतोऽयमसाधुरेवेति परे ।

निवृत्तमिति । "आतो मनिन्"( पा० सू० ३-२-७४ ) इत्यत्र "विजुपे"(पा० सू० ३-२-७३) इत्यतोऽनुवर्तमानमित्यर्थः । दृशिग्रहणादुपपदस्यापि व्यभिचारः । वनिपः 'शर्वरी' इत्युदाहरणम् ।

रोट् रेडिति 'रुष' 'रिष' हिंसायाम् ।

---

सत्सूद्विषद्रुह ( पा० सू० ३-२-६१ ) । अत्र सदादिषु केषाञ्चिद्धातूनां सकर्मकत्वात्सुपीत्यनुवर्तमानेऽपि कर्मण उपपदत्वमप्राप्नोतीत्यतो भाष्ये"उपसर्गग्रहणं कर्तव्यम्" इत्युक्तम् । तेन कर्मणीति निवृत्तमित्यन्वाख्यातम्भवति । *अनुपसर्ग इत्यस्येति । "आतोऽनुपसर्गे" ( पा० सू० ३-२-३ ) इतिसूत्रस्थस्यानुपसर्ग इत्यस्येत्यर्थः । यत्तु "वदः सुपि" ( पा० सू० ३-१-१०६ ) इतिसूत्रेऽनुपसर्गग्रहणानुवृत्तिप्रदर्शनपरं वार्त्तिकन्तदपि नापूर्वङ्किन्तु प्रकृतज्ञापकसिद्धार्थानुवाद एव । *सप्तम्यन्तेतरदिति । द्युसदितिप्रयोगे सप्तम्यन्तेतरत्पूर्वपदमित्यर्थः । एवञ्च सदधातोर्गत्यर्थत्वात्कर्मण्युपपदे प्रत्ययः ।सप्तम्यन्तेप्युपपदे क्विप् दृश्यते । "आदितेया दिविषदो" ( अ० को० ) इत्यत्र यथा । अत्र सुषामादित्वात्षत्वम् । द्युसदित्यत्र "पूर्वपदात्" ( पा० सू० ८-३-१०३ ) इतिप्राप्तमपि षत्वञ्छन्दसीत्यनुवृत्तेर्न । उपनिषदित्यत्र तु "सदिरप्रतेः" ( पा० सू० ८-३-६६ ) इति षः ।

*स्पष्टश्चेदम्भाष्य इति । तत्रहि-"अदोऽनन्ने"(पा० सू० ३-२-६८)इत्येव सिद्धे क्रव्यग्रहणं वा ऽसरूपनिवृत्त्यर्थम्"इत्युक्तमिति । ननु 'क्रव्यादः' इत्यस्य पृषोदरादित्वात्साधुत्ववत्'क्रव्यात्'इत्यस्यापि सिद्धौ "क्रव्ये च"(पा०सू० ३-२-६९) इतिसूत्रवैयर्थ्यमत आह—*क्रव्येचेतिसूत्रन्त्विति ।

क्विप्च (पा० सू० ३-२-७६)। अत्रापि दृशिग्रहणमनुवर्त्तते। "क्विप् चान्येभ्योपि दृश्यते" इति ताच्छीलिकप्रकरणे भाष्योक्तेस्तदाह— दृश्यत इति। "अन्येभ्योपि दृश्यन्ते" (पा० सू० ३-२-७५) इत्यत्र* विचोऽपि सम्बन्धः इति "यू स्त्र्याख्यौ" (पा० सू० १-४-३) इति सूत्रे भाष्ये।

इस्मन्त्र (पा० सू० ६-४-९७)। "खचि ह्रस्वः" (पा० सू० ६-४-९४) इत्यतो ह्रस्व इति "छादेर्घे" (पा० सू० ६-४-९६) इत्यतश्छादेरिति चानुवर्त्तते।

लोपश्चेति। अन्नस्येति शेषः।

शंस्था इति। अत्रान्तर्भावितण्यर्थत्वे शमिसस्य कर्मत्वम्, अन्यथा तु न तत्त्वम्। प्रत्ययस्तूभयथापि सुपीत्यस्यैव सम्बन्धात्। अत्र विच्। चात्क्विवित्यत्र क्विप्पदेन सादृश्याद्विजेवोच्यते। अत एव नेत्वम्। अचं बाधितुमिति। अन्यथा धातुग्रहणसामर्थ्येन कृञोहेत्वादिषु टबाधवत् शंपूर्वकस्थाधातोः कक्विपावप्यच् बाधेतेत्यर्थः।

उपसर्गभिन्न एवेति। *सुपीति वर्त्तमाने पुनः सुब्ग्रहणेनोपसर्गे ऽपीत्यस्य निवृत्तेरिति भावः। *भाष्येति। अत एव "उपसर्गादृति"(पा० सू० ६-१-९१) इति सूत्रे 'वा सुपि' इति भाष्यप्रयोगः 'अनुगादिनः' 'विसारिणः' इति सौत्रप्रयोगश्च सङ्गच्छते। साधुकारिणीति। करोतिरत्र

---

*विचोऽपि सम्बन्ध इति। "विजुपे छन्दसि" (पा० सू० ३-२-७३) इतिसूत्राद्विज्ग्रहणं सम्बध्यते छन्दसीतिनिवृत्तमित्यर्थः। दृशिग्रहणाद्यथा प्रयोगो दृश्यते तथैव साधनीयमिति लभ्यते। तेनोपपदस्य व्यभिचारोऽपि लभ्यत इत्याह—दृशिग्रहणादिति।

अन्तः (पा० सू० ८-४-२०)। अनितेरितिवर्तते। अत्रान्त इत्यस्यानितेरिति न विशेषणमव्यभिचारात्किन्तु पदस्येति तदाह—मूले पदान्तस्येति। हे प्राण्। 'अन्' प्राणने। क्विप् "अनुनासिकस्य" (पा० सू० ६-४-१५) इति दीर्घः। "न ङिसम्बुध्योः" (पा० सू० ८-२-८) इति नलोपस्य निषेधः।

सुप्यजातौ णिनिस्ताच्छील्ये (पा०सू० ३-२-७८)। अजाताविति सुपीत्यस्य विशेषणम्। जातिप्रवृत्तिनिमित्तकस्याजाताावित्यनेन निषेधः। उष्णभोजीत्यादावुष्णादिशब्दो गुणप्रवृत्तिनिमित्तकः। अत्रोपसर्गभिन्न एवेत्यस्य यथा लाभस्तत्प्रकारमाह—*सुपीतीति। *भाष्येतीति। एवं हि भाष्ये

सर्वधात्वर्थानुवादकः, तदुदाहरति—साधुदायीति ।

कर्तर्युपमाने (पा० सू० ३-२-७९) । कर्तृभूतोपमानवाचके उपपदे इत्यर्थः ।

व्रते (पा० सू० ३-२-८०) । *सुप्युपपदे व्रते गम्ये णिनिरित्यर्थः । स्थण्डिलेति । *स्थण्डिल एव शेते इत्येवं व्रतमत्र गम्यते । स्थण्डिले शेत एवेति तु न । तस्य शास्त्रबोधितत्वाभावेन व्रतत्वाप्रसिद्धेः ।

बहुलमाभीक्ष्ण्ये (पा० सू० ३-२-८१) । बहुलग्रहणादाभीक्ष्ण्योपपदयोरभावेऽपि *"व्रते" (पा० सू० ३-२-८०) इति सूत्रभाष्यबोधिते 'व्रतार्थं स्थायी' इत्यादौ णिनिः ।

आत्ममाने खश्च (पा० सू० ३-२-८३) । आत्ममाने इति किम् ? दर्शनीयमानी देवदत्तो यज्ञदत्तस्येति ।

सूत्रे 'अम्' इति तन्त्रेणाम्पदद्वयनिर्देशः, एकं विधेयसमर्पकम्, अपरं प्रत्ययविशेषणमिति भाष्ये स्पष्टं, तदाह—स च स्वादीति ।

---

उक्तम्—"सुपीति वर्त्तमाने पुनः सुब्ग्रहणं किमर्थम् ? । अनुपसर्ग इत्येवंतदभूत्, इदं सुम्मात्रे यथा स्यात् । उद्‌सारिण्यः प्रत्यसारिण्यः" इति । साधुकारिणीत्यत्र साध्विति क्रियाविशेषणम् । यः सकृदपि साधु यथा स्यात्तथा ददाति साधु करोति स एवमुच्यते । अत एव "आक्वेः" (पा० सू० ३-२-१३४) इतिसूत्रे तच्छीलापेक्षया तत्साधुकारीत्युपात्तम् ।

व्रते (पा० सू० ३-२-८०) । अत्र व्रतशब्दे उपपदे इति नार्थः । अश्राद्धभोजीतिभाष्योदाहरणात् । किन्तु प्रयोगोपाधिपरम् । एवञ्च यत्सिद्धन्तदाह—*सुप्युपपदे इत्यादिना । स्थण्डिलशायीत्यत्र यथा व्रतङ्गम्यते तथाह—*स्थण्डिल एवेति । भाष्योदाहरणे त्वसमर्थसमासो द्रष्टव्यः ।" नञ एवायम्भुजिप्रतिषेधवाचिनः श्राद्धशब्देनासमर्थसमासः" इति भाष्यात् । अत एवात्र व्रतङ्गम्यते । श्राद्धशब्देन नञा समासे तु सर्वेषामेव तथात्वेन व्रतत्वं प्रतीयेत ।

बहुलमाभीक्ष्ण्ये (पा० सू० ३-२-८१) । अत्राभीक्ष्ण्ये इति धातोर्विशेषणमर्थद्वारकम् । तेन द्योत्य इत्यस्य लाभः । *व्रत इति सूत्रभाष्य इति । तत्र हि अश्राद्धभोजीत्यत्र व्रतस्य गम्यमानतायां दृष्टान्तत्वेनोपात्तम् "यथा स्थण्डिलस्थायी यदा स्थण्डिले न तिष्ठति तदास्य व्रतलोपो भवति" इति ।

मनः (पा० सू० ३-२-८२) । सुपीति वर्तते । अत्र मन इत्यनेन मन्यतेरेव ग्रहणं न तु तनादेः । उत्तरसूत्रे दिवादेरेव ग्रहणेनार्थाधिकारात् ।

आत्ममाने खश्च (पा० सू०-३-२-८३) । मननं मानः भावे घञ् । आत्मशब्दः प्रत्ययवाच्यत्वेनोपस्थितकर्तृपर एव । कर्मषष्ठ्या समासः न तु कर्तृषष्ठ्या

अन्यस्यामः प्रत्ययस्यातिदेशयोग्यकार्याभावात्स्वाद्येव गृह्यते इति भावः। श्रिमन्यमिति। परे तु "स्वमोः" (पा० सू० ७-१-२३) इति लुगत्र न। बाध्यसामान्यचिन्तया "सुपो धातु" (पा० सू० २-४-७१) इति लुग्वत् अस्यापि अम्विधानसामर्थ्येन बाधात्। किं चास्यामो बहिरङ्गतयाऽसिद्धत्वादपि न "सुपो धातु" (पा० सू० २-४-७१) इति लुक्। उत्तरपदाधिकारे एषा परिभाषा नेत्युक्तिस्तु भाष्ये उक्तमत्युक्तिक्रमेण *पूर्वपक्षिण इति स्पष्टं तद्विदाम्। 'परन्तपः' इत्यस्य त्रिपाद्यां बहिरङ्गपरिभाषाया अप्रवृत्त्या सुसाधत्वेन फलाभावेन चोत्तरपदाधिकारे तत्प्रवृत्तेः सत्त्वात्। तस्मात् 'श्रियंमन्यः' इत्येव रूपं भाष्यसम्मतम्। *अत एवोपक्रमे "श्रियंमन्यः इति भवितव्यम्" इति भाष्ये सिद्धान्तिनोक्तम्। एवञ्च पूर्वपक्ष्युक्तात् 'श्रिमन्यमित्येव भवितव्यम्' इति भाष्यस्थात् 'श्रिमन्यम्' इति प्रयोगात् ह्रस्वस्य मुममोरभावस्य च कल्पनमनुचितमित्याहुः। अयममप्रत्ययत्वादेव परः मुमा सिद्धेऽजादिप्रत्ययनिबन्धनेयङादिसिद्ध्यर्थमिदम्।

सोमेनेति। *सोमेन=लताविशेषेण यागं कृतवानित्यर्थः।

---

आत्मशब्दोपादानसामर्थ्याेत्तथा च यत्फलितन्तदाह—स्वकर्मकेति। अत्र भाष्ये "कर्मकर्तृग्रहणं कर्तव्यम्। कर्मापदिष्टो यक् यथा स्यात्। श्यन्मा भूत्" इत्युक्तम्। अत्र कर्मकर्तृग्रहणङ्कर्तव्यमित्यस्य कर्तुः कर्मवद्भावः पूर्वोक्तरीत्या कर्तुर्लकारवाच्यत्वस्याभावेन कर्मस्थक्रियया तुल्यक्रियत्वसत्त्वेन चाप्राप्तो वाच्य इत्यर्थः। श्यन्मा भूदित्यनेन हि अत्र दिवादेर्ग्रहणमिति स्पष्टमेव। ततः श्यनैव सिद्धौ कर्मवद्भावो न वाच्यः रूपे स्वरे च विशेषाभावादिति प्रतिपादितम्। *पूर्वपक्षिण इति। 'परन्तपः' इत्यादौ मुमागमे सति मोऽनुस्वारे चिकीर्षिते बहिरङ्गपरिभाषाया मुमोऽसिद्धत्वाशङ्कायामेवमुक्तम्। *अत एव='श्रियम्मन्यः' इतिरूपस्यैवासिद्धत्वस्य प्रवृत्त्याऽभिप्रेतत्वादेव। न च यदि न "सुपो धातु" (पा० सू० २-४-७१) इतिलुक्प्राप्तिस्तर्हि पुंसि चरितार्थस्य मुमो नपुंसकत्वे श्रियम्मन्यङ्कुलमित्यत्र लुक् स्यादेवेति वाच्यम्। पूर्वपदस्योत्तरपदार्थेन सह भेदान्वयान्नपुंसकत्वाभावात् "स्वमोर्नपुंसकात्" (पा० सू० ७-१-२३) इतिसूत्रे सुशब्दसाहचर्येणार्थवत एवामो ग्रहणस्य वक्तुं शक्यत्वाच्च।

भूते (पा०सू०३-२-८४)। इदं धात्वर्थस्य विशेषणम्। अत एव भूतार्थादित्युक्तिसङ्गतिः।

*सोमेन लताविशेषेणेति। अत्र सोमशब्दस्य द्रव्यपरत्वेऽपि न

अग्निष्टोमेति । *अग्निष्टोमसंस्थाकयागेनापूर्वं भावितवानित्यर्थः । *यजेश्च यागकरणके व्यापारे शक्तिः । तत्र व्यापाररूपभावनाया भाव्याकाङ्क्षायां *धात्वर्थयागस्य करणत्वेनोपस्थितेः(१) ( स्वतः ) पुरुषार्थत्वाभावाच्च साक्षात्सुखसाधनम*पूर्वं भाव्यत्वेनान्वेति । *यागस्य करणत्वञ्च भावनाभाव्यभावकत्वमेव । सर्वत्र करणानामीदृशमेव करणत्वम् । *संस्था-

---

क्षतिरितिभावः । अग्निष्टोमशब्दस्य रूढ्यर्थाभिधायकत्वाभिप्रायेणाह—*अग्निष्टोमसंस्थाकेति । अग्नेः स्तोमः स्तुतिर्यत्र क्रतौ स क्रतुरग्निष्टोमः । रूढोऽयं शब्दः । अग्निष्टोमसंस्थाकेत्यस्याप्यग्निष्टोमेति संस्था=वाचकः शब्दो यस्येत्यर्थः । समुदायार्थन्निरूप्यावयवार्थन्निरूपयति—*यजेश्चेत्यादिना । यागश्च मन्त्रकरणको देवदत्तोद्देश्यको हविःकर्मको विवक्षितः । एतादृशयागकरणकभावनाया भाव्याकाङ्क्षायां यद्यपि स्वर्गकामादिपदोपस्थितस्य स्वर्गस्य भाव्यत्वमन्यत्रोक्तन्तथापि तस्य कालान्तरभावितया भावनायास्तदव्यवहितपूर्वकालवृत्तित्वाभावेन भावकत्वं न सम्भवत्यतोऽपूर्वस्य भाव्यत्वमाह—अपूर्वं भावितवानिति । ननु व्यापाररूपा या भावना तया यागात्मकं फलन्तज्जन्यत इति तदेव भाव्यत्वेन कुतो नान्वेतीत्यत आह—*धात्वर्थयागस्येति । धातुप्रतिपाद्यार्थघटकतया करणत्वेनोपस्थितेरित्यर्थः । यागकरणकेन व्यापारेण कम्भावयेदिति याऽऽकाङ्क्षा सा पूर्वानुभूतार्थातिरिक्तविषयिण्येवोचितेति भावः । ननु'उपस्थितम्परित्यज्यानुपस्थितकल्पने मानाभावः'इति न्यायेनोपस्थितस्यैव समानशब्दोपात्तत्वप्रत्यासत्त्या तथात्वमुचितमत आह—*पुरुषार्थत्वाभावाच्चेति । यज्ज्ञातं सत् स्वसम्बन्धित्वेनेष्यते स पुरुषार्थः । तत्त्वञ्च सुखदुःखाभावान्यतरस्य साक्षात्तत्साधनस्य वा, यागश्च तेभ्यो भिन्न इति भावः । *अपूर्वम्=परमापूर्वम् । ननु करणस्य कार्यपूर्ववृत्तित्वमन्यत्र दृष्टं यागस्तु भावनायाः कार्यं न तु भावनापूर्ववृत्तीति कथं करणमत आह—*यागस्य करणत्वञ्चेत्यादि । भावनायाः भाव्यो=भावनाभाव्यः । भावनाभाव्यम्भावयति जनयतीति भावनाभाव्यभावकस्तत्त्वम् । अस्ति चेदृशं करणत्वं यागे भावनाभाव्यपूर्वम्प्रति यागस्य जनकत्वात् । सर्वत्र न केवलं फलांशस्यैव, किन्तु सर्वत्र । दण्डेन घटं करोतीत्यत्रापि दण्डस्य भावनाभाव्यघटोत्पत्तिम्प्रति जनकतायाः सत्त्वात् । धातोरंशद्वयाभिधायकतया प्रायः फलांशस्य भावनाम्प्रति भाव्यत्वेन सम्बन्धात्कर्मत्वम् क्वचित्तु करणत्वेन सम्बन्धित्वविवक्षा तदा तृतीया तदभिन्नार्थवाचकपदात्, "अग्निष्टोमेन यजेत"इत्यादौ यथा । अत्र च"करणे यजः"(पा० सू० ३-२-८५ )इतिसूत्रमेव मानम् । पूर्वोक्तो बहुव्रीहिः संस्थावाचकपरत्व एव सम्भाव्यते इत्याशयेनाह—*संस्थावचनस्यापीति । क्वचित्तु ज्योतिष्टोमशब्दस्येतिपाठस्तु 'ज्यो-

---

( १ ) कंसान्तर्गतो ग्रन्थ आदर्शपुस्तके नास्ति ।

वचनस्यापि ज्योतिष्टोमशब्दस्य तद्वति लक्षणया यागसामानाधिकरण्या-त्करणत्वम्। स्वर्गादेः कर्मत्वमपि भाव्यत्वरूपमेव न तु फलाश्रयत्वरूपम्। अत एव*दृशानां कामान्तपदेनैवोल्लेखः। *केचित्तु यागानुकूलव्यापार एव यजेरर्थः, ज्योतिष्टोमादिशब्दाश्च शब्दव्यापाराः, शब्दस्यापि *सङ्कल्प-द्वारा करणत्वमित्याहुः।

कर्मणि (पा० सू० ३-२-८६)। कर्मण्युपपदे भूतार्थाद्धन्ते-र्णिनिरित्यर्थः। इदं शब्दशक्तिस्वभावात्कुत्सायामेव। तेन 'चोरं हतवान्' इत्यादौ नेति वृत्तिः।

चतुर्विध इति। ब्रह्मादिषूपपदेषु भूते वर्तमानाद्धन्तेः क्विबिति सूत्रार्थः। तत्राविशेषाच्चतुर्ष्वेवकारो विनिगमनाविरहात्। तत्र ब्रह्मा-दिष्वेव भूतार्थाद्धन्तेरिति नियमे हन्तेरुपपदान्तरसंबन्धनिवृत्तिफलो धातुनियमः, ब्रह्मादिषु भूतार्थादेव हन्तेरिति नियमे नान्यार्थाद्धन्तेरिति प्रत्ययनियमः, ब्रह्मादिषु भूतार्थाद्धन्तेरेवेति ब्रह्मादीनान्धात्वन्तरसंबन्धनि-वृत्तिफलो धातुनियमः, ब्रह्मादिषु भूतार्थाद्धन्तेः क्विबेवेति नियमे नान्या-र्थादिति कालनियम इति भावः। भाष्यमिति। तथा च भाष्यम्-'उभयतो नियमोऽयं ब्रह्मादिष्वेति क्विबेवेति च'। युक्तञ्चैतत्-श्रुत्यु-पस्थितोपपदप्रत्यययोरुपरोधापेक्षया प्रकरणलक्षणजघन्यप्रमाणोपस्थितधा-तुकालयोरेवोपरोधो न्याय्यः। एवञ्च तद्विरोधाद् वृत्तिरयुक्तेति भावः।

काशिकेति। धातुनियमस्त्विह नेष्यत इति तद्भावः। अत्रापि द्विविध एव नियमः—कर्मादिष्वेव, कुञ एवेति च। एवं "सोमे सुञः" (पा० सू० ३-२-९०) इत्यादावपि।

कुत्सितेति। वार्तिकमिदम्। यत्कर्म क्रियया सम्बध्यमानं कर्तुः कुत्सामावहति तत्रेत्यर्थः। सोमादयश्च विक्रीयमाणाः शास्त्रनिषिद्धत्वात्त-दावहाः। तेनेह न-धान्यविक्रायः।

---

तिष्टोमेन स्वर्गकामो यजेत' इतिवाक्याभिप्रायकः। *ईदृशानाम्=भाव्यतया भावनाप्रतिसम्बन्धिनाम्। यत्र तु फलांशस्यैव भाव्यत्वेन सम्बन्धित्वविवक्षा-तत्र करणाकाङ्क्षा बहिर्भूतकरणवाचकपदेन पूर्यते—'काष्ठैः शोभनम्पचति' इत्या-दौ। बाह्यफलाकाङ्क्षायाम् तृप्तये तण्डुलम्पचतीत्यादौ यथा। पूर्वोक्तां लक्ष-णामसहमान आह—*के चित्त्विति। *सङ्कल्पद्वारा=प्रवृत्तिं प्रति प्रयोजको यः सङ्कल्पः 'ज्योतिष्टोमेन स्वर्गो जायताम्' इतीच्छारूपस्तद्द्वारा। शब्दार्थयो-

निवृत्तमिति । असत्त्ववचनत्वेनेहानन्वयादुत्तरत्रानुपयोगाच्च । सहयुध्वेति । तेन सह युद्धवानित्यर्थः ।

सर्वोपाधीति । अत एव-भाष्ये तु 'अन्येभ्योऽपि दृश्यते परिखा' इत्युक्तम् ।

क्तक्तवतू ( पा० सू० १-१-२६ ) । यद्यपि प्रयोगेऽनुबन्धा न श्रूयन्ते तथापि *तदुपलक्षितकालकारकादिदर्शनेन तत्रानुबन्धस्मृतौ निष्ठात्वप्रयुक्तकार्यसिद्धिः । (१)( इत्सञ्ज्ञककककारवानिसाकाराऽत्र स्मृतिः । ) अत एव 'लोतः' इत्यादौ न तत्प्रयुक्तकार्यं 'प्राभित्त' इत्यादौ एकत्वावगमाल्लुङन्तमेतदिति निर्णयान्न दोषः ।

च्छ्वयोर्दी ( पा० सू० ८-२-४६ ) । यद्यपि निर्देशादेव दीर्घग्रहणमत्र, अन्यथा गुणः स्यात् तथापि "क्षियो निष्ठायामण्यदर्थे" इत्यत्रेव 'चिक्षियतुः' इत्यादावजादौ *यद्रूपं तदनुकरणत्वस्य सत्त्वादत्र दीर्घग्रहणम् । स्पष्टञ्चेदं भाष्ये । अत एव *दीर्घविधायकवृत्तावपि क्षिय इत्येवोक्तम् ।

रदाभ्याम् । ( पा० सू० ८-२-४२ ) । चो वाक्यभेदार्थस्तदा-

---

स्तादात्म्यात् ज्योतिष्टोमशब्दार्थवद् ज्योतिष्टोमशब्दस्यापि तादृशेच्छाविषयतया तदिच्छाम्प्रति विषयविधया जनकत्वेन तद्द्वारा भावनाम्प्रत्यपि करणत्वमिति भावः ।

अग्नौ चेः ( पा० सू- ३-२-९१ ) । सुपि कर्मणीति सम्बध्यते । अग्नौ कर्मण्युपपदे चितेः क्विप् । अत्रापि चतुर्विधो नियम इति काशिकायाम् । श्येनचिदितिसमुदायः स्थलविशेषे इष्टकानिर्मिते आहवनीयधारणार्थे रूढः ।

*तदुपलक्षितेति । अनुबन्धोपलक्षितेत्यर्थः । काकवद्देवदत्तगृहमित्यत्रास्थिरेण काकेन वेदिकापुण्डरीकादिकं यथोपलक्षितं तद्वत् ।

*यद्रूपमिति । कृते इयङि यदान्तं रूपन्तदनुकरणमेतत् । एवञ्चानुकरणस्यानुकार्योपस्थापकतया 'क्षि' क्षये, 'क्षि' निवासगत्योः इत्येतद्द्वयोरपि ग्रहणे तत्रापि तयोर्ग्रहणापत्तौ भावे कर्मणि वा यत्र निष्ठा तत्रातिप्रसङ्गवारणाय दीर्घग्रहणमिति भावः । क्षितः काम इत्यत्र क्षिधातोरन्तर्भावितण्यर्थकत्वेन सकर्मकत्वात् कर्मणि क्तः । भावे तु क्षितङ्कामेनेति बोध्यम् । *दीर्घविधायकवृत्ताविति । दीर्घविधायकस्य सूत्रस्य वृत्तौ=विवरणवाक्ये ।

रदाभ्याम् ( पा० सू० ८-२-४२ ) । पूर्वत्वस्य सावधिकत्वेन प्रथमे

---

( १ ) कंसान्तर्गतो ग्रन्थ आदर्शपुस्तके नास्ति ।

इ-*निष्ठापेक्षयेति । रदाभ्यांकिम् ?, चरितम् । तद्धि निष्ठासंबन्धितकारविशेषणम् । *पूर्वग्रहणं'भिन्नवद्भ्याम्'इत्यादौ परदस्य माभूदिति स्पष्टं भाष्ये । कार्त्तिक्षेयोर्वृद्ध्युत्तरं नत्ववारणाय 'वृद्धेः परस्य नत्वप्रतिषेधः' इति वक्तव्यं, बहिरङ्गासिद्धत्वन्तु त्रैपादिके ऽन्तरङ्गे नास्तीत्युक्तम् ।

संयोगादेः (पा० सू० ८-२-४३) । निष्ठया धातोराक्षेपे सिद्धे धातोरिति संयोगादेरित्यस्य धातुविशेषणत्वार्थम् । अन्यथा श्रुतत्वादात एव स्यात् । तथा च 'निर्यातः' इत्यादावतिव्याप्तिरिति भावः ।

ओदितश्च । ( पा० सू० ८-२-४५ ) । अस्मात्परस्य निष्ठातस्य न इत्यर्थः । स्वादयो दिवाद्यन्तर्गणभूताः ।

शीतं जलमिति । अनेन सूत्रे स्पर्शशब्देन गुण एव प्रसिद्धत्वा*द्व्याख्यानाच्च गृह्यते न तु रोग इति ध्वनितम् । अत एव "ग्रतेश्च" (पा० सू० ६-१-२९)इति सार्थकं, तद्विषये नत्वञ्च ।

विभाषाभ्य (पा० सू० ६-१-२६) । *पूर्वग्रहणम् 'अभिसंशीनः' इत्यर्थमिति वृत्तिः । व्यवस्थितेति । *एतदपि वृत्तौ स्पष्टम् । भाष्ये तु एतन्न दृश्यते । वृत्तावपि यदि नेष्यते ततो व्यवस्थितविभाषेति वदतैषामनभिधानं सूचितम् ।

---

वाक्ये निष्ठाया उपस्थितत्वात्तस्या एवावधित्वं कल्प्यत इत्याशयेनाह-*निष्ठापेक्षयेतीति । *पूर्वग्रहणमिति । रदाभ्यान्निष्ठातो नो दश्च इत्येव कर्तव्ये कृतं यत्पूर्वग्रहणन्तदित्यर्थः ।

ल्वादिभ्यः ( पा० सू० ८-२-४४ ) । यदुक्तं मूलकृता एकविंशतेरिति । तद्भावस्तु यद्यपि 'गॄघॄ'धातू तत्र दृश्येते तथापि ताभ्यान्निष्ठाया रदाभ्यामित्येव सिद्धमिति । ज्याधातोर्निष्ठायाः संयोगादेरित्यनेन सिद्धिर्न । नत्वस्यासिद्धतया प्रथमं सम्प्रसारणे यण्वत्ताविरहात् । ग्रासकर्मकर्तृकस्येति । ग्रास एव कर्मकर्ता यस्येत्यर्थः । पिण्डीक्रियमाण ओदनादिर्यदा व्यञ्जनदध्यादिसम्बन्धेन स्वयमेव झटिति ग्रासताम्प्राप्नोति तदैतदुदाहरणम् ।

*व्याख्यानादिति । उत्तरसूत्रारम्भमूलकव्याख्यानादित्यर्थः ।

विभाषाऽभ्यव ( पा० सू० ६-१-२६ ) । अत्र विभाषाभ्यवादिति सिद्धे पूर्वग्रहणङ्किमर्थमत आह-*पूर्वग्रहणमिति । पूर्वशब्दाभावे "तस्मात्" ( पा० सू० १-१-६७ ) इति परिभाषयाऽभिसंशीनमित्यत्र समा व्यवधानान्न स्यादिति भावः । स्वोक्तरीत्या व्यवस्थितविभाषा भाष्योक्तस्थल एवेत्याशयेनाह-*एतदपीत्यादि ।

अञ्चोऽनपादाने ( पा० सू० ८-२-४८ ) । अनपादाने इत्यसमर्थस-

न त्वपादाने इति । चेत्तदीयमपादानं न प्रयुज्यत इत्यर्थः । व्यक्तमिति त्वङ्गेः प्रकाशार्थस्य रूपं *तदर्थादञ्चेस्तु निष्ठाऽनभिधानमिति बोध्यम् ।

यस्य विभाषा ( पा० सू० ७-२-१५ ) । आर्द्धधातुकस्येत्यनुवर्त्तते, इड्विहित इत्य*ध्याहारः । यस्येति यद्यप्यध्याहारेण लब्धुं शक्यं तथापि स्पष्टार्थं तत् । अत्रैकाच इति वर्त्तते । तेन 'दरिद्रितः' इत्यत्र न निष्ठादेश इति । *स्वरप्रत्यययोरुदाहरणं 'क्षीवः' 'क्षैविकः' । अत्र च "निष्ठा च द्व्यजनात्" ( पा० सू० ६-१-२०५ ) इति निष्ठान्तस्य द्व्यचो विधीयमानमाद्युदात्तत्वं नौद्व्यचष्ठन् च न प्राप्नोति । इदञ्चेट्सहितस्य निष्ठातकारस्य लोपो निपात्यत इति पक्षे । यदा तु तकारमात्रस्य लोपो निपात्यते तदा नेदं प्रयोजनमिति व्यर्थन्तयोर्ग्रहणम् । इड्विधिग्रहणन्तु क्षीबे उल्लाघे वेड्व्यावृत्तये ।

---

भासः । "असूर्यललाटयोः" ( पा० सू० ३-२-३६ ) इतिवत् । अपादानवाचकस्य प्रयोगे नेत्यर्थः । *तदर्थात्=प्रकाशार्थात् । एतेन व्यक्तमित्यत्र नत्वापत्तिर्निरस्ता । उदक्तमुदकङ्कूपादित्यस्य कूपापादानकोद्धरणकर्मोदकमित्यर्थः ।

यस्य विभाषा ( पा० सू० ७-२-१५ ) । *अध्याहार इति । शब्दाध्याहार इत्यर्थः । यस्येति षष्ठ्यर्थस्यार्द्धधातुकस्येत्यत्रान्वयः । यदीयार्द्धधातुकस्येड् विकल्पेन विहितस्तस्मान्निष्ठाया इड् न स्यादित्यर्थः ।

निष्ठादेशः षत्वस्वरप्रत्ययेड्विधिषु ( का० वा० ) । वृक्ण इति । 'ओव्रश्चू' छेदने, अस्मान्निष्ठायां "ग्रहिज्या" ( पा० सू० ६-१-१६ ) इति सम्प्रसारणम् । "ओदितश्च" ( पा० सू० ८-२-४५ ) इत्यस्य निष्ठादेशविधायकस्यासिद्धत्वात् "स्कोः" ( पा० सू० ८-२-२९ ) इति सलोपः । "यस्य विभाषा" ( पा० सू० ७-२-१५ ) इतीडभावः । निष्ठादेशस्य नत्वस्य "व्रश्च" ( पा० सू० ८-२-३६ ) इति षत्वे कर्त्तव्ये सिद्धत्वात्परत्वान्नत्वे षत्वाभावे "चोः कुः" ( पा० सू० ८-२-३० ) इति कुत्वम् । *स्वरप्रत्यययोरिति । उभयोरुदाहरणमित्यर्थः । क्षीवृधातोर्निष्ठाया इटि कृते "अनुपसर्गात्फुल्लक्षीव" ( पा० सू० ८-२-५५ ) इत्यनेनेट्सहिततकारस्य लोपे निपातनेन स्वरे प्रत्यये च कर्त्तव्ये यदि निष्ठादेशस्यासिद्धत्वं स्यात्तर्हि त्र्यच्कत्वान्निष्ठादेशे सत्यपि स्वरानापत्तिः "नौ द्व्यचः" ( पा० सू० ४-४-५७ ) इति ष्ठंश्च न स्यादिति क्रमेण बोध्यम् ।

तकारमात्रस्य लोपनिपातनपक्षे तु इडागमे कर्त्तव्ये तस्य लोपस्य सिद्धत्वादिड्भावे स्वरे कर्त्तव्ये तलोपस्यासिद्धत्वेपि द्व्यच्क एवायमिति स्वरो भवत्येव ।

परिस्कन्दः प्राच्य (पा०सू०८-३-७५) इदन्निपातनन्निष्ठान्तस्य अचप्रत्य-

परिस्कन्दः प्रा ( पा० सू० ८-३-७५ )। *अत्रैव निपातना-न्निष्ठायां तलोप इति मते अस्यात्रोपसंन्यासः । अच्प्रत्ययान्ते षत्वाभाव-निपातनमिदमित्यन्ये । (१) (एतन्मतद्वयमपि वृत्तौ स्पष्टम् । )

वातश्चेदिति । इदं वृत्तिरीत्या । एतन्मते 'निर्वाणोऽग्निर्वाते-न' इति प्रयोगो वातस्य करणत्वे बोध्यः । भावे 'निर्वातं वातेन' इत्येव । *भाष्ये तु "अवाताभिधान इति वक्तव्यं निर्वाणोग्निर्वातेन" इत्युक्तम् । भावे निर्वाणं वातेनेत्येवेति तदाशयः ।

क्षाम इति । 'क्षै' क्षये इत्यस्य । "आदेचः" ( पा० सू० ६-१-४५ ) इत्यात्वम् ।

स्त्यः ( पा० सू० ६-१-२३ )। प्रेत्यत्र पूर्वग्रहणं 'प्रसंस्तीतः' इत्यर्थं, षत्वन्तु न "प्रस्त्यः" (पा० सू० ८-२-५४) इत्युक्तेः । अत्र 'स्त्यै' 'ष्ट्यै' इत्युभयोरपि ग्रहणमिति वृत्तिः । एतत्सर्वं भाष्ये न दृष्टम् ।

लत्वमिति । उत्वं तु चरफलोरित्यनुवर्त्तमाने "ति च" (पा० सू० ७-४-८९) इत्येव सिद्धम् । तत्र हि 'फल' निष्पत्तौ 'ञिफला' इत्युभयोरपि ग्रहणं *व्याख्यानात् । एकानुबन्धकपरिभाषाया असार्वत्रिकत्वात् फलनिष्पत्तावि-त्यस्य नात्र निपातनम् । इडभावस्यापि निपात्यतापत्तेः । एतेन 'फुल्ल' विकसने इत्यस्य निष्ठातलोपो निपात्यत इत्यपास्तम् । 'फलेर्लत्वे' इत्यादिभाष्यवि-रोधाच्च । न चानुपसर्गादित्युक्तेः 'परिकृशः' इत्यस्यानुपपत्तिः । परितः प्रा-प्तः कार्श्येनेत्यर्थेन परेः कृशं प्रत्यनुपसर्गत्वात् । वृत्तौ कृशशब्दः कार्श्यप-

यान्तस्य वेतिमतभेदेनाह-*अत्रैवेति । प्रत्ययभेदेन स्वरभेदस्तु भवत्येव ।

प्रतिस्तब्धनिस्तब्धौ च ( पा० सू० ८-३-११४ ) । सौत्रस्य स्तन्-भुधातोर्निष्ठायां "यस्य विभाषा" ( पा० सू० ७-२-१५ ) इतीडभावे "स्तन्भेः" ( पा० सू० ८-३-६७ ) इति षत्वे प्राप्ते तदभावस्य निपातनमिदम् ।

निर्वाणोऽवाते ( पा० सू० ८-२-५० ) । समानपदत्वाभावाण्णत्वा-भावे प्राप्ते निपातनमिदम् । कर्तर्यत्र निष्ठा वाधातोर्गत्यर्थत्वात् । *भाष्ये त्वि-ति । कर्तर्येव निपातनमितिनियमाभावाद्भावे कर्मणि वा प्रत्यय उभयथा समु-दायेन वातानभिधाने णत्वमित्यर्थः ।

अनुपसर्गात्फुल्ल ( पा० सू० ८-२-५५ ) । निरनुबन्धकपरिभाषया फलनिष्पत्तावित्यस्यैवेदन्निपातनं युक्तमित्याशङ्कायामाह-*व्याख्यानादिति । भाष्याक्षरध्वनितव्याख्यानादित्यर्थः । तत्र हि-"फलेर्लत्वे उत्पूर्वस्योपसंख्यानं

( १ ) कंसान्तर्गतो ग्रन्थ आदर्शपुस्तके नास्ति ।

र इति *भाष्ये स्पष्टम् । इष्यत इति । *वृत्तिकारैरिति शेषः । इटोऽभावश्चेति । *"निष्ठादेशः षत्वस्वरप्रत्ययेड्विधिषु सिद्धः" इति सिद्धत्ववार्त्तिके इड्विधिग्रहणमेतन्निपातनासिद्धार्थानुवाद इति भावः ।

तादौ क्तितीति । निर्मूलं निष्फलञ्च । ताभ्यां परस्य तादेः कित एव सम्भव इत्याशयो वा ।

नुदविदोन्द ( पा० सू० ८–२–५६ ) । मण्डूकप्लुत्या "रदाभ्याम्" ( पा० सू० ८–२–४२ ) इत्यतो न इति वर्त्तते । ह्रियोऽप्राप्ते ऽन्येषां प्राप्ते विभाषेयम् । परेणेति । यदि तु पूर्वसाहचर्यमन्तरङ्गमित्युच्यते तदा *व्याख्यानादेवास्य ग्रहणं बोद्ध्यम् ।

---

कर्त्तव्यम् उत्फुल्लोऽनुतङ्कथवति । अत्यल्पमिदमुच्यते—उत्पूर्वादिति । उत्फुल्लसम्फुल्लयोरिति वक्तव्यम्" इत्युक्तम् । अत्र फलेर्लत्वे इत्यभिधानेन 'फुल्ल' विकसने इत्यस्य नेदन्निपातनम् । लत्व इत्येवोक्तवतु इडभाव इत्यपि । तेनेडभावस्य "आदितश्च" ( पा० सू० ७–२–१६ ) इतिसिद्धिः सूचिता । एवञ्च 'ञिफला' धातोः क्ते इडभावेऽपि "चरफलोश्च" (पा०सू०७–४–८७) इत्यनेनोत्वम्भवत्येवेति तस्मिन्सूत्रे उभयोर्ग्रहणमस्तीति । *भाष्ये स्पष्टमिति । तत्रहि-"अनुपसर्गादित्युच्यते तत्रेदन्न सिध्यति । परिकृशमिति" । एवमाशंक्य "कृशेः क एष विहित इगुपधात् । नैतन्निष्ठान्तम् । किन्तर्हि कृश एष इगुपधात्को विहितः । नैवं शक्यम् । स्वरे हि दोषः स्यात्" । (निष्ठान्तस्य चेद्रूपन्तदा तनूकरणार्थकाद्धातोः कर्मणि क्तप्रत्यये "गतिरनन्तरः (पा०सू०६–२–४९) इत्यनेन परिकृशशब्दस्याद्युदात्तत्वं भवति । तनूभवनार्थात्कृशेःकर्तरि कप्रत्यये "थाथघञ्क्ताजप्" (पा.सू.६-२-१४४) इत्यनेनान्तोदात्तत्वम्प्रसज्येतेत्यर्थः।एवमाशङ्क्य) "एवन्तर्हि पदस्य लोपोऽत्र द्रष्टव्यःपर्यागतः कार्श्येन परिकृशः" इत्युक्तम्।तत्र कैयटः-गम्यमानार्थत्वादप्रयोग एव लोपः,तत्र गमिम्प्रति परिरुपसर्गो न तु कृशिम्प्रतीत्यनुपसर्गत्वात्परेर्निष्ठान्त एव कृश शब्द इति "तत्पुरुषे तुल्यार्थ" ( पा० सू० ६–२–२ ) इत्यव्ययस्वरेणाद्युदात्तता" इति । ननु कवत्वेकदेशस्यापि निपातनमिष्यते इत्यनुपपन्नम्भाष्यानुक्तत्वात् अत आह-*वृत्तिकारैरिति । ननु निष्ठादेश इतिवार्त्तिकेनेड्भावे सिद्धे तादेशनिपातनस्वीकारो व्यर्थोऽत आह-*निष्ठादेश इति ।

आदितश्च ( पा० सू० ७–२–१६ ) । नन्विदं सूत्रं "विभाषा भावादिकर्मणोः" ( पा० सू० ७–२–१७ ) इतिसूत्रेण सहैव पाठ्यमेवञ्च तत्रेड्विकल्पात् 'यस्य विभाषा' ( पा० सू० ७–२–१५ ) इतिं निषेधेनान्यत्रेड्भावे सिद्धे योगविभागवैयर्थ्यमिति चेन्न । 'यदुपाधेर्विभाषा तदुपाधेः प्रतिषेधः' इति ज्ञापनार्थत्वात् । तेन "विभाषा गमहन" ( पा० सू० ७-२-६८ ) इत्यनेन विशिसाहचर्याच्छविकरणस्य विकल्पविधानात्तस्मादेव निष्ठाया इण्निषेधो न तु लुग्विकरणान्निष्ठाया इति फलसिद्धेरिति भाष्ये स्पष्टम् । *व्याख्यानादिति । "वित्तो भोग" ( पा० सू० ८–२–५८ ) इति सूत्रभाष्यसम्मतव्याख्याना-

उक्त इति। एतेन 'ओलस्जि' इत्यादेर्लग्न इत्यत्रेण्निषेधेनास्य सिद्धत्वात् "नेड्वशि" (पा० सू० ७–२–८) इति निषेधे सिद्धेऽत्रेदिद्ग्रहणं व्यर्थमित्यपास्तम्। वरमनादाविति परिगणनेनात्र तदप्राप्तेः।

ख्यात इति। ख्यादेशस्य ख्शादित्वात्स्वतन्त्रस्यार्द्धधातुके प्रयोगाभावाच्चात्र ख्याग्रहणं व्यर्थमिति बोद्ध्यम्।

क्सौ चेट्त्वादिति। "एकाचः" (पा० सू० ७–२–१०) इति निषेधाच्चेत्यपि बोद्ध्यम्।

भित्तमिति। शकलत्वजातिविशिष्टे रूढोऽयम्। तेन भित्तशकलयोः पर्यायत्वान्न सहप्रयोगः। निष्पन्नस्य शकलस्यान्यस्मिन्विदारणे प्रतिपाद्ये भिन्नमिति भवत्येव। किंच भिन्नं विदीर्णमिति सामान्योपक्रमे भित्तमिति प्रयोग इति स्पष्टं भाष्ये।

इण्निष्ठायाम् (पा० सू० ७–२–४७)। इडिति वर्त्तमाने पुनरिड्ग्रहणं नित्यत्वाय। *निष्ठायामित्येतत्तु "यस्य विभाषा" (पा० सू० ७–२–१५) इति निषेधबाधनार्थं स्यात्।

घसत्तिक्षु (पा० सू० ७–२–५२)। अत्रापीड्ग्रहणं प्राग्वत्।

पूजार्थादिति। पूजाविषयार्थकादित्यर्थः। "नागांश्चाञ्चितगामिनः" इत्यादौ समाधानेन पूजा गम्यत इति तत्रापि इट् सिद्धः।

न तु गार्ध्ये इति। गार्ध्यार्थदैवादिकस्य सूत्रे न ग्रहणं किंतु विमोहनार्थतौदादिकस्यैव। विमोहने किम्?, लुब्धो वृषलः। धनाकाङ्क्षावानित्यर्थः। उदाहरणे प्राप्तमोह इत्यर्थः।

---

क्तिस्यर्थः। तत्र हि—

"वित्तेस्तु विदितो निष्ठा विद्यतेर्विन्न इष्यते।
विन्तेर्वित्तश्च विन्नश्च भोगे वित्तश्च विन्दतेः" ॥ इत्युक्तम्।

ऋणमाधमर्ण्ये (पा० सू० ८–२–६०)। ऋणशब्दस्याधमशब्देन बहुव्रीहिः। ऋणस्याधमत्वं च दुःखप्रदत्वात्। ततो भावे ष्यञ्। तदन्तस्य च तादृशव्यवहारे लक्षणा। एवञ्च विषयत्वनिरूपकत्वान्यतरसम्बन्धेन तादृशव्यवहारसम्बन्धिनि गम्यमाने ऋणमिति निपात्यते। निरूपकत्वनिवेशे मानं तु "धारेरुत्तमर्णः" (पा० सू० १–४–३५) इति निर्देश एव।

नन्विह निष्ठायामित्येव सूत्रमस्तु नित्यार्थत्वञ्चास्यारम्भसामर्थ्याद्भविष्यति, विकल्पस्य "निरः कुषः" (पा० सू० ७–२–४६) इत्यनेन सिद्धेरत आह–*निष्ठायामित्येतत्त्विति। न च 'निरः कुषोऽनिष्ठायाम्' इत्येव सूत्रमस्तु ए-

पूङः क्त्वा ( पा० सू० १-२-२२ ) । ङकारोच्चारणं स्पष्टार्थम् । इड्विधौ वकारनिर्देशेनापि पूञो निवृत्तिसिद्धेः ।

आदिकर्मणिनिष्ठेति । आद्येषु क्रियाक्षणेषु भूतेष्वपि क्रियाभूतत्वाभावादप्राप्ते निष्ठेति वचनम् आदिभूते एवावयवे समूहरूपमा*रोप्य तस्य समाप्तया भूतत्वं यत्राश्रीयते तदेदं प्रत्याख्यातम् । तदुक्तं "यत्कृतं तदभिसमीक्ष्यैतत् प्रयुज्यते प्रकृतः कटं प्राकार्षीत्कटं देवदत्त इति । यदा वेणिकान्तः कटोभिसमीक्षितः तदा करोति कटमित्येव भवति" इति भाष्ये ।

विभाषा भा [ पा० सू० ७-२-१७ ] । "आदितश्च" [ पा० सू० ७-२-१६ ] इति निषेधे प्राप्ते इदम् ।

श्वेण्निष्ठेति । अस्यानिटोऽभावादिदं स्वरूपकथनम् । *अत्र शृषिः सर्वोऽपि गृह्यते । अविस्पष्टामिति । धात्वर्थनिर्देशस्योपलक्षणत्वे तितिक्षाग्रहमेवेदं मानम् ।

श्वीदित इतीति । ननु अन्तरङ्गत्वात्संप्रसारणपूर्वत्वयोः "श्र्युकः" ( पा० सू०७-४-११ ) इत्येव निषेधे सिद्धे श्विग्रहणं व्यर्थमिति चेन्न । "श्र्युकः" [ पा० सू० ७-४-११ ] इत्यत्रोपदेश इत्यनुवृत्तेः* । अत एव 'स्तीर्त्वा'इत्यादिसिद्धिः । शून इति । *अत्राल्विधित्वेऽपि "हलः" [ पा० सू० ६-४-२ ] इत्यारम्भसामर्थ्यात्पूर्वरूपस्य संप्रसार-

---

वञ्चानिष्ठायामित्यनेन निष्ठायां विकल्पस्य व्यावृत्तौ पर्युदाससामर्थ्याच्च "यस्य विभाषा" ( पा० सू० ७-२-१५ ) इति निषेधस्यापि बाधे सिद्धे इहेड्ग्रहणं व्यर्थमिति वाच्यम् । "वेः स्कन्देरनिष्ठायाम्" ( पा० सू० ८-३-७३ ) इतिवत्कृत्येव विकल्प इति शङ्का स्यादतः पृथङ्निष्ठायामित्यस्यावश्यकत्वात् । एवञ्चेहेड्ग्रहणाद्वाशब्दस्यासम्बन्ध इति सिद्धम् । "तीषसह" ( पा० सू० ७-२-४८ ) इत्यादावुत्तरत्र तु सम्बध्यत एव ।

*आरोप्येति । वर्तमाने यत्र प्रत्ययस्तत्रापि यत्किञ्चिदवयवसद्भावक्षणे सर्वेषामवयवानामविद्यमानत्वेऽपि तस्मिन्समूहत्वारोपेण वर्तमाने प्रत्ययस्तथेहापीति भावः ।

*उपदेश इत्यनुवृत्तेरिति । तच्चोको विशेषणम् । प्रत्ययोपदेश इति प्रत्यासत्त्या कल्पना कार्या । तेन लूञादिभ्यः क्ते निषेधस्य सिद्धिः । न च जागरितमित्यत्रापि निषेधापत्तिरिति वाच्यम् । एकाज्ग्रहणस्याप्यनुवृत्तेः सम्प्रसारणत्वस्य स्थान्यलवृत्तित्वेनानल्विधावितिनिषेधे प्राप्ते आह-*अत्रेति ।

णत्वम् । *तत्सामर्थ्यादित्र *"कृदतिङ्"[ पा० सू० ३-१-९ ] सूत्रस्थभाष्यरीत्यैकादेशस्य "अचः परस्मिन्" । [ पा० सू० १-१-५७ ] इति स्थानिवत्त्वं न । वतः तत इति "अनुदात्तोपदेश" [ पा० सू० ६-४-३७ ] इत्यनुनासिकलोपः । अनित्यत्वज्ञापनाच्चेति । इदं भाष्ये न दृश्यते । कृन्ततेरीदित्त्वमनार्थमिति परे । दरिद्रित इति । "तनिपतिं" [ का० वा० ]इति वेट्कृतस्थालमाप्तिः ।

यदि मन्थादिसाधने धात्वर्थे क्षुब्धादयो निपात्यन्ते तर्हि 'क्षुभितं मन्थेन'इति न स्यादत आह-समुदायेनेति । अन्यत्र प्रयोगस्तु सादृश्यात् । 'स्वान्तशब्देन बाह्यविषयेषु अविक्षिप्तमनाकुलं मन उच्यते' इति कैयटः ।

ननु धृषेरादित्त्वाद्वि*कल्पे प्राप्ते तदंशे नित्यार्थो विधिः स्यात्तत्श्च-भावादिकर्मभ्यामन्यत्र वैयात्याभावेऽपि "आदितश्च"[पा० सू० ७-२-१६] इति निषेध एव स्यादत आह-भावादीति । वैयात्यम्=*अविनीतता ।

---

ननु हल इत्येतत्सामर्थ्यादित्यसङ्गतमेकादेशे कृतेऽपि परत्वादन्त-वद्भावस्य प्रवृत्त्या सम्प्रसारणत्वस्य सुलभत्वादत आह-*तत्सामर्थ्यादिति । "हलः" ( पा० सू० ६-४-२ ) इति सूत्रारम्भसामर्थ्यादित्यर्थः । अयम्भावः-यद्यपि "अन्तादिवच्च" ( पा० सू० १-१-८५ ) इति सूत्रम्परन्तथापि विप्रति-षेधसूत्रे परशब्दस्येष्टवाचकतया पूर्वोऽपि "अचः परस्मिन्"(पा० सू० १-१-५७) इति स्थानिवद्भावः स्यात् । तत्र दृष्टान्तमाह-*कृदतिङ्सूत्रस्थभाष्यरीत्येति । तत्र यथाऽतिङ्ग्रहणाभावे चिकीर्षतीत्यत्र शपा सहैकादेशे कृते यदि तिङः कृत्संज्ञा स्यात्तदा तुक् स्यादितिप्रयोजनमुक्त्वा पूर्वविप्रतिषेधेनान्तवद्भावस्य "अचः परस्मिन्" ( पा० सू० १-१-५७ ) इति स्थानिवद्भावेन बाधनात्तुकोऽ-प्राप्त्याऽतिङ्ग्रहणम्प्रत्याख्यातम् । तथेहापि प्राप्तः "अचः परस्मिन्" ( पा० सू० १-१-५७ ) इति स्थानिवद्भावो न भवति "हलः" ( पा० सू० ६-४-२ ) इति सूत्रारम्भसामर्थ्यादिति । मूले-अनायाससाध्य इति । क्षुण्णमाषधमुष्णोदके प्रक्षिप्तश्चेत्तस्मिन्नेव काले यज्जायते तत् फाण्टमिति ।

धृषिशसी वैयात्ये ( पा० सू० ७-२-१९ ) । *विकल्पे प्राप्त इति । आदिकर्मणि यत्र निष्ठेत्यादिः । भावादिकर्मणोर्वैयात्ये धृषेर्वृत्त्यभावे मानमाह-मूले-अत एवेति । तत्र वृत्तित्वाभावादेव । *अविनीततेति । विरुद्धं यथा स्या-त्तथा यातो वियातस्तस्य भावो वैयात्यमितिव्युत्पत्त्याऽविनीतत्वं पुरुषवृत्ति-धर्म उच्यते । 'ञिधृषा' धातोरादित्त्वादिडभावे सिद्धे नियमार्थोऽयं योग इति भावः । एवं सति वैयात्याभावेऽस्मान्निष्ठाया इडिष्ट एव चेद् धृषेरादित्त्वाभावेन सिद्धे वैयात्ये इडभावोऽस्य सूत्रस्य विधायकत्वेऽपि भविष्यतीति धृषेरादित्वं

हरदत्त इति । *अत्रारुचिबीजन्तु अवैयात्ये भावादिकर्मणोरनभिधाने मानाभाव इति तन्नादित्त्वं सफलमिति, तदाह—मावत्स्तित्यादि ।

इदितो नलोपश्चेति । अनिदितस्तु नलोपवर्जमिति भावः । इदं वृत्तिरीत्या । भाष्ये तु इदित एव निपातनम् । अनिदितस्तु 'दृहितमेव' इत्युक्तम् ।

बृहबृहीति । प्रभौ तदर्थस्यैवानुगमादिति भावः ।

घुषिर [ पा० सू० ७-२-२३ ] । शब्देनाभिप्रायप्रकाशनं= विशब्दनं, तदाह—शब्देनेति ।

णिलुक् चेति । तेनोपधागुणो न । अधीयमाने इति । तदर्थे चेत् क्तान्तं वर्त्तते इत्यर्थः । वृत्तं छन्द इति । कर्मणि क्तः । वृत्तं छन्दस इति प्रयोगस्तु केवलात् वृत्तेरकर्मकाद्भावे बोध्यः । तत्र हि "यस्य विभाषा" [ पा० सू० ७-२-१५ ] इतीट्प्रतिषेधः, ण्यन्तात्तु भावे क्तो दुर्लभः । "नपुंसके भावे" [ पा० सू० ३-३-११४ ] इत्यस्याप्यकर्मकेभ्य एव विधानादिति स्पष्टं भाष्यादौ ।

केवलः श्रातिः कर्मव्यापारे वर्त्तते ततोऽकर्मकत्वात्कर्तरिक्तस्तदाह—स्वयमेवेति । ततो णिचि पचिना समानार्थात्कर्मणि, तदाह—पक्कमिति । व्यवस्थितविभाषालभ्यवार्तिकसिद्धार्थकथनं क्षीरेत्यादि । तथा च भाष्यम्—"किं निपात्यते?, श्राश्रप्योः शृभावः" इति । "श्रातिः पच्यमानकर्तृकव्यापाररूपे कर्मकर्तृविषयपचयर्थे वर्त्तते ततोऽकर्मकत्वात्कर्तरिक्तः । णिजन्तस्तु गुरुपपचयर्थे, ततः कर्मणिक्तः—शृतं क्षीरं देवदत्तेन"इति कैयटः । "क्षीरहविषोरिति वक्तव्यम् । क मा भूत्?, श्राणा श्रपिता वा यवागूः"इति । श्रपेः पुनर्व्यापारे णिचि पाचनालक्षणेर्थे 'श्रपितङ्क्षीरं

---

व्यर्थमिति हरदत्तमतं खण्डयति—*अत्रारुचीत्यादिना । आदित्त्वसामर्थ्यादेवानभिधाने प्रमाणमस्तीति कल्प्यत इति भावः ।

अभेश्चाविदूर्ये ( पा० सू० ७-२-२५ ) । अत्राविदूरशब्दाद्भावे ष्यञ् ब्राह्मणादित्वात् । "न नञ्पूर्वात्" ( पा० सू० ५-१-१२१ ) इति निषेधस्त्वत एव निपातनात्र ।

णेरध्ययने वृत्तम् ( पा० सू० ७-२-२६ ) । अधीयत इत्यध्ययनं "कृत्यल्युटः" ( पा० सू० ३-३-११३ ) इति बाहुलकात्कर्मणि ल्युट् । तदाह—अधीयमान इति ।

देवदत्तेन यज्ञदत्तेन'इत्येव न तु शृतमिति। 'अपेः शृतमन्यत्र हेतोरिति वक्तव्यम्'इति वार्तिकात्। अन्तर्भावितण्यर्थपचेर्घञि पाकपदेन तस्याप्यभिधानसम्भव इति तदाशयः। एतेन तस्य पाकत्वाभावादेव निपातनाप्राप्त्या इदं वार्तिकं व्यर्थमिति कैयटोक्तं परास्तम् । "क्षीराज्यहविषां शृतम्" इत्यमरस्य तु प्रमादः।

वा दान्त ( पा० सू० ७–२–२७ ) । दान्तशान्तयोर्णिलोपेऽभावौ निपात्येते। "अनुनासिकस्य" [ पा० सू० ६–४–१५ ] इति दीर्घः। दस्तस्पष्टच्छन्नेषु णिलुगिडभावौ। ज्ञप्ते अमित एव णिलुगिडभावौ, पक्षे ज्ञापित इति केचित् । ज्ञपमिचेति चुरादेर्णिलोपेडभावौ इति कैयटः। छन्न इति त्वमित एव निपातनमिति स्पष्टं भाष्ये ।

रुष्यम [ पा० सू० ७–२–२८ ]। सङ्घुषास्वनोर्विषये उभयत्र विभाषेति "नवा" [ पा० सू० १–१–४४ ] इति सूत्रे भाष्यम् ।

लोमस्विति । कर्तृष्वित्यर्थः । इदम् "अजर्यम्" [ पा० सू० ३–१–१०५ ] इत्यत्र भाष्ये स्पष्टम्। केशानामपि लोमत्वात्तत्रापि विकल्पः। अन्यत्र त्विति। अर्थभेदेन रूपद्वयम्। अर्थैक्येऽपि (१)ईदृशे विषये द्वैरूप्याय सूत्रम्।

अपचिते चायश्चिभाव इडभावश्च निपात्यते । क्तिनि नित्यं चिर्वाच्यः—अपचितिः ।

प्यायः पी [ पा० सू० ६–१–२८ ] । अत्र भाष्यम्—आङ्पूर्वादन्धूधसोरेव । नेह—आप्यानश्चन्द्रः। तथा आङ्पूर्वादेवान्धूधसोः। नेह–प्रप्यानोऽन्धुः, प्रप्यानमूधः" इति। आङ्वादेवेति नियमेनोपसर्गान्तरमेव निवर्त्यते। तेन केवलस्याप्यापत्तिः । आङाश्रयणेन नियमद्वयविधानात् केवलस्य सर्वत्र पीभावः पीनोन्धुः पीनमूधः पीनं पुण्यं पीनमुखी कन्येति। तन विभाषाग्रहणानुवृत्तिरेवात्र लभ्यते व्यवस्थितेत्यादिमूलन्तु वृत्त्यनुरोधेनेति बोद्ध्यम्।

द्यतिस्यति [ पा० सू० ७–४–४० ] । दोसोमास्थेति सिद्धे श्तिपा निर्देशः उपसर्गात्सुनोतीतिवत् । ईत्वेत्यादि । तत्त्वन्तु स्वविषये परत्वादस्य बाधकमिति भावः। मामाङ्किति। गामादाग्रहणेष्ववि-

(१) 'विस्मितप्रतिघातयोर्द्वैरूप्याय'इति मुद्रितपुस्तके पाठः।

शेषा इति भावः ।

*तकारादाविति । “यस्मिन्विधिः” [ प० भा० ] इति न्यायादयमेवार्थो न तु तान्ते दाधाताविति भावः । *स्वशास्त्रकृतपठितचर्त्वासिद्धत्वबाधापेक्षया “यस्मिन्विधिः” [ प० भा० ] इत्यस्या व्याकरणान्तरपठिताया बाधेन तान्तदाधातुघटितोत्तरपद इत्येवार्थ उचित इति । *तान्ते दोषो दीर्घत्वं स्याद्दान्ते दोषो निष्ठानत्वं धान्ते दोषो घत्वप्राप्तिः,थान्तेऽदोषस्तस्मात्थान्त इत्येतद्भाष्याशयः । द इति च षष्ठी सप्तम्यर्थे । सन्निपातेति । न च नत्वघत्वयोरसिद्धत्वादस्या अप्रवृत्तिरिति वाच्यम् । असिद्धस्यापि तद्विघातकविधेरनया वारणस्य कुन्मेजन्तसूत्रे भाष्ये *ध्वनितत्वात् । *जग्धमित्यादौ धत्वानापत्त्या ईदृशे विषये सन्निपातपरिभाषाया अनित्यत्वाश्रयणमावश्यकमिति तु भाष्याशयः ।

---

दो दद्घोः ( पा० सू० ७-४-४६ ) । अयमादेशस्थान्तः । इह जश्त्वे कृते निर्देशस्य तान्तादेशपक्षेऽप्युपपत्तिरित्याशयेन मूले तान्तो वाऽयमादेश इत्युक्तम् । “दस्ति” ( पा० सू० ६-३-१२४ ) इति सूत्रस्य दाधातोर्यस्तान्तादेशस्तस्मिन्सत्युपसर्गस्य दीर्घ इत्यर्थाभिप्रायेण शङ्कते—न चैवमिति । *एवम्=आदेशस्य तान्तत्वे । दाधातोर्यस्तकारादेशस्तस्मिन्नित्यर्थे “यस्मिन्विधिः” इतिपरिभाषया तदादिविधिः स्यात्तथा च तकारादावुत्तरपदे दीर्घ इत्यर्थाभिप्रायेण समाधत्ते-*तकारादाविति । प्राचीनसम्मतसूत्रार्थरीत्या व्याख्याय भाष्यसम्मतसूत्रार्थाभिप्रायेणाह-*स्वशास्त्रेत्यादि । तान्तदाधाताविर्त्यर्थे “खरि च” ( पा० सू० ८-४-५५ ) इति चर्त्वे कृते आदेशस्य तान्तत्वमेवेति व्यावर्त्याभावेन नेदं व्याख्यानयोग्यङ्किन्तु यस्मिन्विधिपरिभाषालभ्यमेवेति शङ्कां वारयति । परिभाषासम्मतव्याख्याने चर्त्वस्यासिद्धत्वेनादेशस्यातान्तत्वपक्षे दीर्घव्यावृत्तिर्विशेषणस्य फलमिति बोध्यम् । तत्र परिभाषाबाधेन व्याख्यानमेवोचितमिति भावः ।“दो दद्”इत्यनेन थान्तस्यादेशस्य विधानमेवेत्यत्र भाष्यसम्मतिमाह-*तान्ते दोष इति । *ध्वनितत्वादिति । तत्र हि वृत्रहभिरित्यत्र नलोपे कृते ऐस्भावस्य प्राप्तौ सन्निपातपरिभाषया तद्वारणरूपस्य प्रयोजनस्य “नलोपः सुप्स्वर”(पा० सू०८-२-२)इत्यनेन नलोपासिद्धत्वेन वारणेनान्यथासिद्धिः कृता न त्वसिद्धस्य सन्निपातविघातकपदेनाग्रहणमित्यर्थप्रदर्शनेन ध्वनितमित्यर्थः । भाष्यकारेण दान्तत्वे निष्ठानत्वस्य धान्तत्वे धत्वप्राप्तिरिति यदुक्तन्तस्योपपत्तिमाह-*जग्धमित्यादाविति ।

अच उपसर्गात्तः (पा०सू०७-४-४७) । अच इत्यस्यैवानुवर्तमानं घोरिति विशेषणम् । अत्राच इति पदमावर्तते एकमुपसर्गस्य विशेषणन्तेन तदन्तविधिः, द्वितीयमादेशस्य तकारस्य स्थानिबोधनाय । अन्यथोपसर्गादितिपञ्चमी-

चशब्दादिति। अत एव प्रकृतसूत्रस्थं "प्रत्तमवत्तमित्यवकाशः" *इति भाष्यं "दस्ति" (पा० सू० ६-३-१२४) इति सूत्रस्थं 'नीत्ता' 'वीत्ता'इत्युदाहरणपरभाष्यञ्च सङ्गच्छते।

नीत्तमित्युत्तरं वीत्तमित्येव पाठः। सूत्तमिति त्वपपाठः। "गतिश्च" (पा० सू० १-४-६०)इति सूत्रे भाष्ये सोस्तत्वे उपसर्गत्वप्रतिषेधात्।

वाक्रोश (पा० सू० ६-४-६१)। अत्राप्यण्यदर्थ इति वर्त्तते।

निनदीभ्याम् (पा०सू०८-३-८९)। निपूर्वस्नातेः कौशलेऽर्थे निष्णान्तस्यैव प्रचुरप्रयोगदर्शनादिदमत्रोपन्यस्तम्।

कपिष्ठलो (पा० सू० ८-३-९१)। गोत्रमिह पारिभाषिकमिति *भाष्यस्वरसः। गोत्रप्रत्ययस्य प्रकृतित्वेन दृष्टो यः कपिष्ठलशब्द इति व्याख्येयम्। अस्यात्रोपन्यासः प्रासङ्गिकः, एवं "विकुशमिपरि" (पा० सू० ८-३-९६) इत्यस्यापि।

गत्यर्थाक (पा० सू० ३-४-७२)। "आदिकर्मणि" (पा० सू० ३-४-७१)इति सूत्रात् क्तः कर्त्तरि चेति वर्तते।

क्तोधिक (पा० सू० ३-४-७६)। स्थैर्यार्थाः *प्रायेणा-

---

निर्देशात् "आदेः परस्य" (पा०सू०१-१-५४)इति स्यादिति भावः। *इति भाष्यमिति। तत्र हि-"द्यतोरित्वादचस्त इत्येतद्भवति विप्रतिषेधेन। द्यतेरित्यस्यावकाशः- निर्दितं निर्दितवान्, अचस्त इत्यस्यावकाशः—प्रत्तम् अवत्तम्। इहोभयम्प्राप्नोति-नीत्तम् वीत्तम्। अचस्त इत्येतद्भवति विप्रतिषेधेन" इत्युक्तम्। यद्यपि दद्भावस्येत्वमपवादस्तथापि तद्वत्तत्वमप्यपवाद इत्यपवादयोर्विप्रतिषेधे परत्वात्तत्वं प्रवर्तत इति भावः।

कपिष्ठलो गोत्रे (पा० सू० ८-३-९१)। गोत्रेऽभिधित्सिते 'कपिष्ठल' इतिनिपात्यते। यः कपिष्ठलशब्दो गोत्रप्रत्ययप्रकृतित्वेन दृष्ट इति यावत्। *भाष्यस्वरस इति। तत्र हि—कपिष्ठलः कापिष्ठलिः कापिष्ठलायन इतिरूपस्य गोत्रे यूनि च सिद्धये "कपिष्ठलो गोत्रप्रकृतौ" इति वार्तिककृतोक्तम्। इदञ्च वार्तिकं यो दृष्ट इत्यस्याध्याहारेण प्रत्याख्यातमिति त्वन्यत्।

क्तोऽधिकरणे च (पा० सू० ३-४-७६)। अत्र चाद्यथाप्राप्तमित्युक्तन्तत्र स्थैर्यार्थात्कर्तरि प्राप्तिं दर्शयितुमाह—*प्रायेणाकर्मका इति। यथा स्थैर्यार्थक आस्धातुरकर्मकस्तस्मात् "गत्यर्थाकर्मक" (पा० सू० ३-४-७२) इत्यनेन कर्त्तरि प्राप्तिः, अयमेवाधिपूर्वश्चेत्तदा सकर्मकः एवमुपपूर्वश्च सकर्मकस्तदापि कर्त्तरि प्राप्तिः—आशित ओदनन्देवदत्त इति। अत्र हि न कर्मणिप्रत्ययः। ओदनपदाद् द्वितीयादर्शनात्। सकर्मकत्वाद्भावेऽपि न। कर्तरि त्व-

कर्मकाः । अत्र वदन्ति–"गत्यर्था" ( पा० सू० ३–४–७२ ) इत्यनेन सकर्मकेभ्योऽपि भावे क्तः, विशेषविधानात् । अत एव भ्रान्तं देशमित्यादि सिद्धम् । अत एव "अजर्यं सङ्गतम्" ( पा० सू० ३–१–१०५ ) इति सूत्रे "सङ्गते कर्तरिक्तस्य दृष्टत्वात्कर्तरीदं निपातनं, तर्हि कर्मण्यपि तत्र तस्य दृष्टत्वात् कर्मण्यपि स्यात्, जीर्यतेरकर्मकत्वात् तत्र न । एवन्तर्हि भावे ततः क्तस्य दृष्टत्वात्तत्र प्राप्नोति, तस्मात् 'कर्तरि निपातनम्' इति वक्तव्यम्" इति भाष्ये उक्तम् । अत एव "अन्यपदार्थे" ( पा० सू० २–१–२१ ) इति सूत्रे "मत्वर्थे बहुव्रीहिरिति वक्तव्यम् इह माभूत्–कष्टंश्रितमनेन" इति भाष्ये । अत्र हि भावे क्तो न कर्तरि कर्मणि वा । तथा हि सति कर्तृकर्मवाचकेनाप्रथमाया इत्युत्तरवार्त्तिकेन तत्र समासो दुर्वारः स्यात् । "क्तोऽधिकरणे च" (पा० सू० ३–४–७६) इत्यनेन भक्षणार्थेभ्यस्तु न भावे । व्यवहितपाठेन तत्र कर्तरि भावकर्मणोरित्यननुवृत्तेः। अत एव पीता ब्राह्मणाः इत्यादिसिद्धये कर्मक्तान्तादर्शआद्यजन्तताऽऽश्रिता भाष्यकैयटयोः । अत एवात्र सूत्रे 'चाद्यथाप्राप्तम्' इत्येव व्याख्यातम् । अत्राऽविवक्षितकर्मकाणामपि ग्रहणम् । नच "आशितः कर्ता" ( पा० सू० ६–१–२०७ ) इत्यत्रत्यभाष्यविरोधः । तत्रहि "आङ्पूर्वादशेः सकर्मकत्वात्कर्तर्यप्राप्तः क्तो निपात्यते" इत्युक्तम् । अन्यथा 'मातुः स्मर्यते' इतिवदविवक्षितकर्मत्वेनाकर्मकतायां सूत्रेणैव सिद्धे निपातनं व्यर्थं स्यादिति वाच्यम् । तस्य भाष्यस्य 'आशित ओदनं देवदत्तः' इत्याद्युदात्तस्येष्टत्वेन तदर्थं निपातनमित्याशयस्यापि वक्तुं शक्यत्वात् अत एव "आशितः कर्ता" [ पा० सू०६–१–२०७] इति निर्देशस्यायुक्तत्वं न विचारितं भगवता । *दत्तवानित्यर्थे दत्त इत्यादि तु नापाद्यं, विवक्षायाः प्रयोगाधीनत्वादित्यलम् । भुक्तमस्तीति । भुक्तमन्नमित्यर्थः ।

---

प्राप्त इत्याद्युदात्तस्यैतादृशस्य प्रयोगस्येष्टत्वेनेत्यर्थः । अत एव प्रकृते कर्मणोऽविवक्षाया अभावादेव यदि तथा स्यात्तदा भावे प्रत्ययेऽयुक्तोयन्निर्देश इत्यप्युक्तं स्यात् । ननु यदि "गत्यर्थ" ( पा० सू० ३–४–७२ ) इतिसूत्रेणाविवक्षितकर्मकाणामकर्मकत्वे चेद्भावे प्रत्ययं कृत्वाऽचूप्रत्ययान्तस्य प्रयोगस्तर्हि दत्तवानित्यर्थे दत्त इत्यपि स्यात् । कर्मक्तान्तान्मतुपि यथा दत्तवानिति भवति तथा तदन्तादजपि स्यात् । भावक्तान्ताद्वा तस्मिन् सति स्यादत आह—*दत्तवानित्यर्थ इति ।

इत्यादीति। अत एव *'सुवतः सुतः इत्यत्र वर्त्तमाने क्तः' इति "अजेर्वी" (पा० सू० २-४-५६) इत्यत्र कैयटः। "ञीतः क्तः" (पा० सू० ३-२-१८७) इत्यादौ मण्डूकप्लुत्या वर्त्तमान इति सम्बध्यते। चानशूनजिङोः सर्वकालताया "भूते" (पा० सू० ३-२-८४) इति सूत्रे भाष्ये उक्तेः।

*जीर्ण इति। "जीनो जीर्णो जरन्नपि" इत्यमरः।

तस्येति। 'अनन्तरस्य' इति न्यायेन "लिटः कानज्वा" (पा० सू० ३-२-१०६) इत्यत्र पूर्वलिट एव ग्रहणात्। योगविभाग उत्तरत्र क्वसोरेव सम्बन्धार्थः। कानज्वेति वाग्रहणन्तु पक्षे तिङ्श्रवणार्थम्। वासरूपन्यायस्त्वादेशेषु न। अत्रेदं वाग्रहणमेव लिङ्गमिति *ध्वनितं भाष्यकैयटयोरिति स्पष्टमेव। तेन सदादिभ्यो भूतसामान्ये लिटः पक्षे तिङामश्रवणम्। श्रतृविषये यथा तिङस्तथा वक्ष्यते। इमौ कानच्क्वसू छान्दसौ इत्यत्रैव भाष्ये स्पष्टम्। "विभाषा पूर्वाह्णापराह्णाभ्याम्" (पा० सू० ४-३-२४) इति सूत्रे 'पपुष इदं पपिवद्रूप्यम्' इति प्रयुक्तं,तेन

---

निष्ठाप्रसङ्गात्तत्सम्बन्धि कार्यजातं समुद्भाव्य प्रकृतं व्याचष्टे—सुयजोर्ङ्वनिप् (पा० सू० ३-२-१०३)। सुनोतेरिति। अत्रोभयपादिना यजिना साहचर्यात्सुनोतेरेव ग्रहणन्न तु'सु'गतौ 'षु'प्रसवैश्वर्ययोरित्यनयोः।

*जीर्णइति। अत्र जृधातोः कर्तरि प्रत्ययः।

*ध्वनितमिति। प्रकृतसूत्रभाष्ये "कानच्क्वसोर्वावचनञ्छन्दसि तिङो दर्शनात्"इत्युक्तं तेन ध्वनितमित्यर्थः। "हशश्वतोर्लङ् च"(पा०सू०३-२-११६)इत्यनेन त्वादेशगतवैरूप्यमादाय लकारविषये वासरूपन्यायो न प्रवर्तत इत्येव ज्ञापनमिति भावः। यत्तु वृत्तौ "छन्दसि लिट्" [ पा० सू० ३-२-१०५ ] इतिसूत्राल्लिड्ग्रहणानुवृत्तौ विभक्तिविपरिणामेन च सिद्धे पुनर्लिड्ग्रहणेन लिट्सामान्यस्यादेशो ज्ञाप्यत इति प्रकृते वावचनमित्युक्तम्, तन्न। प्रकृतभाष्यविरोधात्। तत्र हि-कानच्क्वसोर्वावचनञ्छन्दसि तिङो दर्शनात्। छन्दसि तिङपि दृश्यते-'अहं सूर्यमुभयतो ददर्श' 'अहं द्यावापृथिवी आततान'इति। न वाऽनेन विहितस्यादेशवचनात्। न वा एतत्प्रयोजनमस्ति। किङ्कारणम्?। अनेन विहितस्यादेशवचनात्" एवमुक्त्वा केन विहितस्यादेश इत्याकाङ्क्षायां "छन्दसि लुङ्लङ्लिटः" [ पा० सू० ३-४-६ ] तङः श्रवणम्भविष्यति" इति समाधाय "तदेतद्वावचनन्तिष्ठतु तावत्सांन्यासिकम्" इत्युक्तम्। तत्र तदेतदितिप्रतीकमुपादायोत्तरत्रोपयोक्ष्यत इत्युक्तं कैयटेन। के चित्तु तस्य धातुसम्बन्धे विधानेनाधातुसम्बन्धे पक्षे भूतसामान्ये लिट्स्थानिकतिङः श्रवण-

लोकेऽपि क्वचित् क्वसोः साधुतेति सूचितम् । प्रकृतसूत्रस्थभाष्यं त्व*-ञ्जूप्रकृतिकक्वसुपरमिति बोध्यम् ।

एकाज्ग्रहणसामर्थ्यलभ्यमाह—कृतद्वित्वेति । द्वित्वोत्तरमभ्यासादिकार्येषु कृतेष्वेकाचामित्यर्थः । *तद्धि नानेकाज्व्यावृत्तये, तत्र लिड्याम: सत्त्वान्मन्त्रे तथा प्रयोगाभावाच्च । न चाममावे जागर्तेर्व्यावर्त्यः । "न चैकमुदाहरणम्" इति न्यायात् । दरिद्रातेस्तु कृतद्वित्वानामित्यर्थाभावे आद्ग्रहणस्य भूतपूर्वाकारान्तग्रहणेन दरिद्रासर्थतया न तद्व्यावृत्त्यर्थत्वमिति एकाज्ग्रहणसामर्थ्येन कृतद्वित्वानामित्यर्थलाभ इति भावः । सिद्धान्ते तु सांप्रतिकग्रहणेन आतपदस्य चारितार्थ्येन दरिद्रातौ न भवत्येवेडिति बोद्धव्यम् । घसिग्रहणाभावे तु द्वित्वात्परत्वान्नित्यत्वाच्च "घसिभसोः" ( पा० सू० ६–४–१०० ) इति लोपे द्वित्वनिमित्ताज्निमित्तत्वाभावेन "द्विर्वचनेऽचि" ( पा० सू० १–१–५९ ) इत्यस्याप्राप्त्याऽनच्कत्वेन द्वित्वं न स्यात् तत्सत्त्वे त्विड्लोपयोर्नित्यत्वेन परत्वादिटि ततो(१) ( हल्ग्रहणानर्थक्यमन्यत्रापि भावादित्युक्तेः)लोपे द्विर्वचनेचीति सिद्धमिष्टम् । नान्येषामिति । क्रादिनियमात्प्राप्तस्य नियमोऽयमिति भावः । न च 'पपिवान्'इत्यादौ सन्निपातपरिभाषया आतोलोपो न स्यादिति वाच्यम् । तस्या अनित्यत्वात् ।

लिड्वेति । *व्याख्यानाद्वाग्रहणमेतद्विषयलिटैव सम्बध्यते ।

---

र्थमिदमावश्यकमित्याहुः । *अञ्जूप्रकृतिकक्वसुपरमितीति । अत्रापि प्रकृतसूत्रस्थं भाष्यमेव मानम् । तत्र हि—"असंयोगाल्लिट् कित्" [ पा० सू० १–२–५ ] इत्येव कित्त्वे सिद्धे कित्करणं संयोगान्तार्थम्" इत्यभिधाय "वृत्रस्य यद्बद्धानस्य रोदसी स्वमर्णवान् वद्बधानामरम्णाः अञ्जेः आजिवान्" इत्युदाहरणानि प्रदर्श्य "छान्दसौ कानच्क्वसू लिट्च छन्दसि "सार्वधातुकमपित्" [ पा० सू० १–२–४ ] इतिङित्त्वादुपधालोपो भविष्यति"इत्यभिहितम् । वद्बधानस्येति । 'वन्ध' वन्धने छान्दसत्वादभ्यासधकारस्य निवृत्त्यभावे "झलाञ्जग् झशि" [ पा० सू० ८–४–५३ ] इति जश्त्वम् । एतद्भाष्यग्रन्थेऽञ्जेः आजिवानितिप्रयोगस्य छान्दसस्य प्रदर्शनेनाञ्जूप्रकृतिकक्वसुपरमिति कल्प्यते ।

यदुक्तमेकाज्ग्रहणसामर्थ्यलब्धमिति तदेतदुपपादयति—*तद्धीति ।

*व्याख्यानादिति । "भाषायां सदादिभ्यो वा लिड् वक्तव्यः । किम्प्रयोजनम् ?। तद्विषये लुङोऽनिवृत्त्यर्थम्" इति भाष्यकारोक्तिमूलकव्याख्यानादि-

---

(१) कंसान्तर्गतो ग्रन्थ आदर्शपुस्तके नास्ति ।

तेन पक्षे लुङादि। छन्दसीत्यस्य निवृत्त्यैव सिद्धेः भाषाग्रहणं सर्वत्र प्रवृत्त्यर्थम्। तेन "अनद्यतने लङ्" (पा० सू० ३-२-१११) "परोक्षे लिट्" (पा० सू० ३-२-११५) इत्येतद्विषयेऽप्यस्य प्रवृत्तिरस्य लिटो वैकल्पिकत्वात्पक्षे तयोः प्रवृत्तौ तिङां श्रवणमिति दिक्।

अश्नातेरिति। अत एव नुट्।

साहचर्यादिति। लुग्विकरणपरिभाषासहकृतादित्यर्थः। एतेन हनिसाहचर्याद्वेत्तेरपि ग्रहणं स्यादित्यपास्तम्। दृशेश्चेति वार्तिकम्।

लटः शा (पा० सू० ३-२-१२४)। 'अनन्तरस्य' इति न्यायेनैतौ "वर्तमाने लट्" (पा० सू० ३-२-१२३) इति विहितस्यैवेति "वर्तमानसामीप्ये" (पा० सू० ३-३-१३१) इत्यादौ भाष्ये स्पष्टम्।

पचमानमिति। अत्र "आतो ङितः" (पा० सू० ७-२-८१) इति न "अङ्गकार्ये" (प० भा०) इति निषेधात् क इत्यपवादत्वाच्च। अत इति तपरत्वान्नेति तु चिन्त्यम्। "यदागमाः" (प० भा०) इत्येतल्लब्धस्य तपरत्वेनाव्यावृत्तेः। अत एवादुपदेशात्परत्वप्रयुक्तस्वरसिद्धिरिति दिक्। क्वचिदिति। कदाचिदित्यपि बोध्यम्। तेन *'पचति

---

त्यर्थः।

इडिति। इण्धातोः क्वसौ द्वित्वोत्तरमभ्यासेन सह सवर्णदीर्घेऽस्य कृतद्वित्वैकाच्त्वसत्त्वात् "वस्वेकाजाद्घसाम्" [पा० सू० ७-२-६७] इतीडिति भावः।

*पचति ब्राह्मण इति। न च सामानाधिकरण्यमेकार्थविशेष्यकप्रतीतिजनकत्वन्तच्च प्रकृते नास्ति प्रत्ययार्थकर्तुर्विशेषणत्वादिति वाच्यम्। काल्पनिकस्य प्रथमासामानाधिकरण्यसत्त्वात्। यथा शतृशानच्प्रत्ययान्तस्य प्रयोगे सति प्रधानभूतयोः कर्तृकर्मणोः प्रतीतिर्न तु लकारस्य प्रयोगे इति लटोऽप्रथमान्तेन सामानाधिरण्ये इत्यनुवादोऽनुपपन्न इति प्रक्रियादशायां कल्पिते स्थानिनि लकारेऽप्रथमासामानाधिकरण्यमपि कल्पितं शास्त्रप्रवृत्तिनिर्वाहकन्तथा च कृदन्ते "सत्वप्रधानानि नामानि" इति वचनात्कर्तृकर्मणोः प्राधान्यदर्शनेनायं लकारः प्रधानकर्त्राद्यभिधायकस्तथाविधानुवादविषयत्वादित्यनुमानेन कृदन्तदृष्टान्तेन काल्पनिकमेव तत्प्रक्रियानिर्वाहकन्तादृशकल्पना प्रकृते आहार्या संभवत्येव। जाते त्वादेशे "भावप्रधानमाख्यातम्" इतिवचनेन श्रूयमाणप्रत्ययार्थस्य तिङ्क्षु विशेषणत्वं कृत्सु विशेष्यत्वमिति त्वन्यत्। वस्तुतस्तु सामानाधिकरण्यं समानार्थकत्वमात्रम्

ब्राह्मणः' इत्यादिसिद्धिः । वासरूपन्यायस्तु आदेशेषु नेति स्पष्टमेव । *भाष्ये तु "लटः शतृशानचौ । विभाषेतिवर्तते । ततः—अप्रथमासमानाधिकरणे । नित्यार्थमिदम्" इत्युक्तम् । तेन यत्प्रथमासमानाधिकरणे विकल्पबोधकं सदादिभ्यो बहुलं इङ्धार्योर्वेति वार्तिककारेणोक्तं, तन्न कार्यं योगविभागेन सिद्धेरिति बोध्यम् ।

संबोधने च ( पा० सू० ३-२-१२५ ) । इदमुत्तरञ्च सूत्रं प्रथमासमानाधिकरणे नित्यार्थम् ।

शयाना इति । *शयनं भुज्यर्थपरिचायकम् । तदुपलक्षितभुज्यर्थेन च यवनाः परिचाय्यन्ते इत्यन्यत् । अर्जनं वासस्य फलम् । हरिदर्शनं मोक्षसाधनम् । इह लक्षणत्वादि द्योत्यम्, शत्राद्यर्थस्तु कर्त्रादिरेव । क्रियाया इति किम् ? यः कम्पते सोऽश्वत्थः' इत्यादौ माभूदिति ।

वेत्तेरिति । *सत्ताविचारार्थयोरात्मनेपदित्वात्तयोः शतुरसम्भवः, लाभार्थस्य विकरणेन व्यवधानमिति भावः ।

---

तु तत्र प्राधान्यनिवेश इति नाहार्यायास्तस्याः कल्पनेति बोध्यम् । क्वचिदित्यस्य लाभस्तु "लृटोर्विभाषा" [ पा० सू० ३-२-१२१ ] इतिसूत्राद्विभाषापदानुवृत्त्याऽनयोरादेशयोर्विकल्पेन प्रवृत्त्या कल्प्यते सा चानुवृत्तिः सम्बन्धानुवृत्त्या मण्डूकगतिवद्वा कार्या । प्रथमासामानाधिकरण्येपि क्वचिदित्यस्य लाभः पुनर्लट्ग्रहणस्य करणेन दर्शितः, स न शब्दाधिक्यादर्थाधिक्यमितिकल्पनया किन्तु पुनर्लड्ग्रहणेन पुनर्विधिः । स हि पूर्वेण विधिनाऽप्राप्तेपि विषये प्रवर्त्तते इति वृत्तिकाररीत्या व्याख्यातः । *भाष्ये त्विति । अयम्भावः—यदीह लट्ग्रहणन्न स्यात्तदाऽस्य प्रत्ययान्तरत्वन्न स्यात्तथा च कर्त्तरीत्यस्योपस्थित्या कर्मण्यभावापत्तिरतो योगविभागेन लट एव स्थानेऽयमादेशो विधेय इति ।

सम्बोधने च [ पा० सू० ३-२-१०५ ] । प्रथमासामानाधिकरण्येऽप्ययम् । सम्बोधनविषये लटः शतृशानचौ स्तः ।

लक्षणहेत्वोः ( पा० सू० ३-२-१२६ ) । यथायथन्द्योत्यं लक्षणत्वादेर्दर्शयति—*शयनमित्यादिना । एवञ्च परिचायकशयनकर्तृयवनाभिन्नानेककर्तृका वर्त्तमाना भुजिक्रियेति बोधः प्रथमात्, द्वितीयात्तु फलभूतार्जनकर्तृकर्तृको वास इति, तृतीयाच्च जनकहरिदर्शनाश्रयनिष्ठो मोक्ष इति बोधः । अर्जयन्पुरुष इतिरीत्या प्रथमासामानाधिकरण्यम्बोध्यम् ।

विदेः शतुर्वसुः ( पा० सू० ७-१-३६ ) । अत्र विदेरितिनिर्देशस्य समानत्वेऽपि वेत्तेरेव ग्रहणमित्यत्र मानमाह—*सत्तेत्यादिना । शतृप्रत्य-

तौ सत् ( पा० सू० ३-२-१२७ ) । अनुवृत्त्यैव सिद्धे तौ-ग्रहणं *शतृशानच्मात्रग्रहणार्थम् । तेन *'द्विषन्' 'द्वेक्ष्यमाणः'इत्यादावपि "पूरणगुण" ( पा० सू० २-२-११ ) इति निषेधः ।

क्वचिदिति । कदाचिदित्यपि बोद्धव्यम् । तेन तिङां सिद्धिः । "लृटः सद्वा" ( पा० सू० ३-३-१४ ) इत्यस्यापि भविष्यदधिकारविहिते "लृट्शेषेच" ( पा० सू० ३-३-१३ ) इति लृट्येव प्रवृत्तिरिति "अनवक्लृप्त्यमर्ष" (पा० सू० ३-३-१४५) इत्यत्र *भाष्ये स्पष्टम् ।

अकृच्छ्रिणीति । अनायासेन क्रियानिर्वर्तक इत्यर्थः ।

द्विषोऽमि ( पा० सू० ३-२-१३१ ) । अमित्रे किम् ? द्वेष्टि पतिं भार्या, नाभिनन्दतीत्यर्थः ।

सर्वे इति । सत्रिणः सर्वे यजमाना एवमुच्यन्त इति शेषः ।

---

यस्योगित्त्वात्स्थानिवद्भावेनैवोगित्कार्ये सिद्धेऽस्योगित्त्वं "वसोः सम्प्रसारणम्" ( पा० सू० ६-४-३१ ) इत्यत्र क्वसोरपि ग्रहणार्थम् । अन्यथाऽस्य संग्रहार्थं वस इति कथनीयम् । तथा सति निरनुबन्धकत्वादस्यैव ग्रहणं स्यात् । एवन्निर्देशे तु तदनुबन्धकपरिभाषा न प्रवर्त्तते उकारोच्चारणसामर्थ्यात् ।

तौ सत् [ पा० सू० ३-२-१२७ ] । *शतृशानच्मात्रेति । मात्रशब्दोऽत्र कार्त्स्न्ये । तेन लट्स्थानिकत्वरूपधर्मपरित्यागेन स्वरूपमात्रम् । शतृशानचोः संज्ञेत्युक्तम्भवति । एतत्फलमाह-*द्विषन्नित्यादि । द्विषोऽमित्रे ( पा० सू० ३-२-१३१ ) "लृटः सद्वा" ( पा० सू० ३-३-१४ ) इतिसूत्राभ्यां विहितावेतौ । प्रकृतसूत्रे भाष्यकृतैवैतदुक्तम् । "तौग्रहणं क्रियतेऽसंसर्गार्थम्" इति । वर्त्तमानत्वादिविशेषणासंस्पृष्टयोरपि सङ्ग्रहार्थमित्यर्थः ।

लृटः सद्वा ( पा० सू० ३-३-१४ ) । लृट इत्यनेन भविष्यदधिकारे विहितो यो "लृट् शेषे च" ( पा० सू० ३-३-१३ ) इति लृट् स एव गृह्यते । स्पष्टञ्चेदं "अनवक्लृप्त्यमर्षयोः" ( पा० सू० ३-३-१४५ ) इतिसूत्रभाष्ये । तत्र हि-किंवृत्तेऽपीत्यस्योपपदसंज्ञारूपम्प्रयोजनमभिधाय "किम्प्रयोजनम्" इति प्रश्ने "उपपदमतिङ् ( पा० सू० २-२-१९ ) इति समाससिद्धिः" इत्युक्त्वा "अतिङिति प्रतिषेधात्समासासिद्धिर्न प्रयोजनम्" इत्यभिधाय "यदा तर्हि लृटः सत्संज्ञा भविष्यति" इति प्रयोजने परेणाभिहिते सिद्धान्तिनोक्तम्—"भविष्यदधिकारविहितस्य लृटः सत्संज्ञावुच्येते अविशेषविहितश्चायम्" इति । तदेतदाह-*भाष्ये स्पष्टमिति ।

पूङ्यजोः शानन् ( पा० सू० ३-२-१२८ ) । अयं स्वातन्त्र्येण विधीयते न तु लटः स्थाने । लट इत्यस्यानुवृत्तेः । कर्त्तरि चायम् । "तौ सत्" ( पा० सू० ३-२-१२७ ) इति सूत्रे भाष्ये "पूङ्यजोः शानन्" ( पा० सू० ३-

आक्वेः ( पा० सू० ३-२-१३४ ) । "भ्राजभास" ( पा० सू० ७-४-३ ) इति क्विपमा इत्यर्थः । ताच्छीलिकाः प्रायेण सोपसर्गेभ्यो नेति "आढ्य" ( पा० सू० ३-२-५६ ) इति सूत्रे *भाष्ये स्प-

---

२-१२८ ) "ताच्छील्यवयोवचनशक्तिषु चानश्" ( पा० सू० ३-२-१२९ ) "इङ्धार्योः शत्रकृच्छ्रिणि" ( पा० सू० ३-२-१३० ) इतिविहितप्रत्ययान्तरत्वं लादेशत्वं वेतिविचारेऽलादेशत्वं व्यवस्थाप्य 'सोमम्पवमानः' 'नटमिघ्नानः' इत्यादौ कर्तृकर्मणोर्विहितषष्ठ्या लादेशयोगे निषेधः सोऽत्र न प्राप्नोति इत्याशङ्क्य "लटः शतृशानचौ" ( पा० सू० ३-२-१२४ ) इति तृशब्दमारभ्य तृनो नकारात्तृन्निति प्रत्याहार इत्याश्रयणेन तृन्ग्रहणेनैतेषामपि ग्रहणेन "न लोक" ( पा० सू० २-३-६९ ) इतिनिषेध उक्तः । तेनैतः प्रत्ययान्तरमेवेति सिद्धम् ।

ताच्छील्यवयोवचन ( पा० सू० ३-२-१२९ ) । अयम्परस्मैपदिभ्योपि । लादेशस्यैवात्मनेपदसंज्ञाविधानात् । अत एव "शत्रुं निघ्नानः" इत्यस्य सिद्धिः । ताच्छील्यं=तत्स्वभावता । यथा "बहवोऽत्र मण्डयमानाः" 'अनेकेऽत्र पठमानाः' इत्यादौ । वयोवचन इत्यस्य वयोविशेषस्य प्रतिपादन इत्यर्थः । यथा 'कवचम्बिभ्राणाः' इत्यादौ यौवनादिरूपा शरीरावस्था प्रतीयते । शक्तिः=सामर्थ्यम्, सा यत्र गम्यते तत्र चानश् । यथा 'शत्रुन्निघ्नानः' इत्यादौ ।

सुञो यज्ञसंयोगे ( पा० सू० ३-२-१३२ ) । सुञः शतृप्रत्ययः स्यात् । यज्ञेन संयुक्ते कर्तरि शत्रन्तस्य वृत्तिश्चेत् । संयोग इत्यत्र कर्मणि घञ् । अत्र 'सुञो यज्ञे' इत्येव यज्ञविषयश्चेत्सुनोत्यर्थ इति व्याख्यया सिद्धे संयोगग्रहणाद्यत्र प्रधानकर्त्तारोऽभिधीयन्ते तत्रैवानेन योगेन प्रत्ययः तादृशमत्र याग इत्याशयेनाह मूलं—सर्वे सुन्वन्तः सर्वेयजमानाः । यज्ञसंयोग इति किम् ?(१)।

आक्वेस्तच्छी ( पा० सू० ३-२-१३४ ) । अत्र आङभिव्याप्तौ । तच्छब्दो धात्वर्थस्य परामर्शकः । *भाष्ये स्पष्टमिति । तत्र हि अच्वावित्यस्य "कर्तरि भुवः" ( पा० सू० ३-२-५७ ) इतिसूत्रेऽनुवर्त्तमानस्याढ्यीभवितेत्यत्र भूधातोः खिष्णुजनुत्पत्तिरूपम्प्रयोजनमुक्त्वा "अथेदानीमनेन उक्ते ताच्छीलिके इष्णुजित्रधीयते सोऽत्र कस्मान्न भवति" इति प्रश्ने "रूढिशब्दप्रकारास्ताच्छीलिकाः, न च रूढिशब्दा गतिभिर्विशेष्यन्ते, न हि भवति देवदत्तः प्रदेवदत्तः" इत्युक्तम् । ताच्छीलिक इष्णुज् "भुवश्च" ( पा० सू० ३-२-१३८ ) इतिसूत्रविहितः । रूढिशब्दप्रकाराः=रूढिशब्दसदृशाः । यथा रूढिशब्दानां गतिभिः सम्बन्धो न भवति तथा ताच्छीलिकेष्वपि । अयमत्र विशेषः—ये अत्यन्तं शब्दा एवं ते असताप्यवयवार्थेन व्युत्पाद्यन्ते । क्वचित्तु अवयवार्थसद्भावेऽपि । यथा-'गाथक' इति । ताच्छीलिका अपि क्रियाविषयन्ताच्छील्यमुपादाय प्रवर्त्तन्ते क्रियाविशेषाभावेऽपि—कामुक इति । अत्र गतिसम्बन्धो न भवति ।

---

(१)एतदग्रे ग्रन्थस्त्रुटितो वर्तते ।

ष्टम् । त*च्छील:=फलनिरपेक्षप्रवृत्तिः, *तद्धर्मा=स्वधर्मोऽयमिति यः प्रवर्त्तते, साधुकारी=तौ विनापि धात्वर्थस्य साधुकर्ता ।

तृन् ( पा० सू० ३–२–१३५ ) । कर्त्तेति । "न लोक" ( पा० सू० २–३–६९ ) इति षष्ठीनिषेधः । तद्धर्मे–मुण्डयितारः श्राविष्ठायना भवन्ति वधूमूढाम् । साधुकारिणि–'कर्त्ताऽऽखेटम्' इति ।

भुवश्च ( पा० सू० ३–२–१३८ ) । योगविभाग *उत्तरार्थः । इदं लोकवेदसाधारणमिति "आढ्यसुभग" ( पा० सू० ३–२–५६ ) इति सूत्रस्थ*भाष्यस्वरसः । *तत्र हि अच्वावित्यनुवर्त्य 'आढ्यीभविता' इत्यत्र "कर्त्तरि भुवः" ( पा० सू० ३–२–५७ ) इति खिष्णुच्खुकञौ नेत्युक्त्वा ताच्छीलिक इष्णुच् कस्मान्न भवतीत्याशङ्क्य "रूढिशब्दप्रकारास्ताच्छीलिकाः, न च रूढिशब्दा गतिभिर्विशेष्यन्ते" इत्युक्तम् । नैतदिति । छान्दसत्वमनुक्तसङ्ग्राहकत्वं चेत्यर्थः ।

शमिनीतरेति । "सञ्ज्ञापूरण्योश्च" ( पा० सू० ६–३–३८ ) इति निषेधात् पक्षे पुंवत्त्वं नेति बोध्यम् । झल्ग्रहणमिति । "युवोरनाकौ" ( पा० सू० ७–१–१ ) इत्यत्र भाष्ये स्फुटमेतत् । "घिनुणकर्मकेभ्य एव" *इति भाष्यम् । घित्त्वं संपर्कादौ कुत्वार्थम् ।

---

न हि भवति प्रकामुक इति । क्वचित्तु गतिभिः सम्बन्धो भवति—आगामुकः प्रवर्षुक इति यथा । अत एवोक्तम्प्रायेणेति । यत्र तु सोपसर्गा एव रूढिशब्दास्तत्रापि बाह्येन गतिना न भवति सम्बन्धः—यथा व्याघ्र इत्यत्र 'प्रव्याघ्र' इति न भवति । *शीलं=स्वभावः, फलांशविषयकाकाङ्क्षाराहित्यम् । (१)सा शीलं यस्येति बहुव्रीहिः । *तद्धर्मा=तत्क्रियाचारकर्ता । अत्रैतत्क्रियाचरणम्मम धर्म इति ज्ञानं प्रयोजकम् । साधुकारी तु तौ विनापि यो धात्वर्थं साधु करोति सः ।

कर्ता कटानिति । तच्छीलेऽत्र कृधातोस्तृन्प्रत्ययः ।

अलंकृञ्निराकृञ् (पा० सू० ३–२–१३६) । अत्र कृञ्ग्रहणेन प्रसिद्धत्वात्करोतेरेव ग्रहणम् । उत्पचादिषु प्रत्येकमुदः पाठो नियमार्थः । तेनोदः प्रयोग एवेष्णुच् ।

*उत्तरार्थ इति । भुव इत्यस्यैव "ग्लाजिस्थः" ( पा० सू० ३–२–१३९ ) इतिसूत्रे चकारेण संग्रहार्थः । *भाष्यस्वरस इति । प्रतिपादितमेतत्प्राक् । स्पष्टप्रतिपत्तये इह तमेवाह–*तत्र हीति ।

*इतिभाष्यमिति । "घिनुणकर्मकानाम्" इत्येवन्तत्रोक्तम् ।

---

(१)सा=धात्वर्थः क्रिया ।

रागीति । अत्र रजेति निपातनान्नलोप इति "अनिदिताम्" ( पा० सू० ६-४-२४ ) इत्यत्र भाष्ये स्पष्टम् ।

पूर्वेणेति । सकर्मकपदेस्तु युचो*ऽनभिधानमिति भावः । ननु वासरूपन्यायेन युजपीत्यत आह-तेनेति । *ज्ञाप्यत इति शेषः ।

कनूयितेति । तृनयम् ।

शयालुरिति । *लुङ्प्रत्यये *प्रयोजनाभावाल्लस्येत्त्वाभावे शप्यतो दीर्घेण स्पृहयालुप्रभृतौ सिद्धे निपातनादेव श्रच्छब्दस्य धाशब्देन समासे(१) (अजस्राण्यथितन्द्रावत्) विशिष्टात्प्रत्यये धातोर्विधानाभावात्सार्वधातुकत्वाभावाच्छप आलोपस्य चाभावे श्रद्धालौ च सिद्धे आलुज्विधानमन्यतोऽपि विधानार्थम् । तेने*दं सिद्धमिति स्पष्टं भाष्ये । घस्मरे घसिः प्रकृत्यन्तरम् । भङ्गुरः *कर्मकर्तर्येव,घित्वात्कुत्वम् ।

---

विनाशेत्यत्र ण्यन्तविनाशेः कृतणिलोपेन निर्देशः। अकार उच्चारणार्थः। मूले-ण्वुला सिद्ध इति। असूयतिभिन्नेभ्य इत्यादिः। अन्यथाऽत्र स्वरे विशेषसत्त्वेन ण्वुला सिद्ध इत्युक्तिर्विहता स्यात् ।

*अनभिधानमिति । अत्र प्रमाणम्प्रकृतसूत्रस्थभाष्यमेव। तत्र हि- "पदिग्रहणमनर्थकम् 'अनुदात्तेतश्च हलादेः' ( पा० सू० ३-२-१४९ ) इतिसिद्धत्वात्" इत्यभिधाय "अयम्पदेरुकञ् विधीयते लषपतेति, स विशेषविहितस्सामान्यविहितं युचस्बाधेत" इति प्रतिपाद्य "एतज्ज्ञापयत्याचार्यस्ताच्छीलिकेषु ताच्छीलिका वासरूपेण न भवन्ति" इति प्रदर्शितम् । यदि सकर्मकादपि पदेः स्यात्तदा ज्ञापकत्ववर्णनमसंगतं स्यात् । *ज्ञाप्यते इति। "निन्दहिंस" ( पा० सू० ३-२-१४६ ) इतिसूत्रे "वासरूपविधिना तृजादयो न"इत्युक्तमिह तु परस्परं स नेत्यभ्यधायीति विशेषः ।

शीङो वाच्य इतीति । नेदं वार्त्तिकं किन्त्वर्थसिद्धमित्येतत्प्रतिपादयति-*लुङ्प्रत्यय इत्यादिना । *प्रयोजनाभावादिति । न च स्वरे विशेषः। यदि लस्येत्संज्ञा स्यात्तर्हि शपि सत्येकादेशे च कृते "एकादेश उदात्तेन" ( पा० सू० ८-२-५ ) इतिसूत्रेणोदात्तत्वे विशेषाभावस्य स्पष्टत्वात्। लशो यादित्वेनापीत्संज्ञा व्यावर्त्तयितुं शक्या। *इदं सिद्धमितीति । इदमुपलक्षणम् । कृपालुस्पर्द्धालुशब्दयोरप्येवं सिद्धिः ।

दाधेट्सिशद ( पा० सू० ३-२-१५९ ) । दा इतिप्रयोगस्थदारूपाणामनुकरणम्। *कर्मकर्त्तर्येवेति । स्वभावादिति शेषः ।

जागरूकः (पा०सू०३-२-१६५)। अधुनेतिवत्समुदायस्य निपातनेन सिद्धे स्वातन्त्र्येण ऊकस्य विधानमुत्तरार्थम्। मूले भाविनेति । यङि कृते जा-

---

( १ ) कंसान्तर्गतो ग्रन्थ आदर्शपुस्तके नास्ति।

भाविनेति। तत्फलं दंशेर्यङ्लुगन्ताच्च ऊकः।

अजस्रमिति। निपातनाद्धातुना समासे रः।

आदृग (पा० सू० ३-२-१७१)। अत्र "क्याच्छन्दसि" (पा० सू० ३-२-१७०) इत्यतः छन्दसीत्यनुवर्त्तते। अत एव "भाषायां धाञ्कृसृ" (का० वा०) इति वार्तिके भाषाग्रहणं चरितार्थम्। आदिति दकारः, *तेन ऋग्रहणेन दीर्घान्तस्यापि ग्रहणं तृगृ इत्यादेः। *स्वरूपाबाधेनातिदेशप्रवृत्तेरित्वादयो न। लिड्वदित्यस्य लिडादेशातिड्वदित्यर्थः। "असंयोगात्" (पा० सू० १-२-५) इत्येव किर्त्त्वे सिद्धे पुनः कित्त्वं 'जगुरिः' 'ततुरिः' इत्यादौ "ऋच्छत्यृताम्" (पा० सू० ७-४-११) इति गुणनिषेधार्थम्।

काशिकेति। भाष्ये तु नेत्यर्थः।

ईश्वर इति। 'ईश्वरी' इति पुंयोगे।

विभ्राडिति। "व्रश्च" (पा० सू० ८-२-३६) इति षत्वम्। धूरिति। "राल्लोपः" (पा० सू० ६-४-२१) इति वलोपः।

दीर्घोऽसंप्रसारणं चेति। अत्रासंप्रसारणं चेति दीर्घवचनसामर्थ्यलब्धार्थानुवादः। तथा हि प्रत्ययसन्नियोगेन विधानादन्तरङ्गतया दीर्घत्वे कृते संप्रसारणे पूर्वत्वे च कृते 'लक्ष्येलक्षणस्य' इति पुनर्दीर्घाप्रवृत्तेर्वचिप्रच्छयोस्तद्विधानमनर्थकं स्यात्। अन्यथा क्विप्सूत्रेण सिद्धेस्तयोस्तत्र ग्रहणं व्यर्थमेव स्यादिति *स्पष्टं भाष्ये। एतद्भाष्यप्रामाण्यादेव 'लक्ष्येलक्षणस्य' इति न्याये विकारकृतलक्ष्यभेदानाश्रय-

---

यमानस्येत्यर्थः। वावदूकशब्दस्तूणादिप्रत्ययान्तः।

*तेन=आदित्यत्र दकारस्य सत्त्वेन। तपरत्वे ऋकारस्य तात्परत्वाद् ह्रस्वस्यैव ग्रहणं स्यात्।

*स्वरूपाबाधेन=प्रत्ययस्वरूपाबाधेन। न चैवङ्किप्रत्ययघटकककारस्येत्वमपि न स्यादिति वाच्यम्। ततुरिर्जगुरिरितिभाष्योदाहरणादित्वस्य प्रवृत्तेः। अत एव स्वरूपाबाधेनेत्यपि लब्धम्। अस्मिन् सूत्रे भाष्ये "उत्सर्गश्छन्दसि सदादिभ्यो दर्शनादिति। तेन सेदिः नेमिः इत्यादि सिध्यति" इत्युक्तम्। यद्यपि "आदृ" (पा० सू० ३-२-१७१) इति सूत्रञ्छान्दसकार्यप्रदर्शकप्रकरण एवोपन्यसनीयन्तथापि भाषायामिति वार्त्तिकं लौकिकप्रयोगाणां साधुत्वान्वाख्यापकमिति तल्लेखनाय प्रकृतेऽस्य लेखः।

*स्पष्टम्भाष्य इति। एवमेव स्पष्टमित्यर्थः।

णमित्यादुः । तृनेति । वासरूपविधिस्तु ताच्छीलिकेषु निषिद्ध इति भावः । वार्तिके इति । "अन्येभ्योऽपि दृश्यते" ( पा० सू० ३-२-१७८ ) इति सूत्रमप्येवमेवेति बोध्यम् । *वस्तुत उणादिसूत्राण्यपाणिनीयानीत्यनुपदं निरूपयिष्यामः । दिद्युदिति । "द्युतिस्वाप्योः" ( पा० सू० ७-४-६७ ) इति संप्रसारणम् । जगदिति । "गमः क्वौ" (पा० सू० ६-४-४०)इति मलोपे तुक् । दीर्यतेरिति । *"दीर्यतेर्वा दद्रु"इति भाष्यादित्यादावप्ययमिति भावः ।

भुवः सञ्ज्ञा(पा० सू० ३-२-१७९) । इदं संज्ञान्तरयोः क्विवेवेति नियमार्थम् । *विपरीतनियमस्तु न *विधेयसङ्कोचापत्तेः ।

मितद्रुरिति । क्विपि तुक् स्यात्, 'मितद्रवः' इत्यत्र चोवङ् स्यात् ।

धेटो धाञश्चेति । प्रयोगेषु द्वयोरप्यर्थनिर्देशादिति भावः । अत्र कर्मणीति नोपपदं *व्याख्यानात् ।

दाम्नी(पा० सू० ३-२-१८२) । दशेति शपा निर्देशः, "दंशसञ्ज" ( पा० सू० ६-४-२५ ) इति नलोपः । दंष्ट्रायामजादित्वाट्टाप् ।

नध्रीति । "नहो धः" ( पा० सू० ८-२-३४ ) षित्त्वान्ङीष् ।

---

मूलरीत्यान्वाख्याय सिद्धान्ताभिप्रायेणाह—*वस्तुत इति । ननु भाष्ये "दृणातेर्ह्रस्वश्च"इत्युक्तमिति दीर्यतेरित्यनुपपन्नमत आह—*दीर्यतेर्वेति । तत्र हि—"दद्रु दृणातेर्दीर्यतेर्वा" इति पठितम्

*विपरीतनियम इति । संज्ञान्तरयोरेव क्विपिति नियम इत्यर्थः ।*विधेयसंकोचापत्तेरिति । यत्रैवकारस्ततोऽन्यत्र नियम इत्यस्य सिद्धत्वेन विधेयस्य क्विपः संकोचापत्तेरित्यर्थः । अत्र संज्ञात्वञ्च यावद्द्रव्यभाविसंज्ञातुल्यङ्किन्तु व्यक्तिविशेषसम्बन्धित्वमेव

*व्याख्यानादिति । "कर्मण्यण्" ( पा० सू० ३-२-१ ) इतिसूत्रानन्तरमेव 'धः ष्ट्रन्' इतिवक्तव्येऽत्र प्रकरणे पृथगेतादृशसूत्रकरणमूलकव्याख्यानादित्यर्थः । तादृशपाठे यद्यपि "दाम्नी" ( पा०सू० ३-२-१८२ ) इतिसूत्रे पुनः ष्ट्रन्ग्रहणमावश्यकन्तथापि लाघवमस्त्येवेति भावः ।

दाम्नीशस् ( पा० सू० ३-२-१८२ ) । अत्र दशेति कृतनलोपस्य दंशधातोर्निर्देशेनाक्ङित्यपि क चिदस्य नकारो लुप्यते । तेन दन्तेषु 'दशनाः' इति प्रयोगः सिध्यति । न च निपातनस्य बाधकत्वमेवेति सर्वत्रैवास्य नलोप इति 'दंष्ट्रा'इत्यनुपपन्नमिति शङ्क्यम् । "शुनो दन्तदंष्ट्रा" ( का० वा० ) इतिनिर्देशेन क्वाचित्कत्वस्यैव कल्पनात् । दंष्ट्राशब्देऽजादित्वाट्टाबिति प्रागुक्तम् ।

करणे इति नोपपदं *व्याख्यानात् ।

वृत्तिरीत्या यथासङ्ख्यमभिप्रेत्याह—ऋषौ करणे इति । *एवमन्वये द्वन्द्वस्यासाधुत्वापत्त्योभयान्वय इति "कर्त्तरि कृत्" ( पा० सू० ३-४-६७ ) इति सूत्रस्थ*भाष्यस्वरसः । पवित्रमिति । पावमान्यादिसूक्तमित्यर्थः ।

*अथोणादयः ।

प्राय उणादिसूत्रप्रत्ययान्ता रूढिशब्दा अवयवार्थशून्या असन्तमप्यवयवार्थमाश्रित्य व्युत्पाद्यन्ते । *तत्रापि प्रायः कर्तरि, बाहुलकाद*न्यत्रापीति बोध्यम् । तत्रापि प्रायो वर्त्तमानकाल एवेति "भूते" (पा० सू० ३-२-८४ ) इति सूत्रे भाष्ये । तत्र हि "नञि हन एह च" ( उ० पा०४ सू० ६७३ ) इत्युणादिसूत्रविहितासिप्रत्ययान्तानेहश्शब्दो वर्त्तमानकाल एवान्यत्र अहन्तेत्युक्तं, तृच्ण्वुलोः वर्त्तमानकाले एव साधुताया "ण्वुल्तृचौ" ( पा० सू० ३-१-१३३ ) इति सूत्रे भाष्ये उक्तत्वेने*दं

---

*व्याख्यानादिति । दात्रनेत्रादीनामकरणोपपदानामपि प्रयोगदर्शनमूलकव्याख्यानादित्यर्थः । यदुक्तं वृत्तिरीत्येति तदभिप्रायमाह—*एवमन्वय इति । *भाष्यस्वरस इति । तत्र हि-"कर्त्तरि कृत्" ( पा० सू० ३-४-६७ ) इति सूत्रस्य 'तच्च भव्याद्यर्थम्' इत्यनेन 'भव्यगेय' ( पा० सू० ३-४-६८ ) इतिसूत्रेण विधीयमानस्य प्रत्ययस्य कर्तर्यपि "कर्त्तरि कृत्" ( पा० सू० ३-४-६७ ) इति सूत्रसहायेन प्रवृत्त्यात्मकम्प्रयोजनमभिधाय ऋषिदेवतयोस्तु कृद्भिः समावेशवचनं ज्ञापकमसमावेशस्य, यदयं "कर्त्तरि चर्षिदेवतयोः" ( पा० सू० ३-२-१८६ ) इतिसिद्धे समावेशे समावेशार्थं चकारङ्करोति तज्ज्ञापयत्याचार्यो न समावेशः । अत्र समावेशः करणरूपेणार्थेन बोध्यः । एवमुपपाद्य भाष्यकारेण वार्त्तिककारोक्तिर्यत्तावदुच्यते ऋषिदेवतयोः कृद्भिः समावेशवचनं ज्ञापकमसमावेशस्येति नैतज्ज्ञापकसाध्यमपवादैरुत्सर्गा बाध्यन्त इति । एष एव हि न्यायः । यदुतापवादैरुत्सर्गा बाध्येरन्"इत्युक्तम् । यदि तत्र यथासंख्यमभिप्रेतं स्यात्तदा चकारसद्भावे सति तस्य सम्भवादेवमुक्तिरसंगता स्यात् । इति पूर्वकृदन्तविवरणम् ।

## अथ उणादिविवरणम् ।

अथावसरसङ्गत्योणादिप्रत्ययविषये विशेषमाह—*अथोणादय इत्यादिना । निरूप्यन्ते इति शेषः । *तत्रापि=कल्पितावयवार्थकल्पनायामपि । *अन्यत्रेति । वर्त्तमानकालातिरिक्तकाले नेत्यर्थः । *इदम्भाष्यम्=अन्यकाले

भाष्यमेकदेशयुक्तिः । अत्र वदन्ति—"कृवा" ( उ० पा० १ सू० १ ) इत्यादिसूत्राणि "सर्वं नाम धातुजम्" इति नैरुक्तमतानुसारिशाकटायनादिप्रणीत*व्याकरणान्तरादभियुक्तैः सङ्गृहीतानि । *अत एव—"उणादयः"( पा० सू० ३-३-१ )इति सूत्रे 'बहुलवचनं किमर्थम्'इति प्रतीकमुपादाय "उणादय इत्येत्रोणादीनां शास्त्रान्तरपठितानां साधुत्वाभ्यनुज्ञानार्थमस्त्विति भावः"इति कैयटेनोक्तम् । न ह्येषां पाणिनीयत्वे शास्त्रान्तरशब्दप्रयोगो युज्यते । अत एव'अमेर्गुरिश्च लो वा'इत्युणादिसूत्रैर्बोधितसाधुत्वानामप्यङ्गुलिलोमशुक्लादीनां साधुत्वाय रस्य लत्वार्थं "कृपो रो लः" [ पा० सू० ८-२-१८ ] इति सूत्रे वचनमारब्धं वार्तिककृता "बाहुलकं प्रकृतेस्तनुदृष्टेः" [भा०इ०] । "प्रायः समुच्चयनादपि तेषां कार्यसशेषविधेश्च तदुक्तं नैगमरूढिभवं हि सुसाधु"इति बहुलग्रहण* प्रयोजनमुक्तम् । *शास्त्रान्तरे तन्वीभ्यः प्रकृतिभ्य उणादयो दृश्यन्ते प्रत्यया अपि प्रायेण समुच्चिता न सर्वे तथा कार्याण्यपि सशेषाणि कृतानि अतो बाहुलकमुक्तम् । ननु यावदुक्तमेव प्रकृतिप्रत्ययकार्यमस्तु किं बाहुलकग्रहणेनेत्यत्रोक्तं नैगमेत्यादि । वैदिकानां रूढानां सञ्ज्ञाशब्दानाञ्च सर्वेषां प्रातिस्विकरूपेण साधुत्वबोधनस्याशक्यत्वाच्छास्त्रान्तरे प्रायः समुच्चयनादि कृतम् । तेषां साधुत्वाभ्यनुज्ञानाय चानेनाचार्येण बहुलग्रहणं कृतम् । तेनात्र व्याकरणे सर्वेषां सङ्ग्रहादसन्दिग्धं साधुत्वं बोधितम् । पाणिनिशास्त्रबोधितानामेवेदानीं साधुत्वात् । ननु के ते वैयाकरणा यैर्नैगमरूढिभवानां प्रकृतिप्रत्ययविभागेन व्युत्पादनं कृतम् ?, तत्रोक्तं वार्तिककृता नाम च धातुजमाह । निरुक्ते=व्याकरणे शकटस्य च तोकमिति निरुक्ते । नैरुक्तव्याकरणे शाकटायनश्च सर्वं नाम धातुजमाहेति । ते व्युत्पन्नत्ववादिनः । एवं च पाणिनिर्न तद्व्युत्पन्नत्ववादीति स्पष्टमेवोक्तम् । ननु यत्रावयवार्थानुगमो नास्ति तत्र कथं व्युत्पादनं शक्यमत उक्तं—यन्न विशेषपदा-

---

'अहन्ता'इति तृजन्तधातुत्वाख्यानपरम् । *व्याकरणान्तरादिति । व्याकरणान्तरोक्तानामप्येषां साधुत्वे चानुमानमेव प्रमाणम्-उणादिप्रत्ययाः साधवः पाणिनिकर्तृकानुवादविषयत्वादिति । *अत एव=व्याकरणान्तरीयत्वेपि साधुत्वस्याभिप्रेतत्वादेव । *प्रयोजनमिति । भाष्यकृतेति शेषः । अत्र प्रकृतेस्तनुदृष्टेरितिप्रयोगात् "विभाषा गुणऽस्त्रियाम्" ( पा० सू० २-३-२५ ) इत्यस्य क्वचित्स्त्रियामपि प्रवृत्तिः । एतदेव वचनं व्याचष्टे—*शास्त्रान्तरे इति । नैरुक्तादयः ।

र्थसमुत्थं प्रत्ययतः प्रकृतेश्च तदूह्यमिति । अवयवार्थज्ञानपूर्वकं न यत्र समुदायार्थप्रतीतिः शास्त्रज्ञानामित्यर्थः । उक्तप्रत्ययसादृश्यं दृष्ट्वा तदितरो भागः प्रकृतित्वेन कल्प्यः, उक्तप्रकृतिसादृश्यं दृष्ट्वा तदितरः प्रत्ययत्वेन कल्प्यः, नैवं सर्वत्रोहः कार्यः किंतु साधुत्वेनाभिमतासु सञ्ज्ञास्वेवेत्युक्तम्—

सञ्ज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे ।
कार्याद्विद्यादनूबन्धमे*तच्छास्त्रमुणादिषु ॥ इति ।

एतदुपलक्षणं कार्यान्तराणामपि । तदुक्तं 'कार्यसशेषविधेश्च' इति । अनेन भाष्यवार्तिकसमूहेन "उणादयो बहुलम्" [पा० सू० ३-३-१] इति व्याकरणान्तरव्यवस्थापकमिति स्पष्टमेवोक्तम् । *उणाद्यन्ता ये शास्त्रान्तरे व्युत्पादिताः शब्दास्तत्र बहुलमिति वक्तव्यं वर्त्तमाने च ते वक्तव्याः भूतेपीति वक्तव्यमिति सूत्रार्थश्च सूचितः । स्वशास्त्रे तेषां साधुत्वबोधनं चै*तावतैव कृतम् । पाणिनेस्तु तेष्वव्युत्पत्तिपक्ष एवाभिमतः । तदुक्तम्—"आयनेयी" [ पा० सू० ७-१-२ ] इति सूत्रे भाष्ये "प्रातिपदिकविज्ञानाच्च भगवतः पाणिनेः सिद्धम्" इति । तत्र पाणिनेरित्युक्त्या तस्याव्युत्पन्नान्युणादयः प्रातिपदिकानीति सूचितम् । *'सर्पिषा' 'यजुषा' इत्यादौ षत्वं बहुलग्रहणादेव । *अत एव "आदेशप्रत्यययोः" [पा०सू०८-३-५९]इतिसूत्रे'कृसरोर्वसन्तम्''इत्यादौ व्याकरणान्तरे सरकसादिप्रत्ययोक्तेः षत्वमाशङ्क्य सिद्धान्तिना 'उणादयो ऽव्युत्पन्नानि'इत्युक्तम् । ततः शङ्कित्रा येषां सर्पिरादीनां 'सर्पिः' इत्यादौ रुत्वानुरोधेन सान्तानां 'सर्पिषा'इत्यादौ षत्वं दृश्यते तादृशेषु षत्वविषयोदाहरणेष्वव्युत्पत्तिपक्षाश्रयणं न शक्यं कर्तुम्,सर्पिषेत्यादौ षत्वानापत्तेरिति शङ्किते सिद्धान्तिनोक्तम्—"एवन्तर्हि बहुलवचनात्सिद्धं बहुलं प्रत्ययसञ्ज्ञा भवति" इत्युक्तम् । बहुलमित्युक्तेरव्युत्पन्नत्वेऽपि प्रत्ययसञ्ज्ञानिमित्तं कार्यं भवति । व्युत्पन्नत्वे च कार्यविशेषे प्रत्ययत्वं कार्यविशेषे तदभाव इति 'वर्सम्' इत्यादावङ्गत्वप्रयुक्तगुणस्य षत्वाभावस्य च सिद्धिरिति तदर्थः । एवञ्च "अयामन्त" [ पा० सू० ६-४-५५ ] इति सूत्रे इत्न्वादीनां ग्रहणं "न्यङ्क्वादीनां

---

*एतच्छास्त्रम्=एतच्छासितव्यम् । पाणिनीयसूत्रार्थमाह- *उणाद्यन्ता इति । *एतावतैव कृतमिति । पाणिनिनेति शेषः । नन्वव्युत्पन्नत्वे 'सर्पिरागच्छ'इत्यत्र रेफः'सर्पिषा'इत्यत्र षकारश्च दृश्यते सोऽनुपपन्नः प्रत्ययावयवत्वाभावादत आह-*सर्पिषेति । *अत एव=एतेषामव्युत्पन्नत्वादेव ।

च" [ पा० सू० ७-३-५३ ] इति सूत्रे उणादिव्युत्पन्नन्यङ्क्वादिग्रहणञ्च व्याकरणान्तरस्थप्रत्ययानुवादेन तद्लुमतिपरम्। "अनेहा वर्त्तमानकाल एव" इति "भूते" [पा० सू० ३-२-८४] इति सूत्रस्थं भाष्यं व्युत्पत्तिवादिव्याकरणान्तररीत्या । अव्युत्पन्नत्ववादिपाणिनिमते तु न तदिति बोध्यम्। एवन्तृचश्चकाराभावे मात्रादिशब्दे दीर्घापादनादिपर "ण्वुल्तृचौ" [ पा० सू० ३-१-१३३ ] इति सूत्रस्थभाष्यमपि *तद्रीत्यैव । *अत एव 'मातयति इत्यादाविष्ठवद्भावात् "तुरिष्ठेमेयःसु" [ पा० सू० ६-४-१५४ ] इतिलोपो न । उणादीनामव्युत्पन्नत्वात्' इति "तृच" [ पा० सू० ६-४-६ ] इति सूत्रे कैयटः । अत एव "अयामन्त" [ पा० सू० ६-४-५५ ] इति सूत्रे भाष्यं-"किमयं क्त्नुः आहोस्वित् इत्नुः ?, कश्चात्र विशेषः ? क्त्नाविटि णेर्गुणवचनम् । तत्र णेर्गुणो वक्तव्यः-स्तनयित्नुः, गदयित्नुः । अस्तु तर्हि इत्नुः । प्रत्ययान्तरं कर्तव्यम्, अयादेशे चोपसंख्यानम्;उभयं क्रियते न्यास एव" इति । अस्यार्थः-"अयामन्त" [ पा० सू० ६-४-५५ ] इति सूत्रं नापूर्वायादेशविधायकं किन्तु "एचोयवायावः" [ पा० सू० ६-१-७८ ] इत्येतद्विहितानुवादकं लाघवात् । तत्फलन्तु णिलोपाभावबोधनम् । तत्र किमन्तादिवद्व्याकरणान्तरविहितः क्त्नुरेव कृतेडागमोऽत्र सूत्रे निर्दिष्टः अथ ततोऽन्य इत्नुः प्रत्ययान्तरमिति प्रश्नः । क्त्नाविटीति । तस्येडादित्वाण्णिलोपाभावे कित्त्वाद् गुणाभावेनास्यानुवादत्वासम्भवेनापूर्वस्य विधानेन गुण एव विधेयो व्याकरणान्तरवत् । अन्यथाऽस्य सूत्रस्याद्यन्तांशेऽनुवादत्वमेतदंशे विधित्वमिति वैरूप्यापत्तिरिति भावः । इत्नुः प्रत्ययान्तरमिति । व्याकरणान्तरेऽस्यासत्त्वादपूर्वं प्रत्ययस्वरूपं कल्प्यम् । अयादेशे चेति । अयादेशविषये "ढकि लोपः" [ पा० सू० ४-१-१३३ ] इति सूत्रे निमित्तत्वाश्रयणेन पितृष्वसुर्ढक्युपसंख्यानवत् ण्यन्तेभ्यो यथाप्रयोगं निमित्तत्वाश्रयणमूलकमुपसंख्यानं कर्त्तव्यमित्यर्थः । आनुमानिकं वचनमेवात्रोपसंख्यानपदेनोच्यते । सूत्रपाठ एवोपसंख्यानमत्रोच्यते इति कैयटोक्तं तु न युक्तम् । क्त्नुग्रहणेऽप्यत्र सूत्रे गुणविधायके वा तत्पाठस्यावश्यकत्वेनात्र पक्ष एव विशिष्य तदुक्तौ बीजालाभात् मम तु तत्पक्षे व्याकरणान्तरे

---

*तद्रीत्यैवेति । व्याकरणान्तररीत्यैव । *अत एव=अव्युत्पन्नत्वादेव । *तेषामि-

विहितस्य स्वानुमतत्वानुमानमात्रं न तु धर्मिणः कल्पनेति नैतदुक्तिः। उभयङ्क्रियते इति। इत्नुः प्रत्ययान्तरं तस्य च निमित्तत्वबोधनद्वारा ण्यन्तेभ्यो विधानानुमानरूपमुपसंख्यानं चेत्यर्थः। एवञ्चास्य सूत्रस्यैकरूपतयाऽयादेशानुवादकत्वसिद्धिरिति लाघवमिति भावः। एतेन यदाऽत्र क्त्नुग्रहणमयादेशार्थं क्रियते स्तन्यादिभ्यश्च क्त्नुरेव तदा स्यादेव लाघवमिति कैयटोक्तमपास्तम्। तत्तदिष्टस्वरविशिष्टानामेवान्तादीनामनुवादात्स्वरविशेषोऽपि नास्ति। एवञ्च "स्तनिहृषि" [उ० पा० २ सू० १६] इति सूत्रं व्याकरणान्तरस्योणादिसूत्रेषु प्रक्षिप्तमिति बोध्यम्। अन्यथा बहुलग्रहणात्क्वचिदन्यदेवेत्यर्थकात्कार्यान्तरवदेषामपि कार्याणां सिद्धौ तवाप्येतद्वैयर्थ्यं स्पष्टमेव। एतेन "क्विब्वचि" [उ० पा० २ सू० २२५] इत्युणादिसूत्रेण सिद्धे क्विब्वचीत्यादिवार्त्तिकं तच्छीलादौ तृना बाधा मा भूदित्येतदर्थमित्यपास्तम्। *तेषां पाणिनीयत्वाभावात्। *अत एव "अजेर्वी" [पा० सू० २-४-५६] इति सूत्रे "वा लिटि" [पा० सू० २-४-५५] इत्यतो वाग्रहणमनुवर्त्य व्यवस्थितविभाषामुक्त्वा "न तर्हीदानीं "वायौ" [पा०सू०२-४-५७] इति वक्तव्यम्। वक्तव्यञ्च। किं प्रयोजनम्? नेयं विभाषा किं तर्ह्यादेशो विधीयते वा इत्यादेशो भवति अजेर्यौ परतः, वायुः" इति भाष्योक्तं सङ्गच्छते। अन्यथा "कृवापाजि" [उ० पा०१ सू०१] इत्युणादिसूत्रेण वायोः सिद्ध्या तस्याकर्तव्यतामेव वदेत्। *युश्चानेनैवानुमेयः उपसंख्याने अनुनासिकयण्त्वाभावादनो न। न च कैयटोक्तरीत्या "यजिमनि" [उ० पा०३ सू०३०७] इति बाहुलकाद्युचि "अज्युः" इति रूपवारणार्थं तन्न्यायः। तदभावेन तद्रूपापत्त्यभावात्। मम तु तेषामपाणिनीयत्वात्पाणिनिशास्त्रे तदारम्भो युक्तः। *यत्तु "विप्रतिषेध" [पा० सू० १-४-२] सूत्रे "येनविधिः" [पा० सू० १-१-७२] इति सूत्रे च बहिरङ्गपरिभाषायां स्योनः स्योना इत्युदाहृतं तद्व्याकरणान्तररीत्यैव। तत्र हि बाहुलकादौणादिको न प्रत्ययः। *यथा

---

ति। क्विब्वचीत्यादिसूत्राणामित्यर्थः। *अत एव=तेषां पाणिनीयत्वाभावादेव। ननु यौ परत इत्यनुपपन्नम्। युप्रत्ययस्य पाणिनिमतेऽभावादत आह-*युश्चेति। उणादिप्रत्ययान्तानामव्युत्पन्नत्वस्वीकारे भाष्यविरोधशङ्कां वारयति-*यत्त्विति। तस्य भाष्यस्य व्याकरणान्तरानुसारित्वे दृष्टान्तमाह-*यथेति।

विप्रतिषेधसूत्रेऽ*न्तरङ्गपरिभाषाया अन्तरङ्गत्वाद्य*णादेशे 'वैयाकरणः' इत्यादौ 'इकारोकारयोर्वृद्धिप्रसङ्गे इयुवौ" इति व्याकरणान्तरलक्षणविहितयोरियुवोरप्राप्तिरूपो दोषः(१) शङ्कितः, 'प्रैयमेधः' इत्यत्र तयोर्वारणायाचीत्यस्यावश्यकत्वेन समाधानमुक्तम् । यदपि कर्मवत्सूत्रे "किमिदन्तप इति तपेरयमौणादिकोऽस्कारो भावसाधनः" इत्युक्तं, तदपि पररीत्या योगप्रदर्शनेन स्वमते तदर्थे तच्छब्दस्य रूढिद्योतनायेति न तद्विरोधः । एवमन्यदप्येवंजातीयकं व्याख्येयमिति सुधियो विभावयन्तु ।

अनुबन्धद्वयेति । स्वरार्थं तित्त्वमेवास्त्विति भावः ।

वल्गु इति । कण्वादिपठितप्रातिपदिकेनैव सिद्धे इदं व्यर्थं तवेति ।

सौत्र इति तु इति । सौत्रात्प्रत्ययो णिद्वेति युक्तं वक्तुम् ।

टिलोप इति । तत्र स्याधातोः "आतो लोपः"[ पा० सू० ६–४–४८ ] इत्यनेन अन्यस्य तु निपातनादिति बोद्ध्यम् ।

कमिमनि [ उ० पा०१ सू०७५ ] । अनेनैव कन्तोः सिद्धौ "अर्जिदृशि" [ उ० पा०१ सू०२७ ] इति सूत्रे कमिग्रहणं व्यर्थम् ।

केचित्त्विति । अत्रारुचिः कैयटमाधवादिग्रन्थविरोधः ।

ग्रोमुट् च [उ०पा०१सू०१००]। गर्मुच्छब्दः प्रत्ययस्वरेणान्तोदात्तः । अत एव'गार्मुतम्'इत्यत्राण् । क्वचिद्वेदे आद्युदात्तपाठस्तु छान्दसः।

सर्वनिघृष्व (उ० पा०१ स०१५९ )। अतन्त्र इति व्याचष्टे—अकर्तरीति ।

"इण्शीभ्याम्" ( उ० पा०१ सू०१५८ ) इत्येव सिद्धे "शेव" ( उ० पा०१ सू०१६० ) इति व्यर्थमत आह–अन्तोदात्तेति ।

इति प्रथमः पादः ॥

---

*अन्तरङ्गपरिभाषाया इति । अस्य दोषः शङ्कित इत्यत्रान्वयः । भाष्यकृतेति शेषः । एवं हि तत्रोक्तम्– "यणादेशादियुवौ । यणादेशादियुवावन्तरङ्गतोऽभिनिर्वृत्तावप्राप्नुतः–वैयाकरणः, सौवश्व इति । लक्षणा हि भवत य्वोरचि वृद्धिप्रसङ्गे इयुवौ भवत इति । नैष दोषः । अनवकाशावियुवौ । अचीति चावश्यकम् । प्रैयमेधः प्रैयङ्गव इत्येवमर्थम्" इति । प्रसङ्गाद् व्याकरणान्तरे लक्षणं विचारयितुमाह– *यणादेशे इति । इत्युणादिषु प्रथमपादविवरणम् ।[२]

---

( १ ) दोषो न शङ्कित इत्यादर्शपुस्तके पाठः ।

( २ ) उणादिद्वितीयपादस्य चन्द्रकलायां विवरणं ग्रन्थकृता न कृतं स्पष्टार्थत्वादित्यवधेयम् ।

कृतेः छः ( उ० पा०२ सू०१८८ ) 'ऊ' आदेशेनैव सिद्धे 'क्रू' आदेशविधानं प्रक्रियालाघवार्थम् ।

रञ्जेः क्युन् ( उ० पा०२ सू०२४६ ) । रजनी । गौरादित्वान्ङीषि बोध्यम् ।

तृन्तृचौ ( उ० पा०२ सू०२५९ ) । शास्तिक्षदादिभ्य इति पाठान्तरम् । शास्ता । मूलस्थपाठे तु क्षदादित्वादयं साधुः ।

इति द्वितीयः पादः ॥

सिवेष्टेः ( उ० पा०३ सू०२९६ ) । उकारादेशेनैव सिद्धे यूकरणं स्पष्टार्थम् । स्योन इति । अनित्यत्वाद् "वार्ण" ( प० भा० ) इत्यस्या अप्रवृत्तेर्नोपधागुणः ।

दाकेत्यादौ "केऽणः" ( पा० सू० ७-४-१३ ) इति ह्रस्वो न *"न कपि" ( पा० सू० ७-४-१४ ) इति साहचर्येण तद्धितस्यैव कस्य तत्र ग्रहणात् ।

लोष्टमिति । तृज्वत्सूत्रे *लुशोर्लोष्टमिति भाष्यं "समलोष्टाश्मकाञ्चनः" इत्यत्रोभयोरुपादानङ्गोबलीवर्दन्यायेन । लोष्टरूपाश्मकाञ्चनयोरित्यर्थः । अश्मपदेन मणयः । लोष्टतुल्यत्वेनात्यादरणीयेऽप्यादराभावध्वननार्थन्तदिति वा ।

वर्त्तिकेति । शकुनौ प्राचां मते वर्त्तकेत्यर्थमुदीचां मते वर्त्तिकेत्येवरूपार्थं "वर्त्तका शकुनौ प्राचाम्" ( का० वा० ) इतीत्वप्रकरणस्थं वचनं बोध्यम् ।

अस्थीति । क्थिनो नित्त्वं चिन्त्यप्रयोजनम् । नब्विषयत्वेनाद्युदात्तत्वसिद्धेः ।

इति तृतीयः पादः ।

---

*नकपीतिसाहचर्येणेति । कपिपरेऽण् तद्धितपरक एवेत्यर्थाधिकारात् "केणः" ( पा० सू० ७-४-१३ ) इतिसूत्रेऽप्यण् ताद्धितककारपरक एव गृह्यत इति भावः ।

लोष्टपलितौ ( उ० पा० २ सू० ३७९ ) । *लुशोर्लोष्टमिति भाष्यमिति । "स्थानेन्तरतमः" ( पा० सू० १-१-५० ) इतिसूत्रे भाष्ये 'लोष्टः क्षिप्तो बहुवेगं गत्वा" इतिभाष्यप्रयोगाल्लोष्टशब्दोऽर्द्धर्चादिः ।

जूर्णिरिति । बाहुलकादाङ्पूर्वादृतेरपि । आर्त्निः=धनुःकोटिः, ङीषि आर्त्नी इत्यपि । "आर्तिः पीडाधनुःकोट्योः" ( अ० को० ) इत्यार्तिशब्दस्तु आङ्पूर्वादृतेः क्तिनि बोद्ध्यः । अयं ह्रस्वादिरपि उणादिषु साधुः ।

अञ्चेः को वेति । अत्र चिदित्यनुवृत्त्याऽन्तोदात्तोऽयम् । मध्योदात्तोऽपि बाहुलकात् ।

मरीचिरिति । मिदचोन्त्यात्सूत्रभाष्ये "मर्च्चेर्ण्यन्तादच इरीमागमश्च" इत्युक्तम् ।

कुचश्चडिति । दीर्घविधानसामर्थ्यान्न गुणः । बाहुलकाद्दीर्घगुणयोरभावे कुचोऽपि ।

समीणः ( उ० पा०४ सू०५४१ ) । चट्दीर्घश्चेति वर्त्तते । जम्बालेति । कर्दमेत्यर्थः । षण्ढ इति । शण्ठः *प्रागुक्तः । "ठस्येकः" ( पा० सू० ७-३-५० ) इति सूत्रे शण्ठ इति प्रतीकमुपादाय "जनिदाच्यु" ( उ० पा०४ सू०५५४ ) इति ठप्रत्यय इति कैयटः । प्रेत्वरीति । "यदागमाः" ( प० भा० ) इति न्यायेन तुग्विशिष्टस्य ग्रहणान्ङीपौ । नच हशन्ताद्विहितत्वेन निषेधापत्तिः । "कथञ्चात्र तुक् छान्दसत्वात्" इति "वनो र च" ( पा० सू० ४-१-७ ) इति सूत्रस्थभाष्येणास्य छान्दसत्वबोधने तत एव तदप्रवृत्तेः । वर्णिः सौत्र इति । ण्यन्तस्य वर्णेरादेश इत्युचितम् । किं च 'बल प्राणने' इत्यस्य बलौ सिद्धे वर्णेरादेशविधानं व्यर्थमिति बोद्ध्यम् । "वसिवपि" ( उ० पा० ४ सू० ५७४ ) इति सूत्रे वादिर्ण्यन्तो निर्दिष्टो बाहुलकादण्यन्तादपि । एतच्च भूवादिसूत्रे आकरे । पातेर्डुमिति । "सूतेः सस्य पः ह्रस्वो म्सुन् प्रत्ययः" इति "स्त्रियाम्" ( पा० सू० ४-१-३ ) इति सूत्रे *भा-

---

"पलितं शैलजे तापे केशपाके च कर्दमे" ।
दर्भाङ्कुर इत्युपलक्षणम् । पुंलिङ्गस्य रोमाञ्चेपि दर्शनात् ।
"सूची तु सीवनद्रव्ये आङ्गिकोऽभिनयान्तरे" इति ।
आङ्गिको=रोमाञ्चः । इत्युणादिषु तृतीयपादविवरणम् ।

*प्रागुक्त इति । एवञ्च तन्मते प्रकृतसूत्रे ठेत्येव पाठः । षण्ढस्तु बाहुलकात् । लोत्रं=चोरचिह्नम् । *भाष्ये उक्तमिति । एवञ्च बाहुलकत्वेन तथाप्यस्य साधनं बोध्यम् । अगस्तिरित्यगशब्दे उपपदेऽस्धातोस्तिप्रत्ययो बा-

ष्ये उक्तम् । अगस्तिरिति । *अत्र "क्तिच्क्तौ च" ( पा० सू० ३-३-१७४ ) इति क्तिजित्यन्ये । एतत्समानार्थोऽगस्त्यशब्दोऽपि अगं स्त्यायतीति विग्रहे "आतोऽनुपसर्गे कः" ( पा० सू० ३-२-३ ) इति कान्तः । *द्वयोरपत्ये ऋष्यणि यकाररहितम् 'आगस्तः' इत्या*द्यस्य, 'आगस्त्यः' इति द्वितीयस्य । आद्यस्य बहुत्वे 'आगस्ताः' इति, द्वितीयस्य 'अगस्तयः' इति, "आगस्त्यकौण्डि" ( पा० सू० २-४-७० ) इत्यगस्त्यादेशः । *अगस्तिशब्दो गर्गादिष्वित्यन्ये । भूरञ्जिभ्यामिति । शृरञ्जिभ्यामिति पाठ इति "अनिदिताम्" [ पा० सू० ६-४-२४ ] इति सूत्रे हरदत्तः । 'पुरञ्जिभ्यामिति' इति कैयटः ।

मिथुनेऽसिः [ उ० पा०४ सू०६७२ ] । धातूपपदयोगो=मिथुनम् । 'उरुव्यचाः' इत्यस्यैवोदाहरणमिति "ग्रहिज्या" [ पा० सू० ६-१-१६ ] इति सूत्रे कैयटस्वरसः । दीर्घ इति । बाहुलकात्तदभावे 'पुरुरवाः' अपि । प्रायेणेति । तेन 'अप्सराः' इत्येकवचनान्तमपि । *ध्वनितश्चेदं वर्णद्वित्वप्रकरणे भाष्ये ।

इति चतुर्थः पादः ।

---

हुलकादित्याशयेन मूलेऽसावुक्तः । प्रकारान्तरेणापि तस्य सिद्धिमाह—*अत्रेति । *द्वयोः =अगस्तिशब्दागस्त्यशब्दयोः । *आद्यस्येति । रूपमिति शेषः । अगस्त्यशब्दस्य प्रकारान्तरेणापि सिद्धिमाह—*अगस्तिशब्द इति । श्रयतेः स्वाङ्गे शिरः किश्च । शिरः शिरसी । शृणातेर्घञर्थे के इकारादेशेऽदन्तोऽप्ययम् । अत एव 'पिण्डं दद्याद्गयाशिरे' इत्यपि साधु ।

वृङ्शीभ्यां रूपस्वाङ्गयोः पुट् च[उ० पा० ४ सू०६५०]। शेपो गुह्यमिति। बाहुलकात्पप्रत्यये शेपशब्दोऽदन्तोऽपि। यस्यामुशन्तः प्रहराम शेपम् ।

नहेर्दिवि भश्च (उ० पा० ४ सू०६६०)। नहधातोरसुन् भश्चादेशः ॥

नभो व्योम्नि नभो मेघे श्रावणे च पतद्ग्रहे ।

घ्राणे मृडालसूत्रे च वर्षासु च नभः स्मृतः" ॥

पतद्ग्रह इत्यस्य पततः कफादेर्ग्रह इत्यर्थः । पीकदानीति लोके ।

मिथुनेऽसिः ( उ० पा० ४ सू० ६७२ ) । धातूपसर्गयोर्योगे सतीण् धातोरसिप्रत्ययः स्यात् ।

पुरूरवाः ( उ० पा० ४ सू० ६७१ ) पुरूरवस्शब्दो निपात्यते इत्यर्थः । अप्सराः । प्रायेणायं भूम्नि ।

स्त्रियां बहुष्वप्सरसः स्वर्वेश्या उर्वशीमुखाः ।

*ध्वनितमिति । एकवचनान्तप्रयोगेण ध्वनितमित्यर्थः ।

समानेऽस्य इति । इणिति डिदिति यलोप इति चानुवर्तते । स चोदात्त इति। अस्य समानस्य सादेश उदात्त इत्यर्थः । स च समासोत्तरमिति तित्स्वरेण व्यवस्था । समानस्येति योगविभागेन सदृशपर्यायसहशब्देन वा समासे सादेशसिद्धेरस्यानुवादत्वात् ।

शीङो [उ०पा०५सू०७१२] । अत्र "डित्खनेः" [उ०पा०५सू०७०८] इयत उदात्तग्रहणमनुवर्त्तते, तच्च शीङो विशेषणम् । तेनाद्युदात्तोऽयम् । ह्रस्वविधिसामर्थ्याद्गुणो न । लोप इति । अलोऽन्त्यस्य ।

इति पञ्चमः पादः ॥

उणादयो [ पा० सू० ३-३-१ ] । *अत्रोणादिशब्देन व्याकरणान्तरप्रसिद्धपञ्चपाद्युक्ता एव नाष्टाध्यायीस्थाः । तथा सति "कृत्यल्युटः" [ पा० सू० ३-३-११३ ] इत्यत्र "रोगाख्यायाम्" [ पा० सू० ३-३-१०८ ] इत्यत्र च बहुलग्रहणवैयर्थ्यापत्तेः । एवञ्चात्र निर्णीतत्वात् "ताभ्यामन्यत्र" [पा०सू०३-४-७५] इत्यत्रापि पञ्चपाद्युक्तानामेव ग्रहणम् । बहुलग्रहणप्रपञ्चभूतानि सूत्राणि व्याचष्ट-भूते इत्यादि ।

तुमुन्ण्वुलौ [ पा० सू० ३-३-१० ] । भविष्यतीत्यनुवर्त्तते

---

विदिभुजिभ्याम् ( उ० पा० ४ सू० ६८७ ) । आम्बामसिः स्यात् । विश्ववेदाः । विश्वं वेत्तीति विग्रहः । विश्ववेदास्तनूनपात् । विश्वभोजाः । विश्वभोजाः शतक्रतुः । इत्युणादिषु चतुर्थपादविवरणम् ।

वृञ्लुठितनिताडिभ्य उलच् तण्डश्च ( उ० पा० ५ सू०६९७ ) । अयमन्तोदात्तः । पूर्वस्तु मध्योदात्त इति पुनर्व्युत्पादितः ।

शीङो ह्रस्वश्च ( उ०पा० ५ सू० ७१२ ) ।
शिखा शाखा बर्हिचूडा । चूडामात्रेऽपि ।
"चूडामात्रे शिखायाञ्च ज्वालायां प्रपदेपि च ।
इतिदर्शनात् ।
जनेष्टन् लोपश्च ( उ० पा० ५ सू० ७१८ ) । जटा
जटा लग्नकचे मूले मांस्यां प्लक्षे पुनर्जटी ।
इत्युणादिषु पञ्चमपादविवरणम् ।

## अथ उत्तरकृदन्तविवरणम् ।

उणादयो बहुलम् ( पा० सू० ३-३-१ ) । अत्रोणादिशब्देनाष्टाध्यायामेतत्सूत्रोत्तरसूत्रैर्विहितानाम्प्रत्ययानाङ्ग्रहणमितिशङ्कावारणायाह— *अत्रोणा-

उपपदमिति महासञ्ज्ञया क्रियापदं तद्वाचकपरं, *क्रिया चात्र तिङन्तो-परथाप्यैव। तेन 'भोक्तुं पाकः' इति न। "उपपदमतिङ्" [ पा० सू० २-२-१९ ] इति आष्टस्वरसादिति निरूपितम्। पुनर्ण्वुलिति। *"अकेनोः" [ पा० सू० २-३-७० ] इत्यत्र भविष्यदधिकारविहितस्या-कस्य योग इति व्याख्याने *न फलम्। *न च वर्षशतस्य पूरक इत्यादौ

---

दीति। मूले केचिदविहिता अप्यूह्या इति आदिना। यथा "ऋलक्" (मा०सू० २) सूत्रभाष्ये लकारोपदेशस्य प्रयोजनकथनावसरे "चतुष्टयी शब्दानाम्प्रवृत्तिः" इत्येतत्पक्षोपष्टम्भेन लफिडलफिड्डशब्दयोः परतो लकारोपदेशे सति "यदृच्छाशक्तिजानुकरणप्लुत्याद्यर्थः" इत्यनेन यदृच्छाशब्दे प्रयोजनमभिधाय "त्रयी शब्दानाम्प्रवृत्तिर्न सन्ति यदृच्छाशब्दाः" इतिकथनोत्तरम् "अस्तिप्रवृत्तिश्चैव हि लोके दृश्यते तस्मात्फिड़फिड्डावौणादिकौ प्रत्ययौ" इत्युक्तम्। संज्ञासु=अनादिभूतासु कोशादिप्रसिद्धासु। कार्यात्=गुणनिषेधादिकार्यात्। एतद्गुणादिषु शास्त्रं=शासितव्यमित्यर्थः। न च "वर्तमाने" ( पा० सू० ३-२-१२३ ) इतिसूत्राद्वर्तमान इति नानुवर्तनीयमेवञ्च भूतादौ सिद्धिर्भविष्यत्येवेति भूतेऽपीत्यादि न कार्यमिति वाच्यम्। प्रायेण वर्त्तमान एव, क्वचिदेव तु भूते भविष्यति वेति व्युत्पादनाय पुनः सूत्रारम्भात्।

तुमुन्ण्वुलौ क्रियायाम् ( पा० सू० ३-३-१० )। अत्र क्रियार्थाया-मित्येव क्रियाया लाभे पुनः क्रियायामित्युपादानात्साध्यमात्रस्वभावा येतरा-विशेषणतया भासमाना क्रिया तद्वाचकस्य ग्रहणम्। तेन 'भोक्तुं पाकः' 'भोक्तुं पाचकः' इति च न। न चैवं 'भोक्तुमपचति पश्य' इत्यत्राव्याप्तिरिति वाच्यम्। क्रि-यायामित्यनेन क्रियाया एवोपस्थितौ तस्या उपपदत्वासम्भवेन तद्वाचकप्र-कृतिके लक्षणावश्यं कार्या, एवञ्च तद्वाचकप्रकृतिमात्रजन्यो यः पदार्थोपस्थि-त्यात्मको बोधस्तत्कालिकस्यैवेतराविशेषणत्वस्य ग्रहणात्। तदेतदाह-*क्रिया चात्रेत्यादिना। पुनर्ण्वुलुक्तेरिति मूले उक्तन्तदसङ्गतम्। यद्यत्र तेन शास्त्रेण ण्वुल् स्यात्तदा भविष्यत्त्वस्याप्रतीतेः "अकेनोर्भविष्यदाधमर्ण्य-योः" ( पा० सू० २-३-७० ) इत्यत्राकप्रत्ययान्तस्य योगे षष्ठीनिषेधः स्यादित्य-त्र ण्वुल्ग्रहणमावश्यकमेवञ्च भविष्यदधिकारविहितस्येति लभ्यत इति केचित्; तन्मतं दूषयति—*अकेनोरित्यत्रेति। *न फलमिति। इन्साहचर्येण भविष्यत्त्ववाचकस्याकस्तत्र ग्रहणादिति शेषः। पुनर्ण्वुलुक्तेरित्यस्य तु प्रकृतसूत्रे ण्वुल्ग्रहणाभावेऽप्यकान्तमात्रन्तेन ण्वुला सिद्धमित्यत्र तात्पर्यम्। न चेह ण्वुलग्रहणेऽपि क्रियावाचकप्रकृतिके तेन ण्वुलस्यादिति वाच्यम्। वाक्य-संस्कारे तादृशस्थलेऽनेनैव ण्वुलः स्वीकारात्। यत्र स्वातन्त्र्येणाकप्रत्यया-न्तस्य साधनोत्तरं वाक्यस्य प्रयोगस्तत्र्याकस्य सम्भवेऽपि न तत्र षष्ठीव्या-वृत्त्यर्थन्तथा व्याख्यानमित्याशयेनाह—*न चेत्यादि। ननु यथा तृच् न तथा-

"ण्वुल्तृचौ" [ पा० सू० ३-१-१३३ ] इति ण्वुलि पदान्तरसम्बन्धाद्भविष्यत्त्वप्रतीतावपि षष्ठीसिद्धिः फलं, तथा एतत्कर्मकयाजनकर्तार इत्यर्थके 'अङ्ग यजतां लप्स्यन्तेऽस्य याजकाः' इत्यादौ षष्ठीसिद्धिरपि फलमिति वाच्यम् । शब्दशक्तिस्वाभाव्येन क्रियानुपपदकाक्रान्तस्य कर्तृप्रतिपादकतया पदान्तरसम्बन्धादिना भविष्यत्त्वप्रतीतावपि अकस्य भविष्यदर्थकत्वाभावेन तत्र निषेधाप्राप्तेरिति भावः । *लट् तु सामर्थ्याद्भवत्येवेति बोद्धव्यम् ।

---

लड़पि न स्यादत आह—*लट् चेति । अत्रेदम्बोध्यम् । यद्यप्यनेन सूत्रेण ण्वुलस्तुमुनोऽपि विधानं तथाप्ययं भावे"अव्ययकृतो भावे"(भा०इ०)इतिवचनात्। अत एव "तुमर्थाच्च भाववचनात्" ( पा० सू० २-३-१५ ) इत्यत्र तुमर्थादित्यनेन भाववचनत्वे लब्ध इति व्याख्यातम् । प्रकृते च भावोऽसत्त्वभूत एव । अन्यथार्थे लिङ्गसंख्यादीनामनन्वयात् । तुमुन्नन्तार्थस्य चोपपदार्थक्रियायां स्वोद्देश्यकत्व-स्वसमानकर्तृकत्वोभयसम्बन्धेनान्वयः । एवञ्च 'कृष्णं द्रष्टुं याति' इत्यस्मात्कृष्णकर्मकभविष्यद्दर्शनविशिष्टं यानं, 'कृष्णं दर्शको याति'इत्यस्मात्तु कृष्णकर्मकभविष्यद्दर्शनकर्तृकर्तृकं तादृशदर्शनविशिष्टं यानमिति च शाब्दबोधः । "कर्तरि कृत्" ( पा० सू० ३-४-६७ ) इतिशास्त्रेण , ण्वुलः कर्त्रर्थकत्वप्रतिपादनेन कर्त्तुः प्रकृत्यर्थम्प्रति प्राधान्यात् । ननु "याव पुरानिपातयोः" ( पा० सू०-३-३-४ ) इतिसूत्रे "यावत्पुरादिषु लट्विधिर्लुटः पूर्वविप्रतिषेधेन"इति वार्त्तिककृतोक्तम् । यावत् भुङ्क्ते पुरा भुङ्क्ते इत्यत्र लटोऽवकाशः, श्वः कर्त्तेत्यादौ लुटोऽवकाशः । "यावत् श्वो भुङ्क्ते"इत्यत्र तु लड़ेव । इदं च वार्त्तिकं यावत्पुरेतिसूत्रस्य"अनद्यतने लुट्"[पा.सू०३-३-१५]इत्यत्रानुवर्त्य वाक्यभेदेन च सम्बन्धेन च यावत्पुरायोगे लटो विधानेन सिद्ध्या प्रत्याख्यातम् ।एवञ्च "तुमुन्ण्वुलौ"इतिसूत्रस्यापि मध्यपतितत्वादत्रापि वाक्यभेदेन तत्सम्बन्धः स्यात्; तथा च यावत्पुरायोगे भविष्यतिक्रियार्थायां क्रियायां लड़ेव स्यादिति चेन्न ।"विभाषा कदाकर्ह्योः" (पा० सू०३-३-५) इत्यत्रैवात्रापि तदसम्बन्धात् । मण्डूकप्लुतया च तत्र तस्य सम्बन्धः । अत एव "यावत्पुरा"इतिसूत्रे"अनद्यतनेलुडित्यत्र"इति विशिष्योक्तम् । तुमुनः प्रसङ्गात्तुमुन्विधायकसूत्रान्तरमुपन्यस्तम्मूले ।

समानकर्तृकेषु तुमुन् ( पा० सू० ३-३-१५८ ) । "इच्छार्थेषु लिङ्लोटौ" ( पा० सू०३-३-१५७ ) इत्यत इच्छार्थेष्वित्यनुवर्तते । इच्छति भोक्तुम् । अत्र तुमुनन्तार्थस्य विषयतासम्बन्धेनेष्धात्वर्थम्प्रति विशिषणताऽस्ति । तथैव भोजनविषयिणी इच्छेत्याकारकस्य शाब्दबोधस्यानुभवात् । न तु भोजनार्थत्वस्य प्रतीतिरिति पूर्वसूत्रेणाप्राप्तस्तुमुन्विधीयते । 'चिकीर्षति' 'पिपक्षति'इत्यादौ सर्वत्र कर्तुमिच्छतीतिरीत्या यत्र विग्रहः क्रियते तत्र सर्वत्रायमेव तुमुन् । वृत्तिविग्रहवाक्ययोः समानार्थकस्य न्याय्यत्वेन सन्नन्तजन्यशाब्दबोधे सनर्थ-

अनन्तरत्वादिति । अत्र *व्याख्यानमेव शरणम् ।

कालः पचतीति । *अत्र धात्वर्थमात्रं विवक्षितं न तु वर्तमानत्वादि भूतभविष्यत्पाकस्यापि विवक्षितत्वात् प्राप्तिरिति भावः ।

---

छाया: प्रकृत्यर्थनिष्ठविषयतासम्बन्धावच्छिन्नविशेषणतानिरूपिताविशेष्यतया प्रकृत्यर्थसमानकर्तृकत्वेन च यथा भानन्तथैव तुमुनन्तादपीति ।

शकधृष ( पा० सू० ३-४-१६५ ) । अयमप्यक्रियार्थोपपदार्थ एवारब्धो योगः । शक्नोति भोक्तुम् । धृष्णोति भोक्तुम् । जानाति भोक्तुम् इति । शकधात्वर्थोऽनुकूलसामर्थ्यविषयकनिश्चयस्तद्घटकानुकूलत्वे निरूपितत्वसम्बन्धेन भुजधात्वर्थस्यान्वयेन भोजनविषयकस्य शकधात्वर्थस्यानुभवात् मुख्यविशेष्यतया भासमानो यस्तादृशो निश्चयस्तस्मिन् भोजनार्थत्वन्तु न शाब्दबोधविषय इति "तुमुन्ण्वुलौ" इत्यस्याप्राप्तिः । धृषधात्वर्थोऽपि तादृशो निश्चय एव । ज्ञाधात्वर्थे विषयतयाऽन्वयस्तु प्रसिद्ध एव । तदुद्देशेनानुष्ठीयमानत्वं च तादर्थ्यं, तस्याप्रतीतिरस्त्येव । भोक्तुं ग्लायति । ग्लानिः=सामर्थ्याभावनिश्चयः । तस्मिन्नपि भोजनस्य विषयतयाऽन्वयः । भोक्तुं घटते । अत्र घट्धात्वर्थो योग्यता सामर्थ्यनिश्चयवत्त्वरूपैव । भोक्तुमारभते । आरम्भश्चाद्या तद्विषयिणी कृतिः । अस्या भोजनविषयकत्वम्प्रसिद्धमेव । भोक्तुं लभते । लभधात्वर्थः प्राप्तिस्तस्या भोजनसम्बन्धित्वन्न तु भोजनोद्देशेनानुष्ठीयमानत्वम् । भोक्तुं प्रक्रमते । भोक्तुमुत्सहते । उभयत्रापि भोजनविषयकाद्यकृतेरेव प्रतीतिः । भोक्तुमर्हति इत्यत्रापि योग्यताया एव प्रतीतिः । भोक्तुमस्ति भवति विद्यते वा । सर्वत्रास्त्यर्थे सम्बन्धित्वमात्रप्रतीतिः । *व्याख्यानमेवेति । शकधृष्धात्वोः पृथगुपादानमूलकव्याख्यानमेवेत्यर्थः । एवमस्तीत्यस्य विसंज्ञकत्वेनैतस्य पूर्वनिपाते कर्त्तव्ये तदकरणमपि मूलम् ।

कालसमयवेलासु ( पा० सू० ३-३-१६७ ) । भोक्तुं कालोऽयमित्यादौ भुजधात्वर्थस्य कालिकसम्बन्धावच्छिन्नकार्यतानिरूपितकारणत्वात्मकयोग्यत्व—स्वानुकूलप्रवर्तनाप्रयोजकनिश्चयविषयत्वोभयसम्बन्धेन काले विशेषणता । ननु भूतानि पचन्तीतिप्रत्युदाहरणाद्वर्तमानत्वस्य धात्वर्थविशेषणतया प्रतीतिः 'भोक्तुं कालः' इत्यस्मात्तु न तथेति कथमेतदित्यत आह—*अत्र धात्वर्थमात्रेति ।

भाववचनाश्च ( पा० सू० ३-३-११ ) । भविष्यतीति क्रियार्थायां क्रियायामिति चानुवर्तते । वक्ष्यमाणानां प्रत्ययानां घञादीनां विशेषविहितेन तुमुना बाधाभावायेदं सूत्रम् । न च वासरूपविधिना तेपि भविष्यन्तीति वाच्यम् । पूर्वसूत्रघटकण्वुल्ग्रहणेन क्रियार्थायां क्रियायामुपपदे वासरूपन्यायेन तृजादयो नेत्युक्तत्वेन घञपि न स्यादित्याशयात् । न चायं तुमुन् यद्यपि भावे विधीयते तथापि घञ्वाच्यो भावः सत्त्वभूतोऽयं त्वसत्त्वभूत इति कथमनेन घञो बाधस्य प्रसक्तिरिति वाच्यम् । तादृशविशेषस्य स्फुटप्रतिपत्त्यर्थमेवा-

भाववचना इति । *बाहुलकात्कर्मणि ल्युट्। भावाधिकार-विहिताश्च भाववचनाः । *न च 'भावे' इत्येतावतैव भावे ये विहितास्ते ततोऽन्यत्रापीत्यर्थेनेष्टसिद्धिरिति वाच्यम् । याभ्यः प्रकृतिभ्यो येन विशेषेण भावे प्रत्यया विहितास्तेभ्यस्तेनैव विशेषेण ते भवन्त्वित्यर्थं वचनग्रहणसत्त्वात्, तदाह—भावे इत्यधिकृत्येति ।

अण्कर्मणि च [ पा० सू० ३-३-१२ ] । चात्क्रियार्थायामित्याद्याकृष्यते, उपपदसन्नियोगश्च क्रियते । *उपपदत्वन्तु प्रत्येकमेव । प्रत्येकं सप्तमीनिर्देशात् । इदं सूत्रं ण्वुलाऽणो बाधा मा भूदित्यर्थम् । न च 'वाऽसरूप'न्यायेन निर्वाहः । पुनर्ण्वुल्विधानेनैतद्विषये न्यायाप्रवृत्तेः । *अत एवैतद्विषये तृजचौ न । कृते चास्मिन् 'वाऽसरूप'न्यायेन ण्वुलपि; तदाह—ण्वुलोऽपवाद इति । *एवञ्च प्रतिप्रसवविधिरयम् । *पुनरनुवादेन ज्ञापकसिद्धवासरूप*निषेधाप्रवृत्तिमात्रम् । अत एवापूर्वविध्यपेक्षया लाघवम् । नन्वे*वं 'कम्बलदायः' इत्यादावण् न स्यादनेन सूत्रेण ण्वुला प्राप्तबाधस्य प्रतिप्रसवेऽपि केन बाधस्य दुर्वारत्वात्, अत आह—परत्वादिति । *आवृत्त्याऽस्य पुनरण्विधायकत्वेनाण उत्कृष्टत्वात्कस्यापि बाध इत्यर्थः, वचनग्रहणसामर्थ्याच्चानिवृत्तिरिति *भाष्ये स्पष्टम् ।

पद रुज [ पा० सू० ३-३-१६ ] । "एरच्" [ पा० सू० ३-३-५६ ] इत्यतः प्राक् घञधिक्रियते । अयं कर्तरि ।

---

स्य सूत्रस्य करणात् । भाववचनशब्देन घञादीनामुपस्थित्यर्थमाह—*बाहुलकादिति । प्रकृतसूत्रे वचनग्रहणादधिकार्थलाभ इत्याह—*न चेत्यादिना । यागाय याति । घञन्ताद्धात्वर्थमात्रस्य प्रतीतिस्तस्य धात्वर्थक्रियायामनुकूलत्वसमानकर्तृकत्वोभयसम्बन्धेन प्रकारतया शाब्दबोधे भानम् ।

अण् कर्मणि च ( पा०सू० ३-३-१२ ) । अनेन सूत्रेण विहितोऽण् कर्तरि भवति"कर्तरि कृत्" ( पा०सू०३-४-६७ ) इतिसूत्रात् । एवञ्च क्रियार्थायां क्रियायां विशेषविहितो ण्वुल्प्रत्ययोऽणो बाधकः स्यादित्यस्यारम्भः । चस्य प्रयोजनमाह—*उपपदेति । *सन्नियोगः=समुच्चयः । *अत एव=अत्र वासरूपन्यायाप्रवृत्तेरेव । *एवञ्च=अस्याणः स्वविषये बाधकस्यापि ण्वुलोबाधकत्वे च । तत्र विशेषमाह—*पुनरनुवादेनेति । *निषेधाप्रवृत्तिमात्रमिति । अत एवोक्तं प्राङ् ण्वुलपीति । *एवम्=अस्य प्रतिप्रसवविधित्वे । परत्वादित्यस्योत्कृष्टत्वादित्यर्थस्तदाह—*आवृत्त्येति । *भाष्ये स्पष्टमिति । तत्र हि "यः कर्मण्यणितिसूत्रेणाण् विहितः स क्रियार्थायां क्रियायामुपपदे भविष्यत्यन्यत्र च भ-

सारोबलमिति। *भाष्ये तु बले 'खदिरसारः' इत्युदाहृतम्।
सिद्धावस्थेति। *अत एवास्य* स्त्रियामिति विशेषणं सङ्गच्छते।

---

विष्यति"इत्याशङ्क्य "अपवादविषयेऽनिवृत्त्यर्थम्" इति समाधानोत्तरं "किमुच्यतेऽपवादविषयेऽनिवृत्त्यर्थमिति। न पुनरुत्सर्गविषये प्रतिपदविध्यर्थं स्यात् ?, इदानीमेव ह्युक्तं क्रियायामुपपदे क्रियार्थायां वासरूपेण तृजादयो नेति। अण् चापि तृजादिः" इति पुनराशङ्कायां "एवन्तर्ह्युभयमनेन क्रियतेऽपवादविषयेऽनिवृत्तिरुत्सर्गविषये च प्रतिपदाविधानम्" इत्युक्तम्। ततोऽपूर्वविधानापेक्षया प्रतिप्रसवे लाघवादुत्सर्गविषय एव'काण्डलावो व्रजति'इत्यत्र ण्वुलस्बाधित्वाऽण् स्यादपवादविषये कम्बलदायो व्रजतीत्यादौ न स्यादित्यभिप्रायेण "कथं पुनरेकेन यत्नेनोभयं लभ्यम्"इत्याशङ्कायां "कर्मग्रहणसामर्थ्यात्" इत्यभिधाने"कथं पुनरन्तरेण कर्मग्रहणं कर्मण्यण् लभ्य"इतिपरेणाशङ्किते "वचनग्रहणमपि प्रकृतमनुवर्तते" इत्युक्तम्। तेनावृत्तिर्ध्वन्यते इति भावः।

मूले स्पृशतीति स्पर्श इति। रोगविशेषस्य संज्ञेयम्।

सृ स्थिरे (पा०सू०३-३-१७)। सरति कालान्तरमिति सारः। सारांशस्य दृढत्वाच्चिरकालं स्थितिर्भवति। सरतेरित्यनेन भ्वादिजुहोत्यादिपठितयोर्ग्रहणम्। स्थिर इति कर्त्तरि छादितिसूत्रोपस्थितस्य कर्तुर्विशेषणमित्युक्तन्तेन स्थिरशब्दे उपपदे इति शङ्का निरस्ता।सारो बलमिति मूलेऽभिहितम्,एतच्च वृत्त्यनुसारेणास्मिन्नर्थे सृधातुर्विलक्षणचेष्टानुकूलव्यापारार्थकः। बलं हि विलक्षणचेष्टां कारयति। वस्तुतस्तु नैतद्युक्तमित्याह- *भाष्ये त्विति। तत्र हि—"बले शाल्तसारः खदिरसारः" इत्यभिहितम्। यद्यपि "घञजपाः पुंसि"इत्यनेन पुंस्त्वमस्य प्राप्तं तथाप्यर्द्धर्चादिगणे पाठादुभयलिङ्गोऽयम्

*अत एव=सिद्धावस्थापन्न इतिविशेषणादेव।*स्त्रियामिति विशेषणमिति। "कर्मव्यतिहारे णच् स्त्रियाम्"(पा०सू०३-३-४३) इतिसूत्रघटकं यत्स्त्रियामिति तद्विशेषणमित्यर्थः। अत एव प्रकृतसूत्रभाष्ये पुँल्लिङ्गैकवचनान्तेन निर्देशात्पुल्लिङ्गे एव भावे एकवचने चैते प्रत्ययाः स्युः। स्त्रीनपुंसकयोर्द्विवचनबहुवचनयोर्न स्युरिति शङ्कायान्नात्र निर्देशस्तन्त्रमित्युक्तम्। सिद्धावस्थापन्न इत्यभिधानेन घञादिवाच्यस्य भावस्य धात्वर्थभावस्य वैलक्षण्यमभिहितम्। अत्र मानन्तु क्रियान्तराकाङ्क्षाया नियमेन दर्शनमेव। प्रत्ययेन सिद्धावस्थस्य भावस्याभिधानेपि प्रकृत्या साध्यावस्थस्य तस्याभिधानं कारकान्वयानुरोधात्स्वीक्रियत एव। अत्रेदम्बोध्यम्—साध्यसिद्धत्वाभ्यां धर्माभ्याम्भावस्य भेदाद् द्वयोर्भावयोर्भेदेन विशेषणविशेष्यभावेन शाब्दबोधे भानमिति न किन्तु सिद्धत्वसाध्यत्वाभ्यामेकस्यैव भावस्य भानम्। यथा सम्बन्धिभेदेनैकस्मिन्नेव पिता पुत्र इति च व्यवहारस्तथाऽत्राप्युभयोरेकस्मिन् सत्त्वन्न तु तयोर्विरोधः। एतयोरेकनिष्ठत्वान्न शाब्दबोधे स्फुटतया भानम्। एकत्रैव साध्यत्वेन प्रकारता सिद्धत्वेन विशेष्यतेत्यपि केचित्। युक्ततरम-

इगन्तस्यैवेति । *अत्र घञीत्यनुवृत्त्या "उपसर्गस्य घञि" [पा० सू० ६-३-१२२] इत्येव सिद्धे नियमोऽयमिति भावः ।
*प्रायिकमिति । *स्पष्टं चेदं भाष्ये ।

---

त्रैकक्रियाया अन्वये 'पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन' इति व्युत्पत्तिविरोधः स्यादेव ।

"इकः काशे" (पा० सू० ६-३-१२३) इतिसूत्रस्य व्याख्यानावसरे इगन्तस्यैवेति यदुक्तन्तस्योपपत्तिमाह—*अत्र घञीत्यनुवृत्त्येति ।

अवोदैधौद्म (पा०सू० ६-४-२९) । अवपूर्वादुन्देर्घञ् नलोपश्च निपात्यते । एध इत्यत्रेन्धेर्घञि नलोपगुणौ निपात्येते । "पुगन्त"[पा०सू०७-३-८६]इत्यनेन तु गुणस्य प्राप्तावपि "न धातुलोप" (पा० सू० १-१-४) इतिनिषेधोऽन्यथा स्यात । ओद्म इत्यत्रौणादिके उन्देर्मनिन् लोपगुणौ । वृध्यभावश्चेतिमूले प्र-हिमान्यतरपूर्वस्य श्रन्थेरित्यादिः ।

अकर्तरि च कारके संज्ञायाम् (पा०सू० ३-३-१९) । अत्राकर्त्तरि चेतिचकारस्य संज्ञायामित्युत्तरयोजना बोध्येत्याशयेनाह—*प्रायिकमितीति । *स्पष्टश्चेति । तत्र हि—संज्ञाग्रहणमनर्थकम् । असंज्ञायामपि घञ् दृश्यते–को भवता लाभो लब्धः, को भवता दायो दत्त इति । यदि संज्ञाग्रहणं न क्रियतेऽतिप्रसङ्गो भवति कृतः कट इत्यत्र कारः कट इति प्राप्नोति । अतिप्रसङ्ग इति चेन्न । किङ्कारणम् ? । अभिधानलक्षणत्वात्प्रत्ययस्य सिद्धम् । अभिधानलक्षणाः कृत्तद्धितसमासाः । अनभिधानान्न भविष्यति" इत्युक्तम् ।

परिमाणाख्यायाम् (पा०सू०३-३-२७) । परिमाणं=परिच्छित्तिः, इयत्ता । आख्या=उक्तिः । पक्वस्तण्डुलनिश्चाय इत्यत्र "ग्रहवृदृनिश्चि" (पा० सू० ३-३-५८) इतिसूत्रस्यापरिमाणाख्यायामप्प्रत्ययविधायकस्य प्राप्तावप्यनेन बाधः । कर्मण्यत्र घञ् । निःशेषतो राशीक्रियमाणस्तण्डुलसमुदायः । निचाय इति पाठे तु"एरच्"(पा०सू०३-३-५६)इत्यस्य प्राप्तिर्बोध्या । द्वौ शूर्पनिष्पावौ । निष्पूयते तुषाद्यपनयनेन यः शोध्यते तण्डुलादिः स निष्पावः । ततः शूर्पशब्देन तृतीयान्तेन समासः । अत्र शूर्पनिष्ठद्वित्वसंख्यया परिच्छित्तिर्गम्यते । द्वौ कारौ । 'कृ' विक्षेपे इतिधातोः कर्मणि घञ् । विक्षिप्तो धान्यराशिः कारः । अचम्बाधित्वा घञ् । अत्र सर्वेभ्य इत्युक्तेः प्रकृत्याश्रयो यः प्रत्ययः प्राप्तः सोऽनेन बाध्यते । तेनार्थविशेषाश्रयो यः प्रत्ययः स भवत्येव । एका तिलस्य उच्छित्तिरिति यथा । अत्र भावे क्तिन् प्रत्ययः ।

दारजारौ कर्तरि णिलुक्च (का० वा०) । अत्र यद्यपि दार इत्येतद्रूपन्दारयतेः पचाद्यचा सिद्धम् "कर्षात्वत" (पा० सू० ६-१-१५९) इति घञ्यप्यन्तोदात्तत्वात् तथापि "अच्कावशक्तौ" (पा० सू० ६-२-१५७) इत्यस्य बाधनार्थमिदम् । णिलुग्विधानमत्र वृद्धेः श्रवणाय । अन्यथा णौ वृद्धावपि "मितां ह्रस्वः" (पा० सू० ६-४-९२) इति ह्रस्वापत्तिः । "णे-

इङश्च [ पा० सू० ३-३-२१ ]। अयमपि *प्रकृत्याश्रयस्यैव बाधको न क्तिनो *व्याख्यानात् ।

अभिनिस इति संघातग्रहणं *व्याख्यानात्तदाह-अस्मादिति ।

*'उन्नयः' इत्यस्य पर्याय उत्प्रेक्षेति ।

निरभ्योः ( पा० सू० ३-३-२८ ) । अत्रोपसर्गाभ्यां धात्वोर्यथासंख्यम् ।

धान्येति । *धान्यविषयकप्रक्षेपार्थप्रतिपादकादित्यर्थः ।

यज्ञे समि ( पा० सू० ३-३-३१ )। यज्ञविषयकेऽर्थे वर्त्तमा-

---

रानिटि" ( पा० सू० ६-४-५१ ) इतिणिलोपे तु तस्य स्थानिवद्भावेन घञाश्रया वृद्धिर्न स्यात्। लुकि तु न लुकः स्थानिवत्त्वमपरनिमित्तकत्वाल्लुका लुप्तत्वाच्च। क्र्यादेर्ण्यन्ताद्घञस्त्वनभिधानम् । णिलुग्विधानपरभाष्यप्रामाण्यात्। अत्र भाष्ये—"करणे वा दारजारौ वक्तव्यौ" इत्यनेनाण्यन्ताद् दृणातेर्जरयतेर्वा "पुंसि संज्ञायाम्" ( पा० सू० ३-३-११८ ) इति घप्रत्यये प्राप्ते तदपवादो घञ् स्वीकृतस्तदा त्विदं वचनमनावश्यकम्। परन्तु घञ् वचनेन साध्यो न तु सामान्यसूत्रेण। अन्यथा घञ्ल्युटौ पर्यायेण स्याताम्।

इङश्च (पा० सू० ३-३-२१ )। अकर्त्तरि कारके इङो घञ्। *प्रकृत्याश्रयस्य="एरच्"(पा० सू०३-३-५६)इत्यचः। *व्याख्यानादिति। पूर्वसूत्रे सर्वेभ्य इत्युपादानेन तस्य प्रकृत्याश्रयप्रत्ययबाधकता निर्णीता, स एव घञस्मिन् सूत्रेऽनुवर्तते इतिप्रकृत्याश्रयप्रत्ययबाधकत्वमित्येतन्मूलकव्याख्यानादित्यर्थः।

*व्याख्यानादिति । शब्दसंज्ञायामित्युक्तिमूलकव्याख्यानादित्यर्थः। समुदायघटितैव हि संज्ञाऽस्तीति भावः ।

मूले उन्नय उत्प्रेक्षेत्युक्तम्। तत्रोन्नय इत्यत्र यथा "अवोदोर्नियः" (पा० सू० ३-३-२६ ) इति घञः शङ्का तथोत्प्रेक्षेत्यत्रापीति भ्रमवारणायाह—*उन्नय इत्यस्येति ।

निरभ्योः पूल्वोः ( पा० सू० ३-३-२८ )। अप्प्रत्ययस्यापवादोयं घञ् कर्मणि विधीयते।

कृधान्ये ( पा० सू० ३-३-३० )। धान्यशब्दे उपपदे इत्येतद्भ्रमं वारयति—*धान्यविषयकेति। धान्यकर्मकेत्यर्थः।

यज्ञे समि स्तुवः ( पा० सू० ३-३-३१ ) । अधिकरणेल्युडपवादोऽयं घञ्। यज्ञविषयकेऽर्थे शब्दप्रयोगात्मके तस्य यज्ञविषयकत्वं यज्ञक्रियानिष्पादकत्वेन।

प्रे स्त्रोऽयज्ञे ( पा० सू० ३-३-३२ )। प्रपूर्वः स्तृञ्धातुरपि शब्दप्रयोगरूपार्थे वर्त्तते । प्रस्तार इति। शङ्खमण्यादेरिति शेषः।

प्रथने वावशब्दे ( पा० सू० ३-३-३३ ) प्रथने गम्यमाने विशब्दे उप-

नात्स्तुव इत्यर्थः।

समि मुष्टौ ( पा० सू० ३-३-३६ )। मुष्टिविषयकार्थवृत्तेर्ग्रह इत्यर्थः।

परिन्योः ( पा० सू० ३-३-३७ )। द्यूताभ्रेषविषयकार्थाद्धातोरित्यर्थः। *पदार्थानामनपचारो यथाप्राप्तस्य च करणम्=अभ्रेषः।

राजोपशाय इति। राजसमीपशयनस्य पर्याय इत्यर्थः।

हस्तादाने चेः ( पा० सू० ३-३-४० ) निश्चेरयमेव वक्ष्यमाणापःपूर्वविप्रतिषेधेने*ति भाष्ये।

*काशीनिकाय इति। काशीनिवासदेश इत्यर्थः। गोमयनिकाये भावे घञ्।

---

पदे स्तृणातेर्घञ्। प्रथनमिह विस्तीर्णता। सा चेह तिर्यगायतिरूपा। तृणविस्तर इति। आच्छादनमात्रमिह धात्वर्थः। ग्रन्थविस्तर इति। अत्र स्तृञ्धातुर्विस्तीर्णताया एव बोधकः।

छन्दोनाम्नि च [ पा० सू० ३-३-३४ ] समुदायेन छन्दोनाम्नि विवक्षिते स्तृणातेर्घञ्। वृत्तमिह छन्दःशब्दार्थः। शब्दविषयत्वात्पूर्वसूत्रस्येहाप्राप्तिः।

उदिग्रहः ( पा०सू० ३-३-३५ )। उत्पूर्वाद् ग्रहेर्घञ्। "ग्रहवृदृनिश्चि" ( पा० सू० ३-३-५८ ) इतिविहितस्यापोऽपवादः।

समि मुष्टौ [पा० सू० ३-३-३६ ]। ग्रह इत्यनुवर्तते। अत्र ग्रहधात्वर्थोऽङ्गुलिसन्निवेशोऽत एव न "परिमाणाख्यायाम्" [ पा० सू० ३-३-२७ ] इत्यनेन गतार्थता। मल्लस्य सङ्ग्राह इति। मल्लस्येति कर्तरि षष्ठी।

परिन्योर्नीणोर्द्यूताभ्रेषयोः [पा० सू० ३-३-३७]। द्यूते विषये परिपूर्वको नीधातुः समन्ततो नयने वर्त्तते। अभ्रेषपदार्थं व्याचष्टे—*पदार्थानामिति। अनपचारोऽनतिक्रमः। करणम्=औचित्यम्। द्वितीयार्थोदाहरणं राजोपशाय इति।

हस्तादाने चेरस्तेये [पा० सू० ३-३-४०] । हस्तादाने गम्यमाने चिनोतेर्घञ् स्तेयं चौर्यञ्चेन्न विक्षितं भवेत्। *इति भाष्य इति। "ग्रहवृदृनिश्चि" [पा० सू० ३—३—५८] इति सूत्रभाष्य इत्यर्थः।

निवासचिति ( पा० सू० ३-३-४१ )। चेरिति वर्तते। *काशीनिकाय इति। अत्राधिकरणे घञ्। चितौ यदुदाहरणन्तत्र चितिर्धात्वर्थ एव। भावे घञ्। शरीरे यत्र प्रत्ययस्तत्राप्यधिकरणे।

संघे चा ( पा० सू० ३—३—४२ )। चेरिति वर्तते। अनौत्तराधर्य्यइत्यत्रोत्तरं चाधरं चेति द्वन्द्वं कृत्वा ततो भावे ष्यञि नञ्समासः। औत्तराधर्यभिन्ने संघे चिनोतेर्घञ्। भिक्षुनिकायः। भिक्षवो हि क चित्तीर्थादौ ब्रह्मचिन्तनाद्यर्थं यदा पृथगवतिष्ठन्ते तदा प्रत्ययः। सूकरनिचय इति प्रत्युदाहरणं तु

कर्मव्यतिहारे ( पा० सू० ३-३-४३ )। णचश्चकारो "णचः स्त्रियाम्" ( पा० सू० ५-४-१४ ) इत्यादौ *विशेषणार्थः।

आक्रोशे बन्योः (पा० सू० ३-३-४५)। अनन्तरोऽपीलुण् न सम्बध्यते *अस्वरितत्वात्।

वृणोतेरा ( पा० सू० ३-३-५४ )। समुदायेनाच्छादने गम्ये इत्यर्थः। आच्छेति किम् ?, प्रवरा गौः।

---

स्तन्यपानार्थं शिशव उत्तराधरभावेन शेरते तदा न भवति प्रत्ययः। भिक्षुवत्पृथगेव सूकरा यदावतिष्ठन्ते तदा भवत्येव सूकरनिकाय इति।

कर्मव्यतिहारे णच् स्त्रियाम्(पा सू.३-३-४३)। कर्मव्यतिहारे वर्तमानाद्धातोरित्यर्थः।कर्मशब्दोऽत्र क्रियापरः। क्रियाव्यतिहारश्च परस्परकरणम्। कर्मकारके नायम्। "कर्तरि कृत्" (पा० सू० ३-४-६७) इतिसूत्रात्। *विशेषणार्थ इति। तेन "ज्वलितिकसन्तेभ्यः" ( पा० सू० ३-१-१४० ) इतिसूत्रविहितणस्य न ग्रहणम्। 'व्यावक्रोशी'इत्यादौ कृद्ग्रहणपरिभाषया विशिष्टादञ् प्रत्ययः। अञस्तद्धितत्वादादिवृद्धिः। न च स्त्रियामित्यधिकारे कर्मव्यतिहारे णजित्येव वाच्यम्। स्त्रियामिति त्वधिकारादेव लभ्यते तेन 'व्यतिपाक' इत्यत्र न णच्। एवञ्चात्र स्त्रियामिति न कार्यमिति वाच्यम्। 'व्यावचोरी'इत्यादौ क्तिन्बाधकस्य "ण्यासश्रन्थ" ( पा० सू० ३-३-१०७ ) इति युचोऽपि बाधनार्थन्तदधिकाराद्बहिर्भावस्यावश्यकत्वात्। व्यतीक्षादिषु "गुरोश्च हलः" ( पा० सू० ३-३-१०३ ) इत्यस्यापि बाधप्रसङ्ग इति तु न वाच्यम्। ततो बहिर्भावे सति वासरूपविधिना तस्य सम्भवात्। अत एव 'व्यवक्रुष्टिः'इत्यत्र क्तिन् प्रत्ययः सिध्यति। प्रकृतसूत्रे भाष्ये तु यदुक्तम्"प्रकृते स्त्रीग्रहणे णज्ग्रहणं कार्यम्। ततो णिजिति वाच्यम्,तेन'व्यावचोरी' 'व्यावचर्ची'इत्यादौ णच् सिध्यति"इति, तद्वार्त्तिकाशयमात्रन्न तु तत्र लाघवम्। णिच इत्यस्यावश्यकत्वात्। व्यवक्रुष्टिरित्यादेः "कृत्यल्युटो बहुलम्" (पा० सू०३-३-११३)इतिसूत्रस्थबहुलग्रहणेन 'क्वचिदन्यदेव'इत्यर्थकेन साध्यतापत्तेश्च। "स्त्रियाम्" ( पा० सू० ४-१-३ ) इतिसूत्रे स्त्रियामिति तु 'क्वचित्स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते' इत्यस्य ज्ञापनायेत्यन्यत्रोक्तम्।

अभिविधौ भाव इनुण् ( पा० सू० ३-३-४४ )। अभिविधिराभिव्याप्तिः। अभिविधौ गम्यमाने भावे इनुण् स्यात्। "नपुंसके भावे क्तः" ( पा० सू० ३-३-११४ ) इतिसूत्रानन्तरमस्य पाठेन भावे प्रत्यये सिद्धे पुनर्भावे इति कस्य बाधको यो भावे ल्युट् तस्य'ईषत्सांराविणमित्यत्र प्राप्तस्य बाधनार्थम्' इति भाष्ये स्पष्टम्। सांराविणमित्यत्र संशब्दोभिविधेर्द्योतकः। शब्दशक्तिस्वभावादेतदणन्तन्नपुंसकमेव भवति।

आक्रोशेऽवन्योर्ग्रहः ( पा० सू० ३-३-४५ )। *अस्वरितत्वादिति।

*"कल्प्यादिभ्य एरजून" इति वार्तिकम् । कल्पोऽर्थो मन्त्रः । "एरजण्यन्तानाम्" इति स्व*नार्षम् । अचश्चकारः "थाथ" (पा० सू० ६-२-१४४)इति विशेषणार्थः ।

---

किन्तु घञेव दृष्टानुवृत्तिकत्वादिति शेषः । अवग्रहः पदस्य । "ग्रहवृदृनिश्चि" ( पा० सू० ३-३-५८ ) इत्यप् । अत्रावग्रहो विलम्बेनोच्चारणम् । स्वाभाविकार्द्ध-मात्राधिककालेनोच्चारणात्मकम् । निग्रहश्चोरस्य । अत्र निग्रहो=निरोधः, देशान्तरसंचारविरोधिव्यापारानुकूलव्यापारः ।

प्रे लिप्सायाम् ( पा० सू० ३-३-४६ ) । लिप्सायां गम्यमानायाम्प्र-शब्द उपपदे ग्रहेर्घञ् स्यात् । पात्रग्राहेणेत्यत्र भावे घञ्प्रत्ययः । कर्मषष्ठ्या समासः । भिक्षापात्रं गृहीत्वेति फलितार्थः । लिप्सायां किम् ? । प्रग्रहो देवदत्तस्य । प्रकृष्टोऽभिनिवेशः ।

परौ यज्ञे [ पा० सू० ३-३-४७ ] । परावुपपदे ग्रहेर्घञ् । यज्ञे इति वैषयिकाधारे सप्तमी । प्रत्ययान्तार्थो यज्ञविषयश्चेत् । "ग्रहवृदृ" (पा० सू० ३-३-५८) इति अनेन बाध्यते ।

नौ वृ धान्ये ( पा० सू० ३-३-४८ ) । वृ इति वृङ्वृञोः सामान्यग्रहणं लुप्तविभक्तिकम् । धान्यविषये निशब्दे उपपदे वृ इत्यस्माद्घञ् । निवारा इति । एतत्संज्ञका व्रीहिविशेषाः । निवरा कन्येति । कर्मणि "ग्रहवृदृ" ( पा० सू० ३-३-५८ ) इत्यप् । 'अजब्भ्यां स्त्रीखलनाः' इत्युक्तेः स्त्रीत्वविवक्षायां क्तिन्प्रत्ययेन भवितव्यमित्याशङ्कानिरासायाह मूले क्तिन्विषयेऽपीत्यादि ।

अवे ग्रहो वर्षप्रतिबन्धे(पा० सू० ३-३-५१) । वर्षप्रतिबन्धेऽभिधेयेऽव-शब्दे ग्रहधातोर्वा घञ् ।

प्रे वणिजाम् ( पा० सू० ३-३-५२ ) । अत्र वणिजामिति षष्ठी प्रधानप्रत्ययानुरोधात् । प्रत्ययस्तु भावे ।

रश्मौ च ( पा० सू० ३-३-५३ ) । रथशकटादिसम्बद्धा रज्जू रश्मिः । या रथादियुक्ताश्वादेः संयमनार्था । कर्मण्यत्र घञ् ।

वृणोतेराच्छादने ( पा० सू० ३-३-५४ ) । अत्राच्छादन इति प्रत्ययान्तसमुदायार्थनिर्देशः ।

परौ भुवोऽवज्ञाने ( पा० सू० ३-३-५५ ) । विभाषेति वर्त्तते । अवज्ञानमसत्कारस्तस्मिन् गम्यमाने परिशब्दे उपपदे भुवो वा घञ् स्यात् ।

एरच् ( पा० सू० ३-३-५६ ) । भावे इति अकर्त्तरि च कारके इति चानुवर्त्तेते । यथाप्रयोगं व्यवस्था । प्रत्ययस्वरेणैवैतदन्तस्यान्तोदात्तत्वे सिद्धेऽस्य चकारः "थाथघञ्क्ताजबित्रकाणाम्" ( पा० सू० ६-२-१४४ ) इत्यत्रास्य ग्रहणाय । तेन 'प्रचयः' 'प्रक्षयः' इत्यत्राव्ययपूर्वपदप्रकृतिस्वरम्बाधित्वाऽन्तोदात्तत्वम्भवति । प्रकृतसूत्रे भाष्ये "कल्प्यादिभ्यः प्रतिषेधः" ( का० वा० ) इति वार्त्तिकमर्थतोऽनुवदति-*कल्प्यादिभ्य इति । *अनार्षमिति । भाष्येऽदर्शनात् ।

निश्चय इति । *अब्विधानसामर्थ्येन थाथादिस्वरो न प्रवर्त्तते । एवञ्चोत्तरपदप्रकृतिस्वरेण*मध्योदात्तमेतत् । *एतेना*चैव सिद्धं "थाथघञ्" ( पा० सू० ६-२-१४४ ) इत्यस्य प्रवृत्त्या स्वरे विशेषाभावात् । न च "हस्तादाने चेः" ( पा० सू० ३-३-४० ) इति *घञो बाधनार्थमस्तेये*ऽस्मादपोऽनिष्टेरिति परास्तम् । घञर्थेक इति । *"स्थास्नापाव्यधिहनियुध्यर्थम्" ( भा० इ० ) इत्युदाहरणमात्रं बोध्यम् । प्रस्थविघ्नयोर*धिकरणे कः । (१)("प्रतिष्ठन्तेऽस्मिन् धान्यानीति प्रस्थः ।

*अब्विधानसामर्थ्येनेति । निश्चिग्रहणसामर्थ्येनेत्यर्थः । *मध्योदात्तमिति । चिधातोर्धातुस्वरेणान्तोदात्तत्वेऽपः पित्त्वादनुदात्तत्वे आद्युदात्तो हि चयशब्दः । *एतेन=पूर्वोक्तव्याख्यानेन । *अचैव सिद्धम्=अन्तोदात्तत्वं सिद्धम् । अबन्तस्यापि तेनान्तोदात्तत्वसम्भवात् । *घञो बाधनार्थमिति । 'क्षेत्राद् दूर्वाकुरादेर्निश्चयं करोति' इत्यत्र घञ्बाधनार्थमित्यर्थः । *अस्मादपोऽनिष्टेरिति । "अब्विधौ निश्चिग्रहणमनर्थकं स्तेयस्य घञ्विधौ प्रतिषेधात् । निस्पूर्वश्चिनोतिः स्तेये वर्त्तते । अस्तेयार्थं तर्हीदं वक्तव्यम् । निस्पूर्वाच्चिनोतेरस्तेये अप् यथा स्यात् । अस्तेयार्थमिति चेन्नानिष्टत्वात् । न हि निस्पूर्वाच्चिनोतेरस्तेये अबिष्यते, किं तर्हि घञेवेष्यते । एवं तर्हि सिद्धे सति यन्निस्पूर्वात् चिनोतेरयं शास्ति तज्ज्ञापयत्याचार्यो यत्तदन्तस्थाथघञ्क्तेति तन्निस्पूर्वाच्चिनोतेर्न भवति । किमेतस्य ज्ञापने प्रयोजनम् ?, निश्चयः । एष स्वरः सिद्धो भवति' इति भाष्यमत्र मानम् । 'मध्योदात्तत्वं कृत्स्वरेण भवति' इति कैयटः ।

वशिरण्योरुपसंख्यानम् ( का० वा० ) । 'वशः' इत्यत्र भावे घञ् प्राप्तः । 'रणः' इत्यत्रापि रणन्त्यस्मिन् पुरुषाः स रणः सङ्ग्रामः इत्यर्थेन "अकर्तरि च कारके" (पा०सू०३-३-१९) इत्यनेन प्राप्तस्य घञो बाधकोऽप् विधीयते । घञर्थौ भावः कर्तृभिन्नकारकं च । अत्र भाष्ये "स्थास्नापाव्यधिहनि" इति पठितन्तस्य परिगणनत्वभ्रमवारणायाह—*स्थास्नेत्यादि । 'प्रस्थः' । अत्राधिकरणे कः । परिमाणविशेषस्य सानोश्च संज्ञेयम् । प्रतिष्ठन्त्यस्मिन् धान्यानि प्रतिष्ठन्ते जना अस्मिन्निति व्युत्पत्तेः । 'प्रस्थे हिमवतः शृङ्गे' । हिमवत इति क्वाचित्कः प्रयोगो न तु तस्यैव संज्ञा । "स्नुः प्रस्थः सानुरस्त्रियाम्" ( अ० को० ) इति कोशात् । प्रस्नान्त्यस्मिन्निति प्रस्नो ह्रदः । प्रपिबन्त्यस्यामिति='प्रपा' पानीयशालिका । आविध्यन्ति येन तदाविधमायुधम् । विघ्नन्त्यस्मिन्मनांसि असौ विघ्नः । *अधिकरणे क इति । एतेन वृत्तिकारोक्ता करणव्युत्पत्तिर्नोचिता भाष्यविरोधादित्युक्तं भवति । भाष्योक्तस्यास्य वाक्यस्योदाहरणमात्रत्वाद् 'अचला भूमिः' इत्यादि सिध्यति । न चलन्त्यस्यां पर्वतवृक्षादयः सेत्यर्थात् । अस्योदाहरणमात्रत्वे प्रमाणन्तु कृत्वप्रकरणे "के कृञादीनाम्" ( का० वा० ) इति वार्त्तिकमेव ।

[ १ ] कंसान्तर्गतो ग्रन्थ आदर्शपुस्तके नास्ति ।

विघ्नन्ति तस्मिन्मनांसीति विघ्नः" इति भाष्योक्तेः ।)

व्यधजपो ( पा० सू० ३-३-६१ ) । *अनुपसर्गेत्यस्योपसर्गे नेत्यर्थस्तदाह-व्यध इति । उपजापो=मन्त्रभेदः ।

अनुपसर्गे चेति । उपसर्गाभावे चेत्यर्थस्तदाह- क्वाण इति ।

मदोनु ( पा० सू० ३-३-६७ ) । *उपसर्गभिन्ने उपपदे इत्यर्थः ।

*ग्लह इत्यत्राप्प्रत्ययो लत्वं च निपात्यते ।

हनश्च व ( पा० सू० ३-३-७६ ) । चो वध इत्यस्यानन्तरं प्रत्ययसमुच्चायको बोध्यो व्याख्यानात् । अत्र वधादेशोऽन्तोदात्तो निपात्यत इति उदात्तनिवृत्तिस्वरेण प्रत्यय उदात्तः । स्वतन्त्रवधे घञर्थे केन सिद्धे ऽनुपसर्गादिति विशेषं वक्तुमिदम् । (१)(वस्तुतो वधिः स्वतन्त्रो ना-

अनुपसर्ग इत्यस्योपसर्गभिन्ने उपपदे इति भ्रमवारणायाह—*अनुपेति ।

यमः समुपनिविषु च ( पा० सू० ३-३-६३ ) । अत्र चकारादनुपसर्ग इति सम्बध्यते तस्याप्युक्त एवार्थः । अत एव 'यमया' इत्यस्य सिद्धिः ।

क्वणो वीणायां च ( पा० सू० ३-३-६५ ) । अत्र वीणाग्रहणस्यानुपसर्ग इत्येतद्बाधरूपम्प्रयोजनमाह—मूले वीणाग्रहणान्त्विति । "वीणाग्रहणं सोपसर्गार्थम्" ( का० वा० ) इति वार्त्तिककारोक्तेः ।

मदोऽनुपसर्गे [ पा० सू० ३-३-६७ ] । अस्यानुपसर्ग इत्यस्य पूर्ववज्ञार्थ इत्याशयेनाह—*उपसर्गभिन्न इति ।

समुदो रजः पशुषु [ पा० सू० ३-३-६९ ] । पशुष्वित्यस्य पशुषु कारकेषु विवक्षितेष्वित्यर्थः । प्रत्ययस्तु भावे ।

अक्षेषु ग्लहः [ पा० सू० ३-३-७० ] । 'ग्लहः' इति रूपन्निपात्यते अक्षेषु धात्वर्थसम्बन्धित्वेन विवक्षितेषु । यदत्र निपात्यते तदाह-*ग्लह इत्यत्रेति ।

आङि युद्धे ( पा० सू० ३-३-७३ ) । 'ह्व' इति सम्प्रसारणञ्चेत्यनुवर्तते । युद्धे इति प्रत्ययार्थस्य विशेषणम् । तेनाधिकरणे प्रत्यय इति बोध्यम् ।

निपानमाहावः ( पा० सू० ३-३-७४ ) । 'आहावः' इति निपात्यते निपानं वाच्यञ्चेत् ।

भावेऽनुपसर्गस्य [ पा० सू० ३-३-७५ ] । अत्रानुपसर्गस्येति सम्प्रसारणापेक्षया षष्ठी । 'ह्व' इत्यनुवर्त्तते ।

हनश्च वधः ( पा० सू० ३-३-७६ ) । अत्र चकारो भिन्नक्रमः वध-

(१)कंसान्तर्गतग्रन्थस्य स्थाने 'घनान्तर्घनप्रघणप्रघाणोद्घनापघनेष्वप्यन्तोदात्तत्वं बोध्यम् । हन इत्यस्य सर्वत्र सम्बन्धः । अभ्रघने "पूरण गुण" (पा०सू०२-२-११] इति षष्ठीसमासनिषेधस्तु न, अनित्यत्वात्' इत्येवाऽऽदर्शपुस्तके पाठः ।

स्त्येवेत्युक्तम् । यत्तु माधवेन वधे*घञा सिद्धेऽन्तोदात्तार्थमिति, तन्न । "एरच्" ( पा० सू० ३-३-५६ ) इत्युत्तरं "वधः"इत्येव सिद्धे हन इत्यस्य वैयर्थ्यतादवस्थ्यात् । *घनान्तर्घनप्रघणप्रघाणोद्घनापघनेति निपातनम् । हनेरदन्ता एते आदेशा अप्प्रत्ययश्च वेति पक्षद्वयमपि "स्तम्बे क च" ( पा० सू० ३-३-८३ ) इति सूत्रे *भाष्ये स्पष्टम् । अन्त्ये अतो लोपे कृते अप् उदात्तनिवृत्तिस्वरेणोदात्तः । आद्ये "फिषोऽन्तः" ( फि० सू० पा० १ सू० १ ) इत्यन्तोदात्तत्वं बोध्यम् । *अन्त्ये हन् इत्यस्य सम्बन्धः । अभ्रघने अभ्रसम्बन्धिघन इति विग्रहः ।)

---

इत्यनन्तरं द्रष्टव्यः । हन इत्यादेशापेक्षया षष्ठी । आदेशश्चादन्तोऽन्तोदात्तो निपात्यते । धातोरित्यस्याप इत्यस्य च सम्बन्धः । हनो वधादेशः स्याद्धातोरप्प्रत्ययः स्यादित्यर्थः । एवञ्चातो लोपे उदात्तनिवृत्तिस्वरेणान्तोदात्तोऽयम्भवति । उदात्तत्वे प्रमाणन्तु 'वधेन दस्युम्' इत्यत्रान्तोदात्तदर्शनम् । *घञा सिद्ध इति । "जनिवध्योश्च" ( पा० सू० ७-३-३५ ) इति वृद्धेः प्रतिषेधात्सिद्ध इत्यर्थः । यदुक्तं स्वतन्त्रो वधिर्नास्ति किन्त्वादेश एव । एतदुत्तराणामुपक्रमाद्विज्ञायते । तदेतदाविष्कर्तुं "स्तम्बे क च" ( पा० सू० ३-३-८३ ) इति सूत्रभाष्यसम्मतिमाह—*घनान्तर्घनेत्यादि । *भाष्ये स्पष्टमिति । तत्र हि-"कस्मादयं को विधीयते?। हन्तेरित्याह । तद्धन्तिग्रहणङ्कर्त्तव्यम् । न कर्त्तव्यम् । प्रकृतमनुवर्त्तते । क प्रकृतम्?, हनश्च वध इति । तद्वै अनेकेन निपातनेन व्यवच्छिन्नन्न शक्यमनुवर्त्तयितुम् । नैतानि निपातनानि । हन्तेरेते आदेशाः ।" अप्प्रत्ययः । हलन्ता ह्येते आदेशाः इत्याभिप्रायेण । "यदि हन्तेरेते आदेशाः घनस्वरो न सिध्यति" इति परेणोक्ते ततो घनादीनां निपातनं स्वीकृतम् । "स्तम्बे क च"(पा० सू० ३-३-८३) इति सूत्रे तु"हनश्च वधः" ( पा० सू० ३-३-६६ ) इत्यस्य सम्बन्धानुवृत्त्या समाहितम् । ततः"अथ वा पुनः सन्त्वादेशाः । ननु चोक्तं स्वरो न सिध्यतीति । नैष दोषः । अकारान्तादेशाः"इति । अतो लोपे कृते उदात्तनिवृत्तिस्वरेणापि उदात्तत्वम्भविष्यतीत्याह—*अन्त्य इत्यादिना ।

निघो निमितम् ( पा० सू० ३-३-८७ ) । अत्र गत्यर्थकाद्धन्तेः कर्मण्यप् ।

उपसर्गे घोः किः ( पा० सू० ३-३-९२ ) । यद्यपि भावेऽकर्त्तरि कारके इति प्रकृतन्तथाप्ययस्बाहुलकात्कर्तर्यपि । अत एवोपसमीपे स्वधर्ममादधातीति व्युत्पत्तिरपि क चिद्दर्शिता । परन्तु सा करण एवोचितेत्याशयेन मूले उपाधीयतेऽनेनेत्युक्तम् । ल्युट् तु बहुलग्रहणान्न ।

कर्मण्यधिकरणे च ( पा० सू० ३-३-९३ ) । घोरित्यनुवर्त्तते । अत्र कर्मण्यधिकरण इति च द्वयमप्युपपदम् । पृथक् सप्तमीनिर्देशात् । नाप्यधिकरणे उपपदे कर्मणि प्रत्ययं इत्यर्थः । प्रकृतसूत्रेऽकर्त्तरि च कारके इत्येतत्सम्बन्धेन

कर्मण्यधि ( पा० सू० ३-५-९३ )। *व्याख्यानात्कर्मोपपदम्, अधिकरणमर्थः। *अधिकरणग्रहणमर्थान्तरानिरासार्थम्।

*भावादाविति। तत्र यथाभिधानं व्यवस्था। "अयमनेकाज्भ्यो न" इत्याद्यन्तवत्सूत्रस्थ*कैयटस्वरसः। "स्त्रियाम्" ( पा० सू० ३-३-९४ ) इत्यधिकारः "कृत्यल्युटः" ( पा० सू० ३-३-११३ ) इति यावत्। अजपौ त्विति। "अजब्भ्यां स्त्रीखलनाः" ( का० वा० ) इति वार्त्तिकोक्तेरिति भावः। प्रवृत्तेरिति। *भाष्ये नैतद्दृष्टम्। इष्यत इति। बाहुलकादिति भावः।

---

कर्मणि प्रत्ययस्य सिद्धत्वात्। अत एव "देवं वन्दे जलधिशरधिम्" इति प्रामाणिकप्रयोगस्योपपत्तिस्तदाह—*व्याख्यानादिति। ननु तथैवाधिकरणे प्रत्यये सिद्धेऽत्राधिकरण इति व्यर्थमत आह—*अधिकरणग्रहणमिति।

स्त्रियां क्तिन् [ पा० सू० ३-३-९४ ] *भावादावितीति। आदिना कारकपरिग्रहः। *कैयटस्वरस इति। तत्र—आद्यन्तवद्भावस्य प्रयोजननिरूपणावसरे भाष्ये 'आद्यन्तवद्भावे "ञ्नित्यादिर्नित्यम्" ( पा० सू० ६-१-९७ ) इति स्वरः अहिचुम्बकायनिः, 'आग्निवेश्यः' इत्यत्र स्यात्, 'गार्ग्यः' 'कृतिः' इत्यत्र न स्यात्" इत्युक्तम्। एतच्चोपपादनं 'सौवर्यः सप्तम्यस्तदन्तसप्तम्यः' इत्यस्यानाश्रयणेन। तत्र क्तिन्प्रत्ययस्य नित्त्वं व्यर्थं स्यादिति परिचिन्त्य 'क्तिनो नित्वन्तादौ च नितिकृत्यतावित्येवदर्थं स्यात्" इति कैयटोक्तम्। यद्येकाज्भ्य एव धातुभ्योऽयन्तदैवमभिधानं युज्यत इति। अनेकाज्भ्योऽप्ययश्चेत्स्याचदा "ञ्नित्यादिः" ( पा० सू० ६-१-१९७ ) इति सूत्र एव प्रयोजनसम्भवात्तावत्पर्यन्तानुधावनेनानेकाज्भ्योऽनभिधानमिति तदाशयः। अत्र कैयट इति अस्वरससूचनाय। "गार्ग्यः कृतिः इत्यत्र न स्यात्" इति भाष्ये स्पष्टस्वरो न स्यादिति रीत्यापि व्याख्यानसम्भवादनेकाज्भ्योऽनभिधाने न मानमिति। मूले घञोऽपवाद इति। घञो बाधक इत्यर्थः। औत्सर्गिकस्य घञः पुंस्त्वविशिष्टे भावे प्रवृत्तेः स्त्रीत्वविशिष्टे तस्मिन्नयमित्येतावता तस्य बाधः। पुंस्त्वविशिष्टे भावे तस्य प्रवृत्तौ मानन्त्वधिकः कारोधिकार इति "स्वरितेनाधिकारः" ( पा० सू० १-३-११ ) इति सूत्रस्य व्याख्यानमेव। भावादाविति व्याख्यानादेव 'श्रूयते' इत्यर्थकस्य श्रुतिशब्दस्योपपत्तिः। करणार्थकक्तिन्नन्तः श्रुतिशब्दः श्रोत्रवाची। एवं यज्धातोरपि देवपूजनार्थकात्करणे ल्युटो बाधनार्थमिषेरपि तद्बाधनार्थं वचनम्। अयन्त्वत्र विशेषः—यजधातुप्रकृतिकः क्रियाविशेषे इषधातुप्रकृतिकस्तु ऋष्युक्तो रूढः स्तुतिशब्दविशेषे तथा। *भाष्ये नैतदिति। योगविभागेन साधनम्। तस्मात्सुखे रूढोऽयं शब्दो यदीष्यते तदा बहुलग्रहणेन साधनीयः।

स्थागापापचो भावे ( पा० सू० ३-३-९५ )। क्तिनो बाधकस्य बाधनार्थमिदं सूत्रम्। न च "विभाषाख्यान" (पा० सू० ३-३-११०) इतिसूत्रविहितयो-

ज्ञापकादिति। *तेन बाहुलकादङपीति भावः।

वर्तते इति। "मन्त्रे वृष" (पा० सू० ३-३-९६) इति सूत्रादिति भावः।

भावादाविति। *क्यब्विधौ "अधिकरणे च" (का० वा०) इति वार्त्तिकात्। तत्र चेन करणसङ्ग्रहः। *भृञोऽयङ्क्यप् भावे एवेति "भृञोऽसञ्ज्ञायाम्" (पा० सू० ३-१-११२) इतिसूत्रस्थ*भाष्यस्वरसः।

परिचर्येत्यादि। भावे शो निपात्यते यक् तु *सिद्ध एव। *अकर्त्तरि कारके ऽभिधानसत्त्वे तत्र यगपि निपात्यः। मृगयेति। णि-

---

ण्वुलिञोरपि क्तिना बाधे कां त्वं स्थापिकां स्थायीं वेत्यत्र ण्वुलिञोरश्रवणापत्तिरिति वाच्यम्। पुरस्तादपवादन्यायेनास्य क्तिनोऽपवादस्य "आतश्चोपसर्गे" (पा० सू० ३-३-१०६) इत्यङो बाधनार्थमेवैतत्सूत्रमिति स्वीकारात्। पचधातोः षित्त्वात्प्राप्तस्याङोऽप्ययम्बाधकः पचग्रहणात्। षित्त्वाच्चास्मादङपि ग्लास्लाज्याहाभ्यो धातुभ्यः क्तिन्बाधकस्याङो बाधनायात्र भाष्ये "ग्लाम्लाज्याहाभ्यो निर्वक्तव्यः" इति वचनमारब्धम्। ग्लानिः, म्लानिः, ज्यानिः, हानिः इति।

*तेन=बहुलग्रहणेन। एतेन व्यवस्थेति निपातनेनाङ्स्वीकारे निपातनस्य बाधकत्वसिद्धान्ताद्व्यवस्थितिरिति न स्यादित्यपास्तम्।

ऊतियूतिजूति (पा० सू० ३-३-९७)। अवादिभ्यः सामान्यवचनेन क्तिनः सिद्धौ स्वरार्थं कार्यविशेषविधानार्थं च वचनम्। अत्र भाव इति न सम्बध्यते। तेनान्यत्राप्ययम्। अत एवोत्तरसूत्रे भाव इति चरितार्थम्। उदात्त इति तूत्तरत्रापि सम्बध्यत एव।

व्रजयजोर्भावे क्यप् (पा० सू० ३-३-९८)। क्तिनो बाधकोऽयम्। उदात्त इत्यनुवर्त्तते। पित्त्वन्तूत्तरत्र तुक्सम्पादनेन चरितार्थम्।

ननु संज्ञायामिति सूत्रे भाव इत्यस्य सम्बन्धाद्भावादावित्यनुपपन्नमत आह-*क्यब्विधाविति। नन्वेवमयं क्यप् भृञ्धातोरपि भावादौ स्यादत आह— *भृञोऽयमिति।*भाष्यस्वरस इति। तत्र हि-"भृञः संज्ञाप्रतिषेधे स्त्रियामप्रतिषेधोऽन्येन विहितत्वात्"इति वार्त्तिकस्य "संज्ञायां समज"(पा०सू०३-३-९९)इत्यनेन प्राप्तिमाशङ्क्य स्त्रीप्रत्ययप्रकरणे भावग्रहणानुवृत्त्याऽन्यथासिद्धिरुद्भाविता। भृत्याशब्दोऽयम्मरणार्थकः। अत्र संज्ञाग्रहणाद्बुद्धिवाचकस्य मतिशब्दस्योपपत्तिः। "नैषा संज्ञा किन्तर्हि क्रियाशब्दोऽयम्"।

*सिद्ध एव="सार्वधातुके यक्"(पा० सू० ३-१-६७) इति सूत्रेण सिद्ध एव। *अकर्तरि कारके=करणे।

गुरोश्च हलः (पा० सू० ३-३-१०३)। 'हल' इति धातोर्विशेषणन्ततस्तदन्तविधिस्तस्यैव गुरोरित्यपि विशेषणम्। एवञ्च तस्य गुरुत्वासम्भवाद् गुरु-

निमित्ताजन्तलक्षणवृद्ध्यभावः "अकृत्सार्व" ( पा० सू० ७–४–२५ ) इति दीर्घाभावश्च निपातनादिति बोध्यम् ।

अदन्तरोरिति । तत्र अतोऽ*ङ्विधावेव अन्तःशब्दस्याङ्कि-विधिणत्वेष्विति भाष्ये स्पष्टम् ।(१) (तेन 'अन्तर्द्धा' 'अन्तर्द्धिः' 'अन्त-र्णयति' इत्यादिसिद्धिः । एवञ्च "अन्तरदेशे" ( पा० सू० ८–४–२४ ) "अयनञ्च" ( पा० सू० ८–४–२५ ) इति सूत्रद्वयं न कर्तव्यम् । देशे प्रतिषेधः क्षुभ्नादित्वात्सिद्ध इति "अन्तरपरिग्रहे" ( पा० सू० १–४–६५ ) इति सूत्रे कैयटः ।) आद्यं="प्रज्ञाश्रद्धा" [पा०सू०५–२–१०१] इति निर्देशसिद्धम् ।

शादिफः ( का० वा० ) । रादिति निर्देशात्पक्षे *प्रत्ययसामा-न्याभावोऽपि । मत्वर्थीय इति । मतुशब्देन तदर्थो लक्ष्यते, ततो बहु-व्रीहिः, स्वार्थे छो बोध्यः ।

---

शब्दान्मतुप् तस्य निपातनादेव लुक् । न च गुर्वन्ताद्धल् इत्येव किन्न स्यादिति वाच्यम् । आशंसायामित्यादिप्रयोगासङ्गत्यापत्तेः । न च तथापि शंसेरकारो न प्राप्नोति । अस्य निष्ठायामनिट्त्वादिति वाच्यम् । आशंसायामिति निर्देशेन तत्र सेट्त्वाभावेऽप्यकारप्रत्ययस्य स्वीकारात् ।

*अङ्विधावेवेति । "प्रज्ञाश्रद्धार्चाभ्यः" ( पा० सू० ५–२–१०१ ) इति निर्देशात् । अन्तःशब्दस्य तु "अन्तःशब्दस्याङ्किविधिणत्वेषूपसर्गत्वं वक्तव्यम्" इति वचनात्तथेति बोध्यम् ।

*प्रत्ययसामान्याभावः=विभाक्तिभिन्नप्रत्ययसामान्याभावः ।

संज्ञायाम् ( पा० सू० ३–३–१०९ ) । अधिकरणकारकेऽयम्प्रत्ययः । उद्दालकपुष्पभञ्जिका । उद्दालकः श्लेष्मान्तकस्तस्य पुष्पाणि यस्यां क्रीडायां भ-ज्यन्ते सा । "नित्यं क्रीडाजीविकयोः" ( पा० सू० २–२–१७ )इति समासः ।

"विभाषाख्यानपरिप्रश्नयोः"(पा०सू०३–३–११०)इति सूत्रे आख्यानशब्द-स्याल्पाच्त्वेन पूर्वनिपातेऽपि लोके आख्यानस्य परिप्रश्नपूर्वकत्वेनार्थक्रमानुरोधेन व्याख्यानवाक्ये परिप्रश्न एवादौ मूले लिखितः—परिप्रश्न इति ।

आक्रोशे ( पा० सू० ३–३–११२ ) । अत्राक्रोशशब्दः शापवाची ।

कर्मणि च येन संस्पर्शात् (पा० सू० ३–३–११६) । अत्र संपूर्वकात्स्पृश-धातोर्भावे घञ् । कर्तुरिति तदर्थकर्मणि षष्ठी । येनेति "उभयप्राप्तौ" ( पा० सू० २—३—६६ ) इति नियमात्कर्तरि तृतीया । एवञ्च परिशेषात्कर्मणीत्यत्र कर्मत्वं विधेयप्रकृत्यर्थक्रियानिरूपितमेव । शरी-

---

[ १ ] कंसान्तर्गतो ग्रन्थ आदर्शपुस्तके नास्ति ।

शरीरसुखमिति । *अर्थात्स्पृश्यमानस्य कर्त्तुः शरीरस्वास्थ्यजनकं सुखमित्यर्थः । कर्मणि किम्?, तूलिकाया उत्थानं सुखम् । स्पर्शादिति किम्?, अग्निकुण्डस्योपासनं सुखम् । शरीरेति किम्?, पुत्रस्य परिष्वञ्जनं सुखम् । मानसी प्रीतिरत्र ।

वा यौ [पा० सू० २-४-५७] । *इदं सूत्रम्—"अजेर्यौ परतो वा इत्यादेशो वायुः" इत्येवं भाष्ये व्याख्यातम् ।

छादेर्घे [ पा० सू० ६-४-९६ ] । *अत्रोपधाया इति वर्तते णाविति च । छादेरिति णिभागभागानुकरणमागन्तुनेकारेण । घपरे णावङ्गस्य छाद उपधाया ह्रस्व इत्यर्थः । *एतेन णेरेव ह्रस्वः स्यात्तत्सामर्थ्याच्च णिलोपो न स्यादित्यपास्तम् ।

अवे तॄस्त्रोः [ पा० सू० ३-३-१२० ] । करणाधिकरणयोरित्यनुवृत्तेऽपि यथासंख्यं नास्वरितत्वात् ।

---

रसुखमित्यत्र शरीरप्रत्यासत्त्या कर्तृसम्बन्ध्येव । एवञ्च यत्फलितन्तदाह—*अर्थादिति । एतत्सूत्रविहितो ल्युडपि नपुंसकत्वविशिष्टे भावे । अत एवैतस्य सूत्रस्य नित्यसमासार्थत्ववर्णनसङ्गतिः । उपपदसमासो हि नित्यसमासः । सम्पूर्वकः स्पृशधातुः सम्बन्धमात्रपरः । सुखमिति किम्? । कण्टकानाम्मर्द्दनं दुःखम् ।

वा यौ ( पा० सू० २-४-५७ ) । अत्र याविति युप्रत्ययपरं न तु यकारादिप्रत्ययपरमिति सूचयितुमाह-*इदं सूत्रमिति ।

करणाधिकरणयोश्च ( पा० सू० ३-३-११७ ) । घञोऽपवादः । अत्र करणाधिकरणयोरिति नोपपदबोधकमुत्तरसूत्रेष्वस्यार्थबोधकत्वस्य दृष्टत्वेन तस्यैवौचित्यात् । 'अजब्भ्यां स्त्रीखलनाः' इतिवार्त्तिकव्याख्यानावसरेऽनस्यावकाशः 'इध्मव्रश्चनः' इति भाष्याच्च अयम्परत्वादजपोः स्त्रीप्रत्ययस्य च बाधकः । "अजब्भ्यां स्त्रीखलनाः स्त्रियाः खलनौ विप्रतिषेधेन"(का०वा०)इति वार्त्तिकात् ।

छादेर्घे ( पा० सू० ६-४-९६ ) । "ऊदुपधायाः" ( पा० सू० ६-४-८९ ) इत्यत उपधापदं "दोषो णौ" ( पा० सू० ६-४-९० ) इत्यतो णाविति चात्रानुवर्त्तेते तदाह—*अत्रोपधेति । *एतेन=उक्तार्थस्वीकारेण । न तु घपरं यदङ्गं णिपरकन्तदुपधाया इत्यर्थः । असंभवापत्तेरिति भावः । आकुर्वन्त्यस्मिन्निति । व्यवहारमिति शेषः । खनेः संज्ञेयम् ।

गोचरसंचर ( पा० सू० ३-३-११९ ) । देशवाची गोचरशब्दोऽधिकरणल्युडन्तः । विषयवाच्यप्ययम् । 'उपादानगोचरापरोक्षज्ञानम्' इत्यत्र यथा । तत्राप्यधिकरणे घः । गाव इन्द्रियाणि सञ्चरन्त्यस्मिन्निति व्युत्पत्तेः । संचरन्तेऽनेनेति । "समस्तृतीयायुक्तात्" ( पा० सू० १-३-५४ ) इत्यात्मनेपदम् । संज्ञायामित्यस्यात्र सूत्रे सम्बन्धाद्गोचरादिशब्दाः संज्ञिविशेषस्यैव बोधकाः ।

हलश्च [ पा० सू० ३-३-१२१ ]। अत्रापि*प्रायेणेति वर्त्तते। अवहारादयस्त्वयोऽप्यधिकरणसाधनाः।

उदङ्कोऽनु [ पा० सू० ३-३-१२३ ] । अनुदकविषयकार्थप्रतिपादकाश्चेः 'उदङ्क' इति निपात्यत इत्यर्थः। घृतोदङ्क इति। वासरूपन्यायेन घृतोदञ्चनोऽपीति कश्चित्। गोदोहनप्रसाधनयो*र्बाहुलकाद् घघञौ नेति बोध्यम्।

आनाय इति निपात्यते जालश्चेद्वाच्यमित्यर्थः। जालशब्दस्तु 'जल' घातने इति धातोः "ज्वलिति" [ पा० सू० ३-१-१४० ] इतिणान्तः।

*भगः पद्मिति। क्वचित्प्रयोगः।

---

अवेतॄस्त्रोर्घञ् ( पा० सू० ३-३-१२० ) । ल्युटोऽपवादः।

*प्रायेणेति वर्त्तते इति। तदुक्तं "गोचर" (पा०सू०३-३-११९) इति सूत्रे भाष्ये—"गोचरादीनां ग्रहणं शक्यमकर्तुम्। घञ् कस्मान्न भवति। प्रायवचनात्। यथा कषो निकषः" इति । प्रायवचनादित्यस्य "हलश्च" (पा०सू०३-३-१२१)इति सूत्रे प्रायेणेत्यस्य सम्बन्धादित्यर्थः। कषो निकष इत्यत्र प्रायग्रहणानुवृत्त्या घञ् न भवति तथा गोचरादिष्वपि न भविष्यतीति भावः। अवहारादिषु प्रकृतेर्हलन्तत्वाभावाद् घञोऽप्राप्तेरुपसंख्यानम्।

उदङ्कोऽनुदके ( पा० सू० ३-३-१२३ )। अधिकरणे घञन्तोऽयन्निपातितो ल्युटम्बाधितुमनुदके इति च बोधयितुम्। यदि तु "हलश्च" ( पा० सू० ३-३-१२१ ) इति सूत्रे प्रायेणेत्यस्य सम्बन्धादेवेष्टसिद्धिरित्युच्यते तदेदन्नारम्भणीयम्। तदुक्तम्भाष्ये—"उदङ्कोऽनुदकग्रहणमनर्थकम्। घञ् कस्मान्न भवति। प्रायवचनात्। गोदोहनः प्रसाधनः" इति। *बाहुलकादिति। ननु भाष्ये प्रायवचनादित्युक्तमत्र बाहुलकादित्युच्यते इति तद्विरुद्धमिति चेन्न। "पुंसि" ( पा० सू० ३-३-११८ )इति सूत्रे बहुलमित्यस्य सम्बन्धेन तस्य क्वाचित्कत्वस्य सिद्धौ प्रायग्रहणस्याप्यनावश्यकत्वमित्याशयात्।

जालमानायः ( पा० सू० ३-३-१२४ )। आनाय इत्यत्राङ्पूर्वान्नीधातोः करणे घञ्। जालशब्दस्तु "ज्वलितिकसन्त" (पा० सू०३-१-१४०) इति सूत्रविहितणान्तः। एतस्यापि घातकत्वात् 'जल'घातने इति धात्वर्थानुगमनमपि सम्भवति।

खनो घ च ( पा० सू० ३-३-१२५ ) । खनधातोः करणे घः। नन्वस्य घित्त्वं व्यर्थम्। न हि खनधातोः "चजोः" ( पा० सू० ७-३-५२ ) इत्येतत्सूत्रप्रवृत्तियोग्यः कश्चन वर्णोऽस्तीत्यत आह मूले घित्करणमिति। ननु तथापि पद्मित्यत्र न फलमत आह—*भगः पद्मितीति।

ईषद्दुस्सुषु ( पा० सू० ३-३-१२६ )। नन्वीषदादीनामव्ययत्वात् ख-

ईषद्दुः [पा० सू० ३-३-१२६]। *खित्त्वमुत्तरार्थं, लकारः स्वरार्थः। खलचोरिति। पचाद्यच् एरच गृह्यते।

न सुदुर्भ्याम् [पा० सू० ७-१-६८]। *तृतीया पञ्चमी वेयम्। आद्ये प्रत्युदाहरति-सुप्रलम्भ इति। द्वितीये आह-अतिदुर्लभमिति। अत्र केवलशब्देन सूत्रोपस्थितातिरिक्तं सजातीयमुपसर्गान्तरं व्यावर्त्यते न कर्मप्रवचनीय*इतरः शब्दो वा; तद् ध्वनयन्नाह-यदा स्वतीति। सूत्रोपात्तातिरिक्तेति विशेषणात्सुदुर्लभमित्यस्य सिद्धिरिति कैयटः। सुदुरोरु*पसर्गत्वप्रतिषेधस्तु केवलसुदुर्विषय एव। 'अतिसुलभम्' इत्यत्रैव भाष्यप्रयोगात्।

---

लः खित्त्वस्य न फलमत आह—*खित्त्वमुत्तरार्थमिति। "कर्तृकर्मणोः" (पा० सू० ३-३-१२७) इति सूत्रविषये मुमर्थमित्यर्थः। यद्यप्यत्र सूत्रे कृच्छ्राकृच्छ्रार्थेष्विति सामान्यत एवोक्तन्तथापि योग्यतावशात्सम्बन्धो बोध्यः। कृच्छ्राकृच्छ्रार्थेष्विति किम्? । यत्राल्पत्वमात्रतात्पर्येणेषच्छब्द इत्युच्यते तत्र माभूत्

*तृतीया पञ्चमी वेति। तृतीयापक्षे योग इत्यस्याध्याहारः। *इतरः=कर्मप्रवचनीयादितरः। मूले यदा स्वती कर्मप्रवचनीयाविति। अतः कर्मप्रवचनीयत्वे उपसर्गान्तरराहित्यमस्त्येव कर्मप्रवचनीयसंज्ञाया उपसर्गसंज्ञाबाधकत्वात्। सोः कर्मप्रवचनीयत्वे तु उपसर्गात्परत्वमेव नास्तीत्यभिप्रायेणोभयोरुपादानम्। *उपसर्गत्वप्रतिषेधस्त्विति। वार्तिककृदुक्त इति शेषः।

कर्तृकर्मणोश्च भूकृञोः (पा०सू० ३-३-१२७)। चकार ईषदादिसमुच्चायकः। एवञ्चेषदादीनामुपपदत्वात्तत्साहचर्येण कर्तृकर्मणोरित्यप्युपपदबोधकन्त्वर्थपरम्। अत एव खलः खित्त्वञ्चरितार्थम्। किञ्चेषदादीनामनुवृत्त्यैव सिद्धे चकारः सन्नियोगार्थोऽपि तेन यत्रानयोरीषदादीनाञ्च युगपत्प्रयोगस्तत्रैव प्रत्ययः। खलः खित्त्वादेवानुवृत्तेः सिद्धत्वात्। यथासंख्याभावश्च यथासंख्यसूत्रभाष्ये एव स्पष्टः। न च-यथासंख्यभावफलम्भूधातोः कर्मण्युपपदे खलसिद्धिरिति तच्च न संभवति भवतेरकर्मकत्वात्, यदानुभवरूपे प्राप्तिरूपेर्थेऽस्य प्रवृत्तिस्तदा सकर्मकत्वेऽपि च्व्यर्थवृत्तित्वस्य कथं संभव इति वाच्यम्। अन्तर्भावितण्यर्थस्य भवतेः सकर्मकतया आत्मधारणानुकूलव्यापाररूपफलाश्रयत्वविवक्षाऽऽढ्यस्य तदा कर्मत्वसंभवेन तस्य कर्मणश्च्व्यर्थवृत्तितायां खल्प्रत्ययसिद्धेः प्रयोजनत्वात्। ननु दुसादीनामुपसर्गत्वात्तेषान्धातोरव्यवधानेनैव प्रयोगः संभवति। "ते प्राक्" (पा० सू०१-४-८०) इति सूत्रे "तस्मात्" (पा० सू०१-१-६७) इति परिभाषाया उत्तराङ्गविकलाया उपस्थितेः। खलः खित्त्वं तु 'ईषदाढ्यंभवम्'इत्यत्र चरितार्थमिति चेन्न। अनाढ्येन भवता दुराढ्येन स्वाढ्येन न शक्यं भवितुमित्यर्थे 'दुराढ्यंभवं' 'स्वाढ्यंभवम्'इतिभाष्यप्रयोगेणाव्यवधानांशबाधस्य प्रकृते स्वीकारात्। अत एव

आतो युच्(पा०सू०३-३-१२८)। आद्येन सुभूयते इत्यर्थे न खल् किं तु तव्यादय एवेति भावः। ईषदादयोऽनुवर्त्तन्ते न तु कर्तृकर्मणोरिति। दुष्पाने "इदुदुपधस्य" [पा० सू० ८-३-४१] इति षः।

षात्पदा [पा० सू० ८-४-३५]। "कृत्यचः" (पा०सू०८-४-२९) इति "वा भावकरणयोः" (पा० सू० ८-४-१०)इति च प्राप्तं निषिध्यते। पदे अन्त इति। *अत्र चान्तग्रहणमेव मानम्।

क्तिच्क्तौ च (पा० सू० ३-३-१७४)। क्तिचा बाधा मा भूदिति पुनः क्तविधिः।

न क्तिचि [पा० सू० ६-४-३९]। अनुदात्तोपदेशवनती-त्याद्यनुवर्त्तते। दीर्घश्चेति। "अनुनासिकस्य" [पा० सू० ६-४-१५] इति प्राप्तः। वन्तितन्त्योः "तितुत्र" [पा० सू० ७-२-९] इति नेट्।

सनः क्तिचि [पा० सू० ६-४-४५]। अस्य विकल्पत्वाद् द्वयोर्ग्रहणे फलाभावादाह—सनोतेरिति। सन इत्येव वक्तुं युक्तम्।

अलंखल्वोः[पा० सू० ६-४-१८]। *छन्दसि भावलक्ष-

---

संज्ञानियमप्रयोगनियमपक्षयोः प्रकृते न फलभेदः।कर्मण्युपपदे भवतेः खलः प्रत्युदाहरणन्तु अनाढ्य आढ्यः। अत एव सुभूयते इत्यर्थे स्वाढ्यभवामिति। अनाढ्य आढ्यः स्वयमेव क्रियते अनाढ्य आढ्यः क्रियते इति। एवमन्यत्राप्यूह्यम्।

आतो युच् (पा० सू० ३-३-१२८)। अस्यापि खलर्थत्वात् "तयोरेव" (पा० सू० ३-४-७०) इति सूत्रस्य प्रवृत्त्या भावकर्मणोरेव युच्प्रत्ययविधायकता। अत एवाभिहितकर्मेति 'ईषत्पानः सोमो भवता'इत्यत्र सोमपदात्प्रथमासिद्धिः।

षात्पदान्तात्(पा०सू०८-४-३५)। 'निष्पानम्' 'सर्पिष्पानम्'इत्यत्र "कृत्यचः" (पा० सू० ८-४-२९) इत्यनेन "वा भावकरणयोः" (पा०सू०८-४-१०) इत्येनन वा प्राप्तस्य णत्वस्यानेन प्रतिषेधः। प्रकृतेऽस्य सूत्रस्योपयोगस्तु दुष्पाने णत्वस्य व्यावृत्तिरिति। सप्तमीसमासे मानमाह—*अत्र चेति। अन्यथा षात्पदादित्युच्यमानेऽपि षादित्यस्य पदविशेषणत्वेन तदन्तविधिना षान्तात्पदादित्यनेनापि सिद्धेः फलांशे विशेषाभावः।

क्तिच्क्तौ च (पा० सू० ३-३-१७४)। प्रत्ययस्वरेणास्यान्तोदात्तत्वे सिद्धे "न क्तिचि" (पा० सू० ६-४-३९)इतिसूत्रे झटित्यस्यैव प्रतिपत्तिर्यथा स्यादित्येवमर्थम्। न क्तौ दीर्घश्चेत्युच्यमानेऽप्येकानुबन्धकपरिभाषया क्तिनो व्यावर्त्तने प्रयासगौरवम्। एवं "सनः क्तिचि" (पा० सू० ६-४-४५) इत्यत्रापि बोध्यम्।

अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा (पा० सू० ३-४-१८)। *छन्द-

ण इति निवृत्तम् । अव्ययकृत्त्वादसत्त्वभूतो भावः क्त्वार्थः । पक्षे ल्युडादौ तु स सत्त्वभूत इत्यन्यत् । अलङ्कार इति । भावे घञ् ।

'मेङ्' प्रणिदाने *इत्युक्त्या व्यवहारार्थस्य तस्यैव कृतात्वस्य सूत्रे निर्देशः । "समानकर्तृकयोः" ( पा० सू० ३-४-२१ ) इत्यनेन सिद्धिमाशङ्क्याह-अपूर्वेति । *पूर्वं ह्यसौ याचित्वा पश्चादपमयते वस्त्रादि परिमयतीत्यर्थो विवक्षित इति भावः ।

---

सीति । "छन्दसि लुङ्लङ्" ( पा० सू० ३-४-६ ) इत्यतोऽनुवर्त्तमानं छन्दसीति भावलक्षण इति च निवृत्तमित्यर्थः । इह प्राचांग्रहणन्न ल्युटः समावेशार्थम् । वासरूपविधिनैव 'अलं रुदित्वा रोदनेन वा' इत्यस्य सिद्धेः । यद्यपि 'स्त्र्यधिकारादूर्ध्वं वासरूपविधिः क्वचिन्न' इत्युक्तं तथापीह तदभावकल्पने मानाभाव इत्याशयेन मूले-प्राचाङ्ग्रहणमिति । न च क्त्वाप्रत्ययेनासत्त्वभूतो भावोऽभिधीयते ल्युटा तु सत्त्वभूत इति वाच्यम् । अव्ययकृतो भावे इति सिद्धान्ताच्छब्दशक्त्या तथा स्वीकारात् । यदा दानार्थमुद्यतपुरुषः सम्प्रदानत्वेनाभिप्रेतस्यापात्रत्वनिश्चयेनाप्तेन निवार्यते तदाऽलंशब्दः प्रतिषेधवाचकस्तेन प्रयुज्यते अलन्दत्त्वेति । अस्त्वित्यस्याध्याहारः। क्त्वान्तार्थस्य दानस्य अलंशब्दार्थेऽभावे प्रतियोगितासम्बन्धेनान्वयः । दानाभावकर्तृका सत्तेति बोधः । यदा दुग्धजलादिपानार्थे प्रवृत्त एव पुरुषोऽधिकपरिमाणकदुग्धादिदर्शनेन 'पीत्वा खलु' इति बोध्यते तदा खलुशब्दोऽपि प्रतिषेधार्थः । एवं भर्तृगृहम्प्रति नीयमाना नवोढा यदा रोदिति तदा 'अलं बाले रुदित्वा' इति प्रयोगेऽपि प्रतिषेधवाची अलंशब्दः । अलङ्कार इत्यत्र भूषणधारणेऽलंशब्दो वर्तते तदर्थस्य जनकतासम्बन्धेन कृधात्वर्थेऽन्वयः ।

उदीचां माङो व्यतीहारे ( पा० सू० ३-४-१९ ) । *इत्युक्त्वेति । एतेन मेङो व्यतिहारे नित्यं वृत्तिरित्युक्तम् । माङस्तु न तथा । अत एवोदीचाम्माङ इति निर्देशस्य "नानुबन्धकृतमनेजन्तत्वम्" [ प० भा० ] इति परिभाषायां ज्ञापकत्वपरं भाष्यं सङ्गच्छते । 'अपमित्य याचते' इत्यत्र मेङ्धातोर्यथा याचधात्वर्थपूर्वकालिकत्वाभावस्तथोपपादयति-*पूर्वं ह्यसाविति । याचनोत्तरकालिकं वस्त्रादिकमेकस्परिवर्त्य दानमिति बोधः । न चानेन सूत्रेणापूर्वकालार्थेऽस्माद्धातोः क्त्वाप्रत्यये कृतेऽपि याचधातोः पूर्वकालिकक्रियावाचकात् "समानकर्तृकयोः" ( पा० सू० ३-४-२१ ) इत्यनेन क्त्वाऽस्त्विति वाच्यम् । "धातुसम्बन्धे प्रत्ययाः" ( पा० सू० ३-४-१ ) इत्युक्त्वाऽस्य विधानेन यत्र क्त्वाप्रकृत्यर्थक्रियायाः क्रियान्तरविशेषणत्वविवक्षा तदैव क्त्वाप्रत्ययस्योत्पत्त्याऽत्र मेङ्धात्वर्थस्य स्वसमानकर्तृकत्व-स्वपूर्वकालिकत्वोभयसम्बन्धेन याचधात्वर्थम्प्रति विशेषणत्वात् । तदा याचधात्वर्थे पूर्वकालत्वस्य मानसबोधस्य सत्त्वेनैतस्य विशेषणत्वातात्पर्यकः क्त्वाप्रत्ययो न भवति ।

परावरयोगे च [ पा० सू० ३-४-२० ] । सूत्रार्थं वक्तुमवरशब्दं व्याच-

परावर [ पा० सू० ३-४-२० ] । *अवरशब्दोऽत्र पूर्ववृत्तिवाची ।

समानक ( पा० सू० ३-४-२१ ) । कप्रत्ययदर्शनाद् बहुव्री-

---

हे-*अवरशब्द इति । एवञ्च परशब्दस्य पूर्वसाकाङ्क्षतयाऽवरशब्दस्य परसाकाङ्क्षतया च तयोर्द्वयोर्निमित्तत्वमिह लभ्यते । अप्राप्य नदीम्पर्वतः । दाक्षिणात्यानां काश्युद्देश्यकागमनसमये यथा व्यवस्था भवति तादृश्याः कथनमिदम् । नद्यत्र गङ्गा । पर्वतो विन्ध्यः । दक्षिणादिगवच्छिन्नदेशादागमनकर्तृभिर्दाक्षिणात्यैर्गङ्गामप्राप्य विन्ध्याख्यपर्वतः प्राप्यत इत्यर्थः । अत्र नञः प्रागभावोऽर्थः । प्राप्येत्यस्य प्राप्तिक्रियार्थः । तस्यां द्वितीयान्तार्थस्य गङ्गाकर्मकस्याभेदेनान्वयेन गङ्गाकर्मकाभिन्नप्राप्तिक्रियाप्रागभावलाभः । पर्वतपदस्य च वाक्यैकदेशन्यायेन पर्वतकर्मकप्राप्तिक्रियाऽर्थः । अस्यां सामानाधिकरण्यसम्बन्धेन कालिकप्रत्यासत्तिघटितेन गङ्गाकर्मकप्राप्तिक्रियाप्रागभावस्यान्वये सति दक्षिणदेशस्थपुरुषकर्तृका गङ्गाकर्मकप्रागभावसमानकालिकी पर्वतकर्मकप्राप्तिक्रियेति शाब्दबोधे जातेऽर्थाद्गङ्गायाः परत्वम्पर्वतस्य ततः पूर्वत्वङ्गम्यते । परेण पूर्वस्य योगश्च कालिकसामानाधिकरण्यसम्बन्धेन स्वकर्मकप्राप्तिक्रियाप्रागभावविशिष्टक्रियाकर्मत्वरूप एव । अतिक्रम्य पर्वतं नदी । प्राप्यत इत्यस्याध्याहारः । अवरेण परस्य योगे इदमुदाहरणम् । पूर्ववृत्तिश्चात्र विन्ध्याख्यपर्वत एव । तस्य योगः परगङ्गायाम् । अतिक्रम्येत्यत्रातिशब्दसमभिव्याहृतस्य क्रमधातोः प्राप्तिक्रियाध्वंसोऽर्थः । तदेकदेशप्राप्तौ पर्वतस्य कर्मत्वेनान्वयेन पर्वतकर्मकप्राप्तिक्रियाध्वंसस्य लाभे तस्य ध्वंसस्य स्वसमानकालिकत्वसम्बन्धेन नदीपदार्थनदीप्राप्तावन्वयाद्दक्षिणदेशस्थपुरुषकर्तृकपर्वतकर्मकप्राप्तिक्रियाध्वंससमानकालिकनदीकर्मकप्राप्तिक्रियाविषयकशाब्दबोधे वृत्तेऽवरेण पर्वतेन परनद्यां स्वकर्मकतादृशपुरुषकर्तृकप्राप्तिक्रियाध्वंससमानकालिकप्राप्तिकर्मत्वरूपो योगो गम्यत इति बोध्यम् । योगपदार्थश्च सम्बन्धः । स चात्र क्रियाद्वारकः । क्वचित्तु साक्षात्क्रिययोरेव परावरयोर्योगो यत्र तत्राप्यस्य प्रवृत्तिः । यथाऽविरविकन्यायव्युत्पादनावसरे कथितवाक्यस्थले अवेर्मांसमिति विगृह्याविकशब्दात्प्रत्ययस्योत्पत्तिरित्यादौ । विग्रहपदार्थश्च विभिन्नत्वेन ज्ञानरूपः । एवञ्चावेर्मांसमित्याकारकवाक्यज्ञानस्य स्वान्तरकालिकत्वसम्बन्धेनाविकशब्दावधिकप्रत्ययोत्पत्तावन्वयः । एवञ्चेदं सूत्रमसमानकर्तृकार्थमपूर्वकालार्थमिति च द्रष्टव्यम् । "अलंखल्वोः" ( पा० सू० ३-४-१८ ) इति तु क्रियान्तराभावेऽपि क्त्वार्थम् । धातुसम्बन्धे इत्यस्य च तत्र सामर्थ्याद्बाधः । परत्वादिकम्परावरयोग इत्यत्र लोकव्यवहारेण पुरुषभेदेन भिन्नवैवक्षिकमेव । तेनौत्तराहपुरुषकर्तृकदक्षिणदिगवच्छिन्नदेशकर्मकगमनस्थलेऽप्राप्यपर्वतन्नदी अतिक्रम्य नदीं पर्वत इति प्रयोगस्याप्युपपत्तिरिति ।

समानकर्तृकयोः पूर्वकाले(पा०सू०३-४-२१) । पूर्वकाल इति शब्दो बहुव्रीहिर्न तु तत्पुरुषःसमानकर्तृकयोरर्थयोः पूर्वस्मिन्नित्यनेनैव पूर्वकालावच्छिन्नबोधकपूर्व-

हि: । पूर्वकाले इति । *तद्विशिष्टेऽर्थे वर्तमानाद्धातोरित्यर्थः । *अत एव "समानकर्तृकयोः पूर्वकाल इति क्रियाप्रधानो निर्देशः" इति भाष्ये उक्तम् । द्वित्वमिति । पूर्वत्वस्य समानकर्तृकत्वस्य च भेदघटितत्वेनाने-कक्रियालाभेऽपि (१) सौत्रो द्विवचननिर्देश इति भावः । पूर्वकालत्वञ्च व्यवहितमपि, व्यवधानस्य च तात्पर्यबलेन व्यवस्था । अत एव 'भु-क्त्वा व्रजति' 'अद्य भुक्त्वा श्वो व्रजिष्यति' इत्याद्युपपत्तिः । पूर्वचि-

---

शब्दोपादानेन पूर्वकाललाभसंभवेन कालपदोपादानस्य व्यर्थत्वापत्तेः । बहुव्रीहौ तु पूर्वकालविशिष्टार्थस्य लाभ इत्येतदर्थलाभार्थं कालपदम् । समानशब्दस्तुल्यप-र्यायः । तच्च तुल्यत्वञ्च वास्तवभेदघटितम् । वयसा सामर्थ्येन च यत्र सदृशौ चैत्रमैत्रौ तयोर्मध्ये चैत्रेण प्रथमम्भुक्तन्तदनन्तरञ्च मैत्रेण तत्र चैत्रेण भुक्त्वा मैत्रो व्रजतीत्यापत्तेः । किन्तु यत्र क्रियाभेदेन तत्तन्निरूपितशक्तिभेदकृतभेदेन कल्पितः कर्त्रोर्भेदस्तत्रैव इष्यत इत्यारोपितभेदघटितं सादृश्यन्तथा चैकत्वे पर्यवसानं बोध्यम् । न चैवमेककर्तृकयोरित्येवास्तु समानेति व्यर्थमिति वाच्यम् । सादृश्यमारोपितभेदघटितमपीह शास्त्रे शब्दसाधुतानियामकमिति बोधयितुमेवमभिधा-नात् । समानकर्तृकयोरिति निर्धारणे षष्ठी । धातोरिति त्वधिकारलभ्यम् । तस्य च पूर्वकाल इति विशेषणम् । वाचकत्वं सप्तम्यर्थः । एवञ्च यत्फलितन्तदा-ह—*तद्विशिष्टेऽर्थ इति । *अत एव=बहुव्रीहिसमासेनैतादृशार्थस्याभिप्रेतत्वादे-व । अयं क्त्वाप्रत्ययः 'अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति' इति न्यायेन प्रकृत्य-र्थ एव । स च भाव एव । एवञ्चाव्ययकृतो भाव इति सिद्धान्तस्याप्युपपत्तिः । कालश्च क्त्वान्तघटितवाक्यजन्यशाब्दबोधे क्त्वाप्रकृत्यर्थक्रियायाम्प्रकारीभूय भासते।अत एव पूर्वं भुङ्क्ते पश्चाद्व्रजतीत्यत्र क्त्वाप्रत्ययमाशङ्क्य स्वशब्देनोक्त-त्वान्नेति समाहितम्प्रकृतसूत्रे भाष्ये । पूर्वशब्देन पूर्वकालरूपोऽर्थः प्रकृतेऽभिधी-यते न तु धातुनेति तदर्थः । न च पूर्वं भुक्त्वा पश्चाद्व्रजतीत्यत्रापि क्त्वा न स्यादिति वाच्यम् । 'नैतत्क्रियापौर्वकाल्यङ्किन्तर्हि कर्तृपौर्वकाल्यमेतत् । पूर्वं ह्य-सौ भुक्त्वाऽन्येभ्यो भोक्तृभ्यस्ततः पश्चाद् व्रजति"इत्यर्थस्य भाष्यकृतैवाभिधा-नात् । साधनान्तरक्रियापक्षपौर्वकाल्यमिति नानेन सूत्रेण क्त्वा किन्तु "विभाषा-ग्रेप्रथमपूर्वेषु" ( पा० सू० ३-४-२४ ) इत्यनेन । अत्र पूर्वकालक्रियाया वस्तुतोऽ-तीतत्वेऽपि तत्त्वेनाबोधाद् भूत इति नाभिहितम् । सूत्रे समानकर्तृकयोरिति द्वि-वचननिर्देशाद्द्वित्वं विवक्षितमिति भ्रमनिवारणायाह—मूले द्वित्वमतन्त्रमिति । एवञ्चान्यलब्धस्याप्यर्थस्य स्पष्टप्रतिपत्त्यर्थन्द्विवचननिर्देशो न तु विवक्षितत्वादेव । पूर्वकालविशिष्टा क्रिया च समानकर्तृकत्वसम्बन्धेन प्रधानक्रियायां विशेषणम् । स्वरत्यादिधातुभ्यः परस्य क्त्वः "स्वरति" ( पा० सू० ७-२-४४ ) इतिसूत्रेण प्रा-

---

[ १ ] 'प्रथमातिक्रमे कारणाभावेन द्विवचन' इति आदर्शपुस्तके पाठः ।

प्रतिषेधेनेति। *पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यादित्यर्थः।

न क्त्वा सेट् [ पा० सू० १-२-१८ ] *अनेन कित्कार्यं निषिध्यते। कित्त्वनिषेधे हि कश्रवणं स्यात्। क्त्वेतिकिम्?, निगृहीतम्।

---

सोऽपीट् "इग्युकः" ( पा० सू० ७-२-११ ) इतिसूत्रेण बाध्यत इत्याह—*पुरस्तादिति। अत्र क्त्वान्तार्थक्रियाकर्तुरनभिधानेऽपि प्रधानक्रियाकर्तुरभिधानेनाप्रधानक्रियानिरूपितशक्तेस्तद्वदभिधानमिति न चैत्रो भुक्त्वा व्रजतीत्यत्र चैत्रपदादप्रधानक्रियामादाय तृतीया। नापि पक्वौदनो भुज्यत इत्यत्र द्वितीया। यत्र तु शक्त्योरेकनिष्ठत्वन्तत्रैवेयं व्यवस्था। यत्र तु तयोर्भिन्नाधिकरणकत्वन्तत्र त्वप्रधानक्रियाकर्मवाचकाद् द्वितीया भवत्येव। ओदनम्पक्त्वा ग्रामो गम्यते चैत्रेणेति यथा। न च

प्रातः काले शिवं दृष्ट्वा निशि पापं व्यपोहति।

इत्यादौ क्रिययोरेककर्तृकत्वाभावात्कथं क्त्वाप्रत्यय इति वाच्यम्। एतादृशे विषये स्थितस्येत्यादेरध्याहारेण समानकर्तृकत्वस्योपपादनात्। न च 'दुर्गामावाह्य षोडशोपचारैस्ताम्प्रपूजयेद्'इत्यत्रावाहनस्य षोडशोपचारान्तर्गतत्वादावाहनक्रियायास्ततो भेदाभावात्कथं क्त्वाप्रत्यय इति वाच्यम्। आवाहनात्मकविशेषधर्मावच्छिन्नस्य पूजने समानकर्तृत्वात्मकसम्बन्धेन विशेषणत्वं तद्विशेष्यपूजने च षोडशोपचारैरित्यस्य सामान्यधर्मावच्छिन्नस्य विशेषणत्वमिति स्वीकारात्। यत्र त्वनेकक्रियाप्रयोगस्तत्र स्नात्वा भुक्त्वा पीत्वा व्रजतीत्यादौ सर्वक्रियावैशिष्ट्यम्प्रधानक्रियायाम्भासते न तु तासाम्परस्परं विशेष्यविशेषणभावः। 'गुणानां च परार्थत्वात्' इति न्यायात्। यत्र त्वयञ्चैत्रो भोजनेन तृप्तो न तु पानेनेत्यर्थविवक्षया भुक्त्वा तृप्तो न पीत्वेति प्रयोगस्तत्र जन्यत्वमपि भोजनस्य संसर्गविधया भासते पानस्य चैतादृशसम्बन्धावच्छिन्नाभावस्तर्पणक्रियायां विशेषणम्। अधीत्येति शिवम्प्रपूज्य तदालये तिष्ठतीत्यादौ व्याप्यत्वं समानकर्तृकत्वञ्च सम्बन्धः। तच्च व्याप्यत्वं क चित्कालिकसम्बन्धावच्छिन्नव्यापारनिष्ठव्यापकतानिरूपितम्, क चित्तु संयोगविशेषावच्छिन्नव्यापारनिष्ठव्यापकतानिरूपितम्। प्रपदं वासः परिधाय बहिर्गच्छतीयमित्यादौ यथा। गङ्गाम्प्राप्य सेना तिष्ठतीत्यादौ च सति तात्पर्येऽव्यवधानमपि सम्बन्धो भासते। एवमन्यत्र यथायथम्बोध्यम्।

न क्त्वा सेट् ( पा० सू० १-२-१८ )। कित्पदस्येत्संज्ञककारबोधकतया सविशेषणे विधिनिषेध इति न्यायेन विशेषणीभूतेत्संज्ञाया निषेधेऽस्य सूत्रस्य तात्पर्यमिति भ्रमवारणायाह-*अनेनेति। न च"मृडमृद" ( पा० सू० १-२-७ ) इति सूत्रं "स्थाघ्वोरिच्च" ( पा० सू० १-२-१७ ) इति सूत्रानन्तरम्पठनीयम्। सेड्ग्रहणञ्च कर्त्तव्यमेवञ्च मृडादिभ्य एव सेट् क्त्वा किद्भवति नान्येभ्य इति नियमो भविष्यति तावतैव शपित्वेत्यादेः सिद्धौ न क्त्वेति व्यर्थमिति वाच्यम्। मृडादिभ्यः क्त्वैव किदिति नियमस्याप्युपपत्तेः।

झलादाविति। "अनुनासिकस्य क्वि"[पा०सू०६-४-१५]इत्यतो *झलीति वर्त्तते।

झलादावितीति। *"अनिदिताम्" (पा० सू० ६-४-२४) इत्यतः क्ङितीत्यनुवर्त्य क्ङिति क्ङि इति व्याख्येयमित्यर्थः। सेट् क्त्वा

---

मृडमृद (पा० सू० १-२-७)। यद्यपीह सेडिति न प्रकृतम्। तथाप्यस्य सूत्रस्य "न क्त्वासेट्" (पा० सू० १-२-१८) इति सूत्रप्राप्तकित्कार्यप्रतिषेधबाधकतया सेड्विषयकमेवेदं सूत्रमित्याशयेन सेट्क्त्वेति मूलेऽभिहितम्।

नोपधात्थफान्ताद्वा (पा० सू० १-२-२३)। न क्त्वासेडिति वर्त्तते। इह धातोरिति यद्यपि न प्रकृतन्तथापि क्त्वाप्रत्ययस्य धातोरेव सम्भव इति धातोरित्यस्याक्षेपस्तस्य नोपधादिति थफान्तादिति च विशेषणम्। एवञ्च थफादित्येव तदन्तविधिना थफान्तस्य लाभे सिद्धेऽन्तग्रहणं स्पष्टार्थम्। कोथित्वा रेफित्वेति। न चेह नोपधग्रहणाभावे कित्वविकल्पः स्यादिति वाच्यन्तन्न सम्भवति। "रलो व्युपधात्" (पा० सू० १-२-२६) इत्यनेन कित्वविकल्पस्य प्राप्तेरिति वाच्यम्। प्रकृतसूत्रे नोपधग्रहणसामर्थ्येन तस्यापि विकल्पस्याप्रवृत्तेः। न च ऋफधातोः क्त्वाप्रत्यये विकल्पवारणाय नोपधग्रहणमस्त्विति वाच्यम्। द्वाविमौ धातू ऋफ ऋम्फेति। तत्राद्यस्य ऋफधातोः क्त्वाप्रत्ययेऽस्मिन् सूत्रे नोपधग्रहणे विकल्पस्य वारणेऽपि "न क्त्वा सेट्" (पा० सू० १-२-१८) इति कित्वनिषेधे 'अर्फित्वा' इति रूपं द्वितीयस्य नोपधादिति विकल्पेन कित्वपक्षे ऋफित्वेति रूपमिति फलतो विशेषाभावेन नोपधग्रहणस्य तद्व्यावर्त्तकत्वाभावात्।

वञ्चिलुञ्च्यृतश्च (पा० सू० १-२-२४)। वञ्चधातोरुदित्वात् "उदितो वा" [पा० सू० ७-२-५६] इतीट्पक्षेऽनेन कित्वविकल्पः। ऋतिः सौत्रो धातुर्घृणार्थकस्तस्मात् क्त्वाप्रत्यये चिकीर्षिते "आयादय" (पा० ३-१-३१) इत्यनेन "ऋतेरीयङ्" (पा० सू० ३-१-२९) इति विहितस्य ईयङ्प्रत्ययस्याभावेऽनेन कित्वविकल्पः।

तृषिमृषिकृषेः (पा० सू० १-२-२५]। नोपधादित्यतो वाग्रहणानुवृत्त्यैव सिद्धे काश्यपग्रहणं पूजार्थम्। अञ्चुधातोरुदित्वात् "उदितो वा" (पा० सू० ७-२-५६) इति विकल्पे प्राप्ते आह—अञ्चेः पूजायामिति नित्यमिडिति।

क्रमश्च क्त्वि (पा० सू० ६-४-१८)। *झलीति वर्त्तत इति। एकदेशे स्वरितत्वसामर्थ्यादिति शेषः। अस्योदित्त्वादिडभावे "अनुनासिकस्य" (पा० सू० ६-४-१५) इति नित्यं दीर्घे प्राप्ते इदम्।

जान्तनशां विभाषा (पा० सू० ६-४-३२)। "क्त्विस्कन्दि" (पा० सू० ६-४-३१) इत्यतः क्त्वीत्यनुवर्त्तते। अत्र यथा झलादावित्यस्य लाभस्तत्प्रकारमाह—*अनिदितामित्यत इति।

घ न किदिति भावः ।

समासेऽनञ् [ पा० सू० ७-१-३७ ] । अनञिति पर्युदासः । तेन नञ्सदृशाव्ययपूर्वपदके प्रत्यासत्त्या क्त्वान्तोत्तरपदके इत्यर्थः । *तेन *'स्नात्वाकालकः' इत्यादौ न दोषः । अनञ इत्येव सिद्धे पूर्वग्रहणं*स्पष्टार्थम् ।

अधीत्येति । *यद्यपि *पदान्तपदाद्योरेकादेशोऽसिद्धोऽत्र च उत्तरखण्डे सुबुत्पत्तेः पूर्वमेव समासस्तथापि तत्र पदशब्देनार्थवत उपलक्षणान्न दोषः । *"गतिकारक" (प० भा० ) इत्यस्यानित्यत्वात्सुबन्तेन वा समासः ।

(१)*( "वा ल्यपि" [ पा० सू० ६-४-३८ ] इत्यस्य

---

*तेन=क्त्वान्तोत्तरपदक इति व्याख्यानेन । *स्नात्वाकालक इति । मयूरव्यंसकादिसमासः । *स्पष्टार्थमिति । अव्ययपूर्वपदकसमास एवास्य सूत्रस्य प्रवृत्तिर्न त्वव्ययात्परत्वं यत्र क्त्वान्तघटितसमासस्य तत्र प्रवृत्तिरित्यर्थस्य स्पष्टप्रतिपत्त्यर्थमित्यर्थः । अनञः परस्य क्त्वान्तोत्तरपदकस्य समासस्यावयवो यः क्त्वा तस्येत्यर्थे तु तत्र परमकृत्वाशब्देऽतिव्याप्तिः स्यात् । प्रकृत्येति । अत्र प्रशब्दस्य धात्वर्थगतप्रकर्षद्योतकतया गतित्वात् "कुगति" [ पा० सू० २-२-१८ ] इति समाससंज्ञा ।

षत्वतुकोरसिद्धः [ पा० सू० ६-१-८६ ] । कोऽसिचदिति । इह पूर्वरूपस्य परादिवद्भावेन ओऽसिचदित्यस्य पदत्वात्सकारस्य पदादित्वाभावादिणः परत्वात्षत्वे प्राप्तेऽसिद्धत्वम् । भाष्योक्तसिद्धान्ताभिप्रायेणाशङ्कते— *यद्यपीति । *पदान्तपदाद्योरिति । अन्यथा वृक्षेच्छत्रमित्यत्र "दीर्घात् पदान्ताद्वा" ( पा० सू० ६-१-७६ ) इति विकल्पो न स्यात् । सम्प्रदायमतानुसारेणाह— *गतिकारकेत्यस्येति । ननु व्यवस्थितविभाषाणां भाष्यसम्मतानामेव प्रामाणिकत्वमत आह—*वा ल्यपीत्यस्येति ।

न ल्यपि ( पा० सू० ६-४-६९ ) । 'निपीय यस्य' ( नैषध ) इत्यादौ तु पीङ्धातुर्दैवादिको बोध्यः ।

ल्यपि लघुपूर्वात्(पा०सू०६-४-५६) । लघुः पूर्वो यस्मादिति बहुव्रीहिः । न च 'प्रणमय्य' इत्यत्र सूत्रचारितार्थ्येऽपि 'विगणय्य' इत्यत्रायादेशो न स्यात्पञ्चमीसमासेनाल्लोपस्य स्थानिवद्भावादिति वाच्यम् । अस्माद्भाष्योदाहरणात् "निष्ठायां सेटि" [ पा० सू० ६-४-५२ ] इतिसूत्रे सेड्ग्रहणाच्च पञ्चमीसमासस्यानित्यत्वात् । ननु लघुपूर्वादित्यत्रान्यपदार्थो वर्ण एव । अवध्यवधिमतोः सा-

---

[ १ ] कंसान्तर्गतो ग्रन्थ आदर्शपुस्तके नास्ति ।

स्थाने "ल्यपि च वा मः" इति वार्तिकन्यासः ।) नान्तानिटामिति । प्रयोगाभिप्रायेण बहुवचनम् ।

---

जात्यादेवञ्च 'प्रचिकीर्ष्य' इत्यत्रापि वर्णग्रहणे जातिग्रहणादयादेशः प्राप्नोतीति चेन्न । 'प्रबेभिदय्य' 'प्रस्तनय्य' इत्यादिभाष्यीयोदाहरणबलेन पञ्चमीसमासानित्यत्वेनैकवर्णात्परत्वं यत्र तत्रैवास्य प्रवृत्तेः स्वीकारात् । वर्णग्रहणे जातिग्रहणमिति परिभाषा तु "ज्ञापकसिद्धं न सर्वत्र" इति नेहाश्रीयते । अत एव 'ल्यपि लघुपूर्वस्य'इति न्यासे व्यञ्जनान्तेषूपसंख्यानमित्यनेन प्रशमय्य गतः प्रतमय्य गत इत्यत्राव्याप्तिमुद्भाव्याल्लोपे च गुरुपूर्वात् प्रतिषेध इत्यनेन प्रतिचिकीर्ष्य गत इत्यत्रातिव्याप्तिरुद्भाविता । अल्लोपे कृते यो गुरुपूर्वस्तस्मात्परस्य णेर्भूतपूर्वां लघुपूर्वतामाश्रित्यायादेशः प्राप्नोतीत्यर्थः । ततो 'लघुपूर्वादिति वचनात्सिद्धम्' इत्युक्तम्भाष्ये । षष्ठ्यन्तपाठे याऽतिव्याप्तिः सा पञ्चम्यन्तेन । नच प्रतमय्य गत इत्यादौ णिचि "अत उपधायाः" ( पा० सू० ७-२-११६ ) इति वृद्धौ "मितां ह्रस्वः" (पा० सू० ६-४-७२ ) इति ह्रस्वत्वे कृते "असिद्धवदत्र" ( पा० सू० ६-४-२२ ) इति तस्यासिद्धत्वात्कथं लघुपूर्वात्परत्वमिति वाच्यम् । समानाश्रये हि आभीयासिद्धत्वम्भवति प्रकृते च णौ ह्रस्वत्वं ल्यपि णेरयादेश इति व्याश्रयत्वं स्पष्टमेव ।

विभाषापः [ पा० सू० ६-४-५७ ] । यद्यप्याप इतीङोऽपि 'अध्याप्य गतः' इत्यत्र सम्भाव्यते तथाप्यत्र लाक्षणिकत्वेन प्रतिपदोक्तस्यैवाप इत्यस्य ग्रहणमिति बोध्यम् । मूले कथम्मुखं व्यादायेति । मुखव्यादानस्य नेत्रनिमीलनस्य च स्वापहासोत्तरकालिकत्वेन पूर्वकालविशिष्टार्थवृत्तित्वाभावात्प्रश्नः । तदंशाविवक्षयेति । एतेन विवक्षैव वक्तुः शब्दानां साधुत्वनियामिका । यथा आदिकर्मणिनिष्ठास्थले धात्वर्थैकदेशस्य स्थितावपि उत्पत्तिकालावच्छिन्नस्य कस्यचिदवयवस्यातीतत्वविवक्षया निष्ठा भवति तथा प्रकृतेऽपि स्वापहासयोर्यत्किञ्चिदवयवस्य मुखव्यादाननेत्रनिमीलनोत्तरकालिकत्वेन तदंशापेक्षया पूर्वकालसम्बन्धिक्रियावचनत्वमादायायम्प्रयोग इत्युक्तम् । न च यत्रादौ स्वापस्ततो मुखव्यादानन्तदधिकरणकालोत्तरमपि स्वापानुवृत्तिस्तत्र मुखं व्यादाय स्वपिति नेत्रे निमील्य हसतीत्यत्राङ्गविवक्षयोत्तरकालिकहासांशमादाय यथा प्रयोगस्तथा यत्र मुखव्यादाननेत्रनिमीलनयोरुत्तरकालिकस्वापहासाधिकरणकाले निवृत्तिस्तत्रापि मुखं व्यादाय स्वपिति नेत्रे निमील्य हसतीति प्रयोगः स्यादिति वाच्यम् । समानकर्तृकत्वस्यैव कालिकसम्बन्धावच्छिन्नस्वनिष्ठव्यापकतानिरूपितव्याप्यत्वस्यापि संसर्गत्वात् । न चैवं पूर्वकालिकस्वापहासांशयोरधिकरणक्षणे कालिकसम्बन्धेन व्यादाननिमीलनयोरसत्त्वात्कथमेतादृशव्याप्यव्यापकभावस्योपपत्तिरिति वाच्यम् । शब्दप्रयोगाधिकरणकालाव्यवहितोत्तरकालाधेयत्वविशिष्टताक्रियात्वावच्छिन्नव्याप्यतानिरूपितव्यापकताया एव संसर्गत्वाभ्युपगमात् । एवमेव विष्णुर्विश्वं व्याप्यास्तीति यत्र प्रयोगस्तत्राप्युपपत्तिः ।

आभीक्ष्ण्ये णमुल् च ( पा० सू० ३-४-२२ ) । चकारोऽत्र स्वविषये

आभीक्ष्ण्ये णमुल् च [ पा० सू० ३-४-२२ ] । *यद्यपि घासरूपन्यायेन क्त्वा सिद्धस्तथापि "विभाषाग्रे" [पा० सू० ३-४-२४] इति सूत्रेणोभयोर्विधानाय चकारः । *तत्र सूत्रे साधनान्तरजन्यस्वसजातीयक्रियापेक्षपौर्वकाल्यरूपसाधनपौर्वकाल्यविषयाग्रादीनामेव ग्रहणेन तद्विषये समानादिसूत्रेण क्त्व*स्तेन न्यायेन दुर्लभत्वात्, । नाप्यनेन । आभीक्ष्ण्ये *पूर्वविप्रतिषेधेनास्यैवेष्टत्वेनानाभीक्ष्ण्ये एव तत्प्रवृत्तेः । द्वित्वमिति । "नित्यवीप्सयोः" [ पा० सू० ८-१-४ ] इत्यनेन । यद्यप्याभीक्ष्ण्यं णमुलादिना*द्योतितं तथाप्य*र्थान्तरेऽपि*तद्विधानाद् द्वित्वरहितयोर्न तद्द्योतने सामर्थ्यमिति भावः ।

नाकाङ्क्षे इति । *यद्यपि क्त्वाप्रकृत्यर्थक्रियायाः सर्वत्राकाङ्क्षाऽस्ति, तथाऽप्याख्यातोपात्तक्रियाया आकाङ्क्षा निषेधविषयः । नाकाङ्क्षतश्चेदिति युक्तः पाठः ।

पक्षे लडादय इति । *कर्त्रादिविवक्षापक्षे इत्यर्थः । भावे ल्युतौ,

---

क्त्वाप्रत्ययस्यापि प्रयोगार्थस्तत्राशङ्कते —*यद्यपीत्यादिना । *तत्र सूत्र इति । "विभाषाग्रे" ( पा० सू० ३-४-२४ ) इति सूत्र इत्यर्थः । *तेन न्यायेन=उत्तरकालिकक्रियायां स्वसमानकर्तृकत्वसम्बन्धेन पूर्वकालिकक्रियायाः सत्त्वमिति न्यायेन । *पूर्वविप्रतिषेधेनेति । अत्र प्रमाणन्तु तत्रैव सूत्रे भाष्यकृता तस्य सूत्रस्याप्राप्तविभाषात्वमुपपादितन्तदेव । *द्योतितमिति । एवञ्च कथं द्विर्वचनमिति शेषः । णमुलादिनेत्यत्रादिना क्त्वः संग्रहः । *अर्थान्तरेऽपि=आभीक्ष्ण्यातिरिक्तेऽपि । *तद्विधानादिति । णमुलो विधानादित्यर्थः । न चार्थान्तरेऽप्येतद्विधानादिति कथम् । अस्याप्यव्ययकृतो भाव इति सिद्धान्ताद्भाव एतदुत्पत्तिस्वीकारादिति वाच्यम् । आभीक्ष्ण्याभाव दर्शनादित्यर्थस्य विवक्षितत्वात् । "विभाषा ग्रहः" [ पा० सू० ३-१-१४३ ] इत्यादिसूत्रविषये यथा । मूले वा दीर्घ इति । गमधातोर्णिचि मित्वाद् ह्रस्वत्वे णमुलि परे "चिण्णमुलोर्दीर्घोऽन्यतरस्याम्" [पा०सू० ६-४-९३ ] इति वा दीर्घ इत्यर्थः ।

न यद्यनाकाङ्क्षे [पा०सू०३-४-२३] । सूत्रोदाहरणासम्भवमाशङ्क्य निराचष्टे—*यद्यपीत्यादिना । अनाकाङ्क्ष इति पचाद्यजन्ताकाङ्क्षशब्दस्य नञ्समासः । अनाकाङ्क्षो धात्वर्थश्चेदित्यर्थः फलितः । अत्राकाङ्क्षा तद्विशेषणीभूतार्थप्रतिपादकत्वरूपा । एवञ्चोभयोः क्रिययोस्तथात्वाभावस्तत्रैव निषेधोऽयन्तदाह—यत्रेत्यादिना मूले । अनेन "अनन्तरस्य" इति न्यायेन णमुल एव निषेध इति नाशङ्कनीयम् । यत्प्राप्तमिति व्याख्यानेनोभयोर्निषेधात् ।

ननु पक्षे लडादय इत्यनुपपन्नमर्थभेदादत आह—*कर्त्रादिविवक्षापक्ष-

तदाह—अग्रे भुङ्क्ते इति । अग्रेवार्थे विभाषाग्रहणं तात्पर्यग्राहकम् । एतद्विषये कर्त्रादिविवक्षापि, पूर्वसूत्रविषये तु न सा मानाभावादिति दिक् ।

चोरङ्कारमाक्रोशतीति । चोरशब्दमुच्चार्येत्यर्थः । न चात्र "अनुकरणञ्चानिति" ( पा० सू० १-४-६२ ) इति निपातत्वाव्ययत्वयोः सत्त्वान्मुमनापत्तिः, "अरुर्द्विषद्" ( पा० सू० ६-३-६७ ) इत्यत्र "खित्यनव्ययस्य" [ पा० सू० ६-३-६६ ] इत्यनुवृत्तेरिति वाच्यम् । खित्करणसामर्थ्याच्च*त्सिद्धेः । *यद्वा कृञ् साधुत्वार्थः, चोरमाक्रोशतीत्येव बोधः ।

---

इति । मानाभावादिति । प्रकृतसूत्रविषये कर्तृविवक्षापक्षे मानं तु साधनपौर्वकाल्यविषयाणामग्रादीनां ग्रहणमेव । अत एव "समानकर्तृकयोः पूर्वकाले" [ पा० सू० ३-४-२१ ] इतिसूत्रभाष्ये—"इह कस्मान्न भवति—पूर्वं भुङ्क्ते पश्चाद्व्रजतीति? । स्वशब्देनोक्तत्वान्न भवति । न तर्हीदानीमिदं भवति पूर्वं भुक्त्वा ततो व्रजतीति । नैतत्क्रियापौर्वकाल्यम् किन्तर्हि कर्तृपौर्वकाल्यमेतत् । पूर्वं ह्यसौ भुक्त्वाऽन्येभ्यो भोक्तृभ्यस्ततो व्रजति" इत्युक्तम् । अत्र कैयटः—स्वशब्देनेति । पौर्वकाल्ये द्योत्ये क्त्वादिर्विधीयते न तु विषयभावे । पूर्वशब्दस्यात्र क्रियापौर्वकाल्यवाचित्वात् । अग्रादिसूत्रेणापि न भवति । अग्रादीनां साधनपौर्वकाल्यविषयाणान्तत्र ग्रहणात् । नैतदिति । द्विविधात्र भुजेः पूर्वकालता व्रजिक्रियापेक्षा तस्याम्प्रत्ययः, भोक्त्रन्तरसाध्यभुजिक्रियापेक्षा च तां पूर्वशब्द उपादत्ते ततश्चाग्रादिसूत्रेणात्र „क्त्वाणमुलौ भवत इति भावः । कर्तृपौर्वकाल्यञ्च क्रियाद्वारकमेवेति । कर्तृपौर्वकाल्यमित्यस्य कर्त्रन्तरसाध्यस्वसजातीयक्रियापेक्षपौर्वकाल्यमित्यर्थः । एवञ्च साधनपौर्वकाल्यविषयाणामग्रादीनां यत्रोपादानम्भावस्य च प्राधान्यविवक्षा तदा क्त्वाणमुलौ यदा कर्तुर्विवक्षा तदा लडादय इति बोध्यम् । अग्रेभोजमिति प्रकृतसूत्रोदाहरणे "अमैवाव्ययेन" ( पा० सू० २-२-२० ) इति नियमात्समासाभावः ।

कर्मण्याक्रोशे कृञः खमुञ् ( पा० सू० ३-४-२५ ) । कृञत्राभिमतफलानुकूलव्यापारवाची । चोरंकारमित्यत्र चोरशब्दः स्वरूपपरः । तस्य कर्मत्वञ्चोच्चारणापेक्षयेत्युच्चारणमभिमतफलम् । अत्राव्ययकृत इति सिद्धान्तात्खमुञ्प्रत्ययोऽपि भावे । एतदन्तार्थस्यापि पूर्ववत्समानकर्तृकत्वसम्बन्धेन क्रियान्तरम्प्रति विशेषणता । *तत्सिद्धेः=चोरशब्दस्य मुम्सिद्धेः । यत्र चोरोऽसीत्युच्चारणमेव क्रोधेन तत्रायम्प्रयोगः । यत्र तु नाहं चोर इति वदन् पुरुषश्चोरत्वेन सम्बध्यते तत्र नायम्प्रत्ययः । आक्रोशपदस्वारस्यात् । आक्रोशोऽपि विलक्षणशब्दोच्चारणानुकूलव्यापार एव । विशेष्यस्य चोरशब्दोच्चारणानुकूलव्यापारस्य समानकर्तृकत्वसम्बन्धेन सामान्यधर्मावच्छिन्ने आक्रोशे विशेषणत्वम् । एवं सति

कृञः प्रयोगस्तत्प्रकृतिकखमुञन्तशब्दघटितवाक्यस्य साधुत्वार्थमेव न तु खमुञन्तार्थस्यापि शाब्दबोधे भानमित्येव कल्पना लाघवादुचितेत्याशयेनाह—*यद्वेति । आक्रोशपदार्थश्चात्रोच्चारणानुकूलव्यापार एव । चोरशब्दः पूर्ववच्छब्दपर एव । तस्योच्चारणरूपफलाश्रयत्वात्कर्मता ।

स्वादुमि णमुल् ( पा० सू० ३-४-२६ )। कृञ इत्यनुवर्त्तते । स्वादुमित्यर्थपरम् । वृत्तिकारादिसम्मतव्याख्यानात् । स्वाद्वर्थे उपपदे कृञो णमुल् स्यात् । स्वादुशब्दश्च विजातीयप्रीतिरूपा या रुचिस्तद्विषयपरः । कृञ्धात्वर्थश्च सम्पत्त्यनुकूलव्यापारपरः । तस्य भुजधात्वर्थे विशेषणता पूर्ववत् । मान्तत्वन्निपात्यत इति । निपातनस्य फलमाह—अस्वादुमित्यादिना । अयम्भावः—स्वादुमीत्येव सूत्रं कार्यम् । खमुञ्ग्रहणमनुवर्तनीयम् । स्वादुमादीनाम्मुमागमेन सिद्धौ प्रकृतसूत्रेण णमुलो विधानं यत्र खमुञा सिद्धिर्न भवति तदर्थन्तादृशः शब्दश्चाव्ययसंज्ञक इति । अत एव च्व्यन्तमुदाहरति—अस्वादुमित्यादिना । यद्यस्मिन्नुपपदे खमुञ् स्यात्तदा "अनव्ययस्य" इति प्रतिषेधान्मुम् न स्यात् । "च्वौ च" ( पा० सू० ७-४-२६ ) इति स्वादुशब्दस्य दीर्घः स्यात् । सम्पन्नलवणयोः "अस्य च्वौ" ( पा० सू० ७-४-३२ ) इतीत्वं स्यात् । स्त्रियामस्य स्वादुशब्दस्य यवागूपरत्वे "वोतो गुण" ( पा० सू० ४-१-४४ ) इति सूत्रेण ङीषि सति "खित्यनव्ययस्य" ( पा० सू० ६-३-६६ ) इति मुमि स्वाद्वीङ्कारमिति स्यात् । यत्तु णमुल्यपि मुमेव विधेयो न तु मान्तत्वनिपातनमिति । तन्न । च्व्यन्तत्वे स्त्रियाञ्च पूर्ववद्दोषापत्तेः । न च प्रत्ययसन्नियोगेन मुमो विधानादन्तरङ्गत्वात् पूर्वं मुमि नैते दोषा इति वाच्यम् । उपपदमिति महासंज्ञा हि महासंज्ञाकरणात्सुबन्तस्य, सुबुत्पत्तिश्च संख्यामपेक्षते, ततश्च स्वार्थद्रव्यलिङ्गसंख्याकारकाणां क्रमिकत्वे प्रातिपदिकस्य स्त्र्यर्थाभिधायकत्वे स्त्रीप्रत्ययानन्तरं सुबुत्पत्तौ पूर्ववद्यवाग्वर्थाभिधायकत्वेऽनिष्टरूपापत्तिः । स्वादुशब्दस्यैव प्रत्ययसन्नियोगमान्तत्वनिपातने तु न कश्चिद्दोषः । न च मान्तत्वनिपातनमस्तु खमुञ्प्रत्यय एवास्त्विति वाच्यम् । अव्ययार्थंणमुल्विधानमित्यस्य प्रागभिधानात् । न च मान्तत्वनिपातनं णमुल्सन्नियोगेन स्यादेवञ्च 'स्वादुङ्कृत्वा' इतिरूपासिद्धिरिति वाच्यम् । एतत्प्रकरणस्थभावप्रत्ययसन्नियोगेन मान्तत्वनिपातनमित्याशयात् । यदि तु निपातनं नामापूर्वः शब्दोपजन इति स्वादुशब्दस्य स्वादुमित्यादेश इतिकल्पना तदाऽयं णमुल् लिङ्गविशिष्टपरिभाषया यवाग्वर्थाभिधायके स्वाद्वीशब्दे उपपदेऽपि स्यात्तस्य स्थाने मान्तादेशे स्वादुङ्कारम्भुङ्क्त इत्यस्य सिद्धावपि स्वाद्वींकृत्वा यवागूं भुङ्क्त इतिभाष्यप्रयोगस्य क्त्वाप्रत्ययपक्षेऽनुपपत्तिरित्युच्यते तदा णमुल्सन्नियोगे मान्तत्वनिपातनमित्येवास्तु । स्वादुङ्कृत्वा भुङ्क्त इत्यत्र स्वादुशब्दो द्वितीयान्तस्तत्र स्वादुशब्दस्योपपदत्वाभावेन नित्यसमासस्याप्राप्तेः ।

अन्यथैवंकथमित्थंसुसिद्धाप्रयोगश्चेत् ( पा० सू० ३-४-२७ ) । कृञ इत्यनुवर्त्तते । तच्च सुसिद्धाप्रयोग इत्यनेन सामानाधिकरण्यात्प्रथमया विपरि-

यथातथयोर [ पा० सू० ३-४-२८ ] । *असूयया प्रतिव-चने इति विग्रहः ।

---

णम्यते । व्यर्थत्वादित्यस्यातिप्रयोजनाभावादित्यर्थः । शब्दप्रयोगो हि प्रयोज-नाय भवति, निष्प्रयोजनः स शब्दः प्रयोगानर्हः । 'अन्यथा भुङ्क्ते' इतिशब्देन यावानर्थोऽभिधीयते तावानेव 'अन्यथा कृत्वा भुङ्क्ते' इत्यस्मादपि प्रतीयते । न च शाब्दबोधे वैलक्षण्यमस्त्येव । 'अन्यथा'शब्दस्य प्रकारविशेषाभिधायकतया कृञश्च क्रियासामान्यवाचकतयोभाभ्याम्प्रकारविशेषविशिष्टव्यापारोपस्थितौ भु-ङ्क्ते इत्येतच्छब्दाद् गलाधःसंयोगानुकूलव्यापारे उपस्थिते सति तयोरर्थयोरभे-दान्वयसत्त्वादिति वाच्यम् । एवं रीत्या वैलक्षण्यस्य शाब्दबोधे सत्यपि प्रवृ-त्तिनिवृत्त्यादिलक्षणकार्ये वैचित्र्याभावेन कृञो नातिप्रयोजनत्वात् । द्वयोः क्रि-ययोः सामान्यविशेषभावेन भेदादेव पौर्वकाल्यनिबन्धनः क्त्वाप्रत्ययोऽप्यस्मिन् विषये वासरूपविधिना भवति। प्रत्युदाहरणवाक्ये कृञोऽप्रयोगे शिरोऽन्यथा भुङ्क्ते इत्युक्ते वृकस्य कर्तृत्वे शत्रुव्याघ्रादिशङ्कयाऽन्यप्रकारेण शिरो भुङ्क्ते इ-त्यपि प्रतीयेत यथा पशोरङ्गान्तरं विलम्बेन भुक्तञ्च तथा शिरो भुङ्क्ते किन्तु झटिति भुङ्क्ते इत्यर्थः ।

यथातथयोरसूयाप्रतिवचने ( पा० सू० ३-४-२८ ) । कृञः सिद्धाप्र-योगे इति चानुवर्त्तते । यथातथाशब्दयोरुपपदयोः करोतेर्णमुल् स्यादसूयाप्र-तिवचने गम्यमाने । असूया=अक्षमा । यदा प्रष्टुमयोग्यः पुरुषो-भोजनकर्तारं महान्तं क्रोधाद्याविष्टम्पृच्छति सति तदीयवचनश्रवणोत्तरमयमयोग्यो मां पृच्छति इदमयोग्यमितिज्ञानजन्यमन्युना प्रतिवक्ति यथाकारमित्यादि तदेद-मुदाहरणम । असूयाप्रतिवचन इत्यत्र षष्ठीतत्पुरुषभ्रमवारणायाह—*असूय-येति । असूयेत्यादि किम् ? । यथाकृत्वाऽहं भोक्ष्ये तथा द्रक्ष्यसि । सिद्धाप्रयोग इति किम् ? । यथा कृत्वाऽहं शिरो भोक्ष्ये तथा कृत्वाऽहं शिरो भोक्ष्ये किन्त-वानेन'इत्यत्र णमुल् मा भूत ।

कर्मणि दृशि ( पा० सू० ३-४-२९ ) । अत्र कर्मोपपदं न त्वर्थनिर्देशः । अव्ययकृत्त्वात् । विद्ग्रहणेन सर्वस्य विदो ग्रहणञ्च सत्तार्थकस्याकर्मकत्वात्- किन्तु त्रयाणामित्याशयेन मूले जानातीत्याद्यर्थनिर्देशः अव्ययकृत्त्वात् । सा-कल्यमत्र वक्तृबुद्धिस्थयावत्कर्मकत्वन्तच्च धातुविशेषणमर्थद्वारकम् । एवञ्च क-र्मण्युपपदे दृशिविदोर्णमुल् स्यात् तयोः साकल्ये गम्यमाने । 'कन्यादर्शं व-रयति' इत्यत्र णमुलन्तोत्तरपदकस्य समासस्य सकलकन्याकर्मकदर्शने शक्तिः, तस्य दर्शनस्य स्वसमानकर्तृकत्वस्योत्तरकालिकत्वोभयसम्बन्धेन वरणे स्वी-कारेऽन्वयः । एवञ्च यत्फलितन्तदाह—सर्वाः कन्या इति । एवमेव ब्राह्मणवेदं भोजयतीत्यत्रापि बोध्यम् । प्रधानीभूतधात्वर्थस्य कारकविशिष्टार्थविशिष्टस्या-तिशयप्रतिपादनपरमेतद्वाक्यम् ।

यावति विन्दजीवोः ( पा० सू० ३-४-३० ) । अत्र लाभार्थकस्यैव वि-

वर्षप्रमाणे ( पा० सू० ३-४-३२ ) । *वर्षो=वृष्टिः । गोष्पदपूरमिति । "गोष्पदपूरंतरामितीष्टं, गोष्पदप्रंतरामिति तु न *अनभिधानात् । प्रातेः के गोष्पदप्रेण गोष्पदप्रतरामिति चेष्यते इति भाष्ये स्पष्टम् ।

समूलाकृत [ पा० सू० ३-४-३६ ] । यथासंख्यमत्रेष्यते ॥

---

न्देर्ग्रहणम् । नुमा विशिष्टस्य निर्देशात् । असाकल्यार्थमिदं सूत्रम् ।

चर्मोदरयोः ( पा० सू० ३-४-३१ ) । अत्र पूरेरिति ण्यन्तस्य निर्देशः । अत एव चर्मोदरयोः कर्मत्वसम्भवः । कर्मणीत्येवेति । कर्मवाचकयोश्चर्मोदरयोरुपपदयोः पूरेर्णमुल् । अत्र पूर्वकाल इति न सम्बध्यते, किन्तु समानकर्तृकयोरित्येव । एवञ्च समानकर्तृकत्वमात्रम् । समानार्थस्य प्रधानधात्वर्थे सम्बन्धः ।

वर्षप्रमाणे ऊलोपश्च (पा० सू० ३-४-३२ ) । कर्मणि पूरेरिति चानुवर्त्तते । वर्षशब्दस्यान्यार्थकत्वभ्रमवारणायाह—*वर्षो वृष्टिरिति । वर्षस्य प्रमाणमियत्तापरिच्छित्तिः सा गम्यते चेत्प्रत्ययः । अत्र भाष्ये "ऊलोपश्चान्यतरस्याङ्ग्रहणं शक्यमकर्त्तुम् । कथङ्गोष्पदप्रं वृष्टो देव इति । प्रातिः पूरणकर्मा । तस्मादेष कः । ("आतोऽनुपसर्गे कः" ( पा० सू० ३-२-७४ ) इति कः । गोष्पदप्रमिति च क्रियाविशेषणमतो नपुंसकत्वमेकत्वञ्च ।) यदि कः विभक्तीनां श्रवणं प्राप्नोति । श्रूयन्त एवात्र विभक्तयः । तद्यथा--एकेन गोष्पदप्रेणेति" अनेन भाष्येणोलोपश्चेत्यादि प्रत्याख्यातम् । तत्र ऊलोपग्रहणसत्त्वे गोष्पदप्रन्तरामितीति । *अनभिधानादिति । अत्र मानन्तु प्रत्याख्यानपरभाष्यमेव । गोष्पदप्रतरामित्यस्येष्टावपि तदेव मानम् । न च पूरेर्णमि गोष्पदपूरमित्यस्यापि क्रियाविशेषणत्वात्सिद्धौ सूत्रस्याप्यकर्त्तव्यतापत्तिरिति वाच्यम् । गोष्पदपूरेणेति विभक्तिश्रवणापत्तेः गोष्पदपूरंतरामित्यस्यानापत्तेश्च । ऊलोपश्चास्येत्यस्य सूत्रस्य सत्त्वे तु णमुलन्तस्याव्ययत्वेनोभयं सिध्यति ।

चेले क्नोपेः ( पा० सू० ३-४-३३ ) । वर्षप्रमाण इत्यनुवर्त्तते । क्नूयीधातुः शब्दे उन्दने च वर्त्तते । अनेन सूत्रेण णमुलि कृते तदन्तस्य प्रयोगे सति तावद्वर्षो जातः येन चेलानि शब्दायन्ते आर्द्राणि वा जातानीति गम्यते । चेलशब्दोऽत्रार्थपरो वृत्तिकारादिव्याख्यानात् ।

निमूलसमूलयोः कषः ( पा० सू० ३-४-३४ ) । कर्मणीति वर्त्तते । निर्गतं च तत् मूलं च निमूलम् । मूलेन सहितं समूलम् । मूले भेद इति । विशेष्यतयाप्रतीयमानसामान्यधर्मावच्छिन्नापृथक्त्वेन भानम् । "कषादिषु यथाविधि" ( पा० सू० ३-४-४६ ) इत्यारम्भादेवमेव प्रयोगः ।

समूलाकृतजीवेषु (पा० सू० ३-४-३६) । धातूपपदयोरत्र यथासंख्यम् ।

करणे हनः ( पा० सू० ३-४-३७ ) । अस्य सूत्रस्य सार्थक्यमाह—

करणे ह [ पा० सू० ३-४-३७ ] । *"हिंसार्थानाञ्च समान" [ पा० सू० ३-४-४८ ] इत्येव सिद्धे*ऽहिंसार्थं वचनं *हिंसायां नित्यसमासार्थश्च । तेन प्रत्यये तु "तृतीयाप्रभृतीनि" [ पा० सू० २-२-२१ ] इति विकल्पेन स स्यात्तदाह—यथाविधीति ।

हस्तार्थे इति । व्याख्यानादर्थग्रहणम् ।

अधिकरणे बन्धः ( पा० सू० ३-४-४१ ) । अत्र संज्ञायामित्या*कृष्यते । तेन 'ग्रामे बद्धः' इत्यर्थे 'ग्रामबन्धं बद्धः' इति न ।

---

*हिंसार्थानामिति । *अहिंसार्थमिति । हनधातोर्गमनार्थकत्वात्तस्मिन्नर्थे यदा पादघातं हन्तीति प्रयोगस्तस्य सिद्ध्यर्थमित्यर्थः । दर्शितश्चास्मिन्नर्थे हन्धातुरन्यत्र । किञ्च हिंसा प्राणवियोगानुकूलव्यापारो न त्वभिघाताख्यसंयोगानुकूलव्यापारः । धातूनाञ्चानेकार्थत्वात्तस्मिन्नर्थे यदा प्रयोगस्तदाऽप्यनेन सूत्रेण प्रत्यय इष्यते "पाण्युपघातं हन्ति" इति भाष्यप्रयोगात् । फलान्तरमाह—*हिंसायामित्यादिना ।

स्नेहने पिषः ( पा० सू० ३-४-३८ ) । स्नेहने इत्यत्र करणे ल्युट् ।

हस्ते वर्त्तिग्रहोः ( पा० सू० ३-४-३९ ) । करण इति वर्त्तते । तेन "शुष्कचूर्ण" ( पा० सू० ३-४-३५ ) इति सूत्रे एव स्नेहनग्रहणं कृत्वेदं सूत्रन्न कार्यमिति शङ्का निरस्ता । तत्र कर्मणीत्यस्य सम्बन्धात् । व्याख्यानात्प्राचीनसम्मतादर्थग्रहणम् । अत्र वर्त्तिर्ण्यन्तो निर्दिष्टः ।

स्वे पुषः ( पा० सू० ३-४-४० ) । अत्रापि स्व इत्यर्थग्रहणम् । स्ववाचिनि करणे उपपदे पुषधातोर्णमुल् स्यात् । स्वशब्दस्यात्माद्यश्चत्वारोऽर्था अन्यत्र प्रसिद्धास्त एवात्रापि ।

अधिकरणे बन्धः ( पा० सू० ३-४-४१ ) । अधिकरणवाचिन्युपपदे बध्नातेर्णमुल् । *आकृष्यत इति । तदुक्तम्भाष्ये—"इह कस्मान्न भवति ग्रामे बन्ध इति । एवं वक्ष्यामि । अधिकरणे बन्धः संज्ञायामिति" । अत्र संज्ञायामिति कथनेनाकर्षः सूचितः ।

संज्ञायाम् ( पा० सू० ३-४-४२ ) । अनधिकरणार्थोऽयमारम्भः ।

कर्त्रोर्जीवपुरुषयोः ( पा० सू० ३-४-४३ ) । कर्तृवाचकयोर्जीवपुरुषयोरुपपदयोर्नशिवहोर्णमुल् स्यात् । यथासंख्यमत्रेष्यते । जीवनाशन्नश्यति । कर्तृषष्ठ्यन्तस्य जीवशब्दस्योपपदसमासः । जीवकर्तृनाशाभिन्ननाशकर्तेति शाब्दबोधे वृत्ते जीवो नश्यतीति फलितम् ।

ऊर्ध्वे शुषिपूरोः ( पा० सू० ३-४-४४ ) । उर्ध्वशब्दे कर्तृवाचिन्युपपदे शुषिपूरोर्णमुल् । ऊर्ध्वशोषं शुष्यति । अत्राप्यर्थः पूर्ववत् ।

उपमाने कर्मणि च ( पा० सू० ३-४-४५ ) । चात्कर्त्तरि । उपमानभूते कर्मणि कर्तरि चोपपदे धातोर्णमुल् । अत्र धातोरित्यधिकाराल्लब्धम् । उपमा-

कषादिषु ( पा० सू० ३-४-४६ ) । स एवेति । *स चाविशेषात्कृदन्तास्तिङन्तश्चेति बोध्यम् ।

---

नशब्दः करणल्युडन्तः ।

कषादिषु यथाविध्यनुप्रयोगः ( पा० सू० ३-४-४६ ) । अत्र कषादिशब्देन निमूलसमूलयोरितिसूत्रनिर्दिष्टः कषधातुरुपस्थाप्यते । कषादिषु णमुल्प्रत्ययप्रकृतिषु सत्सु यथाविध्यनुप्रयोगो भवति, यथाविधीत्यस्य विधानमनतिक्रम्येत्यर्थः । विधानस्य यत्सम्बन्धित्वन्तस्यैवानुप्रयोगे तदनतिक्रमो भवति । कषादिप्रकृतिकणमुल्प्रत्ययस्य धातुसम्बन्धाधिकारे विधानादनुप्रयोगे सिद्धे यथाविध्येवानुप्रयोग इति नियमार्थमिदं सूत्रम् । धातुमात्रस्यानुप्रयोगासम्भवात्तत्प्रकृतिकप्रत्ययेऽपि प्रयोक्तव्ये तिङ एवेति नियमे मानाभावादाह— *स चाविशेषादिति ।

उपदंशस्तृतीयायाम् ( पा० सू० ३-४-४७ ) । उपपूर्वाद्दंशधातोस्तृतीयान्ते उपपदे णमुल् प्रत्ययः स्यात् । न च मूलोक्तं वचनसामर्थ्यादित्यनुपपन्नं "दशनैरुपदश्य भुङ्क्ते" इत्यत्र प्रत्ययस्य सम्भवादिति वाच्यम् । करण इत्येव वक्तव्ये तृतीयायामित्युपादानात्तृतीयान्तोपपदस्य शब्दतोऽन्वयो दंशधात्वर्थेन चाऽऽर्थस्तदन्वयस्तत्रैव प्रत्ययस्य स्वीकारात् । न च वचनसामर्थ्याण्णमुल्प्रत्ययस्य समासस्य च स्वीकारेऽपि कृत्प्रकृत्यर्थनिरूपितकारकत्वाभावेन कृद्ग्रहणपरिभाषया समासाभावपक्षे प्रातिपदिकसंज्ञापादनपरग्रन्थासङ्गतिरिति वाच्यम् । दंशधात्वर्थनिरूपितकर्मत्वसत्त्वेन तत्रार्थान्वयसम्भवेन कारकत्वसम्भवात् ।

हिंसार्थानाञ्च समानकर्मकाणाम् ( पा० सू० ३-४-४८ ) । पञ्चम्यर्थे षष्ठी । हिंसात्र प्राणिन उपघातः । केन समानकर्तृकत्वमित्याकाङ्क्षायामनुप्रयुज्यमानेनेति प्रत्यासत्त्या लभ्यते । कालयतीत्यत्र कलधातुः 'कलविक्षेपे' इति चुरादिः । एवं 'तड आघाते' इत्यपि चुरादिः ।

सप्तम्याञ्चोपपीड ( पा० सू० ३-४-४९ ) । चात्तृतीयायाम् । कर्षं इति कृतगुणकस्य कृषधातोः शपा निर्देशस्तुदादिव्यावृत्त्यर्थस्तेन तुदादेः क्त्वाप्रत्यय एव । क्षेत्रे उपकृष्य यवान् वपतीत्यत्र यथा ।

समासत्तौ ( पा० सू० ३-४-५० ) । समासत्तिः=सन्निकर्षः । यत्र योद्धारः केशेषु गृहीत्वा युध्यन्ते तत्र तेषां समासत्तिरस्त्येव । युद्धविषयकसंरम्भादत्यन्तं सन्निकर्षमप्राप्य युध्यन्त इत्यर्थः ।

प्रमाणे च (पा० सू० ३-४-५१) । प्रमाणमत्र 'आयामस्तु प्रमाणं स्यात्' इति पारिभाषिकम् । प्रकृतिविशेषानुपादानाद्धातुसामान्यात्प्रत्ययः । द्व्यङ्गुलोत्कर्षं खण्डिकां छिनत्ति । द्वयोरङ्गुल्योः समाहारो द्व्यङ्गुलम् । "तत्पुरुषस्याङ्गुलेः" ( पा० सू० ५-४-८६ ) इत्यच् समासान्तः । अङ्गुलीद्वयसमाहारेण परिच्छिद्य । ह्रस्वः खण्ड एव खण्डिका ।

शय्येति । *एवं हि नाम त्वरा यदावश्यकं मुखक्षालनाद्यकृत्वैव धावतीत्यर्थः ।

येन विनेति । एवञ्च *येन विना जीवनं तदध्रुवमिति फलितम् ।

यद्यपीति।*क्त्वानिवृत्तिस्तु नेष्टेति भावः । उपपदेति । द्वितीयान्तस्येत्यादिः।तेन *पाक्षिकोपपदसमाससिद्धिरिति भावः। गेहस्येति । व्याप्यमानतया द्रव्यस्य द्वित्वमासेव्यमानत्वेन णमुलन्तस्येति भावः।केवलेन णमुला समासाभावे द्वित्वं विना तयोर्वक्तुमशक्यत्वमिति तात्पर्यम् ।

अस्यतितृषोः ( पा० सू० ३–४–५७ ) । अनयोः किम्?, द्व्यहमुपोष्य भुङ्क्ते।क्रियान्तरे किम्?,अहरत्यस्येषुना गतः । न गतिर्व्यवधीयते । कालेषु किम्?, *योजनमत्यस्य गाः पाययति ।

नाम्न्यादि (पा० सू० ३–४–५८) । *नामशब्दे उपपदे आङ्पूर्वाद्दिशेर्ग्रहेश्च णमुलित्यर्थः

---

अपादाने परीप्सायाम् ( पा० सू० ३-४-५२ ) । परीप्सा=त्वरा । अपादाने उपपदे धातोर्णमुल् स्यात् परीप्सायाङ्गम्यमानायाम् । परीप्सामुपपादयति—*एवं हीति । "अनुदात्तम्पदमेकवर्जम्" ( पा० सू० ६-१-१५८ ) इत्यत्रापि "अपादाने परीप्सायाम्" ( पा० सू० ३-४-५२ ) इत्यनेन वृजधातोर्णमुल् । यस्मिन् काले उदात्तः स्वरितो वा विधीयते तत्समकालं तत्परित्यागेनान्यदनुदात्तं कर्त्तव्यमित्यर्थात् । यदि तत्र नापादानत्वन्तदा सौत्रत्वात्तत्र णमुल् ।

स्वाङ्गेऽध्रुवे ( पा० सू० ३-४-५४ )। अध्रुवे इति छेदः । अभावज्ञाने प्रतियोगिज्ञानस्य कारणत्वाद् ध्रुवपदार्थं तावदाह—*येन विनेति ।

विशिपतिपदिस्कन्दाम् ( पा० सू० ३-४-५५ ) । नन्वाभीक्ष्ण्ये उक्तस्यैव णमुलः पुनर्विधानन्तत्र क्त्वानिवृत्त्यर्थमेवास्त्वित्यत आह—*क्त्वानिवृत्तिस्त्विति । वासरूपविधिना तस्यापीष्टत्वादिति शेषः । पाक्षिकोपपदसमाससिद्धिरिति । "तृतीयाप्रभृतीनि" ( पा० सू० २-२-२१ ) इत्यनेन विहितेत्यादिः ।

अस्यतितृषोः क्रिया ( पा० सू० ३-४-५७ ) । अस्यतेरतिक्रमणमर्थः । *योजनमत्यस्येति । अध्वकर्मकमत्यसनमत्र व्यवधायकन्त कालकर्मकम् ।

नाम्न्या दिशिग्रहोः ( पा० सू० ३-४-५८ ) अत्र नाम्नेति न सुबन्तपरं किन्तु स्वरूपपरन्तत्त्वे सुपीत्येव वदेदत आह—*नामशब्द इति ।

अव्यये ऽयथाभिप्रेताख्याने(पा० सू० ३-४-५९)। अव्यये उपपदे कृञः क्त्वाणमुलौ स्तोऽयथाभिप्रेताख्याने गम्ये । अत्राऽयथाभिप्रेतशब्द आख्यान-

"तिर्यचीति *सौत्रो निर्देशः" इति भाष्यम् 'तिर्यक्कृत्य' इत्ययं समुदायोऽपवर्गे; तदाह—समाप्य गत इति ।

स्वाङ्गे त (पा० सू० ३-४-६१) । *तस्प्रत्ययान्ते स्वाङ्गे उपपदे इत्यर्थः । तस्प्रत्यये इति कर्मधारयः ।

नाधार्थ ( पा० सू० ३-४-६२ ) । यथासङ्ख्यमत्र नेष्यते ।

*आनुलोम्यम्=आनुकूल्यम्, तच्च परचित्तानुसरणमिति सर्वेष्टसिद्धिः ।

---

क्रियाया विशेषणम् । अभिप्रेतम्=अभिमतम् । अभिमतं श्रोतुर्यथा न भवति तथा कथनमित्यर्थः । न च 'नीचैः कृत्य प्रियं ब्रूते' इत्यत्र कथमयथाभिप्रेताख्यानम् । प्रियकथनं यथाभिप्रेताख्यानमेवेति वाच्यम् । अस्याभिमतत्वेऽप्येतत्प्रकारस्य नीचैस्त्वस्यानभिमतत्वात् ।

तिर्यच्यपवर्गे[पा० सू० ३-४-६०] । अत्र तिरश्चीति पठितव्ये तिर्यचीत्यस्योपपत्तिमाह—*सौत्र इति । अथ तिर्यक्छब्दोऽनृजुवाची समाप्तिवाची च । तत्र द्वितीयमादायोदाहरणम् । तिर्यक्कृत्वा काष्ठङ्गत इत्यस्य प्रत्युदाहरणवाक्यस्य काष्ठमनृजु कृत्वा गत इत्यर्थोऽभिप्रेत इति । न च तिर्यच्यपवर्ग इत्यत्र 'तिर्यच्' इत्यनुकरणशब्दविशेषस्य तत्रानुकार्यस्वरूपभङ्गभिया"एतदोन्"[पा०सू० ५-३-५]इत्यत्र त्यदाद्यत्वमिवाल्लोपो न कृत इत्येव कुतो नोक्तमिति वाच्यम् । "न हि प्रयोजनानुवर्त्तिप्रमाणम्" इति न्यायविरुद्धत्वात् । सौत्रत्वस्वीकारे 'बाधकानि निपातनानि'इत्यनेन शास्त्राप्रवृत्तिरुचितैवेति भावः ।

स्वाङ्गे तस्प्रत्यये ( पा० सू० ३-४-६१ ) । प्रत्ययग्रहणपरिभाषालब्धमर्थमाह—*तस्प्रत्ययान्त इति । मुखतः कारमिति । आद्यादित्वात्तसिः । न च स्वाङ्गे तसीत्येव वक्तव्ये प्रत्ययग्रहणं व्यर्थमिति वाच्यम् । मुखे तस्यतीति मुखतसित्यस्यापि ग्रहणापत्तेः । "अत्वसन्त" ( पा० सू० ६-४-१४ ) इति सूत्रेऽधातोरित्युक्तेर्न दीर्घः । मुखतः कृत्वेति । "तृतीयाप्रभृतीन्यन्यतरस्याम्"( पा० सू० २-२-२१ ) इति पक्षे समासाभावः ।

नाधार्थप्रत्यये च्व्यर्थे ( पा०सू० ३-४-६२ ) । अत्र ना च धा चेति द्वन्द्वस्य नाधार्थे शक्तिः । तस्य च द्वन्द्वस्यार्थशब्देन कर्मधारयः । नार्थौ नानाञौ । धार्थाः धमुञादयः । "धमुञन्तात् स्वार्थे डदर्शनम्"[का० वा०]इति डप्रत्ययस्यापि धार्थत्वेन तदन्तस्याप्यत्र ग्रहणमिति ।

अन्वच्यानुलोम्ये ( पा० सू० ३-४-६४ ) । अन्वचीत्यस्यापि तिर्यचीतिवत्साधुत्वम् । आनुलोम्यशब्दार्थं व्याचष्टे—*आनुलोम्येति । भुव इत्येतदनुवर्त्तते । प्रत्युदाहरणे त्वन्वक्शब्दो विशेषवाची । तत्र स्थितः पुरुषोऽनुकूलोऽननुकूलो वेति न प्रतीयते तेन शब्देन । प्रमाणान्तरेण तथा निर्णय इति त्वन्यत् । अत्र णमुल् न । "समानकर्तृकयोः" ( पा० सू० ३-४-२१ )

॥ विस्तरस्तु बृहच्छब्देन्दुशेखरे द्रष्टव्यः ॥

इत्युपाध्यायोपनामकशिवभट्टसुतसतीगर्भजनागोजी-
भट्टकृते लघुशब्देन्दुशेखरे सिद्धान्तकौमुदी-
व्याख्याने कृदन्तं समाप्तम् ।

---

इति क्त्वाप्रत्ययस्तु भवत्येव । सर्वेष्टस्य कृदन्तस्य प्रयोगस्य सिद्धिः । सिद्धि-शब्दो मङ्गलार्थः ॥

॥ इति कृदन्तविवरणम् ॥

इति श्रीमदनन्तकल्याणसद्गुणनिधानाखिलपण्डितसार्वभौम-
भूमण्डलप्रसारिविमलतरानवद्यसद्यशःपार्वणपीयूष-
भान्वगस्त्यकुलवंशावतंसश्रीभवदेवमिश्रात्मजभैरव-
मिश्रकल्पितायां शब्देन्दुशेखरव्याख्यायां कृद-
न्ताख्यम्प्रकरणं सम्पूर्णम् ॥

श्रीगणेशाय नमः ॥

*अथ वैदिकेषु विशेषमाह—छन्दसि पुनः ( पा० सू० १–२–६१ ) । पुनर्वस्वो*र्द्वे तारे । लोके त्विति । उद्भूतावयवभेदे समुदाये रूढत्वादिति भावः । एवं विशाखयोरपि द्वे तारे । तेन लोके द्विवचनमेव । 'राधा विशाखा' इति प्रयुञ्जानस्यामरस्य तु प्रमादः । योगविभागः छन्दसीत्यस्यो*त्तरत्र निवृत्त्यर्थः । एवं हि चानुकृष्टत्वान्नोत्तरत्रानुवृत्तिः ।

वतीति । वत्प्रत्यये इत्यर्थः । मनेरिति । "आदेशप्रत्यययोः" ( पा० सू० ८–३–५९ ) इति षत्वम् । अनङ्गत्वादिति । *"अङ्गस्य" ( पा० सू० ६–४–१ ) "भस्य" ( पा० सू० ६–४–१२९ ) इति तत्राधिकारात्प्रत्यासत्त्याऽङ्गभसञ्ज्ञानिमित्तयोरे*कत्वाश्रयणेन भसञ्ज्ञानिमित्तवसुशब्दनिरूपिताङ्गत्वाभावादिति भावः । *एतद्वार्त्तिकद्वयं छन्दोविषयमिति कैयटः ।

---

## ॥ अथ वैदिकप्रकरणम् ॥

॥ श्रीगणेशाय नमः ॥

प्रणम्य परमात्मानं वैदेहीपतिमव्ययम् ॥
वैदिकस्वरयोर्व्याख्यां कुर्वेऽथ क्रमशोऽधुना ॥ १ ॥

वेदलोकसाधारणशब्दसंस्कारनिरूप्यावसरसङ्गत्या वेदमात्रसम्बन्धिसंस्कारन्निरूपयति—*अथेत्यादिना । छन्दसि पुनर्वस्वोरेकवचनम् ( पा० सू० १–२–६१ ) । द्विवचनस्यैव प्राप्तौ निमित्तमाह—*द्वे तारे इति । एकवचनस्य विशिष्यविधानाभावे द्विवचनमेव स्यादिति भावः । *उत्तरत्रेति । "विशाखयोश्च" ( पा० सू० १–२–६२ ) इति सूत्रादुत्तरत्र "तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे" ( पा० सू० १–२–६३ ) इतिसूत्र इत्यर्थः ।

वृषण्वस्वश्वयोः ( का० वा० ) । वस्वश्वशब्दयोरप्रत्ययत्वाद्भत्वं "यचि भम्" ( पा० सू० १–४–१८ ) इतिसूत्रस्याप्राप्तौ उपसङ्ख्यायते । वृषन्शब्दो वृषूधातोः "कनिन्युवृषि" (उ०पा०१सू०१६२) इति विहितकनिनन्तः । नन्वल्लोपाभावे कारणस्य भत्वस्याभावः प्रदर्शयितुमुचितो न त्वङ्गत्वाभाव इत्यत आह—*अङ्गस्य भस्येतीति । *एकत्वाश्रयणेनेति । एतेनाङ्गसंज्ञाया अप्यल्लोपनिमित्तकत्वमुक्तम्भवति । "नभ" ( का० वा० ) इत्यादिवार्त्तिकयोश्छन्दसीत्युपादानाभावादत्रैवानयोर्लेखने किङ्कारणमत आह—*एतद्वार्त्तिकद्वयमिति ।

अयस्मयादीनि च्छन्दसि ( पा० सू० १–४–२० ) । अयस्मयादीनि शब्दरूपाणि छन्दसि निपात्यन्त इत्यर्थः । अत्र किन्निपात्यत इत्याकाङ्क्षायामाह—

संज्ञाद्वयमिति । *तत्प्रयुक्तं कार्यमित्यर्थः । अयस्मये अयसो विकार इत्यर्थे "द्व्यचश्छन्दसि" ( पा० सू० ४-३-१५० ) इति मयट् । *"ते प्राग्" ( पा० सू० १-४-८० ) इत्यनुवृत्तिप्रदर्शनार्थम् ।

*इन्धिभवतिभ्याञ्च ( पा० सू० १-२-६ ) इत्यस्य क्रमप्राप्तप्रथमोपन्यासत्यागे बीजमाह—इन्धेरिति । इति प्रथमोऽध्यायः ।

---

मूले संज्ञाद्वयमिति । कल्पनालाघवादाह—*तत्प्रयुक्तं कार्यमिति । एतेन प्रयोजनानुरोधेन भपदसंज्ञे बोद्धव्ये । तेनायस्मयशब्देऽयस्शब्दस्य भसंज्ञामात्रस्यानेन विधानेऽपि न "उभयसंज्ञान्यपि" ( का० वा० ) इति वार्त्तिकविरोधः। अयस्मयशब्दऽयसो विकार इत्यर्थे "द्व्यचश्छन्दसि" (पा० सू० ४-४-१५०) इति मयट् । वाचामिनाः=वाजिनाः । अयस्मयादिसमुदायस्य पाठः । तस्य समुदायस्य यथोपपत्तिस्तथा भपदसंज्ञयोः कल्पना कार्या । "ते प्राक्" (पा० सू० १-४-८० ) इति सूत्रस्य पूर्वं व्याख्यातत्वात्पुनर्लेखनस्य बीजमाह—*ते प्रागित्यनुवृत्त्येति । "छन्दसि" परेऽपि ( पा० सू० १-४-८१ ) इत्यपिना पूर्वं प्रयोगेऽपि साधुत्वमेव । अत एवानुव्यचलदित्यस्य सिद्धिः । व्यवहितप्रयोगादेव "गतिरनन्तरः" ( पा० सू० ६-२-४९ ) इतिसूत्रेऽनन्तरग्रहणञ्चरितार्थम् । न च "ते प्राक्" ( पा० सू० १-४-८० ) इतिसूत्रङ्गत्युपसर्गसंज्ञा धातोः प्रागेव प्रयोक्तव्या इति नियमार्थम् । एवञ्च तत्सूत्रानन्तरं 'छन्दसि न' इति सूत्रङ्कर्त्तव्यन्तेन पूर्वोक्तनियमस्य निषेधे सिद्धे प्रकृतसूत्रद्वयन्न कार्यमिति वाच्यम् । तन्त्रेण क्वचिल्लोकेऽपि व्यवहितप्रयोग इत्येवमर्थं "व्यवहिताश्च" ( पा० सू० १-४-८२ ) इत्यस्यावश्यकत्वात् । तेन "सुकटङ्कराणि वीराणि" इति भाष्यप्रयोगस्योपपत्तिः । भाष्ये तु "धातोः प्राक् प्रयुज्यमाना एव ते गत्युपसर्गसंज्ञा भवन्ति" इति संज्ञानियमपक्षमाश्रित्यैतत्सूत्रद्वयं प्रत्याख्यातम् । न च छन्दसि परत्र व्यवधानेन यत्र प्रयोगस्तत्र गत्युपसर्गसंज्ञाया असत्त्वेऽपि यथा साधुत्वन्तथा लोकेऽपि परप्रयोगे व्यवहितप्रयोगे वा साधुत्वापत्तिरिति वाच्यम् । क्वचित्तथा प्रयोगे इष्टत्वात् । 'वारुणीमदविशङ्कमथाविश्चक्षुषोऽभवदसाविवरागं' इत्यत्र यथा । तेन 'स्वाढ्येन भूयते' इत्यस्योपपत्तिः । पचति प्रेति प्रौदनम्पचतीत्यपि च तर्हि साधु स्यादिति तु नापादनीयम् । अनभिधानात् । तदुक्तम्भाष्ये—"अनिष्टादर्शनात् । न हि कश्चित्प्रपचतीति प्रयोक्तव्ये 'पचति प्र' इति प्रयुङ्क्ते । यदि चानिष्टं दृश्येत ततो यत्नार्हं स्यात्" इति ।

धातुपाठे भूधातोरादौ पाठाद्भवतेः प्रागुपन्यासे कर्तुमुचिते "इन्धिभवतिभ्याम्" ( पा० सू० १-२-६ ) इत्युपन्यासे किम्बीजमतआह—*इन्धिभवतिभ्यामिति । इति प्रथमाऽध्यायविवरणम् ।

## अथ द्वितीयोऽध्यायः ।

हविषि वर्तत इति । *हूयते तत्=होत्रं ततोऽग्निपदेन षष्ठीतत्पुरुषः । 'अग्नये हूयते' इति त्वर्थप्रदर्शनम् । "यवाग्वा" इति वाक्ये जुहोतिस्त्यागपूर्वके प्रक्षेपे वर्तते ।

द्वितीया ब्राह्मणे ( पा० सू० २-३-६० ) । सोपसर्गस्य दिवेः "विभाषोपसर्गे" ( पा० सू० २-३-५९ ) इति व्यवस्थितविभाषया सिद्धे निरुपसर्गार्थो *ऽयमारम्भः ।

पुरुषमृगश्चन्द्रमसे इति । *बहुलग्रहणाच्चन्द्रमसश्चतुर्थी । "व्यत्ययो बहुलम्" ( पा० सू० ३-१-८५ ) इत्यस्यै*वायं प्रपञ्चः ।

अडभाव इति । "बहुलं छन्दस्यमाङ्योगेऽपि" [पा०सू०६-४-७५] इत्युक्तेः । सग्धिरिति । क्तिनि "घसिभसोर्हलि च" (पा० सू० ६-४-१००) इत्युपधालोपः "समानस्य छन्दसि" (पा० सू० ६-३-८४) इति सः । न च भवति अत्ता । प्रकृत्यन्तरन्तु सार्वधातुकमात्रविषयमिति बोद्धव्यम् ।

---

## अथ द्वितीयोऽध्यायः ।

*हूयत इति । हुधातोः कर्मणि त्रन् । अग्निशब्दाच्छेषे षष्ठी । तदन्तेन समासः । विधायकाभावेन न चतुर्थीसमास इति भावः । न च 'यवाग्वाऽग्निहोत्रञ्जुहोति' इत्यत्र विशेष्यविशेषणवाचकपदयोरसमानविभक्तिकत्वात्कथमभेदान्वय इति वाच्यम् । विरुद्धार्थकविभक्त्यनवरुद्धत्वात् । न चैवं लोकेऽपि 'सुरूपेष्वश्वानां स्वामी' इति शब्दात्सुरूपशब्दार्थाभेदान्वयबोधापत्तिरिति वाच्यम् । 'एकस्या आकृतेश्चरित' इतिन्यायेन तादृशप्रयोगस्याभावात् । वेदे तु न तथा नियमः । हुधातोस्त्यागपूर्वकप्रक्षेपे वर्त्तनादेव यवाग्वाः कर्मत्वम् ।

*अयमारम्भ इति । "दिवस्तदर्थस्य" [ पा० सू० २-३-५८ ] इति षष्ठीबाधनार्थः ।

ननु 'पुरुषमृग' इतिवाक्ये चन्द्रमस्शब्दादपि षष्ठी स्यादत आह-*बहुलग्रहणादिति । वार्त्तिके बहुलग्रहणादित्यर्थः । *अयम्=वार्त्तिकद्वयरूपः ।

"परवल्लिङ्गम्" ( पा० सू० २-४-२६ ) इत्यस्य बाधनाय "हेमन्तशिशिरौ" ( पा० सू० २-४-२८ ) इति सूत्रमारब्धम् । शिशिरशब्दस्य नपुंसकत्वे प्रमाणन्तु "वज्रान्धकार" ( लि० सू० ) इति लिङ्गानुशासनसूत्रे 'शिशिराणि नपुंसके' इत्युक्तिरेव । ननु 'शिशिरोऽस्त्रियाम्" ( अ० को० ) इति कोशवशा-

हेमन्तशि (पा० सू० २-४-२८)। *शिशिरशब्दस्य "हेमन्तः शिशिरोऽस्त्रियाम्" [अ० को०] इत्यमरादुभयलिङ्गत्वेऽपि हेमन्तशिशिरे *इत्येतन्निवृत्तये स्पष्टार्थम् हेमन्तशिशिराविति। *अमरस्य प्रमाद इत्यन्ये। अहोरात्रे इति। "रात्राह्नाहाः" [पा० सू० २-४-२९] इति पुंस्त्वं प्राप्तम्। द्वित्वमतन्त्रम्। अहोरात्राणि विदधत्।

घस्लादेशस्येति। "लुङ्सनोः" [पा० सू० २-४-३७] इति विहितस्य। वृ इति वृङ्वृञोः सामान्येन ग्रहणम्। आप्रेति। 'प्रा' पूरणे, आङ्पूर्वः, मध्यमपुरुषैकवचनम्। परावर्गिति। परापूर्वस्य वृजेः। *अक्रन्निति। कृञः। अनुग्मन्निति गमेः। "गमहन" [पा० सू० ६-४-९८] इत्युपधालोपः। *अज्ञतवेसस्यैतरेयब्राह्मणे सत्त्वादाहमन्त्रग्रहणमिति। इति द्वितीयः।

अथ तृतीयः।

अक्ररिति। *कृञो लुङि तिपि "मन्त्रे घस" (पा० सू० २-४-८०) इति च्लेर्लुकि सार्वधातुकगुणे तिपो हल्ङ्यादिलोपे रूपम्।

---

च्छिशिरशब्दस्य पुंस्त्वमप्यस्तीत्यत आह—*शिशिरशब्दस्येति। *इत्येतन्निवृत्तय इति। नपुंसकत्वपक्षे प्राप्तस्येत्यादिः। मतान्तरमाह—*अमरस्येति। लिङ्गानुशासनविरोधात्प्रमाद इत्यर्थः। हनति। हन्तीत्यर्थः। शयते=शेते। त्राध्वम्=त्रायध्वम्।

दाति=ददातीत्यर्थः। विवक्ष्मीति। अत्र श्लौ द्वित्वे "बहुलञ्छन्दसि" (पा० सू० ७-४-७८) इतिसूत्रेण वक्ष्यमाणेनाभ्यासस्येत्वम।

मन्त्रे घसह्वरणश (पा० सू० २-४-८०)। अक्षन्निति। अदेर्लुङ् तस्य झिः। च्लिः। "लुङ्सनोः" [पा० सू० २-४-३७] इति घस्लादेशः। ह्वरेति 'ह्वृ' कौटिल्ये इत्यस्य कृतगुणकस्यानुकरणम्। अकार उच्चारणार्थः। णशेति कृतणत्वानुकरणम्। कुत्वमिति। एतदभावे "व्रश्च" [पा० सू० ८-२-३६] इति षत्वे 'प्रणट्' इति रूपम्। *अक्रन्निति कृञ इति। झेरादेशे ङित्त्वाद् गुणाभावे यण्। *अज्ञतेति। जनेर्लुङि तस्य झादेशे लेर्लुकि कृते अजनिषतेति प्राप्ते। इति द्वितीयाऽध्यायविवरणम्।

# अथ तृतीयोऽध्यायः।

अनुप्रयुज्यमानमकशब्दं साधयति—*कृञो लुङीति। अत्राप्यनुप्रयुज्यमानः कृञ् क्रियासामान्यवाची। तदर्थे आमन्तार्थस्याभेदेनान्वयः। 'पावयां

अजूगुपतमिति । गुपेर्लुङ् थसस्तं तुजादित्वादभ्यासस्य दीर्घः ।
छन्दसिनिष्ट ( पा० सू० ३-१-१२३ ) ।

*निष्टर्क्ये व्यत्ययं विद्यान्निसः षत्वं निपातनात् । इति ।

व्यत्ययोऽत्र प्रत्ययवर्णयोः । दीर्घश्चेति । *अत एव तुगभावः । शिषेरिति । शासेरित्यन्ये । 'धृ' हूर्च्छने । यजेर्य इति । देवशब्दे उपपदे इत्यादिः । प्रत्ययस्वरेणान्तोदात्तत्वे कृदुत्तरपदप्रकृतिस्वरः । स्त्रीलिङ्गे एवेदं निपातनम् । पृच्छेः='प्रच्छ' ज्ञीप्सायाम्' इत्यतः । सीऽव्यत्ते-

---

क्रियात्' । लिङन्तस्येदं रूपम् । लोक इति । वेदेऽपि लोकवद्दृश्यमानम्प्रकृतसूत्रे "विदाङ्कुर्वन्तु" ( पा० सू० ३-१-४१ ) इत्यतोऽन्यतरस्याङ्ग्रहणानुवृत्त्या साधनीयम् । पावयांक्रियादित्यत्र सवतेः पुनातेर्वा प्रयोगः । णिजन्तस्येदं रूपम् । विदामक्रन् । विदेर्लुङ्याम् । लुङन्तकरोतेरनुप्रयोगः । "मन्त्रे घस" ( पा० सू० २-४-८० ) इति लेर्लुक् ।

गुपेश्छन्दसि ( पा० सू० ३-१-५० ) । च्लेरिति "णिश्रि" ( पा० सू० ३-१-४८ ) इत्यतश्चङिति चानुवर्त्तते । अजूगुपतम् । गुपेर्लुङ् । थसस्तमादेशः । "तुजादीनान्दीर्घोऽभ्यासस्य" ( पा० सू० ६-१-७ ) इति दीर्घः । अगौप्तमिति । ऊदित्वादिडभावे "वदव्रज" ( पा० सू० ७-२-३ ) इति वृद्धिः । सिचस्तु "झलो झलि" ( पा० सू० ८-२-२६ ) इति लोपः ।

नोनयति ( पा० सू० ३-१-५१ ) । "गुपेः" ( पा० सू० ३-१-५० ) इत्यतश्छन्दसीति वर्त्तते । मात्वायत इति । त्वायतः=त्वामिच्छतः, जरितुः= स्तोतुः मर्मं कामम्=अभिलाषम्, माऊनयीः=ऊनम्माकार्षीरित्यर्थः । माऊनन इति लोके । ऊनधातोश्चुरादेरदन्ताण्णिचि चङि णौ कृतस्याल्लोपस्य स्थानिवद्भावेन न शब्दस्य द्वित्वम् । ध्वनयीदिति चौरादिकस्यादन्तस्य ध्वनशब्द इत्यस्य; घटादिपठितनान्तस्य वा रूपम् । भाषायान्तु अदध्वनत्; अदिध्वनदिति वा । ऐलयीत् । 'इल' 'प्रेरणे' चुरादिः । भाषायान्तु ऐलिलदिति । आर्दयीत् । 'अर्द' गतौ याचने हिंसायाञ्च । भाषायामार्दिदत् । हेतुमण्ण्यन्तस्यैतद्रूपम् ।

अमरदित्यत्र "व्यत्ययो बहुलम्" ( पा० सू० ३-१-८५ ) इति परस्मैपदम् ।

छन्दसि निष्टर्क्य ( पा० सू० ३-१-१२३ ) । यदुक्तं मूले कृन्ततेरित्यादिना तत्र प्रमाणमाह—*निष्टर्क्ये व्यत्ययमित्यादिना । *अत एव=दीर्घस्य निपातनादेव । देवयज्येति स्त्रियामेव । यजेर्यः प्रत्ययोऽधिकरणे । देवशब्देन कर्मषष्ठ्यन्तेन समासः । ब्रह्मवाद्यमित्यत्र वदेर्ण्यत् । न च यत्प्रत्यय एव दीर्घनिपातनमस्त्विति वाच्यम् । "यतो ऽनावः" ( पा० सू० ६-१-२१३ ) इत्याद्युदात्तापत्तेः । ब्रह्मोद्यं वदन्तीत्यत्र तु "व्यत्ययो बहुलम्" ( पा० सू० ३-१-८५ )

रिति । प्रतिपूर्वादित्यादिः । ब्रह्मणीति । उपपदे इत्यर्थः । *लोके त्विति । 'ब्रह्मोद्यं वदन्ति' इत्यादौ व्यत्ययेन क्यप् बोध्यः ।

गोषणिमिति । गां सनतीति विग्रहः । अत्र "सनोतेरनः" [ पा० सू० ८-३-१०८ ]इति नकारान्तस्य निषेधात् । "गोसनिशब्दस्य सवनादिषु पाठः करिष्यते" इति "सनोतेरनः"[पा०सू०८-३-१०८] इतिसूत्रस्थभाष्याच्च यद्यप्यत्र षत्वं न प्राप्नोतिः तथापि दन्त्यस्यैव मूर्धन्यवत्पाठो वैदिकसंप्रदायात् । *अत एव पदकाळे दन्त्यमेव पठन्ति । गो सनिमिति । यत्तु सुषामादित्वात्षत्वमिति, तन्न । *उक्तसूत्रेतद्भाष्यविरोधात् । ये पथामिति । पन्थानं रक्षन्तिः हविर्मन्थन्तीति विग्रहः ।

छन्दसिसहः [ पा० सू० ३-२-६३ ] । लोके 'तुरासाहम्' इत्यादिप्रयोगाश्चिन्त्या इति *हरदत्तः ।

*वहश्च [ पा० सू० ३-२-६४ ] । अस्य लोकेऽपि प्रवृत्तिं केचिदिच्छन्ति ।

---

इति क्यप् । तदेवाह—*लोके त्वितीति । ब्रह्मोद्यमित्यत्र व्यत्ययास्वीकारे ण्यता क्यपो बाधः स्यात् ।

छन्दसि वनसन ( पा० सू० ३-२-२७ ) । वनसनौ 'वन' 'षण' सम्भक्तौ, इति भ्वादिपठितौ गृह्येते न तु तानादिकौ । सानुबन्धकत्वात् । ब्रह्मवनिमित्यत्र ब्रह्म वनतीति विग्रहः । *अत एव=वैदिकानान्तादृशसम्प्रदायादेव । *उक्तसूत्रे="सनोतेरनः" ( पा० सू० ८-३-१०८ ) इति सूत्र इत्यर्थः ।

छन्दसि सहः ( पा० सू० ३-२-६३ ) । "भजो ण्विः" ( पा सू० ३-२-६२ ) इत्यतो ण्विरित्यनुवर्त्तते । पृतनाषाडिति । 'षह' मर्षणे इतिधातोर्ण्विन्प्रत्यये उपधावृद्धौ "सहेः साडः सः" ( पा० सू० ८-३-५६ ) इति षत्वम् । *हरदत्त इति । अत्रारुचिस्तु ण्विप्रत्ययस्य छन्दसि विधानेऽपि निवृत्तप्रेषणकात्सहधातोर्हेतुमण्णौ ततः क्विपि तुरासाहमित्यस्य लोकेऽपि साधनं सम्भवत्येवेति ।

अत एवाह—*वहश्चेति । छान्दसा अपि क चिद्भाषायाम्भवन्तीत्याश्रित्य तेषां साधनमित्यपि वदन्ति । किञ्च केवलाद्वहधातोर्ण्विन्प्रत्यये सति यः प्रयोगस्तस्य छान्दसत्वेऽपि णिजन्ताद्विचिं प्रयोगस्य लौकिकत्वमपि केचिदिच्छन्ति । अत एव "अभ्रंमेघो वारिवाहः" (अ० को० ) इति प्रयोगः । वस्तुतस्तु "वाह ऊठ्" ( पा० सू० ६-४-१३२ ) इति सूत्रस्थ"असिद्धं बहिरङ्गम्" ( प० भा० ) इति परिभाषाज्ञापकतापरभाष्यप्रामाण्येन 'वहेर्वाहेर्वा ण्विविचौ अनभिधानान्न भवतः'इत्यन्यत्रोक्तम् । तत्राप्यनकारान्तेऽकारान्तोपसर्गे चोपपदे इतिविशेषोपादानाद्भारवाह इत्यादि भवत्येवेति ।

हव्येऽनन्तः [ पा० सू० ३–२–६६ ] । हव्यशब्दे उपपदे वहेर्ञ्युट् पादयोर्मध्यस्थे नेत्यर्थः, तदाह–पादमध्ये त्विति ।

जनसन। [ पा० सू० ३–२–६७ ] । उपसर्गे सुपि चोपपदे एभ्यश्छन्दसि विट्। "विड्वनोः" ( पा० सू० ६–४–४१ ) इत्यत्र विशेषणार्थष्टः, "वेरपृक्तस्य" [ पा० सू० ६–१–६७ ] इत्यत्र सामान्यग्रहणार्थश्च । *अप्सुत्पद्यते, गोपूत्पद्यते, गाः सनति, नॄन् सनति,त्रिसानि खनति, दधि क्रामति, अग्रेगच्छतीत्युदाहरणार्थः । सर्वत्र "विड्वनोः" [ पा० सू० ६–४–४१ ] इत्यात्वम् । अग्रेगा इति । *सप्तम्या अलुक् ।

अवे यज इति *योगविभाग उत्तरार्थः ।

विजुपे ( पा० सू० ३–२–७३ ) । मन्त्रे इत्यनुवर्त्तमाने छन्दोग्रहणं स्पष्टार्थम् । *"छन्दोब्राह्मणानि"(पा० सू० ३–२–६६)इति सूत्रबलेन ब्राह्मणे *मुख्यछन्दस्त्वस्यानङ्गीकारात् ।

---

कव्यपुरीष ( पा० सू० ३–२–६५ ) । वह इत्यनुवर्त्तते । एतत्साध्यानाच्छान्दसत्वमेव ।

हव्येऽनन्तःपादम् ( पा० सू० ३–२–६६ ) । पादस्य मध्ये इत्यन्तःपादम्, न अन्तःपादमनन्तःपादमिति समासः । एतदुपादानात्पादान्ते वर्तमानस्यास्यासाधुत्वमिति । मूले हव्यवाळग्निरिति । "द्वयोश्चास्य स्वरयोर्मध्यमेत्य सम्पद्यते स डकारो ळकार" इति प्रातिशाख्यात्ळकारः ।

जनसनखन [ पा०सू०३–२–६७] । अब्जा इत्यादीनामर्थमाह–*अप्सुत्पद्यत इत्यादिना । *सप्तम्या अलुगिति । "हलदन्तात्" [ पा० सू० ६—२—९ ] इत्यनेनेत्यादिः ।

अवे यजः [ पा० सू० ३–२–७२ ] । अवशब्दे उपपदे यज्धातोर्ण्विन् स्यात् । "मन्त्रे श्वेतवहोक्थशस्" [ पा० सू० ३–२–७१ ] इत्यत्र अवयजेति पाठे कर्त्तव्ये पृथक्सूत्रकरणस्य प्रयोजनमाह—*योगविभागेति ।

विजुपे छन्दसि [ पा० सू० ३–२–७३ ] । यज इति वर्त्तते । अत्र मन्त्र इत्यनुवर्त्तमाने छन्दोग्रहणं ब्राह्मणसङ्ग्रहार्थम् । मन्त्रव्यतिरिक्तो वेदभागो ब्राह्मणम् । एवञ्च मन्त्रब्राह्मणान्यतरत्वं छन्दस्त्वमिति केचित् तच्च युक्तमित्याशयेनाह—*छन्दोब्राह्मणेति । *मुख्यछन्दस्त्वस्येति । अत एव प्रकृतसूत्रे छन्दसीत्युपादानं यदि यस्य मुख्यछन्दस्त्वम्मन्त्रस्य तस्यैव बोधनायेति चेन्मन्त्रस्य इत्यनुवृत्त्यैव सिद्धिरिति भावः ।

"आतो मनिन्क्वनिब्वनिपश्च" [ पा० सू० ३–२–७४ ] इति सूत्रोदाहरणमा-

*'सुधीवा' इत्यादौ "घुमास्था" [ पा० सू० ६-४-६६] इती-त्वं *वनिपि तु कित्त्वाभावान्नेत्वम् ।

*उपपदान्तरे इति । "ब्रह्मभ्रूण" [पा० सू० ३-२-८७] इति नियमादप्राप्तः क्विप् प्रतिप्रसूयत इति भावः । बहुलग्रहणात्क्वचिन्न; पितृघातः ।

छन्दसि लिट् [ पा० सू० ३-२-१०५ ] । "छन्दसि लुङ्लङ्लिटः" [ पा० सू० ३-४-६ ] इति तु *धातुसम्बन्धाधिकारस्थम् । "क्वसुश्च" [पा० सू० ३-२-१०७] इति योगविभाग *उत्तरार्थः । अनन्तरस्यैव लिटोऽयमादेशः । लिट इति तु प्रत्ययान्तरत्वा*भावाय । अनयोः कित्त्वन्तु "ऋच्छत्यॄताम्" [ पा० सू० ७-४-११] इति प्रतिषेधविषयगुणस्य 'तेरतुः' इत्यादाविव 'तितिराणः' 'तितीर्वान्' इत्यादौ प्रवृत्तिवारणाय । 'ईजानः' इत्यादौ*लिटः कित्त्वादेव सम्प्रसारणं सिद्धम् । अञ्जेः 'आजिवान्' इत्यादौ नलोपोऽपि "छन्दस्युभयथा" [पा० सू० ३-४-११७] इत्यनेन सार्वधातुकत्वान्ङित्त्वादेव सिद्धः । न चै*वमारिवानित्यत्रापि गुणो न स्यात्, *ऋकारान्तरप्रश्लेषेण ऋधातौ पुनर्विधानादिति प्राञ्चः ।

क्याच्छन्दसि [ पा० सू० ३-२-१७० ] । *क्विद्यो य इति

---

इ—*सुधीवेत्यादाविति । *वनिपि । भूरिदावेति ।

बहुलञ्छन्दसि [ पा० सू० ३-२-८८ ] । "ब्रह्मभ्रूणवृत्रेषु" [ पा० सू० ३-२-८७ ) इति नियमव्यावर्त्तितः क्विबन्यस्मिन्नपि यथा स्यादित्येवमर्थमिदं सूत्रमित्याह—*उपपदान्तरेऽपीति ।

*धातुसम्बन्धाधिकारस्थमिति । तथा च तेन न सर्वत्र सिद्धिरिति शेषः । *उत्तरार्थः="भाषायाम्" (पा०सू०३-२-१०८) इति सूत्रार्थः । *अभावायेति । एवञ्च छन्दसीति पृथक्सूत्रेण लिड्विधानसामर्थ्यात्कानचो विकल्पे सिद्धे वाग्रहणमुत्तरार्थम् । *लिटः कित्त्वादेव । *न चैवमिति । एवम्=कित्त्वस्य प्रतिषेधविषये आरभ्यमाणस्यापि गुणस्य प्रतिषेधार्थत्वे । समाधत्ते—*ऋकारान्तरेति । 'अररिवान्' इत्यत्र 'रा' दाने इति राधातोर्लिटः क्वसोः "वस्वेकाजाद्" (पा० सू० ७-२-६७) इतीट् । ततो नञ्समासे पूर्वपदप्रकृतिस्वरः । अघायुशब्दे च "दीर्घादटि" ( पा० सू० ८-३-९ ) इति रुत्वम् । "आतोटि नित्यम्" [ पा० सू० ८-३-३ ] इति नित्यमनुनासिकः ।

क्याच्छन्दसि [ पा० सू० ३-२-१७० ] । क्यादित्यनेन क्यच्क्यङोरेव ग्रहणमिति भ्रमवारणायाह—*क्विद् यो य इतीति । क्यादित्यस्य क्सहिताय-

व्याख्यानात्कण्ड्वादियगन्तादपि "यमस्य योनौ शकुनं भुरण्युम्" इति यथा। लोके *'अनसूयवः' इति तु [१]*लोहितादिसूत्रभाष्यरीत्या प्रसाधु ।

मन्त्रेवृषेष [ पा० सू० ३-३-९६ ] । सूत्रे पञ्चम्यर्थे प्रथमा । 'वृषु' सेचने, 'इष' इच्छायाम्, 'मन' ज्ञाने 'मनु' बोधने इत्युभयोर्ग्रहणम् । विदादीनामपि यथादर्शनम् । *क्तौ विधातव्ये उदात्तवचनमुत्तरार्थम् *व्रजयजोर्भावे क्यबुदात्तो यथा स्यादिति, *प्रमतौ "तादौ च निति" [ पा० सू० ६-२-५० ] इति पूर्वपदप्रकृतिस्वरार्थश्च ।

*लोडर्थ इति । पूर्वपरान्वयि । *अकरमिति । "कृमृदरुहि-

---

शब्दादित्यर्थात् । *अनसूयव इति । असूयतेः कण्ड्वादियगन्तात्प्राप्तस्याप्युप्रत्ययस्य "अप्रत्ययात्" ( पा० सू० ३-३-१०२ ) इत्यनेन बाधादस्यासाधुत्वम् । *लोहितादिसूत्रभाष्यरीत्येति । तत्र हि :क्यषः ककारस्य क्याच्छन्दसीत्यत्रास्य ग्रहणम्प्रयोजनं तेन तुरण्युर्भुरण्युरित्येतत्सिद्धिरूपम्प्रयोजनमभिधाय "याच्छन्दसि" इत्येवास्तु तावतापि सिद्धिर्भविष्यति इत्युक्त्वा "इदन्तर्हि प्रयोजनम् यत्तदकृद्यकार इतिदीर्घत्वम्, तत्र किद्ग्रहणमनुवर्त्तते, तदिहापि यथा स्यात् लोहितायतीति । किम्पुनः कारणम्? तत्र क्ङिद्ग्रहणमनुवर्त्तते । इह मा भूत् । उरुया धृष्णुयेति । (अत्र तृतीयैकवचनस्य स्थाने "सुपां सुलुक्"[ पा० सू० ७-१-३९ ) इति यादेशः ।) यदि तत्र क्ङिद्ग्रहणमनुवर्त्तते पित्र्यमिति रीङ्भावो न प्राप्नोति । रीङ्भावे क्ङिद्ग्रहणन्निवर्त्तिष्यते । (पित्र्यमित्यत्र पितुरागतमित्यर्थे "पितुर्यच्च" [ पा० सू० ४-३-७९ ] इति यत्प्रत्ययः ।) यदि निवर्त्तते कथमसूया वसूया च यजामह इति । असूयतेरसूया वसूयतेर्वसूया" एवमुक्तम् । अत्र यदीति प्रतीकमुपादाय कैयट आह—"यदि रीङ्भाव एव निवर्त्तते न तु दीर्घविधावपि तदा असुवसुशब्दाभ्यां पूर्ववद्यादेशे कृते दीर्घाभावादसूयावसूयेति न सिद्ध्यति । असूयतेः कण्ड्वादियगन्तस्यासूया वसूयतेरिच्छाक्यजन्तस्य वसूयेत्युत्तरमिति ।

मन्त्रे वृषेष ( पा० सू० ३-३-९६ ) । "स्त्रियां क्तिन्" ( पा० सू० ३-३-९४ ) इत्यतः क्तिन्नित्यनुवर्त्तते । ननु लाघवाय प्रकृतसूत्रे क्तिरिति पाठ्यम् उदात्तवचनञ्च न कार्यमत आह—*क्तौ विधातव्य इति । उत्तरार्थत्वमुपपादयति—*व्रजयजोरिति । *प्रमताविति । प्रमतिरित्यत्रेत्यर्थः। अत्र क्तिनो नित्त्वाभावे"गतिकारकोपपदात्" [पा०सू०६-२-१३९]इति कृदुत्तरपदप्रकृतिस्वरः स्यात्। "स्त्रियां क्तिन्"[पा०सू०३-३-९४] इत्येव क्तिन्प्रत्यये सिद्धे प्रत्ययस्योदात्तत्वार्थं वचनम् ।

छन्दसि लुङ् [ पा० सू० ३-४-६ ]। *लोडर्थे इति । आगमत् । अत्र लृदित्वादङ् । *अकरमिति । "कृमृदरुहिभ्यः" [ पा० सू० ३-१-५९ ] इत्यनेन

---

( १ ) 'मृगय्वादित्वाद् बोध्यम्' इत्यादर्शपुस्तके पाठः ।

भ्यश्छन्दसि" [ पा० सू० ३-१-५९ ] इति च्लेरङ्। "ऋदृशोऽङि गुणः" ( पा० सू० ७-४-१६ )। उदाहरणेषु धातुसम्बन्धो *मृग्यः।

सिब्बहुलं ( पा० सू० ३-१-३४ )। *अयं विकरणः। 'यासिसीष्ठाः' इत्यादौ सिपा व्यवधानादिण्निषेधो* न, विहितविशेषणेऽपि छान्दसत्वाच्च, *तत एव च लसार्वधातुकानुदात्तत्वम्।

"वैतोऽन्यत्र" (पा० सू० ३-४-९६)इत्यतो *वेति वर्तते, तदाह-लोपो वेति। परस्मैपदेष्विति। षष्ठ्यर्थे सप्तमी। परस्मैपदतिङामिकारान्तानामित्यर्थः।

पताति। *'पत्लृ' गतौ तिप् आट्।

---

च्लेरङ् भवति न तु "मन्त्रे घस" [ पा० सू० २-४-८० ] इति लुक्। सूत्रयोः कृद्ग्रहणेन पाक्षिकप्रवृत्तेरिष्टत्वात्। *मृग्य इति। क्रियान्तरस्योच्चारितशब्दादप्रतीतेरिति भावः।

*अयम्=सिप्प्रत्ययः। यासिसीष्ठा इत्यत्र याधातोर्लिङ् तस्य स्थाने व्यत्ययेन थास्। आशिषि चायम्। बहुलग्रहणात्सिप्। *इण्निषेधः="एकाच उपदेशे" ( पा० ७-२-१० ) इतिविहितः। *तत एव=छान्दसत्वादेव।

इतश्च लोपः [ पा० सू० ३-४-९७ ]। अस्य यथा वैकल्पिकत्वन्तथाह—*वेति इति।

पतातीत्यत्र प्रक्रियामाह—*पत्लृ गतावित्यादिना।

करवावः। डुकृञ् लटो वस्। उविकरणः। आट्। "आडुत्तमस्य पिच्च" [ पा० सू० ३-४-९२ ] इत्यतः पिद्ग्रहणानुवृत्त्याऽडाटोः पित्त्वाद्विकरणस्य गुणः। करोतेरुत्वाभावश्च। अत्र वस्मसोरित्येव सूत्रयितुमुचितम्।

'मादयैते' इति। 'मदी हर्षे'। णिजन्ताल्लेट्। प्रथमस्याकारस्य ऐकारः। परिशेषात्। अन्त्यस्य हि नित्यत्वाट्टेरेत्वेन। निवृत्तिराटस्तु विधानसामर्थ्यान्न भवति। न च टेरेत्वस्य शब्दान्तरप्राप्त्याऽनित्यत्वं शङ्क्यम्। "वैतोऽन्यत्र" ( पा० सू० ३-४-९६ ) इति सूत्रेऽन्यत्रग्रहणात्। यदि "आत ऐ" ( पा० सू० ३-४-९५ ] इत्यनेनान्त्यस्यापि स्थानेऽनेन ऐकारः स्यात्तदा वैत इतिसूत्रोद्देश्यस्यान्यत्रैव लाभेन तद्वैयर्थ्यं स्पष्टमेव।

वैतोऽन्यत्र [ पा० सू० ३-४-९६ )। वा एत इति छेदः। भेदज्ञाने प्रतियोगिज्ञानस्य कारणत्वात्प्रतियोगिजिज्ञासायाम्पूर्वस्य पुरस्फूर्तिकत्वात्तद्विषय एव प्रतियोगी बोध्यः। पशूनामीशै। 'ईश' ऐश्वर्ये। उत्तम इट् लेट् स्थानिकः। तस्य "टित" (पा० सू० ३-४-७९ ] इत्येत्वे ऐकारः। ग्रहा गृह्यान्तै। ग्रहेः कर्मणि लेट् तस्य झः। आट्। यकि सम्प्रसारणम्।

उपसंवादाशङ्कयोश्च [ पा० सू० ३-४-८ ]। उपसंवादः=पणबन्धः,

*जिह्मायन्त इति । "छन्दसि परेच्छायाम्" ( का० वा० ) इति क्यच् । "अश्वाघस्यात्" ( पा० सू० ७-४-३७ )इति योगविभागेनात्वम् । अघस्य पापेच्छावन्त इति । इदमेव जिह्माचरणं नाम । *अन्ये तूपमानादन्यत्रापि छान्दसत्वादाचारे क्यचमाहुः ।

अपिशब्दाच्छानजिति । अपिशब्दादेवेहापि—यो *ऽस्कभायदुत्तरम् । 'अस्कभ्नाहि'इत्यर्थः ।

व्यत्ययः=*व्यतिक्रम्य गमनम् । व्यतिपूर्वादिणो भावे *णच् । तच्च क्वचिदन्यविषयावगाहनं क्वचिद् द्वौ क्वचित्त्रय इत्यादि । लिङिति । *तस्य मस्, *धातोर्गुणः "नित्यं ङितः" ( पा० सू० ३-४-९९ ) इति सलोपः यासुट्, अतोयेयः यलोपः आद्गुणः । *विकरणप्रकरणे व्यत्यय इत्येव सिद्धे बहुलग्रहणं सर्वविधिव्यभिचारार्थं, तदाह—सुप्तिङिति । बहूनर्थान् लाति=आदत्ते इति बहुलं, तस्य भावो=बाहुलकं, मनोज्ञादित्वाद् वुञ् । दक्षिणाया इत्यत्र स्याडभावः *छान्दसत्वात् ।

---

समयकरणमित्यनर्थान्तरम् । सचान्यं प्रति यदीदम्भवान्मे कार्यङ्कर्यात्तदा तुभ्यमहमेतावद्दास्यामीति कथनरूपः । आशङ्का=सम्भावना । अहमेवेति । त्रिपुरविजये देवैः प्रार्थितस्य रुद्रस्येदं वचः । पशवः लौकिकाः । नेज्जिह्मायन्त इति । इच्छन्द आशङ्काद्योतकः । जिह्मम्=पापम् । जिह्माचरणेन नरकपातः सम्भाव्यते स मा भूदित्यर्थः । तच्च पापन्न सर्वङ्किन्तु कुटिलन्तच्च कौटिल्यङ्किमित्याकाङ्क्षाशान्तये आह—*जिह्मायन्त इतीति । अत्र जिह्मशब्दात्परेच्छायाङ्क्यच् । अत्र नेच्छायाङ्क्यच् किन्तु आचार एवेति वादिमतमाह—*अन्ये त्विति ।

छन्दसि शायजपि [ पा० सू० ३-१-८४ ] । *अस्कभायेति । स्कन्भधातोर्लङ् । तस्य तिप् । अपिशब्दादेवेहापि शायच् । गृभायेति । 'ग्रह'उपादाने । लोट् सेर्हिः । क्र्यादित्वादस्मात् श्ना,तस्य शायच् । ग्रहेः सम्प्रसारणम् । शानच उदाहरणम्-बधानेति । "हृग्रहोर्भ" ( का० वा० ) इत्यस्योदाहरणमाह-गृभ्णामीति ।

व्यत्ययो बहुलम् ( पा० सू० ३-१-८५ ) । व्यत्ययपदं व्याचष्टे—*व्यतिक्रम्येति । *णजिति । "कर्मव्यतिहारे णच्" ( पा० सू० ३-३-४३ ) इति णच् । *तस्येति । लिङ इत्यर्थः । *धातोः=वृधातोः । ननु व्यत्यय इत्येव सूत्रं पाठ्यम् । छन्दसि शायजपीत्यन्तस्य विकरणप्रकरणान्ते पाठेन प्रत्यासत्त्या विकरणानां लाभे सिद्धे बहुलग्रहणं सर्वोपाधीनामपि व्यत्ययो यथा स्यादित्याह—*विकरणेति । ननु दक्षिणाया इत्यत्र सुपः षष्ठ्या व्यत्ययेऽपि स्याडागमो दुर्वारः आगमस्यैतेष्वपरिगणनादत आह-*छान्दसत्वादिति । दक्षिणाया इति-

*उपग्रहपदेन लादेशव्यङ्ग्यं स्वार्थत्वपरार्थत्वादि तत्प्रतीतिनिमित्तलादेशोऽप्युपग्रहपदेनोच्यते इत्याशयेनाह-उपग्रह इत्यादि। मधुन इति प्राप्ते इति। *अमृतक्षीरयोर्वाचको मधुशब्दो नित्यक्लीब इति भावः। वियूयादिति। 'यु' मिश्रणे विपूर्वः। विशेष इति। अचि *अन्न अदायेत्यवग्रहः, अणि आदायेति स्यात्। 'न *लक्षणेन पदकाराः' इति न्यायेनात्र फलान्तराभावाद्व्यत्ययफलं चिन्त्यम्।

लिङ्याशिष्यङ् (पा० सू० ३-१-८६)। स्था-गा-गमि-वचि-विदि-शकि-रुहिष्वेवायमङ् विकरणः प्रायेण दृश्यते।

बहुलं छन्दसीति। अन्यथा "ऋत इद्" [पा० सू० ७-१-१००] इतीत्वं स्यात्। गुणस्तु न किच्वादिति भावः।

---

प्रयोगस्य छान्दसत्वादित्यर्थः। उपग्रहपदं सुप्तिङित्यत्रोपात्तं लाक्षणिकमित्याशयेन व्याचष्टे—*उपग्रहपदेनेति। यद्यपि मकरन्दादिवाचको मधुशब्दोऽर्द्धर्चादिः तथापि तत्र पठितादन्यो नित्यनपुंसक इत्याशयेनाह—*अमृतेति। कारकवाचकस्य कृत्प्रत्ययस्य व्यत्ययः सन्धौ न प्रतीयत इत्याशयेनावग्रहेण पठति-*अन्नअदायेति। कर्तर्यच्। तदन्तेन षष्ठ्यन्तान्नशब्दस्य समासे सुपो लुकि। समासे संहिताया नित्यत्वादत्रैवमवग्रहेण प्रयोगोऽनुचित इत्याशयेनाह-*लक्षणेनेति। कृत्तद्धितानामित्यत्र तद्धितपदन्दीव्यत्याद्यर्थे विधीयमानठगादीनाङ्कर्तृवादिनो मतेन। वस्तुतो नैष तद्धितः कारकपरः। तद्धितार्थघटकदेवनादेरक्रियात्वात्। एवञ्चेदन्तद्धितप्रत्ययव्यत्ययमात्रतात्पर्यकं बोध्यम्। अत एव 'त्वं वेत्थयति ते जातवेदः' 'विश्वेदेवा सोमयुतो यतिष्ठन' इत्यत्र किमो विहितो डतिर्यच्छब्दादपि दृश्यते।

मन्त्रं वोचेमाग्नये। वचधातोराशीर्लिङो मसादेशः। अङ् उम्। "छन्दस्युभयथा" (पा० सू० ३-४-११७) इतिलिङः सार्वधातुकत्वाद्यासुट इयादेशो यलोपः।

छन्दस्युभयथा (पा० सू० ३-४-११७)। यद्यपि संज्ञयोः समनियतत्वन्तथापि कार्यस्य तत्तत्संज्ञानिबन्धनस्य छन्दसि दृष्टानुविधानेन नियम एव। तेनातिप्रसङ्गो न शङ्क्यः।

आदृगमहन (पा० सू० ३-२-१७१)। अत्र आदिति दान्तं थान्तं वा। तेन तपरपदे पञ्चमीसमासेऽपि ऋकारपदेन दीर्घस्यापि ग्रहणसिद्धिः। "असंयोगाल्लिट्कित्" (पा० सू० १-२-५) इत्येव सिद्धे किकिनोः कित्त्वं कार्यविशेषार्थमित्याहमूले लिड्वद्भावादेवेति। विनाऽपि वतिं वत्यर्थो गम्यते, तेन लिड्वदित्यस्य लाभः। अनेन लिटि यत्कार्यन्तदतिदिश्यते एवं हि किकिनोः स्वरूपाबाधो भवति। तेन लस्य स्थाने विधीयमानादेशो न।

तुमर्थे (पा० सू० ३-४-९) तुमर्थो=भावः "अव्ययकृतो भावे" (भा० इ०) इत्युक्तेः। भाव इत्येव सिद्धे तुमर्थग्रहणात्साध्यरूपभावस्यात्र ग्रहणम्। पृणध्यै इति। बाहुलकादगुणत्वं 'पिबध्यै' इत्यादौ यगभाववत्। एवञ्च बाहुलकेनैव पिबाद्यादेशकित्त्वकार्ये स्वीकृत्य कध्यैकध्यैन्शध्यैशध्यैनिति प्रत्ययचतुष्टयं व्यर्थमिति सूचयति। आहुवध्यै इति। ह्वेञः संप्रसारणे उवङि रूपम्।

न म्लेच्छितवै इति। भ्वादेर्म्लेच्छधातोस्तवै, इट्। अनगाहे इति। अत्र केन्।

भावलक्षणे (पा० सू० ३-४-१६)। भावस्य लक्षणत्वे गम्ये इत्यर्थः। आविजनितोः=आप्रसवादित्यर्थः। इति तृतीयः।

---

तुमर्थे सेसेनसे (पा० सू० ३-४-९)। तुम्शब्दोऽत्र तुमुन्परः।

प्रयैरोहिष्यै [पा० सू० ३-४-१०]। प्रपूर्वकाद्याधातोः कैप्रत्ययः, रुहेरिष्यै, नञि व्यथेश्चायम्।

दृशे विख्ये च [पा० सू० ३-४-११]। केप्रत्ययस्तुमर्थे निपात्यते। पूर्वसूत्र एवैतावपि पठितुं योग्यौ।

कृत्यार्थे तवैकेन्केन्यत्वनः(पा०सू०३-४-१४)।अत्र कृत्यार्थशब्देन भावकर्मणोर्ग्रहणं "तयोरेव"(पा०सू०३-४-७०)इतिसूत्रे विशिष्य तयोरुपादानात्। करणादौ स्नानीयमित्यादौ यद्यपि कृत्यो भवति तथापि बाहुलकादिनेति न स प्रतिपदोक्तः। 'न म्लेच्छितवै' इत्यत्र तवैप्रत्ययः कृत्यार्थे भावे। न म्लेच्छितव्यमित्यर्थः। दिदृक्षेण्य इति। दृशधातोः सनि केन्यः। अतो लोपः। कर्त्वमित्यत्र कृञस्त्वन्। गुणः। कृत्यमित्यर्थः।

अवचक्षे च (पा० सू० ३-४-१५)। चक्षिङ एशप्रत्ययः। प्रत्ययस्य शित्त्वात्सार्वधातुकत्वमिति ख्याञादेशाभावः।

भावलक्षणे स्थेण् [पा० सू० ३-४-१६] लक्ष्यतेऽनेनेत्यर्थे लक्षणमिति। भावोऽत्र धात्वर्थः। आसंस्थातोः सदन्ति। अत्र सम्पूर्वकः स्थाधातुः समाप्तौ वर्त्तते। संतिष्ठते पितृयज्ञ इत्यत्र यथा। संस्थादीनामवधित्वेन सदृधात्वर्थलक्षणत्वम्। अस्मिन् सूत्रे तुमर्थ इत्यस्य सम्बन्धादयं तोसुन्प्रत्ययो भावे। उदेतोः अपकर्तोरित्यादौ इणादिधात्वर्थो यस्य लक्षणं सा क्रिया यथायथमूहनीया।

सृपितृदोः कसुन् (पा० सू० ३-४-१७)। विसृप इति। सृप्लृगतावितिगत्यर्थकात् सृप्धातोर्भावस्य लक्षणत्वे गम्ये भावे कसुन्। कित्त्वाद् गुणाभावः। एवमातृद इत्यत्रोतृदिर्धातोर्हिंसानादरार्थकात्कसुन्। इति तृतीयाऽध्यायविवरणम्।

## अथ चतुर्थः ।

राज्ञेश्चाजसौ ( पा० सू० ४-१-३१ ) । अजसादिष्विति व-क्तव्यं रात्रिं रात्रिं सहोषित्वा । अजसाविति किम् ?, यास्ता रात्रयः । लोके त्विति । *असञ्ज्ञाविषये इत्यर्थः । सञ्ज्ञायान्तु लोकेपि ङीबन्त एव । वृत्तौ सञ्ज्ञाछन्दसोरित्यनुवर्त्तनात् "राशदिभ्यान्त्रिप्" ( उ० पा० ४ सू०५१६ ) इति त्रिबन्त आद्युदात्तो रात्रिशब्दः ।

नित्यग्रहणमिति । *आरम्भसामर्थ्यान्नित्यत्वसिद्धेरिति भा-वः । उत्तरार्थं="भुवश्च" ( पा० सू० ४-१-४७ ) इत्यर्थम् ।

डुप्रत्ययान्तस्य भोरिति स्यादत आह-उवङिति ।

*गुग्गुल्वादीनां छन्दसि व्यत्ययेन स्त्रीत्वम् । पतयालुर्विशे-ष्यलिङ्गः ।

---

## अथ चतुर्थोऽध्यायः ॥

रात्रेश्चाजसौ (पा०सू०४-१-३१) । "राशदिभ्यां त्रिप्" इतित्रिप्प्रत्ययान्तो रात्रिशब्द आद्युदात्तः । अस्मादजस्विषये ङीपि "यस्य"(पा०सू०६-४-१४८)इति लोपेऽप्यनुदात्तस्यैव लोप इत्युदात्तनिवृत्तिस्वरो न । अत्र "नित्यं संज्ञाछन्दसोः" (पा०सू०४-१-२९)इति सूत्रात्संज्ञाछन्दसोरित्यनुवर्त्तते । एवञ्च संज्ञायां लोकेऽपि सोऽप्याद्युदात्त एव । एवञ्च यत् फलितन्तदाह—*असंज्ञाविषय इति ।

नित्यञ्छन्दसि ( पा० सू० ४-१-४६ ) । *आरम्भसामर्थ्यादिति । वि-कल्पस्य पूर्वेण सिद्धेः । एवञ्च "भुवः" ( पा० सू० ४-१-४७ ) इतिसूत्रविहितो ङीप् नित्य एव ।

भुवश्च ( पा० सू० ४-१-४७ ) । भूधातोर्डुप्रत्ययेन ह्रस्वान्तोयम् । क्विबन्तस्य तु स्वयम्भूः ।

मुद्गलाच्छ ( का० वा० ) । "इन्द्रवरुण" ( पा० सू० ४-१-४९ ) इ-तिसूत्रे वार्त्तिकमिदम् । ङीषो लित्त्वेनानुगाकारस्योदात्तत्वम् ।

दीर्घजिह्वी च छन्दसि ( पा० सू० ४-१-५९ ) । "नखमुखात्" ( पा० सू० ४-१-५८ ) इत्यतः संज्ञायामित्यनुवर्त्तते ।

कद्रुकमण्डल्वोः ( पा० सू० ४-१-७१ ) । "ऊङुतः" ( पा० सू० ४-१-६६ ) इत्यत ऊङिति वर्त्तते । गुग्गुल्वादीनां लोके स्त्रीत्वादाह—*गुग्गुल्वा-दीनामिति । पतयालुः "स्पृहिगृहि" ( पा० सू० ३-२-१५८ ) इत्यालुजन्तः । अव्ययात्त्यप् । प्राग्व्याख्यातमपि "आविष्ट्यस्य" [ का० वा० ] इत्यत्रानुवृत्त्य-र्थम्पुनरुपात्तम् ।

शौनकादिभ्यश्छन्दसि ( पा० सू० ४-३-१०६ । अस्यात्र लेखो लेखकप्रमादात् । छन्दसि अभिधेये इति तदर्थात् । अत एव 'शौनकीया शिक्षा' इति तत्प्रत्युदाहरणमाकरे ।

वर्ध्रीमिति । 'वर्ध्री' इति तु वधेरौणादिके ष्ट्रनि बोध्यम् । वर्ध्रिकाः यस्येति भाष्ये प्रयोगात् ।

मेघ्यायेति । "यतोऽनावः" [ पा० सू० ६-१-२१३ ) इत्याद्युदात्तत्वं प्राप्नोति, अन्तस्वरितश्च *पठ्यते इति हरदत्तः ।

वैशन्तीभ्य इति । वेशन्ते=पल्वले भवा आप इत्यर्थः ।

स्रोतो*जलप्रवाहः ।

सगर्भस्य ( पा० सू० ४-४-११४ ) । यन्नित् ।

यद्यपीति । छान्दसत्वात् । चात्घानिति । यतः *पूर्वेणैव सिद्धे व्यवहितस्यापि घनः समुच्चय इति भावः । लोके तु 'अग्रिमः' इत्येव । 'अ-

---

आविष्ट्यस्योपसंख्यानम् ( का० वा० ) । आविष्ट्यशब्द आविर्भूत-इत्यर्थे वर्तते । "ह्रस्वात्तादौ" ( पा० सू० ८-३-१०१ ) इति षत्वम् । त्यपस्त-कारस्य ष्टुत्वम् ।

द्व्यचश्छन्दसि ( पा० सू० ४-३-१५० ) । "मयड्वैतयोर्भाषायाम्" ( पा० सू० ४-३-१४३ ) इत्युक्तेरप्राप्तो मयड् विधीयते । द्व्यच इतिप्रातिपदिकस्य विशेषणम् ।

ढश्छन्दसि ( पा० सू० ४-४-१०६ ) । सप्तम्यन्तात्सभाशब्दात्साधुरित्यर्थे ढः स्यात् । *पठ्यत इति । एवञ्च छन्दसि सर्वविधीनां वैकल्पिकत्वात् "यतोऽनावः" ( पा० सू० ६-१-२१३ ) इत्यस्याप्रवृत्तौ "तित्स्वरितम्" ( पा० सू० ६-१-१८५ ) इत्यस्य प्रवृत्तौ तदन्तस्य स्वरितत्वमुपपद्यत इति भावः ।

पाथोनदीभ्यां ड्यण् ( पा० सू० ४-४-१११ ) । भवार्थे पाथोनदीभ्यां ड्यण् स्यात् । अत्र पाथस्शब्दोऽन्तरिक्षवाची पाति लोकानवकाशदानेनेति वृत्तिः । यद्यपि जलेऽप्ययं चायमुणादिषु व्युत्पादितः । अमरसिंहोऽपि "कबन्धमुदकम्पाथः" ( अ० को० ) इत्याह । तथापि "उणादयो बहुलम्" ( पा० सू० ३-३-१ ) इति बहुलग्रहणादन्तरिक्षेऽपि भवतीति तद्भावः ।

वेशन्तहिमवद्भ्याम् ( पा० सू० ४-४-११२ ) । "विशेर्झ च" ( उ० सू० ) इति व्युत्पादितोऽयम्पल्वलवाची । पल्वले विद्यमाना इत्यर्थः ।

स्रोतसो विभाषा ड्यड्ड्यौ ( पा० सू० ४-४-११३ ) । *जलप्रवाह इति । नद्यादिप्रवाहे चाऽयम् न तु जलसामान्यस्य ।

सगर्भसयूथ [ पा० सू० ४-४-११४ ] । प्रत्ययोऽयं नित् । तेनैतदन्तस्याद्युदात्तत्वम् । *पूर्वेण="अग्राद्यत्" [ पा० सू० ४-४-११६ ] इतिसूत्रेण ।

प्राव' इत्येव सूत्रयितुमुचितं यतोऽधिकारात् ।

बर्हिषि दत्तम् (पा० सू० ४-४-११९) । भव इति निवृत्तम् । बर्हिः कुशहुताशयोः ।

दूतस्य ( पा० सू० ४-४-१२० ) । कर्म=क्रिया । तत्र भागे "तस्येदम्" ( पा० सू० ४-३-१२० ) इत्यणि कर्मणि "दूतवणिग्भ्याञ्च" ( का० वा० ) इति ये प्राप्ते वचनम् ।

रक्षोयातूनां [ पा० सू० ४-४-१२१ ] । "विरूपाणामपि" ( का० वा०) इत्येकशेषो न (१)कृतोऽसन्देहाय । शैषिकाण्छयोरपवादः ।

प्रशस्ये इति । बाहुलकाद्भावे क्यप्, तद्योगे कर्मणि षष्ठी; तदाह—रेवत्यादीनामिति । रयिरस्त्यस्या रेवती । "रयेर्मतौ बहुलम्" ( का० वा० ) इति संप्रसारणम् ।

मायायां [ पा० सू० ४-४-१२४ ] । असदर्थप्रकाशनशक्तिः= माया । असुरस्य=सुरप्रतिपक्षस्य माया आसुरी ।

---

समुद्राभ्राद्धः ( पा० सू० ४-४-११८ ) । अभ्रशब्दस्य पूर्वनिपाते कर्त्तव्ये परनिपातकरणम्पूर्वनिपातस्यानित्यत्वबोधनाय ।

बर्हिषि दत्तम् ( पा० सू० ४-४-११९ ) । अव इति दत्तमित्यस्यादिः । 'अर्थविशेषनिर्देशात्' इति अस्याग्रे बोध्यम् ।

अण्छयोरिति । रक्षस्शब्दात्प्राप्तस्याणः यातुशब्दाच्छस्येत्यर्थः ।

"प्रशस्यस्य श्रः" [पा० सू० ५-३-६०] इतिनिर्देशात् । कर्मणि प्राप्तिवारणाय आह—बाहुलकादिति । सम्प्रसारणमिति । ततो गुण इति शेषः । हविष्या=हविषे हिता । गवादित्वाद्यत् ।

असुरस्य स्वम् ( पा० सू० ४-४-१२३ ) । शैषिकाणोऽपवादः ।

मायायामण् ( पा० सू० ४-४-१२४ ) । पूर्वसूत्रविहितस्य यतोऽपवादोऽयम् । असुरपदघटको नञ् विरोध्यर्थक इत्याशयेनाह-असुरेति ।

तद्वानासामुपधानो ( पा० सू० ४-४-१२५ ) अत्रोपधानशब्दः करणल्युडन्तः । उपधीयत अनेन इतिव्युत्पत्तेः । चयनस्य करणमित्यर्थः । वर्चस्वानिति । वर्चस्शब्दोऽस्त्यस्मिन्मन्त्रे स मन्त्रो वर्चस्वान्, 'देवस्य त्वा सवितुः' इत्यादिको मन्त्रः । यद्यपि तस्मिन्मन्त्रे पदान्तराण्यपि सन्ति तथापि छन्दसि दृष्टस्यैवानुविधानान्मत्वन्तादेवायं यत्प्रत्ययः । यत्तु 'सृष्टीरुपदधाति' 'प्राणभृत उपदधाति' इत्यादिः प्रयोगस्तत्र सृष्ट्यादिशब्दानान्तद्वन्मन्त्रकरणकोपधानकर्मीभूतास्विष्टकासु लक्षणया प्रयोगः ।

---

[ १ ] 'शब्दस्वरूपपरत्वात्' इत्यादर्शपुस्तके पाठः ।

मूर्धन्वतीरिति । यद्यपि "मूर्द्धात्रयः प्रजापतिश्छन्द" इत्यन्त्यमन्त्र एव मूर्द्धन्शब्दोऽस्ति तथाऽपि तत्साहचर्याच्छत्रिन्यायेन 'विष्टम्भोवय' इत्यादयश्चत्वारोपि मन्त्रा मूर्धन्वन्त उच्यन्ते । वयस्यास्विति किम् ?, अग्ने यशस्विन् यशसे समर्पयायं मूर्धा परमेष्ठीति केवलमूर्धशब्दवता वयःशब्दरहितेन मन्त्रेणोपधेयासु माभूदिति ।

मत्वर्थेमा [ पा० सू० ४-४-१२८ ] । *मत्वर्थे यत् स्याच्छन्दसि मासतन्वोर्वाच्ययोः । मासतन्वोः किम् ?, स्वध्वरासो *मधुमन्तोऽग्नयः । *सूत्रे तनूशब्दो दीर्घान्त इति हरदत्तः ।

*अनन्तरार्थे वेति वक्तव्यम् । मध्वनन्तरमस्मिन्=मधव्यो माधवो मासः । लुगकारेकाररेफाश्चेति वाच्यम् । *लुक्—मधुः; तपः; नभः ।

---

अश्विमानण् ( पा० सू० ४-४-१२६ ) । अश्विमच्छब्दाद्वुक्तेऽर्थेऽण् स्यात् मतुपश्च लुक् । 'आश्विनीरुपदधाति' । अश्विन्शब्दवान्मन्त्र उपधानो यासान्ता इत्यर्थः । मतुपो लुक्, "इनण्यनपत्ये" ( पा० सू० ६-४-१६४ ) इति प्रकृतिभावः । अश्विमानित्येकवचनमश्विमत्त्वसामान्यविवक्षया । तेन बहूनाम्मन्त्राणामश्विमत्त्वेऽपि न क्षतिः ।

वयस्यासुमू ( सू० ४-४-१२७ ) । अत्र मूर्द्धन्शब्दस्तत्प्रकृतिके लाक्षणिकः । मतुब्शब्दः प्रत्ययग्रहणपरिभाषया तदन्तपरस्तथा च मूर्द्धन्शब्दप्रकृतिकं यन्मतुबन्तन्तस्मान्मतुप् स्यादित्यर्थः । वयस्यास्वित्यत्र तु वयस्शब्दात्पूर्वसूत्रेण यत् । तेनोभयवत्त्वमर्थसिद्धम् । तदाह मूले यस्मिन्मन्त्र इति । मूर्द्धन्वतीरित्यत्र "आतो नुट्" इति नुट् । न च वयस्याशब्दस्य छन्दस्येव साधुत्वान्वाख्यानात्सूत्रे प्रयोगोऽनुपपन्न इति वाच्यम् । छान्दसा अपि क्वचिद्भाषायाम्भवन्तीत्यस्य ज्ञापनार्थत्वात् । "छन्दोवत्सूत्राणि" इतिभाष्यकारेष्ट्या सिद्धत्वात् । यस्मिन्मन्त्रे मूर्द्धन्शब्द एवास्ति वयस्शब्दस्तु नास्ति तन्मन्त्रोपधेयासु मूर्द्धन्वतीरिति प्रयोगः क्वचिद् दृष्टस्तु लक्षणया साधुः ।

मत्वर्थे मासतन्वोः ( पा० सू० ४-४-१२८ ) । अत्र तनूशब्दो दीर्घान्तस्तेन घित्वाभावान्नास्य पूर्वनिपातः; तदाह—*सूत्र इति । मासतन्वोरिति समुदायोपाधिरित्याशयेनाह—*मत्वर्थ इत्यादिना । *मधुमन्त इति । अत्र यत्र भवतीति शेषः ।

*अनन्तरार्थे वेतीति । अत्र वाशब्दश्चार्थे । तेन मत्वर्थे मासतन्वोः समुदायवाच्यत्वे प्रत्ययो यथा भवति तथा मासतन्वोरेव वाच्ययोरनन्तरार्थेऽपि प्रत्यय इत्यस्य लाभः । *लुगिति । प्रत्ययस्य लुगित्यर्थः । मधु अस्त्यस्मिन्, नभांसि सन्त्यस्मिन्, तपोस्त्यास्मिन्नित्यर्थे मासे एव वाच्ये प्रत्ययस्य लुगित्यर्थः ।

*अन्त्ययोः क्लीबत्वमार्षम् । अकारः—*इषः; ऊर्जः । *इट्=अन्नम्, ऊर्ग्=बलम्; तद्वानित्यर्थः । इकारः—आतपाधिक्येन देहशोषरूपा शुगस्मिन्नस्ति=*शुचिः । *रेफः=रशब्दः–शुक्रः । अयस्मयादित्वाज्जश्त्वं न ।

ओजसोऽह [ पा० सू० ४-४-१३० ] । ओजःशब्दान्मत्वर्थे यत्खौ स्तोऽहनि वाच्ये ।

वेशोय ( पा० सू० ४-४-१३१ ) । *एतदादिकाद्भगशब्दाद्यत्खौ । *भगः श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु ।

पूर्वैः कृत [ पा० सू० ४-४-१३३ ] । पूर्वशब्दात्तृतीयाबहुवचनान्तात् कृतमित्यर्थे इन इति य इति च प्रत्ययः ।

अद्भिः ( पा० सू० ४-४-१३४ ) । संस्कृतमित्यर्थे यदित्यर्थः ।

सोममर्ह ( पा० सू० ४-४-१३७ ) । सोमशब्दात् द्वितीयान्तादर्हतीत्यर्थे यप्रत्ययः ।

मधोः ( पा० सू० ४-४-१३९ ) । य इति निवृत्तम् ।

चान्मयडर्थे इति । *स्वार्थे इत्यपि बोध्यम् । अग्निरीशे वसव्यस्य इत्यादिः ।

---

ननु मासस्य विशिष्टसमुदायवाच्यत्वे नभस्शब्दस्य पुंस्त्वापत्तिरत आह—*अन्त्ययोरिति । *इष इति । एषणमिट् । अन्नवाच्ययं शब्द इत्याह—*इडिति । इकारोदाहरणमाह—*शुचिरिति । रेफेत्यस्य प्रत्ययत्वभ्रमनिवृत्तये आह—*रेफो रशब्द इति ।

वेशोयशआदेः(पा०सू०४-४-१३१) । वेशोयश इति द्वन्द्वस्य आदिशब्देन बहुव्रीहिरित्याह —*एतदादिकादिति । भगशब्दार्थमाह—*भग इति ।

पूर्वैः कृतमिनयौ च ( पा० सू० ४-४-१३३ ) । पूर्वशब्दात् तृतीया बहुवचनान्तादयम्प्रत्ययः । एतदन्तस्य त्वेकवचनान्तत्वमपि भवति ।

अद्भिः संस्कृतम् ( पा० सू० ४-४-१३४ ) । यदित्येवात्र सम्बध्यते ।

सहस्रेण सम्मितौ घः ( पा० सू० ४-४-१३५ ) । सम्मितिः=सादृश्यम् । क्वचित्तु समिताविति पाठः । अर्थस्तु स एव ।

मतौ च ( पा० सू० ४-४-१३६ ) । अत्र मतुशब्दो मत्वर्थे । एवञ्चेह सहस्रेणेतिपदम्पञ्चम्या विपरिणतम्बोध्यम् ।

मधोः ( पा० सू० ४-४-१३९ ) । "मये च" ( पा० सू० ४-४-१३८ ) इति सम्बध्यते ।

*स्वार्थे इत्यपीति । वसोरिति योगविभागेन स्वार्थे प्रत्ययः प्रथमसूत्रेणेति भावः ।

स्वार्थे इति। समूह इति निवृत्तम् ।

शिवशम् [ पा० सू० ४-४-१४३ ]। पचाद्यजिति । एवञ्च कृद्योगलक्षणा षष्ठी समर्थविभक्तिः । फलितमाह-शिवं करोतीति । अरिष्टः=पञ्चतयः। इति चतुर्थः ।

अथ पञ्चमः ।

सामानीति । आर्षं क्लीबत्वम् । वर्गः=प्राण्यप्राणिविषयः । *विंशिन इति।*आङ्गिरस-अयास्य-गार्ग्य-गौतमेत्यादिप्रवरभेदभिन्नानि विंशतिरवान्तरगोत्राणि परिमाणमेषामित्यर्थः ।

सादन्यमिति । सदनमर्हतीत्यर्थः । *इत्सद्वरेदावत्सरसंवत्सरपरिवत्सराः पञ्चवर्षे युगचतुर्णां वर्षाणां सञ्ज्ञाः ।

उद्वत इत्यादि देशा विशेष्याः । साधनशब्देन शक्तिमद्द्रव्यमिति लिङ्गसंख्यायोगादन्वर्थाऽव्ययसञ्ज्ञा न ।

---

अक्षरसमूहे ( का० वा० ) । अक्षरं व्यञ्जनसहितोऽच् । अत्रार्थनिर्देशादयम्प्रत्ययः स्वार्थे ।

सर्वदेवात्तातिल् ( पा० सू० ४-४-१४२ ) । सर्वदेवादिति समाहारद्वन्द्वात्पञ्चमी ।

भावे च ( पा० सू० ४-४-१४४ ) । अत्र भावः प्रकृतिजन्यबोधप्रकारः । इति चतुर्थोऽध्यायः ।

## अथ पञ्चमोऽध्यायः ॥

'विंशिनः' इत्यत्र विंशतिशब्दात्परिमाणोपाधिकात्षष्ठ्यर्थे डिनिप्रत्यये "तिर्विंशतेः" [ पा० सू० ६-४-१४२ ] इति तिशब्दस्य निवृत्तिः । तत्र विंशतिशब्दवाच्यान्याह—*आङ्गिरस इत्यादि ।

"वत्सरान्ताच्छश्छन्दसि" [पा० सू० ५-१-९१]इति सूत्रोदाहरणमाह—*इद्वत्सर इत्यादि ।

छन्दसि घस् ( पा० सू० ५-१-१०६ ) । "समयस्तदस्य प्राप्तम्" ( पा० सू० ५-१-१०४ ) इत्यतस्तदस्य प्राप्तमिति "ऋतोरण्" [ पा० सू० ५-१-१०५ ] इत्यत ऋतोरिति वर्त्तते।

उपसर्गात् छन्दसि धात्वर्थे ( पा० सू० ५-१-११८ ) । अत्र धातुशब्दो धात्वर्थलाक्षणिको न तु धातुसंज्ञकशब्दपरः । तस्योपसर्गार्थत्वासम्भवात् । अर्थशब्दश्च प्रयोजनवाची । एवञ्च धात्वर्थोऽर्थः प्रयोजनं यस्येत्यर्थ इत्याशयेनाह—धात्वर्थविशिष्टसाधन इति । उपसर्गाणामयं स्वभावो यत्र समभिव्या

थट् च [ पा० सू० ५-२-५० ]। चात्पक्षे मट्। थुक् तु *अत्र न कृतः। नलोपानापत्तेः।

दीर्घश्चेति। *द्वयोभयहृदयविषयमिदम्। छन्दसीव [ का० वा० ]। *चाद्वः। अन्यतरस्याङ्ग्रहणानुवृत्तेर्मतुप् च। *रथोऽस्यास्ति, सुमङ्गलमस्यास्तीत्यर्थः। छान्दसत्वात्कर्मधारयादपि मत्वर्थीयः।*मघं=धनमस्यास्ति=मघवा,*उद्गतसम्बन्धिनीत्यर्थे उद्वा उद्वतीति वमतुपोरुदाहरणे।

तयोरिति व्याचष्टे-इदन्नदोरिति। *आनन्तर्ययोगे षष्ठी।

कथेति। कुतो हेतोः, *केन प्रकारेण वेत्यर्थः।

तुश्छन्दसि [ पा० सू० ५-३-५९ ]। *अजादी गुणवचनादेवेति नियमबाधेन प्रकृत्यन्तराभ्यनुज्ञामात्रमत्र क्रियते न त्वपूर्वो वि-

---

द्वतधातुप्रतिपाद्या क्रियास्ति तत्र तद्गतं विशेषं द्योतयन्ति, यत्र तु तथा नास्ति तत्र क्रियाविशिष्टे साधने वर्त्तनमिति। यथा निष्कौशाम्बिरित्यादौ। एवञ्च यदुद्वत इत्यत्रोद्गमनविशिष्टकर्त्रभिधायकत्वमव्याहतमेव तदाह-मूले उद्गतादिति।

थट् च छन्दसि ( पा० सू० ५-२-५० )। "तस्य पूरणे" [ पा० सू० ५-२-४८ ) इत्यतो डडिति "नान्तादसंख्यादेः" [ पा० सू० ५-२-४९ ) इत्यतो नान्तादिति चानुवर्त्तते। पञ्चथमित्यस्य पञ्चानाम्पूरणमित्यर्थः। *अत्र न कृत इति। अत्रैव न कृत इत्यर्थः।

छन्दसि परिपन्थि ( पा० सू० ५-२-८९ )। पर्यवस्थातृशब्दात्स्वार्थे इनिः प्रत्ययः स्यात् अवस्थातृशब्दस्य पन्थिपरि इत्यादेशौ निपात्येते। छन्दोविन्प्रकरणे=छन्दसि विधीयमानविन्प्रकरण इत्यर्थः। सामान्यत उक्तमपि दीर्घत्वं विशेषविषयकमित्याशयेनाह—*द्वयोभयेत्यादि। अन्यत्र दीर्घत्वस्य स्वतः सिद्धत्वादिति शेषः। वार्त्तिके तूपादानम्प्रत्ययविध्यर्थमिति बोध्यम्। "छन्दसीवनिपौ च"इति चकारेण प्रत्ययान्तरसङ्ग्रहेऽपि पूर्वसूत्रपठितसङ्ग्रह इत्याह—*चाद्व इति। ईकारस्योदाहरणद्वयमाह—*रथ इत्यादि। वनिपस्तदाह—*मघमिति। वमतुपोरुदाहरणमाह—*उद्गतसम्बन्धिनीत्यादिना। प्रत्ययविधौ पञ्चम्या न्याय्यत्वादाह—*आनन्तर्ययोग इति।

था हेतौ च छन्दसि ( पा० सू०-५-३-२६ )। "प्रकारवचने थाल्" (पा० सू० ५-३-२६)इत्यतः प्रकारवचन इति "किमश्च"(पा० सू० ५-३-२५) इति च वर्त्तते। *केन प्रकारेण वेति। न पृच्छसीत्यत्रास्यान्वयः।

पश्च पश्चा च (पा० सू० ५-३-३३)। अत्रावरशब्दस्य स्थाने पश्चादेशः,अकार आकारो वा प्रत्ययो बोध्यः।

तुश्छन्दसि(पा०सू०५-३-५९)। सूत्रारम्भप्रयोजनमाह-*अजादीइत्यादिना।

धिः । तेनोपाधि*सङ्करो न । करिष्ठ इति । कर्तृशब्दात्*तृन्नन्तादिष्ठन्निति कर्मणि द्वितीया । *अतिशयरूपेष्ठनर्थस्य विशेषणत्वा*त्तृन्नन्तस्य शक्तेश्च न कृतपूर्वीकटतुल्यता । तेन तद्वदत्र तृजन्तप्रकृतिकत्वेऽपि न षष्ठीति परास्तम् ।*दोग्ध्रीशब्दे "सिद्धश्च प्रत्ययविधौ"इति वचनाद् "भस्याढे"[ का० वा० ] इति पुंवत्त्वेन दोग्धृशब्दात्प्रत्यये "तुरिष्ठेमेयस्सु" [ पा० सू० ६-४-१५४ ] इति तृलोपः । *ततः प्राग्घत्वजश्त्वे तु न । *असिद्धत्वात् ।

प्रत्नपूर्वविश्वेमात्थाल् [ पा० सू० ५-३-१११ ] । *इमशब्द इदमासमानार्थं प्रकृत्यन्तरम् ।

प्रतरमिति । *प्रकर्षप्रकर्षे तरप्, प्रकृष्टतर इत्यर्थः । उदित्त्वम् "इच एकाचोऽम्प्रत्ययवत्" [ पा० सू० ६-३-६८ ] इत्यत्रास्य ग्रहणं माभूदिति । तेन 'स्त्रियंमन्यः' इत्यादौ "यस्य" [ पा० सू० ६-४-४९ ]

---

*सङ्करो नेति । किन्तु यस्मिन्नुपाधावजादी विहितौ तस्मिन्नेव भवत इति शेषः । *तृन्नन्तादिति । यद्ययं तृजन्तात्स्यात्तदाऽऽसुतिशब्दात्षष्ठी कृद्योगसत्त्वात्स्यादिति तृन्नन्तादेवायमिति स्वीकार्यम्,तथा च "न लोका" [पा०सू०२-३-६९]इति निषेधान्न षष्ठीति भावः । अत्राह हरदत्तः'तृजन्तादेवायम्प्रत्ययः । कृतपूर्वीकटमित्यत्र कटशब्दाद्यथा द्वितीया तथाऽत्राप्यासुतिशब्दाद्द्वितीया'इति, तद् दूषयति—*अतिशयरूप इत्यादिना । *तृन्नन्तस्य शक्तेश्चेति । व्यधिकरणे षष्ठ्यौ । चो हेतौ । अयम्भावः—कृतपूर्वीकटमित्यत्र यथा भावक्तान्तकृतशब्दपूर्वशब्दयोः समासे चिशिष्टादिनौ तदन्तार्थे कटस्य कर्मत्वविवक्षया कृदन्तशक्तिग्रहमात्रप्रयोज्योपस्थितिविषयक्रियानिरूपितकर्मत्वस्य कटेऽभावान्न कटशब्दात्षष्ठी, तथा न प्रकृतेऽतिशयरूपेष्ठनर्थस्य करणशीलतारूपतृन्नन्तार्थकर्तृविशेषणभूतार्थविशेषणत्वात्कृदन्तशक्तिग्रहमात्रप्रयोज्योपस्थितिविषयक्रियानिरूपितकर्मत्वेऽपि "न लोका" [ पा० सू० २—३—६९ ) इति निषेधान्न षष्ठी । यदि तु तृजन्तादयमिष्ठन्स्यात्तदा नलोकेति निषेधाविषयतया षष्ठी स्यादेव इष्ठनर्थस्य तदा तृजन्तार्थतावच्छेदककरणकर्तृत्वविशेषणत्वात् तृजन्तशक्तिग्रहप्रयोज्योपस्थितिविषयक्रियाकर्मत्वस्यासुतिशब्दार्थे सत्त्वादिति । दोहीयसीत्येतस्य साधनं यथा भवति तथाह—*दोग्ध्रीशब्द इति । *ततः प्रागिति । प्रत्ययोत्पत्तेः प्रागित्यर्थः । *असिद्धत्वादिति । सपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्ये विषये त्रिपादीस्थशास्त्रस्यासिद्धत्वादप्रवृत्तेरित्यर्थः ।

प्रत्नपूर्वविश्वेमात्थाल् छन्दसि ( पा० सू० ५-३-१११ ) । प्रत्नादिभ्य इवार्थेऽयं थाल् । तत्र पूर्वशब्दोऽपि द्वन्द्वघटको न तु प्रत्नशब्दः पूर्वो यस्येति बहुव्रीहिः । इमशब्दार्थमाह—*इमशब्द इति ।

*प्रकर्षप्रकर्ष इति । प्रकर्षे विद्यमानात्प्रशब्दात्प्रकर्षे तरबित्यर्थः ।

इति लोपो न ।

स्वार्थे इति । प्राशस्त्यविशिष्टे स्वार्थे इत्यर्थः । "सस्नौ प्रशंसायाम्" ( पा० सू० ५-४-४० ) इत्यतस्तदनुवृत्तेः ।

अनसं ( पा० सू० ५-४-१०३ ] । ब्रह्मणः साम, देवस्य छन्दांसीति विग्रहः ।

बहुप्रजा इति । बहुव्रीहिः । इति पञ्चमः ॥

अथ षष्ठः ।

(१)( छन्दसि वर्तीति । "लिटि धातोः" [पा०सू०६-१-८] इति सूत्रे भाष्ये स्पष्टमेतत् । "तुजादीनाम्" ( पा० सू० ६-१-७ ) इत्यत्रापि 'छन्दसीति वक्तव्यम्' इति भाष्यम् । )

तुजादीनां [ पा० सू० ६-१-७ ) । *छन्दसि सर्वविधीनां

---

अनसन्तान्नपुंसकात् ( पा० सू० ५-४-१०३ ) । अत्र नपुंसकादिति तत्पुरुषविशेषणम् । "परवल्लिङ्गम्" ( पा० सू० २-४-२६ ) इति तत्पुरुषस्य नपुंसकत्वम् ।

छन्दसि च ( पा० सू० ५-४-१४२ ) । अवयोऽर्थमिदम् । उभयतो दत इति । उभयतो दन्ता इत्यर्थः ।

ऋतश्छन्दसि ( पा० सू० ५-४-१५८ ) । "नद्यृतश्च" ( पा० सू० ५-४-१५३ ) इति कपोऽयन्निषेधः । इति पञ्चमोऽध्यायः ॥

## अथ षष्ठोऽध्यायः ।

'यो जागार' इत्यत्र 'जागृ'धातोः "लिटि" [ पा० सू० ६-१-८ ] इति विहितस्य द्वित्वस्याभावः ।

तुजादीनां दीर्घोऽभ्यासस्य ( पा० सू० ६-१-७ ) । अस्य सूत्रस्य छान्दसत्वे प्रमाणन्तु 'तुजादिषु छन्दःप्रत्ययग्रहणम्'इति वार्त्तिकमेव । तुजादीनाञ्छन्दसि दीर्घो भवति, स च यस्मिन् प्रत्यये परत इष्टस्तस्य प्रत्ययस्य ग्रहणञ्च कर्त्तव्यमिति अस्यार्थः । अत्र यः प्रत्ययग्रहणमित्यंशः सः'अनारम्भो वा छन्दसि दीर्घत्वस्यापरिगणितत्वात्' इत्यनेन प्रत्याख्यातः । "न हि दीर्घत्वस्य परिगणनङ्कर्तुं शक्यम् । अन्येषामपि छन्दसि दीर्घत्वं दृश्यते-पूरुषो नारक इति । येषाञ्चारभ्यते तेषामपि तस्मिन् प्रत्यये क चिन्न दृश्यते मामहान उक्थपात्रम् ममहान इति च" इति । तत्र प्रत्ययग्रहणस्य प्रत्याख्याने यथोक्तन्तथाह—*छन्दसि स-

---

( १ ) कंसान्तर्गतो ग्रन्थ आदर्शपुस्तके नास्ति ।

वैकल्पिकत्वात् मगहान इत्यपि ।

मान्हुव इति । आङ्पूर्वात् ह्वयतेर्लेटि आत्मनेपदोत्तमैकवचने "बहुलं छन्दसि" (पा० सू० २—४—७३ ) इति शपो लुकि संप्रसारणे उवङ् । *न च भवति ह्वयामि मरुतः शिवानिति ।

रेवानिति । रयेर्यस्य संप्रसारणे इकारेण पूर्वरूपे आद्गुणे "छन्दसीरः"(पा०सू०८-२-१५)इति वत्वम् । *तत्र विहितविशेषणाश्रयणात् ।

चायः की ( पा० सू० ६-१-३५ )। *चायतेश्छन्दसि बहुलं कीत्यादेशः ।

स्पर्द्धेर्लङ्गीति । *अपपूर्वस्य स्पर्द्धेः संप्रसारणमकारलोपे "बहुलं छन्दस्य" [ पा० सू० ६-४-७५ )इत्यडभावः । द्वे पदे अपेति, स्पृधेथामिति । *प्रकारान्तरं मनोरमायाम् । लिट्युसीति । *संप्रसारणाकारलोपौ निपात्येते इति शेषः । आनर्चुरानर्हुरिति भाषायाम् । थासीति । अभ्यासस्य सम्प्रसारणम*निट्त्वञ्च निपातनात् । थासः से, षत्वम् । चुच्युविषे इति भाषायाम् । णलीति । *अभ्यासस्य संप्रसारणं निपातनात् । तत्याजेति भाषायाम् । निष्ठायामिति । आद्ये श्राभावोऽन्त्ये ह्रस्वो निपातनात् । बहुपु सोमेषु श्राभावोऽन्यत्र ह्रस्व एव । सोमादन्यत्र क्वचिदेकस्मिन्नपि श्राभावः-'यदि 'श्राता जुहोतन' इत्यादौ ।

---

वविधीनामिति । 'तूतुजानः' इत्यत्र तुज्धातोर्लिट् तस्य कानच् । एवमेव मह-धातोर्लिटि मामहानमित्यपि । तूतावेत्यत्र तु सौत्रात् 'तु'धातोर्लिट् ।

बहुलं छन्दसि ( पा० सू० ६-१-३४ ) । ह्वः सम्प्रसारणमिति वर्त्तते । बहुलग्रहणस्य फलमाह—*न च भवतीति ।

ननु "छन्दसीरः" ( पा० सू० ८-२-१५ ) इति वत्वमिवर्णान्तात्परस्य विधीयते रेवानित्यत्र तु न तथेति कथं वत्वमत आह—*तत्र विहितेति ।

चायः की ( पा० सू० ६-१-३५ ) । चायतेः क्यादेशस्य बहुलग्रहणाद्वैकल्पिकत्वमाह—*चायतेरित्यादिना ।

अपस्पृधेथाम् (पा० सू० ६-१-३६) । एतेषु यथायथन्निपातनमित्याह—*अपपूर्वस्येत्यादिना। अत्र "तिङ्ङ्तिङः" (पा० सू० ८-१-२८) इति निघातस्य "यद्वृत्तान्नित्यम्" [पा०सू०८-१-६६] इति निषेधः।*प्रकारान्तरमिति । नात्रापशब्दः पूर्वपदङ्किन्तु स्पृध्धातोर्लङि द्विर्वचनं रेफस्य सम्प्रसारणमकारस्य लोपश्च निपात्यते । एवञ्चेदमेकमेव पदमिति । आनृचुरित्यस्य सिद्धये आह—*सम्प्रसारणेत्यादि । क्यादिनियमादिट्प्राप्तावाह—*अनिट्त्वञ्चेति । 'तित्याज' इत्यत्राभ्यासे इकारस्य सिद्धये आह—*अभ्यासस्येति । श्रीञ्धातोराशीर्त्त इति रूपं

भ्राता इति बहुत्वमविवक्षितम् । सोमे तु बहुत्व एवेति भाष्ये स्पष्टम् । निष्ठायाश्चेति । *शिरादेशो निष्ठाया नत्वाभावश्च निपातनात् ।

चखादेति । *व्यत्ययेन परस्मैपदम् । आत्वस्यानैमित्तिकत्वेन "द्विर्वचनेऽचि" [ पा० सू० १-१-५९ ) इत्यस्याभावादभ्यासेऽवर्णान्तता । (१)[चिखादेति क्वचित्कोऽपपाठः ।] इदं पदमञ्जर्यां स्पष्टम् ।

शीर्षं ( पा० सू० ६-१-६० ) । छन्दसि सर्वविधीनां वैकल्पिकत्वाच्छिरस्शब्दस्यापि वेदे प्रयोगः ।

वाराहीति । वराहस्य विकार इत्यञन्तान्ङीप्, द्विवचने पूर्वसवर्णदीर्घः । उपानहौ विशेष्ये । मानुषीरिति । जसि पूर्वसवर्णदीर्घः । शर्म्यं चेति । *पूर्वत्वाभावे विकल्पविधानसामर्थ्यात्पूर्वसवर्णदीर्घो न, तयोरत्र विषये विशेषाभावात् ।

या ते इति । यानि ते इत्यर्थः । शेर्लोपे *प्रत्ययलक्षणेन नुमि "सर्वनामस्थाने च" ( पा० सू० ६-४-८ ) इति दीर्घे नलोपः ।

त्वा एमनिति, त्वा ओम्ननिति च विग्रहः ।

---

यथा सिध्यति तथाह—*शिरादेश इति ।

अनुदात्तेत्त्वलक्षणात्मनेपदनिवृत्तये आह—*व्यत्ययेनेति ।

*अजन्तादिति । "प्राणिरजतादिभ्यः" ( पा० सू० ४-३-१५४ ) इति सूत्रविहिताजन्तादित्यर्थः । मानुषीरिति प्रथमाबहुवचनमत्र । मनुशब्दात् "मनोर्जातौ" ( पा० सू० ४-१-१६१ ) इत्यञ् मनुशब्दस्य षुगागमश्च । बाधकस्यामिपूर्वत्वस्याभावे बाध्यस्य "प्रथमयोः" (पा० सू० ६-१-१०२)त्यस्याप्रवृत्तये आह—*पूर्वत्वाभाव इति ।

*प्रत्ययलक्षणेनेति । अस्य "त्यदादीनामः" ( पा० सू० ७-२-१०२ ) इत्यत्वे इति शेषः । यद्यप्यत्वं शिलोपात्परन्तथाप्यपरनिमित्तकत्वेनान्तरङ्गत्वाच्छिलोप एवादौ भवति । यदि तु "सुपां सुलुक्" ( पा० सू० ७-१-३९ ) इति सूत्रेण लुक् ता ता पिण्डानामित्यादावाकारादेशः, नीत इत्यादौ च पूर्वसवर्णादेशः छान्दसत्वान्नुमभावः, तातेत्यत्र त्यदाद्यत्वञ्च ततः सवर्णदीर्घ इति स्वीक्रियते तदेदं सूत्रञ्च कार्यमिति बोध्यम् ।

एमन्नादिषु ( का० वा० ) । एमन्नादिषु शब्देषु परेषु । त्वेमन्निति त्वा एमन्निति । एवन्त्वाओम्नन्निति परत्र बोध्यम् ।

भय्यप्रवय्ये च छन्दसि ( पा० सू० ६-१-८३ ) । भय्येत्यत्रापादाने "अचो यत्" ( पा० सू० ३-१-९७ ) इति भीधातोर्यति गुणे यान्तादेशो निपात्यते । एवम्प्रपूर्वकाद्वीधातोर्यत् प्रवय्येत्यत्र बोध्यः । अपादाने प्रत्ययस्तु "कृत्यल्युटो

---

[ १ ] कंसान्तर्गतो ग्रन्थ आदर्शपुस्तके नास्ति ।

हृदय्या इति । *अकारस्यायादेशः ।

प्रकृत्यान्तः ( पा० सू० ६-१-११५ )। अतीति वर्त्तते । *प्रकृत्या=स्वभावेन, न विकारमापद्यते इति यावत् ।

अव्यादू ( पा० सू० ६-१-११६ )। अयमिति। इदमः सौ। अवतेर्लोटि अवन्तु ।

आपो जु ( पा० सू० ६-१-११८ ) । *आपो इत्यादीनि लुप्तविभक्तिकानि पृथक्पदानि अनुकरणानि । आपो जुषाणो वृष्णो वर्षिष्ठे इत्येते

---

बहुलम्" ( पा० सू० ३-३-११३ ) इति बहुलग्रहणाद्भवति । *अकारस्येति । हृदशब्दाद्भवार्थे यति सुपो लुकि च कृते हृदशब्दावयवाकारस्येत्यर्थः ।

प्रकृत्यान्तः ( पा० सू० ६-१-११५ ) । "इकोऽसवर्णे" ( पा० सू० ६-१-१२७ ) इति सूत्रे चेन प्रकृत्येत्यनुकृष्यत इति भाष्यकारोक्त्याऽयम्पाठोऽस्तीति निश्चीयते । नान्तःपादमित्यपि पाठः क्व चित् । अस्मिन् पाठे पादमध्यस्थस्य एङो यत्प्राप्तं तन्नेति व्याख्यानेन पूर्वरूपे निषिद्धेऽयादेशोऽपि न भवति । "वाच्छन्दसि" ( पा० सू० ६-१-१०६ ) इति सूत्राच्छन्दसीत्यस्य मण्डूकप्लुत्याऽनुवर्त्तनादस्य छन्दस्येव प्रवृत्तिः । मौलमृक्पादेत्यत्र ऋक्पदं वेदपरम् । प्रकृत्येति पाठे "एङः पदान्तात्" [ पा० सू० ६-१-१०९ ] इत्यतोऽनुवर्त्तमानमेङ इति प्रथमया विपरिणमयितव्यम् । प्रकृत्येति तृतीयान्तम् । प्रकृतिशब्दः स्वभाववाची । 'दुस्त्यजा प्रकृतिर्नृणाम्' इत्यत्र तथा दर्शनात् । तिष्ठेदितिक्रियापदञ्चाध्याहर्त्तव्यम् । तदाह—*प्रकृत्येति । अन्तःशब्दस्याधिकरणशक्तिप्रधानस्य मध्ये इत्यर्थकस्य षष्ठ्यन्तपादशब्देनाव्ययीभावः । स्वभावेनावस्थितिश्चादेशेनानिवर्त्यत्वरूपा । तेन विकारसामान्याभावलाभः । व्यपरे इत्यत्र बहुव्रीहिः, अन्यपदार्थश्चात्र बौद्धस्तत्प्रतियोगिको भेदोऽस्तीत्येतदर्थतो विशेषणम् । मूले एतेऽर्चन्तीति । अत्र एङ् पूर्वपादान्ते, अकारः परपादादौ ।

अव्यादवद्याद [ पा० सू० ६-१-११६ ] । अत्राव्यादित्याद्यनुकरणम् । तेषाञ्च सुबन्तत्वात्समासः । अव्यादित्येतत् अवेराशीर्लिङि रूपम् । अवद्यात् । "अवद्यपण्य" ( पा० सू० ३-१-१२१ ) इत्यत्र निपातितो योऽवद्यशब्दस्तस्य पञ्चम्यन्तस्य । अवक्रमुरिति क्रमुधातोरवपूर्वाल्लिटि तस्योसादेशे छान्दसत्वाद्वित्वाभावे रूपम् । अव्रतेति वृङो लुङि तस्माद्भवे झे"मन्त्रे घस" ( पा० सू० २-४-८० ) इति च्लेर्लुकि यणादेशे ।

यजुष्युरः [ पा० सू० ६-१-११७ ] । एङिति वर्त्तते । *उरोऽन्तरिक्षमिति । सस्य रुत्वे उत्वे गुणः। ननु "प्रकृत्यान्तःपादम्"[पा०सू०६-१-११५] इत्येव सिद्धे प्रकृतसूत्रं व्यर्थमत आह मूले यजुषि पादाभावादिति ।

आपो जुषाणो ( पा० सू० ६-१-११८ )। यजुषीति अतीति च वर्त्तते । प्रकृतसूत्रार्थमाह—*आप इत्यादिना । योगविभागस्य भाष्येऽदर्शनादाह—

शब्दा अम्बिकेशब्दात्पूर्वौ अम्बेऽम्बाले इत्येतौ च यजुषि स्थितावति प्रकृत्येत्यर्थः। अम्बिकेपूर्वे इति चा*स्मादेव निपातनात्पञ्चमीसमासः। आपो इति *जसन्तं, जुषाणो इति स्वन्तं, वृष्णो इति शसन्तं, वर्षिष्ठे इति ङ्यन्तम्, इतरे संबुद्ध्यन्ते, अम्बेऽम्बालिके इति यजुष्येवमेव पठ्यते। अस्मादेवेति। *अम्बे इत्येतद्विषयमिदम्।

अङ्गशब्द इति। *विद्यमान इति शेषः। तदादौ चेति। *षष्ठीतत्पुरुषः। *सूत्रे इतिशब्दस्तच्छब्दसमानार्थः।

कुधपर इति *बहुव्रीहिः, धकारे*ऽकार उच्चारणार्थः। आद्युदात्त इति। "*ऋज्रेन्द्राग्र" (उ० पा०२ सू० १९६) इत्यत्र निपातनादिति भावः।

आङोऽनु (पा० सू० ६-१-१२६)। *विभक्त्यर्थवृत्तेराङोऽत्र ग्रहणमिति हरदत्तः। प्रकृतिभाव इति। तन्मात्रमित्यर्थः। न तु

---

*अस्मादेवेति। *जसन्तमिति। जसन्तानुकरणम्। एवमेव परत्रापि। *अम्बे इत्येतदिति। अम्बाले अम्बिके इत्यनयोस्तु न ह्रस्वस्य प्राप्तिः 'अम्बार्थ द्व्यक्षरं यदि' इत्युक्तत्वादिति भावः।

अङ्ग इत्यादौ च (पा० सू० ६-१-११९)। अत्राङ्गे इति सप्तम्यन्तानुकरणम्। तेनोपस्थितस्य सप्तम्यन्ताङ्गेशब्दस्य स्वान्वययोग्यक्रियाक्षेपकत्वमित्याशयेनाह—*विद्यमान इति शेष इति। *षष्ठीतत्पुरुष इति। तस्य आदिरित्यर्थे। ननु सूत्रे तच्छब्दाभावात्तदादावित्यनुपपन्नमत आह—*सूत्र इति।

अनुदात्ते च कुधपरे (पा० सू० ६-१-१२०)। *बहुव्रीहिरिति। द्वन्द्वघटितो बहुव्रीहिरित्यर्थः। स चानुदात्तेशब्दसमानाधिकरणः। *अकार उच्चारणार्थ इति। अत एवाध्वरशब्देऽपि प्रवृत्तिसम्भवः। अयं सो अग्निरिति। अत्राग्निशब्दो"अङ्गेर्नलोपश्च"(उ०पा०४सू०९९)इति सूत्रेण निप्रत्ययविधानेन साधितोऽन्तोदात्तः, अध्वरशब्दः "फिषोऽन्त उदात्तः" [फि० सू० १-१] इत्यन्तोदात्त इत्युभयत्र शेषनिघातेनाकारस्यानुदात्तत्वम्। अग्रेशब्दस्याद्युदात्तत्वमाह-*ऋज्र इति। रक्नन्तत्वादाद्युदात्त इति।

अवपथासि च (पा० सू० ६-१-१२१)। अवपथासीति थासान्तानुकरणात्सप्तमी। मूले थासि लङीति। अत्र पाठक्रमादर्थक्रमो बलीयानिति लङि थासीति विवक्षितम्।

आङोऽनुनासिकः (पा० सू० ६-१-१२६)। अत्राऽऽङ इति ङिन्निर्देशान्ङित एव ग्रहणम्। स च 'वाक्यस्मरणयोरङित्' इतिलक्षणलक्षिताङ्भिन्नः। एवञ्च 'अभ्रआं अपः' इत्यत्रेषदर्थाद्यभावात्सप्तम्यर्थद्योतक उदाहरणमित्याशयेनाह—*विभक्त्यर्थेति।

ह्रस्वोपि।

एष स्य इति। *एष स भानुरित्यर्थः।

*"उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्" (प० भा०) इत्याह—चन्द्रशब्दस्येति।

विष्वग्देवयोरिति। *इदं सर्वनाम्नोप्युपलक्षणं, तदाह—विश्वाचीति। विश्वमञ्चतीति विग्रहः। *बहुलग्रहणादन्यत्रापि क्वचित्। तेन कद्रीची सिद्धा।

सधस्थमिति। *सह तिष्ठतीत्यर्थः।

पथि च छं (पा० सू० ६-३-१०८)। "विभाषापुरुषे" [पा० सू० ६-३ १०६) इत्यतो विभाषेति वर्त्तते, चात् का।

साढ्यै (पा० सू० ६-३-११३)। *द्वयोश्चेति। अस्य=आचार्यस्य। एत्य। स्थित इति शेषः। स ढकारः=जिह्वामूलतालुस्थानीयो

---

स्यश्छन्दसि (पा० सू० ६-१-१३३)। "एतत्तदोः" (पा० सू० ६-१-१३२) इति सूत्राद्धलीति सुलोप इति चानुवर्त्तते। स्य इत्यत्र त्यदाद्यत्वेन त्यदो दकारस्याकारे पररूपे "तदोः सः सौ" [पा०सू० ७-२-१०६]इति सत्वेन निर्देशः। त्यद्शब्दश्च तच्छब्दसमानार्थं इत्याशयेनाह—*एष स भानुरित्यर्थ इति।

ह्रस्वाच्चन्द्रोत्तरपदे (पा० सू० ६-१-१५१)। अत्र चन्द्रशब्दस्येत्यर्थस्य लाभायाह—*उभयनिर्देश इति।

पितरामातरा च (पा० सू० ६-३-३३)। पूर्वपदेऽराङादेशस्य निपातनमत्र उत्तरपदे तु विभक्तेः स्थाने आकारादेशे "ऋतो ङि" (पा० सू० ७-३-११०) इति गुणः।

समानस्य (पा० सू० ६-३-८४)। "सहस्य सः" (पा० सू० ६-३-७८) इत्यतः स इति वर्त्तते। सगर्भ्य इति। समानो गर्भः सगर्भस्तत्र भव इत्यर्थः।

छन्दसि स्त्रियाम्बहुलम् (का० वा०)। नन्वत्र विष्वग्देवयोरित्युक्त्वा 'विश्वाची'इत्युपात्तन्तच्चानुपपन्नमत आह—*इदमिति। तथा च "विष्वग्देवयोश्च" (पा० सू० ६-३-९२) इतिसूत्रस्थश्चकारोऽप्यनुवर्त्तत इति भावः। बहुलग्रहणफलमाह—*बहुलग्रहणादिति।

सध मादस्थयोः (पा० सू० ६-३-९६)। अत्र सधेति लुप्तविभक्तिको निर्देशः। सधमाद इत्यस्य सह माद्यन्ति हृष्टा भवन्ति देवा अस्मिन्नित्यर्थः। मदीधातोरधिकरणे "हलश्च" (पा० सू० ३-३-१२१) इति घञ्। यज्ञवाची चायं शब्दः। मादेत्यकार उच्चारणार्थः। तेन मादयतेः क्विबन्ते 'सधमादो वहन्तु' इत्यत्रापि सधादेशः। *सह तिष्ठतीति। स्थाधातोः कर्त्तरि कः।

साढ्यैसाढ्वासाढा (पा० सू० ६-३-११३)। एते त्रयः शब्दा निपा-

ङः। जिह्वामूलन्तालु चाचार्य आह स्थानं ढकारस्य तु। वेदे मित्र इत्युपक्रमात्। स एव स्वरद्वयमध्यग ऊष्मणा (१)सम्प्रयुक्त ऊष्मप्रयोगे जात इत्यर्थः। यद्वा स एव लकारो हकारेणोष्मणा संयुक्तो ळ्हकारतामापद्यतेऽतोऽस्याचार्यस्य मतेन ढकारो ळ्हकारतां यातीत्यर्थः।

छन्दसि च ( पा० सू० ६-३-१२६ )। *अष्टन इति दीर्घ इति चानुवर्त्तते। फलितमाह—आत्वं स्यादिति। नलोपे कृते टकाराकारस्य दीर्घः।

ऋचितु [ पा० सू० ६-३-१३३ ]। ऋग्वेदे इत्यर्थः। अष्टानां दीर्घः। थादेशस्येति। "तस्थस्थमिपाम्" [पा० सू० ३-४-१०१]इत्यनेन।

---

त्यन्ते। तत्राध्यायात् क्त्वाप्रत्ययस्य ध्यै इत्यादेशो निपात्यते, "सहिवहोरोत्" ( पा० सू० ६-३-११२ ) इत्योत्वाभावश्च। सर्वत्र ढत्वष्टुत्वढलोपदीर्घाः। तृतीयस्याद्युदात्तस्य श्रवणेन तृन्नन्तत्वम्। अत एव 'भूरिचक्र' इति मन्त्रे साढेत्यर्थकं साहेत्याद्युदात्तम्पठ्यते। 'शत्रूणामभिभविता'इति तद्भाष्ये व्याख्यातम्। अत्र इतिशब्दः प्रकारे। तेन निष्ठायामपि निपातनमिदम् असाढमुग्रं सहमानमित्यादि। ढकारस्य स्थाने हकारादेशविधायकवचनस्याष्टाध्याय्यामभावेऽपि प्रातिशाख्यीयवचनेनास्य सिद्धिरित्याह—*द्वयोश्चेतीति।

छन्दसि च ( पा० सू० ६-३-१२६ )। *अष्टन इतीति। "अष्टनः संज्ञायाम्" ( पा० सू० ६-३-१२५ ) इत्यतोऽष्टन इति "[illegible]" ( पा० सू० ६-३-१११ ) इत्यतो दीर्घ इति चानुवर्त्तते। न चाष्टनो नलोपस्यासिद्धत्वं शङ्क्यम्। सुप्त्वतद्व्याप्यधर्मावच्छिन्ननिमित्तकादेविधिभिन्नत्वादस्य दीर्घत्वस्येति "नलोपः सुप्"(पा० सू० ८-२-२) इति सूत्राविषयत्वात्। 'अष्टापदी'इत्यत्र अष्टौ पादा अस्या इति बहुव्रीहौ "संख्यासुपूर्वस्य" ( पा० सू० ५-४-१४० ) इति पादशब्दान्त्यस्य लोपे "पादोऽन्यतरस्याम्" ( पा० सू० ४-१-८ ) इति ङीप्।

ओषधेश्च ( पा० सू० ६-३-१३२ )। न च "कृदिकारात्" (का० वा०) इति ङीषि गतार्थता, अन्तोदात्तत्वापत्तेः। प्रकृतप्रयोगे ङीषोऽभावे तु "लघावन्त" ( फि० सू० २ ) इत्याद्युदात्तता सिध्यति।

ऋचि तुनुघ ( पा० सू० ६-३-१३३ )। घशब्दोऽत्र न कृत्रिमार्थग्राहकः घशब्दस्यैव ऋग्वेदे दीर्घदर्शनात्। स्यालादिति भार्याभ्रातृवाचकात्पञ्चमी। थादेशस्य ङित्त्वपक्षे इति मूले। भरतेत्यत्र लोण्मध्यमपुरुषबहुवचनस्य थस्य "तस्थस्थमिपाम्" ( पा० सू० ३-४-१०१ ) इति तादेशो "लोटो लङ्वत्" ( पा० सू० ३-४-८५ ) इति लङ्वद्भावात्। ङित्त्वमस्य "सार्वधातुकमपित्" (पा० सू० १-२-४) इत्यनेन। सार्वधातुकत्वञ्च "छन्दस्युभयथा" ( पा० सू० ३-४-११७)

---

[ १ ] 'ऊष्मणा सह प्रयुक्त ऊष्मयोगे' इत्यादर्शपुस्तके।

इकः सुञि (पा० सू० ६-३-१३४)। ऋचीति। "अन्येषामपि" (पा० सू० ६-३-१३७) इति सूत्रे 'मन्त्रे' इति निवृत्तमिति हरदत्तोक्तेर्मन्त्र इत्यस्यानुवृत्तिरेव युक्ता।

द्व्यचोऽतः (पा० सू० ६-३-१३५)। द्व्यचस्तिङन्तस्यातो दीर्घः। मन्त्रे इति। ऋग्रूपे इत्यर्थः। द्व्यच इति किम्?, अश्वा भवत वाजिनः।

धातणामिति। वृत्तिकृतस्तित्वतस्तोरत्रानुवृत्तिस्त्वयुक्तेति भावः।

षपूर्वस्याच इति। *दीर्घश्रुत्योपस्थितस्याच इत्यस्य षपूर्वस्येति विशेषणम्, उपधाया इति च। अत एव पुँल्लिङ्गाविरोधः।

जनितेति। जनयितेत्यर्थः। तृचि रूपम्।

(१)शमिता च (पा० सू० ६-४-५४)। *यज्ञविषये प्रयोगे मन्त्रे इडादौ णिलोपो निपात्यते (२)। सूत्रे प्रथमैकवचनमविवक्षितम्। 'शमितारो यदत्र सुकृतं' 'शमितृभ्यश्चैवेनं शामित्रम्' इत्यादिदर्शनात्।

वियूयेति। युमिश्रणे। विप्लूय। विप्लुत्येत्यर्थः।

आनडिति। *नशे रूपम्। आवरिति। वृञो लुङि "मन्त्रेघस"

---

इति वैकल्पिकम्। एवञ्चातिदिष्टङित्त्वादयं तङिति न तु तङ्प्रत्याहारघटकः। एवन्निर्देशस्य फलमाह—तेनेति। तङितिनिर्देशेनेत्यर्थः। शृणोतेति। अत्र "तप्तनप्तनथनाश्च" (पा० सू० ७-१-४५) इति तबादेशः। पित्त्वान्न ङित्त्वम्। उरुष्यशब्दः कण्ड्वादियगन्तो रक्षणार्थः। ततो लोट्। तस्य हिः। तस्य "अतो हेः" (पा० सू० ६-४-१०५) इति लुक्। न इत्यस्य "नश्च धातुस्थो" (पा० सू० ८-४-२७) इति णः।

इकः सुञि (पा० सू० ६-३-१३४)। मन्त्र इत्यनुवर्त्तते। तेन ऋचि मन्त्रेऽस्य प्रवृत्तिः। सुञ् चात्र निपातः। अत्रैव सुञो ग्रहणार्थस्तत्र ञकारः।

वाषपूर्वस्य निगमे (पा० सू० ६-४-९)। अत्र षपूर्वस्येति पुँल्लिङ्गस्योपपत्तिमाह—*दीर्घेत्यादिना।

शमिता यज्ञे (पा० सू० ६-४-५४)। अत्र यन्निपात्यते तदाह—*यज्ञविषय इति।

युप्लुवोः [पा० सू० ६-४-५८]। "ल्यपिलघु" (पा० सू० ६-४-५६) इत्यतो ल्यपीति वर्त्तते।

*नशे रूपमिति। लुङन्तस्येति शेषः। अत्र हि नशधातोर्लुङि तस्य तिङ इकारलोपे च्लेः "मन्त्रे घस" (पा० सू० २-४-८०) इति लुकि

---

(१) 'इति हेति' इत्यादर्शपुस्तके पाठः।

(२)'विवरणमिति यज्ञविषयशमनार्थत्वात् प्राप्तिः' इत्यधिकमादर्शपुस्तके।

[पा० सू० २-४-८०]इति च्लेर्लुकि रूपम् । अमाङ्योगेपीति । *अपिशब्दान्माङ्योगेऽपि ।

ननु परत्वाद्रेभावे कृतेऽनजादित्वादालोपो न प्राप्नोतीत्यत आह–रेभावस्येति । नन्वेवं रेभावे कृते तस्यैवेट् प्राप्नोति । न च रेभावो व्यर्थः क्रादिष्वनिट्सु चरितार्थत्वादत आह–अत्रेति । ननु लाक्षणिकत्वात् 'लक्ष्येलक्षणस्य'इति न्यायाच्च कथं रेभावः पुनरत आह–तदर्थश्चेति । द्विवचनसामर्थ्यात्परिभाषाद्वयस्याप्यप्रवृत्तिरिति भावः ।

क्ङितीति । अजादावित्यर्थः । *वितत्निर इति । वितेनिर इत्यर्थः । लोपविधानसामर्थ्यात्तस्यासिद्धत्वेप्येत्वाभ्यासलोपौ न। पप्तिमेति । लिट् मस इट्, पेतिमेत्यर्थः ।

श्रुशृणु [ पा० सू० ६-४-१०२ ]। एभ्यो हेर्धिः स्याच्छन्दसि । श्रुधीहवमिति ।"अन्येषामपि" ( पा० सू० ६-३-१३७ ) इति दीर्घः । 'पॄ' पालनादौ । उरुणस्कृति । "नश्च धातुस्थोरुषुभ्यः" ( पा० सू० ८-४-२७ ) इति णत्वम् । 'शृणुधि' इत्यत्र धिभावविधानसामर्थ्याद् "उतश्च" ( पा० सू० ६-४-१०६ ) इति लुप्न । इतोऽन्यत्र व्यत्ययेन शप्, "बहुलं छन्दसि" [ पा० सू० २-४-७३ ] इति लुक् ।

---

हल्ङ्यादिलोपे "नशेर्वा" (पा० सू० ८-२-६३) इति कुत्वाभावपक्षे षत्वजश्त्वयोश्चर्त्वेन टः ।

अमाङ्योगेऽपीत्यपिशब्दसङ्ग्राह्यमाह—*अपिशब्दादिति । 'जनिष्ठाः' इत्यत्र जनेर्लुङ् थास् । 'अवाप्सुः' इत्यत्र वप्धातोः कर्मणि लुङ् तस्य व्यत्ययेन परस्मैपदम्माङ्योगेऽप्यटो निषेधाभावः । युष्माकं क्षेत्रे भार्यायां परेषां बीजानि रेतांसि उप्तानि मा भूवन्नित्यर्थः ।

इत्योरे ( पा० सू० ६-४-७६ ) । इरे इत्यस्य झादेशस्यानुकरणम् । तस्य इरे च इरे चेति एकबुद्धिविषयत्वेन सहविवक्षायामेकशेषः ।

तनिपत्योः [ पा० सू० ६-४-९९ ]। *वितत्निरे इति । तनु विस्तारे । लिटः प्रथमपुरुषबहुवचनम् ।

श्रुशृणु ( पा० सू० ६-४-१०२ )। एभ्यो हेर्द्धिः स्यात् । "श्रुधीहवम्' इत्यत्र "बहुलञ्छन्दसि" ( पा० सू० २-४-७३ ) इति शपो लुक् । 'शृणुधि' इत्यत्र "श्रुवः शृ च" ( पा० सू० ३-१-७४ ) इति श्नुप्रत्ययः शृभावश्च । "उतश्च प्रत्ययात्" [ पा० सू० ६-४-१०६ ) इति हेर्लुक् तु न । विधानसामर्थ्यात् । रायस्पूर्धि । पॄधातोर्लोट् हेर्द्धिः शपो लुक् । "उदोष्ठ्य" ( पा० सू० ७-१-१०२ ) इत्युत्वम् ।

अङित इति हेर्विशेषणम् । *छन्दसि पक्षे पित्त्वादङित्त्वम् । अत एव 'रारन्धि' इत्यत्र नलोपो न । शपो लुगिति । "बहुलं छन्दसि" ( पा०सू० २-४-७३ ) इति ।

आङिति टाप्सञ्ज्ञा । (१)त्मन्या समञ्जन्नित्याङोऽन्यत्रापि लोपदर्शनादाङीति व्यर्थम् । आत इत्यनुवृत्तेरादेरित्यपि व्यर्थम् ।

ऋत्व्यवास्त्व्य ( पा० सू० ६-४-१४५ ) । ऋतुवास्तुशब्दयोर्भवार्थे यति यणादेशो निपात्यते वास्तोरणि च । इति षष्ठः ।

अथ सप्तमोऽध्यायः ।

पक्षे इति । *सर्वविधीनां छन्दसि वैकल्पिकत्वात् । दुह्रे इति । झस्यात् तलोपे रुटि अतो गुणे । अदृश्रमिति । इरित्वादङ् ।

देवेभिरिति । अतो न भवति, क्वचिदनतोऽपि भवति नद्यैरिति ।

क्त्वापि (पा० सू० ७-१-३८) ।*अपिना ल्यबपि । उद्धृत्य तान्

---

ननु "सेर्ह्यपिच्च" ( पा० सू० ३-४-८७ ) इति ह्यादेशस्यापित्त्वविधानात्कथमङित्त्वमत आह—*छन्दसि पक्ष इति ।

मन्त्रेष्वाङ्यादेरात्मनः (पा० सू०६-४-१४१) । *आङोऽन्यत्र=सप्तम्येकवचने ।

ऋत्व्यवास्त्व्य (पा०सू०६-३-१७५) । अत्र निपातनं येषां कार्याणान्तानि यथायथन्द्रष्टव्यानि । मयटो मकारस्य लोपे यस्येति लोपस्तु न । मलोपस्यासिद्धत्वात् । मकारस्य लोपे यस्येति लोपेऽपि रूपस्य सिद्धिर्वा । इति षष्ठोऽध्यायः ॥

## ॥ अथ सप्तमोऽध्यायः ॥

पक्षे इति यन्मूलेऽभिहितन्तदुपपत्तिमाह—*सर्वेति । 'दुह्रे' इत्यत्र दुहेर्लट् । तस्य झः । टेरेत्वम् । अदृश्रमित्यत्रेरित्त्वादङि "ऋदृशोऽङि गुणः" ( पा० सू० ७-४-१६ ) इति गुणस्तु न । बाहुलकात् । यद्वा बाहुलकत्वाद्दृशेरक् । व्यत्ययेन बहुवचनस्यैकवचनम् ।

क्त्वापीत्यपिशब्दसङ्ग्रह्यमाह—*अपिनेति । अत्र छन्दसि सर्वविधीनां वैकल्पिकत्वेन ल्यबादेशेऽकृते रूपस्य सिद्धौ क्त्वाग्रहणञ्छान्दसत्वलभ्यस्याभावस्यानुवादः । अस्य फलन्तु यथा क्वचिल्ल्यबभावेऽपि साधुत्वन्तथा छान्दसत्वादेवासमासेऽपि ल्यपः साधुत्वबोधनम् । तेनाज्येनाक्षीणि अज्येति शब्दः साधुर्भवति । तथा 'विनायकम्पूज्य' इति च भवति । अपिशब्दः सर्वत्रा-

---

( १ ) 'त्मन्या समंयीन्' इति पाठ आदर्शपुस्तके ।

जुहोतीति ॥

**सुपांसु** ( पा० सू० ७-१-३९ ) । सुपां स्थाने एते आदेशा इत्यर्थः । पन्था इति । जसः स्थाने सुः, *छान्दसत्वात्सर्वादेशः । *उका रोच्चारणसामर्थ्येन भौतपूर्विकानेकाल्त्वेन वा ।"व्यत्ययो बहुलम्"(पा० सू० ३-१-८५)इत्यस्यायं *प्रपञ्चः।*सुपां सुपा इत्याद्यप्येवम् । पूर्वसवर्ण इति । *आन्तर्यादीकारस्ततःसवर्णदीर्घः।*'परमे व्योमन्'इत्यत्र *पूर्वसवर्णे दकारे"नङि" ( पा० सू० ८-२-८ ) इति निषेधान्नलोपाभावे संयोगान्तलोपेन सिद्धावपि *संयोगान्तलोपस्यासिद्धत्वाल्लुगेवेति बोध्यम् । *यत्सुन्वन्तीत्यादौ यत् इ इति स्थिते पूर्वसवर्णे दकारे *स्मिन्नापत्तिरिति तदर्थमनेकालमा*द्यर्थञ्च लुगावश्यक इति दिक् । यमिति प्राप्ते इति । अम आत् "न विभक्तौ ( पा० सू० १-३-४ ) इति *इत्वनिषेधः ।

---

भावस्यैव साधुत्वम्मा भूदिति क्रियते ।

सुपामिति षष्ठीनिर्देशादलोन्त्यपरिभाषाबाधाभावायाह—*छान्दसत्वात्सर्वादेश इति । प्रकारान्तरमप्याह-*उकारेति । *अयमिति । प्रकृतो योग इत्यर्थः । न केवलम्प्रकृतसूत्रस्यैव न तत्प्रपञ्चत्वङ्किन्तु भाष्योक्तवार्त्तिकस्यापीत्याह—*सुपां सुपेति । इदमुपलक्षणम् । तिङां तिङो भवन्तीत्यपि तस्य प्रपञ्चः । *आन्तर्यादिति । तृतीयैकवचनस्य स्थाने प्रमाणत आन्तर्यादीकार इत्यर्थः । *पूर्वसवर्णे दकार इति । प्रकृतसूत्रस्थभाष्ये "इकारस्यान्तर्यतो दकारः" इत्युक्तन्तेनाचामपि घोषसम्वारनादाल्पप्राणत्वम् । घोषत्वाद्यभावे निरनुनासिकाल्पप्राणस्तकारोऽपि स्यात् । अल्पप्राणत्वास्वीकारे दधौ पर्यायेण स्याताम् । अचां घोषत्वे "परः सन्निकर्षः" ( पा० सू० १-४-१०९ ) इति सूत्रस्थं भाष्यमपि प्रमाणम् । तत्र हि—ह्रादाविराम इतिन्यासपक्षे पचतीत्यत्र द्वयोर्घोषयोर्मध्येऽघोषस्य चकारस्य सत्त्वात्संहिता संज्ञा न प्राप्नोति" इत्युक्तम् । तत्रैव कैयटः—"प्रयत्नविशेषजनितो वर्णाविरमेप्यनुकरणरूपो वर्णान्तरोच्चारणेऽप्यनुवर्त्तमानो घोषो ह्राद इत्युच्यते । संहितासंज्ञाऽभावे तु तदधिकारीयस्य स्वरितत्वस्याप्राप्तिः स्यादिति भावः । नन्वेवम्पूर्वसवर्णेन 'परमे व्योमन्' इत्यस्यापि सिद्धौ लुक्प्रवृत्तिवैयर्थ्यमत आह-*परमेव्योमन्नित्यत्रेति । *संयोगान्तलोपस्यासिद्धत्वादिति । प्रकृतसूत्रदृष्ट्या तस्यासिद्धत्वात्प्रकृते लुगेवेत्यर्थः । ननु पूर्वोक्तरीत्या परमेव्योमन्नित्यादेः सिद्धौ लुग्ग्रहणमेव न कार्यमत आह—*यत्सुन्वन्तीत्यादावविति । *स्मिन्नापत्तिरिति । संयोगान्तलोपस्याऽसिद्धत्वात्त्यदाद्यत्वे स्मिन्नापत्तिरित्यर्थः । *अमाद्यर्थञ्चेति । अत्र पूर्वसवर्ण एव चेद्विधीयते तदालोन्त्यपरिभाषयाऽन्त्यादेशत्वापत्तिरिति । *इत्वनिषेध इति ।

*आङः=तृतीयैकवचनस्य । सृग्यमिति । शाखान्तरे आद्युदात्तपाठादिदमेवेति *भाष्यस्वरसः । तत्र च व्यत्ययेन ङीप् ।

शिरवादिति । *मस्यापि मवचनमनुस्वारानिवृत्त्यर्थं स्यादिति

---

स्थानिवद्भावेन विभक्तित्वादित्यत्र तस्येत्त्वनिषेधः । मूले-न युष्मे वाजबन्धवः, अस्मे इन्द्राबृहस्पती इति । "न युष्मेवाजबन्धवोऽनिनित्सुश्च न मर्त्यः अवद्यमधिदीधरत्' इति मन्त्रस्यैकदेशोऽयम् । वाजमित्यन्नस्य नाम । वाजेनान्नदानेन बन्धवः वाजबन्धवः । सम्बोधनान्तश्चेदम् । हे वाजबन्धवो युष्मे युष्मासु निनित्सुश्चानाधि इति सम्बन्धः । विभक्त्यर्थेऽधिशब्देन युष्मे इत्यनेनाव्ययीभावो नित्यः प्राप्तोऽपि बाहुलकान्न । निनित्सुश्च न=निन्दनेच्छाशीलोऽपि न । निन्दतेर्नलोपो बाहुलकात् । एवमेवेडभावश्च । मर्त्यः अवद्यन्त अदीधरत् न धारयत्वित्यर्थे दाधरत्विति धारयतीत्यर्थः । भवदनुसन्तानेन निष्पाद्यत्वात् । द्वितीयमन्त्रेऽपि देवता प्रार्थ्यते । हे इन्द्राबृहस्पती अस्मभ्यं रयिन्धत्तम् । दधातिरिह दानार्थः । ता अनुष्टुप्योर्व्यावयताल् । व्यवस्थावद्ङ् इति । यद्यपि "स्थागापापचो" ( पा० सू० ३-३-९५ ) इति विहितः किन् "आतश्चोपसर्गे" ( पा० सू० ३-३-१०६ ) इति सूत्रविहितस्याङो बाधकस्तथापि व्यवस्थायामितिनिर्देशात्क चिन्न बाधक इति कल्प्यत इति भावः । आङिति तृतीयैकवचनबोधक आङ्शब्द इत्याशयेनाह-*आङ इति । *भाष्यस्वरस इति । प्रकृतसूत्रभाष्ये-"ईकारः दृतिन्न शुष्कं सरसी शयानम्" इतीकारादेशोदाहरणमुपन्यस्तन्तस्यायमाशयः-शाखान्तरे आद्युदात्तोऽप्ययंम्पठ्यतेऽत इदमप्युदाहरणमिति । अत्र कैयटः-सरस्शब्दात्परस्य ङिशब्दस्येकारादेश इति । अत्रेदमवधेयम् "ईदूतौ च सप्तम्यर्थे" ( पा० सू० १-१-१९ ) इति सूत्रभाष्ये ईकाररूपा सप्तमी अस्तीति प्रदर्शनाय'तत्रापि सरसी यदि'इत्यस्य व्याख्यानावसरे"दक्षिणापथे महान्ति सरांसि सरस्य इत्युच्यन्ते" इति भाष्यकृतोक्तन्तत्तु यच्छाखायामयमन्तोदात्तः पठ्यते तच्छाखास्थमिति ।

अमो मश् ( पा० सू० ७-१-४० ) । मशादेशस्याकार उच्चारणार्थश्चेच्छकाराभावे मकारो व्यञ्जनमात्रमादेशोऽयश्चालोन्त्यपरिभाषयाऽमो मकारस्यैव स्यात्तथा चादेशविधानवैयर्थ्यमत आह—*मस्यापीति । अस्यादेशस्य शिरवम्भाष्ये प्रत्याख्यातम् । तथाहि-- "द्विमकारकोऽयन्निर्देशः" इति । न च द्विमकारकनिर्देशपक्षेऽपि सशकारकनिर्देशपक्षवदकारस्योच्चारणार्थतयाऽऽदेशस्य व्यञ्जनद्वयात्मकस्यैव विधेयवाचकपदादुपस्थितेर्न तस्माद्विमकारात्मकादेशोच्चारणे लाघवमिति वाच्यम् । भिन्नजातीयवर्णोच्चारणे प्रयत्नगौरवम्भवति समानजातीयवर्णद्वयोच्चारणे तु न तथा इत्याशयात् । "एकस्यान्त्यमकारस्य च संयोगान्त्यलोपो भविष्यति" । एतद्भाष्यप्रामाण्यात्क चिदझलोऽपि संयोगान्त्यलोप इति । यदि द्विमकारकोऽयन्निर्देशस्तदा वधीं वृत्रमित्यत्र "अस्तिसिचोऽपृक्ते ( पा० सू० ७-३-९६ ) इत्यनेनेटि कर्तव्ये "संयोगान्त्यलोप-

भावः। वधीमिति। *हन्तेर्लुङि *वधादेशः, सिच इट्, मिपोऽमादेशः, तस्य "अस्तिसिचः" (पा० सू० ७-३-९६) इतीट्, सिज्लोपः, सवर्णदीर्घत्वम्।

लोपस्त (पा० सू० ७-१-४१)। *आत्मनेपदेषु विद्यमानतकारस्य लोपः स्यात्। अदुह्रेति। दुहेर्लङो झस्यातो "बहुलं छन्दसि (पा० सू ७-१-८) इति रुट्, तलोपे द्वयोरकारयोः पररूपम्। छान्दसत्वादेव *क्वचिन्न। तत एवात्मानमादृतं कुरुते।

*छन्दसि दृष्टानुविधानादाह-मध्यमपुरुष इति। कृणुतादिति। "धिन्विकृण्व्योर च" (पा०सू० ३-१-८०) इत्युप्रत्ययः। वस्याकारे ऽतोलोपः।

शृणोतेति। पित्त्वेनाङित्त्वाद्गुणः। *अत एव 'दधातन' इत्यत्र "श्नाभ्यस्तयोः" (पा० सू० ६-४-११२) इत्यालोपो न। थादेशस्यैते आदेशाः। यतीत्यस्य व्याख्या यत्संख्याका इति। यतिष्ठनेति सुषामादित्वात् षत्वम्।

एमसीति। इण आङ्पूर्वस्य रूपम्।

यगागमेऽकारो विवक्षितः।

---

स्यासिद्धत्वादपृक्तत्वाभावादीण् न प्राप्नोति" इत्याशङ्क्य "यकारादौ न दुष्यति। किं यकारो न श्रूयते। लुप्तनिर्दिष्टो यकारः" इति तन्नोक्तम्। यकारनिर्देशेनादेशस्यानेकाल्त्वात्सर्वादेशत्वम्भविष्यति यकारस्य लुप्तत्वादपृक्तत्वाश्रयस्येडागमस्य च सिद्धिर्भविष्यति इति भावः। अत्र कश्चित्—संयोगान्त्यलोपस्यासिद्धत्वादपृक्तत्वाश्रयस्य ईडागमस्यानापत्तिरित्येकदेश्युक्तिरियमिति। तन्न। तस्य दोषस्य भाष्यकृतैवोद्भावनङ्कृत्वा मद्वयात्मकादेशपक्षः परित्यक्त इति तस्यैकदेश्युक्तित्वकथनस्य सम्प्रदायविरुद्धत्वात्। वधीमित्यस्य सिद्धिप्रकारमाह—*हन्तेर्लुङीति। *वधादेशः="लुङि च" (पा० सू० २-४-४३) इति वधादेशः। "बहुलञ्छदसि" (पा० सू० ६-४-७५) इत्यडभाव इत्यपि बोध्यम्।

लोपस्त आत्मनेपदेषु (पा० सू० ७-१-४१)। अत्र सप्तम्युपपत्तये विद्यतिक्रियावाचकशब्दमध्याहृत्य व्याचष्टे—*आत्मनेपदेष्विति। *क्व चिन्नेति। तकारलोपः क्व चिन्नेत्यर्थः। मूले—वृत्तिकारोक्तिः प्रामादिकीति। लक्ष्ये तकारस्यैव श्रवणेन तथोक्तिः प्रामादिकीत्यर्थः।

तस्य तात् (पा० सू० ७-१-४४)। मध्यमपुरुषेत्यस्य विशिष्यलाभायाह—*छन्दसीति।

*अत एवन्तनबादेशस्य पित्त्वादेव।

आज्जसेरुक् ( पा० सू० ७-१-५० ) । असुकि कृते जसः सकारस्य श्रवणम्; असुकः सस्य विसर्गः । *'उभयासः' इत्यादौ परत्वादसुकि 'सकृद्गति' न्यायेन पुनः शी न ।

श्रीग्रामण्योरिति पञ्चम्यर्थे षष्ठी । इदं व्यर्थं श्रीणामित्यस्य "वाऽऽमि" ( पा० सू० १-४-५ ) इति नदीत्वेन सिद्धेः । *छन्दस्यापाद्यमानरूपाभावात् । सूतग्रामणीनामित्यपि समाहारद्वन्द्वोत्तरमे*कशेषे सिद्धम् । 'छन्दसि'इति तु "गोः पादान्ते" ( पा० सू० ७-१-५७ ) इति सूत्रे ऋक्पादस्यैव ग्रहणार्थमावश्यकम् । ऋक्पादान्ते वर्तमानगोशब्दात्परस्यामो नुडिति तदर्थः ।

छन्दस्यपि दृ( पा० सू० ७-१-७६ ) । यत्र विहितस्ततोऽन्यत्रापि दृश्यते । *अस्थभिरस्थीन्युत्कृत्य । अस्थन्वतेत्यादि । "अनोनुट्" ( पा० सू० ८-२-१६ ) इति मतुपो नुटि अनङो नस्य लोपः ।

ई च द्विवचने ( पा० सू० ७-१-७७ ) । अस्थ्यादीनामीकार उदात्तो द्विवचने छन्दसि ।

अपरिह्वृता इति बहुवचननिर्देशश्छन्दसि तदन्तस्यैव प्रयोगदर्शनात् ।

---

उभयशब्दस्य सर्वनामत्वाज्जसःशीभावशङ्कावारणायाह—*उभयास इत्यादाविति ।

विकल्पवारणायाह—*छन्दस्यापाद्येति । *एकशेष इति । एवञ्च समाहारद्वन्द्वस्य नपुंसकत्वाद् "ह्रस्वो नपुंसके" ( पा०सू० १-२-४७ ) इति ह्रस्वत्वात्सिद्धमिति भावः ।

*अस्थभिरिति । अनजादित्वादनङोऽप्राप्ताविदम् । क्वचिदविभक्तावपि दृशिग्रहणादयम् । अक्षण्वन्तः अस्थन्वतेत्यादौ । मूले—कीदृङ् इन्द्र इति । "त्यदादिषु दृशः" ( पा० सू०३-२-६० ) इति क्विन् । नुमि सति "क्विन्प्रत्ययस्य" ( पा० सू० ८-२-६२ ) इति नस्य ङः । स्ववानित्यस्य सुष्ठु अवो यस्येत्यर्थः । तुधातोर्वृद्ध्यर्थकादसुनि स्वं तवो वृद्धिर्यस्येति विग्रहः । ततुरिरिति । तृधातोः किन्प्रत्यये "द्विर्वचनेऽचि" ( पा० सू० १-१-५९ ) इति निषेधात्तृशब्दस्यादौ द्वित्वं तदनन्तरमुत्वम् ।

ह्रु ह्वरेश्छन्दसि ( पा० सू० ७-२-३१ ) । ह्वरेरित्यागन्तुनेकारेण निर्देशः । ह्रु इति लुप्तविभक्तिकः ।

सोमे ह्वरितः ( पा० सू० ७-२-३३ ) । इड्गुणाविति । इदमुपलक्षणम् । आदेशाभावोऽपि बोध्यः ।

उत्तभिते "उदस्था" ( पा० सू० ८-४-६१ ) इति पूर्वसवर्णः । माभूदिति । इडिति शेषः । सूत्रे इतिः प्रकारे । तेन क्वचिदीकारोपि विश्वमभ्यमीति वरुण इति वृत्तिः ।

सनिंस (पा० सू० ७-२-६९) । *सनिमिस्रस्य छान्दसत्वादानुपूर्व्या अविवक्षितत्वाच्छन्दस्येवैतान्निपातनम् । पावका इति । पुनन्ति पावयन्ति वेत्यर्थः ।

घोर्लोपो ( पा० सू० ७-३-७० ) । घुसञ्ज्ञकानां लेटि परतो लोपो वा । दधातेर्ददातेश्च लेट् तिप् "इतश्च लोपः परस्मैपदेषु" ( पा० सू० ३-४-९७ ) इतीकारलोपः । लोपेप्याडागमेन 'ददात्' इत्यस्य सिद्धौ वाग्रहणं स्पष्टार्थम् ।

जसादिष्वित्यादिशब्दः प्रकारे । तेन दर्वे दर्वि अम्बेत्यादि सिद्धम् । नाभ्यस्तस्येत्यादि । जुजोषत इत्युदाहरणम् ।

अपुत्रादीनामिति । आदिग्रहणस्य प्रयोजनान्तरं मृग्यमिति हरदत्तः ।

यजुर्वेदस्थे= *यजुर्वेदीयकठशाखास्थे ।

कव्यध्वर ( पा०सू०७-४-३९ ) । कव्येत्युदाहरणम् ।

विभाषा ( पा०सू०७-४-४४ ) । जहातेर्हिरादेशः स्यात् क्त्वि । हात्वेति पाठे छान्दसत्वादीत्वाभावः ।

सुधितमिति कर्मधारय इति हरदत्तः । नेमइत्यर्थे । नेमधिते कर्म-

---

बभूथाततन्थ ( पा० सू० ७-२-६४ ) । वृञः क्रादिनियमादिडभावे नियमार्थमिदम् ।

सनिंससनि (पा० सू०७-२-६९) । अस्य सूत्रस्य छान्दसत्वे प्रमाणमाह—*सनिमित्वस्येति । सर्वमा इति । अस्तेर्लेड् तिप् ईडभावेऽपृक्तत्वाद्धल्ङ्यादिलोपः शपो लुक् ।

जसादिषु छन्दसि (का०वा०) जसादिनिमित्तके कार्ये छन्दसि वेति वक्तव्यम् । अत्रादिशब्दः प्रकारे । तेन पूर्वयोगनिर्दिष्टविषयेऽपि विकल्पः । दर्वे दर्वि अम्बे ऽम्ब इत्यादौ यथा ।

देवसुम्नयोः (पा०सू०७-४-३८) । इह यजुःशब्दस्य वेदोपलक्षणत्वे सति यादृशो वाक्यार्थस्तमाह—*यजुर्वेदीयेति ।

कव्यध्वर ( पा० सू० ७-४-३९ ) । कविअध्वरपृतना एषामन्त्यस्य लोपः स्यात्क्यचि. ऋग्वेदे ।

सुधितवसुधित ( पा० सू० ७-४-४५ ) । त्रिषु "घुमास्था ( पा० सू०

धारयः। मान्निरिति। "पद्दन्नो"( पा०सू०६-१-६३ ) इति मासस्य मासादेशः।

आम्नास्य इति। *धृङः शपः श्लुरभ्यासस्य दीर्घः परस्मैपदश्च निपात्यते, धारयतौ तु श्लुणिलुगभ्यासदीर्घत्वानि,*अन्त्ययोः श्लुणिलुगागमाः,*धृङस्तु श्लुरुक्परस्मैपदानि। *यद्वा धृङो यङ्लुकि *रुगभावमात्रमाद्ये, तन्निपातनमप्राप्तरुगभावस्य बाधाय दर्धर्तीत्यत्र रुग्निपातनं, *दर्धर्षीत्यत्र तु यङ्लुक्पक्षे न किंचिन्निपात्यं किं तु श्लावेव। यङ्लुगन्तस्येति। *लोटीति शेषः। तेन भाषायामिति। *लोडतिरिक्ते च 'बोभवीति' 'बोभोति'इति"यङो वा" (पा०सू०७-३-९४)इति पक्षे ईट्। संपूर्वस्येति। 'संपूर्वत्वमतन्त्रम् आसनिष्यदिति दर्शनात्' इति वृत्तिः। करोतेर्यङ्लुगन्तस्येति। शतरीति शेषः। रिक्तु "रुग्रिकौ च" ( पा० सू०७-४-९१ ) इति सिद्धः। निगागमश्चेति। चादडभावः। बिभर्त्तेरिति। यङ्लुगन्तस्य शतरीति शेषः। द्युतेरिति। यङ्लुगन्ताच्छतरीति शेषः। तरिभ्रत इति जसन्तम्। "नाभ्यस्तात्"(पा०सू०७-१-७८) इति नुम् न। मर्मृज्येत्यत्र वृद्ध्यभावोपि छान्दसत्वात्। इतिशब्द एवंप्रकाराणामन्येषामपि सङ्ग्रहार्थः। "ससूव" ( पा० सू० ७-४-७४ ) इत्यपि दाधर्त्यादिष्वेव*पठितुं युक्तम्।

---

६-४-६६ ) इति ईत्वे प्राप्तेऽनेन इत्वन्निपात्यते। धिष्वेत्यत्राभ्यासलोप उत्तरखण्डे इत्वश्च। लौकिके तूत्तरखण्डे "श्नाभ्यस्तयोः" ( पा० सू० ६-४-११२ ) इत्यालोपः; "दधस्तथोः" ( पा० सू० ८-२-३८ ) इति भष्भावः।

दाधर्त्ति पा०सू०७-४-६५)। धृङो यदा त्रयः शब्दास्तदाऽऽह—*धृङ इति। *अन्त्ययोः=द्वितीयतृतीययोः। तत्रापि धृङो निपातनपक्षे आह-*धृङस्त्विति। आद्यस्य प्रकारान्तरेण साधनमाह—*यद्वेति। *रुगभावमात्रमिति। "ऋतश्च" ( पा० सू० ७-४-९२ ) इति प्राप्तरुगभावमात्रमित्यर्थः। तृतीये व्याख्याभेदेन विशेषमाह- *दर्धर्षीत्यत्रेति। *लोटीति शेष इति। 'बोभूतु' इत्युच्चारणादेवं कल्पना। लोटि गुणाभावनिपातनाल्लोट्येव भाषायां गुण इति भ्रमवारणायाह—*लोडतिरिक्ते चेति। अत्र मानन्तु "भूसुवोः" ( पा० सू० ७-३-८८ ) इति गुणनिषेधे सिद्धे गुणाभावनिपातनन्नियमार्थमत्रैव भूधातोर्गुणाभाव इति। तेतिक्ते इत्यत्र यङ्लुक्यात्मनेपदन्निपात्यते। अलर्षीत्यस्य साधनन्तु मूल एवाभिहितम्। एवमुत्तरत्रापि। *पठितुं युक्तमिति। न च "ससूव" ( पा० सू० ७-४-७४ ) इति सूत्रारम्भपक्षे निगम एव निपातनन्दाधर्त्तीत्यत्र पाठे तु ब्राह्मणेऽपि स्यादिति कथमेतदिति वाच्यम्। छन्दस्यापाद्यमानरूपाभावात्।

इकार इति । श्लाविति शेषः । *न च भवति ददातीत्येवं ब्रूयादिति । इति सप्तमः ।

अथ अष्टमः ।

प्रसमु ( पा०सू०८-१-६ ) । समाहारद्वन्द्वः,*अनित्यत्वान्न टच् समासान्तः ।

घस्वेति । *तरप्तमपोरित्यर्थः ।

नसत्तनि ( पा०सू०८-२-६१ ) । *एषां शब्दपराणान्द्वन्द्वः ।

---

बहुलञ्छन्दसि [ पा० सू० ७-४-७८ ] । "निजान्त्रयाणाम्" ( पा० सू० ७-४-७५ ) इति सूत्राच्छ्लाविति वर्त्तते । प्रकृतसूत्रे यद्बहुलमिति तस्य फलमाह—*न च भवतीति । चो ह्यर्थे ॥ इति सप्तमोऽध्यायः ॥

## ॥ अथ अष्टमोऽध्यायः ॥

प्रसमुपोदः ( पा० सू० ८-१-६ ) । ननु "द्वन्द्वाच्चुदषहान्तात्" ( पा० सू० ५-४-१०६ ) इति टच् प्राप्नोतीत्यत आह—*अनित्यत्वादिति । अत्र ज्ञापकमन्यत्र प्रपञ्चितम् । यद्यपीह छन्दसीति न प्रकृतं तथापि द्विरुक्तेन प्रादिना कश्चन विशेषो न द्योत्यतेऽतोऽनर्थका एते पादपूरणमात्रसम्पादकाः । नह्येवंविधस्यानर्थकस्य प्रयोगो लोके दृश्यतेऽतोऽस्य छान्दसत्वमिति विज्ञेयम् । पादस्य पूरणन्निष्पादनन्तस्मिन्, विवक्षिते इति शेषः । पादपूरणे किम् ? । प्रदेवं देव्या धिया ।

छन्दसीरः [ पा० सू० ८-२-१५ ) । छन्दसि सर्वविधीनां वैकल्पिकत्वात्क चिन्नानेन वत्वम् । योऽन्द्रिमां उदनिमां इयर्ति ।

अनो नुट् (पा० सू० ८-२-१६) । छन्दसीति वर्त्तते । अक्षण्वन्त इति । "छन्दस्यपि दृश्यते" (पा०सू०७-१-७६)इत्यनङ् । नुटोऽसिद्धत्वात्पूर्वन्नलोपेऽपि भूतपूर्वगत्या नुट् । तस्यासिद्धत्वाच्च वत्वम् । णत्वम् ।

"स्वं रूपम्" ( पा० सू० १-१-६८ ) इति सूत्रे ऽशब्दसंज्ञेत्युक्तमत आह—*तरप्तमपोरिति । सुपथिन्तर इत्यत्र सुपथिन्शब्दाद्धर्मिपदार्थगतप्रकर्षविवक्षया तरप् । प्रकृत्यवयवनस्य लोपः । न च छन्दसि सर्वविधीनामिच्छानुरोधेन प्रवृत्तेरत्र नलोपाभावेन सिद्धौ नुड्विधानवैयर्थ्यम् । अवग्रहे विशेषात् । भूरिदावत्तर इत्यत्र दाधातोर्वनिप् ।

ईद्रथिनः ( का० वा० ) । रथिन्शब्दस्य ईदादेशः स्यात् । 'रथीतरः' इत्यत्र नलोपापवाद ईकारादेश इति केचित् । तन्न । सवर्णदीर्घे कर्त्तव्ये ईकारादेशस्यासिद्धत्वात्सवर्णदीर्घत्वाभावेन रूपासिद्धिप्रसङ्गात् ।

नसत्त ( पा० सू० ८-२-६१ ) । *एषामिति । स्वंरूपमिति शास्त्र-

निषत्ते "सादिरप्रतेः" (पा०सू०८-३-६६) इति षत्वम् । अवो=रक्षणम् ।

भुवश्च (पा०सू०८-२-७१)। रुर्वा रेफो वा। महाव्याहृतेरिति किम्? भुवो विश्वेषु सवनेषु। *भवतेः "छन्दसि लुङ्लङ्लिटः" (पा०सू०३-४-६) इति वर्त्तमाने लङ् सिप् शप् अगुणश्छान्दसः तत एवाडभावः।

ओम् (पा०सू०८—२—८७)। *अभ्यादानम्=आरम्भः, तत्र वर्त्तमानस्येत्यर्थ इति वृत्तिः। *"न सुब्रह्मण्यायाम्" (पा०सू०—१२—३७) इति सूत्रे कैयटस्तु 'सुब्रह्मण्योम्'इत्यत्र"ओमभ्यादाने" (पा०सू०८-२-८७) इति प्लुतोदात्तत्वं न भवति *तस्यायज्ञकर्मविषयत्वात्'इति वदन्नप्रारम्भेऽपि अनेन प्लुतमाह। *अत एव शुद्धप्रणवजपेऽपि तं प्लुतमेव जपन्ति। *अभ्यादानपदेनायज्ञकर्मोच्यते इति तदाशयं वर्णयन्ति।

---

सत्त्वादेषां शब्दपरत्वम्। एते निपात्यन्त इत्यर्थः। तेन "रदाभ्याम्" (पा० सू० ८-२-४२) इति प्राप्तनत्वस्याभावः। अनुत्तमिति। अत्रापि निष्ठाया नत्वाभावो निपातनादेव। न च "नुदविद" [पा० सू० ८-२-५६] इत्यस्य वैकल्पिकत्वेन पक्षे निपातनाभावेऽप्ययं शब्दः सिध्यतेवेति वाच्यम्। एतन्निपातनसामर्थ्याल्लोकेऽपि न नुदविदेतिविकल्पो नञ्पूर्वत्व इत्याहुः। प्रतूर्त्तमित्यत्र "ज्वरत्वर" (पा० सू० ६-४-२०) इत्यूठ्। यदा तुर्वीत्यस्य तदा "राल्लोपः" [पा० सू० ६-४-२१]। सूर्त्तेत्यत्र निपातनादुत्वम्। नचास्योत्वस्यासिद्धत्वाद्रपरत्वञ्च स्यादिति वाच्यम्। कार्यकालपक्षाश्रयणात्।

अम्नरूध (पा० सू० ८-२-७०)। अम्नस्शब्द ईषदर्थे। नित्यं रुत्वे प्राप्ते रेफार्थमिदम्।

भुवश्च महाव्याहृतेः [पा० सू० ८-२-७१]। महाव्याहृतेः अन्तरिक्षवाचकस्य भुवस् इत्यस्य। महाव्याहृतिभिन्नस्य भुव इत्यस्य साधनिकामाह—*भवतेरिति।

ओमभ्यादाने (पा० सू० ८-२-८७)। अत्र प्लुतश्चत्योपस्थितस्याच इत्यस्य ओमशब्दो विशेषणम्, तेनान्त्यस्य मकारस्य न। वृत्तिमतानुसारेणाह—*अभ्यादानमारम्भ इति। कैयटानुसारिव्याख्यानम्प्रदर्शयन् स्वसम्मतमर्थमाह—*न सुब्रह्मण्यायामितीति। सुब्रह्मण्योमित्यत्र "यज्ञकर्मण्यजपन्यूङ्खसामसु" [पा० सू० १-२-३४] इत्यनेन प्राप्तस्यैकश्रुतिस्वरस्य निषेधमात्रं "न सुब्रह्मण्यायाम्" (पा० सू० १-२-३७) इत्यनेन कार्यम्, स्वरितोदात्तत्वन्तु न विधेयम्, तस्य त्वोमभ्यादान इत्यनेन सिद्धिर्भविष्यतीत्यन्यथासिद्धिशङ्कावारणाय कैयटेनेत्थमुक्तम्। *तस्य=ओमभ्यादान इति सूत्रस्य। *अत एव=तस्य सूत्रस्यायज्ञकर्मविषयत्वादेव। तस्य सूत्रस्य तद्विषयत्वे साधकमाह—*अभ्या-

प्लुतश्रुत्या 'अचः' इत्युपस्थितेरचः प्लुतः मकारस्त्वर्धमात्र इति अर्धचतुर्मात्रोऽयम् ।

येयज्ञकर्मणि (पा०सू०८-२-८८) । यज्ञेतिकिम्?, स्वाध्यायकाले माभूदिति । 'येयजामहे'*इत्यत्रैवायं प्लुत इष्यते । तेनेह न-'ये देवासो दिव्येकादशस्थ ः'इति । 'पित्र्याये स्वधा'इत्यत्रापि भवति एतत्स्थानानापन्नत्वात्तस्य ।

प्रणवष्टेः ( पा०सू०८-२-८९) । *टिस्थानिकस्त्रिमात्र ओंकार ओंकारो वा प्रणव इति *भाष्यादौ स्पष्टम् । इदञ्चाथर्वणप्रातिशाख्ये-

---

दानपदेनेति । *अनेन प्लुतमाहेति । अयज्ञकर्मणि विधीयमान ओमभ्यादान इति प्लुतः प्रारम्भेऽपि भवति न त्वभ्यादानपदस्य प्रारम्भार्थकत्वमिति बोध्यम् । एवञ्च "न सुब्रह्मण्यायाम्"(पा०सू०१-२-३७) इति सूत्रेण सुब्रह्मण्योमित्यत्र यज्ञक्रियायामुच्चारितमन्त्रावयवे स्वरितोदात्तत्वविधानार्थमिदमावश्यकमिति भावः । न च वृत्तिसम्मतमेवाभ्यादानपदस्यारम्भार्थकत्वमस्तु एवञ्च न तेनान्यथासिद्धिरिति वाच्यम् । यज्ञकर्मणि प्रारम्भे प्लुतोदात्तत्वस्य'ओ३म्'इत्यत्र सिद्धावपि जपे प्लुतानापत्तेः । "न सुब्रह्मण्यायाम्" ( पा० सू० १-२-३७ ) इति सूत्रे स्वरितोदात्तत्वस्य तूदाहरणान्तरमप्यस्ति इन्द्र आगच्छेति । अत्र हीन्द्रशब्द आमन्त्रितत्वादाद्युदात्तस्तदेकवाक्यतापन्नशेषनिघातेनाल्याकारस्यानुदात्तस्य "उदात्तादनुदात्तस्य स्वरितः"( पा० सू० ८-४-६६)इत्यनेन स्वरितत्वे कृतेऽनेनोदात्तत्वं क्रियते ।

ये यज्ञकर्मणि ( पा० सू० ८-२-८ ) । उच्चारित इति शेषः । यज्ञक्रियायामुच्चारितो 'ये'शब्दः प्लुतः स्यात् । *इत्यत्रैवायमिति । किमत्र प्रमाणमिति चेद्भाष्यसम्मतं व्याख्यानमेवेति गृहाण । तत्र हि—"ये यज्ञकर्मणीत्यतिप्रसङ्गो भवति । इहापि प्राप्नोति-ये देवासो दिव्येकादशस्था इति । सिद्धन्तु ये यजामह इति ब्रूह्यादिषूपसंख्यानात् । सिद्धमेतत्कथम् । ये यजामहशब्दो ब्रूह्यादिषूपसंख्येयः" इत्युक्तम् । एतेन यत्र यत्रानेन प्लुत इष्यते ते ब्रूह्यादिषु द्रष्टव्याः प्रकृतसूत्रञ्च न कार्यमित्यभिहितम् । एतेन ये देवास इत्यत्र न भवतीति स्पष्टमेव लभ्यते ।

प्रणवष्टेः ( पा० सू० ८-२-८९ ) । यज्ञकर्मणीति वर्त्तते । प्रणवशब्दस्य लोके ओंकारमात्रे प्रसिद्धिसत्त्वादाह—*टिस्थानिक इति । *भाष्यादाविति । तत्र हि-"प्रणव इत्युच्यते । कः प्रणवो नाम?। पादस्य वा अर्द्धर्चस्य वा अन्त्यमक्षरमुपसंहृत्य तदाद्यक्षरशेषस्य स्थाने त्रिमात्रम् ओकारं ओंकारं वा विदधति तम्प्रणवमित्याचक्षते" इत्युक्तम् । अत्र पादस्य वेत्यनेन शास्त्रान्तरे यः प्रणवशब्दार्थः प्रसिद्धः स एवात्राश्रियत इत्युक्तम्, देवतेत्यादिशब्दस्य यथा शास्त्रान्तरप्रसि-

ऽपि स्पष्टम् । *टेरिति तु प्रातिशाख्योक्तटिस्थानिकत्वानुवादः । *हलन्ते इति । तदभावे*टेरित्यननुवृत्त्या*तदन्त्यस्यैव स्यात् । *व्यभिचाराभावाद्धि प्रणवः प्लुतत्वेन न विशेष्यते येनाच्परिभाषाप्रवृत्त्याऽदोषः स्यात् इति भावः ।

याज्या मन्त्रा इति । *याज्यानुवाक्याकाण्डमिति समाख्यातप्रकरणस्था इत्यर्थः । अन्तः किमिति । *यद्यन्तग्रहणं टेरित्यस्य निवृत्त्यर्थन्तदा प्लुतश्रुत्योपस्थितेनाचाऽन्ते विशेषितेऽजन्ताया एव याज्यायाः

---

ष्ठ एवार्थोऽस्मिन्नप्याश्रीयते तथा । अन्त्यमक्षरमुपसंहृत्येति । अक्षरमच् । अन्त्यमचं गृहीत्वा इत्यर्थः । तदाद्यक्षरशेषस्येति । अत्र तच्छन्दोऽक्षरवाची । अक्षरञ्च शेषश्चाक्षरशेषम् । शेषशब्दो हल्बोधकः । स आदिर्यस्य तत्तदादि । तदादि च तदक्षरशेषञ्च तदाद्यक्षरशेषन्तस्य टिसंज्ञकस्येत्यर्थः । न च टिस्थानिकादेशस्यैव चेत्प्रणवसंज्ञा तदा प्रकृतसूत्रे टिग्रहणं व्यर्थमिति वाच्यम् । "वाक्यस्य टेः" [ पा० सू० ८-२-८२ ] इत्यधिकारादलोन्त्यपरिभाषाया उपस्थानाट्टेरन्त्यस्यौकारः स्यात् । कृते तु टिग्रहणे ओकार ओंकारश्च टेरेव भवति टिरेव यष्टिरित्यर्थस्य सम्भवेनालोन्त्यपरिभाषाया अनुपस्थानात्;एवञ्च टिग्रहणमेवोक्तयोर्द्वयोः प्रणवसंज्ञायामुभयोर्विधेयत्वे च मानम् । अच्परिभाषयोपस्थितमजिति टेर्विशेषणमच्सम्बन्धी यष्टिस्तस्येत्यर्थः । वस्तुतस्तु प्रातिशाख्योक्तरीत्या टिस्थानिकस्यैव प्रणवग्रहणेन ग्रहणमिति प्रकृतसूत्रस्थटिग्रहणमुक्तानुवाद एवेत्याशयेनाह—*टेरिति त्विति । मूलोक्तं टिग्रहणप्रयोजनमुपपादयति—*हलन्त इतीत्यादिना । *तदभावे=प्रकृतसूत्रे टिग्रहणाभावे । *टेरित्यननुवृत्त्या । टिपदार्थेऽभेदसम्बन्धेन विशेषणतापन्नो योऽर्थस्तत्तात्पर्यकस्याननुवृत्त्या । तदानीमनुवर्त्तमानष्टिग्रहणमलोन्त्यपरिभाषयोपस्थापितो योऽन्त्यपदार्थस्तस्य विशेषणभूतो योऽर्थस्तत्तात्पर्यको भविष्यतीति भावः । *तदन्त्यस्य=अनुवर्त्तमानटिशब्दार्थान्त्यस्य । ननु प्लुतश्रुत्याऽच्परिभाषोपस्थित्यान्त्यस्याच एवौकारः स्यान्न तु हलोऽत आह—*व्यभिचाराभावादिति । ओंकारस्य त्रिमात्रस्यैव प्रणवपदार्थत्वात् । न चौङ्कारस्य प्लुतौकारघटितस्य न त्रिमात्रत्वमिति वाच्यम् । प्लुताभिन्नः प्रणव इत्यर्थे तस्येहानुपस्थितिः स्यादिति भावः । यदि त्वयमपीष्यत इत्युच्यते तदाऽस्यार्द्धचतुर्मात्रिकस्येष्टत्वेन तस्य प्लुतत्वाभावात् प्लुत इत्यस्यात्रानुपस्थितिकल्पनमेवेति तात्पर्यम् । यदा तु प्लुत इत्यस्याऽननुवृत्तिस्तदा प्लुत इत्यनेन शब्देन विधानाभावादच्परिभाषाया अनुपस्थितिरेव । इदं सर्वं सौत्रटिग्रहणस्य प्रयोजनवर्णनम्प्रातिशाख्योक्तमतभिन्नमताभिप्रायेणेति बोध्यम् ।

याज्यान्तः [ पा० सू० ८-२-९० ) । याज्यापदार्थं व्याचष्टे—*याज्याऽनुवाक्येति । अन्त इति किमिति प्रश्नाभिप्रायमाह—*यद्यन्तग्रहणमिति ।

स्यात् टिविशेषणत्वे त्वनर्थकं टेरन्तत्वाव्यभिचारात् इति प्रश्नः।

ब्रूहि (पा० सू० ८-२-९१)। ब्रूहिस्थानापन्ने 'पित्र्याय३-मनुस्वधा'इति प्रैषेपि प्लुतो भवति, एवं श्रौषट्स्थानापन्ने अस्तुस्वधेति प्रत्याश्रावणेऽपि भवति, एवं वौषडिति वोषट् वौषट् वोक्षट् वौक्षाडित्येवंविधसर्ववषट्काराणामुपलक्षणमिति*हरदत्तः। *'आवह देवान् यजमान' इत्यादौ न प्लुतः। छन्दसि सर्वविधीनां वैकल्पिकत्वात्।

तस्मादिति। *आदिभूतादित्यर्थः 'ओ३श्रा३वय''आ३श्रा३वय' *इत्यनयोरेवायम्। नेह—'अग्निदग्नीन्विहर'इति। *प्लुतमात्रस्य वैकल्पिकत्वात्सिद्धमिदम्। ओं३ स्व३धेति प्रत्याश्रावणे तत्स्थानापन्नत्वा*द्भवत्येव।

*पृष्टप्रतिवचनं=प्रश्नोत्तरम्।

---

अयम्भावः—सौत्रमन्त इति प्लुतश्रुत्योपस्थितस्याच इत्यस्य विशेष्यं विशेषणं वा? नाद्यः। हलन्तेऽस्य सूत्रस्य प्रवृत्त्यभावापत्तेः। न द्वितीयः। अन्ताभिन्नोऽच् तस्येत्यर्थे प्रकरणप्राप्तेन टिनाऽच्पदार्थे विशेषितेऽप्यन्तस्य लाभो भविष्यतीति। उत्तराभिप्रायस्त्वन्तपदसामर्थ्यादत्र सर्वान्त्यस्यैव ग्रहणमिति। तदुक्तम्भाष्ये—'अन्तग्रहणं किमर्थम्? याज्या नाम ऋचो वाक्यसमुदायस्तत्र यावन्ति वाक्यानि सर्वेषां टेः प्लुतः प्राप्नोति, इष्यते चान्त्यस्य स्यादिति; तच्चान्तरेण यत्नन्न सिध्यतीत्येवमर्थमन्तग्रहणम्" इति। अन्तग्रहणसामर्थ्याद्याज्यानामन्तो यष्टिस्तस्य योऽच् तस्य प्लुत इत्यभिप्रायः।

ब्रूहिप्रेष्यश्रौषट् (पा० सू० ८-२-९१)। *हरदत्त इति। तादृशानामुच्चारणस्य याज्ञिकसम्प्रदायसिद्धत्वमत्र मानमिति तद्भावः। भाष्यन्त्वत्रोदासीनम्। अतिप्रसङ्गमाशङ्क्य निराचष्टे—*आवहेति।

अग्नीत्प्रेषणे (पा० सू० ८-२-९२)। आदेरित्यनुवर्त्तते। अग्नीत्प्रेषण इति वाक्यस्येत्यस्यानुवर्त्तमानस्य विशेषणम्। एवञ्चाग्नीधः प्रेषणे यद्वाक्यन्तस्यादेरिति लब्धम्। परशब्दोपादानेनावध्याकाङ्क्षया तस्मादित्यस्याध्याहारे सति तत्पदार्थजिज्ञासायामाह—*आदिभूतादिति। *इत्यनयोरेवायमिति। "ओ३श्रा३वयआ३श्रा३वययोरिति वक्तव्यम्" इति भाष्योक्तिरत्र बीजम्। पित्र्यायामन्यत्राप्यादेस्तस्मात्परस्य च दर्शनादाह—*प्लुतमात्रस्येति। *भवत्येवेति। एवञ्च न भाष्ये परिगणनङ्किन्तु प्लुतस्य वैकल्पिकत्वेनाप्रवृत्त्यन्वाख्यानमेवेति तात्पर्यम्। अत एव भाष्ये—बहुलमन्यत्रापीति वक्तव्यम्। उद्धरा३उद्धर, अभिहरा३ अभिहर, आहरा३ आहर। तत्तर्हि वक्तव्यन्न वक्तव्यम्। योगविभागः करिष्यते। 'अग्नीत्प्रेषणे परस्य च विभाषा'। ततः 'पृष्टप्रतिवचने हेः'। विभाषेति। अपर आह—सर्व एव प्लुतः साहसमनिच्छता विभाषा कर्त्तव्यः" इत्युक्तम्।

"विभाषा पृष्टप्रतिवचने" (पा० सू० ८-२-९३) इति सूत्रघटकपृष्टप्रतिवचनशब्दं व्याचष्टे—*पृष्टप्रतिवचनमिति।

*निगृह्येति ल्यबन्तं, वादिनं स्वमतात्प्रच्याव्येत्यर्थः । अनुयोगः= यस्मादसौ प्रच्यावितस्तस्य पक्षस्य शब्देन प्रकाशनम् । एवन्त्वनिरुपपत्तिकमात्थेति ।

आम्रेडितं भ (पा० सू० ८-२-९५)। ल्यबन्ते उदाहरणे "वाक्यादेरामन्त्रितस्य" (पा० सू० ८-१-८) इति द्वित्वम् । वाक्यस्यटेरित्यधिकारेऽप्यत्रानन्त्यस्य भवति । वाक्यादेरेव पदस्य भर्त्सने द्वित्वविधानात् । *उपलक्षणमिति । *तत्रैकैकस्येत्यनुवृत्त्या पर्यायलाभः ।

अङ्गयुक्तम् (पा०सू०८-२-९६)। आकाङ्क्षतीत्याकाङ्क्षं, पचाद्यच् । इदानीमिनि । कूजनफलमिदानीमेव ज्ञास्यसीत्यर्थः । अङ्गशब्दो* ऽमर्षे । प्रत्युदाहरणे त्व*नुनये । अङ्ग देवदत्तेत्येकं वाक्यम् । एतच्च मिथ्या वदसीत्येतदपेक्षते ।

विचार्य (पा० सू० ८-२-९७)। *कोटिद्वयस्पृग्ज्ञानं=विचारः, तादृशज्ञानविषयीभूतो विचार्यमाणः । *इह तु विचार्यमाणार्थविषयत्वात् वाक्यानि विचार्यमाणानि । गृहा३ इ इति गृहेशब्दस्य*प्लुतविकारः ।

*पूर्वन्तु (पा० सू० ८-२-९८)। पूर्वमेवेत्यर्थः । उदाहरणे

---

निगृह्य (पा०सू०८-२-९४)। एतद्व्याचष्टे-*निगृह्येति ल्यबन्तमित्यादिना ।

आम्रेडितम्भर्त्सने (पा० सू० ८-२-९५) । नन्वाम्रेडितसंज्ञा परभागस्यैवेति तस्यैव प्लुतः स्यान्न तु पूर्वभागस्य, इष्यते तु पूर्वभागस्यापीत्यत आह—*उपलक्षणमितीति । अत्र मानन्तु "भर्त्सने पर्यायेणेति वक्तव्यम्" (का० वा०) इति वार्त्तिकम् । "चौरा३ चौर, चौर चौरा३" इति भाष्यञ्चेति । यथोभयोः सिद्धिस्तत्प्रकारमाह—*तत्रैकैकेति । मण्डूकप्लुत्या "गुरोरनृत" (पा० सू० ८-२-८६) इति सूत्रादेकैकग्रहणस्यानुवृत्तिः ।

*अमर्षे इति । अमर्षे सूचयितव्ये सम्बोधनद्योतकस्याङ्गशब्दस्य प्रयोग इत्यर्थः । *अनुनये=सान्त्वने । अनाकाङ्क्षोदाहरणम्मूले—अङ्ग पचेति । अत्रामर्षसूचनायाङ्गेत्येवोच्चार्य पचेत्येवं यत्रोच्चारितन्तत्रोभयोरेव प्रयोगेण शाब्दबोधपर्यवसानान्न त्वन्याकाङ्क्षेति भावः ।

*कोटिद्वयस्पृगिति । कोटिद्वयविषयकमित्यर्थः । नन्वर्थस्य विचार्यमाणत्वन्न तु वाक्यस्येति "विचार्यमाणानाम्" (पा० सू० ८-२-९७) इति कथं वाक्यानामिति पदेन समानाधिकरणमत आह—*इह त्विति । *प्लुतविकारः="एचोऽप्रगृह्यस्यादूराद्धूते" (पा० सू० ८-२-१०७) इतिसूत्रेण पूर्वार्द्धस्य प्लुतरूपो विकारः ।

*पूर्वन्तु=अत्र तुशब्दोऽवधारणे । विचार्यमाणार्थप्रतिपादकवाक्ये

नुशब्दो वितर्के ।

*प्रतिश्रवणम्=*अभ्युपगमः*प्रतिज्ञानं श्रवणाभिमुख्यञ्च(१) । हन्त ते इति । प्रार्थिताङ्गीकारो गम्यते । आद्ययोरर्थयोः प्रतिश्रवणशब्दे गतिसमासः, तृतीये "लक्षणेनाभिप्रती"[ पा० सू० २-१-१४ ] इति अव्ययीभावः । क्रमेणोदाहरणानि ।

अनुदात्तं प्र (पा० सू ८-२-१०० ) । प्रश्नवाक्ये यच्चरमं प्रयुज्यते स प्रश्नान्तः । दूराद्धूतादिष्विति । प्रश्नान्ताभिपूजितयोर्यः प्लुतः सोऽनुदात्तो भवतीत्यर्थादिति भावः । तत्राभिपूजिते "दूराद्धूते च" ( पा० सू० ८-२-८४ ) इति, इतरत्र "अनन्त्यस्यापि प्रश्नाख्यानयोः" ( पा० सू० ८-२-१०५ ) इति । *आद्योदाहरणे 'अगमः पूर्वा३न् ग्रा मान्'इत्यादिः । टेरनुदात्त इति । अगम इत्यादौ "अनन्त्यस्यापि"( पा० सू० ८-२-१०५ ) इति प्लुतः स्वरितः ।

प्लुत इति । स च पूर्वभागस्य, उत्तरस्य तु उदात्ताविद्युतौ भवतः । अग्निचिदिति व्याचष्टे—अग्निरिवेति । कथञ्चिदिति । कुच्छ्रेऽत्र चिच्छ-

---

यत्पूर्वम्प्रयुक्तन्तस्येत्यर्थः । अत्र पूर्वसूत्रेण सिद्धे इदं सूत्रन्नियमार्थम्पूर्वमेवेति । तुशब्दस्त्विष्टतोऽवधारणसूचनाय ।

प्रतिश्रवणे च (पा० सू० ८-२-९९) । अत्र प्रतिपूर्वकः श्रुधातुर्येष्वर्थेषु वर्त्तते तानर्थानाह—*प्रतिश्रवणमित्यादिना । *अभ्युपगमः=अङ्गीकारः । *प्रतिज्ञानम्=आवश्यकत्वस्य क्रियायाम्बोधनम् । एतयोरर्थयोर्यदा प्रतिश्रवणशब्दस्य प्रयोगस्तदा'प्रतिश्रवणे गतिसमासः'इति कथनेनैतेऽर्थाः शक्या एवेति दर्शितम् । तृतीये 'दत्त किमात्था३'इत्यनेन स्वस्य श्रवणाभिमुख्यं स्पष्टतया प्रतीयते ।

अनुदात्तम्प्रश्नान्ता [ पा० सू० ८-२-१०० ] । अत्रानुवर्त्तमानस्य प्लुत इति पदस्योद्देश्यसमर्पकत्वकल्पनेन दूराद्धूतादिषु सिद्धस्य तस्य उदात्तपदेनोदात्तत्वे प्राप्तेऽनुदात्तत्वमात्रमनेन क्रियते इति फलति । प्रश्नान्ते यत्रानेनानुदात्तत्वविधानन्तत्रानन्त्यस्यापि प्रश्नाख्यानयोरिति प्लुतस्य किम्पृच्छसि त्वमित्यादिर्बोध्यस्तथा सत्यग्निभूतेशब्दस्य प्रश्नान्तत्वं लक्ष्यगायाति । प्रकारान्तरेणापि प्रश्नान्तत्वमाह—*आद्योदाहरण इत्यादिना ।

चिदिति चोपमार्थे [ पा० सू० ८-२-१०१ ] । चिदिति निपातः । उपमार्थे यत्रास्य प्रयोगस्तत्र वाक्यस्य टेरनुदात्तः प्लुतो भवति । अनेन शास्त्रेणाप्राप्त एव प्लुतोऽनुदात्तत्वगुणविशिष्टो विधीयते । अत्र सूत्रे इतिशब्दश्चिदित्यस्योपमार्थकस्य प्रयोगे सति वाक्यस्य टेः प्लुतार्थः । तदभावे तु उपमाने

---

(१)'मुख्यं वा' इति पाठ आदर्शपुस्तके ।

ब्दः । अग्निर्माणवक इति । अग्निरिव माणवको दीप्येतेत्यर्थः । यद्यप्यन्येषामप्युपमार्थानामिवादीनामस्ति प्रतीतिस्तथापि चिच्छब्दस्याप्यस्ति इति स्यादेव प्लुतः, प्रयोगाभावात्तु नेति भावः । चः प्लुतसमुच्चयार्थः । एतदेव ज्ञापयति–'पूर्वसूत्रे गुणमात्रं विधीयते' इति बोद्धव्यम् ।

उपरिस्विदा (पा०सू०८–२–१०२) । अनेन विचार्यमाणानामिति विहितप्लुतस्यानुदात्तत्वमात्रं विधीयत इति हरदत्तः । उपरीत्यादेः कृत्यं दर्शयति–अधःस्विदिति ।

स्वरितमा (पा०सू०८–२–१०३) । उदाहरणे "वाक्यादेरामन्त्रितस्य" ( पा०सू०८–१–८ ) इति द्वित्वम् । अयमपि प्लुतो वैकल्पिकः ।

क्षियाशीः [ पा०सू० ८–२–१०४ ] । क्षिया=आचारोल्लङ्घनम् । इष्टप्रार्थनम्=आशीः । प्रैषः=प्रेषणम् । उदाहरणेषु*पूर्वतिङन्तमुच्चरमाकाङ्क्षति ।

अनन्त्यस्यापि [पा०सू०८–२–१०५] । *आद्योदाहरणे भो'

---

यत्किञ्चिच्छब्दे प्रयुज्यमाने सति चिच्छब्दस्य प्लुत इत्यर्थो गम्येत । इतिशब्दोपादानेन तु वाक्यस्य टेरित्यस्य प्रकरणप्राप्तस्याबाधो बोधितो भवति । प्रयुज्यमान इति पदस्य प्रत्युदाहरणेऽग्निर्माणवको भायादित्यत्रोपमार्थस्य शब्दान्तरस्य गम्यमानत्वेऽपि चिच्छब्दोऽपि गम्यत इति भवति प्रत्युदाहरणम् ।

उपरिस्विदासीत् [पा० सू० ८–२–१०२] । अयं शब्दः स्वरूपपरः । इति चेत्यस्यास्य शब्दस्येत्यर्थः । अनेनापि शास्त्रेणानुदात्तत्वगुणमात्रं विधीयते । प्लुतस्तु "विचार्यमाणानाम्" [ पा० सू० ८–२–९७ ] इति सिद्ध एव ।

स्वरितमाम्रेडिते [पा०सू०८–२–१०३] । स्वरितमिति सामान्ये नपुंसकम् ।

*पूर्वतिङन्तमिति । यदा पूर्वतिङन्तघटितवाक्यप्रयोगेण तादृशतिङन्तार्थघटकक्रियाकर्तुः क्षिया विवक्षिता तदोत्तरतिङन्तस्य प्रयोग आवश्यक एव । न हि पूर्ववाक्यमात्रप्रयोगेण क्षिया गम्यते । एवञ्चैतादृशस्य पूर्ववाक्यजन्यशाब्दबोधविषयक्रियायाः स्वसमानकर्तृकत्वस्वसमानकालिकत्वोभयसम्बन्धेनोत्तरवाक्यार्थक्रियाम्प्रति विशेषणत्वम् । तत्साकाङ्क्षत्वञ्च तन्निष्ठविषयतानिरूपिता या विषयता तन्निरूपकविषयताविशिष्टबोधजनकत्वेनाभिमतत्वम् । क्षियाया यत्र विवक्षा तत्र द्वयोः क्रियानिष्ठविषयतयोः साक्षान्निरूप्यनिरूपकभावः । इतरयोः परस्परया सः । द्विविधोऽपि निरूप्यनिरूपकभावः प्रकृते विवक्षितः ।

अनन्त्यस्यापि [ पा० सू० ८–२–१०५ ] । अपिनाऽन्त्यस्य सङ्ग्रहः । प्रमाणेन ज्ञानगमनकम्प्रति कार्यान्तरसूचनाय नेदं वाक्यङ्किन्तु प्रश्नवाक्यघटकमिति ध्वननायाह—*आद्योदाहरण इति । तत्रानन्त्यापेक्षया विशेषमाह—

अग्निभूता ३इ'इति शेषः। *तत्रान्त्यस्य तु "अनुदात्तं प्रश्नान्ताभिपूजितयोः" [पा०सू०८-२-१००] इति अनुदात्तोऽपि पक्षे इति वृत्तिः। *यद्यपि तत्र विकल्पो न श्रुतः तथाप्यपिशब्देनान्त्यस्यापि अनेन स्वरितप्लुतविधानात् पाक्षिकत्वं फलति। आख्यानम्=प्रश्नस्योत्तरम्।

तदवयवाविति। *वचनसामर्थ्याद्वर्णैकदेशयोरिह ग्रहणम्। उदाहरणे दूराद्धूते "गुरोरनृत" (पा०सू०८-२-८६) इति प्लुतः। चतुर्मात्राविति। *ऐचोर्मात्राऽवर्णस्य मात्रेवर्णोवर्णयोरिति उत्तरखण्डस्य त्रिमात्रत्वे चतुर्मात्रतेति भावः। *स्पष्टश्चेदं भाष्ये। *अत्र चतुर्मात्रस्याच्त्वमपि, तेन प्रत्यङ्ङैतिकायनेत्यादौ ङमुडादि सिध्यतीति बोद्धयम्।

याज्यान्तेष्वेवेति। *अनेनास्य परिगणनत्वं दर्शयति। पूर्वार्धस्य आदिति च्छेदः। अत्राकारः प्लुतः स प्रश्नान्ते *ऽनुदात्तः स्वरितो वा शेषेषूदात्त इति बोद्धयम्। इदुतौ 'टेरुदात्त'इत्यधिकारादुदात्तावेव। *व्याख्या-

---

*तत्रान्त्यस्य त्विति। नन्वनेन विधीयमानस्य स्वरितप्लुतस्य नित्यत्वात्पक्षे इत्यनुपपन्नमित्याशङ्क्य तस्य वैकल्पिकत्वं साधयति—*यद्यपीत्यादिना। प्रश्नान्त्यस्य तेनानुदात्तः प्लुतो विधीयतेऽनेन तु स्वरितः; उभयमपीदम्परस्परविरुद्धमिति स्वरितस्य पाक्षिकप्रवृत्तिकत्वमिति भावः।

*वचनसामर्थ्यादिति। ऐच इत्यस्येदुतावित्येतद्विशेषणेन वर्णैकदेशयोर्ग्रहणमिति भावः। *ऐचोर्मात्राऽवर्णस्येति। न च 'ऐचोश्चोत्तरभूयस्त्वात्' इत्यनेनात्र विषमविभागः प्रदर्शित इति तेनेदं विरुद्धमिति चेन्न। तस्य पक्षान्तराभिप्रायकत्वात्। *स्पष्टश्चेदमिति। तत्र हि—"इष्यत एव चतुर्मात्रः प्लुतः" इत्युक्तम्। ऊकाल एवाजितिनियमो नाश्रीयते तेन चतुर्मात्रस्याप्यच्कार्यम्भवति। प्रत्यङ्ङै४तिकायन। अत्र ङमुट्। ग्लौ४न्नातः" इत्यत्र "अनचि च" [पा० सू० ८-४-४७] इति द्विर्वचनम्भवतीति कैयटः। ननूकालोऽजिति योगेन त्रिमात्रस्य प्लुतसंज्ञा विधीयतेऽयं तु न तथेति कथमस्य प्लुतत्वन्तदभावेऽच्त्वमपि कथं ग्रहणकशास्त्रप्रवृत्त्यभावादिति चेन्न। प्रकृतभाष्यप्रामाण्येन तत्र तृतीयवाक्ये ऊ३काल इति पदमेकादिमात्राभिन्नलाक्षणिकमित्यत्र तात्पर्यात्। तदेवाह—*अत्रेति।

एचोऽप्रगृह्यस्या (पा० सू० ८-२-१०७)। *अनेन=याज्यान्तेष्वेवेत्येवकारेण। *अनुदात्तः स्वरितो वेति। "अनुदात्तम्प्रश्नान्त" (पा० सू०८-२-१००) इति सूत्रेण यत्र प्लुतस्तत्राऽनुदात्तः "स्वरितमाम्रेडिते"(पा०सू०८-२-१०३)इत्यस्य विषये तु स्वरितः। ननु "वाक्यस्य टेः"[पा० सू०८-२-८२]इति सूत्रस्थस्योदात्तपदस्य प्लुतेन सम्बन्धस्य क्लृप्तत्वात्कथमिदुदुभ्यान्तस्य सम्बन्धोऽत आह—*व्याख्यानादिति। इदुतोरुदात्तयोः श्रवणमूलकव्याख्यानादित्यर्थः।

नादुदात्तग्रहणं प्लुतेनेदुद्भ्यां च संबध्यते । प्लुतपदं च *तत एवाद्ग्रहणेनैव संबध्यते नेदुद्भ्यामिति बोद्धव्यम् । अदूराद्धूत इति न वक्तव्यमिति । परिगणनसत्त्वे तेनैव सिद्धत्वादिति भावः । *इदञ्च वृत्त्यनुरोधेन । *केचित्तु परिगणनेपीदं कार्यमेव । अत्र दूराद्धूतपदं न संबोधनमात्रोपलक्षणं किं तु यथाश्रुतमेवेति । दूरादाह्वानसंबोधनविशिष्टाभिपूजितार्थे'स्वागच्छ भो माणवकाग्निभूते' इत्यादौ नास्य प्रवृत्तिरिति न परिगणनेन प्रत्याख्यानं युक्तम्'अदूराद्धूत इति न वक्तव्यम्' इत्यनुक्त्वा *भाष्यात्तथैव लाभादित्याहुः । गौरिति । *सावपि पदमिति पक्षे*वाक्यान्तत्वाभावान्न दोषः । *पदशब्देन वाक्यमप्युच्यत इति बोद्धव्यम् । आमन्त्रिते छन्दसीति । *अप्राप्ते प्लुतविकारे इदम् । दूरादाह्वानसत्त्वात्परिगणनाचाप्राप्तिः । प्लुतस्तु"गुरोरनृत"( पा०सू०८–२–८६ ) इति प्राप्नोत्येव । तेन वाक्यान्तपदानन्त्यस्यैव प्लुत इत्यत्र तु न मानम् ।

---

*तत एव=व्याख्यानादेव । भाष्ये तादृशाकारप्रदर्शनमूलकव्याख्यानात् । *इदम्=परिगणनेति कथनोत्तरमदूराद्धूत इति न वक्तव्यमिति कथनम् । वृत्त्यनुरोधेनेत्यभिधानमूलन्दर्शयति—*के चित्त्विति । 'स्वागच्छ भो माणवकाग्निभूते' इत्यादौ प्लुतस्तु "दूराद्धूते" [ पाऽ सू० ८–२–८४ ] इत्यनेनैव तस्यानुदात्तत्वमभिपूजितविषयत्वात्प्राप्तमनेनादूराद्धूत इत्यनेन क्रियते इतिनिषेधस्यावश्यकत्वमेव । तत्र प्रमाणमाह—*भाष्यादिति । तत्र हि—"पचः प्लुतविकारे पदान्तग्रहणङ्कर्त्तव्यम् । इह मा भूत्—भद्रङ्करोषि गौरिति । विषयपरिगणनञ्च कर्त्तव्यम् । प्रश्नान्ताभिपूजितविचार्यमाणप्रत्यभिवादयाज्यान्तेष्विति वक्तव्यम्" इत्युक्त्वा प्रश्नात इत्यादिना तेषामुदाहरणानि मूलोक्तानि प्रतिपादितानि तेन विषयपरिगणनेऽपि प्रतिषेधस्यावश्यकर्त्तव्यता सूचितैव । *सावपि पदमिति । "स्वादिषु" ( पा० सू० १–४–१७ ) इत्यस्य पदसंज्ञाविधायकसूत्रे पृथक्करणेन "उत्तरपदत्वे चापदादिविधौ" ( प० भा० ) इत्यस्याकर्त्तव्यताप्रदर्शनकाले स्वीकृतेऽस्मिन् पक्ष इत्यर्थः । *वाक्यान्तत्वाभावादिति । "वाक्यस्य टेः" ( पा० सू० ८–२–८२ ) इत्यतो वाक्यग्रहणमप्यनुवर्त्तते । तेन वाक्यान्तः सन् यः पदान्तस्तस्यानेन प्लुतप्रसङ्गे विशेषो बोध्यत इत्यतो भद्रङ्करोषीत्यत्र पदान्तत्वेऽपि वाक्यान्तत्वाभावान्न तस्य प्लुतप्रसङ्गे विशेषः । ननु भाष्ये "पदान्तग्रहणङ्कर्त्तव्यम्" इत्येवोक्तम्न तु वाक्यशब्दस्यापि तत्रोच्चारणमतो न्यूनतापत्तिरत आह=*पदशब्देनेति । वाक्यमपीत्यपिशब्देन पदसंज्ञकस्य संग्रहः । पदान्तग्रहणमित्यत्र पदशब्देन पद्यते बोध्यतेऽर्थो येनेति व्युत्पत्त्योभयोरपि सङ्ग्रहान्न न्यूनतेति भावः । *अप्राप्ते इति । दूरादाह्वानसत्त्वात् प्लुतविकारस्याप्राप्तिः । प्लुतस्तु "गुरोरनृत" ( पा० सू० ८–२–८६ ) इ-

तयोर्य्वौ ( पा० सू० २-१-१०८ ) । तयोः *पूर्वसूत्राभ्यां विहितयोरिदुतोरित्यर्थः । ननु "इको यणचि" [पा० सू० ६-१-७७ ] इत्येव सिद्धे *इदं व्यर्थमत-आह-इदुतोरसिद्धत्वा दिति । ननु प्लुतस्य प्रकृतिभावविधानात्सामान्यापेक्षज्ञापकात् प्लुतप्रकरणीयकार्यस्य स्वरसन्धिषु सिद्धत्वज्ञापनेन सिद्धो यणत आह-सवर्णदीर्घत्वस्येति । *अग्ना ३इ इन्द्रमित्यादौ । शाकल्यस्य वेति । अग्ना३याशेत्यादौ।शाकल्यम्="इकोऽसवर्णे"(पा०सू०६-१-१२७)इति प्रकृतिभावः । ननु भो इन्द्रेति स्थिते भोःशब्दस्य छान्दसे प्लुते ततः परस्यैकारस्य निपातत्वात्प्रकृतिभावे प्राप्ते यणादेशार्थम् "इकः प्लुतपूर्वस्य यणादेशो वक्तव्यः सवर्णदीर्घशाकलनिवृत्त्यर्थम्" इति वचनमावश्यकम् । न च तत्रानेन सिद्धिः । इकः प्लुतविकारत्वाभावात् । एवञ्च तेनैव यण्सिद्धोऽत आह-यवयोरसिद्धत्वादुदात्तेत्यादि । तेन हि यणि तस्य सिद्धत्वादयं स्वरो दुर्वार इति भावः । *यद्यपीह प्लुतप्रकरणे बहूनि सूत्राणि लोकवेदसाधारणानि तथापि*तस्य वैकल्पिकत्वेन लोके तदादराभावाद्वेदे च तदादराद्वैदिक्यामेव लिखितानीति ध्येयम् ।

---

त्यनेन प्राप्नोत्येव । न च "गुरोरनृत" ( पा० सू० ८-२-८६ ) इति सूत्रं वाक्यस्य यदनन्त्यं पदं तस्य टेः प्लुतविधायकमिति पक्षे व इत्यनन्त्यस्य कथम्प्राप्तिरिति वाच्यम् । अनन्त्यस्य=अनन्त्यस्य पदस्येति नार्थः किन्तु दूराद्धूते यद्वाक्यन्तदवयवानन्त्यस्यापीत्येवार्थः । एवञ्चास्त्येव प्राप्तिरित्याशयात् । अथ वा "दूराद्धूते च" ( पा० सू० ८-२-८४ ) इति सूत्रेण वाक्यान्तस्यैव प्लुते प्राप्ते तस्य प्लुतस्यान्त्याच्स्थानिकत्वमात्रं "गुरोरनृत" ( पा० सू० ८-२-८६ ) इत्यनेन क्रियते न त्वनन्त्यपदस्यापीत्यनेनानन्त्यस्यैव पदस्य योऽनन्त्योऽपिशब्दादन्त्यस्तस्यापूर्वप्लुतविधायकमेतदिति प्लुतस्य सिद्धस्य स्थानिप्रदर्शनमात्रं क्रियते । तथा च "दूराद्धूते च" [ पा० सू० ८-२-८४ ] इत्यनेनात्र प्लुतस्य प्राप्तिरस्त्येवेत्याशयात् ।

तयोर्य्वावचि संहितायाम् [ पा० सू० ८-२-१०८ ] । अत्र तयोरिति पूर्वसूत्रनिर्दिष्टयोः परामर्शकमित्याशयेनाह—*पूर्वसूत्राभ्यामिति । अत्र द्विवचनोपादानेन "प्लुतावैच इदुतौ" ( पा० सू० ८-२-१०६ ) इत्यनेन स्थितयोरिदुतोः प्लुतमात्रविधानम् "एचोऽप्रगृह्यस्य" [पा० सू० ८-२-१०७] इत्यनेन तु प्लुतयोरवयवेकारयोर्मात्रिकयोरेवेदुतोर्विधानमिति सूचितम् । अत्र पूर्वसूत्रादिदुतोरनुवृत्त्या सिद्धे तयोरिति पूर्वसूत्राभ्यां विहितयोरेव बोधकस्तच्छब्द इत्यस्य स्पष्टप्रतिपत्त्यर्थमिति बोध्यम् । *इदम्=प्रकृतसूत्रम् । *अग्ना ३इ इन्द्रमिति । स्थितिप्रदर्शनमेतत् । प्लुतप्रकरणं व्याख्याय तस्मिन् विशेषं वक्तुमुपक्रमते-*यद्यपीत्यादिना । *तस्य=प्लुतस्य ।

मतुवसोरु ( पा० सू० ८-३-१ ) । पदस्येति वर्त्तते ।

*प्रसङ्गादाह—दाश्वानिति । दाशेः क्वसावद्वित्वमनिट्त्वञ्च निपात्यते । 'षह मर्षणे' इत्यस्य परस्मैपदं क्वसुरद्वित्वमनिट्त्वमुपधादीर्घत्वं च निपात्यते । 'मिह सेचने' इत्यस्मात्क्वसावद्वित्वमनिट्त्वं च निपात्यते । सूत्रे एकवचनमतन्त्रम् । 'दाश्वांसः, दाशुषः सुतम्' इति प्रयोगदर्शनात् । यद्यपीदं लोकवेदसाधारणं तथापि लोके प्रयोगप्राचुर्याभावादत्रैवोदाहृतम् । 'मीढ्वः' इत्यत्र "मतुवसो" ( पा० सू० ८-३-१ )इति रुत्वम् । "अत्रानुनासिकः" ( पा० सू० ८-३-२ ) इत्यादि वसो रुत्वे फलम् । अनुबन्धस्येहेति । *अत एव "वनो र च" ( पा० सू०४-१-७ ) इति सूत्रे सामान्यग्रहणमुक्तम् । एवञ्च "ह्रश्च व्रीहि" ( पा० सू०३-१—१४८) इत्यादौ सामान्यग्रहणस्य निर्बाधत्वे जहातेः ककारः सामान्यग्रहणनिर्वाहार्थ इति प्राचां ग्रन्थाश्चिन्त्याः । इणः क्वनिबिति । प्रातरेतीत्यर्थे "अन्येभ्योऽपि दृश्यन्ते" ( पा० सू० ३-२-७५ ) इत्यनेन । ह्रस्वस्य तुक् ।

नस्येति । नान्तपदस्येत्यर्थः ।

एकपादेति । ऋक्ष्विति*प्रकृतत्वात् ऋक्पाद एवेह गृह्यते । समानशब्द एकपर्यायः । देवाँ अच्छेति । वक्ष्यमाणेन "आतोटि" [पा०सू०८-३-३] इत्यनेनानुनासिकः।उभयथेति । *एवञ्चाटि समानपाद इति व्यर्थं छन्दस्यापाद्यमानरूपाभावात् । एतेन 'महान् हि सः' इति बह्वृचानां पाठो व्याख्यातः । आकरे तु महाँ हीत्युदाहृतं तच्छाखान्तरेऽन्वेष्टव्यम् । भिन्नपादेऽपि क्वचिद् दृश्यते*तत्सूत्ररीत्या छान्दसत्वाद् बोध्यम् ।

---

दाश्वान् ( पा० सू० ६-१-१२ ) । अस्य सूत्रस्य वैदिक्यामेव लेखनस्य निमित्तमाह-*प्रसङ्गादित्यादिना । छान्दसानाम्प्रयोगाणां साधकसूत्रव्याख्यानात्सादृश्यात् स्मृतस्यास्य सूत्रस्यापि व्याख्यानमुचितमतोऽत्रैवोक्तमिति भावः । तदनुबन्धकपरिभाषायाः प्रवृत्तिशङ्कायामाह मूले अनुबन्धपरिभाषेति । तदनुबन्धकपरिभाषेत्यर्थः । *अत एव=अनुबन्धोच्चारण एव तस्याः परिभाषायाः प्रवृत्तिस्वीकारादेव ।

*प्रकृतत्वादिति । ऋक्ष्वित्यनुवर्त्तेत इति भावः । *एवञ्च=उभयथेत्यस्योपादानेन कार्यस्य वैकल्पिकत्वबोधने च । *सूत्ररीत्या="उभयथर्क्षु" [ पा० सू० ८-३-८ ] इति सूत्ररीत्या ।

"आतोटि" ( पा० सू० ८-३-३ ) इति सूत्रस्य त्यागे लाघवमप्याह-

आतः (पा० सू० ८-३-३)। आकारस्य। महाँ इन्द्र इति। "दीर्घाद" (पा० सू० ८-३-९) इति रुत्वम्। एवञ्चेति। *सर्वविकल्पानां छन्दसि व्यवस्थिततया प्रकृतसूत्रत्यागे महल्लाघवम्। सूत्रारम्भे तु व्यत्ययः शरणीकर्तव्य इति महान् क्लेश इति भावः। तुधातोरसुन् स्वन्तवो यस्यासौ स्वतवान् "स्वस्तवःस्वतवसां छन्दसि" (पा०सू०७-१-८३)इति नुम्।

छन्दसिवा (पा० सू० ८-३-४९)। *व्यवस्थितविकल्पेनैव सिद्धेऽप्रेत्यादि स्पष्टार्थम्, एवमुत्तर*सूत्राण्यपि।

करिति। कृञो लुङ्। "मन्त्रे घस" (पा०सू०२-४-८०)इति च्लेर्लुक् तिपि गुणः तिपो हल्ङ्यादिलोपः, "बहुलं छन्दसि" (पा०सू०६-४-७५) इत्यडभावः। करदिति। कृञ एव लुङ् "कृमृद" (पा०सू०३-१-५९)इति च्लेरङ्। करतीति। लट् व्यत्ययेन शप्। कृधीति। कृञो लोट् सेर्हिः "बहुलं छन्दसि" (पा०सू०२-४-७३) इति शपो लुक् छान्दसत्वाद्विकरणाभावो वा। "श्रुशृणुपृकृवृभ्यः" (पा०सू०६-४-१०२)इति हेर्धिः। कृतामिति। कृञः क्तः। सः स्यादिति। षत्वस्याप्युपलक्षणम्। अत एवादिप्रतिषेधः। यत्र तु 'शं नः करत्' इत्यादौ सत्वं न दृश्यते तत्र छान्दसत्वात्सत्वाभावो बोद्ध्यः।

पञ्चम्याः प (पा० सू० ८-३-५१)। अध्यर्थे इति परेर्विशेषणम्। दिवस्परीति। दिव उपरीत्यर्थः। व्यत्ययेन षष्ठीस्थाने पञ्चमी। पर्योज इति। अत्र परिः सर्वतो भावे।

पातौ च [पा०सू०८--३--५२]। न च भवति-परिषदः पातु। *पाताविति लोडन्त'पातु'इत्यस्यानुकरणम्।

षष्ठयाः प (पा० सू० ८-३-५३)। षष्ठीविसर्गस्य सादेशः पत्यादिषु परेषु। वाचस्पत्यादौ "तत्पुरुषे कृति" (पा० सू० ६-३-१४)

---

*सर्वविकल्पानामित्यादिना।

*व्यवस्थितविकल्पेनेति। विकल्पस्य व्यवस्थितत्वञ्च छान्दसत्वाद्भविष्यति। *सूत्राण्यपीति। स्पष्टार्थानीति शेषः।

कः करत् (पा० सू० ८-३-५०)। अदितिभिन्नात्परस्य विसर्गस्य सः स्यात्। उदाहरणे करित्यादीनाङ्कृधातुप्रकृतिकत्वम्बोध्यम्।

पञ्चम्याः परावध्यर्थे (पा० सू० ८-३-५१)। अत्र परावध्यर्थे इति समानाधिकरणे सप्तम्यौ। अध्यर्थः=उपरिभावः।

लट्प्रथमैकवचनान्तत्वभ्रमनिवृत्तये आह-*पाताविताति।

इत्यलुक् । षष्ठया इति किम् ? *मनुः पुत्रेभ्यो दायमिति ।

इडाया इति षष्ठ्यन्तानुकरणम् । पतीसाद्यनुवर्त्तते ।

निसस्तपता(पा०सू०८-३-१०२)। अस्य *लोकवेदसाधारण-त्वादत्रोपन्यासश्चिन्त्यः । उदाहरणे सक्तृत्तमित्यर्थः ।

युष्मत्त(पा० सू० ८—३—१०३)। "ह्रस्वात्तादौ"( पा० सू० ८—३—१०१ ) इत्यतस्तादाविति वर्तते । तत्र युस्मदो*विशेषणं नेतरयोरव्यभिचारात् । ततक्षुस् इति मान्तानुकरणात्परस्य सुप्सकारस्य "नुम्विसर्जनीय" (पा० सू० ८-३-५८) इति षत्वम् । पूर्वस्य ष्टुत्वम् । सूत्रे तादाविति विशेषणाद युष्मदादेशानां ग्रहणं, तदाह—त्वमित्यादि ।

यजुष्ये ( पा० सू० ८-३-१०४ )। *यजुर्विषये इत्यर्थः ।

स्तुतस्तो ( पा० सू० ८-३-१०५ ) । एकेषामिति वर्त्तते । प्रपञ्चार्थमिति । *पूर्वपदमिति सामान्येन तत्राश्रीयते न तु समासावयव एव इति वाक्येऽपि तेनैव सिद्धं षत्वमिति भावः ।

पूर्वपदात् ( पा० सू० ८-३-१०६ )। छन्दसीति वर्तते एकेषामिति च । *पूर्वपदमात्रस्य ग्रहणमित्याशयेन षत्वाभावे उदाहरति—युवं हि स्थ इति ।

---

*मनुः पुत्रेभ्य इति । अत्र मनुरिति प्रथमान्तम तु षष्ठ्यत्रास्ति ।

निसस्तपता [ पा० सू० ८-३-१०२ ] । आसेवनं पौनःपुन्यं ततोऽन्यत्रेत्यर्थः। उदाहरणे निष्टप्तमित्यस्य सक्तृत्तमित्यर्थः । *लोकवेदसाधारणत्वादिति । छन्दसीत्यस्याप्रकृतत्वादन्यस्य छान्दसत्वप्रयोजकस्याभावादिति भावः । 'निष्टप्तं रक्षः' इत्यस्य छन्दस्त्वादेतस्यानेन शास्त्रेण साधनमित्यभिप्रायेणास्य सूत्रस्य वैदिक्यां लेखनमिति केचित् ।

युष्मत्तत्ततक्षु (पा०सू०८-३-१०३) । छान्दसानामुदाहरणानांदर्शनादस्य छान्दसत्वमित्यस्यात्र लेखः । *विशेषणमिति । व्यावर्त्तकं विशेषणमित्यर्थः, इतरयोस्तूपरञ्जकं तत्; न त्वेकदेशस्य युष्मच्छब्दस्य । समासघटकत्वात् ।

यजुष्येकेषाम्[पा०सू०८-३-१०४]। यजुःशब्दे पर इति भ्रमवारणायाह—*यजुर्विषय इति । न तु स एवार्थः । 'युष्मत्तत्ततक्षुःषु' इत्यस्यानुवृत्तेः ।

स्तुतस्तोमयोः ( पा० सू० ८-३-१०५ ) । ननु गोस्तोममित्यस्य वाक्यत्वात्कथं "पूर्वपदात्" ( पा० सू० ८-३-१०६ ) इत्यनेन सिद्धिरत आह—*पूर्वपदमिति । तदुक्तम्भाष्ये—"स्तुतस्तोमयोश्छन्दसि वचनमनर्थकम् । किङ्कारणम् । पूर्वपदादिति सिद्धत्वात्" इति ।

*पूर्वपदमात्रस्येति। पूर्वोक्तभाष्यादत्र पूर्वभूतपदमात्रस्य ग्रहणमिति भावः।

सुञः (पा० सू० ८–३–१०७)। सुञिति *निपातग्रहणम्। छन्दसीति वर्त्तते। अभीषुण इति। "इकः सुञि" (पा० सू० ६–३–१३४) इति दीर्घत्वम्। "नश्च धातुस्थोरुषुभ्यः" (पा० सू० ८–४–२७) इति णत्वम्।

सनोतेरनः (पा० सू० ८–३–१०८)। अनकारान्तसनोतेरिण्कुभ्यां परस्य सस्य षः छन्दसि। गोषा इति। "जनसन" (पा० सू० ३–२–६७) इति विट्। "विड्वनोः" (पा० सू० ६–४–४१) इत्यात्वम्। गोसनिरिति। "छन्दसि वनसनरक्षिमथाम्" (पा० सू० ३–२–२७) इतीन् प्रत्ययः। "पूर्वपदात्" इत्येव सिद्धे *नियमार्थमिति भावः। *केचित्तु गोसनेः सवनादिपाठात्सिद्धिमङ्गीकृत्य सिसानयिषतीति नियमफलं वदन्ति। यद्यप्य*ण्यन्तः सूत्रे उपात्तः तथाप्यण्यन्तस्य प्रतिषेधवचने फलाभावात् ण्यन्तार्थत्वं विज्ञायते। "स्तौतिण्योरेव" (पा० सू० ८–३–६१) इति नियमात् 'सिसनिषति' इत्यादौ षत्वाप्राप्तेरिति *तदाशयः। सिसनिषतेरप्रत्यये 'सिसनीः' इति नियमफलमित्य*न्ये। अत्र सन् षत्वभूतो नेति "स्तौतिण्योः" (पा० सू० ८–३–६१) इति नियमाविषयोऽयम्। एवञ्च सामर्थ्याभावात् ण्यन्तस्य नियमाभावात् 'सिषाणयिषति' इत्यादौ षत्वं भवत्येव। सामर्थ्यात्पूर्वपदाभावेऽपि *नियमप्रवृत्तिरिति तद्भावः। सर्वश्चेदं भाष्ये स्पष्टम्।

---

सुञः [पा० सू० ८–३–१०७]। उक्तार्थकस्पूर्वपदादित्यनुवर्त्तते। *निपातग्रहणमिति। न तु धातोरिति शेषः।

सनोतेरनः [पा० सू० ८–३–१०७]। छन्दसीति वर्त्तते। सनोतेः अनः इति समानाधिकरणे षष्ठ्यौ न त्वन इति पूर्वपदस्य विशेषणम्। "इण्कोः" [पा० सू० ८–३–५७] इत्यधिकारात्। *नियमार्थमिति। अनकारान्तस्यैवेति नियमार्थमित्यर्थः। इणः परस्य सनोतेः सकारस्य षत्वमनकारान्तस्यैवेति नियमः। अत एव भाष्ये "सनोतेरन इति वचनमनर्थकम्। पूर्वपदादित्येव सिद्धत्वात्" इत्याशङ्क्य "नियमार्थमिदं वक्तव्यम्" इति सूत्रफलम्प्रदर्श्य गोसनिमितिनियमव्यावर्त्यमुक्त्वा "सवनादिषु कृतत्वात्सिद्धम्" इति कथनेन गोसनिमित्यस्य सिद्धिरुक्ता। *के चित्=भाष्यानुसारिणः। *अण्यन्त इति। "प्रकृतिग्रहणे ण्यधिकस्य ग्रहणम्" इति नास्तीति भावः। *तदाशयः=ण्यन्तस्य व्यावर्त्यस्य यत्प्रदर्शनन्तदाशयः। *अन्य इति। एतदप्युक्तं भाष्ये—"अथ वा अयमस्त्यण्यन्तः। सिसनिषतेरप्रत्ययः सिसनीः" इति। *नियमप्रवृत्तिरिति। सामान्यतः प्रवृत्तिर्नियमस्य दर्शिता।

सहेः ( पा० सू० ८-३-१०९ ) । *छन्दसीति वर्तते । चकारोऽनुक्तसमुच्चयार्थ इत्याशयेनाह—चादिति । ऋतिशब्दस्य संहितायां "नहिवृति" ( पा० सू० ६-३-११६ ) इति दीर्घः, षत्वं च । उभयत्र संहिताधिकारात् *अवग्रहे ऋति साहमित्येव । "छन्दसि सहः" [पा०सू० ३-२-६३ ] इति ण्विः । ऋतिशब्दस्य "अन्येषामपि" ( पा० सू० ६-६-१३९ ) इति दीर्घ इति* मनोरमा ।

निव्यभि [पा० सू० ८-३-११९] । *एभ्यः परस्य *सुनोत्यादेः सस्याड्व्यवाये षत्वं वा । *प्रकरणप्राप्तस्य षत्वमात्रस्य विकल्पः । अभ्यष्टौदिति । "उतो वृद्धिर्लुकि" [पा० सू० ७-४-८९] इति वृद्धिः ।

छन्दस्यृदव [ पा० सू० ८-४-२६ ] । पूर्वपदादिति वर्तते । अवग्रहविषये ऋकारान्तपूर्वपदादुत्तरस्य नस्य णः । *अग्रहविषयत्वञ्च अवग्रहयोग्यत्वम् । संहिताकाले णत्वं*पदकाले चावग्रहात् । * अत एव पदपाठे णत्वं न प्रयुञ्जते ।

नश्चधा ( पा० सू० ८-४-२७ ) । धातुस्था*न्निमित्तादुरुशब्दात्सुशब्दाच्च परस्य नस्शब्दस्य नस्य णो भवति । धातौ तिष्ठतीति धातुस्थम्, षु इति कृतषत्वस्य सुञो ऽनुकरणम्, *तेन "गृहेषु नः" इत्यत्र न । *नसिति नासिकादेशस्यास्मदादेशस्य च सामान्येन ग्रहणम् । तत्र प्रकृतसूत्रे ऽस्मदादेश एव कार्यी तस्यैव धातुस्थात्परत्वसम्भवात् । "उपसर्गादनोत्परः" ( पा० सू०८-४-२८ )इत्युत्तरसूत्रेतु*भयोः कार्यित्वमिति हरदत्तः ।

---

सहेः पृत (पा०सू०८-३-१०९) । *छन्दसीति वर्त्तत इति । "स्तुतस्तोमयोः"[पा०सू०८-३-१०५] इत्यत इत्यादिः । उभयत्र संहिताधिकारस्य फलमाह—*अवग्रह इति । *मनोरमेति । "नहिवृति"(पा०सू०६-३-११६)इत्यनेन प्रतिपदोक्तत्वाद्दीर्घे सिद्धेऽन्येषामपीत्यस्य प्रवृत्तिस्वीकारो निष्फल इत्यनेन ध्वनितम् ।

निव्यभिभ्यः ( पा० सू० ८-३-११९ ) । सुनोत्यादिग्रहणाननुवृत्त्याह—*एभ्य इति । *सुनोत्यादेरिति । एतस्य लाभप्रकारमाह—*प्रकरणप्राप्तस्येति ।

छन्दस्यृदवग्रहात् [पा० सू० ८-४-२६] । नो ण इत्यनुवर्त्तते । अवग्रहादित्यत्रार्शआद्यच् । नन्वेवमवग्रहेऽपि णत्वं स्यादत आह—*अवग्रहविषयत्वञ्चेति । चस्त्वर्थे । तेन संहिताधिकारस्याबाधः सिद्धः । अवग्रहविषयत्वमुपपादयति—*पदकाले चेति । *अत एव=अवग्रहविषय एव णत्वप्रवृत्तिस्वीकारादेव ।

नश्च धातुस्थो [ पा० सू० ८-४-२७ ] *निमित्तात्=रेफषकाररूपात् । *तेन=सुञोऽनुकरणस्वीकारेण । नस्शब्दे विशेषमाह—*नसितीति । *उ-

*उत्तरसूत्रे नस्ग्रहणानुवृत्तेर्न फलम् । भाष्ये अनोत्पर इत्यस्य स्थाने बहुलग्रहणस्य कृतत्वेन तेनैव सर्वानिष्टवारणादित्यन्ये । *रक्षा णइति । रक्षेति लोण्मध्यमपुरुषैकवचनम् , "द्व्यचोऽतस्तिङः"(पा०सू०६-३-१३५) इति दीर्घः । एवं दानकर्मणः शिक्षतेः शिक्षा ण इति । उरु=अधिकम् । अभीषु ण इति । "इकः सुञि" [ पा० सू० ६-३-१३४ ] इति दीर्घः । *इति शिवम् ॥ इत्यष्टमः ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजिभट्टविरचिते
सिद्धान्तकौमुदीव्याख्याने लघुशब्देन्दुशेखरे
वैदिकी प्रक्रिया समाप्ता ॥

---

भयोः=नासिकाशब्दादेशास्मच्छब्दादेशयोः । हरदत्त इत्यनेन सूचितामरुचिं प्रकाशयति—*उत्तरसूत्र इति । धातुस्थात्परस्योदाहरणमाह—*रक्षा ण इति । *इति शिवमिति । अत्र शिवशब्दो मङ्गलार्थः ॥ इत्यष्टमोऽध्यायः ॥

इति श्रीवैदिकप्रकरणेऽष्टमोऽध्यायः ।

॥ श्रीगणेशाय नमः ॥

## अथ साधारणस्वरप्रकरणम् ।

साधारणप्रकृतिप्रत्ययसमासतिङन्तविषयकतया पञ्चभिः प्रकरणै-रुदात्तादिस्वरान् व्युत्पिपादयिषुः साधारणस्वरांस्तावदाह-अनुदात्तमि-ति । एकवर्जमिति । *"द्वितीयायाञ्च"[पा० सू० ३-४-५३] इति ण-मुल् । *ननु तत्र त्वरायामित्यर्थकपरीप्सायामित्यनुवर्त्तत इति चेत् *इहा-प्यस्ति परीप्सा । तथा हि-यत्रान्तोदात्तादिर्विधीयते तत्र तत्समकालमेव शि-घ्रमनुदात्तं कर्तव्यं न तु विलम्बितव्यमित्यर्थात् । एतच्च णमुल्विधायके पदमञ्जर्यां स्पष्टम् । *यद्वा परीप्सायामिति प्रायिकम् । एतच्च तत्रैव पद-मञ्जर्यां स्पष्टम् । *परिभाषेयमिति । नाधिकारः *अस्वरितत्वात् *एकवर्जमित्यस्य वैयर्थ्यापत्तेश्च; *तत्तत्सूत्रविधेयानां वचनसामर्थ्यादे-व निघाताप्रवृत्तेः । *किं च"आद्युदात्तश्च" [पा० सू० ३-१-३] "स-

---

॥ श्रीगणेशाय नमः ॥

## अथ स्वरप्रकरणम् ।

सर्वप्रकरणोपकारकतया साधारणस्वरानाह—मूले अथेत्यादिना ।

अनुदात्तं पदमेकवर्जम् ( पा० सू० ६-१-१५८ ) । अत्रानुदात्तशब्दो-ऽर्शआद्यजन्तः । अत एव पदपदसामानाधिकरण्यस्योपपत्तिरिति वक्ष्यते । कर्त्तव्यमित्यस्याध्याहारः । अच्प्रकृतिभूतोऽच्छब्दार्थस्य बोधकोऽनुदात्तशब्दः । पदमित्युद्देश्यम् । एवञ्च एकवर्जम्पदमनुदात्ताच्काभिन्नङ्कर्त्तव्यमित्यर्थः । एक-वर्जमित्यस्योपपत्तिमाह—*द्वितीयायाञ्चेतीति । यत्र त्वरा प्रतीयते तत्रैव "द्वि-तीयायाञ्च" ( पा० सू० ३-४-५३ ) इति सूत्रेण णमुल् भवति साऽत्र न प्रती-यत इति कथन्तेन णमुलित्याशङ्कते—*नन्वित्यादिना । समाधत्ते—*इहेति । अ-त एव यावत्समुदायस्य पदत्वम्भावि तावत्समुदायस्य क्रमेणान्वाख्याने तन्म-ध्यघटकस्य यस्य यस्योदात्तादिर्विधीयते शास्त्रेण तत्तच्छास्त्रैकवाक्यतयाऽस्य पुनःपुनः प्रवृत्तिर्भवति । पक्षान्तरमाह—*यद्वेति । अस्य सूत्रस्य विधिसूत्रत्व-मेकपदार्थानिश्चयान्न सम्भवति । नाप्येतत्संज्ञासूत्रम् । पदस्य समुदायात्मकस्या-नुदात्तसंज्ञायामपि तस्याः संज्ञाया विध्यन्तरोपकारकत्वाभावादत आह—*प-रिभाषेयमितीति । यद्यदुदात्तस्वरितविधायकं शास्त्रन्तत्तत्सूत्रैकवाक्यतयाऽस्य प्रवृत्तौ तत्तत्सूत्रविधेयस्यावस्थानम्भवतीति अस्य नियामकत्वमुपपादनीयम् । *अस्वरितत्वादिति । उत्तरत्र सम्बन्धप्रयोजकस्य स्वरितस्याभावादित्यर्थः । दोष-विशेषरूपं यत्स्वरितत्वन्तदभावस्यास्फुटत्वादाह—*एकवर्जमितीति । वैयर्थ्या-पत्तिमुपपादयति—*तत्तदिति । अधिकारत्वे सर्वैकवाक्यताया असम्भवोऽपि

मानोदरे शयित ओ चोदात्तः" [पा०सू०४-४-१०८] इत्याद्यसंग्रहापत्तेः। नापि विधिः। तथा सति क एको वर्जनीय इति न ज्ञायेत। *एवञ्च विनिगमनाविरहा*च्छास्त्रविहितोदात्तस्वरितकानां सर्वेषामेव वर्जनापत्तौ'आमलकीजः' इत्यादावुदात्तचतुष्टयं श्रूयेत। *तत्र हि *ङीष् प्रत्ययस्वरेणोदात्तः। "गतिकारक" (पा.सू.६-२-१३९)इति*कृत्स्वरः, "दीर्घकाशतुषभ्राष्ट्रवटञ्जे" (पा.सू.६-२-८२)इति पूर्वपदान्तोदात्तत्वम्'अन्त्यात्पूर्वं बह्वचः'(पा.सू.६-२ ८३) इति लकाराकारस्योदात्तत्वमिति विरोधाभावात् युगपदुदात्तचतुष्टयं स्यात्, अस्य तु*मकाराकारोऽवकाशःस्यादिति भावः। *परिभाषाया लिङ्गमाह—*स्वरविधीति। सूत्रेऽनुदात्तशब्दोऽर्शआद्यजन्तः। पदसामानाधिकरण्यात्। *अनुदात्तस्य विधीयमानत्वात्तद्भिन्न उदात्तः स्वरितो वा वर्ज्यत इति तद्विधावेवास्योपस्थानमित्याह—यस्मिन् पदे इति। *अत्र पदत्वे मात्रिन्यन्तरङ्गत्वात्पूर्वमेव स्वरप्रवृत्तिः। पदग्रहणन्तु*परिमाणार्थम्। *अत एव"धातोः" (पा० सू० ६-१-१६२) इत्यादौ*न दोषः। *तद्व्यावर्त्यन्तु पदसमुदायः। यस्य पदत्वं भावि तस्यैवैकवर्जमनुदात्तमित्यर्थात्। स्पष्टश्चेदं विकाराधिकारे"अनुदात्तादेश्च" (पा० सू० ४-३-१४०)इति सूत्रे*भा-

---

भवतीत्याह—*किञ्चेति। *एवञ्च=विधिपक्षे एकपदार्थानिश्चये च। विधित्वपक्षे शास्त्रसामान्यस्य ग्रहणं स्यादित्याशयेनाह—*शास्त्रविहित इति। उदात्तचतुष्टयस्य श्रवणापत्तिमुपपादयति—*तत्रेत्यादिना। *ङीष्=जातिलक्षणो ङीष्। *कृत्स्वरः=आमलक्याञ्जात इति विग्रहे "सप्तम्याञ्जनेर्डः" (पा० सू० ३-२-९७) इति सूत्रविधीयमानडप्रत्ययस्य स्वरः। *मकाराकार इति। तस्य शास्त्रविशेषेण विशेषस्य विधानाभावात्। *परिभाषाया लिङ्गम्=परिभाषाया उपस्थितिप्रयोजकं लिङ्गम्। *स्वरविधीतीति। स्वरविधित्वमेवास्य लिङ्गमिति भावः। अत्र को वर्जनीय इत्याकाङ्क्षायामाह-*अनुदात्तस्येति। स्वराणाम्प्रवृत्तिव्यवस्थामाह—*अत्रेति। *परिमाणार्थमिति। यावतः पदत्वम्भावि तावत्समुदायपरम्। *अत एव=पदशब्दस्य तादृशसमुदायलाक्षणिकत्वादेव। *न दोषइति। पदशब्दस्य तादृशसमुदायलाक्षणिकत्वाभावे "धातोः" (पा० सू० ६-१-१६२) इति सूत्रस्य प्रवृत्तिकाले पदसंज्ञकसमुदायाभावेनास्याः परिभाषाया अप्रवृत्तिः स्यात्। नन्वेवम्पदशब्दोपादानवैयर्थ्यमत आह—*तद्व्यावर्त्यमिति। *भाष्यकैयटयोरिति। तत्र हि—अनुदात्तादेरञो विधाने "आद्युदात्तान् ङीष उपसंख्यानम्" इति वार्त्तिकम्। कुवली बदरी। कुवलीबदरीशब्दौ ग्रामादित्वादाद्युदात्तौ ताभ्यां गौरादित्वान् ङीष्प्रत्यये कृते प्रकृतेराद्युदात्तत्वा-

ष्यकैयटयोः। तमेकमिति। एकग्रहणं विधीयमानोपलक्षणम्। *एवञ्च *"तवै चान्तः"[पा०सू०६–२–५१]इत्यादौ द्वयादीनां वर्जनसिद्धिः। *'इन्द्राबृहस्पती'इत्यत्र"देवताद्वन्द्वे च"(पा०सू०६–२·१४१) इति पदद्वयस्यापि प्रकृतिस्वरे विधेयत्रयाणां वर्जनम्। बृहस्पतिशब्दो हि वनस्पत्यादित्वाद्*

---

त्प्रत्ययस्योपसङ्ख्यानं कर्त्तव्यम् इति पूर्वपक्षे ङीष्प्रत्ययस्य प्रत्ययसंज्ञासन्नियोगशिष्टत्वादाद्युदात्तत्वे तदेकवाक्यतापन्नशेषनिघातेनानुदात्तादिरेवायमित्यभिप्रायेण समाधाने सिद्धान्तिना कृते पदस्यानुदात्तादित्वम्=पदस्य निघातः। सुप्तिङन्तञ्च पदम्। ङ्याप्प्रातिपदिकाच्च प्रत्ययो विधीयते इति पूर्वपक्षिणोक्तम्। ततः सिद्धान्त्येकदेशी आह--न वा समर्थस्यानुदात्तादित्वात्। समर्थमनुदात्तादित्वेन विशेषयिष्यामः इति। ततः पुनः पूर्वपक्षी आह-"नैवं शक्यम्। इह प्रसज्येत वाचो विकारः,त्वचो विकारः। ("सावेकाचस्तृतीयादिर्विभक्तिः" (पा० सू० ६–१–१६८) इति विभक्त्युदात्तत्वे कृते शेषनिघातेन समर्थस्य विभक्त्यन्तस्यानुदात्तादित्वात्प्राप्नोतीति भावः।) इह च न स्यात्-सर्वेषां विकारः सार्व इति। ("सर्वस्य सुपि"(पा०सू०६–१–१९१)इति विभक्त्यन्तस्याद्युदात्तत्वात्।)तस्मान्नैवं शक्यम्। न चेदेवमुपसङ्ख्यानङ्कर्त्तव्यम्। न कर्त्तव्यम्? आचार्यप्रवृत्तिर्ज्ञापयति यावत्येव द्वितीयस्य स्वरस्य प्रादुर्भावस्तावत्येव पूर्वस्य निघात इति। यदयम्भिक्षादिषु गर्भिणीशब्दस्य पाठङ्करोति। कथङ्कृत्वा ज्ञापकम्?। भिक्षादिषु गर्भिणीशब्दस्य पाठे एतत्प्रयोजनमनुदात्तादिलक्षणोऽञ् माभूदिति। यदि च पदस्य निघातः गर्भशब्दोऽयमाद्युदात्तस्तस्मादिन्नन्ताद्यः प्रत्ययः प्राप्नोति स तावत्स्यात्तस्मिन्नवस्थिते निघातः तत्र कोऽनुदात्तादिलक्षणस्याञः प्रसङ्गः। पश्यति त्वाचार्यः यावत्येव द्वितीयस्य स्वरस्य प्रादुर्भावस्तावत्येव पूर्वस्य निघात इत्यतो भिक्षादिषु गर्भिणीशब्दम्पठति। पदग्रहणङ्किमर्थम्पदग्रहणम्परिमाणार्थम्। पदग्रहणङ्क्रियते परिमाणार्थम्। पदावधेर्यथा स्यात् वाक्यस्य मा भूदनुदात्तम्पदमेकवर्जम्"इति भाष्ये उक्तम्।"पूर्वस्य निघात इति। प्राग्व्यवस्थितस्य निघात इत्यर्थः। गर्भशब्दोऽयमिति। "अर्त्तिगृभ्याम्भन्"(उ० पा० ३ सू० ४४०) इति प्रत्ययस्य नित्त्वात्। पदग्रहणमिति। यस्य पदत्वम्भविष्यति तस्यैवैकवर्ज्जमनुदात्तं यथा स्यात्पदसमूहस्य मा भूदित्येवमर्थम्पदग्रहणमित्यर्थः" इति कैयटे। *एवञ्चेति। एकग्रहणस्य विधीयमानोपलक्षणत्वे चेत्यर्थः। *तवैचान्तेति। "तवैचान्तश्च युगपत्" (पा० सू० ६–२–५१) इति सूत्रेण तवैप्रत्ययान्तस्यान्त उदात्तोऽनन्तरो गतिश्च प्रकृत्या भवतीति युगपदुभयविधानेन द्वयोर्वर्जनम्। एतत्सूत्रोपादानम्पदद्वयात्मकपदे द्वयोर्वर्जनप्रदर्शनाभिप्रायेण। इदमुपलक्षणमसमासात्मकैकपदेऽपि "अन्तश्च तवै युगपत्"(पा० सू० ६–१–२००)इत्यनेनाद्यन्तयोर्युगपदुदात्तत्वविधानेनोभयोर्वर्जनात्। द्व्यादीनामित्यत्रादिपदोपादानेन क्वचित्त्रयाणां वर्जनमित्युक्तम् तस्योदाहरणमाह—*इन्द्राबृहस्पती इति। *द्व्युदात्त इति। बृहच्छब्दोऽतिप्रत्ययान्तत्वादन्तोदात्तो "वर्त्तमाने पृषन्महद्बृहत्"(उ० पा० २ सू० २५०)इति व्युत्पा-

द्युदात्त इति बोद्धव्यम् । (१)*(नचैवं "समाने ख्यः स चोदात्तः" [ उ० पा० ४ सू० ५८६ ] इत्यनेन प्रत्ययोदात्तत्वस्य सादेशोदात्तत्वस्य चै*केनैव सूत्रेण विधानादुभयोर्वर्जनापत्तिरिति उदात्तद्वयश्रवणं स्यादिति वाच्यम् । "तवै चान्तश्च" [ पा० सू०६-२-५१ ] इत्यादौ युगपद्ग्रहणेन *यत्नं विनोभयोरेकत्रासमावेशज्ञापनादिति भावः ।) *अत्र यस्मिन् पदे यस्यामवस्थायां यस्याच उदात्तादिर्विधीयते तत्र पदे तस्यामवस्थायां सन्निहितमजन्तरं निहन्यत इति बोद्धव्यम् । स्पष्टश्चेदम् "आद्युदात्तश्च"(पा० सू० ३-१-३) इति सूत्रे पदमञ्जर्याम् । नचैवं *चिनुत इत्यत्र श्नोर्निघातो न सिद्ध्यति तस्यो*दात्तत्वप्रवृत्तिकालेऽसन्निहितत्वादिति वाच्यम् । *युगपद्ग्रहणेनानुदात्तातिरिक्तस्वरयोरसमावेशज्ञा-

दितः।पतिशब्दश्च "पातेर्डतिः"(उ०पा०४ सू०५०६)इति डतिप्रत्ययस्याद्युदात्तत्वादाद्युदात्तः । इन्द्रशब्दश्च रन्नन्तत्वादाद्युदात्तः । *न चैवमिति । एकग्रहणस्य विधीयमानोपलक्षणत्वे दोषः स्यादित्याशयः । *एकेनैवेति । तेन समानशब्दे उपपदे ख्याधातोरिण्प्रत्यय "आद्युदात्तश्च" ( पा० सू० ३-१-३ ) इति सूत्रैकवाक्यतयोदात्तः सकारः समानशब्दस्थानिक एकस्मिन्नेव काले विधीयते । तस्य च प्रत्ययस्य डित्त्वमप्यतिदिश्यते "वातेर्डित्"(उ० पा०४सू० ५८३) इत्यतो डिद्ग्रहणानुवृत्त्या । यद्यपि विधेयभेदाद्वाक्यभेदो भवति तथापि विधेयत्रयविषयको महावाक्यार्थबोधः समूहालम्बनात्मक एक एवेत्याशयः । यत्र भिन्नेन सूत्रेण विधानन्तत्र पौर्वापर्यभावेन प्रवृत्त्या व्यवस्था कर्तुं शक्येति तद्भावः । *यत्नं विनेति । विशेषोपादानं विनेत्यर्थः । एवञ्च "समाने ख्यः स चोदात्तः" इत्यत्र सस्य विशिष्योदात्तत्वविधानेन तस्यैव शेषो भवति । "धिन्विकृण्व्योर च" ( पा० सू० ३-१-८० ) इत्यत्र यथाऽकारादेशस्य पृथग्विधेयत्वकल्पना तद्वदिति तात्पर्यम् । एवं सति यथा वर्जनस्य क्रम इष्टस्तथाह—*अत्र यस्मिन् पद इति । *एवम्=तस्यामवस्थायां सन्निहितमजन्तरमिति स्वीकारे । *उदात्तत्वप्रवृत्तिकाल इति । तस उदात्तत्वप्रवृत्तिकाल इत्यर्थः *युगपद्ग्रहणेनेति । "तवैचान्तश्च युगपत् " ( पा० सू० ६-२-५१ ) इत्यनेन तवैप्रत्ययान्तस्यान्त उदात्तो गतिश्चानन्तरः प्रकृत्या इत्यनेन कृत्स्वरापवादभूतेन 'अन्वेतवा उ'इत्यादावुभयोरुदात्तयोः श्रवणार्थं युगपद्ग्रहणं क्रियते यदि यत्नं विनापि समावेशस्तदा तवैप्रत्ययान्तस्यान्तोदात्तत्वे कृते तस्य गतेश्च अनेन प्रकृतिस्वरे बोधिते तस्य "निपाता आद्युदात्ताः" [ फि० सू० ८० ] इत्यनेनाद्युदात्ततयोभयोः समावेशे सिद्धे किं युगपद्ग्रहणेन । कृतञ्च तद्यत्नाभावे समावेशाभावं ज्ञापयतीति भावः । एवञ्च 'चिनुतः' इत्यत्र 'अन्यत्र विकरणेभ्यः' इति

( १ ) कंसान्तर्गतो ग्रन्थो मुद्रितपुस्तके नास्ति ।

पनात् तत्सिद्धेः । *वस्तुतस्तु *"आद्युदात्तश्च" (पा० सू० ३-१-३) "द्वित्रिभ्यां पाद्दन्" [पा० सू० ६-२-१९७] "पुंसोऽसु-

---

वक्ष्यमाणत्वात्तस उदात्तत्वेन वर्ज्यमानत्वसिद्धिः। ज्ञापकं विनापि चिनुत इत्यादौ न दोष इत्याह-*वस्तुत इति। *आद्युदात्तश्चेत्यादि। आद्ये "पित्स्वरात्तित्स्वरो विप्रतिषेधेन" इत्यनेन पित्स्वरतित्स्वरयोर्विप्रतिषेधविचारे 'कार्यो' 'हार्यो' इत्यत्र ण्यदन्ताट्टापि कृते एकादेशे तस्य पूर्वान्तवद्भावेन तित्स्वरस्य परादिवद्भावेन पित्स्वरस्य च प्राप्तौ विप्रतिषेधेन तित्स्वरो भवतीत्युक्तन्ततो विप्रतिषेधाभावेऽपि प्रथमं "तित्स्वरितम्" [पा० सू० ६-१-१८५] इति स्वरितत्वे कृते तत एकादेशे आन्तर्यतः स्वरितानुदात्तयोः स्थाने जायमानः स्वरितो भविष्यतीत्यभिहितम्। तत्रादौ स्वरितत्वमेव कथं ?, नित्यत्वादेकादेशेन भाव्यमिति परेण शङ्किते "स्वरभिन्नस्य प्राप्नुवन्विधिरनित्यः" (प० भा०) इति परिभाषयैकादेशस्य शब्दान्तरप्राप्त्या स्वरितत्वमप्यनित्यमुभयोरनित्ययोर्योगे परत्वात्स्वरितत्वमित्यभिहितेऽन्तरङ्गस्तर्ह्येकादेशो वर्णावाश्रित्यैकादेशः पदस्य स्वरितत्वमिति पूर्वपक्षिणा कथिते स्वरितत्वमप्यन्तरङ्गम्पदग्रहणम्परिमाणार्थम् इत्युक्तम्। एतेन पदस्य न कार्यिता किन्तु कार्यित्वं वर्णस्यैव स्वरितत्वे। पदस्य तु तदेकवाक्यतापन्नशेषनिघातयोग्योपलक्षकतेति सूचितम्। द्वितीये "द्वित्रिभ्यां पाद्दन्मूर्द्धसु" (पा० सू० ६-२-१९७) इत्यत्र "द्वित्रिभ्यां षमूर्ध्नः" (पा० सू० ५-४-११५) इति कृतसमासान्तस्य निर्देशो युक्तोऽथवाऽकृतसमासान्तस्य युक्त इति विचारे यदा समासस्यान्तोदात्तत्वमित्यश्च समासान्तस्तदाऽकारान्तग्रहणं यदा तूत्तरपदस्यानेनोदात्तत्वविधानमिति पक्षस्तदा कृतेऽपि समासान्ते तस्योत्तरपदे अनन्तर्भावान्नकारान्तस्य स्वरविधिरित्यभिप्रायके कृतसमान्तनिर्देशे समासान्तविधेरनित्यत्वात्तस्मिन्नकृते द्विमूर्द्धा त्रिमूर्द्धेत्यत्र स्वरो न प्राप्नोतीत्यभिधाय "अस्तु तर्हि नकारान्तस्य ग्रहणम्" इति कथिते "द्विमूर्द्धस्त्रिमूर्द्ध इत्यत्र कृते समासान्ते उत्तरपदस्य विधीयमानमन्तोदात्तत्वं प्रत्ययस्य न प्राप्नोति" इति शङ्कायाम् "उदात्तनिवृत्तिस्वरेणान्तोदात्तत्वम्प्रत्ययस्य भविष्यति" इत्युक्तम्। एतेन समासोत्तरपदस्यान्तोदात्तत्वे तदेकवाक्यतापन्नशेषनिघातेन प्रत्ययस्यानुदात्तत्वमिति ध्वनितम्। अन्यथाऽनुदात्ते परे टिलोपाभावेनोदात्तनिवृत्तिस्वरस्य प्राप्तिर्न स्यात्। तच्चानुदात्तत्वम्पदग्रहणस्य परिमाणार्थत्वे सत्युपपद्यत इति। तृतीये पुमानित्यस्याद्युदात्तस्य परमपुमानित्यस्यान्तोदात्तस्य सिद्ध्यर्थम् "असुङ्ङ्युपदेशिवद्वचनं स्वरसिद्ध्यर्थम्बहिरङ्गलक्षणत्वात्" इति वार्त्तिककृतोक्तम्। एवञ्च विभक्त्युत्पत्तेः प्रागुपदेशावस्थायामेवासुङ् भवति अन्यथा "पुञो डुम्सुन्" इति डुम्सुन्नन्तः पुंस्शब्दो नित्स्वरेणाद्युदात्तस्तदवयवसकारस्य स्थाने जायमानोऽसुङादेशो यथा पुमानित्यत्र स्रंसनधर्मिणो हलः स्थाने जायमानत्वादनुदात्तो भवति तथा परमपुमानित्यत्रापि स्यादिष्यते त्वन्तोदात्तत्वमत उपदेशिवद्वचनेन समासान्तोदात्तत्वात्पश्चात्प्रवर्त्तमानात्पूर्वमेवासु-

ङ्" ( पा० सू० ७-१-८९ ) इति सूत्रस्थभाष्यप्रामाण्येन *यावत्पदत्वं भावि तावत्संनिहिताजन्तस्य निघातप्रवृत्तिरित्यर्थाङ्गीकारेणादोषात् । *चिनु इति तु 'अन्तरङ्गानपि' *इति न्यायेन साध्यम् । *एवंच 'आगमा अनुदात्ताः'इति नापूर्वमितीति दिक् । *यत्तु इयं यथोद्देशैन न कार्यकालेति त्रिपाद्यां न प्रवर्त्तते। *अत एव तव्यतस्तित्वं चरितार्थम् । ताद्धि "तित्स्वरितम्" (पा० सू० ६-१-१९५) इत्यन्तस्वरितार्थम् । तत्र ह्य*न्त इति वर्तते। त्रिपाद्यां परिभाषाप्रवृत्तौ प्रत्ययस्वरेणाद्युदात्तत्वे शेषनिघातेनानुदात्तस्यान्तस्य"उदात्तादनुदात्तस्य" ( पा० सू० ८-४-६६ ) इति स्वरिते शेषनिघातेन सिद्धौ तद्वैयर्थ्यं स्पष्टमेव । एवं "यतोऽनावः" ( पा० सू० ६-१-२१३ ) *इत्यपि ज्ञापकम् । *अन्यथा "यतोऽनावः" [ पा० सू० ६-१-२१३ ]इत्याद्युदात्ते कृते शेषनिघाते "उदात्तादनुदात्तस्य" ( पा० सू० ८-४-६६ ) इति स्वरिते शेषनिघाते तित्वप्रयुक्ता-

---

ङादेशः स्वीक्रियतेऽन्यथाऽपरनिमित्तकत्वेन समासान्तोदात्तत्वस्यान्तरङ्गत्वात्सर्वनामस्थाननिमित्तकस्यासुङादेशस्य बहिरङ्गत्वात्पूर्वं समासान्तोदात्तत्वेन परमपुमानित्यत्र पुंशब्दोकारस्योदात्तत्वे कृते तदनन्तरमसुङादेशेऽपि सोऽनुदात्त एव प्रसंज्येतेति मध्योदात्तम्पदम्प्रसज्येत । ततः परेणाद्युदात्तोऽसुङादेश उच्चारणीय इत्यभिप्रायेणाद्युदात्तनिपातनङ्करिष्यते स निपातनस्वरः समासस्वरस्य बाधको भविष्यतीत्यभिहिते सिद्धान्तिना निपातनस्वरस्य प्रकृतिस्वरबाधकत्वापत्त्या पुमानित्यत्राप्यन्तोदात्तत्वापत्तिः स्यादत उपदेशिवद्भावारम्भ एव युक्त इत्यभिहितम् । यदि पश्चात्प्रवर्त्तमानस्वरविधायकवाक्यैकतापन्नशेषनिघातेन पूर्वं प्रवर्त्तमानस्योदात्तत्वस्य बाधो न स्यात्तदाऽऽद्युदात्तत्वनिपातनैकवाक्यतापन्ननिघातेन बाधनं भविष्यतीति निपातनस्वरस्य प्रकृतिस्वरबाधकत्वापत्तिरभिहिता सा विरुध्येतेति पदग्रहणस्य परिमाणार्थत्वं युक्तमेव । *यावत्पदत्वं भावीति । अत्र यावदिति कालस्य परामर्शकम् । यावत्कालपर्यन्तम्पदत्वम्भावीत्यर्थः । नन्वेवञ्चिन्वित्यत्र "सेर्ह्यपिच्च" ( पा० सू० ३-४-८७ ) इति ह्यादेशस्यापित्करणेन प्रत्ययाद्युदात्तत्वं ह्यादेशस्य भवतीति तदेकवाक्यतापन्नशेषनिघातेनोभयोरनुदात्तयोः श्रवणं स्यादिष्यते त्वाद्युदात्ततेत्यत आह—*चिनु इति त्विति । *इति न्यायेन="अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते"इति न्यायेन । एवञ्च लुक्प्रयोजकस्य बलवत्त्वात्प्रत्ययाद्युदात्तत्वमादौ न प्रवर्त्तते। विकरणस्वरस्य त्वबाधकत्वादाद्युदात्तम्पदम्भवति । *एवञ्च=यावत्पदत्वं भावीति व्याख्याने च । अस्या यथोद्देशत्ववादिमतन्दूषयति-*यत्त्वित्यादिना ।*अत एव=यथोद्देशत्वाङ्गीकारादेव। *अन्त इति वर्त्तते इति ।"कर्षात्वतः"(पा०सू०६-१-१५९) इत्यत इत्यादिः। *इत्यपि ज्ञापकमिति।यदन्तस्याद्युदात्तस्य श्रवणार्थङ्क-

त्तत्स्वरितादविशेषेण तद्वैयर्थ्यं स्पष्टमेवेति प्राञ्चः । तत्र,सन्निपातपरिभाषया "उदात्तादनुदात्तस्य"(पा.सू.८-४-६६)इतिविषये शेषनिघाताप्रवृत्त्या*तयोश्चारितार्थ्येन भवदुक्तार्थे दृढतरमानाभावात् । *किं च कर्तव्यं तत्र कर्तव्यंक इत्यादौ कण्ठ्यः क कण्ठ्यस्तत्रेत्यादौ "नोदात्तस्वरितोदयम्" [पा०सू०८-४-६७]इति 'उदात्तादनुदात्तस्य"(पा०सू०८-४-६६)इत्यस्य निषेधविषये तव्यतस्तित्त्वं "यतोनावः"[पा० सू० ६-१-२१३] इतिच चरितार्थमिति ज्ञापकं दुरुपपादम् । *तस्मादत्र लक्ष्यानुसारेण "अनुदात्तं पदम्"(पा० सू० ६-१-१५८) इत्यस्या*धिककार्यार्थात्स्वरितत्वप्रतिज्ञानादसिद्धे ऽप्रवृत्तिः । यथोद्देशत्वन्त्वस्या न युक्तम् । *अत्रैव सूत्रे "कार्यकालं सञ्ज्ञापरिभाषम्"इति भाष्यविरोधात् । अत एव आमलकीज इत्यादौ दीर्घकाशेत्यपेक्षया ऽन्त्यात्पूर्वं बह्वच इति परत्वादित्युपपद्यते । *अन्यथो*भयोः सम्भवेनाऽसम्भवाऽभावा*द्विप्रतिषेधानुपपत्तिः । कार्यकालत्वे तूभाभ्यामप्यस्यैकवाक्यतया तेन बाध्यमानताऽनेन वेत्युपपद्यते विरोधः । *अत एव "अनुदात्तं पदम्" ( पा० सू० ६-१-१५८ ) इत्यस्याधिकारत्वे षाष्ठ एकः सङ्गृहीतः, येऽन्ये सप्ताध्याय्यां स्वरास्ते न सङ्गृहीताः स्युरिति षाष्ठभाष्योक्तं सङ्गच्छ-

---

तन्तत्तास्मिन्नर्थे ज्ञापकमित्यर्थः । *अन्यथा=अस्याः कार्यकालत्वे । *तयोश्चारितार्थ्येनेति । तव्यतस्तित्त्वस्य "यतोऽनावः" ( पा० सू० ६-१-२१३ ) इति सूत्रस्य च चारितार्थ्येनेत्यर्थः । ननु सन्निपातपरिभाषायाः स्वरविधावप्रवृत्तेर्वक्ष्यमाणत्वान्नेदं युक्तमत आह—*किञ्चेति । कर्त्तव्यं क कण्ठ्यः केत्यत्र कशब्दस्य "तित्स्वरितम्" ( पा० सू० ६-१-१८५ ) इति "किमोऽत्" ( पा० सू० ५-३-१२ ) इति विधीयमानस्य यतः स्वरितत्वात्तत्परत्वेन कण्ठ्यस्तत्र त्रलो लित्त्वेन तत्रशब्द आद्युदात्त इति उपात्तपरत्वेन "नोदात्त" (पा० सू० ८-४-६७) इत्यस्य प्रवृत्तिरिति भावः । एवं रीत्या परोक्तस्य यथोद्देशत्वस्वीकारे ज्ञापकस्य खण्डनेऽस्याः कार्यकालतैव । त्रिपाद्यामप्रवृत्तौ तूपायान्तरमाह—*तस्मादिति । *अधिककार्यार्थादिति । एतेनास्वरितत्वादित्यनेन न विरोधः । उत्तरसूत्रेषु सम्बन्धप्रयोजकस्य स्वरितत्वस्यास्वीकारात् । *अत्रैव सूत्र इति । तत्र हि—"परिभाषेयम् । किङ्कृतम्भवति ?। कार्यकालं संज्ञापरिभाषम् । यत्र कार्यन्तत्रोपस्थितमिदन्द्रष्टव्यम्"इत्युक्तम् । *अत एव=अस्याः कार्यकालत्वादेव ।*अन्यथा=यथोद्देशत्वे।*उभयोः सम्भवेन="दीर्घकाश"(पा०सू०६-२-८२)इत्यनेनादेराकारस्योदात्तत्वम् "अन्त्यात्पूर्वम्"(पा०सू०६-२-८३)इत्यनेन लकारोत्तराकारस्योदात्तत्वमित्येवं सम्भवेन । *विप्रतिषेधेति । अस्य भाष्योक्तेत्यादिः । *अत एव=कार्यकालत्वेऽपि स्वरितत्वप्रतिज्ञयाऽप्रवृत्तिस्वीकारादेव । अन्यत्वे प्रतियोगित्वेनाष्टमिकस्यापि

ते।*अन्यत्वे षाष्ठस्य प्रतियोगित्वेन षाष्ठस्यापि सप्ताध्याय्यन्तर्गतत्वप्रतीतेः। अष्टमे प्रथमे पादेऽनुदात्तस्यैव विधानं, त्रिपाद्यान्तु *उक्तरीत्याऽप्रवृत्तिरेवेति तद्भावः। *अत एव देवदत्तेत्यादौ प्लुतासिद्धत्वात्पूर्वं*षाष्ठाद्युदात्तत्वे ततः प्लुते तदेकवाक्यतापन्नशेषनिघाताभावेनोदात्तद्वयसमावेशः। न च षाष्ठे प्रवृत्तेऽसिद्धेना*नेन सिद्धस्य तस्य*कथं निवृत्तिरिति वाच्यम्। *बाधका-भावात्।*ध्वनितं चेदं "गुरोरनृतः" (पा० सू० ८-२-८६) इत्यत्र भा-

---

ष्ये ग्रहणशङ्कां वारयति—*अन्यत्व इति। एवञ्च सप्ताध्यायीतिपदमष्टमाध्यायाति-रिक्तस्यैव बोधकमिति भावः। *उक्तरीत्या=स्वरितत्वेन। *अत एव=उक्तरी-त्याऽष्टमेऽप्रवृत्तेरेव। *षाष्ठाद्युदात्तत्वे="आमन्त्रितस्य च" (पा० सू० ६-१-१९८) इत्याद्युदात्तत्वे। *अनेन=प्लुतोदात्तत्वेन। *कथन्निवृत्तिरिति। यदि प्लुतोदात्तत्वेन "अनुदात्तम्पदम्" (पा० सू० ६-१-१५८) इत्यस्यैकवाक्यता स्यात्तदा जातस्यामन्त्रिताद्युदात्तस्य श्रवणन्न स्यादिति हि तवाभिमतन्तच्च न सम्भवति। प्लुतोदात्तत्वस्यासिद्धत्वादिति तद्भावः। *बाधकाभावादिति। पूर्वत्र परमसिद्धन्न तु परस्मिन् पूर्वस्यासिद्धत्वमिति परदृष्ट्या पूर्वस्याद्युदात्त-त्वस्य सिद्धत्वान्निवृत्तिः स्यादेवेति भावः। *ध्वनितमिति। तत्र हि—"प्राचा-मिति वचनङ्किमर्थम्" इति विचारे एकैकग्रहणेन पर्यायार्थेन विकल्पस्य सिद्धि-मुक्त्वा "एकैकग्रहणं यौगपद्येन प्लुतो मा भूदित्येतदर्थम्" इत्यभिधाय "अनुदा-त्तम्पदमेकवर्जम्" (पा० सू० ६-१-१५८) इति वचनान्नास्ति यौगपद्येन सम्भ-वः। असिद्धः प्लुतस्तस्यासिद्धत्वान्नियमो न प्राप्नोति। नैष दोषः। यद्यपीद-न्तत्रासिद्धं तत्त्विह सिद्धम्। कथम्? कार्यकालं संज्ञापरिभाषम्। यत्र कार्यन्तत्रो-पस्थितन्द्रष्टव्यम्। गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचामुपस्थितमिदम्भ-वति 'अनुदात्तम्पदमेकवर्जम्' इति। इहापि तर्हि न प्राप्नोति—देवदत्ता३। सि-द्धाऽसिद्धावेतौ। यौ हि सिद्धावेवासिद्धावेव वा तयोर्नियमः" इत्युक्तम्। इह 'अनुदात्तम्पदमेकवर्जम् इति वचनान्नास्ति यौगपद्येन सम्भवः' इत्यभिधाय एक-मेव "गुरोः" (पा० सू० ८-२-८६) इति सूत्रं सकृदेव सर्वेषां प्लुतविधायकमि-त्येवं वक्तुमशक्यमेतदेकवाक्यतापक्षेऽनुदात्तमिति वचने एकशब्दोपादानेनैकस्य वर्ज्यमानताऽन्येषान्तु तस्मिन्नेव समयेऽनुदात्तत्वं विधीयत इति निष्कर्षोऽस्ति, तथा च कस्यैकस्य वर्ज्यमानतेति निश्चयाभावेन यौगपद्येन वक्तुमशक्यमित्य-भिप्रायेण ततस्तेनैकवाक्यतैव न सम्भवतीत्याशयेनाह—असिद्धः प्लुत इति। अत्रासिद्धत्वाभिधानङ्कार्यकालपक्षेऽपि स्वरितत्वप्रतिज्ञया त्रिपाद्यान्तस्याः प-रिभाषाया अप्रवृत्त्यभिप्रायेण तेन स्वरितत्वेनाप्रवृत्तिर्ध्वनितेति। ततः परेण यथोद्देशपक्षाभिप्रायेणानेनासिद्धत्वाभिधानङ्कृतन्तच्चेह न सम्भवति कार्यकाल-पक्षाभ्युपगमादित्याशयेन नैष दोष इत्यादिना कार्यकालपक्षे प्रदर्शिते ततः स-माधाताऽऽह—"इहापि तर्हीति। देवदत्ता३ इत्यत्रामन्त्रिताद्युदात्तत्वेन प्लुतो-

ष्ये।*अत एव कन्यानूपे इत्यत्र न शेषनिघातः। *कन्याशब्दो हि "कन्याराजमनुष्याणामन्तः" इत्यन्तस्वरितः । अनूपश्च "अनोरप्रधानकनीयसि" ( पा० सू० ६-२-१८९ ) इत्य*न्तोदात्तः । तयोः स्वरितानुदात्तयोः सवर्णदीर्घ आन्तर्यतः स्वरितः । तदेकवाक्यतापन्नशेषनिघातेन पेकारस्या*नुदात्तत्वं स्यात्; इष्यते तूदात्तस्वरितयोः समावेशः । *मम तु एकादेशस्य*बहिरङ्गतयाऽसिद्धत्वेन*तत्स्वरस्यापि*तत्त्वेन*नानेनैकवाक्यतेति न दोषः । *स्पष्टश्चेदं "स्वरितो वानुदात्तेऽपदादौ" ( पा० सू० ८-२-६ ) इति सूत्रे भाष्ये इत्याहुः ।

गोपायतमिति । गुपेः "धातोः" ( पा० सू० ६-१-१६२ ) इत्यन्तोदात्तः । ततः प्रत्ययस्वरेणाद्युदात्ते आये गोपायेत्यायान्तस्य धातुत्वात् धातुस्वरे यकाराकार उदात्तः । तस्य शबका-

---

दात्तत्वसमावेशो न स्यादिति भावः । सिद्धासिद्धाविति । आमन्त्रितादयुदात्तत्वं सिद्धं तस्मिंस्त्वपेक्षिते प्लुतोदात्तोऽसिद्ध इति निघातो न भविष्यतीत्यर्थः । प्लुतोदात्तत्वस्यासिद्धत्वात्तदेकवाक्यतापन्नस्य "अनुदात्तम्पदम्" इत्यस्याप्यसिद्धत्वान्न निघात इति भावः । *अत एव=कार्यकालपक्षेऽप्यसिद्धत्वाश्रयशास्त्रैकवाक्यतायाः स्वरितत्वेनास्वीकारादेव । शेषनिघाताभावमुपपादयति—*कन्याशब्दो हीत्यादिना । *अन्तोदात्त इति । अस्य तदेकवाक्यतापन्नशेषनिघातेनानूपशब्दादिरकारोऽनुदात्त इति शेषः । *अनुदात्तत्वं स्यादिति । *मम तु=असिद्धत्वाश्रयशास्त्रैकवाक्यतायाः स्वरितत्वेनास्वीकर्तुर्मम तु । *बहिरङ्गतया=पूर्वपरोभयसापेक्षत्वेन बहिरङ्गतया । अपरनिमित्तकतया परिभाषा त्वन्तरङ्गेति भावः । *तत्स्वरस्यापि=एकादेशस्वरस्यापि । *तत्त्वेन=बहिरङ्गत्वेन । *नानेन=आन्तर्यतो जायमानैकादेशस्वरेण । स्वरितत्वेनासिद्धेऽप्रवृत्तिरित्यत्रासिद्धत्वस्य द्विविधस्यापि ग्रहणमिति भावः । *स्पष्टश्चेदमिति । तत्र हि—गाङ्गेऽनूपे इत्यत्राणन्तगाङ्गशब्दस्य सप्तम्येकवचनेनैकादेशे "एकादेश उदात्तेन" ( पा० सू० ८-२-५ ) इत्यनेनोदात्तत्वे कृते ततः अनूपशब्दाद्यवकारेण सह "एङः पदान्तादति" ( पा० सू० ६-१-१०९ ) इत्येकादेशस्य पक्षे स्वरितत्वम्भवतीत्येवमर्थं स्वरितग्रहणं सूत्रकृता कृतम्, तच्च न कार्यमित्यभिप्रायेण स्वरितग्रहणं शक्यमकर्तुं कथमनुदात्ते परत उदात्तो भवतीत्येव सिद्धम् । केनेदानीं स्वरितो भविष्यति गाङ्गेऽनूपे इति । आन्तर्यत उदात्तानुदात्तयोरेकादेशः स्वरितो भविष्यति । इदन्तर्हि प्रयोजनन्तेन वर्ज्यमानता मा भूत्" इति प्रतिपादितम् । अस्यायं भावः—प्रकृतसूत्रे स्वरितग्रहणाभावेऽनुदात्ते पदादौ य एकादेशस्तस्याऽनेन सूत्रेण वोदात्तता विधेया यदा नोदात्तता तदोदात्तानुदात्तयोरेकादेशस्यान्तरस्यादुभयधर्मवान् स्वरितो भविष्यतीति सिद्धान्तिनोक्ते पूर्वप-

रेण पित्त्वादनुदात्तेनैकादेश उदात्तः। तमित्यस्य लसार्वधातुकस्वरेणानुदात्तस्य "उदात्तादनुदात्तस्य"(पा०सू०८-४-६६)इति *स्वरितः। *न च-अनुदात्तातिरिक्तस्वरयोरसमावेशस्य ज्ञापनात्कथमत्रो *दात्तस्वरितयोः समावेशः?, *न च सन्निपातपरिभाषया निर्वाहः *तस्या अनित्यत्वेन स्वरविधावप्रवृत्तेः, अन्यथा "अन्तोदात्तादुत्तरपदादन्यतरस्याम्"(पा०सू०६-१-१६९)"ह्रस्वनुड्भ्यां मतुप" (पा०सू० ६-१-७६)इत्यादिभिरपि स्वरे कृते *शेषनिघातो न स्यात्; *किंचाग्ने*भद्रं करिष्यसीत्यादौ ककारनिष्ठस्वरितत्वमादाय स्यप्रत्ययादीनां निघातः स्यात्, न हि तत्र परिभाषाया उक्तसम्भवोऽस्ति;—इति वाच्यम्। *अस्य स्वरितस्यासिद्धत्वेनादोषादिति दिक्। ननु 'गोपा-

---

क्षिणोक्तमिदन्तर्हीति। य आन्तर्यात् स्वरितस्तस्य सिद्धत्वात्तदेकवाक्यतापन्नशेषनिघातेन पेराब्दोऽनुदात्तः स्यात्, उदात्तश्चेष्यते। यदा तु प्रकृतसूत्रे स्वरितग्रहणङ्क्रियते तदाऽस्य स्वरितस्यासिद्धत्वाद्वर्ज्यमानता न भवतीति। पुनः सिद्धान्ती आह—बहिरङ्गलक्षणत्वात्। असिद्धम्बहिरङ्गमन्तरङ्ग इत्येवन्न भविष्यति। यथैव कन्यानृप इत्यत्र कन्याराजन्यमनुष्याणामन्त इति अन्तस्य स्वरितत्वे तत एकादेशस्य स्वरितानुदात्तयोः स्थाने जायमानस्य स्वरितत्वमान्तरतम्यात्तस्य सिद्धत्वाद्वर्ज्यमानस्वरे सत्युदात्तस्वरितयोर्यौगपद्यन्न प्राप्नोत्यतोऽत्र यः परिहारोऽसिद्धम्बहिरङ्गमन्तरङ्गलक्षण इति, स एव गाङ्गेऽनूप इत्यत्रापि भविष्यतीत्यभिप्रायेण 'यथैव तर्हि क्रियमाणो यः स्वरितः सिद्धस्तेन वर्ज्यमानता न भवति एवमक्रियमाणेऽपि न भविष्यति तस्मान्नार्थः स्वरितग्रहणेन। असिद्धम्बहिरङ्गलक्षण इत्येव सिद्धम्" इति।

*स्वरित इति। अन्त्यो यस्तकाराकारः स स्वरित इत्यर्थः। *न चेति। वाच्यमिति परेणान्वयः। *उदात्तस्वरितयोः=उदात्तो यकाराकारः, स्वरितस्तकाराकारः, एतयोः। तटस्थः शङ्कते-*न चेति। उदात्तमुपजीव्य स्वरितत्वे कृते उपजीव्याविरोधस्यान्याय्यत्वात्स्वरितैकवाक्यतापन्नशेषनिघातो न भविष्यतीति भावः। पूर्वपक्षी समाधत्ते—*तस्या इति। *शेषनिघातो न स्यादिति। 'परमवाचा' अग्निमान्' इत्यत्र शेषनिघातो न स्यादित्यर्थः। तस्मात्सन्निपातपरिभाषाया अनित्यत्वादप्रवृत्तिर्वाच्यैवेति भावः। यथा 'गोपायनम्' इत्यत्रायन्तस्योदात्तत्वे गोकारोऽनुदात्तो भवति तथाऽन्यत्रापि प्राप्नोतीत्यभिमानेन शङ्कते—*किञ्चेति। *भद्रं करिष्यसीति। अत्र कृधातुरनुदात्तस्तस्य "उदात्तादनुदात्तस्य" (पा० सू० ८-४-६६) इति स्वरितत्वम्। नचात्र "तिङ्ङतिङः" [पा०सू० ८-१-२८] इति सूत्रेण समुदायस्य निघातेन भाव्यमित्यस्य शब्दस्यानुदात्तत्वमस्त्येवेति कथमियमाशङ्केति वाच्यम्। अग्ने भद्रं करिष्यसीति वाक्यस्य यदा यद्वृत्तसमभिव्याहृतत्वन्तदा "यद्वृत्तान्नित्यम्"(पा०सू०८-१-६६)इति निघातस्य प्रतिषेधात्। *अस्य स्वरितस्य=कका-

यतम्' इत्यादौ गुपेरपि धातुत्वात्तन्निमित्तकोकारोदात्तत्वस्य प्रत्ययस्वरनिमित्तकपाकारोदात्तत्वस्य च श्रवणापत्तिरत आह–सतिशिष्टेति । *तस्मिन्सति विहितेत्यर्थः । सतीत्यस्य उत्पन्ने इत्यर्थः । 'अस भुवि' इति स्मरणात्, 'यागात्स्वर्गो भवति' इत्यादौ भवतेरुत्पत्त्यर्थकत्वात् । *एतच्च न्यायसिद्धम् । यदा यदा यो य उदात्तस्वरितविधिः प्रवर्त्तते तदा तदा तेन सह "अनुदात्तं पदम्" (पा० सू० ६-१-१५८) इति एकवाक्यतया प्रवर्त्तते(१) । ततश्चोत्सर्गस्यापवादस्य वा यस्यैव चरमा प्राप्तिस्तदेकवाक्यतापन्नया *ऽनया लक्ष्यं व्यवस्थाप्यते । *अत एवौपगवत्वमित्यत्राण्प्रत्यये त्वप्रत्यये आवृत्त्या "आद्युदात्तश्च" (पा० सू० ३-१-३) इति प्रवर्त्तमानं स्वस्यैव प्रथमप्रवृत्तिबाधेन द्वितीयप्रवृत्त्या लक्ष्यं परिनिष्ठापयति । *"आद्युदात्तश्च" (पा० सू० ३-१-३) "धातोः" (पा० सू० ६-१-१६२) इत्यादीनां निमित्तभेदेन भिन्नत्वात् । एवञ्च यदा प्रत्ययाद्युदात्तत्वं तदा गुपो निहतत्वं ततो धातुत्वे पुनर्धातुस्वरप्रवृत्तौ पाशब्दोऽप्यनुदात्त इत्यादि बोध्यम् । अन्यत्रेति । *अत्र च ज्ञापकं तासेः परस्य लसार्वधातुकस्य निघातविधानम् । *अन्यथा (२)विकरणानां लकारविशेषापेक्षतया तिबादीनां लमात्रापेक्षत्वादन्तरङ्गत्वेन–तिबादीनामपि कर्त्राद्यर्थापेक्षत्वेन बहिरङ्गत्वे तु परत्वेन–तिबादिषु कृतेषु *क्रियमाणस्य तासिस्वरस्य सतिशिष्टत्वाच्छेषनिघातेन सिद्धे तद्वैयर्थ्यं स्पष्टमेव । (३)(यद्यपि लस्य तिप्तस्झीत्यस्य अनुदात्तङित इति प्रकरणेनैकवाक्यता तदास्य बह्वपेक्षत्वेन बहिरङ्गत्वादन्तरङ्गत्वात्तासौ कृते तिबादयः) (४)यदि तु "स्यतासी" (पा० सू० ३-१-३३) इत्यत्रार्द्धधातुक*इत्य-

रस्य जायमानो य "उदात्तादनुदात्तस्य" (पा० सू० ८-४-६६) इति स्वरितस्तस्य । *तस्मिन् सतीति । अत्र यस्तच्छब्दस्तेन यः पूर्वज्ञातः स परामृश्यते । *एतत्="सति शिष्टस्वरबलीयस्त्वम्" इत्याकारकं वाक्यम् । *अनया="अनुदात्तम्" (पा० सू० ६-१-१५८) इति परिभाषया । *अत एव=उत्तरकालप्रवृत्तिकस्य बलवत्त्वादेव । नन्वेकमेव "आद्युदात्तश्च" (पा० सू० ३-१-३) इति सूत्रं कथं स्वस्यैव बाधकमत आह—*आद्युदात्तश्चेति । *अत्र चेति । अन्यत्र विकरणेभ्य इत्यंशे । *अन्यथा=तदंशाभावे । *क्रियमाणस्य तासिस्वरस्येति । प्रत्ययाद्यु-

(१) यथोद्देशेऽपि विधीनामत्र सान्निध्येन तैरेकवाक्यतायाः स्वीकारात् ।

(२) 'अन्यथा परनिमित्तकत्वाभावेन तिबादीनामन्तरङ्गत्वेन तिबादिषु क्रियमाणस्य' इत्येवात्र स्थले मुद्रितपुस्तके पाठो दृश्यते ।

(३) कंसान्तर्गतो ग्रन्थो मुद्रिते नास्ति । (४) 'यदि वा' इत्यादर्शे ।

नुवर्त्य लावस्थायामेव स्यादय*स्तदेदं वाचनिकमिति बोध्यम् । *अस्य च विशेषापेक्षत्वात् सार्वधातुकस्वरापेक्षयैव विकरणस्वरस्य दुर्बलत्वं धात्वादिस्वरापेक्षया तु प्राबल्यमेव । *अत एव गृणातीत्यादौ श्न उदात्तत्वेन धातोर्निघातसिद्धिः । *इदमपि सार्वधातुकस्य श्रूयमाणत्वे एव । तेन 'चिनु' इत्यादौ*न दोषः । गृणीत इति । *अन्तोदात्तं पदम् । अत्र लसार्वधातुकनिघातो नास्ति अदुपदेशेति तपरकरणात् । आत इश्नस्यादन्तत्वाभावात् । "तिङ्ङतिङः" ( पा० सू० ८-१-२८ ) इति तु न । 'सहोता यस्य रोदसी' इति पूर्वचरणे यद्वृत्तस्य सत्त्वेन "यद्वृत्तान्नित्यम्" ( पा० सू० ८-१-६६ ) इति निषेधात् । *तस्य च*व्यवहितेऽपि प्रवर्तनादिति बोध्यम् ।

अनुदात्तस्य च यत्र ( पा० सू० ६-१-१६१ ) । *अत्र "कर्षात्वत" ( पा० सू० ६-१-१५९ ) इत्यतोऽन्त इति नानुवर्त्ततेऽयोग्यत्वात् । तथा हि यत्रेत्यनेनात्रानुदात्तवर्णपरामर्शः । उदात्तत्वानुदात्तत्वयोर्वर्णधर्मत्वात् । *अनुवृत्तौ वा व्यपदेशिवद्भावेनैव तत्त्वं बोध्यम् ।

---

दात्तत्वेन जायमानस्य तासेरुदात्तत्वस्य । *इत्यनुवर्त्येति । "आयादय आर्द्धधातुके वा" ( पा० सू० ३-१-३१ ) इत्यत आर्द्धधातुक इति पदमनुवर्त्येत्यर्थः । *तदेदमिति । आर्द्धधातुकलकारावस्थायामेव तासेरुदात्तत्वज्ञातन्ततस्तसः स्वरस्स एवाधुना सतिशिष्टो जात इति तस्यानुदात्तत्वसिद्धये "तास्यनुदात्तेत्" ( पा० सू० ६-१-१८६ ) इत्यावश्यकमित्यस्य ज्ञापकत्वन्न सम्भवतीति भावः । *अस्य च="अन्यत्र विकरणेभ्यः" इत्यंशस्य च । *अत एव=धातुस्वरापेक्षया प्राबल्यादेव । *इदमपि=विकरणस्वरस्य दुर्बलत्वमिति । *न दोष इति । अत्र 'चिनु'इति नुशब्दस्योदात्तस्य श्रवणाभावरूपो दोषो नेत्यर्थः । *अन्तोदात्तपदमिति । श्रूयत इति शेषः । *तस्य=यद्वृत्तादित्यस्य । *व्यवहितेऽपीति । "पूजनात्पूजितम्" ( पा० सू० ८-१-६७ ) इति सूत्रे पूजनशब्दस्य सम्बन्धिशब्दत्वात्पूजितग्रहणे सिद्धे पुनः पूजितग्रहणमनन्तरपूजितलाभार्थम् । तेनात्र प्रकरणे निर्दिष्टपरिभाषाऽव्यवधानांशरहिता पञ्चमीनिर्देशेऽपि प्रवर्त्तत इति ज्ञायते । अतो व्यवहितेऽपि प्रवृत्तिः । एतच्च तत्रैव सूत्रे मूले स्पष्टम् । तेन दारुणाध्यापक इत्यत्र समासान्तोदात्तत्वं बाध्यते । न तु दारुणशब्दाध्यापक इत्यादाविति बोध्यम् ।

अनुदात्तस्य च ( पा०सू०६-१-१६१ ) । "कर्षात्वत ( पा०सू० ६-१-१५९ ) इति सूत्रेऽन्तोदात्त इति यद्यपि समस्तन्तथाप्येकदेशो स्वरितत्वप्रतिज्ञाबलादिहान्तपदरहितं सम्बध्यत इत्याह—*अत्रेति । *अनुवृत्तौ वेति । अत्र वाका-

एवञ्च सप्तमीनिर्देशेनानुदात्तवर्णस्य बुद्ध्या लोपात्परस्यैव ग्रहणात् *'युष्मभ्यम्'इत्यादावादेरुदात्तत्वसिद्धिः । न चैवमपि युष्मभ्यमित्यत्र*सुप उदात्तलोपनिमित्तत्वेऽपि नावयवस्य*तत्त्वमिति कथं यत्र ग्रहणेन वर्णग्रहणमिति वाच्यम् । तदा तयोरुदात्तस्वरितयोर्वै*कत्र पदेऽभावेन तयोः परयोरुदात्तलोपाभावेन व्यर्थमनुदात्तस्येति*अनुदात्तमात्रग्रहणार्थम्,*अतो निमित्तभूतसमुदायप्रविष्टस्यापि ग्रहणमिति न दोषः । तद्भावभावितामात्रेणापि निमित्तत्वव्यवहारात् । ननु 'मा हि धुक्षाताम्' इत्यादौ*एतत्प्रवृत्तिरिति भाष्यात्स्पष्टं तदसङ्गतम् । अत्र हि आतो प्रत्ययस्वरेणोदात्तः । क्सोपि विकरणत्वादनुदात्तः । ततः 'अनुपदेशात्' इति स्वरं बाधित्वा परत्वात् "क्सस्याचि" ( पा० सू० ७-३-७२ ) इति लोपे अनुदात्ते परे उदात्तलोपाभाव इति चेन्न*अन्तरङ्गत्वाल्लावस्थायामेवोदात्ते क्से जातस्यातामो *न्तरङ्गत्वाल्लसार्वधातुकानुदात्तत्वे ततो लोपेनादोषात् । *पक्षान्तरेऽपि एतद्भाष्यप्रामाण्येन ज्ञापकसिद्धस्यासार्वत्रिकतया क्वचिदन्यत्रविकरणेभ्य इत्यंशाप्रवृत्तेर*दोषात् । अत्रानुदात्तपदेनाविद्यमानोदात्तस्यैव ग्रहणमिति स्पष्टं "हारौरसः"*इत्यत्र भाष्ये । देवीमिति । पचादौ 'देवट्' इति

---

टोऽनास्थायाम् । *युष्मभ्यामित्यादाविति । भ्यसोऽभ्यमि कृते टिलोपेऽभ्यमोऽकारस्यादिभूतस्यानेनोदात्तत्वकरणात् । युष्मच्छब्दो मदिक्प्रत्ययान्तत्वेनान्तोदात्तः । *सुप इति । विभक्तिपदस्य तत्रैव वृत्तेरिति भावः । *तत्त्वम्=उदात्तलोपनिमित्तत्वम् । *एकत्र पदेऽभावेनेति । अव्यवहितयोरित्यादिः । तेन "तवैचान्तश्च" ( पा०सू०६-२५१ ) इत्येतदुदाहरणे तथात्वेऽपि न क्षतिः । *अनुदात्तमात्रेति । अत्र मात्रपदङ्गात्स्र्यैं । तेन स्वतन्त्रास्वतन्त्रसामान्यस्येत्यर्थः । तदेवाह—*अत इति । *एतत्प्रवृत्तिरिति । "अनुदात्तस्य च" (पा०सू०६-१-१६१) इति सूत्रप्रवृत्तिरित्यर्थः । मा हि धुक्षातामित्यत्र माशब्दो "न माङ्योगे" ( पा० सू०६-४-७४ ) इत्यटो हिशब्दश्च निघातस्य प्रतिषेधार्थः । *अन्तरङ्गत्वादिति । लुङीत्यस्य विषयत्वं"च्लि लुङि" (पा०सू०३-१-४३) इत्यत्राश्रीयत इति भावः । यदुक्तम्पूर्वं परत्वादिति तदत्र न नियामकमित्याह—*अन्तरङ्गत्वादिति । अकारादुपादिश्यमानात्परत्वस्य लसार्वधातुकानुदात्तत्वस्य प्रवृत्तावाश्रयणं"क्सस्याचि" ( पा० सू० ७-३-७२ ) इत्यस्य प्रवृत्तौ तु क्सेति समुदायस्याश्रयणन्तथा अजादित्वविशेषणस्य निमित्ततावच्छेदकस्याचाश्रयणमतः।*पक्षान्तरेऽपीति। लुङीत्यस्य परसप्तमीत्वपक्षे । तदा लस्य स्थानेऽपरनिमित्तकत्वेनान्तरङ्गत्वात्पूर्वमादेशस्य प्रवृत्तिरिति भावः । *अदोषादिति । प्रत्ययस्वरेण क्सस्योदात्तस्य लोपप्रवृत्त्या दोषाभावादित्यर्थः । *इत्यत्र भाष्य इति । तत्र हि—"श्वः कर्त्ता" इ-

पाठेन टिस्वान्ङीप् ।

चौ ( पा० सू० ६-१-२२२ ) । उदात्तनिवृत्तीति । *'देवद्रीचीम्' इत्यादौ कृदुत्तरपदप्रकृतिस्वरेणोदात्तस्य अञ्च इत्यकारस्य "अचः" ( पा० सू० ६-४-१३८ ) इति लोपे ङीपः "अनुदात्तस्य च" ( पा० सू० ६-१-१६१ ) इति सूत्रेण प्राप्तस्येत्यर्थः । न च पराच इत्यादौ कृत्स्वरं बाधित्वा "अनिगन्तोऽञ्चतौ" ( पा० सू० ६-२-५२ ) इति पूर्वपदप्रकृतिस्वरत्वेनाद्युदात्तत्वे "अचः" ( पा० सू० ६-४-१३८ ) इत्यकारलोपे इदञ्चरितार्थं, न ह्यत्रोदात्तलोपोऽस्तीति वाच्यम् । "अनिगन्तोऽञ्चतौ" ( पा० सू० ६-२-५२ ) इति विषये चुस्वराप्रवृत्तेर्वक्ष्यमाणत्वादित्याहुः । ननु 'दाधीच' इत्यादौ उदात्तेऽणि "अचः" ( पा० सू० ६-४-१३८ ) इति लोपे इदं चरितार्थमिति कथं तदपवादत्वमत आह- अतद्धित इति । *वस्तुतो "नगोश्वन्" ( पा० सू० ६-१-१८२ ) इति सूत्रं 'यत्किंचिल्लक्षणप्राप्तविभक्तिस्वरस्य निषेधकम्' इति *अत्र सूत्रे "असिद्धवत्" ( पा० सू० ६-४-२२ ) सूत्रे "विप्रतिषेध" ( पा० सू० १-४-२ ) सूत्रे च भाष्ये उक्तत्वेन दधीच इत्यादावुदात्तनिवृत्तिस्वराप्राप्तिविषयेऽस्य चारितार्थ्यान्नास्य तदपवादत्वम् । परत्वेन तूक्तोदाहरणे तद्बाधकम् । 'दाधीचा' इत्यादौ तु सतिशिष्टत्वेनैतत्प्राप्तौ "अतद्धित" इत्यावश्यकमिति भाष्यारूढः पन्थाः ।

---

त्यादौ तत्स्थानिकङादेशविषये 'प्रकल्प्यापवादविषयम्' इति न्यायेन लसार्वधातुकानुदात्तत्वविषये प्रत्ययस्वराप्रवृत्तावनुदात्तत्वम्प्राप्नोति । तत्परत्वाट्टिलोपो बाधते । तस्मिन्कृते सोऽसावविद्यमानोदात्तत्वे ऽनुदात्ते उदात्तो लुप्यते" इत्युक्तम् । तत्र कैयटः-"शास्त्रीयस्तत्राऽनुदात्तो न गृह्यते किन्त्वनुदात्तत्वाभाववद्रूपः" इति ।

उदात्तनिवृत्तिस्वरस्यावश्यकप्राप्तिमुपपादयति-*देवद्रीचीमित्यादिना । "चौ" ( पा० सू० ६-१-२२२ ) इत्यनेन पूर्वपदान्तोदात्तत्वे "उदात्तादनुदात्तस्य" ( पा० सू० ८-४-६६ ) इत्यन्त्यस्वरितत्वम् । अतद्धित इतिचावित्यस्य विशेषणम् । तद्धितभिन्ने परे यो लुप्ताकारोऽञ्चतिस्तस्मिन्नित्यर्थः । मूलं व्याख्याय भाष्यानुसारेणाह—*वस्तुत इति । *अत्र सूत्रे=चाविति सूत्रे । तत्र हि—"चौ तद्धित इति वक्तव्यमिह मा भूत्-दाधीचो माधूच इति । तत्तर्हि वक्तव्यन्न वक्तव्यम् । प्रत्ययस्वरोऽत्र बाधको भविष्यति" इत्यभिधाय "चुस्वरस्य स्थानान्तरप्राप्त्या प्रत्ययस्वरबाधकत्वम्भविष्यति" इत्यादावुक्तम् । दधीचो मधूच इत्यत्र "अनुदात्तौ सुप्पितौ" ( पा० सू० ३-१-४ ) इति प्रत्ययस्यानुदात्तत्वात्तत्र चुस्वरश्चरि-

आमन्त्रितस्यादिरिति । '*आमन्त्रितविभक्त्यन्तस्य' इति पाठस्तु लेखकप्रमादात् । एकपदस्वरे लुकि प्रतिषिद्धमपि प्रत्ययलक्षणं "सर्वामन्त्रितसिज्लुक्स्वरवर्जम्" इति वचनादिहेष्यत एव–प्रियवारि ।

इमं मे इति । *अत्र गङ्गेप्रभृतीनामविद्यमानवत्त्वेऽपि 'मे'शब्दमेवाश्रित्य सर्वेषामचां निघातः । स च पदपाठे स्पष्ट एव । संहितायान्तु "स्वरितात्संहितायाम्" ( पा० सू० १–२–३९ ) इत्येकश्रुतिः प्रचयापरपर्याया प्रवर्तते ।

---

तार्थो दाधीच इत्यादावेव उदात्तत्वेन बाध्येतेति, प्रत्ययस्वरस्य बाधकत्ववादिनो भावः । तत अपवादस्थानप्राप्तो बलवानित्यभिप्रायेण 'स्थानान्तरप्राप्तश्चुः स्वरः'इत्यभिहितम् । "प्रत्ययस्वरस्य बाधकः "अनुदात्तौ सुप्पितौ"(पा० सू० ३–१–४)इति, तद्बाधक उदात्तनिवृत्तिस्वरः, उदात्तनिवृत्तिस्वरस्य चुस्वरः स यथैवोदात्तनिवृत्तिस्वरम्बाधते एवम्प्रत्ययस्वरमपि बाधते" । अत्र प्रत्ययस्वरस्येत्यादिनाऽपवादत्वं दर्शयति । प्रत्ययस्वरस्यैवोदात्तनिवृत्तिस्वरेण प्रत्यापत्तिःक्रियत इति प्रत्ययस्वरापवादश्चुस्वर इति भावः । "नात्र उदात्तनिवृत्तिस्वरः प्राप्नोति । किङ्कारणम् ? । "नगोश्वन्साववर्ण"(पा० सू०६-१-१८२) इति प्रतिषेधात् । नैष उदात्तनिवृत्तिस्वरस्य प्रतिषेधः । कस्य तर्हि ? तृतीयादिस्वरस्य। यत्र तर्हि तृतीयादिस्वरो नास्ति दधीचः पश्येति । एवन्तर्हि न तृतीयादिस्वरस्य प्रतिषेधं शिष्मः । किन्तर्हि ?, येन केन चिल्लक्षणेन प्राप्तस्य विभक्तिस्वरस्य प्रतिषेधम्" । एवमभिहिते स्थानान्तरप्राप्तत्वमस्त्येव चुस्वरस्येत्यभिप्रायेण "यत्र तर्हि विभक्तिर्नास्ति दधीची"इति । प्रथममुक्तस्य यत्र तर्हीत्यस्येदं तात्पर्यम्–यथा परत्वाच्चुस्वरः उदात्तनिवृत्तिस्वरं बाधते तथा प्रत्ययस्वरमपि बाधेतेति वचनमावश्यकमिति । प्रत्याख्यानवाद्याह–एवन्तर्हीति । "नगोश्वन्",(पा०सू० ६–१–१८२) इति सूत्रे विभक्तिग्रहणमेवानुवर्त्तते न तृतीयादिग्रहणमिति भावः । यत्र तर्हीति । क्वचित्प्रत्ययस्वरप्रतिप्रसवरूपोदात्तनिवृत्तिस्वरप्राप्तेरस्य परत्वात्तद्बाधकत्वात्तेनैव न्यायेन प्रत्ययस्वरस्यापि बाधापत्त्या दाधीच इत्यादौ प्रतिषेधो वक्तव्य इत्यर्थः । प्रकारान्तरेणापि "चोरतद्धिते" इति वार्त्तिकस्यावश्यकत्वम्भाष्ये उक्तम् । "सति शिष्टः खल्वपि चुस्वरः । कथम् ? । चावितुच्यते यत्रास्यैतद्रूपमिति । तस्मात्सुष्ठूच्यते चोरताद्धिते" इति । दधि अच् अस् इति स्थिते 'अन्तरङ्गानपि' इति न्यायेन लुको लुङ्निमित्तस्य च बलवत्त्वबोधनात्पूर्वन्तद्धितः पश्चादच इत्यल्लोपस्ततश्चावित्यस्य प्राप्तिरिति भावः ।

आमन्त्रितस्य च । (पा० सू० ६–१–१९८) । "सामन्त्रितम्" ( पा० सू० २–३–४८ ) इति सूत्रेण विभक्त्यन्तस्यैवामन्त्रितसंज्ञाविधानादामन्त्रितविभक्त्यन्तस्येति पुनरुक्तिप्रस्तमित्याशयेनाह—*आमन्त्रितवीति ।

अग्ने त्रातरिति। अग्निरिह विशेष्यम्। त्राणकर्तेति विशेषणम्। *'अग्ने भ्रातः सहस्कृत' इति मन्त्रे(१) शुचिव्रते इति विशेष्यत्वेन विवक्षितमतोऽग्ने इत्यस्याविद्यमानवद्भावाद् भ्रातरित्यस्यानिघातः। एवं तत तत्परेषामिति बोद्धव्यम्।

देवीः षडिति। अत्र देवीरित्यामन्त्रितं वाऽविद्यमानवत्। तेन षडित्यस्य निघातो वैकल्पिकः।

षष्ठ्यन्तमिति।* अत्र षष्ठीशब्देन तदर्थो विभक्तिरुच्यते। तेन 'गोषु स्वामिन्' इत्यत्रापि पराङ्गत्वं सिद्धमित्याहुः। आमन्त्रितान्तं प्रतीति। *आमन्त्रितार्थैकदेशक्रियां प्रतीत्यर्थः। 'मद्राणां राजन्' 'सूच्या सीव्यन्' इत्युदाहरणे। अत्र विशिष्टस्यामन्त्रिताद्युदात्तत्वम्। अत्रेदं बोद्ध्यं-षष्ठ्यन्तस्य कारकस्य च समानाधिकरणं यद्विशेषणं तस्यापि पराङ्गवत्त्व*मिष्यते। तेन 'ऋद्धस्य राज्ञः पुरुषः' 'तीक्ष्णया सूच्या सीव्यन्' इत्यादौ पदत्रयस्यैकमाद्युदात्तत्वं भवति। समर्थानुवृत्त्या वेति। *सामर्थ्यञ्चात्र व्यपेक्षैव शब्दाधिकारात्। सा च 'वस्त्रं राज्ञः, पुरुषागच्छ' इत्यादौ पराङ्गत्ववारणाय तत्राप्यावश्यकीति भावः। वस्तुतस्तन्निमित्तग्रहणम्*आमन्त्रि-

---

आमन्त्रितस्वरप्रसङ्गादपरमप्यामन्त्रितस्वरमाह—आमन्त्रितस्य च (पा० सू० ८-१-१९)। पदादिति अपादादाविति चानुवर्त्तते। इमम्मे इत्यत्र स्वरप्रवृत्तिप्रक्रियामाह—*अत्र गङ्गे इति।

नामन्त्रिते समानाधिकरणे (पा० सू० ८-१-७३)। सामान्यवचनं=विशेष्यम्। नन्वेवमग्ने भ्रातरित्यत्राप्यविद्यमानवद्भावनिषेधान्निघातः स्यादत आह-*अग्ने भ्रातरिति।

षष्ठीशब्दस्य षष्ठीविभक्तिमात्रपरत्वे गोषु स्वामिन्नित्यत्र पराङ्गवद्भावासिद्धिः स्यादत आह-*अत्रेति। आमन्त्रितनिरूपितकारकाप्रसिद्धेराह—*आमन्त्रितार्थैकदेश इति। *इष्यते इति। एतच्च समर्थानुवृत्त्या वेति द्वितीयपक्षैकवाक्यतया कल्प्यत इति बोध्यम्। ननु "समर्थः पदविधिः" (पा० सू० २-१-१) इति सूत्रस्थः समर्थशब्द एकार्थीभावलक्षणसामर्थ्यविशिष्टपर इत्यत आह-*सामर्थ्यञ्चेति। तन्निमित्तमित्यत्र तच्छब्दो बुद्धिस्थस्य परामर्शकस्स च क इत्याकाङ्क्षायामाह—*आमन्त्रितार्थम्प्रतीति। तन्निमित्तमित्यत्र निमित्तत्वम् कारणत्वम्। आमन्त्रितशब्दजन्यप्रतीतिविशेष्यनिरूपितकारणत्वस्य मद्राणां राजन्नित्यत्र मद्रपदार्थे विरहात् किन्त्वामन्त्रितार्थघटकार्थनिरूपितानिरूपक-

---

(१) 'मन्त्रे छान्दसत्वादूभ्रा' इति मुद्रितपुस्तके पठाः।

तार्थं प्रति यन्निमित्तं तत्प्रतिपादकं यत्तदेव पराङ्गवदित्यर्थः । *अत एव गोषुस्वामिन्नित्यादेः पराङ्गवद्भावसिद्धिः । समर्थग्रहणानुवृत्तिस्तु भाष्यासंमतेति *निरूपितं मञ्जूषायां समासवादे । *स्वरे इत्युक्तेः कूपे सिञ्चन्नि-

त्यजनकत्वान्यतररूपम् । *अत एव=तन्निमित्तग्रहणादेव । षष्ठ्यामन्त्रितकारकवचने हि गोष्वित्यस्य द्वैविध्याभावेन पराङ्गवद्भावो न स्यात् । न च षष्ठीशब्दस्य तदर्थकविभक्तिपरत्वम्प्रागभिहितन्तत एवेष्टसिद्धिरिति वाच्यम् । तस्य मतान्तराभिप्रायकत्वात् । अत एवाहुरित्युक्तम्प्राक् । प्रकृतसूत्रभाष्ये समर्थपदानुवृत्तिर्यद्यपि न प्रदर्शिता तथापि "सुबिति किम् ?, करोष्यटन् । नैतदस्ति । असामर्थ्यादत्र न भविष्यति । कथमसामर्थ्यम् ? । समानाधिकरणमसमर्थवद्भवति । इदन्तर्हि.. पीड्ये पीड्यमानेति । इदञ्चाप्युदाहरणं करोष्यटन् । ननु चोक्तं समानाधिकरणमसमर्थवद्भवतीति । नैष दोषः । अन्यत्रत्वभिहितमित्येवन्तत्" इति । वाचनिकमप्यसामर्थ्यम्प्रकृते नास्तीति उपक्रमे प्रतिपादितम् । तेन प्रकृतसूत्रे समर्थपदानुवृत्तिः प्रदर्शितेति भ्रमेण कैश्चित्समर्थपदानुवृत्त्या 'अयमग्ने जरिता' 'एतेनाग्ने ब्रह्मणा'इत्यत्रातिप्रसङ्गो न इत्युक्तम्, तदेवात्र मूलकारेणापि प्रदर्शितम् । परन्तु समर्थपदानुवृत्तिर्न भाष्यसम्मता । समर्थपदस्यैकार्थीभावात्मकसामर्थ्यविशिष्टार्थकत्वस्य व्यवस्थापनात् परशुना वृश्चन्नित्यत्र पराङ्गवद्भावस्य प्रवृत्तेः प्रदर्शनाच्च । न च समर्थपदाननुवृत्तौ 'ऋतेन मित्रावरुणावृतावृधावृतस्पृशौ' इत्यादौ पराङ्गवद्भावापत्तिः । अत्र हि 'मित्रावरुणौ'इत्यामन्त्रितम् । 'ऋतेन'इत्येतच्च यदि पराङ्गवत् स्यात्तदा 'ऋतेन' इत्यस्याद्युदात्तत्वापत्तिः स्यात् । समर्थपदानुवृत्तौ तु ऋतेनेत्येतन्न 'मित्रावरुणौ' इत्यनेन समर्थम् 'ऋतेन'इत्यस्य 'मित्रावरुणौ' इत्यस्य च तस्यामृचि यज्ञानशाथे इत्यर्थकमाशाथे इति पदं तदर्थेनान्वयेन परस्परमनन्वयात् । समर्थपदञ्चेह शब्दाधिकारेण व्यपेक्षाविशिष्टार्थकम्भविष्यतीति वाच्यम् । षष्ठ्यामन्त्रितकारकवचन इति परिगणनं प्रदर्श्य तन्निमित्तग्रहणं वेत्युक्तत्वेनैव ऋतेनेत्यत्र पराङ्गवद्भावस्य वारणसम्भवात् । अत एव भाष्ये सुबन्तमात्रस्य पराङ्गवद्भावे 'क्षत्रेणाग्ने स्वायुः संरभस्व' 'मित्रेणाग्ने मित्रधेये यतस्व'इत्यत्र पराङ्गवद्भावापत्तिरित्येतदर्थम्परिगणनन्तन्निमित्तग्रहणं वा कर्त्तव्यम् इत्यभिधाय "किम्पुनरत्र ज्यायः ?, तन्निमित्तग्रहणमेव ज्यायः । इदमपि सिद्धम्भवति गोषु स्वामिन् पशुषु स्वामिन् । एतद्धि नैव षष्ठ्यन्तं नाप्यामन्त्रितकारकम्" इत्येवोक्तन्न तु समर्थपदानुवृत्तिर्दर्शिता । यदि समर्थपदानुवृत्तिरभिप्रेता स्यात्तदा भाष्यासङ्गतिः स्पष्टैव 'क्षत्रेणाग्ने' इत्यादौ परस्परव्यपेक्षाया विरहात् । यत्तु कैयटेन परस्परसामर्थ्याभावेऽपि क्रियाद्वारकं सामर्थ्यमस्तीत्युक्तन्तत्तु न युक्तम् । स्वार्थपर्यवसायिनामाकाङ्क्षावशात्परस्परसम्बन्धस्यैव व्यपेक्षापदार्थत्वात् । *निरूपितमिति । एवमेव तत्र निरूपितमित्यर्थः । प्रकृतसूत्रस्थस्वरग्रहणस्य प्रयोजनमाह—*स्वरे इत्युक्तेरिति । कूप इत्यस्य पराङ्गवद्भावे तु सिञ्चन्नित्येतदवयवसकारस्य पदादित्वाभावापत्तौ "सात्पदाद्योः" ( पा० सू० ८-३-१११ ) इति षत्वस्य

त्यादौ न षत्वादिकम् । *न च पूर्वस्य पराङ्गवत्त्वेन पूर्वस्मिन् *परप्रयुक्त-कार्यप्रवृत्तिः स्वनिष्ठस्वाश्रयनिवृत्तिश्चास्तु; परस्मिंस्तु *पूर्वनिष्ठकार्यप्रवृत्तौ *तन्निष्ठस्वाश्रयनिवृत्तौ च मानाभावात्पदादित्वेन न षत्वप्राप्तिः, तथा चर्म-नमन्नित्यादा*वखण्डपदत्वाभावेन णत्वप्राप्तिश्च नेति स्वरग्रहणं व्यर्थमिति वाच्यम् । आष्ये*प्रत्याख्यातत्वेनेष्टापत्तेः (परग्रहणं स्पष्टार्थम् ।)(१) *अङ्गग्रहणमुभयोराद्युदात्तत्वाभावाय । तत्करणात्स्वाश्रयमपि । तेनाम् कुण्डे-नाटन्नित्यादौ "आम एकान्तरम्"[पा० सू०८-१-५५] इति अटन्निसस्य निघाताभावेकुंण्डेनेत्यस्यापि न भवति ।पूर्वाङ्गवदिति । *सुबन्तमामन्त्रिते

---

प्रतिषेधो न स्यात् । आदिपदेन चर्मनमन्नित्यस्य परिग्रहः । अत्र पराङ्गवद्भावे च-र्मनमन्नित्यखण्डपदज्ञातमिति नमन्निति नकारस्य णत्वप्रसङ्गः । पूर्वस्य पराङ्गवद्भा-वविधानेन पूर्वस्यैव परसम्बन्धिकार्यप्रवृत्तिफलकोऽयमतिदेश इत्यभिप्रायेणाश-ङ्कते—*न चेति । *परप्रयुक्तेति । परसत्ताप्रयोज्येत्यर्थः । तच्च परनिष्ठमाद्युदा-त्तत्वम् । अयम्भावः-पूर्वस्य पराङ्गवद्भावात्पूर्वसहितस्य तत्कार्यम्भवतु पराद्यवय-वनिष्ठं यत्पदादित्वन्तत्तु न निवार्यत इति । *पूर्वनिष्ठकार्यप्रवृत्ताविति । अखण्डपदा-वयवत्वप्रयुक्तणत्वस्य प्रवृत्तावित्यर्थः । *तन्निष्ठेति । परनिष्ठेत्यर्थः । अस्य निवृ-त्तावन्वयः । स्वमाश्रयो यस्य पदत्वस्य तस्य निवृत्ताविति यावत् । *अखण्डप-दत्वाभावेनेति । परावयवे निमित्तानधिकरणनिमित्तिसत्पदावयवत्वबुद्धिस्तु नकारे स्यादेवेति भावः ।*प्रत्याख्यातत्वेनेति । तत्र हि-"स्वरेऽवधारणं सुब्लोपार्थम्पर-शुना वृश्चन् । अत्र सुपो लोपो मा भूत्" इत्यादौ प्रयोजनमभिहितम् । ततः "सुबन्तकार्य एव पराङ्गवद्भावो विधीयते न तु प्रातिपदिककार्ये इत्यभिप्रायेण 'न वा सुबन्तैकान्तत्वात् । न वा कर्त्तव्यम् ? । किङ्कारणम् । सुबन्तैकान्तः परादिवद्भा-वो भवति' इत्यनेन पूर्वोक्तप्रयोजनान्यथासिद्धिरुद्भाविता । उक्तञ्च कैयटेन-"सुब-न्तैकान्तः सुबन्तावयवः पराङ्गवद्भावविषयत्वात्पराङ्गवद्भाव उच्यते । पराङ्गवदि-त्यामन्त्रितं सन्निधानात्परशब्देन गृह्यते तच्च सुबन्तमेवेति सुबन्तकार्य एव पराङ्ग-वद्भावोऽन्तरङ्गत्वान्न तु प्रातिपदिककार्य इत्यर्थः । *अङ्गग्रहणमिति । परवद्दित्यु-क्तौ पूर्वस्य यत्कार्यम्परस्य भवति तस्यातिदेशः स्यात्तदोभयोराद्युदात्तत्वम् "आ-मन्त्रितस्य" इत्यनेन स्यात् । अङ्गशब्दोपादाने तु पूर्वस्मिन् परामन्त्रितावयवत्वा-तिदेशे पूर्वपरघटितसमुदायस्यैकपरिमाणकत्वबुद्धौ तादृशसमुदायाद्यवयवस्यो-दात्तत्वे तदेकवाक्यतापन्नशेषनिघातेनान्यस्य सर्वस्य तदवयवस्यानुदात्तत्वम्भ-वतीति भावः । पूर्वाङ्गवदित्यस्यामन्त्रिते परे सुबन्तं यस्य कस्य चिदङ्गवदिति भ्रमवारणायाह—*सुबन्तमिति । पूर्वाङ्गवदित्यत्र पूर्वशब्दोपादानेन प्रत्यासत्त्या-ऽऽमन्त्रिते इत्यध्याहृतस्य पूर्वस्मिन्नित्यस्य समानाधिकरणमिति भावः ।

---

(१) कंसान्तर्गतो ग्रन्थो मुद्रितपुस्तके नास्ति ।

पूर्वस्मिन् पूर्वाङ्गवदित्यर्थः । छन्दोविषयमेतत् ।

उदात्तस्थाने इति । *इदमत्रैवाकरे स्पष्टम् । अभ्यभीति । अभिः "उपसर्गाश्चाभिवर्जम्" (फि०पा०४ सू० ८१) इत्यन्तोदात्तः "नित्यवीप्सयोः" इति द्वित्वम् । "अनुदात्तं च" (पा० सू० ८-१-३) इति*परोऽनुदात्तः पूर्वस्य यणि उदात्तयणः परत्वात्स्वरितः । खलपूशब्दः कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः । ततः सप्तम्येकवचनस्य "उदात्तयणो हल्पूर्वात्" (पा० सू० ६-१-१७४) इति प्राप्तोदात्तस्य "नोङ्धात्वोः" (पा० सू० ६-१-१७५) इति निषेधेन स्वरितः, तस्य यणि ततः पराशाशब्दाद्याकारस्यानेन स्वरितः । आशाशब्द "आशाया अदिगाख्या चेत्" (फि० पा० १ सू० १८) इति फिट्सूत्रेणान्तोदात्तः । अस्येति । आशाशब्दप्रथमाकारे जातस्येत्यर्थः । शेषेति । शाशब्दाकारस्य*निघातो नेत्यर्थः । ननु–इकारस्थानिकयणं प्रति स्वरितस्यासिद्धत्वात् *स्थानिन्येव यण् प्रवृत्त इति नास्य स्वरितयणः परत्वम् । *न च प्रगृह्यसञ्ज्ञासूत्रस्थ*भाष्यकैयटरीत्या 'औजढत्'इत्यादौ *अन्तरङ्गत्वाद्धत्वादिषु कृतेषु हतशब्दबुद्ध्या ढशब्दे द्वित्वं प्रवर्तत इति प्रतीयते तथाऽत्र स्वरितबुद्ध्यभावेऽपि वस्तुतः स्वरितस्थानिकयणः सत्त्वाददोष इति वाच्यम् । वाक्यसंस्कारपक्षे स्वरितयणोरेककालप्रवृत्तिकत्वेन*तथा वक्तुमशक्यत्वात् । न च स्वरितयण इत्या*श्रयात्सिद्धत्वम् । अतिप्रसङ्गात् । *उदात्तादनुदात्तस्य" (पा० सू० ८-४-६६) इति विहितस्यापि सिद्धत्वापत्तेः । तथा च*प्रत्यग्निरित्यादावपि एतत्प्रवृत्त्यापत्तिः । न च "नोदा-

---

अनुवादेऽपि "षष्ठी स्थाने" (पा० सू० १-१-४९) इति परिभाषाप्रवृत्तिः सम्प्रदायसिद्धेत्याह—*इदमत्रैवेति । *परः=द्वितीयोऽभिशब्दः । *निघातो नेति । तथा चाशाशब्दे द्वयोः स्वरितोदात्तयोः श्रवणम्भवति । *स्थानिन्येव=अनुदात्त एव । पदसंस्कारपक्षमादाय शङ्कते—*न च प्रगृह्यसंज्ञासूत्र इति । *भाष्यकैयटरीत्येति । अग्नी इत्यत्र यथापूर्वं प्लुतेऽपि प्रगृह्यसंज्ञाया यथोद्देशत्वेन त्रिमात्रे द्विमात्रोऽयमिति बुद्ध्या प्रगृह्यसंज्ञा प्रवर्तते तद्वत् । *अन्तरङ्गत्वात्=स्वनिमित्तसद्भावेन योग्यप्रवृत्तिकत्वात् । *तथा वक्तुमशक्यत्वादिति । यणादेशात्पूर्वं स्वरितप्रवृत्तेर्वक्तुमशक्यत्वात् । *आश्रयात्सिद्धत्वमिति । यणादेशे कर्तव्ये स्वरितः सिद्धो भवतीति वचनकल्पनेनेति शेषः । अतिप्रसङ्गमेवोपपादयति—*उदात्तादिति । *प्रत्यग्निरिति । अत्र हि प्रतिशब्दस्य निपातत्वादाद्युदात्तत्वे शेषनिघातेनानुदात्तस्येकारस्य यणादेशात्पूर्वम् "उदात्तादनुदात्तस्य" (पा०सू० ८-४-६६)

स्स्वरितोदयम्" (पा० सू० ८-४-६७)*इति निषेधः। 'अनन्तरस्य'इति न्यायेन "उदात्तादनुदात्तस्य" (पा० सू० ८-४-६६) *इति स्वरितस्यैव तेन निषेधात्। *अन्यथा'खलप्व्याशान्याग्निम्'इत्यादावप्यस्य निषेधापत्तिः। *अत एव "तित्स्वरितम्"( पा० सू० ६-१-१८५) "स्वरितो वानुदात्ते" ( पा० सू० ८-२-६ ) इत्यादीनां न निषेधः-इति चेन्न। योगविभागेन भाष्ये एव समाधानात्। उदात्तयणः। उक्तोऽर्थः। ततः-स्वरितयणः। इह *पूर्वसूत्रमनुवर्त्तते उदात्तयण इत्येवंनिर्दिष्टस्वरितस्थानिकयणः परस्येत्यर्थः। एवञ्चास्यैवाश्रयात्सिद्धत्वं नान्यस्येति न दोषः। *यद्वा इह स्वरितग्रहणं न करिष्यते खलप्व्याशा इत्यादावप्युदात्तयणः परत्वादेव सिद्धम्। न च स्वरितयणा व्यवधानम् *स्वरविधौ व्यञ्जनस्याविद्यमानवत्त्वात्। न चैवं *सन्त्यग्ने इत्यादौ वेदे यकाराकारे पठ्यमानस्वरितासङ्गतिः, *तत्र हि सन्तीति इकारस्य "उदात्तादनुदात्तस्य"(पा० सू० ८-४-६६) इति स्वरितत्वं, तत्र सन्तीति प्रत्ययस्वरेणाद्युदात्तं तेन शेषनिघातः, अग्ने इत्यामन्त्रितानुदात्तमिति वाच्यम्। सशब्दाकारमाश्रित्योदात्तादनुदात्तस्येत्येवाग्निशब्दाकारस्य स्वरितासिद्धेः। न च*स्थानिवद्भावादचा व्यवधानम्। "पूर्वत्रासिद्धीये" ( भा० इ० ) *तन्निषेधात्। *एतेन 'द्वितीयपक्षो ऽयुक्तः स्थानिवद्भावेनाचा व्यवधानात्। व्यञ्जनस्य ह्यविद्यमानवत्त्वं न त्वचः'इति वृत्त्युक्तमपास्तम्। स्वरे कर्त्तव्ये लोपाजादेश एव न स्थानिवदिति नियमस्तु स्वरविधौ नेति*प्रतिपदोक्तस्यैव निषेधस्य; न तु पूर्वत्रासिद्धीयत्वप्र-

---

इति स्वरितत्वापत्तौ तस्य यो यण् तमादायाग्निशब्दावयवाकारस्य स्वरितत्वापत्तिरित्यर्थः। *इति निषेध इति। उदात्तो य इकारस्तस्मिन् स्वरितस्य निषेध इत्यर्थः। *अन्यथा='अनन्तरस्य' इतिन्यायानङ्गीकारे। *अत एव='अनन्तरस्य' इति न्यायाङ्गीकारादेव। *पूर्वसूत्रम्=विभक्त"उदात्तयण" इति सूत्रम्। एतदनुवर्त्तमानम्प्रकृतिभूततादृशानुपूर्वीकशब्दपरं स्वरितशब्दस्यार्थे तद्विशेषणम्; स्वघटितसूत्रनिष्पाद्यत्वं षष्ठ्यर्थः। लाघवेनाह-*यद्वेति। *स्वरविधाविति। स्वरोद्देश्यके विधावित्यर्थः। *एवम्=स्वरितग्रहणाभावे। त्यशब्दाकारस्य स्वरितत्वमुपपादयति—*तत्र हीत्यादिना। *स्थानिवद्भावादिति। पञ्चमीसमासेनेत्यादिः। *तन्निषेधात्=स्थानिवद्भावनिषेधात्। *एतेन=उक्तरीत्या स्थानिवद्भावनिषेधेन। *प्रतिपदोक्तस्यैवेति। भाष्ये सौत्रपदानामेव लोपोऽपि प्रकृत इति रीत्या तेषामेव योजनया तादृशवचनस्य व्युत्पादनेन सूत्रपठितताडशशब्देन यो निषेधस्तस्यैवेत्यर्थः।

युक्तस्येत्यन्यत्र विस्तरः ।

एकादेशउ ( पा० सू० ८-२-५ ) । उदात्तयोरेव स्थानित्वे आन्तरतम्यादेव सिद्धम् । अन्यतरस्यानुदात्तत्वे स्वरितत्वे वा सिद्धन्तूभयान्तर्यादिति न्यायेनान्तरतम्यात्स्वरिते प्राप्ते विधिरयम् । तद् ध्वनयन्नुदाहरणद्वयमाह—वोऽश्वाइति । व इत्य*नुदात्तम् । अश्वशब्दः क्वनन्तत्वादाद्युदात्तः । वसः सस्य रुः, तस्य उः, सः अस्त्ररकः स्रंसनधर्महल्स्थानिकत्वादनुदात्तो वोभयथापि तदेकादेशोऽ*नुदात्तः प्राप्तः । क्वेति स्वरितम्, अवरशब्दः "स्वाङ्गशिटाम्"(फि० पा० २ सू०२९) इत्याद्युदात्तः । एवञ्च यद्*वृत्तौ पूर्वसूत्रादनुदात्तस्येति अत्रानुवर्त्य उदात्तानुदात्तयोरेकादेश इति व्याख्यातम्; तच्चिन्त्यम् । क्वावरमित्य*सिद्ध्यापत्तेः । तत्र हि बह्वृचानामुदात्तपाठो निर्विवाद इत्याहुः । *वस्तुतस्तु "तस्यादितः" ( पा० सू० १-२-३२ ) इति सूत्रस्थभाष्यादितोऽप्यनुवृत्तिरेव लभ्यते इति सैव युक्ता । तत्र हि सुब्रह्मण्याशब्देन*स्वरितान्तेन ओम् इत्यु*दात्तस्यैकादेशः स्वरितस्तस्य "न सुब्रह्मण्यायाम्"(पा० सू० १-२-३७) इत्यनेनोदात्त*इत्युक्तम् । क्वावरमिति तु छान्दसत्वाद् बोध्यम् । *तथा च बह्वृचप्रातिशाख्यम्—"उदात्तवत्येकीभावे उदात्तं सन्ध्यक्षरमनुदात्तोदये पुनः स्वरितं स्वरितोपधे"इति । *यस्मिन्नेकीभा-

---

*अनुदात्तमिति । "अनुदात्तं सर्वमपादादौ" ( पा० सू० ८-१-१८ ) इत्याधिकारादनुदात्तमित्यर्थः । *अनुदात्तः । आन्तरतम्यादिति शेषः । *वृत्ताविति । वृत्तिग्रन्थ इत्यर्थः । *असिद्ध्यापत्तेरिति । अत्र हि--"स्वरितोदात्तस्थानिकस्यैवादेशस्योदात्तस्य श्रुतिः प्रामाणिकीति भावः । आहुरित्यस्वरसबीजम्प्रकटयन् सिद्धान्तमाह—*वस्तुत इत्यादिना । भाष्यादितोऽपीत्यपिना वृत्तेः परिग्रहः । *स्वरितान्तेन । यत्प्रत्ययान्तत्वेन स्वरितत्वस्य तत्र सत्त्वात् । *उदात्तस्य= निपातत्वादुदात्तस्य । *इत्युक्तमिति । यदि प्रकृतसूत्रेऽनुदात्तस्येत्यस्यानुवृत्तिर्नाभिप्रेता स्यात्तदाऽनेनैव प्रथममुदात्तो भविष्यतीति स्वरिताभावेन तत्सूत्रस्य प्राप्तिरत्र न स्यात्तदनुवृत्तौ तु स्वरितोदात्तयोरेकादेशस्य नानेनोदात्तत्वमिति आन्तरतम्यात्स्वरितत्वम् । एवमेव क्वावरमित्यत्रापि स्वरितोदात्तयोरेकादेश आन्तरतम्यात्स्वरितो भविष्यतीति भावः । स्वोक्तार्थे प्रातिशाख्यसम्मतिमाह—*तथा चेति । अत्र 'उदात्तवत्येकीभावे उदात्तं सन्ध्यक्षरम्'इत्येकं वाक्यम् । 'अनुदात्तोदये पुनः स्वरितं स्वरितोपधे' इति द्वितीयम् । प्रातिशाख्यस्थप्रथमवाक्यं व्याचष्टे—*यस्मिन्नित्यादिना ज्ञातव्यमित्यन्तेन । प्रातिशाख्ये सन्ध्यक्षरमित्युक्तमतः सन्धीयमानमक्षरमित्यर्थोऽभिप्रेतो न तु शास्त्रान्तरे एचां सन्ध्य-

वे पूर्वमुत्तरं वोदात्तं भवति इतरस्तूदात्तानुदात्तस्वरितप्रचितानामन्यतमस्त-स्मिन्नेकीभावे सन्ध्यक्षरमुदात्तं ज्ञातव्यं *स्वरितोपधेऽनुदात्तोदये सन्ध्यक्षरं स्वरितत्वमापद्यते। 'क्षीरं सर्पिर्मधूदकम्'*इत्युदाहरणम्। *शौनकीयप्रातिशाख्येऽपि स्वराष्टकमुपक्रम्य—

एकादिष्टमुदात्तेन तन्तमेव नयेत्स्वरम्। इति।

उदात्तेनैकादिष्टं तं स्वरं तमेवोदात्तमेव नयेत्=उदात्तत्वमेव प्रापयेत् इति तद्व्याख्ययोः स्पष्टम्। *लोके तु क्वावरमित्यादौ न भवत्येवोदात्त इति *युक्तमाभाति। *अयमेकादेशस्वरोऽन्तरङ्गत्रैपादिकोऽपि सिद्धो वाच्य इति "स्वरितो वा" (पा० सू० ८-२-६) इति सूत्र*भाष्ये स्पष्टम्। अत एव "शतुरनुमः" (पा० सू० ६-१-१७३) इत्यत्रानुम इति

---

क्षरेति संज्ञा क्रियते तेषामेवेह ग्रहणमिति। द्वितीयं व्याचष्टे—*स्वरितोपध इति। उपधाशब्दः पूर्ववाची। उदयशब्दश्च परस्य वाचकः। एवञ्च यत्र स्वरिते पूर्वस्मिन् अनुदात्ते परस्मिन् स्थिते एकादेशो भवति तत्र सन्धीयमानमक्षरं स्वरितत्वं प्राप्नोतीत्यर्थः फलितः। *इत्युदाहरणमिति। अस्मिन्वाक्ये मधूदकमित्युदाहरणमित्यर्थः। मधुमिश्रमुदकमित्यर्थे मधुशब्दोदकशब्दयोः समासे"उदकेऽकेवले" (पा०सू०६-२-९६)इति सूत्रेणाकेवलं मिश्रन्तद्वाचिनि समासे उदकशब्दे परे पूर्वमन्तोदात्तमित्यर्थकेन पूर्वपदान्तोदात्ते कृते तत एकादेशे सन्ध्यक्षरस्य ऊकारस्योदात्तत्वम्भवतीति प्रथमवाक्यस्यैतदुदाहरणमुक्तम्। द्वितीयवाक्यस्य तु न प्राप्तिः पूर्वस्य स्वरितत्वाभावात्। 'क्वावरम्'इत्यत्रापि प्रथमवाक्येनोदात्तत्वं न तु प्रकृतसूत्रेणेति। छान्दसत्वादिति यदुक्तन्तदेतत्प्रातिशाख्यैकवाक्यतया प्रामाणिकमेव। *शौनकीयप्रातिशाख्येऽपीति। उक्तमिति शेषः। प्रातिशाख्यद्वयरीत्या'क्वावरम्'इत्यत्र क्वाशब्दाकारस्योदात्तत्वम् प्राप्नोतीत्यतश्छान्दसत्वमेव कल्पनीयम्। लोके तु स्वरितोदात्तयोरादेश आन्तरतम्यात्स्वरित एव। तदाह-*लोके त्विति। *युक्तमाभातीति। उक्तप्रातिशाख्यसम्वादादुदात्तत्वम्। किञ्च "उदात्तस्वरितयोः"(पा० सू० ८-२-४) इति सूत्रानन्तरं सूत्रकृता"एकादेश उदात्तेन" (पा०सू० ८-२-५) इति सूत्रम्पठितन्तेनात्रानुदात्तपदानुवृत्तिरभिप्रेता। भाष्येऽपि "स्वरितो वा" (पा०सू०८-२-६)इति सूत्रे"उदात्तानुदात्तयोरेकादेशस्तस्यैकादेश उदात्तेनोदात्त इत्येतद्भवति"इत्युक्तम्, तेनानुदात्तपदानुवृत्तिः सूचितैव। *अयमिति। "एकादेश उदात्तेन"(पा० सू० ८-२-५) इतिविधीयमान इत्यर्थः। *भाष्ये स्पष्टमिति। तत्र हि-"वृक्षे इदम् प्लक्षे इदमित्यादौ वाक्यसंस्कारपक्षेऽपि पूर्वोपस्थितनिमित्तके एकादेशे कृत एवादेशः प्राप्नोति सोऽसिद्धत्वे उदात्तानुदात्तस्थानिकत्वेनोभयान्तरतमः स्वरितः प्राप्तस्स मा भूदित्येवमर्थमेकादेशस्वरोऽन्तरङ्गः सिद्धो वक्तव्यः। आन्तर्यत उ-

प्रतिषेधश्चरितार्थः। अन्तरङ्ग इत्युक्तेः *'प्रपचतीति' इत्यादौ एकादेशस्य पूर्वान्तत्वात् "तिङि चोदात्तवति"(पा० सू० ८-१-७१) *इति न प्रवर्तते। 'सोमस्तुत् पचतीति' इत्यादौ "तिङ्ङतिङः" (पा० सू० ८-१-२८) इति *निघातो न। सिद्धत्वफलन्तु 'वृक्षायिदं' 'वृक्षावत्र' इत्यत्रायावावुदात्तौ भवतः। एतद्विषये शेषनिघातश्च। *फलान्तराण्यपि भाष्ये स्पष्टानि।

वीदमिति। विर्निपातत्वादाद्युदात्तः। *इदम्शब्दः फिट्स्वरेणान्तोदात्तः। दिवीयत इति। दिवीति विभक्तिः "ऊडिदं पदादि"(पा० सू० ६-१-१७१) इत्यु*दात्ता, ईङो दिवादेः 'ईयते' इति "तिङ्ङतिङः"(पा० सू० ८-१-२८) इति निहतम्। इकारयोरिति। *ह्रस्वेकारयोरित्यर्थः। किं चेति। इदं वेद एव। *अत एव 'गाङ्गेऽनूपे' इत्यत्रायमेकादेशः स्वरितो वेति भाष्ये उक्तम्। ते इति। तच्छब्दस्य बहुवचनम्। इकारयोश्च प्रश्लेषे इति। ह्रस्वयोरिकारयोः प्रश्लेषे क्षैप्रसन्धिषु चाभिनिहितसन्धिषु च। *विशेषेण उदात्तपूर्वरूपेषु अनुदात्तोत्त-

---

दात्तस्योदात्तोऽप्यादेशो यथा स्यात्" इत्युक्तम्। *प्रपचतीतीत्यादाविति। अत्र पचतीत्यस्य "तिङ्ङतिङः"( पा० सू० ८-१-२८ ) इति निघाते निपातत्वादाद्युदात्ते इति शब्दे परे य एकादेशस्तत्स्थानिकोदात्तत्वस्यासिद्धत्वम्भवत्येव, पदद्वयसम्बन्धिवर्णावाश्रित्य जायमानो य एकादेशस्तस्य बहिरङ्गतया तत्स्थानिकैकादेशस्यापि बहिरङ्गत्वादिति भावः। *इति न प्रवर्त्तते। अनेन गतेर्निघातो न भवतीत्यर्थः। *निघातो नेति। यदि पूर्वमेकादेशस्वरः स्यात्तदा तीत्यस्योदात्तत्वे कृते पश्चात्पूर्वान्तवद्भावेन "तिङ्ङतिङः"( पा० सू० ८-१-२८ ) इति निघातः स्यात्। *फलान्तराणीति। यथा 'गाङ्गेऽनूपे' इत्यत्रैकारस्योदात्तस्य "एकादेश उदात्तेन"( पा० सू० ८-२-५ ) इत्यनेन कृतस्यानूपशब्देन य एकादेशस्तस्य "स्वरितो वा"( पा० सू० ८-२-६ ) इत्यनेन स्वरितत्वम्भवति, विकल्पेन पक्षे तूदात्तः, असिद्धत्वे आन्तरतम्यात्स्वरित एव स्यात् तथा "तुदति" इत्यत्र "तास्यनुदात्तेत्"( पा० सू० ६-१-१८६ ) इति शतुरनुदात्तत्वे कृते उदात्तेन शप्प्रत्ययाकारेण य एकादेशस्तस्य "एकादेश उदात्तेन"(पा० सू० ८-२-५) इत्यनेन जातस्य सिद्धत्वाच्छतुरनुमो नद्यजादी इत्यन्तोदात्तादित्येष स्वरो भवति। तथा तुदन्ति लिखन्तीत्यत्रैकादेशस्योदात्तस्य सिद्धत्वे सति तेन वर्ज्यमानता भवतीति।

वीदमित्यत्रानुदात्तादिपरत्वमुपपादयति—*इदमशब्द इति। *उदात्त इति। दिवूशब्दात्परत्वात्। व्यवस्थितविभाषात्वादिति यदुक्तन्तदुपपादयति मूले इकारेत्यादिना। तदर्थमाह—*ह्रस्वेति। *अत एवम्वेद एवेति नियमस्वीकारादेव। उक्तश्चेत्यनेन यदुक्तन्तच्छाकल्यस्य मतेनेत्याह—*अविशे-

रूपेषु शाकल्यस्य मते स्वरितः कार्यः। 'उदात्तपूर्वरूपेषु शाकल्यस्यैवमाचरेत्' इति तद्वाक्यशेषात्। एवमिति स्वरितनिर्देशः। *'स्रुचीव घृतं' *'योजान्विन्द्रते हरी' *'ते ऽवर्द्धन्त स्वतवस' इति क्रमेणोदाहरणानीति तद्भाष्यकृतः। सन्धिविशेषस्य क्षैप्रेति सञ्ज्ञा तद्विशेषस्याभिनिहितेति प्रातिशाख्ये द्वितीयपटले स्पष्टम्। तत्र हि—"एङः पदान्तादित्यादिरभिनिहितसन्धिः, *ह्रस्वद्वयस्थानिकसवर्णदीर्घगुणवृद्ध्यादिः प्रश्लिष्टसन्धिः, दीर्घद्वयस्थानिकसवर्णदीर्घयणादिः क्षैप्रसन्धिः" इत्युक्तम्। *वस्तुतस्तु वेदे आपाद्यमानरूपाभावाद् व्यवस्थितविभाषाश्रयणे फलं चिन्त्यम्।

**उदात्तादनुदात्तस्य** (पा० सू० ८-४-६६)। अत्र "तयोर्य्वावचि" (पा० सू० ८-२-१०८) इत्यतः *संहितायामित्यनुवर्त्तते। तेन पदकाले न।

**नोदात्तस्वरितोदय**(पा० सू० ८-४-६७)। उदयशब्दः परवाची शास्त्रान्ते मङ्गलार्थं प्रयुक्तः। यद्यपि नञ्द्वयन्त्यक्त्वा गार्ग्यादीनामेवेति

---

षेणेत्यादिना। *स्रुचीव घृतमिति। अत्र स्रुचिशब्दोऽन्तोदात्तस्तदवयवेकारेण सहैकादेशः स्वरितः। *योजान्विन्द्रते हरी। अत्र हरीत्यत्र "प्रथमयोः" [पा० सू० ६-१-१०२] इति पूर्वसवर्णस्य स्वरितत्वम्। *तेऽवर्द्धन्त स्वतवस इति। "तिङ्ङतिङः" [पा० सू० ८-१-२८] इति निघाते तेशब्देन सहैकादेशस्य स्वरितत्वम्। अनुदात्तो य वकाराऽकारस्तस्य रूपं पूर्वरूपमित्यर्थः। अत्र स्वरितत्वम्पाणिनीयेन "स्वरितो वा" [पा० सू० ८-२-६] इति सूत्रेणापि सिद्ध्यति। पूर्वोदाहरणयोस्तु "एकादेश उदात्तेन" (पा० सू० ८-२-५) इत्युदात्ते प्राप्ते स्वरितत्वं विशिष्य शाकल्यस्य मतेन विधीयत इत्यविशेषेणेत्युक्तम्। यदुक्तम्पूर्वत्र इकारयोरित्यादिना तद्घटकसंज्ञानां संज्ञी क इत्याकाङ्क्षानुत्थानायाह—*ह्रस्वद्वयेत्यादिना। व्यवस्थितविभाषास्वस्याः परिगणनाभावात्तथात्वकथनञ्च युक्तमित्यभिप्रायेणाह— *वस्तुतस्त्विति।

स्वरितप्रसङ्गेनाह— उदात्तादनुदात्तस्य स्वरितः [पा० सू० ८-४-६६]। *संहितायामिति वर्त्तत इति। अत्र संहिताशब्दो न वेदपरः किन्तु "परः सन्निकर्षः" (पा० सू० १-४-९) इति सूत्रबोध्या या तत्परः। "अग्निमीळे" इत्यस्याव्यवधानेनोच्चारणेऽग्निमितीकाराद्युदात्तात्परस्य ईळे इतीकारस्य स्वरितत्वम्। ईड्धातोर्लटि उत्तमपुरुषैकवचने "तिङ्ङतिङः" (पा० सू० ८-१-२८) इति निघातः। द्वयोश्चास्येति वक्ष्यमाणेन डकारस्य ळकारः। स्वरोद्देश्यकविधित्वेन मकारस्याविद्यमानवद्भावेनोदात्तात्परत्वम्। 'तमीशानासः' इत्यत्रेशधातोः शानचि सत्यन्तोदात्त ईशानशब्दस्तस्माज्जसः सुप्त्वादनुदात्तत्वेऽनेन स्वरितत्वम्। "आज्जसेरसुक्" (पा० सू० ७-१-५०) इत्यसुगागमः।

नियमो व्याख्यातुं शक्यते तथापि गार्ग्यादीना*मुदात्तादिपरमेवेति विपरीतनियमशङ्कां वारयितुं तद्द्वयोपादानम् । अथ आरुरिति । ये इत्युदात्तम् आरुरिति ऋशतोर्लिट्युसि रूपम्*अन्तोदात्तम् । वोश्वाः क्वाभिषवः इति । अश्वशब्द*आद्युदात्तः, क्वेति स्वरितम् ।

एकश्रुति (पा० सू० १-२-३३४८) । *संबुद्धिग्रहणं संबोधनोपलक्षणम् । अन्यथा 'गच्छत भो माणवकाः' इत्यादौ न स्यात्; तदाह—दूरात्संबोधने इति । *स्वराणामविभागेनावस्थानमेकश्रुतिः । यद्वोदात्तादिभ्यो भिन्नः स्वर एकश्रुतिः । आद्ये उच्चनीचं समुदितं स्थानं, परं तु*भेदेनानुपलब्धिररिति*स्वरिताद्भेदः । अन्त्ये तु*तयोर्मध्यमेकश्रुतेः स्थानम् । आगच्छेति । आङ् उपसर्गत्वादाद्युदात्तः । गच्छेति निहतम्, भोःशब्दो निपात आद्युदात्तः माणवकेत्यस्यामन्त्रितनिघातः । अत्रान्त्यस्य पक्षे प्लुतोदात्तत्वमपि भवति*वचनसामर्थ्यात् । *तदा चोभयोः समुच्चितयोर्दूरात्संबोधनं द्योत्यम् ।

यज्ञकर्मण्यजप (पा० सू० १-२-३४) । रूढश्च जपशब्दः करणमन्त्रेषु, यत्र जपतीति कल्पसूत्रकृतां व्यवहारः । न्यूङ्खा नाम षोडश ओकाराः । साम प्रसिद्धम् । गीतिषु सामाख्येति । *यज्ञकर्म च *यजतिनोदनानोदितं कर्म । जपादिपर्युदासान्मन्त्रेष्वेवैषा श्रुतिर्नोहितादिषु तेषामम-

---

नोदात्तस्वरितोदय (पा० सू० ८-४-६७) । *उदात्तादिपरमेवेति । स्वरितमिति शेषः । *अन्तोदात्तमिति । ये इत्येकारादुदात्तात्परस्याकारस्याऽनुदात्तस्य स्वरितत्वे प्राप्तेऽनेन निषेधः । *आद्युदात्त इति । क्वन्नन्तत्वादित्यादिः । तस्मादादेरकारात्परस्यानुदात्तस्य स्वरितत्वे प्राप्ते निषेधः ।

विरोधलक्षत्याह—एकश्रुतिदूरात् [पा० सू० १-२-३३] । "एकवचनं सम्बुद्धिः" (पा० सू० २-३-४९) इत्येकवचनान्तस्यैव सम्बुद्धिसंज्ञाविधानादाह—*सम्बुद्धिग्रहणमिति । एकश्रुतिशब्दस्य वाच्यार्थमाह—*स्वराणामिति । *भेदेन=पृथक्त्वेन । *स्वरिताद्भेद इति । स्वरिते हि"तस्यादितः"[ पा० सू० १-२-३२ ] इत्यादेरुदात्तत्वमिह तु नेति विवेकः । *तयोः=उच्चनीचयोः । *वचनसामर्थ्यादिति । "गुरोरनृतः" (पा० सू० ८-२-८६) इति प्लुतोदात्तत्वविधानबलादित्यर्थः । *तदा चोभयोरिति । यदा प्लुतोदात्तत्वन्तदोदात्तैकश्रुत्योरित्यर्थः ।

यज्ञकर्मण्यजप [पा० सू० १-२-३४] । यज्ञकर्मेत्यत्र कर्मशब्दः क्रियापर इत्याशयेनाह-*यज्ञकर्म चेति । *यजतिनोदनेति । यज्धातुघटिता या नोदना

न्त्रत्वात् । तत्र संपूर्णो य ऊहितस्तस्यैवा*तत्त्वम् , यत्किंचिदूहितपदघटिते तु मन्त्रत्वमेव तन्मध्यपतितन्यायात्; तदाह—मन्त्रे इति । ममाग्ने इति । *यद्यप्ययं मन्त्रो हविरभिमर्शने विनियुक्तस्तत्र चैकश्रुत्यैनैव पठ्यते तथापि "अभिश्रिते उन्नीयमाने वा ममाग्ने वर्चो विहवेष्वस्त्विति चतस्रो जपित्वा" इत्यग्निहोत्रप्रकरणे आपस्तम्बसूत्रे उक्तत्वेन न दोषः । *एषु यथाविहितं त्रैस्वर्यं भवति । न चैतेषु नित्यैकश्रुतेर्निषेधेऽपि "विभाषा छन्दसि" (पा०सू० १-२-३६)इति विकल्पापत्तिरिति वाच्यम् । यज्ञकर्मणि जपन्यूङ्खसामसु वा "उच्चैस्तरां वा वषट्कारः" "विभाषा छन्दसि"इत्येव सिद्धे नञुच्चारण*वैयर्थ्यापत्तेः । यत्तु हरदत्तः–अजपेत्यादिप्रसज्यप्रतिषेधः । *नचोहितानामच्छन्दस्त्वात्तत्र सावकाशस्य *पूर्वसूत्रस्य मन्त्रेषु परत्वाद् "विभाषा छन्दसि" ( पा० सू० १-२-३६ ) इत्यनेन बाधः स्यादिति वाच्यम् । यज्ञकर्मणीति कर्मग्रहण*सामर्थ्यादूहितानूहितेषु सर्वेषु पूर्वस्यैव प्रवृत्तेः इति, तन्न । पर्युदासस्य लघुत्वात् । *अत एव 'इन्द्रशत्रुर्वर्धस्व'इत्यत्र समासान्तोदात्तत्वे कर्त्तव्ये पूर्वपदप्रकृतिस्वरत्वं प्रयुक्तमिति शतपथब्राह्मणतद्भाष्याद्युक्तं सङ्गच्छते । एवं हि तद् ब्राह्मणम्–"अथ य*दब्रवीदिन्द्रशत्रुर्वर्धस्वेति तस्मादुहैनमिन्द्र एव जघान । अथ यद्ध शश्वदवक्ष्यत् इन्द्रस्य शत्रुर्वर्धस्वेति शश्वदुह स एवेन्द्रमहानिष्यत्"इति । आद्येऽनुकरणं पूर्वपदप्रकृतिस्वरविशिष्टस्य, अन्त्ये त्वेतदर्थकमन्तोदात्तं, यद्यवक्ष्यदित्यर्थे इति *तद्भाष्यम् । *अत एव महाभाष्ये "मन्त्रो

---

विधिवाक्यन्तद्बोधितकर्मेत्यर्थः । *अतत्त्वम्=अमन्त्रत्वम् । ननु'ममाग्ने'इति मन्त्रस्यैकश्रुत्या कर्मविशेषे हविरभिमर्शने पठनस्य सम्प्रदायसिद्धत्वात्करणत्वेन कथमेतत्प्रत्युदाहरणमत आह— *यद्यपीति । *एष्विति । ममाग्न इति मन्त्रघटकपदेष्वित्यर्थः । *वैयर्थ्यापत्तेरिति । एवञ्च नञुच्चारणसामर्थ्याद्विकल्पस्याप्यप्रवृत्तिरिति भावः । पर्युदासे जपपर्युदासात् मन्त्रेष्वेवैषा एकश्रुतिः । प्रसज्यप्रतिषेधे तु तादृशानियमालाभ इति विचिन्त्य शङ्कते—*न चेति । *पूर्वसूत्रस्य=यज्ञकर्मणीत्यस्य । प्रसज्यप्रतिषेधे तस्य यज्ञक्रियापठितवाक्यसामान्यविषयकत्वादिति भावः । छन्दस्त्वस्य मन्त्रब्राह्मणान्यतरत्वरूपतया विकल्पस्य ब्राह्मणे चारितार्थ्यन्द्रष्टव्यम् । *सामर्थ्यादिति । यज्ञे इत्येव पठनीयम् । एकश्रुतेः शब्दकर्मत्वाद्वाक्यत्वसामानाधिकरण्येन प्रवृत्तिसिद्धौ कर्मग्रहणमतिरिच्यमानमुद्देश्यतावच्छेदकव्यापकप्रवृत्तिकत्वलाभार्थमिति भावः । *अत एव=पर्युदासबलेन मन्त्रेष्वेव यज्ञकर्मणीत्यस्य प्रवृत्तिस्वीकारादेव । *अब्रवीदिति । एतेनोहितत्वम-

हीनः" इति पठितेऽपि श्लोके दुष्टः शब्द इति पठितः। एवञ्च 'इषेत्वा' इत्यादि-यजुर्मन्त्रेषु शाखाच्छेदनादिकरणेषु एकश्रुतिरेव भवति । *एतेन–पर्युदासेऽपि यज्ञाङ्गशब्दत्वेन सादृश्यम् । एवञ्चोहविषये चरितार्थस्या*स्य मन्त्रेषु परत्वाद् "विभाषा छन्दसि" ( पा० सू० १–२–३६ ) इत्यनेन बाधः । सा च व्यवस्थितविभाषा, अतो नातिप्रसङ्गः । *अत एव बह्वृचानां संहितायां त्रैस्वर्यम्, ब्राह्मणे ऐकश्रुत्यं, तैत्तिरीयाणामुभयत्रापि त्रैस्वर्यमिति व्यवस्था सङ्गच्छते । एवञ्च हौत्रमन्त्रेष्वेकश्रुतिरेव । इषेत्वेत्यादौ यजुषि त्रैस्वर्यमेव। *अत एव सकलदेशीयशिष्टाचारविरोधोपि न–इति परास्तम् । ऊहेषु चरितार्थस्य मन्त्रेषु बाध उत मन्त्रेषु चरितार्थस्या*छन्दसि विभाषेत्यनेन *ऊहेषु बाध इत्यत्र विनिगमनाविरहेणास्य विभाषाछन्दसीत्येतदपवादकताया एव युक्तत्वाच्च। *अत एव कात्यायनेन "मन्त्रे स्वरक्रिया *यथाम्नातमविशेषात्" इति पूर्वपक्षे "तानो वा नित्यत्वात्, स्मर्यते चैवं एकश्रुतिदूरात्संबुद्धौ यज्ञकर्मणि सुब्रह्मण्यासामजपन्यूङ्खयाजमानवर्जम्" इत्युक्तम् । अत्र वाशब्दः पक्षव्यावृत्तौ, तान एवेत्यर्थः। तान एकश्रुतिरिति तद्भाष्यकृतः । यत्तु *सूत्रस्थं वाशब्दं विकल्पार्थकमाहुः । तेषां नित्यत्वादिति वाक्यशेषविरोधः। तस्माद्यजुष्यप्येकश्रुतिरेव। अत्र सूत्रे जपादिग्रहणं *याजमानमन्त्राणामप्युपलक्षणं कात्यायनसूत्रस्वरसात् । वस्तुतः कात्यायनप्रातिशाख्ये(१) 'तानलक्षणमेकं स्वरमाहुर्यज्ञकर्मणि सामजपन्यूङ्खवर्जं प्रवचनो-

---

स्तीति ध्वनितम् । *तद्भाष्यम=शतपथब्राह्मणभाष्यम् । *अत एव=ऊहितस्यामन्त्रतया तत्रैकश्रुत्यभावादेव । *एतेन=उक्तभाष्यविरोधेन । *अस्य=यज्ञकर्मणीत्यस्य । *अत एव=व्यवस्थितविभाषात्वस्वीकारादेव। *अत एव=उक्तार्थसत्त्वादेव । *अच्छन्दसि=अमन्त्रे ब्राह्मण इति यावत् । चरितार्थेनेति शेषः । *ऊहेषु=यत्किञ्चिदूहितेषु । अस्य मन्त्रावयवत्वमुपपादितम् । पूर्वसूत्रस्य चारितार्थ्यन्तु यत्र न किञ्चिदप्यूहस्तस्मिन् मन्त्रे । केचित्तु "विभाषा छन्दसि" ( पा० सू० १–२–३६ ) इत्यस्मिन् सूत्रे विभाषापदानन्तरमकारस्य प्रश्लेषेणायं ग्रन्थो योजनीयः । प्रश्लेषसूचनाय वैपरीत्येन लेख इति योजयन्ति। अत्र "विभाषा छन्दसि" ( पा० सू० १–२–२६ ) इत्यत्र तन्त्रस्वीकारेणाच्छन्दसीत्यपि विवक्षितमत एवेत्यस्य पूर्वत्र सत्त्वेऽपि विभाषापदोपादानम् । इदमेव मतं युक्तमित्युत्तरत्र व्यक्तीभविष्यति । *अत एव=अस्य विभाषाच्छन्दसीत्येतदपवादत्वादेव । *यथाम्नातम्=यथाशास्त्रम् । *सूत्रस्थमिति । कात्यायनसूत्रस्थमि-

---

( १ ) 'एकतान' इत्यादर्शपुस्तके।

वा यजुषि' इत्युक्तेर्यजुषि त्रैस्वर्यमपि। तत्र प्रवचनशब्देन पाठ उच्यते। तत्र भवो वा स्वरो यजुषि यज्ञकर्मणि त्रैस्वर्यलक्षण इति तद्भाष्यकृतः। यद्यपि तत् समाख्याबलात्तच्छाखीयानामेव तथापि अविरुद्धत्वात्सर्वशाखा प्रत्येकं कर्मेति न्यायाच्चान्येषामपि त्रैस्वर्यं, परन्तु प्रागुक्त*कल्पसूत्रपाणिनिसूत्रतद्भाष्यादिपर्यालोचनया एकश्रुतौ*धर्माधिक्यं बोध्यम्।*वैकल्पिकेष्वादितोऽवधारणमिति न्यायात्संकल्पकाले एतदन्य*तरोल्लेख आवश्यकः। यज्ञशब्देन यजतिचोदनाचोदितानामेव ग्रहणमिति। स्मार्तेषु स्थालीपाकोपाकर्मादिप्रयोगेषु नैकश्रुत्यमित्यन्यत्र विस्तरः॥

उच्चैस्तरां वा (पा० सू० १-२-३५)। अधिकरणशक्तिप्रधानोच्चैःशब्दा*त्तद्विशिष्टभवनक्रियाकर्तरि वर्तमानात्क्रियाप्रकर्षे प्रत्ययः। तेनोदात्ततर इत्यर्थः। वषट्शब्देन वौषट्शब्दो लक्ष्यते*व्याख्यानात्। *तत्रौकारस्य ब्रूहि प्रेष्येत्यनेन प्लुतोदात्तत्वविधानात् षकारस्यानेन*तदपेक्षयोदात्ततरो विधीयत इत्येके। *अन्ये तु द्वयोरप्युदात्ततरत्वं याज्यावाक्यीयैकश्रुत्यपेक्षया प्रकर्ष इत्याहुः। इदमेव युक्तं *भाष्यसम्मतञ्चेति

---

त्यर्थः। *याजमानमन्त्राणाम्=यजमानपठ्यमानमन्त्राणाम्। *कल्पसूत्रमिति। कात्यायनसूत्रमित्यर्थः। *धर्माधिक्यमिति। एतेन दूषणं त्रैस्वर्येणोच्चारणे नास्ति तथापि धर्माधिक्यकामनया एकश्रुत्योच्चारणेऽपि न क्षतिरिति सूचितम्। धर्माधिक्यं भावानुष्ठानेन। प्रसङ्गाद्वैकल्पिकत्वेऽव्यवस्थां वारयति—*वैकल्पिकेष्वादित इति। आदित इत्यत्राविशब्दात्सप्तम्यन्तात्तसिः। *अन्यतरोल्लेख इति। त्रैस्वर्येण मन्त्रानुच्चार्येति वा एकश्रुत्या मन्त्रानुच्चार्येति वा उल्लेखः कार्यः।

*तद्विशिष्टेति। आधेयतासम्बन्धेनोर्ध्वदेशविशिष्टेत्यर्थः। अस्य भवनक्रियायामन्वयः। *व्याख्यानादिति। तुल्यार्थत्वमूलकव्याख्यानादित्यर्थः। द्वावपि हि देवतासम्प्रदानस्य द्योतकौ। न चैवम्प्रतिपत्तिलाघवाय वौषडित्येव कुतो नोक्तमिति वाच्यम्। मात्रागौरवप्रसङ्गात्। ननु वौषट्शब्दादेर्ब्रूहिप्रेष्येत्यनेन प्लुतोदात्तत्वं विधीयत इति कथमनेन तस्योदात्ततरत्वविधानमत आह—*तत्रौकारस्येति। *तदपेक्षया=पूर्वोदात्तापेक्षया। सजातीयापेक्षया प्रकर्ष इति तद्भावः। नव्यमतमाह—*अन्ये त्विति। याज्यावाक्ये "याज्यान्तः" (पा० सू० ८-२-९०) इत्यनेनान्त्यस्य प्लुतविधानादादेस्तत्रैकश्रुतिर्भवति तदपेक्षश्चायम्प्रकर्षः। वौषट्शब्दे तु याज्यावाक्ये ब्रूहिप्रेष्येत्यनेनादेः प्लुतो भवति। एकश्रुतिश्च "यज्ञकर्मणि" (पा० सू० १-२-३४) इत्यनेन तस्य वाक्यस्य भवति तद्घटकवौषट्शब्दे "उच्चैस्तराम्" (पा० सू० १-२-३५) इत्यनेन पक्षे उदात्ततरत्वम्पक्षे एकश्रुतिश्च भवति। तदेकश्रुत्यपेक्षया प्रकर्षः। *भाष्यसम्मतं चेति। "प-

बहवः । *अस्योदात्तस्य इतउत्कृष्य शास्त्रान्ते कर्तव्यत्वेनोक्तत्वादसिद्धत्वात् प्लुतोदात्तत्वस्याप्यसिद्धत्वाच्च शेषनिघातो नेति बोध्यम् । *पक्षे एकश्रुतिः ।

विभाषा छन्दसि ( पा० सू० १-२-३६ ) । ननु विभाषाग्रहणं व्यर्थं वाग्रहणानुवृत्त्यैव सिद्धेः । न च यज्ञकर्मणीत्यस्य निवृत्त्यर्थम्, इष्टानुरोधेन व्याख्यानत एव तन्निवृत्तेः सम्भवात्; इति चेदुच्यते । आवृत्त्या विभाषा छन्दसीति पदच्छेदार्थम् । तेन भाषायामपि पाक्षिकैकश्रुतिः ।*अत एव 'श्वेतो धावति' 'अलम्बुसानां याता' इति द्व्यर्थवाक्यमिति पस्पशान्ते भाष्यं सङ्गच्छते ।*तत्र श्वा इति अन्तोदात्तः । इत इति "ऊडिदम्"(पा० सू० ६-४-१७४) इत्यनेन* । श्वेत इति घृतादित्वादन्तोदात्तम् । अलमिति निपातत्वादाद्युदात्तं, बुसशब्दोऽन्तोदात्तः, एवमलम्बुस*शब्दो ऽपि । एकश्रुत्यभावे हि स्वरभेदे कथमेकं वाक्यं द्व्यर्थं स्यादिति बोध्यम् । *अत एव

---

कश्रुतिदूरात्" (पा० सू० १-२-३३) इति सूत्रभाष्यस्वरस इत्यर्थः । तत्र हि—किमियमेकश्रुतिरुदात्ता आहोस्विदनुदात्तेति विचारे—"उदात्ता । कथं ज्ञायते ? यदयमुच्चैस्तरां वा वषट्कार इत्याह । कथं कृत्वा ज्ञापकम् ? । अतन्त्रन्तरनिर्देशः । उच्चैर्दृष्ट्वा उच्चैस्तरामित्येतद्भवति" इत्युक्तम् । उक्तञ्च कैयटेन—"सोमस्याग्ने वीही वौषड् इत्यत्र मन्त्रे यज्ञकर्मणीत्यनेनैकश्रुतिर्विहिता तदपेक्षया वौषट्शब्दस्योदात्ततरत्वं विधीयते सति चैकश्रुतेरुदात्तानुरागे तदपेक्षः प्रकर्षो युज्यते" इति । *अस्योदात्तस्येति । "तस्यादित उदात्तमर्धह्रस्वम्" ( पा० सू० १-२-३२ ) इत्यारभ्य "उदात्तस्वरितपरस्य सन्नतरः" ( पा० सू० १-२-४० ) इत्यन्ता या नवसूत्री "उदात्तादनुदात्तस्य स्वरितः" ( पा० सू० ८-४-६६ ) इत्यस्मात्परा कर्त्तव्या इत्युक्तमस्य तद्घटकतयाऽसिद्धत्वं भवत्येवेति भावः । तत्फलन्तु 'इमम्मे गङ्गे यमुने' इतिमन्त्रे उदात्ताद् 'इमम्'इत्यकारात्परस्य मे इत्यनुदात्तस्य "उदात्तादनुदात्तस्य" ( पा० सू० ८-४-६६ ) इति स्वरितत्वे कृते ततः पराणामनुदात्तानामनेन श्रुतिसिद्धिः । अन्यथा यः सिद्धः स्वरितस्ततः पराणामेवार्यन्देवदत्त यज्ञदत्त इत्यादौ "तित्स्वरितम्" ( पा० सू० ६-१-१८५ ) इति विषय एव स्यात् । एवं "न सुब्रह्मण्यायाम्" ( पा० सू० १-२-३७ ) इति सुब्रह्मण्योमिन्द्र आगच्छ इत्यादावेव स्यात् । अत्र ज्ञापकन्तु "देवब्रह्मणोरनुदात्तः" ( पा० सू० १-२-३८ ) इत्यनेन स्वरितस्यानुदात्तविधानमिति भाष्ये उक्तम् । *पक्षे="उच्चैस्तराम्" ( पा० सू० १-२-३५ ) इति सूत्रप्रवृत्त्यभावपक्षे ।

*अत एव=आवृत्त्या अर्थद्वयस्याभिप्रेतत्वादेव । श्वेत इत्यस्यार्थद्वयपरत्वे यथा स्वरभेदस्तथोपपादयति—*तत्र श्वेतीति । *इत्यनेनेति । अन्तोदात्तमिति शेषः । बुसशब्दोऽन्तोदात्तः फिट्स्वरेण । *शब्दोऽपीति । अन्तो-

"दाण्डिनायन"(पा०सू०६-४-१७४)इति सूत्रे भाष्ये उक्तम् "एकश्रुतिः*(१) स्वरसर्वनाम"इति।*अत एवाभियुक्तानां विरुद्धस्वरकतत्पुरुषबहुव्रीह्याश्रयणेन श्लिष्टकाव्यादिनिर्माणं सङ्गच्छते।*अत एव काव्यप्रकाशकृता वेद इव लोके स्वरो न (२) विशेषहेतुरित्युक्तम् । एकश्रुत्या व्यवहारादिति तदाशयः। *किमर्थं तर्हि "ज्ञल्युपोत्तमम्"(पा०सू०६-१-१८०)इति मकरस्य विभाषायामिति सूत्रितमिति चेद्; त्रैस्वर्येण मक्रमे पाक्षिकानुदात्तत्वलाभायेति गृहाण।*एतेन भाषायां स्वरो नास्त्येवेति भ्राम्यन्तः परास्ताः, स्वरविधौ छन्दोऽधिकाराभावाच्चेति दिक्।*परे तु मन्त्रे त्रैस्वर्यं ब्राह्मणे एकश्रुतिर्बह्वृचानां, तैत्तिरीयाणामुभयत्रापि त्रैस्वर्यमिति व्यवस्थितविभाषात्वमस्य छन्दसि स्वीकृतं कैश्चित्, तन्न युक्तम्। "शाच्छोः"(पा० सू०७-४-४१) इति सूत्रे भाष्ये परिगणितव्यवस्थितविभाषास्वपाठात्। तत्र हि

"देवत्रातो गलो ग्राह इति योगे च सद्विधिः।
मिथस्तेन विभाष्यन्ते गवाक्षः संशितव्रते॥"

इत्युक्तम्। अत एव केषुचिद्देशेषु स्वाध्यायकाले सर्ववेदानामैकश्रुत्येन पाठो दृश्यते। न चैवं छन्दो(३)ग्रहणवैयर्थ्यं छन्दसि त्रैस्वर्ये धर्माधिक्यं लोके तु समतत्येनदर्थन्तत्सत्त्वात्। तथापि छन्दोग्रहणसामर्थ्याद् भाषापेक्षया वैलक्षण्यं कल्प्यं व्यवस्थितविभाषात्वेन, मया त्वेवमिति विशेषाभावात्। न हि छन्दसीत्यनेन त्वदुक्तार्थोऽपि वाच्यवृत्त्या लभ्यते *'एकश्रुतिः स्वरसर्वनाम' इति भाष्येणाप्येवं बोधनाच्च। यथा सर्वनामशब्दास्तदादयः सर्वपदस्थाने प्रयुज्यन्ते एवं सर्वस्वरस्थाने एकश्रुतिः प्रयोक्तव्येति तदर्थः। अनेन स्पष्टमेव त्रैस्वर्यैकश्रुत्योरैच्छिकविकल्पविषय-

---

दात्त इति शेषः। *अत एव उक्तोऽर्थः। *स्वरसर्वनामेति। अत्र सर्वनामशब्दस्तत्सदृशे वर्त्तते। स्वरेषु सर्वनामेत्यर्थः। यथा सर्वनाम्नः सर्वपदार्थपरामर्शार्थप्रयोगस्तथास्या एकश्रुतेरपि सर्वत्र प्रयोगः। *अत एव=भाषायामप्येकश्रुतिसत्त्वादेव। *अत एव उक्तोऽर्थः। भाषायामेकश्रुतिस्वीकारे शङ्कते—*किमर्थमिति। *एतेन=उक्तप्रकारेण। मूलोक्तं व्यवस्थितविभाषात्वं खण्डयति—*परे त्विति। स्वोक्तार्थे भाष्यान्तरसम्मतिमप्याह—*एकश्रुतिरिति।

---

(१) 'सर्वनाम' इति मुद्रितपुस्तके।
(२) 'विशेषावसायहेतुः' इत्यादर्शपुस्तके।
(३) 'ग्रहणं व्यर्थम्' इत्यादर्शपुस्तके।

सोक्ता । वृत्तिकारोऽपि छन्दसि ऐच्छिकमेवैकश्रुत्यमाह । इदानीं केषाञ्चिद्धर्माधिक्याय त्रैस्वर्येण पाठः परंपरासंप्रदायेन अन्येषामैकश्रुत्येनेति संप्रदायश्रद्धाजाड्येन तु *ते ते नान्यथा पठन्ति । नैतावता विकल्पस्यैच्छिकत्वभङ्गः । न च 'इन्द्रशत्रुर्वर्धस्व' इत्यूहे यज्ञकर्मणीत्यस्याप्रवृत्तौ अच्छन्दसीति च्छेदेन नैकश्रुत्यापत्तिः । धर्माधिक्याय त्रैस्वर्येण ऋत्विग्भिः पाठेना*दोषादित्याहुः ।

न सुब्रह्म (पा० सू० १-२-३७) । ननु विभाषेत्यस्य व्यवस्थितविभाषात्वात्स्वरितस्य तूदात्त इति ज्ञापकाच्च सुब्रह्मण्यायां तदभावसिद्धौ नेति व्यर्थमिति चेन्न । व्यवहित*यज्ञकर्मणीत्यस्यापि निषेधार्थं तत्सत्त्वात् । स्पष्टश्चेदं कात्यायनसूत्रे, तदाह—यज्ञेत्यादि । एवञ्चेदं सूत्रं यज्ञकर्मणि स्वाध्यायकाले च प्रवर्तते इत्याहुः । *केचित्तु यज्ञकर्मण्येवास्य प्रवृत्तिः*नेति तु स्पष्टार्थमेव । तेन स्वाध्यायकाले स्वरित एव । "विभाषा छन्दसि" (पा० सू० १-२-३६) इति तु व्यवस्थितविभाषात्वान्न ततः परेषामनुदात्तानामेकश्रुतिश्चेति*वदन्ति । सुब्रह्मण्योम् इति । सुब्रह्मणि साधुरिति यत् । तित्स्वरितं टापा सहैकादेशोऽन्तरतमत्वात्स्वरितः । ओमिति निपातत्वादाद्युदात्तम्, तेनैकादेशोऽप्यान्तरतम्यात्स्वरितः । "एकादेश उदात्तेन" (पा० सू० ८-२-५) इति तु न प्रवर्तते । अनुदात्तस्येत्यस्यानुवृत्तेः । तस्यानेनोदात्तः । स्पष्टश्चेदं भाष्ये । 'इन्द्रागच्छ' इत्यत्र इन्द्रेत्यामन्त्रिताद्युदात्ते द्वितीयवर्णोऽनुदात्तः । स च "उदात्तादनुदात्तस्य" (पा० सू० ८-४-६६) इति स्वरितः, तस्यानेनोदात्तः । न चात्र कर्तव्ये स्वरितोऽसिद्धः । एतत्काण्डमुत्कृष्यत इत्युक्तेः । *अत एवास्मिन्नुदात्ते शे-

---

*ते तेऽन्यथेति । के चन त्रैस्वर्येण के चनैकश्रुत्या । *अदोषादिति । स्वरदोषेण 'इन्द्र एव शातयिता सम्पन्नः' इति यज्ञाख्यादावभिहितं तदसङ्गतिरूपो दोषो नेत्यर्थः ।

*यज्ञकर्मणीत्यस्यापीति । अनेनापिना व्यवस्थितविभाषाया अप्रामाणिकत्वं पूर्वेनैव निवेदितं स्वरितस्य तूदात्त इति ज्ञापकेन चैकश्रुत्यभावकल्पनापेक्षया नेत्युपादानेन साक्षान्निषेधस्वीकार एव योग्य इति सूचितम् । प्रकृतसूत्रे यज्ञकर्मणीत्यनुवर्तते इति वादिनो मतमाह—*केचित्तु यज्ञेति । स्वरितस्य तूदात्त इति ज्ञापकादेव तदभावे सिद्धे नेति व्यर्थमत आह—*नेति त्विति । *इति वदन्तीति । प्राचीनानुसारिण इति शेषः । *अत एव=त्रिपाद्यामस्य का-

षनिघातो न। एवमग्रेऽप्यूह्यम्। असाविति प्रथमान्तो-पलक्षणम्। एवममुष्येत्यपि षष्ठ्यन्तस्य। एतानि वार्तिकानि। गार्ग्य इ-ति। नन्वनेनान्तस्योदात्तत्वेऽपि अस्यासिद्धत्वाच्छेषनिघाताभावे गाकारो ऽनुदात्तो न स्यादिति चेन्न। इष्टापत्तेः। स्वरितोदात्तयोः समावेशव-*त्तयोरपि समावेशात्। स्यान्तस्येति। अत्र स्येति विवक्षितं पूर्ववार्ति-कारम्भात्।

देवब्रह्मणोः (पा० सू० १-२-३८)। *सुब्रह्मण्यानिगदान्तर्ग-तयोरित्यर्थः। देवा ब्रह्माण इति। इदं वैकल्पिकं 'देवब्रह्मणोरनुदात्त-त्वमेके' इति भाष्यात्। पक्षे त्वेकश्रुतिर्दूरात्संबोधनसत्त्वात्। *अत एव "एकश्रुतिदूरात्" (पा० सू० १-२-३३) इति सूत्रे इदमेकश्रुतेरुदाहरणं भाष्ये उक्तम्।

स्वरितात्संहितायाम् (पा० सू० १-२-३९)। अत्रानुदा-त्तानामिति बहुत्वमविवक्षितम्। तेन*'अग्निमीडे' इत्यादिसिद्धिः। *बहुवच-

---

ण्डस्योत्कर्षादेव। *तयोरपि=उदात्तयोरपि। के चित्तु "न मुने" (पा० सू० ८-२-३) इत्यत्र नेति योगविभागेन क्व चिदन्यत्राप्यसिद्धत्वन्नेत्यर्थकेन वार्त्तिका-नामसिद्धत्वाभावः कल्प्य इत्याहुः। तन्न। योगविभागस्य भाष्यानारूढत्वात्।

देवब्रह्मणोः (पा० सू० १-२-३८)। इदम्पूर्वसूत्रैकदेशस्य 'स्वरितस्य तूदात्तः' (पा० सू० १-२-३७) इत्यस्यापवादः। अत एवाह—*सुब्रह्मण्येति। *अत एव=अस्य वैकल्पिकत्वादेव। उभयत्रामन्त्रिताद्युदात्तत्वे शेषनिघाते च "उदात्तादनुदात्तस्य स्वरितः" (पा० सू० ८-४-६६), तस्यानेनानुदात्तः। ब्रह्मा-ण इत्यस्याष्टमिको निघातस्तु न। "आमन्त्रितं पूर्वमविद्यमानवत्" (पा० सू० ८-१-७२) इति देवा इत्यस्याविद्यमानवद्भावे सति पदात्परत्वाभावात्। एषा च कल्पना देवा ब्रह्माण इत्यनयोर्वैयधिकरण्यवादिमतेन। अन्ये तु द्वावपि स-मानाधिकरणावेव। तन्मते "विभाषितं विशेषवचने बहुवचनम्"इति देवा इत्य-स्य विकल्पेनाविद्यमानवत्त्वात्पक्षे आष्टमिको निघातो भवत्येव। प्रकृतसूत्रेण स्व-रितस्य निघातस्तु देवा इत्यत्र वकारस्य नित्यः। एतदेवाभिप्रेत्य भाष्ये 'देव-ब्रह्मणोरनुदात्तत्वमेके इत्युक्तम्।

स्वरितात्संहितायामनुदात्तानाम् (पा० सू० १-२-३९)। *अग्निमी-ळे इत्यादीति। अत्र ईळ इत्यस्य "तिङ्ङतिङः" (पा० सू० ८-१-२८) इ-तिनिघातेऽग्निमित्युदात्तात्परस्यैकारस्यानुदात्तस्य स्वरितत्वे ततः परस्यैकस्य ळे इत्यस्याप्यनेनैकश्रुतिसिद्धिः। नन्वेवमेकवचनेन निर्देशे कर्त्तव्ये बहुवचनो-

ोच्चारणन्त्व*नेक-वे सर्वेषां यथा स्यात्। अन्यथा तस्मादिति परिभाषया ऽऽद्यस्यैव स्यात्। यदि तु स्वरविधौ *सङ्घातः कार्यीत्युच्यते तदा स्पष्टार्थम्। संहितायामित्येतज्ज्ञापयति—*अन्यत्र पञ्चमीनिर्देशे कालो न व्यवधायक इति। तेन "तिङ्ङतिङः"(पा०सू०८–१–२८)इति निघातः पदपाठेऽपि सिध्यति। इमं मे इति। *मेशब्दोऽनुदात्तः, तस्योदात्तात्परत्वेन स्वरितः। न चास्य स्वरितस्य प्रकृतसूत्रदृष्ट्या ऽसिद्धत्वम्, न च स्वरितादित्याश्रयात्सिद्धत्वं*क्वः सुम्नेत्यादौ चारितार्थ्यात्, इति वाच्यम्। "तस्यादित" (पा० सू० १–२–३२)इत्यादिनवसूत्र्याः स्वस्थानादुत्कृष्य शास्त्रान्ते भगवता *निवेशितत्वात्। *अत एव "देवब्रह्मणोः"(पा०सू० १–२–३८) इति सूत्रं सार्थकमित्याहुः।

उदात्तस्वरितप(पा०सू०१–२–४०)।सन्नो ऽनुदात्तः। तस्यानुदात्तस्येति। "एकश्रुतिदूरात्" [ पा०सू०१–२–३३]इति सूत्रस्थभाष्ये उदात्तादनुदात्तानुरागवदेकश्रुतिरुदात्ता ऽनुदात्ता वेति सन्दिग्ध नोदात्ता 'उच्चैस्तरां वा वषट्कारः'( पा०सू०१–२–३५)इति ज्ञापकात्। अतन्त्रन्तरनिर्देशः। नानुदात्ता"उदात्तस्वरितपरस्य"(पा०सू०१–२–४०)इत्यत्र सन्नतर इति ज्ञापकादतन्त्रंतरनिर्देशः। अपर आह—*एकश्रुतिरुदात्ता उच्चैस्तरामिति ज्ञापकात्। तन्त्रंतरनिर्देशः उच्चैर्दृष्ट्वा उच्चैस्तरामित्येतद्भवति। अनुदात्ता च, सन्नतर इति ज्ञापकात् तन्त्रंतरनिर्देशः सन्नंदृष्ट्वा सन्नतर इति भवति'इत्युक्तम्। तत्राद्ये ज्ञापकमेवं कैयटेनोक्तं—यद्येकश्रुतिरुदात्ता तदा वषट्शब्दस्यापि "यज्ञकर्मणि" इत्येकश्रुतेः सिद्धत्वाद् "उच्चैस्तराम्" ( पा०

---

पादानमनर्थकमत आह—*बहुवचनेति। *अनेकत्व इति। "इमं मे गङ्गे यमुने सरस्वति शुतुद्रि' इत्यत्र यथा। *सङ्घातः कार्यीति। समुदायः कार्यीत्यर्थः। अस्मिन्नर्थे ज्ञापकं "भीह्रीभृहुमद" ( पा० सू० ६–१–१९२ ) इति सूत्रे व्यक्तीभविष्यति। *अन्यत्रेति। फलमन्यत्र संहिताविषयविहितकार्यातिरिक्त इत्यतो ऽन्यत्रेत्युक्तम्। ज्ञाप्यन्तु पञ्चमीनिर्देश इत्याद्येव। *मेशब्दोऽनुदात्तः। "अनुदात्तं सर्वमपादादौ" ( पा० सू० ८–१–१८ ) इत्यधिकारात्। *क वः सुम्न इति। कशब्दस्यात्प्रत्ययान्तत्वेन "तित् स्वरितम्" (पा० सू० ६–१–१८५) इति स्वरितत्वम्। *निवेशितत्वादिति। अत्र ज्ञापकम्प्राग्वर्णितम्। *अत एव—नवसूत्र्या उत्कर्षादेव।

उदात्तस्वरित ( पा० सू० १–२–४० )। प्रकृतसूत्रे सन्नतरेत्युपादानात्प्रसिद्धानुदात्तापेक्षयाऽस्यैकश्रुतौ वैलक्षण्यं स्यादिति शङ्कावारणायाह—*एक-

सू० १—२—३५) इति सूत्रं नाकरिष्यत् । तेन हि पक्षे उदात्ता पक्षे ए-कश्रुतिर्विधीयते । एवमनुदात्तत्वे एकश्रुत्यनुवृत्त्यैव सिद्धे सन्नतरग्रहणमन-र्थकम् । तस्मादुदात्तानुदात्तयोर्भेदतिरोधानमेकश्रुतिरिति । अन्त्यमते उच्चै-ष्ट्वेति प्रतीकमुपादाय सोमस्याग्ने वीही वौषडिति मन्त्रे यज्ञकर्मणीत्येकश्रु-तौ प्राप्तायां तदपेक्षया वौषट्शब्दस्योदात्ततरत्वं विधीयते । सति चैकश्रु-तेरुदात्तानुरागे तदपेक्षः प्रकर्षो युज्यते । यथा मलिने वस्त्रे शौक्ल्यानुरागे तदपेक्षो वस्त्रान्तरे शुक्लतरव्यपदेशः । सन्नं ष्ट्वेति एकश्रुतिगतमित्यर्थः । एवञ्च पक्षद्वयेऽपि स्वाभाविकोदात्तानुदात्तापेक्षयोदात्ततरानुदात्ततरयो*र्न कश्चित् श्रुतौ विशेषः । नाप्युच्चारणे यत्नविशेष इति लभ्यते । *सप्तस्वर-गणनायामपि भाष्ये उदात्ततरानुदात्ततरौ एकश्रुतिगतोदात्ताद्यपेक्षयैवा-तिशयविशिष्टौ बोध्यौ । *अनुदात्तस्य तद्विधानन्त्वेकश्रुतिबाधनार्थम् । *यत्त्वेकश्रुतेः स्थाने सन्नतरविधानमिति, तन्न । *मानाभावात् । किं-चैकश्रुतिपदस्य षष्ठ्यन्तत्वकल्पने न मानम् । *अपि चैकश्रुतिशब्दस्य स्त्रीलिङ्गत्वेन स्वरितपरस्येति लिङ्गविरोधः । *एवञ्चैकश्रुतिविषये एवास्य विधानमिति*'अग्नि कन्या' इत्यादावपि सन्नतरापत्तिरित्य*पास्तम् ।*अ-नुदात्तानामित्युपक्रमात्सर्वेषां माभूदन्त्यस्यैव यथा स्यादित्यर्थं परग्रहणम् । *नन्वेवं सति नवसूत्र्याः शास्त्रान्ते उत्कर्षेणास्याः सिद्धत्वात् गङ्गे इत्यादिव

---

श्रुतीत्यादि । *न कश्चिदिति । पक्षद्वयैकरूप्यायैवमेव कल्प्यत इति भावः । *स-प्तस्वरगणनेति । "एकश्रुतिदूरात्" (पा० सू० १-२-३३ ) इति सूत्रभाष्ये कृता या सप्तस्वरगणना तस्यामित्यर्थः । "उदात्तः, उदात्ततरः, अनुदात्तः, अनुदात्ततरः, स्वरितः, स्वरिते य उदात्तः सोऽन्येन विशिष्टः, एकश्रुतिः सप्तमः" इति हि तत्रोक्तम् । *अनुदात्तस्य तद्विधानमिति । अनुदात्तरविधानमित्यर्थः । "एक-श्रुति"( पा० सू० १-२-३३ ) इति पूर्वसूत्रादेकश्रुतिपदम्प्रकृतसूत्रेऽनुवर्त्य तस्य षष्ठ्यन्तत्वकल्पनयाऽनेन तस्याः स्थानेऽनुदात्ततरविधानमिति वादिमतन्निर-स्यति—*यत्त्विति । *मानाभावादिति । भाष्यानुक्तत्वेन तादृशकल्पनायाम्मा-नाभावादित्यर्थः । प्रत्युत तादृशी कल्पना सूत्रविरुद्धापीत्याह—*अपि चैकेति । *एवञ्चेति । अस्या एकश्रुत्यपवादत्वे च । *अग्निकन्येति । "कन्याराज-न्यमनुष्याणामन्तः" इत्यनेनान्त्यस्य स्वरितत्वेऽनुदात्तस्य ककारा-कारस्यानेन सन्नतरापत्तिरित्यर्थः । *परास्तमिति । एकश्रुतिविषयतया च सम्बो-धने यद्वाक्यन्तत्र अग्निकन्येत्यत्र तु न तथात्वमिति तदुक्तम्परास्तमित्यर्थः । ननु "उदात्तस्वरितयोः"इत्येव सिद्धे परग्रहणवैयर्थ्यमत आह—*अनुदात्तानामिति । *नन्वेवम्—अस्य सन्नतरस्यैकश्रुतिबाधकत्वस्वीकारे । *अत्र पाठेनेति । शास्त्रा-

त्सरस्वतीकारस्यापि पूर्वेणैकश्रुतिः प्राप्नोति, मम तु न दोषः । तस्या एव स्थाने सन्नतरविधानादिति चेन्न । *अत्र पाठेन परस्परं प्रति नवसङ्ख्या असिद्धत्वाभावबोधनात् । अन्यं प्रति त्वसिद्धत्वमस्त्येव । *एतेनायं सन्नतर एकश्रुतेरिव "उदात्तादनुदात्तस्य" ( पा० सू० ८–४–६६ ) इति स्वरितस्यापि परत्वाद् बाधकः स्यादिति नोदात्तस्वरितोदयमिति*परास्तमित्याहुः । शुतुद्रीति । आमन्त्रितत्वेऽपि पादादित्वा*न्न निहतम् । इति साधारणस्वराः ।

## अथ धातुस्वराः

*प्रकृतिर्द्विधा धातुः प्रातिपदिकश्च । तत्रादौ सर्वमूलत्वाद्धातुस्वरानाह—धातोः ( पा० सू० ६–१–१६२ ) । "कर्षात्वतः" ( पा० सू० ६–१–१५९ ) इत्यतोऽन्त इति वर्त्तते । गोपायतमिति । गुपेरन्तोदात्तात् आयः, तदन्तमप्यन्तोदात्तम् । एकाक्षरेऽपि व्यपदेशिवद्भावाद(१)स्य प्रवृत्तेः । *येऽपि उपदेशेऽनुदात्ताः पचादयस्तेष्वप्ययं विधिः । अनुदात्तोपदेशस्येड्निषेधविधौ चारितार्थ्यात् । पिबाद्यादेशानामाद्युदात्तत्वनिपातनसामर्थ्यात्तेषु नायं विधिः ।

स्वपादि ( पा० सू० ६–१–१८८ ) । अदादिषु आगणान्तात् स्वपादयः । लसार्वधातुकमित्यस्य सप्तम्या विपरिणामः । (२)अच्यनि-

---

न्ते उत्कर्षो ज्ञापकात्कल्प्यते परन्तु तस्यास्तत्रैव पाठे कर्त्तव्येऽत्र पाठो ज्ञापकः परस्परमसिद्धत्वाभावस्येति भावः । *एतेन=अन्यम्प्रत्यसिद्धत्वस्य निश्चयेन । *न निहतमिति । किन्त्वामन्त्रितत्वादाद्युदात्तमेव । इयञ्चैकश्रुतिराप्लुतान्तं सम्बोधनवाक्यस्य भवति प्लुतस्तूदात्त एव विधानसामर्थ्यात् । इति साधारणस्वराः ॥

## अथ धातुस्वराः

धात्वादिसाधारण्येन जायमानाः स्वरा इत्यर्थः । धातुस्वरस्य प्रथमतो निरूपणे सङ्गतिमाह—*प्रकृतिरिति । येऽनुदात्ता एव धातवः पाणिनिना पठितास्तेष्वपि धातोरित्यन्तोदात्तत्वम्भवतीत्याह—*येऽप्युपदेश इति ।

स्वपादिर्हिंसामच्यनिटि ( पा० सू० ६–१–१८८ ) । "तास्यनुदात्तेत्" ( पा० सू० ६–१–१८६ ) इत्यतो लसार्वधातुकमिति "आदिः सिचः" ( पा० सू०

---

( १ ) 'वद्भावस्य प्र' इत्यादर्शपुस्तके पाठः ।
( २ ) अनिडजादिलसार्वधातुकान्ते पदे इत्यर्थः ।

टीति सप्तमीदर्शनात् । अनिटीतिकिं? (१)(स्वपितः । अचीति किम्?,) स्वप्यात् । लेति किं ? चानशि *स्वपानः । सार्वधातुके किं?सुषुपतुः । क्ङित्येवेति* । नैतद्भाष्ये दृष्टम् ।

अभ्यस्तानामादिः ( पा० सू० ६-१-१८९ ) । *आदिरित्यनुवर्तमाने पुनरादिग्रहणं*नित्यार्थम् । अचीतिकिं?दद्यात् । अनिटीति किं ? जक्षिथ । *इदं सूत्रं*जक्षतीत्यत्र झिनिमित्तनिघाते प्राप्ते आद्युदात्तार्थम् ।

अनुदात्ते च (पा०सू०६-१-१९०) । अच्यनिटीति निवृत्तम् । अनुदात्त इति*बहुव्रीहिरित्याह-अविद्यमानेति । *अत एव 'मा स्म दधात्'इत्यादौ नित्यत्वा*दिकारलोपे कृतेऽप्येकस्वरः प्रवर्तते एव । अभ्यस्तानामिति किम्? *ऊर्णोति । *चकास्तीत्यादावाद्युदात्तार्थमिदम् । ददातीत्यत्रा(२)*न्तरङ्गत्वात्पूर्वं धातुस्वरेऽन्तोदात्ते ततो द्वित्वे शेषनिघाते-

६-१-१८७) इत्यत आदिरिति चानुवर्तते अन्यतरस्यामिति च । *स्वपान इति । चानश्प्रत्ययोऽत्र । यत्तु क्ङित्येवेष्यत इति मूलेऽभिहितं तद् वृत्त्यनुरोधेन । तेषाञ्चायमाशयः-अस्य वैकल्पिकत्वेनैतदभावे 'स्वपानि'इत्यत्र धातुस्वरेणाद्युदात्तत्वमेव भवतीति विशेषाभावादयं विधिर्नेति स्वपसाहचर्येण हिनसानीत्यत्राप्ययं विधिर्नेति श्नमस्तन्मध्यपतितन्यायेन धात्ववयवत्वाद्धातुस्वरेणाद्युदात्तत्वे कृते मध्योदात्तम्पदम्भवति ततः परस्य स्वरितत्वमिति, परन्त्विहेष्यत इत्याभिधानञ्च युक्तम्भाष्यानुक्तत्वादित्याह—*नैतद्भाष्य इति ।

अभ्यस्तानामादिः ( पा० सू० ६-१-१८९ ) । "आदिः सिचः" ( पा० सू० ६-१-१८७) इत्यत आदिरित्यस्यानुवृत्त्यैव सिद्धे प्रकृतसूत्रे आदिग्रहणङ्किमर्थमत आह—*आदिरिति । *नित्यार्थमिति । पूर्वस्मिन् "स्वपादि" (पा० सू० ६-१-१८८ ) इति सूत्रेऽन्यतरस्यामित्येतत्सम्बद्धस्यादिरित्यस्यानुवृत्तिदर्शनादिति भावः । प्रत्ययस्वरस्य सति शिष्टत्वाद् 'ददति'इत्यत्राभ्यस्तस्यानुदात्तत्वे प्राप्ते आद्युदात्ततासिद्धये आह—*इदं सूत्रमिति। शृङ्गग्राहिकन्यायेनाह—*जक्षतीत्यत्रेति।

अनुदात्ते च (पा० सू० ६-१-१९०) ।'दधासि'इत्यत्र लसार्वधातुकस्याजादित्वविरहादाद्युदात्तत्वाप्राप्तेरिदमारब्धम्। *बहुव्रीहिरिति । न विद्यते उदात्तो यस्मिन्नसावनुदात्त इत्यर्थः । *अत एव-बहुव्रीहिसमासाश्रयणादेव । *इकारलोपे="इतश्च" ( पा० सू० ३-४-१०० ) इत्यनेनेकारलोपे । माङ उच्चारणमद्प्रतिषेधाय । *ऊर्णोतीति । धातुस्वरेण मध्योदात्तमिदम् । सूत्रस्य प्रयोजनमाह—*चकेति । *अन्तरङ्गत्वादिति । अपरनिमित्तकत्वेनान्तरङ्गत्वादि-

( १ ) कंसान्तर्गतो ग्रन्थो मुद्रितपुस्तके नास्ति ।
( २ ) 'त्यत्राप्यन्त' इत्यादर्शपुस्तके पाठः ।

नोभयोरन्तोदात्तत्वाभावेऽपि पर्यायेणोभयोस्तत्त्वप्राप्ताविदम् । स्पष्टा चेयं रीतिः "परस्मैपदानाम्"[ पा० सू० ३-४-८२ ]इति सूत्रे भाष्ये । *न च धातोरित्यस्याद्युदा(१) त्तप्रकरणपाठेनाद्युदात्तविधायकत्वेऽनुदात्ते चेति न कर्तव्यमिति धातोरिति सूत्रस्थभाष्यमसङ्गतम्, *त्वद्रीत्या तस्याद्युदात्तविधायकत्वेऽप्यस्यावश्यकत्वादिति वाच्यम् । स्थाने द्विर्वचनमाश्रित्य पूर्वपक्षिणा तथोक्तावपि पक्षद्वयेऽपि कर्तव्यत्वाभिप्रायेण 'क्रियते न्यास एव' इति सिद्धान्त्युक्त्या दोषाभावात् । अस्य धातोरित्यत्रान्तग्रहणानुवृत्तिज्ञापकतापर*कैयटस्तु चिन्त्य एवेत्यन्यत्र विस्तरः ।

भीह्री ( पा० सू० ६-१-१९२ ) । अत्र लसार्वधातुकमिति मण्डूकप्लुत्या संबध्यते । ममन्त्विदानि । मदीहर्ष इत्यस्य श्यन्विकरणत्वेऽपि छान्दसः शपः श्लुः । भ्यादीनां किं?ददाति । "*अनुदात्ते च" ( पा० सू० ६-१-१९० ) इति तु'मिमीते' इत्यादौ सावकाशम् । तत्र हि माङो ङित्त्वाल्लसार्वधातुकानुदात्तत्वम् । अभ्यस्तानां किं ? माद्यति । (सार्वधातुके किम् ? बेभीयात् । यङ्लुगन्तादाशीर्लिङि । पितिकिं? जागृतम् । लसार्वधातुक इति*स्पष्टार्थम् । ननु*प्रत्ययादिति क्रिमर्थं भ्यादिभ्यः परस्य

---

त्यर्थः । *न च धातोरिति । "धातोः" ( पा० सू० ६-१-१६२ ) इतिसूत्रे "कर्षात्वतः" ( पा० सू० ६-१-१५९ ) इत्यतोऽन्त उदात्त इत्यनुवृत्त्याऽन्तोदात्तत्वविधायकत्वमुचितमुताद्युदात्तप्रकरणे पाठं कृत्वाऽऽद्युदात्तत्वविधायकत्वमुचितमित्येतत्तात्पर्यके किंधातोरन्त उदात्तो भवति आहोस्विदादिरिति विचारे आद्युदात्तत्वविधायकत्वेऽनुदात्ते चेति न वाच्यमिति लाघवमुक्तं तन्न सङ्गच्छेतेत्यर्थः । *त्वद्रीत्या=ददातीत्यत्रोक्तरीत्या । *कैयटस्तु चिन्त्य इति । एवं हि कैयटग्रन्थः—"अनुदात्ते चेत्येतदेव ज्ञापकमिहान्तग्रहणाधिकारस्य" इति । स तु चिन्त्यः । ददातीत्यत्र पर्यायेणोभयोरुदात्तत्ववारणायानुदात्ते चेत्यस्यावश्यकत्वात् । न च स्थानेद्विर्वचनेन सिद्धिः । 'द्विःप्रयोगो द्विर्वचनम्' इति पक्षस्यैव सिद्धान्तितत्वात् । न च "धातोः" ( पा० सू० ६-१-१६२ ) इत्यस्यान्तोदात्तत्वविधायकत्वे पिबतीत्यत्र पिबादेशस्यादन्तस्यान्तोदात्तत्वापत्तिरिति वाच्यम् । "पिबादेशे आद्युदात्तनिपातनं क्रियते"इति भाष्येण समाधानात् ।

भीह्रीभृहुमद ( पा० सू० ६-१-१९२ ) । ननु भ्यादिग्रहणाभावे पिति प्रत्यये परतः पूर्वस्याद्युदत्तिविधायकत्वेन ददातीत्यत्रापि चेत् "अनुदात्ते च" ( पा० सू० ६-१-१९० ) इति सूत्रमचरितार्थमत आह—*अनुदात्ते

---

( १ ) 'दात्त पाठे' इत्यादर्शे ।

पितः प्रत्ययस्यैव सम्भवादिति चेन्न। *प्रत्ययात्पूर्व एवोदात्तो यथा स्यात् *सङ्घात उदात्तो माभूदिति। *नचोदात्तत्वादीनामज्धर्मत्वेन पितीति सप्तम्या निर्दिष्टपरिभाषाप्रवृत्त्या अलोऽन्त्यपरिभाषयाचोऽन्त्यस्यैव भविष्यतीति वाच्यम्। स्वरविधौ*सङ्घातः कार्यीत्यर्थस्यापि ज्ञापनात्। एवञ्च "अलोऽन्त्यस्य" (पा० सू० १–१–५२) इत्यादीनामप्रवृत्तिः। *अत एव "कर्षात्वतः" (पा० सू० ६–१–१५९) इति सूत्रेऽन्तग्रहणं*चरितार्थम्। *यद्यप्यनेकोदात्तानां न यौगपद्यं युगपद्ग्रहणात् तथापि पर्यायेण सर्वेषां स्यात्,तदभावार्थं प्रत्ययादिति*चरितार्थम्,*तेन 'आसीनः' इत्यादौ 'चित्स्वरात्पास्यादिभ्योऽनुदात्तत्वं विप्रतिषेधेन' इति सिद्धम्। *अन्यथा चित्त्वेनान्तो-

---

चेतीति। *स्पष्टार्थमिति। अत्र हि मण्डूकप्लुत्या लसार्वधातुकग्रहणानुवृत्त्या बेभीयाञ्जेह्रीयादित्यादौ यङ्लुगन्तादाशीर्लिङि प्रत्ययात्पूर्वस्योदात्तत्ववारणाय व्याख्यानं कृतम्। एवं हि व्याख्यानं यङ्लुको भाषाविषयत्वे युज्यते। वस्तुतस्तस्य छान्दसत्वमेवान्यत्र प्रपञ्चितमिति छन्दसि दृष्टानुविधानादेव सिद्धमिति भावः। *प्रत्ययादिति किमर्थमिति। पूर्वस्पितीत्येव वाच्यं भीप्रभृतीनां यत्पिदपेक्षया पूर्वत्वं तत्प्रत्यय एव। न च बिभयानीत्यत्र लोडुत्तमस्य य आडागमस्तस्य पिच्चेत्यनेन पित्त्वातिदेशादप्रत्ययस्यापि पितः सम्भवोऽस्तीति वाच्यम्। "आडुत्तमस्य पिच्च" (पा० सू० ३-४-९२) इत्यनेन यस्योत्तमस्याङ् विधीयते तस्यैव पित्त्वानिदेशः क्रियते न त्वाट एवागमिनः पित्त्वमतिदिश्यते तस्याऽऽडागमे विशिष्टस्यापि पिद्ग्रहणेन ग्रहणसम्भवत्येयेति प्रत्ययग्रहणे विशेषाभाव इति प्रश्नः। समाधत्ते—*प्रत्ययात्पूर्वेति। प्रत्ययात्पूर्वोऽजित्यर्थः। *सङ्घात= अभ्यस्तसंज्ञकः समुदायः स उदात्तो मा भूत्। प्रकृतसूत्रे पूर्वग्रहणमपि न कार्यं पितीति सप्तमीनिर्देशात् "तस्मिन्निति" (पा० सू० १-१-६६) इति परिभाषायाः प्रवृत्त्या पिति परेऽव्यवहितपूर्वेषां भीप्रभृतीनामन्त्यस्याच इति कल्पनया सङ्घातस्य न भविष्यतीत्यभिप्रायेणाशङ्कते—*न चेति। *सङ्घातः कार्यीति। यत्र सङ्घातस्य कार्यप्रवृत्तियोग्यता तत्र सङ्घात एव कार्यी नावयव इत्यर्थः। एवञ्च तत्रावयवस्य कार्यनिष्पादकानाम् "अलोऽन्त्यस्य" (पा० सू० १-१-५२) इत्यादीनामनुपस्थितिरिति भावः। *अत एव=सङ्घातस्य कार्यित्वादेव। *चरितार्थमिति। सङ्घातस्य कार्यित्वे हि यत्र उदात्त इत्युक्तौ समुदायस्योदात्तत्ववारणायान्त इति चरितार्थमित्यर्थः। सङ्घातः कार्यीति स्वीकारे सति यथा प्रकृतसूत्रे प्रत्ययात्पूर्वमिति चरितार्थन्तथाह—*यद्यप्यनेक इत्यादिना। *चरितार्थमिति। बिभेतत्यादौ प्रत्यये पिति परे यः सङ्घातस्तदवयवस्य पर्यायेणोदात्तत्वम्मा भूदन्त्यस्यैव यथा स्यादित्येवमर्थम्प्रत्ययात्पूर्वमित्यावश्यकमिति भावः। *तेन=सङ्घातः कार्यीति स्वीकारेण। *अन्यथा=सङ्घातस्य कार्यित्वाभावे च। *आदेरित्य-

दात्तत्वमनुदात्तत्वञ्चादेरित्य*सम्भवाभावाद्विप्रतिषेधोऽसङ्गतः स्यादिति दिक् । *नन्वेवमपि प्रत्यये पितीत्येवोच्यतां किं पूर्वग्रहणेन ? नचाभ्यस्तानां लसार्वधातुके इत्यनुवृत्त्या पितोऽप्रत्ययस्यासम्भवेन प्रत्यय इति व्यर्थमिति वाच्यम् । पूर्वोक्तार्थज्ञापनार्थमावश्यकत्वात् । प्रत्यय इत्युक्तौ तु सामर्थ्यान्निर्दिष्टपरिभाषायाः पुनः प्रवृत्त्याऽव्यवहितस्यैव ग्रहणमिति न दोष इति चेन्न । *"सौवर्यः सप्तम्यस्तदन्तसप्तम्यः" इति*ज्ञापनार्थत्वात् । *प्रत्ययादिति पञ्चम्योत्तराङ्गविकलपरिभाषाप्रवृत्त्याऽव्यवहितपूर्वस्य कार्यिण एव पूर्वशब्देन ग्रहणान्न दोषः । *इदञ्च ज्ञापकस्य विशेषापेक्षत्वान्निर्दिष्टपरिभाषाविषय एव प्रवर्तते । *अत एव "रिक्ते विभाषा" ( पा० सू० ६-१-२०८ ) इत्यादौ न दोषः । तत्र हि—*पूर्वोत्तरसाहचर्याञ्च परिभाषाविषयः । *वस्तुतः 'षष्ठ्यर्थे सप्तमी' इत्येव ज्ञाप्यते । तदन्तविधिस्तु "येन विधिः" [पा०सू०१-१-७२] इति परिभाषया न्यायसिद्धः । *"चतुरः शसि" ( पा०सू०६-२-८२ ) इत्यत्र च यथा नास्याः प्रवृत्तिस्तथा वक्ष्यते । *अत्र बहवः—इदं*सामान्यापेक्षं,*तेन "ञ्नित्यादिः" (पा०

---

सम्भवाभावादिति । "आदेः परस्य" ( पा० सू० १-१-५४ ) इत्यस्य प्रवृत्त्याऽसम्भवाभावादित्यर्थः । *नन्वेवम्=पूर्वोपपादितरीत्या प्रत्ययग्रहणस्यावश्यकत्वे । *सौवर्य इति । स्वरे भवाः सौवर्यस्तत्र भव इत्यर्थेऽणि "द्वारादीनाञ्च" ( पा० सू० ७-३-४ ) इत्यैजागमः । *ज्ञापनार्थत्वादिति । एवञ्च प्रत्ययात्पूर्वमित्यस्याभावे पित्प्रत्ययान्तस्येत्यर्थापत्तौ बिभेति 'जिह्रेतत्यादौ प्रत्ययलक्षणेन सङ्घातस्य पित्प्रत्ययान्ततया पुनः पूर्वोपपादितरीत्या पर्यायः स्यादिति भावः । स्वविषये पञ्चम्यन्तोपादानस्य चारितार्थ्यमाह—*प्रत्ययादितीति । *इदञ्च=सौवर्यः सप्तम्यस्तदन्तसप्तम्य इत्येतच्च । *अत एव=निर्दिष्टपरिभाषाविषय एवेति स्वीकारादेव । *पूर्वोत्तरसाहचर्यात्=पूर्वसूत्रम् "आशितः कर्ता" ( पा० सू० ६-१-२०७ ) इति, उत्तरसूत्रं "जुष्टार्पिते च" ( पा० सू० ६-१-२०९ ) इति, तयोः सूत्रयोर्ये घटकास्तेषाम्प्रथमान्ततया न निर्दिष्टपरिभाषाविषयत्वन्तथा. ताभ्यां साहचर्याद्रिक्ते इति सप्तम्याः प्रथमार्थत्वकल्पनेन न निर्दिष्टपरिभाषाविषयत्वमिति भावः । लाघवादाह—*वस्तुत इति । चतुरः शसीति सप्तम्याः सौवर्यीत्वेऽपि न परिभाषाविषयत्वमित्याह—*चतुर इति । *अत्र=सौवर्यः सप्तम्यस्तदन्तसप्तम्य इति परिभाषाविषये । *सामान्यापेक्षमिति । तदन्तविधिसत्त्वासत्त्वाभ्यां स्वराश्रयकार्यिभेदो यत्रेत्येवंविधवक्ष्यमाणविशेषानपेक्षमित्यर्थः । *तेन=सामान्यापेक्षत्वेन । "ञ्निति" ( पा० सू० ६-१-१९७ ) इत्यनेनाद्युदात्तत्वविधानेन तदन्तविधिसत्त्वेऽसत्त्वे वा कार्यित्वमाद्येरक्षतमेव यद्यपि त-

सू० ३-४-५२)इत्यादावपि प्रवृत्तिः। *न चैवं 'गर्गाः' इत्यादौ "व्यञ्जोश्च" (पा०सू०३-२-२१) इति लुकि आद्युदात्तत्वप्रसङ्गः, *इत्पदघटितेऽनुबन्धनिमित्ते स्वरे कर्तव्ये आङ्गत्वाभावेऽपि*प्रत्यये परतः पूर्वकार्यत्वाभावेऽपि लुमता लुप्ते प्रत्ययलक्षणं नास्तीत्यर्थस्य "संज्ञायामुपमानम्" (पा०सू० ६-१-२१३) इत्यनेन ज्ञापनान्न दोषः। तद्धि चञ्चेत्यादावाद्युदात्तत्वाय। अन्यथा कनो लुपि प्रत्ययलक्षणेन "ञ्नित्यादिः" (पा०सू० ३-२-८१) इत्येव सिद्धे तद्वैयर्थ्यं स्पष्टमेव। *अत एव 'अत्रयः' इत्यत्र ढको लुकि न दोषः। वस्तुतः *'अत्रयः' इत्यादौ दोषः कार्यिणोऽभावेन प्रत्ययलक्षणाप्रवृत्तेः। प्रत्ययलक्षणेन हि तन्निमित्त*मन्यस्य कार्यमतिदिश्यते न तु तस्यैव स्थानिवत्त्वं प्रतिपाद्यते; असतः प्रसङ्गाभावेन स्थानिवत्त्वबाधात्। *अत एव नखभिन्न इत्यादावैसादिकं न। *मा हि दातामित्यादौ "आदिः सिचः" (पा० सू० ६-१-१८७)इत्यस्य प्रवृत्तये इत्पदघटितेति। *पथिप्रियो मथिप्रिय इत्यत्र च "पथिमथोः सर्वनामस्थाने" (पा० सू०६-१-११९) इत्येतत्स्वरनिवृत्त्यर्थं "न लुमताऽङ्गस्य" (पा० सू० १-१-६३) इति सूत्रभाष्यपठितम् 'अत्र लुमता लुप्ते प्रत्ययलक्षणं नेष्यते' इति वचनमत्र शर-

---

थापि तदन्तविधिर्भवतीति। *न चैवमिति। ञ्नितीत्यत्र तदन्तविधिस्वीकारे। यद्यत्र तदन्तविधिर्न स्यात्तदा प्रत्ययलक्षणस्य "न लुमताऽङ्गस्य" (पा०सू० १-१-६३) इति प्रतिषेधः सम्प्रति तु नेति भावः। समाधत्ते—*इत्पदेति। इत्पदाविषयकप्रतीत्यविषय इत्यर्थः। एतदभेदः शब्दे एवेति वक्ष्यमाणानुबन्धनिमित्तशब्दाऽर्थैकदेशस्य शब्दस्य विशेष्यत्वसिद्धिः। अत्राङ्गत्वाभावेपीति कथनं "न लुमताऽङ्गस्य" (पा० सू० १-१-६३) इति सूत्रे "अङ्गस्य" (पा० सू० ६-६-१) इत्यनेनाङ्गाधिकारः प्रतिनिर्दिश्यत इतिवादिनः सन्तोषाय। वस्तुतस्तथा नेत्याशयेनाह—*प्रत्यये परतः पूर्वकार्येति। *अत एव=पूर्वोक्तस्य ज्ञापकसिद्धवचनस्य सत्त्वादेव। *अत्रय इति। अत्रिशब्दात् "इतश्चानिञः" (पा० सू० ४-१-१२२) इति ढकि सति "अत्रिभृगु" (पा० सू० २-४-६५) इति लुका क्रियस्तदन्तस्यान्तोदात्तत्वविधायकमेतदित्याशयेनेह दोषसद्भावशङ्का, कियस्तद्धितस्तस्यैवान्तोदात्तत्वविधायकमेतदित्याशयेनाह—*वस्तुत इति। *अन्यस्य=तदव्यवहितपूर्ववर्त्तिनः शब्दस्य। *अत एव=असतः स्थानित्वबाधादेव। अनुबन्धनिमित्त इत्यर्थः। एवञ्च सिच्छब्दस्यापि चकारानुबन्धबोधकत्वेन तथात्वमस्तीत्याशयेनाह—*माहिदातामित्यादाविति। अत्र माशब्दोऽटो हिशब्दश्च निघातस्य प्रतिषेधाय। *पथिप्रियो मथिप्रिय इति। बहुव्रीहिसमासे "बहुव्रीहौ प्रकृत्या" (पा० सू० ६-२-१) इति पूर्वपदप्रकृतिस्वरे "पथिमथोः सर्वनामस्थाने"

णम्। *यदि प्रागुक्तं ज्ञापकं क्वचित्स्वरे कर्त्तव्ये प्रत्ययलक्षणं नेत्येव, क्वचिदित्युक्त्या च "आमन्त्रितस्य च" "(पा० सू० ८-१-१९)"सर्वस्य सुपि" (पा० सू० ६-१-१९१) इत्यादौ न दोष इत्युच्यते, तदा न काचिद्दोषशङ्केति वदन्ति। *केचित्तु विशेषापेक्षमेतत् यत्र तदन्तग्रहणसत्त्वासत्त्वाभ्यां स्वराश्रयकार्यिभेदस्तत्रैवै*तत्प्रवृत्तिरिति। *"भीह्री"(पा० सू० ६-१-१९२) इत्यत्र हि पूर्वग्रहणाभावे तदन्तस्य कार्यित्वे प्रत्ययान्तानां भ्यादीनामलोन्त्यस्य भवन्नुदात्तः प्रत्ययान्त्यस्य स्यात्। सप्तम्यर्थपुरस्कारे तु पितमपहाय भ्यादीनामेवोदात्तः स्यादिति स्पष्टस्तद्भेदः। "उपोत्तमं रिति"(पा० सू० ६-१-२१७) "चङ्यन्यतरस्याम्" [पा० सू० ६-१-२१८] इत्यत्रापि*दरिद्राधातुविषये फलभेदः। "ञ्नित्यादिः" (पा० सू० ६-१-१९७) इत्यादौ न तद्भेदः। उभयथापि प्रकृतेरादेरेवोदात्तत्वात्; अतस्तत्र परसप्तम्येव। एवञ्च 'गर्गाः इत्यादौ "न लुमता" [पा० सू० १-१-६३] इति निषेधादेव न दोष इति। पथिमथ्यर्थमपि वचनं नावश्यकम्। ननु*सूत्रद्वये रितःचङ इति षष्ठीनिर्देश एवास्तु, किं परिभाषयेति चेन्न। लाघवार्थत्वात्। ननु"चतुरः शसि"[पा० सू० ६-१-१६७] इत्यत्र फलभेदस्य स्पष्टत्वेन*पक्षद्वयेऽपि एतत्परिभाषाप्रवृत्तिर्दुर्वारा। तथा च शस एवोदात्तत्वं स्यादिति चेन्न। चतुरः शस इत्येव वक्तव्ये*मध्ये विजातीयसप्तम्यन्तपाठेन तदप्र-

---

(पा० सू० ६-१-११९) इत्यनेन सर्वनामस्थानान्तपथिमथिशब्दयोरादिरुदात्त इत्यर्थेनाद्युदात्तत्वापत्तिः सा वचनेन वार्यत इति भावः। ज्ञाप्यवचनमत्र लघु कल्प्यत इत्याशयेनाह—*यदि प्रागुक्तमिति। "संज्ञायामुपमानम्" (पा० सू० ६-१-२०४) इति ज्ञापकमित्यर्थः। नव्यसम्मतं विशेषमाह—*केचित्त्विति। *तत्प्रवृत्तिरिति। सौवर्यः सप्तम्यस्तदन्तसप्तम्य इत्यस्य प्रवृत्तिरित्यर्थः। ज्ञापकविषये कार्यिभेदमाह—*भीह्रीत्यत्रेति। *दरिद्राधातुविषय इति। अस्य ऽय्वक्त्वेनास्मादनीयर्प्रत्यये ण्यन्ताच्चङि वा विशेषः स्पष्ट एव। *सूत्रद्वये='उपोत्तमम्" (पा० सू० ६-१-२१८) इति "चङ्यन्यतरस्याम्" (पा० सू० ६-१-२१८) इति सूत्रद्वये। *पक्षद्वयेऽपीति। सामान्यापेक्षज्ञापकं विशेषापेक्षं वेति 'पक्षद्वयेऽपीत्यर्थः। *मध्य इति। "तिसृभ्यो जसः" (पा० सू० ६-१-१६६) "सावेकाचस्तृतीयादिर्विभक्तिः" (पा० सू० ६-१-१६८) इत्येतयोर्मध्य इत्यर्थः। एतयोः सूत्रयोः विभक्तिस्वरविधायकतया "चतुरः" (पा० सू० ६-१-१६७) इत्यस्यापि तथात्वे चतुरः शस इत्येव पूर्वसूत्रवद्वदेत्। *उपमानं संज्ञायामिति

वृत्तेरित्याहुः । इदं चिन्त्यम्*"उपमानं "सञ्ज्ञायाम्" इति सूत्रस्थभाष्य-विरोधात् । किंच "सर्वस्य सुपि" (पा०सू०६-१-१९१) इत्यत्रा*प्येवं सति तदन्तसप्तमी न स्यात् । *तथा च नलुमतेति निषेधापत्तौ*सर्वस्तोमासिद्धिः । "चतुरः शसि" (पा०सू०६-१-१६७) इत्यस्यापिलाघवार्थताया*वक्तुं शक्यत्वाच्च*"नलुमता" (पा०सू०१-१-६३) इति सूत्रस्थभाष्यन्तु "लुमति प्रतिषेधे एकपदस्वरस्योपसंख्यानं सर्वामन्त्रितसिज्लुक्स्वरवर्जं प्रयोजनं ञ्निनित्किल्लुक्स्वराः, पथिमथोः सर्वनामस्थानेलुकीति वार्तिकव्याख्यानपरम्, "उपमानम्" [पा०सू०६-२-८०] इति सूत्रस्थन्तु तत्प्रत्याख्यनपरमिति न तयोर्विरोधः। इमानि च*वार्तिकानि नलुमताङ्गस्येत्यत्राङ्गाधिकारः प्रतिनिर्दिश्यत इति पक्ष इव प्रत्यये परतः पूर्वस्य कार्यमात्रे प्रतिषेध इति पक्षेऽप्यावश्यकानि । सौत्रीणां सप्तमीनान्तदन्तसप्तमीत्वात् । "उत्तरपदत्वे चापदादिविधौ" [प०भा०] *इतिवत् *ञ्निनित्कित्स्वरस्यानाङ्गत्वात् प्रतिषेधाप्राप्तिरिति कैयटस्तू*पलक्षणम् । इह किंचिदङ्गाधिकारे लुमता लुप्ते प्रत्ययलक्षणं न भवति, *किञ्चिच्चान्यत्र न भवतीति सूत्रशेषस्थभाष्ये । किञ्चिचेतिशब्देनाहर्ददातीत्यत्रासुपीति *प्रतिषेधो ग्राह्य इति

---

सूत्रस्थेति । उपमानशब्दः संज्ञायामाद्युदात्तमित्यर्थकं यत्संज्ञायामुपमानमिति सूत्रन्तद्व्याख्यानभाष्ये इत्यर्थः । तत्र हि चञ्चेव चञ्चेत्यादौ "ञ्निति" (पा०सू० ६-१-१८७) इत्येव सिद्धे "संज्ञायामुपमानम्" (पा० सू० ६-१-२०४) इत्यस्य वैयर्थ्यमाशङ्क्यानुबन्धलक्षणे स्वरे प्रत्ययलक्षणञ्च भवतीत्यर्थे संज्ञायामित्यस्य ज्ञापकतोक्ता, सा "ञ्निति" (पा० सू० ६-१-१९७) इत्यस्य तदन्तसप्तमीत्वे "न लुमता तस्मिन्" इति न्यासेन निषेधाप्राप्त्या प्रत्ययलक्षणप्रवृत्त्योपपादयितुं शक्यते नान्यथेति तद्भाष्यविरोधादित्यर्थः । *एवं सतीति । तेन सर्वस्याद्युदात्तत्वमेव विधीयते तत्र तदन्तविधिसत्त्वासत्त्वाभ्याङ्कार्यभेदाभावेन तदन्तविधिर्न स्यादिति भावः । *इष्टापत्तावाह—*तथा चेति । *सर्वस्तोमासिद्धिरिति । सर्वस्तोमेत्यस्याद्युदात्तस्यासिद्धिरित्यर्थः । *वक्तुं शक्यत्वाच्चेति । एवञ्च सौत्रीणामित्यस्य सामान्यापेक्षतैव युक्तेति शेषः । 'गर्गाः' 'वत्साः' 'बिदाः' इत्यादौ दोषवारणपरभाष्यविरोधम्परिहरति-*न लुमतेतीति । *वार्त्तिकानि="लुमति प्रतिषेधे" इत्यादिवार्त्तिकानि । *इतिवदिति । तस्य यथा प्रयत्नेनान्यथासिद्धिप्रदर्शनेन प्रत्याख्यानेऽपि पुनस्तथा पाठेनावश्यकता सूचिता तद्वत् । कैयटाविरोधमप्युपपादयति—*ञ्नितीति । *उपलक्षणमिति । अनाङ्गत्वादित्येतत्सौत्रीणां सप्तमीनान्तदन्तबोधकत्वादित्यस्यापि बोधकमित्यर्थः । *किञ्चिच्चान्यत्रेति । ञित्नित्कित्स्वराः । *प्रतिषेधो ग्राह्य इति । तत्र भाष्ये हि—"अन्होरविधाने लुमता लुप्ते प्रत्ययलक्षणञ्च भवतीति वक्तव्यम् । अहर्ददातीत्यत्र रोऽसु-

न कश्चिद्भाष्यविरोधः । किञ्चिचेति प्रतीके ञ्नित्किस्वरा इति कैयट उपलक्षणतया व्याख्येय इति सुधियो विभावयन्तु ।

लिति ( पा० सू० ६-१-१९३ ) । *अत्राभ्यस्तानामिति न सम्बध्यते श्लो लित्करणात् । चिकीर्षक इति । अत्र *परत्वादल्लोपः । न च स्वरो नित्यः, शब्दान्तरस्य प्राप्त्या तस्यानित्यत्वात् । लोपोऽप्यनित्यः स्वरभिन्नस्य प्राप्तेः । *स्वरदीर्घयलोपेषु लोपाजादेशस्य स्थानिवत्त्वनिषेधादीकार उदात्तः ।

आदिर्णमुल्यन्यतरस्याम् [ पा० सू० ६-१-१९४ ] । अभ्यस्तानामिति । *णमुलीत्यस्य 'सौत्रर्य' इति न्यायेन तदन्तसप्तमीत्वे एतत्पञ्चम्या विपरिणम्यते—अभ्यस्तात्परो यो णमुल् तदन्ते आदिरुदात्त इत्यर्थः । तेन जागरंजागरं लोलूयंलोलूयमित्यादेः सिद्धिः । लोलूयिषंलोलूयिषमित्यादौ च *नातिप्रसङ्गः । लोलूयमित्यादावल्लोपस्य स्थानिवत्त्वन्तु न, स्वरे तन्निषेधात् । एवञ्च *विशेषाभावमभिप्रेत्य परसप्तम्येव मूले उक्ता । अभ्यस्तानामिति किं ? कण्डूयंकण्डूयम् । *एतेन "अमैव" ( पा० सू० २-२-२० ) इति सूत्रे 'उच्चैःकारम्'इत्युदाहरणेऽस्योपन्यासो हरदत्तकृतश्चिन्त्यः । अभ्यस्तानामित्यनुवृत्तिपरवृत्तिविरोधात् । यदि तु व्यवस्थितविभाषाश्रयणेनातिप्रसङ्गनिरासमङ्गीकृत्य तदनुवृत्तिरनावश्यकीति तदाशयस्तदा "शाच्छोः" ( पा० सू० ७-४-४१ ) इति सूत्रस्थेन व्यवस्थितविभाषापरिगणनपरेण भाष्येण विरोधः । लोलूयंलोलूयमिति । आभीक्ष्ण्ये द्वित्वम् । परो लोलूयशब्दो*ऽनुदात्तः; लोलू इत्यु*भयमप्युदात्तम् । न च

---

पीति प्रत्ययलक्षणेन प्रतिषेधो मा भूत्" इत्युक्तम् ।

लिति ( पा० सू० ६-१-१९३ ) । प्रकृतसूत्रे "भीह्री" ( पा० सू० ६-१-१९१ ) इति सूत्र इव "अभ्यस्तानाम्" ( पा० सू० ६-१-१८९ ) इत्यतोऽभ्यस्तानामिति सम्बध्यते अनन्तरमस्य पाठादत आह—*अत्रेति । *परत्वात्="लिति" ( पा० सू० ६-१-१९३ ) इति सूत्रात्परत्वात् । "अचः परस्मिन्" ( पा० सू० १-१-५७ ) इति स्थानिवद्भावस्य प्राप्तिमाशङ्क्याह—*स्वरदीर्घेति ।

आदिर्णमुल्यन्यतरस्याम् ( पा० सू० ६-१-१९० ) । अभ्यस्तानामिति मण्डूकगत्याऽत्र सम्बध्यते । तस्य णमुलन्तत्वासम्भवादाह—*णमुलीत्यस्येति । *नातिप्रसङ्ग इति । सना व्यवधानेन णमुलोऽभ्यस्तात्परत्वाभावात् । *विशेषाभावमिति । अस्य सूत्रस्याद्युदात्तविधायकतया तदन्तसप्तमीत्वे परसप्तमीत्वे वा फलतो न कश्चिद्विशेषः । *एतेन=अभ्यस्तात्पर इतिव्याख्यानेन । *अनुदा

तत्र कर्तव्येऽल्लोपस्य स्थानिवत्त्वम्, स्वरविधौ तन्निषेधात्। शेषनिघातः।

अचः कर्तृयकि ( पा० सू० ६-१-१९५ )। अत्रापि तदन्तसमीत्वे न फले विशेषः। उपदेशे ऽजन्तप्रकृतिककर्तृयगन्तस्यादिरुदात्त *इत्यर्थात्। लूयते केदार इति। *पक्षे यक्स्वरेण मध्योदात्तम्। उपदेशे किं? कीर्यते इत्यादावित्वे रपरत्वे चायं स्वरो यथास्यादिति *इदञ्च "तास्यनुदात्तेत्" ( पा० सू० ६-१-१८६ ) इति सूत्रात्समासैकदेशस्याप्युपदेशपदस्यानुवृत्त्या सप्तम्या विपरिणामेन च लब्धम्। न *चैवं जनेरन्तर्भावितण्यर्थात्कर्मकर्तरि जायते स्वयमेव इत्यत्र न स्यात् उपदेशेऽजन्तत्वाभावादिति वाच्यम्। *ये इति विषयसप्तमीमाश्रित्य प्रत्ययोत्पत्तेः प्रागेवाऽऽत्वप्रवृत्तेः, उपदेशे इत्यस्य च यगुपदेशे इत्यर्थ इति दिक्। लूयते इति आदिमध्यौ*पर्यायेणोदात्तौ।

चङ्यन्य ( पा० सू० ६-१-२१ ) "उपात्तमं रिति" ( पा० सू० ६-१-१८६ ) इत्यत उपोत्तमग्रहणमनुवर्त्तते। चङुदात्त इति। तिङ् तु अदुपदेशात्परत्वेन "तास्यनुदात्तेत्" ( पा० सू० ६-१-१८६ ) इत्य*नुदात्तः। उपोत्तमं किं? *मा हि दधत्। अत्र चङ एव स्वरः। इति धातुस्वराः।

---

त्त इति। "तस्य परमाम्रेडितम्" ( पा० सू० ८-१-२ ) "अनुदात्तञ्च" ( पा० सू० ८-१-३ ) इति सर्वानुदात्तः। *उभयमप्युदात्तमिति। "आदिर्णमुल्"(पा०सू० ६-१-१९४) इत्यस्य वैकल्पिकतया यदाऽनेनाद्युदात्तता तदा लोशब्द उदात्तः। एतदभावे तु "लिति"(पा० सू० ६-१-१९३ ) इत्यनेन लूशब्द उदात्त इत्यर्थः।

अचः कर्तृयकि ( पा० सू० ६-१-१९५ )। *इत्यर्थादिति। अतो मूलकृता कर्तृयकि पर इत्येव व्याख्यातमिति शेषः। *पक्षे="अचः कर्तृयकि" (पा० सू० ६-१-१९५ ) इत्येतत्सूत्रप्रवृत्त्यभावपक्षे। *इदञ्च=उपदेशेऽजन्तानामिति व्याख्यानञ्च। *एवम्=उपदेशेऽजन्तानामिति व्याख्याने। *ये इति। "ये विभाषा" ( पा० सू० ६-४-४३ ) इति सूत्रे ये इति। *पर्यायेणेति। अस्य वैकल्पिकत्वादित्यादिः।

चङ्यन्यतरस्याम् ( पा०सू० ६-१-२१८ )। एतद्व्याख्यानभूते चङन्ते धाताविति वाक्ये धातावित्यपाठः। चङन्तस्याधातुत्वात्। अन्तशब्दस्य परसमीपपरत्वेन चङ्परे धातावित्यर्थ इति तु न, धातावित्यस्याप्रकृतत्वात्। आक्षेपेण लाभस्तु न। आक्षेपे अनुपपत्तेः सहकारितया तदभावात् फलाभावाच्च, सौवर्यः सप्तम्यस्तदन्तसप्तम्य इत्येतद्विरोधाच्च। *अनुदात्त इति। एवञ्च मा हि चीकरतामित्यत्र चङ एवोदात्तत्वे प्राप्ते धात्वकारस्योदात्तत्वार्थमिदं सूत्रमिति शेषः। *मा हि दधदिति। "विभाषा धेट्श्व्योः" (पा० सू० ३-१-४९)

## *अथ प्रातिपदिकस्वराः ।

*ते च प्रायेण कृत्तद्धितप्रत्ययबलेनैव ज्ञेयाः, उणादिषु उणादिप्रत्ययैः, अव्युत्पत्तिपक्षे फिट्सूत्रैः, क्वचिद्विशिष्यविधानादित्याशूह्यम् । *अत एव पुत्रीयतेः क्विपि पुत्रीरित्यादौ सर्वानुदात्तत्वमेव । *अत एव "कर्मण्यण्" ( पा० सू० ३-२-१ ) इति सूत्रे मांसशब्दस्य 'नब्विषयस्य- (फि० पा० २ सू० ३)इति फिट्स्वरमाशङ्क्य "मनेर्दीर्घश्च" (उ. पा. ३ सू. ३५१) इत्यौणादिकसप्रत्ययान्तत्वादन्तोदात्तता कैयटेनोक्ता । मांसमेकः पिशन्तीत्यादि लक्ष्यमपि *तथैव । आज्यशब्दे तु आङ्पूर्वादञ्जेः क्यबिति पक्षे *आद्युदात्तत्वं स्पष्टमेव । ण्यत्पक्षे तु "नब्विषयस्य" [ फि. पा. २ सू. २६ ] इत्याद्युदात्तत्वं बोध्यम् ।

कर्षात्वतः [ पा० सू० ६-१-१५९ ] । कर्षतेराकारवतश्च परो यो घञ् तदन्तस्येत्यर्थः । "ञ्नित्यादिः" [ पा० सू० ६-१-१९७ ] इत्यस्यापवादोऽयम् । वतिकम् ? आदन्तादित्यर्थे युक आदन्तभक्तत्वाद्दाय इत्यत्रैव स्यात् न तु पाक इत्यादौ । *घञाक्षिप्तधातुविशेषणत्वात्तदन्तविधिः । *"स्वरविधौ व्यञ्जनमविद्यमानवत्" ( प० भा० ) इति तु नास्ति स्वरोद्देश्यकविधेरभावात् । युको *निर्दिश्यमानपरिभाषया आकारावयवत्वे

---

इति चङ् । अत्र त्रिप्रभृतीनामभावादुपोत्तमश्चङन्तस्य नास्तीति चङ एवोदात्त्वम्भवति । परसप्तम्यान्तु धातोः स्यात् । इति धातुस्वराः ॥

## अथ प्रातिपदिकस्वराः ।

*अथ प्रातिपदिकस्वरा इति । निरूप्यन्त इति शेषः । तेषु विशेषमाह—*ते चेति । *अत एव=प्रातिपदिकादिसंज्ञाप्रयोजकप्रत्ययबलेन स्वरप्रवृत्तिकल्पनादेव । *सर्वानुदात्तत्वमेव=क्यजन्ते "चितः"(पा०सू० ६-१-१६३) इत्यनेन क्यजकारस्योदात्तत्वे तदेकवाक्यतापन्नशेषनिघातेन 'पु''त्री'इत्यनयोरनुदात्तत्वे सत्यवशिष्टोऽकार एवोदात्तः स तु लुप्त इति सर्वानुदात्तत्वमेव । *अत एव= उणादिषूणादिप्रत्ययैः स्वरकल्पनादेव । *तथैव=अन्तोदात्तमेव । *आद्युदात्तत्वम्=अञ्जेरकारस्योदात्तत्वात्तेन सहाङोदात्तेन सहैकादेशस्याऽऽन्तरतम्यादुदात्तत्वादाद्युदात्तत्वम् ।

कर्षात्वतः ( पा० सू० ६-१-१५९ ) । ननु वद्ग्रहणाभावे तदन्तविधिः कथं विशेष्याभावादत आह—*घञाक्षिप्तेति । ननु पाक इत्यत्र ककारस्याऽविद्यमानवद्भावेनादन्तात्परत्वमस्त्येवेत्यत आह—*स्वरविधाविति । *निर्दिश्यमानपरिभाषयेति । इदम् 'अनागमकानां सागमका आदेशाः' इति पक्षाभिप्रायेण

ऽपि आकारान्ताद्धातोर्विहित *इत्यर्थः स्यादिति बोध्यम् । *यद्यपि निर्दिश्यमानपरिभाषया घञ एवोदात्तत्वं, तथाप्यन्तग्रहणं स्वरविधौ सङ्घातः कार्यीति ज्ञापितत्वादादेरन्तस्य च पर्यायेण मा भूदित्यर्थम् । *एवञ्च स्वरविधौ निर्दिश्यमानपरिभाषाया अप्यप्रवृत्तिरित्याहुः ।

उञ्छादीनाञ्च [ पा० सू० ६-१-१६० ] । उञ्छम्लेच्छजञ्जल्पा घञन्ताः । जपव्यधावबन्तौ । वध इति पाठस्तु चिन्त्य उदात्तनिवृत्तिस्वरेण *सिद्धेः । *गरो विषे *ऽबन्तोऽन्तोदात्तः, *अन्यत्रा*द्युदात्तः । वेदवेगवेष्टबन्धाः *करणे घञन्ताः; भावे *आद्युदात्ता एव । स्तुयुद्रुवश्छन्दसि । समासार्थमिदं, परिष्टुत सुयुत, परिद्रुत् । वर्त्तनिःस्तोत्रे । *स्तोत्रे सामनि वर्तमानो वर्त्तनिशब्द उञ्छादिः, *अन्यत्र मध्योदात्तः । श्वभ्रे दरः, *अन्यत्राबन्तत्वादाद्युदात्तः । साम्बतापौ भावगर्हायाम्, अन्यत्राद्युदात्तौ । मन्थभोगदेहा घञन्ताः । उञ्छादिराकृतिगण इति बहवः । घञन्त इति णिजभावे, णिचि तु एरचैव सिद्धेः । एरजण्यन्तानामिति तु नास्ति ।

---

अन्यथा तु "यदागमाः" इति परिभाषयेति बोध्यम् । *इत्यर्थः स्यादिति । सामर्थ्यादिति शेषः । प्रकृतसूत्रस्थान्तशब्दस्य सार्थक्यमाह—*यद्यपीत्यादिना । *एवञ्च=उक्तरीत्यान्तपदसार्थक्ये च ।

*सिद्धेरिति । अत्र हि "हनश्च वधः" ( पा० सू० ३-३-७६ ) इति सूत्रेणादन्तवधादेशस्याऽप्प्रत्ययस्य च विधानेन "अनुदात्तस्य च यत्रोदात्तलोपः" ( पा० सू० ६-१-१६१ ) इत्यनेन सिद्धेरित्यर्थः *गरो विष इति ।

गरो व्याधावुपविषे विशेषे करणे गरम् ।

*अबन्तोऽन्तोदात्त इति । विषवाचकस्योञ्छादिगणे पाठादिति शेषः । *अन्यत्र=उपविषातिरिक्ते । *आद्युदात्त इति । "नब्विषयस्य" ( फि० सू० २-२६) इत्यनेनाद्युदात्त इत्यर्थः । *करणे घञन्ता इति । उञ्छादिगणे पठ्यन्त इति शेषः । *आद्युदात्ता एवेति । तेषामपाठादिति शेषः । *स्तोत्र इत्यस्य व्याख्या सामनीति । *अन्यत्रेति ।

वर्त्तनी चक्र्कुपिण्डे स्याद्वर्त्तनी मलिने पथि ॥

इति कोशात् । *मध्योदात्त इति । अनिप्रत्ययान्ततया मध्योदात्त इत्यर्थः । *अन्यत्र=श्वभ्रातिरिक्ते ।

"दरश्चीरे, दरो मेघे, दरः साहसगर्तयोः ।
कन्दरे तु दरीमाहुरीषदर्थे दरोऽव्ययम्" ॥

चतुरः शसि( पा०|सू० ६-१-१६७ ) । अत्र "सौवर्यः सम्प्रयः" इति न प्रवर्त्तते । अन्यथा 'चतुरः *शस' इत्येव वदेत् । नेहेति । *तकाराकारस्य नेत्यर्थः । 'स्वरे न'इति निषेधस्तु लोपरूपाजादेशस्यैव; स्वविधौ स्थानिवत्त्वाभावाच्चस्यापि न । तस्मादाद्युदात्ततैवेति भावः । केचित्तु चतस्रादेशे *आद्युदात्तनिपातनसामर्थ्यात्"चतुरः शसि" ( पा० सू० ६-१-१६७ ) इति न प्रवर्त्तते । न च चतसृणामित्यत्र "षट्त्रि" [ पा० सू० ६-१-१७९ ] इति विभक्तिस्वरस्यापि बाधापत्तिः; हलादिग्रहणसामर्थ्येन (१)तदबाधात् । तथा हि षट्त्रिचतुरां बहुवचनविषयत्वाद् द्विवचनैकवचने न स्तः । उपसमस्ते सम्भवेऽपि विहितविशेषणान्न दोषः । *तत्र षड्भ्यो जश्शसोर्लुगेव, अन्या हलादयः । त्रिशब्दे जसि नेदम्, सर्वनामस्थान इत्यधिकारात्, शसि "एकादेश उदात्तेन" (पा० सू० ८-२-५) इत्यनेन सिद्धम् , अन्या हलादयः । तिसर्यपि "तिसृभ्यो जसः" [ पा० सू० ६-१-१६६ ) इत्यनेन भाव्यम्, तिस्रः पश्येत्यत्र "उदात्तयणः" ( पा० सू० ६-१-७४ ) इत्यनेन भाव्यम् । चतुःशब्दे जसि असर्वनामस्थान इत्यनुवृत्त्या न दोषः । तस्माच्चतस्रः पश्येत्येव व्यावर्त्यम् । यदि निपातस्वरोऽस्य विभक्तिस्वरस्य बाधकः स्यात्, हलादिग्रहणमनर्थकं स्यात् । न च चतुरः पश्येति तद्व्यावर्त्यम् । चतुरः शसीत्यारम्भसामर्थ्येन तस्य बाधात् । न च गौणे चरितार्थम् । *वार्तिकप्रामाण्येन तत्राप्रवृत्ते-

---

चतुरः शसि ( पा० सू० ६-१-१६७ ) । *शस इत्येवेति । "तिसृभ्यो जसः"(पा०सू० ६-१-१६६) इत्यस्य षष्ठ्यन्तस्योपक्रमादिहापि षष्ठ्यैव निर्देश उचित इति भावः । *तकाराकारस्येति । 'स्वरविधौ व्यञ्जनमविद्यमानवत्'इति सकाररेफयोरविद्यमानवद्भावात्तकाराकारस्य प्राप्तिः ।*आद्युदात्तनिपातनसामर्थ्यादिति । एकश्रुत्या तिसृचतस्रोरिति द्वन्द्वसमाससत्त्वेनान्तोदात्ते वा उच्चारयितव्ये आद्युदात्तस्य चतसृशब्दस्योच्चारणप्रयोगे तादृशस्य श्रवणार्थमिति तत्सामर्थ्यादित्यर्थः । *तत्र=षडादिषु । *वार्त्तिकप्रामाण्येनेति । प्रकृतसूत्रभाष्ये "शसि क्रियाम्प्रतिषेधः, शसि क्रियाम्प्रतिषेधो वक्तव्यः" इत्युपक्रमे चतस्रः पश्येत्यत्र प्रतिषेधस्य प्रयोजनमुक्त्वा "आद्युदात्तनिपातनं करिष्यते, स निपातनस्वरश्चतुरः शसीत्यस्य बाधको भविष्यति" इत्यनेन पूर्ववार्त्तिकङ्खण्डितं, ततो निपातनस्वरस्य सतिशिष्टत्वात् 'चतसृणाम्' इत्यत्र यो विभक्तिस्वरः "षट्त्रिचतुर्भ्यो हलादिः" ( पा० सू० ६-१-१७९ ) इति, तस्यापि बाधः स्यादत 'उपदेशिवद्भावो

---

(१) तस्यैतत्स्वराबाधादित्यर्थः ।

रित्याहुः, *तत्तु "तिसृभ्यो जसः"[पा०सू० ६-१-१६६] इति सूत्रस्थेन "उपसमस्तार्थमेके" इति भाष्येण जस्ग्रहणवत् हलादिग्रहणस्यापि तदर्थकत्वसूचनात् वार्तिकव्याख्यानभाष्ये स्थितमपि भगवता दूषितमेव। *तस्मादिति परिभाषणेन विहितविशेषणासम्भव इति तदाशयः। एवं हलादिग्रहणसार्थक्यं मनसि निधाय ज्ञापकासम्भवं मत्वा नैव वा पुनश्चतस्रः पश्येत्यत्र स्वरः प्राप्नोतीत्यादिग्रन्थेन मूलोक्तयुक्त्यैव साधितम्। *तस्माद्

---

'वक्तव्यः' इति परेण शङ्किते "षट्त्रि" (पा० सू० १-१-१७९) इति सूत्रे हलादिग्रहणस्य चतसृशब्दादन्यत्प्रयोजनन्नास्तीत्यतो विभक्तिस्वरस्याबाधस्य सिद्धिः, इत्युक्तम्। षट्संज्ञकानां बहुवचनान्ततया जश्शसोरस्मात्परयोर्लुग्विधानेन च षट्संज्ञकविषये न प्रयोजनम्। तिसृशब्दोऽपि न प्रयोजयति द्विवचनैकवचने न स्तः, जस्यसर्वनामस्थानमिति प्रतिषेधात् शसि तूदात्तयणो हल्पूर्वादित्यनेन सिद्धम्, अन्याः सर्वा हलादिविभक्तयः। चतुःशब्दश्चापि न प्रयोजयति असर्वनामस्थानमिति वचनाज्जसि न भवितव्यं शसि तु चतुरः शसीत्यनेन भवितव्यमिति, चतसृशब्दादेकस्माज्जसि परे विभक्तिस्वरस्याप्रवृत्तये हलादिग्रहणम्' इत्यभिहितम्। यदि गौणे हलादिग्रहणस्य चारितार्थ्यं स्यात्तदा विभक्तिस्वरभावश्च हलादिग्रहणादिति वार्तिकविरोधः स्पष्ट एवेति। अत्राहुरित्यनेन सूचितामरुचिं स्वयमेवाह—*तत्त्विति। "तिसृभ्यो जसः" (पा० सू० ६-१-१६६) इति सूत्रे भाष्ये जस इत्यस्य 'तिसृका' इति प्रयोजनमादावभिहितं ततो नित्स्वरेणात्र बाधो भविष्यतीत्याशयेन "जस्ग्रहणमनर्थकमन्यत्राभावात्" इति वार्तिककृतोक्तम्। 'शसि उदात्तयणो हल्पूर्वादित्यनेन सिद्धमन्या विभक्तयो हलादयस्तासु षट्त्रिचतुर्भ्यो हलादिर्झल्युपोत्तममित्याभ्यां भवितव्यम्' इति तदाशयः। अनेन प्रकारेण जस्ग्रहणाभावे वार्तिककृता प्रतिपादिते "उपसमस्तार्थमेके जसो ग्रहणमिच्छन्ति—अतितिस्रौ, अतितिस्रः" इति भाष्यकारेणोक्तम्। अत्र द्विवचने एव जस्ग्रहणाभावेऽतिप्रसङ्गापादने तात्पर्यम्। जसि त्विष्यत एव, तिसृभ्यो जस इति प्रसङ्गोच्चारितमेतत्। एवम्प्रकारेण वार्तिकं यथा खण्डितस्तथा "चतुरः शसि" (पा० सू० ६-१-१६७) इति सूत्रेऽपि षट्त्रीति सूत्रस्थहलादिग्रहणस्योक्तरीत्या विभक्तिस्वराबाधकत्वे ज्ञापकता वार्तिककृताऽभिहिता। ततोऽग्रे भाष्यकृता चतस्रः पश्येत्यत्र 'नैव वा पुनः शसि स्वरः प्राप्नोति। यणादेशो शसः पूर्वं उदात्तभावी नास्तीति कृत्वा' इत्यनेन वार्तिककारमतङ्खण्डितम्। ऋकारस्य यणादेशे तस्य स्थानिवद्भावेन व्यवधानान्न तकाराकारस्य प्राप्तिः, स्वविधौ स्थानिवत्त्वाभावेन न ऋकारस्यैव प्राप्तिरित्याशयः। स्वरविधिम्प्रतीति स्थानिवत्त्वनिषेधस्तु नास्ति। स्वरदीर्घयलोपेषु लोपाजादेशस्यैव स्थानिवत्त्वनिषेध इति नियमात्। वार्तिकदूषणपरभाष्याभिप्रायमाह—*तस्मादितीति। उक्तभाष्यप्रघट्टकरीत्योपसंहरति—*तस्माद्गौण इति।

गणे षट्त्रींत्यादिश्चतुरः शसीत्यादेश्च मन्प्रवृत्तिरस्त्येव सत्याभिधाने इति भाष्यसम्मतमिति ध्येयम् ।

झल्युपोत्तमम् (पा० सू० ६-१-१८०) । तदन्ते पदे इति । सौवरीणां सप्तमीनां तदन्तसप्तमीत्वादिति भावः । षट्त्रीत्यस्या*पवादः । *आ षड्भिरिति । *आ इति भिन्नं पदम् । ।

विभाषा भाषायाम् । ( पा० सू० ६-१-१८१ ) । पक्षे षट्त्रीत्यन्तोदात्तत्वम् ।

सर्वस्य सुपि [ पा० सू० ६-१-१९१ ] । *सर्वशब्दश्च गणेऽन्तोदात्तो निपातितः । उञ्छादिपाठाद्वाऽन्तोदात्तः । एवञ्च 'सुपि किं ? सर्वतरः' इति वृत्त्युक्तं चिन्त्यम् । प्रत्ययलक्षणेन तत्रापि सुबन्तत्वात् । *अत्यन्तस्वार्थिकस्तरबादिस्तु न भाष्यारूढः; अत्र सुपीत्युक्तेः । तत्फलन्तु सर्वस्य विकारः सार्व इत्यत्रानुदात्तादिप्रकृतिकसुबन्तलक्षणाञ्सिद्धिः । श्रवणमाद्युदात्तस्यैव । प्रत्ययलक्षणेनापि सर्वस्वरस्येष्यमाणत्वात् । सप्तमीनिर्देशस्तु लाघवार्थः । सौवरीणां सप्तमीनां तदन्तसप्तमीत्वात् । सर्वस्वरोऽनकच्कस्येति वक्तव्यम्, सर्वके । *अत्रान्तोदात्त एव ।

ञ्नित्यादि(पा०सू०६-१-१९७) । 'सौवर्यः' इत्यस्य सामान्य-

---

झल्युपोत्तमम् ( पा० सू० ६-१-१८० ) । *अपवाद इति । येननाप्राप्त्यायेनेत्यादिः । *आषड्भिरिति । समुदायेऽप्युपोत्तमसम्भवोऽस्त्येवेति कथमुपोत्तमग्रहणस्य प्रत्युदाहरणमिति शङ्कावारणायाह—*आ इति भिन्नस्पदमिति ।

सर्वस्य सुपि ( पा० सू० ६-१-१९१ ) । सर्वशब्दस्य "स्वाङ्गशिटामदन्तानाम्" (फि० पा० २ सू० २९) इत्याद्युदात्तत्वं सिद्धमेवेत्याशङ्कायामाह—*सर्वशब्दश्चेति । एवञ्च सुपीत्यस्य तदन्तसप्तमीत्वेन प्रत्ययलक्षणेनाद्युदात्तस्य श्रवणमस्त्येव । ननु वृत्त्युक्तप्रयोगेऽत्यन्तस्वार्थिकस्य प्रयोगस्तस्य तु सुबुत्पत्तेः प्रागेवोत्पत्तिरत आह—*अत्यन्त इत्यादि । *सुपीत्युक्तेः फलमिति । यदि सुपीत्युच्यते तदा सुबन्तस्याद्युदात्तत्वमप्रकृतेस्त्वनुदात्तादित्वमिति व्यवस्था सिध्यतीति भावः । *अन्तोदात्त एवेति । "चितः सप्रकृतेर्बह्वकजर्थम्" ( का० वा० ) इति वचनात् ।

ञ्नित्यादिर्नित्यम् ( पा० सू० ६-१-१९७ ) । अत्रादिपदमन्तपदासम्बन्धबोधनाय । तद्धि "थलि च सेटी" ( पा० सू० ६-१-१९६ ) इतिपूर्वसूत्रे स्वान्वय्यन्वय्यन्तपदार्थकमभूत् । नन्वेवं सति तत्सम्बद्धान्यतरस्यामित्यस्य निवृत्तिः सिद्धैवेति नित्यमिति व्यर्थमिति चेन्न । स्पष्टार्थत्वात् । सन्नन्तस्य विधीयमाना धातुसंज्ञा सनो नित्त्वञ्चेत्युभयमपि परस्परपरिहारेणाचरितार्थमित्याशये-

सः प्रवृत्तिमाभिप्रेत्याह—ञिदन्तस्येति । ननु *जुगुप्सेत्यादौ सञ्ज्ञायाः परत्वान्नित्स्वरे कृते सन्नन्तस्य धातुत्वे *सतिशिष्टत्वाद्धातुस्वरः प्राप्नोतीति चेन्न । सनो नित्त्वसामर्थ्येन सतिशिष्टस्यापि बाधेनाद्युदात्तत्वसिद्धेः । न च "सन्यङोः" ( पा० सू० ६-१-९ ) इत्यादौ विशेषणार्थः सः, अन्यथा वत्स इत्यत्रापि स्यादिति वाच्यम् । धातोरित्यनुवर्त्य सशब्दान्तधातोर्द्वित्वविधानेनादोषात् ।

पथिमथोः सर्वे (पा०सू० ६-१-१९९)। पथिमथिशब्दाव*न्तोदात्तौ । *अत्र (१)सौवरीणान्तदन्तसप्तमीपरत्वे ऽपि लुमता लुप्ते प्रत्ययलक्षणं नेष्यते इति भाष्यम्, तेन पथिप्रियः पूर्वपदप्रकृतिस्वरेणान्तोदात्त एव । सुपन्था इत्यादावपि प्रत्ययलक्षणं नास्त्येव । समासाद्या विभक्तिः सा तु न पथिमथोर्विहितेति न तत्राप्य*स्य प्रवृत्तिः ।

क्षयो निवासे( पा० सू० ६-१-२०१ )। क्षियन्ति निवसन्त्यस्मिन्नित्यधिकरणे "पुंसि सञ्ज्ञायाम्" (पा० सू० ३-३-११८) इति*घः । निवासे किम् ? क्षयश्चोराणामित्यादावेरजन्तत्वादन्तोदात्तत्वमेव ।

जयोऽश्व इति । *तेनैव करणे घः । *अन्यत्रैरचयन्तोदात्तत्वम् ।

वृषादीनाञ्च ( पा० सू० ६-१-२०३ )। वृषु सेचने, इगुपधलक्षणः कः । आकृतिगण इति । फिट्सूत्रेषु "ग्रामादीनाञ्च" [ फि० पा० २ सू० ३८ ] इति सूत्रितं, सोऽप्याकृतिगणः । एवञ्चा*विहि-

---

नाशङ्कते—*जुगुप्सेत्यादावित्यादिना । नित्स्वरस्य चारितार्थ्यन्तु द्वितीयस्तृतीयो भाग इत्यादौ । *सति शिष्टस्यापीति । धातुस्वरस्येति शेषः ।

पथिमथोः ( पा० सू० ६-१-१९९ )। *अन्तोदात्ताविति । फिट्स्वरेणैवान्तोदात्तावित्यर्थः । अत एवाह—*अत्रेति । *अस्य="पथिमथोः सर्वनामस्थाने" ( पा० सू० ६-१-१९९ ) इति सूत्रस्य । प्रकृतसूत्रात् "तत्पुरुषे तुल्यार्थ" ( पा० सू० ६-२-२ ) इत्यस्य परत्वात्तेन बाधाच्चेत्यपि बोध्यम् ।

क्षयो निवासे ( पा० सू० ६-१-२०१ )। निवासे वाच्ये सति क्षयशब्द आद्युदात्तः स्यात् । *इति घ इति । निवास इत्यत्राप्येवम् ।

*तेनैव="पुंसि संज्ञायाम्" (पा० सू० ३-३-११८) इत्यनेनैव । *अन्यत्र=जयातिरिक्ते ।

वृषादीनाञ्च ( पा० सू० ६-१-२०३ )। "ञ्नित्यादिः" ( पा० सू० ६-१-१९७ ) इत्यत आदिरित्यनुवर्त्तते । *अविहिताद्युदात्तस्येति । अविहित आ-

---

(१) 'सौवरीणां सप्तमीनां तदन्तपरत्वेऽपि' इत्यादर्शपुस्तके पाठः ।

ताद्युदात्तस्य वृषादित्वं ग्रामादित्वं वा बोद्ध्यम्। अन्तोदात्तस्य घृतादित्वं वा बोद्ध्यम्। एवञ्च द्वाभ्यामेव सूत्राभ्यां सर्वेष्टसिद्धौ इतरसूत्रद्वयप्रणयनं कर्तृभेदान्न दोषायेति दिक्।

एतदेवेति। एतच्चोपपादितम्॥

निष्ठा च द्व्यजनात् (पा० सू० ६-१-२०५)। आकारभिन्न आदित्यर्थः। निष्ठेत्यादि *षष्ठ्यर्थे प्रथमा। अद्याक्त इत्यादावेकादेशस्य बहिरङ्गासिद्धत्वादनादिति प्रतिषेधो न।

आशितः क(पा० सू० ६-१-२०७)। *सकर्मकादप्यशेः कर्त्तरि क्त उपधादीर्घश्चात्रैव निपात्यते, *आङ्पूर्वत्वे क्तमात्रम्। आङ्पूर्वादविवक्षितकर्मत्वेनाकर्मकत्वात्कर्तरि क्त इति वृत्तिः। विवक्षाविवक्षयोश्च प्रयोगाधीनत्वान्नानिष्टापादनमिति तदाशयः। आङ्पूर्वत्वे "थाथघञ्"(पा० सू० ६-२-१४४) *इत्यस्याप्यपवादोऽयम्। अन्ये तु ण्यन्तात्कर्मण्येवायं क्त इति कर्तेत्यनेन चाणौ कर्ता णौ कर्मीभूत एव विवक्षित इत्याहुः। तदुभयमपि *भाष्यासम्मतम्।

रिक्ते विभाषा(पा० सू० ६-१-२०८)। *पूर्वोत्तरसाहचर्यात् रिक्तशब्दे *विद्यमान आदिरित्यर्थः, न तु तत्र परे इत्यर्थः। रिक्त इति। *पक्षे प्रत्ययस्वरेणान्तोदात्तः।

---

द्युदात्तो यस्य तस्येत्यर्थः।

*षष्ठ्यर्थ इति। आदिपदार्थापेक्षया या षष्ठी तदर्थे इत्यर्थः।

आशितः कर्त्ता (पा०सू०६-१-२०७)। आशितशब्दस्य कर्तृवाचकत्वमुपपादयति—*सकर्मकेति। भाष्यानुसारिमतान्तरमाह—*आङ्पूर्वत्व इति। *इत्यस्याप्यपेति। अपिना प्रत्ययस्वरपरिग्रहः। *भाष्यासम्मतमिति। तत्र हि—"किन्निपात्यते? आशिते कर्त्तरि निपातनमुपधादीर्घत्वमाद्युदात्तत्वञ्च। आशित इति क्तः कर्त्तरि निपात्यते। आशितवान्, आशितः। आद्युदात्तत्वमनिपात्यमधिकारात्सिद्धम्। उपधादीर्घत्वमनिपात्यम्। आङ्पूर्वस्य प्रयोगे" इति प्रतिपादितम्।

रिक्ते विभाषा (पा०सू०६-१-२०८)। रिक्तशब्दावयवस्यैवायं स्वरो विहितो न तु तस्मिन् परेऽन्यस्येत्याशयेनाह—*पूर्वोत्तरेति। "आशितः कर्त्ता" (पा०सू०६-१-२०७) जुष्टार्पिते" [पा०सू०६-१-२०९) इत्युभयत्रोपात्तशब्दावयवस्यैव कार्यित्वेनाश्रयणादित्यर्थः। सप्तम्युपपत्तये आह—*विद्यमान इति। षष्ठ्यर्थे सप्तमीत्यपि वक्तुं शक्यम्। *पक्ष इति। छन्दसीति शेषः।

जुष्टार्पिते(पा० सू० ६-१-२०९)। वा स्त इति। पक्षे भाषायाश्च प्रत्ययस्वरेणान्तोदात्तौ। 'जुषी प्रीति' इत्यतः "श्वीदितो निष्ठायाम्"( पा० सू० ७-२-१४ ) इतीट्प्रतिषेधः। अर्तेर्णिच् "अर्तिह्री" (पा० सू० ७-३-३६) इति पुक्।

नित्यं मन्त्रे (पा० सू० ६-१-२१०)। न केवलं गतार्थतामात्रं किन्त्वारभ्यमाणे सूत्रे दोषोऽप्यस्तीत्याह-अर्पिताः षष्टिरित्यादिना। *सूत्रविरोधात्स पाठः प्रामादिकः। इदमेव ध्वनयितुं सूत्रमित्यन्ये।

युष्मदस्मदो(पा०सू० ६-१-२११)। "ङयि च"(पा०सू० ६-१-२१२) इति *योगविभागो यथासङ्ख्यनिवृत्त्यर्थः। "एकादेश उदात्तेन"(पा० सू० ८-२-५) इति *विभक्तेरुदात्ते प्राप्ते वचनम्।

यतोऽना(पा० सू० ६-१-२१३)। "निष्ठा च द्व्यज्"[पा०सू०६ १-२०५]इत्यतो द्व्यज्ग्रहणमनुवर्त्तते। *नौभिन्नाद्विहितो यो यत् तदन्तस्येत्यर्थः। अनाव इति प्रतिषेधो ज्ञापयति—*हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानदिति। *हलादावादेरचोऽसम्भवात् *तद्विषयकशास्त्रसामर्थ्येन हलोऽपि स्थाने उदात्तादिगुणकः कश्चित् स्यादित्यर्थाभिप्रायेण हलः स्वरप्राप्तिः। *स्पष्टं चेदं भाष्ये। तित्स्वरितापवादोऽयम्।

---

नित्यं मन्त्रे ( पा०सू०६-१-२१० )। पूर्वसूत्रस्य ब्राह्मणे विकल्पविधायकता द्रष्टव्या *सूत्रविरोधात्=नित्यम्मन्त्र इति सूत्रविरोधात्।

यथासङ्ख्यम्प्रकृतिप्रत्यययोः प्राप्तं वारयति—*योगविभाग इति। *विभक्तेरुदात्ते प्राप्ते इति। युष्मच्छब्दस्य मदिक्प्रत्ययान्ततया तदादेशस्यान्तरतम्यादन्तोदात्तस्य तवशब्दस्य "एकादेश उदात्तेन" ( पा०सू०८-२-५ ) इत्यनेनोदात्ते प्राप्ते इत्यर्थः।

पर्युदासैकवाक्यतयाऽर्थमाह-*नौभिन्नाद्विहित इति। *हल्स्वरप्राप्ताविति। हलः स्वरप्राप्तावित्यर्थः। हलः स्वरप्राप्तिमुपपादयति—*हलादावादेरिति। *तद्विषयकेति। हलादिविषयकेत्यर्थः। प्रतिलक्ष्यं लक्षणभेदस्य सम्प्रदायसिद्धत्वात्। *स्पष्टश्चेदम्भाष्ये इति। "समासस्य" (पा०सू० ६-१-२२३) इतिसूत्रभाष्ये इदं स्पष्टमित्यर्थः। तत्र हि—"आचार्यप्रवृत्तिर्ज्ञापयति—'भवत्येषा परिभाषेति यदयं "यतोऽनावः" ( पा०सू०६-१-२१३ ) इति प्रतिषेधं शास्ति" इत्युक्तम्। न चैवं नाव्यमित्यत्राप्यादेर्नकारस्योदात्तगुणकः स्थानकृतान्तरतम्यवान् लृकारः स्यात्तद्व्यावर्त्तकतयाऽनाव इतिप्रतिषेधस्य चारितार्थ्येन कथमस्य ज्ञापकत्वमिति वाच्यम्। द्व्यच्कत्वमस्य सूत्रस्य प्रवृत्तौ लिङ्गम्। यदि नकारस्य स्थानेऽच् स्यात्तदा निमित्तस्य द्व्यच्कत्वस्य विनाशः स्यादित्युपजीव्यविरोधा-

ईडवन्द(पा० सू० ६-१-२१४)। यतो *द्व्यनुबन्धकत्वात्पूर्वेणासिद्धिरिति भावः। अयमपि तित्स्वरापवादः। अत्र वृङ एव ग्रहणमिति "एतिस्तुशास्"(पा० सू० ३-१-१०९)इति सूत्रे निरूपितम्।

विभाषा(पा० सू० ६-१-२१५)। वेणुशब्दे नित्त्वादाद्युदात्तः प्राप्तः। *स्थोणुरित्यनुवर्त्तमाने "अजिवृरीभ्यो निच्च"(उ० पा० ३ सू० ३२५) इति व्युत्पादितत्वात्। इन्धाने यदि चानश् तदाऽन्तोदात्तत्वं प्राप्तं, यदि शानच् तदाऽप्यन्तोदात्तत्वमेव प्राप्तम्। *यत्तु श्नमोऽकारस्योदात्तस्य लोपात् लसार्वधातुकानुदात्तत्वे उदात्तनिवृत्तिस्वरेण शानजन्तो मध्योदात्त इति, तन्न। विदीन्धिखिदिभ्यो लसार्वधातुकानुदात्तत्व*प्रतिषेधात्। केचित्त्वस्य वचनस्य तिङन्ते एव प्रवृत्तिः। भाष्ये प्रथमतो लिङ्गीत्युक्त्वा ऽग्रे विशेषणेत्युक्तेर्लिङ्गभिन्ने लिङ्गदर्शेऽकृदादेशिन्येव प्रवृत्तिप्रतीतेरित्याहुः। यदा वेणुरिव वेणुरिति कनो "लुम्मनुष्ये"(पा० सू० ५-३-९८)इति लुप् तदा "सञ्ज्ञायामुपमानम्"(पा० सू० ६-१-२०४)इति नित्यमाद्युदात्तत्व*मिष्यते।

---

त्तादृशोऽज्न भविष्यतीति नौप्रतिषेधो व्यर्थ इत्याशयात्। अत्र केचित् नौप्रतिषेधो हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवदित्यर्थ एव ज्ञापक इति न, किन्तु स्वरविधौ व्यञ्जनमविद्यमानवदित्यर्थ एव। स्वरविधिशब्दे च तन्त्रन्यायेन स्वरस्य विधिः स्वराविधिः स्वरेण विधिः स्वरविधिरित्यर्थद्वयसम्बन्धो विवक्षितः। अथ वा सम्बन्धसामान्यार्थकषष्ठ्या समास एवास्तु। तत्र षष्ठ्यर्थः सम्बन्धश्च क्रियाकर्मभावो निमित्तनिमित्तिभावश्चाभिमत इति हल्स्वरप्राप्तावित्यस्य स्वरोद्देश्यके विधावित्यस्य च लाभः। "नोत्तरपदेऽनुदात्तादावपृथिवीरुद्र" इत्यादिप्रतिषेधैकवाक्यतया चायमर्थः कल्प्यते स्वरे विधातव्ये व्यञ्जनमविद्यमानवदिति। अत्र व्यञ्जनं स्वरस्थानित्वेन प्रसक्तं विवक्षितं ज्ञापकसाजात्यात्। एवञ्च नौप्रतिषेधस्य पृथिव्यादिपर्युदासस्य च या ज्ञापकताऽन्यत्राभिहिता सोक्तार्थद्वयस्य विवक्षायामित्याहुः।

ईडवन्दवृशंसदुहाम् ( पा० सू० ६-१-२१४ )। *द्व्यनुबन्धकत्वादिति। तकारस्यानुबन्धस्येहोपादानादस्ति तदनुबन्धकपरिभाषाप्राप्तिः।

वेणुशब्दस्याद्युदात्तत्वमुपपादयति—*स्थो णुरित्येति। स्वरभेदप्रतिपादनमन्यकर्तृकन्निरसितुमाह—*यत्त्विति। *प्रतिषेधादिति। तथा च नोदात्तनिवृत्तिस्वरप्राप्तिरिति भावः। *इष्यते इति। अत्र प्रमाणन्तु प्रकृतसूत्रभाष्ये—"किमियम्प्राप्ते विभाषा आहोस्विदप्राप्ते? कथञ्च प्राप्ते कथञ्चाप्राप्ते? यदि "संज्ञायामुपमानम्" ( पा० सू० ६-१-२०४ ) इति नित्ये प्राप्ते आरम्भस्ततः

त्यागराग(पा० सू० ६-१-२१६) । *आद्यास्त्वग इति ।
*तत्र "कर्षात्वतः"(पा० सू० ६-१-१५९)इति पक्षेऽन्तोदात्तत्वं बोध्यम् ।
अन्त्येषु त्रिषु *प्रत्ययस्वरेणान्तोदात्तत्वम् । *तत्र कुहश्वठौ चुरादावदन्तौ ।

मतोः पूर्व (पा० सू० ६-१-२१९) । *पूर्वमिति शब्दस्वरूपापे-
क्षया नपुंसकस्यआत् इत्यस्य विशेषणम् । केचित्तु सूत्रे पुल्लिङ्गं पठन्ति ।
*स्त्रियां सञ्ज्ञायामित्यस्य स्त्रियां वर्तमाना या सञ्ज्ञा तस्यां विद्यमान
आदित्यर्थस्तदाह–स्त्रीनाम्नीति । मत्वन्तं चेत् स्त्रीनाम भवतीत्यर्थः ।
आत्किम् ? इक्षुमती । अत्र "ह्रस्वनुड्भ्यां मतुप्" [पा० सू० ६-१-१७६]
इत्येव । सञ्ज्ञायां किं ?,*खट्वावती । स्त्रियां किम् ? *उदुम्बरावान् ।
*उदाहरणेऽत्र च "मतौ बह्वचोऽनजिरादीनाम्"(पा० सू० ६-३-११९) ।
"शरादीनां च"[पा० सू० ६-३-१२०]इति दीर्घः, चातुरर्थिकः नद्यां म-
तुप् । मतोः किम् ? *गवादनी । तदभावे पूर्वग्रहणस्याप्यभावात्सञ्ज्ञाश-
ब्दसंबन्धिन आकारमात्रस्य स्यादिति । पूर्वग्रहणान्नेह–सानुमती । अ-
न्यथा स्त्रीनाम्नो मत्वन्तस्ये*त्यर्थः स्यात् ।

अन्तोऽवत्याः(पा० सू० ६-१-२२०) । *वत्या अन्त इति तु

---

प्राप्ते, अन्यथा त्वप्राप्ते । अप्राप्ते विभाषा । प्राप्ते नित्यो विधिः; वेणुरिव वेणुः" इति
प्रतिपादनमेवेति ।

त्यागराग ( पा० सू० ६-१-२१६ ) । "विभाषावेणु" ( पा० सू० ६-१-
२१५ ) इत्यतो विभाषाग्रहणमनुवर्तते । एतदभावे स्वरमाह मूले–आद्या इति ।
*तत्र=आद्येषु । *प्रत्ययस्वरेण=प्रत्ययस्य यः स्वरः प्राप्तस्तेन । चित्त्वं हि प्रत्य-
यस्येति तेनान्तोदात्तत्वस्प्राप्तमिति फलितम् । *तत्र=अन्त्येषु त्रिषु ।

मतोः पूर्वं [ पा० सू० ६-१-२१९ ] । पूर्वशब्दार्थस्य आत् इत्येतद्विशे-
षणत्वात्पुंल्लिङ्गेन निर्देशे कर्त्तव्ये नपुंसकनिर्देशोऽनुपपन्नोऽत आह—*पूर्वमिती-
ति । स्त्रियां संज्ञायामिति व्यधिकरणे सप्तम्यावित्याशयेन व्याचष्टे—*स्त्रि-
यामित्यादि । *खट्वावतीति । यौगिकोऽयन्न तु संज्ञा । *उदुम्बरावानिति । दे-
शस्य संज्ञेयम् । *उदाहरणं=उदुम्बरावती इत्यत्र । नगर्याः संज्ञेयम् । *गवादनी
इति । अत्ति यस्यां सा अदनी, अधिकरणे ल्युट्, टित्त्वान्ङीप् । गोरदनीति
विग्रहः । आद इति लोके । *इत्यर्थः स्यादिति । तथा च पूर्वग्रहणमव्यवहितपू-
र्वपरमिति बोध्यम् ।

अन्तोऽवत्याः ( पा०सू० ६-१-२२७ ) । अवत्या इत्यत्राकारोच्चारणस्य
प्रयोजनमाह—*वत्या अन्त इति त्विति । ननु वेत्रवतीत्यत्रादाववतीशब्दो "मा-

नोक्तम् । राजवतीत्यत्र माभूत् इति । स्वरविधौ नलोपस्यासिद्धत्वान्नाव-तीशब्दः किन्त्वन्वतीशब्दः *वत्वं त्वाश्रयात्सिद्धम् । अहीवतीति । "सञ्ज्ञायाम्"[पा० सू० ८-२-११]इति वत्वम् । "शरादीनां च"(पा० सू० ६-३-१२०)इति दीर्घः । योगविभागश्चिन्त्यप्रयोजनः ।

## अथ फिट्सूत्राणि ।

*अपाणिनीयान्यप्येतानि "आद्युदात्तश्च"[पा० सू० ३-१-३] "उपसर्गाद्दति" [पा० सू० ६-१-९१] "अवङ् स्फोटायनस्य"[पा० सू० ६-१-१२३]इत्यादिसूत्रेषु भाष्यादौ व्यवहृतत्वादविरुद्धत्वाच्च साधुत्वव्य-वस्थापकानि भवन्ति । यत्तु पाणिनीयान्येवैतानीति, तन्न । "वृषादीना-ञ्च"(पा० सू० ६-१-२०३) "उञ्छादीनाञ्च"(पा० सू० ६-१-१६०) इत्याभ्यामाकृतिगणाभ्यां क्रमेणाद्युदात्तत्वान्तोदात्तत्वयोः सिद्धयोः "ग्रा-मादीनाञ्च"(फि० पा० २ सू० ३८)"घृतादीनाञ्च"(फि०पा० १ सू०२१) इत्यनयोर्वैयर्थ्यापत्तेः । मम तु भिन्नकर्तृकत्वान्न दोषः ।

फिषोऽन्तः (फि० पा० १ सू० १)। फिडिति प्रातिपदिकस्य पू-र्वाचार्यसञ्ज्ञा । उच्चैर्वृक्ष इति । नन्वत्रादिचर्डैत्सिः व्रश्चेः स किदिति व्यु-त्पादनात्प्रत्ययस्वरेणैवान्तोदात्तत्वसिद्धिरिति चेन्न । अव्युत्पत्तिपक्षे *आ-वश्यकत्वात् ।

पाटलापालङ्कावा[ फि० पा० १ सू० २ ] । पाटलापालङ्कौ औषधिविशेषस्य वाचकौ । *लघावन्तइति प्राप्ते इति । पूर्वपरान्वयी-दम् । इदमुपलक्षणं क्वचिद्ध्रस्वान्तस्येत्यादीनामपि दुर्वारत्वादित्याहुः । सागर इत्यादि । अत्रापि "लघावन्ते"[फि० पा० २ सू० ४२) इति प्राप्तम् ।

---

द्रुपधाया" [ पा० सू० ८-२-९ ] इत्यस्याऽसिद्धत्वान्नास्तीति कथमुदाहरणमत आह—*वत्वन्त्वाश्रयेति ।

## अथ फिट्सूत्रेषु प्रथमः पादः

अथ फिट्सूत्राणीति । फिषां सूत्राणि 'व्याख्यायन्ते' इति शेषः । एतेषां साधुत्वव्यवस्थापकत्वे प्रमाणमाह—*अपाणिनीयेति,। *आवश्यकत्वादिति । अयञ्च पक्षः पाणिनीयानामपि सम्मत एव ।

पाटला ( फि० पा० १ सू० २ ) । *'लघावन्त इति प्राप्ते' इति कथन-मेकादेशष्टापा सह यावन्न जातस्तावत्प्राप्त्यभिप्रायेण । तस्यैवौषधिविशेषे रूढत-

आद्युदात्तोऽयमिति । नन्वनेनान्तोदात्तत्वाभावेऽपि नियमत आद्युदात्तत्वं केन स्याद् विधायकाभावात्, अतोऽनियम इति वक्तुं युक्तमित्यत आह—इहैवेति । एषां सूत्राणामाद्यसूत्रबाधक*बाधनार्थत्वात् आह्नियामित्येतदभावे स्त्रियामप्यनेन बाधकं बाध्येत । बाधकं चानेनैवानुमीयते । तच्च मध्योदात्तत्वस्यात्रासम्भवात्सर्वानुदात्तविधायकस्य फिट्सूत्रेष्वदर्शनादाद्युदात्तविधायकमेवेति भावः ।

स्त्रीविषयेति । आद्युदात्तत्वमित्यन्वे । गुदामिति "नविषयस्य" ( फि० पा० २ सू० २६) इति "स्वाङ्गशिटाम्"(फि० पा० २ सू० २९) इति वा प्राप्ते । ननु गुदाशब्दस्यादन्तत्वाभावात्कथं स्वाङ्गेत्यस्य प्राप्तिरत आह—*अन्तरङ्गमिति ।

स्त्रीविषयवर्णेति । स्त्रीविषयवर्णाक्षुपूर्वाणामित्यर्थः । स्त्रीविषयवर्णनाम्नामिति केषांचित्पाठः । *"लघावन्ते" (फि०पा०२ सू० ४२) इत्येवात्र परत्वात् । अस्य तु 'व्रीहिः' इत्युदाहरणमित्यन्ये(१) । इभ्ये दण्डादित्वाद्यत् । यान्तस्यान्त्यादिति । इदमुपलक्षणं "क्षत्राद् घः" ( पा० सू० ४—१—१३८ ) इति प्रत्ययस्वरेणापि । नन्वव्युत्पन्नेष्वेव फिट्सूत्रप्रवृत्तेः 'इभ्या' इति प्रत्युदाहरणमयुक्तमिति चेन्न । अस्मादेव स्त्रीविषयग्रहणाज्ज्ञापकात् व्युत्पत्तिमार्गप्राप्तस्वरस्यापि फिट्स्वरो बाधक इति वदन्ति । *ध्वनितश्चेदम् "एतिस्तुशास्"(पा०सू०३—१—१०९)इति सूत्रे कैयटे।

---

या ततः स्त्रियाण्टाप उत्पत्तेः ।

*बाधनार्थत्वादिति । आद्यसूत्रबाधकस्यान्याभावादिहैव निपातनमाश्रीयत इति भावः । *अन्तरङ्गमितीति । स्वाङ्गवाचकत्वस्य टाबुत्पत्तेः प्रागपि सत्त्वात्तस्यान्तरङ्गत्वमिति भावः ।

ध्यपूर्वस्य स्त्रीविषयस्य ( फि० पा० १ सू० ५ ) । ध्यपूर्वस्येत्यन्तपदार्थे विशेषणमभेदेन, सा च स्थानषष्ठी । स्त्रीविषयस्येत्यवयवषष्ठी । *लघावन्त इति । एकादेशात्प्रागस्य प्राप्तिः । *ध्वनितश्चेदमिति । तत्सूत्रभाष्ये—"क्यब्विधौ वृञ्ग्रहणम् । क्यब्विधौ वृञ्ग्रहणङ्कर्त्तव्यम् । इह मा भूत्—वार्या ऋत्विजः" इत्य-

---

(१) वस्तुतस्तु 'अन्तर्धा' इत्यत्र "लघावन्ते" (फि० पा० २ सू० ४२ )इत्यस्य प्राप्तिरेव न त्रयाणामपि गुरुत्वात्, टापः पूर्वमपि न 'अकृतव्यूहाः'(प० भा०) इतिन्यायात् । "स्वाङ्गशिटाम्" ( फि० पा० २ सू० २९ ) इति तु प्रवर्तते अन्तग्रहणसामर्थ्यादिति बोध्यम् ।

खान्तस्याश्मादेरिति। शकारमकारादिभिन्नस्य खशब्दस्यान्त उदात्त इत्यर्थः। शीङः खो निदिति। *इदन्दशपाद्यामुक्तम्। पञ्चपाद्यान्तु "शीङः खो ह्रस्वश्च" इति पठितं, तत्राप्याह—अन्तरङ्गत्वादिति। स्वरस्य *स्वाङ्गत्वापेक्षत्वादन्तरङ्गत्वं *चिन्त्यम्। "स्वाङ्गशिटाम्"(फि० पा० २ सू० २९) इति सूत्रेऽन्तग्रहणात्सर्वनामप्रातिपदिकसञ्ज्ञाकालिकादन्तत्वमादाय यत्प्रवृत्तिरिति बोध्यम्। एवं पूर्वत्र गुदाशब्देऽपि बोद्ध्यम्। *अस्थ्यादिस्वाङ्गवाचकशङ्खशब्दे "स्वाङ्गशिटाम्" (फि० पा० २ सू० २९) इत्याद्युदात्तत्वप्राप्त्या सोऽप्यत्र प्रत्युदाहरणम्। *ग्रीवायां बद्धोऽपि कक्षे आसनीत्यादौ ग्रीवाशब्दस्यान्तोदात्तत्वन्तु छान्दसत्वान्निर्वाह्यम्।

---

भिहितम्। तत्र कैयटः—क्यब्विधाविति। "ईडवन्दवृशंसदुहां ण्यतः"(पा० सू० ६-१-२१४) इति वार्यशब्दस्याद्युदात्तविधानादेतज्ज्ञायते। तत्र हीडिवन्दिभ्यामात्मनेपदिभ्यां साहचर्याद्वृशब्देन वृणातिर्गृह्यते। ततो भाष्ये—"अञ्जेश्चोपसंख्यानं कर्त्तव्यम् आज्यम्। यदि क्यप्, वृद्धिर्न प्राप्नोति। तस्मात् ण्यदेव। यदि ण्यत्, उपधालोपो न प्राप्नोति। तस्मात् क्यबेव। ननु चोक्तं वृद्धिर्न प्राप्नोति। आङ्पूर्वस्य प्रयोगो भविष्यति" इति। अत्र 'तस्मात् ण्यदेव' इति प्रतीकमुपादाय "ननु स्वरे भेदो भवति क्यपि सत्याद्युदात्तम्पदं, ण्यति सत्यन्तस्वरितम्। नैष दोषः। "नब्विषयस्यानिसन्तस्य"( फि० पा० २ सू० २६ )इत्याद्युदात्तविधानात्" इति कैयटेनोक्तम्। एवं व्युत्पत्तिमार्गप्राप्ते ण्यदन्ते नब्विषयस्येत्यस्योपन्यासेन लक्ष्यानुसारेण फिट्स्वरस्य बाधकताऽन्यत्राप्यूहनीयेति ध्वनितमिति।

"खान्तस्याश्मादेः"[फि.पा.१सू.६]इति सूत्रं 'फिषः"(फि.पा.१ सू.१)इत्यस्य यद्बाधकन्तद्बाधनार्थम्। तद्बाधकप्रदर्शनञ्च मूल एव कृतमश्मादेरिति पर्युदासस्योपपादनावसरे। उक्तसूत्रेऽप्रसिद्धत्वशङ्कावारणायाह—*इदमिति। *स्वाङ्गत्वापेक्षत्वादिति। न च टाप उत्पत्तौ स्त्रीत्वापेक्षाऽस्तीति साम्यमिति वाच्यम्। प्रातिपदिकसंज्ञाप्रवृत्तिकाले लिङ्गस्याप्युपस्थितिसत्त्वेन लिङ्गाधिक्ये तस्मिन् द्योतनीये टाबादेरुत्पत्त्या लिङ्गोपस्थितेरुभयोत्पत्तिप्राक्कालिकत्वेन न लिङ्गोपस्थितिकृतं टापो बहिरङ्गत्वमित्याशयात्। एतेन स्वरस्य बहिरङ्गत्वं ध्वनितम्। इदम् 'अल्पापेक्षमन्तरङ्गं,बह्वपेक्षं बहिरङ्गम्' इति वादिमतेन। *चिन्त्यमिति। अत्रेत्थश्चिन्तयन्ति—"स्वाङ्गशिटाम्"(फि० पा० २ सू० २९) इति सूत्रेऽत इत्येव तदन्तविधिनाऽन्तपदार्थलाभेऽन्तवचनमुद्देश्यतावच्छेदकसंज्ञाप्रवृत्तिकालिकमदन्तत्वं सूत्रप्रवृत्तौ नियामकमिति शिखशब्दस्य यदा प्रातिपदिकसंज्ञा तदैव स्वाङ्गेत्यस्य प्राप्तिरेकादेशस्य तु टाबुत्पत्त्युत्तरप्राप्तिरेतावतैव स्वरस्यैकादेशापेक्षयाऽन्तरङ्गत्वमिह विवक्षितमिति, तन्मतमेवाह—तस्मादिति। स्वयम्प्रत्युदाहरणमाह—*अस्थ्यादीति। नन्वन्तशब्दोपादानसामर्थ्यात्पूर्वोक्ता कल्पना चेत्तदा ग्रीवाशब्दे वाशब्दस्योदात्तस्य श्रवणं ग्रीवायामित्यत्र यत्तद्विराधं इत्यत आह—*ग्रीवायामिति।

हिष्ठवत्सर( फि० पा० १ सू० ७ )। इत्याहुरिति । अत्रारुचिबीजन्तु "संपूर्वाच्चित्" ( उ० पा० ३ सू० ३५९ ) इति सरप्रत्ययस्य चित्त्वात्सिद्धम्* । *परिवत्सरस्तूदाहार्य इति । *अनेनैव सिद्धे *तद्व्यर्थमित्याशय इति तत्त्वम् । अत्र सूत्रे शत्साहचर्यात्तिशब्दः *पङ्क्त्यादिसूत्रविहित एव गृह्यते ।

दक्षिणस्य साधाविति । *प्रवीणे इत्यर्थः । वीणायां सामसु वा दक्षिण इत्युदाहरणं, प्रवीण इत्यर्थः ।

स्वाङ्गाख्यायामादि(फि० पा० १ सू० ९)। स्वाङ्गेति किं ? दाक्षिणो देशः । अत्र सर्वनामत्वादाद्युदात्तत्वम् । न च परत्वादेव तेनाद्युदात्तत्वमत्र भविष्यतीति वाच्यम् । अस्य प्रकरणस्य *बाधकबाधनार्थत्वात् ।

कृष्णस्या ( फि० पा० १ सू०११ ) । अत्र छन्दसीति वर्त्तते इत्याहुः । *अन्तोदात्त इत्येव । आख्येति किं ? *कृष्णो मृगः ।

वा नाम ( फि० पा० १ सू०१२ ) । अन्तोदात्तत्वं वा, *पक्षे *आद्युदात्तत्वम् ।

शुक्लगौरयोः (फि० पा० १ सू० १३) नामधेयस्येति वर्त्तते । तेनानामधेययोर*न्तोदात्तत्वमेव । *"ऋज्रेन्द्र" (उ० पा०२ सू० १९६ ) इति उणादिसूत्रनिपातितान्तोदात्तकरस्य शुक्रशब्दस्य लत्वे शुक्लशब्दव्यु-

*सिद्धमिति । तथा च सम्वत्सरशब्द इव चेद्वत्सरशब्दोपादानेनान्तोदात्तत्वसिद्धिः प्रयोजनन्तदा चित्त्वादेव सिद्धमतोऽन्यत्रास्य सूत्रस्य प्रवृत्तिर्वक्तव्येति भावः । उदाहरणान्तरमेवाह—*परिवत्सरेति । *अनेन=प्रकृतसूत्रेण । *तद्व्यर्थमिति । "सम्पूर्वाच्चित"( उ० पा० ३ सू० ३५९ ) इत्यत्र चिदित्यस्योपादानं व्यर्थमित्यर्थः । *पङ्क्त्यादिसूत्रेति । तेन "पातेर्डतिः"( उ० पा० ४ सू० ५०६ ) इत्यस्य व्यावृत्तिः ।

साधावित्यस्यार्थमाह-*प्रवीणे इति । वाच्य इति शेषः ।

स्वाङ्गाख्यायाम्(फि० पा० १ सू० ९) । दक्षिणस्येत्यनुवर्त्तते । *बाधकबाधनार्थत्वादिति । तथा च परस्याप्यनेन बाधः स्यादिति भावः । *अन्तोदात्त इत्येवेति । मण्डूकप्लुत्याऽनुवर्त्तत इति शेषः । *कृष्णो मृग इति । गुणोपसर्जनद्रव्यं वाच्यम् । अत्र"वर्णानान्तण"( फि० पा० २ सू० ३३ ) इत्येव प्रवर्त्तते ।

*पक्षे="वा नामधेयस्य" इत्यस्याप्रवृत्तौ । *आद्युदात्तत्वमिति । वाग्रहणसामर्थ्यादिति शेषः ।

*अन्तोदात्तत्वमेवेति । फिट्स्वरेणेति शेषः । शुक्लशब्दे प्रकारान्तरमप्याह—*ऋज्रेन्द्रेतीत्यादि ।

स्पचेरिति बोध्यम् ।

अङ्गुष्ठोदक ( फि० पा० १ सू० १४ ) । अन्त इति त्वादिग्रहणानुवृत्ति*शङ्कानिराकरणार्थम् । *उदकस्य कर्दमादित्वादाद्यद्वितीययोः पर्यायेण प्राप्ते वकस्य "प्राणिनाञ्च कुपूर्वम्" (फि० पा० २ सू०३०)इत्याद्युदात्तत्वे प्राप्ते । तेन लोके इति । नियमकरणसामर्थ्यादिति भावः । वशाशब्दश्च वशेः पचाद्यचि टापीति तात्पर्यम् ।

पृष्ठस्य च ( फि० पा० १ सू० १५ ) । मृष्टस्येति पाठान्तरम् । वा भाषायामिति । पक्षे "स्वाङ्गशिटाम्" ( फि० पा० २ सू० २९ ) इत्याद्युदात्तत्वम् । मृष्टे च "निष्ठा च द्व्यजनात्" ( पा० सू० ६—१—२०५ ) इति *तत् ।

अर्यस्य स्वाम्या ( फि० पा० १ सू० १७ ) । वैश्ये*त्वाद्युदात्त एव ।

अत एव ज्ञापकादिति । *"स्त्रीविषयवर्ण" ( फि० पा० २ सू० ४३ ) इति द्वितीयपादस्थसूत्रेणेत्यन्ये ।

नक्षत्राणामाब्विषयाणाम् ( फि० पा० १ सू० १९ ) । *नित्यावन्तानामित्यर्थः । नक्षत्राणां किं ? खट्वा(१) । आबित्यादि किम् ? । अश्विनी । श्रविष्ठेत्यादि । *श्रवतीधनवतीशब्दाभ्यामिष्ठनि "विन्मतोः" ( पा० सू० ५-३-६५ ) इति लुक् । विषयग्रहणं चिन्त्यम् । आबन्ताबन्तनक्षत्रवाचकस्यासत्त्वात् ।

न कुपू ( फि० पा० १ सू० २० ) । कवर्गपूर्वस्याऽऽब्विषयस्य

---

*शङ्केति । वस्तुतोऽस्वरितत्वादेव तत्सम्बन्धाभावे सिद्धे स्पष्टार्थमेवान्तशब्दोपादानमिति भावः । "अङ्गुष्ठोदक" ( फि० सू० १-१४ ) इति सूत्रस्थाङ्गुष्ठशब्दस्य प्रयोजनम्मूलेऽभिहितमिति तं परित्यज्योदकशब्दोपादानस्य प्रयोजनमाह-*उदकस्येत्यादिना । वशाशब्दस्य "चितः" (पा० सू० ६-१-१६३ ) इत्यन्तोदात्तत्वे सिद्धे नियमार्थमुपादानमित्याह मूले—वशाग्रहणमिति । *तत्=आद्युदात्तत्वम् ।

*आद्युदात्त एवेति । "यतोऽनावः" ( पा० सू० ६-१-२१३ ) इत्यनेनेत्यादिः । ज्ञापकादित्येतत्पर्यन्तानुसरणमनुचितमित्याशयेनाह—*स्त्रीविषयेति । आब्विषयाणामित्येतद् व्याचष्टे—*नित्येत्यादिना । *श्रवतीति । अत्र श्रशब्दः श्रवशब्दपरस्तस्मान्मतुप् ।

---

(१)तारिका ।

नक्षत्रस्यान्त उदात्तो नेत्यर्थः। कुपूर्वस्येति किं? *बहुला। आख्येति किं? कृत्तिकासु जाता माणविका। इत्यत्रापीति। अपिना कृत्तिका। *आर्यिकाबहुलिके कृत्तिकापर्यायौ। *अत्र पक्षे कृत्तिकेत्यादेः प्रयोजनं—मघाविशाखेत्यादि।

आकृतीति। 'वराह इन्द्र एमुषम्' इत्यादावन्तोदात्तदर्शनात् वराहशब्दोऽ*प्यत्र बोध्यः।

ज्येष्ठकनिष्ठयोः (फि० पा० १ सू० २२)। *वृद्धयुवशब्दयोर्ज्यकनादेशौ। प्रशस्याल्पशब्दयोस्तावादेशौ यदा तदा प्रत्युदाहरणम्।

पञ्च उदात्त इति। *उदात्तग्रहणानुवृत्तेरिति भावः। इति प्रथमपादः।

अथ द्वितीयः पादः।

ह्रस्वान्तस्य स्त्रीविषयस्य (फि० पा० २ सू० २५)। नित्यस्त्रीलिङ्गस्येत्यर्थः। वलिरिति। *वलिशब्दोऽपि जरया श्लथचर्मणि। तनुश्च शरीरे नित्यस्त्रीलिङ्गः। ह्रस्वेति किम्? नदी। स्त्रीति किं? मरुवायुः। विषयेति किं? लघुः, बहुः।

नब्विषयस्य(फि० पा०२ सू० २६)। *"स्त्रियाविषयस्य" "न-

---

*बहुलेति। 'आर्या' 'बहुला' इति कृत्तिकापर्यायौ। ताभ्यां स्वार्थिके के इत्वमित्याशयेनाह—*आर्यिकेत्यादि। *अत्र=घृतादिगणे।

ज्येष्ठकनिष्ठयोः (फि० पा० १ सू० २२)। वयसीत्यस्य प्रयोजनमाह—*वृद्धयुवेति।

*उदात्तग्रहणानुवृत्तेरिति। एवञ्च बिल्वतिष्ययोरन्तः स्वरित उदात्तो वेति सूत्रार्थ इति भावः। इति फिट्सूत्रेषु प्रथमः पादः।

अथ द्वितीयः

वलिशब्दस्य स्वभावात् स्त्रीलिङ्गता। तस्य वाच्यार्थमाह-*वलिशब्द इति। *मरुवायुरिति। अत्र मरुशब्दो देशविशेषवाची। *लघुर्बहुरिति। नैतौ नित्यस्त्रीलिङ्गौ। न च वल्यादिशब्दस्यापि वलिरिवेत्यर्थे लिङ्गान्तराभिधायकत्वसम्भव इति वाच्यम्। प्रवृत्तिनिमित्तैक्ये सतीत्यस्यापि विवक्षितत्वात्। विषयपदोपादानसामर्थ्यमत्र बीजम्।

नब्विषय(फि० पा० २ सू० २६)। अत्र पूर्वसूत्राद्विषयपदानुवृत्त्यैव सिद्धे विषयेति व्यर्थमित्यत आह—*ह्रस्वेत्यादि। यथाश्रुते वैलक्षण्यमलभ्यमित्याह—*ह्रस्वान्तस्येति। नपोऽनिसन्तस्येत्यत्र पूर्वसूत्राद्विषयपदानुवृत्तिः प्रदर्शनी-

पोऽनिसन्तस्य" इति पाठेन विषयपदानुवृत्त्यैव सिद्धे *पुनर्विषयपदं लिङ्गव्यत्ययप्रत्ययलोपान्यतरेण लिङ्गान्तरोपसङ्क्रान्तस्य वा विषयतामात्रेणैतत्प्रवृत्त्यर्थं, यथा 'मधोस्तृप्ता इवासते' इत्यादौ, यथा वा 'मध्वास्मिन्नस्ति मधुर्मासः' "मधोर्ञ च" ( पा० सू० ४-४-१२९ ) इति यतो लुक् वार्तिकेन । *ध्वनितश्चेदम् "ई च द्विवचने" ( पा० सू० ७-१-७७ ) इति सूत्रे भाष्ये । नबिति किं ? मूर्तः । विषयेति किम् ? लघुः । सर्पिरिति । इसिनन्तज्योतिःशब्दादौ तु नित्त्वादाद्युदात्तत्वमेव ।

---

या, सा स्त्रीविषयस्येति पाठे विषयपदस्य समासघटकतया क्लिष्टेति पूर्वसूत्रस्य पाठप्रदर्शनमेतत् । *पुनर्विषयपदमिति । अयम्भावः—नेह विषयपदमित्यनपुंसकलाभाय तस्य पूर्वसूत्रस्थविषयपदानुवृत्त्यैव लाभात्, किन्तु नपुंसकविषयतासम्बन्धि यत्तस्य लाभाय । एवञ्चोपलक्षणीभूतो नपुंसकविषयतासम्बन्ध इहाश्रीयते । लिङ्गव्यत्ययेन प्रत्ययलोपेन वा यत्प्रातिपदिकं लिङ्गान्तरसम्बद्धन्तदपि नपुंसकविषयतासम्बन्धोपलक्षितं भवत्येवेति । *ध्वनितश्चेदमिति । तत्र हि "ई च द्विवचने" ( पा० सू० ७-१-७७ ) इति सूत्रस्य किमुदाहरणमिति प्रश्ने आदौ 'अक्षी ते इन्द्र पिङ्गले'इत्यभिहितम् ततश्छान्दसत्वात्पुंवद्भावेन इयादेशनुमागमयोरप्राप्तौ "प्रथमयोः पूर्वसवर्णः" ( पा० सू० ६-१-१०२ ) इत्यनेनाक्षि औ इति स्थिते एकादेश इत्याशयेन"नैतदस्ति, पूर्वसवर्णेनाप्येतत्सिद्धम्"इत्युक्त्वा "अक्षीभ्यान्ते नासिकाभ्याम् इदमुदाहरणम्"इत्युक्तम् । "इदञ्चाप्युदाहरणमक्षी ते इन्द्र पिङ्गले । ननु चोक्तम्पूर्वसवर्णेनाप्येतत्सिद्धमिति । नुमा व्यवहितत्वात्पूर्वसवर्णो न प्राप्नोति । छन्दसि नपुंसकस्य पुंवद्भावो वक्तव्यः—'मधोस्तृप्ता इवासते' इत्येवमर्थम् । पुंवद्भावेन नुमो निवृत्तिर्नुमि निवृत्ते पूर्वसवर्णेनैव सिद्धम् । स्वरार्थं तर्हीकारो वक्तव्यः । उदात्त इकारो वक्तव्यः । उदात्तो यथा स्यान्नपुंसकस्वरो मा भूत्" । नब्विषयस्यानिसन्तस्येत्यनेनाद्युदात्तत्वम्मा भूदित्यर्थः । मधोस्तृप्ता इत्येतदर्थम्पुंवद्भाव आवश्यक इत्याशयेनाह—'ननु च पुंवद्भावातिदेशादेव स्वरो भविष्यति । अशक्यः पुंवद्भावातिदेशस्तत्राश्रयितुमिह हि दोषः स्यात्—मध्वस्मिन्नस्ति मधुर्मासः' इति । सामान्ये नपुंसकमात्रस्य पुंवद्भावो न किन्तु क्वचिदेवेत्याशयेनाह-'स तर्हि पुंवद्भावो वक्तव्यः ? न वक्तव्यः । प्रकृतम्पुंवदिति वर्त्तते' इति भाष्ये उक्तम् । 'ननु च पुंवद्भाव'इत्युक्तिरव्युत्पत्तिपक्षाभिप्रायेण । व्युत्पत्तिपक्षे तु "अशेर्नित्"(उ० पा० ३ सू० ४४४)इति नित्त्वादाद्युदात्तत्वेन भाव्यम् । अत्र मधुर्मास इति प्रतीकमुपादाय कैयटेन प्रतिपादितम्—"मत्वर्थे मासतन्वोः" (पा० सू० ४-४-१२८) "मधोर्ञ च"(पा०सू०४-४-१२९) इति यत उत्पन्नस्य लुकि मासे पुंसि मधुशब्दो वर्त्तत इत्याद्युदात्तत्वन्न स्यात्" इत्यन्तेन ग्रन्थेन भाष्यकृता पुंवद्भावातिदेशस्याशक्यत्वम्प्रतिपाद्य "ई च द्विवचने"( पा० सू० ७-१-७७ ) इतीकारादेशस्यावश्यकत्वं सूत्रारम्भवादरीत्याभिहितम् । ततः "स तर्हि पुंव-

तिला इति । *यत्तु तिलोमाशब्दौ घृतादिपाठादन्तोदात्ताविति "संप्रोदश्च" ( पा० सू० ५–२–२९ ) इति सूत्रे कैयटः, *तच्चिन्त्यम् । "तिलाश्च मे" इत्यादावाद्युदात्तस्यैव पठ्यमानत्वात् , उमाशब्दोऽपि "मकरवरूढ" ( फि० पा० ३ सू० ५७ ) इत्यनेन विशिष्यपर्यायेणान्तोदात्तविधानात् । शालिव्रीही घृतादित्वादन्तोदात्तौ । तृणेत्यादि किम् ? आम्रः । गोधूमा इति । अत्र परत्वादेव "लघावन्ते" [फि०पा० २सू०४२] इति मध्योदात्तत्वसिद्धेः पर्यायेणाद्युदात्तत्वासिद्धेश्चेदं *चिन्त्यम्(१) । चणका इत्युचितम् ।

न्रः सं (फि० पा० २ सू० २८)। *पञ्चेत्यादौ नलोपे कृते*पाणिनीये *"अनुदात्तादेरञ्" ( पा० सू० ४–२–४४ ) इत्यादौ एषामिव एतेषु पाणिनीयशास्त्रप्रवृत्तौ बाधकाभावान्नलोपस्यासिद्धत्वेनैतत्प्रवृत्तिः ।

---

द्भावो वक्तव्यो न वक्तव्यः प्रकृतम्पुंवदिति वर्त्तते" इत्यनेन पुंवद्भावस्यावश्यकत्वप्रदर्शनेन "ई च द्विवचने" ( पा०सू०७–१–७७ ) इत्यनेनेकारादेशविधानन्न कार्यम् । स्वरस्य सिद्धिस्तु यस्यान्यत्र नपुंसकत्वं दृष्टन्तस्यास्सत्यपि नपुंसकत्वे आद्युदात्तत्वम्भवति नपुंसकविषयतासम्बन्धस्योपलक्षणभावेनाश्रयणादिति ध्वनितम् । लुगत्र मधुशब्दादुत्पन्नस्य "लुगकारेकाररेफाश्च वक्तव्याः"इत्यनेन कार्यः । यत्त्वत्र कैयटेन पुंवद्भावस्य मधोर्गृभ्णातीत्यर्थमावश्यकत्वेऽपि वाक्यभेदेन सम्बन्धः क्रियते छन्दसि नपुंसकम्पुंवदित्येकं वाक्यम्, अस्थ्यादीनाञ्छन्दसीकारादेशो वक्तव्यः इति द्वितीयं वाक्यमित्युक्तं, तत्तु सूत्राभिप्रायवर्णनमिति न तद्विरोधः ।

तृणधान्यानाञ्च द्व्यषाम्(फि०पा० २ सू० २७) । धान्यवाचकस्य तिला इत्युदाहरणम्मूले । न चास्य धान्यवाचकत्वे माघे मासि तिलभक्षणमेकादश्यां विरुध्यत इति वाच्यम् । तन्माससम्बन्ध्येकादश्यामेव वचनबलात्प्रवृत्तेः । 'तिला' इत्यस्याद्युदात्तत्वङ्कैयटासम्मतमिति शङ्कते—*यत्त्विति । *तच्चिन्त्यमिति । तिलशब्दस्य घृतादौ पाठकल्पनञ्चिन्त्यमित्यर्थः । *इदञ्चिन्त्यमिति । द्व्यषामित्यस्य 'गोधूमा' इत्यत्राद्युदात्तत्वाप्रवृत्त्यभिधानन्नव्योक्तञ्चिन्त्यमित्यर्थः ।

न्रः सङ्ख्यायाः(फि०पा०२सू०२८) । नान्तरेफान्तसङ्ख्यावाचकस्यादिरुदात्तः स्यात् । सङ्ख्याया इति स्त्रीलिङ्गनिर्देशस्सङ्ख्याशब्दार्थगतस्य स्त्रीत्वस्य नान्तरेफान्तशब्दे आरोपेण । ननु 'पञ्च'इत्यत्र नलोपे कृते न नान्तत्वं, नलोपासिद्धत्वेन तथात्वन्तु वक्तुमशक्यम्भिन्नकर्तृकत्वादित्यत आह—*पञ्चेत्यादाविति । *पाणिनीये इति । शास्त्रे कर्त्तव्य इति शेषः । एतदेवाह—*अनुदात्तेत्यादिना ।

---

( १ ) वस्तुतस्तु बाध्यसामान्यचिन्तापक्षे तस्यापि बाधकं स्यादित्याशयः ।

*सप्ताष्टशब्दौ घृतादित्वादन्तोदात्तौ । *रस्योदाहरणं-चतुष्कपालः । "इगन्तकालकपाल" ( पा० सू० ६-२-२९ ) इति पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वम् । चत्वार इत्यत्राऽऽमुस्वरेण, शसि "चतुरः शसि"( पा० सू० ६-१-१६७ ) इति, भिसादौ "झल्युपोत्तमम्" (पा० सू० ६-१-१८०) "षट्त्रि" ( पा० सू० ६-१-१७९ ) इत्यनेन भाव्यमिति *समास उदाहृतः । त्रः किं ? गणः । संख्यायाः किम् ? अन्तः ।

स्वाङ्ग(फि० पा० २ सू० २९) । *इदञ्च सर्वनामसञ्ज्ञाप्रवृत्तिकाले यददन्तं तत्रैव प्रवर्तते । *तेन 'इमं स्तोममर्हत' इत्यादौ न दोषः । *सर्वोभान्यशब्दा गणेऽन्तोदात्ता निपात्यन्ते "तयोरन्यः पिप्पलम्" इत्यादौ *तथा दर्शनात् । *परो मात्रयेत्यादौ व्यत्ययेनान्तोदात्तत्वं *'परं मृत्यो' इत्यादावाद्युदात्तस्यापि दर्शनात् । स्वाङ्गेत्यादि किं ? घटः । अदन्तानां किं ? बाहू राजन्यः ।

प्राणिनाङ्कुपूर्वमिति । *"तस्य समूहः" (पा०सू०४-२-३७) इति सूत्रे न्यासहरदत्तयोः कुपूर्वाणामिति पाठो दृश्यते कवर्गाद्ये पूर्वे तन्मध्ये आदिरित्यर्थः । *सर्वनामकार्यन्तु सौत्रत्वान्न । कात्रित्येव सिद्धे पूर्वग्रहणं व्यवहितस्यापि ग्रहणार्थम् । तेन कुपूर्वमिति पाठेऽपि चटकादावाद्युदात्तत्वं भवत्येव । उदक्रमिति । *कर्दमादिरयम् । *कित्यादि किं ? हरिणम्(१) । अन्ये तूत्तरसूत्रवदत्रापि आदिरिति न सम्बध्य-

---

सप्ताष्टशब्दयोरस्यातिव्याप्तिं वारयति—*सप्ताष्टशब्दाविति । मूलानुक्तं रेफोदाहरणं स्वयमाह-*रस्योदाहरणमित्यादिना । *समास उदाहृत इति । अस्य अस्माभिरित्यादिर्बोध्यः । चतुष्कपाल इति समास उदाहृत इत्यर्थः ।

स्वाङ्गशिटाम(फि०पा०२सू०२९) । स्वाङ्गवाचिनामदन्तानां शिटाञ्चादिरुदात्तः स्यात् । *इदम्="स्वाङ्ग" (फि०पा०२सू०२९) इति सूत्रम् । *तेन=तादृशव्याख्यानेन । सर्वादिशब्देऽतिप्रसङ्गं वारयति-*सर्वोभेति । *तथादर्शनात्=अन्तोदात्तस्य दर्शनादित्यर्थः । *परो मात्रयेति । परशब्दस्य सर्वनामत्वेन लोके त्वाद्युदात्तत्वमेव भवति । ननु सर्वादिशब्दवत्परशब्दोऽपि गणेऽन्तोदात्तः पठनीयस्तावतैव सिद्धौ व्यत्ययकथनमसङ्गतमत आह—*परमिति ।

कुपूर्वमिति पाठे पूर्वशब्दस्य प्रथमान्तत्वादादिरित्यनेन सामानाधिकरण्यसम्भवोऽस्ति । कुपूर्वाणामिति पाठे तु कथमस्य सम्बन्ध इत्याशङ्कायामाह—*तस्य समूह इति । ननु पूर्वशब्दस्य सर्वनामत्वादामः सुट् स्यादत आह—

---

( १ ) वराहः इत्यपि प्रत्युदाहरणम्

ते नपुंसकस्वरसात्, तेन चटकादावनेन मध्योदात्तत्वं, *हरदत्तोक्त-पाठस्तु चिन्त्य एवेत्याहुः* ।

लघ्युवर्णम्(फि०पा०२सू०३१)। कृत्रिमेत्यादि किं ? *बन्धुकः ।

उनर्वन्नन्तानाम् ( फि० पा० २ सू० ३२ )। 'पिता माता भ्रा-तर एनमाहुः' इत्यादौ *पितृशब्दे छान्दसत्वादन्तोदात्तत्वं मातुल्त्वभ्रातृत्वात्सिद्धमित्याहुः ।

वर्णानान्तणतिनितन्तानाम् ( फि० पा० २ सू० ३३ )। तान्तानामिति पाठे तकारो *व्यर्थ इति चिन्त्यम् । एत इति । श्वेत-शब्दो घृतादित्वादन्तोदात्तो *बोध्यः ।

ह्रस्वान्तस्य ह्रस्व (फि०पा०२सू०३४)। ह्रस्वान्तस्य किं? वधूः । ह्रस्वं किं ? *माम्रम । अनृर्किं ? तृणकम् । *ताच्छील्ये किम् ? जडः, बधिरः । कुशलशब्दोऽनेनाद्युदात्त *इत्येके । *अन्तोदात्त इत्युज्ज्वलदत्तः । सरल इति । (१)वृक्षविशेषसञ्ज्ञात्वेन *ताच्छील्यानवगमा-

*सर्वनामकार्यन्त्विति । *कर्दमादित्वमिति । तेनादिर्द्वितीयो वा पर्यायेणोदात्तौ । *कौत्यादीति । कुपूर्वमिति कथमित्यर्थः । *हरदत्तोक्तपाठः=कुपूर्व इति पाठः । *आहुरिति । अस्वरसबीजन्तु काविल्येव सिद्धे पूर्वशब्दोपादानमेवं सत्यनर्थकमापद्येतेति ।

लघ्युवर्णम् (फि० पा० २ सू० ३१) । कृत्रिमाख्येत्यस्य कृत्रिमस्याख्या पुरुषप्रयत्नलभ्यस्याख्येत्यर्थः । *बन्धुकः=पुष्पविशेषस्याख्येत्यर्थः ।

ऋवर्णान्तत्वात्प्राप्तमतिप्रसङ्गं वारयति—*पितेत्यादि ।

*व्यर्थ इति । सस्वरस्य तकारस्य प्रथमोपात्ततेन ग्रहणसम्भवादिति भावः । *बोध्य इति । तेन 'श्वेतो वाजी' इत्यन्तोदात्तपाठस्योपपत्तिः ।

ह्रस्वान्तस्य(फि०पा०२सू०३४)। अन्नादिरिति सम्बध्यते । *माम्रमिति । कमत्ययान्तत्वादन्तोदात्तोऽयम् । *ताच्छील्ये किमिति । ताच्छील्ये गम्ये इत्यर्थकन्ताच्छील्य इति पदङ्किमर्थमित्यर्थः । *इत्येके इति । लोके प्रवीणे कुशलशब्दप्रयोगेऽपि ताच्छील्यस्य प्रतीयत इत्यस्वरसबीजम् । अत एवाह-*अन्तोदात्त इति । मूले--अक्षस्यादेवनस्य(फि०पा०२सू०३५)। देवनशब्दः करणल्युडन्तः ।

अर्द्धस्यासमद्योतने(फि०पा०२ सू० ३६)। असमद्योतने योऽर्द्धशब्दस्तस्यादिरुदात्तः । समस्य समांशकस्य द्योतने प्रतिपादने फिट्स्वरेणान्तोदात्तत्वम् ।

पीतद्द्वर्थानाम् (फि० पा० २ सू० ३७) । आदिरिति सम्बध्यते ।

*ताच्छील्यानवगमात्=समुदायेन संज्ञानवगमात् ।

( १ ) पीतद्रुवृक्षेत्यर्थः ।

मेह "ह्रस्वान्तस्य"(फि० पा०२ सू०३४)इत्यस्य प्राप्तिः(१)।

ग्रामादी ( फि० पा० २ सू० ३८ )। ग्रामादिराकृतिगणः।

लुबन्तस्योपमेय ( फि० पा० २ सू० ३९ )। "सञ्ज्ञायामुपमानम्" ( पा० सू० ६-१-२०४ ) इत्यनेन समानार्थमेतत्। लुबिति किम् ? *अग्निर्माणवकः। उपमेयेति किं ? *वरणाः। "अदूरभवश्च" ( पा० सू० ४-२-७० ) इत्यणो "वरणादिभ्यश्च" ( पा० सू० ४-२-८२ ) इति लुप्। *नामेत्यादि किं ? शुनक इवायं वृकः। देवपथादेराकृतिगणत्वात्कनो लुपि शुनक उपमेये वर्त्तते, *न तु तस्येयं सञ्ज्ञा(२)।

न वृक्षपर्वत ( फि० पा० २ सू० ४० )। यद्यपि फिट्सूत्रवृत्तौ "न व्याघ्रपाहिषसिंहवृक्षपर्वतानाम्"इति पठ्यते तथापि वृक्षपर्वतांश्च विशेषाणामेव ग्रहणमिष्टमिति तद्घटितमेव सूत्रं पठितम्। सर्वत्र विशेषपदान्वयाभावबोधनाय व्युत्क्रमः कृतः।

---

लुबन्तस्योपमेयनामधेयस्य(फि०पा०२सू०३९)। उपमेयनामधेयस्येत्यस्योपमेयवाचकस्येत्यर्थः। चञ्चेव चञ्चेति। "इवे प्रतिकृतौ" (पा०सू०५-३-९६) इति कनो"लुम्मनुष्ये" ( पा०सू०५-३-९८ ) इति लुप्। न च लुप्संज्ञाऽभावस्य, तस्य च नावयवत्वमिति चरमावयववाचकान्तशब्दार्थाप्रसिद्धिरिति वाच्यम्। लुबन्तस्येत्यस्य लुब्विशिष्टस्येत्यर्थात्। वैशिष्ट्यञ्च स्वविषयकज्ञानाधिकरणक्षणोत्पन्नध्वंसप्रतियोगिसमयवृत्तित्वसम्बन्धेन। *अग्निर्माणवक इति। अत्राग्निशब्द उपमानवाची माणवकशब्द उपमेयवाचकस्स च न लुबन्त इति। यद्यपि

"अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः।
नकारस्य च मूर्द्धन्यस्तेन सिध्यति माणवः॥"

इत्युक्तेर्माणवशब्दोऽन्तत्वादाद्युदात्त एव, तथापि ततः स्वार्थिके के प्रत्ययस्वरेणान्तोदात्तोऽयमिति भवति प्रत्युदाहरणमिति बोध्यम्। *वरणा इति। अन्तोदात्तोऽयम्। *नामेत्यादि किमिति। उपमेयस्येत्येवास्तु। उपमेयत्वञ्चार्थस्य न च तस्य लुबन्तत्वमिति उपमेयशब्दस्य तद्वाचके वृत्तेरिष्टसिद्धिर्भविष्यतीति प्रश्नः। *न तु तस्य संज्ञेति। नामधेयशब्दः संज्ञापर इति भावः।

न वृक्षपर्वत(फि०पा०२सू०४०)। उपमेयनामधेयस्येत्यनुवर्त्तते। विशेषपदोपादानाद्विशेषवाचकस्यैवोद्देश्यत्वं निषेधे। तेन स्वरूपस्य व्यावृत्तिः। एवञ्च 'वृक्ष इव वृक्षः' 'पर्वत इव पर्वतः' इत्यत्र पूर्वेणाद्युदात्तत्वम्भवत्येव।

---

( १ ) आदर्शपुस्तके 'प्राप्तिरित्यन्ते' इति पाठः। तस्य तदपेक्षया परत्वादिदमेवोचितमित्यस्वरसः।

( २ ) "शकुनीनां च लघुपूर्वम्" [फि० पा०२ सू०४४] इति मध्योदात्तता बोध्या।

राजविशेषस्य ( फि० पा० २ सू० ४१ ) । अत्रापि "लुबन्तस्योपमेय" ( फि० पा २ सू० ३९ ) इति सूत्रमनुवर्तते । एवञ्च तेनैव सिद्धे वृद्धस्यैवेति नियमार्थं, तदाह-*अङ्गाः प्रत्युदाहरणमिति । वृत्तौ तु वृद्धस्य चेद्राजविशेषस्यैवेति नियम उक्तस्तच्चिन्त्यम् । पूर्वसूत्रे व्याघ्रग्रहणवैयर्थ्यापत्तेः । *यमन्वाशब्दः कृतादिष्वद्धौ रूढः, न च व्याघ्रशब्दस्तथेति न वैयर्थ्यमित्यन्ये । अत्राङ्ग इत्युदाहरणं चिन्त्यम् । तस्य "जनपदशब्दात्" ( पा० सू० ४-१-१६८ ) इत्यञन्तत्वेनाद्युदात्तासिद्धेः । *कालिङ्ग इत्युदाहार्यम् । तत्र हि "द्व्यञ्मगध" ( पा० सू० ४-१-१७० ) इत्यण् । अन्ये तु लुबन्तस्येत्याद्यनुवर्त्यास्य विधित्वमेवेच्छन्ति* ।

लघावन्ते ( फि० पा. २ सू. ४२ ) । अत्रादिशब्दो न सम्बध्यते, तेनानादेरपि गुरोरुदात्तः । *अत एव वृषाकपिशब्दोऽनेन मध्योदात्त इति "वृषाकपि" [ पा. सू. ४-१-३७ ] इति सूत्रे वृत्तावुक्तं, खण्डिकादिषु उलूकशब्दोऽनेन मध्योदात्त इति कैयटेन चोक्तम् । *वराहशब्दस्तु घृतादिरित्युक्तमेव । *न च गुरूणां मध्ये य आदिरित्यर्थोऽस्त्विति वाच्यम् । वृषाकप्यादावत्रृत्त्या वृत्त्यादिविरोधात् "अन्यतो ङीष्" [पा. सू. ४-१-४०] इति सूत्रे सारङ्गकल्माषौ "लघावन्ते" [फि. पा. २ सू. ४२] इत्यनेन मध्योदात्तौ इति हरदत्तविरोधाच्च । *लघावित्यादिकिम् ? *वातप्रमीः, सभासन्नयनं, कपाली । *नान्तत्वान्न लघुरन्तो-

---

राजविशेष( फि०पा०२सू०४१) । अङ्गेत्यत्राङ्गशब्दः "क्षत्रियसमानशब्दाज्जनपदात्तस्य राजन्यपत्यवत्" (भा०६०) इत्यञन्तात्कन तस्य लुपि तदन्त उदाहरणम् । *अङ्गाः प्रत्युदाहरणमिति । बहुत्वे लुप् । तदन्तात्कनो लुप् । एवञ्च पूर्वसूत्रानुवृत्तौ च राजविशेषवाचकस्य लुबन्तस्योपमेयनामधेयस्य चेद् वृद्धस्यैवेति नियमोऽत्राभिप्रेतः । वृत्त्युपपत्तये मतविशेषमाह—*यमन्वाशब्द इति । *कालिङ्ग इत्युदाहरणमिति । अत्र कालिङ्ग इव कालिङ्ग इत्युदाहरणं बोध्यम् । *इच्छन्तीति । एतन्मतेऽङ्कतकन्कमेवोदाहरणम्बोध्यम् ।

लघावन्ते फि०पा०२सू०४२) । अस्यादिरित्यधिकारे पाठेऽन्यसम्बन्धे प्रमाणमाह—*अत एवेति । आदिरित्यस्यासम्बन्धादेव । नन्वेवं वराहशब्दोऽपि मध्योदात्तः स्यादत आह—*वराहशब्दस्त्विति । अनेनैवाद्युदात्तत्वसिद्धये शङ्कते—*न चेति । *लघावन्त इत्यादि किमिति । बह्वषो गुरुरित्येवास्त्विति प्रश्नः । *वातप्रमीरिति । अत्र "संयोगे गुरु" ( पा०सू०१-४-११ ) इत्यनेन तकाराकारस्यापि गुरुत्वाद्रूपाप्युदात्तत्वापत्तिरिति भावः । सिद्धान्ते त्वत्रान्त्यस्य

ऽत्र । बह्वचः किम् ? देवः । गुरुः किं ? *किसलयम् । कल्याण इति ।

स्त्रीविषयवर्णाक्षुपू [ फि. पा. २ सू. ४३ ] । क्वचित्फिट्वृत्तौ 'स्त्रीविषयवर्णनाम्नाप्रक्षु' इत्यादिपाठः, सोऽपि मूले "इयपूर्वस्य" [फि० पा०१ सू०५ ] इति सूत्रे दर्शितः । मल्लिकेति । *अस्य प्राप्तिमात्रेणेदमुदाहरणं, प्राप्तस्यास्य परत्वात् "मादीनाञ्च" ( फि० पा०३ सू०६३) इत्यनेन *बाधात् 'ललना' इत्युदाहार्यम् । न चानेनैव सिद्धे "ह्रस्वान्तस्य स्त्रीविषयस्य" [ फि. पा. २ सू. २९ ] इति "वर्णानान्तण" ( फि. पा० २ सू. ३३ ) इति च सूत्रं व्यर्थमिति वाच्यम् अत्र बह्वच इत्यनुवृत्तेर्न दोषः । अत एव 'श्येनी' इत्युदाहरणं दत्त्वा 'हरिणः' इत्यु*दाहरणान्तरं दत्तम् । धवलादीन्यप्युदाहरणानि, नीलादयस्त्वन्तोदात्ता एवेति बोध्यम् । पिशङ्गसारङ्गकल्माषा "लघावन्ते" [फि. पा. २ सू. ४२ ) इति मध्योदात्ता इति कैयटादिदर्शनात् । इदं बाधित्वा पूर्वविप्रतिषेधेन पूर्वमेव प्रवर्त्तते इत्याहुः। अक्षुशब्दात्पूर्व इति । *अक्ष्वादेरिति वक्तव्ये अक्षुपूर्वाणामित्युक्तेः समानाधिकरणो बहुव्रीहिर्नेति भावः । अक्षुपूर्वेऽत्र पञ्चमीतत्पुरुषसमासस्तु न, अक्षाविरेव सिद्धे पूर्वग्रहणवैयर्थ्यापत्तेः अनुवर्त्तमानफिष इत्यनेन*अन्वयानापत्तेश्च ॥

शकुनीनाञ्च [फि०पा०२सू०४४] । पूर्वमिति । *अन्त्यात्पू-

---

लघोर्द्वयोर्वा लघ्वोरभावादेतत्सूत्राप्रवृत्तौ कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वम्भवति । वातप्रमीरित्यत्रान्त्यस्यालघुत्वं सञ्जननशब्देऽन्त्यस्य द्वयोर्वा लघुत्वेऽपि गुरोर्न तत्परत्वमिति प्रदर्शयितुमनयोरुपादानम् । कपालीशब्दस्येनिप्रत्ययान्ततया ऽन्त्यस्य लघुत्वसम्भावनयाऽस्य सूत्रस्य प्रवृत्तिशङ्कां वारयति—*नान्तत्वादिति । नान्तत्वेन सर्वनामस्थाने परतो दीर्घे कृते नात्रान्त्यलघुपरत्वमिति भाव. । *किसलयमिति । गुरुपदाभावेऽन्त्यलघुपरकस्य लकाराकारस्य लघुद्वयपरकस्य सकाराकारस्य वा उदात्तत्वापत्तिरिति भावः । न च किसलयशब्दे प्राप्तमप्येतत्सूत्रं "यान्तस्यान्त्यात्पूर्वम्"(फि० पा० ३ सू० ६२)इत्यनेन परत्वाद्बाध्येतेति वाच्यम् । किसलयकमित्यस्योपलब्धत्वात् ।

*अस्य प्राप्तिमात्रेण=स्त्रीविषयेत्यस्य प्राप्तिमात्रेण । *बाधादिति । तथा च द्वितीयस्योदात्तत्वमिह भवति । *उदाहरणान्तरं दत्तमिति । मूले इति शेषः । 'अक्षुपूर्वाणाम्'इत्यत्र व्यधिकरणो बहुव्रीहिर्मूले दर्शितस्तद्बीजमाह—*अक्ष्वादेरितीति । *अन्वयानापत्तेरेति । सामानाधिकरण्ये नान्वयानापत्तेरित्यर्थः । यदि त्वक्षोः पूर्वः फिषोऽवयव इत्युच्यते तदा व्यर्थत्वं क्लिष्टत्वञ्चेति भावः ।

शकुनीनाम्(फि०पा०२सू०४४) । पक्षिविशेषवाचकानामित्यर्थः । बहुवच-

र्वमित्यर्थः । लघु पूर्वमित्यसमस्तं पदद्वयम् । अत्राप्यादिरिति न संबध्यते, पूर्वग्रहणात् । तेन कुक्कुटतित्तिरी मध्योदात्तौ । कुक्कुटस्य वेदेऽन्तोदात्तपाठस्तु छान्दसः । तित्तिरिर्यजुःशाखायां मध्योदात्तः पठ्यते । *एतेन तित्तिरिशब्दोऽन्तोदात्त इति प्राणिरजतादिसूत्रस्थहरदत्तः परास्तः । लघुपूर्वमिति *बहुव्रीहिस्तु न, लघोरिति पञ्चमीनिर्देशेनैव सिद्धे पूर्वग्रहणवैयर्थ्यापत्तेः । लघोः पूर्वमिति तत्पुरुषोऽपि न, सप्तमीनिर्देशेनैव सिद्धेः ।

नर्तुप्रा[फि०पा०२ सू०४५]॥ ऋतुवाचिनां प्राणिवाचिनाञ्चेत्यर्थः । वसन्त इत्यादि । *अनयोः "लघावन्ते"[फि०पा०२सू०४२] इति निषिद्धे *ऽन्तोदात्तत्वम् । एवञ्च 'कपोतमयूरशब्दौ लघावन्ते इति मध्योदात्तौ' इति प्राणिरजतादिसूत्रस्थहरदत्तश्चिन्त्यः । खण्डिकादिसूत्रे मध्योदात्त इति *कैयटश्च ।

धान्यानाम् [फि०पा०२सू०४६] ॥ *वृद्धसञ्ज्ञकधान्यवाचिककारषकारान्तानामित्यर्थः । श्यामाका इति । "उशीरदाशेरकपालपलालशैवालश्यामाक"(फि० पा०३ सू०६७) इति सूत्रे श्यामाकग्रहणं *त्वधान्यवाचकश्यामाकग्रहणार्थम् । अत एव श्यामाकावतीत्यर्थेऽपि श्यामाकशब्द आद्युदात्त इत्याहुः । माषा इत्यस्य "तृणधान्यानाञ्च"( फि० पा० २

---

मस्वारस्यात्, न तु शकुनिशब्दस्येत्यर्थः कार्यः । *अन्त्यात्पूर्वमिति । पूर्वशब्दस्यावधिसाकाङ्क्षार्थप्रतिपादकतयाऽन्त्यस्य"लघावन्ते"इत्यत्रान्तस्य निमित्तत्वेन श्रवणादिह तदर्थस्यावधित्वमिति भावः । *एतेन=मध्योदात्तदर्शनेन । *बहुव्रीहिस्त्विति । लघुः पूर्वो यस्य तस्य समुदायस्यादिरित्यर्थकल्पनया तित्तिरित्यादावभिष्टसिद्धेः सम्भवादित्यभिप्रायः ।

*अनयोः=ऋतुप्राणिवाचकयोः । मूले—यथालक्षणमप्राप्तमिति । उत्सर्गबाधकसूत्रेण प्राप्तमित्यर्थः । *अन्तोदात्तत्वमिति । उत्सर्गतः प्राप्तसूत्रेणान्तोदात्तत्वमित्यर्थः । *कैयटश्चेति । चिन्त्य इति शेषः ।

धान्यानाम् ( फि०पा०२सू०४६ ) । वृद्धक्षान्तानामित्यत्र कर्मधारयः । क्षान्तानामित्यत्र ककारषकारौ पृथङ्निमित्ते क्षान्तानामिति वक्तव्ये क्षान्तानामिति कथनेन षकाराकारो विवक्षितः, एवङ्ककाराकारोऽपि । क्षान्तानामिति तु सौत्रः प्रयोगो लक्ष्यानुसारिव्याख्यानादित्याशयेनाह—*वृद्धसंज्ञकेत्यादि । *त्वधान्येति । तृणविशेषवाचकस्य ग्रहणार्थमित्यर्थः । केचित्तु तत्र सूत्रे "ईषान्तस्य"(फि०पा०३ सू०६६) इतिसूत्रादादिर्वेत्यस्यानुवर्तनात्तस्य वैकल्पिकत्वेन मध्योदात्तोऽप्ययन्तुणविशेषवाची भवतीत्याशयेन तत्र पाठ इत्याहुः । ननु क्षान्तानामिति सूत्रे उक्त-

सू० २७ ) इत्यत्रोदाहृतत्वात् 'बालाक्षा' इत्युदाहरणमुचितम् । *हलन्ताना-मसंभवेनाकारविशिष्टस्य ग्रहणम् । धान्येति किम् ? आलोकः । द्वद्वेति । किं ? श्वणकाः । क्षेति किं ? गोधूपाः ।

जनपदशब्दानाम् ( फि० पा० २ सू० ४७ ) । 'अध्'इयचः सन्त्रः । केकय इति । यत्तु "यान्तस्यान्त्यात्पूर्वम्" [ फि० पा० ३ सू० ६२ ] इत्यनेन परत्वादत्र मान्यमिति, तन्न । बाध्यसामान्यचिन्तामाश्रित्य *तस्याप्यनेन बाधादित्याहुः । अङ्गाः, वङ्गाः इत्यप्युदाहरणम् । जेत्यादि किम् ? आन्ध्राः, *अङ्गो राजा । अजन्तानां किं ? दरत् ।

हयादीनाम् ( फि० पा० २ सू० ४८ ) । अत्र केचिज्जनपदशब्दानामित्यनुवर्तयन्ति "कुरुगार्ह" ( पा० सू० ६-२-४२ ) इति सूत्रस्थहरदत्तस्वरसोऽप्येवं, तन्मते पञ्चालाः कोसला इत्युदाहार्यम् (वाशब्देनादेरित्यस्याप्यनुवर्तनादादेरप्युदात्तत्वं भवतीत्येके)(१) ।

इगन्तानाञ्च[ फि० पा० २ सू० ४९ ] अत्र*वेत्यनुवर्तते । अत एव 'अक्षैर्मा दीव्य कृषिमित्कृषस्व' इति पठ्यमानमन्तोदात्तत्वं संगच्छते, *छान्दसत्वाद्वा । *ये तु जनपदशब्दानामित्यनुवर्त्तयन्ति, तेषां न

मिह त्वकारान्तमुदाह्रियत इति तद्विरोध इत्यत आह—*हलन्तानामिति ।

जनपदशब्दानाम्[फि०पा०२सू०४७] । जनपदवाचिनामजन्तानामादिरुदात्तः । *तस्याप्यनेनेति । अपिना "फिष" इत्यस्य सङ्ग्रहः । *अङ्गो राजेति । ततः "क्षत्रियसमानशब्दात्" [भा०६०]इति विहितप्रत्ययस्य "जनपदे लुप्" (पा० सू० ४-२-८१] इति लुप् । एवं दरच्छब्देऽपि ।

हयादीनाम्(फि०पा०२सू०४८) । लान्तानामित्यत्र लेति समुदायो विवक्षितः । न चैवमसंयुक्तेति व्यर्थम् । "हलोऽनन्तराः" [ पा०सू०१-१-७ ] इति व्यञ्जनसमुदायस्यैव संयोगसंज्ञा विधीयते न त्वज्घटितस्येति वाच्यम् । असंयुक्तेत्यस्य व्यञ्जनान्तरासंश्लिष्टो यो लस्तदन्तानामित्यर्थात् । पूर्वमित्यस्यान्त्यात्पूर्वमित्यर्थः । अन्ये तु द्वयोरुदात्तयोरसति प्रयत्ने समावेशादर्शनादन्तः पूर्वमित्यनेनैव पर्याये लब्धे वाशब्दोऽत्र चार्थे । तेन प्रकरणप्राप्तस्यादिरित्यस्यापि प्रकृते सम्बन्धस्तेनादेरपि पक्षे उदात्तत्वम्भवतीत्याहुः ।

इगन्तानाञ्च द्व्यषाम् ( फि०पा० २ सू० ४९ ) । इगन्तानाञ्चेत्यत्र चशब्दो वाक्यालङ्कारे । *वेत्यनुवर्त्तते इति । विकल्पार्थकः प्रकृते वाशब्दोऽनुवर्त्तते शब्दाधिकारात् । वाशब्दानुवृत्तिमभिप्रेत्याह—*छान्दसत्वादिति । केषाञ्चिन्मतमाह—*ये त्विति । एतन्मते कृषिशब्दः प्रत्युदाहरणम् । इति-

[१] कंसान्तर्गतो ग्रन्थो मुद्रितपुस्तके नास्ति ।

कश्चिद्दोषः। कुरवः, चेदय इति चोदाहार्यम्। द्व्यचां किम्? वसातयः। इगिति किम्? अङ्गाः। इति द्वितीयः पादः।

अथ तृतीयः

ललाटमिति। "लघावन्ते" [ फि० पा० २ सू० ४२ ] इत्येतद् बाधित्वा परत्वादिदमेवोचितमित्यभिमानः* । कपोल इति। यद्यप्यत्र "लघावन्ते" इति मध्योदात्तत्वमेवेष्टं तथाप्युं*दाहरणदिग् बोध्या।

मादीनां ( फि० पा० ३ सू० ५३ )। *मलयो मकर इति। मलये " यान्तस्यान्त्यात्पूर्वम् " ( फि० पा० ३ सू० ६२ ) इत्यस्यास्य वा प्रवृत्तौ फले न विशेष इत्युदाहृतम्। मकरः *सञ्ज्ञाभूत उदाहरणम्। "मकरवरुड " [ फि० पा० ३ सू० ५७ ] इत्यत्र तु 'अभिव्यक्तपदार्था ये'*इति न्यायेन सञ्ज्ञाभूतस्य न ग्रहणम्। क्वचित्तु माकर इति पाठः। तत्र स्वार्थेऽण्।

शादीनाञ्च शाकानाम् [ फि० पा० ३ सू० ५४ ] "संप्रोदश्च " [ पा० सू० ५-२-२९ ] इति सूत्रे कैयटे तु दन्त्यादिपाठः। इदञ्चाद्युदात्तत्वविधायकम्। अनेन सर्षपशब्दे आद्युदात्तत्वे प्राप्ते "पान्तानाञ्च गुर्वादीनाम् " [ फि० पा० ३ सू० ५५ ] इति मध्योदात्तत्व-

---

फिट्सूत्रेषु द्वितीयः पादः॥

## ॥ अथ तृतीयः पादः ॥

*अभिमान इति। एकस्यैवोभाभ्यामुदात्तत्वस्यैव प्राप्त्या विरोधाभावेन परत्वादित्यसङ्गतमित्येवमुक्तिः। अस्योदाहरणन्तु 'जघनम्'इति बोध्यम्। *उदाहरणदिगिति। तेनात्र 'कूर्परः' इत्युदाहरणमिति ध्वनितम्। 'रसना' 'वदनम्' इत्यत्र तु "स्वाङ्गशिटाम्" (फि०पा०२सू०२९) इत्याद्युदात्तत्वम्।

मादीनाञ्च (फि०पा०३सू०५३)। मादीनां द्व्यषां द्वितीयमुदात्तम्। अस्योदाहरणं यन्मूले 'मलयः' इत्युदाहृतन्तदन्यथासिद्धमित्याह—*मलय इत्यादिना। *संज्ञाभूतः=शब्दप्रवृत्तिनिमित्तकः। "मकरवरूढ" (फि०पा०३सू० ५७) इत्यत्र तु जातिप्रवृत्तिनिमित्तको गृह्यते। *इति न्यायेनेति। एवमुक्तिः प्रातिपदिकस्य कार्येऽपि प्राचाम्मते त्वस्य प्रवृत्तिमभ्युपेत्य। वस्तुतस्तु जातिविशिष्टस्य शीघ्रोपस्थितत्वाद्वाचकतासम्बन्धेन तद्विशिष्टग्रहणम्। जलजन्तुविशेषे प्रसिद्धोऽयम्।

शादीनां शाकानाम् ( फि०पा०३सू०५४ )। शकारादीनां शाकवाचि-

मित्युक्तं,*तेन द्वितीयपादान्ते इदं सूत्रमिति ध्वनितम्। *फिड्वृत्तौ तु तालव्यादिसूत्रमत्र पादे पठितम्। शतपुष्पेति क्वचित्कोऽपपाठः, *त्र्यच्त्वाभावात्। *कैयटरीत्या आद्युदात्तविधायकत्वे तु तत्रापि प्रवृत्तिरिति ध्वनयितुं त्र्यजपि उदाहृतमित्याहुः। *केचित्तु त्र्यच्पदस्यैकाज्द्व्यच्क्रमेव व्यावर्त्यं*वदन्ति।

पान्तानां गु [ फि० पा० ३ सू० ५५ ]। पान्तानां किम् ? गर्दभः। 'लघावन्ते' इति मध्योदात्तोऽयम्। 'न गर्दभं पुरः' इत्यन्तोदात्तं तु छान्दसम्। गुर्वादीनां किम् ? कुणपः, "कणेः संप्रसारणञ्च" (उ० पा० ३ सू० ४३० ) इति कपन्।

अयुतमिति। *अव्ययपूर्वपदप्रकृतिस्वरे प्राप्ते इदम्।

द्वितीयो वेति। द्वितीयमित्यधिकारादिति भावः। काशीनाना-

---

नां त्र्यषां द्वितीयमुदात्तम्। मूले—'शीतन्या शतपुष्पा' इत्युक्तम्। तत्र शीतन्येत्युदाहरणम्। *तेन=आद्युदात्तत्वविधायकमिति कथनेन। कैयटमतं वृत्तिविरुद्धमित्याह—*फिडिति। *त्र्यच्त्वाभावादिति। उभयोरप्युदाहरणत्वेनोपन्यास इति वादिमतमसङ्गतमित्यनेन कथितम्। *कैयटादिरीत्येति। तन्मते त्र्यषामित्यस्यात्रासम्बन्धादिति भावः। *केचित्त्विति। त्र्यच्पदस्य त्रित्वसंख्याविशिष्टाच्परतया शते पञ्चाशदिति रीत्या चतुरच्कादिष्वपि त्र्यषः सद्भाव इति भावः। *वदन्तीति। अनेनास्वरसः सूचितः। स चोत्तरसङ्ख्यायाः पूर्वसंख्याबाधकत्वस्य 'न हि त्रिपुत्रो द्विपुत्रव्यपदेशं लभते' इत्यादौ सुप्रसिद्धतया एकाच्कद्व्यच्कमेव प्रत्युदाहरणमित्यसङ्गतमिति।

पान्तानाङ्गुर्वादीनाम् ( फि०पा०३ सू० ५५ )। "स्वरविधौ व्यञ्जनमविद्यमानवत्" इत्यस्य सामान्यतः प्रवृत्तिमभ्युपेत्य 'पादपः' इत्युदाहरणम्मूलेऽभिहितम्। हल्स्वरप्राप्तौ स्वरोद्देश्यके विधौ वा तत्प्रवृत्तिरिति सिद्धान्ते त्वस्य 'आतपः' इत्येवोदाहरणम्। 'पादपः' इत्यादौ तु स्वरव्यत्ययो बोध्यः। लौकिके त्वाद्युदात्तत्वमेव "लघावन्ते" (फि०पा०२सू०४२) इत्यनेनेति बोध्यम्। 'पान्तानां किम् ? गर्दभः' इत्यादिग्रन्थस्तु तस्याः परिभाषायाः सामान्यतः स्वरविधौ प्रवृत्तिमभिप्रेत्य।

युतान्य ( फि०पा०३सू०५६ )। *अव्ययपूर्वपदप्रकृतिस्वरे प्राप्ते इति। अयुतशब्दस्य सङ्ख्याविशेषे रूढत्वेऽपि संज्ञाशब्दानां व्युत्पादनमवयवार्थारोपेणेति प्रकृतेऽव्ययपूर्वपदप्रकृतिस्वरप्रवृत्तिः।

मकरवरूढ (फि० पा०३ सू०५७)। अत्रादिरित्यस्योपादानाद् द्वितीयाधिकारबाधो मा भूदित्याशयेन वाशब्दोपादानम्। पवञ्च मकरादौ पर्या-

मिति वक्तव्ये नुडभाव आर्षः । *वरूढ इतीति । *पारेवतः, वितस्ता, इक्षुः, आर्जिः, द्राक्षाकला, उमा, काष्ठा, पेष्ठा, काशीनम् । केचित्तु [१]मकरवरूकुठपारेवतेति काष्ठा पैश्रा इति पठन्ति ।

कर्दमादिराकृतिगणः । अथ इति । केचित्तु "सुगन्धितेजनस्य च" [ फि० पा० ३ सू०६० ] इति सूत्रं पठन्ति, आदिर्द्वितीयो वेति अनुवर्तयन्ति । *अयं क्लीबोऽपि ।

नपः फालान्तानाम् ( फि० पा० ३ सू० ६१ ) । नपुंसकस्य फलशब्दान्तस्यादिर्द्वितीयो वेत्यर्थः । केचित्तु 'ले फो नपः' इति अस्य स्थाने पठन्ति, नबिति नपुंसकं, लशब्दे परे क्लीवस्य फशब्द उदात्तः, फलं सफलमित्युदाहरन्ति । अन्ये तु फाशब्दस्येति व्याख्याय सफालमित्युदाहरन्ति ।

कुलाय इति । "लघावन्ते" ( फि० पा० २ सू० ४२ ) इत्यस्य प्रवृत्तावपि*न कश्चिद्विशेषः । गवयमलयावुदाहार्यौ । कुवलयार्थमन्त्यात्पूर्वग्रहणम् ।

---

येनाऽऽदेर्द्वितीयस्य वोदात्तस्य श्रवणम् । *वरूढ इतीति । अस्यादिरिति शेषः । आदिशब्देन सङ्ग्राह्यन्दर्शयति-*पारेवत इत्यादिना । मकरः

"मकरो यादसि ज्ञेयो निधिराशिप्रभेदयोः ।"

वरूढः-अयं सबलवाची । "वरूढः सबलेऽपि स्यात्" इति । पारावतः "पारावत कलरवे शैले मर्कटातिन्दुके" ।

वितस्ता नदीविशेषे प्रसिद्धोऽयम् । इक्षुः अस्याभिधेयं व्यक्तम् । आर्जिः । अर्जने व्युत्पन्नोऽयम् । द्राक्षाकला द्राक्षायाः कला इत्यर्थः । उमा "उमाऽतसीहैमवतीहरिद्राकीर्तिकान्तिषु ।

काष्ठाः दिशः । काशीनम्, काशीनः । काश्या इन इत्यर्थः ।

*अयमिति । सुगन्धितेजनशब्द इत्यर्थः ।

नपः फलान्ता(फि० पा०३ सू०६१) । सूत्रे लिङ्गवचनस्याविवक्षितत्वान्नप इत्येकवचनान्तस्य फलान्तानामिति बहुवचनान्तेन सामानाधिकरण्यमविरुद्धम् । केचिन्मते 'फ' इति षष्ठ्यर्थे प्रथमा । अन्ये त्विति मते फाशब्दाकारस्य षष्ठ्येकवचने आत इति योगविभागाल्लोपः ।

यान्तस्यान्त्यात्पूर्वम् ( फि० पा० ३ सू० ६२ ) । अत्रादिर्द्वितीयो वेत्यस्यासम्बन्धार्थमन्त्यात्पूर्वमित्युपात्तम् । *न कश्चिद् विशेष इति । एतेनैतस्य सूत्रस्य 'कुलायः' इति नासाधारणम्प्रयोजनमित्यभिहितम् ।

---

[१] मकर, वकुट, पारेवत, इति पाठ आदर्शे ।

आन्तस्य ना [ फि० पा० ३ सू० ६३ ] । आकारान्तस्येत्यर्थः, *'नाना नासादिवासुधा' इत्युदाहरणम् । कचित्तु थान्तस्ये*त्यपि पाठः, थाशब्दान्तस्येत्यर्थः । *केचित्तु तन्त्रेण थशब्दोऽपि गृह्यते, तेन सनाथो देवदत्त इति सिद्धमित्याहुः ।

शिशुमारोदुम्बर( फि० पा० ३ सू०६४ )। शिशुमारेति पाठान्तरम् । उष्ट्रार उष्टारेति रेफवर्जितमपि पाठान्तरम् । चकारेणान्त्यात्पूर्वमिति द्वितीयमिति च*संबध्यते ।

सांकाश्यकाम्पिल्य ( फि० पा० ३ सू० ६५ )। अत्र सूत्रे मण्डूकप्लुत्या*ऽऽदिर्वेति वर्तते, तदाह—द्वितीयमुदात्तं, वेति । *अत एव "पद्दन्" ( पा० सू० ६–१–६३ ) इति सूत्रे "राजन्यसांकाश्यकाम्पिल्यनासिवयदार्वाघाटानामादिर्वाऽन्तो वा" इति कैयटेनोक्तम् । *अत्रान्तशब्देनादेरपेक्षयाऽन्तो द्वितीय एव, अतो न विरोधः। *एवं "सप्तमी सिद्ध" (पा० सू० ६–२–३२)इति सूत्रे 'एषामन्तः पूर्वं वा'इति काशिकायामपि पूर्वशब्देनादिस्तदपेक्षयान्तश्चान्तशब्देन गृह्यते इति बोद्धव्यम् । अन्त्यात्पूर्वमिति तु नानुवर्त्तते सांकाश्यादीनान्त्रयाणाङ्ग्रहणस्य वैयर्थ्यापत्तेः । "यान्तस्यान्त्यात्" (फि० पा० ३ सू० ६२) *इत्येव सिद्धेः । उत्तरसूत्रे आदिर्वेति तु स्पष्टार्थम् ।

---

थान्तस्य ना(फि०पा० ३ सू० ६३) । षष्ठ्यर्थे प्रथमा । अत्र लघुपदस्यासत्त्वमभ्युपेत्योदाहरणान्याह—*नानेत्यादि । *इति पाठ इति । 'थान्तस्य नालघुनी' इति पाठ इत्यर्थः। *के चित्त्विति । एतन्मते थान्तस्येत्यत्र थश्च आश्चेति द्वन्द्वगर्भो बहुव्रीहिः । तत्र आकारघटितं वाक्यं लघुशब्दरहितम्। तेन पूर्वोक्तोदाहरणानामपि सङ्ग्रहः ।

*सम्बध्यत इति । मण्डूकप्लुत्येत्यादिः ।

सांकाश्यकाम्पिल्य (फि० पा० ३ सू० ६५) । *आदिर्वेति वर्त्तत इति । "मकरवरूढ"( फि० पा० ३ सू० ५७ ) इतिसूत्रादादिर्वेति मण्डूकप्लुत्या सम्बध्यत इत्यर्थः । *अत एव=आदिपदसम्बन्धादेव । ननु कैयटोक्तावन्त इत्यप्रकृतस्याभिधानम्, किञ्च द्वितीयमित्यस्यानभिधानेन न्यूनता चेति दोषद्वयमत आह-*अत्रान्तशब्देनेति। काशिकायां विरोधोऽप्येवमेव परिहर्त्तव्य इत्याह—*एवमिति । *इत्येव सिद्धेरिति । न चाधुनापि द्वितीयोऽन्त्यात्पूर्व एवेति त्रयाणां ग्रहणं व्यर्थमिति वाच्यम् । आदेरप्युदात्तत्वसम्पादकत्वेन चारितार्थ्यात् ।

ईषान्तस्य हयादेरादिर्वा (फि० पा० ३ सू० ६६) । अत्रादेरुदात्ताभावेऽ

ईषान्तस्य (फि० पा० ३ सू० ६६)। हयिति (१)हलां सञ्ज्ञा। *पक्षेऽधिकाराद् द्वितीयम् । ईषान्तस्य किं ? *मञ्जूषा । हलादेः किम् ? *अम्बरीषम् ।

उशरिदारोर (फि० पा० ३ सू० ६७)। *अत्र हृदयग्रहणं "स्वाङ्गानामकुर्वादीनाम्" (फि० पा० ३ सू० ५२) इति द्वितीयोदात्तत्वं बाधितुं, *देवरग्रहणं लघावन्त इत्यस्या*नित्यत्वज्ञापनार्थम्। *केचित्तु घृतादिषु देवरशब्दः पठ्यते, एवञ्च पक्षे आद्युदात्तार्थङ्ग्रहणमित्याहुः। अत्र वेति नानुवर्त्तते इति *केचित् ।

महिष्यषा(फि० पा० ३ सू० ६८)। *मेत्यादि किं ? *सिंही

---

न्तोदात्तत्वम् "फिषः"( फि० सू० १-१ ) इत्यनेन प्राप्तमपि न किन्तु द्वितीयस्य। एतत्सूत्राव्यवहितप्राक्सूत्रे द्वितीयमित्यस्य सम्बन्धात् । न च प्रागीषादिति प्रागभिहितमिति कथमत्र द्वितीयमित्यस्य सम्बन्ध इति वाच्यम्। तत्र प्रागीषादिति नापूर्वङ्किन्तु प्रकृतसूत्रे विभिन्नार्थकादिपदोपादानेन च तद्घटितवाक्ये द्वितीयमिति न सम्बध्यते इत्याशयकमेव वाग्रहणेनादेरुदात्ताभावे तु विरोधाभावेन द्वितीयमित्यस्य सम्बन्धः स्यादेवेत्याशयात्। अत एवाह—*पक्षेऽधिकारादिति। *मञ्जूषेति । अत्र "ईषान्त" (फि० पा० ३ सू० ६६) इत्यनेन प्राप्ताद्युदात्ताभावे "मादीनाञ्च"(फि० पा० ३ सू० ५३) इति द्वितीय उदात्तः। *अम्बरीषमिति । अत्राद्युदात्ताभावे "लघावन्ते"( फि० पा० ३ सू० ४२ )इति सूत्रेण तृतीयस्योदात्तत्वम्।

उशरिदारोर ( फि० पा० ३ सू० ६७ ) । अत्रादिरित्यनुवर्त्तते । वेति तु निवृत्तम् । हृदयशब्दोपादानस्य प्रयोजनमाह—*अत्र हृदयेति । *देवरग्रहणमिति । प्रकृतसूत्रे देवरपदोपादानाभावेऽप्यादेरुदात्तत्वन्द्वयोर्लघ्वोः परत उपस्थितस्य गुरोरेकारस्य तेनैव सिद्धमिति भावः। *अनित्यत्वज्ञापनार्थमिति। तत्फलन्तु कृपालुशब्दे गुरोर्द्वितीयस्योदात्ताभावेऽन्तोदात्तत्वम्फिट्सूत्रेण भवति। *केचित्त्विति। एतन्मते प्रकृतसूत्रे यदि देवरशब्दो न स्यात्तदा त्वन्तोदात्तत्वमेव "घृतादीनां च" (फि० पा० १ सू० २१) इत्यनेन स्यात्। देवरशब्दोपादानसत्त्वे तु घृतादिपाठसामर्थ्यात्पक्षे प्रकृतमाद्युदात्तत्वं भवति । अथ वा वेत्यनुवर्त्तते। एतदभावे तत्र पाठादन्तोदात्तत्वमिति भावः । *केचिदिति । मुख्या इत्यर्थः।

महिष्यषाढयोः ( फि० पा० ३ सू० ६८ ) । जाया चेष्टका च जायेष्टके जायेष्टकयोराख्येति समासः। द्वन्द्वान्ते श्रूयमाणस्याख्याशब्दस्य प्रत्येकं सम्बन्धः। *मेत्यादि किमिति। महिष्यषाढयोरिति किमर्थमित्यर्थः। *सिंहीति।

---

(१)'हलन्तसंज्ञा' इति मुद्रिते पाठः।

असि । *जेत्यादि किं? महिषी । *अषाढा नक्षत्रम् ॥ इति तृतीयः पादः ।

अथ चतुर्थः

शकटिशक (फि०पा०४सू०६९) । *अत्र "उभे वनस्पत्यादिषु युगपत्" (पा० सू० ६-२-१४०) इत्यादिसूत्रस्थयुगपद्ग्रहणबोधितानेकोदात्तानां युगपन्न समावेश इत्यर्थानुवादकं पर्यायेणेति । *तत्फलन्तु "अनुदात्तं पदमेकवर्जम्" [ पा० सू० ६-१-१५८ ] इत्यादेरेतद्विषयेऽपि प्रवृत्तिः । लिङ्गविशिष्टपरिभाषालब्धार्थानुवादकं शकटी इति ।

गोष्ठजस्य ( फि० पा०४ सू० ७० ) । ब्राह्मणवाचकस्य गोष्ठजशब्दस्येत्यर्थः ।

पारावत इति । *अत्र वशब्दो नोदात्तः ।

कपिकेशह ( फि० पा० ४ सू० ७३ ) । *भाषायां बहुव्रीहित्वात्पूर्वपदप्रकृतिस्वरः । तत्र हरिशब्द इनन्तत्वादाद्युदात्तः *कपिरन्तोदात्तः । केचित्तु निरुदकादेराकृतिगणत्वादनयोरन्तोदात्तत्वमाहुः ।

न्यङ्स्व ( फि० पा०४ सू० ७४ ) । "न्यधी च" ( पा० सू०

---

इयमपि सिंहस्य या जाया तदाख्येति भावः । जायाशब्दस्यात्र भार्यापरत्वात् । *जेत्यादिकिमिति । 'महिषी' इति राजपत्न्यां रूढोऽयं न तु भार्यासामान्यवाची यो जायाशब्दस्तद्बोध्यबोधक इति भावः । महिषी जायेति मूले महिषीशब्दस्तु जायापर्यायवाची । 'अषाढा उपदधाति' इत्यत्राषाढाशब्द इष्टकावाचकः । प्रत्युदाहरणे तु नक्षत्रवाचकस्तदाह-*अषाढेति । इति फिट्सूत्रेषु तृतीयः पादः ॥

## अथ चतुर्थः पादः

शकटिशकट्योरक्षरम् (फि० पा० सू० ४-६९) । पर्यायेणेत्यस्य प्रयोजनमाह—*अत्रोभ इति । युगपद्ग्रहणबोधितेत्यस्य इत्यर्थेत्यत्रार्थेऽन्वयः । इति पदेन अनुकरणभूतसमुदायस्य परामर्शः । 'अस्यवामीयम्' इतिवद्विभक्तेरलुक् । *तत्फलम्=पर्यायेणेत्येतत्फलम् । *अनुवादकमिति । वस्तुतस्तस्याः परिभाषाया अनित्यत्वज्ञापनार्थमिति तत्त्वम् । मूले—अन्यत्रेति । ब्राह्मणनामधेयातिरिक्त इत्यर्थः । तेन यौगिकस्य लाभः ।

पारावत ( फि० पा० ४ सू० ७१ ) । ब्राह्मणनामधेयस्येति अत्र न सम्बध्यते । उपोत्तमवर्जमिति यदुक्तन्तत्फलमाह—*अत्र वशब्द इति ।

कपिकेश ( फि०पा०४ सू०७३ ) । एतयोश्छन्दसि अक्षरमक्षरम्पर्यायेणोदात्तम् । अच्छन्दसि स्वरप्रवृत्तिमाह—*भाषायामिति । *कपिरन्तोदात्त इति । "इगन्तानाञ्च द्व्यषाम्" ( फि० पा० २ सू० ४९ ) इत्याद्युदात्तत्वं प्राप्तमपि न भवति घृतादित्वात् ।

६-२-५२ ) इतिपूर्वपदप्रकृतिस्वरे कृते यणि "उदात्तस्वरितयोः" ( पा० सू० ८-२-४ ) इति सिद्धे न्यङ्ग्रहणं*तदनुवादकम् ।

तिल्यशिक्य (फि०पा०४सू०७६) । केचिदत्र मर्यशब्दं पठन्ति, तदयुक्तं, 'तं त्वा हवन्तमर्त्याः' इत्यादावाद्युदात्तदर्शनात् । "तद्युक्तात्कर्मणः" [ पा० सू० ५-४-३० ] इति*सूत्रस्थवार्तिकेन यति "यतोऽनावः" ( पा० सू० ६-१-२१३ ) इत्याद्युदात्तत्वम् । यत्तु धान्यस्थाने धन्यं पठन्ति, तन्न । "पत्यावैश्वर्ये" ( पा० सू० ६-२-१८ ) इति सूत्रे धान्यमन्तस्वरितमिति वृत्तिमुपादायास्यैव सूत्रस्य हरदत्तेनोपन्यासात्,*प्रयुज्यते च—'धान्यमसि धिनुहि' इति ।

बिल्वभक्ष्य ( फि० पा० ४ सू० ७७ ) । भाषायां भक्ष्यवीर्यौ आद्युदात्तौ, वीरेषु साधुरिति यत्, भक्षयतेर्ण्यन्तादचो यत् , बिल्वः*स्वरितान्तोऽन्तोदात्तो वा । केचित्तु बिल्ववत्स्तेति पठन्ति ।

अनुच्चानीति । *सर्वानुदात्तानीत्यर्थः । अत्र सूत्रे छन्दसीति नानुवर्त्तते "आद्युदात्तश्च" [ पा० सू० ३-१-३ ] इति सूत्रस्थ*भाष्यप्रामाण्यात् ।

---

न्यङ्स्वरौ ( फि० पा०४ सू० ७४ ) । *तदनुवादकम्=उक्तरीत्याऽसिद्धस्य स्वरितस्यानुवादकम् ।

तिल्यशिक्य( फि०पा० ४ सू० ७६ ) । स्वरिताविति वचनविपरिणामेन सम्बध्यते । *सूत्रस्थवार्तिकेनेति । "नवसूरमर्त्तयविष्ठेभ्यो यत्" इति वार्तिकेन यत् स च स्वार्थे । *प्रयुज्यते चेति । अन्तस्वरितो धान्यशब्दः प्रयुज्यते इत्यर्थः ।

*स्वरितान्तोऽन्तोदात्तो वेति । "कर्दमादीनाञ्च"(फि०पा० ३ सू० ५९) इत्यनेनाद्युदात्ते तदेकवाक्यतापन्नशेषनिघातेनान्त्यस्यानुदात्तत्वे "उदात्तादनुदात्तस्य" ( पा० सू० ८-४-६६ ) इति स्वरितः । आद्युदात्ताभावे त्वन्तोदात्तः फिट्स्वरेण ।

"त्वत्वसमसिम"( फि०पा० ४ सू० ७८ ) इतिसूत्रे विशेषानुपादानादाह—*सर्वानुदात्तानीत्यर्थः । *भाष्यप्रामाण्यादिति । तत्र हि—प्रत्ययाद्युदात्ताद्धातोरन्तः । प्रत्ययाद्युदात्ताद्धातोरन्त इत्येतद्भवति विप्रतिषेधेन । प्रत्ययाद्युदात्तत्वस्यावकाशो यत्राऽनुदात्ता प्रकृतिः—समत्वं, सिमत्वम् । धातोरन्त इत्यस्यावकाशो यत्राऽनुदात्तः प्रत्ययः—पचति, पठतीति । इहोभयम्प्राप्नोति—गोपायति, धूपायति । धातोरन्त इत्येतद्भवति विप्रतिषेधेन" इत्युक्तम् । अत्र प्रत्ययाद्युदात्तत्वस्यावकाशप्रदर्शनावसरे लौकिके समत्वं सिमत्वमिति प्रयोगेऽनुदात्तत्वप्रदर्शनेन प्रकृते छन्दसीति न सम्बध्यत इति लभ्यते ।

निपाताश्च (फि०पा०४सू०८०) । *शुक्लीकरोतीत्यादौ च्व्यन्तानां निपातत्वेऽपि च्वेश्चित्त्वादन्तोदात्तत्वम् ।

उपसर्गाश्चाभिवर्जम् ( फि० पा० ४ सू० ८१ ) । आद्युदात्ता इत्यर्थः । अभिवर्जं किम् ? *अभ्यभिहि, अभिराममस्थात् । *इदं सूत्रं व्यर्थम् । उपसर्गाणां निपातत्वेनैव सिद्धेः । न च कर्मप्रवचनीयानां *तदभावज्ञापनायेदम् । तेषामप्याद्युदात्तस्येष्टत्वात् । *अभिश्चैवमादिषु पाठ्य इति बहवः । अत एव'मानो मर्त्ता अभिद्रुहन्'इति मन्त्रे एवमादीनामन्त इति वेदभाष्यकृद्भिरुक्तम् स्पष्टश्चेदं उपसर्गसंज्ञासूत्रे भाष्ये । केचित्तु उपसर्गस्यैवाभेराद्युदात्तत्वनिषेधो यथा स्यात् कर्मप्रवचनीयस्य तु निपातत्वाद्भवत्येवेत्येतदर्थमिदं सूत्रमित्याहुः ।

*एवादीनामन्तः ( फि० पा० ४ सू० ८२ ) । अहशश्वच्छब्दौ *गणे आद्युदात्तौ निपात्यौ । आदहस्वधामनु काह मित्रावरुणा शश्वदिन्द्र योऽप्रथद्भिरिति प्रयोगदर्शनात् । तच्चिन्त्यमिति । चिन्ताबीजन्तु चिन्त्यम् । *सहशब्दस्यापि निपातत्वादाद्युदात्तत्वमिति "सहस्य सः"(पा० सू० ३-४-२०)इति सूत्रे आकरात् । *प्रयुज्यते च 'सह वै देवानाम्'इति । *'ते पुत्र सूरिभिः सह'इत्यत्र तु छान्दसमन्तोदात्तत्वमिति केचित् ।

---

निपाता आद्युदात्ताः (फि० पा० ४ सू० ८७) । च्व्यन्तेऽतिप्रसङ्गं वारयति—*शुक्लीत्यादिना ।

*अभ्यभिहीति । अत्राभिशब्दस्याद्युदात्तत्वाभावेऽन्तोदात्तत्वे सति यणादेशे उदात्तस्थानेऽयं यणिति द्वितीयाभिशब्दाद्याकारस्य स्वरितत्वं भवति । *इदं सूत्रमिति । "उपसर्गाश्चाभिवर्जम्"(फि० पा० ४ सू० ८१) इत्येतत्सूत्रघटकमुपसर्गाश्चेतिं पदमित्यर्थः । *तदभावज्ञापनाय=आद्युदात्तत्वाभावज्ञापनाय । एवमभिवर्जमित्यपि न वाच्यमित्याह—*अभिश्चैवमादिषु पाठ्य इति । एवञ्च निपातत्वात्प्राप्तमप्याद्युदात्तत्वम् "एवादीनामन्तः"इत्यनेन बाधिष्यत इति भावः । के चित्त्विति मते त्वभेरेवमादिषु न पाठ इति बोध्यम् ।

एवादीनामिति पाठं व्याचष्टे-*एवादीति । *गणे=चादिगणे । मूले-तच्चिन्त्यमिति । सहशब्दस्य एवादिषु पाठादन्तोदात्तत्वस्य न्यायसिद्धत्वात् 'ते पुत्रसूरिभिः'इत्यत्रान्तोदात्तदर्शनाच्च । चिन्ताबीजं चिन्त्यमिति यदुक्तं तत्र साधकमाह—*सहशब्दस्यापीति । ननु सहशब्दस्य निपातत्वेऽपि परत्वाद्विशेषविहितत्वाच्चान्तोदात्तो भविष्यतीत्यत आह—*प्रयुज्यते चेति । आद्युदात्तः प्रयुज्यत इत्यर्थः । क्वचिदस्यान्तोदात्तत्वन्तु दृश्यमानन्तु छान्दसमित्याह—*ते पुत्रेत्यादिना ।

"वाचादीनामुभौ" (फि० पा० ४ सू० ८३)इति सूत्रे उदात्ता-वित्य*नुवृत्तिप्रदर्शनम् । इह *त्रिसूत्र्यामादिशब्दः*प्रकारे इत्याहुः ।

चादयोऽनु ( फि० पा० ४ सू० ८४ ) । निपाता इति वर्त्तते । नेह*पशुर्नेति । आद्युदात्तत्वापवादोऽयम् ।

यथेतिपा ( फि० पा० ४सू० ८५ ) । *अनुदात्त इति वर्तते । 'शाकिनं वचो यथा' इत्यादौ छान्दसत्वात् नानुदात्तः । प्रकारा-दिति । "प्रकारे गुणवचनस्य" ( पा० सू० ८-१-१२ ) इत्यादि द्वि-त्वे इत्यर्थः । सिद्धान्तोदात्तत्वा*नुवादकम् ।

"शेषमिति"*प्रकारादिद्विरुक्तादन्यद् द्विरुक्तमित्यर्थ इत्येके।*"अनु-दात्ते च" (पा०सू०८-१-३)इत्यस्या*नुवादकमेतत् । *"अनुदात्तं पदमे-कवर्जम्"(पा०सू० ६-१-१५८)इत्यस्यानुवादकमित्यन्ये । इति शान्तन-वेति । *इदं "मात्रोपज्ञम्"(पा०सू० ६-२-१४) इति सूत्रे हरदत्तग्रन्थे स्प-

---

वाचादीनामुभौ ( फि० पा० ४ सू० ८३ ) । अत्र सूत्रे उदात्तावित्यस्य पाठदर्शनेन तस्य सूत्रघटकत्वमिति भ्रमनिवृत्तये आह—*अनुवृत्तिप्रदर्शनमिति । प्रकरणादेवोदात्तावित्यस्य लाभात् । "वाचादीनाम्"(फि०पा० ४ सू० ८३) इत्यत्र द्विरुक्तानां वाचादीनान्निर्देशः । *त्रिसूत्र्याम्="वाचादीनामुभौ" ( फि०पा ४ सू० ८३ ) "चादयोऽनुदात्ताः" ( फि० पा० ४ सू० ८४ ) । एवम्पूर्वपठितम् "एवादी-नामन्तः"(फि०पा० ४ सू० ८२) इति इतित्रिसूत्र्याम् । यदि पूर्वसूत्रेऽप्यादिशब्दः प्रकारे तर्हि तत्सूत्रव्याख्यानावसर एव कुतो नेत्थं व्याख्यातमिति चेत् ? शृ-ङ्गग्राहिकान्यायेनेति गृहाण । *प्रकारे=सादृश्ये न तु गणनिर्देश इत्यर्थः । सादृश्यञ्च निपातत्वेन ।

चादयोऽनु ( फि०पा०४ सू० ८४ ) । यदत्र निपातपदानुवृत्तिरुक्ता तत् फलमाह—*पशुर्नेतीति । अत्र पशुशब्दो न निपात इति नानेनानुदात्तत्वम् ।

यथेतिपा(फि०पा० ४ सू० ८५) । आद्युदात्ता इत्यस्य "चादयोऽनुदा-त्ताः" (फि०पा० ४ सू० ८४) इत्यत्र बाधदर्शनात्प्रकृतेऽनुदात्तपदस्यैवानुवृत्तिरि-त्याह—*अनुदात्त इतीति । *अनुवादकमिति । कर्मधारयवद्भावे सति "समा-सस्य"(पा० सू० ६-१-२२३)इति सूत्रेणान्तोदात्तस्य सिद्धत्वादनुवादकमित्यर्थः । शेषमिति व्याचष्टे—*प्रकारादीति । *अनुवादकमिति । "तस्य परमाम्रेडितम्" (पा ०सू० ८-१-२ ) "अनुदात्तञ्च" ( पा० सू० ८-१-३ ) इत्यनेनानुदात्तत्वस्य सिद्धत्वादनुवादकमित्यर्थः । *अनुदात्तम्पदमित्यस्येति । नेदं वचनम्प्रकारादि-द्विरुक्तावित्यस्य शेषभूतङ्किन्तु सर्वविशेषविधायकवचनशेषभूता या परिभाषा तत्सिद्धानुदात्तत्वानुवादकमित्यर्थः । शान्तनवाचार्यप्रणीतेषु सूत्रेष्विति दर्शनेन शन्तनोराचार्यस्य यदपत्यन्तस्य प्रणेतृत्वमिति भ्रमनिवारणायाह—*इदम्मात्र

इम् । शन्तनुराचार्यः प्रणेतेति "द्वारादीनाञ्च"[पा०सू० ७-३-४]इति सूत्रे हरदत्तः । इति*फिट्सूत्राणि समाप्तानि ।

अथ प्रत्ययस्वराः

कर्त्तव्यमिति । *तव्योऽयं, *तव्यत्तु तित्त्वात्स्वरितः । यद्यपि तव्यस्यापि आद्युदात्ते शेषनिघाते कृते "उदात्तादनुदात्तस्य"(पा० सू० ८-४-६६)इति *स्वरितो भवत्येव*तथापि तस्यासिद्धत्वात्तन्निमित्तकशेषनिघाताप्रवृत्त्या तित्त्वनिमित्तके तत्प्रवृत्त्या महान् फले विशेषः ।

युच्छतीति । युच्छ प्रमादे । प्रचय एकश्रुतिः ।

चितः सप्रकृतेरिति । *अत्रार्थेऽकचश्चित्त्वं ज्ञापकम् । *अन्यथा*तस्यैकाच्त्वात् प्रत्ययाद्युदात्तत्वेनैव सिद्धे तद् व्यर्थं स्यात् । हस्तः प्रमाणेल इति लुक् । अत्र चित्स्वरो न । 'अन्तरङ्गानपि' *इति न्यायात् । *प्रत्ययलक्षणन्तु न प्रत्ययस्यासाधारणरूपाश्रयणाभावात् कुण्डिनच्प्रत्य-

इति । तथा च शन्तनुशब्दात् "तेन प्रोक्तम्" ( पा० सू० ४-३-१०१ ) इत्यण् । तदन्तस्याचार्यप्रणीतशब्देन कर्मधारयः । आचार्यश्च शन्तनुरेवेत्यर्थाल्लभ्यते । नन्वेवं शन्तनुशब्दस्याचार्यशब्देन कर्मधारयङ्कृत्वा तदन्तस्य तृतीयान्तस्य प्रणीतशब्देन समासे विवक्षितस्यार्थस्य लाभसम्भवे किमर्थम्प्रोक्तार्थाणन्तस्याचार्यप्रणीतशब्देन समासनिर्देश इति चेत्? "प्रियतद्धिता दाक्षिणात्याः"(भा०इ०) इति "लौकिकवैदिकेषु कृतान्तेषु"(भा०इ०) इत्यत्र भाष्यकृतोक्तेर्दर्शनेन स्वस्यापि दाक्षिणात्यत्वसूचनायेति गृहाण । *फिट्सूत्राणि समाप्तानीति । फिषां संस्कारोपयुक्तानि सूत्राणि सम्यगाप्तानि व्याख्यानेन व्याप्तानीत्यर्थः ॥

इति शान्तनवाचार्यप्रणीतेषु फिट्सूत्रेषु तुरीयः पादः ॥

## अथ प्रत्ययस्वराः

अथ प्रत्ययस्वराः । व्याख्यायन्त इति शेषः । मूले—अग्निरिति । अङ्गेर्निः स चाद्युदात्तः । उणादिप्रत्ययेष्वपीदम्प्रवर्त्तेत इत्याशयेनास्योपादानम् । वस्तुतस्तु फिट्सूत्रेणान्तोदात्तत्वेनास्य सिद्धिरत आदौ 'कर्त्तव्यम्'इत्यस्यैव विवरणम् । *तव्योऽयमिति । "तव्यत्तव्यानीयरः" ( पा० सू० ३-१-९६ ) इति सूत्रनिर्दिष्टो द्वितीयः प्रत्ययः । प्रथमस्य त्यागस्तु तस्य सूत्रान्तरेण संस्कारात्, तदाह-*तव्यत्त्विति । *स्वरितो भवतीति । एवञ्च तित्त्वप्रयुक्तो न विशेष इति शङ्का । विशेषमाह—*तथापीति । *अत्रार्थे=सप्रकृतेरित्यर्थे । *अन्यथा=सप्रकृतेरित्यर्थाभावे । *तस्य=अकचः । ककारादकार उच्चारणार्थोऽत एव'पचतकि'इत्यस्य सिद्धिः । *इति न्यायादिति । एवञ्चाकृते एव स्वरे लुक् । पुनस्तु न स्वरप्रवृत्तिः प्रत्ययलक्षणेनेत्याह—*प्रत्ययलक्षणन्त्विति । नन्वेवं 'चतुःकरोति'

यस्यापि (१)चित्त्वात् अनुबन्धलक्षणे स्वरे प्रत्ययलक्षणाभावस्य पूर्वमुक्तेश्च। हस्तशब्दश्च स्वाङ्गशिटामित्याद्युदात्तः। *चतुःकरोतीत्यादौ "रात्सस्य" (पा० सू० ८-३-२२) इत्यस्यासिद्धत्वात्सुजस्त्येव।

अन्यके इति। अकच्, *ततः पर उदात्तः। एवं यके तकादिष्वत्रापि बोद्ध्यम्।

तद्धितस्य कित इति। एकं सूत्रम्। "गोत्रे कुञ्जादिभ्यः"(पा० सू० ४-१-९८)इति सूत्रे भाष्ये 'योगविभागः कर्त्तव्यः' इत्युक्तेः; *तदनुसारेण व्याचष्टे—चितस्तद्धितस्येति। ञित्स्वरबाधनेति। *च्फञश्चित्त्वन्तु "व्रातच्फञोः" (पा० सू० ५-३-११३) इत्यादौ विशेषणार्थे सावकाशम्। अन्यथा*ऽऽश्वायनादपि ञ्यः स्यादिति भावः। ञित्त्वमपि वृद्ध्यर्थं सावकाशम्। ततश्चित्स्वरं बाधित्वा परत्वात् ञित्स्वरः प्राप्तोऽनेन बाध्यत इति तात्पर्यम्। कौञ्जायना इति। कुञ्जात् च्फञि तदन्तात् "व्रातच्फञोः" (पा० सू० ५-३-११३) इति ञ्ये ञ्यादीनान्तद्राजत्वाद् बहुषु लुक्।

कितः। तद्धितस्येतिकिम्? चक्रतुः। कित्त्वातिदेशादन्तोदात्तत्वं*माभूत्। यत्तु प्रत्युदाहरन्ति—इत्यः, *क्यप्, पित्त्वस्य तुकि कित्त्वस्य गुणनिषेधे सावकाशत्वात् पित्स्वरं बाधित्वा परत्वादयं स्यादिति। तन्न, क्यप्चेदन्तोदात्तस्तदा व्रजयजोर्भावे क्यबेवे*ति नियमेन

---

इत्यत्र "द्वित्रिचतुर्भ्यः" (पा० सू० ५-४-१८) इति विहितसुचो लोपात् "चितः" [पा० सू० ६-१-१६३] इत्यस्य प्रवृत्तिर्न स्यादित्यत आह—*चतुरिति।

*ततः परः=अकचः परोऽकारः।

*तदनुसारेण व्याचष्टे=योगं विभज्य व्याचष्ट इत्यर्थः। ननु योगविभागाभावेऽपि च्फञश्चित्त्वसामर्थ्यान्न ञित्स्वरो बाधको भविष्यतीत्यत आह—*च्फञश्चित्त्वमिति। *आश्वायनादपीति। अत्र हि "अश्वादिभ्यः फञ्"( पा० सू० ४-१-११० ) इति फञ्। *मा भूदिति। किन्तर्हि प्रत्ययाद्युदात्तमेव भवति। *क्यबिति। "एतिस्तुशास्वृदृजुषः" ( पा० सू० ३-१-१०९ ) इति क्यप्। *इति नियमेनेति। यदि क्यपोऽनेन सूत्रेणोदात्तत्वस्य प्राप्तिवारणाय "तद्धितस्य" ( पा० सू० ६-१-१६४ ) इति ब्रूषे तदा "भन्ने वृषेषपच" ( पा० सू० ३-३-९६ ) इति सूत्रादुदात्त इत्यस्य "व्रजयजोः"(पा० सू० ३-३-९८) इति सूत्रेऽनुवृत्त्या व्रजयजोर्भावे यः क्यप्स एवोदा-

---

(१)'चितः सत्त्वात्' इत्यादर्शपुस्तके पाठः।

वारयितुं शक्यत्वादित्याहुः । कितः किम् ? *अविदूसम् ।

तिसृभ्योजसः(पा.सू.६-१-१६६) । *बहुवचनं प्रयोगभेदेन,शब्दबाहुल्यात् "ऋन्नेभ्यः"(पा०सू०४-१-५)इतिवत् । *यत्तु वार्तिककृतोक्तं(१) तिसृभ्योजस्ग्रहणानर्थक्यमन्यत्राऽस्याप्राप्तेः बहुवचनविषयत्वादस्यैकवचनद्विवचनयोरभाव एव शसि उदात्तयण इति सिद्धम् । अन्या हलादयस्तत्र "षट्त्रि" इति "झल्युपोत्तमम्" इति च सिद्धमिति । तन्न, अतितिसृणावित्यादिष्वाद्युचेः फलस्य सत्त्वात् । तदुक्तं भाष्यकृता "उपसमस्तार्थमेके जसो ग्रहणमिच्छन्ति अतितिसृौ" इति । "तस्माद्"(पा०सू०१-१-६७)इति परिभाषासत्त्वाद्विहितविशेषणासम्भव इत्याशयः । *अनेन पूर्ववार्त्तिककृतं प्रत्याख्यानमसङ्गतमि*ति सूचितम् । *अतितिसृशब्दे "अतेरकृत्पदे" इत्यत्र गतेर्धातुलोपे वाच्यमि*त्युक्तेरन्तोदात्तः । तस्य यणि "उदात्तस्वरितयोः" इत्यनेनौकारः स्वरितः । तिस्र इति । अन्तोदात्तत्रिशब्दस्यादेशस्तिसापि *तथा, तस्य "अचिरः"इति कृते "उदात्तस्वरितयोर्यणः"इति जसः स्वरितत्वं प्राप्तमनेन

---

त्त इति नियमः स्वीकार्योऽन्यथा 'इत्यः' इत्यत्रैव तस्याप्युदात्तत्वसिद्ध्योदात्तग्रहणानुवृत्तिर्व्यर्था स्यात् । एवञ्च तेनैव नियमेन "एति"(पा० सू० ३-१-१०९ )इत्यादिविहितस्य क्यप उदात्तत्ववारणे सिद्धे "तद्धितस्य" ( पा० सू० ६-१-१६४ ) इत्यस्य नेदम्प्रत्युदाहरणमिति भावः *अविदूसमिति । अवेर्दुग्धे दूसप्रत्ययः । "तिसृभ्यः" ( पा० सू० ६-१-१६६ ) इति सूत्रे तिसृशब्दस्य शब्दस्वरूपपरतया बहुवचनासङ्गतिरत आह—*बहुवचनमिति । वार्त्तिककृदुक्तं जस्ग्रहणानर्थक्यं दूषयन् तस्य सार्थक्यमाह—*यत्त्वित्यादिना । *अनेन= 'उपसमस्तार्थमेके' इति कथनेन । *इति सूचितमिति । यत्र यत्र पञ्चमीनिर्देशस्तत्र तत्र "तस्मात्" ( पा० सू० १-१-६७ ) इति परिभाषा प्रवर्त्तते । विहितविशेषणतया व्याख्यानञ्च भाष्यकारादिव्याख्यानं यत्र साधकं तत्रैवेत्यप्यस्मादेव भाष्यात्कल्प्यते । प्रकृतसूत्रे जस्ग्रहणे कृते सत्येतत्सूत्राप्रवृत्तौ अतितिसृौ इत्यादौ स्वरप्रवृत्तिमाह—*अतितिसृशब्द इति । *इत्युक्तेरिति । यद्यपि यथाश्रुतसूत्रसत्त्वेऽप्यतितिसृशब्दावयवस्य तिसृशब्दस्याकृदन्ततयाऽतिशब्दात्परस्य तिसृशब्दस्य स्वरः सिद्धस्तथापि वक्ष्यमाणरीत्या गतेर्धातुलोप इत्यस्यावश्यकतया तादृशन्यासेऽप्यत्र स्वरः प्राप्नोतीत्याशयेनेत्थमुक्तिः । *तथा=अन्तोदात्तः ।

"सावेकाचस्तृतीयादिर्विभक्तिः"(पा०सू०६-१-१६८)इति सूत्रस्य सुपरकं यदेकाज्रूपं न हि ततः परा तृतीयादिर्विभक्तिः सम्भवतीति यथाश्रुतार्थो न घटतेऽतो नैतत्सावेकाजिति विशेषणङ्किन्तूपलक्षणतया तद्विवक्षितमित्याशयेना-

---

(१)"औङः श्यामित्यादौ ओत्वारोपवचनविषयत्वात्" इत्यादर्शपुस्तके पाठः

बाध्यते ।

सावेकाचः ( पा० सू० ६-१-१६८ ) । *सौ परे यदेकाज्रूपं ततः परेत्यर्थः । सौ य एकाच् तस्मात्परेत्यर्थे निष्पन्ने *ऽर्थवत्परिभाषया प्रकृतेऽर्थवत एव सम्भवाच्च *सौ यदर्थविशिष्टमेकाज्रूपं तदर्थविशिष्टात्तदेकाज्रूपात्परा विभक्तिरिति फलितम् । राज्ञेति । *राजन्शब्दः कनिनन्तत्वादाद्युदात्तः । न च एकाचो विहिता या विभक्तिरित्यर्थान्न दोषः । विहितविशेषणे प्रमाणाभावात् । एकाज्ग्रहणव्यावर्त्यमप्येतदेव । तदभावे हि सौ वर्त्तमानाच्छब्दात्परेत्यर्थः स्यात् । *सावित्यस्य द्वाभ्यामित्यादिर्व्यावर्त्यं स्यात् । *सप्तमीबहुवचनमिति किं ? याता याभ्याम् । प्रथमैकवचनग्रहणे तु तत्र यानिति रूपं, संयोगान्तलोपस्यासिद्धत्वेन यान्त् इति वा । न हि तस्मादत्र शस्विभक्तिः । *विकृतिग्रहणेन प्रकृतेर्ग्रहणात् *आगमसहितग्रहणेन केवलस्याग्रहणाच्च *तन्मध्यपातितन्यायोऽपि केवलेन विशिष्टग्रहणं बाधयति, (१)न त्वेतावता प्रकृते इष्टसिद्धिः । न च रूपविवक्षामकृत्वा सौ *य एकाच् *ततः परेत्यर्थ एवास्त्विति वाच्यम् । दोःशब्दः सौ एकाच् तस्य दोषन्नादेशे *ततः परा विभक्तिरुदात्ता स्यात् , इष्यते तु मध्योदात्तं दोषभ्यामिति । अयं सप्तमीबहुवचनपक्षेऽपि रूपविवक्षाऽभावे दोषः । अस्ति च दोःषु इत्यत्र य एकाच् त-

-----

द्—*सौ परे यदेकाज्रूपमिति । दृष्टमित्यस्याध्याहारः । यदिति शब्दस्वरूपापेक्षया नपुंसकनिर्देशः । उपलक्षणीभूतधर्माश्रयणफलन्तु 'राज्ञा' इत्यत्र विभक्त्युदात्तत्वव्यावृत्तिरिति स्फुटस्मूलं । तच्चानुपपन्नम् । 'राजसु' इत्यत्र जेत्यस्मादेकाचः सौ दर्शनेन ततः परत्वं 'राजभ्याम्' इत्यादौ सम्भवत्येवेत्यत आह—*अर्थवत्परिभाषयेति । एवञ्चार्थवत्परिभाषकवाक्यतया यादृशो वाक्यार्थो भवति तमाह— *सौ यदर्थविशिष्टमिति ।

'राज्ञा' इत्यत्र स्वरप्रवृत्तिमाह—*राजन्शब्द इति । ननु एकाज्ग्रहणाभावे सावित्यव्यावर्त्तकमत आह—*सावित्यस्येति । सावितिप्रथमैकवचनबोधकमेवास्त्वित्याशयेन शङ्कते—*सप्तमीत्यादीति । प्रथमैकवचनस्य सुपदेन ग्रहणे सावित्यस्य व्यावर्त्यं याद्भिरिति भविष्यति । *विकृतिग्रहण इति । प्रथमैकवचनपरकं यानिति यान्त् इति वा तद्विकृतिरूपमेवेति भावः । *आगमसहितेति । यानित्यस्य नुमागमविशिष्टत्वात् । लौकिकेन तन्मध्यपतितन्यायेनासिद्धिमाह—*तन्मध्येति । *य एकाच्—यः शब्द एकाजित्यर्थोऽस्त्विति भावः । *ततः परेति । 'दोष्णा' 'दोषभ्याम्' इत्यत्र प्रथमैकवचने यः शब्द

-----

(१) 'नह्येतावता' इति आदर्शपुस्तके पाठः ।

स्मात्परा विभक्तिरिति। *नन्वेवमपि सप्तमीबहुवचने दृष्टदोःशब्दादेशत्वेन स्थानिवद्भावात्प्रवृत्तिर्दुर्वारा। न चेष्टापत्तिः। तैत्तिरीयैः'दोषभ्यां स्वाहा'इति मध्योदात्तस्यैव पाठात्। *अत एव"न गोश्वन्"(पा०सू०६-१-१८२)इति सूत्रे 'शुनः' 'शुना'इत्युदाहरणं सङ्गच्छते। अन्यथा सप्तमीबहुवचने नलोपस्यासिद्धत्वेऽपि श्वन्शब्दात् तृतीयादिविभक्तेरभावादसङ्गतिः स्पष्टैव, *मम त्वेकदेशविकृतन्यायेन *न दोष इति चेन्न। लक्ष्यानुरोधेनावृत्त्या यदेकाज्रूपं तत एकाच एव परेत्यर्थेन*वारणात्। *त्वयेत्यादौ तु प्रथमैकवचनग्रहणेऽपि न दोषः। *प्रथमैकवचनप्रकृतेः स्थाने तृतीयादिप्रकृतेर*विधानात्। स्पष्टञ्चेदं"न गोश्वन्"(पा०सू०६-१-१८२)इति सूत्रे प्रकृतसूत्रे च भाष्ये। *किं च काभ्यां कुलाभ्यामित्यादौ एतदप्रवृत्ती रूपविवक्षाफलम्। रूपग्रहणे प्रमाणन्तु सप्तमीबहुवचनग्रहणे*नगोश्वन्निति निषेधो ज्ञापक इति*भाष्यमे-

---

एकाच् दोःशब्दस्तस्मात्पराऽस्तीति भावः। *नन्वेवमपीति। सौ सप्तमीबहुवचने यदेकाज्रूपं ततः परा विभक्तिः स्थानिवद्भावेनास्ति स्थानिवद्भावेन तत्त्वबुद्धिजननादिति भावः। *अत एव=स्थानिवद्भावस्वीकारादेव। *मम तु=स्थानिवद्भावेन तत्त्वबुद्धिस्वीकर्तुर्मम तु। *न दोष इति। 'शुनः' 'शुना'इत्यत्र 'श्वसु' इत्यत्र य एकाच् तस्यैव"सर्वे सर्वपदादेशाः"इति न्यायेन तत्त्वबुद्ध्या तस्मात्परा या विभक्तिस्तस्या उदात्तत्वे प्राप्ते "न गोश्वन्"(पा० सू० ६-१-१८२)इति निषेधस्य प्रवृत्त्या निषेधोदाहरणासङ्गतिरूपो दोषो नास्तीति भावः। *वारणादिति। 'दोषभ्याम्'इत्यत्र स्थानिवद्भावेन प्रसक्तस्य दोषस्य वारणात्। 'दोष्णः' इत्यत्र तु न दोषः। सप्तमीबहुवचने य एकाच् दोःशब्दस्ततः परा न विभक्तिः किन्तु दोषन्नादेशस्य य आदेशस्ततः परा, परम्परया स्थानिवद्भावप्रवृत्तौ मानाभावादिति भावः। एवमेव 'त्वया'इत्यत्र दोषं वारयति—*त्वयेत्यादाविति। *प्रथमैकवचनप्रकृतेः=युष्मच्छब्दस्य। *अविधानादिति। युष्मच्छब्दस्य त्व अदित्यादेशस्तस्य स्थाने त्वय् इत्यादेशोऽपि यः प्रथमैकवचने एकाच् ततो न विभक्तिरिति भावः। रूपाविवक्षायाः फलान्तरमप्याह—*किञ्चेति। *न गोश्वन्निति निषेध इति। अत्र गोशुनोः प्रतिषेधो ज्ञापक इत्यर्थः। *इति भाष्यमेवेति। तत्र हि—"सप्तमीबहुवचनस्य ग्रहणम्। कथं ज्ञायते? यदयं "न गोश्वन् साववर्ण"(पा० सू० ६—१—१८२)इति गोशुनोः प्रतिषेधं शास्ति। कथङ्कृत्वा ज्ञापकम्? यदि प्रथमैकवचनस्य ग्रहणं स्याद्गोशुनोः प्रतिषेधवचनमनर्थकं स्यात्" इत्युक्तम्। अत्र कैयटः—"गोषु श्वसु इति सप्तमीबहुवचने एकाच्त्वाद्गोभ्यां श्वभ्यामित्यादौ विभक्तेः प्राप्तमुदात्तत्वम्प्रतिषिध्यते, प्रथमैकवचनग्रहणे तु प्राप्त्यभावात्प्रतिषेधोऽनर्थकः। प्रथमैकवचने हि यदेकाच्छब्दरूपङ्गौरित्यौकारान्तञ्च तस्मात्तृतीयादिविभक्तिः परा सम्भवतीति प्राप्त्यभावा-

व । *स्यादेतत्, स्त्रियाम् 'आभ्याम्' इत्यादौ 'एभिः' 'एषाम्' इत्यादौ चान्वादेशे सर्वानुदात्तत्वं न लभ्येत "सावेकाचः"(पा० सू० ६-१-१६८) इत्यस्य प्राप्तेः। आसु एषु इति हि सौ रूपम्। न च प्रकृतसूत्रस्थ*कैयटरीत्या तत्रान्तोदात्तत्वमेवेष्टमिति वाच्यम्। 'एभिरग्ने पिबासि त्वमेषाम्' इत्यादिवैदिकप्रयोगविरोधात् अन्ये त्वित्युक्त्या *तेनापि तत्रारुचिबोधनाच्च। न च विभक्तेरुदात्तत्वे शेषनिघातेन प्रकृतेरनुदात्तत्वे सिद्धे अश.देशस्यानुदात्तत्वविधानसामर्थ्यादन्वादेशे विभक्तिस्वरो नेति वाच्यम्। अस्त्रियाम् 'आभ्याम्' इत्यादौ चारितार्थ्यात्। न ह्यत्र "सावेकाचः" (पा० सू० ६-१-१६८) इति प्राप्नोति। तत्र हि सप्तमीबहुवचने एषु इति, तत्र ए इति, न च तादृगिहास्ति, नापि तस्य विकारः। न च स्त्रियाम् 'आसु' इति रूपस्य सत्त्वेन प्रवृत्तिर्दुर्वारा *अर्थभेदात्। न च "न गोश्वन्" (पा० सू० ६-१-१८२) इति *निषेधात् 'एभिः'इत्यादौ न दोष इति वाच्यम्। *प्रथमैकवचनेऽवर्णान्तत्वाभावात्। न च "ऊडिदम्" (पा० सू० ६-१-१७१) इत्यस्य दुर्वारत्वेन सर्वानुदात्तत्वं नेष्ट(१)मिति वाच्यम्। तत्रान्तोदात्तादिसनुवृत्त्या तदप्राप्तेः। अत्रैकाचः परेत्यस्यैकाच एव परेत्यर्थः कार्यः। तेन चित्सु 'अग्निचिता' इत्यत्र न।

अन्तोदात्तादु (पा० सू० ६-१-१६९) । *नित्यशब्दस्य स्वरितत्वेनाधिकारगत्या नित्याधिकारविहितसमास एव गृह्यत

---

त्किम्प्रतिषेधेनेति भावः" इति। रूपविवक्षायामप्यतिप्रसङ्गमाह-*स्यादेतदिति। *कैयटरीत्येति। तेन हि "अन्वादेशेऽशमुदाहरन्ति एभ्य एभिरिति। सप्तमीबहुवचने एष्वित्यशादेशे कृते भवत्येकाच्। प्रथमैकवचने त्वयमित्येकाच् न भवतीति स्वराप्रसङ्गः" इत्युक्तम्। *तेनापि=कैयटेनापि। *अर्थभेदात्=स्त्रीत्वविशिष्टार्थवाचकत्वसत्त्वेनार्थभेदादित्यर्थः। *इति निषेधादिति। तस्मिन्नपि सूत्रे सप्तमीबहुवचनग्रहणेन तत्र षत्वप्रवृत्तिप्राक्कालेऽवर्णान्तत्वमस्तीत्याशयेन शङ्क्यम्। *प्रथमैकवचने इति। तस्मिन् सूत्रे तथैव सिद्धान्तात् इष्टापत्तेरिति। इष्टस्यैव भवता साधनात्। ननु प्रागुक्तं सर्वानुदात्तत्वङ्कथमत आह—*एभिरग्न इत्यादि।

अन्तोदात्तादुत्तरपदात् (पा० सू० ६-१-१६९)। अनित्यसमास इत्यस्यार्थे प्रतियोगितया विशेषणीभूतन्नित्यसमासपदं व्याचष्टे—*नित्यशब्दस्येति।

---

(१) मेवेति इति आदर्शपुस्तके पाठः।

इत्यत आह—नित्येत्यादि । इदञ्च वृत्तिपदमञ्जर्योः स्पष्टम् । परमवाचेति । पक्षे *वाशब्द उदात्तः । अन्तोदात्तात्किम् ? अवाचा । तत्पुरुषे अव्ययपूर्वपदप्रकृतिस्वरो न । उत्तरपदग्रहणमेकाच्त्वेनान्तोदात्तत्वेन चोत्तरपदं विशेषयितुम् । अन्यथा समासो विशेष्येत, तथा सति 'शुन ऊर्क्' 'श्वोर्जा' इत्यादावेव स्यात् । एकाचः किम् ? राजदृषदा, षष्ठीसमासः । अनित्येत्यादि किम् ? *अग्निचिता । उपपदसमासः । कृदुत्तरपदप्रकृतिस्वरेण चिच्छब्द उदात्तः । *यस्तु समासघटकपदमात्रघटितविग्रहाभावेनैव नित्यसमासस्तत्र भवत्येवायं विकल्पः । यथा 'अवाचा ब्राह्मणेन' । अविद्यमाना वाग्यस्येति *विग्रहः । बहुव्रीहौ "नञ्सुभ्याम्" (पा० सू० ६–२–१७२) इत्यन्तोदात्तत्वम् । *इदञ्च वृत्त्याद्यनुरोधेन व्याख्यातम् । *"उपपदमतिङ्" (पा० सू० २–२–१९) इति सूत्रे भाष्ये तु विग्रहाभावेन यो नित्यसमासस्ततोऽन्यत्रायं विकल्पः । *अन्यथा *'उपस्वेन' इत्यादावव्ययीभावेऽप्ययं स्यादित्युक्तम् । एवञ्च बहुव्रीहौ 'अवाचा ब्राह्मणेन' इत्यत्रापि विकल्पो न भवत्येवेति प्रतीयते इति दिक् ॥

अञ्चेश्छन्दस्य (पा० सू० ६–१–१७०) । *शसादिरिति नोक्तम् । नपुंसके शसि मा भूत, सुटि च यथा स्यादिति । अञ्चेरित्यत्र *कः क्वित्वेऽपि नलोपाकरणं सौत्रत्वात् । यत्तु नकारो *विवक्षितः *छन्दसि विधिर्भाषायां "न गोश्वन्" ( पा० सू० ६–१–१८२ ) इति *निषेधः

---

*वाशब्द उदात्तः=समासस्वरेण वाशब्द उदात्तः । *अग्निचितेति । "अग्नौ चेः" ( पा० सू० ३–२–९१) इति क्विप् । यदुक्तं नित्याधिकारविहितेत्यादि, तस्य फलमाह—*यस्त्विति । पदमात्रेत्यत्र मात्रपदमवधारणे । *इति विग्रह इति । अत्र विद्यमानेत्यस्याधिक्याच्च समस्यमानपदमात्रघटितत्वं विग्रहस्येति निरुक्तं नित्यसमासत्वमत्र कृतबहुव्रीहेः । *इदञ्चेति । नित्याधिकारविहितसमासादन्यत्रेति यत्तदित्यर्थः । वृत्त्याद्यनुरोधेनेत्यनेन भाष्यानुरोधाभाव उक्तः । भाष्यान्तरविरोधोऽप्यस्तीत्याह—*उपपदमतीति । *अन्यथा=एतादृशानित्यसमासभेदस्यापि प्रयोजकत्वाविवक्षायाम् । *उपस्वेन=स्वस्य समीपमुपस्वं तेन ।

अञ्चेश्छन्दस्यसर्वनाम(पा०सू०६–१–१७०) । अत्रासर्वनामस्थानमित्युक्तेः फलमाह—*शसादिरित्यादिना । अस्य लाघवायेत्यादिः । *इकः=इक्श्तिपावित्ति विहितस्येकः । *विवक्षित इति । एतन्मते 'प्राञ्चा' इत्याद्युदाहरणम् । नन्वत्र "न गोश्वन्" ( पा० सू० ६–१–१८२ ) इतिसूत्रेण निषेधो भविष्यतीति कथमेतदुदाहरणमत आह—*छन्दसीत्यादि । *निषेधः="साबेकाचः" ( पा० सू०

अङिति निर्देशेन*तस्यापि नलोपाभावे एव प्रवृत्तेरिति व्यवस्थेति। तन्न, प्रतीचो बाहूनित्यादिलक्ष्यविरोधात्* "अनिगन्तोऽञ्चतौ" ( पा० सू० ६-२-५२ ) इति सूत्रस्था*ऽऽकारविरोधाच्च। *अत्रोत्तरपदादिति वर्तते। *तेनोत्तरपदभूताञ्चत्यन्तात्परा विभक्तिरित्यर्थः। तेन केवलाञ्चतेः क्विपि 'अग्भ्याम् 'इत्यादौ नास्य प्रवृत्तिरित्याहुः। दधीच इति। दध्यञ्चति द-ध्यङ् "ऋत्विग्" ( पा० सू० ३-२-५९ ) इत्यादिना क्विन्।

चावितीति। "तथा च *तदपवादोऽयमिति भावः। *लुप्ता-कारनकारेऽञ्चतावित्यर्थेन तस्यापि विभक्त्युत्पत्त्युत्तरकालमेव प्रवृत्तेरि-त्याशयः। न च पूजायां 'दध्यञ्चा' इत्यादाविदं *सावकाशम्। *तत्र *"न गोश्वन्" ( पा० सू० ६-१-१८२ ) इति निषेधेनास्याप्रवृत्तेः। न *चैवमपि *'दध्यग्भ्याम्' इत्यादौ अस्य सावकाशत्वेन दधीच इत्यादौ परत्वात् चुस्वरो दुर्वार इति वाच्यम्। शस्परिग्रहार्थसर्वनामस्थानग्रहण-

---

६-१-१६८) इति प्राप्तस्य निषेधः। *तस्यापि=न गोश्वन्निति निषेधस्या-पि। *लक्ष्यविरोधादिति। अत्र विभक्तेरुदात्तताया दर्शनं नकाराविवक्षायामुपप-द्यते। यदि तु नकारस्य विवक्षा तदैतन्न लक्ष्यङ्किन्तु 'प्राञ्चा' इत्याद्येव तदा सा-मान्यतस्तस्य निषेधस्य प्रवृत्तौ तदेवोदाहरणमस्यापि सूत्रस्येति प्रतीच इत्यत्रो-दात्तत्वमेतत्सूत्राप्रवृत्तौ नोपपद्यते, नकारस्य विवक्षितत्वे तु एवञ्च स्यादिति ल-क्ष्यविरोधः स्पष्टः। *आकारेति। पदमञ्चर्यादीत्यर्थः। तत्र हि—"अञ्चेः" ( पा० सू० ६-१-१७० ) इतिसूत्रस्य "चौ" ( पा० सू० ६-१-२२२ ) इतिसूत्रबाधकतो-क्ता। सा यद्यत्र नकारस्य विवक्षा स्यात्तदा "चौ" ( पा० सू० ६-१-२२२ ) इत्य-स्य लुप्ताकारनकारेऽञ्चतावेव प्रवृत्त्याऽस्य सूत्रस्य तु तत्राप्रवृत्त्या न सङ्गच्छेतेति भावः। इहापि मूलेऽस्य चुस्वरबाधकतोक्ता। नन्वस्य सूत्रस्यासमासे चारिता र्थ्यात्कथञ्चुस्वरबाधकत्वमत आह—*अत्रोत्तरपदादितीति। उत्तरपदेन स-मासाक्षेपे सति तस्य विशेष्यत्वमुत्तरपदभूताञ्चतेस्तद्विशेषणत्वं, तथा च याह-शो वाक्यार्थस्तमाह—*तेनोत्तरेत्यादिना। *तदपवाद इति। "चौ" ( पा० सू० ६-१-२२२ ) इत्यस्यापवाद इत्यर्थः। अस्य तदपवादतामुपपादयति—*लुप्ताका रेति। *सावकाशमिति। एवञ्चापवादत्वोक्तिर्विरुद्धा। समाधत्ते—*तत्रेत्या-दिना। दध्यञ्चेत्यत्र पूजायां नकारलोपाभावेन "चौ" (पा० सू० ६-१-२२२) इ-त्यस्याप्राप्त्याऽस्य सूत्रस्य तत्र प्राप्त्या तदप्राप्तियोग्येऽपि विषये प्राप्तिरेतावताऽ पवादत्वाभावशङ्का न युक्ता। तत्र "न गोश्वन्" ( पा०सू० ६-१-१८२ ) इति नि-षेधेन चारितार्थ्यस्य विरहादिति भावः। *दध्यग्भ्यामिति। अत्रालोपाभावेन "चौ" ( पा० सू० ६-१-२२२ ) इत्यस्य नकारलोपस्य सत्त्वेन "न गोश्वन्" ( पा०

सामर्थ्या*त्तत्रापि प्रवृत्तेः। *न च 'पराचः' इत्यादौ सावकाशमिदम्, अनिगन्तपूर्वपदे "चौ" (पा० सू० ६-१-२२२) इत्यस्याप्रवृत्तेर्वक्ष्यमाणत्वात् तत्र "अनिगन्तोऽञ्चतौ" (पा० सू० ६-२-५२) इत्यस्यै-वे*ष्टत्वादिति वाच्यम्। "अनिगन्तोऽञ्चतौ" (पा० सू० ६-२-५२) इति पूर्वपदप्रकृतिस्वरस्य *सतिशिष्टचुस्वरबाधकत्ववदे*तस्यापि बाधकत्वेन तत्रैतदप्रवृत्तेरित्याहुः। *केचित्त्वत्रान्तोदात्तादित्यपि वर्त्तते, अग्रेऽनुवृत्तिदर्शनेनात्रापि तत्सम्बन्धात्। एवञ्चान्तोदात्तोत्तरपदभूताञ्चेः परेत्यर्थः। *अत एव 'पराचा' इत्यादावप्रवृत्तिः। "अनिगन्तोऽञ्चतौ" [पा० सू० ६ २-५२] इति पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वात्, अञ्चेरन्तोदात्तत्वं *सामर्थ्याद्वि*भक्त्युत्पत्तिकालावच्छिन्नं ग्राह्यमित्याहुः।

ऊडिदम् (पा० सू० ६-१-१७१)। अत्रैकाच इति अन्तोदात्तादि*ति च वर्त्तते। *तत्रैकाज्ग्रहणमूठो न विशेषणम*व्यभिचारात्।

---

सू० ६-१-१८२) इति निषेधस्य चाप्राप्तिरिति भावः। *तत्रापि=दधीच इत्यत्रापि। 'पराचः' इत्यादावस्य चारितार्थ्यमाशङ्क्य निराचष्टे—*न चेत्यादिना। *इष्टत्वादिति। अत एव भाष्ये—"चौरनिगन्तोऽञ्चतावप्रत्यये। चुस्वरादनिगन्तोऽञ्चतावप्रत्यय इत्येतद्भवति विप्रतिषेधेन। चुस्वरस्यावकाशः 'दधीचः पश्य'। अनिगन्त इत्यस्यावकाशः 'पराङ्' 'पराञ्चौ' 'पराञ्चः'। इहोभयम्प्राप्नोति अवाचा, अवाचे। अनिगन्त इत्येतद्भवति विप्रतिषेधेन" इत्युक्तम्। न च चुस्वरस्य 'दधीचः' इत्यत्र चारितार्थ्यं प्रदर्शितमिह तु भवता चुस्वरम्बाधित्वा "अञ्चेश्छन्दसि" (पा० सू० ६-१-१७०) इत्यस्य प्रवृत्तिरुच्यत इति विरोध इति वाच्यम्। अवकाशप्रदर्शनपरभाष्यस्य लौकिकोदाहरणविषयत्वात्। *सतिशिष्टेति। भाष्ये विप्रतिषेधं दूषयित्वा सतिशिष्टत्वेनैवानिगन्त इत्यस्य चुस्वरबाधकतोक्ता। *एतस्यापि="अञ्चेश्छन्दसि" (पा० सू० ६-१-१७०) इत्यस्यापि। 'पराचः' इत्यादौ प्रकारान्तरेणास्याप्रवृत्तिमुपपादयतामतमाह—*के चित्त्वत्रेति। *अत एव=अन्तोदात्तादित्यस्य सम्बन्धादेव। ननु धातुस्वरेणाञ्चतिरन्तोदात्त एवेत्यत आह—*सामर्थ्यादिति। अन्तोदात्तादित्येतद्विशेषणसामर्थ्यादित्यर्थः। *विभक्त्युत्पत्तिकालावच्छिन्नमिति। यस्या विभक्तेरयं स्वरो विधीयते तदुत्पत्तिकालावच्छिन्नमित्यर्थः।

ऊडिदम् (पा० सू० ६-१-१७१) *इति च वर्त्तत इति। एकाज्भ्योऽन्तोदात्तेभ्य एभ्यः पराऽसर्वनामस्थानविभक्तिरुदात्ता। अत्रानुवर्त्तमानमेकाज्ग्रहणं यत्र सफलं तदाह—*तत्रैकाजिति। *अव्यभिचारादिति। ऊशब्दस्योठ्सूत्रप्रवृत्तियोग्यबोधकतया तस्यैकाच्त्वव्यभिचारादित्यर्थः। असर्वनामस्थानविभक्त्याक्षिप्तस्यार्थवत इत्यस्य विशेषणतायामूठ

*तद्घटितसमुदायस्य विशेषणत्वेऽपि न क्षतिः।*अस्ति हि प्रष्ठौहशब्दे तद्घटितोऽर्थवान् समुदाय ऊहिति। *एवं पदाद्यंशेऽपि उपात्तानामेव विशेषणं न विभक्त्याक्षिप्त*प्रकृतेः। *अत एव 'ब्राह्मणपदा'इत्यादावन्तोदात्तत्वसिद्धिः। *इदमेव ध्वनयितुं वृत्त्यादिषु *'जूरा'इत्यनुदाहृत्य'प्रष्ठौहः' इत्युदाहृतम्। न च "सावेकाचः" [ पा० सू० ६-१-१६८ ] इत्यनेन सिद्धत्वा*त्तन्नोदाहृतम्। शसि *तदप्राप्तेः। एकाच इतिकिम् ? 'अन्यैरनान्क्न्यानामभिः' इत्यादौ *एनानित्यस्य *सर्वानुदात्तत्वं यथा स्यात्।*यद्यपि "प्राग्दिशः" ( पा० सू० ५-३-१ ) इति सूत्रस्थ*भाष्यादत्र तृ-

---

इत्यस्य विशेष्यत्वे एकाजभिन्नादूठोऽर्थवतः परादित्यर्थो वाच्यः, स चासम्भवग्रस्तः, ऊठोऽर्थवत्त्वासम्भवादित्यपि बोध्यम्। ननु आक्षिप्तं विशेष्यमर्थवत्पदार्थस्तत्र ऊडभेदो बाधित इत्यूडित्यस्य ऊड्घटिते लक्षणा भविष्यति तदभेदश्च न विशेष्येऽर्थवति बाधित इत्यत आह—*तद्घटितेति। ऊड्घटितेत्यर्थः। *अस्ति हीति। तथा चैकाज्ग्रहणमूडित्यस्य विशेषणमिति भावः। इदंशब्दस्य चैकाज्ग्रहणं विशेषणम्भवत्येव। आभ्यामित्यत्र सम्भवस्य 'इमकाभ्याम्'इत्यत्र व्यभिचारस्य च सम्भवात्। एवञ्चोपात्तस्येदमित्यस्य तद्विशेषणम्। पदादयश्च "पद्दन्नः" ( पा० सू० ६-१-६३ ) इति सूत्रनिर्दिष्टा बोध्यास्तेषु निश्पर्यन्तानामेवैकाच्त्वस्य सम्भव इति तद्विषये आह—*एवम्पदाद्यंशेऽपीति। *प्रकृतेरिति। अर्थवत इत्यर्थः। *अत एव=उपात्तविशेषणत्वादेव। *इदमेव ध्वनयितुम्=उपात्तविशेषणत्वमेव ध्वनयितुम्। *जूरेत्येति। ज्वरधातोः क्विपि "ज्वरत्वर"( पा० सू० ६-४-२० ) इति सूत्रेण वस्योपधायाश्च स्थाने ऊडादेशः। *तन्नोदाहृतमिति। जूरेति नोदाहृतमित्यर्थः। जूरेत्यस्य तदुदाहृतत्वे एकाज्ग्रहणस्य प्रकृतिविशेषणत्वेऽपि क्षत्यभावशङ्का स्यादिति भावः। *तदप्राप्तेरिति। तृतीयादिर्विभक्तिरित्यस्य तस्मिन् सूत्रे उपादानादिति भावः। *एनानिति। "द्वितीयाटौस्स्वेनः" ( पा० सू० २-४-३४ ) इत्येनादेशः। *सर्वानुदात्तत्वमिति। एनादेशोऽनुदात्तः, विभक्तिश्चानुदात्तेति भावः। यत्त्वत्र मूलेऽसर्वनामस्थानविभक्तिरुदात्तेति व्याख्यातं तन्न युक्तं "प्राग्दिशो विभक्तिः" ( पा० सू० ५-३-१ ) इति सूत्रभाष्यात्तृतीयादिर्विभक्तिरित्यस्य "सावेकाचः" ( पा० सू० ६-१-१६८ ) इति सूत्रादनुवृत्तेर्लाभादिति केचित्तन्न युक्तमित्याशयेनाह—*यद्यपीत्यादि। *भाष्यादिति। एवं हि तत्रोक्तम्—"विभक्तित्वे किम्प्रयोजनम्? विभक्तित्वे प्रयोजनमित्प्रतिषेधः-इदानीम्। "न विभक्तौ तुस्माः" ( पा० सू० १-३-४ ) इति प्रतिषेधः सिद्धो भवति। यद्येवङ्किमोऽत्। क्व प्रेप्सन्दीव्यसे। क्वार्द्धमासा इत्यत्रापि प्राप्नोति। तौ चोक्तम्। किमुक्तम् ? विभक्तौ तवर्गप्रतिषेधोऽतद्धित इति। इदमो विभक्तिस्वरश्च प्रयोजनम्—इतः, इह। इदमस्तृतीयादिर्विभक्तिरुदात्ता भवतीत्येष स्वरः सिद्धो भवति" इति भाष्ये। अत्र

तीयादिग्रहणमनुवर्त्तते इति प्रतीयते, तथापि तदेकदेशयुक्तिः । *तत्रैव भाष्ये इत इत्यत्रै*तत्प्रवृत्त्युक्तेः । 'अपो याचामि पुंसः पुन्नानुतरायो देवी इतः पिशङ्ग यच्छसे' इत्यादि*लक्ष्यविसंवादाच्च । अन्तोदात्तात्किम् ? अन्वादेशे 'आभ्याम्'इत्यादौ एतन्मा भूत् । *"सावेकाचः" [ पा० सू० ६-१-१६८ ] इति तु नात्र । सौ *'एषु' इति रूपात् । प्रष्ठौह इति । *प्रष्ठवाट्शब्द उपपदसमासेनान्तोदात्तः । ऊठ्युपधेति । उपधाभूतस्यैवोठो ग्रहणमित्यर्थः । पञ्चमीनिर्देशादन्त्यस्यैव ग्रहणे प्राप्ते *वचनम् । 'स्वरविधौ व्यञ्जनमविद्यमानवत्' इति परिभाषा तु अन्तोदात्तानुदात्तादि*व्यवहारे एव प्रवर्तते । *अत एव "कर्षात्वतः" [ पा० सू० ६-१-१५९ ] इति मतुम्निर्देशश्चरितार्थ इति प्रागेव निरूपितम् । अक्षद्युवेति । *अत्र क्विपि विवक्षिते *ऊडनुदात्तो निपात्यते । ततो यणि उपपदसमासे कृत्स्वरेणा-

---

कैयटः—"इत इति मुख्यमुदाहरणमत्र लित्स्वरे प्राप्ते "ऊडिदम्" ( पा० सू० ६-१-१७१ ) इत्युदात्तत्वम्भवति । इहेत्यत्र तु प्रत्ययस्वरेणान्तोदात्तत्वं सिध्यति । ननु मध्येऽपवादन्यायेन "अनुदात्तौ सुप्पितौ" ( पा० सू० ३-१-४ ) इत्येतं स्वरं विभक्तिस्वरो बाधते न लित्स्वरम् । नैष दोषः । "ऊडिदम्" [ पा० सू० ६-१-१७१ ] इत्येतत्सूत्रं "लिति" [ पा० सू० ६-१-१९३ ] इत्यत्रानुवर्त्तते, तेन लित्स्वरम्बाधित्वा विभक्तिस्वरो भवति" इति । "लिति" ( पा० सू० ६-१-१९३ ) इत्यत्र ऊडिदमित्यस्यानुवृत्तौ न कैयटोक्तिरेव प्रमाणङ्किन्त्वित इत्यत्र विभक्तिसंज्ञाप्रयोजनप्रदर्शनपरम्भाष्यमेव । अस्य भाष्यस्यैकदेशयुक्तित्वमुपपादयति—*तत्रैवेति । *एतत्प्रवृत्त्युक्तेः="ऊडिदम्" ( पा. सू. ६-१-१७१ ) इति सूत्रस्य प्रवृत्तेरुक्तेः । अत्र "पञ्चम्यास्तसिल्" ( पा. सू. ५-३-७ ) इति विहितस्य विभक्तिसंज्ञासत्त्वेऽपि तृतीयादित्वन्नास्तीत्यस्य स्पष्टम्प्रतीतेः । यत्त्वेतद्भाष्यग्रन्थयोजनार्थङ्कैयटेन 'तृतीयादिग्रहणेन च तृतीयामारभ्य प्राग्दिशः प्रत्यया विभक्तिसंज्ञा गृह्यन्ते' इत्युक्तम् । तन्न युक्तम् । अन्यत्र तृतीयामित्यनेन तृतीयादिसुपामेव प्रतीतेर्दृष्टत्वादिहार्थान्तरकल्पनायाम्भाष्यान्तरादर्शनादिति । *लक्ष्यविसम्वादाच्चेति । अत्रेत इत्यस्याद्युदात्तस्यैव दर्शनेनेत इत्यस्यान्तोदात्तत्वकल्पनमन्याय्यमिति भावः । ये त्वस्मिन् सूत्रे "सावेकाच" (पा. सू. ६-१-१६८) इत्यस्याप्यनुवृत्तिन्दर्शयन्ति तन्न युक्तमित्याह—*सावेकाच इति त्विति । *एष्विति रूपादिति । सौ यदेकाज्रूपं दृष्टन्ततः परेत्यर्थस्य प्राक् प्रदर्शनादित्यर्थः । *प्रष्ठवाडिति । "वहश्च" (पा. सू. ३-२-६४) इति ण्विप्रत्ययान्तोऽत्र वाट्शब्दः । *वचनम्="ऊठ्युपधा"(का.वा.)इति वचनम् । *व्यवहार एवेति । स्वरानुवादस्य सत्त्वेन स्वरोद्देश्यकविधिस्त्वादिति भावः । *अत एव=स्वरोद्देश्यकविधावेव स्वरविधावित्यस्य प्रवृत्तेरेव । *अत्र=अक्षद्युवेति प्रयोगे । *ऊठ्="च्छ्वोः शूठ्"(पा.सू.६-४-१९)

*न्तोदात्तोऽयम् । *क्विपि परत ऊठि तु अनुनासिकादौ प्रत्यय ऊद्सरः *सतिशिष्टः स्यात् । तथा च स्योनशब्दोऽन्तोदात्तो *न स्यात् । उदात्तनिपातने चे*दमेव भाष्यं प्रमाणम् । *अत एव प्रयोगे ऊठ उदात्तत्वश्रुतिः, अन्यथा स्वरितः स्यादित्याहुः । प्रते बभ्रू इति । बभ्रू मा आभ्यामिति च्छेदः । बभ्रूशब्देनोक्तयोरिदमा परामर्शादन्वादेशोऽस्ति । कथितानुकथनस्यैव *तत्त्वात् । षट्पदादय इति । सूत्रोपात्ताः षडित्यर्थः । *तेन वार्तिकस्थानां *ग्रहणेऽपि *न दोषः । एकाच इत्यनुवृत्त्यैतदर्थलाभः । *तेन 'आसनि' 'उदनि' इत्यादि *मध्योदात्तमेव । पदाद्यादेशा अन्तोदात्ता निपात्यन्ते । इदं सूत्रं "लिति" ( पा० सू० ६-१-१९३ ) इत्यस्य पूर्वविप्रतिषेधेनानुवृत्त्या वा बाधकम् । तेन इत इत्यत्र विभक्त्युदात्तत्वमेवेति "प्राग्दिशः" ( पा० सू० ५-३-१ ) इति सूत्रे *भाष्यकैयटयोः स्थितम् । इदमोर्हिलि लित्त्वसामर्थ्याल्लित्स्वर एवेत्याहुः ।

अष्टनो ( पा० सू० ६-१-१७२ ) । अष्टन्शब्दो घृतादित्वा-

---

इत्यूठ् । *अन्तोदात्तोऽयमिति । अयमक्षद्यूशब्दोऽन्तोदात्तो भवतीत्यर्थः । ततो विभक्त्युवङादेश उदात्तस्थानिकत्वेनोदात्त इति मध्योदात्तोऽयम् । तत्र "अनुनासिकस्य क्विझलोः" (पा. सू. ६-४-१५) इत्यतः क्विझलोरित्यनुवर्तते । तत्र क्विझलोरिति विषयसप्तमीत्याशयेनात्र क्विपि विवक्षित इति प्रतिपादितम् । यदि त्विषयपरसप्तम्येव तदा तुल्यत्वादनुनासिके चेत्यपि तथा स्यादिति प्रतिसन्धायाह—*क्विपि परत इति । *सतिशिष्टः स्यादिति । अनुनासिकादिप्रत्ययोत्पत्त्युत्तरकालिकोत्पत्तिकतया सतिशिष्टः स्यादित्यर्थः । *न स्यादिति । तथा चेष्टस्य 'स्योनः' इत्यस्यान्तोदात्तस्य प्रयोगस्य सिद्ध्यर्थमनुनासिक इति सप्तम्या विषयसप्तमीत्वमावश्यकमित्येकवाक्यघटकयोर्निमित्तत्वेनोपात्तयोः क्विझलोरित्यत्रापि विषयसप्तम्येवेति भावः । *इदमेव भाष्यमिति । "ऊठ्युपधाग्रहणङ्कर्त्तव्यमन्त्यस्य मा भूदिति । अक्षद्युवा । अक्षद्युवे" इति भाष्यमेव मानामित्यर्थः । यद्यूठ उदात्तत्वन्न निपातितं स्यात्तदा विभक्तेरन्तोदात्तात्परत्वाभावेनोदात्तत्वाप्राप्त्योद्युपधाग्रहणं कर्त्तव्यमित्यस्याक्षद्युवेत्यत्र प्रयोजनकथनमसम्बद्धं स्यादिति भावः । उपधाग्रहणङ्कर्त्तव्यमित्यस्योपधाभूत ऊठ् ग्राह्य इत्यर्थः । अन्यथा पञ्चमीनिर्देशादन्त्य एव गृह्येतेति बोध्यम् । ततः परत्वन्तु 'येन नाव्यवधान'न्यायेन । *अत एव=ऊठ उदात्तस्य निपातनादेव । *तत्त्वात्=अन्वादेशत्वात् । *तेन=सूत्रोपात्ता इति कथनेन । *ग्रहणेऽपि=पदादिशब्देनोपस्थितावपि । *न दोषः=षोकषट्त्वसङ्ख्याहानिः । *तेन='एकाच' इत्यस्य सम्बन्धेन । *मध्योदात्तमेवेति । अस्याप्राप्तेरिति शेषः । *भाष्यकैयटयोरिति । एतच्च प्रागुपपादितम् ।

दन्तोदात्त इति षट्सञ्ज्ञासूत्रे *भाष्ये ध्वनितम् । तेनोत्तरार्थतयाऽनुवर्त्तमानस्यापि अन्तोदात्तादित्यस्य न बाधः ।*अत एव 'अष्टौ' इत्यत्र "एकादेश उदात्तेन" ( पा० सू० ८–२–५ ) इत्यन्तोदात्तत्वसिद्धिः । झल्युपोत्तममित्यस्यापवादोयमिति *भाष्यकैयटयोः स्पष्टम् । अत एवेदं समासादौ न प्रवर्तते । दीर्घात्किम् ? अष्टभिः । "झल्युपोत्तमम्" ( पा० सू० ६–१–१८० ) इति स्वरः ।

शतुरनुमो (पा०सू०६–१–१७३) । अनुम् इति *बहुव्रीहिः । शतुर्लसार्वधातुकेति । न चान्तरङ्गत्वादेकादेशे कृते*ऽव्यपवर्गः अन्तरङ्गपरिभाषाया अनित्यत्वात् । *न चैकादेशस्वरोऽस्मिन्स्वरेऽसिद्धः । अनुम इति प्रतिषेधेनासिद्धत्वाभावज्ञापनात् । न ह्येकादेशस्वरेण विना सनुम्कमन्तोदात्तं भवति । इदं च सामान्यापेक्षम् । तेनान्तरङ्ग एकादेशस्वरः सिद्धो वाच्य इति सिद्धम् । अनुम इति च श्रुतत्वाच्छतुरेव विशेषणं,*तेन *'मुञ्चता' इत्यादौ स्वरप्रवृत्तिः । *अन्तोदात्तादिति तु तदन्तस्यैव विशेषणम् । अन्यथा 'तुदती' इत्यत्र *न स्यात् । *अत एव नुम्प्रतिषेधः सा-

---

*भाष्ये ध्वनितमिति । "अष्टनो दीर्घात्"(पा.सू. ६–१–१७२)इति सूत्रस्थदीर्घग्रहणस्यात्वं वैकल्पिकमित्यर्थे ज्ञापकत्वोपपादनेनेति शेषः । *अत एव=अन्तोदात्तत्वादेव । *भाष्यकैयटयोः स्पष्टमिति । प्रकृतसूत्रस्थदीर्घग्रहणस्य कृतात्वस्य षट्संज्ञा भवतीत्यत्र ज्ञापकतोक्त्या स्पष्टमित्यर्थः ।

शतुरनुमो नद्यजादी ( पा. सू. ६–१–१७३ ) । *बहुव्रीहिरिति । स च शतुर्विशेषणमिति शेषः । *अव्यपवर्ग इति । लसार्वधातुकस्याद्युपदेशात्परत्वाभाव इत्यर्थः । 'तुदन्ति' इत्यादावेकादेशस्य प्रत्ययद्वयसम्बन्धिवर्णद्वयापेक्षत्वं शतुरित्यस्य तु न पूर्वप्रत्ययसम्बन्धिवर्णापेक्षत्वमिति शतुरित्यस्यान्तरङ्गत्वमित्याशयेन शङ्कामभ्युपेत्य निराचष्टे—*न चेत्यादिना । *तेन=श्रूयमाणशतृविशेषणत्वेन । *मुञ्चतेत्यादाविति । "शे मुचादीनाम्" (पा. सू. ७–१–५९ ) इत्यनेन मुचधातोरेव नुमागमसत्त्वेन शतुरनुम्कत्वमेव । कस्यचिन्मतमाह—*अन्तोदात्तादितीति । *न स्यादिति । यदि तदन्तस्यान्तोदात्तादिविशेषणञ्च स्यात्किन्तु शतुः स्यात्तदाऽद्युपदेशात्परत्वेन शतुर्निघातात् 'तुदती' इत्यत्र न स्यादिति तद्भावः । *अत एव=शतुर्विशेषणत्वादेव । अनुम इत्यस्य पञ्चम्यन्ततयाऽन्तोदात्तादित्येतत्पञ्चम्यन्तं यद्विशेषणन्तस्यैवेदमपि विशेषणमतस्तत्सार्थक्यमिति भावः । अयुक्तत्वन्तस्योपपादयति—*तुदतीत्यत्रेत्यादिना । *तत्त्वेनेति । उदात्तत्वेनेत्यर्थः ।अन्तोदात्तत्वन्त्वस्य व्यपदेशिवद्भावेन । *तस्मात्=असम्भवो हि नात्र शतृविशेषणत्वे यतो हेतुस्तत इत्यर्थः । *तस्य=पञ्चमी-

र्थकः। अत्र वार्तिकं "बृहन्महतोरुपसंख्यानम्"इति, बृहती, महती। *यद्यपि शतृवद्भावेनेदं सिद्धं तथापि बृहन्महतोरेवेति नियमार्थमिदम्। तेन पृषता पृषती इत्यादीनां न। ननु 'प्रियमहती' इत्यादौ *सूत्रेणासिद्धेर्विधानार्थमेव स्यादिति चेत्। न, वार्त्तिकेऽप्यन्तोदात्तादित्यस्य सम्बन्धेनात्र तस्या*प्यप्रवृत्तेः। 'अतिमहती' इत्यत्र "अतेरकृत्पदे" ( पा० सू० ६-२-१९१ ) *इत्यन्तोदात्तत्वाद्भाव्यमेव। *विदुषी विदुष इत्यादौ वसोः स्थानिवत्त्वेन शतृत्वात्ततः परयोर्नदीविभक्त्योरुदात्तः प्राप्तः स्वरे स्वादेशे स्थानिवत्त्वप्रतिषेधान्न भवति।

उदात्तयणो ( पा० सू० ६-१-१७४ )। उदात्तस्वरितयोरित्यस्यापवादः। हल्पूर्वात्किम्? *बहुतितवा ब्राह्मण्या *"बहोर्नञ्वत्" ( पा० सू० ६-२-१७५ ) इति बहुव्रीहिरन्तोदात्तः। अत्र "उदात्तस्वरितयोः" ( पा० सू० ८-२-४ ) इति विभक्तिः स्वरिता। *अत्र उदात्तस्थानिकनकाराच्चेति वक्तव्यम्, वाक्पत्नी। तत्पुरुषः, "पत्यावैश्वर्ये" (पा० सू० ६-२-१८) इति प्राप्तस्य पूर्वपदप्रकृतिस्वरस्य "न भूवाक्चिद्दिधिषु" ( पा० सू० ६-२-१९ ) इति निषेधे "समासस्य" ( पा० सू० ६-१-२२३ ) इत्यन्तोदात्तः।

नोङ्धा (पा० सू० ६-१-१७५)। शसादय इति। *असर्वनामस्थानोपलक्षणं नदीग्रहणमसम्भवान्नानुवर्तितम्। सुभ्व इति। कृदुत्तरपदप्रकृतिस्वरेण *सुभूरुदात्तः।

---

समासेन स्थानिवद्भावस्य। वार्त्तिकवैयर्थ्यमाशङ्क्य निराचष्टे—*यद्यपीत्यादिना। द्वेत्यादीनामेति?। किन्त्वत्र विभक्तेरनुदात्तत्वादतः प्रत्ययस्वरेणाद्युदात्तत्वान्मध्योदात्तत्वमेव। *सूत्रेणासिद्धेरिति। बहुव्रीहौ पूर्वपदप्रकृतिस्वरविधानेनानुदात्तत्वादिति भावः। *तस्याप्यप्रवृत्तेरिति। वार्त्तिकस्याप्यप्रवृत्तेरित्यर्थः। *इत्यन्तोदात्तत्वादिति। उणादीनामव्युत्पन्नत्वादिति शेषः। *विदुषीति। "विदेः शतुर्वसुः" ( पा. सू. ७-१-३६ ) इति वस्वादेशः।

*बहुतितवा इति। ईषदपरिसमाप्तस्तिततउर्बहुतितउरित्यर्थोऽत्र न। ब्राह्मणीपदसामानाधिकरण्यानुपपत्तेः। किन्तु बहवस्तितवो यस्या इति बहुव्रीहिः। बहूनि तितऊनीति वा। "तित उपरिपवनम्" इति भाष्यात्। अन्तोदात्तत्वमस्याह—*बहोरिति। *अत्र="उदात्तयण" ( पा. सू. ६-१-७४ ) इति सूत्रे।

ननु शसादय इत्यनुपपन्नमप्रकृतत्वादत आह—*असर्वेति। *सुभूरिति। ऊङः प्रत्ययस्वरेणोदात्ततया ब्रह्मबन्ध्वेत्यप्यन्तोदात्तमिति बोध्यम्।

ह्रस्वनुड्भ्याम् । ( पा० सू० ६-१-१७६ ) अत्र *मतुप्ग्रहणे ड्मतुपो*ग्रहणं नेति "चौ" ( पा० सू० ६-३-१३८ ) इति सूत्रे भाष्ये स्पष्टम् । अग्निमाँ इति । आपो दीयन्तेऽस्मिन्नित्य*धिकरणे किः । उदनिरव्युत्पन्नो घृतादित्वादन्तोदात्तः मतुप उदात्तत्वे पूर्वस्य शेषनिघातः । न च सन्निपातपरिभाषया दोषः । स्वरे तदप्रवृत्तेः क्रमेऽनन्तसूत्रे भाष्ये उक्तत्वाद । अक्षण्वन्त इति । "छन्दस्यपि दृश्यते"( पा० सू० ७-१-७६ )इत्यनङुदात्तः* मतुपो अनो नुट् पूर्वनस्य लोपः । नुटोऽसिद्धत्वात् "मादुपधायाः" ( पा० सू० ८-२-९ ) इति वत्वम् । इषुमानिति । *इषुराद्युदात्तः । ह्रस्वेतिकिम् ? प्रजावान् । ह्रस्वान्तादितिकिम् ? *मरुत्वानिति । मृग्रोरुतिः मरुत् । *न च स्वरविधौ व्यञ्जनस्याविद्यमानवत्त्वेन ह्रस्वान्तत्वम् । स्वरोद्देश्यकविधावेव तत्प्रवृत्तेरन्तोदात्तत्वोदात्तात्परत्वादिव्यवहारस्यैव तेन लाभात् । *अत एव "कर्षात्वतः" ( पा० सू० ६-१-१५९ ) इति सूत्रे मतुप् चरितार्थः । अन्यथा 'दायः' 'पाकः'इत्यादावपि व्यञ्जनस्याविद्यमानवत्त्वेनाकारान्तात्परत्वेनैव सिद्धे तद्वैयर्थ्यं स्पष्टमेव । *अत एवात्र नुड्ग्रहणं चरितार्थम् । अत एव स्वरे नलोपासिद्धत्ववचनं सार्थकम् । अन्यथाऽसिद्धत्वेऽप्येतत्परिभाषया नस्यावि-

---

एतेनान्तोदात्तादित्यस्यानुवर्त्तमानस्याबाधो ध्वनितः ।

ह्रस्वनुड्भ्याम् ( पा. सू. ६-१-१७६ ) अत्रान्तोदात्तादित्यनुवर्त्तमानमेकदेशस्य ह्रस्वेत्यस्य विशेषणम् । ह्रस्वेत्यत्र वर्णग्रहणे तदन्तग्रहणम् । *ग्रहणन्नेति । तदनुबन्धकपरिभाषयेति शेषः । *अधिकरणे किरिति । उपपदसमासे कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वम् । *उदात्त इति । "अस्थिदधि" ( पा. सू. ७-१-७५ ) इति सूत्रादुदात्तग्रहणानुवृत्तेरित्यादिः । *इषुराद्युदात्त इति । "उन्देरिच्चादेः" (उ. पा. १ सू. १२) इत्यत इदित्यनुवर्त्य "इषेः किच्च" (उ. पा.१ सू. १३ ) इत्यनेन निदित्यधिकारीयस्योप्रत्ययस्य विधानात् । *मरुत्वानितीति । "तसौ मत्वर्थे" ( पा सू. १-४-१९ ) इति भसंज्ञया पदत्वस्य बाधाज्जश्त्वन्न । व्यञ्जनस्याविद्यमानवद्भावः प्रकृतेऽन्तोदात्तत्वव्यवहारायावश्यक इत्यभिप्रायिकामाशङ्कान्निराचष्टे—*न चेति । यद्यप्ययमपि विधिः स्वरोद्देश्यकस्तथापि निमित्तत्वावच्छेदकतयोपात्तस्वरव्यवहारस्य व्यञ्जनेन प्रतिबन्धो नेत्येव कल्प्यते; एवञ्च स्वरमात्रनिष्ठावच्छेदकताकव्यवहारो भवति । इह तु ह्रस्वस्यापि निमित्तत्वावच्छेदकतयोपादानात्तन्निष्ठावच्छेदकत्वव्यवहारप्रतिबन्धो भवत्येवेति भावः । *अत एव-स्वरोद्देश्यकविधौ तत्प्रवृत्तेरेव । *अत एव-उक्त-

ह्यमानवत्त्वे तद्वैयर्थ्यं स्पष्टमेव । *अत एव "हल्स्वरप्राप्तौ" इति परिभाषानन्तरं स्वरविधायकार्थं भाष्ये पठितम् । तस्यास्तु प्रकृते *विषय एव नास्ति । अत्र नुडन्त्यन्तोदात्ता*त्पर एव । तेनेह न-रोम एवन्तौ । मनिनन्तत्वादाद्युदात्तो रोमन्शब्दः । *शिरसः शीर्षन्नादेशोऽन्तोदात्तो निपात्यते । अत एव 'शीर्षण्वान्' इत्यादौ भवत्येवैतत् ।

रेशब्दाच्चेति । *वार्तिकमेतत् । रेवानिति । रयिरस्यास्तीति मतुप् । "रयेर्मतौ बहुलम्" [ का० वा० ] इति संप्रसारणं, पूर्वत्वम्, आद्गुणः । रेशब्दान्मतुपो वत्वमिष्यते । ह्रस्वाभावाद्वचनम् । त्रेश्च प्रतिषेधो वाच्यः त्रिवती ।

नामन्य [ पा० सू० ६-१-१७७ ] । ह्रस्वश्चेति मतुबिति च वर्त्तते । तत्र व्याख्यानान्मतुपा ह्रस्वो विशेष्यते । प्रथमान्तमपि मतुप्पदं सप्तम्या विपरिणमते, तदाह-मतुपीति । *अत एव "अग्नीनाम्" इत्यादावेतत्प्रवृत्तिः । *अन्यथा परत्वान्नित्यत्वाच्च *दीर्घे ह्रस्वाभावान्न स्यात् । वचनं तु 'तिसृणाम्' इत्यादौ *चरितार्थम् *'चतसृणाम्' इति तु नावकाशः । तस्या*द्युदात्तत्वात् । सुमतीनामिति । सुमतिशब्दो बहुव्रीहिः "नञ्सुभ्याम्" [ पा० सू० ६-२-१७२ ] इत्यन्तोदात्तः, *पक्षे स्वरितान्तः । सनुट्कग्रहणं किं ? धेना । अन्तोदात्तात्किम् ? चतसृणाम् ।

---

विषये प्रवृत्तेरेव । *अत एव हलिति । उक्तरीत्या स्वरविधाविति परिभाषयाऽसङ्ग्रहादेव । *विषय एव नास्तीति । 'मरुत्वान्' इत्यत्र ह्रस्वान्तात्परो मतुबिति व्यवहारे कर्त्तव्ये विषयो नास्तीत्यर्थः । *पर एव=अन्तोदात्तादित्यनुवृत्तं वाक्यभेदेन नुड्विशेषणमपीति भावः । ननु "श्रयतेः स्वाङ्गे शिरः किच्च" ( उ.पा.४ सू. ६४३ )इत्यसुन्नन्तः शिरस् इति तस्य स्थाने यः शीर्षन्नादेशः सोऽपि निदन्तत्वादाद्युदात्त एवेति नुटः शीर्षण्वानित्यत्रान्तोदात्तात्परत्वाभावेन मतुप उदात्तत्वन्न स्यादत आह-*शिरस इति । छन्दस्युदात्तस्य शीर्षण्वानितिप्रयोगस्य दर्शनमत्र मानम् । *वार्त्तिकमेतदिति । वार्त्तिकैकदेशस्य निबन्धनमेतत् । वार्त्तिकस्वरूपन्तु मतुबुदात्तत्वे रेग्रहणमित्याकारकमेव ।

*अत एव=मतुपि यो ह्रस्व इति व्याख्यानादेव । अत्र ह्रस्व इत्यस्य दृष्ट इति शेषो बोद्धव्यः । *अन्यथा=नामन्यतरस्यामित्यत्र मतुप्पदानुवृत्त्यभावेन ह्रस्वान्तादन्तोदात्तात्परो नाम्शब्द इति व्याख्याने । *दीर्घे=नामीति दीर्घे । *चरितार्थमिति । तत्र "न तिसृचतसृ" ( पा. सू. ६-४-४ ) इति दीर्घस्य निषेधात् । अन्योक्तमवकाशप्रदर्शनन्दूषयति—*चतसृणामितीति । *आद्युदात्तत्वादिति । आद्युदात्तनिपातनमादेशस्येत्याद्युदात्तत्वादित्यर्थः । *पक्षे="नाम-

ङ्याश्छन्दसि । ( पा० सू० ६-१-१७८ ) अन्यतरस्यामित्यनुवर्तमाने बहुलोक्तिरन्तोदात्तादित्यस्य निवृत्त्यर्था, तदाह—वेत्यनुवृत्तेरिति । बहुलग्रहणरहितपाठेऽपि अत्रान्तोदात्तात् निवृत्ति*र्व्याख्यानाद् बोध्या । जयन्तीनामिति । *आद्युदात्तमेतत् । १

षट्त्रि ( पा० सू० ६-१-१७९ ) ।

नगोश्वन् ( पा० सू० ६-१-१८२ ) । *सौत्रत्वाद् द्वन्द्वः *सप्तम्यलुक् च । एभ्य इति । विभक्तेर्मतुपश्चेत्यर्थः । मतुबित्यस्य विभक्तिरित्यस्य चानुवृत्तेः । एतच्च "चौ" ( पा० सू० ६-१-२२२ ) इति सूत्रेभाष्यकैयटयोः स्पष्टम् । प्रागुक्तमिति । *षाष्ठिकस्वर इत्यर्थः । तेन "अनुदात्तौ सुप्पितौ" ( पा० सू० ३-१-४ ) इत्यस्य बाधः । एतच्चानन्तरस्येति न्यायलब्धम् । न च *तन्न्यायानुसरणे षट्त्रीत्यस्यैव बाधः स्यादिति वाच्यम् । *असम्भवात् । सर्वस्यैव षाष्ठिकस्वरस्यायं प्रतिषेध इति मनोरमायामपि । विभक्तिमतुब्विषये प्राप्तस्य सर्वषाष्ठिकस्येत्यर्थः । *एवं च 'वीरवत्तमम्' इत्यत्र "ह्रस्वनुड्भ्याम्" ( पा० सू० ६-१-१७६ ) इति *न भवति, *'देवी' 'कुमारी' इत्यादावन्तोदात्त-

---

न्यतरस्याम्" ( पा. सू. ६-१-१७७ ) इत्यस्य वैकल्पिकत्वात्तदभावपक्षे ।

*व्याख्यानादिति । 'जयन्तीनाम्' इत्यादिलक्ष्ये विभक्तेरन्तोदात्तत्वादिदर्शनमूलकव्याख्यानादित्यर्थः । वेत्यनुवृत्तेर्नेहेति । वेत्येतत्समानार्थकान्यतरस्यामित्यस्यानुवृत्तेरित्यर्थः । *आद्युदात्तमेतदिति । शतुरदुपदेशात्परत्वेन निघाते कृतेऽनुदात्तयोः शवकारशत्रकारयोरेकादेशः सोऽप्यनुदात्त एव, ङीप् चानुदात्त इति धातुस्वरेणाद्युदात्तः ।

षट्त्रिचतुर्भ्यो [ पा. सू. ६-१-१७९ ] । एभ्यः परा हलादिर्विभक्तिरुदात्ता । *प्रियत्रीन् पश्येत्यादीति । एतेन गौणेऽप्यस्य प्रवृत्तिरिति प्रागुक्तं स्मारितम् । *अत्र यद्वक्तव्यमिति । गौणेऽपि प्रवर्त्तते इत्यादि तत्रोक्तमित्यर्थः ।

न गोश्वन्सा ( पा० सू० ६-१-१८२ ) । *सौत्रत्वादिति । अवर्णपदस्य वर्णग्रहणपरिभाषया तदन्तपरत्वेऽपि तस्य सावित्येतद्विशेषणसापेक्षत्वेनासामर्थ्यादप्राप्तो द्वन्द्वः सौत्रत्वाद्भवतीत्यर्थः । *सप्तम्यलुक् चेति । सौत्रत्वादिति शेषः । *षाष्ठिकस्वर इत्यर्थ इति । एवं व्याख्यानेन विभक्तिस्वरस्य मतुप्स्वरस्य च सङ्ग्रहो ध्वनितः । *तन्न्यायानुसरणे='अनन्तरस्य' इति न्यायानुसरणे । *असम्भवादिति । अभावस्य भावप्राप्तिपूर्वकत्वस्य न्याय्यत्वात् 'अनन्तरस्य' इत्यनेन नैकस्यैव ग्रहणमिति भावः । *एवञ्च='षाष्ठिकस्वर' इत्यर्थस्वीकारे च । *न भवतीति । सावयर्णान्तत्वान्न भवतीत्यर्थः । *देवी इति । पचादिगणे

त्वं च सिध्यति । उदात्तनिवृत्तिस्वरेण हि तत्रान्तोदात्तत्वम् । *यत्तु तृतीयादिविभक्तेरुदात्तत्वं नेत्येतत्सूत्रं विवृण्वन्ति । तन्न, *लक्ष्यविरोधात् । *एतेन किंचित्स्वराणामपि बाधः स्यात् । तथा च "कितः" ( पा० सू० ६-१-१६५ ) इति सूत्रे *आक्षिक इत्युदाहरणपरवृत्तिविरोध इत्यपास्तम् । *"अनुदात्तं पदम्" [ पा० सू० ६-१-१५८ ] इत्यस्य तु परिभाषात्वाद्विभक्त्यादिस्वरत्वाभावाच्च न बाधः । *"ऊडिदम्" [ पा० सू० ६-१-१७१ ] इत्यस्य न निषेधः । पदादे रैशब्दस्य च ग्रहणवैयर्थ्यापत्तेः । गवां शतेति । "सावेकाचः" ( पा० सू० ६-१-१६८ ) इति प्राप्तिः । *नन्वत्र सप्तमीबहुवचने सावेकाज्रूपक्षो इति, न ततः परेयं विभक्तिः । न च स्थानिवद्भावः "गोः पूर्वणित्वात्वस्वरेषु" इति वार्तिकेन स्वरे कर्तव्ये निषेद्धव्ये वा गोशब्दादेशस्य स्थानिवत्त्वनिषेधेन विधिनिषेधयोरुभयोरप्यप्राप्तेः । *अत एव*सुगुपाल इत्यत्र "गोतन्तियवं पाले" [ पा० सू० ६-२-७८ ] इति *स्वरो न । एतेन सुगुना बहुगुनेति *वृत्तिकारोक्तमपि *परास्तम् । *एवञ्च सुगुनेत्यादौ निषेधाभावे "अन्तोदात्तादुत्तरपदात्" [ पा० सू० ६-१-१६९ ] इति *भवत्येवेत्य-

---

देयडिति पाठात् टित्वात् ङीप् । तस्मिन् "यस्येति च" ( पा० सू० ६-४-१४८ ) इत्यकारलोपः । 'अनन्तरस्य' इति न्यायानुसरणे "अनुदात्तस्य च यत्र" ( पा० सू० ६-१-१६१ ) इत्यस्यापि बाधः स्यादिति भावः । प्राचीनोक्तप्रकृतसूत्रव्याख्यानमयुक्तमित्याशयेनाह—*यत्त्विति । *लक्ष्यविरोधात्=वीरवत्तममित्येतल्लक्ष्यविरोधादित्यर्थः । *एतेन='अनन्तरस्य' इति न्यायेनोक्तयोरेव बाधकथनेन । *आक्षिक इति । अक्षैर्दीव्यतीति ठक् । पूर्वोक्तन्यायेन "अनुदात्तम्पदम्" ( पा० सू० ६-१-१५८ ) इत्यस्य बाधाभावस्य सिद्धावपि तत्र प्रकारान्तरमप्यस्तीति सूचयन्नाह—*अनुदात्तम्पदमित्यादि । सावर्णान्तत्वात्प्राप्तमतिप्रसङ्गं वारयति—*ऊडिदमित्यस्येति । सावित्यस्य तत्र सप्तमीबहुवचनबोधकत्वं रूपस्य च विवक्षेति प्राग्व्यवस्थापितमिति गवां शतेत्यत्र न प्राप्तिरित्याशयेनाह—*नन्वत्रेति । ननु स्वरे कर्तव्ये स निषेधो भवति वार्त्तिके स्वरे इत्युक्तत्वादिति कथन्निषेधे कर्तव्ये स्थानिवत्त्वनिषेधोऽत आह—*अत एवेति । स्वरे निषेद्धव्येऽपि तस्य निषेधस्येष्टत्वादेव । *सुगुपाल इति । शोभना गावो यस्य स सुगुस्तस्य पाल इत्यर्थः । *स्वरो न=पूर्वपदाद्युदात्तत्वञ्च । किन्तु पूर्वपदस्यानुदात्तत्वमेव भवति समासस्येत्येतदैक्यतापन्नशेषनिघातात् । *वृत्तिकारोक्तमिति । निषेधादाहरणमिति शेषः । *परास्तम्=गोग्रहणेन गुशब्दस्याग्रहणात्परास्तम् । प्राप्तेरेव निषेधविधेर्नास्तीति भावः । तथा चात्र यः स्वरो भवति तमाह—*एवञ्चेति । *भ-

रुचेरुदाहरणान्तरमाह—गोभ्य इति । शुनश्चिच्छेपमिति । *अत्र-चिदिति संहितापाठे *बाहुलकाच्छुनःशेपशब्दस्य मध्ये प्र-क्षिप्यते । पदकाले तु शुनः शेपं चिदिति पठ्यते । "शेपपुच्छलाङ्गूलेषु" ( का० वा० ) इत्यलुक् । वनस्पत्यादित्वादुभयपदप्रकृतिस्वरः सौ नलोपस्यासिद्धत्वात् श्वनिति रूपमेकदेशविकृतन्यायेन *ततः परा विभक्तिरिति "सावेकाचः" [ पा० सू० ६-१-१६८ ] इति प्राप्तिः । प्रथमैकवचने इति । *न तु "सावेकाचः" ( पा० सू० ६-१-१६८ ) इतिवत्सुपो ग्रहणम् । यत्तदोः स्त्रियामवर्णान्तत्वेऽपि लिङ्गान्तरे दकारान्तत्वात् *व्याख्यानाच्चेति भावः । तत्र सावित्यवर्णान्तविशे-

---

षत्वेवेति । "नञ्सुभ्याम्" ( पा० सू० ६-२-१७२ ) इत्यनेन सुगुशब्दस्यान्तोदात्तत्वात् । ननु शुनश्चिच्छेपमित्यपि कथमुदाहरणम् । सप्तमीबहुवचने श्वस्विति दर्शनादत आह—*अत्रेति । *बाहुलकात्="व्यत्ययो बहुलम्" ( पा० सू० ३-१-८५ ) इति बहुलग्रहणात् । *ततः परेति । श्वन्निति रूपात्परेत्यर्थः । अर्द्ध-न्यूनविकारस्य सत्त्वादेकदेशविकृतन्यायस्य प्रवृत्तिः । एवञ्च पदपाठकाले पठ्यमाने शुनःशेपमित्यत्र संहितायाञ्च शुन इत्युदाहरणमिति बोध्यम् । "सावेकाचः" ( पा० सू० ६-१-१६८ ) इतिवत्सप्तमीबहुवचनशङ्कां वारयति-*न त्विति । *व्याख्यानादिति । प्रकृतसूत्रस्थभाष्यदर्शनमूलकव्याख्यानादित्यर्थः । तत्र हि—"सावित्ति किमिदम्प्रथमैकवचनस्य ग्रहणमाहोस्वित्सप्तमीबहुवचनस्य ? कुतः सन्देहः ? समानो निर्देशः । पुरस्तादेष निर्णयः सप्तमीबहुवचनग्रहणमिति । इहापि तदेव भवितुमर्हति । यदि सप्तमीबहुवचनस्य ग्रहणं 'ताभ्यां ब्राह्मणाभ्याम्' 'याभ्याम् ब्राह्मणाभ्याम्' अत्र न प्राप्नोति । विधिरप्यत्र न सिध्यति । किङ्कारणम् ? न ह्येतद्भवति यत्सौ रूपम् । इदन्तर्हि तेभ्यो ब्राह्मणेभ्यो येभ्यो ब्राह्मणेभ्यः । विधिश्च सिद्धो भवति । निषेधस्तु न प्राप्नोति । अस्ति सप्तमीबहुवचनस्य ग्रहणे किञ्चिदिष्टं सङ्गृहीतम्भवति आहोस्विद्दोषान्तमेव ? अस्तीत्याह । इह याभ्यो ब्राह्मणीभ्यस्ताभ्यो ब्राह्मणीभ्य इति विधिश्च सिद्धो भवति प्रतिषेधश्च । अस्तु तर्हि प्रथमैकवचनस्य ग्रहणम् । तेनेति स्वरः पुंसि न सिध्यति । न चावश्यं पुंस्येव, स्त्रियां पुंसि नपुंसके च तेन ब्राह्मणेन तया ब्राह्मण्या तेन कुण्डेनेति । सप्तमीबहुवचनस्यापि ग्रहणे एष दोषो भवति । तस्मादुभाभ्यामपि प्रतिषेधे यत्तदोश्च ग्रहणङ्कर्त्तव्यम् । न गोश्वन्सावर्णराडङ्क्रुङ्कृद्भ्यो यत्तदोश्च" इति भाष्ये उक्तम् । एतेन भाष्यप्रघट्टकेन सावेकाच इति सूत्रे सावित्यनेन सप्तमीबहुवचनस्य ग्रहणं रूपविवक्षा च "न गोश्वन्" ( पा० सू० ६-१-१८२ ) इति सूत्रे तु प्रथमैकवचनस्य ग्रहणं रूपाविवक्षा चेति निर्णय इति

षणं, सौ यदवर्णान्तं दृष्टं तस्मादित्यर्थः । "सावेकाचः" [ पा० सू० ६-१-१६८ ) इतिवत् रूपविवक्षा त्वत्र न, व्याख्यानात् । *एतेन तेभ्य इत्यत्र सौ यदवर्णान्तं रूपं ततः परत्वाभावात् कथमत्र निषेधप्राप्तिरिति परास्तम् । सौ यदवर्णान्तं दृष्टं ततोऽनवर्णान्तादपि सिद्धेः । नन्वेवमपि श्वन्ग्रहणं व्यर्थं श्वा इति प्रथमैकवचनेऽवर्णान्तत्वात् इति चेन्न । नलोपस्यासिद्धत्वेना*दोषात् । *अत एव ज्ञापकात्स्वरनिषेधेऽपि नलोपासिद्धत्वप्रवृत्तिः । *अत एव 'पितृमान्' इत्यादौ मतुप उदात्तत्वं भवत्येव । (१)न चैवं नपुंसकप्रथमैकवचने 'तद्' इत्यादौ त्यदाद्यत्वाभावेन 'तेभ्यः कुलेभ्यः' इत्यादौ निषेधो न स्यात् । न चेष्टापत्तिः "यत्तदोश्च ग्रहणं कर्तव्यम्" इति भाष्यमते तत्प्राप्तेः इति वाच्यम् । सौ यस्य शब्दस्य क्वापि अवर्णान्तत्वं दृष्टं ततः परविभक्तेः सर्वत्र निषेध इत्यर्थात् । *वस्तुतस्तु अत्रापि रूपविवक्षाऽस्त्येव, परन्तु तादृशरूपात्परत्वं विभक्त्यादीनां तदु*त्पत्तिकालावच्छिन्नं ग्राह्यम् । *अत एव "चौ" (पा०सू०६-१-२२२) इति सूत्रस्थभाष्यविरोधो न । तत्र हि *'वेतस्वान्' इत्यत्रास्य प्राप्तिः शङ्किता । *अत एव 'कुमारी'इत्यादावुदात्तनिवृत्तिस्वरनिषेधक[illegible]परविप्रतिषेधसूत्रासिद्धत्वसूत्रस्थभाष्यविरोधोऽपि न । 'वीरवत्तमं, वीराणाम्' इत्या-

---

प्रतीयते । *एतेन=उपलक्षणविधया सुपरकत्वविशिष्टावर्णान्तत्वस्याश्रयणेन । *अदोषादिति । श्वन्ग्रहणवैयर्थ्यरूपदोषाभावादित्यर्थः । *अत एव=अस्मादेव । *अत एव=स्वरनिषेधेऽपि कर्त्तव्ये नलोपासिद्धत्वस्य प्रवृत्तेरेव । यदि निषेधे कर्त्तव्ये नलोपासिद्धत्वन्न स्यात्तदाऽनङादेशस्य यो नकारस्तस्य लोपे कृते प्रत्ययलक्षणेनावर्णान्तस्य सुपरत्वाद् "ह्रस्वनुड्भ्याम्" ( पा० सू० ६-१-१७६ ) इत्यस्य प्रतिषेधः स्यात् । "सावेकाचः" ( पा० सू० ६-१-१६८ ) इति सूत्रे यथा रूपविवक्षा तथा प्रकृतसूत्रेऽपि रूपविवक्षा तदेकवाक्यत्वादित्याशयेनाह—*वस्तुतस्त्विति । *उत्पत्तिकालावच्छिन्नमिति । प्रथमैकवचनोत्पत्तिकालावच्छिन्नमित्यर्थः । *अत एव=अत्रापि रूपविवक्षासत्त्वादेव । *वेतस्वानित्यत्रेति । सौ यदवर्णान्तं रूपन्ततः परत्वाभावेऽपि वेतस्शब्दस्य प्रथमैकवचनोत्पत्तिकालेऽवर्णान्ततया ततः परत्वान्निषेधशङ्का या कृता सा सुयोज्या, ड्मतुपो मतुब्ग्रहणेन न ग्रहणमिति त्वन्यत् । *अत एव=पूर्वोक्तार्थस्य विवक्षासत्त्वादेव । नन्वेवं यत्तच्छब्दात्पर-

---

(१) 'अत्रावर्णशब्देनावर्णस्थान्यपि गृह्यते । अत एव नपुंसक'इति 'न चैवं 'नपुंसक' इत्यत्र, 'इति परास्तम् । किञ्च' इति 'इति वाच्यम्' इत्यत्र, 'न दोष इति दिक्' इति 'इत्यर्थात्' इत्यस्याग्रे पाठ आदर्शपुस्तके ।

ह्युदाहरणम् । *यत्तदर्थं भाष्यकृता वचनमेवारब्धम् । *अत एव 'केभ्यः, काभ्यः' इत्यादौ *न निषेध इति भाष्योक्तमेव रमणीयम् । राट्-राजा परमराजा । आङिन्त्यञ्चतिः क्विन्नन्तोऽलुप्तनकारो गृह्यते । यत्र नलोपो नास्ति तत्रैव प्रतिषेधो यथा स्यादित्यर्थम्-प्राञ्चा, प्रत्यञ्चा । *आद्ये "सावेकाचः" ( पा० सू० ६-१-१६८ ) इति प्राप्तिः । अञ्चुशब्दश्च "अनिगन्तोऽञ्चतौ"( पा० सू० ६-२-५२ ) इति पूर्वपदप्रकृतिस्वरेणाद्युदात्तस्तदेकादेशोऽप्युदात्त एव । अन्त्यस्तु इगन्तपूर्वपदत्वात्कृत्स्वरेणान्तोदात्तः । तस्य "अन्तोदात्तादुत्तरपदस्य"(पा० सू०६-१-१६९)इति प्राप्तिः । यदि तु "अनिगन्तोऽञ्चतौ"[पा०सू०६-२-५२]इति सतिशिष्टविभक्तिस्वरस्यापि बाधकं तदा*ऽन्त्यमेवोदाहरणम् । गतौ तु लुप्तनकारत्वाद्विभक्त्युदात्तः *स्यादेव । वस्तुतश्चावितिसूत्रस्थभाष्यप्रामाण्यादत्र *लुप्तनकारस्यापि ग्रहणम् । *प्रतीचो बाहूनित्यादि तु छान्दसमिति बोध्यम् । कुङ् क्विन्नन्त एव । कृदिति करोतिः *कृन्ततिर्वा क्विबन्तः ।

दिवो झल् ( पा० सू० ६-१-१८३ ) । द्युभिरिति । "ऊडिदम्" ( पा० सू० ६-१-१७१ ) इति प्राप्तस्य निषेधः । *ननु दिव्शब्दः फिट्स्वरेणान्तोदात्तः वकारस्थानिक उकारः हल्स्थानिकत्वात् अनुदात्तः अस्वरको वा सर्वथाऽप्यन्तोदात्तत्वाभावात्कथमत्र प्राप्तिरिति चेन्न ।

---

विभक्तेः प्रतिषेधो न प्राप्नोतीत्यत आह—*यत्तदर्थमिति । *अत एव=तादृशार्थविवक्षासत्त्वादेव । *न निषेध इति । विभक्त्युत्पत्तिकालेऽवर्णान्तत्वाभावादिति शेषः । राडिति राजृ दीप्ताविति धातोः क्विबन्तस्य रूपम् । *आद्ये=प्राञ्चेत्यत्र । ननु प्राञ्चेत्यत्र न "सावेकाचः"( पा० सू०६-१-१६८ ) इत्यस्य प्राप्तिस्तत्र यादृशार्थवद्रूपं तादृशरूपकात् परत्वाभावादत आह—*अञ्चेश्छन्दसीतीति*अन्त्यमेव=प्रत्यञ्चेत्येव । *स्यादेवेति "सावेकाचः"(पा० सू० ६-१-१६८)इत्यनेन "अञ्चेश्छन्दसि"(पा० सू०६-१-१७०)इत्यनेन वा स्यादेव । *लुप्तनकारस्यापीति । तत्र हि दधीचः पश्येत्युदाहरणमुक्तम् । नन्वेवम्प्रतीचो बाहूनित्यत्र "अञ्चेश्छन्दसि"(पा० सू० ६-१-१७० ) इति प्राप्तस्य स्वरस्य प्रतिषेधः स्यात्तथा चोदात्तविभक्त्यन्तप्रयोगविरोध इत्यत आह—*प्रतीचो बाहूनित्यादीति । *कृन्ततिर्वेति । उभयोरपि कृदिति रूपस्य सम्भवेन विनिगमनाविरहादिति शेषः ।

दिवो झल् ( पा० सू०६-१-१८३ ) । द्युभिरित्यत्र "ऊडिदम्" [ पा० सू० ६-१-१७१ ] इत्यस्य तत्रान्तोदात्तग्रहणानुवृत्तेरप्राप्तिमाशङ्कते—*नन्विति ।

"दिव उत्" ( पा० सू० ६-१-१३१ ) इत्यत्रोदात्त उकारो *निपात्यते इत्यदोषात् । न चोदात्तनिपातन*सामर्थ्याद्विभक्तिस्वराप्रवृत्तौ "दिवो झल्" ( पा० सू० ६-१-१८३ ) इति व्यर्थमिति वाच्यम् । अहर्विमलद्यु इत्यादौ *अन्तरङ्ग*प्रकृतिस्वरस्य सतिशिष्टतया *बाधेन चारितार्थ्यात् । दिवेदिव इति । अत्र "ऊडिदम्" ( पा० सू० ६-१-१७१ ) इत्येव भवति ।

नृचान्य ( पा० सू० ६-१-१८४ ) । "सावेकाचः" (पा० सू० ६-१-१६८ ) इत्यस्यापवादोऽयम् । अत्र झलीत्यनुवर्त्तितं तत्फलन्तु नृा, नृे, नरि । अत्र सुपि यद्रूपं नृ इति *स्थानिवद्भावेन ततः परत्वात् "सावेकाच" ( पा० सू० ६-१-१६८ ) इत्यस्य प्राप्तिः । नृा नृे इति तु "उदात्तयणः" (पा० सू० ६-१-१७४ ) इत्यनेनास्य बाधादपि सिद्धम् । *इदञ्च "नामन्यतरस्याम्" ( पा० सू० ६-१-१७७ ) इति सूत्रे भाष्ये स्पष्टम् । *वेदे क्वचिन्नरीत्याद्युदात्तं पठ्यमानन्तु छान्दसत्वाद् बोध्यम् । *एतेन झलीति नानुवर्त्तते य एक इन्नर्यपां स्त्रीत्यत्र नरीत्यस्याद्युदात्तस्य दर्शनादित्यपास्तम् । लोके नरीत्यन्तोदात्तस्यैवेष्टत्वात् । न च योगविभागसामर्थ्येन विकल्पे लब्धेऽन्यतरस्याङ्ग्रहणेन व्यवस्थित-

---

*निपात्यत इति । अत्र च "दिवो झल्" [ पा० सू० ६-१-१८३ ] इति निषेधशास्त्रारम्भ एव मानम् । *सामर्थ्यादिति । यदि विभक्तिस्वरः स्यात्तदा तदेकवाक्यतापन्नशेषनिघातेन प्रकृतेरनुदात्तत्वं स्यादिति निपातनस्य वैयर्थ्यापत्तिरिति भावः । *अन्तरङ्गेति । प्रथमप्रवृत्तिकेत्यर्थः । *प्रकृतिस्वरस्य=फिट्स्वरस्य । *बाधेन=उत्तरकालप्रवृत्तिकत्वेनेत्यादिः ।

नृ चान्यतरस्याम्(पा० सू० ६-१-१८४) । निषेधविकल्पे विधिविकल्पपर्यवसानादाह—मूले चोदात्तेति । *स्थानिवद्भावेनेति । न च स्थानिवद्भावस्य "गोः पूर्वत्वणित्त्वात्वस्वरेषु" इत्यनेन निषेधात्कथमिह प्राप्तिरिति वाच्यम् । पूर्वत्वादिसाहचर्येण गोशब्दसम्बन्धेन विहितस्य प्रतिषेधात् । *इदम्=प्रकृतसूत्रे झलीत्यनुवर्त्तत इत्येतत् । न च "सावेकाचः" ( पा० सू० ६-१-१६८ ) इत्यनेन "नृ च" ( पा० सू० ६-१-१८४ ) इत्यनेन वा विभक्तेरुदात्तत्वविधानात्फलतो न विशेष इति वाच्यम् । "सावेकाचः" ( पा० सू० ६-१-१६८ ) इत्यस्य नित्यत्वमस्य तु वैकल्पिकत्वमिति विशेषात् । ननु क्व चिन्नरीति रूपमाद्युदात्तम्पठ्यते तस्य कथमुपपत्तिर्यतो झलादित्वविरहेण 'नृ च" ( पा० सू० ६-१-१८४ ) इत्यस्याभावेऽपि पूर्वोक्तरीत्या स्थानिवत्त्वेन "सावेकाचः" (पा० सू० ६-१-१६९ ) इत्यस्य प्राप्तेरित्यत आह—*वेदे क्व चिदिति । *एतेन=छान्दसत्वकल्पनया "व्यत्ययो

विभाषात्वबोधनात् *इष्टसिद्धिरिति वाच्यम् । झलीत्यस्यासम्बन्धे योगविभागस्य शासि नित्योदात्तत्व*विधायकत्वशङ्कावारणार्थत्वेनान्यतरस्याङ्ग्रहणस्य चरितार्थत्वात्। केचित्तु "दिवो झल्" ( पा० सू० ६-१-१८३ ) इति सूत्रं न कार्यम् । "अष्टनो दीर्घात् दिवोनादिः शतुरनुमो नदी च" इति न्यासेन सिद्धेः। किं चैवम् "ऊडिदम्" ( पा० सू० ६-१-१७१ ) इति सूत्रे दिवोग्रहणमपि मास्त्विति अपरं लाघवं, नृचेति सूत्रं न झलन्यतरस्यामिति कार्यमित्याहुः । भाष्यानुक्तव्यवस्थितविभाषाया अप्रामाणिकत्वाच्च ।

तित्स्वरितम् ( पा०सू० ६-१-१८५ )। "कर्षात्वतः" (पा० सू० ६-१-१५९ )इतोऽन्त इति वर्त्तते,*तित्प्रत्ययस्यान्तः स्वरितः स्यादित्यर्थः । क नूनं, कर्तव्यम् । तितिंक ? *कर्त्तव्यम्। अतः किम् ? तव्यतः *पर्यायेणाद्यन्तौ स्वरितौ मा भूताम् । ऋत उत् उदोष्ठ्य दिव उत् इदुद्भ्याम् औदित्यादौ तितिप्रत्ययग्रहणेन न दोषः ।

तास्यनुदात्तेत् [ पा० सू० ६-१-१८६ ]। तास्यादीनां समाहारद्वन्द्वः । अत्रोपदेशग्रहणं सम्भवव्यभिचाराभ्यां ङिद्भ्यामेव सम्बध्यते *न तु तास्यनुदात्तेद्भ्याम् । उपदिश्यत इत्युपदेशः। ङिदिति *कर्मधारयः । इत्सञ्ज्ञकङकारेणाकारेण चोपदिश्यमानस्य विशेषणात्तदन्तविधिः । तेन ङिदन्ताकारान्तोपदिश्यमानादित्यर्थः । अदुपदेशादित्यस्य य-

---

बहुलम्" ( पा० सू० ३-१-८५ ) इति स्वरव्यत्ययकल्पनेन । *इष्टसिद्धिरिति । "नृ च" ( पा० सू० ६-१-१८४ ) इति सूत्रबोधिताभावांशस्यैव प्रवृत्तिरिति 'नरि' इति प्रयोगे "सावेकाचः" ( पा० सू० ६-१-१६८ ) इत्यपि न प्रवर्त्तते । तेनैवाद्युदात्तत्वसिद्धौ छान्दसव्यत्ययकल्पनमन्याय्यमिति भावः । *विधायकत्वशङ्केति । नेत्यस्यासम्बन्धेन विधायकत्वशङ्केत्यर्थः ।

तित्स्वरितम् [ पा० सू० ६-१-१८५ ] 'तिति प्रत्ययग्रहणङ्कर्त्तव्यम्' इति वार्त्तिकमूलकव्याख्यानादाह—*तित्प्रत्ययस्येति । क नूनमित्यपपाठः । मूलेऽपि दर्शनात् । क्वावरमित्यस्योपलक्षणं वा । *कर्त्तव्यमिति । अत्र तव्यस्याद्युदात्तत्वम् । *पर्यायेणेति । शेषनिघातप्रयोजकस्य स्वरितत्वस्य पर्यायेण प्रवृत्तिः स्यान्न तु युगपदेवाद्यन्तयोः । "तवै चान्तश्च युगपत्" ( पा० सू० ६-२-५१ ) इत्यनेन समावेशाभावबोधनात् ।

तास्यनुदात्तेत ( पा० सू० ६-१-१८६ ) । *न तु तास्यनुदात्तेद्भ्यामिति । व्यभिचाराभावादिति शेषः । *कर्मधारय इति । एतत्फलमुत्तरत्र व्यक्तीभविष्य-

थाश्रुतत्वे हि हतो हथ *इत्यत्रापि स्यात्। कर्त्तेति लुट्, *आत्मनेपद-प्रथमस्य डारौरसः, तासिः *एकवचने उदात्तनिवृत्ति*स्वरेऽपि इतरयोः *फले विशेषः। ङित्त इति। अस्याप्यु*पदेशविशेषणत्वान्नेह—शृणुतं ज-रितुर्हवम्। अत्र श्नुरातिदेशेन ङित्। नन्वनुबन्धानामनेकान्तत्वात्कथं चक्षिङोऽपि ङिदन्तत्वमिति चेन्न, अनुबन्धेष्वेकान्तपक्षस्यैव न्याय्यत्वात्। किंच विशेषण*सामर्थ्याद्भविष्यति। चनस्यतामिति। चनोऽन्नं, त-दात्मन इच्छन्तमित्यर्थे क्यच् लोट्,थसस्तं, शप्। *स च पित्त्वशित्त्ववै-शिष्ट्येनाकारोपदेश एव तात्पर्यात् अकारान्तोपादिश्यमानो भवत्येव। चित्स्वरोऽपीति। परत्वादिति भावः। वर्धमानमिति। मुक् तु *अ-कारभक्तत्वाद् 'यदागमाः' इति न्यायेन न तस्य व्यवधायक इति न दो-

---

ति। *इत्यत्रापि स्यादिति। समुदायोपदेश एवावयवोपदेश इति हन्त्युपदेश एव हेत्यस्याप्युपदेश इत्युपदिश्यमानाकारात्परत्वात्क्तेऽनुनासिकलोपे हतो हथ इत्यत्र प्राप्नोति। यदि त्वकारेणोपदिश्यमानं विशेष्यते तदोपदिश्यमानं यदकारा-न्तमित्यर्थो भवति तदाऽत्र न भवति। यस्याकारान्तस्य स्वरूपबोधनतात्पर्येणाद्यो-च्चारणमृषिकर्तृकन्तदेव तथा भवति। प्रकृते तु नकारान्तस्य यत् स्वरूपन्तद्बोध-तात्पर्यकमाद्योच्चारणमिति भावः। तदुक्तम्प्रकृतसूत्रभाष्ये-"कथमिदं विज्ञायते अ-कारो य उपदेश इति आहोस्विदकारान्तं यदुपदेश इति? किञ्चातः? यदि वि-ज्ञायते अकारो य उपदेश इति, हतो हथ इत्यत्रापि प्राप्नोति। अथ विज्ञायते अ-कारान्तं यदुपदेश इति, न दोषो भवति" इति। न च समुदायबोधनतात्पर्येणावय-वस्याप्युच्चारणात्कथमेतदिति वाच्यम्। समुदायोच्चारणस्य कार्यार्थत्वात्समुदा-योपदेशो तात्पर्यन्तन्निष्पादकतया त्ववयवानाम्प्रत्येकमुपदिश्यमानत्वन्न तु हाति-समुदायस्य तत्त्वमित्याशयात्। *आत्मनेपदेति। परस्मैपदस्य तिपश्चेदयमादे-शस्तदा स्थानिवद्भावेन पित्त्वादेवानुदात्तत्वं सिद्धमिति भावः। आत्मनेपदैकवच-ने कृतेऽप्यनेन निघाते तस्योच्चारणासिद्धिमुपपादयति—*एकवचन इति। *स्व-रेपीति। तथा च नानुदात्तस्य श्रवणमिति भावः। *फले विशेषः=अनुदात्तस्य श्रवणेन विशेषः। *उपदेशविशेषणत्वादिति। उपदेशशब्दार्थो य उपदिश्यमान-स्तद्विशेषणत्वादित्यर्थः। *सामर्थ्यादिति। "येन विधिः" (पा० सू० १-१-७२) इतिसूत्रबोधिततदन्तविधिस्थलेऽन्तशब्दस्य चरमावयववाचकतयाऽनुबन्धानाम-नेकान्तत्वपक्षे ङित्पदार्थस्येत्संज्ञकङकारस्यानवयवस्य चरमावयवत्वाभावेन वि-शेषणसामर्थ्यादवयवत्वमेव भाविष्यति। ननु शप उपदेशे पान्तत्वेन कथमुपदेशे ऽदन्तत्वमत आह—*स चेति। शप् चेत्यर्थः। *अकारभक्तत्वादिति। अङ्गस्य अतो मुगित्यर्थेनायमकारस्यावयवस्तस्मादित्यर्थः। मुग्विधानसामर्थ्याद्वर्णग्र-हणे "यदागमाः" इति परिभाषा न प्रवर्त्तत इति वादिमताभिप्रायेणाशङ्क्य तन्म-

षः । *न च वर्णग्रहणे तदप्रवृत्तिः । अकारान्तोपादिश्यमानादित्यर्थेनेह वर्णग्रहणाभावात्, * 'वक्ष्यमाणः' इत्यादावपि अवयवावयवस्य समुदायावयवत्वात न मुक् स्वस्य व्यवधायक इति बोद्धव्यम् । *ननु पच् झि इति स्थिते आयन्नादिषूपदेशिवद्भावादन्तौ शपि लसार्वधातुकानुदात्तत्वं बाधित्वा*नित्यत्वाद*न्तरङ्गत्वाद्वा "अतो गुणे" ( पा० सू० ६-१-९७ ) इति कृते व्यपवर्गाभावादेतत्स्वराप्राप्तिः । अन्तवद्भावस्तूभयतआश्रयणे निषिद्धः । *तत्प्रवृत्तावपि*व्यपवर्गस्य तेनानतिदेशाच्च, पचत इत्यादौ सावकाशत्वाद् भूतपूर्वगतिर्न युज्यते, इति चेन्न । *इष्टापत्तेः *'पचन्ति ते वृषभान्' इत्यादौ आद्युदात्तत्वन्तु छान्दसत्वादित्याहुः । *स्वरभिन्नस्य प्राप्तया न नित्यत्वम्, उभयोरपि *पूर्वपरोभयापेक्षत्वेन नान्तरङ्गत्वं, पञ्चमीसमासे "अचः परस्मिन्" ( पा० सू० १-१-५७ ) इति स्थानिवद्भावेन व्यपवर्गस्य सुलभत्वाच्चेत्यन्ये । 'पचावः' इत्यादौ *दीर्घे कृतेऽपि उपदेशग्रहणादिदं प्रवर्तते, 'पचेत्' इत्यादावपि शपः परस्य यासुट्सहितस्य सार्वधातुकस्यानुदात्तत्वं भवत्येव । यासुट उदात्तत्वन्तु आशीर्लिङि चितुयात् इत्यादौ च सावकाशम् । अदुपदेशादिति तपरकरणात् 'क्रीणाति' इत्यादौ लसार्वधातुकानुदात्तत्वं न । प्रत्ययाप्रत्यययोरि*ति परिभाषया नेह-*जहि शत्रुमन्तिके । एतत्परिभाषाप्रवृत्तये एवा-

---

तमभ्युपेत्यैव समाधत्ते—*न चेत्यादिना भावादित्यन्तेन । ननु स्यप्रत्ययावयवाकारस्य भक्तो मुक् न तु स्येति समुदायस्येति कथमुपदिश्यमानं यददन्तन्तद्ग्रहणेन ग्रहणमत आह—*वक्ष्यमाण इत्यादि । पचन्तीत्यत्रास्य सूत्रस्याप्रवृत्तिमाशङ्कते—*नन्वित्यादिना । *नित्यत्वात्=कृताकृतप्रसङ्गित्वेन नित्यत्वात् । *अन्तरङ्गत्वात् । एकादेशस्य वर्णमात्रापेक्षत्वेनान्तरङ्गत्वं स्वरस्य सार्वधातुकसंज्ञकसमुदायापेक्षत्वेन बहिरङ्गत्वमिति भावः । *तत्प्रवृत्तावपीति । 'उभयत आश्रयणे' इत्यस्यानङ्गीकारेणेत्यादिः । *व्यपवर्गस्य=भेदस्य । परत्वव्यवहारस्य पूर्वपरयोर्यत्र भेदस्तत्रैव प्रवृत्तिरिति भावः । *इष्टापत्तेरिति । एकादेशस्थले स्वराप्रवृत्तावपीष्टापत्तेरित्यर्थः । ननु पचन्तीत्यादावेतत्सूत्रेणान्त्यस्यानुदात्तत्वाभावे सतिशिष्टेन प्रत्ययस्वरेणान्तोदात्तत्वापत्तिरत आह-*पचन्तीति । मतान्तरमाह—*स्वरभिन्नस्येति । एकादेशात्पूर्वमेतत्सूत्रप्रवृत्तावनुदात्तस्यैकादेश एतदप्रवृत्तौ तूदात्तस्येति स्वरभिन्नस्येत्यर्थः । एवमेकादेशो न नित्य उक्तरीत्या स्वरोऽप्यनित्य इति भावः । अन्तरङ्गत्वमपि खण्डयति—*पूर्वपर इति । *दीर्घे="अतो दीर्घो यञि" ( पा० सू० ७-३-१०१ ) इति दीर्घे । स्वरात्पूर्वमस्य प्रवृत्तिः परत्वाद्बोध्या । पचेदित्यत्र तु परत्वादियादेशेऽपि स्वरस्य गुणात्पूर्वम्प्रवृत्तिः । *इति परिभाषया । इ-

कारान्तोपदिश्यमानादिति व्याख्यातम्। अन्यथा वर्णग्रहणे *सा न प्रवर्तेत, *छान्दसो वा व्यत्ययस्त*त्र। नन्वास्ते इत्यादौ लुप्तं शपं गृहीत्वाऽदुपदेशादिति लसार्वधातुकानुदात्तत्वं सिद्धमिति व्यर्थमनुदात्तेन्ङिद्ग्रहणमिति चेन्न। लुप्तविकरणमादायास्याप्रवृत्तिज्ञापनार्थन्तत्सत्त्वात्। तेन *'अत्तः'इत्यादि अन्तोदात्तं सिद्धम्। *प्रसङ्गात्किंचिदुच्यते-(१)'रुणद्धि' इत्यादौ श्नमि कृते तन्मध्यपतितन्यायेन विशिष्टस्य धातुत्वाद्धातुस्वरेणान्तोदात्तत्वमिति "येन विधिः"(पा० सू० १-१-७२)इति सूत्रभाष्ये स्पष्टम्। श्नमो मित्त्वेन परत्वेति परत्वस्यात्राप्रवृत्तौ तत्सन्नियोगशिष्टाद्युदात्तत्वस्यापि तत्राप्रवृत्तिरिति शेषनिघातेन *तस्यानुदात्तत्वे प्राप्ते सतिशिष्टो धातुस्वरस्तत्रेष्ट्य इति तदाशयः।) न चैवं 'रुद्ध' इत्यत्र पूर्वोक्तरीत्या श्नम उदात्त-

---

ति परिभाषयाऽदन्तमुद्दिश्यमानस्प्रत्ययसंज्ञकमेव गृह्यते, तेनेति शेषः। *जहिशत्रुमन्तिक इति। अत्र जादेशात्परस्य निघातो न। *सा="प्रत्ययाप्रत्ययोः" इति परिभाषा। एवञ्चाकारान्तोपदिश्यमानेति व्याख्यानम्परिभाषाप्रवृत्तितात्पर्यकमेवेति बोध्यम्। परिभाषाऽभावे त्वाह—*छान्दस इति। *तत्र=जहीत्यत्र। अनुदात्ते प्रयोक्तव्ये उदात्तस्य प्रयोगश्छान्दसत्वात्। *अत्त इति। "अदिप्रभृतिभ्यः" (पा० सू० २-४-७२)। इति लुकि बलवत्तरे कृते प्रत्ययलक्षणसूत्रस्य विधायकत्वपक्षे ज्ञापकोपन्यासः। तस्य सूत्रस्य नियमार्थत्वमिति पक्षे प्राप्तिरेव नास्तीत्याह— प्रत्ययलक्षणस्येति। *प्रसङ्गादिति। स्वरस्य निरूपणप्रसङ्गादित्यर्थः। *तस्यानुदात्तत्वे प्राप्ते=धातोः शेषनिघाते प्राप्ते। "सेर्ह्यपिच्च" (पा० सू० ३-४-८७) इत्यपित्त्वे स प्रत्ययाद्युदात्तत्वेन हेरुदात्तत्वाच्छेषनिघातस्य प्राप्तिः। यत्र"परश्च"(पा० सू० ३-१-२) इत्यस्य प्रवृत्तिस्तत्रैव "आद्युदात्तश्च"(पा० सू० ३-१-३) इत्यस्य प्रवृत्तिरिति तदाशयः। वस्तुतो नायन्नियम इत्याशयेनाह—* यदि त्विति। प्रत्ययत्वाद्युदात्तत्वयोः सन्नियोगेनाद्युदात्तत्वस्याप्रवृत्तौ प्रत्ययसंज्ञाऽपि न स्यादिति

---

[१] 'रुणद्धि इत्यादौ श्नमि कृते श्नमः प्रत्ययाद्युदात्तत्वं न त्वागमा अनुदात्ता इति अस्य बाधसामान्यचिन्ताश्रयणेन सर्वस्वरापवादताया आकरे उक्तत्वात्, कथमत्र प्रत्ययाद्युदात्तत्वमिति चेन्न। तस्योत्पत्तिसन्नियोगेन जातत्वात्। न च पश्चात्तेनानुदात्तत्वमस्तु। आगमपदेन प्रत्ययत्वानाक्रान्तागमस्यैव ग्रहणात्। अत एव श्नम्विधावुपस्थितमाद्युदात्तश्चेति सार्थकम्। वस्तुत आगमा अनुदात्ता इति नास्त्येव। किन्तु शेषनिघातफलितार्थकथनमेवेत्युक्तं प्राक्। तस्य च नात्र प्राप्तिः प्रत्ययस्वरेणाद्युदात्ततायाः प्राप्तेः। एतेन येनविधिरिति सूत्रे यत्कैयटेनात्रानुदात्तत्वेन प्रत्ययस्वरस्य बाधाद्यदागमा इति न्यायेन सन्निशिष्टधातुस्वरेणेष्टसिद्धिरित्युक्तं तत् परास्तम्' इति कंसान्तर्गतग्रन्थस्थाने पाठ आदर्शपुस्तके।

त्वे *वर्ज्यमानस्वरेण तसोऽनुदात्तत्वं स्यादिति वाच्यम्। *'सतिशिष्टो-ऽपि विकरणस्वरः सार्वधातुकस्वरं न बाधते' इत्युक्तेरदोषात्। हत इति। "अनुदात्तोपदेश" (पा० सू० ६-४-३७) इति नलोपे कृते ह-न्तिरदन्तो *न तूपदेशे। निघ्नाना इति। *निघ्नशब्दान्नामधातोश्चानश्, शुगभावश्छान्दसत्वात्। *एतेन तास्यादिभ्यः परत्वाभावादिदं चिन्त्यमि-त्यपास्तम्। *दीव्यमान इत्यपि प्रत्युदाहरणम्। *न च सतिशिष्टश्यन्स्व-रेण चानश्स्वरस्य बाधापत्तिः, विकरणस्वरो *लसार्वधातुकस्वरमेव न बाधते, इतरसार्वधातुकस्वरन्तु बाधतैवेति वाच्यम्। "आत्ममाने खश्च" [पा० सू० ३-२-८३] इति सूत्रे *सार्वधातुकस्वरमात्राबाधकत्वस्यैव *भाष्ये व्यवस्थापितत्वादिति दिक्। विदीन्धि (का० वा०)। एभ्यो

---

शस्येत्वाभावापत्तौ तृणह इति निर्देशानुपपत्तिरिति भावः। *परत्वे त्वन्वाचय-इति। यत्र परत्वस्य बाधकानवतारस्तत्र तत्प्रवर्त्तते आद्युदात्तत्वन्तु तदभावेऽपी-त्याकारक इत्यर्थः। *अत एव=परत्वाभावेऽपि प्रत्ययसंज्ञास्वीकारादेव। *रुत्वा-र्थमिति। धातोर्द्दस्य "दश्च" (पा० सू० ८-२-७५) इत्यनेन रुत्वविधानात्। *त-दस्तु=मध्योदात्तत्वमस्तु। *वर्ज्यमानस्वरेणेति। सार्वधातुके परतो लोपः श्न-मोऽवयवस्य भवति सार्वधातुकश्चाज्झल्समुदायरूपमित्यचस्तत्तदशसमुदायस-म्पादकस्यापि लोपम्प्रति निमित्तत्वमित्याशयेन शङ्केयम्। परोक्तमभ्युपेत्यैव समाधानमाह—*सतिशिष्टोऽपीति। वस्तुतस्तस्याचः समुदायघटकत्वेन नि-मित्ततावच्छेदकत्वमेव न तु निमित्तत्वम् "अनुदात्तस्य च यत्र" (पा सू-६-१-१६१) इत्यनेन यदनुदात्तस्योदात्तलोपम्प्रति निमित्तता तस्यैवानुदात्तस्योदात्तवि-धानमिति स्वीक्रियते तदाऽत्र न तस्य सूत्रस्य प्राप्तिरिति बोध्यम्। *न तूपदेश इ-ति। प्रागेतदुपपादितम्। *निघ्नशब्दादिति। मूलविभुजादित्वेन विधीयमानक-प्रत्ययान्तनिघ्नशब्दप्रकृतिकाचाराक्विबन्तादित्यर्थः। *एतेन= उक्तार्थकनिघ्नश-ब्दादिति कथनेन। *दीव्यमान इत्यपीति। अत्र हि श्यन उपदिश्यमानाकारा-न्तात्परत्वं स्पष्टमेव। 'दीव्यमानः' इत्यपि प्रत्युदाहरणमयुक्तम्। श्यनो नित्त्वेन तदन्तस्याद्युदात्तत्वेन तदेकवाक्यतापन्ननिघातेन प्राप्तस्यापि "तास्यनुदात्तेत्" (पा० सू० ६-१-१८६) इत्यनुदात्तस्येवेहानुदात्तस्यैव श्रवणादित्याशयेना-शङ्क्य निराचष्टे—*न चेति। *लसार्वधातुकस्वरम्=लस्य स्थाने जायमानसार्व-धातुकस्य यत्प्रत्ययत्वादाद्युदात्तत्वन्तत्। *सार्वधातुकस्वरमात्रेति। अत्र मात्र-पदं कार्त्स्न्ये। तथा च चानशश्चित्त्वप्रयुक्तमन्तोदात्तत्वम्भवत्येवेति भावः। *भा-ष्ये व्यवस्थापितत्वादिति। तत्र हि-'सार्वधातुके यगिति कर्मवाचिनि सार्वधातुके विधीयमानो यक् यथा स्यादित्येवमर्थङ्कर्मकर्तृग्रहणङ्कर्त्तव्यम्' इति वार्त्तिककृ-तोक्तम्। ततः "कश्चात्र विशेषो यको वा श्यनो वा? यकि सत्यन्तोदात्तत्वेन

---

भवितव्यम्, श्यनि सत्याद्युदात्तत्वेन। श्यन्यपि सत्यन्तोदात्तत्वेनैव भवितव्यम्। कथम्?। श्नम्स्वरः श्यन्स्वरं बाधिष्यते। सतिशिष्टत्वात् श्यनस्वरः प्राप्नोति। आचार्यप्रवृत्तिर्ज्ञापयति—सतिशिष्टोऽपि विकरणस्वरः सार्वधातुकस्वरं न बाधते इति, यदयं तासे। परस्य लसार्वधातुकस्यानुदात्तत्वं शास्ति। लसार्वधातुक एवैतज्ज्ञापकं स्यात्। नेत्याह। अविशेषेण ज्ञापकम्" इति प्रतिपादितम्।

विन्दीन्धिखिदिभ्यो न (का० वा०)। "तास्यनुदात्तेत्" (पा० सू० ६-१-१८६) इति सूत्रभाष्येऽस्य वचनस्यानुपलम्भादाह—मूले एतच्चानुदात्तस्य चेति। तत्र हि—अनुदात्तस्येत्यनेन यस्मिन्ननुदात्ते उदात्तो लुप्यते तस्यानुदात्तस्योदात्तत्वं विधीयते तत्र यादृशस्थले समुदायरूपेऽनुदात्ते उदात्तलोपस्तत्र समुदायावयवस्यान्तस्यादेर्वाऽनेनोदात्तत्वं विधीयते इति विचारः। यदि "अनुदात्तस्य च यत्र" (पा० सू० ६-१-१६१) इति सूत्रे "कर्षात्वतः"(पा० सू० ६-१-१५९)इति सूत्रादन्त इत्यनुवर्त्तते तदाऽन्तस्येति पक्षस्य यदि नानुवर्त्तते तदा आदेरिति पक्षस्य सम्भवः। अनयोः पक्षयोः प्रकृतसूत्रेऽन्त इति नानुवर्त्तते इति युक्तमित्याभाति। अयचश्चित्करणसामर्थ्यात्। तद्धि द्वयन्त्रयमित्यत्र द्विग्निशब्दावयवेकारस्यायच्प्रत्ययावयवाकारे लोपेऽयचश्चित्त्वेऽसति तस्यान्तरतम्यादनुदात्ततया तदादेरनुदात्तत्वेन तस्मिन्नादिभूते उदात्तलोपादुदात्तनिवृत्तिस्वरेणाद्युदात्तत्वे प्राप्ते, अन्तोदात्तत्वं यथा स्यादित्येवमर्थम्। यदि त्वस्मिन् सूत्रेऽन्तपदानुवृत्तिस्तदा चित्त्वाभावेऽपि तयपोऽनुदात्तस्यायजादेशोऽन्तरतमोऽनुदात्तस्तस्मिन्नुदात्तलोपे सति तस्यायचोऽन्तस्योदात्तत्वम् "अनुदात्तस्य च यत्र" [पा० सू० ६-१-१६१] इत्यनेनैव सिद्धमित्ययजादेशस्य चित्त्वं व्यर्थं स्यात्। इत्थमन्तपदाननुवृत्तिस्तदाऽयचश्चित्त्वसामर्थ्यादेव "अनुदात्तस्य च" (पा० सू० ६-१-१६१) इत्यनेनादेरुदात्तत्वं विधीयत इति पक्षस्य लाभः। तत्रान्तग्रहणाननुवृत्तिपक्षे 'विद' विचारणे, 'खिद' दैन्ये, इति धातुभ्यास्परस्य लस्य स्थाने आतामित्यादेशे तस्य लसार्वधातुकानुदात्तत्वे कृते श्नमोऽवयवस्य "श्नसोरल्लोपः"[पा०सू० ६-४-१११] इत्यनेन लोपे 'विन्दाते' 'खिन्दाते' इत्यत्राकारेऽनुदात्ते प्रत्ययत्वादुदात्तस्य श्नमोऽवयवस्य लोप इति तस्याताभोऽवयवस्याऽऽकारस्योदात्तनिवृत्तिस्वरेणोदात्तत्वं सिद्ध्यति यद्यन्तपदानुवृत्तिस्तदैकारस्य प्राप्नोतीति दूषणमादौ भाष्येऽभिहितम्। ततोऽन्तग्रहणन्नानुवर्त्तत इत्यभिप्रायेणास्तु तर्ह्यादिः। आदिरिति चेदिन्धीत द्वयमित्यन्तोदात्तत्वं विधेयम्। इन्धीतेत्यत्रेन्धेर्लिङ्, तङ्, "तास्यनुदात्तेत" [पा० सू० ६-१-१८६] इत्यनुदात्तत्वम्। सीयुट्, स चागमानुदात्तत्वेनानुदात्तः, श्नम्, "श्नसोरल्लोपः" (पा० सू० ६-४-१११) इत्यल्लोपः। "श्नान्नलोपः" (पा० सू० ६-४-२३) इति नलोपः अत्रेकारेऽनुदात्ते श्नमोऽवयवस्याकारस्योदात्तस्य लोप इत्युदात्तत्वप्रसङ्गः। द्वयमित्यत्र "यस्येति च" (पा० सू०

स्था। ननु *"तास्यनुदात्तेत्" [ पा० सू० ६-१-१८६ ] इति सूत्रभाष्ये विदीन्धिखिदिभ्यः परस्यानुदात्तत्वं भवतीत्यर्थो लभ्यते, तत्कथं निषेध आरभ्यत इत्यत आह—एतच्चेति। एवञ्च तद्भाष्यविरोधात्प्रकृतसूत्रस्थं भाष्यं *प्रौढिवाद इति भावः।

आदिः सिचो [ पा० सू० ६-१-१८७ ]। प्रत्ययस्वरापवा-

६-४-१४८ ) इत्यल्लोपस्य जातत्वेनायच आदावनुदात्ते उदात्तस्य लोप इत्याद्युदात्तत्वम्प्राप्नोतीति भावः। एवम्प्रतिपाद्य "अस्तु तर्ह्यादिरुदात्तो भवती..."। ननु चोक्तमादिरिति चेदिन्धीत द्वयमित्यन्तोदात्तत्वं विधेयमिति। विदीन्धिखिदिभ्यश्च लसार्वधातुकानुदात्तत्वं लिङि नेति वक्तव्यम्' इत्युक्तं वार्त्तिककृता। ततो भाष्यकृतोक्तम्—"लिङ्ग्रहणेन नार्थः। विदीन्धिखिदिभ्यश्च लसार्वधातुकानुदात्तत्वन्नेत्येव। इदमपि सिद्धम्भवति विन्दाते खिन्दाते। अयचि चित्करणसामर्थ्यादन्तोदात्तत्वम्भविष्यति" इति। एतेनात्र मूले—विदीन्धिखिदिभ्यो नेति वक्तव्यमित्येवाभिहितमत्र त्वेभ्यो लिङस्तङोऽनुदात्तत्वे प्रतिषिद्ध इत्यभिहितमिति अत्र लिङ इत्यप्रकृताभिधानमिति दूषणम्परिहृतम्। अत्र लिङ्ग्रहणस्योक्तवार्त्तिके स्थितत्वात्। *तास्यनुदात्तेदिति सूत्रभाष्य इति। अत्र भाष्य इति कथनेन न तादृशं वचनं, किन्तु तत्रत्यग्रन्थसन्दर्भाल्लभ्यते इति सूचितम्। तथा हि—तत्र हि तुदत इत्यत्राद्युपदेशात्परत्वात्सावकाशं वचनं पचत इत्यत्र शप उपदेशे पकारान्तत्वान्न प्राप्नोति इत्याशयेन 'इतश्चोपसङ्ख्यानङ्कर्त्तव्यम्' इति वार्त्तिककृतोक्तम्। ततः 'अनेकान्ता अनुबन्धाः' इत्यस्थितपक्षेण समाधाने कृते "यद्यनेकान्ता अनुबन्धाः। अदिप्रभृतिजुहोत्यादिभ्यः प्रतिषेधो वक्तव्यः—अत्तः, जुहुत इति। अदुपदेशादित्यनुदात्तत्वम्प्राप्नोति" एवम्पूर्वपक्षे वार्त्तिकानुसारिणा कृते "स्थान्यादेशाभावात्, नैवात्र स्थानिनन्नैवादेशं पश्यामः" इति प्रत्याख्यानवादिनोक्तम्। आदेशोऽभावरूप इत्यदुपदेशात्परत्वन्नास्ति स्थानिवद्भावश्चाल्विधित्वात्प्रतिषिध्यत इति भावः। ततः समाधानान्तरमभिहितम् "अनुदात्तङिद्ग्रहणाद्वा। अथ वा यदयमनुदात्तङिद्ग्रहणं करोति तज्ज्ञापयत्याचार्यो न लुक्श्लुविकरणेभ्योऽनुदात्तत्वम्भवतीति। नैतदस्ति ज्ञापकम्। इनमर्थमेतत्स्यात्। विन्दाते खिन्दाते" इति। एतेनाभिधानेन विन्दाते खिन्दाते इत्यत्र लसार्वधातुकानुदात्तत्वम्भवतीति लभ्यते इति। *प्रौढिवाद इति। "अनुदात्तस्य च यत्र" ( पा० सू० ६-१-१६१ ) इतिसूत्रभाष्यपठितवचने लसार्वधातुकानुदात्तत्वन्नेति नकारस्य साक्षादभिधानादस्य भाष्यस्य प्रौढिवादत्वमित्यर्थः। किञ्चाकारान्तादुपदिश्यमानादित्यर्थेन 'पचत' इत्यादिसिद्धौ 'इतश्चोपसङ्ख्यानम्' इत्यस्यानुपयोग एव। किञ्चानेकान्तपक्षेण समाधानमपि क्लिष्टम्। तस्यास्थितत्वात्। एकान्तपक्षेऽपि "उदीचाम्माङो व्यतीहारे" ( पा० सू० ३-४-१९ ) इति निर्देशेनावयविप्रयुक्तकार्येष्वनुबन्धा न प्रतिबन्धका इति कल्पनया पचत इत्यादौ दोषाभावश्चेति।

दोऽयं परत्वात् "चितः" इत्येतं बाधते । *यासिष्टमिति । पक्षे 'चितः' इति *मध्योदात्तम्, एवं 'मा हि कार्ष्टाम्' इत्यादौ एतदभावे प्रत्ययस्वरेणान्तोदात्तत्वं *सिचश्चित्त्वेन "अनुदात्तं पदम्" (पा० सू० ६-१-१५८) इति परिभाषालब्धागमानुदात्तत्वबाधेऽपि सार्वधातुकप्रत्ययाद्युदात्तत्वस्य बाधे* मानाभावात् *विकरणस्वरस्य सार्वधातुकस्वराबाधकत्वाच्चेत्याहुः । *अनिटः सिचः परस्य पित उपसंख्यानं-मा हि कार्षम् । *पक्षे आद्युदात्तं, *पक्षेऽन्तोदात्तम् । न च 'मा हि कार्षीत्' इत्यत्रापि* ईटः पिद्भक्तस्या-*यं स्वरः प्राप्नोति* ईटः पूर्वमन्तरङ्गत्वात्*स्वरे कृते ततः ईटि *'लक्ष्ये-

---

आदिः सिचो [ पा० सू० ६-१-१८७ ] । प्रत्ययग्रहणपरिभाषया सिच इत्येतत्तदन्तपरम् । *यासिष्टमितीति । "बहुलञ्छन्दस्यमाङ्" ( पा० सू० ६-४-७५ ) इत्यट्प्रतिषेधः । *मध्योदात्तमिति । "यमरमनमाताम्" ( पा० सू० ७-२-७३ ) इति जातस्येटः सिजन्तावयवतया उदात्तत्वेन मध्योदात्तम् । मा हि कार्ष्टाम् । अत्र त्वट्प्रतिषेधो माङः प्रयोगादेव । "हि च" ( पा० सू० ८-१-३४ ) इति निघातस्य प्रतिषेधः । कृधातोः "सिचि वृद्धिः" ( पा० सू० ७-२-१ ) इति वृद्धिः । प्रत्ययस्वरेण अत्र सिचोऽनच्कत्वेन स्वरायोग्यतया प्रत्ययस्वरेण तामादेशस्योदात्तत्वेनान्तोदात्तत्वम् । नन्वत्र सिचश्चित्त्वेन तद्विषये सप्रकृतेस्त्यस्योपस्थित्या काशब्दावयवाकारस्योदात्तत्वेन भाव्यमित्यन्तोदात्तत्वमित्यनुपपन्नमत आह—*सिचश्चित्त्वेनेति । एतद्धि सिच उदात्तत्वार्थम् । सिच्च स्वतोऽनच् आदौ भवति इटि कृते तु साच्कस्तत्राप्यागमानुदात्तत्वस्य प्रवृत्तौ सिचश्चित्त्वं व्यर्थमिति भावः । *मानाभावादिति । मा हि कार्ष्टामित्यत्र सिचः स्वरायोग्यतया सतिशिष्टत्वेन सार्वधातुकप्रत्ययस्य प्रत्ययाद्युदात्तत्वम्भवत्येव । एतस्य प्रत्ययस्य चित्प्रत्ययप्रकृतिघटितसमुदायाघटकतया तत्र प्रत्ययाद्युदात्तत्वम्भवत्येवेति भावः । ननु "चितः" ( पा० सू० ६-१-१६३ ) इत्यनेन सतिशिष्टत्वेन प्रकृतेर्धातोरुदात्तत्वं स्यादत आह-*विकरणस्वरस्येति । एतच्च प्राग्व्यवस्थापितम् । एवञ्च धातुस्वरात्प्रत्ययस्वरस्य सतिशिष्टतया समुदायस्यान्तोदात्तत्वं स्यादेवेति भावः । "आदिः सिचः" ( पा० सू० ६-१-१८७ ) इत्यस्य वैकल्पिकत्वेनैतदभावे पित्प्रत्ययस्यानुदात्तस्य श्रवणापत्तिरत आह—*अनिट इति । अत्र वार्त्तिकेऽप्यन्यतरस्यामिति सम्बध्यते । अत एवाह—*पक्षे आद्युदात्तमिति । वार्त्तिकप्रवृत्त्यभावपक्षे आद्युदात्तमिति । आदिः सिच इत्यनेनेति शेषः । *पक्षे=वार्त्तिकप्रवृत्तिपक्षे । *ईटः="अस्तिसिचः" ( पा० सू० ७-३-९६ ) इति विहितस्य ईटः । *अयं स्वरः=अनिटः पित इति स्वरः । एतस्य प्रवृत्तावन्तोदात्तम्पदं स्यात् । समाधत्ते-*ईटः पूर्वमिति । ईडागमप्रवृत्तेः पूर्वमित्यर्थः । "इतश्च" (पा० सू० ३-४-१००) इति लोपात्प्रागिति शेषः । ईटस्तदा न प्राप्तिरपृक्तत्वाभावात् । एतच्चेटो बहिरङ्गत्वन्तत्कालप्राप्तिकत्वरूपमनिटः पित

लक्षणस्य' इति न्यायेन पुनरप्रवृत्तेः । *अत एवात्र भाष्ये मा हि कार्ष-मित्येवोदाहृतम् । *भाष्योदाहरणस्यो*पलक्षणत्वा*ल्लक्ष्यभेदेन न्याया-प्रवृत्तेश्च शेषनिघातविषयाभावाच्च भवत्येव तत्रापि स्वर इत्यन्ये ।

थलि च सेटीडम् ( पा० सू० ६—१—१९६ ) । अत्र अच इति वर्त्तते इति *भाष्ये स्पष्टम् । अजन्तेभ्यो विहितो यस्थल् सेट् तदन्ते पदे इट अन्त आदिश्च उदात्ता वा स्युरित्य-र्थः । *पक्षे *लित्स्वरः । "आदिर्णमुलि" ( पा० सू०६-१-१९४ ) इत्यतोऽन्यतरस्यामित्यनुवर्तमाने वाग्रहणं *कार्यिविकल्पार्थं सदादेरपि कार्यं प्रापयतीत्याह—आदिर्वेति । *अन्यतरस्यामित्यनुवृत्तेः फलमाह—यदेति । पर्यायेणेति । न तु युगपत् । "अन्तश्च तवै" (पा० सू० ६—१—

---

इत्यस्यान्तरङ्गत्वन्तु तत्कालप्राप्तिकत्वरूपम् । *स्वरे कृते=तिप उदात्तत्वे कृते । ततो लोपे कृते इति शेषः । *लक्ष्य इति । पित्त्वावच्छिन्नोद्देश्यकत्वेन "लक्ष्ये लक्ष-णस्य" इति न्यायस्यात्र प्रवृत्तिर्बोध्या । न च स्वरात्प्राक् "इतश्च" (पा० सू० ३-४-१०० ) इत्यस्य प्राप्तिः । स्वरस्य ततः परत्वेनादौ प्रवृत्तेः । न च लोपो नि-त्यः । स्वरभिन्नस्य प्राप्त्या तस्याप्यनित्यत्वादिति भावः । *अत एव=ईटः स्व-रस्यानिष्टत्वादेव । यत्रानिट इत्यस्याप्रवृत्त्योदात्तश्रवणम्भवति तदुदाहरणम्प्र-दर्शयितुमुचितमिति भावः । मतान्तरमाह—*भाष्योदाहरणेति । *उपलक्ष-णत्वादिति । तथा च मा हि कार्षीदित्यप्युदाहरणमित्यर्थोपलक्षणत्वादित्यर्थः । *लक्ष्यभेदेनेति । लक्ष्यव्यक्तिभेदेनेत्यर्थः । अकृते ईटि तिबवयवेकारस्य तात्प-रस्योदात्तत्वं कृते तु तस्मिन्तात्पूर्वस्येति भेदः ।

थलिं च सेटीडन्तो वा (पा० सू० ६-१-१९६) । *भाष्ये स्पष्ट-मिति । तत्र हि प्रकृतसूत्रेणेट उदात्तविधानादस्य सूत्रस्य सेट्येव प्रवृ-त्तिर्भविष्यतीत्यभिप्रायेण "सेड्ग्रहणङ्किमर्थन्न थलीडन्तो वेत्येवोच्येत । इडन्तो वेत्युच्यमाने इहापि प्रसज्येत—पपक्थ । नैतदस्ति प्रयोजनम् । अच इति वर्त्तते । इदन्तर्हि प्रयोजनं—पपाथ" इत्युक्तम् । "आदिर्णमुलि" (पा० सू० ६-१-१९४ ) इत्यत आदिग्रहणञ्चानुवर्त्तते । न च सौत्रान्तपदार्थेन सहादिपदार्थस्य विरो-धः । पर्यायेण प्रवृत्तिसम्भवादत एव वक्ष्यति—कार्यिविकल्पार्थमिति । *पक्षे=प्रकृतसूत्रप्रवृत्त्यभावपक्षे । *लित्स्वर इति । एवञ्च थलो लितः पूर्वस्यादेरुदात्त-त्वविधानेन 'लुलविथ' इत्यत्र लकाराकारस्य त्रयाणां स्वराभावे उदात्तत्वम् । *कार्यिविकल्पार्थमिति । कार्यिणः स्थानिनो विकल्पार्थमित्यर्थः । "आदिर्णमु-लि" ( पा० सू० ६-१-१९४ ) इति सूत्रस्थान्यतरस्यामित्यस्य तत्र कार्यविकल्प-सम्पादकत्वस्य सम्प्रतिपन्नतया तस्येहापि कार्यस्योदात्तस्य विकल्पबोधकता स्यादिति भावः । ननु यदि प्रकृतसूत्रस्थवाग्रहणेन कार्यिविकल्प एव क्रियते तदा कार्यस्य कथं विकल्प इत्यत आह—*अन्यतरस्यामिति । एतेन तदप्य-

२०० ) * इत्यादौ युगपद्ग्रहणाल्लिङ्गात् । थलि किम् ? लुलुविव । सेटीतिकिम् ? पपाथ । इड्ग्रहणन्तु यदेडागमस्तदा तस्योदात्तार्थं स्यात् । ततश्च यथा 'लुलविथ' इत्यादौ चतुर्णां *'पपिथ' इत्यादौ त्रयाणामेवमिडभावेऽपि स्यात्, सेड्ग्रहणात्तु सेट्येव भवति । एवञ्च 'पपाथ' इत्यत्र लित्स्वर एव । अजन्तेभ्यः किम् ? बिभेदिथ । 'पपिथ' इत्यादौ परत्वादातो लोपेऽजन्तात्परो नास्तीति विहित इत्युक्तम् ।

उपोत्तमं रिति ( पा० सू० ६-१-२१७ ) । प्रत्ययस्वरापवादोऽयम् । आहवनीये बाहुलकादधिकरणेऽनीयः, प्रीणनार्थात्कर्मणि वा । *ततो गतिसमासे कृदुत्तरपदप्रकृतिस्वरः । इति *प्रत्ययस्वराः ।

## अथ समासस्वराः

समासस्य [ पा० सू० ६-१-२२३ ] । यज्ञश्रियमिति । षष्ठीतत्पुरुषः, श्रीशब्देकारस्योदात्तत्वे आन्तरतम्यादियङप्युदात्तः । *ह-

---

नुवर्त्तत इति बोधितम् । *इत्यादाविति । आदिना "तवै चान्तश्च युगपत्" ( पा० सू० ६-२-५१ ) इत्यस्य परिग्रहः । *पपिथेत्यादाविति । भारद्वाजनियमाद्यदेडागमस्तदेत्यादिः । न चोक्तरीत्या सिद्धाविह सेड्ग्रहणवैयर्थ्यमिति वाच्यम् । 'पपक्थ' इत्यत्र दोषोपपादनपरभाष्यबलेन थलीत्यनेन थलो निमित्तस्य सद्भावो यत्र तस्य सर्वस्य कार्यं स्यात् । इड्ग्रहणन्तु यत्रेट् तत्र तस्यापि कार्यमित्यस्य कल्पनसम्भवात् ।

उपोत्तमं रिति ( पा० सू० ६-१-२१७ ) । अत्र सौवर्यः सप्तम्यस्तदन्तसप्तम्य इत्यनेन तदन्तस्योपोत्तमं ग्राह्यं तेन प्रत्ययावयवस्यापि कार्यमित्याशयेन मूले—'रित्प्रत्ययान्तस्य' इति व्याख्यातम् । नन्वाहवनीयेति समुदायस्य रित्प्रत्ययान्तत्वाभावात्कथमेतदुदाहरणमतोऽत्रोपोत्तममिति सूत्रप्रवृत्तेः फलमाह—*ततो गतिसमास इति । *ततः="उपोत्तमम्" ( पा० सू० ६-१-२१७ ) इति सूत्रप्रवृत्त्यनन्तरम् । *प्रत्ययस्वरा इति । प्रत्ययसम्बन्धिनः स्वरा इत्यर्थः । एवञ्च प्रत्ययनिमित्तकः प्रत्ययस्यैव वा यः स्वरः स सर्वोऽपि सङ्गृहीतः । इतिप्रत्ययस्वरविवरणम् ॥

## अथ समासस्वरविवरणम्

समासस्य (पा० सू० ६-१-२२३) । "अन्तोऽवत्याः" ( पा० सू० ६-१-२२० ) इति सूत्रादन्त इत्यनुवर्त्तते । *हल्स्वरप्राप्ताविति । अन्तशब्दस्य चरमावयववाचकतया क्वचित्समासस्य चरमावयवो हलपि सम्भवतीति तस्य स्थाने स्वरस्य प्राप्तिर्बोध्या ।

ह्स्वरप्राप्तौ व्यञ्जनस्याविद्यमानवद्भावात् 'राजदृषद्' इत्यादौ पकाराकार उदात्तः, पर्यायेण नानापदानां स्वरे प्राप्तेऽयमारम्भः ।

उदात्तस्वरितयोगीति । उदात्तस्वरितग्रहणम्*नुवर्त्तमानं *तद्वति वर्त्तते । पूर्वपदसामानाधिकरण्यात् । एवञ्च पूर्वपदस्य प्रकृतिभावस्तत्स्थयोरुदात्तस्वरितयोः प्रकृतिभावद्वारेणेति भावः । *यद्वा*पूर्वपदस्थेऽपि पूर्वपदशब्दो वर्त्तते । इदम् 'कुगति' [पा० सू० २–२–१८] इत्यत्र कैयटे स्पष्टम् । चित्रश्रव इति । *श्रूयत इति श्रवः, कीर्तिः । चित्रं श्रवो यस्येति *चित्रश्रवास्ततस्तमप् । बहुव्रीहाविति किम् ? राजपुरुषः । पूर्वसूत्रन्तु *'समपादः' इत्यत्र उदात्तस्वरितायुक्तपूर्वपदके सावकाशम् । समपाद इति । समशब्दः "त्वत्त्वसमसिमेत्यनुच्चानि" (फि० पा० ४ सू० ७८) इत्यनुदात्तः । हरदत्तस्तु *सूञो डमवित्याह । पादशब्दो वृषादित्वादाद्युदात्तः । *नन्व*त्रा*स्मिन्स्वरे सत्यपि समासान्तोदात्तत्वं भविष्यति । *'प्रियविश्व' इत्यादौ तु न । एकपदे द्वयोरुदात्तयोरसमावेशस्योक्तत्वेनासम्भवादिति चेन्न । सत्यपि सम्भवे बाधनं भवतीत्यङ्गीकाराददोषः । अन्यथोदात्तस्वरितयोः समावेशाभावे ज्ञापकाभावान्मनुष्यनाथ इत्यत्रोभयोः समावेशः स्यादित्याहुः ।

---

बहुव्रीहौ प्रकृत्या (पा० सू० ६–२–१) । *अनुवर्त्तमानमिति । मण्डूकप्लुत्याऽनुवर्त्तमानमित्यर्थः । "कर्षात्वतः" (पा० सू० ६–१–१५९) इत्यत उदात्त इति "तित्स्वरितम्" (पा० सू० ६–१–१८५) इत्यतः स्वरितपदमनुवर्त्तते अर्थाधिकारश्चेहाश्रीयते । *तद्वति वर्त्तत इति । लक्षणयेति शेषः । लाघवादाह—*यद्वेति । अस्मिन्पक्षे न शब्दद्वयस्य लक्षणा इति भावः । *पूर्वपदस्थेऽपीति । 'तात्स्थ्यात्ताच्छब्द्यम्' इति न्यायेनेति शेषः । "समासस्य" (पा० सू० ६–१–२२३) इत्यस्यापवादोऽयम् । *श्रूयत इत्यादि । असुन् कर्मणीति बोध्यम् । *चित्रश्रवा इति । अत्र पूर्वपदस्य चित्रशब्दस्य "अमिचिमिदिशसिभ्यः क्त्रः" (उ०पा०४सू०६१३) इति क्त्रप्रत्ययान्ततयान्तोदात्तत्वेन तस्यैव स्वरस्यावस्थानान्मध्योदात्तत्वम् । *समपाद इति । समः पादो यस्येत्यर्थः । *सूञो डमबिति । डित्वाट्टिलोपे पित्वादनुदात्तत्वे तस्मिन्धातुस्वरेणोदात्तस्य टेर्लोपे उदात्तनिवृत्तिस्वरेणान्तोदात्तत्वे प्राप्ते "त्वत्त्वसमसिम" (फि० पा० ४ सू० ७८) इत्यनुदात्तत्वम् । "बहुव्रीहौ" (पा० सू० ६–२–१) इत्यस्य "समासस्य" (पा० सू० ६–१–२२३) इति सूत्रापवादत्वाज्ञानेन शङ्कते—*नन्विति । *अत्र=समपाद इत्यादौ । *अस्मिन् स्वरे=पूर्वपदप्रकृतिस्वरे । अस्य सूत्रस्यापूर्वस्वरविधायकत्वाभावादिति शेषः । *प्रियविश्व इत्यादाविति । प्रियशब्दीयान्त्यस्य "अन्त्यात्पूर्वम्" (पा० सू० ६–२–८३) इत्याद्युदात्तः । यद्यत्र समासान्तोदात्तत्वं स्यात्तदो-

तत्पुरुषे [ पा० सू० ६-२-२ ]। तुल्यश्वेत इति। तुल्यशब्दो *यदन्त आद्युदात्तः। मन्द्यत्सखामिति। मन्देर्ण्यन्ताल्लः शत्रादेशः, तस्य छान्दसत्वादार्धधातुकत्वेन शबभावाददुपदेशादिति निघाताभावे प्रत्ययाद्युदात्तत्वमेव, णिलोपस्तु न। तं प्रति सार्वधातुकत्वाश्रयणात्। छन्दसि दृष्टानुविधानान्न वैपरीत्यं शङ्क्यम्। इत्थं मन्द्यच्छब्दोऽन्तोदात्तः। ततस्तत्पुरुषे*टच्यपि छान्दसत्वादेवात्र चित्स्वराभावः। *ननु 'परमं कारकं पश्य' 'परमेण कारकेण' 'परमे कारके' इत्यर्थे समासेऽतिप्रसङ्गः, द्वितीयातृतीयासप्तम्यन्तपूर्वपदत्वात्, न हि विशेषणसमासः प्रथमान्तानामेवेति नियमोऽस्तीति चेत्। न, लक्षणप्रतिपदोक्तपरिभाषया द्वितीयादिशब्दोच्चारणेनविहितसमासस्यैव *ग्रहणात्। शर्ङ्गीति गौरादिङीषन्तः। अव्ययेनञ्कु ( का० वा० )। निपातत्वादेव सिद्धे नञ्ग्रहणम् 'अकरणिः'इत्यादौ परस्यापि कृत्स्वरस्य*बाधनार्थमित्याहुः। *अव्यथीत्यत्र सतिशिष्टप्रत्ययस्वरबाधनार्थमतिस्र इत्यत्र सतिशिष्ट*विभक्तिस्वरस्य अचत्वारः इत्यत्र सतिशिष्टाम्स्वरस्य च बाधनार्थमित्येके। भाष्ये त्वेतदर्थं*वचनान्येवारब्धानि "अनुदात्तं पदम्" ( पा० सू० ६-१-१५८ ) इति सूत्रे। कुग्रहणश्चादिषु पाठाभावात्। केचित्तु चादि-

---

दात्तद्वयसमावेशः स्यादिति भावः। *एवञ्च=पूर्वोक्तदोषपरिहारस्यावश्यकत्वे च। *तदप्रवृत्तौ=समासान्तोदात्तत्वाप्रवृत्तौ। *पाशब्दस्येति। "स्वाङ्गशिटाम्"(फि० पा० २ सू० २९)इति पादशब्दस्याद्युदात्तत्वात्। श्लोकपादवाचकस्य तु वृषादित्वादाद्युदात्तत्वम्। *आवश्यक्येवेति। तथा सति प्रकृतसूत्राप्रवृत्तौ समासान्तोदात्तत्वं भवत्येवेति भावः।

तत्पुरुषे तुल्यार्थे ( पा० सू० ६-२-२ )। *यदन्तः="नौवयोधर्म"( पा० सू० ४-४-९१ ) इति यदन्तः। *टच्यपि="राजाहः सखिभ्यः" ( पा० सू० ५-४-९१ ) इति टच्यपि। परिनिष्ठितविभक्त्या समासपक्षाभिप्रायेण शङ्कते—*नन्विति। *ग्रहणादिति। अस्ति चात्र लक्षणप्रतिपदोक्तपरिभाषाप्राप्तिस्तत्तच्छब्दानुवादेन विधानात्। *बाधनार्थमिति। पुनरुपादानेन परस्यापि बाधसिद्धिर्वाक्यान्तरकल्पनया भवतीति भावः। मतान्तरमाह—*अव्यथीत्यत्रेत्यादिना। अव्यथीत्यत्र नञ्युपपदे व्यथधातोः "जिदृक्षि"इति इनि कृते व्यथीशब्दस्योपपदसमासः। *विभक्तिस्वरस्य="तिसृभ्यो जसः"(पा०सू० ६-१-१६६) इति विभक्तिस्वरस्य। *वचनान्येवेति। तत्र हि—यदुपपदङ्कृति नञ् तस्य स्वरो बलीयानिति वक्तव्यम्। अकरणिः (अत्र "आक्रोशे नञ्यनिः",पा० सू० ३-३-११२)। सहनञ्-

ष्वेव कुः पाठ्यः, इह तु न पाठ्यः, *एवञ्चाव्ययत्वमपि तस्य सिध्यति इत्याहुः । स्नात्वेति । अत्र समासान्तोदात्तत्वमेव । न च मयूरव्यंसकादिष्वेवास्यान्तोदात्तत्वं निपात्यतां *किमनेनेति वाच्यम् । सामिकृतं स्वयन्धौतमित्यादिवारणाय परिगणनस्यावश्यकत्वादिति कैयटादयः । भाष्यकृता त्व*न्तोदात्तनिपातनमाश्रित्य परिगणनं प्रत्याख्यातम् । तस्यायं भावः—'सामिकृतं, स्वयन्धौतम्' इत्यादौ परिगणनत्वादिनाऽपि दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वमि*ष्यत एवेति । मुहूर्त्तसुखमिति । "कालाध्वनोः" ( पा० सू० २-३-५ ) *इति द्वितीया । *काष्ठाश्रितादौ "अहीनेद्वितीया" ( पा० सू० ६-२-४७ ) इति भाष्यं, वनातीत इत्यादौ थाथादिस्वरः, ग्रामगमीत्यादौ णिनिस्वरः, खट्वारूढे वृद्धादीनाञ्चेति, तस्मान्मुहूर्तसुखादीन्येवोदाहरणानीति भावः । भोज्योष्णमिति । "कृत्यतुल्य" ( पा० सू० २-१-६८ ) इति समासः । कृत्यांशे लक्षणप्रतिपदोक्तपरिभाषा*न प्रवर्त्तते इति*काश्चित् ।

---

निर्दिष्टस्य च नञ्स्वरो बलीयानिति वक्तव्यम् । अव्यथी । (अत्र "जिदृक्षि" (पा० सू० ३-२-१५७) इति सूत्रेऽव्यथेति निपातनाद्धातुना सह नञ्समासे नलोपे प्रत्यय इति प्रत्ययस्वरस्य सतिशिष्टत्वेऽपि वचनान्नञ्स्वरः "तत्पुरुषे तुल्यार्थ" (पा० सू० ६-२-२ ) इति विहितो बलीयानित्यर्थः । ) अतिसः--विभक्तिस्वरान्नञ्स्वरो बलीयानिति वक्तव्यम् । अचत्वारः, अनड्वाहः—विभक्तिनिमित्तस्वराच्च नञ्स्वरो बलीयानिति वक्तव्यम्" । एवं वचनारम्भेण नञ्स्वरः साधितः । भाष्ये त्वित्यनेन भाष्यकृता स्पष्टप्रतिपत्त्यर्थमनेकवचनानि यद्यप्यारब्धानि तथापि वचनेन पूर्वोक्तानाम्फलानां साधनापेक्षया परिगणनमध्ये नञः पृथक् पाठकरणेन भाष्यकृतैवोक्तानाम्प्रयोजनानामन्यथा सिद्धिः सूचितेति स एव प्रकारो लाघवाद्युक्तोऽत एव मुख्यार्थकैकशब्दोपादानं कृतमिति बोध्यम् । *एवञ्च=चादिषु कुशब्दपाठे च । स्नात्वाकालकः । अत्र स्नात्वेत्यस्य कालकपदस्य च मयूरव्यंसकादित्वात्तत्पुरुषः । *किमनेन=किम्परिगणनेन । *अन्तोदात्तनिपातनमिति । स्नात्वाकालकशब्दोऽन्तोदात्तो मयूरव्यंसकादिषु पठनीय इत्याश्रित्येत्यर्थः । *इष्यत एवेतीति । एवञ्च 'स्नात्वाकालकः' 'पीत्वास्थिरकः' इत्यत्र समासार्थन्निपातनस्यावश्यकत्वेन तेनैव स्वरे सिद्धे परिगणनन्न कार्यम् । सामिकृतमित्यादिसिद्धिश्चानायासेन भविष्यति । एवञ्चापरिगणनादव्ययपूर्वपदप्रकृतिस्वर एवास्तु । *इति द्वितीयेति । "अत्यन्तसंयोगे च" ( पा० सू० २-१-२९) इति समासः । मुहूर्तशब्दो "लघावन्त" (फि० पा० २ सू० ४२) इति मध्योदात्तस्तस्य द्वितीयान्तस्य प्रकृतिस्वरः । अन्योक्तमुदाहरणन्त्वन्यथासिद्धमित्याह—*काष्ठाश्रितादाविति । *न प्रवर्त्तत इति । स्वरविधायकसूत्रे

*कृष्णसारङ्ग इति । कृष्णलोहितौ "वर्णानान्तण" ( फि० पा० २ सू० ३३ ) इत्याद्युदात्तौ । *वेदे तु "कृष्णस्यामृगाख्या चेत्" ( फि० पा० १ सू० १ ) इति कृष्णोऽन्तोदात्तः । अत्र सूत्रे*एकं वर्णग्रहणं व्यर्थम् । "वर्णो वर्णेन" ( पा० सू० २-१-६९ ) इति प्रतिपदोक्तसमासग्रहणादित्याहुः ।

अरित्रगाधमिति । अरित्रं नौकाष्ठं तस्य गाधं तेन स्पृश्यमानतलमित्यर्थः । षष्ठीसमासा एते । न पुनरायाम एवेति । स च तिर्यगूर्ध्वाधरो वेत्यन्यत् ।

---

"कृत्यतुल्याख्या" ( पा० सू० २-१-६८ ) इत्येव सिद्धे कृत्यतुल्यार्थयोर्वियोगेन पाठादर्थपदोपादानाच्च तदंशे लक्षणप्रतिपदोक्तपरिभाषा न प्रवर्त्तेत इति तेषाम्भावः । अत एव कुरुगार्हपतेति सूत्रे 'पण्यकम्बलः संज्ञायाम्'इत्युपादाय कृत्यप्रत्ययान्तत्वात्पूर्वपदप्रकृतिस्वरे सिद्धे पण्यकम्बलः संज्ञायामेवेति नियमार्थमिदमिति भाष्यकैयटयोरुक्तम् । विशेषणसमास इति च व्याख्यातम् । "कृत्यतुल्याख्या" ( पा० सू० २-१-६८ ) इति प्रतिपदोक्तः समासस्तु दुर्लभः । कम्बलपदस्य जातिवाचकत्वात् । *कश्चिदिति । अत्रारुचिबीजन्तु परिनिष्ठितविभक्त्या समासम्प्रदर्श्य 'परमकारकम्'इत्यादौ स्वरप्राप्तिमाशङ्क्य "लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव" ( प० भा० ) इति प्रतिपदं यो द्वितीयातृतीयासप्तमीसमासस्तस्य ग्रहणमिति भाष्ये उक्तन्न तु कृत्यांशेऽप्युक्तपरिभाषाऽप्रवृत्तिरुक्ता प्रकृतसूत्रभाष्ये । तेन [illegible] भाष्यप्रामाण्यादेव परिभाषाप्रवृत्त्यभावे सिद्धे ज्ञापकानुपयोग इति । "कुरुगार्हपत" ( पा० सू० ६-२-४२ ) इति सूत्रभाष्याच्च ।

वर्णो वर्णेष्वनेते ( पा० सू० ६-२-३ ) । अत्रानेते इत्येतत्समानाधिकरणं वर्णेष्वित्यस्य विशेषणम् । न च विशेष्यवाचकपदस्य बहुवचनान्तत्वस्यैकवचनान्तमनेत इत्येतत्कथं विशेषणमिति वाच्यम् । नञ्समासस्योत्तरपदार्थप्रधानतयोत्तरपदार्थस्यैकत्वेन समुदायस्यैकवचनान्तस्य तद्विशेषणत्वसम्भवात् ।

* कृष्णसारङ्ग इति । अत्र "वर्णो वर्णेन" ( पा० सू० २-१-६९ ) इति समासः । वर्णवाचकयोः समासे वर्णवाचकस्य कृष्णशब्दस्याद्युदात्तत्वेन समुदायाद्युदात्तत्वम् । मौलमाद्युदात्तोदाहरणं लौकिकमिति सूचयितुमाह— *वेदे त्विति । *एकमिति । विशेष्यविशेषणान्यतरमित्यर्थः । प्रत्युदाहरणेषु प्रतिपदोक्तसमासाभावादेव दोषाभावादिति भावः ।

गाधलवणयोः ( पा० सू० ६-२-४ ) । अरित्रगाधमित्यत्र षष्ठीतत्पुरुषः । अरित्रशब्द इत्रान्तत्वेन मध्योदात्तस्तस्य प्रकृतिभावे सतीकारस्यैवास्मिन् प्रयोगे उदात्तस्य श्रवणम् ।

दायाद्यम् ( पा० सू० ६-२-५ ) । अस्य सूत्रस्य 'धनदायाद' इत्याद्यु-

दायाद्यम् ( पा० सू० ६-२-५ )। *दीयते स दायोंऽशः, तमादत्ते दायादः, तस्य भावो दायाद्यं दायादानं*तत्संबन्धो वा। प्रकृते तु लक्षणया दायाद्यशब्द आदीयमाने दाये एव वर्त्तते। *यद्वा दायादमर्हतीत्यर्थे दण्डादित्वाद्यत्, स चोपस्थितत्वात् पूर्वपदार्थभूतो दाय एवेति बोद्धव्यम्। 'धनस्य दायादः' इति "स्वामीश्वर" ( पा० सू० २-३-३९) इति संबन्धसामान्यषष्ठ्यन्तेन समासः। परमदायाद इति। अत्र समासान्तोदात्तत्वमेव।

गमनचिरमिति। विशेषणसमासः, ल्युडन्तस्य*भाववाचित्वात्। *चिरकृच्छ्रयोः कालकष्टवाचित्वेऽपि प्रकृते चिरकालभाविनि कृच्छ्रयोगिनि चार्थे चिरकृच्छ्रयोर्व*र्तनात्सामानाधिकरण्यम्। *एवञ्च चिरकृच्छ्रयोः पूर्वनिपातः प्राप्नोतीत्यतो मयूरव्यंसकादिसमासोऽत्रेत्याहुः। षष्ठीसमास इत्यन्ये। प्रतिबन्धि जायत इति। कार्यसिद्धेः प्रतिबन्धकं जायत इत्यर्थः। प्रतिबन्धिशब्दे आवश्यके णिनिः। मूत्रकृच्छ्रमिति। षष्ठीसमासोऽयम्।

मूत्रपदेनेति । मूत्रमिषेणेत्यर्थः । उच्चारः पुरीषक्रिया ।

---

दीहरणन्तदा भवेद्यदि दायाद्यशब्दः स्वत्ववत्परः स्यात्तथा तु न सम्भवति कृत्तद्धितसमासेभ्यः सम्बन्धाभिधानम्भावप्रत्ययेनेति सिद्धान्तादत एतस्य तत्परत्वमुपपादयति—*दीयत इत्यादिना। दाधातोः कर्मणि घञ्। तदन्तप्रकृतिकषष्ठ्यन्तस्य आङ्पूर्वाद्दाधातोः कर्त्तरि के निष्पन्नेनाऽऽदशब्देन समासः। ततो भावे ष्यञ्। प्रकृतिजन्यबोधे कर्तृत्वांशे क्रियायाः प्रकारतया भानासिप्रायेण दायाद्यशब्दस्य दायादानपरत्वमुक्तम्। साक्षात्क्रियायाः कर्तृत्वसम्बन्ध एव प्रकार इत्याशयेनाह—*तत्सम्बन्धो वेति। लक्षणया दायाद्यशब्दस्य दीयमानपरत्वकल्पने क्लेश इत्यतः प्रकारान्तरमाह—*यद्वेति । आङ्पूर्वकाद्दाधातोर्मूलविभुजादित्वात्कप्रत्ययः आदत्त इत्यर्थे बोध्यः।

प्रतिबन्धि ( पा० सू० ६-२-६)। ननु गमनचिरमित्यनयोः सामानाधिकरण्यमनुपपन्नङ्गमनशब्दस्य क्रियाकरणवाचित्वादत आह—*भाववाचित्वादिति। तथा च गम्धातोर्भावे ल्युडिह बोध्यः। ननु तथापि कथं सामानाधिकरण्यश्चिरशब्दस्य कालवाचकत्वादत आह—*चिरकृच्छ्रयोरिति । *वर्त्तनात्=लक्षणयेत्यादिः। *एवञ्च=उक्तरीत्या सामानाधिकरण्योपपादने च। सूत्रे प्रतिबन्धिशब्दो न स्वरूपपरः किन्त्वर्थपरो वृत्त्यादिसम्मतव्याख्यानात्।

पदेऽपदेशे(पा० सू० ६-२-७)। अत्रापदेशशब्दो "व्याजोऽपदेशोलक्ष्यश्च" (अ०को०)इति कोशाद् व्याजपर इत्याशयेनोक्तम्मूले व्याजवाचिनि पदशब्द इति।

घञन्त इति। मूत्रशब्दः "सिवि मुच्योष्टेरू च" (उ०पा०४ सू०६१२) इति ष्ट्रन्प्रत्ययान्त इत्यन्ये।

वातत्राणे इति। वातत्राणार्थे तत्पुरुष इत्यर्थः। निवाते इति। वाताभावो निवातं, *निरुद्धो वातो यस्मिन्निति वा। कुटीनिवात-मिति। *आद्ये कुड्यादिहेतुकेऽर्थे वर्तमानाः कुड्यादयो निवातशब्देन समानाधिकरणाः, *अन्त्ये तु स्पष्टमेव तत्*। राजनिवाते इति। राजपार्श्वे इत्यर्थः। षष्ठीसमासोऽयम्।

रज्जुशारदमिति। कर्मधारयः। *रज्जुशब्दो रज्जुबद्धपात्रो-द्धृते वर्तते। इदानीमेव कूपादुद्धृतं नवजलमित्यर्थः। आद्युदात्त इति। "सृजेरसुम् सलोपश्च"(उ०पा० १ सू० १५) इत्यत्र उर्निदित्यधिकारात्। उत्तमशारदमिति। *शरदि भवमित्यर्थः।

कठाध्वर्युरिति। कर्मधारयो*ऽयञ्चरणविशेषे रूढः। दौवारि-ककषायमिति। *रूढिशब्दोऽयम्। कषायोऽर्द्धर्चादिः।

सादृश्ये इति। *सादृश्यवाचिनि तत्पुरुषे इत्यर्थः। पितृश-

---

निवाते वातत्राणे (पा० सू० ६-२-८)। अत्र निवातशब्देऽर्थाभावे ऽव्ययीभावः। वातस्य बहिर्विद्यमानार्थत्वात्। बहुव्रीहिसमासमाह—*निरुद्ध इति। *आद्ये=अव्ययीभावसमासस्वीकारपक्षे। कुड्यादिशब्दोऽत्र पक्षे स्वा-र्थहेतुकार्थे लाक्षणिकः। *अन्त्ये=बहुव्रीहिपक्षे। *तत्=सामानाधिकरण्यम्। उभयत्रोत्तरपदस्य साहित्येन समुदायस्यैतद्वाचकता बोध्या।

शारदे (पा० सू० ६-२-९)। कर्मधारये पूर्वोत्तरपदार्थयोः सामाना-धिकरण्यप्रयोजकमित्याशयेनाह-*रज्जुशब्द इति। न चात्र षष्ठीसमास एवा-स्त्विति वाच्यम्। अत्रापि पक्षे रज्जोः साक्षादुद्धारसाधनत्वानुपपत्त्या लक्षणा-या आवश्यकत्वमित्याशयात्। किञ्च करणस्य शेषत्वविवक्षा स्वीकार्या तदपे-क्षयोक्तरीत्या कर्मधारय उचित इति भावः। *शरदि भवमिति। अच्छजल-मित्यर्थः। उदाहरणे तु—

"शारदः पीतमुक्ते स्याच्छालीनेऽप्रतिमे नवे।
शारदं विषभेदे स्याद्धिङ्गुले पारदेऽपि च॥"

इति कोशात्पीतमुक्तादौ शारदशब्दो रूढः। तेनास्वपदविग्रहः। *अयम्=समुदायः। दौवारिककषायशब्दे षष्ठीतत्पुरुषः। अस्य समुदायस्य जातिवाच-कत्वमित्याशयेनाह*-रूढिशब्दोऽयमिति।

सदृशप्रतिरूपयोः (पा० सू० ६-२-११)। अत्र सूत्रे यत्सदृशग्रहण-न्तत्तत्पुरुषविशेषणमित्याह—*सादृश्यवाचिनीति। पित्रा सदृश इत्यर्थे प्रयु-

ब्दोऽन्तोदात्तः तृतीयान्तत्वात् । *तृतीयासमासे "तत्पुरुषे तुल्यार्थ" (पा० सू० ६-२-२) इत्यनेनैव सिद्धे इदं दास्याः सदृश इत्य*लुक्समासार्थं, पितृसदृश इत्यादौ*षष्ठीसमासस्तु अनभिधानान्नेत्यपि वक्तुं शक्यम् । *एवञ्च दासीशब्दस्यान्तो*दात्ततया "उदात्तयणः"(पा० सू० ६-१-१७४) इति विभक्तिरुदात्ता*इत्यादि "पूर्वसदृश" (पा० सू० २-१-३१) इत्युच्यमानः पितृसदृश इति शब्दः पूर्वोत्तरपदार्थयोः सादृश्यङ्गमयति । *तृतीयासमासे="पूर्वसदृश" (पा० सू० २-१-३१) इति सूत्रविहिततृतीयासमासे । *अलुक्समासार्थम्="षष्ठ्या आक्रोशे" पा० सू० ६-३-२१) इत्यलुक्समासार्थम् । ननु यत्र षष्ठीसमासस्तत्र तेन सूत्रेणाप्राप्त एव पूर्वपदप्रकृतिस्वरोऽनेन विधीयत इत्यस्त्वित्यत आह—*षष्ठीसमासस्त्विति । तदुक्तम्प्रकृतसूत्रभाष्ये—तत्र प्रकृतसूत्रस्थसदृशग्रहणस्य प्रयोजनं वक्तुमादौ शङ्का"सदृशग्रहणमनर्थकं तृतीयासमासवचनात् । "पूर्वसदृश" ( पा० सू० २-१-३१ ) इति तृतीयासमासेन सिद्धम् । षष्ठ्यर्थन्तर्हीदं वक्तव्यम्-पितुः सदृशः पितृसदृश इति । षष्ठ्यर्थमिति चेत्तृतीयासमासवचनानर्थक्यम् । इहास्माभिस्त्रैशब्द्यं साध्यम् पित्रा सदृशः पितुःसदृशः पितृसदृश इति । तत्र द्वयोः समानार्थयोरेकेन विग्रहः । अपरेण वृत्तिर्भविष्यति अविग्विकन्यायेन।अविग्विक इति समुदायोऽनुकरणशब्द इति न्यायशब्देन समासेऽपि लुगभावः । तद्यथा अवेर्मांसमिति विगृह्य अविकशब्दादुत्पत्तिर्भवति आविकमिति । एवं पितुः सदृश इति विगृह्य पितृसदृश इति भविष्यति । पित्रा सदृश इति विगृह्य वाक्यमेव भविष्यति । अवश्यन्तृतीयासमासो वक्तव्यः । यत्र षष्ठ्यर्थो नास्ति तदर्थम्—भोजनसदृशः, अध्ययनसदृश" इति । अत्र हेतौ तृतीया । भोजनहेतुकसादृश्यवानित्यर्थः । षष्ठ्यर्थो नास्तीत्यस्य तृतीयासमानार्थकषष्ठ्यर्थो नास्तीत्यर्थः । एवञ्च समासविधौ समाससिद्ध्यर्थे सदृशग्रहणमावश्यकन्तेनैव सदृशशब्दस्य तृतीयासमासे "तत्पुरुषे" [ पा० सू० ६-२-२ ] इत्यनेन पूर्वपदप्रकृतिस्वरे सिद्धे प्रकृतसूत्रे सदृशग्रहणञ्च कार्यमित्याशङ्क्य "इदमप्यवश्यं वक्तव्यम् । यत्र षष्ठी श्रूयते तदर्थम्—दास्याः सदृशः, वृषल्याः सदृशः" इति । अनेन प्रकृतसूत्रस्थसदृशग्रहणस्य सार्थक्यम्प्रदर्शितमलुक्समास एव न तु पितृसदृश इति समासो दर्शितस्तेनानभिधानमित्याशयः । अलुक्समासस्य सादृश्यवाचकत्वात्तत्रानेन पूर्वपदप्रकृतिस्वरे विहिते सति यस्य स्वरस्यावस्थानन्तमाह—*एवञ्चेति । *अन्तोदात्ततयेति । "दंसेष्टटनौ न आच"(उ० पा० ५ सू० ६०८) इति दंसधातोष्टप्रत्ययो नकारस्याकारः । प्रत्ययस्वरेणान्तोदात्तशब्दस्ततष्टित्त्वान् ङीपि उदात्तनिवृत्तिस्वरेणान्तोदात्त इत्यर्थः । वृषलीशब्दस्तु जातिलक्षणङीषन्तत्वादन्तोदात्तः । *इत्यादीति । अनेनादिना "पूर्वसदृश"( पा० सू० २-१-३१ ) इति सूत्रोक्तस्तत्सूत्रा-

त्र निरूपितम् । न सादृश्यमिति । यत्र हि *प्रतियोगिविशेषसमर्पणार्थं पूर्वं पदं तत्रैवेदमिति सादृश्यग्रहणसामर्थ्यादाश्रीयत इति भावः ।

परमसप्तसममिति । *समाहारे द्विगुः, उपसर्जनत्वाद्ध्रस्वः । पात्रादित्वात् स्त्रीत्वाभावः । परमसप्तसम इति त्व*पपाठः ।

वाणिज इति । वणिगेव वाणिजः प्रज्ञादित्वादण् । सप्तमीस- मास इति । इदं 'मद्रवाणिजः' इत्यत्र मद्रेषु गत्वा व्यवहरतीत्यर्थः । न चैवं सप्तमीपूर्वपदप्रकृतिस्वरेणैव सिद्धे गन्तव्यग्रहणमत्र व्यर्थमिति वाच्यम् । सुप्सुपेति*लब्धस्य समासस्य प्रतिपदोक्तत्वाभावात् । *षष्ठीसमासार्थमाव- श्यकस्य परत्वात्तत्रापि प्रवृत्तिरित्याशय इत्यन्ये ॥

---

वयवसदृशशब्दाकरणप्रकारः सूचितः । तत्र हि भोजनसदृशः अध्ययनसदृश इत्यस्य भोजनेन कृतः सदृशः अध्ययनेन कृतः सदृश इत्यर्थ आश्रीयते तदा प्रतिपदोक्तस्य "तृतीया तत्कृतार्थेन" ( पा० सू० २-१-३० ) इति विहितसमास- स्य सत्त्वात् "तत्पुरुषे तुल्यार्थ" ( पा० सू० ६-२-२ ) इति सूत्रेण पूर्वपदप्रकृति- स्वरस्य सिद्धौ "पूर्वसदृश"(पा०सू०२-१-३१) इति सूत्रे सदृशग्रहणन्न कार्यमिति सदृशग्रहणप्रत्याख्यानप्रकारो बोधितः । "सदृशप्रतिरूपयोः" (पा०सू०६-२-११) इतिसूत्रस्थभाष्यन्त्वेकदेश्युक्तिरिति च तस्मिन् सूत्रेऽभिहितन्तस्य च सङ्ग्रहः । *प्रतियोगिविशेषसमर्पणार्थम्=सादृश्यप्रतियोग्युपमानविशेषसमर्पणार्थम् ।

द्विगौ प्रमाणे ( पा० सू० ६-२-१२ ) । समानाधिकरणे सप्तम्यौ । "ब- हुव्रीहौ प्रकृत्या" ( पा० सू० ६-२-१ ) इत्यतः पूर्वपदामत्यस्य सम्बन्धेन तेनोत्तर- पदस्याक्षेपेण प्रमाणवाचिनि द्विगावुत्तरपदे तत्पुरुषसमासे पूर्वपदमित्यर्थः । *समाहारे द्विगुरिति । सप्तानां समानां समाहारः सप्तसमम् । "स नपुंसकम्" ( पा० सू० २-४-१७ ) इति नपुंसकत्वम् । *अपपाठ इति । नपुंसकत्वस्य न्या- य्यत्वात् उपसर्जनत्वादित्यादि नपुंसकह्रस्वत्वापलक्षणम् । उदाहरणे प्राच्यशब्दो "द्युप्रागपाक्" ( पा० सू० ४-२-१०१ ) इति यदन्तत्वादाद्युदात्तः ।

गन्तव्यपण्यं वाणिजे ( पा० सू० ६-२-१३ ) । वाणिजो=व्यवहर्ता । मद्रेषु वाणिज इत्युक्ते सप्तम्यन्तपदसान्निधानवशात्तद्देशीयवणिक्त्वप्रतीतौ तत्र गत्वा व्यवहरतीत्यर्थसिद्धम् । गन्तव्यम्=गमनकर्म । पण्यम्=पणितव्यम् । गोश- ब्दो डोप्रत्ययान्तः । *लब्धस्येति । शौण्डादिगणेऽस्य पाठाभावेन सप्तम्यन्त- पूर्वपदकोऽत्र समासः 'सुप्सुपा' इतिवाक्यनिष्पन्न एवेति, योगविभागस्तु भाष्यानारूढ इति भावः । न च षष्ठीसमासे सूत्रस्य चरितार्थत्वात्कथं सुप्सु- पेति समासङ्कल्पयित्वा चारितार्थ्यप्रदर्शनमिति वाच्यम् । नह्येतत् सूत्रारम्भ- सामर्थ्यादेवङ्कल्पनं किन्तु तादृशकल्पनया सप्तम्यन्तपदघटितेऽप्यस्य प्रवृत्ति- र्न्याय्येत्याशयात्तदाह—*षष्ठीसमासार्थमिति ।

मात्रोपज्ञो ( पा० सू० ६-२-१४ ) ॥ नपुंसकेइति । *नपुंसकवाचिनि तत्पुरुषे इत्यर्थः । तुल्यप्रमाणमिति । मात्रशब्दो वृत्तिविषये तुल्यप्रमाणे वर्त्तते इति भावः । *अस्वपदविग्रहः षष्ठीतत्पुरुषः ।

सुखप्रिययोर्हिते ( पा० सू० ६-२-१५ ) । *यदायत्यां प्रीतिकरं तद् हितम् । गमनसुखमित्यादि कर्मधारयः । गमनस्य विशेषणत्वात्पूर्वनिपातः*मयूरव्यंसकादित्वाद्वा ।

प्रीतौ च ( पा० सू० ६-२-१६ ) । *सुखप्रिययोः प्रीत्यव्यभिचारादिह यत्प्रीतिग्रहणं तत्प्रीत्यतिशयप्रतिपत्त्यर्थम् । योगविभागो यथासंख्यनिवृत्त्यर्थः ।

पत्यावैश्वर्ये ( पा० सू० ६-२-१८) । ऐश्वर्यवाचिपतिशब्दे

---

मात्रोपज्ञो( पा० सू० ६-२-१४ ) *नपुंसकवाचिनीति । लिङ्गस्यार्थनिष्ठत्वादेवमुक्तिः । पाणिन्युपज्ञमित्यत्र "आतश्चोपसर्गे" ( पा० सू० ३-३-१०६ ) इत्यङन्तेन उपज्ञाशब्देन षष्ठीतत्पुरुषः । इञन्तः पाणिनिशब्द आद्युदात्तः । "उपज्ञोपक्रमम्" ( पा० सू० २-४-२१ ) इति नपुंसकत्वम् । इक्षुच्छायमित्यस्येक्षूणाञ्छायेत्यर्थः । "छाया बाहुल्ये" ( पा० सू० २-४-२२ ) इति नपुंसकत्वम् । *अस्वपदेति । भिक्षायास्तुल्यप्रमाणमिति कथनेन लौकिको विग्रहस्तुल्यप्रमाणशब्देन कार्य इति दर्शितम् ।

सुखप्रिययोर्हिते ( पा० सू० ६-२-१५ ) । *यदेति । गमनप्रियमित्यादि कर्मधारयो यदायत्याम्प्रीतिकरं तद् हितमित्यन्वयः । प्रियशब्दः प्रीतिकरे, सुखशब्दः सुखजनके वर्त्तते । तस्य नानाविधस्य सम्भवाद्गमनस्येतरव्यावर्त्तनाय विशेषणत्वविवक्षेति भावः । गमनमेव विशेष्यमित्यभिप्रायेणाह—*मयूरेति ।

प्रीतौ च ( पा० सू० ६-२-१६ ) । सुखप्रिययोरित्यनुवर्त्तते । प्रीतिः=इच्छा । एवञ्च यद्ब्राह्मणस्य सुखजनकम्प्रीतिकरं वा भवति तद्वाचकशब्दघटितसमासाज्जायमानशाब्दबोधोत्तरम्पूर्वपदार्थस्य प्रीतिर्गम्यते एवेति प्रीताविव्यर्थमत आह—*सुखप्रिययोरिति । प्रीत्यतिशयश्च प्रीतिनिष्ठोत्कटत्वाख्यविषयतानिरूपकत्वम् । ब्राह्मणच्छात्रयोः पायसाऽनध्यायविषयकप्रीत्यतिशय एतयोः सुखजनकत्वादस्त्येव । ब्राह्मणशब्दोऽण्णन्तत्वादन्तोदात्तः । छात्रशब्दस्तु "छत्रादिभ्यो णः" ( पा० सू० ४-४-६२ ) इति णान्तत्वात्तथा । उदाहरणवाक्यप्रयोगे कृते तद्घटकोत्तरपदस्य प्रियशब्दस्य नित्यसाकाङ्क्षत्वात्पायसादिप्रयोगोऽध्याहारो वा आवश्यक इति भवति पूर्वपदार्थगतप्रीत्यतिशयप्रतीतिः । राजसुखमिति प्रत्युदाहरणे यद्युत्तरपदन्तदर्थविषयकेच्छा राजनि यद्यप्यस्ति तथापि न तत्र प्रीत्यतिशयप्रतीतिः । ब्राह्मणसुखम्पायसमित्यत्र लौकिकव्यवहारात्तथाऽस्तीति बोध्यम् ।

उत्तरपदे पूर्वपदं*तथेत्यर्थः। गृहपतिरिति। "गेहे कः"( पा० सू० ३-१-१४४ ) इति कप्रत्ययान्तो गृहशब्दोऽन्तोदात्तः । दमे इति । गृहे इत्यर्थः। ऐश्वर्ये किं ? वृषलीपतिर्विप्रः, तद्भर्तेत्यर्थः।

न भूवा ( पा० सू० ६-२-१९ ) । सूत्रे *समाहारद्वन्द्वः । भूपतिरित्यादयः षष्ठीतत्पुरुषा अन्तोदात्ताः । त्रयः *क्विबन्ताः, अन्त्य *ऊप्रत्ययान्तः ।

वा भुवनम्(पा०सू० ६-२-२०) "पत्यावैश्वर्ये"(पा० सू० ६-२-१८) इति प्राप्ते विकल्पोऽयम् ।

अस्तित्वाध्यवसाय इति ।*तद्विषयकोत्कटकोटिज्ञानमित्यर्थः। गमनमाशङ्कत इति । सम्भाव्यते इत्यनेनान्वेति, विशेषणसमासाः सर्वे । *लित्स्वरः ।

---

पत्यावैश्वर्ये ( पा० सू० ६-२-१८ ) । *तथा=प्रकृत्या । गृहपतिरित्यत्र यदुत्तरपदन्तस्य ईश्वरवाचकतया विशेषणतया ऐश्वर्यङ्गम्यते पूर्वोत्तरपदार्थयोः स्वस्वामिभावसम्बन्धात् । प्रत्युदाहरणवाक्यस्योत्तरपदार्थेन न स सम्बन्धो विवक्षितः। अन्यदीया वृषल्यपि कामुकस्य विप्रस्य नायिका सौन्दर्यात्सम्भवतीति विशेषः।

*समाहारद्वन्द्व इति। अत एव नपुंसकत्वेनेह दिधिषूशब्दस्य ह्रस्वत्वम्। *क्विबन्ता इति। एवञ्च धातुस्वरेणान्तोदात्ता इत्यर्थः। *ऊप्रत्ययान्तः= "अन्दूदम्भू" ( उ० पा० १ सू० ९६ ) इत्यनेन व्युत्पादित ऊप्रत्ययान्तः।

वा भुवनम् (पा० सू० ६-२-२०)। ऐश्वर्यवाचिन्युत्तरपदे भुवनमित्येतत्पूर्वपदं वा प्रकृत्या। भुवनपतिर्विष्णुरित्यत्र विष्णावैश्वर्यस्य प्रतीतिः प्रसिद्धैव। ऐश्वर्ये किम् ? भुवने पतिश्चौरस्य शूद्राऽस्तीत्यर्थे भुवनपतिरित्यत्र सुप्सुपेति समासे मा भूदिति।

आशङ्काऽऽबाधनेदीयस्सु ( पा० सू० ६-२-२१ )। अत्राशङ्काशब्दो "गुरोश्च" ( पा० सू० ३-३-१०३ ) इत्यकारप्रत्ययान्तः । गमनाशङ्कमित्यत्रोभयोः क्रियाशब्दत्वाद्भवति गमनशब्दस्य विशेषणवाचकत्वम्। *तद्विषयकेति। गमनविषयकेत्यर्थः। अत्रापि कोट्यामुत्कटत्वं विषयताविशेषः । यस्यां शङ्कायां भासमानयोर्भावाभावयोरेकस्मिन् भावेऽभावे वोत्कटत्वाख्यविषयताविशेषोऽस्ति तादृशं ज्ञानमेवाशङ्काशब्दार्थः। *लित्स्वर इति । गमनशब्दस्य भावल्युडन्ततया गमनशब्दो "लिति"( पा० सू० ६-१-१९३ ) इत्यनेनाद्युदात्तः। गमनाबाधम् अत्राङ्पूर्वाद् बाधधातोः कर्मणि पूर्ववदकार एव । गमननेदीयः निकटतरमित्यर्थेऽन्तिकशब्दादीयसुन्प्रत्ययेऽन्तिकशब्दस्य "अन्तिकबाढयोर्नेदसाधौ"( पा० सू० ५-३-६३ ) इत्यनेन नेदादेशः।

पूर्वे भूतपूर्वे (पा० सू० ६-२-२२)। भूतपूर्वार्थे पूर्वशब्दे उत्तरपदे इत्यर्थः। आढ्यपूर्व इति। आङ्पूर्वाद्ध्यायतेः कः, पृषोदरादित्वात् ढः, आढ्यशब्दस्यादिस्वरेणान्तोदात्तः, विशेषणसमासः।

सविधसनी (पा० सू० ६-२-२३)। सामीप्यार्थेष्वेतेषूत्तरपदेष्वित्यर्थः। सविधादयः समीपे रूढाः। मद्रो रगन्तोऽन्तोदात्तः, गान्धारिः "कर्दमादीनाञ्च" [फि० पा० ३ सू० ५९] इत्याद्युदात्तो मध्योदात्तो वा। कश्मीरो "लघावन्ते" [फि० पा० २ सू० ४२] इति मध्योदात्तः। सविधादिषु किं? मद्रसमीपम्।

विस्पष्टादीनि (पा० सू० ६-२-२४)। गुणवचनेषु परेषु विस्पष्टादीनि प्रकृत्येत्यर्थः। अत्र विस्पष्टादीनि प्रवृत्तिनिमित्तस्य विशेषणानि न द्रव्यस्य। कटुकादिशब्दैर्गुणवद्द्रव्यमभिधीयत इति सामानाधिकरण्याभावात् *कर्मधारयाभावेऽपि मयूरव्यंसकादित्वात्समासः। तत्र विस्पष्टे गतिस्वरः, विचित्रेऽव्ययस्वरः, विचित्ते बहुव्रीहिस्वरो, व्यक्तो गतिस्वरेणाद्युदात्तः, सम्पन्नोऽन्तोदात्तः, पटु*र्नित्वादाद्युदात्तः, पण्डितकुशलावन्तोदात्तौ, चपलनिपुणावप्येवम्।

---

पूर्वे भूतपूर्वे (पा० सू० ६-२-२२)। अयम्भूतपूर्वार्थे पूर्वशब्दो वृत्तिविषय एवेत्यस्वपदविग्रह एव।

सविधसनीड (पा० सू० ६-२-२३)। सविधेत्यत्र विधधातोः "घञर्थे कविधानम्" (का० वा०) इति कः। विपूर्वकाद्धाञः "आतश्चोपसर्गे" (पा०सू० ३-३-१०६) इति के आतो लोपो वा, समानशब्दस्य सादेशः। सनीडेत्यत्र समानपूर्वकान्निहधातोः "घञर्थे" (का० वा०) इति के पृषोदरादित्वाद्दीर्घडकारौ। अथ वा निपूर्वाद्धाञः के आकारलोपे दीर्घडकारौ पूर्ववत्। उदाहरणे सर्वत्र षष्ठीसमासः। मद्रसमर्यादमिति। मर्यादया सहितम्। "वोपसर्जनस्य" (पा० सू० ६-३-८२) इति सहस्य सः। मद्रस्य समर्यादमित्यर्थः। "सवेशसदेशयोः समानवेशदेशौ वाच्यौ" (का० वा०)। एवं व्युत्पत्तिमात्रम्, प्रकृते तु समीपे रूढिरेषाम्। सामीप्यस्य रूढ्यर्थतावच्छेदकतया तत्र वृत्तिरेषाम्बोध्या। सामीप्ये किम्? विधानं विधा रचना। समाना रचना यस्य क्षेत्रस्य तत्सविधम्। मद्रस्य सविधमित्यर्थः। अत्र समाना उच्चनीचरहितेति विवक्षितत्र तु तुल्यत्वस्य विवक्षा।

विस्पष्टादीनि(पा०सू०६-२-२४)। *कर्मधारयाभावेऽपीति। सुबन्तार्थविशेष्यान्वयित्वे एव सामानाधिकरण्यस्य सम्भवात्। मयूरव्यंसकादिषु तत्समुदायस्य पाठेन यथा कथञ्चिदन्वयेन सामर्थ्येऽपि समस्तसंज्ञा भवति। विस्पष्टे "क

अज्याऽवम ( पा० सू० ६-२-२५ )। अत्र अज्यकनामुत्तरपदत्वासम्भवेन सामर्थ्या*द्वतो ग्रहणम्। *वदिति तु पापेनैव सम्बध्यते। एवञ्च अज्यकन् इत्यादेशवति अवमशब्दे पापशब्दवति चोत्तरपदे इति पाठः। *पाठान्तरन्तु *प्रामादिकम्। गमनश्रेष्ठमित्यादौ मयूरव्यंसकादित्वाद्विशेषणस्य परनिपातो राजदन्तादित्वाद्वा। गमनपापिष्ठामिति। पापवच्छब्दादिष्ठन् विन्मतोर्लुक्। अन्यथा पापशब्दस्य गुणोपसर्जनद्रव्यवाचित्वाभावात्ततः *स न स्यादिति बोध्यम्।

कुमारश्च ( पा० सू० ६-२- २६ )। कुमारशब्दः पूर्वपदं *तथा कर्मधारये इत्यर्थः। अत्र "कुमारः श्रमणादिभिः" [ पा० सू० २-१-७० ] इति समासस्यैव ग्रहणं प्रतिपदोक्तत्वादिति केचित्। अन्ये तु सर्वकर्मधारयग्रहणम्। एवञ्च 'कुमारब्राह्मणः' इत्यादावपि प्रवर्त्तत इत्याहुः। *तत्त्वमीश्वरो वेद।

---

दान्त"(पा० सू० ७-२-२७) इत्यनेन निपातितस्पष्टशब्दस्य विशब्देन समासः। विचित्रे विपूर्वकाच्चित्रधातोरिच्छुरादिण्यन्तात्प्रकृतेरेरच्, प्रादिसमासः। विचित्ते चिती संज्ञाने इति धातोर्निष्ठा,विगतश्चित्तमस्येत्यर्थः। व्यक्तशब्दे तु अञ्जूधातोर्निष्ठा तदन्तस्य "निष्ठा च"(पा० सू० ६-१-२०५) इति आद्युदात्तत्वे "गतिकारकोपपदात्"(पा० सू० ६-२-१३९) इति कृदुत्तरपदप्रकृतिस्वरः। सम्पन्ने सम्पूर्वकात्पदेः कर्त्तरिक्ते गतिसमासे थाथादिस्वरः। *निस्त्वादिति। "फलिपाटी"(उ० पा० १ सू० १८) इत्यादिना व्युत्पादितो य उप्रत्ययः स धान्ये निदित्यधिकारान्निदिति भावः। पण्डितेत्यत्र पण्डाशब्दादितच्प्रत्ययश्चित्त्वादन्तोदात्तत्वं निष्ठान्तो वाऽयम्। कुशले तु कुशान् लातीति विग्रहे लाधातोः "आतोऽनुपसर्गे कः" ( पा० सू० ३-२-३ ) इति के कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वम्।

अज्यावमकन् ( पा० सू० ६-२-२५ )। *तद्वत इति। आद्यादेशवत इत्यर्थः। एते चादेशा इष्ठन्नादिषु भवन्तीति तद्वान् इष्ठन्नाद्यन्तसमुदायस्सोऽत्र विनापि वच्छब्दसम्बन्धं लभ्यते। एवञ्च पापवच्छब्देन द्वन्द्वः। अत एवाह-*वदिति त्विति। *पाठान्तरन्त्विति। मूले-पापवाचिनि चेति पाठान्तरमित्यर्थः। *प्रामादिकमिति। पापपर्यायेष्वतिप्रसङ्गात्। न च आदिसाहचर्यात्पापवाचक इष्ठन्नाद्यन्त एव ग्रहीष्यत इति वाच्यम्। पर्यायप्रकृतिकेष्ठन्नाद्यन्तस्यापि ग्रहणापत्तेरिति भावः। गमनश्रेष्ठमित्यादौ गमनशब्दो भावल्युडन्तः। *सः=इष्ठन्। "अजादी गुणवचनादेव" ( पा० सू० ५-३-५८ ) इत्युक्तेः। गुणोपसर्जनद्रव्यवचनानामेव गुणवचनसंज्ञासत्त्वात्।

कुमारश्च ( पा० सू० ६-२-२६)। *तथा=प्रकृत्या। *तत्त्वमिति। उक्तयोः पक्षयोर्मध्ये कः पक्षो युक्तियुक्त इत्येतत्। अपरे तु पूर्वोत्तरसूत्रसाहचर्याद्-

आदिः प्रत्येन ( पा० सू० ६-२-२७ )। आदिरिति षष्ठ्यर्थे प्रथमा, कुमारशब्दः प्रकृतिस्वरेण यत्स्वरकः प्राप्तः स स्वरः आदेरिति सूत्रार्थः। फलितमाह—कुमारस्यादिरिति। *एतेनोदात्ताधिकाराभावादिदमसङ्गतमित्यपास्तम्।

पूगेषु (पा० सू० ६-२-२८)। पूगो गण*स्तद्वाचिन्युत्तरपदे कर्मधारये कुमारस्यादिरुदात्तो वेत्यर्थः। कुमारश्चैत्येथवेति। प्रतिपदोक्तग्रहणपक्षे समासान्तोदात्तत्वं बोद्ध्यम्।

पञ्चारत्निरिति। तद्धितार्थे द्विगुः, प्रमाणेलो द्विगोर्नित्यमिति मात्रचो लोपः। *'पञ्चारत्नयः' इत्यादौ *अन्तरङ्गत्वात्पूर्वं स्वरः पश्चाद्विभक्तिनिमित्तकार्यम्। अकृतव्यूहपरिभाषा तु नास्ति, अनित्या वेत्यसकृदावेदितम्। किं च *स्थानिवत्त्वेन निमित्तविनाशाभावा*त्तत्सत्त्वेऽपि न दोषः। न च स्वरे नेति निषेधः। लोपाजादेशस्यैव तेन निषेधात्। कालग्रहणेन कालवाचकानाङ्ग्रहणं, तदाह—दशमास्य इत्यादि। पञ्चकपाल इत्यादि। पञ्चसु कपालेषु भगालेषु संस्कृत इत्यर्थे "द्विगोर्लुगनपत्ये" ( पा० सू० ४-१-८८ ) इति लुक्। पञ्चसु शरावेषूद्धृत इति "तत्रोद्धृतम्"(पा० सू० ४-२-१४) इत्यणो लुक्। पञ्चाश्व इति। पञ्चभिरश्वैः क्रीत इति "अध्यर्द्ध"( पा० सू० ५-१-२८ ) इति ठको लुक्।

---

त्तरसूत्रविषये प्रतिपदोक्तकर्मधारयस्यासम्भवादर्थाधिकारानुरोधादप्रतिपदोक्तस्य ग्रहणमित्याहुः। कुमारशब्दः पचाद्यजन्तः।

आदिः प्रत्येनसि ( पा० सू० ६-२-२७ )। *एतेन=षष्ठ्यर्थे प्रथमेति कल्पनेन।

पूगेष्वन्यतरस्याम् ( पा० सू० ६-२-२८ )। अत्र पूगेष्विति बहुवचननिर्देशादर्थग्रहणन्तस्य चोत्तरपदत्वासम्भवात्तद्वाचिनो लाभस्तत आह—*तद्वाचिन्युत्तरपद इति। आदिरित्यनुवर्त्तते।

इगन्तकालकपाल ( पा० सू० ६-२-२९ )। पञ्चारत्निरित्यत्र पूर्वपदप्रकृतिस्वरे सति "न्नः संख्यायाः" (फि० पा० २ सू० २८) इति पञ्चन्शब्दस्याद्युदात्तत्वात्समुदाय आद्युदात्तः। ननु 'पञ्चारत्नयः' इत्यत्र "जसि च"( पा० सू० ७-३-१०९ ) इति गुणे सत्युत्तरपदस्येगन्तत्वाभावात् स्वरो न स्यादत आह—*पञ्चारत्नय इत्यादाविति। *अन्तरङ्गत्वात्=विभक्त्यनपेक्षत्वेनान्तरङ्गत्वात्। *स्थानिवत्त्वेन="अचः परस्मिन्"( पा० सू० १-१-५७ ) इति स्थानिवत्त्वेन। "सर्वे सर्वपदादेशाः" इति न्यायेनेगन्तत्वबुद्धिः सुलभेति भावः। *तत्सत्त्वेऽपि=

बह्वन्य ( पा० सू० ६-२-३० )। "इगन्त" ( पा० सू० ६-२-२९ ) इति प्राप्ते विभाषेयम् । स्वरितयोरिति भवतीति । *पक्षेऽन्तोदात्तत्वं बोध्यम् ।

पञ्चवितस्तिरिति । मात्रचो लुक् *द्वयसचो वा ।

अकालादिति पञ्चमी प्रथमार्थे । *ण्यान्त इति । तेनान्तोदात्त इत्यर्थः । कृत्स्वरेणेति । कृन्निमित्तकेनेत्यर्थः । तथा च थाथादिसूत्रेण बाधित इति फलितम् । त्रयाणां क्तान्तत्वाद् बन्धस्य घञन्तत्वात् ।

परिप्रत्युपा ( पा० सू० ६-२-३३ ) । इत आरभ्य पञ्चसूत्राणि *द्वन्द्वाव्ययीभावविषयाणि । परित्रिगर्तमिति । अत्र पर्यपयोः "अपपरी वर्जने" ( पा० सू० १-४-८८ ) इति कर्मप्रवचनीयत्वात् तद्योगे पञ्चमी, "अपपरिबहिः" ( पा० सू० २-१-१२ ) इत्यव्ययीभावः । प्रतिपूर्वाह्णमिति । "लक्षणेनाभिप्रती" ( पा० सू० २-१-१४ ) इति समासः । उपपूर्वेति । "अव्ययं विभक्ति"(पा० सू० २-१-६) इति समासः । वर्ज्यमाना एव तयोरिति । अतो न पृथगुदाह्रियन्ते इति भावः । अग्निं प्रतीति । इति विग्रहे 'प्रत्यग्नि शलभाः पतन्ति'इत्यादौ

---

अकृतव्यूहपरिभाषासत्त्वेऽपि । भगालशब्दः कपालपर्यायः ।

बह्वन्यतरस्याम् ( पा० सू० ६-२-३० ) । इगन्तादिषूत्तरपदेषु द्विगुसमासे बहुशब्दः पूर्वपदभूतो वा प्रकृत्या । मूले—बहुशब्दोऽन्तोदात्त इति । 'बहि' वृद्धाविति धातोः "लङ्घिबंह्योर्नलोपश्च"( उ० पा० १ सू० २९)इति कुप्रत्ययस्ते नान्तोदात्त इत्यर्थः । *पक्षे=पूर्वपदप्रकृतिस्वराभावपक्षे । *द्वयसचो वेति ।

"प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम।"

इति भाष्यीयसिद्धान्तादरे तु मात्रच् तिर्यङ्मानत्वे द्रष्टव्यः । अन्यथा तु द्वयसच् ।

सप्तमी सिद्धशुष्क ( पा० सू० ६-२-३२ ) । *ण्यान्त इतीति । "वुञ्छण्" ( पा० सू० ४-२-७ ) इति सूत्रेणेत्यादिः । आतपशुष्कः । अव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्त आतपशब्दः । चक्रशब्दोऽन्तोदात्तः । "कृञः को द्वे च"इति कप्रत्ययान्तत्वेन प्रत्ययस्वरेणान्तोदात्तः । अकालादित्यस्य प्रत्युदाहरणे 'पूर्वाह्णसिद्धः' इत्यत्र कृदुत्तरपदप्रकृतिस्वर एव । तथा च समुदायस्यान्तोदात्तत्वम् । सूत्रस्य प्रयोजनमाह मूलकारः-कृत्स्वरेणेति ।

परिप्रत्युपापा ( पा० सू० ६-२-३३ ) । *द्वन्द्वाव्ययीभावविषयाणीति । पारिशेष्यादिति शेषः । एतच्चाग्रे स्फुटम् । अनेन पूर्वपदप्रकृतिस्वरे सति "उ-

*मा भूदित्यर्थः। क्वचित्तु तथैव पाठः।

लक्षणया *शिनित्वारोपेण। राजन्यग्रहणमिति। अन्धकवृष्णीनां राजन्यत्वाव्यभिचारादित्यर्थः।

संख्या (पा० सू० ६-२-३५)। अत्र पूर्वसूत्राद् द्वन्द्व इति वर्त्तते। त्रयसादेश आद्युदात्त इति। *'त्रयोदश च मे' इत्यादावाद्युदात्तपाठादिति भावः। क्वचिद् वृत्तिपुस्तके मूलपुस्तके चान्तोदात्त इति पाठो दृश्यते। तदा 'त्रयोदश च मे' इत्यादौ छान्दसत्वं बोध्यम्।

आचार्योप (पा० सू० ६-२-३६) सूत्रे *षष्ठीबहुवचनस्थाने प्रथमैकवचने। पाणिनीयरौढीया इति। पाणिन रौढेश्च *छात्रा इत्यर्थः। तत्प्रोक्तमधीयते इत्यर्थो वा, पाणिने*र्गोत्रेअन्तत्वाभावात् रौढौ "न द्व्यचः" (पा० सू० ४-१-११३) इति निषेधाच्च "इञश्च" (पा०

---

पसर्गा आद्युदात्ताः" इत्याद्युदात्तत्वम्। *मा भूत्=पूर्वपदप्रकृतिस्वरो मा भूत्, किन्तु समासान्तोदात्तत्वमेव।

राजन्यबहुवचन (पा० सू० ६-२-३४)। अत्र राजन्यबहुवचनशब्दयोः कर्मधारये तस्य द्वन्द्वशब्देन षष्ठीतत्पुरुषः। बहुवचनशब्दस्य विशेषणवाचित्वेऽपि राजन्यशब्दस्य सौत्रः पूर्वनिपातः। द्वन्द्वे इत्यस्य सप्तम्यन्तस्य वर्त्तमान इति शेषः। 'शिनिवासुदेवाः' इत्यत्र शिनिशब्दो बाहुलकात् "शीङो निप्रत्ययो ह्रस्वश्च" इति निप्रत्ययान्तत्वादन्तोदात्तः। शिनेश्चैकव्यक्तित्वाद्बहुवचनान्तत्वस्योपपत्तये मूले शिनिशब्दस्य लक्षणोक्ता, सा च शक्यतावच्छेदकारोपरूपेत्याशयेनाह—*शिनित्वारोपेणेति। राजन्यानामन्धकवृष्णिग्रहणेनैव सङ्ग्रहे सिद्धे राजन्यग्रहणं व्यर्थमतो मूले—राजन्येति। अभिषिक्तवंश्यानामित्यत्र कर्मधारयः। तथा च ब्राह्मणवसिष्ठन्यायेन पृथगुक्तिरिति भावः। राजन्यशब्दस्य विशेषपरत्वमन्धकवृष्णिपदसन्निधाने भवति तदभावे तु क्षत्रियसामान्यपरत्वं स्यादित्याशयेनाह—कुरुपञ्चाला इति।

सङ्ख्या (पा० सू० ६-२-३५)। द्वन्द्व इत्यनुवर्त्तते। त्रयोदशेत्यत्र त्रयश्च दश चेति द्वन्द्वः। त्रिशब्दस्य त्रयसादेशस्तस्याद्युदात्तत्वमुपपादयति—*त्रयोदश च म इति।

आचार्योपसर्जन (पा० सू० ६-२-३६)। *षष्ठीबहुवचनेति। द्वन्द्व इत्येतद्विशेषणत्वादपेक्षिते ये बहुवचने तयोः स्थान इत्यर्थः। आचार्य उपसर्जनं विशेषणं यस्य स आचार्योपसर्जनः। अन्ते वसतीत्यन्तेवासी=शिष्यः। समानाधिकरणपदाभ्यामाचार्यप्रकारकशिष्यविशेष्यकोपस्थितिजनकानामिति फलितम्। *छात्रा इति। एवञ्च शैषिको "वृद्धाच्छः" [पा० सू० ४-२-११४] इति छः। *गोत्रेअन्तत्वाभावादिति। तथा च युवप्रत्ययान्तत्वेन "इञश्च" [पा०

सू० ४-२-११२ ) इत्यण् न । तेन वृद्धाच्छः । आचार्योपसर्जनग्रहणम्=आचार्योपसर्जनान्तेवासिग्रहणम् । द्वन्द्वविशेषणमिति । न तु पूर्वपदविशेषणं *व्याख्यानादिति भावः । तत्फलमाह—सकल इति । छान्दसेति । छन्द अधीयते इत्याद्यर्थः । द्वन्द्वे किम् ? आपिशलप्रियः पाणिनीय आपिशलपाणिनीयः ।

कार्तकौ ( पा० सू० ६-२-३७ ) । अत्र गणे *विभक्त्यन्तपाठो वचनविवक्षार्थः । कुर्भूमिः, तत्र जाताः कुजाः, तान् पाति कुजपः, कृतस्य कुजपस्य वाऽपत्यमित्यर्थे ऋष्यणन्तावेतौ कार्तकौजपौ । सावर्णिमाण्डूकेयौ, अवन्त्यश्मकाः, पैलश्यामकर्णेयाः, अत्र बहुवचनमविवक्षितमिति वृत्तिकृत् । कपिश्यामकर्णेयाः । केचित्तु पैलस्यापर्णेयाः कपिस्यापर्णेया इति पठन्ति । शैतिकाक्षपाञ्चलेयाः, अत्रापि बहुत्वमविवक्षितम् । कटुकवार्तलेयाः,वार्ध्रलेया इत्यन्ये पठन्ति। शाकलशुनकाः, शाकलशणकाः, शाणकबाभ्रवाः, आर्चाभिमौद्गलाः, कुन्तिसुराष्ट्राः, चिन्तासुराष्ट्राः,तण्डवतण्डाः, अविमत्तकामविद्धाः, बाभ्रवशालङ्कायनाः, बाभ्रवदानच्युताः, कठकालीयाः,कठकौथुमाः, कौथुमलौकाक्षाः,स्त्रीकुमारम् ,औदपिप्पलादाः । अस्य द्विःपाठः पक्षे समासान्तोदात्तत्वाय । वत्सजरन्तः, सौश्रुतपार्थिवाः, जरामृत्यू ; याज्यानुवाक्ये वृत् ।

---

सू० ४-२-११२ ] इत्यस्य न प्राप्तिरिति भावः । *व्याख्यानादिति । एतादृशानामेव द्वन्द्वस्य भाष्ये उदाहरणत्वेन प्रदर्शनमूलकाद्वृत्त्यादिसम्मतव्याख्यानादित्यर्थः । तदुक्तम्भाष्ये—"आचार्योपसर्जनेऽनेकस्यापि पूर्वपदत्वात्सन्देहः । आपिशलपाणिनीयव्याडीयगौतमीयाः । एकम्पदं वर्जयित्वा सर्वाणि पूर्वपदानि । तत्र न ज्ञायते कस्य पूर्वपदस्य स्वरेण भवितव्यमिति । लोकविज्ञानात्सिद्धम । तद्यथा अमीषां ब्राह्मणानाम्पूर्वमानयेति यः सर्वपूर्वः स आनीयते, एवमिहापि यत्सर्वपूर्वपदन्तस्य प्रकृतिस्वरत्वम्भविष्यति" इति । पूर्वपदशब्दस्य यौगिकत्वाभिप्रायेण पूर्वः पक्षः । लोकविज्ञानादित्यादिना न्यायेन व्युत्पादनेन समाधानन्तु पूर्वपदशब्दः समासस्य प्रथमावयवे रूढ इत्यभिप्रायेण । सर्वपूर्वपदमित्यस्य सर्वेषां समुदायभावमापन्नानां यः पूर्वावयव इत्यर्थस्तेन चात्र "न निर्धारणे" [ पा० सू० २-२-१० ] इति निषेधस्य विषयता नेति बोध्यम् । मूले—आचेति किमिति । आचार्योपसर्जनेति पदाङ्किमर्थमित्यर्थः । छान्दसवैयाकरणा इत्यत्रोभयोरपि पदयोरध्ययनकर्मविशेषणकाध्ययनकर्तृविशेष्यकबोधजनकतया ऽऽचार्यस्य न भानमतो न तत्त्वम् । *विभक्त्यन्तपाठ इति । प्रायेण गणेषु प्रा-

क्षुल्लकश्च (पा० सू० ६-२-३९)। इत्ता*वेषु तत्पुरुष इति *नानुवर्त्तितम् । एवञ्चाव्ययीभावाद्यसम्भवेऽपि द्वन्द्वतत्पुरुषसाधारणानीमानि । *युक्तं चैतत् । *अन्यथा तत्पुरुषप्रकरणमध्ये "परिप्रत्युपाप" (पा० सू० ६-२-३३) इति पञ्चसूत्री न कृता स्यात् । परन्तु बहुधा तत्पुरुषा एवैषूदाहरणमिति बोद्ध्यम् । क्षुल्लकेत्यादौ कर्मधारयौ, उष्ट्रसादीत्यादि कर्मधारयः षष्ठीसमासो वा ।

गोसाद इति । सदेर्घ्यन्तेन ण्यन्तादणन्तेन वा समासः । *तस्मादेव णिनौ गोसादी। गोषु सीदतीति,गाः सादयतीति वा विग्रहः । इणजादिभ्यः, इणन्तः सादिरत्र गृह्यत इत्यन्ये ।

कुरुगार्ह (पा० सू० ६-२-४२)। एषां सप्तानामिति । षण्णामिति क्वचित्कोऽपपाठः मनोरमाविरोधात् । सप्तापि भिन्नानि पदानि आद्ययोः षष्ठ्याः सौत्रो लुक्, इतरेषां पञ्चानां षष्ठ्याः स्थाने प्रथमैकवचनम् । दासीभाराणामिति बहुवचननिर्देशादाद्यर्थावगतिरिति

---

तिपदिकमात्रस्य पाठदर्शनादत्र विभक्त्यन्तस्य पाठो वैलक्षण्यसम्पादको बोध्यः । तत्रापि यादृशो विभक्त्यन्तो द्वन्द्वघटितः समुदायः पठितस्तत्रैव पूर्वपदप्रकृतिस्वरो न तु कार्त्तमाण्डूकेयावित्यत्र । प्रातिपदिकमात्रस्य यस्मिन् गणे पाठस्तत्र न पठितसमुदायविवक्षेति भावः ।

महान्व्रीह्य (पा० सू० ६-२-३८)। अत्रापि द्वन्द्व इत्यस्य सम्बन्धान्महाव्रीहिरित्यादिर्द्वन्द्व एवेति केचित् । तन्न, प्रकृतसूत्रस्थभाष्यविरोधात् । तथा हि तत्र हि—"किमर्थम्महतः प्रवृद्धशब्दे उत्तरपदे पूर्वपदप्रकृतिस्वरत्वमुच्यते न "कर्मधारयेऽनिष्ठा" इत्येव सिद्धम् । न सिध्यति । किङ्कारणम् ? श्रेण्यादिसमास इत्येवन्तत्" इत्युक्तम् । यदि द्वन्द्व इत्यस्य प्रकृतसूत्रे सम्बन्धः स्यात्तदा कर्मधारयेऽनिष्ठेत्येवेति भाष्यविरोधः स्पष्ट एव । अत एव "सन्महत्" (पा० सू० २-१-६१) इति प्रतिपदोक्त एवेति मूलमपि सङ्गच्छते ।

क्षुल्लकश्च वैश्वदेवे (पा० सू० ६-२-३९)। चशब्दान्महानित्यस्य सम्बन्धः । *एषु=महानित्यादिसूत्रेषु । *नानुवर्त्तितमिति । न तु तद्ग्रन्थदर्शनेन तत्पुरुषाधिकारस्य "राजन्यबहुवचन" (पा० सू० ६-२-३४) इति सूत्रे द्वन्द्व इत्यस्य दर्शनेनैव निवृत्तिसम्भावना कार्या । तथा च क्वचिच्छिष्टसम्मतव्याख्यानेन तत्पुरुषपदस्यासम्बन्धेऽपि ततोऽग्रे सम्बन्धोऽस्त्येव । तत्पुरुष इत्यस्यासम्बन्धेऽपि "समासस्य" इति सम्बध्यत एव । ततश्चैषां सूत्राणान्तत्पुरुषेऽपि प्रवृत्तिः । *युक्तञ्चैतदिति । तत्पुरुषेऽपि प्रवृत्तिरित्येतद् युक्तमित्यर्थः । *अन्यथा=तत्पुरुषेऽपि प्रवृत्तिरित्यस्यास्वीकारे । *तस्मादेव=सदेरेव ।

भावः। *उप्रत्ययान्त इति। तथा चान्तोदात्त इति भावः। केचित्तु *तत्र निदित्यनुवर्त्तयन्ति। तत्र "इगन्तानाञ्च द्व्यषाम्" [फि० पा० २ सू० ४९] इत्यनेन कुरौ *पर्यायेणोभयोरप्युदात्तत्वस्वीकारेण फलाभावादित्याहुः। वृत्तिरप्येवम्। *मूले तु प्रत्ययस्वरमात्रमुक्तम्। रिक्तगुर्वादयः कर्मधारयाः, असूतो नञ्समास *आद्युदात्तः। अश्लीलेत्यादि अश्लीला चासौ दृढरूपा च *लावण्यरहितापि दृढरूपा कुब्जत्वादिरहितत्वात् संस्थानमात्रेण शोभनेत्यर्थः। निपातनादिति। *पारेवडवेवेत्यर्थः। "पारेमध्ये"[पा०सू०२-१-१८] इत्यव्ययीभावस्तु न, सूत्रे दीर्घनिर्देशात् वडवायाः पारासम्भवाच्च। तिलितिलिन इति। तिलाः सन्त्यस्य तितिली। पृषोदरादित्वात्तिशब्दस्य द्वित्वम्, अपरे "नस्तद्धिते" [पा० सू० ६-४-१४४]इति टिलोपः, *छात्रार्थे (१)"सब्रह्मचारि"(का० वा०)

---

कुरुगार्हपत (पा० सू० ६-२-४२)। सूत्रोपात्तेषु पण्यकम्बलान्ताः समुदाया पृथग्भूता यथा पठितास्तथैव स्वरोद्देश्याः। दासीभाराणामित्यत्र तु बहुवचननिर्देशाद्गणनिर्देशः। *उप्रत्ययान्त इतीति। "कृञ उच्च"(उ० पा० ४ सू० ४८१)इति विहितो य उप्रत्ययस्तदन्तोऽयम्। *तत्र=उप्रत्ययविधायके। पक्षआद्युदात्तः। *पर्यायेणेति। "इगन्तानाम्"(फि० पा० २ सू० ४९)इत्यत्र "हयादीनाम्" इत्यतो वेत्यस्यानुवर्त्तनेन निदित्यस्यानुवृत्तौ फलाभावः। आद्युदात्तत्वस्येगन्तानामित्येव सिद्धेः। निदित्यस्यानुवृत्तिवादिमतेऽपीगन्तानामित्यस्य प्रवृत्त्या पाक्षिकाद्युदात्तत्वसम्भवादिति भावः। *मूले त्विति। अत्र तुना अरुचिः सूचिता। अन्तोदात्तत्वमात्रकथनस्यानुचितत्वादिति। वृजेरिति वक्तव्यमिति। गार्हपते पर इति शेषः। "कुरुवृज्योर्गार्हपत" इति हि प्रकृतसूत्रभाष्ये पाठात्। वृजिशब्दश्चेगुपधात्किदितीन्नन्तत्वादाद्युदात्तस्तस्यापि पूर्ववत् "इगन्तानाम्"(फि० पा० २ सू० ४९)इति सूत्रस्य प्रवृत्तौ तु पर्यायेणोभावप्युदात्तौ। *आद्युदात्त इति। न सूतो असूत इति समासेऽव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्तः। अश्लीलदृढरूपा अश्लीलशब्दो नञ्समासत्वादाद्युदात्तः। अस्यादृढरूपत्वमुपपादयति-*लावण्यादीत्यादिना। तथा च लावण्यरहितत्वादश्लीला कुब्जत्वादिदोषराहित्यात् दृढरूपा। अत्र रूपशब्दः स्वरूपपरस्तस्य दृढत्वं दोषराहित्येन। अश्लीलेत्यस्य श्रीर्यस्यास्ति सा श्लीला सिध्मादित्वान्मत्वर्थीयो लः। "कपिलकादीनामिति वक्तव्यम्" (का० वा०) इति श्रीशब्दावयवरेफस्य लत्वम्। शोभनवर्णरहितत्वादश्लीला। *पारेवडवेवेति। वडवासादृश्यं जवदार्ढ्यादिमत्त्वेन। छात्रार्थेऽपि "इनण्यनपत्ये" (पा० सू० ६-४-१६४) इति प्रकृतिभावबारणायाह—*छात्रार्थ इति। तैतिलकद्रूरित्यत्र षष्ठीसमासः।

---

१ 'नान्तस्य टिलोपे' इत्यस्यादिः।

इत्यादिवचनेन टिलोपः । पण्यकम्बलः कर्मधारयः, बहुलग्रहणात्समास इत्युक्तं समासप्रकरणे । पुण्यशब्दो यदन्तत्वादाद्युदात्तः । केचित्तु—ननु द्वितीयाकृत्या *इत्येव सिद्धमिति चेत् । न, प्रतिपदोक्ते "कृत्यतुल्याख्या" [ पा० सू० २-१-६८ ] इति समासे एव तत्प्रवृत्तेः । इह तु *विशेषणसमासः । नन्वजात्येति प्रतिषेधसामर्थ्याद् दुर्लभोऽसाविति चेत् । न, अजात्येति न जातिप्रतिषेधार्थं किन्तु *न्यायसिद्धार्थानुवादकमात्रम् । *तत्फलन्तु गुणक्रियावाचिनामनियमेन पूर्वनिपाते प्राप्ते तन्नियमार्थं सूत्रमिति व्युत्पादनम् । स्पष्टश्चेदं वृत्त्यादावि*त्याहुः । तन्न, *स्वरविधायके "कृत्यतुल्याख्या" ( पा० सू० २-१-६८ ) इत्येव वक्तव्ये कृत्यतुल्यार्थयोर्वियोगपाठेनार्थपदघटितपाठेन च तदंशे *परिभाषाया अप्रवृत्तेः । अत एव प्रकृतसूत्रे कृत्यप्रत्ययान्तत्वात्पूर्वपदप्रकृतिस्वरे सिद्धे पण्यकम्बलः संज्ञायामेव, पण्यकम्बल एवेति वा *नियमार्थमिदं विशेषणसमास इति भाष्यकैयटयोरुक्तम् ।

---

'पण्यकम्बलः' इत्यत्र पण्यशब्दो "अवद्यपण्य" ( पा० सू० ३-१-१०१ ) इति यदन्तत्वात् "यतोऽनावः" ( पा० सू० ६-१-२१३ ) इत्याद्युदात्तः । *इत्येव सिद्धमिति । पूर्वपदप्रकृतिस्वरत्वमिति शेषः । प्रतिपदोक्तत्वमिह कृत्यशब्दोच्चारणेन विहितत्वमेव न तु यस्य कृत्यप्रत्ययान्तस्य समासस्तच्छब्दानुवादेन विहितत्वरूपम् । *विशेषणसमास इति । "कृत्यतुल्याख्या" ( पा० सू० २-१-६८ ) इति सूत्रेऽजात्येत्युपादानाज्जातिवाचकभिन्नस्यैव कृत्यप्रत्ययान्तस्य समासो न तु जातिवाचके नेति यद्यप्यस्ति तथापीह बहुलग्रहणाद्विशेषणसमास इत्यर्थः । *न्यायसिद्धेति । "कृत्य" इति सूत्रन्नियमार्थमिति हि प्रसिद्धन्तच्च तदोपपद्यते यद्ययं योगो जातिवाचकभिन्नेन सह समाससंज्ञाविधायकः स्यात् तदा ह्यनियमस्य प्राप्तिर्यदि जातिवाचकेन समाससंज्ञाविधायकमेतद्भवेत्तदा कृत्यतुल्याख्यानामेव पूर्वनिपातनियमार्थमेतत्सूत्रमिति वक्तव्यन्ताद्दृशानियमस्तत्र विशेषणमिति सूत्रेण समाससंज्ञायामपि सिद्ध इत्यजात्येति न्यायसिद्धानुवादमित्यर्थः । *तत्फलम्=अनुवादफलम् । *इत्याहुरिति । वृत्त्यनुसारिण इति शेषः । *स्वरविधायके="तत्पुरुषे तुल्यार्थ" ( पा० सू० ६-२-२ ) इति सूत्रे । *परिभाषायाः=प्रतिपदोक्तपरिभाषायाः । *नियमार्थमिदमिति । एवंविधनियमार्थमिदमित्यर्थः । अत एव "कुरुगार्हपत" ( पा० सू० ६-२-४२ ) इति सूत्रभाष्ये "पण्यकम्बलः संज्ञायामिति वक्तव्यम् । यो हि पणितव्यः कम्बलः पण्यकम्बल एवासौ स्यात् । अपर आह—पण्यकम्बल एव यथा स्यात् क मा भूत् ? पण्यगवः, पण्यहस्ती" इत्युक्तम् । तत्र कैयटेनापि संज्ञायामिति प्रतीक-

सञ्ज्ञायामिति नियमार्थमिदन्तदाह-अन्यत्रेति । प्रतिपदोक्त इत्यादि तु वृत्त्यनुरोधेन । *तेन*सोऽपि न भवतीति तद्भावः । दास्या-भारो दासीभारः । यस्य तत्पुरुषस्येति । केचित्तु यस्य समासस्ये-त्येव वदन्ति ।

यूपदार्विति । यूप आद्युदात्तः । "कुयुभ्याञ्च" [उ०पा०३ सू० ३१४] इत्यत्र निदित्यनुवृत्तेः । *प्रकृतिविकृतिभाव एवायं स्वर इष्यते । *"अर्थे"(पा० सू० ६-२-४४)"क्ते च"(पा० सू० ६-२-४५) इत्यनयो-रारम्भात् । तेन *'कुबेरबलिः'इत्यत्र न तत् । अर्थे किम् ? *गोसुखम् ।

देवार्थमिति । देवायेदमि*ति विग्रहः, तादर्थ्ये चतुर्थी ।

क्ते च (पा० सू० ६-२-४५) । *प्रतिपदोक्तत्वाद्धितरक्षिताभ्यां समासस्यैवात्र ग्रहणम् । गोहितमित्यत्र "हितयोगे च" (का० वा०) इति चतुर्थी । एवञ्चोरक्षितमित्यत्र तादर्थ्ये चतुर्थी । *अन्ये तु हितशब्दे नास्य प्रवृत्तिः । *अत्रापि तदर्थे इत्यनुवृत्तेः । *अत एवास्य सूत्रस्य प्रकृतिवि-कृतिभाव एव "चतुर्थी तदर्थे" ( पा० सू० ६-२-४३ ) इत्यस्य प्रवृत्तौ

---

मुपादाय "संज्ञायामेव पण्यकम्बलः प्रकृतिस्वरपूर्वपदो भवति"इत्युक्तम् । यदि कश्चिज्जातिवाचकस्य समास इष्टस्तदा स बहुलग्रहणेनैव साधनीयः । अन्य-त्रेति मूलस्यासंज्ञायामित्यर्थः । पणितव्येति योगार्थप्रदर्शनेनासंज्ञात्वन्ध्वानितम् । *तेन=तादृशनियमेन । *सोऽपि=कृत्या इति स्वरोऽपि ।

चतुर्थी तदर्थे ( पा० सू० ६-२-४३ ) । अत्र चतुर्थीति प्रथमान्तं कार्यि, तदर्थे इति सप्तम्यन्तमुत्तरपदस्य विशेषणम् । *प्रकृतिविकृतिभाव एवेति । समाससंज्ञायास्तत्रैव प्रवृत्तेः । स्वरस्य तत्रैव प्रवृत्तौ मानमाह—*अर्थे इत्यादिना । देवार्थमित्यादावनेनैव स्वरस्य सिद्धत्वात् । न च गोहितमित्यत्र स्वरसिद्ध्यर्थं "गतौ च" ( पा० सू० ६-२-४५ ) इति सूत्रमावश्यकमिति वाच्यम् । वक्ष्यमाणरीत्या तत्र "क्ते च" (पा०सू०६-२-४५) इत्येतत्प्रवृत्तेरनिष्टत्वात् । *कुबे-रबलिरित्यत्रेति । अत्र बलिशब्दो दीयमानद्रव्यपरः । तस्य द्रव्यस्य तदुपकारक-स्वरूपत्तदर्थत्वमस्त्येव । *गोसुखमिति । सुखपदार्थस्य न तदुपकारकत्वम् । सु-खस्यैव मुख्यफलतया तस्य पूर्वपदार्थाभिप्रेतफलान्तरजनकत्वाभावादिति भावः । *इति विग्रह इति । इदङ्कुसुमादिकमिति विशेष्यमत्र बोद्धव्यम् । *प्र-तिपदोक्तत्वात्=क्तान्तेन प्रतिपदोक्तस्य चतुर्थीसमासस्य ग्रहणात् । प्रतिपदोक्त-श्चतुर्थीसमासो गोहितमित्यत्राप्यस्तीत्यभिप्रायेण गोहितमित्युदाहरणम्मूलेऽभिहि-तम् । भाष्यानुसारिमतमाह-*अन्ये त्विति । *अत्रापि="क्ते च"(पा०सू०६-२-४५)

ज्ञापकता "चतुर्थी तदर्थार्थ" [पा० सू० २-१-३६] इति सूत्रभाष्योक्ता सङ्गच्छते। न ह्यत्र तस्य प्रवृत्तिर्हितयोगे तादर्थ्याभावात्। न च हिते चेति वक्तव्ये क्ते चेति सामान्यसूत्रं रक्षितार्थमपि सज्ज्ञापकमिति भाष्याशयः *गुरुत्वादुत्तरार्थं *तस्यावश्यकत्वाच्चेत्याहुः।

कर्मधारयेऽनिष्ठा (पा० सू० ६-२-४६)। अत्र *प्रतिपदोक्तश्रेण्यादिसमासस्यैव ग्रहणम्। *तेन वैदिकपण्डित इत्यत्र न।*इदञ्च "महान्व्रीहि" [पा० सू० ६-२-३८] इति सूत्रे *भाष्ये स्पष्टम्। कृताऽऽकृतमिति। *आकृतमिति च्छेदः। कृतापकृतादीनाञ्चोपसंख्यानमिति प्रतिपदोक्तः समासः। अकृतमिति च्छेदस्तु न युक्तः। तस्य क्तान्तोत्तरपदत्वाभावेनाप्राप्तेः।

अहीनवाचिनीति। *अविभागवाचिनीत्यर्थः। थाथादिस्व-

---

इति सूत्रेऽपि हितशब्दस्य सुखार्थकतया तस्य पूर्वपदार्थोपकारकत्वरूपतादर्थ्याभावात्। *अत एव=तदर्थ इति पदस्यानुवृत्तेरेव। *गुरुत्वादिति। न्यासान्तरकल्पनेन ज्ञापकत्वोपन्यासस्य युक्तत्वकल्पनायाङ्गुरुत्वात्। *तस्य=क्तग्रहणस्य।

कर्मधारयेऽनिष्ठा (पा० सू० ६-२-४६)। "क्ते च"(पा० सू० ६-२-४५) इत्यतः क्त इत्यनुवर्त्तते। अनिष्ठेति च्छेदः निष्ठेत्यस्य प्रत्ययग्रहणपरिभाषया निष्ठान्तपरतया नञा समासान्निष्ठान्तभिन्नम्पूर्वपदं क्तान्तोत्तरपदपरकङ्कर्मधारयसमासघटकम्प्रकृत्या इत्यर्थः। घटकत्वं सप्तम्यर्थः। *प्रतिपदोक्तेति। अनिष्ठान्तस्य क्तान्तेन प्रतिपदोक्तः। यद्यप्यनिष्ठान्तमिति समासविधौ नोपात्तन्तथापि क्तान्तस्य साक्षादुपादानादस्ति प्रतिपदोक्तपरिभाषाप्रवृत्तिः। *तेन=प्रतिपदोक्तसमासस्यैव ग्रहणेन। *इदम्=प्रतिपदोक्ततत्सूत्रविहितस्यैव ग्रहणमित्येतत्। *भाष्ये स्पष्टमिति। तत्र हि—"किमर्थम्महतः प्रवृद्धशब्दे उत्तरपदे प्रकृतिस्वरत्वमुच्यते न कर्मधारयेऽनिष्ठेत्येव सिद्धम्। न सिध्यति। किङ्कारणम्? श्रेण्यादिसमास इत्येवन्तत्। किम्पुनः कारणं श्रेण्यादिसमास इत्येवन्तादिति मा भूत्। महानि इष्टो दक्षिणा दीयते" इत्युक्तम्। तत्र कैयटः—"श्रेण्यादिसमास इति। लक्षणप्रतिपदोक्तपरिभाषया क्तान्तेन प्रतिपदोक्तो यः कर्मधारयस्तस्य ग्रहणमित्यर्थः" इति। कृताकृतमित्यत्राङ्प्रश्लेषे सति कृद्ग्रहणपरिभाषया आकृतशब्दस्य क्तान्तत्वमित्याशयेनाह-*आकृतमिति च्छेद इति। इदमुपलक्षणम्। श्रेण्यादिषु पण्डितशब्दः पठ्यते कृतादिषु च समाख्यातशब्दः, एतयोः प्रतिपदोक्तः "श्रेण्यादयः कृतादिभिः" (पा० सू० २-१-५९) इति समासोऽस्ति तत्रापि प्रकृतसूत्रेऽनिष्ठेतिपदानुपादाने पूर्वपदप्रकृतिस्वरापत्तिः। पण्डितशब्दो हि "लघावन्ते"(फि० पा० २ सू० ४२) इत्याद्युदात्तः।

अहीनशब्दं व्याचष्टे-*अविभागेति। अविभागवाचीत्यत्र नञो वि-

रापवादोऽयम् ।

अनुपसर्ग इतीति । अनेनैवातीतादिप्राप्तिसिद्धावहीन इति व्यर्थमित्याहुः* ।

तृतीयाक (पा० सू० ६-२-४८)। अयमपि थाथादिस्वरापवादः। त्वोतास इति । त्वया ऊताः रक्षिताः त्वोतासः "प्रत्ययोत्तरपदयोश्च" (पा० सू० ७-२-९८) इति मपर्यन्तस्य त्वादेशे दकारलोपश्छान्दसः। *अवतेः क्तः "ज्वरत्वर" (पा० सू० ६-४-२०) इत्यूठ् "एत्येधति" (पा० सू० ६-१-८९] इति वृद्धेरिडागमस्य चाभावश्छान्दसः। पूर्वपदप्रकृतिस्वरे कृते एकादेश उदात्तेनोदात्तः, ततः स्वरितः। *रथयात इति । गत्यर्थत्वात्कर्तरि क्तः ।

---

भागवाचिशब्दप्रकृतिकसुबन्तेन समासः। विभागवाचकत्वञ्च यथा कथञ्चित्। 'कष्टश्रितः' इति समासघटकश्रितशब्दार्थे कथमपि विभागस्य न घटकता 'कान्तारातीतः' इत्यत्र त्वतीतशब्दस्य विभागानुकूलव्यापाराश्रयवाचकतया विशेषणता विभागस्यास्त्येवेति भावः। *इत्याहुरिति । भाष्यानुसारिणः। तदुक्तम्भाष्ये—"अहीने द्वितीयानुपसर्गे। इह मा भूत्—सुखप्राप्तो दुःखप्राप्त इति । यद्यप्येतदुच्यते अथ वैतर्ह्यहीनग्रहणन्न करिष्यते इहापि कान्तारातीतो योजनातीत इति । अनुपसर्ग इत्येव सिद्धम्" इति । न चानुपसर्ग इत्युक्तावप्यहीन इति वाच्यमन्यथा भूमिपतित इत्यत्रापि स्यात् । तदुक्तौ तु नायन्दोषः। पतधातोर्विभागजन्याधःसंयोगानुकूलव्यापारवाचकतया हीनत्वाचित्वाभावादिति वाच्यम्। पतधातोरधोदेशसंयोगानुकूलव्यापारवाचकतैव न तु विभागजन्यत्वस्य तत्र प्रवेशः। यदा शाखाया वृक्षत्यागो नास्ति तदापि कुत्र चिद्दीर्घा शाखा यदा भूमिसम्बद्धा तदा भूमिम्पतति शाखेति प्रयोगस्य दर्शनात् । कुड्यात्पतितोऽश्वात्पतित इत्यादौ तु पञ्चम्युपपत्तये पत्धातोर्विभागविशिष्टव्यापारे लक्षणा स्वीक्रियते। एवमन्यत्रापि तादृशशब्दयोगे यदि पञ्चम्यपादाने दृश्यते तदा तत्रापि विभागविशिष्टोत्तरदेशसंयोगानुकूलव्यापारे लक्षणा। शक्तिस्तु स्वोत्तरदेशसंयोगानुकूलव्यापार एव। अहीनग्रहणप्रत्याख्यानपरभाष्यप्रामाण्यादिति बोध्यम्। अत एव मूलोक्तमहीनवाचिनीति साधु सङ्गच्छते।

तृतीया कर्मणि (पा० सू० ६-२-४८)। के चेति वर्त्तते । *अवतेः क्त इति । कर्मणीति शेषः। तदन्तस्य "निष्ठा च द्व्यजनात्" (पा० सू० ६-१-२०५) इत्याद्युदात्तत्वे प्राप्ते "घृतादीनाञ्च" (फि० पा० १ सू० २१) इत्यन्तोदात्तत्वं बोध्यम्। *रथयात इति । याधातोर्गत्यर्थकत्वात् कर्त्तरि क्तः। यद्यपि प्रापणं याधातुवाच्यन्तथापि तद्घटकप्राप्तिर्गतिं विना न भवतीत्याशयः। 'रथगतः' इत्यपि प्रत्युदाहरणम्बोध्यम्।

गतिरनन्तरः । ( पा० सू० ६-२-४९ ) । *गतिः क्तिजन्तः पुँल्लिङ्गानन्तरपदसामानाधिकरण्यात् । निपातनादनुनासिकलोप इति *हरदत्तः। *गतिशब्दस्य तत्सञ्ज्ञकशब्दपरत्वान्न सामानाधिकरण्यानुपपत्तिरिति काश्चित् । पुरोहितमिति । पुरःशब्दोऽसिप्रत्ययस्वरेणान्तोदात्तः । थाथादिस्वरापवादोऽयम् । अभ्युद्धृत इति । इह हृतशब्दस्योच्छब्देन समासे पुरोहितमित्यत्रेव गतिस्वरेणाद्युदात्त उद्धृतशब्दः । *तस्य पुनरभिशब्देन समासः । अयमेव समासक्रमो भाष्यादिसम्मत इति प्रागेव निरूपितम् । तत्र कृद्ग्रहणपरिभाषया उद्धृतस्य क्तान्तोत्तरपदत्वात् । अपवादक्रमेण समासान्तोदात्तत्वे तद्बाधकाव्ययपूर्वपदप्रकृतिस्वरत्वे तद्बाधककृत्स्वरे तद्बाधकथाथादिस्वरे प्राप्ते तमपोद्यायं प्राप्तः । नन्वनन्तरग्रहणेऽप्यसौ दुर्वारः, कृद्ग्रहणपरिभाषयोद्धृतस्य क्तान्तत्वेऽभेस्तदानन्तर्यस्य सत्त्वादिति चेत् । न, अनन्तरग्रहणसामर्थ्याद्धि धातोरनन्तरो गतिराश्रीयतेऽभिश्च न तथेति न दोषः । नन्वभेः स्वराभावेऽपि अभ्युद्धृतशब्दस्य थाथादिस्वरेणान्तोदात्तत्वापत्तिः, इष्यते तूच्छब्दस्य स्वरः 'संसृष्टन्धनमुभयं समाकृतम्' इत्यादिमन्त्रे समाकृतशब्दे आङः स्वर*दर्शनात् । न चासौ प्रकृतसूत्रेण सिद्ध्यति । प्रथमसमासे तत्प्राप्तावपि द्वितीयसमासे थाथादिस्वरप्रवृत्तेरुक्तत्वात् । न च तम्बाधित्वा गतिस्वरः प्रवर्त्तते,अभ्युद्धृतशब्दे उदः *पूर्वपदत्वाभावादिति चेत् । न,*धातोरनन्तर इति व्याख्यानादेव योगविभागेनानन्तरो गतिरपूर्वपदमपि प्रकृत्येति व्याख्यानादेव वा

---

गतिरनन्तरः ( पा० सू० ६-२-४९ ) । गतिशब्दस्य "स्त्रियाक्तिन्" (पा० सू० ३-३-९४ ) इति क्तिन्नन्तत्वे पुँल्लिङ्गेनानन्तरपदेन सामानाधिकरण्यमनुपपन्नमत आह—*गतिः क्तिजन्त इति । विहायसा गतिः पक्षिणामित्यादौ गतिर्यद्यपि क्तिन्नन्तः स्त्रीलिङ्ग एव तथापि "गतिश्च"( पा० सू० १-४-६० ) इति सूत्रघटको गतिशब्दः "क्तिच्क्तौ च संज्ञायाम्"( पा० सू० ३-३-१७४ ) इति क्तिजन्त एवेति भावः । *हरदत्त इति । "वसेस्तिः" ( उ० पा० ४ सू० ६२९ ) इति सूत्रविहित उणादिघटको यस्तिप्रत्ययः सोऽत्र बाहुलकाद्गमेरपि, तदन्तस्य पुंस्त्वन्तु अगस्तिरित्यत्रेव भविष्यति, न त्विह क्तिच् । "क्तिच्क्तौ च"( पा० सू० ३-३-१७४ ) इति सूत्रे संज्ञापदेनैकव्यक्त्युपनिवेशिनीया संज्ञा सा गृह्यते इति तद्भावः । *गतिशब्दस्येति । अस्य क्तिन्नन्तत्वेऽपीत्यादिः । *तस्य=उद्धृतशब्दस्य । *दर्शनादिति । तत्तुल्यन्यायेनाभ्युद्धृतशब्देऽपि उद्धृतशब्दादेरुकारस्यैवेष्ट इति भावः । *पूर्वपदत्वाभावादिति । इदम् 'पूर्वपदशब्दः समासप्रथमावयवे रूढः' इति मतेन । तन्मतरीत्यैवाह—*धातोरित्यादि । *अन्यथा=अनन्तर

पूर्वपदत्वं विनाऽप्यस्य प्रवृत्तिस्वीकारात् । *अन्यथा धातुं प्रति गतित्वेन तं प्रति पूर्वपदत्वासम्भवेन सूत्रार्थासङ्गतेः । एवञ्चाभ्युद्धृतमित्यत्रोद एव स्वरः । *इदमेवानन्तरग्रहणं कृद्ग्रहणपरिभाषाया ज्ञापकमित्यन्यत्र प्रपञ्चितम् । नन्वेवमपि व्यवहितवारणेन धातोरनन्तर इति व्याख्यानस्य चारितार्थ्येन कथं सतिशिष्टथाथादिस्वरबाधकत्वमिति चेत् । न, "अहीने द्वितीया" [ पा० सू० ६-२-४७ ] *इति सूत्रादनुपसर्गग्रहणमत्रानुवर्त्तते । तेनैव अभ्युद्धृतमित्यादौ अभ्यादेर्व्यावृत्तिसिद्धौ (१)अनन्तरग्रहणात्कक्षान्तरप्राप्तथाथादिस्वरबाधः, एवञ्चात्र तत्सामर्थ्यात्पूर्वपदमित्यपि न सम्बध्यत इत्याहुः । कारकपूर्वस्य त्विति । अयं भावः-"कारकाद्दत्त" ( पा० सू० ६-२-१४८ ) इति सूत्रे कारकादिति योगो विभज्यते । क्तग्रहणं गतिग्रहणञ्चानुवर्त्तते, कारकात्परं क्तान्तं सगतिकमुत्तरपदमन्तोदात्तं स्यादित्यर्थः । एवञ्च "दूराद्गत" इत्यादौ थाथादिस्वरेण कृत्स्वरेण वा सिद्धेरिदं 'दुरादागत' इत्यादौ अभ्युद्धृत*न्यायप्राप्त-"गतिरनन्तरः" ( पा० सू० ६-२-४९ ) इत्यस्य बाधनार्थम् । *एतेनोक्तरीत्या दूरादागत इत्यादौ कारकपूर्वेऽपि गतिस्वरः स्यात्, इष्यते तु थाथादिस्वर इत्यपास्तमिति दिक् ।

तादौ च निति [ पा० सू० ६-२-५० ] । कृत्स्वरापवादो*ऽयम् । तकारादेर्नित्प्रत्ययस्याकृतोऽभावात् गतिग्रहणेन धातोराक्षेपेण तत्प्रकृतिकप्रत्ययस्यैव ग्रहणाच्च कृल्लाभे कृद्ग्रहणं कृत्सञ्ज्ञाप्रवृत्तिकाले यस्तद्ग्रहणार्थम् । तेन प्रलपिते*त्यादि सिद्ध्यति । स्वरप्रवृत्तिवेलायां तादित्वाभावेऽपि पूर्वन्तत्सत्त्वात् "यस्मिन्विधिः ( प० भा० ) इत्येव सिद्धे आदिग्रहणञ्चिन्त्यप्रयोजनम् । अनन्तर इति । अत्रापि पूर्वसूत्रवदेव

---

इति व्याख्यानाभावे । *इदमेव='अनन्तरः' इत्यानुपूर्वीपुरस्कारेणोपात्तमेव । *इति सूत्रादनुपसर्गग्रहणमिति । तस्मिन्सूत्रे वार्त्तिककारोक्तमनुपसर्गग्रहणमित्यर्थः । *न्यायप्राप्तेति । तत्रोक्तरीत्या । *एतेन=योगं विभज्य व्याख्यानेन ।

तादौ च निति कृत्यतौ ( पा० सू० ६-२-५० ) । *अयम्=कृतीत्युपादानेन कृत्स्वरस्यावश्यम्प्राप्तेरयं योगोऽपवाद इत्यर्थः । *इत्यादि सिध्यतीति। कृत्स्वरम्बाधित्वा गतेः प्रकृतिस्वरेणाद्युदात्तस्य प्रलपितशब्दस्य सिद्धिरित्य-

---

( १ ) अनुपर्गे क्तान्ते इत्यर्थात् । अत्र चोद्धृतमिति सोपसर्गं क्तान्तमुत्तरपदं भवतीति अभेर्न प्राप्नोतीति भावः ।

*व्यवस्था बोध्या । आगन्तुरिति । नन्वताविति पर्युदासः क्तिन एवोचितः 'वृष्णे चोदस्व सुष्टुतिम्' इत्यादौ गतिस्वरादर्शनादिति चेत् । न, तत्रो*पायान्तरस्यैवानुसर्तव्यत्वात् । न ह्यताविति पर्युदासेन तन्निर्वाहः, कृदुत्तरप्रकृतिस्वरेण धातोरुदात्तत्वापत्तेः, अन्तोदात्ततायाश्च तत्रेष्टत्वात् । किं चाताविति क्तिनः पर्युदासे प्रभूतौ सङ्गतिमित्यादौ गतिस्वरो न सिध्येव तस्मात्तुन एवायं पर्युदासः । यत्तु "मन्क्तिन्व्याख्यान" ( पा० सू० ६-१-१९१ ) इत्यादिना सुष्टुत्यादावन्तोदात्तत्वमिति । तन्न, प्रभूतावित्यादिसिद्धये तत्र कारकानुवृत्तेर्न्याय्यत्वात् वृत्तिकृता दर्शितत्वाच्च । 'वृष्णे चोदस्व सुष्टुतिम्' इत्यादौ तु स्तोत्रकरणीभूताया ऋचः साध्वसिरित्यादिवत्कर्तृत्वविवक्षायां क्तिजन्तत्वा*न्न दोषः ।

तवै चान्तः ( पा० सू० ६-२-५१ ) । कृत्स्वरापवादः । अन्त उदात्त इति । *यद्यप्युदात्तग्रहणं *दुर्लभं, तथापि गतिः प्रकृत्या भवतीत्युक्ते उदात्तो*बुद्धिमारोहतीति स एवान्तस्य भवतीति भावः । अनन्तर इति । अत्रापि पूर्ववदेव व्यवस्था । अन्वेतवा इति । अनुरुपसर्गत्वादाद्युदात्तः ।

प्रत्यञ्च इति । ननु "अनिगन्तः" [ पा० सू० ६-२-५२ ] इत्युक्तावपि प्रत्यञ्चमित्यादौ यणि अनिगन्तत्वादे*तत्प्रवृत्तिर्दुर्वारा । न च स्थानिवत्त्वं पूर्वपदस्य कार्यित्वेना*पूर्वविधित्वात् । अनिगन्त इति तु

---

थः । *व्यवस्था=शास्त्राणाम्प्रवृत्तिक्रमः । मूले—प्रजल्पाक इति । अत्र जल्पधातोः "जल्पभिक्ष" ( पा० सू० ३-२-१५५ ) इति षाकन्प्रत्ययस्य सत्त्वात्कृदुत्तरपदप्रकृतिस्वरेण जकाराकार उदात्तः । आगन्तुरित्यत्र "सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यः" इति तुन्नन्तः । *उपायान्तरस्यानुसर्तव्यत्वात्="व्यत्ययो बहुलम्"( पा० सू० ३-१-८५ ) इति सूत्रेण स्वरव्यत्ययेनान्तोदात्तत्वस्य तत्रानुसर्तव्यत्वात् । *न दोष इति । नान्तोदात्तत्वाऽसिद्धिरूपो दोष इत्यर्थः ।

तवैचान्तश्च युगपत् ( पा० सू० ६-२-५१ ) । चेन गतिरित्येतदिह सम्बध्यते 'अन्त उदात्त' इति यन्मूलकृताऽभिहितन्तल्लाभोपायमाह—*यद्यप्युदात्त इति । *दुर्लभमिति । तदनधिकारादिति भावः । *बुद्धिमारोहतीति । गतेरुदात्ततया प्रकृतिभावेन तस्यैवावस्थानबोधनेनेहान्तश्च तादृशो भवतीत्युक्ते उदात्तलाभ इति भावः । 'अन्वेतवा उ' इत्यत्रानुपूर्वकादिण्धातोः "कृत्यार्थे तवैकेन्"(पा० सू० ३-४-१४)इति तवैप्रत्ययः ।

*एतत्प्रवृत्तिरिति । "अनिगन्तः" ( पा० सू० ६-२-५२ ) इति सूत्रस्य प्रवृत्तिरित्यर्थः । *अपूर्वविधित्वादिति । स्थानिभूतादचः पूर्वत्वेन दृष्टस्य वि-

*प्रतीच इत्येतद्व्याहृत्त्या चरितार्थमिति चेत् । न, 'इगन्तस्य यणादेशे कृतेऽपि प्रतिषेधः' *इति वचनेनैव निर्वाहात् । एवञ्च 'प्रसञ्चः' इत्यादौ कृदुत्तरपदप्रकृतिस्वर एव । परत्वादिति । चुस्वरावकाशः *सा कद्रीची, अस्यावकाशः—ये पराञ्चः, उभयप्रसङ्गे परत्वादयमित्यर्थः । *वस्तुतस्तु इष्टत्वादित्यर्थः । एतेनास्मिन् समासस्वरे कृते विभक्तौ "अचः" ( पा० सू० ६-४-१३८ ) इति लोपे कृते सतिशिष्टत्वाच्चुस्वर एव प्राप्नोतीत्यपास्तं *भाष्यकारेष्टयैव परिहाराव । अत्र चुस्वरादिति सतिशिष्टस्वरमात्रोपलक्षणमिति केचित् ।

उदात्तस्वरितयोरिति । स्वरसन्धेः पूर्वं पूर्वोत्तरपदनिमित्तकार्यप्रवृत्तेः पूर्वमे*तस्मिन्स्वरे पश्चाद्याणि अस्य प्रवृत्तिः । *अध्याङ्क्ङित्यत्र "उदात्तादनुदात्तस्य" ( पा० सू० ८-४-६६ ) इति स्वरितः, एवम् 'अधीचा' इत्यत्राप्ययमेव स्वरश्चुस्वरात्* । कृत्स्वरापवादाविमौ योगौ ।

ईषद ( पा० सू० ६-२-५४ ) । ईषदिति पूर्वपदम्वा प्रकृत्येत्यर्थः, पक्षे समासान्तोदात्तः । कृत्स्वर एवेति । "ईषद्गुणवचनेन" इति प्रतिपदोक्तसमासस्यैव ग्रहणादिति भावः । *अत एव बहुव्रीहावपीदं न । *केचित्तु परत्वात्कृत्स्वर एवेत्यर्थ इत्याहुः ।

---

ध्यभावादित्यर्थः । *प्रतीच इति । इदमुपलक्षणम् । "इकोऽसवर्णे" ( पा० सू० ६-१-१२७ ) इति शाकलपक्षेऽनिगन्त इत्यस्य चारितार्थ्यन्द्रष्टव्यम् । यदि तु लित्यसमासयोः शाकलप्रतिषेध इत्याश्रीयते तदा "अचः" (पा० सू०६-४-१३८) इत्यल्लोपविषय एव चारितार्थ्यम् । *इति वचनेनैवेति । एतच्च "नेन्द्रस्य" (पा० सू० ७-३-२२) इति ज्ञापनादरेणेति बोध्यम् । यदि तु तस्य सूत्रस्य पूर्वोत्तरपदनिमित्तकार्यात्पूर्वमन्तरङ्गमपि सन्धिकार्यन्नेत्येतस्मिन्नर्थे ज्ञापकत्वं स्वीक्रियते तदा वचनं विनापि प्रकृतसूत्रस्थमनिगन्त इति चरितार्थमिति द्रष्टव्यम् । *सा कद्रीचीति । किम्शब्दपूर्वपदकः कद्रीचीशब्दः । "विष्वग्देवयोः" इत्यद्यादेशः । ननु वक्ष्यमाणरीत्या परत्वादित्यसङ्गतमत आह—*वस्तुतस्त्विति । *भाष्यकारेष्ट्यैवेति । "चुस्वरादनिगन्तोऽञ्चतावप्रत्यये इत्येतद्भवति विप्रतिषेधेन" इति भाष्यकारेष्ट्येत्यर्थः ।

*एतस्मिन्स्वरे="न्यधीच" इति स्वरे । स्वरितस्थानिकयणादेशोदाहरणमाह—*अध्यङीति । पूजायामिदमुदाहरणम् । *चुस्वरादिति । विप्रतिषेधेनेतिशेषः ।

ईषदन्यतरस्याम् ( पा० सू० ६-२-५४ ) । अत्रेषदिति स्वरूपपरम् । *अत एव=प्रतिपदोक्तसमासस्यैव ग्रहणादेव । *केचित्त्विति । भाष्यानुसारिण इत्यर्थः । एवञ्चेषद्भेद इत्यत्र "ईषदन्यतरस्याम्" इत्यस्य प्रवृत्तिवारणाय प्र-

बहुव्रीहावप्राप्तिरिति । तत्पुरुषाधिकाराभावादिति भावः ।

प्रथमोऽचिरो ( पा० सू० ६-२-५६ ) । अचिरोपसंपत्तिः अभिनवत्वम् । प्रथमवैयाकरण इति । वैयाकरणानामाद्यो मुख्य इत्यर्थकसमासे अयमन्तोदात्त एव ।

कतरकतमौ डतरडतमयोश्चित्त्वादन्तोदात्तौ । प्रतिपदोक्तत्वादिति । "कतरकतमौजाति" [ पा० सू० २-१-६३ ] इति प्रतिदोक्तस्यैव ग्रहणादित्यर्थः ।

कर्मधारय इत्येवेति । तेनार्यस्य ब्राह्मण इत्यर्थे *न दोषः ।

राजब्राह्मण इति । आद्युदात्तो राजन्शब्दः । पक्षेऽन्तोदात्तत्वम् । *राजशब्दो ब्राह्मणे ताद्धर्म्याद्वर्तत इति सामानाधिकरण्यम् । षष्ठीसमासेऽन्तोदात्तत्वमेव । योगविभागो यथासंख्यनिवृत्त्यर्थ उत्तरार्थश्च । *अत्र लिङ्गविशिष्टपरिभाषा नेति "ङ्याप्सूत्रभाष्ये स्पष्टम् । एवं समासरूपसमुदायग्रहणेऽपि सा न । तेन "बह्वोर्नञ्वत्" ( पा० सू० ६-२-१७५ ) इति सूत्रं 'बहुगोमती' इत्यत्र न । अन्यत्र नेति । कर्मधारये इत्यर्थः ।

क्तेनित्या ( पा० सू० ६-२-६१ ) । नित्यमाभीक्ष्ण्यम् । काला इति । "अत्यन्तसंयोगे च" ( पा० सू० २-१-२९ ) इत्यस्याप्युपलक्षणमेतत् । द्वितीयासमास इति । द्वितीयाऽत्यन्तसंयोगे । द्वितीयापूर्वपदप्रकृतिस्वरापवादथाथादिस्वरस्य पाक्षिकोऽपवादोयम् ।

---

तिपदोक्तस्येति न वाच्यमिति भावः । एवं हि भाष्ये उक्तम्—"ईषत्स्वरात्कृत्स्वरो भवति विप्रतिषेधेन । ईषत्स्वरस्यावकाशः—ईषत्कडारः, ईषत्पिङ्गलः । कृत्स्वरस्यावकाशः—इध्मप्रव्रश्चनः । इहोभयम्प्राप्नोति—ईषद्भेदः । कृत्स्वरो भवति विप्रतिषेधेन"इति । अत्र भाष्ये ईषद्भेद इत्यत्रोभयम्प्राप्नोतीत्युक्त्या प्रतिपदोक्तपरिभाषाप्रवृत्त्यभावः स्फुट एव ।

प्रथमोऽचिरोप ( पा० सू० ६-२-५६ ) । समुदायेनाचिरोपसम्पत्तौ गम्यमानायामित्यर्थः ।

*न दोषः='आर्यब्राह्मणः' इति समुदायावयवार्यशब्दस्य विकल्पेन प्रकृतिस्वरो न, किन्तु समासान्तोदात्तत्वमेव ।

राजा च ( पा० सू० ६-२-५९ ) । राजत्वस्य क्षत्रियधर्मत्वाद्ब्राह्मणशब्देन सामानाधिकरण्यमनुपपन्नमत आह—*राजशब्द इति । *अत्र="राजा च" ( पा० सू० ६-२-५९ ) इति सूत्रे । तेन 'राजब्राह्मणी' इत्यत्र न दोषः ।

षष्ठी प्रत्येनासि ( पा० सू० ६-२-६० ) । प्रतिगतमेनः पापं यस्य स प्र-

ग्रामः शिल्पिनि ( पा० सू० ६-२-६२ )। शिल्पिवाचिन्युत्तरपदे इत्यर्थः। ग्रामनापित इति। *षष्ठीसमासः।

राजनापित इति : कर्मधारये राजगुणाध्यारोपेणोत्तरपदार्थप्रशंसा, षष्ठीसमासो*राजयोग्यतया।

अधिकारोऽयमिति। *"अन्तः" (पा० सू० ६-२-९२) इत्यतः प्रागादिरिति, "प्रकृत्या भगालम्" ( पा० सू० ६-२-१३७ ) इत्यतः प्रागुदात्त इति चाधिक्रियत इत्यर्थः।

धर्म्यमिति। *धर्मो नाम ग्रामजनपदकुलेषु परम्परायातः सदाचारः, तस्मादनपेतं तेन प्राप्यं वा धर्म्यम्, आचारवशादवश्यं कार्यमित्यर्थः। देयमिति। *प्रकृते व्याख्यानलभ्यम्। हारिण्युदाहरति—याज्ञिकाश्व इति। षष्ठीसमासाविमौ। हारीत्यावश्यके णिनिः, ह्वोऽत्र ग्रहणमर्थः। वाडवहरणमिति। हरणशब्दः *कर्मसाधनः। कृत्स्वरो हारिस्वरेणेति। कृत्स्वरापवाद "अनो भावकर्मवचनः" (पा०सू०६-२-१५०) इति स्वरबाधे कृत्स्वरबाधस्यापि फलितत्वादिति भावः। चित्स्वराद्धा-

---

स्थेनाः। राज्ञः प्रत्येना इति षष्ठीसमासः।

क्ते नित्यार्थे ( पा० सू० ६-२ ६१ )। अत्र क्तेति तदन्तपरमुत्तरपद इत्यस्य विशेषणम्।

ग्रामः शिल्पिनि ( पा० सू० ६-२-६२ )। अत्र ग्रामेति स्वरूपग्रहणम्, शिल्पिनीत्यत्र त्वर्थग्रहणम्। लक्ष्यानुसारिव्याख्यानात्। ग्रामशब्दो'ग्रसेरा च' ( उ० पा० १ सू० १४८) इति मन्प्रत्ययान्तत्वादाद्युदात्तः।

राजा च प्रशंसायाम्;(पा० सू० ६-२-६३)। प्रशंसायाङ्गम्यमानायाम्। *षष्ठीसमास इति। कर्मधारय इत्यस्यासम्बन्धेन समासद्वयेऽप्यस्य सूत्रस्य प्रवृत्तिः। *राजयोग्यतयेति। राजपरिचर्यायोग्यतयेत्यर्थः।

अधिकारोऽयमित्यस्यायं योग इत्यर्थे "अन्तः" इति सूत्रेऽन्तशब्दस्य विरुद्धार्थकपरत्वात्समुदायस्य ततः प्राङ्निवृत्तिः स्यात्तथा चोदात्त इत्यस्यापि सम्बन्धो न स्यादत आह—*अन्त इत्यत इति। अयमित्यस्य सौत्रः प्रथमान्तः शब्दो बोध्यः। उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयः।

सप्तमीहारिणौ ( पा० सू० ६-२-६५ )। धर्मशब्दोऽत्र लाक्षणिक इत्याशयेनाह—*धर्मो नामेति। ननु देयामित्यधिकमत आह—*प्रकृत इति। पवञ्च स्वीकारस्य यत्किञ्चित्कर्माकाङ्क्षत्वादप्रकृतकल्पनायामिदं व्याख्यानलभ्यमित्यर्थः। अहरण इत्येतद्धर्म्ये इत्यस्य विशेषणमित्याशयेन'वाडवहरणम्'इति प्रत्युदाहरणम्। हरणमिति स्वरूपपरम्। *कर्मसाधन इति। कर्मबोधकल्युडन्तोऽत्र हरणशब्दः।

रिस्वरः परत्वात्—मातुलगवः, टचाश्चित्त्वन्तु 'अतिगवे'इत्यादौ चरितार्थम् ।

युक्ते च । ( पा० सू० ६-२-६६ ) । युक्तः समाहितः, युजसमाधाविसस्य रूपम् । गोबल्लव इति । तत्परतया गवांपालक इत्यर्थः । कृत्स्वरथाथादिस्वराच पूर्वविप्रतिषेधेन युक्तेचेति स्वरएवे*ष्यते—गोद्विट्, *गोसङ्ख्यः, "समि ख्यः" ( पा० सू० ३-२-७ ) *इति कः ।

विभाषाऽध्यक्षे [ पा० सू० ६-२-६७ ) । *अध्यक्षशब्दो युक्तवाच्येवेति प्राप्तविभाषेयम् ।

पापञ्च शिल्पि । ( पा० सू० ६-२-६८ ) । शिल्पिवाचके पर इत्यर्थः ।

गोत्रान्ते [ पा० सू० ६-२२-६९ ] *आद्ययोरर्थग्रहणम् *अन्त्ययोः शब्दग्रहणम् । अपत्याधिकारादन्यत्र लौकिकगोत्रग्रहणादाह—सुश्रुतोऽपत्यस्येति । *माणवब्राह्मणयोर्गोत्रत्वेन प्रसिद्ध्यभावाद्

---

युक्ते च ( पा० सू० ६-२-६६ ) । अत्र युक्त इत्यस्य युक्तशब्दपरतया युक्तशब्दे परे इति नार्थः । "युक्तस्वरश्च कृत्स्वराद्भवति विप्रतिषेधेन । युक्तस्वरस्यावकाशः—गोवल्लवः, अश्ववल्लवः । कृत्स्वरस्य-इध्मप्रवश्चनः । इहोभयम्प्राप्नोति-गोसङ्ख्यः, पशुसङ्ख्यः । युक्तस्वरो भवति विप्रतिषेधेन"इति भाष्यानुसारिव्याख्यानात् । किन्तु युक्त इति समासस्य विशेषणम् । वाचकत्वमिह विशेषणताप्रयोजकसम्बन्ध इत्याशयेनाह मूले—युक्तवाचिनीत्यादि । *इष्यत इति । अनुपदम्प्रदर्शितम्भाष्यमिह मानम् । *गोसङ्ख्य इति । गोषु सम्यक् ख्यात इत्यर्थः । न च सङ्ख्यशब्दस्य कप्रत्ययान्ततया "थाथ" ( पा० सू० ६-२-१४४ ) इतिसूत्रविषयत्वेन कथमिह कृत्स्वरात्पूर्वविप्रतिषेधप्रदर्शनमिति वाच्यम् । प्राथमिकप्राप्त्यभिप्रायेणैवमभिधानात् । *इति क इति । कर्मणीतिशेषः ।

*अध्यक्षशब्द इति । अध्यक्षशब्दोत्तरपदकः समास इत्यर्थः ।

पापञ्च शिल्पिनि ( पा० सू० ६-२-६८ ) । पापमिति स्वरूपपरम् । शिल्पिनीति त्वर्थपरम् । लक्ष्यानुसारिवृत्त्यादिसम्मतव्याख्यानात् । उदाहरणे पापशब्द अर्शआद्यजन्तः ।

गोत्रान्तेवासि (पा० सू० ६-२-६९) । *आद्ययोः=गोत्रान्तेवासिशब्दयोः । *अन्त्ययोः=परशब्दयोः । समास इति पूर्वपदमिति चाधिकारलब्धम् । गोत्रवाचिनि अन्तेवासिनि चोत्तरपदे माणवब्राह्मणशब्दयोश्च परयोः पूर्वपदमाद्युदात्तं स्यात् । यद्यपि माणवब्राह्मणशब्दयोरपत्यार्थकत्वसम्भवस्तथापि विशेषरूपेणोभयोरुपादानसामर्थ्यादिह गोत्रशब्दस्तद्वाचकत्वेन प्रसिद्धपर इत्याशयेनाह—*माणवेति । सुश्रुच्छब्दः सुशब्दश्रुच्छब्दयोस्समासेन सम्यक्श्रवणकर्तृपरस्ततोऽपत्ये प्रत्ययः । अस्य भार्याधीनत्वेन निन्दा ।

ग्रहणम् । ओदनपाणिनीया इति । ओदनकामत्वेन तेषाक्षेपः ।

अङ्गानि मैरेये( पा० सू० ६-२-७० ) । सुराव्यतिरिक्तं *मद्यं मैरेयं तद्वाचके उत्तरपदे तदर्थारम्भकवाचीनि पूर्वपदान्याद्युदात्तानी-त्यर्थः । आसवो मद्यम् ।

भक्ताख्यास्त [ पा० सू० ६-२-७१ ] । भक्तशब्दोऽत्र *अदनीयवस्तुमात्रपरः । भिक्षाकंसादयः *षष्ठीसमासाः । बहुवचनात्स्वरूप-विधिनिरासे सिद्धे आख्योक्तिरा*द्यविशेषस्य भिक्षादेर्ग्रहणार्थेत्याहुः । क्रियामात्रमिति । *न द्रव्यमित्यर्थः । बहुव्रीहिरिति । *षष्ठीसमासे त्वन्तोदात्तत्वम् ।

गोबिडाल । [ पा० सू० ६-२-७२ ] । *उपमानार्थेष्वेषूत्तरपदेषु पूर्वपदमाद्युदात्तमित्यर्थः । गवाकृत्येति । एवं यत्र यथोपमानभावः सम्भवति तत्र तथा योज्यमिति बोद्धयम् ।

अकेजी ( पा० सू० ६-२-७३ ) । *जीविकार्थे समासे अक-प्रत्ययान्ते उत्तरपदे पूर्वपदमाद्युदात्तमित्यर्थः । कृत्स्वरापवादः । दन्तलेख-नादिजीविकायाः समासे प्रवृत्तिनिमित्तत्वात्समासस्य जीविकार्थत्वमित्या-ह—यस्येति । प्रतिपदोक्तत्वात् "नित्यं क्रीडा" [ पा० सू० २-२-१७ ]

---

अङ्गानि मैरेये ( पा० सू० ६-२-७० ) अत्राङ्गशब्दो येन मैरेयं सम्पद्यते तत्परः । *न मद्यमिति । किन्तु रसविशेषविशिष्टन्द्रष्टव्यम् । *अदनीयेति । अर्हे कृत्यः । भिक्षाशब्दोऽत्राकारप्रत्ययान्तः । कर्मणि चात्र प्रत्ययः । *षष्ठीसमासा इति । चतुर्थी यदि तादर्थ्ये कल्प्यते तदा तदन्तस्य प्रकृतिविकृतिभावा-भावेन समासो न स्यात् । *आद्यविशेषस्य=अदनीयविशेषस्य । *न द्रव्य-मिति । तथा च भावे घञ् प्रकृते द्रष्टव्यः । *षष्ठीसमास इति । तदा प्रियोऽ-न्यपुरुषस्य, स च भिक्षाग्राहक इति सामर्थ्यन्द्रष्टव्यम् । अत्रान्तोदात्तत्वं समु-दायस्य बोध्यम् ।

गोबिडालसिंह ( पा० सू० ६-२-७२ ) । उपमानशब्दः करणसाधनः । वर्त्तनक्रियापेक्षयोपमान इति सप्तमीत्याशयेनाह—*उपमानार्थ इति । धान्य-गवः=धान्यं गौरिवेति लौकिकविग्रहः "गोरतद्धितलुकि" ( पा० सू० ५-४-९२ ) इति टच् । आद्युदात्तत्वेन चित्स्वरस्य बाधः ।

अके जीविकार्थे ( पा० सू० ६-२-७३ ) । अकप्रत्ययमात्रस्य जीविका-यामसम्भवाज्जीविकार्थे इति समासस्य विशेषणमित्याशयेनाह—*जीविकार्थे समास इति । लेखकशब्दे कर्त्तरि "ण्वुल्तृचौ" (पा०सू०३-१-१३३)इति । ण्वुल् ।

इति विहितसमासे एवेदम् । *अकग्रहणन्तु स्पष्टार्थम् ।

*प्राचामिति प्राग्देशवार्त्तिषु लाक्षणिकमित्याह—प्राग्देशवर्त्तिनामिति । अजीविकार्थमिदम् । उद्दालकेत्यादौ "नित्यं क्रीडा" ( पा० सू० २-२-१७ ) इतिसमासः । तवपुष्पेति । षष्ठीसमासः ।

नियुक्त इति । अधिकृत इत्यर्थः । स च कास्मिश्चित्कर्तव्ये *तत्परो न भवतीति युक्ते इत्यनेन न सिद्ध्यति ।

शिल्पिनि चा [ पा० सू० ६-२-७६ ] । "युक्ते च" ( पा० सू० ६-२-६६ ] इत्येव सिद्धे कृञः प्रतिषेधार्थं वचनम् ।

सञ्ज्ञायाम् ( पा० सू० ६-२-७७ ) । अत्राणीति "शिल्पिनि-चाऽकृञः" [ पा० सू० ६-२-७६ ] इति वर्त्तते । अयुक्तार्थमनियुक्तार्थं कृञः प्रतिषेधार्थञ्च वचनम् ।

गोतन्ति ( पा० सू० ६-२-७८ ) । पालशब्दे परे एते आद्युदात्ता इत्यर्थः । वत्सानां बन्धनरज्जुस्तन्तिः ।

णिनि ( पा० सू० ६-२-७९ ) । णिन्यन्ते उत्तरपदे पूर्वमाद्यु-

---

ननु यदि प्रतिपदोक्तसमास एवेदन्तर्ह्यक इति व्यर्थमत आह—*अक इति ।

प्राचां क्रीडायाम् ( पा० सू० ६-२-७४ ) । प्राचामिति क्रीडापदार्थापेक्षया षष्ठीत्याशयेनाह—*प्राचामितीति । प्रकृतसूत्रे क्रीडायामित्यस्याकरणे प्राचामिति षष्ठी तु अकप्रत्ययेनाक्षिप्तक्रियापेक्षया भविष्यतीत्यभिप्रायेण तव पुष्पप्रचायिकेति प्रत्युदाहरणम् ।

अणिनि ( पा० सू० ६-२-७५ ) । *तत्परो न भवतीति । किन्तु यदा राज्ञो बहिर्गमनसम्भावना तदाधिकाररक्षणार्थमेव छत्रन्धरतीति शेषः ।

शिल्पिनि चाऽकृञः(पा०सू० ६-२-७६) । अणीति वर्त्तते ।

णिनि ( पा० सू० ६-२-७९ ) । लुप्तसप्तम्यन्तमेतत् । *व्रत इति सूत्रभाष्यादाविति । यद्यपि भाष्ये न साक्षात्कण्ठरवेणाभिहितन्तथापि ध्वनितम् कैयटेन तु साक्षादेव कथितमित्याभिप्रायेणेह भाष्यादावित्यभिहितम् । तत्र भाष्ये—"किमुदाहरणम् ? अश्राद्धभोजी । किं योऽश्राद्धंभुङ्क्ते सोऽश्राद्धभोजी ? किञ्चातः ? यदाऽसावश्राद्धन्न भुङ्क्ते तदाऽस्य व्रतलोपः स्यात्" । अश्राद्धम्मया भोक्तव्यमिति सङ्कल्पानन्तरं यदोपवासादियोग्ये दिवसेऽश्राद्धन्न भुङ्क्ते तदाऽस्य व्रतलोपः स्यादित्यर्थः । एवमाशङ्क्य "एवन्तर्हि णिन्यन्तेन समासो भविष्यति । न श्राद्धभोजी अश्राद्धभोजीति । नैवं शक्यम् । स्वरे हि दोषः स्यात् । श्राद्धभोजीत्येवं स्वरः प्रसज्येत । अश्राद्धभोजीति चेष्यते । एवन्तर्हि नञ एवायम्भुजिप्रतिषेधवाचिनः श्राद्धशब्देनासमर्थसमासः" इति । एवं स्वर इति प्रतीकमु-

दात्तमित्यर्थः। अत्र सञ्ज्ञाग्रहणमनुवर्त्तते इति *"व्रते" (पा० सू० ३-२-८०) इति सूत्रे भाष्यादौ। *तेनाश्राद्धभोजीत्यादौ न। *अत्र कृत्स्वर एव। *उत्तरसूत्रस्थभाष्यात्तु नानुवर्तते इति प्रतीयते। *तत्त्वमूषयो विदुः। *वस्तुत *उत्तरसूत्रेऽपि संज्ञायामित्यस्य सवन्धे न कश्चिद्दोषः।

उपमानम् (पा० सू० ६-२-८०)। शब्दार्थकधातुप्रकृतिके एव णिन्यते परे इत्यर्थः। उष्ट्रक्रोशीति। उष्ट्र इव क्रोशतीत्याद्यर्थे "कर्तर्युपमाने" (पा० सू० ३-२-७९) इति णिनिः। एवेतिकिम्? उपमानमेवेत्येवं नियमो *मा भूत्। तथा च 'साध्वध्यायी' इत्यादौ पूर्वेणाद्युदात्तता *न स्यात् 'वृकवञ्ची' इत्यत्र च स्यादिति बोध्यम्।

पादाय "नञा श्राद्धभोजिशब्दस्य समासेऽव्ययपूर्वपदप्रकृतिस्वरः स्यात् कृदुत्तरपदप्रकृतिस्वरत्वेनान्तोदात्तत्वमिष्यते इत्यर्थः। ननु च "णिनि" (पा० सू० ६-२-७९) इत्यनेन पूर्वपदाद्युदात्तत्वेन भाव्यमिति नास्ति स्वरभेदः। अत्राहुः—"णिनि" (पा० सू० ६-२-७९) इति सूत्रे संज्ञायामित्यनुवर्त्तते, इयञ्च न संज्ञेति स्वरभेदोऽस्त्येव" इति कैयटेनोक्तम्। *तेन=संज्ञाग्रहणानुवर्त्तनेन। *अत्रेति। नञः क्रियायां सम्बन्धात्कृदन्तस्य कारकात्परत्वमिह बोध्यम्। संज्ञापदेन संज्ञात्वेन प्रसिद्धा एव गृह्यन्त इत्याशयः। *उत्तरसूत्रेति। "उपमानं शब्दार्थ" (पा० सू० ६-२-८०) इतिसूत्रस्थभाष्यादित्यर्थः। तत्र हि—"उपमानमिति किमर्थम्? शब्दार्थप्रकृतावेवेतीयत्युच्यमाने पूर्वेणातिप्रसक्तमिति कृत्वा नियमोऽयं विज्ञायेत। तत्र को दोषः? इह न स्यात्—पुष्पहारी, फलहारी। उपमानग्रहणे पुनः क्रियमाणे न दोषो भवति" इत्युक्तम्। यदि "णिनि" इति सूत्रे संज्ञायामित्यस्य संबन्धः स्यात्तदा पूर्वेणातिप्रसक्तमित्यभिधानस्य इह न स्यात्पुष्पहारी फलहारीत्यभिधानस्य चासङ्गतिः स्पष्टमेव। संज्ञात्वेन प्रसिद्धा एव संज्ञापदेन गृह्यन्त इति भावः। *तत्त्वमिति। संज्ञायामित्यस्य तत्र सूत्रे संबन्धासम्बन्धयोस्तत्त्वमित्यर्थः। वस्तुतस्तु "व्रते" (पा० सू० ३-२-८०) इतिसूत्रस्थभाष्यप्रामाण्येन संज्ञायामित्यस्य "णिनि" (पा० सू० ६-२-७९) इत्यत्र सम्बन्धोऽस्त्येव "उपमानम्" (पा० सू० ६-२-८०) इति सूत्रेऽपि यथा। किन्तु भाष्यद्वयप्रामाण्यादाधुनिकसंज्ञापि संज्ञापदेन गृह्यते। "व्रते" (पा० सू० ३-२-८०) इति सूत्रभाष्यीयाश्राद्धभोजीत्येवं स्वरः प्रसज्येतेत्यत्राश्राद्धभोजिशब्दो द्विविधसंज्ञाभिन्न इति कल्पनया भाष्ययोरविरोध इत्याशयेनाह—*वस्तुत इति। *उत्तरसूत्रेऽपीति। अपिः "णिनि" (पा० सू० ६-२-७९) इति सूत्रस्य सङ्ग्राहकः।

उपमानं शब्दार्थप्रकृतावेव (पा० सू० ६-२-८०)। अत्रानुवर्त्तमानं यणिनीति तदर्थणिन्यन्तस्य शब्दार्थप्रकृताविति विशेषणम्। *मा भूदिति। तथा चेष्टतोऽवधारणार्थ एवकारः। *न स्यादिति। पूर्वेणेति शेषः।

युक्तारो (पा० सू० ६-२-८१)। एते समासा एव गणे पठ्यन्ते। युक्तारोहीति। एषु "णिनि" (पा० सू० ६-२-७९) इत्येव सिद्धे युक्तादीन्येव पूर्वपदानि आरोह्यादीन्येवोत्तरपदानीत्येवं *पूर्वपदोत्तरपदनियमार्थमिदमिति केचित्। असञ्ज्ञार्थमित्य*न्ये। क्षीरहोतेति। अत्र समासस्वरापवादे कृत्स्वरे प्राप्ते तदपवादे "मन्" [पा० सू० ६-२-१५१] इति प्राप्ते *तदपवादोऽयम्। *एकशितिपाच्छब्दोऽत्र पठ्यते। *तत्रैकः शितिः पादोऽस्येति त्रिपदे बहुव्रीहौ अवान्तर *तत्पुरुषः। नन्ववान्तरतत्पुरुषे समासान्तोदात्तत्वं बाधित्वा "इगन्त" (पा० सू० ६-२-२९) इति पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वं सिद्धमेकशब्दस्य कन्नन्तत्वादिति चेत्। न, उत्तरपदे शित्यन्तस्य द्विगुस्वराभावज्ञापनार्थत्वात्। तेन द्विशितिपाति *तिशब्द एवोदात्तः। नन्वेवमपि समासान्तोदात्तत्वं बाधित्वा बहुव्रीहिनिमित्तपूर्वपदप्रकृतिस्वरत्वं भविष्यतीति व्यर्थ एव पाठ इति चेत्। न, *निमित्तिस्वरबलीयस्त्वस्यापि ज्ञापनात्। फलं तूक्तमेवेति केचित्। परे तु *समर्थसूत्रे *एतच्छब्दपाठेन नेहार्थः। इगन्ते द्विगावित्यस्य बाधकत्वान्न स्वरे दोष इत्युक्तम्। *तेन द्विशितिपादित्यत्रापि द्विशब्दस्वर एवेति लभ्यते। *अत एव निमित्तिस्वरबलीयस्त्वं वाचनिकमिति कैयटेनोक्तं, सतिशिष्टन्यायसिद्धमिति त्वन्यदित्याहुः। पात्रसमितादयोऽप्यत्र बोध्याः। अधिकशतवर्षशब्दोऽप्यत्र पठनीय इति समर्थसूत्रे भाष्यम्। अयमाकृतिगणः।

दीर्घकाश (पा० सू० ६-२-८२)। *दीर्घान्तं काशादीनि च जे परे आद्युदात्तानीत्यर्थः। दीर्घादिति किं? कुद्धिजः। जेकिं? शमी-

---

युक्तारोह्या (पा० सू० ६-२-८१) *पूर्वपदोत्तरपदेति। विनिगमनाविरहादित्यादि। *अन्ये इति। "णिनि" (पा० सू० ६-२-७९) इतिसूत्रे संज्ञायामित्यस्य सम्बन्धवादिन इत्यर्थः। *तदपवादोऽयमिति। क्षीरहोतृशब्दस्य युक्तारोह्यादिषु पाठः। *एकः शितिः पादोऽस्येतीति। शितिः कृष्णः। *तत्पुरुषः=द्विगुसमासः। *तिशब्द एवेति। समासस्वरेण सविशिष्टेन तिशब्द एवोदात्त इत्यर्थः। *निमित्तिस्वरबलीयस्त्वेति। निमित्ती यः समासो द्विगुस्तत्प्रयुक्तस्वरस्य बलीयस्त्वस्येत्यर्थः। *समर्थसूत्र इति। अस्येत्युक्तमित्यत्रान्वयः। *एतच्छब्दपाठेन=एकशितिपाच्छब्दपाठेन। *तेन=पूर्वोक्तार्थज्ञापकस्यैकशितिपाच्छब्दस्य पाठाभावेन। * अत एव=उक्तार्थे ज्ञापकस्याभावादेव।

वृक्षः। कृत्स्वरापवादोऽयम्।

*अन्त्यात्पूर्वम् [ पा० सू० ६-२-८३ ] 'आमलकीजः' इत्यत्र "दीर्घकाश" ( पा० सू० ६-२-८२ ) इति बाधित्वा परत्वादयमेव स्वरः।

तच्चेदिति। पूर्वपदश्चेदित्यर्थः। निवसत्=निवासकर्तृ। *सूत्रे व्यत्ययेन बहुवचनम्। *केचित्त्वधिकरणे औणादिक *झजन्तं*समासविशेषणमित्याहुः। मल्लग्रामादौ *षष्ठीसमासः। *दाक्षिग्रामः। दाक्षयो निवसन्त्यस्मिन्स *एवमुच्यते।

घोषादि ( पा० सू० ६-२-८५ )। एषु पूर्वपदमाद्युदात्तमित्यर्थः। घोष, कट, वल्लभ, ह्रद, बदरी, पिङ्गल, पिशङ्ग, माला, रक्षा, शाला, कट, शाल्मलि, अश्वत्थ, तृण, शिल्पी, मुनि, प्रेक्षा। अत्रानिसवसन्त इत्यनुवर्त्तत इत्येके। नानुवर्त्तत इत्यन्ये।

छात्र्यादयः [ पा० सू० ६-२-८६ ]। छात्रि, पेलि, भाण्डि, व्याडि, आखण्डि, आघाटि, गोमि। अयमेव स्वर इति। स्पष्टश्चेदं

---

दीर्घशब्दस्य संज्ञात्वान्न स्वरूपग्रहणङ्किन्त्वर्थग्रहणमित्याशयेनाह— *दीर्घान्तमिति।

*अन्त्यात्पूर्वम् (पा० सू० ६-२-८३)। जे इति पदमनुवर्त्तते। उदाहरणे जशब्दश्च "सप्तम्यां जनेर्डः" (पा० सू० ३-२-९७) इति जन्धातुप्रकृतिकडान्तः।

ग्रामेऽनिवसन्तः ( पा० सू० ६-२-८४ )। निपूर्वकाद्वस्धातोर्लटः शत्रादेशेन निवसच्छब्दस्य निवासकर्तृबोधकतया एकवचनेन निर्देश उचित इति कथमेतदित्यत आह-*सूत्र इति। *केचित्त्विति। व्यत्ययास्वीकर्त्तार इत्यर्थः। *झजन्तम्="तृभूवहिवसिभासिसाधिगण्डिमण्डिजिनन्दिभ्यश्च"( उ० पा० ३ सू० ४१५ ) इति विहितो योझच्प्रत्ययोऽधिकरणे तदन्तम्। *समासविशेषणमिति। नञा बहुव्रीहिसमासेन निवसन्तशब्दः समासस्य विशेषणमित्यर्थः। अस्मिन् पक्षे व्यत्ययेन प्रथमा तु स्वीकार्यैव। न निवसन्तो निवासाधिकरणं यस्मिन् समासे तत्रेति झजन्तस्वीकारपक्षे बोध्यम्। समासनिष्ठो निवासाधिकरणाभावश्च वाचकतासम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्यः। *षष्ठीसमासः=उदाहरणभूतो मल्लग्रामादिशब्दः षष्ठ्यन्तपदघटितः। षष्ठ्यर्थश्च स्वस्वामिभावः। प्रत्युदाहरणमाह-*दाक्षिग्राम इति। *एवमुच्यते इति। द्वितीयमतेनेदम्। प्रथममते तु दाक्षीणान्निवासकर्तृत्वमात्रेण पूर्वपदस्य निवासकर्त्रभिधायकत्वम्। प्रत्यदाहरणभूतोऽपि षष्ठीसमास एव परन्तु षष्ठ्यर्थ आधाराधेयभाव इति बोध्यम्।

घोषादिषु च ( पा० सू० ६-२-८५ )। एषु शब्देषु परेष्वित्यर्थः।

छात्र्यादयः शालायाम् ( पा० सू० ६-२-८६ )। छात्र्यादयः शब्दाः पू-

*वृत्तौ । भाष्ये तु नैतद् दृश्यते ।

प्रस्थे [ पा० सू० ६-२-८७ ) "मालादीनाञ्च" [पा० सू० ६-२-८८] इति सूत्रारम्भा*त्कर्क्यादिपर्युदासाच्चाह-अवृद्धमिति । *प्रत्युदाहरणेऽन्तोदात्तत्वम् । कर्की, मघनी, मकरी, कर्कन्धू, शमी, करीर, कन्दुक, कवल, बदर, शोण इति । *शोणेति पाठे "एङ्प्राचां देशे" (पा० सू० १-१-७५ ) इति वृद्धत्वम् । माला, शाला, शोणा, द्राक्षा, साक्षा, क्षामा, काञ्ची, एक, काम, दिवोदास, वध्यश्व एका कामा क्षामा ।

नवार्ममिति । *नवशब्दः प्रत्यग्रवाची अकारान्तः । महार्ममिसात्राऽऽत्वे कृते प्राप्तिः ।

नभू ( पा० सू० ६-२-९१ ) । मद्राश्मस्य "अनोश्मायः" ( पा० सू० ५-४-९४ ) इति टजन्तत्वादवर्णान्तत्वम् । सङ्घातेति । स्वरविधौ नलोपस्यासिद्धत्वेनाश्मनोऽवर्णान्तत्वाभावादप्राप्तेर्भाष्येऽनुक्तत्वाच्च वृत्युक्तमि*दं चिन्त्यम् । वृत्तिप्रामाण्यादयमश्मशब्दोऽकारान्तोप्यस्तीत्यन्ये ।

---

र्वपदभूताः शालाशब्दे उत्तरपदे आद्युदात्ताः स्युरित्यर्थः । *वृत्ताविति । छाञ्यादिपूर्वपदके प्रतिपदोक्तत्वेनास्य प्रवृत्तिरिति वक्तुमुचितमित्यभिप्रायः । निरवकाशत्वम्प्रतिपदोक्तत्वम्पूर्वप्रवृत्तौ नियामकमिति मते त्वस्यानपुंसकत्वे चारितार्थ्यान्नपुंसकत्वे परत्वात् "तत्पुरुषे शालायाम्" ( पा० सू० ६-२-१२३ ) इत्यनेनोत्तरपदाद्युदात्तत्वमेव । विभाषा सेना (पा० सू० २-४-२५ ) इति वा नपुंसकत्वमत्र भवति ।

प्रस्थे वृद्धम् ( पा०सू० ६-२-८७ ) । "प्रस्थः शिखरसान्वयोः" । *कर्क्यादिपर्युदासादिति । न च सूत्रेऽवृद्धमित्युपात्तमेवेति किमेतावदभिधानमिति वाच्यम् । अवृद्धमित्यस्य लिङ्गाविवक्षया समासविशेषणत्वशङ्कावारणायेत्थमभिधानात् । समासस्य वृद्धसंज्ञा नामधेयत्वाद्यदा भविष्यति तदा प्रत्युदाहरणत्वस्य सम्भवात् । सिद्धान्ताभिप्रायेणाह-*प्रत्युदाहरण इति ।

मालादीनाञ्च ( पा० सू० ६-२-८८ ) । मालादिषु पाठभेदादाह-*शोणेतीति ।

अर्मे चा (पा०सू०६-२-९०)। अर्मशब्दो ऋधातुप्रकृतिकमन्प्रत्ययान्तश्चक्षूरोगवाची । ननु नवशब्दस्य संख्यावाचकस्य नान्ततया स्वरविधौ नलोपस्यासिद्धत्वेनाकारान्तत्वाभावात्कथन्न वार्ममिति प्रत्युदाहरणमत आह-*नवशब्द इति ।

*इदमिति । सङ्घातविगृहीतार्थमित्येतत् । दिवो दासादीनाम् ( का० वा० ) । आद्युदात्तत्वस्येति शेषः ।

दिवोपासायेति । "दिवश्च दासे"(का०वा०)इति षष्ठ्या अलुक् ।
सर्वश्वेत इति । श्वेतातिगुणेन सर्वावयवानां व्याप्तिरिति गुणकात्स्न्र्यवृत्तिरत्र सर्वशब्दः । यत्र हि गुणान्तराभावस्तत्र गुणकात्स्न्र्यं भवति । *'सर्वमहान्' इत्यत्र सर्वशब्दस्य पूज्यमानार्थत्वाभावात् "पूर्वकालैक" ( पा० सू० २-१-४९ ) इत्येव समासः । आश्रयव्याप्त्येति । न तूज्ज्वलत्वेनेत्यर्थः । सर्वसौवर्ण इति । *विकारकात्स्न्र्यमत्र । सर्वेषामिति । गुणिकात्स्न्र्यवृत्तिः सर्वशब्दोऽत्र "गुणात्तरेण" ( का० वा० ) इति समासः । सर्वेषां पटानां मध्ये श्वेतगुणवद्द्रव्यान्तरापेक्षया सातिशयश्वेतगुणवानयमित्यर्थः । द्रव्यान्तराधेयश्वेतापेक्षया सर्वेषां पटानामयं श्वेतो गुणः *सातिशय इत्यर्थ इत्यन्ये ।
अञ्जनागिरिरिति । "वनगिर्योः" [पा० सू० ६-३-११७]इति दीर्घः । गिरीत्यादिकिम् ? शरवणम्, दूर्वावणम् ।
कुमार्यां वयसि ( पा० सू० ६-२-९४ ) । *वयसि वर्त्तमानं पूर्वपदमित्यर्थः । वृद्धकुमारीति । विशेषणसमासः, "पुंवत्कर्मधारय"( पा० सू० ६-३-४२ ) इति पुंवत् । असंप्रयोगमात्रेति । तन्मात्रेण कुमारत्वरूपं प्रवृत्तिनिमित्तमुपादायारोप्य प्रयुक्त इत्यर्थः । *अत एव कुमारीत्यत्र ङीष्सिद्धिः। तच्च वय इति। वृद्धत्वमित्यर्थः । न कुमारत्वमेवेति । यत्कुमारीशब्दस्य प्रवृत्तिनिमित्तं न तदेव वयो गृह्यत इत्यर्थः । एतञ्च वयसीति पूर्वपदविशेषणमिति सूचितम् ।
स्वरे कृते इति । *"नेन्द्रस्य" ( पा० सू० ७-३-२२ ) इति निषेधेन पूर्वोत्तरपदनिमित्तकार्यात्पूर्वमेकादेशाभावज्ञापनादिति भावः ।

---

सर्वं गुण ( पा० सू० ६-२-९३ )। पूर्वपदमिति प्रक्रान्तमेव । सर्वश्वेत इति कर्मधारयः । ननु 'सर्वमहान्' इत्यत्र "सन्महत्परमोत्तम" (पा० सू० २-१ ६१ ) इति समासे महच्छब्दस्य पूर्वनिपातापत्तिरत आह-*सर्वमहानित्यत्रेति । *विकारकात्स्न्र्यमिति । सौवर्णशब्दस्य विकारार्थकप्रत्ययान्तत्वादिति भावः । *सातिशय इति । एवञ्चातिशयप्रतिपादनायायम्प्रयोगो न तु गुणकात्स्न्र्यप्रतिपादनायेति तात्पर्यम् ।
*वयसीति । कुमारीशब्दे उत्तरपद इत्यादिः । *अत एव=आरोपितकुमारत्वप्रवृत्तिनिमित्तकत्वादेव ।
स्वरे कृत इति यः क्रमो मूलेऽभिहितस्तत्र बीजमाह-*नेन्द्रस्येतीति ।

गर्गत्रिरात्रमिति । "संख्यापूर्वं रात्रं क्लीवम्" ( का० वा० ) इति क्लीबता । पुंल्लिङ्गपाठस्तु काचित्कः प्रामादिक एव । विल्वसप्तरात्रमि*त्येव पाठः ।

प्रतिपदोक्तेति । "सभाराजा" ( पा० सू० २-४-२३) इति विहितेत्यर्थः । प्रत्युदाहरणे बहुव्रीहिः, ब्राह्मणकुलं विशेष्यम् ।

पुरे प्राचाम् [ पा० सू० ६-२-९९ ] । स्वतन्त्राकारान्तपुरशब्दस्य "ऋक्पूः" ( पा० सू० ५-४-७४ ) इत्यप्रत्ययान्तस्य च ग्रहणमविशेषात्, अप्रत्ययान्तस्यापि परत्वसम्भवात्, *न ह्यत्रोत्तरपदाधिकारोऽस्तीत्याहुः ।

इहापीति । "अरिष्टगौड" [ पा० सू० ६-२-१०० ) इत्येव सिद्धे पूर्वग्रहणं *तदादिसमासग्रहणार्थमिति भावः । अप्रागर्थश्चेदं सूत्रम् ।

हास्तिनपुरमिति । एषु समासान्तोदात्तत्वमेव । ढगिति । "ढे लोपः" ( पा० सू० ६-४-१४७ ) इत्युलोपः ।

कुसूलकूप [ पा० सू० ६-२-१०२ ] । प्रत्युदाहरणेषु समासान्तोदात्तत्वम् ।

दिक्शब्दा ग्राम ( पा० सू० ६-२-१०३) । चानराटे स्वरूपग्रहणम् '*अन्यत्रार्थग्रहणम् । पूर्वेष्विवाति । *एकादेशः स्वरित उदात्तो

---

द्विगौ क्रतौ ( पा० सू० ६-२-९७ ) । द्विगावित्युत्तरपद इत्यस्य विशेषणम् । *इत्येव पाठ इति । "रात्राह्नाहाः" (पा० सू० ३-४-२९) इत्यस्य "संख्यापूर्वम्" [का० वा०] इत्यनेन बाधादिति भावः ।

पुरे प्राचाम् (पा० सू० ६-२-९९) । पुरशब्दे उत्तरपदे पूर्वपदमन्तोदात्तं प्राचान्देशाभिधाने । ननु समासान्तानां समासार्थवाक्यावयवत्वसिद्धान्तात् "ऋक्पूः" ( पा० सू० ५-४-७४ ) इतिविहिताकारान्तस्य कथं ग्रहणमत आह—*न ह्यत्रेति ।

अरिष्टगौडपू ( पा० सू० ६-२-१०० ) । पुर इत्यनुवर्त्तते । सूत्रोपात्तं सप्तम्यन्तं समासविशेषणमित्याशयेनाह मूले—पूर्वे समास इति । *तदादिसमासेति । अरिष्टादिपूर्वावयवक इत्यर्थः ।

न हास्तिन ( पा० सू० ६-२-१०१ ) । पुर इति वर्त्तते । हास्तिनपुरादौ "पुरे प्राचाम्" ( पा० सू० ६-२-९९ ) इति प्राप्तस्य प्रतिषेधः ।

कुसूलकूप ( पा० सू० ६-२-१०२ ) । समाहारद्वन्द्वः ।

*अन्यत्रार्थग्रहणमिति । वृत्त्यादिसम्मतव्याख्यानादित्यादिः । 'पूर्वेषुकामशमी'इत्यत्र पूर्वा चासाविषुकामशमी चेति समासः । *एकादेश इति । अनेन

वा। पूर्वं पञ्चाला इति। *पञ्चालैकदेशे पञ्चालशब्दस्य वृत्त्या पूर्वादिना सामानाधिकरण्यं "पूर्वापर"(पा० सू० २-२-१) इति विशेषणसमासः। यायातमिति। ययातिमधिकृतमाख्यानमित्यर्थः। पूर्वयायातमित्यादौ पूर्वशब्दस्य *दिक्शब्दत्वाभावात् कथं प्राप्तिरित्यत आह—शब्दग्रहणमिति। यदा कदाचिद्दिशिदृष्ट इत्यर्थलाभादिति भावः।

आचार्योपसर्जनश्च (पा० सू० ६-२-१०४)। *सप्तम्यर्थे प्रथमा। अन्तेवासिविशेषणश्चैतत्।

उत्तरपदस्येत्यधीति। *स्पष्टश्चेदं "वृद्धिरादैच्" (पा० सू० १-१-१) सूत्रे भाष्ये। *वृद्धिमात्रस्योत्तरपदस्याभावेन सामर्थ्याद् वृद्धिमदुत्तरपदे लब्धे उत्तरपदग्रहणात्तस्य स्वरितत्वाद्वा तदधिकारलाभ इत्याहुः। *अस्य वृद्धिशब्देनविहितवृद्धिग्रहणेनापि वारयितुं शक्यत्वादाह—सर्वकारक इति।

बहुव्रीहौ विश्वं [पा० सू० ६-२-१०६] *सञ्ज्ञायामिति बहुव्रीहेर्विशेषणम्। कर्मधारये विश्वेदेवा इत्यन्तोदात्तम्। विश्वदेव

---

सूत्रेण पूर्वपदान्तस्यान्तोदात्तत्वे कृत इत्यादिः। सामानाधिकरण्योपपत्तये आह—*पञ्चालैकदेश इति न च पञ्चालशब्दस्य परिच्छिन्नपरिमाणदेशाभिधायकतया कथमवयवे प्रवृत्तिरिति वाच्यम्। लक्षणाया आश्रयणादिति भावः। *दिक्शब्दत्वाभावादिति। अस्य कालावच्छिन्नवाचकस्येत्यादिः।

आचार्योपसर्जन (पा० सू०६-२-१०४)। सप्तम्यर्थे प्रथमेति। *बहुव्रीहिसमासादित्यादिः। एवञ्चान्तेवासिनीत्यनेन सामानाधिकरण्यम्। आचार्यप्रकारकान्तेवासिविशेष्यकोपस्थितिजनकशब्दे पर इत्यर्थः। मूले 'आ चेति किम्' इत्यस्याचार्योपसर्जनग्रहणं किमर्थमित्यर्थः। तदाप्यन्तेवासीत्यस्यान्तेवासिविशेष्यकबोधजनकेत्यर्थः स्यादेवेति भवति पूर्वान्तेवासीत्यत्र दोषः। अन्तेवासिशब्दस्यान्तेवासित्वप्रकारकबोधजनकत्वात्। एवमन्तेवासिपदाभावेऽप्याचार्यप्रप्रकारकबोधजनके पर इत्यर्थे पाणिनीयशब्दस्य प्रोक्तार्थकप्रत्ययान्तस्यास्ति पाणिनिप्रकारकबोधजनकतेति पूर्वपाणिनीयमित्यत्र दोषः। *स्पष्टश्चेदमिति। तत्र ह्यतद्भावितस्यापि वृद्धिसंज्ञेत्यर्थे 'सर्वभासः' 'सर्वकारक' इत्यत्र "उत्तरपदवृद्धौ सर्वञ्च" (पा० सू० ६-२-१०५) इत्यस्य प्रवृत्तिमाशङ्क्यैवमुक्तम्। तादृशार्थलाभप्रकारमाह—*वृद्धिमात्रेति। सर्वपाञ्चालक इत्युदाहरणे "सुसर्वार्द्धाज्जनपदस्य"(पा०सू०७-३-१२)इति वृद्धिस्तादृश्यस्ति। *अस्य='सर्वभासः' इत्युक्तस्य।

बहुव्रीहौ (पा० सू० ६-२-१०६)। संज्ञायामित्यस्य सन्निहितत्वाद्विश्वशब्दविशेषणत्वभ्रमनिवृत्तये आह—*संज्ञायामितीति। विश्वकर्मेत्युदाहरणे

इति । असंज्ञायां पूर्वपदप्रकृतिस्वरः । विश्वमित्रविश्वाजिनयोः सञ्ज्ञायां मित्राजिनयोरित्येतद्विप्रतिषेधेन । ऋषौ विश्वामित्रे अयमेव स्वरो भवति । "ऋषिप्रतिषेधोमित्रे" ( का० वा० ) इति वचनात् ।

हर्यश्व इति । *"नेन्द्रस्य परस्य" ( पा० सू० ७-३-२२ ) इति ज्ञापकात्पूर्वं पूर्वोत्तरपदनिमित्तकार्यमिति स्वरोत्तरं यणादि । तेन "उदात्तस्वरितयोः" (पा० सू० ८ २-४) इत्यादिप्रवृत्तिः । अत्रापि सञ्ज्ञायामित्यनुवर्तत *इत्याहुः ।

क्षेपे ( पा० सू० ६-२-१०८ ) । अक्षेपे सञ्ज्ञात्वाभावे पूर्वपदप्रकृतिस्वर एव । घटोदर इति । घटशब्दो वृषादित्वादाद्युदात्तः । कटुकशब्दस्तु *कन्नन्तत्वा*त्तथा । चलाचलस्याजन्तत्वाच्चलाचलेषुरित्युदाहरणं चिन्त्यम् । एवं महेषुरि*त्यपि । अनुदर इत्यत्रेति । क्षेपे संज्ञायां चेदम् । अक्षेपेऽपि पूर्वपदप्रकृतिस्वरापवादत्वा*त्तदेव । सूदर इत्यत्र*ततोऽपि परत्वाद् "उपसर्गात्स्वाङ्गम्" ( पा० सू० ६-२-१७७ ) *इति बोध्यम् । ब्रह्मशब्द इति । "नब्विषयस्य" [फि०पा०१सू०२६]

---

विश्वशब्दे विशेः कनिन्प्रत्ययसत्त्वात्पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वे प्राप्ते पूर्वपदान्तोदात्तत्वस्य विधानम् । विश्वकर्मेत्यत्र विश्वस्मिन्कर्म यस्येत्यर्थः । कर्मशब्दः क्रियापरः ।

उदराश्वे(पा०सू०६-२-१०७) । बहुव्रीहाविति वर्त्तते । अनेन सूत्रेणान्तोदात्तत्वविधानस्य फलमाह-*नेन्द्रस्येत्यादिना । यदीदन्न स्यात्तदा "बहुव्रीहौ" इति पूर्वपदप्रकृतिस्वरः स्यात्तथा च हरिशब्दस्य "सर्वधातुभ्यः"(उ०पा०४सू०५६७) इतीन्नन्ततयादेरुदात्तत्वन्न त्विकारस्येत्युदात्तस्थानिकत्वं यणो न स्यात् । हरिरश्वोऽस्येति विग्रहः । *इत्याहुरिति । क्षेप इत्युत्तरसूत्रस्य संज्ञायामेव प्रवृत्तेरिष्टतया तत्र संज्ञायामिति सम्बध्यत एवेति प्रकृते तस्यासम्बन्धे मण्डूकप्लुत्यापत्तिः। सा च सम्बन्धतदभावाभ्यां गुर्वी, अतः प्रकृसूत्रेऽपि संज्ञायामित्यस्य सम्बन्ध इति वादिन इत्यर्थः । *कन्नन्तत्वात्=स्वार्थकन्नन्तत्वात् । *तथा=आद्युदात्तः । *इत्यपीति । चिन्त्यमिति शेषः । इदम्पूर्वसूत्रविषयं उपात्तम् । चिन्ताबीजन्तु सूत्रद्वयस्यापि 'मल्लिकेषुः केशेषुः'इत्यत्र प्रवृत्त्यर्थमिषुशब्दोपादानमावश्यकमित्यपि 'महेषुः' इत्यपि बहुव्रीहावित्येतदपवादत्वादनयोरुदाहरणन्तन्नान्यथा सिद्धमिति । मल्लिकाशब्दः "स्त्रीविषयवर्णाक्षुपूर्वाणाम्"(फि० पा० २ सू० ४३) इत्याद्युदात्तः । कुशशब्दः"तृणधान्यानाम्"(फि० पा० २ सु० २७) इत्यनेन तथा । *तदेव=नञ्सुभ्यामित्येतदेव । *ततोऽपि=नञ्सुभ्यामित्यतोऽपि । *इति बोध्यम= अनेनोत्तरपदान्तोदात्तत्वम्बोध्यम् ।

इत्यनेनाद्युदात्तत्वं मनिनन्तत्वाद्वा, ब्रह्मादेवानामित्यादावन्तोदात्तत्वं तु छान्दसत्वात् । गार्गीप्रिय इति । गौरीप्रिय इति तु क्वचित्कोऽपपाठः । गौरीशब्दस्य ङीषन्ततयाऽन्तोदात्तत्वेन विशेषाभावात् ।

प्रधौतशब्दो *गतिस्वरेणाद्युदात्तः, प्रत्येकशब्दः कृदुत्तरप्रकृतिस्वरेण लित्त्वान्मध्योदात्तः । शुष्कशब्दः "शुष्कधृष्टौ" (पा० सू० ६-१-२०६) इत्याद्युदात्तः ।

उत्तरपदादिः ( पा० सू० ६-२-१११ ) । उत्तरपदेति लुप्तषष्ठीकं *पृथक्पदम् ।

कर्णो वर्ण ( पा० सू० ६-२-११२ ) । कर्ण इति *षष्ठ्यर्थे प्रथमा । उत्तरपदस्य कर्णस्यादिरुदात्त इति वाच्योऽर्थः, फलितमाह-परः कर्णेति । एवमग्रेऽपि बोध्यम् । *अत्र लक्षणशब्देन पशूनां विभागज्ञापनार्थं दात्रशङ्कुप्रतिरूपकं यत्कर्णादिषु चिन्हं क्रियते तदुच्यते पृथग्वर्णग्रहणात् । तेन 'स्थूलकर्णः' इत्यत्र न । *स्थूलशब्दोऽन्तोदात्तः । शङ्कुकर्ण इति । "कर्णे लक्षणस्य" ( पा० सू० ६-३-११५ ) इति दीर्घत्वम् । श्वेतः पचाद्यजन्तः शोभनो युजन्तः । प्रत्युदाहरणे पूर्वपदप्रकृतिस्वरः, तत्पुरुषे त्वन्तोदात्तत्वम् ।

---

निष्ठोपसर्गपूर्वम् (पा० सू० ६-२-११० ) 'प्रधौतपादः' इत्यत्र धावुधातोः क्ते "च्छ्वोः"( पा० सू० ६-४-१९) इत्यूठि वृद्धिः । *गतिस्वरेणाद्युदात्त इति । एवञ्च निष्ठत्यस्याभावे समुदायस्य पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वमिति भावः । न चोपसर्गपूर्वस्य कृद्ग्रहणपरिभाषया निष्ठाग्रहणेन ग्रहणे सिद्धे उपसर्गपूर्वग्रहणं व्यर्थमिति वाच्यम् । परिभाषायाङ्गतिशब्दस्य प्रत्यासत्त्या कृदन्तक्रियानिरूपितगतित्वविशिष्टबोधकत्वात् । प्रकृतसूत्रस्थमुपसर्ग इति पदञ्च क्रियान्तरम्प्रत्यपि य उपसर्गस्तस्यापि ग्रहणार्थमित्यस्य वक्तुं शक्यत्वात् । तेन प्रकृष्टशब्दधौतशब्दयोः समासे पूर्वपदान्तर्गतस्य कृष्टशब्दस्य लोपेऽपीदम्प्रवर्त्तते इति बोध्यम । इदमेवोपसर्गपूर्वग्रहणमन्यत्र प्रत्यासत्तिगमकमिति ।

उत्तरपदादिः ( पा० सू० ६-२-१११ ) । *पृथक्पदमिति । अत एवावधिभेदेन सम्बन्धेऽपि न क्षतिः । द्वयोरुत्तरत्र सर्वत्र न सम्बन्धः । प्रकृत्येत्यस्य विरोध्यर्थकस्य 'प्रकृत्याभगालम्' इत्यत्र सत्त्वात् ।

कर्णो वर्णलक्षणात् (पा० सू० ६-२-११२) । *षष्ठ्यर्थे प्रथमेति । "व्यत्ययो बहुलम्"(पा० सू० ३-१-८५) इति व्यत्ययकल्पनयेति शेषः । वर्णलक्षणादिति समाहारद्वन्द्वः । वर्णस्य लक्षणत्वेऽपि पृथगुपादानमर्थविशेषपरिग्रहार्थमित्याह—*अत्र लक्षणेति । 'शङ्कुकर्णः' इत्यत्र शङ्कुः कर्णो यस्येति विग्रहः । गड्वादित्वात्कर्णस्य परनिपातः । *स्थूलशब्द इति । फिट्स्वरेणेत्यादिः ।

कण्ठपृष्ठ ( पा० सू० ६–२–११४ ) । उत्तरपदान्येतान्याद्युदात्तानीत्यर्थः । सुग्रीव इति । यद्यपि परत्वात् "नञ्सुभ्याम्" ( पा० सू० ६–२–१७२ ) "उपसर्गात्स्वाङ्गम्" ( पा० सू० ६–२–१७७ ) इत्यु*चितं तथापि "नीलग्रीवः" इत्युदाहरणं बोद्ध्यम्। *चेन पुनर्विधानादयं परस्यापि बाधक इति हरदत्तः। विशेषोऽवस्थेति । गम्यते इति शेषः । औपम्ये गोश्रृङ्ग इत्युदाहरणम् ।

नञो जर (पा० सू० ६–२–११६) । "नञ्सुभ्याम्" (पा० सू० ६–२–१७२ ) इत्यस्यापवादः । जरणं जरः, ऋदोरप् । मरणं मरः, अत एव निपातनादप् । मिदेः क्तः, मित्रम् । मृते "नपुंसके" ( पा० सू० १–२–६९ ) इति भावे क्तः । *सूत्रे तु शब्दपरत्वात्पुंस्त्वम् । अमित्रेति । अयं बहुव्रीहावनेन मध्योदात्तः, नञ्तत्पुरुषे अव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्तः, *अमेरित्रचि अन्तोदात्तोऽपि । त्रयोऽपि पुलिङ्गाः शत्रुवाचकाश्च । "भृत्यामित्रद्वत्रमेघ्नाः पुंसि" ( लि० सू० १५९ ) इत्युक्तेः । न च *तत्पुरुषे *परवल्लिङ्गतापत्तिरिति वाच्यम् । लिङ्गानुशासनसूत्रे एकशेषेणा*स्यापि निर्देशान्न दोष *इत्याहुः । *हरदत्तस्तु तत्पुरुषो नपुंसकमेव *आद्युदात्तश्चेत्याह । एवञ्च "अशोतेराशुकर्मणि" (उ० सू० पा० ५) इत्युणादिसूत्रोक्तमनोरमादिरीत्या *ईश्वरीशब्दवदमित्रशब्दोऽपि त्रिप्रकारः ।

---

कण्ठपृष्ठ (पा० सू० ६–२–११४ ) । अत्रापि षष्ठ्यर्थे प्रथमा । एवमग्रेऽपि । संज्ञौपम्ययोरितीहापि सम्बध्यते । संज्ञाभूत औपम्यवाची वा यो बहुव्रीहिस्तस्मिन्नित्यर्थः । *इत्युचितम्=आभ्यामन्तोदात्तत्वमुचितम् । ननु नीलग्रीवादुदाहरणसत्त्वेऽपि सुग्रीवशब्दस्य मध्योदात्तस्य श्रवणं विरुध्यत इत्यत आह—*चेनेति ।

शृङ्गमवस्थायाम् (पा० सू० ६–२–११५) । अवस्थायाङ्गम्यमानायाम्, चात्संज्ञौपम्ययोः । मृतशब्दस्य नपुंसकत्वे "परवल्लिङ्गम्" (पा०सू० २–४–२६) इति जरादिद्वन्द्वस्य नपुंसकत्वे प्राप्ते आह—*सूत्रे त्विति । *अमेरित्रचीति । तदा नञः परत्वमेव नास्तीति भावः । *तत्पुरुषे=मित्रशब्देन तत्पुरुषे । *परवल्लिङ्गतापत्तिरिति । नपुंसकत्वापत्तिरित्यर्थः । *अस्यापि=तत्पुरुषस्यापि । *इत्याहुरिति । विशिष्यामित्रशब्दस्य लिङ्गान्तरानुक्तेस्त्रयाणामपि पुंस्त्वमेवेत्याशयवन्त आहुरित्यर्थः । *हरदत्त इति । लिङ्गानुशासनसूत्रे त्वित्रजन्तस्यैव पाठ इति तद्भावः । *आद्युदात्तः=अव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्तः। *ईश्वरीशब्दवदिति। ईश्वरीशब्दो यथा वरट्प्रत्ययान्तो ङीबन्तो मध्योदात्तः, वनिप्प्रत्ययान्तान्ङीप्रयोः सतोराद्युदात्तः, ईश्वरशब्दाद्वरजन्तात्पुंयोगलक्षणे ङीषि कृतेऽन्तोदा-

सौमनसी (पा० सू०६-२-११७)। अपवाद इति। एवमु-
*त्तरसूत्रत्रयमपि तदपवाद एव। मन् च अस् च मनसी। सुकर्माण इति।
यद्यप्याद्युदात्तं "द्व्यचश्छन्दसि" (पा० सू० ४-३-१५०) *इत्यनेनैव
सिद्धमिदन्तथापि 'अनिनस्मन्ग्रहणानि' (प० भा०) इति न्यायेन सुप्रथि-
मेत्यादिबहुजर्थमच्छन्दोऽर्थश्चेदम् । *सुस्रदित्यत्रापि स्वरे कर्तव्ये बहिरङ्ग-
त्वात्पूर्वत्रासिद्धत्वाद्वा दत्वस्यासिद्धत्वेनासन्तत्वादयं स्वरो भवत्येव। यत्तु
'वस्वादिषु दत्वं सिद्धम्'इति, तत्तु 'सौ दीर्घत्वे'इति वाक्यशेषाद् दीर्घविधा-
वेव। 'सुलोमा' इत्यादौ "नञ्सुभ्याम्"(पा०सू०६-२-१७२) इति भवति।

क्रत्वादयश्च (पा० सू० ६-२-११८)। क्रतु, दशीक, प्रती-
क, प्रतूर्ति, हव्य, भव्य, भग इति क्रत्वादयः।

आद्युदात्तं द्व्यच् (पा० सू० ६-२-११९)। बहुव्रीहावा-
द्युदात्तमिति। *आद्युदात्तमेवेत्यर्थः। सोः किम्? *अरथः। सुबाहु-
रिति। *कुप्रत्ययान्तो बाहुशब्दोऽन्तोदात्तः। हिरण्यशब्द इति।
*कन्यनन्तोऽयम्।

वीरवीर्यौ (पा० सू० ६-२-१२०)। वीरो*रक्प्रत्ययान्तः।

---

त इति त्रिप्रकारकत्वमीश्वरीशब्दस्य यथा भवति तथाऽस्यापीति मतभेदेना-
मित्रशब्दोऽपि त्रिप्रकारो भवतीत्यत्रेष्टापत्तिरिति भावः। *उत्तरसूत्रत्रयमपीति।
तेष्वपि सोरित्यस्य सम्बन्धात्। *इत्यनेनैवेति। कर्मन्शब्दस्य कृधातुप्रकृति-
कमनिन्प्रत्ययान्ततयाऽऽद्युदात्तत्वेन बहुव्रीहौ पूर्वपदप्रकृतिस्वरम्बाधित्वा तत्प्र-
वृत्तेर्न्याय्यत्वादिति भावः। 'सुयुजः' इति "सर्वधातुभ्योऽसिः" इत्यसिप्रत्ययान्तः।
अन्यत्र सम्भावितामव्याप्तिं वारयति—*सुस्रदित्यत्रेति। न च धात्ववयवासो-
ऽप्यसूशब्देन ग्रहणेऽस्वस्य प्रत्ययाप्रत्ययसाधारणत्वेन कथम्प्रत्ययग्रहणपरि-
भाषाप्रवृत्त्या तदन्तलाभ इति वाच्यम्। "अनिनस्मन्" (प० भा०) इतिवच-
नेन यथाऽर्थवत्परिभाषायास्तदंशेऽप्रवृत्तिस्तथा प्रत्ययमात्रग्रहणे प्रत्ययग्रहणप-
रिभाषाप्रवृत्तिरिति नियमस्यापि त्यागात्, प्रत्ययभिन्नस्यैव ह्यनर्थकत्वं सम्भ-
वतीति। सुप्रथिमेत्यत्र प्रथिमन्शब्दः "पृथ्वादिभ्य इमनिज्वा" (पा० सू० ५-१-
१२२) इतीमनिजन्तः।

आद्युदात्तन्द्व्यच्छ (पा० सू० ६-२-११९)। आद्युदात्तमित्यस्य विधेय-
समर्पकस्य प्रकरणादेव लाभे पुनः सूत्रोपात्तमुद्देश्यबोधकं, तथा चाद्युदात्तस्या-
द्युदात्तविधानमनर्थकमत आह—*आद्युदात्तमेवेति। *अरथ इति। अत्र नञ्सु-
भ्यामिति प्रवर्त्तते। उद्देश्यसमर्पकाद्युदात्तपदस्य प्रयोजनमाह—*कुप्रत्यया-
न्त इति। हिरण्यशब्दस्याद्युदात्तत्वम्बाधयति—*कन्यनन्तोऽयमिति।

*रक्प्रत्ययान्त इति। तथा चास्यान्तोदात्ततयाऽऽद्युदात्तन्द्व्यजित्य-

आद्युदात्तत्वं नेति । छन्दसि नेति ज्ञाप्यत इत्यर्थः । तेन भाषायां भवत्येव । तथा च छन्दसि वीर्यशब्दस्तित्स्वरेणान्तस्वरित इति भावः । "बिल्वभक्ष्यवीर्याणि छन्दसि" ( फि० पा०४ सू ०७७) इति फिट्सूत्रन्त्व-स्यैवानुवादकमिति बोध्यम् ।

कूलतीर ( पा० सू० ६-२-१२१ ) । कूलादीन्युत्तरपदान्या-*द्युदात्तानि स्युः । सुषममिनि । *अधिसममित्यत्र तु न । प्रतिपदोक्त-तिष्ठद्गुसमासघटकस्यैव ग्रहणादिति कश्चित् । उत्तरपदानीति किम् ? भू-मेः समत्वं समभूमिः । तिष्ठद्ग्वादिः समासस्वरेणान्तोदात्तः । अत्राक्षशब्दो-ऽकारान्त एव । प्रत्यक्षमित्यादौ टचश्चित्त्वादन्तोदात्तत्वमेवेति कश्चित् ।

कंसमन्थ (पा० सू० ६-२-१२२) । एतान्युत्तरपदानि द्विगा-वाद्युदात्तानीत्यर्थः । द्विकंसादौ क्रमेण टिठन्-ठक्-अञ्-ठञाम् "अध्य-र्द्ध" ( पा० सू० ५-१-२८ ) इति लुक् । पाय्यं परिमाणविशेषः । द्वि-काण्डमिति । अत्र "प्रमाणे लो द्विगोः" इति मात्रचो लुक् । कंसादीनि किं ? पञ्चमूली ।

तत्पुरुषे शाला ( पा० सू० ६-२-१२३ ) । *'छात्रिशा-लम्' इत्यादौ "छात्र्यादयः शालायाम्" ( पा० सू० ६-२-८६ ) इयतः परत्वादयमेव स्वरो भवति । दृढशालमिति । "विभाषासेना" ( पा० सू० २-४-२५ ) इति प्रतिपदोक्तनपुंसकत्वग्रहणादेवास्य व्यावृत्तौ त-

---

स्याप्राप्तिरिति भावः । ननु वीर्यशब्दस्याद्युदात्ततया सुवीर्येत्यत्र पूर्वेणैव सिद्ध-मत आह मूले वीर्यशब्द इति ।

*आद्युदात्तानि स्युरिति । अव्ययीभाव इति शेषः । 'सुषमम्' इत्यत्र "सुविनिर्दुर्भ्यः"(पा० सू० ८-३-८८) इति षत्वस्यासिद्धत्वात्समशब्दो द्रष्टव्यः । यद्यपि समृद्ध्यर्थेऽव्ययीभावस्य विषममित्यत्रार्थाभावे तस्य सम्भवस्तथाप्यर्था-न्तरेऽव्ययीभावत्वायाह—मूले तिष्ठद्गुप्रभृतीनीति । तिष्ठद्गुप्रभृतीत्यस्यो-पादानस्य फलान्तरमप्याह—*अधिसममित्यत्रेति । विभक्त्यर्थेऽव्ययीभावोऽत्र ।

कंसमन्थशूर्पपाय्य ( पा० सू० ६-२-१२२ ) । उदाहरणेषु तद्धितार्थे द्विगुः । प्रत्युदाहरणे समाहारे ।

तत्पुरुषे शाला ( पा० सू० ६-२-१२३ ) । ब्राह्मणशालमित्यादौ नपुंस-कत्वप्रयुक्तस्वरस्य चारितार्थ्येनानपुंसकत्वे चरितार्थेन "छात्र्यादयः" ( पा० सू० ६-२-८६ ) इत्यनेन बाध इत्याह—*छात्रिशालमित्यादाविति । "विभाषासेना" ( पा० सू० २-४-२५ ) इति वा नपुंसकत्वम् ।

स्पुरुषग्रहणमुत्तरार्थमिति हरदत्तः।

सौशमिकन्थमिति। "सञ्ज्ञायां कन्था" (पा० सू० ६-२-१२४) इति क्लीबत्वम्।

चिह्णकन्थमिति। चिह्णस्य कन्थेति तत्पुरुषः। चिहण, मदुर, मद्रुमर, वैतुल, पटत्क, वैडालिकार्णिक, कुक्कुट, चिक्कण चित्कण।

पुत्रचेलमिति। *चेलवत्तुच्छ इत्यर्थः। खेटं तृणम्। कटुकम् अस्वादु। काण्डं शरः।

पललसूप (पा० सू०६-२-१२८)। *मिश्रे समासार्थे इत्यर्थः।

दाण्डायनस्थलमिति। लिङ्गविशिष्टपरिभाषया दाण्डायनस्थलीत्यत्रापि। राज्यशब्दो यगन्तोऽन्तोदात्तः।

अव्ययस्वर इति। *अव्ययपूर्वपदप्रकृतिस्वर इत्यर्थः।

वर्ग्यादिरिति। *त एव तत्प्रत्ययान्ता इह वर्ग्यादयः वर्ग्यादिपाठाभावात्।

पुत्रः पुंभ्यः (पा० सू० ६-२-१३२)। *निषेधकोत्तरसूत्रादेव पुँल्लिङ्गशब्दालाभे सिद्धे बहुवचनं स्पष्टार्थम्।

तद्विशेषणाश्चेति। चात्स्वरूपस्यापि। सम्बन्धिन इति। *स्त्रीसम्बन्धिनः श्यालादय इत्यर्थः। भ्रातुःपुत्र इति। "ऋतो विद्यायोनि" (पा० सू० ६-२-२३) इति षष्ठ्या अलुक्। भ्रातृपुत्र इति तु

---

चेलखेट(पा०सू०६-२-१२६)। चेलशब्दोऽल्पपरिमाणजीर्णवस्त्रपरः। पुत्रचेलमित्यत्र "उपमितं व्याघ्रादिभिः" (पा० सू० २-१-५६) इति समासेन यस्यार्थस्य लाभस्तमाह—*चेलवत्तुच्छ इति।

पललसू (पा० सू० ६-२-१२८)। पललादीनामुत्तरपदानामुपादानान्मिश्र इति समासविशेषणमित्याह—*मिश्रे समासार्थे इति।

*अव्ययपूर्वपदेति। अत्र प्रमाणं भाष्यकारोक्तिरेव-'चेलराज्यादिभ्योऽव्ययम्' इति।

वर्ग्यादयश्च (पा० सू० ६-२-१३१)। वर्ग्यादय उत्तरपदानि तत्पुरुषे आद्युदात्तानि स्युः। अत्र सूत्रे वर्ग्यादीत्युपात्तं मूले तु वर्गादिरित्युक्तमित्येतद्विरुद्धमत आह—*त एवेति। "पुत्रः पुंभ्यः" इति सूत्रे पुमिति न पुम्शब्दपरं किन्तु पुल्लिङ्गशब्दपरं बहुवचनोपादानादिति केचित्, तन्न युक्तमित्याशयेनाह—*निषेधकोत्तरेति।

नाचार्य (पा० सू० ६-२-१३३)। ज्ञातिपदस्य सजातीयपरत्वे सम्बन्धिवाचकसंयुक्तपदोपादानमनर्थकमत आह—मूले संयुक्ता इति। *असम्ब-

काचित्कोऽपपाठः । एवं *होतुः पुत्रेऽपि । एषु पुत्रस्वरप्रतिषेधे समासान्तोदात्तत्वम् ।

चूर्णादीन्य (पा० सू० ६-२-१३४)। चूर्ण, करिष, करीष, शाकिन, शाकट, द्राक्षा, तूस्त, कुन्दम्, दलप, चमसी, चक्कन, चौल इति चूर्णादिः ।

षट् च का॰ (पा० सू० ६-२-१३५)। *काण्डस्यागर्हार्थत्वीर-स्यानुपमानार्थं पललसूपशाकानामामिश्रार्थं कूलस्यासञ्ज्ञार्थम्। "चेलखेट" (पा० सू० ६-२-१२६) इति सूत्रस्थकाण्डशब्दमादाय "कूलसूद" (पा० सू० ६-२-१२९) इति सूत्रस्थकूलपर्यन्ताः षट् काण्डादयः ।

कुण्डशब्दोऽत्रेति । *सादृश्येन वने वर्त्तते इत्यर्थः । भाजन-विशेषवाचिनः कुण्डशब्दस्य विना सादृश्येन वने वृत्त्यसम्भवादित्याशयः । वनशब्दश्च समूहवाची प्रसिद्धत्वान्नोदकवाची । *अन्ये तु समूहरूपवनेऽपि मुख्य एव कुण्डशब्दः ।पूर्वमते सादृश्यस्य *दुरुपपादत्वात् । वनविशेषणेन च वनभाजनवाचिनो दुर्गाकुण्डमित्यादौ विशिष्टाधारजलवाचिनश्च

---

न्धिन इति । खदिराङ्कसम्बन्धवन्त इत्यर्थः । मूले ज्ञात्याख्याशब्दस्यार्थविशेषाभिधायकत्वं युक्तपदोपादानादेवेत्याशयेनाह-ज्ञातय इति । *होतुः पुत्रेऽपीति । अलुगिति शेषः ।

चूर्णादीन्यप्राणि (पा० सू० ६-२-१३४)। षष्ठीपदं तदन्तपरं तच्चाप्राणिवाचकशब्दस्य विशेषणम् । अप्राणिषष्ठ्या इति कर्मधारयः । विशेषणस्य परनिपातः सौत्रत्वात् ।

षट् च काण्डादीनि (पा० सू० ६-२-१३५)। सूत्रारम्भफलमाह-*काण्डस्येत्यादिना । कुण्डं वनम् (पा० सू० ६-२-१३६) उत्तरपदभूतः कुण्डशब्द आद्युदात्तः स्यात् वनं बोध्यश्चेदित्यर्थः । ननु कुण्डशब्दस्य पात्रवाचकतया कथमिह वनस्य बोध्यतेत्यत आह-*सादृश्येनेति । कुण्डस्य यथा बह्ववयवकं-जलाधारत्वं तथा वनस्य बह्ववयवकवृक्षाधारत्वमिति बह्ववयवसमवेतावयव्य-धिकरणत्वेन सादृश्यमिह विवक्षितम्। *अन्ये त्विति। भाष्यानुसारिण इत्यर्थः । *दुरुपपादत्वादिति । प्रसिद्धधर्मप्रयोज्यसादृश्यस्य दुरुपपादत्वादित्यर्थः । यत्किञ्चिद्धर्मप्रयोज्यन्तु तदव्यावर्तकम्। एतन्मते मनमिति कुण्डशब्दस्य विशेषणम्। वनश्चेत्तद्वाच्यमित्यर्थात् । अत एव भाष्ये "वनवाची चेत्कुण्डशब्दः" इत्युक्तम् । विशिष्टाधारजलवाचिन इत्यस्य विशिष्टः परिच्छिन्न आधारो यस्य तादृशजलवाचिन इत्यर्थः । अयञ्जलविशेष एव वर्त्तते, तत्सम्बन्धात्तु विशिष्टाधारेऽपि प्रयुज्यते पात्रत्वादित्याहुः । कैयटादय इति शेषः । "कुण्डं वनम्"

प्रसिद्धस्य निवृत्तिरित्याहुः। उक्तञ्च "कुण्डाद्युदात्तत्वे तत्समुदायग्रहणम्" इति। अत्र भाष्ये तच्छब्देन पूर्वपदार्थः। *अपरे तु तत्समुदायेत्यस्य वनसमुदायेत्यर्थः। तेन दर्भवनसमुदायो दर्भकुण्डशब्देनोच्यत*इत्याहुः। मृत्कुण्डमिति। मृद्भाजनविशेष इत्यर्थः।

भगालवाचीति। *अत्र च*व्याख्यानमेव शरणम्। मध्योदात्ता इति "लघावन्ते" (फि० पा० २ सू० ४२) इत्यनेनेति भावः।

शितेर्नित्या (पा० सू० ६-२-१३८)। शितेः परं भसच्छब्दभिन्नं यन्नित्यमबह्वच् उत्तरपदन्तद् बहुव्रीहौ प्रकृतिस्वरमित्यर्थः। दर्शनीयपाद इति। दर्शनीयशब्दो "रिति" (पा० सू० ६-१-२१७) इत्युपोत्तमोदात्तः। नित्याबह्वच्किम्? *शितिललाटः नित्येतिकिम्? *शितिककुत्। ककुदस्यावस्थायां लोपः अन्यत्र शितिककुद इत्येवेति नायं नित्याबह्वच्कः।

गतिकारकोप (पा० सू० ६-२-१३९)। इह "शितेर्नित्याबह्वज्बहुव्रीहावभसत्" (पा० सू० ६-२-१३८) इति पूर्वसूत्रस्थबहुव्रीहिग्रहणं नानुवर्त्तते अस्वरितत्वात् किं तु व्यवहितमपि "तत्पुरुषे शालायां

---

इति सूत्रे वनशब्दस्य साक्षादुपादानेन तत्समुदायेत्यत्र तच्छब्दो वनपर एवेत्याशयेनाह—*अपरे त्विति। इत्याहुः शब्दस्वारस्यवेत्तारः।

प्रकृत्या भगालम् (पा० सू० ६-२-१३७)। अत्रादिरिति निवृत्तम्। भगालमित्येकवचनस्योपादानाद्भगालवाचीत्यनुपपन्नमत आह—*अत्र चेति। *व्याख्यानमिति। कुम्भीनदालमित्यादौ दाशब्दाद्यवयवस्योदात्तस्य श्रवणमूलकव्याख्यानामित्यर्थः। भगालमित्यत्र सुपां सुपो भवन्तीति बहुवचनस्थाने एकवचनादेशो "व्यत्ययो बहुलम्" (पा० सू० ३-१-८) इति व्यत्ययो वा द्रष्टव्य इति भावः।

शितेर्नित्या (पा० सू० ६-२-१३८)। अत्राबह्वजित्युत्तरपदाविशेषणमित्युचितं शितिशब्दपूर्वपदकबहुव्रीहेर्बह्वच्कत्वाव्यभिचारादित्याशयेन मूले शितेः परन्नित्याबह्वच्कमिति। शित्यंस इत्यत्रांसशब्दो रोगार्थकाम्धातुप्रकृतिकसन्प्रत्ययान्तत्वादाद्युदात्तः,स एव शितिरंसो यस्येति बहुव्रीहौ प्रकृत्या। *शितिललाट इति। अत्र "बहुव्रीहौ प्रकृत्या" (पा० सू० ६-२-१) इति पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वम्। शितिशब्दस्य "वर्णानान्तण" (फि० पा० २ सू० ३३) इत्याद्युदात्तत्वात्। *शितिककुदिति। एतद्घटकः ककुच्छब्दः ककुदशब्द एव एकदेशविकृतस्यानन्यत्वादिति यो बह्वच् तदभिन्नत्वेन न शितिककुदित्यत्रोत्तरपदस्य नित्याबह्वच्त्वमिति भावः।

नपुंसकम्" ( पा० सू० ६-२-१२३ ) इति सूत्रस्थतत्पुरुषग्रहणमनुवर्त्तते तदाह-तत्पुरुषे इति । प्रकारक इति । *"कुगति"( पा० सू० २-२-१८ ) इति समासः । लित्स्वरेणोत्तरपदमाद्युदात्तम् । *नृवाहसेति । नॄन्वहत इति विग्रहः । "वहिहा" (उ०पा०४सू०६७०) इत्यादिना असुन्, "वसेर्णित्" (उ०पा०४सू०६६७) इति सूत्रात् णिदित्यनुवृत्तेरसुनो णित्त्वादुपधावृद्धिर्नित्स्वरेणोत्तरपदमाद्युदात्तम् । इध्मप्रव्रश्चन इति । करणे ल्युट्, कर्मषष्ठ्या समासः।*प्रव्रश्चने गतिप्रयुक्ते कृत्स्वरे*कृते इध्मशब्देन समासे कारकप्रयुक्तः कृत्स्वरः, व्रश्चनो लित्स्वरेणाद्युदात्तः । उच्चैःकारमिति । *णमुल्विधावुच्चैरित्युपपदम् । ईषत्कर इति । "ईषद्दुः सुषु" ( पा० सू० ३-३-१२६)इति खल् । शेषेषष्ठीति । तदन्तेन समासःकार्य इत्यर्थः । इदञ्च*त्यंशे अव्ययपूर्वपदप्रकृतिस्वरस्य*बाधकम् । *कृद्ग्रहणप्रत्याख्याने 'अन्वविन्दत'इत्यादौ*परत्वात् "तिङि च" ( पा० सू० ८-१-७१ ) इति *निघाते कृते यद्यपी*दं सावकाशं तथाऽपि परत्वादु*बाधकं बोध्यम् । कारकोपपदांशे तु समासान्तोदात्तत्वापवादः । कृद्ग्रहणं स्पष्टार्थमिति ।

---

गतिकारकोपपदात् ( पा० सू० ६-२-१३९ ) । *कुगतीति समास इति । गतिसमास इत्यर्थः । कारकोदाहरणमाह—*नृवाहसेतीति । इध्मप्रव्रश्चनशब्दे समासद्वयसत्त्वात्कृदुत्तरपदप्रकृतिस्वरे सत्यपि व्यवस्थामाह—*प्रव्रश्चन इत्यादिना । *स्वरे कृत इति । एवञ्च प्रव्रश्चनशब्दो मध्योदात्तः । *णमुल्विधाविति । "अव्यये ऽयथाभिप्रेत" ( पा० सू० ३-४-५९ ) इति णमुल्विधावित्यर्थः । *गत्यंश इति । तत्रोदात्तवतेति गतेस्तिङन्तेन समाससंज्ञायाः सम्भवादिति भावः । *बाधकमिति । समासस्वरबाधकाव्ययपूर्वपदप्रकृतिस्वरस्यानवकाशत्वेन बाधकमित्यर्थः । तिङन्ते सावकाशत्वेन नानवकाशत्वमित्याशङ्कते-*कृद्ग्रहणप्रत्याख्यानेति । भाष्योल्लिखितवार्त्तिकेन प्रत्याख्यानम् । तदुक्तम्—"गत्यादिभ्यः प्रकृतिस्वरत्वे कृद्ग्रहणानर्थक्यमन्यस्योत्तरपदस्याभावात्" इति । *परत्वादिति । अव्ययपूर्वपदप्रकृतिस्वरापेक्षया परत्वादित्यर्थः । *निघाते=गतेर्निघाते । *इदम्="गतिकारक" ( पा० सू० ६-२-१३९ ) इति सूत्रम् । *परत्वात्=अव्ययपूर्वपदप्रकृतिस्वरापेक्षया परत्वात् । *बाधकमिति । प्रकारकमित्यादावित्यादि । कारकोपपदांशे तु समासस्वरस्य बाधकमपवादत्वादेव । *केचिदिति । अनवकाशत्व एवापवादत्वमितिवादिनः । बाध्यत्वेनाभिप्रेतं यच्छास्त्रन्तत्प्राप्तियोग्ये विषये चारितार्थ्ये ह्यपवादत्वाभावप्रयोजकं; तच्चात्र नास्तीत्यव्ययपूर्वपदप्रकृतिस्वरस्यायमपवादो भवत्येवेत्याशयेनाह-*अ

*क्रियायोगे गतिसञ्ज्ञाविधानात् क्रियानिरूपितस्यैव कारकत्वाच्च धात्वधिकारे सप्तमीनिर्दिष्टस्यैवोपपदत्वाच्च केवलधातोः प्रयोगाभावाच्च कृदन्त*क्रियापदाक्षेपे सिद्धे इत्यर्थः। तथा च वार्तिकं "गत्यादिभ्यः प्रकृतिस्वरत्वे कृद्ग्रहणानर्थक्यमन्यस्योत्तरपदस्याभावात्" इति। न च "यत्क्रियायुक्ताः प्रादयः" इत्यत्र यस्य क्रियेति षष्ठीसमासे यस्य धातोर्वाच्या क्रियेत्यर्थात्तं प्रतीति वाक्यशेषेऽपि तच्छब्देन धातोरेव ग्रहणे प्रत्यासत्त्या *तस्यैवोत्तरपदत्वे प्रणीरित्यादावेव स्वरः स्यात्, न तु प्रणायक इत्यादाविति कृन्मात्रसङ्ग्रहाय तदिति वाच्यम्। यत्क्रियेत्यत्र कर्मधारयस्यैव स्वीकारेण तं प्रतीत्यत्र वाक्यशेषे निरूपितरीत्या तस्या एव परामर्शेन*क्रियारूपमर्थं प्रत्येव गतित्वात्। तत्र गतिकारकोपपदेषु सर्वत्र*विशेष्यभूतक्रियावाचकमुत्तरपदं न सम्भवतीति सामर्थ्यात्साधनादिविशेषणक्रियावाचकमुत्तरपदं गृह्यते इति सर्वत्रेष्टसिद्धिः। *न च प्रभवनमित्यादौ केवलक्रियावाच्युत्तरपदसत्त्वेन सा-

न्ये त्विति। उक्तमतयोर्द्वितीयमतमेव युक्तमित्याह-*आयादय इति सूत्रभाष्यादिति। तत्र यथा "आयादय आर्द्धधातुके वा" (पा० सू० ३-१-३१) इति सूत्रे यदार्द्धधातुक इति सप्तमी सा परसप्तमीति पक्षे आयादिप्रकृतेर्यदार्द्धधातुकं तस्मिन् परे आयादीनामुत्पत्तिर्भवति अथ वा आयादिभ्यो यदार्द्धधातुकन्तस्मिन्नुत्पन्ने आयादीनान्निवृत्तिरिति विकल्प्य प्रथमपक्षे गुप्तिर्जुगोपेतीष्टसिद्धावपि गोपाय इतीष्टन्न सिद्ध्यति, द्वितीयपक्षे अप्रत्ययान्तादकारप्रत्ययेन क्तिन्प्रत्ययस्य बाधनाद् गुप्तिरिति न सिद्ध्यति, जुगोपेति चेष्टन्न सिद्ध्यति, गोपायाञ्चकारेति विरुद्धञ्च प्राप्नोति" इति दूषणमभिधाय 'सिद्धन्तु सार्वधातुके नित्यम्' इति सूत्रभङ्गेन समाहितम्। अस्मिन्पक्षेऽविशेषेणायादयः सार्वधातुके तु नित्यमिति वचनेन समाधाय "यद्यविशेषेणायादिप्रकृतिभ्यो यः प्रत्ययस्तस्मिन्नायादीनामुत्पत्तिस्तदा स्यादिभिरायादीनाम्परत्वाद्बाधनम्प्राप्नोति' इत्याशङ्क्य "अनवकाशा आयादयस्ते वचनाद्भविष्यन्ति" इत्युक्तम्। ततो गोपायतीत्यत्रायप्रत्ययस्य चारितार्थ्यशङ्कायामत्रापि शप्स्यादिः प्राप्नोति' इति प्रतिपादितम्। ततो "नास्त्यत्र विशेषः शपि सत्यसति वा" इति पूर्वपक्षेणाभिहिते "अन्यदिदानीमुच्यते नास्ति विशेषः"। इति, यत्तु तदुक्तमायादीनां स्यादिभिर्व्याप्तोऽवकाशः स नास्त्यवकाश इति सिद्धान्तिनोक्तन्तथा इहापि अव्ययपूर्वपदप्रकृतिस्वरप्राप्तियोग्ये विषयेऽचारितार्थ्ये गतिग्रहणस्येति तदपवादत्वमेव युक्तम् इति। प्रकृतसूत्रे कृद्ग्रहणाभावेऽपि कृदन्तोत्तरपदस्य लाभो भविष्यतीत्येतदुपपादयति—*क्रियायोग इत्यादिना। *क्रियापदाक्षेपे=क्रियावाचकधातुप्रकृतिकप्रत्ययघटितपदाक्षेपे। *तस्यैव=धातोरेव। *क्रियारूपमर्थम्प्रत्येव=असत्त्वभूता या क्रिया तद्रूपमर्थम्प्रत्येव। *विशेष्यभूतक्रियाया इति। असत्त्वभूतायाः इति शेषः। अगृहीताभिप्रायः शङ्कते—*न चेति। समाधत्ते—

मर्थ्यं दुरुपपादम् । *लिङ्गाद्यनन्वयिसाध्यरूपार्थस्यैव क्रियाशब्देन ग्रहणा-त् । पदम*त्र शक्तमेव न परिभाषितम् । तेन कृता सुबुत्पत्तेः प्राक् समासेऽपि न क्षतिः । *एवञ्च प्रशब्दस्य पचतितरामित्याद्या*मन्तेन समासेऽयं

---

यीति । *अत्र=उत्तरपदमित्यत्र । *एवं चेति । "गति" ( पा० सू० ६-२-१३९ ) इति सूत्रविहितः स्वरः कृद्ग्रहणाभावे सति यत्र कृदन्तेन समासस्तत्रैवेति नियमाभावसिद्धौ चेत्यर्थः । *आमन्तेन समासे इति । एवमत्र क्रमो द्रष्टव्यः—तरबन्तादत्यन्तस्वार्थिकत्वेनान्तरङ्गत्वादाम् न तु प्रशब्दस्य तरबन्तेन समासः पदान्तरसापेक्षत्वेन बहिरङ्गत्वात् । किञ्च यस्य पृथगर्थबोधकत्वसम्भावना तेनैकार्थीभावस्य कल्पना भवति । प्रकृते त्वामूरहिततरबन्तस्य क्वाप्यर्थबोधकत्वञ्च दृष्टचरमिति तावन्मात्रेणैकार्थीभावासम्भवादाम उत्पत्तावेव प्रशब्देन समासः । अयञ्च समासः "कुगति" ( पा० सू० २-२-१८ ) इत्यनेन । तत्र सुपेत्यस्य निवृत्तेरामन्तेन, न तु ततः सुबुत्पत्तेरपेक्षा । 'गतिकारकोपपदानाङ्कृदन्तैनैव समासः' इति नियमस्तु नास्ति किन्तु तेषां कृदन्तेन यत्र समासः प्राप्नोति तत्र स सुबुत्पत्तेः प्राक् प्रवर्त्तते इत्येव नियमः । क्वचिदस्य त्यांग इति त्वन्यत् । न च 'यत्क्रियायुक्ताः' इति वचनात् यद्धातुवाच्यक्रियायुक्तास्तं धातुम्प्रत्येव गतित्वम्' इति कथमामन्तेन गतिसमास इति वाच्यम् । 'यत्क्रियायुक्ता' इत्यत्र या चासौ क्रिया चेति कर्मधारयाश्रयणात् । तस्प्रतीत्यस्य तद्वाचकशब्दं प्रतीत्यर्थात् स चासत्त्वभूतक्रियामात्रवाचको नास्तीति कृत्वा धातुप्रकृतिकप्रत्ययोत्पत्तेरपेक्षाऽस्त्येव । प्रणीरुग्नीरित्यत्रापि क्रियाविशिष्टकर्तुः प्रतीतिरिति नास्य क्रियामात्रवाचकत्वम् । न च प्रभवनस्य भावल्युडन्तस्य क्रियामात्रवाचकत्वमस्तीति वाच्यम् । अत्रापि द्रव्यधर्मविशिष्टस्यैव प्रतीतेः । 'कृदभिहितो [भावो] द्रव्यवद्भवति' इति भाष्यकारस्य सिद्धान्तात् । द्रव्यवदित्यत्र वतिनिर्देशः प्रसिद्धो यो द्रव्यवाचको घटादिशब्दस्तदपेक्षः । यथा घटादिशब्दैर्लिङ्गसङ्ख्याकारकशक्तियुक्तस्य प्रतीतिस्तथा भावविहितकृदन्तेनापि लिङ्गाद्यान्वितस्यैवाभिधानम् । एवञ्च यत्क्रियायुक्तास्तद्वाचकता 'पचतितराम्' इत्यामन्तस्याप्यस्तीति भवति तेनैकार्थीभावः । एवमेव 'भोक्तुम्पाकः' इत्यत्र तुमुन्प्रत्ययः क्रियार्थायां क्रियायां विहितः सङ्गच्छते । न च 'प्रस्तुत्य' इत्यत्र क्त्वाप्रत्ययान्तेनासत्त्वभूतक्रियामात्रप्रतिपादनमस्त्येवेति वाच्यम् । अत्राप्युत्तरकालिकत्वादीनां क्त्वाप्रत्ययद्योत्यानां सत्त्वान्न क्रियामात्रवाचकत्वमिति सिद्धान्तात् । अथवा 'उदात्तवता गतिमता च तिङा गतेः समासः' इति वार्त्तिकेन समासः । तिङेत्यस्य तिङ्प्रतिनेत्यर्थात् । इदञ्च वार्त्तिकं कुगतीत्यत्र सुप्सुपेत्यत्र च पठितमिति एतद्विहितस्य तत्पुरुषत्वाभावः । एतेन "कुगति" ( पा० २-२-१८ ) इत्यत्र "उपपदमतिङ्" ( पा० सू० २-२-१९ ) इति सूत्रादतिङित्यस्यापकर्षात्तस्य च तिङन्ताघटित इत्यर्थात्कथम्प्रपचतितरामित्यत्रामन्तेन प्रशब्दस्य "कुगति" ( पा० सू० २-२-१८ ) इति सूत्रेण समास इति दूषणन्निरस्तम् । एकीयमतत्वेन

स्वरो भवत्येवेति भाष्ये स्पष्टं सूक्ष्मधियाम्। एके इति। *अत्रारुचिबीजन्तु*तथासति प्रपचतितरशब्दस्य*घान्तत्वाभावात् तत आमभावे एकदेशादामि तदन्तत्वेन पचातितरामित्यस्यैव प्रातिपदिकत्वे तत एव सुपि तदन्तस्यैकपदत्वाभावात्प्रशब्दस्वरः पृथक् श्रूयेत। *किंचाम्प्रपचतितरां देवदत्तेत्यत्र "आम एकान्तरमामन्त्रितम्" (पा० सू० ८-१-५५) इति निषेधो न स्यात्। तस्मादामन्तेनैव समासः, तत्र *भाष्यप्रामाण्यादयं स्वरो भवत्येव। एवं *प्रपचतिदेश्यादावपि। अत्र च नो*पपदसमासोऽतिङिस्युक्तेः, किं तु "उदात्तवता" (का० वा०) इति वार्तिकेन। तत्र तिङेत्यस्य तिङ्वतेतेनेत्यर्थः। तदुदाहरणानाञ्च भाष्ये सहेति योगविभागेनापि साधनात् तत्पुरुषत्वतदभावौ। वैकल्पिकत्वञ्च लक्ष्यानुसारेणेति न *"तिङि चोदात्तवति" (पा० सू० ८-१-७१) इति सूत्रस्थभा-

---

यन्मूलकृता तरबन्तेनेत्याद्यभिहितन्तत्तु पूर्वोक्तरीत्या न युक्तमित्यरुचिबीजं स्फुटमेव। बीजान्तरमप्याह—*अत्रारुचीति। *तथा सति=समासादाम उत्पत्तिस्वीकारे सति। *घान्तत्वाभावादिति। प्रत्ययग्रहणपरिभाषयेत्यादिः। प्रशब्दस्य पृथक्स्वरश्रवणे इष्टापत्तिरिति वैयात्याद्यदि ब्रूयात्तत्राप्याह—*किञ्चेति। *भाष्यप्रामाण्यादिति। प्रत्याख्यानपरभाष्यप्रामाण्यादित्यर्थः। *प्रपचतिदेश्यादावपीति। अयं स्वरो भवतीति शेषः। *उपपदसमास इति। उपपदस्य समास उपपदसमासः। उपपदञ्च प्रादिस्तस्य समासः पृथग्भूतेन गतिग्रहणेन समासः। एतेन प्रशब्दादेरुपपदत्वासम्भवादिदमसङ्गतमित्यपास्तम्। *तिङि चोदात्तवतीतिसूत्रस्थेति। तत्र ह्यादौ 'तिङ्ग्रहणस्याभावे 'आमन्द्रैरिन्द्र हरिभिः' इत्यादौ मन्द्रशब्दे निघातः स्यात्' इत्यनेन तिङ्ग्रहणस्य प्रयोजनमभिधाय यत्क्रियायुक्ता इतिवचनेन मन्द्रशब्दं प्रति न गतित्वमितिरीत्या तत्र दोषाभावमुक्त्वा यद्योगाद् गतित्वमित्यस्य स्वीकारे यत्प्रकरोतीत्यत्र धातोरुदात्तवत्त्वाभावान्निघातो गतेर्न स्यादतस्तिङ्ग्रहणमिति सप्रयोजनं तिङ्ग्रहणम्' इत्यभिधाय "यदि तिङ्ग्रहणं क्रियते आमन्ते न प्राप्नोति प्रपचतितराम्, पजल्पतितराम्। असति पुनस्तिङ्ग्रहणे क्रियाप्रधानमाख्यातं तस्मादतिशये तरप् तदन्तात्स्वार्थे आम्। एवंरीत्या यत्क्रियायुक्ता इतिवचनेन संघातं प्रति क्रियायोगाद्भवति निघातस्तस्मान्नार्थस्तिङ्ग्रहणेन। 'आमन्द्रैः' इत्यत्र दोषपरिहारः पूर्ववत्। यत्प्रकरोतीत्यत्र दोषपरिहारस्तु या क्रिया यत्क्रियेति समासेनार्थम्प्रति गतित्वन्न चार्थे कार्यमिति तद्वाचकशब्दसामान्यग्रहणम्" इति प्रतिपादितम्। अत्र भाष्ये "यदि तिङ्ग्रहणं क्रियते आमन्ते निघातो न प्राप्नोति" इति दूषणाभिधानङ्कृतम्। यदि गतिकारकोपपदादित्यत्र कृद्ग्रहणम्प्रत्याख्योयत तदा गतत्यादिसूत्रेणोत्तरपदप्रकृतिस्वरेण प्रशब्दस्य निघातः सि-

ष्यविरोधः । अन्य इति । *अत्रापि *भाष्यविरोध एवारुचिवीजम् । ति
*ङन्तसमासेऽव्ययं स्वरो भवत्येव यथा 'यो-जातः पर्यभूषव'इत्यादौ । "नि-
संक्रीडा"(पा० सू० २-२-१७) इत्यत्र *नित्यमिति योगं विभज्य लक्ष्या-
नुरोधेन क्वचित्तत्पुरुषत्वाङ्गीकारात् । *अत एवोदात्तवतेत्यस्य भाष्ये द्विः
पाठः । *अत्र यच्छब्दयोगात्तिङन्तस्यानिघातः । *उदात्तवता गतिमता चेति
तिङन्तस्य गतिसमासः । अव्ययपूर्वपदप्रकृतिस्वरं बाधित्वोत्तरपदप्रकृतिस्व-
रेणाद्युदात्तः शिष्यते । *यत्र तु तिङन्तोत्तरपदकेऽन्तोदात्तत्वमिष्यते यथा
"यत्रा नरो देवयन्तो युगानि वितन्वते" इत्यादौ, तत्र त्रिचक्रादिवात्क*
ल्प्यम् । अत्यायाहीत्यादौ यच्छब्दयोगाभावात् "तिङ्ङतिङः"(पा०सू०
८-१-२८)इति निघाते आङ (१)सहेति योगविभागात्समासः । उत्तरपद-
स्योदात्तशून्यत्वात् *गतिशून्यत्वाच गतिप्रयुक्तसमासाभावात् तत्पुरु-

ष एवेति भाष्यविरोधः स्पष्टः । तस्य परिहारस्तु सहेति योगविभागेन चे-
त्समासस्तदा नात्र "गतिकारकोपपदात्" इत्यस्य प्राप्तिस्तस्य समासस्य त-
त्पुरुषत्वाभावात् । उदात्तवतेति वार्त्तिकस्यापि "सह" ( पा० सू० २-१-४ ) इति
सूत्रे पाठात्तत्पुरुषत्वाभाव एव स्वीकार्यः । किञ्च "सह" ( पा० सू० २-१-४ )
इति सूत्रविहितसमाससंज्ञाविषये एकार्थीभावविकल्पस्वीकारात् "तिङि
चोदात्तवति" [ पा० सू० ८-१-७१ ] इति सूत्रभाष्यीयप्रयोगे समासाभाव एव
वास्तु । तथा च न गतीत्यस्य प्राप्तिः । ईदृशे विषये "कुगति" [ पा० सू० २-
२-१८ ) इति समासस्य तु न प्राप्तिस्तस्मिन् सूत्रेऽतिङ्ग्रहणस्य तिङन्ताघटित
इत्यर्थकस्यापकर्षेण बोधनादिति भावः । प्रपचतिदेश्यमित्यत्र "गति" ( पा०
सू० ६-२-१४९ ) इत्यनेनोत्तरपदप्रकृतिस्वरो नेष्यते स च कृद्ग्रहणाभावे प्राप्नोती-
ति कृद्ग्रहणमावश्यकमिति वादिमतं दूषयति-*अत्रापीति । *भाष्यविरोध एवे-
ति । कृद्ग्रहणप्रत्याख्यानपरभाष्यविरोध इत्यर्थः । कृद्ग्रहणाकरणेऽन्यदपीष्टं सिध्य-
तीत्याह-*तिङन्तसमास इति । नन्वत्र कथन्तत्पुरुषत्वमत आह-*नित्यमिति ।
*अत एव=तिङन्तेन समासस्य तत्पुरुषत्वस्यापीष्टत्वादेव । गतीत्यस्य प्रवृत्तौ
चाद्युदात्तत्वस्यैव श्रवणम् । तिङन्तनिघातस्य तु यच्छब्दयोगात् "निपातैर्यद्य-
दि" ( पा० सू० ८-१-३० ) इत्यनेन निषेध इत्याह-*अत्रेति । "नित्यंक्रीडा"
( पा० सू० २-२-१७ ) इत्यत्र योगविभागाभावेऽप्याह-*उदात्तवतेति । ननूक्त-
रीत्याऽऽद्युदात्तस्य चेच्छ्रवणं तदा क्व चिदन्तोदात्तश्रवणविरोध इत्यत आह-*यत्र
त्विति । *तत्कल्प्यम्=अन्तोदात्तत्वङ्कल्प्यम् । *गतिशून्यत्वात्=याहीत्यस्य ग-
तिमत्त्वाभावात् । ननु 'सह' इति योगविभागलब्धसमासस्य यथा तद्धितप्रक-
रणपठित'शेषे' इति सूत्रस्य लक्षणाधिकारत्वोभयरूपत्वन्तथोभयरूपत्वम्भाविष्य-

(१)'सुबिति'इत्यादर्शपाठः ।

षत्वाभावेनायं स्वरः । *उदात्तस्वरितयोगिन एव प्रकृतिभावविधानादस्य तच्छून्यतयाऽपि नायं स्वरः । एवञ्चाव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्तः । ततोऽतिशब्देन गतिसमासे अनेनोत्तरपदप्रकृतिस्वरे आद्युस्वर एव शिष्यते इति दिक् । *परे तु कृद्ग्रहणाभावे प्रभवनमित्यादौ* क्रियाया विशेष्यत्वात्तत्रैव स्यात् न तु प्रणीरित्यादाविति कृद्ग्रहणं कर्त्तव्यम् । तदुक्तं भाष्ये—"अधिकार्थं कृद्ग्रहणं कर्त्तव्यम्"इति । *प्रपचतितरामित्यादौ त्वव्ययपूर्वपदप्रकृतिस्वरात्परत्वेन "तिङि चोदात्तवति"(पा० सू० ८–१–७१) इत्यस्य प्रवृत्तावेतत्प्रवृत्तौ न फलम् । एतत्प्रवृत्त्यापि तत्रान्तोदात्तमेव लभ्यते । "तिङि चोदात्तवति"(पा० सू०८–१–७१) इति सूत्रे एतदर्थमेव भाष्ये तिङ्ग्रहणं प्रत्याख्यातम् । *अतिप्रसङ्गस्तु*प्राग्वदेव परिहार्यः । *अत एवात्र सूत्रे तस्मात्कृद्ग्रहणं न कर्तव्यमिति नोक्तमित्याहुः ।

---

तीत्यत आह—*उदात्तस्वरितयोगिन इति । उभयरूपत्वस्वीकारादेव तत्पुरुषत्वप्रयोज्यस्याव्ययपूर्वपदप्रकृतिस्वरस्येति वक्ष्यमाणग्रन्थस्य सङ्गतिः । भाष्यस्वरसादाह—*परे त्विति । *क्रियाया विशेष्यत्वादिति । गतित्वनिरूपकक्रियायाः प्रधानीभूताया ग्रहणात् । न चात्र कृदर्थभावस्य प्राधान्यन्न त्वसत्त्वावस्थापन्नक्रियाया इति कथमेतदिति । एकैव क्रिया विलक्षणधर्माभ्याम्भासत इत्यस्य स्वीकारात् । प्रणीरित्यत्र तु प्रत्ययार्थे कर्तरि तस्य विशेषणत्वमिति स्पष्टमेव । अत एव भाष्ये या चासौ क्रिया चेति यत्क्रियायुक्ता इत्यस्यार्थम्प्रदर्श्य गतित्वनिरूपकक्रियामात्रवाचकः कोऽपि शब्दो नास्तीति कृत्वा प्रणीरुन्नीरित्यत्रैव स्यात् 'प्रणायकः' इत्यत्र न स्यादित्यनेन कृद्ग्रहणस्य प्रयोजने कथिते प्रणीरुन्नीरित्यपि प्रणायकतुल्यमेव एषोऽपि हि कर्तृविशिष्टस्यैव वाचक इत्यनेन प्रत्याख्यानवादिनाऽन्यथासिद्धौ प्रदर्शितायां सिद्धान्तिनाऽयन्तर्हि तस्यैवार्थस्य वाचकः प्रभवनमिति प्रदर्श्य तस्मात्कृद्ग्रहणङ्कर्त्तव्यमित्युक्तम् । कर्तृविशिष्टस्येत्यस्य कर्तृविशेषणक्रियावाचक इति प्रणायकशब्दादविशेष इत्यर्थः । प्रभवनमित्ययन्तु विशेष्यतया तस्यैवार्थस्य वाचक इति कृद्ग्रहणमावश्यकमित्यर्थः । तत एकदेशिना प्रकृतसूत्रे कृद्ग्रहणे कृते प्रपचतितरामित्यादौ "गतिकारकोपपदात्" ( पा० सू० ६–२–१३९ ) इति विहितस्वराभावे शङ्किते शङ्कान्तमेव भाष्यन्दर्शितम् । स्वयमेव समाधिङ्कल्पयिष्यतीति परबुद्धिपरीक्षणाय समाधिर्नोक्तः । तमेव समाधिमाह–*प्रपचतितरामित्यादिना तिङ्ग्रहणम्प्रत्याख्यातमित्यन्तेन । *अतिप्रसङ्ग इति । यदि "तिङि चोदात्तवति" ( पा० सू० ८–१–७१ ) इति सूत्रे तिङ्ग्रहणन्न क्रियते तर्हि 'आमन्द्रैरिन्द्र हरिभिर्याहि' इत्यत्रातिप्रसङ्ग इत्यर्थः । *प्राग्वदेव='यत्क्रियायुक्ता' इतिवचनाश्रयणेनैव । *अत एव=अनुपदोक्तरीत्या कृद्ग्रहणस्यावश्यकत्वादेव । नोक्तमितीत्यस्योपसंहारग्रन्थेनोक्तमित्यर्थः । किञ्च क्रि-

वनस्पतिमिति । *वनशब्दो नविषयत्वादाद्युदात्तः, पतिश-ब्दश्च प्रत्ययस्वरेण *तथा । निपात्यत इति । *अन्यथा अतिप्रत्ययान्त-त्वादन्तोदात्तः स्यादिति भावः । *एवमूप्रत्ययान्ततनूशब्दोप्याद्युदात्तो निपा-त्यते, नपाच्छब्दोऽपि "नभ्राट्"(पा० सू० ६-३-७५) इति सूत्रे आद्युदा-त्तो निपात्यते । वनस्पत्यादयः षष्ठीतत्पुरुषाः । तनूनपादित्यत्र तन्वा नपादि-ति विग्रहः । नराशंसमिति । नराशंसशब्दावप्घञन्तत्वादा*द्युदात्तौ । नरा एनं शंसन्ति स नराशंसः । निपातनादिति । "अन्येषामपि" (पा० सू० ६-३-१३७) इति दीर्घ इत्यन्ये । *शुनः शेप इति । श्वन्शेपशब्दौ प्रातिपदिकस्वरनिपातनस्वरा*न्यतरस्वाङ्गस्वराभ्यामन्तोदात्ताद्युदात्तौ । श-ण्डामर्कौ घञन्तत्वादाद्युदात्तौ । द्वन्द्वः, "अन्येषामपि"(पा० सू० ६-३-१३७) इति दीर्घः । तृष्णावरूत्री । तृष्णशब्दो "निष्ठा च द्व्यज्"(पा० सू० ६-१-

---

याविशेषणकबोधजनकेनापि यत्र समासस्तत्र स्वरसिद्ध्यर्थङ्कृद्ग्रहणङ्कर्त्तव्यम् । इद-मेव ज्ञापकं क्रियावाचकग्रहणे प्रधानीभूतक्रियावाचकशब्दस्य ग्रहणमित्यर्थ-स्य । तेन 'भोक्तुङ्गतः' भोक्तुम्पाकः' इत्यादौ तुमुन्न भवति । यत्तु कार्ये क्रि-यामात्रनिमित्तकन्तत्तु गुणभूतायां क्रियायामपि भवति । कारकविभक्तयः क्त्व-सुजादयः प्रत्ययाश्च यथा । यत्तु कैयटेन "कृदभिहितो भावो द्रव्यवत्प्रकाशते तेन प्रभवनमित्येषोऽपि शब्दः स्वघटकधातुप्रतिपाद्यस्यासत्त्वभूतक्रियारूपार्थ-स्य प्रत्ययार्थद्रव्यधर्मलिङ्गसङ्ख्यायुक्तार्थस्य च वाचक इति क्रियामात्रस्यैव वाचको न कश्चिदिति यथा कथञ्चित्क्रियावाचकस्य ग्रहणम्भविष्यति इति कृद्ग्रहणम्प्रत्याख्यातम्"इत्युपसंहृतं, तत्तु नोचितम् । एवं व्याख्यानेऽपि साध्यत्वा-वस्था सिद्धावस्थेत्यवस्थाद्वययुक्ता क्रियैव प्रदर्शिता न त्वन्यः कर्त्रादिरिति त-त्रैवानेन स्वरः स्यात् न तु 'प्रणायकः' इत्यादाविति कृद्ग्रहणस्य सर्वत्र स्वरसि-द्ध्यर्थमावश्यकत्वात् ।

उभे वनस्पत्यादिषु ( पा० सू० ६-२-१४० ) । सूत्रारम्भस्य प्रयोजन-माह—*वनशब्द इत्यादिना । *तथा=आद्युदात्त इत्यर्थः । *अन्यथा=आद्युदु-दात्तनिपातनाभावे । निपातनतुल्यत्वप्रदर्शनायाह—*एवमिति । तथा च गणे सूत्रे वा न्यायप्राप्तस्वराद्विपरीतोच्चारणेन निपातनतुल्यत्वलाभ इति भावः । नपाच्छब्दे नलोपाभावनिपातनमधिकमिति स्वन्यत् । *आद्युदात्ताविति । नरशब्दे नकाराकारस्य धातुस्वरेणोदात्तऋकारस्थानिकादेशत्वेनोदात्तत्वम्, शंसशब्दे तु ञित्स्वरेणेति बोध्यम् । *शुनःशेप इतीति । शुन इव शेपो यस्येत्यर्थः । "शेपपुच्छलाङ्गूलेषु" ( का० वा० ) इत्यलुक् । *अन्यतरेति । एतदन्तेन शुन इत्यस्यान्तोदात्तस्य प्रदर्शनम् । "स्वाङ्ग" ( फि० पा० २ सू० २९ ) इत्यनेन तु शेपशब्दस्याद्युदात्तस्य प्रदर्शनमि-

२०५) इत्याद्युदात्तः, "ग्रसितस्कभित"(पा० सू० ७-२-३४) इत्यत्र वरूत्रीशब्द आद्युदात्तो निपात्यते। पञ्चाविश्ववयसौ अन्तोदात्तौ। मर्मृत्युः अन्तोदात्तौ। वृत्।

इन्द्रावरुणाविति। इन्द्रो रनन्त आद्युदात्तः। वरुणोप्युन्नन्तत्वा*त्तथैव।

नोत्तरपद (पा०सू० ६-२-१४२)। इन्द्राग्निभ्यामिति।*अग्निशब्दो*ऽन्तोदात्तः। *सोमारुद्राविति। सोम आद्युदात्तो मन्नन्तत्वात्, रुद्रो रगन्तत्वादन्तोदात्तः। रुद्रसोमाविति क्वचित्को*पपाठः। शुक्रामन्थिनाविति। शुक्रो रगन्तत्वान्मन्थिन्मत्वर्थीयेनिनाऽन्तो*दात्तो मा भूदिति। *तथा सति 'सूर्याचन्द्रमसौ'इत्यादाविदं न स्यात्। सूर्यशब्दो यदन्तत्वादाद्युदात्तः, चन्द्रमस्शब्दो दासीभारादित्वान्मध्योदात्तः। विषयविभागार्थमिति। *न च पृथिव्यादयो विधेर्विषयोऽन्यत्र प्रतिषेध इति विषयविभागः सिद्ध इति वाच्यम्। *पूर्वसूत्रे पृथिव्यादिग्रहणेन सिद्धे एतत्सूत्रवैयर्थ्यापत्तेः। अयमेव पृथिव्यादिपर्युदासो *ज्ञापयति-"स्वरोद्द्वयके विधौ व्यञ्जनमविद्यमानवत्"इति। तेन "अग्निमीळे" इत्यादौ "उ-

---

ति विवेकः। शेपशब्दः पुरुषलिङ्गवाची।

देवताद्वन्द्वे च (पा० सू० ६-२-१४१)। उभे इत्यनुवर्त्तते। *तथैव= आद्युदात्त एव। अग्निशब्दस्यानुदात्तादित्वमुपपादयति-*अग्निशब्द इति। *अन्तोदात्त इति। "अङ्गेर्नलोपश्च" (उ० पा० ४ सू० ५०) इतिव्युत्पादनात्। द्यावापृथिवी इति। द्यावाशब्द आद्युदात्तः। पृथिवीशब्दः षित्प्रत्ययान्तत्वेनान्तोदात्तो ङीषन्तत्वात्, अतोऽनुदात्तादित्वमुत्तरपदस्य बोध्यम्। *सोमारुद्राविति। सोमशब्दोऽत्र चन्द्रवाचकोऽतो नैकशेषः। यद्यप्यभ्यर्हितत्वाद्रुद्रशब्दस्य पूर्वनिपातो न्याय्यस्तथापि पूर्वनिपातप्रकरणस्यानित्यत्वाद्रुद्रशब्दस्य परनिपातः। *अपपाठ इति। सोमशब्दस्याद्युदात्ततयोत्तरपदस्यानुदात्तादित्वाभावेन पृथिव्यादिपर्युदासाविषयत्वात्। *अन्तोदात्ताविति। शुक्रमथिन्शब्दाविति शेषः। *तथा सति=अनुदात्तादौ द्वन्द्व इत्यर्थे सति। मूले विषयविभागार्थमिति। अनुदात्तादावित्यस्याभावे उत्तरपद इत्यपि न वाच्यमुत्तरपदस्य द्वन्द्वे सद्भावस्यावश्यकतया तदुपादानस्य व्यर्थत्वात्। एवञ्च विधिप्रतिषेधयोर्विषयविभागो न स्यादिति भावः। तत्र शङ्कते—*न चेत्यादिना। समाधत्ते- *पूर्वसूत्र इति। यदि भवदुक्तो विषयविभाग एवाभिमतः स्यात्तदा देवताद्वन्द्वे पृथिवीरुद्रपूषमन्थिष्विति ब्रूयादित्यर्थः। *ज्ञापयतीति। अन्यथा पृथिव्यादीनां

दात्तादनुदात्तस्य"(पा० सू० ८-४-६६) इति *स्वरितः सिद्ध्यति ।

थाथघञ् (पा०सू० ६-२-१४४) । कृत्स्वरापवादोऽयम् । प्रभृथे *क्थन् । आवसथ इति । उपसर्गे वसेरित्यर्थः । उपपदोदाहरणमेतत् । प्रभेदे घञ् । पुरुष्टुतेति । *तृतीयातत्पुरुषे तु "तृतीया कर्मणि" (पा० सू० ६-२-४८)इति पूर्वपदप्रकृतिस्वर एव । स्तुतो "निष्ठा च द्व्यजनात्"(पा० सू०६-१-२०५) इत्याद्युदात्तः । *क्षयः "क्षयो निवासे"(पा०सू०६-२०-१) इत्याद्युदात्तः । निश्चय इत्यत्रा*यं स्वरो नेष्यते किन्तु कृत्स्वर एवेति "ग्रहवृद"(पा० सू० ३-३-५८) इति सूत्रे भाष्यम् । सुस्तुतमिति । अव्ययपूर्वपदप्रकृतिस्वरोऽत्र । कृष्टपच्या इत्यत्राप्य*यं स्वर इष्यत इति "राजसूय"(पा० सू० ३-१-१४४) इति सूत्रे भाष्ये स्थितम् । अत्रोपपदग्रहणानुवृत्तिः *समासनिर्देशात्कृता नात्यन्तं फलवती, गतिकारकाभ्यां सिद्धत्वात् ।

सूपमानात्क्तः (पा० सू० ६-२-१४५) । गतिस्वरापवादोऽयम् । *अत्रापि "गतिकारकोपपदात्"(पा० सू० ६-२-१३९) इत्येव । नेह

---

व्यञ्जनादित्वाभावात्पर्युदासस्य व्यर्थत्वापत्तिरिति भावः। स्वरोद्देश्यकत्वञ्च स्वरविशेषानुवादेन विहितत्वम् । *स्वरितः सिध्यतीति । 'स्वरोद्देश्यके' इति वचनाभावे मकारेण व्यवधानादुदात्तात्परत्वाभावेन "उदात्तादनुदात्तस्य" ( पा० सू० ८-४-६६ ) इत्यस्य प्रवृत्तिर्न स्यादित्यर्थः।

थाथघञ् ( पा० सू० ६-२-१४४ ) "गतिकारकोपपदात्" ( पा० सू० ६-२-१३९ ) इति मण्डूकप्लुत्याऽनुवर्त्तते । *क्थनिति । "हनिकुषिनीरमिकाशिभ्यः क्थन्" [ उ० पा० २ सू० २ ) इति क्थन् । *तृतीयातत्पुरुषे त्विति । पुरुभिः स्तुत इति विग्रहेण तृतीयातत्पुरुष इत्यर्थः । *क्षयः=प्रक्षय इत्यत्र क्षयशब्दः । *अयं स्वरः="थाथ" ( पा० सू० ६-२-१४४ ) इति सूत्रविहितमन्तोदात्तत्वम् । एवञ्च चयशब्दस्याबन्ततया निश्चयशब्दो मध्योदात्त एव भवति । सुस्तुतमित्यत्र सुशब्दस्य "सुः पूजायाम्" (पा० सू० १-४-९४ )इति कर्मप्रवचनीयत्वान्न गतित्वमिति "थाथ"(पा० सू० ६-२-१४४) इति सूत्राप्रवृत्तावव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वमेव । *अयं स्वरः=उत्तरपदस्यान्तोदात्तत्वम् । एतच्च यथाश्रुतसूत्रपाठे न सिध्यतीति कृष्टपच्यशब्दः "थाथ" ( पा० सू० ६-२-१४५ ) इति सूत्रे पठनीय इति तात्पर्यम् । मतान्तरमाह—कृष्टपच्यस्येति । *समासनिर्देशात्कृतेति । "गतिकारकोपपदात्कृत्" ( पा० सू० ६-२-१३९ ) इति सूत्रे समासनिर्देशात्कृतेत्यर्थः ।

सूपमानात् ( पा० सू० ६-२-१४५ ) । समाहारद्वन्द्वः । कर्मप्रवचनीयात्सोः परत्वेऽयं स्वरो नेत्याशयेनाह—*अत्रापीति । समासनिर्देशाभिप्रायेण "ग-

सुस्तुतम् । शशप्लुत इति । शश इव प्लुत इत्यर्थः ।

सञ्ज्ञायामना (पा० सू० ६-२-१४६)। अयमपि गतिस्वरापवादः । कुदालखातमित्यादौ "तृतीयाकर्मणि"(पा०सू० ६-२-४८) *इति प्राप्तम् । आचितम्, पर्याचितम्, आस्थापितम्, परिगृहीतम्, निरुक्तम्, प्रतिपन्नम्, उपश्लिष्टम्, प्रश्लिष्टम्, उपहितम्, उपस्थितम्, संहिताऽगवि, वृत् । गोरन्यस्य *सञ्ज्ञायां संहिताशब्दोऽन्तोदात्तः ।

कारकाद्दत्त ( पा० सू० ६-२-१४८ ) । *"सञ्ज्ञायामनाचितादीनाम्" ( पा० सू० ६-२-१४६ ) इत्यस्य *नियमोऽयम् । देवदत्त इति । *देवा एनं देयासुरित्यर्थः । विष्णुरेनं श्रूयादिति विष्णुश्रुतः । कारकात्किं सम्भूत इति । कारकादित्यस्याभावे त्रितयाधिकारात् गतेरपि नियमः स्यात् । *सम्भूयादिति सम्भूत इति भावः । संश्रुतो रामायण इति पाठस्तु अयुक्तः । आशिषोऽप्रतीतेः । माभूदिति । *तेन संश्रुतो विश्रुत इत्यत्र भवत्येवान्तोदात्तत्वम् । आशिषि किम्? अनाशिषि नियमो मा भूत् । ततश्चेह न स्यात्-देवैः खाता *देवखाता । इत्येवमत्रेति । *इत्येवमप्यत्रेत्यर्थः ।

---

तिकारकोपपदात्' इत्युक्तम् । वस्तुतो गतिग्रहणमात्रस्यैव प्रयोजनम् । गतेः सोरित्यर्थात् । एवं सति सूपमानादित्यत्र सु इति लुप्तपञ्चम्यन्तरपृथक्पदमिति स्वीकारेऽपि न क्षतिः ।

संज्ञायामना ( पा० सू० ६-२-१४६ )। गतीत्यादि क्त इति च वर्त्तते । *इति प्राप्तमिति । तत्परत्वादनेन बाध्यत इति शेषः । अगवि संहितेत्येतद्व्याचष्टे—*गोरन्यस्येति ।

कारकाद्दत्तश्रुतयोः ( पा० सू० ६-२-१४८ ) । संज्ञायामिति वर्त्तते मण्डूकप्लुत्या । अत एवाह—*संज्ञायामिति । *नियमोऽयमिति । संज्ञायां क्तान्तस्याशिषि चेद्दत्तश्रुतयोरेवेत्येवंविधो नियमोऽयमित्यर्थः । आशिषि क्तान्तस्य वृत्तिं सूचयति-*देवा एनमित्यादिना । कारकात्किमिति मूलोक्तस्य तात्पर्यमाह-*कारकात्किमित्यादिना । *सम्भूयादिति । रामायणपारायणस्य भावित्वे सत्येतादृशव्यवहारो लोके दृश्यते । सौत्रस्यैवकारस्य विपरीतनियमशङ्कावारणार्थत्वमाह मूले-एव किमित्यादिना । एवकाराभावे दत्तश्रुतयोश्चेत्कारकादेवेति नियमोऽपि सम्भाव्येत तथा चेष्टस्थले न स्यादन्तोदात्तत्वमित्याह-*तेन संश्रुत इति । *देवखातेति । संज्ञेयं श्वभ्रविशेषस्य । आशिष्येवेत्येवमत्रेष्टो नियम इत्यभिधानमयुक्तङ्कारकावधारणमित्यादिना दत्तश्रुतयोरेवेत्येवमन्वयस्योक्तत्वादत आह-*इत्येवमप्यत्रेति । अत्र प्रमाणन्तु "कारकाद्दत्तश्रुतयो-

*अत्र कारकादिति योगं विभज्य दूरादागत इत्यत्रान्तोदात्तत्वं विधेयं "गतिरनन्तरः"(पा० सू० ६-२-४९) इति बाधनार्थमित्युक्तम्।

कृतं भवतीति। *भावे यदा मलपितादयस्तदा थाथादिस्वरेणैव सिद्धम्।

अनो भाव (पा० सू० ६-२-१५०)। कृत्स्वरापवादोऽयम्। पयःपानमिति। "कर्मणिच येन"(पा० सू० ३-३-११६) इति कर्मण्युपपदे भावे ल्युट्। राजभोजना इति। बाहुलकात्कर्मणि ल्युट्।

कृत्स्वरापवाद इति। *क्रीते तु "तृतीया कर्मणि"(पा० सू० ६-२-४८) इत्यस्येत्याहुः। व्याख्यानादिषु करणे ल्युट्। याजकादयो "याजकादिभिश्च"(पा० सू० २-२-९) इति सूत्र*गणे पठिताः।

अध्ययनपुण्यमिति। *सुप्सुपेति समासः। *पुण्यशब्दस्याव्युत्पन्नत्वे आह-तत्पुरुषे तुल्येति। "नब्विषयस्य"(फि०पा०२सू०२६)इत्याद्युदात्तः पुण्यशब्दः। व्युत्पन्नत्वे तु "यतो नावः"(पा० सू० ६-१-२१३)

रत्नाशिषि प्रतिषेधो वक्तव्यः-अनाहतो नदति देवदत्तः। सिद्धन्तूभयनियमात्। उभयतो नियमः करिष्यते" इति भाष्यमेव। अनाहतो नदति देवदत्त इत्यत्र देवदत्तशब्दः शङ्खविशेषस्य धनञ्जयसम्बन्धिनः संज्ञा। वाक्यभेदेन द्विविधो नियमः कार्य इति भावः। शङ्खविशेषस्य यत्र संज्ञा तत्र 'देवा एनं देयासुः' इत्यर्थो न प्रतीयत इति तात्पर्यम्। *अत्र कारकादिति योगमिति। तत्र संज्ञायामिति न सम्बध्यते। दूरादागत इत्यत्रागत इत्यस्य क्तान्तत्वं कृद्ग्रहणपरिभाषया बोध्यम्।

इत्थम्भूतेन कृतम् (पा० सू० ६-२-१४९)। अत्र कृतमिति कर्मक्तान्तम् अतः "तृतीया कर्मणि" (पा० सू० ६-२-४८) इति सूत्रापवादत्वमस्य, तत्फलमाह—*भावे यदेति।

अनो भावकर्म [पा० सू० ६-२-१५०]। कारकादित्यनुवर्त्तते। पूर्वोत्तरसाहचर्यादत्र योऽन्शब्दः सोऽन्प्रत्ययमात्रबोधक इति तदन्तविधिः।

मन्क्तिन् [पा० सू० ६-२-१५१]। कारकादिति वर्त्तते। नन्वस्य कृत्स्वरापवादत्वाभिधानमसङ्गतं गोक्रीतशब्दे कृत्स्वरबाधकस्य "तृतीयाकर्मणि" (पा० सू० ६-२-४८) इत्यस्य प्राप्तेरत आह—*क्रीते त्विति। एवञ्च यद्यपि तत्र "तृतीया" [पा० सू० ६-२-४८] इत्यस्य प्राप्तिस्तथापि कृत्स्वरस्य प्राथमिकप्राप्तिमात्रेण कृत्स्वरेत्युपात्तमिति भावः। रथवर्त्मपाणिनिकृतिरित्यनयोः कर्तृषष्ठ्या समासः, छन्दोव्याख्यानमित्यत्र कर्मषष्ठ्यन्तस्य, राजशयनादौ तु कर्तृषष्ठ्येति बोध्यम्। *गणे पठिता इति। अत एव तत्र षष्ठीसमासः।

*सुप्सुपेति समास इति। सप्तम्यन्तपूर्वपदक इति शेषः। मूलकारोक्तं "तत्पुरुषे तुल्य" (पा० सू० ६-२-२) इति प्राप्तमित्येतद्योजयति—*पुण्य-

इत्याद्युदात्तः,तदा कृत्स्वरापवादोऽयम् । उक्तसमासस्याप्रतिपदोक्तत्वादे*-तदपवादत्वमेव युक्तम् । सप्तमीति योगविभागस्तु भाष्यानारूढः । *तत्पुरुषे इत्यस्यात्रासम्बन्ध एव सामर्थ्यात् । वेदेन पुण्यं वेदपुण्यमिति व्युत्पत्तौ *कृत्स्वरः । अव्युत्पत्तौ पूर्वपद*प्रकृतिस्वरः । वेदशब्दोऽत्र वृषादित्वादाद्युदात्तः ।

ऊनार्थकलहम ( पा० सू० ६-२-१५३ ) । तृतीयान्तात्पदान्येतान्यन्तोदात्तानीत्यर्थः । तदर्थानामिति । *व्याख्यानादिति भावः । स्पष्टार्थमिति । न च धान्यायार्थो धान्यार्थ इत्येतद् व्यावर्त्यम् । "अर्थे" इति पूर्वपदप्रकृतिस्वरस्य बाधकस्य सत्त्वात । *इदं तृतीयासमासे सावकाशम् । *न च समस्य सर्वानुदात्तत्वा*त्प्रकृतिस्वराभावे समर्थमित्येतद्व्यावर्त्यन्त*दभावे समासस्वरेणान्तोदात्तस्येष्यमाणत्वादित्याहुः* । परे त्वत्रोनशब्देन तदर्थग्रहणे न भाष्यानुग्रहः, माषविकल इत्यस्यान्तोदात्तत्वे च न दृढं मानम् । *अत्र तृतीयाया इत्यनेन *प्रतिपदोक्तपरिभाषाप्रवृत्त्यभावो ज्ञाप्यते । तेन वाचाकृतः कलह इत्याद्यर्थके वाक्कलहादावन्तोदात्तत्वं भव-

---

शब्दस्येति । *एतदपवादत्वम्=कृत्स्वरापवादत्वम् । ननु सुप्सुपेतिवाक्येन चेत्समासस्तदाऽत्र न "तत्पुरुषे" इत्यस्य प्राप्तिरत आह—*तत्पुरुष इति । *कृत्स्वर इति । भवतीति शेषः । तदा नास्य प्राप्तिः समासस्यन्तात्परत्वाभावात् । *प्रकृतिस्वर इति । तृतीयापूर्वपदप्रकृतिस्वर इत्यर्थः । "तृतीयातत्कृत" ( पा० सू० २-१-३० ) इति सूत्रेण समाससंज्ञायाः सत्त्वादिति भावः ।

*व्याख्यानादिति । माषविकलमित्यादिपदानामन्तोदात्तानान्दर्शनमूलकव्याख्यानादित्यर्थः । *इदम्="ऊनार्थ" [ पा० सू० ६-२-१५३ ] इति सूत्रम् । ननु समशब्दपूर्वपदको यत्र समासः समर्थ इत्यादौ तत्र उत्तरपदान्तोदात्तत्वसिध्यर्थन्तृतीयाग्रहणमावश्यकम् । न हि तत्र पूर्वपदस्यः प्राप्तिः समशब्दस्य "त्वत्त्वसमसिम" [ फि० पा० सू० ४-७८ ] इत्यनेन सर्वानुदात्तत्वविधानेनोदात्तस्वरितयोगित्वाभावादिति शङ्कते-*न चेति । समासस्तु तत्र "अर्थेन नित्यसमासः" ( का० वा० ) इति वार्त्तिकेन । *प्रकृतिस्वराभावे=अर्थे इतिसूत्रविहितप्रकृतिस्वराभावे । समाधत्ते-*तदभाव इति । पूर्वपदप्रकृतिस्वराभाव इत्यर्थः । *इत्याहुः="ऊनार्थ" ( पा० सू० ६-२-१५३ ) इति सूत्रेऽर्थ इति स्वरूपपरमिति वादिनः । आहुरित्येतत्सूचितामरुचिम्प्रकटयति-*परे त्वित्यादि । तृतीयाया इत्युपादानस्यापि चारितार्थ्यमाह—*अत्रेति । *प्रतिपदोक्तपरिभाषाभाव इति । साक्षादूनादिशब्दोपादानेन विहितो यः समासस्तस्यैव ग्रहणमित्येतदर्थकपरिभाषाभाव इत्यर्थः । *मासपूर्व इति । तृतीयापूर्वपदप्रकृतिस्वरोऽत्र ।

त्येव । अर्थेतित्वत्र स्वरूपग्रहणमेवेत्याहुः । ऊनेत्यादिकिंच ? *मासपूर्वः ।

मिश्रश्च (पा० सू० ६-२-१५४) । तृतीयान्तादुत्तरपदमनुपसर्गमिश्रमन्तोदात्तमित्यर्थः । पणबन्धेनेति । यदि भवन्त इदं मे कार्यं कुर्युस्तदाऽहमपि भवतामुपकारं करिष्यामी*त्येवंरूपेणेत्यर्थः । मिश्रग्रहणे इति । अन्यथा प्रतिपदोक्तपरिभाषया मिश्रश्लक्ष्णैरिति समासस्यैव ग्रहणे *तद्वैयर्थ्यं स्पष्टमेव ।

अकार्णवेष्टकिकामिति । *क्रमेण "सम्पादिनि" ( पा० सू० ५-१-९९ )इति ठञ्, "छेदादिभ्यो नित्यम्"( पा० सू० ५-१-६४) इति ठक्, "तस्मै हितम्"( पा० सू० ५-१-५) इति छः, "तस्मै प्रभवति"(पा० सू० ५-१-१०१) इति ठक् । विगार्द्दभिकेति । "तदर्हति"(पा० सू० ५-१-६३) इति ठक् । गार्द्दभरथिकादन्य इति । *न चास्य गर्द्दभरथार्हणकर्तृभिन्न इत्यर्थः, तत्रार्थतोऽर्हत्वाभावस्यापि बोधनादस्येव गुणप्रतिषेधः, यथा घटभिन्न इत्युक्ते घटत्वाभाववानिति प्रतीयत इति वाच्यम् । न गर्द्दभरथमर्हतीति गर्द्दभरथस्य नञर्हाभ्यां युगपदेकार्थीभावविवक्षायां *परत्वात्तद्धिते *एकदेश-

---

मिश्रश्चानुप ( पा० सू० ६-२-१५४ ) । तृतीयाया इति वर्त्तते । *इत्येवंरूपेणेति । पणबन्धशब्दस्येदृशेऽर्थे रूढिरिति भावः । *तद्वैयर्थ्यम्=अनुपसर्गग्रहणवैयर्थ्यम् । प्रतिपदोक्तसमासविधायकेऽनुपसर्गस्यैव पाठात् । ब्राह्मणमिश्र इति प्रत्युदाहरणस्य यदा ब्राह्मणै राजकार्यसाधनाङ्गीकारे कृते सति राज्ञा कस्यचिद्द्यत्वनाङ्गीकारः क्रियते तदा प्रवृत्तिः ।

नञो गुणप्रतिषेधे ( पा० सू० ६-२-१५५ ) । अत्र गुणशब्दो जातिसंज्ञाक्रियातिरिक्तधर्मपरः । अलमित्यन्तद्वन्द्वस्यार्थशब्देन बहुव्रीहिः । *क्रमेण= उदाहरणक्रमेण । मूले नञः किमिति । गुणप्रतिषेधे इत्येवास्तु प्रतिषेधश्च नञ एव दृश्यत इति प्रश्नः । विगार्द्दभरथिक इत्यत्र गार्द्दभरथिकशब्दस्य विशब्देन निपातानामनेकार्थकतया नञ्समानार्थेन मयूरव्यंसकादित्वात्समासेऽपि प्रसङ्गः स्यादित्युत्तरम् । गुणप्रतिषेधे किमिति । एतदभावेऽपि नञा समासे गुणस्यैव प्रतिषेधो गम्येतेति प्रश्नः । अन्योन्याभावार्थकत्वं यत्र नञस्तत्रान्तोदात्तत्वम्मा भूदित्युत्तरम् । किन्तु तत्राव्ययपूर्वपदप्रकृतिस्वर एव । तत्र प्रतियोगितावच्छेदकात्यन्ताभावस्य स्वावच्छिन्नप्रतियोगिताकभेदसमनियतत्वाभिप्रायेण शङ्कते—*न चेति । वाच्यमिति परेणान्वयः । *परत्वात्तद्धिते=नञ्समासविधायकशास्त्रापेक्षया "छेदादिभ्यः" ( पा० सू० ५-१-६४ ) इत्यस्य परत्वात्तद्धिते । *एकदेशद्वारकेति । गर्द्दभरथिकशब्दस्य योऽर्थो गर्द्दभरथकर्मकार्ह-

द्वारकसामर्थ्यमाश्रित्य तद्धितान्तेन समासे *आरोपितं गर्दभरथमर्हतीत्य-र्थकेऽतिप्रसङ्गवारणार्थत्वात् । न च *प्रत्ययार्थोपसर्जनगर्दभरथस्य नञर्था-पेक्षत्वेनासामर्थ्यात्ततस्तद्धितो दुर्लभः । अस्मादेव गुणप्रतिषेधात् ज्ञापका-न्नञर्थसापेक्षादपि तद्धितोत्पत्तिस्वीकारात् । *स्पष्टञ्चेदं "नञ्पूर्वात्तत्पुरु-

---

णकर्त्ता तदेकदेशगर्दभरथस्य प्रतियोगित्वेनान्वयस्य विवक्षितत्वादस्त्येव तद्वारकं सामर्थ्यमिति भावः । एकदेशद्वारकसामर्थ्ये समासप्रवृत्तिश्च 'विस्पष्ट-पटुः' इत्यत्र दृष्टैव । *आरोपितमिति । एतेन द्रव्यभेदप्रतीतौ विश्रान्तिः सूचि-ता । *प्रत्ययार्थोपसर्जनेति । यद्यप्युभयोरेककाले यदा विवक्षा तदा न प्रत्यया-र्थोपसर्जनत्वं सिद्धं तथाप्यर्हणांशे विशेषणताऽस्त्येवेति सापेक्षत्वशङ्का । *स्प ष्टञ्चेदमिति । "न नञ्पूर्वात्" ( पा० सू० ५-१-१२१ ) इति सूत्रे प्रतिषेध्यस्या-निर्देशेन कस्यायम्प्रतिषेध इत्याशङ्क्य त्वतलोः प्रतिषेध इति समाधाने इष्येते नञ्पूर्वात्तत्पुरुषात्त्वतलौ-अब्राह्मणत्वम्, अब्राह्मणतेति प्रतिपाद्य न नञ्पूर्वादि-त्यधिकारसूत्रमित्यभिप्रायेणाह उत्तरम्पठति—न नञ्पूर्वादित्युत्तरस्य प्र-तिषेधः । न नञ्पूर्वादित्युत्तरस्य भावप्रत्ययस्य प्रतिषेधः क्रियते इत्येवमभि-हिते पृथ्वादिभ्य इत्यादिना परिगणिताभ्यः प्रकृतिभ्य उत्तरो भावप्रत्ययो वि-धीयते न च तत्र काचिन्नञ्पूर्वा प्रकृतिर्गृह्यते तदन्तविधिस्तु नास्ति "ग्रहणव-ता" ( पा० भा० ) इत्यनेन प्रतिषेधादिति पूर्वपक्षे यत्र साक्षादन्तशब्द उपा-त्तस्तत्र प्रयोजनम्भविष्यति "पत्यन्तपुरोहितादिभ्यो यक्" ( पा० सू० ५-१-१२८ ) इति परेणाभिहिते यद्येतावत्प्रयोजनं स्यात्तत्रैवायं ब्रूयात्पत्यन्ताद्यग् भवति पत्यन्तान्नञ्तत्पुरुषान्नेति समाधाय एवन्तर्हि ज्ञापयत्याचार्य उत्तरो भावप्रत्ययो नञ्पूर्वाद्बहुव्रीहेर्भवतीति कथितम् । अविद्यमानाः पृथवो यस्येति विवक्षायां यथा । एवङ्कथिते नेष्यते त्वतलावेवेष्येते इत्येवम्प्रतिपादने एवन्तर्हि ज्ञापयत्याचार्य उत्तरो भावप्रत्ययः सापेक्षादपि भवतीति । किमेतस्य ज्ञापने प्रयोजनम् ? नञ्समासादन्यो भाववचनः स्वरोत्तरपदवृद्ध्यर्थमित्युक्तन्तदुपप-न्नम्भवति । न पृथोर्भाव इत्यर्थविवक्षया नञर्थसापेक्षत्वेनासामर्थ्यादप्राप्त इम-निज्ज्ञापकाद्भवत्याप्रथिमेति । एवम्प्रकारेण नञ्पूर्वात्तत्पुरुषादुत्तरतद्धितविषये प्र-त्ययोत्पत्तिरूपम्प्रयोजनमभिहितम् । अस्यायम्भावः—सापेक्षत्वेनासामर्थ्यादप्रा-प्तस्तद्धित इति न नञ्पूर्वादिति प्रतिषेधो न कार्यः, स तु कृत इति ज्ञापयति ततश्च न नञ्पूर्वादिति प्रतिषेधस्य त्वतलविषये चारितार्थ्यमिति । ततः सि-द्धान्तिनोक्तमेतदपि नास्ति प्रयोजनमाचार्यप्रवृत्तिर्ज्ञापयति सर्वे एते तद्धिताः सापेक्षाद्भवन्ति । यद्यन्नञो गुणप्रतिषेधे सम्पाद्यर्हहितालमर्थास्तद्धिता इत्या-हेति । एवम्प्रकारेण न नञ्पूर्वादिति सूत्रम्प्रत्याख्यातम् । एवं तत्सूत्रीयभाष्यप्रघ-ट्टकेन नञर्थस्यैकदेशान्वयेन सापेक्षत्वेऽपि गुणप्रतिषेधग्रहणाज्ज्ञापकात्तद्धितो-त्पत्तिर्भवतीत्यर्थः स्वीक्रियत इति बोध्यम् । न नञ्पूर्वेति सूत्रभाष्यस्य व्या-

षात्"(पा० सू० ५-१-१२१) इति सूत्रे भाष्ये । *यत्तु कैयटेन एतद्-न्तोदात्तत्वविधानमेवैतदर्थज्ञापकमित्युक्तं, तन्न । वत्सेभ्यो न हित इत्यर्थे प्रधानस्य नञर्थापेक्षत्वेऽप्युपसर्जनवत्सानां तदर्थानपेक्षत्वेन तद्धितोत्पत्तिसाम्राज्ये *सूत्रसार्थक्यात् । *किं चेदृशेऽर्थेऽपि हितस्य धर्मिण एव प्रत्ययार्थतया तत्र नञर्थान्वयेऽत्यन्ताभावार्थकत्वे हिताभाव एव प्रतीयते न तु हितत्वरूपगुणप्रतिषेधः *भेदार्थकत्वे तु अस्मद्रीत्यैव गुणप्रतिषेधार्थत्वमुपपाद्यम् । *एवञ्च नञर्थानपेक्षवत्सशब्दात्पूर्वं प्रत्यये *पश्चान्नञ्समासेऽपि *तदुदाहरणं *सुलभम् । *किं च त्वदुक्तरीत्या प्रत्ययार्थस्य सापेक्षत्वेऽपि प्रकृत्यर्थस्य तत्त्वाभावात्सापेक्षादपीति भाष्योक्तज्ञाप्यासिद्धिः । *वत्से युगपदुभयान्वयविवक्षेति न वक्तुं युक्तम् । तथाहि सति वत्सभिन्नहित इत्येवं प्रतीत्या गुणप्रतिषेधानवगमादि*त्याहुः । अगर्दभरथशब्दा-

---

ख्यानावसरे कैयटेन तु यथोपपादितन्तद् दूषयति—*यत्त्विति ॥ तत्र हि यदयमिति प्रतीकमुपादाय कैयटेनाभिहितम्–वत्सेभ्यो न हित इत्यादौ प्रतिषेधापेक्षणात्तद्धितानुत्पत्तौ नञः परस्य सम्पाद्याद्यर्थतद्धितान्तस्यान्तोदात्तविधानमनुपपन्नं, तत्कृतं सामान्येन सर्वस्तद्धितो नञर्थापेक्षादपि भवतीति ज्ञापयतीति, वत्सेभ्यो न हित इति एवं कथनेन प्रधानस्य सापेक्षत्वं स्पष्टमेव। कैयटोक्त्या "नञो गुणप्रति" (पा० सू० ६-२-१५५) इति सूत्रस्य सम्पूर्णस्य ज्ञापकता लभ्यते सा न युक्तेत्याह—*सूत्रसार्थक्यादिति । पूर्वोक्तकैयटरीत्याऽर्थविवक्षायान्तन्मतसिद्धं सूत्रसार्थक्यन्तदा भवेद्यदा गुणप्रतिषेधो गम्येत, तदेव तु नोपपद्यत इत्याह—*किञ्चेदृश इत्यादिना । स्वाभिमतं गुणप्रतिषेधग्रहणस्य ज्ञापकत्वमुपपादयति—*भेदार्थकत्वे त्विति । न गर्दभरथमर्हतीत्यर्थे युगपद्गर्दभरथस्य नञर्थस्य च तद्धितार्थान्वयविवक्षायाम्भेदार्थकत्वं स्पष्टमेव । *एवञ्च=सूक्ष्मेक्षिकायां सत्याञ्च । *पश्चान्नञ्समासे=वत्सीयशब्दस्य नञा समासे । *तदुदाहरणम्=सूत्रोदाहरणम् । *सुलभमिति । तथा च न भाष्योक्तज्ञापनसङ्गतिरिति भावः । भाष्यकारोच्चारितभाष्याक्षराणामप्यसङ्गतिः कैयटमत इत्याह—*किञ्चेति । ननु न वत्सेभ्यो हित इत्यर्थविवक्षायान्न नञर्थस्य हितार्थेऽन्वयविवक्षा, अपि तु वत्सशब्दार्थे, हितार्थे तु वत्सान्वयविवक्षेति सापेक्षत्वं वत्सस्यास्त्येवेति ज्ञाप्यसङ्गतिरत आह—*वत्से युगपदिति । न च भवदुक्तरीत्या गुणप्रतिषेधग्रहणमात्रस्य भाष्यकाराभिप्रेतत्वे यदयङ्गुणप्रतिषेधग्रहणङ्करोतीत्येव वक्तव्ये सम्पूर्णसूत्रोपादानमनर्थकमिति वाच्यम् । अभावज्ञानस्य भावज्ञानसापेक्षसिद्धिकत्वेन प्रतियोगिप्रसिद्धिसौलभ्याय तथोच्चारणात् ।

*इत्याहुः=भाष्याक्षरस्वारस्यवेत्तारः । यदेतस्य सूत्रस्योदाहरणम्

त्प्रत्यये तु नञ्पूर्वपदकतद्धितान्तोत्तरपदकसमासाभावात्स्वरस्याप्राप्तिरेवेति न तद्व्यावृत्त्यये तत् । अवोढेति । "अर्हे कृत्यतृचः" (पा० सू० ३-३-१६९) इति तृच् । अत्र *नञ्स्वर एव ।

ययतोश्चा (पा० सू० ६-२-१५६) । ययतोः किम् ? अपाणिनीयम् । नञः किं ? विपाश्या । तद्धिते किमिति । अत्र ताद्धिते इति नानुवर्तते इति मतान्तरम् "अत्वसन्तस्य" (पा० सू० ६-४-१४) इति सूत्रे *आकरे ध्वनितम् । तत्र हि ण्यति तदनुबन्धकपरिभाषयाऽस्याप्रवृत्तिरित्युक्तम् । दन्त्यादन्यदिति । *उक्तरीत्या आरोपितदन्तमत्रमित्य-

---

'अकार्णवेष्टकिकम्' इत्यादि, तत्र कथङ्गुणप्रतिषेधार्थकत्वञ्च इत्याकाङ्क्षानुत्थानाय गुणपदार्थनिर्वचनं मूले गुणो हीत्यादि । प्रवृत्तिनिमित्तमिति । तत्त्वञ्च वाच्यत्वे सति वाच्यवृत्तित्वे सति स्वभिन्नवाच्यानधिकरणत्वम् । प्राथमिकं वाच्यपदमर्थधर्मिकशक्तिग्रहीयमुख्यविशेष्यताश्रयभिन्नपरम् । द्वितीयन्तु तदीयविषयतासामान्याश्रयपरमेव । येन सम्बन्धेन यस्य प्रवृत्तिनिमित्तताऽभिप्रेता तत्सम्बन्धावच्छिन्ना वृत्तिताऽत्र ग्राह्या । जात्याकृतिव्यक्तित्रितयस्य "जात्याकृतिव्यक्तयः पदार्थाः" ( गौ० सू० ) इति गौतमसूत्राद्वाच्यत्वेऽपि घटादिशब्दानाञ्जातिरेव प्रवृत्तिनिमित्तन्न त्वाकृतिस्तस्या अवयवसंयोगविशेषरूपायाः प्रवृत्तिनिमित्तत्वे साक्षात्तस्य संयोगस्याऽवयव्यवृत्तितया स्वाश्रयसमवेतत्वस्य प्रवृत्तिनिमित्ततावच्छेदकत्वं वाच्यम्, जातेः प्रवृत्तिनिमित्तत्वे तु समवायसम्बन्धस्तथेति लाघवमिति जातिरेव प्रवृत्तिनिमित्तम् । आकाशशब्दस्य शब्दावच्छिन्ने शक्तिरिति शब्दत्वे प्रवृत्तिनिमित्तताऽऽकाशशब्दस्य स्यादिति तद्वारणाय द्रव्यत्वे घटादिपदप्रवृत्तिनिमित्ततावारणाय वा वाच्यत्वे सतीति । मृन्मयव्यक्तिविशेषे घोटकोऽयमिति यत्र प्रयोगस्तत्राकृतिप्रकारकोपस्थितिसत्वेऽप्याकृतेः प्रवृत्तिनिमित्ततावारणाय वाच्यवृत्तित्वमिति । तदुपादाने चाकृतेर्न समवायेन वाच्यवृत्तित्वमिति नातिप्रसङ्गः । दध्यादिद्व्यणुकसमवेतत्र्यसरेणावतिव्याप्तिवारणाय स्वभिन्नवाच्यानधिकरणत्वस्य निवेशः । प्रमेयत्वे प्रमेयत्वरूपप्रमेयाधिकरणेऽव्याप्तिवारणाय स्वभिन्नेति । न चैवमपि प्रमेयत्वे स्वभिन्नवाच्यत्वाधिकरणत्वस्य सत्त्वादव्याप्तिरेवेति वाच्यम् । स्वसमनियतभिन्नं यच्छक्यं तदनधिकरणत्वस्य विवक्षितत्वात् । *नञ्स्वर एवेति । अव्ययपूर्वपदप्रकृतिस्वर इत्यर्थः ।

ययतोश्चातदर्थे ( पा० सू० ६-२-१५६ ) । तद्धिता इत्यनुवर्त्तते । वचनविपरिणामेन ययतोरित्यत्र तस्य सम्बन्धः । *आकरे=भाष्यातिरिक्ते । भाष्यत्वत्रोदासीनमिति भावः । *उक्तरीत्या=अवयवद्वारकसम्बन्धेऽपि तद्धितोत्पत्तिरित्युक्तप्रकारेण ।

र्थोऽस्य बोध्यः । उदाहरणे तु दन्तभवभिन्नमिति, दन्तभवत्वाभाववदिति यावत् ।

अचूका(पा०सू० ६-२-१५७)। नञः परमिति । *गुणप्रतिषेधार्थान्नञ इत्यर्थः । *दीक्षित इति । अस्य हि शास्त्रनिषिद्धः पाको न तु तत्राशक्तोऽयम् । अन्योऽयं पचादिति । अस्यारोपितपाककर्तेत्यर्थः पूर्ववत् । *उत्तरकृत्यशोकादिसाहचर्यादत्राचूकौ कृतावेव । कृद्ग्रहणादेव *गतिकारकपूर्वत्वेऽपि भवति *अमपच इति ।

नञः पराविति । गुणप्रतिषेधार्थादित्येव पक्तुं । नेति । केचित्तु पक्तुं समर्थोऽपि न पचतीत्येवमाक्रुश्यत इत्याहुः । *अत्र "अचूकौ" (पा० सू० ६-२-१५७) इति सूत्रमनुरोधादनुवर्तितम् । "नवा" (पा० सू० १-१-४४) इति सूत्रभाष्ये तु अत्राचूकाविति नानुवर्तते विभाषासूत्रसापेक्षया आक्रोशे इदमेव पूर्वविप्रतिषेधेन भवती*ति स्थितम् । *"सञ्ज्ञायाम्" (पा० सू० ६-२-१५९) इत्युत्तरसूत्रे गुणप्रतिषेध इति नानुवर्तते इति नात्र पक्षे तद्वैयर्थ्यम् ।

अदेवदत्त इति । देवदत्तः सन् यस्त*त्कार्यं न करोति स एवमाक्रुश्यते ।

कृत्योकेष्णु (पा० सू० ६-२-१६०) । *अत्र गुणप्रतिषेध इति सम्बध्यते । *इकारादेरिति । इदं खिष्णुज्विधावाकरे स्पष्टम् । *चारु,

---

अच्काव ( पा० सू० ६-२-१५७ ) । *गुणप्रतिषेधार्थेति । तथाचापच इत्यस्य न पक्तुं शक्त इत्यर्थोऽभिप्रेतो यत्र तत्रोदाहरणम्, पचादन्य इत्यर्थविवक्षायान्तु प्रत्युदाहरणम् । *दीक्षित इतीति । दीक्षा=यज्ञदीक्षा, यज्ञारम्भः सङ्कल्पः, सा सञ्जाता यस्य तस्य पाको निषिद्ध इत्यर्थः । प्रकृतसूत्रे तद्धिता इति न सम्बध्यत इत्याशयेनाह—*उत्तरेति । *गतिकारकपूर्वत्वेऽपीति । अविलिख इति यथा । इगुपधलक्षणः कः । कृन्मात्रग्रहणसत्त्वात्कृद्ग्रहणपरिभाषाप्रवृत्तेः स्थलान्तरमाह—*अप्रपच इतीति । *अत्र="आक्रोशे च" ( पा० सू० ६-२-१५८ ) इति सूत्रे । *इति स्थितमिति । यदि प्रकृतसूत्रे तयोरनुवृत्तिः स्यात्तदा पूर्वविप्रतिषेधविचारासङ्गतिः स्पष्टैव । नन्वेवमत्र तयोरननुवृत्तौ "संज्ञायाम्" ( पा० सू० ६-२-१५९ ) इत्युत्तरसूत्रवैयर्थ्यन्तस्याप्याक्रोश एव प्रवृत्तेरत आह—*संज्ञेति । *तत्कार्यम्=देवकार्यम् । *अत्र="कृत्य" ( पा० सू० २-१-६८ ) इति सूत्रे । भाष्यसम्वादेन पूर्वत्र गुणप्रतिषेध इत्यस्यासम्बन्धेऽपि मण्डूकप्लुत्यात्र सम्बध्यते । *इकारादेरितीति । खिष्णुच्प्रत्ययस्य भूधातोर्विधानात्तस्योपदेश उदात्तत्वाद्वलादिलक्षणेनेडागमेन सिद्धे खिष्णुजित्यत्रेकारोच्चारणमिष्णुज्ग्रहणेन खिष्णुच्प्रत्ययस्यापि ग्रहणार्थमिति ह्यनुबन्धकत्वेऽपि न तदनुबन्धकपरिभाषाप्रवृत्तिरिति भावः । चार्वादीन् प्रदर्शयति—*चारुसाध्वित्यादिना ।

साधु, यौधिकि अनङ्गमेजय, वदान्य, अकस्मात्, वर्तमान वर्धमानत्वरमाणध्रियमाणरोचमानाः सञ्ज्ञायाम् । ध्रीयमाणक्रीयमाणशोभमाना अपि क्वचित्पठ्यन्ते । विकारसदृशे, व्यस्तसमस्ते, गृहपति, गृहपतिक, राजाह्नोश्छन्दसि । राजान्होरिति गणसूत्रं, छन्दस्यं वैतौ चार्वादीत्यर्थः ।

विभाषातृन्नन्नतीक्ष्णशुचिषु (पा० सू० ६-२-१६१) । *नञः पराण्येतान्यन्तोदात्तानीत्यर्थः । गुणप्रतिषेध इत्येव । पक्षेऽव्ययेति । एतत्सूत्रं यावत् "तत्पुरुषे शालायाम्"(पा० सू० ६-२-१२३) इति सूत्रस्थतत्पुरुषपदानुवृत्तेरिति भावः । वृत्तौ चेदं स्पष्टम् ।

बहुव्रीहाविदमे (पा० सू० ६-२-१६२) । अनयोरिति । क्रियागणनवृत्त्योः प्रथमशब्दपूरणप्रत्ययान्तयोरुत्तरपदयोरित्यर्थः । इदं प्रथममस्येति । गमनमागमनं वेति शेषः । *तृतीयेतीति । एवञ्च तृतीयापूर्वपदप्रकृतिस्वरोऽत्रेति भावः । *इदं पदमञ्जर्यां स्पष्टम् । केचित्तु तृतीयेत्यत्र योगविभागस्य भाष्येऽनुक्तत्वात् सुप्सुपेति समासेऽन्तोदात्तत्वमेव । अयमिव प्रथम इदंप्रथमः स इत्युदाहर्तुमुचितं, प्राथम्यमेव साधारणो धर्म इत्याहुः । अयं प्रथम इति । देवदत्तादि । अयं प्रथम एषामिति । अयं पाकादिः प्रधानं येषामित्यर्थः । उत्तरपदस्य कार्यित्वादिति । *समासान्तस्तु समासावयव एवेति भावः ।

*द्विस्तना चतुःस्तनेति । *द्विस्तनीत्यादौ तु ङीषि सतिशिष्टत्वादन्तोदात्तत्वं सिद्धमिति तन्नोदाहृतमित्याहुः ।

विभाषाछन्दसि (पा० सू० ६-२-१६४) । पूर्वसूत्रोक्तस्य वि-

---

विभाषातृन्नन्न ( पा० सू० ६-२-१६१ ) । नञ इत्यनुवर्त्तते, तदाह-*नञः पराणीति । वेति शेषः ।

बहुव्रीहौ ( पा० सू० ६-२-१६२ ) । अत्र प्रथमपूरणयोरित्यन्तपदार्थापेक्षयाऽवयवषष्ठी । *तृतीयेति योगविभागादिति । हेतावत्र तृतीया । *इदम्-योगविभागेन समास इत्येतत् । समासान्ता इत्यत्र समासपदं समासीयोत्तरपदपरमिति वादिमतेऽन्तोदात्तत्वङ्कप एव स्यात्परन्तु तन्मतनिरासेन समासावयवत्वमेव व्यवस्थापितमिति यत्र कप् तत्रापि कपः पूर्वस्यैवोदात्तत्वम्भवतीत्याशयेनाह—*समासान्तस्त्विति ।

सङ्ख्यायाः स्तनः ( पा० सू० ६-२-१६३ ) । सङ्ख्यावाचकात्परः स्तनशब्दो बहुव्रीहावन्तोदात्तः स्यात् । *द्विस्तनेति । पाषाणमयी प्रतिमाऽत्र विशेष्या । तेनास्वाङ्गत्वात् ङीष् न । ङीष् यत्र तत्र विशेषमाह—*द्विस्तनीत्यादा-

भाषा। *पक्षे पूर्वपदप्रकृतिस्वरः।

सञ्ज्ञायामिति। एतयोरुत्तरपदयोरन्त उदात्तो बहुव्रीहौ सञ्ज्ञायाम्।

विश्वामित्र इति। "मित्रे चर्षौ"(पा० सू० ६-३-१३०) इति दीर्घः। *अत्र "बहुव्रीहौ विश्वं सञ्ज्ञायाम्"(पा० सू० ६-२-१०६) *इत्येव भवति, अनृषौ तु विश्वमित्रे इदमेव *परत्वादित्युक्तम्।

व्यवायिनोऽन्तरम्(पा० सू० ६-२-१६६)। *उदाहणप्रत्युदाहरणयोरन्तरशब्दस्य परनिपातोऽस्मादेव ज्ञापकात्। आत्मान्तर इति। आत्मा स्वभावोऽन्यो यस्येत्यर्थः। अन्यस्वभाव इत्यर्थ इति युक्तः पाठः। अन्तरं किम्? वस्त्रव्यवधायकः।

मुखं स्वाङ्गम् (पा० सू० ६-२-१६७)। बहुव्रीहावुत्तरपदभूतमङ्गमित्यादि*लक्षणलक्षितस्वाङ्गवाचि मुख(१)मन्तोदात्तमित्यर्थः।

*पूर्वपदेति। *उच्चैरादीनि पूर्वपदान्यन्तोदात्तान्यत्र। उपमानलक्षण इति। "निष्ठोपमानात्"(पा० सू० ६-२-१६९) इत्युत्तरसूत्रविहितः। बाध्यत इति। पूर्वविप्रतिषेधादिति भावः। वृत्तौ स्पष्टमेतत्। अत्राव्ययशब्देनाव्ययीभावस्यापि ग्रहणमिति "अव्ययीभावश्च"(पा० सू० १-१-४१) इति सूत्रस्थ*भाष्यस्वरसः।

प्रक्षालितेति। कृद्ग्रहणपरिभाषयाऽस्य निष्ठान्तत्वम्। तस्यापि वैकल्पिकत्वात्तदभावे आह-पूर्वपदप्रकृतिस्वरत्वेनेति। सिंहमुखे पक्षे पूर्वपदप्रकृतिस्वरः।

जातिकाल (पा० सू० ६-२-१७०)। जात्यादिभ्यः परं

---

विति। *पक्षे=उत्तरपदस्य स्तनशब्दस्यान्तोदात्तत्वाभावे। *अत्र बहुव्रीहाविति। विश्वो मित्रं यस्येति विग्रह इत्यादिः। *इत्येव भवतीति। पूर्वपदान्तोदात्तत्वमेव भवतीत्यर्थः। *परत्वात्="बहुव्रीहौ प्रकृत्या" (पा० सू० ६-२-१) इत्येतदपेक्षया परत्वात्। अन्तरशब्दस्य सर्वनामत्वेन पूर्वनिपाते प्राप्ते आह—*उदाहरणेति। *लक्षणलक्षितमिति। तेन स्वमङ्गमिति यौगिकस्य व्यावृत्तिः।

नाव्ययदिक्शब्द [पा० सू० ६-२-१६८]। "मुखं स्वाङ्गम्" (पा० सू० ६-२-१६७) इति सम्पूर्णं सूत्रमनुवर्त्तते। अव्ययादिभ्यः परं स्वाङ्गवाचि मुखमन्तोदात्तन्न स्यात्। अनेन सूत्रेणान्तोदात्तत्वनिषेधे सति यः स्वरः प्रवर्त्तते तमाह—*उच्चैरादीनीति। *भाष्यस्वरस इति। तत्र लुङ्मुखस्वरोपचारा इत्य

---

१ शब्दोऽन्तोदात्त इत्यादर्शपुस्तके पाठः।

क्रान्तं बहुव्रीहावन्तोदात्तं कृतादीन्वर्जयित्वा न चेद्बह्वर्थात्परं क्रान्तं भवति । मासजात इति । मासो जातो यस्येति विग्रहः । "कालाः परिमाणिना"(पा० सू० २-२-५) इति तत्पुरुषे तु *सिद्धमेवान्तोदात्तत्वम् । पुत्रजात इति । *पुत्रशब्दोऽन्तोदात्तः । वस्त्रशब्दस्त्वनूप्रत्ययान्तत्वादाद्युदात्तः । नञ्विषयत्वात्कुण्डमाद्युदात्तम् ।

वा जाते (पा० सू० ६-२-१७१) । पक्षे पूर्वपदप्रकृतिस्वरः । दन्तशब्दः स्वाङ्गत्वादाद्युदात्तः, मासो ग्रामादित्वात्तथा । सुख, दुःख, कृच्छ्र, अस्र, आस्र, अलीक, प्रतीप, करुण, कृपण, तृप्र, सोढ एते सुखादय इति हरदत्तः । *सुखदुखगहनकृच्छ्रास्रतृमालीकप्रतीपकरुणाः कृपणसोढौ इमे सुखादयो दश गणे पठिता इति श्लोकगणकारः । गणरत्ने तु आस्यशब्दोऽपीह पठ्यत इत्युक्तम् । पूर्वसूत्रे जातातिरिक्तक्तान्तमु*दाहर्तुमुचितम् ।

नञ्सुभ्याम् (पा०सू० ६-२-१७२) । उत्तरपदमिति । *समासान्तानां समासावयवत्वेऽपि *कपि पूर्वम्"(पा० सू० ६-२-१७३) इत्यस्मादेव ज्ञापकादुत्तरपदाधिकारेऽप्यत्र सूत्रे समासस्यैव कार्यित्वं, अन्यत्रोत्तरपदस्यैव कार्यित्वम् । समासान्तरहितस्येति । स्पष्टञ्चेदम् "अन्तः"(पा० सू० ६-२-९२) इति सूत्रे भाष्ये ।

कपि पूर्वम् (पा० सू० ६-२-१७३)। नञ्सुभ्यां परं यदुत्तरपदं

---

नेन मुखस्वरनिवृत्तेरव्ययीभावस्याव्ययत्वे प्रयोजनकथनात् । *सिद्धमेव=समासस्येति सिद्धमेव । *पुत्रशब्दोऽन्तोदात्त इति । फिटस्वरेणेति शेषः । एवञ्च पूर्वपदप्रकृतिस्वरेण मध्योदात्तमेतत् । एवमुत्तरेषु यथायथमूहनीयम् ।

वा जाते ( पा० सू० ६-२-१७१ ) । अवयविनो जातशब्दस्यान्तपदार्थनिरूपिताधारत्वविवक्षया वृक्षे शाखेतिवत्सप्तमी । सुखादिस्वरूपं शृङ्गग्राहिकान्यायेनेह दर्शयति—*सुखदुःखेत्यादिना । *उदाहर्तुमुचितमिति । प्रकृतसूत्रविषयतासत्त्वादिति शेषः । एवञ्च 'मासपक्वः' इत्याद्युदाहरणम् ।

नञ्सुभ्याम् ( पा० सू० ६-२-१७२ ) । उत्तरपदग्रहणमत्र सम्बध्यते एवञ्च तस्यैव कार्यित्वे प्राप्ते आह—*समासान्तानामिति । *कपि पूर्वमित्यस्माज्ज्ञापकादिति । यदि नञ्सुभ्यामिति पञ्चमीनिर्देशादुत्तरपदमेवेह कार्यि स्यात्तदा यत्र कप् तत्रापि कपः पूर्वस्योत्तरपदान्तस्य कार्यं सिद्धमेवेति तस्य सूत्रस्य वैयर्थ्यं स्पष्टमेव । एवञ्चेहोत्तरपदान्तस्य समासस्येत्येवार्थस्तावतापि प्रकृतसूत्रेणाव्रीहिरित्यादावन्त्यस्येकारादेरुदात्तत्वं सिद्धम् । यत्र च समासान्तो "ऋक्पूः" ( पा० सू० ५-४-७४ ) इत्यनेन विहितस्तत्रानृच इत्यादावकारप्रत्ययस्योदात्तत्वमिति भावः ।

तस्य कपि परे पूर्वमुदात्तमित्यर्थः, *तदन्तस्य समासस्येत्यर्थो वा । पूर्वसूत्रापवादः ।

ह्रस्वान्ते (पा० सू० ६-२-१७४) । नञ्सुभ्यां कपि इति वर्त्तते । कपिपूर्वमित्यस्यापवादः । *ह्रस्वान्तोत्तरपदसमासे नञ्सुभ्यां परस्य कपिपूर्वस्योत्तरपदस्यान्त्यात्पूर्वमुदात्तमिति सूत्रार्थः । पूर्वग्रहणमिति । पूर्वग्रहणेऽनुवर्त्तमाने*पुनस्तद्ग्रहणमित्यर्थः । एतदर्थमेव पूर्वसूत्रे पूर्वग्रहणम्, अन्यथा कपीत्येव वदेदिति भावः । अज्ञक इति । *अन्त्यात्पूर्वं उदात्तभावी नास्तीति*एतदभावे कपि पूर्वमिति प्राप्तम*नेन नियमेन व्यावर्त्यते तेन "नञ्सुभ्याम्"(पा० सू० ६-२-१७२)इति*कप एवोदात्तत्वमिति भावः ।

बहोर्नञ्वत् ( पा० सू० ६-२-१७५ ) ननु लाघवाद्*बहुः सु-

---

कपि पूर्वम् ( पा० सू० ६-२-१७३ ) । पूर्वसूत्रेणोत्तरपदान्तस्य समासस्य कार्यविधानात्समासान्तानां समुदायावयवत्वेनोत्तरपदान्तसमासपदेन कबन्तस्य ग्रहणात्कप एवोदात्तत्वे प्राप्ते ततः पूर्वस्योदात्तत्वमिष्यत इत्यस्यारम्भः । एवञ्चाब्रह्मबन्धूक इत्यादौ कपः पूर्वस्योकारादेरुदात्तत्वम्भवतीति भावः । *तदन्तस्य समासस्येति । अत्र समासस्येति षष्ठी कपि पूर्वमिति पूर्वापेक्षयाऽवयवत्वार्था । तथा च पूर्वसूत्राद्विशेष इति बोध्यम् ।

ह्रस्वान्ते ( पा० सू० ६-२-१७४ ) । उत्तरपदग्रहणं प्रकृतसूत्रे आवर्तते । तयोरेकमुत्तरपदावयवके लाक्षणिकन्तदेकदेशस्योत्तरपदस्य ह्रस्वान्त इति विशेषणमित्याशयेनाह--*ह्रस्वान्तोत्तरपदकसमास इति । उत्तरपदस्येति षष्ठी प्रकृतसूत्रेऽन्त्यापेक्षया । एवञ्चाव्रीहिकः, सुमाषक इत्यादौ व्रीहिशब्दावयवो यो रेफादुत्तर ईकारादिः स एवोदात्तो भवति । मूले प्रवृत्तिभेदेनेति । ह्रस्वान्तेऽन्त्यादित्येकं वाक्यम् । पूर्वमित्यनुवर्त्तते । ह्रस्वः अन्तो यस्येति बहुव्रीहावन्यपदार्थं उत्तरपदं समासो वेत्याशयेन पूर्वत्र उत्तरपदे समासे वेति व्याख्यातम् । पूर्वमिति द्वितीयं वाक्यम् । तच्च नियमार्थम् । कपि परे यदुत्तरपदन्तद्घटितसमासेऽन्त्यादेव पूर्वमिति, तेन यत् फलितन्तदाह—न कपि पूर्वमिति । *पुनस्तद्ग्रहणम्=पूर्वग्रहणम् । यदुक्तन्मूलेऽज्ञकइत्यत्र कबन्तस्यैवेति तदुपपादयति-*अन्त्यात्पूर्वं इति । *एतदभावे="ह्रस्वान्ते" ( पा० सू० ६-२-१७४ ) इति सूत्राभावे । *अनेन नियमेन= ह्रस्वान्ते उत्तरपदे कपि पूर्वस्योदात्तत्वमेति नियमेन । *कप एवोदात्तत्वमिति । "कपि पूर्वम्" ( पा० सू० ६-२-१७३ ) इति सूत्रस्य नियमेन व्यावृत्तौ प्राथमिकप्राप्तिकं यत् "नञ् सुभ्याम्" ( पा० सू० ६-२-१७२ ) इति तस्य प्रवृत्तौ कप एवोदात्तत्वमित्यर्थः ।

बहोर्नञ्वत् ( पा० सू० ६-२-१७५ ) । *बहुः सुवदिति । बहुशब्दः सु-

वदित्येवास्तु इत्यत आह-बहुमित्र इति। नञोजरमरमित्र" ( पा० सू० ६-२-११६ ) इत्यस्यातिदेशेन प्रवृत्त्यर्थं तथोक्तमिति भावः। बहुमाने *पूर्वपदप्रकृतिस्वरः, बहुः फिट्स्वरेणान्तोदात्तः।

न गुणादयो ( पा० सू० ६-२-१७६ )। अवयववाचिनो गुणादयो बहोः परा इत्यर्थः। "बहोर्नञ्वत्" ( पा० सू० ६-२-१७५ ) इति प्राप्तिः, गुण आमन्त्रणे चुरादेः पचाद्यच्। नान्तोदात्ता इति। *नञ्वद्भावप्राप्तस्वरोपलक्षणमे*तत्। *तेन 'बहुगुणका'इत्यादौ "कपि पूर्वम्" "ह्रस्वान्तेऽन्त्यात्पूर्वम्"(पा० सू० ६-२-१७३, १७४)*इति बोध्यम्।

उपसर्गात्स्वाङ्गन्ध्रु ( पा० सू० ६-२-१७७ )। प्रादेरुत्तरं स्वाङ्गवाचिपर्शुशब्दभिन्नोत्तरपदकसमासध्रुवार्थबोधके यदुत्तरपदं तदन्तोदात्तं स्याद् बहुव्रीहावित्यर्थः। यद्वा ध्रुवार्थबोधकसमासघटकमित्यर्थकं स्वाङ्गविशेषणमेव। उद्बाहुरिति। न हि बाहोर्नित्यमूर्ध्वदिगवस्थानमिति भावः। *तत्पुरुषे त्वव्ययपूर्वपदप्रकृतिस्वर एव। *पर्शुः पार्श्वम्।

प्रवण इति। बहुव्रीहौ तत्पुरुषे च पूर्वपदप्रकृति*स्वरः प्राप्तः। "प्रनिरन्तः"( पा०सू०८-४-५ )इति णत्वं परिवने "परिप्रत्युपाप"( पा० सू०६-२-३३ ) *इति प्राप्तम्। उपसर्गात्किम्? शरवणो देशः। बहुव्रीहावित्यस्य निवृत्त्यर्थं समासग्रहणम्।

---

वदिति। बहुशब्दः सुव्यपदेशं लभत इत्यर्थः। तथा च बहुशब्दस्य सुग्रहणेन ग्रहणे "नञ्सुभ्याम्" ( पा० सू० ६-२-१७२ ) इति सिद्धमेव पुनर्नञ्वदिति सूत्रान्तरप्रवृत्त्यर्थमित्याशयेनोदाहरणान्तरोपादानमिति भावः। बहुमित्र इत्यस्य बहूनि मित्राणि यस्येत्यर्थः। अत्रोत्तरपदस्य मित्रशब्दस्याद्युदात्तत्वम्भवति। *पूर्वपदप्रकृतिस्वरः=सप्तम्यन्तस्य पूर्वपदस्य बहुशब्दस्य प्रकृतिस्वरः।

न गुणादयो ( पा० सू० ६-२-१७६ )। बहोरिति वर्त्तते। अवयवा इति श्रुतत्वाद् गुणादीनामेव विशेषणम्। न्यूनतामपाकर्तुमाह-*नञ्वद्भावेति। *एतत्=नान्तोदात्ता इति वाक्यम्। *तेन=उपलक्षणत्वेन। *इतीति। चेत्यस्यैतच्छेषत्वेनोभयोरप्यप्रवृत्तिरिति फलितमिति भावः।

उपसर्गात् स्वाङ्गम् ( पा० सू० ६-२-१७७ )। उपसर्गग्रहणम्प्रादीनामुपलक्षणम्। नेति नानुवर्त्तते। अस्वरितत्वात्। *तत्पुरुष इति। प्रपृष्ठ इत्यादौ तत्पुरुष इत्यर्थः। आयुधवाचिनः पर्शुशब्दस्य स्वाङ्गवाचकत्वाभावादाह—*पर्शुः पार्श्वमिति।

वनं समासे ( पा० सू० ६-२-१७८ )। समास इति पदं समाससामान्यग्रहणार्थम्। उक्तार्थकमुपसर्गग्रहणमनुवर्त्तते। *स्वरः प्राप्त इति। स बा-

अन्तः (पा०सू०६-२-१७९)। अन्तर्वणमित्यव्ययीभावेऽप्येतदेव।

न निविभ्याम् ( पा०सू० ६-२-१८१ )। निविभ्यामुत्तरोऽन्त-शब्दो नान्तोदात्त इत्यर्थः ।

परेरभितोभावि मण्डलम् ( पा०सू०६-२-१८२)। अभित उभयतो भवत्यवश्यमिति "सुप्यजातौ" (पा०सू०३-२-७८) इति ।णिनिः। नद्यादौ हि कूलाद्युभयतो भवति। परिकूलमिति। बहुव्रीहिः प्रादिसमासोऽव्ययीभावो वा। अत्र "परिप्रत्युपा" ( पा० सू० ६-२-३३ ) इति "कूलतीर" ( पा० सू० ६-२-१२१ ) इति वा प्राप्तम्।

प्रादस्वाङ्गं सञ्ज्ञायाम् ( पा० सू० ६-२-१८३ )। प्रादुत्तरपदमस्वाङ्गवाचि सञ्ज्ञायामन्तोदात्तं समासमात्रे इत्यर्थः। *प्रग्रहादयः प्रगृहादयो वा प्रादिसमासा बहुव्रीहयो वा। निरुदकादिराकृतिगणः।

अभिमुखा शालेति। प्रादिसमासः बहुव्रीहिर्वा।

अपाच्च ( पा० सू० ६-२-१८६ )। मुखमिति वर्त्तते। अपमुखमिति। *अव्ययीभावेऽपि "परिप्रत्युपाप" ( पा० सू० ६-२-३३ ) इति प्राप्तम्।

---

ध्यत इति शेषः। *इति प्राप्तमिति। इति सूत्रम्प्राप्तमित्यर्थः। तेन पर्यादीनाम्प्राप्तस्य प्रकृतिभावस्य प्रतिषेधः।

अन्तः ( पा० सू० ६-२-१७९ )। लुप्तपञ्चम्यन्तमेतत्।

अन्तश्च (पा० सू० ६-२-१८०)। उपसर्गग्रहणम्मण्डूकप्लुत्याऽनुवर्त्तते। अकारान्तान्तशब्दप्रकृतिकप्रथमान्तमेतत्।

न निविभ्याम् ( पा० सू० ६-२-१८१ ) प्रथमान्तमन्त इत्यनुवर्त्तते।

परेरभितो भावि [ पा० ६-२-१८२ ]। बहुव्रीहिरित्यादि। तेष्वयं विशेषः—बहुव्रीहितत्पुरुषयोः। पूर्वपदप्रकृतिस्वरयोः प्राप्तिरव्ययीभावे तु "परिप्रत्युपाप" [ पा० सू० ६-२-३३ ] इति "कूलतीर" ( पा० सू० ६-२-१२१ ) इत्यस्य वा प्राप्तिः। बहुव्रीहौ परितः कूलमस्येति परिगतं कूलादित्यर्थकाव्ययीभावेऽत्यर्थः।

प्रादस्वाङ्गम्( पा० सू० ६-२-१८३ )। अस्वाङ्गवाचकत्वं ग्रहादीनामपीत्याशयेनाह-*प्रग्रहादय इति। प्रपदमिति प्रत्युदाहणे पूर्वप्रकृतिस्वरः। प्रपदशब्दः पादाग्रवाची।

निरुदकादीनि च ( पा० सू० ६-२-१८४ )। निर्गतमुदकं यस्मादिति बहुव्रीहिः। निर्गतञ्च तदुदकमिति तत्पुरुषो वा। अर्थाभावेऽव्ययीभावो वा यद्यप्यत्र सम्भाव्यते तथापि तत्रैतत्सूत्रप्रवृत्तिं विनापि समासान्तोदात्तत्वेनैव सिद्धम्।

एतदेव चेति । अन्यथा स्वस्वाश्रित्वादेव सिद्धं स्यादिति भावः । सीरनामेति । नामग्रहणं सीरेणैव संबध्यते न स्फिगादिभिः । स्फिगपूतकुक्षीणां पृथग्ग्रहणात् । *हरदत्तप्रामाण्यादेषां पर्यायत्वमवगम्यते । *व्याख्यानादेवास्य सीरग्रहणेन संबन्ध इति तत्त्वम् । स्फिगपूतकुक्षिग्रहणमिति । वीणाग्रहणसहितः पाठो* ऽपपाठः ।

प्रादिसमास इति । अव्ययीभावे तु समासान्तोदात्तत्वेनापि सिद्धम् ।

पुरुषश्चाऽन्वा ( पा० सू० ६-२-१९० ) । अन्वादिष्टो*ऽप्रधानशिष्टः । यथा भिक्षामटेत्यादौ । यद्वा कस्मिंश्चित्कथिते योऽन्यः पश्चात्कथ्यते सोऽन्वादिष्टः ।

अतेर ( पा० सू० ६-२-१९१ ) । अकृदन्तं पदशब्दश्चेति । *अयञ्चार्थो वृत्तौ । *भाष्यात्तु अतेरुत्तरपदमन्तोदात्तं कृदन्तपदशब्दञ्च वर्जयित्वेत्यर्थः प्रतीयते ।

नेरनि ( पा० सू० ६-२-१९२ ) । निशब्दादुत्तरपदमन्तोदात्तं स्यादनिधानेऽर्थे । निर्मूलमिति । निर्गतं मूलमस्येति निर्गतं मूलमिति

---

अभेर्मुखम् ( पा० सू० ६-२ १८५ ) मुखं स्वाङ्गमिति तु न भवति । "नाव्यय" ( पा० सू० ६-२-१६८ ) इति निषेधात् । अस्य सूत्रस्याध्रुवार्थत्वप्रदर्शनाय मूलेऽभिमुखा शालेति । अव्ययीभावेऽपीति । मुखं वर्जयित्वेत्यर्थकाव्ययीभावेऽपीत्यर्थः ।

स्फिगपूत ( पा० सू० ६-२-१८७ ) । *हरदत्तप्रामाण्यादिति । एतेन कोशादिसाधकाभावो ध्वनितः । *व्याख्यानात् । शिष्टकृतादिति शेषः । एवञ्च नात्र ज्ञापकापेक्षेति भावः । *अपपाठ इति । वीणाया अस्वाङ्गत्वात्सिद्धेरिति शेषः ।

अनोरप्र ( पा० सू० ६-२-१८९ ) । मूले प्रादिसमास इति कथनमुत्तरपदार्थस्याप्राधान्यसूचनाय ।

पुरुषश्चा ( पा० सू० ६-२-१९० ) *अप्रधानशिष्ट इति । अप्राधान्येन कथित इत्यर्थः । यथा सभृत्यं राजानं पूजयेत्यत्र भृत्यानामन्वादिष्टत्वम् । अनुशब्दोपादानस्वारस्यसिद्धयद्वेतिपक्षे तु यदा देवदत्तानयने प्रवृत्तम्पुरुषम्प्रति पश्चाद्यज्ञदत्तश्चानयेति कथिते सति यज्ञदत्तस्यान्वादिष्टत्वम् ।

अतेर ( पा० सू० ६-२-१९१ ) *अयञ्चार्थः=पदशब्दस्य कार्यित्वप्रापकशब्देन कथितोऽर्थः । *भाष्यात्त्विति । "अतेर्धातुलोप इति वक्तव्यम् । अकृत्पद इति ह्युच्यमाने इह च प्रसज्येत—शोभनो गार्ग्योऽतिगार्ग्य इति । इह

वार्थः । अव्ययीभावे तु समासान्तोदात्तत्वेनैव सिद्धम् । निदण्ड इति । *निशब्दोऽत्र निधानार्थं ब्रवीति । * प्रादयो हि वृत्तिविषये सक्रियं साधनमाहुः । अनित्यत्वादिति । अंश्वादिषु राजन्शब्दपाठ एवा*त्र ज्ञापको बोध्यः । अंशु, जन, राजन्, उष्ट्र, खेटक, अजिर, आर्द्रा, श्रवण, कृत्तिका, अर्धपुर, इत् ।

उपाद्द्व्य (पा० सू० ६-२-१९४)। गौर, तैष, तैल, लेट, लोट, जिह्वा, कृष्ण, कन्या, गुध, कल्प, पाद इत् । उपगौर इति । अव्ययपूर्वपदस्वरः । *बहुव्रीहावप्येवम् ।

सोरव (पा० सू० ६-२-१९५)। सोरुत्तरपदमन्तोदात्तं निन्दायां तत्पुरुषे इत्यर्थः । पूजायामेवेति । *एवञ्च कर्मप्रवचनीयत्वेन गतित्वाभावात् थाथादिस्वरोऽत्र नास्ति । निन्देति । *अनर्थे उपस्थिते यः सुखायमान आस्ते तं प्रतीदं वाक्यमसूयया प्रयुज्यते । कुब्राह्मण इति । *नञ्कुनिपातानामिति*ईषदर्थे चरितार्थम् ।

---

च न स्यात्-अतिकारकः, अतिपदा शक्करी" इति भाष्यात्वित्यर्थः । अस्माद्भाष्याद्यथाश्रुतन्यासेऽतिपदेत्यत्राव्याप्तिः प्रतीयते सा भवदुक्तार्थे न स्यादिति पदशब्दस्य वर्ज्यमानत्वप्रापकं व्याख्यानमेव यथाश्रुतन्यासस्योचितमिति भावः । अतिकारक इत्यस्य कारकमतिक्रान्तइत्यर्थ इति धातोरप्रयोग एव धातुलोपः । वृत्तिविषयेऽतिशब्दः क्रान्तार्थवृत्तिरिति धातोर्लोपः स्पष्टः ।

नेरनिधाने (पा० सू० ६-२-१९२) अनिधानेऽर्थे गम्ये इत्यर्थः । निर्गतम्मूलमस्येत्यर्थे मूलस्य भूतलान्निर्गतस्य प्रकाशता प्रतीयत इति भवत्युदाहरणम् । प्रत्युदाहरणात्तु दण्डो निहित इत्यर्थे प्रतीते प्रकाशताया न प्रतीतिः किन्तु स्थापनमात्रमिति नायं स्वर इत्याह—*निशब्द इति । निशब्दस्य निधानार्थकत्वे साधकमाह-*प्रादयो हीति । *अत्र=समासान्तविधेरनित्यत्वे ।

उपाद्द्व्यज (पा० सू० ६-२-१७४)। गौरादिभिन्नन्द्व्यजिति वाक्यार्थः । उपगतो गौरः=उपगौर इत्यत्र योऽव्ययपूर्वपदप्रकृतिस्वरस्स च न तत्पुरुष एव किन्तु समासान्तरेऽपीत्याह-*बहुव्रीहाविति ।

सोरवक्षेपणे (पा० सू० ६-२-१९५)। अवक्षेपणन्निन्दा । सुप्रत्यवसित इत्यत्र थाथादिस्वरेणैव सिद्धमिति शङ्कां वारयति—*एवञ्चेति । ननु सुशब्दो यदि पूजायामस्ति तदा कथमत्रावक्षेपणप्रतीतिरत आह—*अनर्थेइति । ननु सोरित्यस्याभावे कुब्राह्मण इत्यत्र यदि प्रकृतसूत्रेणान्तोदात्तत्वन्तदा "तत्पुरुषे तुल्यार्थ" (पा० सू० ६-२-२) इति सूत्रघटकाव्ययपदेन नञ्कुनिपातानामेव ग्रहणार्थं यत्परिगणनन्तत्र कुग्रहणवैयर्थ्यापत्तिरत आह—*नञ्कुनिपातेति । *ईषदर्थे इति । ईषदर्थककुशब्देन यत्र समासस्तत्रावक्षेपणाविवक्षायामित्यर्थः ।

विभाषोत्पु ( पा० सू० ६-२-१९६ )। *तत्पुरुषेऽपि उत्पुच्छशब्दे यदुत्तरपदन्तदन्तोदात्तं वेत्यर्थः। उत्क्रान्तः पुच्छादिति। अत्राव्ययपूर्वपदप्रकृतिस्वरः प्राप्तः। यदा त्विति। *केचित्तु अस्य*लाक्षणिकत्वादत्र न ग्रहणम्। किंचायमुत्पुच्छो*न तत्पुरुषः किं तु*तदवयवकः, नापि तद्घटकः पुच्छशब्द उत्तरपदमित्याहुः।

मूर्धन्नित्यकृतेति। केचित्तु अत *एव बहुव्रीहिग्रहणं चरितार्थम्। अन्यथा मूर्द्धस्वित्येव वदेत्। बहुव्रीहिभिन्नश्च समासान्तविरहादेव वारयिष्यते। न च-द्विदन्त इति बहुव्रीहौ वयोवाचकत्वाभावाद्दत्रादेशाभावे शसादौ "पद्दन्न" ( पा० सू० ६-१-६३ ) इति*ददादेशे *प्रवृत्त्यर्थं बहुव्रीहिग्रहणस्यावश्यकत्वेन समासान्तनिर्देशे गौरवम्। किं च समासान्तनिर्देशेऽत्र*प्रवृत्तिर्न सुलभा। कृतसमासान्तसाहचर्येण दत्रादेशस्यैव ग्रहणापत्तेः। *अत एव द्वयोर्दन्ता इति विगृह्य द्विदतः पश्येत्यादौ षष्ठीतत्पुरुषे न प्रवृत्तिः,-इति वाच्यम्। यथान्यासे हि पूर्वोत्तरसाहचर्येण विभक्त्यनिमित्तददादेशस्यैव ग्रहणात् शसादिनिमित्तकस्य बहिरङ्गत्वेनासिद्धत्वाच्च भाष्योक्तप्रकृत्यन्तरत्वपक्षेऽत्र तदप्राप्तेश्च। *एवञ्च बहुव्रीहिग्रहणमपि समासान्तानित्यत्वे ज्ञापकमित्याहुः। बहुव्रीहिकार्यत्वादिति। अन्त स्वरस्येति शेषः। तदेकदेशत्वाच्चेति। समासान्तस्येति शेषः। समासान्तोदात्तत्वं एतत्सूत्रविहितं पक्षे भवत्येवेति। अत्र च सूत्रे समासस्यैव कार्यित्वमिति सिद्धान्तः।

सक्थञ्चा ( पा० सू० ६-२-१९८ )। "बहुव्रीहौ सक्थि"

---

विभाषोत्पुच्छे (पा० सू० ६-२-१९६)। सप्तमीस्वारस्यादाह—*तत्पुरुषेऽपि इत्यादि। उत्पुच्छश्दस्तत्पुरुषसंज्ञक इत्याशयेन यदा त्विति मूलेऽभिहितम्। तत्र उदिति पृथक्पदमित्याशयेनाह—*केचित्त्विति। *लाक्षणिकत्वादिति। णिङन्तप्रकृतिकाजन्तस्य विलम्बितप्रतीतिकत्वादित्यर्थः। *न तत्पुरुष इति। पुच्छमुदस्यतीत्यर्थे "पुच्छभाण्ड"(पा० सू० ३-१-२०) इति णिङि चिकीर्षिते यद्यप्युपसर्गसमानाकारस्योच्छब्दस्य पृथक्कृतिस्तथाप्युच्छब्दस्य पुच्छशब्देन सामर्थ्यसम्भेदेनेतिन्यायान्न तु तत्प्रकृतिकाजन्तेन तस्य सम्बन्ध इति उदित्यस्य नाजन्तेन समासस्य प्रवृत्तिरित्याशयः। *तदवयवक इति। अजन्तावयवकः तद्घटकः। अजन्तसमुदायघटकोऽकरान्तः पुच्छशब्द इत्यर्थः। *अत एव=अकृतसमासान्तनिर्देशादेव। *ददादेश इति। कृते सतीति शेषः। *प्रवृत्त्यर्थमिति। अस्येत्यादिः। *अत्र=पद्दन्नित्यादेशे। *अत एव=बहुव्रीहि

( पा०सू० ५-४-११३ ) इति षजन्तः सक्थशब्दोऽन्तोदात्तो वा स्यात् क्शब्दान्तात्परश्चेन्न भवतीत्यर्थः । चित्त्वान्नित्यमन्तोदात्तत्वे प्राप्ते विकल्पोऽयम् । "नञ्दुःसुभ्यः" ( पा०सू० ५-४-१२१ ) इत्यजन्तस्तु न गृह्यते*व्याख्यानात् इत्याहुः । पक्षे पूर्वपदप्रकृतिस्वरः । *"शुक्लगौरयोरादिः"(फि० पा०१ सू० १३) इति गौरः पर्यायेणाद्यन्तोदात्तः ।

परादिश्छन्दसि ( पा० सू० ६-२-१९९ ) । इदञ्च समासमात्रे । परादिश्चेत*स्योदाहरणम्-उरुक्षया इति । उरूणां बहूनां क्षयाणित्यर्थः । क्षयशब्दः "क्षयो निवासे" ( पा०सू०६-१-२०१ ) इत्याद्युदात्तः । "समासस्य"( पा० सू० ६-१-२२३ ) इत्यन्तोदात्तत्वं बाधित्वा कृदुत्तरपदप्रकृतिस्वरेणोत्तरपदाद्युदात्तत्वं प्राप्तं तत् थाथादिस्वरेण बाधितमतो बाहुलकेनोत्तरपदाद्युदात्तत्वमिति वेदभाष्ये ।स्थितम् । *इदञ्च ।क्षि निवासगत्योरित्यतो बाहुलकादधिकरणे एरजन्तः क्षयशब्द इत्यभिप्रायेण । यदि तु घान्तः क्षयशब्दस्तदा थाथादिस्वराप्राप्त्या कृदुत्तरपदप्रकृतिस्वरेणैवेदं सिद्धम् । *अस्योदाहरणन्तु 'चोदयन्ती सूनृतानाम्'इति । सुपूर्वादूनयतेः क्विप् सुतरामूनयत्यप्रियमिति सून प्रियं तच्च तदृतञ्चेति सूनृतम्"अयस्मयादीनि"(पा०सू० १-४-२०) इति भत्वान्नलोपो न । परान्तोदाहरणम्—मुष्टिहत्यया इति । मुष्ट्या हननं मुष्टिहत्या "हनस्त च"(पा० सू० ३-१-१०८) इति क्यप् । कृदुत्तरपदप्रकृतिस्वरः*अत्र प्राप्तः । त्रिचक्रे बहुव्रीहित्वात् पूर्वपदप्रकृतिस्वरे प्राप्ते परान्तोदात्तः । पूर्वान्तत्वे-विश्वायुरिति । विश्वमायुर्यस्मिन्धने इति बहुव्रीहिरयम् । विश्वशब्दः क्वन्नन्तत्वादाद्युदात्तस्तस्य पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वं प्राप्तम् । "व्यत्ययो बहुलम्" ( पा० सू० ३-१-८५ ) इत्यनेनैव सिद्धे "परादिः"

---

ग्रहणादेव । *एवञ्च=उक्तरीत्या समासान्तभिन्नस्य वारणे च । *व्याख्यानादिति । अक्रान्तादित्युपादानमूलकव्याख्यानादित्यर्थः । यदि "नञ्" (पा०सू०५-४-१२१) इति सूत्रविहिताजन्तस्य ग्रहणं स्यात्तदा चक्रसक्थ इत्यादौ प्राप्तिरेवास्य न स्यादित्यक्रान्तादिति व्यर्थं स्यादिति भावः । एतत्सूत्रप्रवृत्त्यभावपक्षे पूर्वपदप्रकृतिस्वरे सति यः स्वरो भवति तमाह-*शुक्लगौरयोरिति । तत्र हि "वा नामधेयस्य"(फि० पा०१सू०१२)इत्यतो वाग्रहणानुवृत्त्याऽऽदेरुदात्तत्वाभावेऽन्तोदात्तत्वम् । *इदम्=वेदभाष्यीयव्याख्यानानुरोधेन मूलोक्तमुरुक्षया इत्यस्योपादानम् । *अस्योदाहरणम्=परादिरित्यस्योदाहरणम् । अत्र ऋतशब्दस्यादिरुदात्तः । *अत्र प्राप्त-

( पा० सू० ६-२-१९९ ) इति सूत्रं त्रिचक्रादीनाञ्छन्दस्यन्तोदात्तत्व-मिति वार्तिकं च न कार्यमित्यर्थः। यद्वा*वाग्रहणेऽनुवर्त्तमाने बहुलग्रहणमे-तदर्थलाभार्थं कृतमित्यर्थः। यतो व्यत्ययो बहुलपदार्थ इति भावः। बहुल-ग्रहणादेव 'पुरः सो अस्तु' इत्यादौ शिट्स्वराप्रवृत्तिः,'अश्वत्थन्वन्तं यदनस्था बिभर्त्ति' इत्यत्र "भीह्री" ( पा० सू० ६-१-१९२ ) इत्यस्य च स्वरस्या-प्रवृत्तिरित्याद्यूह्यम्। इति समासस्वराः॥

## अथ तिङन्तस्वराः

पचति गोत्रमिति। गोत्रं स्वकुलं पीडयतीत्यर्थः। एवं हि कुत्सा भवति। पचतिपचति गोत्रमिति। अनेकार्थत्वात्करोत्यर्थे पचिः। विवाहादौ गोत्रं पुनः पुनः*सुखाकरोतीत्यर्थः। पाठविशेषणमिति। *योगविभागः कार्यः। कुत्सनाभीक्ष्ण्ययोरिति, गोत्रादिनीति। परिभाषेयम्। यानि कुत्सना-भीक्ष्ण्यविषयाणि तान्येवात्र शास्त्रे गोत्रादीनीत्यर्थः। यत्र गोत्रादिपदघटितवा-क्येन कस्यचित् कुत्सा बोध्यते क्रियागतमाभीक्ष्ण्यं वा तानीति यावत्। अन्य-त्रापीति। "च न चिदिव"(पा०सू०८-१-५७)इत्यादौ।*गोत्र,ब्रुव,प्रवचन, प्रयतन, पचन, यजन, प्रहसन, प्रकथन,प्रत्यायन प्रचक्षण, विचक्षण, अव-चक्षण, स्वाध्याय, भूयिष्ठ,वा नामेत्येतद्वा निहन्यते इत्यर्थोऽस्य; वृत्। तिङः किम्?*कुत्सितङ्गोत्रम्। खनतीति। गोत्रं समेत्य कूपङ्खनतीत्यर्थः।

तिङ्ङतिङः। ( पा० सू० ८-१-२८ )। "पदस्य" ( पा० सू० ८-१-१६ ) "पदात्" ( पा० सू० ८-१-१७ ) "अनुदात्तं सर्वमपादा-दौ" ( पा० सू० ८-१-१८ ) इत्यधिकारात् अत्र प्रकरणे निहन्य-

---

इति। तस्मिन् सति हकाराकारस्योदात्तत्वं स्यात्। *वाग्रहणेऽनुवर्त्तमान इ-ति। वासमानार्थके विभाषाग्रहणेऽनुवर्त्तमान इत्यर्थः। बिभर्त्तीत्यत्र "भीह्री" ( पा० सू० ६-१-१९२) इत्यस्याप्रवृत्तौ तु "अभ्यस्तानामादिः"(पा० सू० ६-१-१८९ ) इति भवतीति बोध्यम्। इति समासस्वरविवरणम्।

## अथ तिङन्तस्वरविवरणम्

तिङो गोत्रादीनि ( पा० सू० ८-१-२७ )। गम्यमानयोरिति शेषः। गो-त्रमित्यस्य व्याख्या स्वकुलेति। *सुखाकरोतीति। एवं हि कर्तुः स्तुतिर्भवति न तु कुत्सेति न कुत्सनग्रहणेनान्यथासिद्धिरिति भावः। पाठविशेषणमिति व्याचष्टे—*योगविभाग इति। गोत्रादीनि दर्शयति-*गोत्रेत्यादिना। *कुत्सितं

ते*सर्वानुदात्तं क्रियते इत्यर्थः । *यथाऽत्र सर्वस्यानुदात्तता तथा *निरू-
पितं युष्मदस्मत्प्रकरणे । *उदात्तस्वरितगुणविशिष्टमेव निहन्यते नान्यदिति
"स्वरितो वाऽनुदात्ते" (पा० सू० ८-२-६) इति सूत्रस्थ*भाष्यस्वरसः ।
अतिङ इति किम्?पचति भवति । *पाको भवतीत्यर्थः । *वस्तुतोऽतिङ्ग्रहणं
व्यर्थम् । समानवाक्याधिकारस्य वार्त्तिकोक्तस्यावश्यकत्वात् । एकतिङ् हि
तत्र वाक्यमिति भाष्ये स्पष्टम् । अपादादौ किम् । तन्त्वा वाजेषु वाजिनं
वाजयामः शतक्रतो ।

निपातैर्यद्यदि ( पा० सू० ८-१-३० ) । यदादियत्रान्तानां

---

गोत्रमिति । अत्र गोत्रशब्दो "गुधृवीपचिवचियमिनदिक्षादिभ्यस्त्रः" ( उ० पा० ४
सू० ६१६ ) इति त्रप्रत्ययान्तत्वादन्तोदात्तः । *सर्वानुदात्तमिति । सर्वेऽनुदा-
त्ता यस्मिन्नित्यर्थकमेतत् । नन्वतिङः परस्य सर्वस्यादेरित्यर्थः "आदेः परस्य"
( पा० सू० १-१-५४ ) इत्येकवाक्यतया स्यादिति कथं सर्वानुदात्तता पदस्येत्या-
शङ्कायामाह-*यथात्रेति । *निरूपितमिति । तत्र हि विनिगमनाविरहात्सर्वानुदा-
त्तत्वस्य लाभेऽपि सर्वग्रहणं स्पष्टार्थम् । "अलोन्त्यस्य"(पा० सू० १-१-५२)"आदेः
परस्य"(पा०सू०१-१-५४)इत्यनयोस्त्वत्र न प्राप्तिः । अनुदात्तं तिङ् इति श्रुतप्रथ-
मान्तानुरोधेन पदस्येत्यस्य विभक्तिविपरिणामेन प्रथमान्तत्वकल्पनया स्थानषष्ठ्य-
भावादिति निरूपितमित्यर्थः । विशेषमाह-*उदात्तस्वरितेति ।*भाष्यस्वरस इति ।
तत्रैकादेशस्वरोऽन्तरङ्गः सिद्धो वक्तव्य इति हि वार्त्तिकम् । उदात्तानुदात्तयोर्य
आदेशस्स आन्तरतम्यात् स्वरितो भवति तस्य स्थाने "एकादेश उदात्तेन"(पा०
सू० ८-२-५) इत्यनेनोदात्तः क्रियते इति मते यद्यपि ब्राह्मणास्तुदन्ति, ब्राह्मणा लि-
खन्ति इति प्रयोगे शस्यान्तिशब्दावयवाकारस्य च य एकादेशस्तस्यान्तरतम्यात्
स्वरितस्य"तिङ्ङतिङः"(पा०सू०८-१-२८)इति निघातविधानादुदात्तस्याप्रयोगः
सिद्धस्तथापि स्वरितापवादःउदात्त "एकादेश उदात्तेन (पा०सू०८-२-५) इति
सूत्रेण विधीयत इति दर्शने जातस्याप्युदात्तस्यासिद्धत्वात् "तिङ्ङतिङः"( पा०
सू० ८-१-२८ )इति निघातो न स्यादिति प्रयोगे उदात्त एव श्रूयेतेत्यभिप्रायेणोक्त-
वार्त्तिकस्य किम्प्रयोजनमिति प्रश्ने सर्वानुदात्तार्थमिति प्रयोजनमुक्तं, तेन भा-
ष्यग्रन्थेनोदात्तस्वरितगुणयोगि तिङन्तं निहन्यते इति पक्षो लभ्यते । *पाको
भवतीति । पचिक्रिया भवतीत्यर्थो भवतीति तिङन्तार्थभवनक्रियाविशेष्यको
बोधः । तत्र भवनक्रियाम्प्रति पचिक्रियायाः कर्तृत्वात्कारकान्वितक्रियाबोधकं
तिङन्तचयो वाक्यमिति लक्षणेनास्यैकवाक्यत्वान्निघातः स्यादित्यभिप्रायः ।
वार्त्तिकानुसारेणाह—*वस्तुत इति । तदुक्तम्भाष्ये—अतिङ्वचनमनर्थकम् ।
समानवाक्याधिकारादिति । *अनन्वयापत्तेरिति । पदार्थैकदेशत्वेनानन्वयापत्ते-

द्वन्द्वे तृतीयाया: सौत्रो लुक् न तु युक्तशब्देन समासः । निपातैरिति विशेषणस्या*नन्वयापत्तेः । *यदादयो निपातत्वादाद्युदात्ताः । सर्वनाम्नो यच्छब्दस्य तु न ग्रहणम् । यत्रयद्योः *पृथग्ग्रहणात् ।

*यद्यदार्थे च हेतौ च, विचारे यदिचेच्चणः ।
हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः ॥
कच्चित्प्रश्ने निषेधे नेत् प्रशंसायां कुवित्स्मृतः ॥

नेन्निषेधे, यत्रेत्साधारे । हन्त करोति । "हन्ताऽहं पृथिवीमिमां निदधानि हवेहवा"इत्यादौ दधानीत्यादेर्निघातश्छान्दसः । (१) (*एतेन हन्तो नु० किमाससे इत्यादिव्याख्यातम् । *हन्तो इत्यखण्डो वा निपातो बोध्यः । तथैव पदकारैः पाठात् । *नेदेवमायुनजन्नत्र देवाः) । युनजान्निति युजेर्लेटि रूपम् । अन्यश्चेन्नाभिगच्छति । *अत्र नचाभ्यां विच्छिद्य इच्छब्दस्य पदकाले पाठात् निपातसमुदायाविमौ । चण् इति चेदर्थे णित् । अन्यत्र त्वणित् । इन्द्रश्च मृळयाति नः । इन्द्रश्चेदस्मान् सुखयेदित्यर्थः । कच्चिदिति निपातसमुदायः प्रश्ने । चक्रमा कच्चिदिति । यद्यप्यत्र एतैरेव परभूतैर्योगे नियमो नान्यैरित्यर्थक "यद्धितुपरम्" ( पा० सू० ८-१-५६ ) इति नियमान्निषेधो न प्राप्नोति तथापि छान्दसत्वेनात्र नियमाप्रवृत्तिरित्याहुः । निपातैः किम्? *यत् कूजति शकटम् । इणः शतरि इणो यणि रूपम् । ननु प्रतिपदोक्तत्वात् यथादिभिर्निपातैः साहचर्याच्च निपात एव ग्रहीष्यते, सत्यम् । अत्र प्रकरणे क्वचिन्न्यायाप्रवृत्तिज्ञापनार्थत्वात् । तेन "यावद्यथाभ्याम्" ( पा० सू० ८-१-३६ ) इति सूत्रे वत्वन्तस्याव्ययस्य च यावत्शब्दस्य ग्रहणमिति स्पष्टमाकरे । युक्तग्रहणं किम्? अन्यत्र साक्षादन्वितैरेतैः परम्परासंबद्धे मा भूदिति । यत्र क्वच ते मनोदक्षं दधस उत्तरम् । यत्रेत्यस्योत्तरमित्यनेन*सा-

---

रित्यर्थः । *यदादय इति । सूत्रपठिता इति शेषः । *पृथग्ग्रहणादिति । यदि सर्वनाम्नो यच्छब्दस्य ग्रहणं स्यात्तदा यत्रग्रहणं न कार्यं तस्य यत्र प्रयोगस्तत्र यच्छब्दयोगादेव निषेधस्य सिद्धत्वादिति भावः । निपातानां यदादीनामर्थानाह—*यद्यदार्थे चेति । *एतेन=छान्दसत्वेन । अत्र समाधानान्तरमाह—*हन्तो इत्यादि । नेच्छब्दयोगे प्रतिषेधोदाहरणमाह—*नेदेवमिति । नेच्चच्छब्दयोरखण्डनिपातत्वं वारयति—*अत्रेति । *यत् कूजतीति । अत्र कूजतीति सर्वानुदात्तम् । परम्परासम्बन्धश्च स्वान्वय्यन्वयित्वरूपो बोध्यः । *साक्षात्स-

(१) कंसान्तर्गतो ग्रन्थे आदर्शपुस्तके नास्ति ।

क्षाद् संबन्धः । दध धारणे अनुदात्तेत् ।

नहप्र ( पा० सू० ८-१-३१ ) । नहेति निपातसमुदायो निषेधे वर्त्तते । प्रतिषेधयुक्त इति । *पूर्वं भुङ्क्ष्वेत्युक्ते कर्तव्यतयोपन्यस्तस्य भोजनादेरवज्ञानेऽनज्ञातुरूपालिप्सया पुनः क्रोधेनोपहासेन वा यत्र प्रतिषेधयुक्तं पृच्छ्यते स प्रत्यारम्भ इत्यर्थः । भोक्ष्यसे इति । स्यस्वरेण मध्योदात्तम् । अदुपदेशात्परत्वाद् से इत्यस्य निघातः ।

सत्यं भोक्ष्यसे इति । सत्यशब्दः "सत्यादशपथे" ( पा० सू० ५-४-६६ ) इत्यन्तोदात्तो निपात्यत इत्याहुः ।

अङ्गाप्रा ( पा सू० ८-१-३३ ) । अङ्गेति *लुप्ततृतीयाकम् । अ-प्रातिलोम्यमानुकूल्यम् । अङ्गेति आमन्त्रितत्वादा*द्युदात्तम् । अन्तोदात्तमिदमव्ययम् 'इन्द्रो अङ्ग'इत्यादौ तथादर्शनादित्यन्ये । अङ्ग कूजतीति । अत्राङ्गेत्य*मर्षे, कूजतीत्या*द्युदात्तम् ।

हि च ( पा० सू० ८-१-३४ ) । आनुकूल्ये इत्येव । नेह—हि कूज वृषल । अत्रामर्षे हिशब्दः । उदाहरणेऽवधारणे । स्मशब्दो निपातत्वादाद्युदात्तः, छान्दसे दीर्घत्वे ।

छन्दस्यनेकमपि ( पा० सू० ८-१-३५ ) । अपिना एकमपि । अनृतमिति । हिर्यत इत्यर्थे । यतोऽयं मत्तोऽनृतं वदति अतः पाप्मा पापं न युनाति न व्याप्नोतीत्यर्थः । अनृतवदनदोषेण न युज्यत इत्यर्थः । युञ् बन्धने इत्यस्य रूपं युनातीति । *अग्निर्हि पूर्वमुदजयत्तमिन्द्रोनुदजयत् । *अत्रैकमाद्युदात्तमपरं निहतम् । अत्र हेतुहेतुमद्भावद्योतको

---

स्बन्ध इति । तदन्वयित्वञ्च दधस इत्यस्येति पूर्वोक्तपरम्परासम्बन्ध इहास्तीति भावः । प्रतिषेधयुक्तत्वमुपपादयति—*पूर्वमिति । *लुप्ततृतीयाकमिति । सूत्रे इति शेषो बोध्यः । *आद्युदात्तमिति । कुर्विति प्रत्ययस्वरेणान्तोदात्तमिति शेषः । *अमर्ष इति । प्रत्युदाहरणेऽपि सम्बोधनविभक्त्यन्तमेवाङ्गशब्दो यद्यपि प्रयुज्यते तथाप्यमर्षे सति प्रयुज्यते । एवञ्च प्रयोक्तृसमवेतक्रोधस्य व्यञ्जक इति प्रातिलोम्यमेव । *आद्युदात्तमिति । धातुस्वरेणेति शेषः ।

छन्दस्यनेकमपि ( पा० सू० ८-१-३५ ) । "हि च"(पा० सू० ८-१-३४) इत्यनुवर्त्तते । उदाहरणे यत इत्यस्य यद्यपि साक्षात्सम्बन्धो मत्तपदार्थे तथापि परम्परया द्वयोरपि तिङन्तयोः साकाङ्क्षत्वमस्त्येव । *अग्निर्हीति । अत्र हिशब्दसाकाङ्क्षत्वमजयदित्यनयोस्तयोरनेन निघातनिषेधः प्राप्तस्तथापि विशेष इत्याह—*अत्रैकमिति ।

द्विरित्यनेकमपि तिङन्तं हियुक्तम्। तत्र पूर्वेण सर्वस्य निघातप्रतिषेधे प्राप्ते क्वचिदेकस्य क्वचिदनेकस्येत्येतदर्थमिदम्। छन्दसि दृष्टानुविधानात् यथा प्रयोगं व्यवस्था।

यावद्य (पा० सू० ८-१-३६)। यावदिति निपातानिपातयोरपि ग्रहणमि*त्युक्तम्। आद्यः साकल्ये, द्वितीयः परिमाणोपाधिको वतुबन्तः। *यथा योग्यतादिषु। *भ्यामिति तृतीया।

तु पश्य (पा० सू० ८-१-३९)। पूजायामिति वर्त्तमाने पुनः पूजाग्रहणमनन्तरग्रहणस्य*अनिघातनिषेधस्य चानुवृत्तिनिवृत्त्यर्थम्। निषेधानुवृत्तौ हि "निपातैर्यद्यदि" (पा० सू० ८-१-३०) इत्यस्य प्रतिषेधः सम्भाव्येत। पूजायां किम्? पश्य मृगो धावति। तत्त्वकथनमेतत्। अद्येत्यस्योदाहरणमाह-आदहेति। त्वादीनान्तु 'तु माणवको भुङ्क्ते शोभनम्' इत्याद्यूह्यम्।

अहो च (पा० सू० ८-१-४०)। *पृथग्योगकरणमुत्तरार्थम्। अहो देवः करोति शोभनमत्रापि पूजायामित्येव।

शेषे विभाषा (पा० सू० ८-१-४१)। *पूर्वं पूजायामित्युक्तेरपूजा शेषः। अहो कटामिति। पक्षेऽस्य प्रत्ययस्वरः। अनाश्चर्यभूतमेव वस्तु असूयता आश्चर्यवत्प्रतिपाद्यते न पूजा। शेषग्रहणं स्पष्टार्थम्। पूर्वत्र चानुकृष्टत्वादेव पूजायामित्यस्य निवृत्तेः, योगविभागसामर्थ्याच्च। तेन पूजायां नित्यं तदभावे विकल्प इति व्यवस्थोपपत्तेः।

---

यावद्यथा (पा० सू० ८-१-३६)। *इत्युक्तमिति। "निपातैर्यद्यदि" (पा० सू० ८-१-३०) इति सूत्रव्याख्यानावसर इति शेषः। सौत्रयथाशब्दार्थमाह-*यथेति। यावद्यथाभ्यामित्यस्य पञ्चम्यन्तत्वभ्रमवारणायाह-*भ्यामितीति। तेन यस्मिन्वाक्ये यावद्यथाशब्दयोः परत्वन्तत्रापि निषेधसिद्धिः। देवदत्तः पचति यावदिति यथा।

पूजायाम्नानन्तरम् (पा०सू० ८-१-३७)। अत्रानन्तरमिति तिङित्यस्य विशेषणम्। नेत्यपि प्रकरणप्राप्तमनुवर्तते। एवञ्चाभावाभावस्य प्रतियोगिरूपत्वात्प्रतिप्रसवोऽयमिति फलितमिति बोध्यम्। *अनिघातनिषेधस्य=पूर्वसूत्रविहितनिषेधनिषेधस्य। एवञ्च नेति यत्प्रक्रान्तं तदेवानुवर्त्तते इति सिद्धम्। *पृथग्योगकरणमिति। "तुपश्य" (पा० सू० ८-१-३९) इति पूर्वसूत्र एवाहो शब्दपाठे कर्त्तव्ये पृथग्योगकरणमित्यर्थः। शेषपदार्थं व्याचष्टे—*पूर्वमिति।

पुराच ( पा० सू० ८-१-४२ )। परीप्सा त्वरा । निकटेति । विद्योतनादावध्ययनं प्रतिषिद्धमतस्तदुपन्यासेन त्वरितमधीष्वेति गम्यते । पक्षे द्योतते इत्याद्युदात्तः।*पुराशब्दोऽत्र निपात एव । पूर्वोत्तरसाहचर्यात् । परीप्सेत्यस्य प्रत्युदाहरणमाह—न तेन स्मेति । "लट् स्मे" ( पा० सू० ३-२-११८ ) इति भूते लट् । भूतस्याध्ययनस्य चिरकालप्रवृत्तत्वं गम्यते, न त्वरा ।

नन्वित्यनुज्ञै ( पा० सू० ८-१-४३ ) । किंचित्कर्तुमुद्यतस्यैवंक्रियतामित्यभ्युपगमोऽनुज्ञा, तस्याः प्रार्थनानुज्ञैषणा । ननु गच्छामि भोरित्युदाहरणे वर्त्तमानसामीप्ये लट् । गमनं प्रति मामाज्ञापयेति गम्यते । पृष्टप्रतिवचनाभावात् "ननौ पृष्टप्रतिवचने" [पा० सू० ३-३-१६१] इत्यस्य न प्राप्तिः । नन्वित्यस्यैकनिपातत्वं ज्ञापयितुमितिशब्दः सूत्रे ।

किङ्क्रियाप्रश्नेऽनुप (पा० सू० ८-१-४४) । किमिति*लुप्ततृतीयान्तम् । क्रियाप्रश्न इति किमो विशेषणम्, अनुपसर्गमित्यादि तिङो विशेषणम्,प्रतिषिद्धमित्यप्रतिषिद्धार्थकतिङन्तविशेषणम् । किं देवदत्तः पचति आहोस्वित्पठतीत्यादौ*उभयोः संशयविषयत्वाद् उभयोरपि किमा युक्तत्वेन निघातनिषेधक इति*केचित् । *हरदत्तस्तु उभयोः संशयविषयत्वेऽपि किंशब्देन स्वसन्निहितक्रियाविषय एव प्रश्नो द्योत्यते क्रियान्तराविषयस्त्वाहोस्विदित्यनेन, तस्मात्तस्यैव निघातप्रतिषेध इत्याह । क्रियाप्रश्ने किम्?का-

---

ऽहो इति त्वनुवर्त्तत एव ।

पुरा च परीप्सायाम् ( पा० सू० ८-१-४२ ) । पुराशब्दस्य तृतीयान्तत्वभ्रमं निरस्यति—*पुराशब्दोऽत्रेति । यद्यपि सूत्रान्तरसाहचर्यंन व्यवस्थापकमिति सिद्धान्तस्तथापि निपातप्रक्रमान्निपातस्य शीघ्रोपस्थितिकत्वादित्यर्थः । *लुप्ततृतीयेति । "सुपां सुलुक्"( पा० सू० ७-१-३९ ) इति लुप्ततृतीयान्तमित्यर्थः । *उभयोरपीति । संशयविषयोऽर्थो हि प्रश्नस्य विषयः । संशयविषयता च परस्परभिन्नयोर्विरुद्धयोर्वा भावाभावयोः । एवञ्चात्राहोस्विदित्येतदुपादानादुभयोः संशयविषयत्वेनोभयोः किमा युक्तत्वमिति भावः । *केचिदिति । शब्दस्वारस्यविचारः । आहोस्विच्छब्दः संशयविषयताद्योतकः किंशब्दस्तयोः प्रश्ने । *हरदत्तस्त्विति । यथा किंशब्दः क्रियायां संशयताप्रतिपादकस्तथा आहोस्विच्छब्दोऽपि स्यात्तन्त्रेण प्रश्नविषयताद्योतक इति तस्याशयः । किंशब्दस्य प्रश्नार्थकत्वेन तल्लाभे सिद्धे प्रश्नग्रहणमनर्थक-

रकप्रश्ने मा भूत्। किं भक्तं पचति आहोस्विदपूपानिति। *प्रश्ने किं?*किं-पठतीति पाठः। *किमधीते इत्यपपाठः। उपसृष्टत्वात्। किं द्विज इति। द्विजस्यापठनं हि प्रतिषिद्धम्। *इदन्तु युक्तमुदाहरणं—किं संन्यासी पचति। केचित्तु प्रतिषिद्धप्रतिषेधस्तदप्रतियोग्यर्थकं तिङन्तमित्यर्थस्तदा *मूलोक्तमेव उदाहरणमित्याहुः।

लोपे वि (पा० सू० ८-१-४५)। क्रिमर्थयोगेऽपि क्रिमोऽप्रयोगे इत्यर्थः। पक्षे निघातः, पक्षे आद्युदात्तं पचतीत्यादि। किंशब्दाप्रयोगाद*प्राप्तविभाषेयम्। *केचित्तु तदर्थयोगस्य सत्त्वात्प्राप्तविभाषैवेत्याहुः। क्रियाप्रश्ने इत्यादि सर्वमिहाप्यनुवर्तते।

एहि मन्ये प्रहासे (पा० सू० ८-१-४६)। उदाहरणे "प्रहासे च मन्योपपदे" [पा०सू०१-४-१०६] इति पुरुषव्यत्ययः। एहिमन्यसे। इति। *सूत्रे 'एहि मन्ये' इति "प्रहासे च" इति सूत्रविहितलडनुवाद एव धातुमात्रं विवक्षितमिति भावः। इदञ्च वृत्तौ स्पष्टम्। भाष्यात्तु उत्तमोऽपि विवक्षितः। एहि मन्ये रथेन यास्यसीति प्रत्युदाहरणम्। एहि त्वं रथेन यास्यसीत्यहं मन्ये*इत्यर्थ इति प्रतीयते। गत्यर्थेति। एहीत्यस्य गत्यर्थत्वादिति भावः॥

---

मित्याशयेनाह—*प्रश्ने किमिति। *किम्पठतीति। अत्र किंशब्दः क्षेपे। मूलोक्तप्रत्युदाहरणमयुक्तमित्याह—*किमधीत इतीति। *इदन्तु युक्तमिति। द्विजसामान्यस्यापठनं न प्रतिषिद्धम्। ब्रह्मचिन्तननिरतस्यापठनं हि युक्तमेवेति। *मूलोक्तमेवेति। अत्रैवशब्दोपादानेन यत्र प्रतिषेधप्रतियोगित्वमुदाहरणत्वेनाभिप्रेतवाक्यात्प्रतीयते तत्र प्रकृतसूत्राप्रवृत्तिबोधकमप्रतिषिद्धग्रहणमिति ध्वन्यते।

लोपे विभाषा (पा० सू० ८-१-४५)। क्रियेत्याद्यनुवर्त्तते। तच्च षष्ठ्या विपरिणम्यते। *अप्राप्तविभाषेयमिति। यत्र प्रयुज्यमानेन तादृशेन किमा योगस्तत्रैव पूर्वसूत्रस्य प्रवृत्तिरिति भावः। *केचित्त्विति। योगः=संश्लेषः, स द्रव्यस्यैव न शब्दस्य सम्भवत्यतः साक्षात्परम्परया वा तदर्थविषयतानिरूपितविषयताश्रयार्थकत्वरूप एव ग्राह्यः। स चाप्रयोगेऽपि सम्भवतीति भावः।

एहि मन्ये प्रहासे (पा० सू० ८-१-४६)। ननु सूत्रे मन्य इत्युत्तमान्तनिर्देशाद्यत्र "प्रहासे च मन्योपपदे" (पा० सू० १-४-१०६) इतिसूत्रेण पुरुषव्यत्ययस्तत्रैवास्य सूत्रस्य प्रवृत्तिर्न तु तदभावे इति प्रहासे इत्यस्याभावे 'एहि मन्यसे' इत्यत्र कथमापत्तिरत आह—*सूत्र एहीत्यादि। *इत्यर्थ इतीति।

जात्वपूर्वम् (पा० सू० ८-१-४७)। तृतीयास्थाने व्यत्ययेन प्रथमो*ऽयत्र। अविद्यमानपूर्वमिति जातुविशेषणं, न तिङन्तस्य। "आहोउताहो" सूत्रे*ऽनन्तरग्रहणादिति वक्ष्यते।

किंवृत्तं च चिदुत्तरम् (पा० सू० ८-१-४८)। चिदुत्तरमिति बहुव्रीहिः, किंवृत्तविशेषणं, प्रथमा*पूर्ववत्। पूर्वसूत्रादपूर्वमिति वर्त्तते, तेन 'देवदत्तः किंचित्पचति' इत्यादौ न। विश्वस्त्यन्तमित्यादि। न तु किमीय इत्यादि। *व्याख्यानमेवात्र शरणम्। किमा वृत्तं निष्पन्नमित्यर्थः। चिच्छब्दश्चादिगणेऽनुवृत्तो निपात्यते।

आहोउताहो (पा० सू० ८-१-४९)। वक्ष्यतीति। *सान्तरं हि तत्र शेषः। तथा च तत्र शेषमवक्लृप्त्यर्थमनन्तरग्रहणमिति भावः। *नन्वपूर्वमित्यनुवर्तनात्तस्य च तिङन्तविशेषणत्वात्सपूर्वे तिङन्तं शेषो भविष्यति किमनन्तरग्रहणेनेति चेत्। न, इदमेव ज्ञापयति अपूर्वमिति *न तिङन्तविशेषणमिति स्पष्टं भाष्ये।

---

अत्र यद्यपि मन्यधातोरुत्तमोऽस्ति तथापि न "प्रहासे च" (पा० सू० १-४-१०६) इति सूत्रविहितः किन्तु "अस्मद्युत्तमः" (पा० सू० १-४-१०७) इति सूत्रविहित एव। "प्रहासे च" (पा० सू० १-४-१०६) इति सूत्रन्तु सामानाधिकरण्यं यत्र द्वयोस्तत्र प्रवर्त्तते इति भावः। एवं हि भाष्ये उक्तम्—"किमर्थमिदमुच्यते ? न गत्यर्थलोटा लडित्येव सिद्धम्। नियमार्थोऽयमारम्भः—एहि मन्ये प्रहास एव। क्व मा भूत् ? एहि मन्ये रथेन यास्यसि" इति। अस्मिन् भाष्योक्तवाक्ये यास्यसीत्यस्य निघातो भवत्येव। प्रत्युदाहरणे "गत्यर्थलोटा" (पा० सू० ८-१-५१) इत्यस्य प्राप्तिमुपपादयति—*एहीत्यस्येत्यादि। आङ्पूर्वादिणो लोट्, सिप्। तस्य हिः।

जात्वपूर्वम् (पा० सू० ८-१-४७)। *उभयत्र=विशेष्यविशेषणयोः। *अनन्तरग्रहणादिति। तिङन्तस्यापूर्वमिति विशेषणञ्चेत्तदा 'आहो देवदत्तः पचति' इत्यादौ पचतीत्यादेः सपूर्वत्वादेवानिघातो न भविष्यतीति तस्मिन् सूत्रेऽनन्तरशब्दन्नोपाददीत, कृतश्च तन्निमित्तविशेषणमित्यर्थं ज्ञापयति।

*पूर्ववत्=व्यत्ययेन। *व्याख्यानमेवेति। आकरसम्मतं व्याख्यानमेव।

आहोउताहो (पा० सू० ८-१-४९)। अत्रानन्तरग्रहणं "शेषे विभाषा" (पा० सू० ८-१-५०) इत्युत्तरसूत्रे शेषपदार्थस्य स्पष्टप्रतिपत्त्यर्थमित्याह—*सान्तरं हीत्यादिना। आहो उताहोशब्दस्य सूत्रमेतदर्थनिर्दिष्टस्य लुप्तपञ्चम्यन्ततया निर्दिष्टपरिभाषयैवानन्तर्यलाभेऽनन्तरग्रहणमेवेति भावः। उक्तमनन्तरग्रहणस्य प्रयोजनमन्यथा सिद्धमित्याह—*नन्वपूर्वमिति। *न तिङन्तविशेषण-

शेष विभाषा ( पा० सू० ८-१-५० )। अपूर्वमिसेव। तेन 'अयमाहो देवो वर्षति' इत्यत्र निहतमेव।

गत्यर्थलोटा ( पा० सू० ८-१-५१ )। अत्र सर्वेति लुप्तविभक्तिकं कारकविशेषणम्। कारकपदेन प्रत्यासत्त्या लकारवाच्यं कर्तृकर्मरूपमेव कारकं गृह्यते। *स्पष्टश्चेदं भाष्ये, तदाह—यश्चेति। अस्य फलमाह—उह्यन्तां देवदत्तेनेति। अत्र यद्यपि कर्तृभेदोऽस्ति तथाऽपि लवाच्यकर्मभेदो नास्तीति भवत्येव प्रतिषेधः। एवम् 'आगच्छ देव ग्रामं रामं द्रक्ष्यसि' इत्यादौ कर्मभेदोऽपि लवाच्यकर्त्रैक्याद्भवत्येव। पचौदनमिति। अत्र लृडन्तं निहतमेव। पिता ते ओदनमिति। आगमने देवः कर्ता ग्रामः कर्म, भोजने तत्पिता कर्ता ओदनः कर्मेति कारकभेदः। स्वश्चाहश्चेति। लोड्वाच्यकारकापेक्षया यत्र लृड्वाच्यकारकं किंचिदधिकं भवति तत्राप्ययं प्रतिषेधो यथा स्यादित्यर्थं सर्वग्रहणम्। प्रकृते एकस्यान्यत्वेऽपि सर्वं नान्यदिति भावः। एवं लोड्वाच्यकारकापेक्षया लृड्वाच्यं कारकं यदा न्यूनं भवति लोड्वाच्यमधिकं भवति 'आगच्छतं देवदत्तयज्ञदत्तौ देवदत्त ओदनं भोक्ष्यते' इति, अत्रापि प्रतिषेधो भवत्येव। शब्दस्वारस्येन लृट्सर्वकारके एव लोट्सम्बन्धितदपेक्षयाऽन्यत्वाभावस्य निमित्तत्वप्रतीतेरित्याहुः।

लोट् च ( पा० सू० ८-१-५२ )। न चेत्कारकमिति।

---

मिति। किन्तु निमित्तविशेषणमिति शेषः। एवञ्च 'आहो देवदत्तः पचति' इत्यत्र निमित्तस्यापूर्वत्वान्निघातनिषेधः स्यादिति कर्तव्यमनन्तरग्रहणमिति भावः। निमित्तविशेषणस्य प्रयोजनन्तु मूल एव स्पष्टम्।

गत्यर्थलोटा ( पा० सू० ८-१-५१ )। *स्पष्टश्चेदम्भाष्ये इति। तत्र हि कर्त्रपेक्षया यदन्यत्कारकं तस्यान्यत्वे 'आगच्छ देवदत्त ग्राममोदनम्भोक्ष्यसे' इत्यादौ निघातनिषेधाप्राप्तिशङ्कायामेकदेशिना "व्यक्तमेव पठितव्यम् चेत्कर्त्ता सर्वान्यो भवति" इति समाधाने कृते 'उह्यन्तान्देवदत्तेन शालयो यज्ञदत्तेन भोक्ष्यन्ते' इत्यत्र कर्मण एकत्वेऽपि कर्तृभेदान्निषेधस्याप्राप्तिः स्यादिति परेण दूषणे कथिते "सिद्धन्तु तिङोरेकद्रव्याभिधानात्। सिद्धमेतत्। कथम्? तिङोरेकद्रव्याभिधानात्। यत्र तिङ्भ्यामेकं द्रव्यमभिधीयते तत्रेति वक्तव्यम्" इति सिद्धान्तिनाभिहितम्।

लोट् च ( पा० सू० ८-१-५२ )। अत्रानुवर्त्तमानं यत् 'न चेत्' इत्यादि तद्घटि-

*गत्यर्थलोट्वाच्यकारकापेक्षया उदाहरणभूतलोट्वाच्यकारकं सर्वञ्चे-दन्यञ्च भवति इत्यर्थः ।

विभाषितं सोपसर्गमनु ( पा० सू० ८-१-५३ ) । अनुत्त-ममित्यस्योत्तमपुरुषभिन्नमित्यर्थः । न चेत्कारकं सर्वान्यदित्येव । *पक्षे निहतं *पक्षे त्रैस्वर्यम् । प्रत्युदाहरणे पूर्वेण नित्यं निघातप्रतिषेधः ।

हन्त च ( पा०सू० ८-१-५४ ) । "विभाषितम्" (पा० सू० ८-१-५३ ) इति सम्पूर्णसूत्रं 'लोट्' इति च वर्त्तते, गत्यर्थलोटेत्यादि निवृत्तम् । *अस्यापि विकल्पेन निषेधविधायकत्वात् "निपातैर्यद्यदि" (पा० सू० ८-१-३०)इति नित्यनिषेधप्राप्तेः प्राप्तविभाषेयम् । हन्त प्रवि-शोति। पक्षेऽन्तोदात्तम्, पक्षे निहतम् । प्रभुञ्जावहै इति । "भुजोऽनवने" [ पा० सू० १-३-६६ ] इत्यात्मनेपदम् । अत्रापि "निपातैर्यद्यदि" ( पा० सू० ८-१-३० ) इति नित्यनिघातप्रतिषेधः ।

आम एकान्तर [ पा० सू० ८-१-५५ ] । अनन्तिकशब्देना-सन्निहितमदूरं बोच्यते । *अत एवोदाहरणे प्लुतैकश्रुती न । आमन्त्रितत्वा-दाद्युदात्तं पदम् । 'आम्भो देवदत्त' इत्यत्र "नामन्त्रिते" [ पा०सू०८-१-७३ ] इत्यविद्यमानवत्त्वनिषेधादेकान्तरत्वं बोध्यम् । आम् प्रपचसीति। अत्र निघातो भवत्येव । आमः किम् ? शाकं पचसि देवदत्त । आम्पच-सि देवदत्तेति। अत्रान्तिकत्वान्नैकश्रुतिः किन्तु निघात एव । भाष्येऽन-न्तिकं दूरमिति *पक्षान्तरमप्युक्तम् । *तत्र *सामर्थ्यादेकश्रुतेर्बाधः । अ-न्यथा निघातस्यैकश्रुत्या बाधितत्वादिदं व्यर्थमेव स्यात् । *अत एवैकश्रु-

---

तवाक्यार्थमाह—*गत्यर्थेति ।

विभाषितं सो ( पा० सू० ८-१-५३ ) । अत्रानुत्तममिति सोपसर्गमिति च लोटो विशेषणम् । निषेधस्य विकल्पे विधिविकल्पः फलतीत्याशयेनाह—मूले वानुदात्तमिति । अनेन कृतस्य विकल्पस्य फलमाह—*पक्षे इति । पक्षे=पत-च्छास्त्रप्रवृत्तिपक्षे । *पक्षे=पतत्प्रवृत्त्यभावपक्षे ।

*अस्यापीति । अपिना पूर्वशास्त्रसङ्ग्रहः ।

आम एकान्तर (पा० सू० ८-१-५५) ।*अत एव=अनन्तिकशब्दस्योभ-यार्थकत्वादेव । दूरत्वे एवोभयोर्विधानादिति भावः । उभयार्थकत्वे च मानं तु 'अ-नन्तिके'इत्युपादानमेव । अन्यथा दूरग्रहणमेव कुर्यात् । सूत्रघटकसप्तम्यन्तस्य 'यत्प्र-युज्यते तत्र'इति शेषः ।*पक्षान्तरमिति । तत्र हि "अनन्तिके इत्युच्यतेऽनन्तिकञ्च किम् ? दूरम्" इत्युक्तम् । *तत्र=तस्मिन् पक्षे । *सामर्थ्यादिति । दूरात्सम्प्रयु-

तेरसिद्धत्वाभावोऽपि बोध्यः। *प्रकरणाच्च निघातस्यापि बाधः। अन्यथै-कश्रुतिप्रकरण एव "नाम एकान्तरम्" इति ब्रूयात्। *प्लुतोदात्तत्वस्य तु नायं प्रतिषेधः। "आम एकान्तरे ऐकश्रुत्यप्रतिषेधः" (का० वा०) *इति वार्तिकात्। *मूलेऽपि अनन्तिकं दूरं तत्र विहितमैकश्रुत्यं न। निघातनिषेधप्रकरणे पाठात् वचनसामर्थ्यान्निघातो नेत्येव पाठः। प्लुतश्च नेत्यपपाठः। अस्य वार्तिकोक्तपक्षस्य "नैव वा पुनरत्रैकश्रुतिः प्राप्नोति" इत्यादिना भाष्यकृता* प्रत्याख्यानात्। अत्र सूत्रे *आद्यः पक्ष एव *ज्यायान्। एवञ्चैतदुदाहरण-विषये *प्लुतो नैवेति भाष्यप्रदीपोद्द्योते निरूपितम्।

याद्धितुपरम् (पा० सू० ८-१-५६)। इदं बहुव्रीहिणा तिङो विशेषणम्। नान्यैरिति। यद्धिन्तेत्यादिभिरित्यर्थः। निघातो भवती-ति। न तु "लोट् च" (पा० सू० ८-१-५२) इति प्राप्तो निषेधो भव-तीत्यर्थः। अत्र सूत्रे रुहेर्गत्यर्थत्वस्य *भाष्ये उक्तत्वेन तद्योगादेहीत्य-

---

च्यते तत्र यत्प्राप्नोति तस्य प्रतिषेधोऽनेन क्रियते तत्र चैकश्रुत्यमेव प्राप्नोति न तु निघातः। एकश्रुतेर्निघातबाधकत्वात्। *अत एव=अस्य सूत्रस्यैकश्रुतिबाधक-त्वादेव। ननु कथमसिद्धत्वप्राप्नोति? एकश्रुतिविधायकस्य प्रथमाध्याये पाठादि-ति चेत्। न, "देवब्रह्मणोरनुदात्तः" (पा० सू० १-२-३८) इत्यनेन स्वरितस्य "उदा-त्तादनुदात्तस्य" (पा० सू० ८-४-६६) इति सूत्रविहितस्य स्थानेऽनुदात्तविधानेन "तस्यादित उदात्तम्" (पा० सू० १-२-३२) इतिसूत्रादिनवसूत्र्या "उदात्ताद-नुदात्तस्य स्वरितः" (पा० सू० ८-४-६६) इति सूत्रात्परत्र स्थितेः सत्त्वस्य ज्ञा-पनादेकश्रुतेरसिद्धत्वप्राप्तेः। नन्वस्य सूत्रस्य निघातबाधकत्वव्यवहारस्य कथमुप-पत्तिरत आह—*प्रकरणाच्चेति। ननु दूरे प्लुतोदात्तत्वस्यापि विधानेन तस्या-प्ययम्प्रतिषेध इति स्यादत आह—*प्लुतोदात्तत्वस्येति। *इति वार्तिकादिति। एका श्रुतिर्यस्य तदेकश्रुति तस्य भाव ऐकश्रुत्यन्तस्येत्यर्थः। अस्यैकश्रुतिनिषेध-बाधकत्वे मूलसम्मतिरपीत्याह—*मूलेऽपीति। *प्रत्याख्यानादिति। एवं हि भाष्यकृतोक्तम्—"अनन्तिक इत्युच्यते, अन्यच्च दूरमन्यदनन्तिकम्" इति। अय-म्भावः—दूरे इत्येव वक्तव्येऽनन्तिकशब्दोपादानसामर्थ्याद् दूराभिन्नार्थोऽनन्तिक-शब्दस्याश्रीयते। अनन्तिकमन्तिकसदृशं यत्र दूरञ्च चान्तिकन्तादित्यर्थः। *आ-द्यः पक्ष इति। अनन्तिकशब्देनासन्निहितमदूरञ्चोच्यते इति पक्ष इत्यर्थः। *ज्या-यानिति। लाघवाद् दूरशब्द एवोच्चारणीये तदनुच्चारणादिति शेषः। *प्लुतो नेति। प्राप्तेरेवाभावादिति भावः।

याद्धितुपरम् (पा० सू० ८-१-५६)। यद् हि तु एते शब्दाः परे यस्मादिति बहुव्रीहिः। *भाष्ये उक्तत्वेनेति। तत्र हि प्रकृतसूत्रस्थपरग्रहणसहितस्य याद्धितु-

स्य प्राप्तो निघातनिषेधो "विभाषितं सोपसर्गम्"[पा० सू० ८-१-५३] इत्युक्तेन भवती*त्याहुः । भाष्ये तु छान्दसत्वेन समाहितम् ।

चनचि ( पा० सू० ८-१-५७ ) । अत्र गतिग्रहणेन उपसर्गग्रहणम् । तेन 'शुक्लीकरोति चन'इत्यत्र करोतिशब्दो*ऽनिहत एवेति *स्पष्टं भाष्ये । *कुत्सनाभीक्ष्ण्ययोरेव गोत्रादीनि । नेह-सुखीकरोति गोत्रम् । अत्र निघात एव ।

चादिषु च ( पा० सू० ८-१-५८ ) । *"न चवाह" ( पा० सू० ८-१-२४) इति सूत्रनिर्दिष्टाश्चादय एव गृह्यन्ते *सन्निकृष्टत्वाद, तदा

---

परस्य छन्दस्यनिघातोऽन्यपरप्रतिषेधार्थ इति प्रतिपाद्य 'जाये स्वा रोहावैहि'इत्यत्र "लोट् च"(पा०सू०८-१-५२)इत्यनेन गत्यर्थलोडन्तेनैहीत्यनेन युक्तस्य रोहावेत्यस्य निघातप्रतिषेधः प्राप्तः स नेति प्रयोजनमुक्त्वा 'अथेदानीं रोहावेत्यनेन युक्तस्यैहीत्यस्य कस्मान्न भवति लोट् चेति ? गत्यर्थलोटा युक्त इति प्राप्नोति'इत्येवमाशङ्क्य "गत्यर्थाकर्मक"(पा०सू० ३-४-७२)इति सूत्रे पृथग् ग्रहेरुपादानान्न रुहिर्गत्यर्थ इत्यादावुक्तम् । ततो यदि न रुहिर्गत्यर्थस्तर्हि 'आरोहन्ति हस्तिपकाः' 'आरोहयति हस्ती स्थलं मनुष्यान्' इत्यत्र "गतिबुद्धि" ( पा० सू० १-४-५२ ) इत्यनेन कर्मसंज्ञा न प्राप्नोति गत्यर्थत्वाभावादिति रुहेर्गत्यर्थत्वमावश्यकम् । "लोट् च"(पा० सू० ८-१-५२)इत्यनेन पूर्वेणण्धातुना निष्पन्नस्यैहीत्यस्य निघातप्रतिषेधस्तु न । छान्दसत्वादिति प्रतिपादितम् । *इत्याहुरिति । अत्रारुचिबीजन्तु यदि "विभाषितम्" ( पा० सू० ८-१-५३ ) इति सूत्रेणैव तदभावस्तर्हि भाष्ये छान्दसत्वाभिधानमसङ्गतमिति विकल्पाभिधानमसङ्गतमिति[च] । "गत्यर्थाकर्मक"(पा०सू०३-४-७२ )इति सूत्रे रुहिग्रहणन्तु प्रपञ्चार्थमेवेति बोध्यम् ।

चनचिदिव ( पा० सू० ८-१-५७ ) । *अनिहत एवेति । प्रकृतसूत्रेण निषेधादिति शेषः । *स्पष्टम्भाष्य इति । तत्र हि "गतिग्रहणे उपसर्गग्रहणङ्कर्त्तव्यम् । इह मा भूत्-शुक्लीकरोति चन, कृष्णीकरोति चन"इत्युक्तम् । अत्रैवेत्थमभिधानमिति न, किन्तु सर्वत्रैवाष्टमिके । तदप्युक्तम्भाष्ये "अपर आह-सर्वत्रैवाष्टमिके गतिग्रहणे उपसर्गग्रहणं द्रष्टव्यम् । "गतिर्गतौ" (पा० सू० ८-१-७०) "तिङि चोदात्तवति ( पा० सू० ८-१-७१ ) वर्जम्" इति । इह मा भूदित्यस्यागतेरिति प्रतिषेधो मा भूदित्यर्थः । सर्वत्रेत्यनेन "चादिषु च" ( पा० सू० ८-१-५८ ) "चवायोगे प्रथमा" ( पा० सू० ८-१-५९ ) इति सूत्रयोः सङ्ग्रहः । तयोरपि गतिग्रहणानुवर्त्तनात् । "तिङो गोत्रादीनि" ( पा० सू० ८-१-२७ ) इति सूत्रे कुत्सनाभीक्ष्ण्ययोरिति पाठविशेषणमिति यदुक्तं तत्साधयति-*कुत्सनेति ।

चादिषु च ( पा० सू० ८-१-५८ ) । अत्र चादिपदेन गणे पठितानाञ्चादीनां ग्रहणमिति शङ्कां वारयति-*न चवाहेतीति । *सन्निकृष्टत्वात्-अनुदा-

ह्-चवेत्यादि । *उदाहरणे खादतीत्यस्य न निघातप्रसङ्गः । नानाशक्यत्वात् । समुच्चयविकल्पयोरनेकधर्मत्वात्परं तदुक्तिः । चवायोग इति । "चवायोगे प्रथमा"( पा० सू० ८-१-५९ ) इत्युत्तरसूत्रेणेत्यर्थः । इदञ्च वृत्तौ स्पष्टम् । चानुकृष्टत्वादत्रागतेरिति नानुवर्तत इति*तदाशयः । "चनचिदिव" (पा० सू० ८-१-५७ ) इत्यत्र कैयटस्तु चवायोगे इत्यत्राप्यनुवर्त्तते इत्याह ।

चवायो(पा०सू० ८-१-५९) । प्रथमेत्यस्य प्रथमोच्चारितेत्यर्थः । योगग्रहणं पूर्वाभ्यामपि योगे निघातप्रतिषेधार्थम्।तद् ध्वनयन्नुदाहरति-गाश्च चारयतीति। *नियमोऽयं-'प्रथमैव नान्या'इति। इतो वा सातिमिति। *अस्य 'दिवो वा पार्थिवादधि' 'इन्द्रं महो वा रजसः'इत्युत्तरवाक्ये इन्द्रं प्रति सातिं धनदानम् अधि आधिक्येन ईमहे याचामहे। वैदिकनिघण्टौ याच्ञाकर्मसु ईमह इति पाठात् । कस्माल्लोकादित्याकाङ्क्षायामाह-इतोऽस्मात् लोकात्पार्थिवाद्वा दिवो वा महो महतः प्रौढात् रजसः रञ्जकात् अन्तरिक्षलोकाद्वेति मन्त्रार्थः । ननु श्रुतस्यैव तिङन्तस्योत्तरत्रानुषङ्गात्कथं प्रथममेतदिति चेत् अनुषक्तस्यापि औपाधिकभेदं पुरस्कृत्य प्राथम्याश्रयणेन निघातनिषेधस्य छन्दसि बहुशो दृष्टत्वात् । एतच्च वेदभाष्ये स्पष्टम् ।

हेति क्षि (पा० सू० ८-१-६०) । *धर्मोल्लङ्घनङ्क्रिया । उदाहरणे द्वितीयस्य निघातो भवत्येव *हयोगाभावादिति बोध्यम् ।

अहेति विनि ( पा० सू० ८-१-६१ ) । *अनेकस्मिन् प्रयोजने प्रेषणं विनियोगः । अस्योदाहरणे पूर्ववन्निघातप्रतिषेधः प्लुतश्च बोध्यः।

---

कमित्यधिकारमध्यपाठेन शीघ्रोपस्थितिकत्वात् । प्रकृतसूत्रेण'देवः पचति' इत्यादौ प्रथमस्य पचतीत्यस्यैव तिङन्तस्य निघातप्रतिषेधो न तु द्वितीयस्य खादति चेत्यस्यापि । तस्य निघातप्राप्तेरेवाभावादित्याह-*उदाहरणे इत्यादिना । *तदाशयः=वृत्त्याशयः ।

*नियमोऽयमिति । प्रथमेत्यस्याभावेऽपि प्रथमस्य लाभे सिद्धे पुनरेतदुपादानं नियमार्थमिति भावः । *अस्येति। अस्योत्तरवाक्य इत्यनेनान्वयः। एवञ्च प्रथमत्वमस्योपपन्नमिति भावः ।

हेति क्षियायाम् ( पा० सू० ८-१-६० ) । क्षियापदार्थमाह-*धर्म्म इति । *हयोगाभावादिति । प्राथम्याभावाच्चेत्यपि बोध्यम् ।

विनियोगपदार्थमाह-*अनेकस्मिन्निति ।

चाहलोपे ( पा० सू० ८-१-६२ ) । लोपोऽत्राप्रयोग एव । शास्त्रेण लोपविधानाभावात् । अर्थप्रकरणादिना गम्यमानत्वाच्चाप्रयोगः । चः समुच्चये, अहशब्दः केवलार्थः । *समानकर्तृके त्वहशब्दस्य एवेत्यादेरवधारणार्थकैवशब्दप्रयोगे सतीत्यर्थः । अनवक्लृप्ताविति । असम्भावनायामित्यर्थः । न क्वचिच्छ्लोक्ष्यसे न क्वचिदध्येष्यसे इत्यर्थः ।

इन्द्र वाजेष्ववेति । अवेति तिङन्तस्येह निघातः । *निघाताभावस्य तूदा*हरणान्तरं बोद्धव्यम् । शुक्ला व्रीहय इति । समानकर्तृके चलोप इति नियमोऽवधारणार्थैवशब्दप्रयोगे न तु सर्वत्रेत्यस्ति चलोपः । पक्षे निहतं पक्षे आद्युदात्तम् ।

वैवावेति ( पा० सू० ८-१-६४ ) । वै स्फुटार्थेऽक्षमायाञ्च । वावे इति प्रसिद्धौ स्फुटार्थे च ।

एकान्या ( पा० सू० ८-१-६५ ) । समर्थाभ्यां समानार्थाभ्यामित्यर्थः । अजामेकामिति । अन्यामित्यर्थः । जिविः प्रीणनार्थः । *अत्र प्रकरणे क्वचित्साहचर्यानाश्रयणज्ञापनार्थं समर्थग्रहणम् ॥

---

*समानकर्तृके । इति अस्य क्रियावाचकपदघटितवाक्यद्वय इति शेषः ।

*निघाताभावस्येति । "चादिलोपे विभाषा"(पा०सू० ८-१-६३)इत्यस्य वैकल्पिकत्वेन क्वचिन्निघातोदाहरणप्रदर्शनेऽपि न न्यूनतेत्यभिप्रायः । *उदाहरणान्तरम्=उत्तरवाक्ययोर्भवन्तीत्यादि ।

अन्यशब्दसाहचर्यादेकशब्दस्यान्यार्थकस्य ग्रहणे सिद्धे समर्थाभ्यामिति व्यर्थमत आह-*अत्र प्रकरणे इति । तत्प्रयोजनं "यावद्यथाभ्याम्" ( पा० सू० ८-१-३६ ) इति सूत्रे यावदित्यनेन वत्वन्तस्यापि ग्रहणमिति । न च "निपातैर्यद्यदि" ( पा० सू० ८-१-३० ) इति सूत्रस्थनिपातग्रहणेनास्यार्थस्य ज्ञापितत्वादिदं व्यर्थमिति वाच्यम् । स्पष्टार्थत्वात् ।

यद्वृत्तान्नित्यम् ( पा० सू० ८-१-६६ ) । यदि यदिति शब्दस्य वृत्तमुच्चारणमित्यर्थस्तदा'यः पचति, यस्पचति'इत्यत्र न स्यात् । तत्प्रकृतिकविभक्त्यन्तादुच्चारितादित्यर्थे डतरडतमान्तात् 'यत्तरः पचति, यत्तमः पचति'इत्यस्मान्न स्याद्विभक्तेरनुच्चारणादतो वृद्धातोरकर्मकत्वात्तस्मादाधिकरणे क्तः तदन्तस्य षष्ठ्यन्तयच्छब्देन समासो यदो वृत्तमिति । "अधिकरणवाचिना च" (पा० सू० २-२-१३ ) इति प्रतिषेधस्त्वस्मान्निपातनान्न । यच्छब्दो यस्मिन् पदे वर्त्तते तत्पदं यद्वृत्तं तस्मादित्यर्थः स्वीकार्य इत्याशयेनाह मूले यच्छब्द इत्यादि । यथा "किंवृत्तञ्च चिदुत्तरम्" [ पा० सू० ८-१-४८ ] इति सूत्रव्याख्यानावसरे विभक्त्यन्तं डतरडतमान्तञ्च किमो रूपमित्युक्तं तथेहापि विवक्षितमिति कश्चिद् भ्रा-

यदुवृत्ता ( पा० सू० ८-१-६६ ) । तद्यद्वृत्तमिति *न तु इत-रडतमविभक्त्यन्तमेवेत्याग्रहः । इदञ्च *भाष्ये ध्वनितम् । अत्र व्यवहितेँ इति । तेन 'यो जात एव पर्यभूषत्'इत्यादौ निघातप्रतिषेधः सिद्ध्यति । अत्र मानन्तु "पूजनात्पूजितम्"(पा० सू० ८-१-६७) इति सूत्रे पूजितग्रहण-म् । तद्धि 'काष्ठाध्यापकः' इत्यादौ अनुदात्तताविधानाय । तत्र 'काष्ठादिभ्यः' इति वार्तिकम् । तत्र पूजनादित्येव प्रत्यासत्त्या ससम्बन्धिकतया च पूजि-तपरिग्रहे सिद्धे पूजितग्रहणमनन्तरप्रतिपत्त्यर्थं तदिह प्रकरणे पञ्चमीनिर्द-शेऽप्यानन्तर्यं नाश्रीयत इति ज्ञापयतीत्याहुः । *यथेच्छप्रवृत्तौ वेति वाच्य-म्-यत्र क्वचन यजते । अत्र पक्षे निहतं पक्षे आद्युदात्तम् ॥

पूजनात्पू ( पा० सू० ८-१-६७ ) । अत्र वृत्तिकृत् काष्ठादिभ्य इति सूत्रे पपाठ, *तद् भ्रमात् । काष्ठादिगणपाठेन सूत्रकारेणापि *ज्ञापि-तमेतत् । काष्ठादयोऽद्भुतपर्यायाः पूजनवचना भवन्ति । उत्तरसूत्रे तिङ्ग्रह-णात् इदं सुबन्तविषयम् । *अत्र वृत्तिन्यासादयः समासविषयमेतत् काष्ठ-दारुणादीनां प्रवृत्तिनिमित्तभूताध्ययनाभिरूप्यादिविशेषणत्वे सामानाधिकर-ण्यात्समासाप्राप्तौ मयूरव्यंसकादित्वात्समासः । तन्निमित्तविभक्तेर्लुकि काष्ठाध्यापकादिसिद्धिरित्याहुः । भाष्यकारास्तु असमासे एव क्रिया-विशेषणीभूतानां दारुणमित्यादीनां मलोपो निपात्यते । युक्तञ्चैतत् । समासा-धिकाराभावात् मयूरव्यंसकादित्वे प्रमाणाभावाच्च । *अत एव "मलोपो वक्तव्यः" इति वार्तिककृता आरब्धम् । एवञ्च *दारुणमित्यादयः प्रयो-

------

ज्येदत आह-*न त्विति । *भाष्ये ध्वनितमिति 'यदग्ने वायुः पचते यत्काम-स्ते जुहुम' इत्युदाहरणोपन्यासेन ध्वनितमित्यर्थः । स्पष्टप्रतिपत्त्यर्थेऽन्ते व्याख्यात-ञ्च भाष्ये-'यदस्मिन्वर्तते यद्वृत्तम्'इति । ननु यद्वृत्तादिति पञ्चमीनिर्देशात्ततोऽ-व्यवहितपरस्यैव स्यादिति कथं'यदग्ने वायुर्वाति'इत्युदाहरणमत आह मूले-अत्र व्यवहिते इति । *यथेच्छप्रवृत्ताविति । देशकालावनपेक्ष्येष्टसाधनताज्ञानमात्रेण या प्रवृत्तिः सा यथेच्छप्रवृत्तिस्तस्याङ्गम्यमानायामित्यर्थः ।

*तद्भ्रमादिति । भाष्यापर्यालोचनमूलकभ्रमात् । भाष्ये हि "पूजि-तस्यानुदात्तत्वे काष्ठादिग्रहणङ्कर्त्तव्यम् । काष्ठादिभ्यः पूजनादिति वक्तव्यम्"इत्य-भिहितम् । *ज्ञापितमेतदिति । काष्ठादयः पूजनवचना ग्राह्या इति बोधितमि-त्यर्थः । अनुदात्तमित्यस्य प्रक्रान्तत्वेऽपि पुनरेतस्मिन् सूत्रेऽनुदात्तवचनं नञो निवृत्त्यर्थम् । *अत्र वृत्तिन्यासादय इति । अस्याहुरित्यनेनान्वयः । *अत एव= असमास एव प्रवृत्तेरिष्टत्वादेव । *दारुणमित्यादय इति । दारुणमध्यापक

गा असाधव एव *भाष्यविरुद्धत्वादिति ध्येयम् । पूजनात्किम् ? दारुणाध्यापकः । दारुणसञ्ज्ञक इत्यर्थः । काष्ठादिभ्यः किम् ? शोभनाध्यापकः ।

सगतिरपि ( पा० सू० ८-१-६८ ) । अपिनाऽगतिः, तदाह—तिङन्तमिति । *"न लुट्" ( पा० सू० ८-१-२९ ) इत्यादिनिषेधापवादः । सगतिरिति तुल्ययोगे सहशब्दः । तेन गतेरपि निघात*इत्याहुः । तिङ्ग्रहणं पूर्वसूत्रस्यातिङ्विषयत्व*लाभार्थम् । अत्रापिग्रहणेनोपसर्गस्यैव ग्रहणमिति "चनाचेत्" ( पा० सू० ८-१-५७ ) इति सूत्रे *भाष्ये स्पष्टम् । तेन 'यत्काष्ठां शुक्लीकरोति'इत्यादौ "निपातैर्यद्यदि"(पा०सू० ८-१-३०) इति *प्रतिषेध एव । यत्काष्ठां प्रपचतीति । यत्काष्ठं प्रपचतीत्यपपाठः । भाष्यविरोधात् काष्ठा इत्याकारान्तस्यैव गणे पाठाच्च । काष्ठेति ह्रस्वं पठतां तु भाष्यविरोध एव । काष्ठ, दारुण, अज्ञात, पुत्र, वेश, अनाज्ञात, अनुज्ञात, अपुत्र, अयुत, अद्भुत, अनुक्त, भृश, घोर, सुख, परम, सु, अति, इव ॥

कुत्सने च सु ( पा० सू० ८-१-६९ ) *"पदाव" ( पा०सू०

---

इत्यादय इत्यर्थः । *भाष्यविरुद्धत्वादिति । "मलोपश्च वक्तव्यः । दारुणाध्यापकः, दारुणाभिरूपकः" इति भाष्यविरुद्धत्वादित्यर्थः । एवञ्च यन्मूले समासान्तोदात्तत्वापवाद एतत्समास इष्यत इति तद् वृत्त्यनुसारेणेति बोध्यम् । दारुणाध्यापक इति प्रत्युदाहरणं कर्मधारयसंज्ञकं द्रष्टव्यम् ।

सगतिरपि तिङ् ( पा० सू० ८-१-६८ ) । पूजनादित्यनुवर्त्तते । काष्ठादिभ्य इति अस्यापि शेषः । "निपातैर्यद्यदि" ( पा० सू० ८-१-३० ) इति निषेधे प्राप्ते प्रतिप्रसवार्थमेतत्सूत्रम् । फलान्तरमप्याह—*न लुडित्यादीति । *इत्याहुरिति । कैयटादय इति शेषः । *लाभार्थमिति । उत्तरसूत्रे तिङ्ग्रहणादित्यादिना प्रागुक्तमपि पुनर्दार्ढ्याय स्मारितमिति बोध्यम् । *भाष्ये इति । निरूपितमेतत् । "पदस्य" ( पा० सू० ८-१-१६ ) इत्यधिकारात् सगतेस्तिङन्तस्याप्राप्तेः सगतिग्रहणमिति । गतेस्तिङन्तस्य च निघातोऽनेन विधीयते । *प्रतिषेध एवेति । न च गतिग्रहणस्योपसर्गपरत्वे सगतिरपीत्यस्य सोपसर्गोऽपीत्यर्थः । अपिनाऽनुपसर्गस्यापि ग्रहणमिति 'शुक्लीकरोति' इत्यत्र सूत्रस्यास्य प्राप्तिरस्त्येवेति वाच्यम् । विप्रयोगस्य विशेषावगतिहेतुत्वेनानुपसर्गोऽपीत्यनेनोपसर्गसंज्ञकशब्दयोगयोग्यता यस्य धातोस्तत्प्रकृतिकतिङन्तं गृह्यते । तद्योगयोग्यश्च यत्र धात्वव्यवहितप्राग्गतेर्नोच्चारणं स एव "ते प्राग्धातोः" ( पा० सू० १-४-८० ) इति सूत्रस्वारस्यात्तादृशस्तु नायमित्याशयात् ।

कुत्सने च सु ( पा० सू० ८-१-६९ ) । *पदादिति निवृत्तमिति । अत्र

८-१-१७ ) इति निवृत्तम् । कुत्सनार्थे सुबन्ते परे इत्यर्थः । अयं विधिः परत्वात्प्रतिषेधान् बाधते । यत्पचतः पूतीत्यादि । पूतीति *क्रियाविशेषणत्वान्नपुंसकं च । पचति क्लिश्नातीति । पाकक्रियाकर्तृकक्लेश इत्यर्थः ।

पूञः पूयीधातो र्वा *बाहुलकादौणादिके तिपि तत एव गुणाभावे आद्युदात्तत्वं पूतिशब्दस्य प्राप्नोतीत्यत आह—पूतिश्चानुबन्ध इति । चकारानुबन्ध इत्यर्थः । *इदञ्च निघातसंनियोगशिष्टम् । तेन यदा निघातस्तदाऽन्तोदात्तम्, *अन्यदा त्वाद्युदात्तमेवेति बोध्यम् । वा बह्वर्थमिति । बहुवचनान्तं तिङन्तमित्यर्थः ।

गतिर्गतौ(पा०सू०८-१-७०)। अयम् "उपसर्गाः"(फि०पा०४सू०८३) इत्याद्युदात्तत्वापवादः । गतौ परेऽनुपसर्गस्य गतेरनभिधानेन प्रयोगाभावाद् उपसर्गा इति वक्तव्ये गतिग्रहणं लाघवार्थमुत्तरार्थञ्च । यद्यप्ययम् *अभौ सावकाशस्तथापि अभिर्गतौ इति वक्तव्ये गतिग्रहणात्सर्वत्रापि प्रवर्त्तते, एतावतैव तदपवादत्वव्यवहार इत्याहुः । अभ्युद्धरतीति । अत्रोच्छन्दे यणि अभेर्निघातेऽनिघाते वा *विशेषाभावेऽपि प्रवृत्तिमात्रेणोदाहृतम् । 'अभिसंहरति' इति मुख्यं फलम् । गतौ किमिति । गतेः शुद्धे तिङन्ते प्रयोगो गतियुक्ते वा कृदन्ते वा । तत्र कृदन्तं सगतावगतौ च कृत्स्वरथाथादिस्वरगतिस्वरेषु कृतेषु शेषनिघातेन गतेर्निघातस्य भावात् "तिङि चोदात्तवति" ( पा० सू० ८-१-७१) इति तिङ्युदात्तवत्येवे*ति नियमादनुदात्तवति तिङन्ते तदप्रसङ्गादुदात्तवति तेनैव सिद्धेश्च पारिशेष्याद् गतावेव भवि-

---

प्रमाणन्तु "कुत्सने क्रियायाः । क्रियायाः कुत्सने इति वक्तव्यम् । कर्तुः कुत्सने मा भूत्-पचति पूतिः, गिरति पूतिः" इति भाष्यकारोक्तिरेव । *क्रियाविशेषणत्वादिति । अयं पूतिशब्दः कुत्सितवाची, स चाभेदेन धात्वर्थफलविशेषणम् । *बाहुलकादौणादिके तिपीति । "वसेस्तिप्" ( उ० पा० ४ सू० ६२९) इति विहितस्तिप् बहुलग्रहणात् पूञः पूयीधातोर्वा स्वीकार्यः । तथा च धातुस्वरेणाद्युदात्तत्वस्य प्राप्तिरिति भावः । *इदम्=चकारानुबन्धकत्वम् । *अन्यदेति । यथा "वा बह्वर्थम्" ( का० वा० ) इति वचनेन बहुवचनान्तस्य तिङन्तस्य विकल्पेन निघाते बोधिते निघाताभावपक्षे 'पचति पूतिः' इत्यत्र पूतिशब्द आद्युदात्त एव ।

*अभाविति । अभ्युद्धरतीत्यत्र । *विशेषाभावेऽपीति । अभेः प्रातिपदिकस्वरेणान्तोदात्ततया तस्य यणादेशे कृते य उदात्तस्तच्छ्रवणकृतविशेषाभावेऽपीत्यर्थः । *इति नियमादिति । यदा प्रकृतसूत्रे गताविति नास्ति तदाऽनेनैवोदात्तवति तिङन्ते ऽनुदात्तत्वे सिद्धे "तिङि" ( पा० सू० ८-१-७१ ) इति सूत्रं निय-

व्यतीति प्रश्नः । आमन्द्रैरिति । *"ते प्राग्धातोः"(पा० सू० १-४-८०) इत्यस्य *प्रयोगनियमार्थत्वमिदम् । प्रयोगनियमपक्षमभिप्रेत्यैव "छन्दसि परेऽपि" (पा० सू० १-४-८१) "व्यवहिताश्च"(पा०सू०१-४-८२) इत्यारब्धम् । यदा तु भाष्यरीत्या *सञ्ज्ञानियमार्थत्वमभिप्रेत्य *तत् प्रत्याख्यायते तदा गताविति व्यर्थम् । आङो गतित्वाभावादेवाप्राप्तेः । मन्द्रशब्दस्तु रूढिशब्दत्वान्न क्रियावाची । आमन्द्रैरित्यत्र न दोषोऽगतित्वात् । यत्क्रियायुक्तास्तं प्रति गतिसञ्ज्ञा । "न चात्राङो मन्द्रं प्रति क्रियायोगः । किं तर्हि ? याहिशब्दं प्रति" इति भाष्यस्यापि *अयमेवार्थः । यत्क्रियान्वयस्तत्क्रियाव्यवहितत्वाच्च गतित्वं, मन्द्रस्तु न क्रियावाचीति । यत्तु कैयटादयः—नतु *परनिमित्तानुपादाने यत्क्रियायुक्ता इति कथं लभ्यते ? उच्यते, पदस्येत्यधिकारात्पदविधित्वात् *समर्थपरिभाषोपस्थानादेतद्विशेषलाभ इति, तत्तुच्छम् । अस्मदुक्तरीत्या भाष्यस्य सामञ्जस्यात् *एका-

---

र्थमिति भावः । ननु "ते प्राग्धातोः"( पा० सू० १-४-८० ) इत्यनेन गतेर्धातोरव्यवधानेन प्राक् प्रयोगविधानात् कथमत्राङो व्यवधानेन प्रयोग इत्यत आह-*ते प्रागिति । *प्रयोगनियमार्थत्वमिति । 'प्रागेव ह्युपसर्गा धातोः प्रयोक्तव्याः' इत्याकारकनियामार्थत्वमित्यर्थः । "छन्दसि परेऽपि" ( पा० सू० १-४-८१ ) "व्यवहिताश्च" पा० सू० १-४-८२ ) इत्यनेन व्यवधानेनात्र प्रयोगेऽपि गतित्वमाङोऽस्त्येवेति भावः । *संज्ञानियमार्थत्वमिति । धातोः प्राक् प्रयुज्यमाना एव गत्युपसर्गसंज्ञा भवन्ति न तु परे नापि व्यवहिता इति पक्षे इत्यर्थः । *तत्प्रत्याख्यायत इति । प्रयोगनियमार्थश्चेदनुकरणस्येतिकरणपरप्रतिषेधोऽनिष्टशब्दनिवृत्त्यर्थः छन्दसि परव्यवहितवचनञ्चेति गौरवाभिधानेन प्रत्याख्यायत इत्यर्थः । इहाप्युक्तं भाष्ये-"छन्दोर्थमिति चेत् । न, अगतित्वात् । यत्क्रियायुक्तास्तं प्रत्येव गत्युपसर्गसंज्ञे भवतः" इति । *अयमेवार्थ इति । "छन्दसि परेऽपि" "व्यवहिताश्च" [पा० सू०१-४-८१,८२] इति सूत्रद्वयप्रत्याख्यानपरक एवात्रत्यो ग्रन्थ इत्यर्थः । *परनिमित्तानुपादान इति । यथा "उपसर्गस्य घञि"(पा०सू०६-३-१२२) "उपसर्गादसमासेऽपि"[ पा० सू० ८-४-१४ ] इत्यादौ, तत्रैव यत्क्रियायुक्ता इति न्यायसञ्चारो न त्वत्रेति भावः । *समर्थपरिभाषेति । येन गतेः सामर्थ्यं तत्प्रति यो गतिः स तस्मिन्निहन्यत इति भावः । *एकार्थीभाव एवेति । न चात्रैकार्थीभावस्य सम्भावना । साक्षाद्विध्युद्देश्ययोर्विधेयोद्देश्ययोर्वा तस्य स्वीकारात् । उक्तभाष्यन्त्वेवं व्याख्येयम्-यया क्रियया‍ऽव्यवहितपरशब्दबोध्यया युक्तास्तद्वाचकधातुं प्रत्येव गत्यादिसंज्ञाः । प्रकृते तु यया क्रियया योगस्तत्र(कस्य) ! व्यवहितत्वेन संज्ञानियमपक्षे गतित्वाभावो येन चाव्यवधानं तस्य क्रियावाचकत्वाभाव इति सर्वथा गतित्वाभाव

र्थीभावे एव परिभाषाप्रवृत्तेश्च युष्मदस्मदादेशनिघातविधौ परिभाषाऽप्रवृत्तेः समर्थसूत्रे भाष्ये उक्तत्वाच्च। न च मन्द्रादिकरणकेन्द्रकर्तृकं यानमाक्रा विशिष्यते इति समुदायं क्रियाविशेषवाचिनं प्रति गतित्वमस्त्येव। अत एवा-भ्युद्धरतीत्यादावभेर्गतित्वम्, इति वाच्यम्। धातूपसर्गयोः संबन्धस्यान्तर-ङ्गत्वे च साधनान्वयात्पूर्वमेव तदर्थात्(१)। *अत एव 'उपास्यते गुरुः' इत्यादेः सकर्मकत्वमिति भाष्य एव स्पष्टम्।

तिङि चो (पा० सू० ८-१-७१)। "निपाता आद्युदात्ताः" (फि० पा० ४ सू० ८०) इत्यस्या*पवादोऽयम्। *अनुपसर्गस्यापि गते-र्धात्वव्यवहितस्य सत्त्वात्। उदाहरणे "निपातैर्यद्यदि" (पा० सू० ८-१-३०) इति निघातप्रतिषेधादुदात्तवत्त्वं तिङन्तस्य। 'यत् शुक्लीकरोति' इत्यत्र च्वेश्चित्त्वेऽपि चित्स्वरो येननाप्राप्तिन्यायेन निपाताद्युदात्तत्वमेव बाधते न त्वेनम् इति अत्र शुक्लीशब्दस्य निघातः। नन्वामन्द्रैरित्यत्र रक्प्र-त्ययान्ते मन्द्रशब्दे परे आङो निघातनिवृत्त्यर्थन्तदित्यत आह-धात्विक्रियेति। एवञ्च तिङ्ग्रहणाभावेऽपि गत्याक्षिप्तक्रियावाचकस्योदात्तवतीति विशेषणा-दपि*तन्निवृत्तिः सिद्धेति भावः। तत्र दोषमाह-धात्वावेति। यस्य धा-त्वरूपया क्रियया युक्तास्तं धातुं प्रत्येव गतित्वादिति भावः। एवञ्च 'यत् पचति'इत्यादावेव स्यान्न तु'यत् प्रकरोति'इत्यादौ। तिङ्ग्रहणे तु सति यं धातुं प्रति गतित्वं तद्घटिते तिङन्ते परे इत्यर्थः सम्पद्यते इति न दोषः। अत्र तिङ्शब्देन क्रियाप्रधानं लक्ष्यते। तेन "उपपदमतिङ्"(पा० सू० २-२-१९)इति सूत्रस्थास्मदुक्तरीत्या 'प्रपचतितराम्'इत्यत्रासमासे उदात्तवत्यामन्ते

---

इति। *अत एव=साधनान्वयात्प्रागुपसर्गद्योत्यवृत्तित्वादेव।

तिङि चोदात्त (पा० सू० ८-१-७१)। *अपवादोऽयमिति। येन नाप्राप्तिन्यायेनेत्यादिः। तदेवोपपादयति-*अनुपसर्गेति। शुक्लीशब्दस्य निघा-तोऽनेन सूत्रेण भवतीति शेषः। *तन्निवृत्तिरिति। मन्द्रशब्दस्य निवृत्तिरित्यर्थः। गतिसंज्ञायाः क्रियायोगे विधानात्तद्वाचकस्य यत्र परत्वं तत्र निघातेन भाव्यं, मन्द्रशब्दस्तु न तादृशः। न च कृदन्तेऽतिप्रसङ्गः। तत्र सुबुत्पत्तेः प्राक् समासे कृत्स्वरथाथादिस्वराणां यथायथं प्रवृत्त्या शेषनिघातेनानुदात्तत्वं गतेः सिद्धमेवे-ति तिङ्ग्रहणं व्यर्थमिति। मूले परिमाणार्थमित्यस्येयत्ताविशेषावच्छिन्नसमुदा-

---

(१)'तदन्वयात्' इत्यादर्शपुस्तके पाठः।

गतेर्निघातः सिद्धः । तिङन्तं तु *तत्र नोदात्तम् । आम्स्वरेण शेषनिघातात् । *ध्वनितश्चेदं भाष्ये । *एते निघातास्तत्प्रतिषेधाश्च पदकाले विच्छिद्य पाठेऽपि भवन्ति । संहिताधिकाराभावादित्याहुः ॥ इति तिङन्तस्वराः ।

## अथ स्वरसञ्चारप्रक्रिया ।

वस्तुतस्त्विवति । "इगन्तानाञ्च द्व्यषाम्" [ फि० पा० २ सू० २६ ] इत्यस्य "फिषः" [ फि० पा० १ सू० १ ] इत्यपवादस्य सत्त्वादिति भावः । *संहितायान्त्विवति । "तयोर्य्वावचि" [ पा० सू० ८-२-१०८ ] इति सूत्रस्थसंहिताग्रहणस्याऽऽशास्त्रसमाप्तेरधिकारात्, स्वरितविधेश्च* तदन्तर्भावादिति भावः । अयमेव संहिताधिकारो ज्ञापयति एतदधिकारबहिर्भूतानां कालव्यवायेऽपि प्रवृत्तिः । अन्यथा ऽसंहितायां कालव्यवायादेव न भविष्यति किं तदधिकारपाठेन । *तेन पदकालेऽपि 'ईडे' इत्यादीनां निघातः 'अग्नाविष्णू' इत्यादाववग्रहे आनङादयः पदविभागे च वस्नसादयः सिद्ध्यन्ति । अशक्त्यादिना कालव्य-

---

यस्य परिग्रहार्थमित्यर्थः । *तत्र=पूर्वोक्तार्थे निश्चिते । *ध्वनितश्चेदं भाष्य इति । तत्र हि "यदि तिङ्ग्रहणं क्रियते आमन्ते न प्राप्नोति-प्रपचतितराम्, प्रजल्पतितराम्" इति । अत्रामन्ते तिङ्ग्रहणेऽव्याप्तिमुक्त्वा तदकरणे आमन्त्रैरित्यत्राप्यापत्तिमुद्भाव्य यत्क्रियायुक्ता इति रीत्या तां परिहृत्य यद्योगाद्गतित्वं तस्योदात्तस्य ग्रहणे पुनरपि प्रत्ययस्योदात्तस्य सद्भावो यत्र तत्राव्याप्तिस्तदवस्थैवेत्युक्त्वा "नैष दोषः । यत्क्रियायुक्ता इति नैवं विज्ञायते यस्य क्रिया यत्क्रिया इति । कथन्तर्हि ? या क्रिया यत्क्रिया यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवतः" इति समाहितम् । एवञ्च गतित्वनिरूपकस्य क्रियारूपस्यार्थस्य ग्रहणेऽर्थे कार्यासम्भवात्तद्वाचिनि शब्दे परतः कार्यं विज्ञायमानं तादृशक्रियाप्रधानं यद्यत्तत्र सर्वत्र भविष्यतीति प्रत्ययोदात्तवत्यपि भविष्यतीत्येतत्तात्पर्यकेण तादृशक्रियाबोधकघटिते तिङ्पदस्य लक्षणेति ध्वनितमिति । तत्र विशेषमाह—*एते निघाता इति । संहिताधिका[illegible]वात्कालविलम्बेनोच्चारणान्न क्षतिकरमिति भावः । इति तिङन्तस्वरविवरणम् ।

## अथ स्वरसंचारनिरूपणम् ।

मूले "तिङ्ङतिङः" ( पा० सू० ८-१-२८ ) इति निघात इति । एवञ्च निहतस्य विच्छिद्य पाठे श्रवणमिति भावः । संहितायां विशेषमाह—*संहितायामित्यादि । *तदन्तर्भावादिति । संहिताधिकारान्तर्भावादित्यर्थः । कालव्यवायेऽपि प्रवृत्तिज्ञापनस्य फलमाह—*तेनेत्यादिना । पूर्वोक्तसिद्धा-

वायेऽपि नसादयः व्यवधानश्च मात्राकालेन न तदधिकेनेत्यादि निरूपितम्। संहिताधिकारस्थन्तु यणादिकं स्वरितप्रचयादिकञ्च नेति बोद्धयम्। *नन्वेवं पुरः हितमित्यवग्रहे इशब्दस्य स्वरितत्वं बह्वृचैः पठ्यमानं न सिद्ध्येत्, संहिताधिकारस्थत्वेन कालव्यवायेऽप्रवृत्तेरिति चेत्। न,

"यथा सन्धीयमानानामनेकीभवतां स्वरः।
उपदिष्टस्तथा विद्यादक्षराणामवग्रहे"॥

इति प्रातिशाख्ये *विशिष्य विधानात्। अनेकीभवतां प्रश्लेषमाप्नुवतां पुनः सन्धीयमानानामेकीक्रियमाणानां यथा येन प्रकारेण स्वर उपदिष्टः शास्त्रे तं स्वरमक्षराणामवग्रहेऽपि तथैव कुर्यादित्यर्थः। *नन्वेवमुपगन्तवै अन्वेतवै इत्यादीनामवग्रहे *उत्तरखण्डाद्यवर्णस्य प्रचयः स्यादिति चेत्। न,

*पद्यादींस्तु द्व्युदात्तानामसंहितवदुत्तरान्।

इति विशेषवचनात्। पद्यं पदार्धं द्व्युदात्तानां पदानामुत्तरान् पदाधांदीन् स्वरविधावसंहितवज्जानीयादित्यर्थः। एवं *रत्नधातमम्, अललाभवन्तीरित्यादीनां क्रमकाले इतिशब्दोत्तरभागे प्रचयो *न प्रवर्त्तते।

*परिग्रहे त्वनार्षान्तात्तेनैवैकाक्षरीकृतात्।

---

न्ते शङ्कते-*नन्वेवमिति। *विशिष्यविधानादिति। एवञ्च वैदिकवाक्ये तथोच्चारणं तच्छाखीयानां न क्षतिकरमिति भावः। *नन्वेवमिति। प्रातिशाख्येन व्यवस्थास्वीकारे सतीत्यर्थः। उपगन्तवै इत्यत्र उप गन्तवै इत्येवम्। अन्वेतवै इत्यत्र अनु एतवै इत्येवमवग्रहः। *उत्तरखण्डेति। प्रथमे गकाराकारस्य द्वितीये त्वेकारस्य स्यात्। प्रथमे उपशब्दस्य तवैप्रत्ययान्तगन्तवैशब्देन "कुगति" (पा० सू० २-२-१८) इतिसमासेऽव्ययपूर्वपदप्रकृतिस्वरेणोकारस्योदात्तत्वे शेषनिघाते "उदात्तादनुदात्तस्य" (पा० सू० ८-४-६६) इति पकाराकारस्य स्वरितत्वे सति प्रचयस्य, द्वितीयेऽप्येवमेवैकारस्य प्रचयप्राप्तिः। द्वितीये इण्धातोस्तवैप्रत्ययः। "उभे वनस्पत्यादिषु युगपत्" (पा० सू० ६-२-१४०) इत्यनेन पूर्वोत्तरपदयोः प्रकृतिस्वरविधानेन प्रातिशाख्यीयवचनान्तरेण व्यवस्था प्रकृते स्वीकार्येति। समाधत्ते—*पद्यादीनिति। अनेन प्रातिशाख्यीयवचनान्तरेणासंहितवद्भावे सति "तस्यादितः" (पा० सू० १-२-३२) इत्यारभ्य नवसूत्र्या इहोत्कर्षेण प्रचयविधायकस्य प्राप्तावप्यसंहितवद्भावेनाप्रवृत्तिरिति भावः। *रत्नधातममिति। अत्र रत्नधातममित्यवग्रहः अललाभवन्तीरित्यत्रालला भवन्तीरित्यवग्रहः। *न प्रवर्त्तत इति। पूर्वोक्तरीत्याऽसंहितवद्भावादिति शेषः। *परिग्रहे इति। अवग्रहयोग्यपद-

परेषां न्याससमाचारं व्याळिस्तौ चेत्स्वरौ परौ ॥

इति वचनात् । परिग्रहो *वेष्टक उच्यते । अनार्षशब्देन तथाभूतकरणः, स च द्व्यक्षर आद्युदात्तः पदाभ्यासस्य मध्ये वर्तमानः पूर्वपदान्तमादिना स्पृशति द्वितीयपदादिमन्तिमेन स्पृशति तदाऽयं विकारः पदसन्धिरुक्तः । स च व्यञ्जनादिर्वा भवति । यदि व्यञ्जनादिस्तदा प्रचये प्राप्तेऽयमपवादः । अनार्षादितिकरणात्परेषामक्षराणां न्यासमुदात्तमाचारं व्याळिराचार्यो मन्यते । यदा तु स्वरादिर्भवति तेन स्वरादिना एकाक्षरीकृतात्परेषां न्यासमिति तुल्यम्, तौ उदात्तस्वरितौ चेत्स्वरौ परौ भवत इत्यर्थः । अनार्षान्तादित्यस्योदाहरणं रत्नधातममिति रत्नधातमम् । तेनैवैकाक्षरीकृतादित्यस्योदाहरणम्—अललाभवन्तीरित्यलला भवन्तीः । अलला इति शब्दानुकरणमिति तद्भाष्यकृत इति *सर्वेष्टसिद्धिः ॥

शब्देन्दुशेखरः पुत्रो मञ्जूषा चैव कन्यका ।
स्वमतौ सम्यगुत्पाद्य शिवयोरर्पितौ मया ॥ १ ॥
शब्देन्दुशेखरः सोऽयं फणिभाष्योक्तिभूषितः ।
सतां हृत्कमलेष्वास्तां यावच्चन्द्रदिवाकरौ ॥ २ ॥

इति श्रीमदुपाध्यायोपनामकशिवभट्टसुतसतीगर्भजनागेशभट्टरचिते लघुशब्देन्दुशेखराख्ये सिद्धान्तकौमुदीव्याख्याने उत्तरार्द्धं समाप्तम् ।

समाप्तोऽयं ग्रन्थः ।

---

घटितस्य संहितस्य क्रमकाले वेष्टनं परिग्रहः । *वेष्टक इति । क्रमकाले इतिशब्दघटितशब्देनोच्चारणरूपं वेष्टनमेव वेष्टकमिति । अलला भवन्तीरित्यलला भवन्तीरिति यथा । *सर्वेष्टसिद्धिरिति । सर्वेषामिष्टानां प्रातिशाख्यीयवचनेन सिद्धिरित्यर्थः ॥

## इति प्रदर्शितरीत्या स्वरविधायकशास्त्रप्रवृत्तिविवरणम् ।

इति श्रीमदनन्तकल्याणसद्गुणनिधानाखिलपण्डितसार्वभौमभूमण्डलसञ्चारिविमलतरानवद्यसद्यशःपार्वणपीयूषभान्वगस्त्यकुलवंशावतंसश्रीमद्भवदेवमिश्रात्मजभैरवमिश्रकल्पितायां शब्देन्दुशेखरटीकायामुत्तरार्द्धं समाप्तम् ।

# लिङ्गानुशासनम् ।

## अथ स्त्र्यधिकारः ।

*मूले अधिकारसूत्रे एते इति । उभयोरधिकारसूत्रत्वेऽपि "लिङ्गम्" इति आशास्त्रसमाप्तेर्द्वितीयं तु "ताराधारा" (लि० सु० ३३) इति यावदिति विवेकः । अत्रापि लिङ्गं शास्त्रीयं प्रागुक्तमेव विवक्षितम् । तच्चार्थनिष्ठं तत्तच्छब्दप्रतिपाद्यम् । तत्रायं विशेषः–शब्दशक्तिस्वभावेन कस्यचित् सर्वलिङ्गप्रतिपादकता, कस्यचिदेकलिङ्गप्रतिपादकता, कस्यचित् द्विलिङ्गयुक्तार्थप्रतिपादकता चेति ।

यद्यपि शब्दानामर्थानाञ्चानन्त्यात्प्रातिस्विकरूपेण तेषां ज्ञानं योगिनां युक्तयुञ्जानत्वेन व्यवहारयोग्यानामेव सम्भवति न त्वस्मदादीनामज्ञानाम् तथाप्यस्मदादुद्देशेन शास्त्रप्रवृत्तेर्यथा लघुनोपायेनास्मदादीनां ज्ञानं भवेत्तथाह–*ऋकारान्ता इत्यादिना । 'स्त्री' इति पदमेषु सूत्रेषु सम्बध्यते, तच्च भावप्रधाननिर्देशेन स्त्रीत्वपरम् । तस्य लिङ्गपदेन बहुव्रीहिसमासे स्त्रीलिङ्गा इति सामानाधिकरण्येन व्यवहारः । मात्रादिशब्दानां विशेषत उपादानात्पञ्चेति लब्धम् । अवधारणस्य तु यथा लाभस्तं प्रकारमाह–*स्वस्रादिपञ्चकस्यैवेति । *ङीन्निषेधेन="न षट्स्वस्रादिभ्यः" ( पा० सू० ४-१-१० ) इति सूत्रेण ङीपो निषेधेन । *कर्त्रीत्यादेरिति । अनेन कर्तृपदे यौगिकाः शब्दा ऋकारान्ताः परिग्राह्याः । रूढस्य क्रोष्टृप्रभृतिशब्दस्यादिना परिग्रहः । न च सप्तैवेति वक्तव्ये पञ्चैवेति नियमानुपपत्तिरिति वाच्यम् । आदेशत्वानाक्रान्ताः पञ्चैवेत्यर्थात् । यद्यपि भाष्यसंमते "तृज्वत् क्रोष्टुः" (पा० सू० ७-१-९७) इत्यादित्रिसूत्र्याः प्रयोगनियमार्थत्वपक्षे स्त्रियां प्रवर्त्तमानस्य 'क्रोष्टृशब्दस्याप्यादेशत्वानाक्रान्तत्वं तथापि परिनिष्ठिते शब्देऽयमकारान्त एव प्रयुज्यत इति भावः ।

"उणादयो बहुलम्" (पा० सू० ३-३-१) इति सङ्गृहीतसाधुत्वकानां व्युत्पन्नत्वं शास्त्रान्तरे प्रसिद्धमिति तदभिप्रायेणाह–*अन्यू (लि० सू० ४) इत्यादि । *अवनिः । "अर्त्तिसृधृम्यम्यश्यवितृभ्योऽनिः" (उ० पा० २ सू० २६७) इत्यनिः । *चमूरिति । "कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः" ( उ० पा० १ सू० ८४ ) इति ऊः । दूयूः । अत्र वकारस्य "च्छ्वोः" ( पा० सू० ६-४-१९ ) इत्यूठ् ।

*अशनिभर (लि० सू० ५) । पूर्वसूत्रापवादोऽयम् ।

*मिन्यन्तः (लि० सू० ६) । *भूमिः । "नियो मिः" ( उ० पा० ४ सू० ४९२ ) इत्यतो मिरित्यनुवर्त्य विहितो "भुवः कित्" (उ० पा० ४ सू० ४९४) इति मिः । *ग्लानिः । "वहिश्रिश्रुयुद्रुग्लाहत्वरिभ्यो निः" ( उ० पा० ४ सू० ५०० ) इति निः ।

वन्ह्यादिशब्दानां निप्रत्ययान्तत्वेन स्त्रीत्वे प्राप्ते आह–*वह्निवृ ( लि० सू० ७ ) । वृष्णिः । "सृवृषिभ्यां कित्" ( उ० पा० ४ सू० ४८८ ) इति निः । अग्निः । "अङ्गेर्नलोपश्च" ( उ० पा० ४ सू० ४९९ ) इति निः ।

*श्रोणियोन्यू (लि० सू० ८) श्रोणिः । योनिः । "वहिश्रि" [ उ० पा० ४ सू० ५००) इति निः । ऊर्मिः । "अर्त्तेरूच" ( उ० पा० ४ सू० ४९३ ) इति मिः ।

*ईकारान्तश्च (लि० सू० १० )। अत्र ईकारः प्रत्यय एव पूर्वोत्तरसाहचर्यात्। *लक्ष्मीरिति। अत्र "लक्षेर्मुट् च" ( उ० पा० सू० ४४८ ) इति सूत्रे "अवितृस्तृतन्त्रिभ्य ईः" ( उ० सू० पा० ३ सू० ४४६ ) इत्यत ईरित्यस्यानुवृत्त्या तेन ईकारः प्रत्ययः। एवमव्यादिधातुभ्य ईकारप्रत्ययेऽपि स्त्रीत्वम्। तद्यथा अवीर्नारी रजस्वला। तरीर्नौः। स्तरीर्धूमः। तन्त्रीर्वीणादेर्गुणः। न च "यापोः किद् द्वे च" (उ० पा० ३ सू० ४४७ ) इति सूत्रविहितेकारान्तस्यापि स्त्रीत्वापत्तिरिति वाच्यम्। पुंस्त्वाधिकारांकेन "योपधः" "पोपधः"( लि० सू० ८६, ७७ )इत्याभ्यां परत्वाद्बाधात्। यूप इत्यादौ प्रथमस्य समय इत्यादौ द्वितीयस्य चारितार्थ्यात्। एवञ्च ययीपपीशब्दस्य पुंस्त्वेऽपि न क्षतिः।

*ऊङाबन्तश्च(लि० सू० ११ )। "ऊङुतः"(पा० सू० ४-१-६६) इत्यूङ्। आब्ग्रहणेन टाब्डाप्चापां ग्रहणम्।

*य्वन्तमेकाक्षरम्(लि०सू० १२)। ईकारोऽत्र प्रत्ययः। ऊकारसाहचर्यात्।

*विंशत्यादिरानवतेः ( लि० सू० १३ )। विंशत्यादयः "पङ्क्तिविंशति" ( पा० सू० ५-१-५९ ) इति सूत्रनिर्दिष्टाः।

*दुन्दुभिरक्षेषु (लि०सू० १४)। अक्षेषु बोधनीयेषु यः प्रयुज्यत इत्यर्थः।

*नाभिरक्षत्रिये (लि० सू० १५)। क्षत्रियभिन्ने यो नाभिशब्दः प्रयुज्यते स स्त्रियां स्यात्। *इयन्नाभिरिति। पुरुषावयवे इदम्।

*उभावन्यत्र पुंसि(लि०सू०१६)। इदं स्पष्टार्थम्। पूर्वसूत्रयोरक्षेष्वक्षत्रिये इत्यभिधानेन सिद्धेः। *कथन्तर्हीति। अत्र यत्कोमलैरिति तदनुपपन्नम्। स्त्रीलिङ्गनाभिशब्दार्थविशेषणत्वात्। *सामान्ये इति। लिङ्गविशेषाविवक्षया नपुंसककोमलैरिति प्रसाध्य तस्य नाभिशब्दार्थविशेषणत्वं स्वीकार्यम्। विशेष्यप्रतिपादकस्य यथा पुंस्त्वं तथाऽस्यापि भविष्यतीत्याशयेन समाधानान्तरमाह–*वस्तुतस्त्विति। *चक्रमध्यक्षत्रिययोरिति। अत्र चक्रमध्यञ्च क्षत्रियश्चेति द्वन्द्वः। अत एव 'प्राण्यङ्गके द्वयोः'इति सङ्गच्छते।

*तलन्तः (लि०सू० १७)। "तस्य भावस्त्वतलौ"(पा० सू० ५-१-११९) इति सूत्रविहिततल्प्रत्ययान्तं स्त्रियां स्यात्।

*भूमिविद्युदिति (लि० सू० १८)। अत्राभिधानशब्दो भूम्यादिशब्दशक्यतावच्छेदकधर्मावच्छिन्नशक्तपरः, तेन प्रमेयशब्दव्यावृत्तिः। एवमन्यत्रापि बोध्यम्।

*यादो नपुंसकम् ( लि० सू० १९ )। पूर्वस्यापवादः।

स्थूणोर्णे नपुंसके च ( लि० सू० २१ )। चकारेण 'स्त्रियाम्'इत्यस्यानुकर्षणार्थमस्यात्र लेखः।

*प्रावृडिति (लि० सू० २३)। स्त्रीशब्दस्य पूर्वत्र चानुकृष्टत्वेऽपि "स्वरितेनाधिकारः" (पा० सू० १-३-११) इत्यस्याधिकः कार इति व्याख्यानस्यापि प्रसिद्धत्वादत्र सम्बन्धः।

दर्विविदि (लि० सू० २४)। दर्विशब्दो "वृदृभ्यां विन्"( उ०पा० ४सू०५२ )

इति विजानन्तः, तस्मात् "सर्वतोऽक्तिन्नर्थादित्येके"(ग० सू०)इति विकल्पेन ङीष्, दर्वी इति ।

*तिथिनाडि (लि० सू० २५) । *एते प्राग्वदिति । स्त्रियां स्युरित्यर्थः ।

*पुंस्येवेति । "देवासुरात्म" [लि०सू०४३]इत्यनेन पुंस्त्वबोधकेन परत्वाद्बाधादिति भावः । *भाष्यप्रयोगादिति । तेन भाष्येण सूत्रनिर्दिष्टानां बहुत्वं प्रायिकमिति कल्प्यते । तेनान्यत्र बहुत्वाभावेऽपि न क्षतिः ।

*क्वचिद्व्यभिचारमिति । तेन तिथिशब्दस्य पूर्वत्र यथा पुंस्त्वं प्रदर्शितं तथाऽन्येषामन्यलिङ्गत्वेऽपि साधुत्वमिति सूचयति ॥ इति स्त्र्यधिकारः ।

## अथ पुंलिङ्गाधिकारः ।

*भावार्थ एवेति । भावे यो घञ् तदन्तस्य पुंस्त्वमित्युक्तम् । एतल्लाभप्रकारमाह—*नपुंसकेत्यादि ।

*भयलिङ्ग (लि० सू० ३८)इत्यादि । पूर्वस्यापवादोऽयम् ।

*क्यन्तो घुः [ लि० सू० ४१ ] । किप्रत्ययोऽन्तः परो यस्मात्तादृशो यो घुसंज्ञको धातुस्तद्घटितः पुमानित्यर्थः ।

*देवासुर [ लि० सू० ४३ ] । अत्र पञ्चशब्दान्तद्वन्द्वं कृत्वा तस्य षष्ठीसमासोऽभिधानशब्देन कर्त्तव्यः । अभिधानशब्दः करणल्युडन्तो वाचकशब्दपरः, तेन देवादिशब्दवाच्यतावच्छेदकेत्यादि पूर्ववद्बोध्यम् । शब्दस्वरूपापेक्षया च नपुंसकत्वम् ।

*त्रिविष्टप [ लि० सू० ४४ ] । स्वर्गाभिधानत्वात् पुंस्त्वे प्राप्तेऽस्यारम्भ इति । अत एवाहामरसिंहः—"क्लिबे त्रिविष्टपम्"इति ।

*द्यौः स्त्रियाम् [ लि० सू० ४५ ] । अस्य स्वर्गाभिधानत्वात्पुंस्त्वस्य पूर्वेण प्राप्तेऽस्यारम्भः ।

*इषुबाहू ( लि० सू० ४६ ) । भुजपर्यायवाचकोऽयम् ।

*बाणकाण्डौ [ लि० सू० ४७ ] । शराभिधानोऽयम् ।

*नान्त ( लि० सू० ४८ ) इति । नान्तप्रत्ययान्त इत्यर्थः ।

*अभ्रं नपुंसकम् [लि०सू० ५०] इति । मेघाभिधानविषये पूर्वस्यापवाद इत्यर्थः ।

*लिङ्गशेषविधिरिति । लिङ्गस्य शेषोऽवशेषस्तस्य विधिः व्यापी काण्डत्रयस्य व्यापको यदि विशेषशास्त्रेण बाधितो न स्यादित्यर्थः ।

*नपुंसके चेति । चात् पुंसि ।

*वसु चार्थवाचि[लि०सू०५५] । अर्थवाचि वसुशब्दो नपुंसके वा द्रष्टव्यः ।

*रुत्वन्तः (लि० सू० ५७) । उकारो नकारेत्संज्ञकः मेरुः । सेतुरित्यत्र "सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन्" [उ० पा० १ सू० ७२ ] इति तुन् । सूर्यवाचकः प्रथमः ।

*दारुकसेरु (लि०सू० ५८)। जवादित्वाद्रुप्रत्ययान्ता एते।

*कंसं चाप्राणिनि [लि० सू० ९९]। कंसमिति शब्दस्य निर्देशान्नपुंसके चेत्यस्य संबन्धः। अप्राणिनि वाच्ये कंसशब्द इत्यर्थः।

*दिनाहनी [लि० सू० १०२]। दिवसाभिधानाविमौ।

*खारीमानिके [लि० सू० १०५]। मानाभिधानत्वात् पुंस्त्वे प्राप्तेऽस्यारम्भः।

*बहुत्वञ्चेति। चकारः पुंस्त्वस्य समुच्चायकः।

*नाड्यपजनोपपदानि व्रणाङ्गपदानि (लि० सू० १०७)। अत्रोपपदशब्दः पूर्वपदपरो न तु "तत्रोपपदम्" [पा० सू० ३-१-९२] इति तत्संज्ञकपरः। तस्य प्राप्त्यभावात्। *क्लीबत्वनिवृत्त्यर्थमिति। नपुंसकाधिकारे "मुखनयन" (लि० सू० १३०) इत्यादिवक्ष्यमाणसूत्रेण विवराभिधानत्वेन क्लीबत्वं प्राप्तं तन्निवृत्त्यर्थमित्यर्थः।

*अमरस्त्विति। एवञ्च तन्मतेऽर्धर्चादिष्वयं द्रष्टव्यः। इति पुँल्लिङ्गाधिकारः।

## अथ नपुंसकाधिकारः

*भावे ल्युडन्तः (लि०सू० ११९) इदञ्च सूत्रं यद्यपि "नपुंसके भावे क्तः" (पा०सू० ३-२-१११) "ल्युट् च"। (पा०सू० ३-३-११५) इत्यनेन गतार्थं तथापि स्पष्टार्थमुपात्तम्। एवमन्तग्रहणं चेति बोध्यम्।

*इध्मप्रव्रश्चन इति। अत्र करणे ल्युट्।

*निष्ठा च (लि० सू० १२०)। अत्र निष्ठापदं क्तस्य बोधकम्। इदमपि सूत्रं "नपुंसके भावे क्तः" (पा० सू० ३-७-१११) इत्यनेन गतार्थम्। प्रत्ययग्रहणे तदन्तग्रहणम्।

*त्वष्यञौ तद्धितौ (लि० सू० १२१)। भावे इत्यनुवर्त्तते। यद्यपि "तस्य भावः" (पा० सू० ५-१-११९) इति सूत्रे भावशब्दः प्रकृतिजन्यबोधीयप्रकारताश्रयधर्मपरः, भावे ल्युडन्त इत्यत्र तु भावशब्दो भावनाबोधक इति भेदस्तथापीह भावशब्दः शब्दाधिकारेणान्यार्थको द्रष्टव्यः।

*कर्मणि च [लि० सू० १२२]। चाद्भावे। त्वष्यञावित्याद्यनुवर्त्तेत।

"स्तेनाद्यन्नलोपश्च" (का० वा०) इति। यद्यपीदं सूत्रं प्राग् व्याख्यातमेव तथापीतः प्रभृति कथितानां नपुंसकत्वस्य स्पष्टप्रतिपत्त्यर्थमिहोपादानमिति बोध्यम्।

द्वन्द्वैकत्वम् (लि० सू० १२४) इति। "द्वन्द्वश्च प्राणितूर्य" [लि० सू० १२४] इत्यादिना येषां द्वन्द्वानामेकवद्भावो भवति ते द्वन्द्वा, नपुंसकत्वाभिधायका बोध्या इत्यर्थः।

*अभाषायाम् (लि० सू० १२५) इति। इदमपि सूत्रं "हेमन्तशिशिरावहोरात्रे च च्छन्दसि" [पा० सू० २-४-२८] इतिसूत्रे छन्दसीत्युपादानेन गतार्थम्। हेमन्तशिशिरावित्यत्र तु निर्देशादेव पुंस्त्वप्रतिपादकता बोध्या।

*स्त्रियाञ्चेति । चेन नपुंसकमित्यनुकर्षः । "विभाषासेना" (पा० सू० २-४-२५) इति विभाषापदोपादानेनेदमपि गतार्थम् ।

*परवत् (लि०सू० १३०)इति । "परवल्लिङ्गम्"(पा०सू० २-४-२६)इति सूत्रोपात्त इत्यर्थः । परवदिति सूत्रस्य स्मारकमिह परवदिति न त्विदमपूर्वम् । *तत्पुरुष इति । द्वन्द्वस्याप्युपलक्षणम् ।

*संख्यापूर्वा रात्रिः [लि० सू० १३२] । "संख्यापूर्वं रात्रं क्लीबम्" [का० वा०] इत्यस्यानुवादः ।

द्विगुः स्त्रियाञ्च ( लि० सू० १३३ ) इति । चान्नपुंसकमिति सम्बध्यते । इदमपि "अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः" [का० वा०] "पात्राद्यन्तस्य न"[का० वा०]इत्यनेन गतार्थम् । अत एवाह—*व्यवस्थयेति ।

*इसुसन्तः(लि०सू० १३४) । "अर्चिशुचिहुसृपिच्छादिच्छर्दिभ्य इसिः" "जनेरुसिः" [उ० पा० २ सू० २७३, २८०] एतयोरुपात्तावेतौ ।

*छदिः स्त्रियामेव ( लि० सू० १३६ ) । यद्यपि छदिरित्यस्येसन्तत्वेन नपुंसकत्वे प्राप्ते विशेषोपादानेन 'स्त्रियाम्'इत्यनेनैव नित्यं स्त्रीत्वलाभे सिद्धे एवकारो व्यर्थस्तथापि 'पटलं छदिः' इत्यमरग्रन्थदर्शनेन साहचर्यान्नपुंसकत्वमपीति भ्रान्तिः स्यात्तन्निवारणायैवकारः । अत एव वक्ष्यति-*अमरव्याख्यातार इति ।

*अस्य="मुखनयन" [लि० सू० १३७] इति सूत्रस्य ।

*सीरार्थोदनाः [ लि० सू० १३८ ] । सीरशब्दो हलाभिधानः । अर्थशब्दस्तु धनशब्दस्य पर्यायः । ओदनशब्दोऽन्नवाची । भिस्साभिस्सटाशब्दौ तु दग्धान्नपराविति तयोः स्त्रीत्वेऽपि न क्षतिरिति ।

*अटवी स्त्रियाम् [ लि० सू० १४० ] । अयं वनाभिधानः ।

*सङ्ख्येति । सङ्ख्यावाचीत्यर्थः ।

*शतायुत ( लि० सू० १४५ ) । अयं शतशब्दोऽनन्तवाची । "शतादिः"( लि० सू० १४४ ) इति पूर्वसूत्रापवादोऽयम् ।

लक्षा कोटिः [लि०सू० १४६] । एतयोरपि सङ्ख्यावाचकत्वान्नपुंसकत्वे प्राप्ते इदम् । *क्लीबेऽपीति । एवञ्चायमर्धर्चादिषु द्रष्टव्यः ।

*शङ्कुः पुंसि [ लि० सू० १४७ ] । अस्य शङ्कुशब्दस्य सङ्ख्याविशेषवाचकत्वात् "शतादिः सङ्ख्या" (लि० सू० १४४)इति नपुंसकत्वे प्राप्तेऽस्यारम्भः । *सहस्रः क्वचित् । *क्वचिदिति । अर्थविशेष इत्यर्थः । 'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्' इत्यत्रानन्तवाची । न चात्र सहस्रशब्दस्यानन्तपरत्वे सङ्ख्यापरत्वाभावेन सहस्रपादित्यत्र "सङ्ख्यासुपूर्वस्य"(पा० सू० ५-४-१४०) इति पादशब्दान्त्यलोपो न स्यादिति वाच्यम् । नियतविषयपरिच्छेदकत्वरूपसङ्ख्यात्वाभावेऽपि यथाकथञ्चित्सङ्ख्यायाः प्रतीतिरिति लोपः । वस्तुतश्छान्दसो लोप इति तूचितम् ।

*मन्द्व्यच्कः ( लि०सू० १४८ ) । अत्र मन्प्रत्ययः श्रूयमाणनकारान्तः "सर्वधातुभ्यो मनिन्" [ उ० पा० ४ सू० ५९४ ] इति विहितः । *वर्मचर्मे

चरादिधातोर्मनिन् प्रत्ययः। बाहुलकादिडभावः। अणिमादौ त्विट्। दामेत्यत्रापि "सर्वधातुभ्यो मनिन्"(उ०पा० ४ सू० ५९४) इत्यनेनैव मनिन्। परन्त्वयं विशेषः- उणादिप्रत्ययान्तानां संज्ञाशब्दत्वेन यादृशी व्युत्पत्तिर्यत्रोचिता सा कल्पनीयेति कर्त्तर्यपि प्रत्ययः सम्भवतीति।

*ब्रह्मेति। "बृंहेर्नोऽच्च"(उ० पा० ४ सू० ५९५) इति मनिन् प्रत्ययः।

असन्तो द्व्यच्कः (लि० सू० १५१)। "सर्वधातुभ्योऽसुन्"[उ० पा०४ सू० ६३८] इति विहितोऽसुन्। तस्यासुनो येष्वनुवृत्तिस्तदन्ता अपि बोध्याः। "चन्द्रे मो डित्"(उ०पा० ४ सू०६७७,इति विहितासुन्प्रत्ययान्तश्चन्द्रमस्शब्दोऽप्यसुन्नन्तः, कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात्। एवमप्सरःशब्दोऽपि।

त्रान्तः ( लि० सू० १५३ )। त्रप्रत्ययान्तो नपुंसकं स्यात्। "सर्वधातुभ्यष्ट्रन्"(उ० पा० ४ सू० ६०८) इति त्रन्प्रत्ययो नकारानुबन्धक इति।

*यात्रामात्रा ( लि० सू० १५४ )। "हुयामा" (उ० पा० ४ सू० ६१७) इतिविहितत्रन्प्रत्ययोऽपि त्रग्रहणेन गृह्येतेति नपुंसकत्वे प्राप्तेऽस्यारम्भः। एवकारो न्यायसिद्धबाध्यबाधकभावानुवादकः।

*भृत्रामित्र (लि० सू० १५५)। पूर्वस्यापवादः। *यत्त्विति। दोषान्तरमित्यन्ता तदुक्तिः। *मध्योदात्तः=मकारेकारस्य प्रत्ययाद्युदात्तत्वेन मध्योदात्त इति तद्भावः। *चिन्त्य इति। चित्त्वस्य सत्त्वात्। नन्वमित्रशब्दो नेत्रन्तः, किन्तु "अमिचिमि" (उ०पा०४सू० इति मिधातुविहितक्त्रान्तमित्रशब्देन नञः समासे सति सिद्ध इत्यत आह-*नञ्समासेऽप्येवमिति। अन्तोदात्त इत्यर्थः। *परवल्लिङ्गतेति। एवं सति नपुंसकत्वं स्यात्। हरदत्तोक्तं दूषयति-तत्प्रकृतेत्यादिना। *नञो जरमरेति। यदि तु न मित्रममित्र इति नञ्समासस्तदा न"नञो जरमरमित्र" (पा० सू० ६-२-११६) इत्यस्य प्राप्तिस्तस्य बहुव्रीहिसमासे प्रवृत्तेरिति बोध्यम्।

*कुसुमाभिधायित्वेऽपीति। वस्तुतः कुसुमाभिधायित्वेऽपीत्यर्थः। यदि तु कुसुमविशेषाभिधायकोऽयं न तु कुसुमशब्दशक्यतावच्छेदकावच्छिन्नशक इति विभाव्यते तदा त्वपूर्वमेवोभयलिङ्गत्वाभिधानमिति। *मतान्तरेण=जशब्दस्य जलजातकुसुमान्तराभिधायकत्वमित्यभिप्रायकमतान्तरेणेत्यर्थः।

आहवसंग्रामौ पुंसि ( लि० सू० १५९ )। एतयोर्युद्धाभिधायकत्वान्नपुंसकत्वे प्राप्ते। एवमाजिशब्दोऽपि।

*फलजातिः( लि० सू० १६१ )इति। फलपदोपादानाद् वृक्षपरस्यामलकीशब्दस्य स्त्रीत्वेऽपि न क्षतिः।

*हरीतकीति। हरीतक्याः फलानि हरीतक्यः। "हरीतक्यादिषु व्यक्तिः" (का० वा०)इति स्त्रीत्वाभिधानात्।

*रथाङ्गादाविति। आदिना देवनाक्षपरिग्रहः॥ इति नपुंसकाधिकारः।

## अथ स्त्रीपुंसाधिकारः।

स्त्रीपुंसयोः ( लि० सू० १७० )। अधिकारोऽयम्। *नपुंसकञ्चेति। स्त्रीपुंसयोः। इति स्त्रीपुंसाधिकारः।

